# ṚGARTHADĪPIKĀ

A pre-Sāyaṇa and hitherto unpublished commentary

ON

# ṚGVEDASAṀHITĀ

*By*

MĀDHAVA, SON OF ŚRĪVEṄKAṬĀRYA

*Edited*

From original palm-leaf Malayalam MSS. with extracts from other commentaries


*By*

**LAKSHMAN SARUP**

M.A. (PANJ.), D. PHIL. (OXON.)

*Officier d' Academie (France), Principal, Oriental College, Head of the Sanskrit Department, and Professor of Sanskrit Literature at the University of the Panjab, Lahore.*




VOL. III




PUBLISHED BY
MOTILAL BANARSIDASS
*Oriental Publishers*
SAID MITHA, LAHORE
1943

पञ्जाब ओरियन्टल सीरिज़ नं० २७

ऋक्संहिताव्याख्यातुस्सायणाचार्यात्प्राग्भवेन

श्रीवेङ्कटार्यतनूद्भवेन श्रीमाधवेन

विरचिता

अप्रकाशितपूर्वा, ऋग्वेदसंहिताव्याख्या

# ऋगर्थदीपिका

पञ्चनदीये विश्वविद्यालये संस्कृताचार्यैः संस्कृतविभागाध्यक्षैश्च

पाञ्चनदप्राच्यमहाविद्यालयस्य मुख्याधिष्ठातृभिः

लक्ष्मणस्वरूप, एम० ए० (पंजाब), डी० फ़िल० (ऑक्सफ़ोर्ड),

आफ़िसर एकेडेमी (फ़्रान्स) इत्येतैः

मलयलिपिलिखितानि प्राचीनतालपत्रादर्शपुस्तकानि पर्यालोच्य

पूर्वापरव्याख्यानोद्धृतैः सन्दर्भैश्चालङ्कृत्य

सम्पादिता

तृतीयो भागः

लवपुरीयपञ्जाबसंस्कृतपुस्तकालयाध्यक्षैः

मोतीलाल बनारसीदास इत्येतैः

प्रयागस्थे 'ला जर्नल' इति नाम्नि

मुद्रणालये मुद्रापयित्वा प्रकाशितः

१९४३

TO

THE HON'BLE Mr. JUSTICE

BAKSHI SIR TEK CHAND

M.A., LL.B.

Sometime Chief Justice of the Lahore High Court
of Judicature

AS A HUMBLE MARK OF
PROFOUND RESPECT
AND ADMIRATION

# LIST OF ABBREVIATIONS

| | |
|---|---|
| Ā. | Ātmanepada |
| AA. | AitareyaĀraṇyaka |
| AB. | AitareyaBrāhmaṇa |
| abl. | ablative case |
| acc. | accusative case |
| AGS. | Āpastambagṛhyasūtra |
| Amara. | Amarakoṣa |
| Anu. | Anuvākānukramaṇī |
| Apr. | Atharvavedaprātiśākhya |
| Apś | Āpastambaśrautasūtra |
| Aśs. | Āśvalāyanaśrautasūtra |
| At. | Ātmānanda's commentary on RV. I. 164. |
| Au. | Aitareyopaniṣad |
| BD. | Bṛhaddevatā |
| Bṛh. U. / Bu. | Bṛhadāraṇyakopaniṣad |
| BS. | Bṛhaspati Smṛti |
| Caus. | Causal |
| Chā. U. | Chandogyopaniṣad |
| CHMB | Chandogyamantrabhāṣya by Guṇaviṣṇu |
| D. | A palm-leaf Malayalam ms. at the Lal Chand Library of the D. A. V. College, Lahore. |
| DDN. | Dyādviveda's Nītimañjarī |
| DP. | Dhātupāṭha |
| dat. | dative case |
| Dur. | Durgācārya's Commentary on the Nirukta. |
| Ed. | Editor |
| F. | A fragment of a Devanāgarī ms. |
| fem. | feminine gender |
| GB. | Gopatha Brāhmaṇa |
| GGS. | Gobhilagṛhyasūtra |
| gen. | genitive case |
| gend. | gender |
| imf. | imperfect |
| inj. | injunctive |
| inst. | instrumental case |
| KAS | Kauṭalya's Arthaśāstra |

| | |
|---|---|
| Kā Śr. | Kātyāyana's Śrautasūtra |
| Kaṭh. U. | Kaṭhopaniṣad |
| Kau. Br. | Kauṣītaki Brāhmaṇa |
| Kau. Up. | Kauṣītaki Upaniṣad |
| Ken. U. | Kenopaniṣad |
| KS.<br>KSA. | Kātyāyana's Sarvānukramaṇī |
| Lit. | Literally |
| Loc. | Locative Case |
| M. | A Devanāgarī transcript of a Madras ms. |
| Mah. | Mahīdhara, a commentator of the *ŚuklaYajurveda*. |
| Mahānār. Up. | Mahānārāyaṇopaniṣad |
| Maitr. Up. | Maitrāyaṇī Upaniṣad |
| Maitri Up. | Māitrī Upaniṣad |
| Manu. | Manusmṛti |
| Mas. | Masculine gender |
| MS. | Manuscript<br>Maitrāyaṇī Saṁhitā |
| MSS. | Manuscripts |
| Mu. U.<br>Muṇḍaka. U. | Muṇḍakopaniṣad |
| N. | Nirukta of Yāska |
| Ngh. | Nighaṇṭu |
| nom. | nominative case |
| Nṛs. U. | Nṛsiṁhottaratāpini Upaniṣad |
| NS. | NidānaSūtra |
| O. M. | Oriental College Magazine. |
| P. | A palm-leaf Malayalam ms. at the Panjab University Library. |
| p. | page |
| Pa. | Pāṇini's Aṣṭādhyāyī |
| perf. | perfect |
| pers. | Person |
| pl. | plural number |
| PMBH. | Patañjali's Mahābhāṣya |
| PP. | Padapāṭha |
| Parāśara. | ParāśaraSmṛti |
| Praśna. U. | Praśṇopaniṣad |

| | |
|---|---|
| R. | The Ṛgvedānukramaṇī of Mādhavabhaṭṭa, edited by C. Kunhan Raja, Madras University Sanskrit Series, No. 2. |
| red. | reduplicated. |
| Ṛgvidh. | Ṛgvidhāna, edited by Meyer. |
| RPR. | ṚgvedaPrātiśākhya |
| RV. | Ṛgveda |
| S. | K. Sāmbaśiva Śāstri's edition of the Ṛksaṁhitā with the Bhāṣya of Skandasvāmin and the Commentary of Veṇkaṭamādhavārya, Trivandrum Sanskrit Series, No. 96. |
| S. | Saṃhitāpāṭha |
| ŚA. | ŚāṅkhāyanaĀraṇyaka |
| ŚB. | ŚatapathaBrāhmaṇa |
| Śāṇ. Br. | ŚāṇkhāyanaBrāhmaṇa |
| Śaṭ. | ŚāṭyāyanaBrāhmaṇa |
| ṢVB. | ṢaḍviṃśaBrāhmaṇa |
| SDS. | Sarvadarśanasaṃgraha |
| Sing. | Singular number |
| SK. | Skandasvāmin's Commentary on the Ṛgveda |
| SKN. | Skandasvāmin's Commentary on the Nirukta of Yāska |
| Skr. | Skandasvāmin's Ṛgvedabhāṣya, edited by C. Kunhan Raja, Madras University Sanskrit Series, No. 8. |
| Skt. | Skandasvāmin's Bhāṣya on the Ṛgveda, Trivandrum edition. |
| Śr. Sū. | Śrauta Sūtra. |
| ŚŚŚ. | Śāṅkhāyana Śrauta Sūtra |
| ŚT. | Śuddhitattva |
| Śve. U. | Śvetāśvataropaniṣad |
| Sy. | Sāyaṇācārya's commentary on the Ṛgveda, Poona edition. |
| TA. | Taittirīya Āraṇyaka |
| TB. | Taittirīya Brāhmaṇa. |
| Tāṇḍya / TMB. | TāṇḍyaMahāBrāhmaṇa |
| TS. | Taittirīya Saṁhitā |

| | |
|---|---|
| T. U. | Taittirīyopaniṣad |
| U. | Uvvaṭa |
| Uṇādi | Uṇādi Sūtras |
| Vaij. | Vaijayantīkoṣa |
| V. / Var. / Vpa. | Vārtika on Pāṇini's Aṣṭādhyāyī |
| VD. | Vedārthadīpikā |
| VM. | Mādhava, son of ŚrīVeṅkaṭārya |
| VNS. | Vararuci's NirūktaSamuccaya |
| Voc. | Vocative Case |
| Vol. | Volume |
| VPR. | Vājasaneyi Prātiśākhya |
| VS. | Vājasaneyi Saṁhitā |
| YPR. | Yajurveda Prātiśākhya |
| YV. | Yajurveda |

| | |
|---|---|
| अ.<br>अध्या. | अध्याय |
| आर्य | आर्यभट्टीय |
| आ. श्रौ. सू. | आश्वलायनश्रौतसूत्र |
| उ.<br>उणा. | उणादिसूत्र |
| ऋ.<br>ऋ. सं. | ऋग्वेदसंहिता |
| ऋ. प्रा. | ऋक्प्रातिशाख्य |
| ऐ. ब्रा. | ऐतरेयब्राह्मण |
| क. | कण्डिका |
| का. | कात्यायनश्रौतसूत्र |
| का. स. | कात्यायनसर्वानुक्रमणी |
| का. स. द्वा. का. | कात्यायनसर्वानुक्रमणी द्वादशकाण्डिका |
| कौ. ब्रा. | कौषीतकिब्राह्मण |
| गो. | गोपथब्राह्मण |
| गो. गृ. सू. | गोभिलगृह्यसूत्र |
| गो. स्मृ. | गोभिलस्मृति |
| तां. ब्रा. | ताण्ड्यब्राह्मण |
| तै. आ. | तैत्तिरीय आरण्यक |
| तै सं. | तैत्तिरीय संहिता |
| नि.<br>निरु. | निरुक्त |
| निघ. | निघण्टु |
| पा. | पाणिनि-अष्टाध्यायी |
| पार. | पारस्करगृह्यसूत्र |
| पा. वा. | पाणिनिवार्तिक |
| भ. गी. | भगवद्गीता |
| मनु. | मनुस्मृति |
| म. भा. शां. प. | महाभारत शान्तिपर्व |
| वे. दी. | वेदार्थदीपिका (षड्गुरुशिष्यविरचिता सर्वानुक्रमणीव्याख्या) |
| श.<br>श. ब्रा. | शतपथब्राह्मण |
| शां. आ. | शाङ्खायन आरण्यक |
| शां. ब्रा. | शाङ्खायन ब्राह्मण |
| शां. श्रौ. सू. | शाङ्खायनश्रौतसूत्र |
| सा. भा. | सायणभाष्य |

# PREFACE

The present volume completes the commentary of Mādhava, son of ŚrīVeṅkaṭārya on the second, third and fourth maṇḍalas of the Ṛgveda. The ms. material has already been described and need not be repeated here.

In footnotes, the interpretation of Mādhava has been throughout compared with that of Sāyaṇācārya. In addition the following commentaries have been utilized: (1) Yāska's Nirukta, (2) Durgācārya's commentary on the Nirukta, (3) Skandasvāmin's commentary on the Nirukta. These three commentaries have been utilized with regard to such Ṛgvedic stanzas as occur in the Nirutka and its commentaries.

The Yajurveda has borrowed many stanzas from the Ṛgveda. Uvvaṭa followed by Mahīdhara has explained the whole of the Śukla Yajurveda. The Śatapatha Brāhmaṇa has commented on the first eighteen chapters as well as several stanzas of other chapters of the Śukla Yajurveda. The commentaries of the Śatapatha Brāhmaṇa, Uvvaṭa and Mahīdhara have been utilized in the footnotes to record any differences of interpretation with regard to such Ṛgvedic stanzas as occur in the Śukla Yajurveda.

The commentary of Bhaṭṭa Bhāskaramiśra on the Taittirīya Saṁhitā has been similarly explored with regard to such Ṛgvedic stanzas as occur in the TS.

Dyā Dviveda has explained a good many stanzas of the Ṛgveda in his Nītimañjarī. Extracts from his commentary throwing light on the meaning of the Ṛgveda are incorporated in the footnotes.

Guṇaviṣṇu has commented on Chāndogyamantra. In the footnotes I have utilized his Bhāṣya on such Ṛgvedic stanzas as occur in the Chāndogyamantra.

In this way, I have utilized all the commentaries on the Ṛgveda itself as well as on the hymns and the stanzas of the Ṛgveda borrowed by other Saṁhitās, Vedic writers and works. All the commentaries available from Indian sources have been

accounted for. I have thus endeavoured to compile, in foot-notes an Indian thesaurus of Ṛgvedic interpretation.

If this edition is found useful and if it gives any help in a scientific study of the Ṛgveda, I shall feel my labour amply repaid.

ORIENTAL COLLEGE
LAHORE

LAKSHMAN SARUP

II. 1.

त्वम॑ग्ने द्युभि॒स्त्वमा॑शुशु॒क्षणि॒स्त्वम॒द्भ्यस्त्वमश्म॑न॒स्परि॑ ।
त्वं वने॑भ्य॒स्त्वमोष॑धीभ्य॒स्त्वं नृ॒णां नृ॑पते जायसे॒ शुचिः ॥१॥

त्वमग्ने[1]। 'य[2] आङ्गिरसः[3] शौनहोत्रो भूत्वा भार्गवः शौनकोऽभवत् स[4] गृत्समदो[5] द्वितीयं मण्डलमपश्यत्[6]'[7]।

---

१. यम॰ D. शतर्चिनां प्रथमं मण्डलं व्याख्यातम् । अथ गार्त्समदं द्वितीयं मण्डलं व्याख्यायते । 'त्वमग्ने द्युभिः' इत्यादिकं द्वितीयं मण्डलम् । चत्वारोऽनुवाकाः । तेषु प्रथमेऽनुवाके एकादश सूक्तानि। तत्र 'त्वमग्ने द्युभिः' इति षोडशर्चं प्रथमं सूक्तम् । मण्डलद्रष्टा गृत्समद ऋषिः । स च पूर्वमाङ्गिरसकुले शुनहोत्रस्य पुत्रः सन् यज्ञकालेऽसुरैर्गृहीत इन्द्रेण मोचितः । पश्चात् तद्वचनेनैव भृगुकुले शुनकपुत्रो गृत्समदनामा अभूत् । तथा चानुक्रमणिका—'य आङ्गिरसः शौनहोत्रो भूत्वा भार्गवः शौनकोऽभवत् स गृत्समदो द्वितीयं मण्डलमपश्यत्' (KSA.13.p.13.) इति। तथा तस्यैव शौनकस्य वचनम्, ऋष्यनुक्रमणे—'त्वमग्न इति गृत्समदः शौनको भृगुतां गतः । शौनहोत्रः प्रकृत्या तु य आङ्गिरस उच्यते' इति. See वेदार्थदीपिका Macdonell's ed. p. 99. । तस्मान्मण्डलद्रष्टा शौनको गृत्समद ऋषिः । जगती छन्दः । मण्डलादिपरिभाषया आग्नेयम् । अत्रानुक्रमणिका—'त्वमग्ने जागतं तु' (KSA.13.1.p.13.) इति ॥ प्रातरनुवाकाश्विनशस्त्रयोर्जागते छन्दसि इदमादिसूक्तद्वयस्य विनियोगः। 'त्वमग्ने द्युभिरिति सूक्ते' (ASS. 4.13.) इति सूत्रितत्वात् । उपाकरणोत्सर्जनयोरपि आद्या विनियुक्ता Sy.

२. Omitted by P.

३. अंगि॰ P.

४. शो॰ P.D. श्ये॰ M.

५. सत् D.

६. प्रत॰ D.

७. KSA.13.p.13.

त्वम् । अग्ने[1] ! द्युभ्यः[2] । जायसे[3] 'दिवस्परि प्रथमं जज्ञे'[4] इत्युक्तम्[5] । त्वम् । आशु शुचा शत्रून् हंसि[6] । त्वम् । अन्तरिक्षस्थाभ्योऽद्भ्यो[7] वैद्युतः[8] । त्वम् । अश्मनश्चाहन्य-[9]

१. अग्ने ! अग्रणीत्वादिगुणविशिष्ट ! Sy. हे भगवन्नग्ने ! U. हे भगवन्नग्ने ! अग्रणीत्वादिगुणविशिष्ट ! Dur.
२. द्युभिर्यागदिवसैर्निमित्तभूतैः Sy. द्युभिरहोभिर्निमित्तभूतैः Mah; U. अहोभिर्जायस इत्यर्थः । सप्तम्यर्थ एवा तृतीया । द्युषु दिवसेष्वमावास्यादिष्वाधानकाल इत्यर्थः SKN. द्योतनात्मकैरहोभिः (यागदिवसैः) पौर्णमास्यादिभिः 'पौर्णमास्याममावास्यायां वाऽऽदधीत'* इत्युक्तेः Dur.
३. ज० D. यागार्थं मथनेनोत्पद्यस इत्यर्थः Sy. मथ्यमानो जायसे । प्रतिदिनं मथ्यस इत्यर्थः । यद्वा द्युभिः स्वर्गैर्निमित्तभूतैस्तत्र तत्र यागशालासु जायसे Mah. मथ्यमानो जायसे U. अरणिजो निर्मथ्यमानो वा जायसे SKN. यागार्थं मन्थनेनोत्पद्यस इत्यर्थः । यद्वा तत्तद्यागदिवसैस्सहितो नृणामर्थे जायसे । तत्तद्यागदिवसेषु प्रसिद्धो भवसीत्यर्थः । अत्राविर्भाव एवोत्पत्तिः Dur.
४. RV.X.45.1.a ५. ०क्तः M.
६. आ सर्वतो दीप्यमानो भवसि । आङ्युपपदे 'शुच दीप्तौ' इत्येतस्य सन्नन्तस्य छान्दसमिदं रूपम् । यद्वा आशु शीघ्रं शुच् दीप्तः सन् यतः संसेव्यत इति । आशु शुचं शोकं सनोति ददाति शत्रुभ्यो दाहादिनेत्याशुशुक्षणिः । तादृशो भवसि । एवं सर्वत्र प्रतिविशेषणं जायस इति योज्यम् Sy. आर्द्रां भूमिं शीघ्रमेव शोषयिता, यद्वा आशु क्षिप्रं शुचा दीप्त्या क्षिणोति हन्ति तमः सनोति सम्भजते वाऽऽशुशुक्षणिः Mah. त्वमेवाशुशुक्षणिः, आशु शीघ्रं शुचा दीप्त्या क्षिणोति हिनस्ति सनोति सम्भजते वाऽऽशुशुक्षणिरुच्यते U. आशु शुचा दीप्त्या । कस्य ? सामर्थ्यात्तमसः । सनिता वा सम्भक्ता वा सर्वस्य पाकदाहप्रकाशादेर्व्यापारस्य । अलौकिकस्यात्मना वा जायसे । पञ्चम्यर्थे वाऽऽशुशुक्षणिरित्येवा प्रथमा । अस्मिंश्च पक्षे, आङ्पूर्वस्य शुचेर्दीप्तिकर्मणः सनि एतद्रूपम् । आदिदीपयिषोः पुरुषात्तेन मथ्यमानो जायस इत्यर्थः । एवं च कृत्वा पक्षद्वयेऽप्यर्थभेदाद् भेदप्रदर्शनार्थत्वाच्चावग्रहस्यान्यतरपक्षपरित्यागकारणाभावात्पक्षद्वयापेक्षया एतत्पदं पदकारा नावगृह्णन्ति SKN. आशुशु-अतिशीघ्रं क्षणोषि हिनस्सि शत्रूनित्याशुशुक्षणिरसि । अत्राशुशु इति क्षिप्रार्थकद्वयं समुच्चित्यातिक्षिप्रार्थकं भवति । तस्मिंश्चोपपदे क्षणोतेर्हिंसार्थादिन्प्रत्ययः Dur.
७. ० स्याद्भ्यः D. अन्तरिक्षस्थास्थाभ्यः P.M.
८. वृष्ट्युदकेभ्यो जायसे वैद्युतरूपेण, वाडवरूपेण वा समुद्रोदकेभ्यः Sy. वर्षधाराभ्यो विद्युदात्मना जायसे Mah. अद्भ्यश्च . . . U. त्वमेवाद्भ्यो वैद्युतात्मना SKN. वृष्ट्युदकेभ्यो वैद्युतरूपेण समुद्रोदकेभ्यो वा वाडवरूपेण 'जायसे' इत्युत्तरोत्तरमभिसम्बध्यते Dur.
९. अश्मनः मेघात् पाषाणाद्वा Sy. पाषाणान्तरसङ्घटनेन जायसे Mah. पाषाणात् परिजायसे U. त्वमेव पाषाणादस्यान्तरेण लोहेन वाऽभिहन्यमानात् SKN. त्वमश्मनः पाषाणात्परि सर्वतः (इतरेतराभिघातात्) जायसे । यद्वा—अश्मनो मेघात् परि सर्वतोऽन्तरिक्षे निर्घातरूपेण जायसे । 'यो अश्मनोरन्तरग्निं (परि†) जजान' (RV.2.12.3c) इति मन्त्रान्तरम् Dur.

*Cf. Kau. Br. U. 2.3. 'पौर्णमास्याममावास्यायां वा शुद्धपक्षे वा पुण्ये नक्षत्र एतेषामेकस्मिन् पर्वण्यग्निमुपसमाधाय' । and GGS.I.1.14. 'दर्शे वा पौर्णमासे वाऽग्निसमाधानं कुर्वीत' । also SB. 11.1.1.7. 'अमावास्यायामेवाग्नीऽआदधीत पौर्णमास्यामन्वारभेतामावास्यायां दीक्षेत' ।

† 'परि' is not found in RV.

मानात्[1] । त्वम् । ओषधिवनस्पतिभ्यश्[2]च जायसे । नृपते[3] ! दीप्तः[4][5] ।

---

१. अश्वानश्वा हन्यमाना M.

२. वनेभ्यो वृक्षादिसमूहेभ्यो दावरूपेण, ओषधीभ्यो वैश्वानररूपेण Sy. त्वं वनस्पतिभ्योऽरणिकाष्ठेभ्यो जायसे । त्वमोषधिभ्यो वंशादिभ्यो जायसे वंशद्वयसङ्घर्षणेन Mah. त्वं वनेभ्योऽरणिकाष्ठेभ्यो जायसे U. त्वमेव वृक्षेभ्यो वायुना परस्परं सङ्घृष्यमाणेभ्यः । त्वमेव शरवंशादिभ्य ओषधीभ्यः SKN. वनेभ्यो वृक्षादिसमूहेभ्यो दावरूपेण, . . . ओषधीभ्यो व्रीह्यादिभ्यः । 'ओषध्यः फलपाकान्ताः' (Amara. 2.4.6, also Manu 1. 46) इत्यमरः । वैश्वानररूपेण Dur.

३. नृपते ! ये नरा यष्टारः तेषां विशेषेण पालयितः ! Sy. नृणां पालक ! Mah. नृणां पालयितः ! U. मनुष्यपते ! . . . अथवा नृपतिशब्दो निरस्तपूर्वापरविभागः स्वामिवचनत्वेन रूढः । तेन नृणां पते ! नृपते ! मनुष्याणां स्वामिन्नित्यर्थः SKN. नृणां मनुष्याणां (यष्टॄणां विशेषेण) पालयितः ! Dur.

४. The passage beginning with होत्रो and ending with दीप्तः is omitted by P. दीप्तः आ समन्ताद् दीप्यमानः Sy. त्वं नृणां मनुष्याणामग्निहोत्रिणां गृहे जायसे । 'पुत्रो ह्येव सन् स पुनः पिता भवति'* इति श्रुतेः । किम्भूतस्त्वम् ? शुचिः शुद्धिहेतुः । 'पुनःपाकान्महीमयम्' † इति स्मृतेः Mah. शुचिर्निर्विक्तपाप्मा । अथापरो व्याख्यामार्गः—आशुशुक्षणिशब्दस्य पञ्चम्यर्थे प्रथमा । तथा च वाक्यस्य संयोगः । आ उपसर्गपूर्वः शोचतिः सन्नन्तः । आशुशुक्षणेरादिदीपयिषोर्जायसे । योऽपि ग्रहं खलं वा निर्मथ्य दीपयति तस्यापि त्वं जायसे । सर्वेषामनुग्रहे प्रवृत्तो हि त्वमित्यभिप्रायः । त्वमग्ने ! द्युभिर्जायसे । त्वमादिदीपयिषोर्जायसे । एवं त्वमद्भ्योऽश्मनो वनेभ्य ओषधीभ्यो नृणां पुत्रत्वेन नृपते ! जायसे ! शुचिर्दीप्त इति योजना U. एवं त्वं ततस्ततो नृणां मनुष्याणामर्थायेति शेषः । . . . सर्वतो जायसे शुचिर्दीप्तः SKN. नृणां नृभिर्मथ्यमानः । व्यत्ययेन षष्ठी । . . . एवं महानुभावस्त्वं मथनेनोत्पन्नः सन्त्सर्वात्मको भवसीत्यर्थः । शुचिर्दीप्त एव जायसे । यद्वा शुचिरादित्यरूपो जायसेऽभिव्यज्यस इत्यर्थः Dur. 'त्वमग्ने द्युभिरहोभिः । त्वमाशुशुक्षणिः । आशु इति च शु इति च क्षिप्रनामनी भवतः । क्षणिरुत्तरः । क्षणोतेः । आशु शुचा क्षणोतीति वा । सनोतीति वा' । N.6.1.; SKN. II. 386.
प॒रि वा॒जप॑तिः क॒विः । प॒रि त्वा॑ग्ने॒ पुरं॑ व॒यम्, त्वम॑ग्ने॒ द्युभि॒रि॑त्य॒ग्नि॒मे॒वा॑स्मा॒एत॒दु॒प॒स्तुत्य॒ वर्म॑ करोति प॒रिवती॑भिः प॒रीव॒ हि पु॒र आ॒ग्नेयी॑भिर॒ग्निपु॑रा॒मे॒वास्मा॒एत॒त्करोति॒ सा॒ ह॑ैवाग्निपु॒रा दी॒प्यमाना तिष्ठति तिसृ॒भिस्त्रि॒पुर॒मे॒वा॒स्मा॒एत॒त्करोति त॒स्माद् ह॑ैत॒त्पु॒रां॒ पर॒म॑ रू॒पं य॒त्त्रिपुर॑ स व॑ै व॒र्षीयसा-व॒र्षीयसा छन्द॑सा प॒रां॒,प॒रां ले॒खां व॒रीयसीं॑ करोति॒ त॒स्मात्पु॒रां पु॒रा-प॒रा व॒रीयसी ले॒खा भ॒वन्ति॒ ले॒खा हि पु॒रः ŚB.6.3.3.25.p. 528. This stanza=YV. 11.27. ५. VM. ignores परि । त्वम् (twice) and नृणाम् ।

---

* Cf. ŚB. 2.3.3.5. 'स एव पुत्रः सन्पिता भवति' । and YT. 4 'यः पिता स पुनः पुत्रो यः पुत्रः स पुनः पिता' ।

† Cf. BS. as quoted by Raghunandana in his ST. p. 295. Cal. Ed. 1895:

'अम्भसा हेमरूप्यायः कांस्यं शुद्ध्यति भस्मना ।
अम्लैस्ताम्रञ्च रैत्यञ्च पुनःपाकेन मृण्मयम्' ॥

तवा॑ग्ने हो॒त्रं तव॑ पो॒त्रमृ॒त्विय॒ं तव॑ ने॒ष्ट्रं त्वम॒ग्निदृ॑ताय॒तः ।
तव॑ प्रशा॒स्त्रं त्वम॑ध्वरीयसि ब्र॒ह्मा चासि॑ गृ॒हप॑तिश्च नो॒ दमे॑ ॥२॥

तवाग्ने[1]। तव। अग्ने! होतृकर्म[2]। पोतृ[3]कर्म च काले भवति[4]। ऋत्वियम्=आर्त्विज्यम्[5]। त्वम्। आग्नीध्रश्च[6]। यज्ञमिच्छतः। त्वमेव। अध्वरं चेच्छसि[7] यथाध्वर्युरध्वरं कामयते। गृहपतिः=यजमानः। च। भवसि। अस्मदायतने[8]। शिष्टं[9] स्पष्टम्।

त्वम॑ग्न॒ इन्द्रो॑ वृष॒भः स॒ताम॑सि॒ त्वं विष्णु॑रुरुगा॒यो न॑म॒स्यः॑ ।
त्वं ब्र॒ह्मा र॑यि॒विद्ब्र॑ह्मणस्पते॒ त्वं वि॑धर्तः सचसे॒ पुर॑न्ध्या ॥३॥

त्वमग्ने। त्वम्। अग्ने! वृषभः[10]। इन्द्रश्च देवः। भवसि। सताम्[11]। त्वम्। विष्णुश्च। उरुगमनः[12]। नमस्कार्यः। त्वम्[13]। बृहस्पतिश्च भवसि। धनस्य लम्भयिता[14]। मन्त्रपते[15]! त्वम्। विधातः[16]! सङ्गच्छसे[17]। प्रज्ञया[18]।

---

१. Omitted by P.

२. होत्रं होतुः कर्म शस्त्रयाज्यादिलक्षणम् Sy.

३. चोतृ० P.D. Omitted by M. पोत्रं पोतुः कर्म Sy.

४. वति M.

५. ०मार्ति D. ०मार्तिज्य P. तथा प्राप्तकालमार्त्विज्यं तवैव Sy.

६. आग्रं च P.

७. ०च्चच्छ० P.D. अध्वरं यज्ञं कामयसे, अध्वर्युर्भवसीत्यर्थः । तथाध्वर्युशब्दव्युत्पत्तेः Sy. 'अध्वर्युरध्वरयुरध्वरं कामयत इति वा' (N. 1.8.)

८. अस्मद्यज्ञगृहे Sy.

९. VM. explains तव once only and ignores नेष्ट्रम्। प्रशास्त्रम्। ब्रह्मा and च। नेष्ट्रम् नेष्टुः कर्म प्रस्थितयाज्यादिरूपम्। प्रशास्त्रम्=यत्प्रशास्तुर्मैत्रावरुणस्य कर्म तत्। ब्रह्मा=ब्राह्मणाच्छंस्यपि Sy.

१०. वृषभो कामानां वर्षिता Sy.

११. सदा M. सदां D. सदा त्वं सदा P. साधूनाम् Sy.

१२. उरुगायो बहुभिर्गीयमानः Sy.

१३. तु P.

१४. गवादिधनस्य वेत्ता Sy.

१५. ०वत P. ०पत D. परिवृढस्य कर्मणो मन्त्रस्य वा पालयितः! Sy.

१६. विधर्तः! विविधकारक! वैश्वानररूपाग्ने! Sy.

१७. सह वर्तसे। सर्वदा बुद्धया स्तूयस इत्यर्थः Sy.

१८. बहुप्रकारया बुद्धया Sy.

त्वमग्ने राजा वरुणो धृतव्रतस्त्वं मित्रो भवसि दस्म ईड्यः ।
त्वमर्यमा सत्पतिर्यस्य सम्भुजं त्वमंशो विदथे देव भाजयुः ॥४॥

त्वमग्ने[१]। त्वम्। अग्ने! राजा। वरुणः[२]। धृतकर्मा[३] च भवसि। मित्रश्च। भवसि[४]। दर्शनीयः[५]। स्तोतव्यः। त्वम्। अर्यमा[६]। सतां[७] पतिः। यस्य। सम्भोजनं[८] भवति। 'यः खलु वै ददाति[९] सोऽर्यमा' इति ब्राह्मणम्[१०]। त्वमेव। अंशः[११]। देव! यज्ञे[१२]। अंशभाजो[१३] देवान् स्वानंशान्[१४] [१५] भाजयन्[१६]।

त्वमग्ने त्वष्टा विधते सुवीर्यं तव ग्नावो मित्रमहः सजात्यम् ।
त्वमाशुहेमा ररिषे स्वश्व्यं त्वं नरां शर्धो असि पुरूवसुः ॥५॥

त्वमग्ने। त्वम्। अग्ने! त्वष्टा[१७] च भवसि। परिचरते। पुत्रं प्रयच्छन्[१८]। तव[१९]। देवपत्न्यः[२०]। मित्राणां पूजयितः[२१]! बन्धुता[२२]। त्वम्। आशु गन्ता[२३]। ददासि। शोभनाश्वसमूहम्[२४]। त्वम्। नृणाम्[२५]। बलम्[२६]। असि। बहुधनः[२७]।

---

१. Omitted by P.D.
२. Missing in M.
३. धुतवृतक० P. D. व्रतक० M. धारितकर्मासि Sy.
४. मित्रश्च। भवसि omitted by P.D.
५. शत्रूणामुपक्षपयिता Sy.
६. दातृत्वं चार्यम्णो लिङ्गम्। 'अर्यमेति तमाहुर्यो ददाति' (TB.I.1.2.4) इति Sy.
७. ०तमप० D. सतामभिमतप्रदानेन पालयिता Sy.
८. समभो० P.D. सन्ततभुजं व्यापकं भवति, यद्वा यस्य धनं...सम्यग् भोगाय साधु ग्रहीतॄणाम् Sy.
९. Omitted by M.
१०. Cf. TB. I.1.2.4. 'अर्यमेति तमाहुर्यो ददाति'। The Brāhmaṇa passage should come immediately after अर्यमा—the third word in the same line.
११. अशः P. D. तथा सूर्यमूर्त्यन्तरभूत एतन्नामको देवोऽसि Sy.
१२. अस्मदीये यज्ञे Sy.
१३. ०अंशभा० M. ०लोशभा० P. ०ञांशभा० D.
१४. स्वानशन् P. स्वानशान् D.
१५. स्वान्...भा० M. फलानां भाजयिता प्रापयिता Sy.
१६. VM. ignores one त्वम्।
१७. फलस्य साधु सम्पादयिता Sy.
१८. शोभनवीर्यं धनम्। तद्धेतुर्भवसि Sy.
१९. तप (व) M. स्वभूताः Sy.
२०. याः स्तुतिवाचः सन्ति ताः Sy.
२१. पूजयित P. हे हितकारितेजः! Sy.
२२. ०न्धंतां P. अस्माकं बान्धवं भजस इत्यर्थः Sy.
२३. आशु प्रेरयिता Sy.
२४. ०समूहः D. शोभनाश्वसमूहोपेतं फलम् Sy.
२५. नृ० D. नराणाम् Sy.
२६. बलस्थानीयः Sy.
२७. हे अग्ने!...प्रभूतधनः Sy.

त्वमग्ने रुद्रो असुरो महो दिवस्त्वं शर्धो मारुतं पृक्ष ईशिषे ।
त्वं वातैररुणैर्यासि शङ्गयस्त्वं पूषा विधतः पासि नु त्मना ॥६॥

त्वमग्ने । त्वम् । अग्ने[1] ! रुद्रश्च[2] भवसि । बलवान्[3] । महान्[4] । दीप्तः[5] । त्वम् । मरुतः[6] । वेगः[7] । अन्नस्य[8] च । ईशिषे[9] । त्वम्[10] । वातैः[11] । अरुणैः[12] । यासि[13] । सुखावासः[14] । त्वम् । पोषकः[15] । परिचरतः[16] । स्वयम्[17] । एव[18] । पासि[19] ।

---

१. Omitted by P.D. हे भगवन्नग्ने ! BB.

२. रुद्दुःखं दुःखहेतुर्वा पापादिः तस्य द्रावयिता एतन्नामको देवोऽसि । 'रुद्रो वा एष यदग्निः' (TS. 5.4.3.1.) इत्यादिष्वग्ने रुद्रशब्देन व्यवहारात्, यद्वा त्वं रुद्रः । रौति मामनिष्ट्वा नरा दुःखे पतिष्यन्तीति रुद्रः । तादृशोऽसि Sy. 'रुद्रो रौतीति सतः' (N.10.5.) इति हि निरुक्तम् । स्वयं रुद्र एव त्वं यो रोदयिता सर्वेषामुपसंहारे । 'रोदेर्णिलुक्च' इति रक् प्रत्ययः ।...एवं संहारमूर्तिरूपेणाग्निस्स्तूयते । शत्रुमारणादौ रुद्रवद्भावात् । ...यद्वा रुद्रवान् रुद्रः । मत्वर्थीयोऽकारः । रुद्रपराक्रमवानित्यर्थः BB.

३. शत्रूणां निरसिता, असुर्बलं तस्य दाताऽऽदित्यरूपश्च त्वमसि । अग्नेर्द्युलोकसम्बन्ध्यसुरत्वम् 'उत वा दिवो असुराय मन्म' (RV.5.41.3.) इत्यादिषु Sy. रोदनहेतुमाह । असुरो निरसिता सर्वाधिकाराणाम् । 'असेरुरन्' इत्युरन्प्रत्ययः BB.

४. महा P.M. महतः Sy. मह उत्सवकारी त्वं हविषां प्रदानेन BB.

५. द्युलोकात्, उपलक्षणमेतत्, लोकत्रयात्, द्युलोकस्य सम्बन्धी Sy. दिवो द्युलोकस्य ।...यद्वा देव उच्यते । दिवो द्युलोकवासिनां देवानां महो महान् महादेव इत्यर्थः । महतीति महः, पचाद्यच् BB.

६. त्व कृतः P. मरुत्समूहरूपम् Sy. यस्मादन्नस्येशिषे तस्मात् त्वमेव मारुतं मरुतः सम्बन्धि शर्धो बलं च, त्वदायत्तत्वात् BB.

७. बलमसि, वायुरूपश्च त्वमसीत्यर्थः । एवमग्न्यादित्यवायुरूपस्त्वम् Sy.

८. अन्नस्य हविर्लक्षणस्य Sy. पृक्षतिश्छान्दसः पृणक्तिपर्यायः, ततः क्विप् BB.

९. चेषी D. चेषि P. चेषिष्टे M. ईश्वरो भवसि Sy. १०. त्वें P.

११. पातै P. वायुसदृशैः...यद्वा वातैर्वायुभिरुत्पन्नः सन् यासि वने Sy. वाततुल्यैर्वातजवैः BB.

१२. मरुणै P. अरुणवर्णैरश्वैः...यद्वा अरुणैर्गमनशीलैः Sy. सन्ध्यावर्णैः BB.

१३. प्राप्नोषि यागगृहम् Sy. अश्वैर्यासि BB.

१४. सुखस्य गृहरूप आवासभूतः सन् Sy. सुखगृहम् BB.

१५. प्रोष० P.D. पोषको भूत्वा BB.

१६. ०चरत. D.M. परिचरतो यजमानान् Sy. चरुपुरोडाशादिभिस्त्वामर्चयतः BB.

१७. आत्मना, अनुग्रहरूपया स्वबुद्ध्यैव Sy.

१८. क्षिप्रम् Sy.

१९. आवासि D. रक्षसि ।...हे अग्ने ! रुद्ररूप ! एवङ्गुणविशिष्टस्त्वं रुद्रतुल्यपराक्रमो भूत्वाऽनया घोरया तन्वाऽस्माकं शत्रून्मारयेति भावः BB.

This stanza=TS. 1.3.14.1.

त्वम॑ग्ने द्रविणो॒दा अ॑रं॒कृते॒ त्वं दे॒वः स॑वि॒ता र॑त्न॒धा अ॑सि ।
त्वं भगो॑ नृपते॒ वस्व॑ ईशिषे॒ त्वं पा॒युर्दमे॒ यस्तेऽवि॑धत् ॥७॥

त्वमग्ने द्रविणोदाः । त्वम् । अग्ने ! धनस्य दाता[1] भवसि । अलङ्कुर्वते[2] । त्वम् । देवः[3] । सविता[4] । रत्नानां धाता च[5] । भवसि । त्वमेव[6] । भगः[7] । नृपते[8] ! धनस्य । ईशिषे[9] । त्वम्[10] । रक्षकः[11] । गृहे[12] । यः । तव । परिचरति ।

त्वाम॑ग्ने॒ दम॒ आ वि॒श्पतिं॒ विश॒स्त्वां राजा॑नं सुवि॒दत्र॑मृञ्जते ।
त्वं विश्वा॑नि स्वनीक पत्यसे॒ त्वं स॒हस्रा॑णि श॒ता दश॒ प्रति॑ ॥८॥

त्वामग्ने । त्वाम् । अग्ने ! गृहे[13] । आह्वयन्ति[14] । विशां पतिम्[15] । मनुष्याः[16] । त्वाम् । ईश्वरम्[17] । शोभनधनम्[18] । प्रसाधयन्ति[19] । त्वम् । विश्वानि[20] धनानि । प्रति[21] । ईश्वरो भवसि[22] । हे शोभनज्वलदनीक[23] ! त्वम् । सहस्राणि[24] प्रभवसि[25] । शतानि[24] । दश[24] च वीराणाम्[26] ।

---

१. हिरण्यस्य दातासि Sy.
२. यजमानाय Sy.
३. द्योतमानः Sy.
४. सर्वस्य सत्कर्मसु प्रेरकः Sy.
५. धाता त्वं च P. रत्नानां रमणीयानां धनानां मणिमुक्तादीनां धारयिता Sy.
६. त्वम P. D.
७. भजनीयः Sy.
८. नृणां पालकाग्ने ! Sy.
९. समर्थो भवसि दातुम् Sy.
१०. त्व D. Sy. adds असि to त्वम् ।
११. पालकः Sy. १२. यज्ञगृहे Sy.
१३. स्वकीये यज्ञगृहे Sy.
१४. आसादयन्ति, उपसर्गवशाद्योग्यक्रियाध्याहारः Sy.
१५. पतिः D. यजमानानां पालकम् Sy.
१६. यजमानाः Sy.
१७. दीप्यमानम् Sy.
१८. शोभनज्ञानमस्मदनुकूलचेतस्कं सुधनं वा Sy.
१९. 'ऋञ्जतिः प्रसाधनकर्मा' इति यास्कः । (N.6.21.)
२०. वशानि P. विशानि D. सर्वाणि । हवींषीति शेषः । षष्ठ्यर्थे द्वितीया । विश्वेषां हविषामाज्यसोमपुरोडाशादीनाम् Sy.
२१. एतत्संख्याकानामभिमतसाधनानां प्रतिनिधिरित्यर्थः । 'प्रतिः प्रतिनिधिप्रतिदानयोः' (Pa. 1.4.92.) इति कर्मप्रवचनीयत्वम् । तैर्यत् फलं भवति तत्त्वया लभ्यत इत्यर्थः Sy.
२२. ईश्वरनामैतत् । 'इरज्यति पत्यते' (Ngh. 2.21.2.) इति तन्नामसु पाठात् । यद्वा पतिभावमाचरसि Sy.
२३. ०ज्वालादनीक D. ०ज्वालानदीक P. हे शोभनज्वालारूपसेन ! Sy.
२४. एतत्संख्याकानि Sy.
२५. प्रतिभवसि P.
२६. The passage beginning with मनुष्याः and ending with वीराणाम् is omitted by M.

त्वाम॑ग्ने पि॒तर॑मि॒ष्टिभि॒र्नर॒स्त्वां भ्रा॒त्राय॒ शम्या॑ तनू॒रुच॑म् ।
त्वं पु॒त्रो भ॑वसि॒ यस्ते॑ऽविध॒त्त्वं सखा॑ सु॒शेवः॑ पास्या॒धृषः॑ ॥९॥

त्वामग्ने[1] । त्वाम् । अग्ने ! पातारम्[2] । इष्टिभिः[3] कुर्वन्ति । ऋत्विजः[4] । त्वामेव च । भ्रातृत्वाय[5] च । कर्मणा[6] । अज्ञानां रोचयितारम्[7] । त्वम् । पुत्रश्च[8] । भवसि । यः[9] । ते[10] । परिचरति । सखा[11] च । सुसुखः[12] । रक्षसि[13] । आथर्वणात्[14] ।

त्वम॑ग्न ऋ॒भुरा॒के न॑म॒स्य१॒॑स्त्वं वाज॑स्य क्षु॒मतो॑ रा॒य ई॑शिषे ।
त्वं वि भा॑स्यनु॑ दक्षि दा॒वने॒ त्वं वि॒शिक्षु॑रसि य॒ज्ञमा॒तनिः॑ ॥१०॥

त्वमग्ने[15] । त्वम् । अग्ने ! दीप्तः[17] । अन्तिके[18] । नमस्यश्च[19] नः । त्वम् । अन्नस्य । धनस्य[20] च । शब्दवतः प्रसिद्धस्य[21] । ईशिषे[22] । त्वम् । दीप्यसे[23] । अनुदहसि च शत्रून्[24] । प्रयच्छसि[25] । त्वम् । विविधस्य दाता[26] । असि । यज्ञस्य[27] । विस्तारयिता[28][29] ।

---

१. Omitted by M.
२. पातरम् P.D. पालकम् Sy.
३. एवणसाधनैर्यागैर्यजन्त इति शेषः । पितृवत् पालनाय यजन्त इत्यर्थः Sy.
४. ऋत्विज D. नेतारो यजमानाः Sy.
५. ०नृव्याय M. सौभ्रात्राय Sy.
६. कर्मनामैतत् (Ngh.2.1.) । कर्मणा यजन्त इति शेषः । यद्वा उभयत्र वक्ष्यमाणेन 'अविधत्' इत्यनेन सम्बन्धः Sy.
७. रोचयित्रं च M. शरीराणां दीपकं शरीरेषु दीप्यमानं वैश्वानरात्मना Sy.
८. पुत्रवत्पालयिता Sy.
९. नरः Sy. १०. त्वाम् Sy.
११. समानख्यानः । सखिवद्धितकारी Sy.
१२. शेवमिति सुखनाम (Ngh.3.6.) । सुष्ठु सुखकारी Sy.
१३. पितृत्वकामाय पितृत्वेन भ्रातृत्वकामाय भ्रातृत्वेन पुत्रत्वकामाय पुत्रत्वेनं.यो भवति त्रिप्रकारेण रक्षतीत्यर्थः Sy.
१४. आसर्व० M. आथर्वकात्मा Sy.
१५. VM. ignores one त्वम् ।
१६. Omitted by P.D.
१७. उरुभासमानो मेधावी वा Sy.
१८. अतीके P. . . .सन्निधावेव Sy.
१९. नमस्कार्यः स्तुत्य इत्यर्थः । इतरदेवतावन्मन्त्रप्रतिपाद्याकारेण स्तुत्यो न भवति किन्तु प्रत्यक्ष इत्यर्थः Sy.
२०. अन्नस्यश्चनत्मन्नस्य P.
२१. सर्वत्र श्रूयमाणस्य Sy.
२२. स्वामी भवसि, अतस्तद्देहीत्यर्थः Sy.
२३. विशेषेण दीप्यसे Sy. २४. अनुक्रमेणैव दहसि काष्ठादीन्, दहेर्लटि सिपि रूपम् । संहितायां भवभावाभावश्छान्दसः Sy.
२५. प्रयच्छ P. छेदनायान्धकारस्य । यद्वा हविषो दानवते यजमानाय वा Sy.
२६. विशेषेण शिक्षयिता साधयिता Sy.
२७. यज्ञम्—'न लोकाव्यय०' (Pa. 2.3. 69.) इति षष्ठ्या निषेधः Sy.
२८. फलस्य सर्वतो विस्तारयिता Sy.
२९. VM. ignores वि

त्वमग्ने अदितिर्देव दाशुषे त्वं होत्रा भारती वर्धसे गिरा ।
त्वमिळा शतहिमासि दक्षसे त्वं वृत्रहा वसुपते सरस्वती ॥११॥

त्वमग्ने । त्वम् । अग्ने ! अदितिः[1] । देव ! भवसि । यजमानस्य । त्वमेव । होत्रा[2] । भारती[3] च देवपत्न्यौ[4] । संवर्धसे[5] । स्तुत्या । त्वमेव । इळा[6] देवी । शतसंवत्सरा[7] । भवसि । दक्षसे[8] प्रजापतये । त्वम् । वृत्रहा[9] । वसूनां[10] पते ! सरस्वती[11] च ।

त्वमग्ने सुभृत उत्तमं वयस्तव स्पार्हे वर्ण आ सन्दृशि श्रियः ।
त्वं वाजः प्रतरणो बृहन्नसि त्वं रयिर्बहुलो विश्वतस्पृथुः ॥१२॥

त्वमग्ने । त्वम् । अग्ने ! सुष्ठु सम्भृतः[12] सन् । उत्तमम्[13] । अन्नं[14] भव । तव[15] । स्पृहणीये । वर्णे[16] । सन्दर्शने[17] च । यजमानानां श्रियः[18] । आगच्छन्ति[19] । त्वम् । बलवान्[20] । प्रकर्षेण तारयिता[21] । महान् । असि । त्वमेव । धनमसि[22] । बहु[23] । सर्वतश्च । पृथुः[24] ।

---

१. अखण्डयिता परिपालयितासि । यद्वा अदीना भूमिरसि Sy.
२. होमनिष्पादका Sy.
३. भरतस्यादित्यस्य सम्बन्धिनी रश्मिरूपा सती Sy.
४. ॰पत्न्यो P. ॰पत्न्योः D.
५. प्रवृद्धो भवसि Sy.
६. भूमिः Sy.
७. हिमशब्दः कालोपलक्षकः । अपरिमितकाला नित्या Sy.
८. दानाय समर्था भवति । तिङ उत्तरत्वादनिघातः Sy.
९. पापादेर्हन्ता Sy.
१०. ॰नावते D. ॰नाभवते P. हे धनपालक ! Sy.
११. सरणवान् वायुः । तत्सम्बन्धिनी एतन्नियामिका माध्यमिकाऽसि । आदित्याग्निवायूनां सम्बन्धिन्यो भारतीळासरस्वत्याख्या यास्तिस्रो देव्यः सन्ति ता अपि त्वमेवेत्यर्थः Sy.
१२. सम्भवः M. सम्भृताः P. सुष्ठु पोषितः सन् Sy.
१३. निरतिशयम् Sy.
१४. अन्नमायुष्यं वा त्वमसि तत्सम्पादकोऽसीत्यर्थः Sy.
१५. भवत P.D.
१६. लोहितशुक्लादिलक्षणे Sy.
१७. सम्यग्दर्शनीये Sy.
१८. ऐश्वर्याणि कान्तयो वा Sy.
१९. आश्रित्य वर्तन्ते । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः Sy.
२०. अन्नम्, तत्साधकत्वात्ताच्छब्द्यम् । अन्नसाधक इत्यर्थः Sy.
२१. प्रतारयिता पापात् Sy.
२२. धनरूपोऽसि Sy.
२३. सर्वविषयबाहुल्योपेतः Sy.
२४. पृथु P.D. विस्तीर्णः प्रख्यात इत्यर्थः Sy.

त्वाम॑ग्न आदि॒त्यास॑ आ॒स्यं॑१ त्वां जि॒ह्वां शुच॑यश्चक्रिरे कवे ।
त्वां रा॑ति॒षाचो॑ अध्व॒रेषु॑ सश्चिरे॒ त्वे दे॒वा ह॒विर॑द॒न्त्याहु॑तम् ॥१३॥

त्वामग्ने[1]। अग्ने ! त्वाम् । आदित्याः[2]। आस्यम्[3]। चक्रिरे। त्वामेव। जिह्वां[4] च। कवे[5]! दीप्ताः[6]। त्वाम्[7]। धनस्य सम्भक्तारः[8]। यज्ञेषु। सेवन्ते[9]। त्वयि। देवाः। आहुतम्[10]। हविः। भक्षयन्ति[11]।

त्वे अ॑ग्ने॒ विश्वे॑ अ॒मृता॑सो अ॒द्रुह॑ आ॒सा दे॒वा ह॒विर॑द॒न्त्याहु॑तम् ।
त्वया॒ मर्ता॑सः स्वदन्त आसु॒तिं त्वं गर्भो॑ वी॒रुधां॑ जज्ञिषे॒ शुचिः॑ ॥१४॥

त्वे अग्ने[12]। त्वयि। अग्ने ! सर्वे[13]। देवाः[14]। न द्रुह्यन्ति[15]। आस्येन[16] च। देवाः। हविः। भक्षयन्ति। आहुतम्। त्वयैव[17]। मर्ताश्च[18]। अन्नम्[19]। स्वदन्ते[20]। त्वम्। गर्भः[21]। वीरुधाम्[22]। जायसे[23]। दीप्तः[24]।

---

१. त्वम॰ P.

२. अदितेः पुत्रा इन्द्रादयः Sy.

३. इदित्यास्याय P. आदित्यस्याय D. स्वकीयं मुखं भक्षणपानादिसाधनम् Sy.

४. स्वकीयजिह्वास्थानीयमास्वादनसाधनम्। त्वन्मुखेनैव भक्षयन्ति त्वज्जिह्वयैव आस्वादयन्तीत्यर्थः Sy.

५. हे क्रान्तप्रज्ञ ! Sy.

६. दीप्तां M. शुद्धा दीप्ता वा देवाः Sy.

७. Omitted by M.

८. रातिर्दानं दत्तं हविरादि धनं वा। तेन समवेता देवाः Sy.

९. ...त्वामेव प्रतीक्षन्ते, विना त्वया ह्येषां हविर्भक्षणायोगात् Sy.

१०. सर्वतो दत्तम् Sy.

११. ॰यति P. एवं सर्वदेवोपकारिणं महानुभावं स्तौमीत्यर्थः Sy.

१२. त्वमग्ने P.

१३. सर्व P.

१४. अमरणधर्माणः Sy.

१५. अद्रोग्धारः Sy.

१६. त्वदीयेन ... आस्यशब्दस्य तृतीयैकवचने 'पद्दन्नोमास्–' इत्यादिना आसन्नादेशः। 'ऊडिदंपदादि–' इति विभक्तेरुदात्तत्वम् Sy. १७. साधनभूतेन Sy.

१८. मर्ताश्च P.D.M. मनुष्या अपि Sy.

१९. अन्नं P. रसरूपमन्नादिकम् Sy.

२०. आस्वादयन्ति Sy.

२१. गर्भस्थानीयः तेषां मध्येऽवस्थानात् Sy.

२२. ॰धायं P. लतादीनाम् Sy.

२३. उत्पादयसि सस्याद्यन्नम् Sy.

२४. सदीप्तम् M. Sy. reads वसुः for शुचिः and explains as सर्वेषां निवासभूतः सन्.

**त्वं तान्त्सं च॒ प्रति॑ चासि म॒ज्मनाग्ने॑ सुजात॒ प्र च॑ देव रिच्यसे ।**
**पृ॒क्षो यदत्र॑ महि॒ना वि ते॒ भुव॒दनु॒ द्यावा॑पृथि॒वी रोद॑सी उ॒भे ॥१५॥**

त्वं तान् । त्वम् । सूक्तेऽनुक्रान्तान्[1] देवान् । बलेन । सं[2] । च । भवसि[2] । प्रति[3] । च यत् सर्वे[4] देवाः सह कुर्वन्ति यच्च प्रत्येकं तदुभयं कर्तुं शक्नोषि । अग्ने ! शोभनजनने[5] ! देवान् प्ररिच्यसे[6] । च । यस्मात् । तव । महत्त्वेन[7] । ह्यवदानमात्रमपि[8] हुतम् अन्नम् । विभवति[9] । सर्वस्य रोधयित्र्यौ[10] । द्यावापृथिवी[11] । उभे अपि । अनुभवति[12] 'यावदेता देवता[13] कामयते[14] यावदेका तावदाहुतिः[15] प्रथते'[16] इति ब्राह्मणम् । अथो गिरिमात्रं वर्धते अथोऽपरम्[17][18], इति च[19] ।

**ये स्तो॒तृभ्यो॒ गोअ॑ग्रा॒मश्व॑पेशस॒मग्ने॑ रा॒तिमु॑पसृ॒जन्ति॑ सू॒रयः॑ ।**
**अ॒स्मांश्च॒ तांश्च॒ प्र हि नेषि॒ वस्य॒ आ बृ॒हद्व॑देम वि॒दथे॑ सु॒वीराः॑ ॥१६॥**

ये[21] स्तोतृभ्यः । ये । स्तोतृभ्यः[22] । गोमुखाम्[23] । अश्वरूपाम्[24] । अग्ने ! रातिं दानम् ।

---

१. ०क्रान्ता P.D. प्रसिद्धान्...Sy.
२. सङ्गच्छसि । तैः सहितोऽपि भवसि Sy.
३. प्रति is repeated by M.D. तथा सामर्थ्येन प्रति चासि । प्रत्येकं तैर्विभिन्नः प्रतिनिधिर्वा भवसि । प्रतिस्वीकारसमये तैः सहितो भवसि वियुक्तश्च भवसीत्यर्थः Sy. ४. सर्व P.
५. हे शोभनजनन ! मन्त्रसहितमथनेनोत्पन्नत्वादग्नेः सुजन्मत्वम् Sy.
६. तैर्बलेन चाधिको भवसि Sy.
७. मनुष्येण P. माहात्म्येन Sy.
८. ध्यावदानमा० P. ह्यपरानमा० D. समञ्जनस्य आहुतिदानस्य वा प्रकारत्रयत्वम् । यथा च तेषां नामानि—उपस्तरणम् अवदानम्-अभिधारणञ्चेति ॥ सर्वमप्यन्नम् Sy. ९. समर्थं भवति Sy.
१०. सर्वनिरोधनस्वभावे Sy.
११. ध्याद्यावा० P.
१२. अनु ते प्रति । तयोर्मध्ये व्याप्तमित्यर्थः । त्वयि हुतमन्नं त्वन्महत्त्वेन लोकत्रये व्याप्तमित्यर्थः Sy.
१३. D. repeats देवता देवता ।
१४. तामयते P.
१५. तावदेता P. ०हुति D.
१६. TB. 3.2.6.4. TB. reads यावदेका देवता for यावदेता देवता fo VM.
१७. अथोग्निमा० D. अयोग्निमा० P.
१८. ०परिमि० P.D.
१९. VM. ignores देव and अत्र । हे देव ! अस्मिन् यज्ञे Sy.
२०. The editions of Max Müller, Poona, and Ajmer read अस्माञ्च but the reading should be अस्मांश्च on the analogy of the following word तांश्च । The grammatical sūtra of Pāṇini requiring अस्मांश्च is the following:—'नश्छव्यप्रशान्' 8.3.7. But both forms are allowed by the following sūtra उभयथर्क्षु Pa. 8.3.8.
२१. अनया होता स्तुतिनिगमव्याजेन अभिमतमाशास्ते Sy. २२. स्तुतिकर्तृभ्यः Sy.
२३. ०मुखाम् P. गावोऽग्रगामिन्यो यस्यास्तादृशीं गोप्रमुखाम् Sy.
२४. पेश इति रूपनाम (Ngh.3.7.) अश्वेन निरूपणीयाम् । एतद् द्वयं प्राधान्याभिप्रायम् । गौश्च अश्वश्च अजाश्चेति दक्षिणापरिगणनेषु गवाश्वयोः प्राधान्यात् Sy.

उदाराः[१]। प्रयच्छन्ति[२]। तान्[३]। अस्मान्[४]। च । त्वमभ्युदयम्[५]। प्रति[६]। प्रणयसि[७]। यज्ञे ।
दीयतां[८] भुज्यतामिति[९] बृहद्[१०] वचनम् । वदेम[११]। सुपुत्राः[१२][१३]।

## II. 2.

यज्ञेन वर्धत जातवेदसमग्निं यजध्वं हविषा तना गिरा ।
समिधानं सुप्रयसं स्वर्णरं द्युक्षं होतारं वृजनेषु धूर्षदम् ॥१॥

यज्ञेन[१४]। यज्ञेन[१५]। वर्धयत[१६]। जातवेदसम्[१७]। अग्निम् । यजध्वम्[१८]।
हविषा[१९]। धनेन[२०]। स्तुत्या च । दीप्यमानम्[२१]। स्वन्नम्[२२]। सर्वमनुष्यम्[२३]। दीप्तम्[२४]।

---

१. दरम् D. दारम् M. मेधाविनः प्रेरयितारो वा यजमानाः Sy.
२. प्रयच्छयच्छन्ति M. ददते Sy.
३. यजमानान् Sy. ४. अस्ताश्वं M. ऋत्विजः Sy. ५. वसीयः श्रेष्ठं स्वर्गादिस्थानम् Sy. ६. सर्वतः Sy.
७. प्रणयतधि P. प्रकर्षेण नयसि खलु । नयेत्यर्थः Sy. ८. द्रियतां P.
९. भुज्यमामिति P. भज्य॰ M.
१०. ब्रह्मव॰ D. बह्मव॰ P. बृहद्यव॰ M. महन्मन्त्रजातम् Sy. ११. वमेम P.D. उच्चारयामः । स्तुम इत्यर्थः Sy.
१२. सुपत्राः P. शोभनपुत्रादिसहिताः Sy.
१३. VM. ignores च and हि । हि प्रसिद्धौ Sy. Ms. D. puts the figure ॥१॥ here to indicate the end of the first hymn. No such number is given in P. and M.
१४. 'यज्ञेन वर्धत' इति त्रयोदशर्चं द्वितीयं सूक्तं मण्डलद्रष्टुर्गृत्समदस्यार्षम् । 'मण्डलादिष्वाग्नेयम्' (KSA.12.12.p.5.) इति परिभाषयाग्नेयम् । तुशब्दानुकर्षादिदमपि जागतम् । 'यज्ञेन सप्तोना' (KSA.13.2.p.13.) इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोर्जागते छन्दसि अस्य विनियोगः । सूत्रं तु पूर्वसूक्त एवोक्तम् । तथा चातुर्विंशिके तृतीयसवने जातवेदस्यनिविद्धानीयमिदम् । 'यज्ञेन वर्धतेत्याग्निमारुतम्' (ASS.7.4.) इति सूत्रितत्वात् । पृष्ठ्याभिप्लवषडहयोर्द्वितीयेऽहन्यपि जातवेदस्यनिविद्धानमिदम् । 'चातुर्विंशिकं तृतीयसवनम्' इति चतुर्विंशादतिदिष्टत्वात् Sy.
१५. यागेन Sy. १६. हे यजमानाः ! ऋत्विजः ! वा यूयं . . .प्रवर्धयत Sy.
१७. जातानां वेदितारं जातधनं जातप्रज्ञं वा Sy.
१८. पूजयध्वम् Sy.
१९. सामान्येनोक्त्वा विशेषेणाह. . .चरुपुरोडाशादिना Sy.
२०. घनेन M. विस्तृतया Sy.
२१. समिध्यमानम् Sy.
२२. ॰न्न P.D. शोभनान्नम् Sy.
२३. ॰ष्य P.D.M. स्वर्गं नेतव्या यजमाना यस्य तादृशम्, यद्वा स्वरिति सर्वपर्यायः। स्तुतीनां नेतारः स्तोतारः । बहुस्तोतारमित्यर्थः Sy.
२४. द्युनिवासिनं वा Sy.

होतारम्[1] । यज्ञेषु[2] । धुरि सीदन्तम्[3] ।

**अभि त्वा नक्तीरुषसो ववाशिरेऽग्ने वत्सं न स्वसरेषु धेनवः ।**
**दिवइवेदरतिर्मानुषा युगा क्षपो भासि पुरुवार संयतः ॥२॥**

अभि त्वा नक्तीः[4] । शब्दं कुर्वन्ति[5] । त्वा । रात्रयः[6] । उषसश्च[7] । अग्ने[8] ! वत्सम् । इव[9] । गोष्ठेषु[10] । धेनवः । गन्तादित्यः[11] । मानुषाणि[12] । युगानि[13]=अहानि त्वम् । रात्रीः[14] । भासयसि[15] । त्वया सङ्गच्छमानः[16] । बहुभिः वृ[17]णीय[18] !

**तं देवा बुध्ने रजसः सुदंससं दिवस्पृथिव्योररतिं न्येरिरे ।**
**रथमिव वेद्यं शुक्रशोचिषमग्निं मित्रं न क्षितिषु प्रशंस्यम् ॥३॥**

तं देवाः । द्यावापृथिव्योरुभयोः । सम्भरन्तम्[19] । अग्निम्[20] । देवाः[21] । लोकस्य[22] । मूले

---

१. होमसम्पादकम् Sy.
२. बलेषु Sy.
३. ०न्त P. बलस्य कर्तारमित्यर्थः । अग्निपाटवे सति शारीरं बलं भवतीति प्रसिद्धम् Sy.
४. नक्ति M. नक्ती P. अभिध्वानन्ति D.
५. आकाङ्क्षन्ते यजमाना यष्टुम् । यद्वा अहानि रात्रयश्च त्वामेव कामयन्ते होतुम् । काले कर्मणश्चोदनात् कालानां कामनमुपचर्यते Sy.
६. रात्र P.D. रात्रीः सर्वासु रात्रिषु यद्वा नक्तशब्दः सायङ्कालं लक्षयति, सायंप्रातरग्निहोत्रस्य सद्भावात् Sy.
७. अहानि सर्वेष्वपि अहःसु सर्वेषु कालेषु सायंप्रातःकालेषु वा Sy.
८. अने P. हे अग्ने ! Sy.
९. वत्समोप P. तत्र दृष्टान्तः Sy.
१०. गोषु D. गोष्ठं P. स्वयंसरणशीलेष्वहःसु, सुखसरणाधिकरणेषु गोष्ठेषु वा Sy.
११. व्याप्तो विस्तृतः, तत्रत्यानां देवानां हविःप्रदानार्थंव सर्वत्र व्याप्त इत्यर्थः Sy.
१२. मनुष्याणां यजमानानां सम्बन्धीनि Sy.
१३. युगशब्दः कालोपलक्षकः । प्रातरादिसवनानि सर्वेषु सवनेषु । अत्यन्तसंयोगे द्वितीया Sy.
१४. रात्रिः P. सर्वासु रात्रिष्वपि Sy.
१५. दीप्यसे Sy.
१६. ०ना P.D.M. नियतस्त्वम् Sy.
१७. हे बहुभिर्वरणीय ! अग्ने ! Sy.
१८. VM. ignores अभि । दिवइव । इत् and आ । अभि प्रति । दिवइव द्युलोकस्येव । आ समन्तात् Sy.
१९. ईश्वरं गन्तारं व्याप्तं वा Sy.
२०. प्रसिद्धमुक्तगुणविशिष्टम्. . . Sy
२१. प्रसिद्धा व्यवहर्तार ऋत्विजो वा Sy.
२२. रञ्जनात्मकस्य Sy.

पृथिव्याम्[1]। निहितवन्तः[2]। सुकर्माणम्[3]। रथमिव[4]। धनप्राप्तिहेतुम्[5]। शुक्रम्[6]। दीप्तम्। अग्निम्। मित्रम्[7]। इव। मनुष्यैः शंसनीयम्[8]। वेदिषु[9]।

**तमु॒क्षमा॑णं॒ रज॑सि॒ स्व आ दमे॑ च॒न्द्रमि॑व सु॒रुचं॑ ह्वा॒र आ द॑धुः।**
**पृश्न्याः॑ पत॒रं चि॒तय॑न्तम॒क्षभिः॑ पा॒थो न पा॒युं जन॑सी उ॒भे अनु॑ ॥४॥**

तमुक्षमाणम्। तम्[10]। सिञ्चन्तम्[11]। अस्यां भूमौ[12]। स्वे[13]। गृहे[14]। वरुणमिव[15]। सुरुचम्[16]। बाधायां[17] सञ्जातायाम्। आदधुः[18]। दिवः[19]। गन्तारम्। प्रज्ञापयन्तम्[20]। तेजोभिः[21]। अन्नम्[22]। इव। रक्षकम्[23]। उभयोः। द्यावापृथिव्योः[24][25]।

---

१. ०व्या P. . .वेद्यामित्यर्थः Sy.

२. नितरामीरयन्ति। व्यापारयन्ति स्वस्वहविर्लाभाय। ऋत्विक्पक्षे स्तोत्रादिना नितरां गच्छन्ति भजन्ते Sy.

३. ०णा P. ०ण D. शोभनदर्शनम् Sy.

४. रथं यथा स्वाभिमतलाभायाश्रयन्ते तद्वत्, यद्वा रथमिव प्राप्तिसाधनत्वेन वर्तमानम् Sy.

५. ०प्तहेतु P. ०प्तं हेतु D. वेदो धनं तस्मै हितम्, वेदितव्यम् Sy.

६. VM. explains शुक्रशोचिषं separately as शुक्रम्। दीप्तम्। दीप्तवर्णम् Sy. ७. सखिवत् कार्यसाधकम्, यद्वा आदित्यमिव Sy.

८. प्रकर्षेण स्तुत्यम् एवंमहानुभावमग्निं न्येरिर इति Sy.

९. यागभूमिषु मनुष्येषु वा Sy.

१०. शतं D. स्तुत्यतरम् Sy.

११. सिञ्चन्तं वृष्टिजलम्, . . . घृतादिनासिच्यमानं वा Sy.

१२. रजस्यन्तरिक्षे पृथिव्यां वेद्यां वा Sy.

१३. स्वकीये Sy.

१४. ग्रहे P. यागगृहे Sy.

१५. चन्द्रमिति हिरण्यनाम। (Ngh.1.2.) हिरण्यमिव Sy.

१६. शोभनदीप्तिम् Sy.

१७. ब्या P. विजने Sy.

१८. अ० M. आदधते Sy.

१९. पश्चात् प्रवृद्धावस्थायां द्युलोकस्यान्तरिक्षस्य Sy.

२०. चेतयमानम् Sy.

२१. स्वकीयैर्ज्वालारूपैरवयवैः Sy.

२२. उदकम् Sy.

२३. रक्षतम् M.

२४. सर्वस्य जनयित्र्यौ. . .Sy.

२५. VM. ignores आ and अनु। आ सर्वतः। अनु व्याप्तम् भूम्यां होमाधारत्वेन स्थित्वा हविष्प्रापणाय द्युलोकगामिनमिति भावः। एवंरूपमग्निमादधते Sy.

स होता विश्वं परि भूत्वध्वरं तमु हव्यैर्मनुष ऋञ्जते गिरा ।
हिरिशिप्रो वृधसानासु जर्भुरद्द्यौर्न स्तृभिश्चितयद्रोदसी अनु ॥५॥

स होता । सः[1] । ह्वाता[2] । सर्वम्[3] । यज्ञम् । परितः[4] । भवतु[5] । तम् । एव[6] । हव्यैः[7] । स्तुत्या च । मनुष्याः । अन्नं[8] कुर्वन्ति । हरितवर्णशिप्रः[9] । वर्धमानासु प्रजासु[10] । भरणं कुर्वन्[11] । तेजोभिः[12] । चेतयति[13] । द्यावापृथिव्योरर्थान्[14] । आदित्यः[15] । इव[16][17] ।

स नो रेवत्समिधानः स्वस्तये सन्ददस्वान्रयिमस्मासु दीदिहि ।
आ नः कृणुष्व सुविताय रोदसी अग्ने हव्या मनुषो देव वीतये ॥६॥

स नो रेवत् । सः । अस्माकम् । धनयुक्तम्[18] । दीप्यमानः[19] । अविनाशाय[20] । सम्यग् ददत्[21] । धनम्[22] । अस्मासु । दीप्यस्व[23] । द्यावापृथिवी[24] च । अस्माकम्[25] । आ । कृणुष्व[26] ।

---

१. अग्निः Sy.
२. होमनिष्पादकः सन् Sy.
३. सर्वं M.
४. Missing in M.
५. ०त P.
६. तवेह P.D. . . अग्निम् Sy.
७. हविर्भिः Sy.
८. प्रसन्नं is suggested for अन्नम् । प्रसाधयन्ति Sy. ऋञ्जतिः प्रसाधनकर्मा (N.6.21.)
९. ०र्णो शि० P. हरणशीलहनुर्वाप्तोष्णीषो वा । 'शिप्राः शीर्षसु वितता हिरण्ययीः' (RV.5.54.11.)इत्यादिमन्त्रान्तरात् । Sy.
१०. प्रवर्धमानास्वोषधीषु ज्वालासु वा Sy.
११. कुर्वं P. पूर्यमाणो यज्ञं गन्ता, शत्रन्तं पदम् । यद्वा द्वितीयार्थे सप्तमी । वर्धमाना ओषधीर्जर्भुरत् पुनः पुनर्दहन्नित्यर्थः Sy.
१२. स्तृभिर्न नक्षत्रैरिव Sy.
१३. चेयति P. ज्वालाभिर्विस्फुलिङ्गैश्च भुवमन्तरिक्षं च व्याप्नोतीत्यर्थः Sy.
१४. अर्थानाम् P. द्यावापृथिव्यौ Sy.
१५. द्युलोकान्तरिक्षम् Sy.
१६. इति P.
१७. VM. ignores अनु ।
१८. रेवत् . . . नयुक्तं M. रयिमत् . . . यद्वा रेवदिति क्रियाविशेषणम् । रा धनं समृद्धिमद्यथा तथा (दीप्यस्व) Sy.
१९. अस्माभिः सम्यगिध्यमानः सन् Sy.
२०. ०शाय M. स्वस्तीत्यविनाशनाम । cf. Ngh.5.5. and N.11.45,46. क्षेमाय Sy.
२१. Omitted by P. D. सम्यक् प्रयच्छन् Sy.
२२. उपर्युपरिवृद्धिमद्दानयोग्यं वा धनम् Sy.
२३. दीप्य P.
२४. द्यावापृथिव्यौ Sy.
२५. तथाभूतः सन् . . . अस्मभ्यम् Sy.
२६. सर्वतः कुरुष्व । उभौ लोकौ भोगप्रदौ कुर्वित्यर्थः Sy.

अभ्युदयाय[1] । अग्ने ! हवींषि । मनुष्यस्य[2] । देवानां[3] स्वादनाय कृणु ।

**दा नो अग्ने बृहतो दाः सहस्रिणो दुरो न वाजं श्रुत्या अपा वृधि ।**
**प्राची द्यावापृथिवी ब्रह्मणा कृधि स्वर्ण शुक्रमुषसो वि दिद्युतुः[4] ॥७॥**

दा नः । अग्ने ! महद्[5] धनम् । अस्मभ्यम् । देहि[6] । शतसहस्रसंख्यायुक्तम्[7] । द्वाराणि । इव[8] । अन्नम् । अस्माकं श्रवणाय[9] जने । प्रावृतं कुरु[10] । प्राङ्मुखे[11] च । द्यावापृथिव्यौ । अन्नेन[12] ।

---

१. भ्यु० P. ०दय D.M. सुहिताय, शोभनफलाय Sy.

२. यजमानस्य मम सम्बन्धीनि Sy.

३. VM. seems to explain देव and वीतये together, as a compound word, by देवानां स्वादनाय. According to accent the word देव is in the vocative. Or he ignores देव, देवानां स्वादनाय being the explanation of वीतये alone. Sy. explains देव वीतये as two words–हे देव ! . . . देवेभ्यो भक्षणाय, पुनःपुनर्यागाद्यनुष्ठानायेत्यर्थः ।

४. Max Müller reads दिद्युतः । Poona ed. reads दिद्युतुः । As the subject is उषसः nom. pl., the reading दिद्युतुः (pl.) is a better one.

५. महतः प्रभूतान् गवाश्वादिधनविशेषान् Sy.

६. दाः–ददातेश्छान्दसे लुङि रूपम् । वाक्यभेदादनिघातः Sy.

७. श. . .स M. सहस्रसंख्योपेतान् पुत्रभृत्यादीन् Sy. शतिनस्सहस्रिणश्च पशून् BB.

८. च P. अपि, नशब्दश्चार्थे । यद्वा द्वाराणीव तत्प्राप्त्युपायान् Sy. पशुप्राप्त्युपायानिव BB.

९. ०णा D. कीर्त्यै Sy. श्रवणार्थम् BB.

१०. अपवृणु प्रेरयेत्यर्थः Sy. यथा वयं लोके जेतारः स्याम तदनुरूपं पशुप्राप्तिद्वारभूतमन्नमाह पुरु (वाजमन्नमपावृणु) . . . केचिदाहुः । दुरो द्वाराणि पशुप्राप्त्युपायानपावृधि; वाजमन्नं श्रुत्यै नापावृधि; अपि त्वश्रवणार्थमपावृधि । यथाऽपावृतेऽन्ने पशुसाध्ये श्रावणा न क्रियते, अविचार्यैवार्थित्वमात्रेण पश्वादिकं दीयते तथाऽपावृधीति । अथापरे ब्रुवते । वाजमन्नं पशुहेतुकं श्रुत्यै श्रवणायापावृधि श्रवणसामर्थ्यायाविष्कुरु । अन्नेन हि श्रवणसामर्थ्यमुपजायते । असति ह्यन्ने श्रवणसामर्थ्याभावात् । तस्माच्छ्रुत्या अपावृधि दुरो न श्रोत्रादीनि द्वाराणीव । यथैतानि श्रवणार्थमपावृतानीति BB.

११. प्रकृष्टाञ्चने अस्मदनुकूले Sy. प्राच्यावनुकूले BB.

१२. परिवृढेन कर्मणा Sy. परिवृढेन हविषा कर्मणा वा कृधि. . .यद्वा ब्रह्मणाऽन्नेन सदाऽस्माकं प्राची अनुगुणे द्यावापृथिव्यौ BB.

कुरु । आदित्यम्[1] । इव[1] । अग्निम् । उषसः[2] । विद्योतयन्ति[3][4] ।

**स इ॑धा॒न उ॒षसो॒ राम्या॒ अनु॒ स्व१॒॑र्ण दी॑देदरु॒षेण॑ भा॒नुना॑ ।**
**होत्रा॑भिर॒ग्निर्मनु॑षः स्व॒ध्व॒रो राजा॑ वि॒शामति॑थि॒श्चारु॑रा॒यवे॑ ॥८॥**

स इधानः । रमणीयासु[5] । उषःसु । दीप्यमानः[6] । अग्निः । आदित्यः । इव । दीप्यते ।
आरोचमानेन[7] । तेजसा । होत्राभिः[8] सप्तभिः । अग्निः[9] । मनुषः[10] । सुयज्ञो[11] भवति । राजा[12] ।
मनुष्याणाम्[13] । उर्वशीपुत्राय[14] च । शोभनः[15] । अतिथिः[16][17] ।

**ए॒वा नो॑ अग्ने अ॒मृते॑षु पूर्व्य॒ धीष्पी॑पाय बृ॒हद्दि॑वेषु॒ मानु॑षा ।**
**दुहा॑ना धे॒नुर्वृ॒जने॑षु का॒रवे॒ त्मना॑ श॒तिनं॑ पुरु॒रूप॑मि॒षणि॑ ॥९॥**

एवा नः । एवम् । अस्माकम्[18] । अग्ने ! देवेषु[19] । प्रत्न[20] ! स्तोत्रभवा[21] बुद्धिः ।
ववृधे[22] । महादीप्तिषु[23] । मनुष्याणाम् । दुहाना[24] । स्तुतिः । उपद्रवेषु[25] । स्तोत्रे । स्वयमेव[26] ।

---

१. आदम् P.D.M. आदित्यः, स यथा जगत्प्रकाशयति तद्वत् Sy. सुव ? (स्व) रिव आदित्य इव । सांहितिकं णत्वं छान्दसम् BB. २. उषःकालाः Sy. शुक्रं पुत्रादिकमुषस उदयाद् विविद्युतुर्विशेषेण द्योतयन्ते । द्युतेरन्तर्भावितण्यर्थाच्छान्दसो लिट्, व्यत्ययेन परस्मैपदम् BB.

३. ...उषःकाले ह्यग्नयः प्रज्वाल्यन्ते Sy.

४. VM. explains वाः once only. This stanza=TS.2.2.12.6.

५. रमणहेतुभूताः Sy.

६. इध्यमानो दीपितः सन् Sy.

७. ०नी P. रोचमानेन Sy.

८. अहोरात्राभिः M. होमसाधनभूताभिः स्तुतिभिः स्तूयमानः Sy. होत्रेति वाङ्नाम (Ngh.1.11.)

९. ०ग्निं M. १०. मनुष्यस्य होतुः Sy.

११. शोभनयागः Sy.

१२. राज D. राजमानः स्वामी Sy.

१३. प्रजानाम् Sy.

१४. मनुष्याय यजमानाय Sy.

१५. चरणशीलः Sy.

१६. अतिथिवत्पूज्यः Sy.

१७. VM. ignores अनु । अनुलक्ष्य Sy.

१८. असीम् P. अस्मान् D. अस्मदीया Sy.

१९. देवेषु मध्ये Sy.

२०. हे पूर्वभाविन् ! ...त्वाम् Sy.

२१. प्रज्ञस्तत्रपरा P. प्रशस्तेत्रपरा D. धीर्बुद्धिः स्तुतिः कर्म वा Sy.

२२. प्याययति । यद्वा मनुष्यान् धीस्त्वदीया बुद्धिः कर्म वा प्याययतु Sy.

२३. प्रभूतद्युतिषु Sy.

२४. दोग्ध्री धेनुरिव, लुप्तोपममेतत् Sy.

२५. उद्र० P. ऊर्वेषु D. यज्ञेषु Sy.

२६. स्वयंमे D. आत्मनैव Sy.

शतसङ्ख्याकम्[१]। बहुरूपम्[२]। एवर्णीयम्[३] भवति।

वयमग्ने अर्वता वा सुवीर्यं ब्रह्मणा वा चितयेमा जनाँ अति।
अस्माकं द्युम्नमधि पञ्च कृष्टिषूच्चा स्वर्ण शुशुचीत दुष्टरम् ॥१०॥

वयमग्ने[४]। वयम्[५]। अग्ने ! अश्वेन[६]। वा[७]। शोभनवीर्यं[८] शत्रुम्। चितयेम[९]। अन्नेन। वा। शत्रुजनान्[१०]। अस्माकम्। अन्नम्[११]। पञ्चसु। जनेषु[१२]। अभिभवतु। उच्चैः[१३]। आदित्यः[१४]। इव। अत्यन्तं[१५] दीप्यताम्। शत्रुभिर्दुस्तरम्[१६]।[१७]

स नो बोधि सहस्य प्रशंस्यो यस्मिन्त्सुजाता इषयन्त सूरयः।
यमग्ने यज्ञमुपयन्ति वाजिनो नित्ये तोके दीदिवांसं स्वे दमे ॥११॥

स नः[१८]। सः। अस्मान्[१९]। बुध्यस्व। सहसे हित[२०] ! प्रकर्षेण शंसनीयः[२१]। यस्मिंस्त्वयि[२२]। शोभनजननाः। स्तोतारः[२३]। अन्नमैच्छन्[२४]। यम्। अग्ने ! यजनीयम्। उपगच्छन्ति[२५]। हविष्मन्तः[२६]।

---

१. अपरिमितसङ्ख्याकम् Sy.
२. गवाश्वादिरूपेण नानारूपं धनसमूहम् Sy.
३. इर्वणि एवगायां सत्याम् Sy.
४. Omitted by P.
५. यजमानाः Sy.
६. अरणकुशलेनाश्वेन Sy.
७. वां M. वाशब्दश्चार्थे Sy.
८. ०र्यं M. शोभनसामर्थ्योपेतम् Sy.
९. प्रतिविभयेम M. ज्ञापयेमहि, कर्मणि कर्तृप्रत्ययः। यद्वा (त्वद्दत्तेनाश्वेनान्नेन च सुवीर्यं) चितयेम प्रकाशयेम Sy.
१०. शत्रुं जनान् P. शत्रून् जनान D. जनानस्मत्समानान् Sy.
११. धनम् Sy.
१२. निषादपञ्चमेषु चतुर्षु वर्णेषु Sy.
१३. ०भिभवच्चैः M. अतिप्रभूतम् Sy.
१४. सूर्यः Sy.
१५. अधिकम्, अर्थात्ययमनर्थको वा Sy.
१६. अन्येनाप्राप्तम् Sy.
१७. VM. seems to explain अति by अभिभवतु। अतिक्रम्य Sy.
१८. से न P. सौ for स नः D.
१९. अस्मदीयं स्तोत्रादिकम् Sy.
२०. हे अग्ने ! शत्रूणामभिभवितर्बलप्रभव ! Sy.
२१. स्तुत्यः Sy.
२२. यस्मिश्चयि P. स इत्युक्तं क इत्याह. . .अग्नौ Sy.
२३. नेतारः D. ०जननान्नेतारः P. . . . ऋत्विजः Sy.
२४. गमयन्ति स्तोत्राणि Sy.
२५. उपयन्ति हविः स्तोत्रादिना, स बोधि इत्यन्वयः Sy.
२६. हविर्लक्षणान्नवन्तो यजमानाः Sy.

औरसस्य[1]। पुत्रस्य रक्षणार्थम्। आहवनीये[2]। दीप्यमानम्[3]।

उभयासो जातवेदः स्याम ते स्तोतारो अग्ने सूरयश्च शर्मणि।
वस्वो रायः पुरुश्चन्द्रस्य भूयसः प्रजावतः स्वपत्यस्य शग्धि नः ॥१२॥

उभयासः। हे जातवेदः[4]! तव[5]। वयम् उभयासः[6]। स्याम[7]। स्तोतारः[8]। हविषां प्रेरयितारः[9]। च। गृहे[10]। अग्ने! अस्मभ्यम्[11]। वासयितारम्[12]। धनम्[13]। देहि[14]। बहूनां ह्लादकम्[15]। बहु[16]। प्रजावत्[17]। शोभनापत्ययुक्तम्[18]।

ये स्तोतृभ्यो गोअग्रामश्वपेशसमग्ने रातिमुपसृजन्ति सूरयः।
अस्माञ्च[19] तांश्च प्र हि नेषि वस्य आ बृहद्वदेम विदथे सुवीराः ॥१३॥

[ये स्तोतृभ्यः[20]]

---

१. औरस्य M.
औरसे पुत्रे निमित्तभूते सति। यद्वा तस्मिन् यथा दीप्यते। पुत्रगृहे यथा पित्रा दीप्यते तद्वत् Sy.
२. यागगृहे सवनीयादिस्थाने Sy.
३. VM. ignores स्वे।
स्वकीये Sy.
४. जातानां वेदितः! Sy.
५. त्वं P.
त्वत्सम्बन्धिनः Sy.
६. ०स P.D.
इत्युभये वयम् Sy.
७. भवेम Sy.
८. त्वां स्तुवन्त ऋत्विजः Sy.
९. मेधाविनो यजमानाः Sy.
१०. ग्रहे P. शर्मणि सुखे निमित्तभूते सति Sy.
११. त्वञ्च नोऽस्माकम्, अस्मभ्यम् Sy.
१२. निवासहेतोर्वसिष्ठस्य Sy.
१३. गवादिधनस्य Sy.
१४. दातुं शक्तो भवसि Sy.
१५. अतिशयेनाह्लादकस्य बहुहिरण्योपेतस्य वा Sy.
१६. प्रभूतस्य Sy.
१७. भृत्याद्युपेतस्य पुत्रादिभोगपर्याप्तस्य वा Sy.
१८. ०क्त P. शोभनपुत्रस्य ईदृग्रूपं धनम् Sy.
१९. See footnote no. 20. on RV. II.1.16.p.11.
२०. यत इयमृक् प्राक्तने (२.१.१६.) सूक्ते समायातात एवेयं त्रिष्वपि हस्तलेखेषु न पुनर्व्याख्यातेति तत्रैवास्या व्याख्यानमवलोकनीयम्। See p.11.

## II. 3.

समिंद्धो अग्निर्निहिंतः पृथिव्यां प्रत्यङ् विश्वानि भुवंनान्यस्थात् ।
होतां पावकः प्रदिवंः सुमेधा देवो देवान्यंजत्वग्निरर्हंन् ॥१॥

[1]समिद्धः[2] । संमिद्धः[3] । अग्निः । देवैरस्यां पृथिव्याम्[4] । निहितः[5] । सोऽयं प्रज्वलितः सर्वाणि । भूतानि[6] । प्रत्यङ्[7] । तिष्ठति[8] । ह्वाता[9] । शोधकः । पुराणः । शोभनज्ञानः[10] । सोऽयं देवः[11] । देवान्[12] । यजतु[13] । पूजामर्हन्[14][15] ।

नराशंसः प्रति धामान्यञ्जन् तिस्रो दिवः प्रतिं मह्ना स्वर्चिः ।
घृतप्रुषा मनंसा हव्यमुन्दन्मूर्धन्यज्ञस्य समंनक्तु देवान् ॥२॥

नराशंसः[16] । नराशंसः[17] । स्वरसेन देवशरीराणि[18] । प्रत्येकम् । अञ्जन्[19] । त्रीन् । लोकान्[20] ।

---

१. 'समिद्धो अग्निः' इत्येकादशर्चं तृतीयं सूक्तं गार्त्समदं त्रैष्टुभम्, सप्तमी जगती । समिद्धोऽग्निरग्निना नराशंसत-नूनपादादय एकादश प्रयाजदेवताः । 'समिद्ध एकादशाप्रं सप्तमी जगती' इत्यनुक्रमणिका (KSA.13.3.p.13.) पशौ शुनकानामिदमाप्रीसूक्तम् । गृत्समदस्यापि शुनकत्वात् । 'समिद्धो अग्निरिति शुनकानाम्' (ASS.3.2.) इति हि सूत्रितम् Sy.

२. ०द्ध D.

३. सम्यग् दीप्त एतन्नामकः Sy.

४. वेदिलक्षणायाम् Sy.

५. स्थापितः सन् Sy.

६. भूतजातानि Sy.

७. अभिमुखः सन् Sy.

८. ...यथा सर्वे जनाः पश्यन्ति तथा प्रवृद्धोऽभवदित्यर्थः Sy.

९. ०त P. किञ्च सोऽग्निः होमनिष्पादको देवानामाह्वाता वा Sy.

१०. ०नाः P. शोभनप्रज्ञः Sy.

११. द्योतमानः Sy.

१२. यष्टव्यानिन्द्रादीन् Sy.

१३. अत्र पूजयतु Sy.

१४. अहन् P.D.M. यागयोग्यः सन् Sy.

१५. VM. ignores अग्निः । एवंमहानुभावोऽग्निः Sy.

१६. ०स P.D.

१७. ०स M.P. नरैर्नेतृभिर्ऋत्विग्भिः शंसनीय एतन्नामकोऽग्निः Sy.

१८. स्थानान्याहुत्यधिकरणानि तेजांसि Sy.

१९. प्रत्येमं च M. व्यक्तीकुर्वन् Sy.

२०. द्योतमानान् भूम्यादिलोकांश्च । स्थित्या भूमिं प्रकाशेनान्तरिक्षं हविष्प्रापणेन दिवमित्यभिप्रायः । यद्वा लोकानां प्रत्येकं त्रित्वोपेतत्वात् तिस्रो दिव इत्यविरुद्धम् । 'तिस्रो दिवः पृथिवीस्तिस्रः' (RV. 4.53.5.) इत्यादिमन्त्रवर्णात् 'त्रयो वा इमे त्रिवृतो लोकाः' (AB.2.17.) इति ब्राह्मणाच्च Sy.

प्रति[1]भवति । महत्त्वे[2] । सुदीप्तिः[3] । घृतबिन्दुना[4] । बुद्धिपूर्वम्[5] । हव्यम् । क्लेदयन्[6] । आहवनीये[7] । देवान्[8] । आज्येन समनक्तु[9] ।

**ईळितो अंग्ने मनंसा नो अर्हन्देवान्यक्षि मानुषात्पूर्वो अद्य ।**
**स आ वंह मरुतां शर्धो अच्युंतमिन्द्रं नरो बर्हिषदं यजध्वम् ॥३॥**

ईळितः । स्तुतः[10] । अग्ने[11] ! त्वम् । मनसा[12] । अस्मान्[13] । पूजयन्[14] । देवान्[15] । यज[16] । मानुषाद्धोतुः[17] । अग्रे भवन्[18] । अद्य[19] । स त्वम्[20] । मारुतम् । वेगम्[21] । अच्युतम्[22] । आवहास्मि[23]-न्नवसरे । हे[24] मनुष्याः[25] ! बर्हिषदम्[26] । इन्द्रम्[27] । यजध्वम्[28] ।

**देवं बर्हिर्वर्धमानं सुवीरं स्तीर्णं राये सुभरं वेद्यस्याम् ।**
**घृतेनाक्तं वसवः सीदतेदं विश्वे देवा आदित्या यज्ञियासः ॥४॥**

देव बर्हिः । हे देव ! बर्हिः[29] ! त्वम् । पुनः पुनर्लवनेऽपि[30] वर्धमानम् । शोभनदेववीरम्[31]आसीः[32] ।

---

१. प्रत्येकमञ्जन् Sy.
२. ०त्त्वेन is suggested. स्वमहिम्ना Sy.
३. ०प्ति P.D. शोभनज्वालः सन् Sy.
४. घृतं सिञ्चता Sy.
५. बुद्धि० P. मनसा Sy.
६. स्निग्धीकुर्वन् Sy.
७. VM. seems to explain मूर्धन् and यज्ञस्य together as आहवनीये । यज्ञस्य मूर्धनि मुखे होमसमये Sy.
८. यष्टव्यान् Sy.
९. सम्यग् व्यक्तीकरोतु तर्पयत्वित्यर्थः Sy.
१०. अस्माभिः स्तुतः सन् Sy.
११. त्वग्ने M.
१२. Omitted by P.D. अस्मदनुरक्तेन देवानां यागबुद्ध्या वा Sy.
१३. नोऽस्मदर्थम् Sy.
१४. यागयोग्यः सन् Sy.
१५. Omitted by M. यष्टव्यान् Sy.
१६. Omitted by P. त्वमेव यजसि Sy.
१७. ०षां द्धो० D.
१८. पूर्वभावी Sy.
१९. अस्मिन् दिने Sy.
२०. त्वं M. तादृशो यष्टा त्वम् Sy.
२१. गणम् Sy.
२२. अक्षीणम् Sy.
२३. आवहवास्मि० M. आकारय Sy.
२४. हेतु P.D.M.
२५. हे नेतारः ! ऋत्विजः ! Sy.
२६. बर्हिषि सीदन्तं तम् Sy.
२७. ०न्द्र P. तदविनाभूतमिन्द्रमपि, यद्वा मरुद्बलोपेतमिन्द्रम् Sy.
२८. पूजयध्वम् Sy.
२९. हे बर्हिर्देव ! एतदभिमानिन्नग्ने ! Sy.
३०. प्लवनेऽपि M. ०नेवि P.
३१. शोभनवीरसम्पादकम् Sy.
३२. ०सी P.

सुष्ठु सम्भ्रियमाणम्[1] । अस्याम् । वेद्याम्[2] । स्तीर्णम्[3] । राये[4] । घृतेन[5] । अक्तम्[6] । इदं[7] बर्हिः ।
हे[8] वसवः[9] ! आसीदत । विश्वे[10] ! देवाः ! रुद्राः ! यूयम् । आदित्याश्च । यज्ञार्हाः ।

**वि श्रयन्तामुर्विया हूयमाना द्वारो देवीः सुप्रायणा नमोभिः ।**
**व्यचस्वतीर्वि प्रथन्तामजुर्या वर्णं पुनाना यशसं सुवीरम् ॥५॥**

वि श्रयन्ताम् । उरुत्वेन[11] । विस्तीर्णा भवन्तु[12] । भूयमानाः[13] । द्वारः[14] । देव्यः । सुप्रगमनाः[15] ।
हविर्भिः[16] । अवकाशवत्यः[17] । विप्रथन्ताम्[18] । अजराः[19] । रूपम्[20] । प्रयच्छन्त्यः[21] । यशस्वत्[22] ! शोभनपुत्रम्[23] ।

**साध्वपांसि सनता न उक्षिते उषासानक्ता वय्येव रण्विते ।**
**तन्तुं ततं संवयन्ती समीची यज्ञस्य पेशः सुदुघे पयस्वती ॥६॥**

साध्वपांसि । साधूनि । सम्प्रति कर्माणि[24] । पुरातनानि[25] । आज्येनोक्षिते[26] । उपासानक्ते[27] ।

---

१. सुपूर्णम् Sy.
२. वेद्यस्याम्-वेदी सप्तम्यर्थे प्रगृह्यसंज्ञा, संहितायां यणादेशश्छान्दसः Sy.
३. अस्मदीयैर्ऋत्विग्भिरास्तृतम् भव Sy.
४. किमर्थम् ? धनाय Sy.
५. आज्येन Sy.
६. अक्तम् P.
स्निग्धम् Sy.
७. अस्मिन् बर्हिषि निषीदतेत्यर्थः Sy.
८. ह P.
९. एतन्नामकाः ! Sy.
१०. विश्वे विश्वे M. सर्वे ! Sy.
११. कीदृश्यस्ताः ? उर्व्यो महत्यः Sy.
१२. विविच्य श्रयन्ताम् । विवृतापिधाना भवन्तु Sy.
१३. हूय० is suggested.
१४. द्वारः M.
अग्नेर्द्वाराभिमानिन्यः Sy.
१५. सुष्ठु प्रकर्षेण गन्तव्याः, ईदृश्यो देव्यो विश्रयन्ताम् Sy.
१६. नमस्कारोपेतैः स्तोत्रैः Sy.
१७. ०वात्यः P. व्याप्तिमत्यः Sy.
१८. विशेषेण प्रख्याता भवन्तु Sy.
१९. अहिंस्या अजनना वा Sy.
२०. वर्णनीयं रूपविशेषम् Sy.
२१. यजमानाय शोधयित्र्यः सम्पादयित्र्यो देव्यः Sy.
२२. यशस्वं P.D.
यशोयुक्तम् Sy.
२३. ०त्रो P. शोभनपुत्राद्युपेतम् Sy.
२४. . . .उद्दिश्य Sy.
२५. पुरातानि D. पुतान् P.
सनातनेनाविच्छिन्नप्रवृत्तिकेन स्तोत्रादिना, यद्वा पुराणवाची विभक्त्यन्तः सनच्छब्दोऽस्ति । तस्य प्रथमाद्विवचनस्याकारः । सनातने नित्ये इत्यर्थः । Sy.
२६. उपेक्षिते D. उक्षिते पूजिते, यद्वा फलस्य सेचयित्र्यौ, कर्तरि निष्ठा Sy.
२७. अहोरात्रदेवते Sy.

तन्तुवायाविव[१] । प्राज्ञैः शब्दिते[२] । 'द्वे[३] स्वसारौ[४] वयतुस्तन्त्रमेतत्[५] सनातनम् षण्मयूखमवान्यां-स्तन्तून्[६] किरतो धत्तो अन्यानावप्रज्याते[७] न गमाते[८] अन्तम्' इति मन्त्रः[९] । कालाख्यं[१०] तन्तुम्[११] । ततम्[१२] । संवयन्ती[१३] । सङ्गते[१४] । यज्ञस्य[१५] । रूपभूते[१६] । शोभनदोहने[१७] । सारयुक्ते[१८] ।[१९]

**दैव्या॒ होता॑रा प्रथ॒मा वि॒दुष्ट॑र ऋ॒जु य॑क्षतः॒ समृ॒चा व॒पुष्ट॑रा ।**
**दे॒वान्यज॑न्तावृतु॒था सम॑ञ्जतो॒ नाभा॑ पृथि॒व्या अधि॒ सानु॑षु त्रि॒षु ॥७॥**

दैव्या[२०] । दैव्यौ[२१] । होतारौ[२२] । प्रथमौ[२३] । विद्वत्तमौ । अञ्जसा[२४] यज्ञम् । यक्षतः[२५] । मन्त्रेण । रूपवत्तरौ[२६] । देवान्[२७] । यजन्तौ[२८] । स्वे स्वे[२९] काले । आज्येन समञ्जतः[३०] । पृथिव्याः । मध्ये[३१] ।

---

१. वानकुशले इव Sy.
२. ०त P. स्तुते, परस्परं गच्छन्त्यौ वा Sy.
३. स्वे P.
४. ०रो P.D.
५. मेमेतत् D. ०मेवैतत् P.
६. ०न D. ०खमवान्यस्तनून् P.
७. ०न्नापप्रज्याते P.
८. ०न्तेन्त० M.
९. ०न्त्रं M. The quotation in the TB. is the following:—द्वे स्व॒सारौ॑ वय॒त॒स्तन्त्र॑मे॒तत् । स॒ना॒त॒नं वित॑तं॒ षण्म॑यूखम् । अ॒वान्या ँ॒ स्तन्तू॑न् किरतो॑ ध॒त्तो अ॒न्यान् । नाव॑पृज्याते॒ न ग॒माते॑ अन्त॑म् । TB.2.5.5.3.
१०. कल्याख्यं M.
११. तन्तुस्थानीयं यज्ञावयवम् Sy.
१२. विस्तृतम् Sy.
१३. समव० M. सव० P. सम्यक् चित्रं सह वा वयन्त्यावुत्पादयित्र्यौ Sy.
१४. सम्यक्प्रवृत्तिके परस्परानुकूले Sy.
१५. अनुष्ठीयमानस्य Sy.
१६. रूपं निर्मातुमिति शेषः । यज्ञं निर्वर्तयितुं तदवयवानुक्रमेण अनुष्ठापयित्र्यावित्यर्थः । अहोरात्राभ्यां हि यज्ञास्तन्यन्ते Sy.
१७. ०नो D. सुष्ठु फलस्य दोग्ध्र्यौ Sy.
१८. उदकवत्यौ, अहोरात्राभ्यां खलु वृष्टिर्जायते । एवंमहानुभावे अहोरात्रदेवते अस्मद्यज्ञं निर्वहतामित्यर्थः Sy.
१९. VM. ignores नः । नः, अस्मदीयानि Sy.
२०. दै० D.M.
२१. दै० D. दिवि भवौ दिव्योऽग्निः । तस्माद्दिव्यादग्नेर्जातौ Sy.
२२. होतारावाह्वातारौ देवानां होमनिष्पादकौ वाग्नी पार्थिवान्तरिक्ष्यौ Sy.
२३. प्रथमं यष्टव्यौ Sy.
२४. अविकलं यथा स्यात्तथा सम्यक् Sy.
२५. यज्ञतः P. पूजयतः Sy.
२६. प्रकृष्टवपुषौ देवौ Sy.
२७. यष्टव्यान् Sy.
२८. पूजयन्तौ देवौ Sy.
२९. स्वे (स्वे) स्वे M. तत्तदृतौ तत्र तत्र काले Sy.
३०. समञ्जेतः D. समजेतः P. समाङ्क्ताम्, अञ्जेर्लेट्यडागमः Sy.
३१. अधि उपरि Sy.

त्रिषु । धिष्ण्येषु[1] गार्हपत्या[2]दिष्विति[3] ।

**सरस्वती साधयन्ती धियं न इळा देवी भारती विश्वतूर्तिः ।**
**तिस्रो देवीः स्वधया बर्हिरेदमच्छिद्रं पान्तु शरणं निषद्य ॥८॥**

सरस्वती । विश्वं यदा तूर्णम्[4] । आदित्यपत्न्या सा[5] सरस्वती[6] च । अस्माकम्[7] । कर्म[8] । साधयन्ती[9] भवति[10] । ता इमास्तिस्रः[11] । देव्यः[12] । स्वधया[13] सह । आगत्य । इदम् । अच्छिद्रम् । बर्हिः[14] । आवासस्थानम्[15] । निषद्य[16] । अस्मान् रक्षन्त्विति[17][18] ।

**पिशङ्गरूपः सुभरो वयोधाः श्रुष्टी वीरो जायते देवकामः ।**
**प्रजां त्वष्टा वि ष्यतु नाभिमस्मे अथा देवानामप्येतु पाथः ॥९॥**

पिशङ्गरूपः[19] । अनेकरूपः[20] । शोभनपितृभरणः[21] । अन्नस्य दाता[22] ।

---

१. समुच्छ्रितेषु प्रदेशेषु Sy.

२. नागवत्या D.

३. VM. ignores सम् and नाभा । उत्तरवेद्याम् Sy.

४. विश्वानि तूर्णानि यस्याः सा तादृशी सर्वविषयगता वाक् । एतदुभयविशेषणम् Sy.

५. सार्धम् is suggested for सा. आदित्यपत्न्या सार्धम् can be an explanation of इळा or भारती.

६. सरती D. एतन्नामिकेयं देवी Sy.

७. अस्मदीयाम् Sy.

८. बुद्धिं यागं वा Sy.

९. ०न्ति P. निर्वर्तयन्ती Sy.

१०. ०न्ति M.

११. ०मी तृप्तिस्रो P.D. एतास्तिस्रः Sy.

१२. देव P.D.M.

१३. अस्मद्दत्तहविषा निमित्तेन Sy.

१४. यज्ञम् Sy.

१५. ०वस० P. यागगृहम् Sy.

१६. आश्रित्य Sy.

१७. ०त्विति D. रक्षयत्विति P. पालयन्तु । यद्वा स्वधया इदं बर्हिः इमं यज्ञमागत्यास्मदीयं शरणं गृहं निषद्याच्छिद्रं यथा तथा पान्तु Sy.

१८. VM. ignores इळा । देवी and भारती ।

१९. अथ 'पिशङ्गरूपः' इति नवमी त्वाष्ट्रे पशौ पुरोडाशस्य याज्या । 'पिशङ्गरूपः सुभरो वयोधाः प्रथमभाजं यशसं वयोधाम्' (ASS. 3.8.) इति सूत्रितत्वात् Sy.

२०. ०प M. अनेक P. अनेन D. सुवर्णवर्णो नानारूपो वा Sy. चित्ररूपः, त्रिवर्गस्य सेविता BB.

२१. शोभनयज्ञः शोभनभरणो वा Sy. स्वजनस्य सम्यग्भर्तेत्यर्थः । ...यद्वा देवैः सुखेन भरणीयः BB.

२२. वयसोऽन्नस्य धारयिता दाता वा Sy. वयसोऽन्नस्य दाता धाता वा BB.

क्षिप्रकारी[1] । पुत्रः[2] । त्वष्टुः[3] प्रसादाज् जायते[4] । देवान् कामयमानः[5] । तां प्रजाम्[6] । त्वष्टा[7] । विष्यति[8]=विसृजति[9] । सन्नहनम्[10] । अस्माकम्[11] । अथ[12] तथा कृत्वा । देवानाम्[13] । स्थानम्[14] । अपि । एतु[15] ।

वन॒स्पति॑रवसृ॒जन्नुप॑ स्थाद॒ग्निर्ह॒विः सू॑दयाति॒ प्र धी॒भिः ।
त्रिधा॒ सम॑क्तं नयतु प्रजा॒नन्दे॒वेभ्यो॒ दैव्यः॑ शमि॒तोप॑ ह॒व्यम् ॥१०॥

वनस्पतिः । वनस्पतिः[16] । देवेभ्यो हवींषि यथास्वम्[17] अवसृजन्[18] । उपतिष्ठतु[19] । अग्निः[20] । हविः[21] । प्रेरयति[22] । कर्मभिः[23] । उपस्तरणाद्[24] द्विरभिघारणाच्च[25] त्रिधा[26] । समक्तम्[27] । नयतु । आत्मीयं[28] हविः

---

१. ०प्रतारी P. क्षिप्रगुणः Sy. श्रुष्टी क्षिप्रकारीत्येके । सत्यवादीत्यन्ये । श्रोतृषु स्त्यायते श्रुष्टी । पृषोदरादिः BB. श्रुष्टीति क्षिप्रनाम । आशु अष्टीति । (N.6.12.)

२. विविधमीरयिता Sy.

३. ०स्त्वष्टः P.D.

४. ०सावन्नाय० P. जायतामुत्पद्यतां त्वष्टुरनुग्रहात् Sy. . . . वीरो देवकामश्चेत्येवङ्गुणो जायते BB.

५. देवाः काम्यन्ते येन तादृशः पुत्रः Sy.

६. ०स्तान् M.P. पुत्रादिरूपाम् Sy. तस्मादीदृशीं प्रजाम् BB.

७. स च . . . एतन्नामको देवः Sy.

८. पिष्यति P.D.

९. ०विसृजतु M.D. विमुञ्चतु वितरत्वित्यर्थः Sy. अस्मभ्यं विष्यतु विमुच्य ददातु BB.

१०. कुलस्य बन्धिकाम् Sy. नाभिं नहनीं कुलस्य । 'नहो भश्च' इति BB.

११. अस्मभ्यम् Sy.

१२. अपि च Sy. अथानन्तरम् BB.

१३. देवानां सम्बन्धि Sy. BB. adds सामर्थ्यात् to देवानां सम्बन्धि

१४. अन्नम् Sy. BB.

१५. अस्मान् गच्छतु । अपिः क्रियया वा सम्बध्यते गच्छत्वित्यर्थः Sy. अस्मान् प्राप्नोतु । यद्वा कर्मणि षष्ठी, पाथोऽन्नं हवीरूपं देवानप्येतु प्रविशतु । यागाश्च यथोक्तमनुष्ठीयन्तामित्यर्थः BB. This stanza=TS. 3.1.11.2.

१६. यूपाभिमान्येतन्नामकोऽग्निः Sy.

१७. यथा स्वम् M.

१८. मवसृजन् D. अस्मदीयं कर्मानुजानन् Sy.

१९. उपास्मत्समीपे स्थात् तिष्ठतु Sy.

२०. पाकाधारोऽग्निश्च Sy.

२१. पशुरूपम् Sy.

२२. प्रकर्षेण सूदयाति, क्षारयति । अपाकाधिकपाकादिराहित्येन हविः पचतीत्यर्थः Sy.

२३. कर्मभिर्विशेषैः पाकसाधनैः Sy.

२४. ०णत् P.

२५. ०धार० D. ०घरि० P.

२६. त्रिधा त्रिधा P. त्रिप्रकारमुपस्तरणावदानाभिघारणैः Sy.

२७. ०क्ते D. सम्यक् सिक्तम् Sy.

२८. ०य M.

प्रकर्षेण जानन्[1] । देवेभ्यश्च । दैव्यः[2] । शमिता[3] । स्वं[4] स्वं हविः । उपनयतु[5] ।

घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम ।
अनुष्वधमा वह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् ॥११॥

घृतम् । घृतम्[6] । प्रतिगच्छति[7] । घृतम् । अस्य[8] । योनिर्यस्माद्[9] घृताद्धुतादुत्तिष्ठति[10] तदर्थमसौ । घृते । श्रितः[11] । घृतम् । अस्य । स्थानम्[12] । स्वधां स्वधां[13] प्रति । देवाना[14]वह[15] हविः । मादयस्व[16] च । त्वयि स्वाहाकृतम्[17] । कामानां वर्षितः[18] !

---

१. विद्वान् नयनप्रकाराभिज्ञः सन् Sy.

२. दै० D. देवसम्बन्ध्याहुत्यधिकरणभूतोऽग्निः Sy.

३. हविषः संस्कर्ता । यद्वा दैव्यः शमितृतन्नामकोऽग्निः । 'अग्निर्वै देवानां शमिता'* इति श्रूयते Sy.

४. स्व P.

५. समीपं प्रापयतु Sy.

६. आज्यम् Sy. घृतमुदकमाहुतिपरिमाणभूतम् U.

७. सिञ्चामि Sy. सेक्तुमिच्छामि । अग्निमुखे मेढुमिच्छामि । मिमिक्षते—'मिह सेचने' Mah. योऽयमग्निर्घृतं मिमिक्षे ...अथवा यस्याग्नेर्मुखे घृतं मिमिक्षे U.

८. अस्याग्नेः Sy.

९. यतः...कारणम् Sy. यतोऽस्याग्नेर्घृतं योनिरुत्पत्तिस्थानम् । 'अग्निर्यस्यै योनेरसृज्यत तस्यै घृतमुल्बमासीत्' (SB.6.6.2.13.) इति श्रुतेः । गर्भाधारोदकमुल्बम् Mah.
घृतं चास्य योनिरुत्पत्तिस्थानम् U.

१०. घृताद्धुतादुत्तिष्ठति P.

११. उत्पन्नोऽपि... आश्रितः Sy.
घृतमाश्रितः Mah. यश्चायं घृते... अवस्थितः U.

१२. घृ...स्था० M. तेजः । घृतेन हि अयं दीप्यते Sy. स्थानं तेजस्करम् Mah. तदेव धाम तेजो दीप्तिर्नाम वा U.

१३. स्वेधां M. प्रतिहविः सर्वेष्वपि हविःषु दीयमानेषु वा Sy. अतो हे अध्वर्यो ! ...स्वधामन्नमुपलक्ष्य Mah. अन्वन्नम् U.

१४. देवानां M.

१५. पूर्वमन्नमुपकल्प्य पश्चादाह्वय Mah., U.

१६. आहूय तान्...प्रीणय Sy. आहूय च ...तर्पय Mah., U.

१७. ततस्त्वं...स्वाहाकारेण दत्तम् Sy. स्वाहाकारेण हुतम् Mah. स्वाहाकारेणाभिहुतम् U.

१८. इदानीं सम्बोध्योच्यते हे अग्ने ! फलस्य वर्षितः ! त्वम् Sy.
तर्पयित्वा चैव ब्रूहि हे वृषभ ! कामानामभिवर्षुक ! Mah. वर्षितः ! U.

---

*Cf. AB. 2.7. अग्निर्वै देवानां शमिता; Kau. Br. 10.4. अपापो ह वै देवानां शमिता; TB. 3.6.3.4. देवानां पाथ ऋतुथा हवींषि । वनस्पतिः शमिता देवो अग्निः ।

हव्यम् । वह ।

## II. 4.

हुवे वः सुद्योत्मानं सुवृक्तिं विशामग्निमतिथिं सुप्रयसम् ।
मित्रइव यो दिधिषाय्यो भूद्देव आदेवे जने जातवेदाः ॥१॥

हुवे वः ॥ सोमाहुतिर्भार्गवः ॥ ह्वयामि । युष्माकम् । सुदीप्तिम् । सुस्तुतिम् । विशाम् । अतिथिम् । अग्निम् । स्वन्नम् । यः । मित्र इव । भर्तव्यः । भवति । सोऽयं दीप्यमानः । आनीतदेवयजने । यजमाने । जातवेदाः ।

इमं विधन्तो अपां सधस्थे द्वितादधुर्भृगवो विक्ष्वा३योः ।
एष विश्वान्यभ्यस्तु भूमा देवानामग्निररतिर्जीराश्वः ॥२॥

इमं विधन्तः । इमम् । परिचरन्तः । अन्तरिक्षे । भृगवः । प्रथमद्वैधम् ।

---

१. देवान् प्रापय...यद्वा यं प्रत्यहं मिमिक्षे यस्य घृतं योनिर्यो घृते श्रितो यस्य च घृतं धाम स त्वमनुष्वधं देवानावह मादय हव्यं च। वक्षीत्यग्नि प्रत्येवोक्तिः। यतो वह्नेः कर्मद्वयं देवानामावाहनं हविर्वहनं च Mah. वहनं च हविषामावाहनं च देवतानामित्यग्नेः कर्मणी U. This stanza=YV. 17.88.

२. VM. ignores उ. एव Sy. उ अवधारणे Mah.

३. 'हुवे वः' इति नवर्चं चतुर्थं सूक्तम् । भार्गवः सोमाहुतिनामक ऋषिः। अग्निर्देवता । त्रिष्टुप्छन्दः । 'हुवे नव सोमाहुतिर्भार्गवो ह' इत्यनुक्रमणिका (KSA. 13.4.p.13.) । प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभे छन्दसीदम् । सूत्रितं च—'हुवे वः सुद्योत्मानं नि होता होतृषदन इति सूक्ते' (ASS.4.13.) इति Sy. ४. ०ति भा० P.

५. हे यजमानाः !...आह्वयामि । Sy.

६. युष्मदर्थम् Sy.

७. कीदृशं तम् ? सुष्ठु द्योतमानम् Sy.

८. संस्तु० D. सस्तु० P. सुवर्जितं पापैः शोभनस्तुतिं वा Sy. ९. यजमानानाम् Sy. १०. अतिथिवत् सदा पूज्यम् Sy.

११. ०शाम...अग्निम् M.

१२. ०न्न P.D. शोभनहविर्लक्षणान्नम् Sy.

१३. सखेव आदित्य इव वा Sy.

१४. धारयिता Sy. १५. अग्निः Sy.

१६. कुत्रेति ? उच्यते देवपर्यन्ते Sy.

१७. मनुष्यप्रभृतिदेवपर्यन्तेषु । तेषां धारकोऽभवदित्यर्थः Sy. १८. जातानां वेदिता Sy. १९. विधतः D. पिधतः P.

२०. इममग्निम् Sy. २१. ०रत० P.

२२. VM. seems to explain अपां and सधस्थे together as अन्तरिक्षे. सहस्थानेऽन्तरिक्षे Sy.

२३. अस्मत्पूर्वे महर्षयः Sy.

२४. प्रथमं दैव्यम् is suggested for प्रथमद्वैधम्. द्वयोः स्थानात् Sy.

निहितवन्तः[1]। गार्हपत्यमाहवनीयं च मनुष्येषु[2]। उर्वशीपुत्रस्य[3]। सोऽयम्[4]। विश्वानि भूतानि[5]। अभिभवतु। देवानाम्। अग्निः[6]। अभिगन्ता[7]। क्षिप्रास्वः[8]।

**अग्निं देवासो मानुषीषु विक्षु प्रियं धुः क्षेष्यन्तो न मित्रम् ।**
**स दीदयदुशतीरूर्म्या आ दक्षाय्यो यो दास्वते दम आ ॥३॥**

अग्निं देवासः। अग्निम्। देवाः[9]। मानुषीषु[10]। प्रजासु। प्रियम्[11]। निदधुः[12]। यथा। निवासमिच्छन्तः[13]। दृढं मित्रं[14] सम्पादयन्त्येवम्[15]। सोऽग्निः। आत्मानं कामयमानाः। रात्रीः[16]। आद्योतयति[17]। वर्धनीयः[18]। यः[19]। यजमानाय[20]। गृहे[21][22]।

**अस्य रण्वा स्वस्येव पुष्टिः सन्दृष्टिरस्य हियानस्य दक्षोः ।**
**वि यो भरिभ्रदोषधीषु जिह्वामत्यो न रथ्यो दोधवीति वारान् ॥४॥**

अस्य रण्वा[23]। अस्य[24]। रमणीया[25]। धनस्येव। पुष्टिः[26]। सन्दृश्यमाना[27]।

---

१. अधारयन्, दधातेर्लङि रूपम् Sy.
२. स्वभूतासु प्रजास्वृत्विक्षु तेषां मध्ये च Sy.
३. ०शीपुत्र० D. मनुष्यस्य यजमानस्य Sy.
४. ०यम P. अग्निः Sy.
५. भूतजातान्यस्मद्विरोधीनि Sy.
६. The passage beginning with भूतानि and ending with अग्निः is omitted by P.
७. स कीदृशः ? ईश्वरः तेषां मध्ये शीघ्रम् अरणशीलो वा अस्मद्यागं प्रति Sy.
८. VM. ignores भूम। भून्नाऽत्यर्थम् Sy. ९. देवासः P.
१०. पूर्वं मनुष्यसम्बन्धिनीषु Sy.
११. देवानां प्रीणयितारम् Sy.
१२. अधुः, स्थापितवन्तः Sy.
१३. यथाहि वा P.D. स्वर्गं प्रति गच्छन्तः सन्तः, तत्र दृष्टान्तः, रायं प्रति गच्छन्तो नराः Sy. १४. प्रियं सखायम् Sy.
१५. स्वगृहरक्षार्थं स्थापयन्ति तद्वत् Sy.
१६. रातिः P. ...सर्वासु रात्रिषु Sy.
१७. दीप्यते सर्वतः, सर्वरात्रीरादीपयति वा Sy.
१८. वर्धहियः P. समर्धयिता दाता वा Sy.
१९. एवं देवैः स्थापितो योऽग्निः Sy.
२०. हविर्दत्तवते यजमानाय तदर्थम् Sy.
२१. तदीये यागगृहे Sy.
२२. VM. ignores one आ। आहितः स्थापितः Sy.
२३. अरण्वा D. अनुण्व P. for अस्य रण्वा।
२४. अस्याग्ने Sy.
२५. ...शब्दयुक्ता वा Sy.
२६. शरीरवृद्धिः। यथा लोके स्वकीया पुष्टिः स्वस्मै रमणीया भवति तद्वत्। यद्वास्याग्नेःसम्बन्धिनी पुष्टिर्यजमानविषया रण्वा स्वस्याग्नेः पुष्टिर्यथा रण्वा तद्वत् Sy.
२७. ०दृश्य० M. सन्दर्शनाविर्भावोऽपि रण्वा Sy.

अस्य[1] । गच्छतः[2] । वनं दग्धुमिच्छतः[3] । यः[4] । ओषधीषु[5] । ज्वालाम्[6] । भरति[7] । सोऽयमश्वः[8][9] । रथे युक्तः[10] । यथा । बालान्[11] । धुनोत्येवं[12] ज्वालाः प्रेरयति[13] ।

**आ यन्मे अभ्वं वनदः पनन्तोशिग्भ्यो नामिमीत वर्णम् ।**
**स चित्रेण चिकिते रंसु भासा जुजुर्वाँ यो मुहुरा युवा भूत् ॥५॥**

आ यन्मे[14] । आपनन्त=अकथयन्[15] । मम[16] । यस्य[17] । वनादोऽरण्यस्य[18] भक्षयितुः । महिमानम्[19] । स सर्वं वनं दहन्नपि, उशिग्भ्यः[20] कामयमानेभ्यश्च गतेभ्यो[21] मन्दपालपुत्रेभ्यः ।

---

१. ०मासस्य० P. ०मानस्य० D. अग्नेः Sy.
२. समृद्धिं गच्छतो व्याप्नुवतः Sy.
३. काष्ठान् दिधक्षोर्दग्धुमिच्छोः Sy.
४. योऽग्निः Sy. ५. काष्ठेषु Sy.
६. ०लानां D. . . . जात्येकवचनम्, ज्वालाः Sy.
७. अत्यर्थं विहरति कम्पयतीत्यर्थः । हरतेर्यङ्लुगन्तत्वेन दाधर्त्यादिषु (Cf. Pa. 7.4.65.) निपातितात् लेट्यडागमः । यद्योगादनिघातः । Sy.
८. सोम् M. ९. वाजी Sy.
१०. रथ D. रथार्हः Sy.
११. वंशवारणसाधनान्वालान् Sy.
१२. ०नोत्ये० P. कम्पयति तद्वत् योऽग्निर्ज्वालाः कम्पयति, अस्याग्नेः पुष्टी रण्वेति Sy.
१३. VM. ignores वि ।
१४. अयम्ने D. आयम्मे P.
१५. ०न्त कथयं P. समन्तात् स्तुवन्ति Sy. Dur. आ इत्ययं पनन्तेत्येतेन सम्बध्यते । . . . आपनन्तेति मध्यमः प्रथमार्थे । पनतिः स्तुतिकर्मा । आभिमुख्येन स्तुवन्ति SKN.
१६. . . . सम्बन्धिनः Sy. Dur. मम स्वभूताः । सामर्थ्यादृत्विजः SKN.
१७. यदिति व्यत्ययेन पुंस्थाने नपुंसकता । . . . यश्च SKN.
१८. वनन्तः सम्भक्तारः । यद्वा वनदोऽवनदो भृशं शब्दयन्तः स्तोतारः । अवशब्दो भृशार्थवाची, तत्पूर्वान्नदेः क्विप् 'अवाप्योः' इत्यकारलोपः Sy. ऋत्विग्विशेषणमेतत् । वननीयस्य हविषो दातारः SKN. वननीयस्य हविषो दातारः . . . ऋत्विजः (स्तोतारः) यद्वा, अवशब्दो भृशार्थः, तत्पूर्वान्नदतेः क्विप् । भागुरिमते—अलोपः । भृशं शब्दयन्त इत्यर्थः Dur.
१९. ०हिमा० P. महान्तः SKN. महत्त्वम् । भावप्रधाननिर्देशोऽयम् । 'अभ्वम्' शब्दो हि महन्नामसु पठितः (Ngh. 3.3.) । अभ्वमाभवतीति माधवः । आङ्पूर्वाद् भवतेः को बाहुलकादुपसर्गह्रस्वत्वं च Dur.
२०. अस्मदीयं रूपं कामयमानेभ्य ऋत्विग्भ्यः Sy. मेधाविनाम (Ngh. 3.15.) । एषा विभक्तिः षष्ठ्याः स्थाने । वशेर्वा, उशिजः कामिन उच्यन्ते । तेषां मेधाविनां कामिनां वा SKN. मेधाविभ्यः (Ngh. 3.15) अस्मदीयं प्रार्थितं कामयमानेभ्यो वा तेभ्य ऋत्विग्भ्यः । 'वशकान्तौ' Dur. २१. ०नेभ्यश्चाटकेभ्यः M. ०नेभ्यश्चटकेभ्यः P.

स्ववर्णं[1] ज्वालालक्षणम् । न[2] । चकार[3] । सः[4] । चित्रेण[5] । भासा[6] । प्रज्ञायते[7] । रमणीयेष्वरण्येषु[8] ।
यः[9] । जीर्णः[10] । मुहुर्मुहुः[11] । युवा[12] च । भवति[13] ।[14]

**आ यो वना तातृषाणो न भाति वार्ण पथा रथ्येव स्वानीत् ।**
**कृष्णाध्वा तपू रण्वश्चिकेत द्यौरिव स्मयमानो नभोभिः ॥६॥**

आ यो वना[15] । यः[15] । काष्ठानि[16] । प्रति । पिपासुः[17] । इव । भाति[18] । सोऽयमुदकम्[19] ।
इव । पथा[20] गच्छत् । रथचक्रमिव[21] च । स्वनति[22] । कृष्णवर्त्मा । तापयिता[23] ।

---

१. स्वंपर्णं D. ०र्णं M. स्वं वर्णं P. स्वसदृशं रूपम् Sy. वरणं प्रार्थनाम् । यथाप्रार्थितमर्थं ददातीत्यर्थः SKN. वरणं वरं (प्रार्थनाम्) Dur.

२. नशब्दश्चार्थे Sy.

३. वकार P.D. निर्मिमीते Sy. मिनातिर्वधकर्मा । हिनस्ति SKN. हिनस्ति। किं तर्हि ? यथाप्रार्थितमेव समर्थयति Dur.

४. अग्निः Sy.

५. हिरण्यकनकादिनानावर्णया Sy. व्यत्ययेनेदं नपुंसकं स्त्रीलिङ्गस्य स्थाने । विचित्रया विचित्रया SKN. सोऽग्निश्चित्रेण चायनीयेन Dur.

६. दीप्त्या Sy. SKN. भासा युक्तः Dur.

७. विज्ञायते Sy. Dur. ज्ञायते SKN.

८. स च रमणीयेष्वाज्यादिहविःषु निमित्तेषु Sy. रमणीयेषु सर्वत्र कन्दरादिषु दावात्मना । सप्तमीश्रुतेः स्थित इति शेषः SKN. रमणीयेषु स्थानेषु द्युलोकादिष्वग्निहोत्रेषु वा ।...एवमत्र शब्दसारूप्यादर्थाविरोधाच्च 'रंसु' इत्यस्य 'रमणीयेषु' इति विपरिणाम उपपद्यते । Dur. ९. योऽग्निः Sy.

१०. जीर्णः सन् Sy. इन्धनक्षयाज् जुजुर्वाज् जीर्णः SKN. योऽग्निः...पुनः पुनर्जरावानपि भूत्वा इन्धनक्षयात् Dur.

११. ज्वालोपशमे स एव पुनः पुनः Sy. क्षणेनैव SKN. पुनः पुनः Dur.

१२. यया वाचा D. मुमुहुमुहुर्यवाचा P. मिश्रयिता, तरुणो वा Sy. Dur. इन्धनमासाद्य युवा तरुणः SKN.

१३. भवर्तो D. भवति पुनराज्यादिसंयोगात् Sy. भवति । इच्छल्लोपावार्यौ Dur.

१४. VM. ignores आ. सर्वतः Sy. आकारः पदपूरणः N.6.17; SKN. II 450.

१५. ०नाय P. ०नायः D. योऽग्निः Sy.

१६. वनानि वृक्षसमूहान् Sy.

१७. तृषितः, त्वरमाण इत्यर्थः Sy.

१८. आभाति । आभासयति । वहतीत्यर्थः । यद्वा वने आभाति Sy.

१९. किञ्च...Sy. २०. प्रवणेन मार्गेण गच्छति तद्वद् इतस्ततो गच्छति Sy.

२१. रथस्य वोढाश्व इव । यद्वा रथशब्दात्सोऽप्यदिशः । यथा रथो युद्धमार्गेण गच्छन् स्वनति तद्वत् Sy.

२२. सनतिः D. सनकिः P. शब्दयति Sy.

२३. चवयिता P. तापकः Sy.

रमणीयः[१] । प्रज्ञापयते[२] । द्यौरिव[३] । नक्षत्रैस्तेजोभिः[४] । स्मयमानः[५] ।

स यो व्यस्थादभि दक्षदुर्वीं पशुर्नैति स्वयुरगोपाः ।
अग्निः शोचिष्माँ अतसान्युष्णन्कृष्णव्यथिरस्वदयन्न भूम ॥७॥

स यो व्यस्थात् । सः । योऽग्निः[६] । वितिष्ठते[७] । अभिदहन्[८] । उर्वीम्[९] । स पशुः[१०] । इव । गच्छति । स्वसञ्चरणस्थानमिच्छन्[११] । अरक्ष्यमाणः[१२] स्वैरं गच्छन्[१३] । अग्निः । दीप्तिमान्[१४] । अतसधनानि[१५] । दहन्[१६] । कृष्णवर्त्मा[१७] । भूमिमेव[१८] । न । स्वादयति[१९] सर्वमन्यद् भक्षयति ।

नू ते पूर्वस्यावसो अधीतौ तृतीये विदथे मन्म शंसि ।
अस्मे अग्ने संयद्वीरं बृहन्तं क्षुमन्तं वाजं स्वपत्यं रयिं दाः ॥८॥

नू ते पूर्वस्य[२०] । सम्प्रति[२१] । तव[२२] । पुरातनस्य[२३] । अन्नस्य[२४] । स्मरणे[२५] । तृतीये[२६] । सवने[२६] ।

---

१. य P.... एवम्भूतः सन् Sy.
२. ज्ञायते प्रकाशते इत्यर्थः Sy.
३. क इव ? द्युलोक इव आदित्य इव Sy.
४. नभोभिर्नक्षत्रैः । यद्वा नभोभिरन्तरिक्षप्रदेशविशेषैः Sy.
५. प्रकाशमानः । यद्वा स्मयमानः शोभमानो द्यौरादित्य इव । नीलवर्णान्तरिक्षचार्यादित्यो यथा ज्ञायते तद्वत् स्वसञ्चारेण कृष्णीभूते मार्गे ज्ञायते । प्रकाशत इत्यर्थः Sy.
६. सोऽयमग्निः for. सः । योऽग्निः P.D.
७. विविधं तिष्ठति व्याप्नोति विश्वम् Sy.
८. यश्च आभिमुख्येन प्रवर्धमानो भवति । उभे अपि यच्छब्दयोगान्न निहन्येते Sy.
९. तथा योऽग्निः विस्तृतां पृथिवीं सर्वाम् Sy.
१०. यथा जातः पशुः स्वच्छन्देन चरति तथा Sy.
११. स्वंसञ्च० D. ०णच्छानमि० P. स्वयमेव गच्छन् Sy.
१२. ०ण P. ०णं M. D. adds समदकुलजाता अग्ने गुहायां स्थितवानपि between अरक्ष्यमाणः and स्वैरं । गोपरहितः । नियामकवर्जित इत्यर्थः । Sy.
१३. स्वैराग० D.
१४. प्रकृष्टदीप्तिः Sy.
१५. अतच० D. अतःध० M. ०वनानि is suggested for धनानि । अतसानि सततानि नीरसानि वा तरुगुल्मादीनि Sy.
१६. दहन्नेति Sy.
१७. कृष्णवर्णं प्राप्ता दग्धा व्यथाकराः कण्टकादयो येन तादृशः सन् Sy.
१८. अत्यधिकम् Sy.
१९. भूमिपेनस्वयति P. भूमिपौस्वमयति D. आस्वादयतीव वृक्षगतान् रसान् Sy.
२०. हे अग्ने ! Sy.
२१. अद्यापि Sy.
२२. तव सम्बन्धिनः Sy.
२३. पूर्वं यागसमये कृतस्य Sy.
२४. अभिमततर्पणस्य Sy.
२५. स्मरणे सति तत्स्मृत्या Sy.
२६. याने तृतीयसवने, यद्वा प्रातरनुवाकसम्बन्धिनामाग्नेयोषस्याश्विनानां मध्येऽन्यतमे तृतीये क्रतौ Sy.

शस्त्रम्[1]। अशंसि[2]। अस्मभ्यम्[3]। अग्ने! संयन्ति यत्र[4] वीरास्तत्। महत्[5]। शब्दवत्[6]। अन्नम्[7]। शोभनापत्यम्। देहि। धनं च।

**त्वया यथा गृत्समदासो अग्ने गुहा वन्वन्त उपराँ अभि ष्युः।**
**सुवीरासो अभिमातिषाहः स्मत्सूरिभ्यो गृणते तद्वयो धाः ॥९॥**

त्वया यथा। त्वया[8]। यथा। एते गृत्समदकुलजाताः[9]। अग्ने[10]! गुहायां स्थितानपि[11]। प्रच्छन्नान्[12] शत्रून्। भजनवन्तः[13]। अभिभवेयुः[14]। सुपुत्राः[15]। शत्रून् सहमानाः[16]। तथा शोभनं हविः[17]। प्रेरयद्भ्यः[18]। स्तुवते[19] मह्यं च। तादृशम्[20]। अन्नम्। धेहि।

## II. 5.

**होताजनिष्ट चेतनः पिता पितृभ्य ऊतये।**
**प्रयक्षञ्जेन्यं वसु शकेम वाजिनो यमम् ॥१॥**

होता[21]। होता[22]। जातः[23]। प्रज्ञापनः[24]। पालयिता[25]। पालयितृभ्यः[26]। रक्षणार्थम्[27]। प्रददत्[28]।

---

१. मननीयं स्तोत्रम् Sy.
२. शस्यतेऽस्माभिः Sy.
३. अशंस्यस्म॰ M. अशस्यमस्म P.D.
४. तत्र P.D. संयतो वीरा यस्मिन् तादृशम् Sy. ५. महान्तम् Sy.
६. शब्दवन्तम्, कीर्तिमन्तम् Sy.
७. महच्छन्दवदन्न D. अन्न P. उक्तलक्षणमन्नम् Sy. ८. रक्षकेण Sy.
९. गत्भवामन्तुंसमदकु॰ P. गृत्समदा ऋषयः, आत्मनि पारोक्ष्येण वचनम् Sy.
१०. हे अग्ने! Sy.
११. गुहायां वर्तमानान् Sy.
१२. प्रच्छन्न P. उपरमणसाधनान्, उपरि उत्कृष्टे वर्तमानान्वा धनविशेषान्। यद्वा गूढानुपरान् उपरेऽधिकत्वेन वर्तमानान् पापान् अभिभवेयुः, तथा कुर्वित्यर्थः Sy. १३. त्वां सम्भजन्तः Sy.
१४. स्वाधीनान् कुर्युः Sy.
१५. ॰त्रां M. कीदृशाः? शोभनपुत्राद्युपेताः Sy. १६. ॰ना धा M. वैरिणां पापादीनां सोढारः Sy.
१७. सुमत् अतिप्रभूतम् Sy.
१८. किञ्च मेधाविभ्यो यजमानेभ्यः Sy.
१९. व्यत्ययेनैकवचनम्। शब्दयद्भ्यः स्तोतृभ्यः। यद्वा सूरिभ्यो यजमानेभ्यो गृणते स्तोत्रे च Sy. २०. . . .प्रसिद्धम् Sy.
२१. 'होताजनिष्ट' इत्यष्टर्चं पञ्चमं सूक्तं सोमाहुतेरार्षमाग्नेयमानुष्टुभम्। 'होताष्टावानुष्टुभम्' (KSA.13.5.p.13.) इत्यनुक्रान्तम्। प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ अस्य विनियोगः। सूत्रितं च—'अग्नायो होताजनिष्ट' (ĀŚS. 4.13.) इति। चतुर्विंशेऽहन्यपीदमेवाज्यम्। 'चतुर्विंशे होताजनिष्टेत्याज्यम्' (ĀŚS. 7.2.) इति। आभिप्लविके द्वितीयेऽहनीदमेवाज्यम्। 'द्वितीयस्य चतुर्विंशेनाज्यम्' (ĀŚS. 7.6.) इत्यतिदिष्टत्वात् Sy.
२२. होमनिष्पादकः Sy. २३. उत्पन्नः Sy.
२४. ॰न P.D. चेतयितास्मदनुष्ठितस्य Sy.
२५. पालकोऽस्मद्यज्ञस्य ईदृशोऽग्निः Sy.
२६. पालकेभ्यो यजमानेभ्यः, षष्ठ्यर्थे चतुर्थी, तेषाम् Sy. २७. रक्षणाय च Sy.
२८. प्रकर्षेण पूज्यम् Sy.

जयशीलम्[1] । धनम् । अस्य वाजिनः[2] । यमनम्[3] । शक्ता भवाम[4] कर्तुम्[5] ।

**आ यस्मिन्त्सप्त रश्मयस्तता यज्ञस्य नेतरि ।**
**मनुष्वद्दैव्यमष्टमं पोता विश्वं तदिन्वति ॥२॥**

आ यस्मिन् । यस्मिन्नादित्ये[6] । सप्त[7] । रश्मयः[8] । आतताः[9] । यज्ञस्य[10] । नेतरि[11] । मनुरिव[12] । तं दिवि भवम्[13] । सप्तानां रश्मीनामष्टमम्[14] । पोतायमग्निः[15] । सर्वम्[16] । एतत् । प्रीणयति[17] रश्मिजातमादित्यं च ।

**दधन्वे वा यदीमनु वोचद्ब्रह्माणि वेरु तत् ।**
**परि विश्वानि काव्या नेमिश्चक्रमिवाभवत् ॥३॥**

दधन्वे[18] वा[19] । यदि[20] । एनम्[21] । धिष्ण्येऽनु[22] स्थापयति[23] । वदति[24] । वा[25] । स्तोत्राणि[26] ।

---

१. ०दञ्जय० P.D. जेतव्यम् Sy.
२. वयञ्च हविर्लक्षणान्नवन्तः सन्तः । यद्वा वाजिनोऽश्वस्य Sy. ३. यमयितव्यं यद्वा यमनं कर्तुम् Sy. ४. शक्ता भूयास्म लब्धुमिति शेषः । यद्वा वाजिनोऽश्वस्य यमं यमनं कर्तुं शकेम । प्रयक्षं (प्रयक्षन् Padapāṭha) जेन्यं वसु धनमित्युपमानम् । उक्तलक्षणं धनमिव । यद्यथावरोद्धुं शक्नुमस्तद्वत् Sy. ५. कर्तुम् refers to यमनम्, therefore it should immediately follow that.
६. P.D. add आ before यस्मिन् । यस्मिन्नग्नौ Sy. ७. सप्तसंख्याकाः Sy.
८. रश्मिवद् व्याप्ता होत्रकाः Sy.
९. स्वस्वकर्मभिः सर्वतो व्याप्ता भवन्ति Sy.
१०. यज्ञ P. यागस्य Sy.
११. नेतारि P. निर्वाहके Sy.
१२. मनुष्यपोतृवत् Sy.
१३. देवो यज्ञः । तत्सम्बन्धि Sy.
१४. अष्टर्त्विक्सम्बन्धि Sy.
१५. वोयमग्निः P. पोयमग्निः D. पावको देवानां पोत्राख्य ऋत्विग्रूपो वाग्निः Sy.
१६. कर्तव्यजातम् Sy.
१७. सप्तहोत्रकैः सह स्वयमष्टमः सन् व्याप्नोति । यद्वा तदित्यस्य लिङ्गव्यत्ययः । स पोतेति सम्बन्धः । सप्तहोत्रकैः सहाष्टमो भूत्वा तद्वद्यज्ञं निर्वहतीत्यर्थः Sy.
१८. पूर्वस्मिन्मन्त्रे होत्रादिवत् स्वयमपि यज्ञं निर्वहतीत्युक्तम् । अत्र तु सर्वं तत्तदात्मना स्थित्वा स्वयमेव निर्वहतीत्याह Sy.
१९. मा D. २०. यद्वाविरादिकम् Sy. यानि वचनानि । व्यत्ययेनैकवचनम् BB.
२१. एनं यज्ञम् Sy. ईमिति पादपूरणे BB.
२२. लक्षीकृत्य Sy. 'अनु' इति प्रथमपादान्तः BB. २३. यद्यन्धिष्ण्यिणयन्नुस्थाप० P. यद्येनन्धिष्ण्यिणयन्नुस्थाप० D. धारयत्यध्वर्य्वादिरूपः Sy. अवगच्छामि धारयामि । 'धवि गतौ' इदित्त्वान्नुम् । छान्दसो लिट् BB.
२४. वदि P. अनुवक्ति होत्रादिरूपः । अत्र 'वानु' इत्येतद्योज्यम् Sy. अनुब्रवीति, अनुशास्ति । सामर्थ्यादृषिः । छान्दसो लुङ् 'बहुलं छन्दस्यमाङ्योगेऽपि' Pa. 6.4.75. इत्यडभावः BB.
२५. वाक् D. वाट् P. अथवा Sy. वाशब्दः समुच्चये । इन्द्राग्न्यादयो मे वर्चः कृण्वन्तु । अहमपि तदर्थमेवं करोमि, इति पूर्वापेक्षया समुच्चयः BB.
२६. यानि शस्त्रादीनि Sy. ब्रह्माणि परिवृढानि कर्माणि ज्योतिष्टोमादीनि BB.

वेत्ति । तत् सर्वमग्निः । परिभवति च । विश्वानि । स्तोत्राणि । नेमिः । इव चक्रम् ।

साकं हि शुचिना शुचिः प्रशास्ता क्रतुनाजनि ।
विद्वाँ अस्य व्रता ध्रुवा वयाइवानु रोहते ॥४॥

साकं हि । शुचिना । कर्मणा । दीप्तोऽग्निः । प्रादुर्भवति । विद्वान् । अस्य । कर्माणि । ध्रुवाणि । शाखा इव वृक्षस्य तानि । अनुरोहते ।

१. कामयते जानाति वा स्वयमनुष्ठातुम् Sy. कस्याधिकारिणः ? वेर्गृहस्य-स्योक्तानि । वेतेः प्रजननकर्मण ओणा-दिको डिप्रत्ययः, यद्वा गतिकर्मणः । वेतव्यस्य गन्तव्यस्य यज्ञस्य यानि कर्माणि दीक्षादीनि कर्तव्यानि ।... यद्वा 'वेतेः' इति वेर्तेर्विचि गुणे वेरिति । पुरुषार्थानां वेदयिता वेद उच्यते । वेदो यानि कर्माण्यनुशास्तीति स एवार्थः BB.

२. तत् तानि, पूर्ववद्वचनव्यत्ययः । तानि सर्वाण्यनुक्रमेण दधन्वे तेषामेवेन्द्राग्न्या-दीनां प्रसादेनेति BB.

३. स्वायत्तानि करोति व्याप्नोतीत्यर्थः Sy. कार्त्स्न्येन प्राप्नोति, श्रेयोऽर्थिभ्यः प्रका-शयति ।...पूर्ववच्छान्दसो लुङ् BB.

४. अयमग्निः सर्वाणि Sy. अधुना वेदो विशेष्यते—विश्वानि BB.

५. काव्यानि । कवयो मेधाविन ऋत्विजः । तत्सम्बन्धीनि कर्माणि Sy. कवनीयानि कार्याणि विधेयानि कर्माणि कर्मताप्यानि वा फलानि ।... 'कु शब्दे' 'ओरावश्यके' Pa.3.1.125. इति ण्यप्रत्ययः BB.

६. व्याप्तौ दृष्टान्तः, बहिर्वेष्टनवलयः Sy. यथा नेमिः BB.

७. चक्रं P. रथाङ्गं यथा कार्त्स्न्येन व्याप्नोति तद्वत् Sy. चक्रं सर्वतः प्राप्य धारयति तथेति BB.

८. VM. ignores उ । उ=एव Sy. उ इति पादपूरणेऽवधारणे वा । तान्वे-वेति BB.
This stanza=TS.3.3.3.3.

९. M. adds शुचिना स पाहि before शुचिना ॥ शोधकेन Sy.

१०. अग्निहोत्रादिकर्मणा Sy.

११. स्वयं शोधकः Sy.

१२. उत्पन्नः । जातमात्र एव सर्वस्य प्रशास्ता च सन् अग्निहोत्रादिनिर्वोढाभवदित्यर्थः Sy.

१३. जानन् यजमानः Sy.

१४. अग्नेः Sy.

१५. फलपर्यवसायीनि Sy.

१६. वया इव विस्तृताः शाखा इव Sy.

१७. तन D.

१८. क्रमेणानुतिष्ठति Sy.

१९. VM. ignores साकम् । हि । and प्रशास्ता ।
Sy. explains these words in the following manner:—
प्रशास्ता देवानाम् एतन्नामक ऋत्विक्, प्रशासिता वा यज्ञविघ्नानाम् । साकं हि सहैव ।

**ता अ॒स्य॒ वर्ण॑मा॒युवो॒ नेष्टुः॑ सचन्त धे॒नवः॑ ।**
**कु॒वित्ति॒सृभ्य॒ आ वरं॒ स्वसा॑रो॒ या इ॒दं य॒युः ॥४॥**

ता अस्य । ताः । अस्य[1] । नेतुः[2] । धेनवस्त्रयो[3] लोकाः । गमनशीलस्य[4] । वरणीयं[5] हविः । सेवन्ते[6] । ताभ्यस्तिसृभ्यो[7] धेनुभ्यः । बहु[8] । आगच्छति । वरणीयम्[9] । स्वसारः[10] । या[11] भूम्यः[12] । उदकम्[13] । प्राप्नुवन्ति[14] । इदमित्युदकनाम[15] । अस्योत्तरा[16] भूयसे निर्वचनाय[17] ।

**यदीं॑ मा॒तुरुप॒ स्वसा॑ घृ॒तं भर॒न्त्यस्थि॑त ।**
**तासा॑मध्व॒र्युरागं॑तौ॒ यवो॑ वृ॒ष्टीव॑ मोदते ॥६॥**

यदी । यदि[18] । पृथिव्याः[19] । स्वसा[20] द्यौः[21] । उदकम् । भरन्ती[22] । उपतिष्ठति[23] । ततस्तासां[24] तिसृणामन्तरिक्षसहितानाम् । आगमने[25] सङ्गमने । अध्वरमिच्छन्नग्निः[26] । यवः[27] । इव वृष्ट्या । मोदते[28] ।[29]

---

१. अस्याग्नेः Sy.
२. नेष्टुर्हविर्याचितुर्भक्षयितुः शोषयितुः पोषयितुर्नेतुर्वा । यद्वैतन्नामकऋत्विग्रूपस्य Sy.
३. प्रीणयित्र्यः Sy.
४. गन्त्र्यो व्याप्ताः Sy.
५. ०य P.
६. ०परिचरन्ति Sy.
७. तिसृभ्य आ गार्हपत्यादिमूर्तीनामपि Sy.
८. बहुकृत्वः Sy.
९. ०य M.
१०. स्वयंतारिण्योऽङ्गुलयः Sy.
११. Omitted by P.D. वक्ष्यमाणलक्षणा अङ्गुलयः Sy.
१२. भूम्याः P.
१३. इदमनुष्ठीयमानं कर्म Sy.
१४. . . .अनुतिष्ठन्ति Sy.
१५. उदमि० P.M. The passage, इदमित्युदकनाम, (Ngh. 1.12.) should immediately follow उदकम् and precede प्राप्नुवन्ति ।
१६. ०नामस्यो० P.D.
१७. भूयतोम for भूयसे निर्वचनाय P.D.
१८. यदा Sy.
१९. सर्वस्य निर्मातुर्भूम्या वेदिलक्षणायाः Sy.
२०. स्वसृत्थानीया जुहूः Sy.
२१. द्यौ M.
२२. ०न्ति M. . .सती Sy.
२३. उपतिष्ठेदग्निम् । एकवचनमविवक्षितम् । जुहूपभृद्ध्रुवा घृतं भरन्त्यस्तिष्ठन्तीत्यर्थः Sy.
२४. तदा जुह्वादीनाम् Sy.
२५. यागाय प्राप्तौ सत्याम् Sy.
२६. अध्वर्युरेतन्नामक ऋत्विग्रूपोऽध्वरं कामयमानो वायमग्निः Sy.
२७. वय M.
२८. हृष्यति यथा मोदते तद्वत् Sy.
२९. This stanza is omitted by P.D.

स्वः स्वाय॒ धाय॑से कृणु॒तामृ॒त्विगृ॒त्विज॑म् ।
स्तोमं॑ य॒ज्ञं चादरं॑ व॒नेमा॑ ररि॒मा व॒यम् ॥७॥

स्वः स्वाय । मदीयो[1]ऽयम् । ऋत्विक्[2] । आत्मनः[3] । धारणार्थम्[4] । ऋत्विजं[5] मदीयम् । कृणुताम्[6] । अथास्मै[7] । वयम्[8] । यं स्तोमम्[9] । यज्ञम्[10] । च । पर्याप्तम्[11] । भजेम[12] । दद्याम[13] च हविः ।

यथा॑ वि॒द्वाँ अरं॒ कर॒द्विश्वे॑भ्यो यज॒तेभ्यः॑ ।
अ॒यम॑ग्ने॒ त्वे अपि॒ यं य॒ज्ञं च॑कृ॒मा व॒यम् ॥८॥

यथा विद्वान् । यथा । प्राज्ञः[14] । अलङ्करोति[15] । विश्वेभ्यः[16] । देवेभ्यः[17] । अयम् । अपि[18] । त्वयि तथा । अग्ने[19] ! भवति । यम् । यज्ञम्[20] । कृतवन्तः[21] । विद्वांसोऽपि[22] ।

---

१. अयमग्निः स्वयमेव Sy.

२. 'होताजनिष्ट' इत्यादिनोक्तलक्षणो होतृपोतृप्रशास्त्राद्यृत्विग्रूपः सन् Sy.

३. स्वकीयाय Sy.

४. धायसे कर्मणे हविषां धारणाय वा Sy.

५. आर्त्विज्यम् । भावप्रधानोऽयं निर्देशः । देवर्त्विग्रूपः सन् ऋत्विजं मानुषमार्त्विज्यम् Sy.

६. The passage beginning with स्वः स्वाय and ending with कृणुताम् is omitted by P.D. करोतु Sy.

७. अनन्तरमेव Sy.

८. वयञ्च तदनुग्रहात् Sy.

९. स्तोम P. स्तोत्रम् Sy.

१०. तवाश्रयं यागमपि यद्वा यज्ञयोग्यं हविः Sy.

११. अलमत्यर्थम् Sy.

१२. भजाम D. सम्भजेमहि Sy.

१३. ददेमहि च हविः । यद्वा स्तोमं वनेम यज्ञं यज्ञयोग्यं हवी ररिम Sy.

१४. ज्ञः M. त्वन्माहात्म्याभिज्ञः प्रयोगज्ञो वा यजमानः Sy.

१५. पर्याप्तं कुर्यात् तथा त्वमनुगृहाणेत्यर्थः Sy.

१६. सर्वेभ्यः Sy.

१७. यजनीयेभ्यो देवेभ्यः Sy.

१८. अपिरेवार्थे । स यागस्तवैव त्वत्प्रीत्यर्थः । तमेव तस्मात्त्वं सर्वदेवार्थं यागं तत्तदृत्विग्रूपः सन् निर्वहेत्यर्थः Sy.

१९. हे अग्ने ! Sy.

२०. यागविशेषम् Sy.

२१. कुर्महे Sy.

२२. VM. seems to explain वयम् by विद्वांसोऽपि ॥ वयमपि Sy.

II. 6.

इमां मे॑ अग्ने स॒मिध॑मि॒मामु॑प॒सदं॑ वनेः ।
इ॒मा उ॒ षु श्रु॑धी॒ गिरः॑ ॥१॥

[1]इमां मे । इ[2]माम् । मे[3] । अ[4]ग्ने ! समि[5]धम् । भजेथाः[6] । एवमिमाम् । उपसत्ति[7] च । स्तुतीः । च[8] । सुष्ठु । शृणु । इमाः[9] ।

अ॒या ते॑ अग्ने विधे॒मोर्जो॑ नपा॒दश्व॑मिष्टे ।
ए॒ना सू॒क्तेन॑ सुजात ॥२॥

अया ते । अनया[11] समिधा । परिचरामः[12] । अग्ने[13] ! अन्नस्य[14] । पुत्र[15] ! यस्त्वं गमनार्यम-[16]श्वमिच्छसि[17] । शोभनजनन[18] ! अनेन[19] । सूक्तेन विधेम[20] ।[21]

१. 'इमां मे' इत्यष्टर्चं षष्ठं सूक्तं सोमाहुत्यार्षमाग्नेयं गायत्रम् । 'इमां मे गायत्रं हि' (KSA.13.6.p.13.) इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रे छन्दस्यस्य विनियोगः । सूत्रितं च—'इमां मे अग्ने समिधमिमामिति त्रयाणामुत्तमामुद्धरेत्' (ASS.4.13.) इति । अपराह्णिक्यामुपसदि 'इमां मे अग्ने समिधम्' इति तिस्र ऋचस्त्रिरभ्यस्ता नव सामिधेन्यः कृत्वा विनियोक्तव्याः । 'अथोपसत्' इति खण्डे सूत्रितम्—'इमां मे अग्ने समिधमिमामिति तु सामिधेन्यः' (ASS.4.8.) इति Sy.

२. इमां मे is omitted by P.D.M.

३. आधीयमानाम् Sy.

४. मदीयाम् Sy.    ५. हे अग्ने ! Sy.

६. आहुतिम् Sy.    ७. ०था वम् M. ०थाम् P. सम्भजेथाः Sy.

८. उपसदनसाधनामाहुतिमुपसद्याने क्रियमाणां वा Sy.

९. स्तुर्याप्तव्यतीश्च P.D. च is an explanation of उ ॥ उ=अपि Sy.

१०. इमाम् M.

११. अनयाहुत्या Sy.

१२. परिचरेम Sy.

१३. ०चर...ग्ने M.

१४. यस्य D. स्य P. बलस्य Sy.

१५. हे...नप्तः! तस्य नपातयितः! वा Sy.

१६. गमनसमानार्यम् P.D.

१७. ०च्छति P.D. व्यापकयज्ञ ! यद्वा आशु क्रियमाणं कर्माश्वम् । तदिच्छतीत्यश्वमिष्टिः । सन्त्वरमाणा ह्युपसदमाचरन्ति । 'ते कर्मभिः समत्वरन्त ते तिस्रः सामिधेनीरनूच्य तिस्रो देवता अयजन्' (AB. 3.45.) इति ब्राह्मणम् । तादृशाग्ने ! ते त्वामनयाहुत्या विधेम परिचरेम Sy.

१८. जानन् D.

१९. एतेन Sy.

२०. स्तोत्रेण प्रीणयेमेति शेषः । यद्वा स्तुत्युपबृंहितेन विधेम Sy.

२१. VM. ignores ते । Sy. explains it as त्वाम् ।

तं त्वा गीर्भिर्गिर्वणसं द्रविणस्युं द्रविणोदः ।
सपर्येम सपर्यवः ॥३॥

तं त्वा गीर्भिः । तम्[१] । त्वा[२] । गीर्भिर्वननीयम्[३] । धनेच्छुम्[४] । धनस्य दातः[५] ! इतः[६] परिचरेम । परिचरणेच्छवः[७] ।

स बोधि सूरिर्मघवा वसुपते वसुदावन् ।
युयोध्यस्मद्द्वेषांसि ॥४॥

स बोधि । सः[८] । बुध्यस्व[९] । प्राज्ञः[१०] । धनवान्[११] । धनपते[१२] ! धनदातः[१३] ! पृथक्[१४] कुरु[१५] च । अस्मत्तः[१६] । शत्रून्[१७] ।

स नो वृष्टिं दिवस्परि स नो वाजमनर्वाणम् ।
स नः सहस्रिणीरिषः ॥५॥

स नः । सः[१८] । अस्मभ्यम्[१९] । दिवः[२०] । वृष्टिं देहि[२१] । स । नः[२२] । बलम्[२३] । अस्खलितम्[२४] ।

---

१. त्वम् D.
२. त्वं D. तादृशम् Sy.
३. त्वाम् Sy.
४. VM. seems to explain गीर्भिः and गिर्वणसम् together as गीर्भिर्वननीयम् । Sy. construes गीर्भिः with सपर्येम and explains गिर्वणसम् as स्तुतिभिर्वननीयम्.
५. हविर्लक्षणधनेच्छुम् Sy.
६. धनस्य दातः ! अग्ने ! Sy.
७. परिचरणकर्तारो वयम् Sy.
८. Omitted by M. स उक्तलक्षणकः त्वम् Sy.
९. बुध्यस्व अस्मदीयं स्तोत्रम् Sy. अस्मदभिप्रायं बुध्यस्व Mah.
१०. प्रज्ञः P.D. विद्वान् प्रेरको वा Sy. यस्त्वं पण्डितः U.
११. Omitted by P. अन्नवान् Sy. मघं धनमस्यास्तीति सः Mah.
१२. ०वते D.M. हे धनस्य पातः ! U.
१३. वसु ददातीति वसुदावा...तत्सम्बुद्धौ हे वसुदावन् ! धनस्य दातः ! Mah.
१४. प्रथ D.
१५. कुरुत D.M.
१६. किञ्च हे अग्ने ! द्वेष्टॄन् Sy. दौर्भाग्यानि प्रीतः सन् U. सन्तुष्टः सन् द्वेषांसि दौर्भाग्यानि Mah.
१७. स बोधि सूरिर्मघवा वसुपते वसुदावन् युयोध्यस्मद्द्वेषांसीति यथैवास्मद् द्वेषांसि युयादेवमेतदाह द्वाभ्यामुपतिष्ठते गायत्र्या च त्रिष्टुभा च तस्योक्तो बन्धुः । SB. 6.8.2.9. p. 567. This stanza=YV. 12.43.
१८. स एवाग्निः Sy.
१९. अस्मं P. अस्मदर्थम् Sy.
२०. ०वो M. द्युलोकादन्तरिक्षात् Sy.
२१. करोतीति च शेषः Sy.
२२. अस्मदर्थम् Sy.
२३. बलं ददातु Sy.
२४. अविचलमनल्पम् Sy.

सः । नः । सहस्रसंख्यानि[1] । अन्नानि[2] ।[3]

**ईळानायावस्यवे यविष्ठ दूत नो गिरा ।**
**यजिष्ठ होतरा गहि ॥६॥**

ईळानाय[4] । स्तुवते[5] । हविरिच्छते[6] । युवतम ! दूत[7] ! अस्माकं[8] होत्रे[9] । स्तोत्रेण[10] प्रीतस्त्वम् । यष्टृतम[11] ! होतः[12] ! आगच्छ[12] ।

**अन्तर्ह्यग्न ईयसे विद्वान् जन्मोभया कवे ।**
**दूतो जन्येव मित्र्यः ॥७॥**

अन्तर्ह्यग्ने । द्यावापृथिव्योः[13] अन्तः[14] । हि[15] । अग्ने ! गच्छसि[16] । विद्वान्[17] । जन्मानि[18] । उभयानि[19]—मानुषाणि दैव्यानि च । कवे[20] ! दूत इव[21] । जनपदान्[22] । मित्रहितः[23] ।

---

१. अपरिमितप्रकाराणि Sy.
२. अन्नानि ददातु Sy.
३. VM. ignores परि । परीति पञ्चम्यर्थानुवादी Sy.
४. ०नाया P.
५. ०वन्ते P. पूजयित्रे Sy.
६. ०विच्छते P.D. स्वरक्षणमिच्छते मदर्थम् Sy.
७. भूत D. मूत P. देवानां यज्ञादिसूचक ! Sy.
८. अस्मदीयया Sy.
९. ०त्र D.
१०. स्तुत्या Sy.
११. यष्टृताम P. यष्टताम D. अतिशयेन यष्टव्य ! Sy.
१२. होतागच्छ D. होरागच्छ P. देवानामाह्वातरग्ने ! Sy.
१३. द्यावा is added by D. before द्यावापृथिव्योः ।
१४. जनानां हृदये Sy.
१५. हिः 'स होता सेदु दूत्यं चिकित्वाँ अन्तरीयते' (RV. 4.8.4.) इत्यादिमन्त्रान्तरप्रसिद्धिद्योतनार्थः Sy.
१६. गच्छसि पद्भ्याम् M. गच्छसि जानासि वा Sy.
१७. Omitted by M. जानन् सन् ईयसे इति सम्बन्धः । तत्र दृष्टान्तः Sy.
१८. जमानि P.D. जन्मानि यष्टॄणां यजमानानां यष्टव्यानां देवानां च सम्बन्धीनि Sy.
१९. उभयविधानि Sy.
२०. हे मेधाविन् ! Sy.
२१. दूतज M. स यथा प्रजानां चित्तवृत्तिज्ञानाय राज्ञा प्रेरितः तासां मनो जानाति तद्वत् त्वमप्यस्माकमन्तरीयस इत्यर्थः Sy.
२२. जनेभ्यो हितः Sy.
२३. विशेषेण मित्रेभ्यो हितः Sy.

स विद्वाँ आ चं पिप्रयो यक्षिं चिकित्व आनुषक् ।
आ चास्मिन्त्सत्सि बर्हिषि ॥८॥

स विद्वान् । सः । विद्वान् । अग्ने ! देवान् आ । च । प्रीणय । यज च । प्राज्ञ ! अनुषक्तम् । आसीद । च । अस्मिन् । बर्हिषि ।

II. 7.

श्रेष्ठं यविष्ठ भारताग्ने द्युमन्तमा भर ।
वसो पुरुस्पृहं रयिम् ॥१॥

श्रेष्ठं यविष्ठ । श्रेष्ठम् । युवतम ! भारतेत्याह 'एष हि देवेभ्यो हव्यं भरति' इति ब्राह्मणम् । अग्ने ! दीप्तिमन्तम् । आभर । वासयितः ! बहुभिः स्पृहणीयम् । रयिम् ।

---

१. हे अग्ने ! स त्वम् Sy.
२. विशेषाभिज्ञः सन् Sy.
३. देवानाम् D. ४. सर्वतोऽस्मान् Sy.
५. पूरय च कामैः Sy.
६. हे चेतनावन् ! Sy.
* अनुक्रमेण Sy.
७. असी D. असीद P.
८. स्तीर्णे Sy.
९. 'श्रेष्ठं यविष्ठ' इति षड्चं सप्तमं सूक्तं सोमाहुत्यार्षमाग्नेयं गायत्रम् । प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रे छन्दसि अस्य विनियोगः पूर्वसूक्ते एवोक्तः । श्रवणाकर्मण्याद्या विनियुक्ता Sy.
१०. श्रेवैः P.
११. ०ष्ठ P.D.M. अतिप्रशस्यम् Sy. प्रशस्यतमम् BB.
१२. यौतिः पृथक्करणे. . .पृथक्कर्तृतम ! आदाय दातः ! यद्वा तरुणतम ! BB.
१३. भ० M. भरता ऋत्विजः, तेषां सम्बन्धी भारतः । तैरध्वर्य्वादिभिर्मथनहविःस्तोत्रादिना व्याप्रियमाणत्वात् । तादृश ! Sy. यज्ञस्य भर्तार ऋत्विजो भरताः. . . एतैस्त्यावित ! भारत ! BB.
१४. Cf. Kau. Br. 3.2. अग्निर्वै भरतः स वै देवेभ्यो हव्यं भरति । SB. 1.4. 2.2. and 1.5.1.8. एष हि देवेभ्यो हव्यं भरति तस्माद्भरतोऽग्निरित्याहुः ।
१५. ०मत्तम D.
१६. भर D. आतर M. आहर Sy. अस्मभ्यमाभर स्पर्धमानेभ्य आच्छिद्यास्मभ्यं देहि BB.
१७. वासयीत M. हे वसो ! वासक ! व्याप्त ! वा एवंरूपाग्ने ! Sy. वासहेतोः BB.
१८. बहुभिरर्थिभिः स्पृहणीयम् Sy. कर्मणि क्विप् । यद्वा बहुधः स्पृहः यस्मिन् BB.
१९. ईदृशं रयिं धनम् BB.
This stanza=TS. 1.3.14.3.

मा नो अरातिरीशत देवस्य मर्त्यस्य च ।
पर्षि तस्या उत द्विषः ॥२॥

मा नः[1] । [2]मा । अस्माकम्[3] । ईशिष्ट[4] । अरातिः[5] । देवमनुष्ययोः[6] । पारय[7]अस्मान्[8] ।
तस्याः[9] वयमेव धनवन्तः स्याम । शत्रोः[10] । च[11] पारय[12] ।

विश्वा उत त्वया वयं धारा उदन्याइव[13] ।
अति गाहेमहि द्विषः ॥३॥

विश्वा उत । अपि चाग्ने[14] ! त्वया[15] । वयम्[16] । उदकभवाः[17] । धारा इव[18] । शत्रून्[19] ।
अतिगाहेमहि[20] ।[21]

---

१. म P.D. २. हे अग्ने ! त्वदनुग्रहात् Sy. ३. अस्मान् Sy.
४. पराभवितुं शक्तोऽभूत्, विषयीकुर्यात् Sy.
५. अरातिरदानं शत्रुत्वम्, यद्वा छन्दसि, अरातिशब्दः शत्रुवाची स्त्रीलिङ्गो भवति । अदाता शत्रुः Sy.
६. ०सम्बन्धिनी तैः कारिता Sy.
७. पूरय Sy. ८. वायास्मान् M.
९. उभयविधायाः Sy.
१०. अस्मदरातेः Sy. ११. अपि च पारय Sy.
१२. VM. ignores च of the second pāda, because he uses a compound देवमनुष्ययोः instead of देवस्य मर्त्यस्य च । According to Yāska (उभाभ्यां सम्प्रयुज्यते N. 1.4.) च should be joined with both members. The phrase should have been therefore देवस्य च मर्त्यस्य च । But the joining of च with both members is not necessary according to Pa. 2.2.29: चार्थे द्वन्द्वः ।

१३. In most editions of the text of the RV. उदन्या is separated from इव but the evidence of the padapāṭha shows that it is a compound. I have not therefore separated उदन्या from इव but kept them together as a compound. Also see वार्तिक in footnote no. 18 on this page. १४. वाग्ने M.
१५. Sy. reads त्मना for त्वया and explains त्मना आत्मनैव अन्यनिरपेक्षेण । १६. त्वदनुग्रहात् Sy.
१७. कभयाव D. उदकसम्बन्धिनीः Sy.
१८. According to Vārtika 'इवेन नित्यसमासो विभक्त्यलोपश्च' Pa. 2.1.4. इव should be construed with उदकभवा and not with धाराः ॥ अल्पस्तुतीरिव Sy.
१९. द्वेष्टॄन् Sy.
२०. ०तिनाहमहि P. अतिक्रम्य गच्छेम Sy.
२१. VM. ignores विश्वाः ।
Sy. explains it as सर्वानपि ।

उत्तरा निगदसिद्धा ।

शुचिः पावक वन्द्योऽग्ने बृहद्वि रोचसे ।
त्वं घृतेभिराहुतः ॥४॥

[शुचिः पावक]¹

त्वं नो असि भारताग्ने वशाभिरुक्षभिः ।
अष्टापदीभिराहुतः ॥५॥

त्वं नः । त्वम् । अस्माकम्² । भारत³ ! अग्ने ! वशाभिः⁴ । उक्षभिः⁵ । अष्टापदीभिर्गर्भिणीभिश्च⁶ । आहुतः⁷ । भवसि⁸ ।

द्रुवन्नः सर्पिरासुतिः प्रत्नो होता वरेण्यः ।
सहसस्पुत्रो अद्भुतः ॥६॥

द्रुवन्नः⁹ । वृक्षान्नः¹⁰ ।

---

१. The pratika is supplied by the Editor. The stanza is so easy that VM. does not explain it.
हे पावक ! शोधक ! अग्ने ! शुचिः शुद्धः । वन्द्यः नमस्कार्यः सन् । बृहत् महत् अत्यधिकम् । विरोचसे विविधं दीप्यसे । यतः त्वं घृतेभिः घृतैः । आहुतः समन्तात् सिक्तः । अतो विरोचसे Sy.
हे अग्ने ! पादादित्वान्न निहन्यते, वाष्ठिकमामन्त्रिताद्युदात्तत्वम् । पावक ! शोधक ! त्वं खलु शुचिश्शुद्धो न केवलं शोधयिता वन्द्यस्स्तुत्यश्च सर्वेषाम् ।. . . स त्वं घृतेभिर्घृतैः 'बहुलं छन्दसि' (Pa. 7.1.10.) इत्यैसभावः । अनेकपात्रगतत्वाद् बहुवचनम् । तैराहुत आभिमुख्येन मर्यादया वा हुतः ।. . .बृहद् भृशं विरोचसे विविधमनेकप्रकारं दीप्यसे । त्वं हि शुचित्वादिगुणैः प्रागेव रोचसे, अधुना तु घृतैरप्याहुतो बृहद्विरोचसे । स त्वमस्मिन् यजमाने रुचं देहीति भावः शेषो वा । 'स एवास्मिन्नुचं दधाति रोचत एव' (Cf. ŚB. 7.4.2.21. अमृतत्वं वै रुक्, अमृतत्वमेवास्मिन्नेतद्दधाति ।) इति ब्राह्मणम् BB.
This stanza=TS. 1.3.14.5.

२. अस्मदीयः Sy.

३. हे भारत ! ऋत्विजां पुत्रस्थानीय ! Sy.

४. वराभिः D. वन्ध्याभिर्गोभिः Sy.

५. सेक्तृभिर्बलीवर्दैः Sy.

६. ०गंभीरणश्च P. ०णीश्च D.

७. आराधितः Sy. ८. असि D.M.

९. द्रवन्नः D. द्वंन्नः M.

१०. समिद्रूपान्नः Sy. द्रवो वृक्षा एवान्नमदनीयं यस्य स द्रुवन्नः Mah. द्रुर्वृक्षोऽन्नमदनीयं यस्य स द्रुवन्नः । द्रुशब्दो द्रुमपर्यायः U. द्रुशब्दो दारुपर्यायः SKN. द्रुमान्नः Dur.

घृताहुतिः । पुराणः । होता । वरेण्यः । सहसः सूनु । महान् ।

## II. 8.

वाजयन्निव नू रथान्योगाँ अग्नेरुप स्तुहि ।
यशस्तमस्य मीळ्हुषः ॥१॥

वाजयन्निव ॥ गृत्समदः ॥ अन्नमिच्छन्निव । रथान् । क्षिप्रम् । अग्नेः । उपायान् ।

---

१. सर्पिरासूयते आसिच्यते यस्मिन् तादृशः । Sy. सर्पिर्घृतमासुतिरासवस्थानीयं मादकं यस्य सः । यद्वा सर्पिराहारत्वेन सूयते प्रक्षिप्यते यस्मिन् स सर्पिरासुतिः Mah. सर्पिर्घृतमासवनस्थानीयं यस्य स सर्पिरासुतिः U. सोमाहुतेः । 'दार्वन्नः सवाशनः ? (सर्पिरशनः)' इति शतपथे (SB.6.6.2.14.) विवरणाद् आसुतिशब्दोऽशनवचनः । दारणं चान्नस्य । भेदेनोपादानात् सलक्षणमशनमाह नत्वशनमात्रम् ।...सर्पिर्वा यो रसो यस्य सः SKN. सर्पिरासूयत आसिच्यतेऽस्मिन्निति तादृशः Dur. २. पुरातनः Sy; Dur. आश्चर्यभूतो महान् रमणीयो वा Dur. ३. होमनिष्पादकः Sy; Dur. देवानामाह्वाता U.

४. ०ण्य M. वरणीयः Sy; Dur.

५. सह D. सहसो बलस्य Sy. बलस्य पुत्रो मन्थनहेतुना बलेनोत्पद्यमानत्वात् Mah.

६. पुत्रस्थानीयो बलेनोत्पन्नत्वात् Sy; Dur. यतो मथ्यमानो जायते तस्मादेवमुच्यते U.

७. अद्भुत आश्चर्यभूतो रमणीय इत्यर्थः Sy. आश्चर्यरूपोऽनन्यसदृश इत्यर्थः Mah. अनन्यसमः U. महान् SKN.

८. एवंमहानुभावोऽग्निः मामनुजानात्वित्यर्थः Sy. स इदं नामास्माकं करोत्वनुजानातु वेत्याशीर्गतमाख्यातमाहृत्य समाप्यते वाक्यार्थः Dur. यथो एतद् 'ओजसो जातमुत मन्य एनम्' (RV.X.73.10.) इति चाहेत्ययमप्यग्निरोजसा बलेन मथ्यमानो जायते । तस्मादेनमाह सहस्पुत्रं सहसः सूनुं सहसो यहुम् N. 8.2.1., SKN. III. 119.

तामादधाति । द्रवन्नः सर्पिरासुतिरिति दार्वन्नः सर्पिरशन इत्येतत्प्रत्नो होता वरेण्य इति सनातनो होता वरेण्य इत्येतत्सहसस्पुत्रोऽद्भुत इति बलं वै सहो बलस्य पुत्रोऽद्भुत इत्येतत्तिष्ठन्नादधाति स्वाहाकारेण तस्योपरि बन्धुः SB. 6.6.2.14. p. 549.

The stanza=YV. 11.20.

९. 'वाजयन्निव' इति षड्चमष्टमं सूक्तम् । सोमाहुतेर्हशब्दानुवृत्तस्याभावान्मण्डलद्रष्टा गृत्समद ऋषिः । अग्निर्देवता । हिशब्दाद् गायत्री छन्दः । अन्त्यानुष्टुप् । 'वाजयन्निवान्त्यानुष्टुप्' इत्यनुक्रान्तम् (KSA.13.8.p.13.) प्रातरनुवाकाश्विनशस्त्रयोस्तृतीयसूक्तत्वेन अस्योत्तमावर्जितस्य विनियोग उक्तः Sy.

१०. वाजन् D. ०यन् M. ११. हे अन्तरात्मन् ! होतः ! इति वा सम्बोधनम् Sy.

१२. अन्नमिच्छन् पुरुष इव । स यथाऽश्वान् गमनाय स्तौति तद्वत् Sy.

१३. तरान् P. रथा D. यथोक्तलक्षणस्याग्नेर्गमनसाधनान् रथान् Sy.

१४. अश्वान् Sy.

उपस्तुहि[1] । यशस्वितमस्य[2] । सेक्तुः[3] ।

**यः सुनीथो ददाशुषेऽजुर्यो जरयन्नरिम् ।**
**चारुप्रतीक आहुतः ॥२॥**

यः सुनीथः[4] । यः[5] । सुनयनः[6] । यजमानाय[7] । स्वयं [8]जरयितुमशक्यः । सर्वं जरयंश्च[9] । अरिम्[10] । चार्वङ्गः[11] । आहुतः[12] ।

**य उ श्रिया दमेष्वा दोषोषसि प्रशस्यते ।**
**यस्य व्रतं न मीयते ॥३॥**

य उ श्रिया[13] । यः[14] । श्रिया सहितः[15] । गृहेषु । रात्रौ । अहनि च[16] । स्तूयते । यस्य[17] । व्रतम्[18] । न[19] क्वचिदपि[20] । हिंस्यते[21][22] ।

**आ यः स्वर्ण भानुना चित्रो विभात्यर्चिषा ।**
**अञ्जानो अजरैरभि ॥४॥**

आ[23] यः[24] स्वः । आविभाति[25] । यः[26] । आदित्यः[27] । इव । तेजसा[28] । चित्रः[29] ।

---

१. अग्नेरुपयानुस्तुति D. अग्नेरुपयानुपस्तुतिः P.
२. यशस्वित अस्य P.D. प्रवृद्धयशसः । मत्वर्थो लुप्यते Sy. ३. सेक्तुः फलस्य । ईदृशस्य योगान् स्तुहि Sy.
४. सुणीथः D. ५. योऽस्ति, सोऽग्निः Sy.
६. शोभननयनः Sy.
७. हविर्दत्तवते यजमानाय तदर्थम् Sy.
८. स्वरञ्जनयितुम० M. स्वय स्वरञ्जयितुम० P. अजरणीयोऽनभिभाव्यः Sy.
९. नाशयन् Sy. १०. तस्य शत्रुम् Sy.
११. अरिश्चारिञ्चार्वङ्ग P. अरिञ्चार्वाङ् M. शोभनोपक्रमः Sy.
१२. समन्तादाराधितो भवति Sy.
१३. Omitted by P.D.
१४. Omitted by P. योऽग्निः Sy.
१५. ०ता D.M. सहा P. श्रिया ज्वालया युक्तः सन् Sy.
१६. Omitted by P.D. अहःसु Sy.
१७. अग्नेः Sy. १८. कर्म Sy.
१९. तत्रतत्रं M. २०. केचिदपि P.D.
२१. हिंस्यते क्षीयते वा Sy.
२२. VM. ignores उ and आ । आ आगत्य Sy. २३. य D.
२४. Omitted by P.
२५. सर्वतो भासते Sy. २६. योऽग्निः Sy.
२७. M. reads यत्र आदित्य इव for यः । आदित्यः ॥ तत्र दृष्टान्तः सर्यः, स यथा विभाति तद्वत् Sy. २८. किरणेन Sy.
२९. चायनीयो नानावर्णो वा Sy.

अर्चिषा[1]। सोऽयमजरैरात्मतेजोभिः[2,3]। सर्वमभ्यञ्जानो[4] भवति।

अग्निमनु स्वराज्यमग्निमुक्थानि वावृधुः।
विश्वा अधि श्रियो दधे ॥५॥

अग्निमनु[5]। अत्रिमृषिम्[6]। अनु स्थितानि[7,8]। उक्थानि[9]। स्वराज्यम्[10]। अग्निम्। अवर्धयन्[11]। विश्वाश्च[12]। श्रियः। अग्निरधिधारयति[13]।

अग्नेरिन्द्रस्य सोमस्य देवानामूतिभिर्वयम्[14]।
अरिष्यन्तः सचेमह्यभि ष्याम पृतन्यतः ॥६॥

अग्नेः[15]। अग्न्यादीनाम्। रक्षणैः[16]। वयम्। सङ्गच्छेमहि[17]। अहिंस्यमानाः[18]। शत्रूंश्च[19]। अभिभवामः[20]।

अष्टकस्य द्वितीयस्य माधवः सुन्दरीसुतः।
व्याख्यत् पञ्चममध्यायं तत्पश्यन्तु च पण्डिताः[21]॥

[॥ इति द्वितीयाष्टके पञ्चमाध्यायः समाप्तः ॥][22]

---

१. पित्रोर्विषा M. ज्वालया रश्मिसमूहेन Sy.
२. सेयम् P.D.M.
३. ०भि D. नित्यैर्ज्वालासमूहैः Sy.
४. अभि सर्वतः, व्यञ्जयन् प्रकाशयन् Sy.
५. ०मनुर्वा D.
६. शत्रूणामन्नानां वा भक्षकम् Sy.
७. अभिलक्ष्य Sy.
८. ०मृषीनुत्थिनानि D.
९. उक्षानि P. शस्त्राणि Sy.
१०. स्वयमेव राजमानं स्वाराज्यम् Sy.
११. ०ग्निवर्धयत् D. अवर्धयत् P. वर्धयन्ति Sy.
१२. सर्वाः Sy.
१३. अग्निः० P.
१४. अग्नेरिन्द्रस्य P. अग्ने D.
१५. अग्नेः, इन्द्रस्य, सोमस्य, देवानामन्येषामपि Sy.
१६. रक्षणाभिः Sy.
१७. युक्ता भवेम Sy.
१८. अहिंस्येमानाः M. केनाप्यहिंस्यमानाः Sy.
१९. तथा रक्षायुक्ता वयं पृतन्यतः पृतनामात्मन इच्छतः शत्रून्। पृतन्यतः—पृतनाशब्दात् क्यचि 'कव्यध्वरपृतनस्यर्चि लोपः' Pa.7.4.39. इत्यवर्णलोपः Sy.
२०. शत्रुभिश्च अ० D. अभिभवेम Sy.
२१. P. reads विचक्षणाः for च पण्डिताः
२२. Omitted by P.D.

[श्रीरस्तु][1]

# [ ऋग्वेदभाष्यं वेङ्कटमाधवीयम् ][2]

## [ द्वितीयाष्टके षष्ठोऽध्यायः ][2]

'नि[3] होता होतृषदने'[4] व्याचिख्यासति माधवः ।

लटः प्रदर्शयन् वृत्ति लुटश्च तदनन्तरम् ॥१॥[5]

लृट्—'स्त[6]विष्यामि त्वामहं'[7] 'न जातो न जनिष्यते'[8] ।

'यन्मा[9]नुपान्यवक्ष्यमाणान्'[10] 'अग्ने[11] भद्रं करिष्यसि'[12] ॥२॥

'यानि करिष्या कृणुहि'[13] 'प्र हिन्वानो[14] अग्रेगो[15] राजा'[16] ।

'वृत्रमिन्द्रो'[17] हनिष्यन्'[18] 'वक्ष्यन्तीवेदा[19] गनीगन्ति'[20][21] ॥३॥

---

१. Omitted by D. and P.
२. This line is absent in D. and P.
३. All the inverted commas, and the accent on vedic quotations have been supplied by the Editor.
४. RV. II.9.1.
५. The serial number has been supplied by the Editor.
६. For लृट्—स्तवि० लृटस्तवि० M. लृटस्तपि० D. लृटतवि० P. Here स्तपि० and तवि० of D. and P. are clearly wrong. (Cf. RV. I. 44.5) We have substituted 'लृट्' for 'लृट' the reading of M. (which is लृटः, when the euphonic change is removed) as 'लृट' will make the metre erroneous. 'यथा' should be taken as implied after लृट् ।
७. RV. I.44.5. ८. RV. I.81.5.
९. मनु० D. and P.
१०. RV· I.113.9.
११. ०ग्नेर् M.
१२. RV. I.1.6.
१३. RV. I. 165.9.
१४. ०हिपानो D. ०हिवा० P. 'प्र हिन्वानो' RV. IX. 90.1
१५. ज्ञनेगो M. D. and P. omit ग्रे
१६. D. and P. omit जा ॥ 'अग्रेगो राजा' RV. IX. 86.45.
१७. पुत्र० M.
१८. P. omits न् । RV. IV. 18.11.
१९. ०क्ष्यन्तिवे० M. D. and P.
२०. निगदन्ति P.
२१. RV. VI. 75.3.

दृष्टो लृटः प्रयोगोऽल्पो[1] लुटस्त्वल्पतरस्ततः[2] ।
दृश्यन्ते ब्राह्मणे तस्य[3] 'कस्यं[4] वाश्वो[5] भवितेति[6,7]' ॥४॥
'श्वो यज्ञे[8] प्रयोक्तासे[9,10]' च 'श्वो विषुवान्[11] भवितेति[12] ।
शाट्यायनकं 'तदेवाऽऽगत्य[13] श्वो वक्ताराविति[14] ॥५॥
लृटो[15] लोटश्च[16] विषये दृश्यन्ते च लिङादयः ।
'वयमद्येन्द्रस्य प्रेष्ठाः[17]' 'प्रातर्मक्षू[18] धियावसुः[19]' ॥६॥
'हन्ता[20] इन्द्रेण पणयः[21] शयध्वे[22]' लेट्[23] भविष्यति ।
अपि वा लट्[24] 'वर्तमानसामीप्ये[25,26]' ऽयं भवेदिति[27] ॥७॥
हेतुहेतुमद्भावे[28] च प्रयुज्येते[29] लृटौ क्वचित् ।
'एकं[30] चमसं[31] चतुरंस्[32]' तत्र स्यादहङ्[33]निदर्शनम् ॥८॥

---

१. D. and P. omit ल्पो
२. ०स्त्वत्प० P.
३. तच्च M. D. omits it.
४. Omitted in P.
५. चाश्वो M., M. contains वा, as a substitute for चा over the line. D. and P. omit श्वो.
६. भेवि० P.
७. TB. I. 6.6.4.
८. यत्तो D.
९. प्रोक्ता० D. and P.
१०. The quotation is untraced.
११. ०षूवान् M. ०षुवन् P.
१२. भवतीति M. Tāṇḍya. IV. 4.7.
१३. तद्देवा० M.
१४. Jaiminīya B. 186.
१५. लुटो P.
१६. लाट० P.
१७. प्रोषाः P. RV. I. 167. 10.
१८. ०तमक्षू M. ०तर्मक्षु P.
१९. वसु D. RV. I.58.9.
२०. हेता D. होता P.
२१. वणः० M. D. and P. पण
२२. शयर् M. शय D. and P. RV. X. 108.4.
२३. ल्पेट् D. ल्पे P.
२४. द् D. दा P.
२५. ०मानासा० P.
२६. Cf. Pa. III. 3.131: वर्तमानसामीप्ये वर्तमानवद्वा ।
२७. भविष्यति. P.
२८. ०मत् भा० D. and P.
२९. ०ज्यते D. and P.
३०. कं D. and P.
३१. चसमं D. and P.
३२. RV. I. 161.2.
३३. स्याद् हड् नि० M. वृद्ध्यस्यामृड् नि० P. स्यामृड्नि० D.

स्मर्यते 'लिङ्निमित्ते लृङ्' क्रिया यत्रातिपद्यते ।
'यो वृत्राय सिनमत्र' भूतमात्रे तु दृश्यते ॥६॥
क्रियातिपत्तिर्बहुशो ब्राह्मणेषु प्रदृश्यते ।
अध्यायादिष्विमे सर्वे लकाराः सम्प्रदर्शिताः ॥१०॥ इति

## II. 9.

नि होता होतृषदने विदानस्त्वेषो दीदिवाँ असदत्सुदक्षः ।
अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रम्भरः शुचिजिह्वो अग्निः ॥१॥

नि होता । ॥ गृत्समदः ॥ निषीदतु । अग्निः । होतृसदने । विद्वान् ।

---

१. लङ्निमि० P. Here नि before मि is not clear in D.

२. लङ् M. Cf. Pa. III. 3.139: लिङ्निमित्ते लृङ् क्रियातिपत्तौ

३. न in M. is not clear.

४. RV. II. 30.2.

५. प्र D. and P. ६. ०पत्तीर्ब० P.

७. इत्यध्या० M. D. and P.

८. संप्रा D. and P. Here in P. दर्शि was first written after संप्रा, but was struck out afterwards.

९. 'नि होता' इति षड्चं नवमं सूक्तं गृत्समदस्यार्षम् । 'नि होता' इत्यनुक्रान्तत्वात् । (KSA.14.9. p.13.) अनुक्तत्वात्त्रिष्टुप् । मण्डलादिपरिभाषयाग्निर्देवता । प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ त्रैष्टुभे छन्दसि अस्य विनियोगः । 'अथैतस्याः' इति खण्डे सूत्रितं—'नि होता होतृषदन इति सूक्ते' (ASS. 4.13.) इति ॥ अग्निप्रणयन आद्ये ऋचौ विनियुक्ते । 'पञ्चम्यां पौर्णमास्याम्' इति खण्डे सूत्रितम्—'नि होता होतृषदन इति द्वे' (ĀSS.2.17.) Sy. १०. गृत्समदः स्तौति Sy.

११. नितरां सीदतु Sy. नीत्युपसर्गोऽसददित्यनेन सम्बद्ध्यते ।. . .सम्यगुपविष्टवान् Mah. निषण्ण उपविष्टः U. 'सदिरप्रतेः' (Pa.8.3.66.) इति षत्वम् । निषण्णश्चास्माकमभिप्रेतानि साधयत्विति BB. १२. अग्नि P. अग्निः stands for होता । देवानामाह्वाता Sy. अग्निरिति विस्मित इवाचष्टे U. ईदृशोऽग्निरङ्गनादिगुणयुक्तः BB.

१३. ०तृषद० M. ०त्र० P. होताऽत्र सीदति—इति होतृषदनमुत्तरा वेदी । अधिकरणे ल्युट् । तत्र Sy. होता यस्मिन् सीदति तद्धोतृषदनम् । होमनिष्पादकयोग्यस्थान उत्तरवेदिरूपे Mah.

१४. वृद्यान् M. स्वाधिकारं जानन् Mah. जानानः स्वमधिकारम् U. स्वाधिकारज्ञः BB.

प्रवृद्धः[१] । दीप्यमानः[२] । सुबलः[३] । स्तोतॄणां हिंसितानि व्रतानि कर्माणि प्रमतयश्च येन स द[४]ब्धव्रतप्र[५]मतिरनेवं[६]विधः । वा[७]सयितृ[८]तमस्तेजसा । 'सर्वं वै[९] सहस्रꣳ सर्वं भरः. . .इत्येतद्[१०] इति[११]

---

१. 'त्विष दीप्तौ' पचाद्यच् । त्वेषतीति त्वेषो दीप्तिमान् Mah. त्वेषो दीप्तियुक्तः U. दीप्तिमान् BB.

२. ०माना P. दीव्यतीति दीदिवान्. . . होतृधिष्ण्यादौ गमनवान् Mah. दीदिवान् देदीप्यमानः U. दीदिवाञ्ज्वलन् । दीव्यतेश्छान्दसस्य लिटः क्वसुरादेशः BB.

३. ०बला P. शोभनबलः Sy. साधुकुशलः क्षिप्रकारी Mah. साधुक्षिप्रकारी U. सुष्ठु शीघ्रः सुपण्डितो वा BB.

४. M. omits द ।

५. P. omits प्र ।

६. For ०तिरनेवं० P. reads ०तिरेवा० This explanation of अदब्ध-व्रतप्रमतिः is not clear. अदब्ध-व्रतप्रमतिः—अदब्धान्यहिंसितानि व्रतानि कर्माणि यस्याः साऽदब्धव्रता प्रमतिः प्रकृष्टा बुद्धिर्यस्य स तथोक्तः Sy. 'दम्भु वधे' अदब्धमनुपहतं व्रतं कर्म यस्य सोऽदब्धव्रतः, प्रकृष्टा मतिर्बुद्धिर्यस्य स प्रमतिः, अदब्धव्रतश्चासौ प्रमतिश्चेति सः Mah. अदब्धमनुपहिंसितं कर्म (यस्य) यश्च प्रकृष्टमतिः स एवमुच्यते U. अनुपहिंसितकर्मा चासौ प्रकृष्टमतिश्चेति कर्मधारयन्याये दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् । अनुपहिंसितकर्मा प्रकृष्टा मतिर्यस्य (सः) BB.

७. सायि० P. सर्वस्य वासयितृतमः । वासयतेस्तृजन्तस्य इष्ठनि रूपम् Sy.

८. M. and P. omit 'तृ' । वसति स्वस्थानमिति वस्ता, अत्यन्तं वस्ता वसिष्ठो वस्तृतमः Mah. U. वसिष्ठो वसुमत्तरः BB.

९. Omitted by M.

१०. SB. VI. 4.2.7.

११. D. adds: (प्र त्वे हवींषि जुहुरे समिद्ध इति यदा वाह एव समिध्यते तर्येतस्मिन् हवींषि प्रजुह्वतीति अग्ने यजस्व अग्ने देवान् हविषा यज यष्टृतमः क्षिप्रकारी रत्नं धनं प्रयच्छ त्वं हि धनानां पतिः त्वं दीप्ततस्य स्तोतस्य मनोता यस्य मन नि स्तोस्तृ ये चेति विधेम ते) This is an unconscious addition. Cf. infra II. 9. 2. 3. and 4.

सहस्रस्य अनेकविधस्य भर्ता विहरणेन नानाविधरूपस्य धारक इत्यर्थः । यद्वा सहस्रस्य सर्वस्य भर्ता Sy. सहस्रं सर्वजनं बिभर्ति पुष्णाति सहस्रम्भरः Mah. सहस्रं बिभर्तीति सहस्रम्भरः सर्वहितः U. बहुधनो धनस्य भर्ता । यद्वा बहुधनो हि सहस्रं भृत्यादीन् बिभर्तीति BB.

वाजसनयकम् । शुचिजिह्वः[1] । अग्निः[2] ।

**त्वं दूतस्त्वमु नः परस्पास्त्वं वस्य आ वृषभ प्रणेता ।**
**अग्ने तोकस्य नस्तने तनूनामप्रयुच्छन्दीद्यद्बोधि गोपाः ॥२॥**

त्वं[3] दूतः । अग्ने ! त्वम् । दूतस्त्वमेव[4] । त्वम्[5] । एव । अस्माकम् । पालः पालयिता[6] । त्वमेवास्माकम्[7] । श्रेष्ठम्[8] । प्रति[9] । प्रणेता[10] । वर्षितः[11] ! अग्ने ! अस्माकम् । पुत्रस्य ।

---

१. शुचिर्दीप्ता जिह्वा ज्वाला यस्य स तथोक्तः Sy. शुचिः शुद्धा होमयोग्या जिह्वा ज्वाला यस्य सः । नानादेवत्यानि हवींष्यभ्यवहरन्नप्युच्छिष्टं न करोतीति भावः Mah. शुचिर्जिह्वा यस्य स शुचिजिह्वः । योऽयं नानादेवत्यानि हवींष्यभ्यवहरति न चोच्छोषयति स शुचिजिह्व इति शक्यते वदितुम् U. शुद्धज्वालः । अतस्तर्वेऽपि देवा त्वदर्चिर्लीढमदन्ति BB.

२. उक्तार्थे ब्राह्मणम्—'नि होता होतृषदने विदान इत्यग्निर्वै देवानां होता तस्यैतद्धोतृषदनं यदुत्तरवेदीनाभिस्त्वेषो दीदिवाँ असदत्सुदक्ष इत्यासन्नो हि स तर्हि भवत्यदब्धव्रतप्रमतिर्वसिष्ठ इत्यग्निर्वै देवान वसिष्ठः सहस्रम्भरः शुचिजिह्वो अग्निरित्येषा ह वा अस्य सहस्रम्भरता यदेनमेकं सन्तं बहुधा विहरन्ति' (AB. 1.28.) इति ॥

नि होता होतृषदने विदान इति । अग्निर्वै होता कृष्णाजिनꣳ होतृषदनं विदान इति विद्वानित्येतत्त्वेषो दीदिवां २॥ असदत्सुदक्ष इति त्वेषो दीप्यमानोऽसदत्सुदक्ष इत्येतददब्धव्रतप्रमतिर्वसिष्ठ इत्यदब्धव्रतप्रमतिर्ह्येष वसिष्ठः सहस्रम्भरः शुचिजिह्वोऽग्निरिति सर्वं वै सहस्रꣳ सर्वम्भरः शुचिजिह्वोऽग्निरित्येतद्द्वाभ्यामाग्नेयीभ्यां त्रिष्टुब्भ्यां तस्योक्तो बन्धुः । SB. VI.4.2.7. p. 531.

This stanza=YV. II. 36.=TS. 3.5.11.2.

३. त्वन्दूतः P.

४. ०मेवस् D. and P. त्वमेव seems to be reiterated unnecessarily. अस्मदीये यज्ञे देवाह्वानार्थं दूतो भव Sy. देवेषु गन्ता BB.

५. D. and P. read ०मो स्मा० for ०मेवास्मा०

६. ०लयतात् D. आपद्भ्यः पारयिता । पाता च भव Sy. प्रकृष्टः पारयिता पारस्करादित्वात्सुट् BB.

७. ०स्मान् D. and P.

८. ज्यष्ठम् D. and P. वसुनो धनस्य Sy. वस्यो वसुमत्तरः, ईयसुन आद्यक्षरलोपः, व्यत्ययेन नपुंसकत्वम् । क्रियाविशेषणं वा वसीयः प्रणेतेति, आमन्त्रितं वा हे वसीयः ! व्यत्ययेन निघाताभावः BB.

९. अस्मदाभिमुख्येन Sy. आकारस्समुच्चये। वसीयः प्रणेता प्रधानपाकान्तरशोः ? (०पारयित्रोः) पूर्वापेक्षया समुच्चयः । त्वं नः परस्पाः प्रणेता चेति BB.

१०. पणे० D. and P. प्रापयिता भव Sy.

११. हे अभिमतफलवर्षक ! Sy.

अङ्गानाम्[1] । अप्रमाद्यन्[2] । दीप्यमानः[3] । गोप्ताऽहमिति[4] । बुध्यस्व[5] । तथा तनये[6] चेति ।

विधेम ते परमे जन्मन्नग्ने विधेम स्तोमैरवरे सधस्थे ।
यस्माद्योनेरुदारिथा यजे तं प्र त्वे हवींषि जुहुरे समिद्धे ॥३॥

विधेम ते । परिचरेम[7] । परमे । जन्मनि[8] । स्थितस्येति[9] तत्र[10] वाजसनेयकम्[11] 'विधेम ते परमे जन्मन्नग्नऽइति द्यौर्वाऽअस्य परमं जन्म विधेम[12] स्तोमैः[13]रवरे[14] सधस्थ[15] इत्यन्तरिक्षं वाऽअवर-

१. अस्मदीयानामङ्गानाम् Sy. शरीराणां च BB. २. D. and P. omit अ

३. ०भानो M. D. and P. दीदयतिर्दीप्तिकर्मा । शोभमानः Sy. देदितिर्दीप्तिकर्मा छान्दसोऽभ्यस्तधर्मः BB.

४. गोपायिता। तथा च ब्राह्मणम्—'अग्निर्वै देवानां गोपा अग्निमेव तत्सर्वतो गोप्तारं परिदत्त आत्मने च यजमानाय च' (AB. 1.28.) इति Sy. त्वमेव गोपा गोपायिता । आय्प्रत्ययान्तात्क्विप्... पदकारमते पाता गोपाः BB.

५. युध्य० M. तादृशस्त्वं गोपायिता भवामीति बुध्यस्व Sy. यदुक्तं त्वमेव नो रक्षेति, एतत्त्वं बोधि बुध्यस्व । लेटि शपो लुक् ।...धातोरन्त्यलोपश्छान्दसः । कर्मणि वा लुङ् । एतत्त्वया बोधि बुध्यतां विदितमिदं तवास्तु त्वमेव नो गोपायितेति BB.

६. थयेय D. थये P. Hear तने is explained as तनये । The passage तथा तनये च should immediately follow पुत्रस्य and precede अङ्गानाम् ॥ तनोति विस्तारयति कुलमिति तनः पौत्रः, तस्मिन् Sy. तनयस्य नप्त्रादेः । छान्दसो वर्णलोपो विभक्तिव्यत्ययश्च BB. This stanza=TS.3.5.11.2-3.

७. ०चरम P. स्तुतिभिः परिचरेम Sy. हविर्दद्मः Mah. विदधातिर्दानकर्मा, दद्मः U.

८. ०जनि D. and P. दिवि...'द्यौर्वा अस्य परमं जन्म' (SB.IX.2.3.39.) इति श्रुतेः Mah. जन्मनि जाताय U.

९. VM. takes ते as gen., Sy. takes it as dat. आदित्यात्मना स्थिताय Mah. U.

१०. पुत्र M. and P.

११. ŚB. adds अथ वैकङ्कतीमादधाति । तस्या उक्तो बन्धुः ।

१२. धेम D. and P. परिचरेम Mah.

१३. स्तोत्रैः Mah. स्तुतिभिः U.

१४. D. and P. read प for व. दिवोऽर्वाचीने Mah.

१५. सहस्थानेऽन्तरिक्षे स्थिताय विद्युद्रूपाय ते Mah...स्थिताय विद्युदात्मना 'अन्तरिक्षं वा अवरं सधस्थम्' U.

ॐ सधस्थं यस्माद्योने[1]रुदारि[2]था यजे[3] तमित्येष वाऽअस्य स्वो[4] योनिस्तं यजऽइत्येतत् प्र त्वे हवी-ॐषि जुहुरे[5] समिद्धऽ[6]इति यदा वाऽएष समिध्यतेऽथै[7]तस्मिन् हवीॐषि प्रजुह्वति[8] इति[9] ।

**अग्ने यजस्व हविषा यजीयाञ्छ्रुष्टी देष्णमभि गृणीहि राधः ।**
**त्वं ह्यसि रयिपती रयीणां त्वं शुक्रस्य वचसो मनोता ॥४॥**

अग्ने यजस्व । अग्ने ! देवान् हविषा[10] । यज[11] । यष्टृतमः । क्षिप्र[12]कारी भवन्[13] । धनम्[14] ।

---

१. ०द्याये६० D. and P. यस्माद्योने-रिष्टिकाचितिरूपात् स्थानात् Mah. यस्माच्च स्थानात्...'एष वास्य स्वो योनिः' (SB. IX.2.3.39.) एष इति चित्योऽग्निरुच्यते U.

२. ०दारथा P. उद्गतोऽसि । 'ऋ गतौ' लिट् । संहितायां दीर्घः Mah. 'ऋ गतौ' अस्यैतद्रूपम् U.

३. तं योनिमहं यजे पूजयामि Mah. यजे तत्स्थानमहम् U.

४. स्वे D. and P.

५. जुहरे D. त्वे त्वयि हवींषि प्रजुहुरे प्रजुहुविरे प्रजुह्वति ऋत्विजः Mah. जुहोमि त्वयि हवींषि U.

६. सम्यक् प्रज्वलिते Mah. सम्यग्दीप्ते U.

७. बेतमसि P.

८. ०जुह...M.

९. SB. IX.2.3.39. p. 720. VM. explains only the first verse of this stanza and ignores ते from it. For the explanation of the rest of the stanza, he quotes SB.

हे अग्ने ! परमे उत्कृष्टे । जन्मन् । जायते प्रादुर्भवत्यस्मिन्निति जन्मस्थानं द्यौः । तस्मिन् द्युलोकेऽवस्थिताय ते तुभ्यम् । विधेम स्तुतिभिः परिचरेम । अवरे द्युलोकादधस्तने । सधस्थेऽन्तरिक्षे स्थिताय तुभ्यं स्तोमैः स्तोत्रैः । विधेम परिचरेम । यस्माद्योनेः पृथिवीरूपात् स्थानात् त्वम् उदारिथ उद्गतोऽसि प्रादुर्भूतोऽसि तं पृथिवीप्रदेशं यजे पूजयामि । तत्र हि समिद्धे समिद्भिः समिध्यमाने । त्वे त्वयि । हवींषि पुरोडाशादीनि । प्र जुहुरे अध्वर्य्वादयः प्रजुह्वति ॥ जुहोतेर्लिटि रूपम् Sy.

This stanza=YV.17.75=TS. 5.4.7.4.

१०. Omitted in D. अस्मद्दत्तेन Sy.

११. Omitted in D. and P. देवान् संयोजय Sy.

१२. श्रुष्टीति क्षिप्रनाम Ngh.4.3.; N.6. 12. यद्वा श्रुष्टी क्षिप्रकारी त्वम् Sy.

१३. देवन् D. भवान् M.

१४. अन्नम् Sy.

अभि[1]प्रयच्छ । त्वम् । हि । धनानाम्[2] । पतिः । त्वम् । दीप्तस्य । स्तोत्रस्य[3] । मनोता[4] यस्य मनसि[5] स्तोत्र[6]मोत[7]स्त्वादृशः[8] ।[9]

उभयं ते न क्षीयते वसुव्यं दिवेदिवे जायमानस्य दस्म ।
कृधि क्षुमन्तं जरितारमग्ने कृधि पतिं स्वपत्यस्य रायः ॥५॥

उभयम् । सायं प्रात[10]र्होम . . . । . . . [व] सव्यदेहिः[11] (?) न कदाचिदपि । क्षीयते[12] । अन्वहम्[13] । आहवनीयात्मना जायमानस्य[14] । दर्शनीय[15] ! कृधि[16] । दीयतां[17] भुज्यतामिति शब्दवन्तम्[18] । स्तोतारम्[19] । अग्ने ! कृधि । स्वामिनम् । सुपुत्रस्य[20] । धनस्य ।[21]

---

१. अभि omitted in D. and P. देवानां पुरत इदं स्वादुतरमिदं स्वादुतरमिति ब्रूहि । यद्वा क्षिप्रकारी त्वं देयं धनमस्मदाभिमुख्येन ब्रूहि प्रयच्छेत्यर्थः Sy.

२. दानसामर्थ्यं दर्शयति । धनानां मध्ये । रयिपतिः उत्तमस्य धनस्य पतिः । यद्वा रयीणां रयिपतिरित्यत्रैको रयिशब्दोऽनुवादः Sy.

३. स्तोतस्य D. अस्मदीयस्य स्तोत्रस्य Sy.

४. मानो० P. The explanation of *manotā* is not clear. Sy. explains it as प्रज्ञाता or मानयिता।

५. मनसि D.

६. स्तोतृमोतन्त्वा D. and P.

७. ०मोतं तादृशः is suggested for ०मोतस्त्वादृशः । ८. द्वशः P.

९. VM. ignores देष्णम्। असि। and रयि०
देष्णम् देयम्। असि भवसि Sy.

१०. प्रातर D. प्र P. This is the explanation of उभयम्।

११. The text is corrupt here. It seems to be the explanation of वसव्यम्। D. omits it. स P. सायं प्रातर्होमः। तव। सर्वदेवहितः। is suggested. दिव्यं भौमं च वसु। वस्वादित्वात्स्वार्थिको यत्प्रत्ययः (Cf. Pa. 4.4.140.) तादृशमुभयं वसु . . . अस्योभयविधधनसद्भावे मन्त्रवर्णः—'त्वं ह्यग्ने दिव्यस्य राजसि त्वं पार्थिवस्य' RV. 1.144.6. इत्यत्रोक्तः Sy.

१२. Omitted by D. and P. हीयते Sy. १३. न्वाहम् P. प्रतिदिनम् Sy.

१४. ०मान्यस्य P. The scribe of D. also first wrote the word as in P. but later corrected it. अग्निहोत्रकाले जायमानस्य Sy.

१५. ०नीयस्य P. and D.

१६. कृद्धि M. कधि P. M. contains धि for द्धि over the line, in different ink. कुरु Sy.

१७. धीय० P.

१८. अन्नवन्तम्, कीर्तिमन्तं वा Sy.

१९. तव स्तोत्रं कुर्वाणमिमं यजमानम् Sy.

२०. शोभनापत्ययुक्तस्य Sy.

२१. VM.'s explanation of ते। and वसव्यम् is missing.

रोहितवर्णौ[१]। अपि च। कदाचिदारोचमानौ[२]। एव। करोति[३]। स्वरथे[४] विविधं ह्रियमाणः सर्वस्य भर्ता। वा[५]।

उत्तानायामजनयन्त्सुषूतं भुवदग्निः पुरुपेशासु गर्भः।
शिरिणायां चिदक्तुना महोभिरपरीवृतो वसति प्रचेताः ॥३॥

उत्तानायाम्। उत्तानायामरण्याम्[६]। अग्न्याख्यं शोभनं रेतः[७]। अजनयन्[८]। भवति[९] च। अग्निः[१०]। बहुरूपास्वोषधीषु[११][१२]। गर्भः[१३]। शिरिणा[१४] शृणोतेर्हिंसाकर्मणः[१५], शर्वर्याम्। अपि। अक्तुनाऽञ्जनेनान्धकारेण[१६]। स्वतेजोभिः[१७]। अपरिवृतः[१८]। वसति[१९]। प्राज्ञः[२०]।

जिघर्म्यग्निं हविषा घृतेन प्रतिक्षियन्तं भुवनानि विश्वा।
पृथुं तिरश्चा वयसा बृहन्तं व्यचिष्ठमन्नै रभसं दृशानम् ॥४॥

जिघर्म्यग्निम्। जुहोमि[२१]। अग्निम्। हविषा च[२२]। घृतेन च। अत्र वाजसनेयकम्—

---

१. ०वर्णा रप्यक्तुना अनेनान्धकारेण स्वतेजोभिरपरिवृतो वसति प्राज्ञः जिघर्म्यग्निं जुहोम्यग्निं हविषा च घृतेन च अत्र वाजसनेयकं व् D. This is an unconscious addition. Cf. infra II.10.3. and 4. रोहिद्वर्णावश्वौ रथं वहतः। रोहिद्वर्णयोरश्वयोः श्यावादिवर्णपरिग्रहः स्वेच्छया भवति Sy.

२. शुक्लवर्णावश्वौ रथं वहतः Sy.

३. ऋत्विग्भिरकारि खलु। करोतेः कर्मणि लिट् Sy.

४. रस्यर० D. स्यर० P. नानास्थानेषु विहृतः Sy.

५. वां D. वा अपि वा Sy.

६. उत्तानशयायामरण्याम् Sy.

७. अग्निहोत्रार्थं सुष्ठु प्रेरितमग्निम् Sy.

८. ०यत् D. अध्वर्य्वादय उदपादयन् Sy.

९. भवेत्। भवतेर्लिङि रूपम् Sy.

१०. अग्निः P.

११. बभ्रुरू० M. पेश इति रूपनाम Ngh. 3.7.

१२. ०पाचष्वोष० P.

१३. गर्भ P. अन्तर्वर्तमानतया गर्भ इव Sy.

१४. शीरा P. शीर्यन्तेऽस्यां भूतानीति शिरिणा रात्रिः (Ngh.1.7.) तस्यामपि Sy.

१५. ०ते हिंसा० P.

१६. अञ्जनादक्तुस्तमः तेन तमसा Sy.

१७. तेजोभिर्युक्तः Sy.

१८. अन्धकारेण असंस्पृष्टः।

१९. दीप्यमानो वर्तते Sy.

२०. प्रकृष्टप्रज्ञः सन् Sy.

२१. सिञ्चामि दीपयामि वा। 'घृ क्षरणदीप्त्योः' लटि रूपम् Sy.

२२. Omitted in D.

"प्रत्यङ् ह्येव सर्वाणि भुवनानि क्षियति पृथुं तिरश्चा वयसा बृहन्तमिति पृथुर्वाऽएष तिर्यङ् वयसो बृहन् बूमेन व्यचिष्ठमन्नैं रभसं दृशानमित्यवकाशवन्तमन्नैरन्नादं दीप्यमानमित्येतत" इति पक्षिणोऽपि पृथुमित्यर्थो भवत्येवं हि चीयमानोऽग्निरिष्टकाभिरिति ।"

१. एव D. २. M.D. and P. add क्षे between क्षियति and पृथुम् ।
सर्वं भूतजातं...अनुप्रविशति सर्वोपकारित्वात् सर्वगतत्वाच्च । 'क्षि निवासगत्योः' तौदादिकः । व्यत्ययेन शपो लुक् BB. कीदृशं त्वाम् ? विश्वानि भुवनानि प्रतिक्षियन्तं सर्वाणि भूतानि प्रत्येकं निवसन्तम् Mah. प्रत्येकशो निवसन्तं भूतानि सर्वाणि U. ३. पयसा P. वयसा धूमेन Mah., U. ४. पृथुं वा M. विस्तीर्णम् Mah. महान्तम् U.
५. ०र्यङ D. पृथुं तिरोऽञ्चतीति तिर्यक् तेन तिर्यगञ्चनेन ज्योतिषा...यद्वा तिरश्चा तिर्यक्प्रमाणेन पृथुं विस्तृतमिति बहुदेशव्याप्तिः । वयसा वयउपलक्षितेन कालेन बृहन्तमिति बहुकालव्याप्तिः । देशकालानवच्छिन्नमित्यर्थः Mah., U.
६. ०हद् P. महान्तम् Mah.
७. व्यविष्टम० M; व्यष्ट म० P. व्यचनं व्यचोऽवकाशः सोऽस्यास्तीति व्यचवान्, अतिशयेन व्यचवान् व्यचिष्ठम् Mah. व्यञ्चनवन्तम्, अवकाशवन्तम् U.
८. घृताद्यन्नैः Mah. अन्नैर्घृतादिभिः क्षिप्तैः U. ९. भयसं D. 'रभ राभस्ये' सोत्साहम् । अनेकान्नैर्हुतैरप्यस्य शक्तिक्षयो नास्तीति भावः Mah. उत्साहवन्तम्, बहुभिरप्यन्नैः क्षिप्तैर्नास्य शक्तिपरिहाणं भवतीत्येतदभिप्रायः U.
१०. ०त्यकवाश० M.
११. दर्शनीयं दृश्यमानं वा । अन्ये देवा अदृश्या अयं तु दृश्यत इति भावः । दृशेः शानन्प्रत्ययः Mah. अदृष्टा अन्या देवता, अयं तु दृश्य इति U.
१२. SB. VI. 3.3.19. VM. does not quote SB's explanation of the first verse. It is the following—आ त्वा जिघर्मि मनसा घृतेनेति । आ त्वा जुहोमि मनसा च घृतेन चेत्येतत्प्रतिक्षियन्तं भुवनानि विश्वेति
१३. ०त्यर्थो D. and P.
१४. पीय० M. १५. ०नोनिरि० D.
१६. ०काभूरि० P. D and P. omit ष्ट ।
१७. VM. explains the first verse of this stanza only. For the explanation of the other three verses, he contents himself with a quotation of the S Brāhmaṇa only. Sy. explains the stanza in the following manner:—
विश्वा सर्वाणि । भुवनानि । प्रतिक्षियन्तं वैश्वानरात्मनाधितिष्ठन्तम् । पृथुं महान्तम् । तिरश्चा सर्वतः प्रवर्तमानेन । वयसा पेजसा । बृहन्तं प्रवृद्धम् । अन्नैः हविर्लक्षणैः । व्यचिष्ठं व्याप्तम् । रभसं बलवन्तम् । दृशानमेवं गुणवत्तया दृश्यमानम् । अग्निं पुरोडाशादिलक्षणेन हविषा घृतेन च । जिघर्मि सिञ्चामि दीपयामि वा ॥
This stanza=YV. 11.23=TS. 5.1.3.2.

आ विश्वतः प्रत्यञ्चं जिघर्म्यरक्षसा मनसा तज्जुषेत ।
मर्यश्रीः स्पृहयद्वर्णो अग्निर्नाभिमृशे तन्वा३ जर्भुराणः ॥५॥

आ विश्वतः । वाजसनेयकम्—'आ सर्वतः प्रत्यञ्चं जुहोमीत्येतदरक्षसा मनसा तज्जुषेतेत्यहीडमानेन मनसा तज्जोषयेतेत्येतन्मर्यश्रीः स्पृहयद्वर्णो ऽअग्निरिति मर्यश्रीर्ह्येष स्पृहयद्वर्णो ऽग्निर्नाभिमृशे तन्वा जर्भुराण इति न ह्येषोऽभिमृशे तन्वा दीप्यमानो भवति इति । मनुष्यहितश्रीः । स्पृहणीयवर्ण इति ।

१. स्व P. ŚB. adds आ विश्वतः प्रत्यञ्चं जिघर्मीति before आ सर्वतः
२. प्रत्यगात्मतया प्रतीयमानम् Mah. प्रतिगतं माहात्म्येन U.
३. अहमग्निमाजिघर्मि समन्तात्सिञ्चामि दीपयामि च Mah. आसिञ्चामि त्वाम् U.
४. अक्षरसा M.D.P. क्रौर्यरहितेनाक्रुध्यमानेन प्रसन्नेन Mah. U.
५. मन्वना M. मना D. and P. चित्तेन Mah.
६. तं जु० D. and P. तद् घृतं जुषेत जुषतां सेवताम् । प्रार्थनायां लिङ् Mah. तद्धविः. . .भक्षयताम् U.
७. ०षत D.
८. मर्यश्री D. मर्यश्रि P. The absence of visarga in D. and P. is no mistake. Vide 'खर्परे शरि वा विसर्गलोपः' (Vārtika I on Pa.8.3.36.) मर्यैर्मनुष्यैः श्रीयत आश्रीयते सेव्यत इति मर्यश्रीर्मनुष्यैराश्रयणीयः Mah.
९. ०स्य श्री० D. ०र्यश्रिर्ह्ये० P.
१०. स्पृहद्व० D. पृवद्व P. स्पृहयन् स्पृहणीयो वर्णो रूपं यस्य । यजमानैः स्पृहणीयरूप इत्यर्थः Mah. स्पृहणीयवर्णश्च U.
११. नाभिमृशे P. अभिमृश्यत इत्यभिमृड्—न अभिमृश्यते नाभिमृद् तस्मै नाभिमृशे । चतुर्थी तृतीयार्थे । तनोर्विशेषणम् । नाभिमृशा अभिमर्शनं कर्तुमयोग्यया Mah. न चाभिमर्शनाय भवति U.
१२. त्वा P. तत्त्वा D. ईदृश्या तन्वा शरीरेण ज्वालालक्षणेन Mah. U.
१३. तया M. and P. तयदा D.
१४. जृम्भत इति जर्भुराणः 'जभिजृभी गात्रविनामे' इतस्ततश्च गच्छन्. . .ईदृशमग्निमाजिघर्मीति योज्यम् Mah., U.
१५. ŚB. VI. 3.3.20.
१६. ०श्री D. ०श्रिय P.
१७. VM. explains this ṛk with a quotation of ŚB. only । विश्वतः सर्वत्र व्याप्य वर्तमानम् । प्रत्यञ्चं यज्ञं प्रत्यागच्छन्तमग्निं येन घृतेन । आ जिघर्मि आसिञ्चामि । अरक्षसा बाधकरहितेन । मनसा स्तोत्रेण सह । तद् आज्यम् । जुषेत भवान् सेवेत । मर्यश्रीः, मर्यैर्मर्त्यैः श्रयणीयो भजनीयः । स्पृहयद्वर्णः, यादृशं वर्णं यजमानः स्पृहयति तादृशवर्णोपेतः । तन्वा तेजसा । जर्भुराणः पूर्यमाणः । अग्निः । नाभिमृशे अतितेजस्वितयाभिमर्शनीयो न भवति । अभिपूर्वात् मृशः कृत्यार्थे केन्प्रत्ययः Sy. This Stanza=YV. 11.24.

ज्ञेया भागं संहसानो वरैण त्वादूतासो मनुवद्वदेम ।
अनूनमग्निं जुह्वा वचस्या मधुपृचं धनसा जोहवीमि ॥६॥

ज्ञेया भागम् । जानीयाः[1] । स्वभागम्[2] । वारकेण[3] तेजसा । बलायमानः[4] । त्वं[5] दूतो येषां ते वयं[6] त्वाम् । यथा[7] मनुरुवाच[8] तया । वदेम[9] । परिपूर्णम्[10] । अग्निम्[11] । जुह्वा[12] च । वचनेन[13] च । मधुना सम्पृक्तम्[14] । धनप्रदाता[15] । पुनः पुनराह्वयामि[16] ।

## II. 11.

श्रुधी हवंमिन्द्र मा रिषण्यः स्यामं ते दावने वसूनाम् ।
इमा हि त्वामूर्जो वर्धयन्ति वसूयवः सिन्धवो न क्षरन्तः ॥१॥

श्रुधी[17] हवम् । श्रुधि[18] । हवम्[19] । इन्द्र ! मा । अस्मान् हिंसीः[20] । भवेम[21] । तव । स्वभू-

---

१. ज्ञानीया D. ज्ञानिया P. जानीहि । आशीर्लिङि 'वान्यस्य संयोगादेः' (Pa. 6.4.68.) इत्येत्वम् Sy.

२. भजनीयं स्तोत्रम् Sy.

३. ०केन P. वारयत्यनेन शत्रूनिति वरं तेजः, तेन Sy.

४. ०मानम् M. ०मानाः P. शत्रूनभिभवन् त्वम् Sy.

५. Omitted by M.

६. त्वं दूतो येषामसि ते ।...यद्वा त्वया प्रेरिता वयम् Sy.

७. या P.  ८. मनुरिव Sy.

९. स्तोत्रं ब्रूयाम Sy.

१० सम्पूर्णम् Sy.  ११. अनि० P.

१२. हूयतेऽस्यामिति जुहूर्ज्वाला पात्रविशेषो वा तया Sy.

१३. स्तुतिकामनया Sy.

१४. मधुना कर्मफलेन यजमानं संयोजयन्तम् Sy.

१५. धनं प्रज्ञाता P. धनस्य सम्भक्ताऽहम् Sy.

१६. ०नस्त्वारास्त्वाह्व० M.

१७. 'श्रुधी हवम्' इत्येकविंशत्यृचमेकादशं सूक्तं गार्त्समदम् । अत्रानुक्रमणिका—'श्रुधि सैकैन्द्रं विराट्स्थानमृतेऽन्त्याम्' इति (KSA. 14. 11. p. 13.) । विराट्स्थाना त्रिष्टुप् । तल्लक्षणमनुक्रमण्यामुक्तम्—'नवकौ वैराजस्त्रैष्टुभश्च द्वौ वा वैराजौ नवकस्त्रैष्टुभश्च विराट्स्थाना' इति (KSA. 9.5. p. 4.) । अन्त्या त्रिष्टुप् विशेषस्यानुक्तत्वात् । इन्द्रो देवता । पृष्ठ्यस्य चतुर्थेऽहनि मरुत्वतीयशस्त्रे द्वे सूक्ते निविद्धाने । तत्रेदं तृतीयं सूक्तम् । 'चतुर्थेऽहनि' इति खण्डे सूत्रितम्—'श्रुधी हवमिन्द्र मरुत्वाँ इन्द्रेति मरुत्वतीयम्' (ASS. 7. 11.) इति ।...गृत्समदः स्तौति Sy.

१८. श्रुधी M. and P. शृणु Sy.

१९. मदीयमिदं स्तोत्रम् Sy.

२०. इदमल्पं न साधीय इति मा निराकार्षीः 'दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति' (Pa. 7.4.36.) निपातितः Sy.

२१. पात्रभूता भवम Sy.

तानां धनानाम् । दानाय[1] भागिनो वयम्[2] । इमाः[3] । हि । त्वाम् । ऊर्जो[4] हवींषि । वर्धयन्ति । सत्तो[5] ? यजमानानां धनमिच्छन्त्यः[6] । नद्यः । इव । क्षरन्त्यः[7] ।

**सृजो महीरिन्द्र या अपिन्वः परिष्ठिता अहिना शूर पूर्वीः ।**
**अमर्त्यं चिद्दासं मन्यमानमवाभिनदुक्थैर्वावृधानः ॥२॥**

सृजो महीः[8] । हत्वाऽहिं व्यसृजः । महतीरपः[9] । गौः पय इव याः[10] । अपिन्वः[11] । परिवेष्टिताः[12] । अहिना[13] । हे शूर[14]! पूर्वीः[15] पुरातनीः । दुर्मरम्[16] । अपि[16] । अहिमसुरम्[17] । अभिमन्यमानम्[18] । अवाभिनदिन्द्रः[19][20] । स्तोत्रैः[21] । वर्धमानः[22][23] ।

**उक्थेष्विन्नु शूर येषु चाकन्स्तोमेष्विन्द्र रुद्रियेषु च ।**
**तुभ्येदेता यासु मन्दसानः प्र वायवे सिस्रते न शुभ्राः ॥३॥**

उक्थेषु । शूर ! येषु । शस्त्रेषु[24] । कामयसे[25] । स्तोमेषु[26] । च । रुद्रकृतेषु[27], रुद्र इति

---

१. दानय P.
२. भागिनो वयम् goes with भवेम ।
३. अस्माभिर्दत्तानि Sy.
४. घृतक्षरणोपेतानि हविर्लक्षणान्यन्नानि Sy.
५. त्वत्तो is suggested for सत्तो ।
६. दातुर्यजमानस्य धनमिच्छन्ति तादृशानि । छन्दसि परेच्छायां क्यच् (Cf. Vārtika I. on Pa.3.1.8.) Sy.
७. रक्षन्त्यः P. स्रवन्तः Sy.
८. महि P.
९. ०रवः M. ततस्त्वं तस्मादहेः सकाशाद् महतीरपः Sy.
१०. या P.
११. पवन्वः P. अवर्धयः Sy.
१२. अधिष्ठिता आक्रान्ताः Sy.
१३. अरिना P. मेघेन वृत्रेण वा Sy.
१४. शत्रूणां हिंसक ! Sy.
१५. Omitted in M. प्रभूतास्ताः Sy.
१६. मरणधर्मरहितमेवात्मानम् Sy.
१७. ०सुर P. सर्वस्योपक्षपयितारम् Sy.
१८. भिम P. तमसुरम् Sy.
१९. ०भिरद् P.. . . अवाङ्मुखं यथा भवति तथा । 'भिदिर् विदारणे' लङि सिपि रूपम् Sy.
२०. इन्द्र P.
२१. शस्त्रैः Sy.
२२. वर्धमानस्त्वम् Sy.
२३. VM. ignores the vocative इन्द्र in the first verse.
२४. शत्रुषु M. and P. होत्रादिभिः क्रियमाणेषु शस्त्रेषु Sy.
२५. स्तुतीः कामयसे । चाकन् कमतेः कनतेर्वा यङ्लुकि रूपम् । Sy.
२६. स्तोत्रेषु P. उद्गातॄणां स्तोमेषु Sy.
२७. रुद्रियं सुखं तत्साधनभूतेषु यद्वा रुद्रा स्तोतारः तत्कृतेषु Sy.

स्तोतृनाम[१] । तुभ्यम् । एव । एताः स्तुतयः । यासु[२] । त्वं मन्दसानो भवसि[३] । गन्त्रे[४] । प्रसि-स्रते[५] । इव[६] । शोभनाः[७] । त्वदर्थमेव[८] निर्गच्छन्तीवेति स्तुतीनां शोभया वदति[९] ।

शुभ्रं नु ते शुष्मं वर्धयन्तः शुभ्रं वज्रं बाह्वोर्दधानाः ।
शुभ्रस्त्वमिन्द्र वावृधानो अस्मे दासीर्विशः सूर्येण सह्याः ॥४॥

शुभ्रं नु ते । स्तुतिभिः[१०] शोभनम् । बलम् । वर्धयन्तः । शोभनम्[११] । वज्रम्[१२] । तव । बाह्वोः । दधाना[१३] भवामः[१४], स्तुतः सन्नादत्ते वज्रमिति । दीप्यमानः[१५] । त्वम् । इन्द्र ! वर्धमानः[१६] । अस्माकम् । उपक्षपयित्रीः[१७] । प्रजाः[१८] । शोभनेन वीर्येण[१९] । अभिभव[२०] इति[२१] ।

गुहा हितं गुह्यं गूळ्हमप्स्वपीवृतं मायिनं क्षियन्तम् ।
उतो अपो द्यां तस्तभ्वांसमहन्नहिं शूर वीर्येण ॥५॥

गुहा हितम् । गुहायाम् । निहितम् । अदृश्यम्[२२] । अप्सु । निगूढम्[२३] । अद्भिः

---

१. Ngh. 3.16.
२. यातु P. स्तोत्रशस्त्ररूपासु स्तुतिषु Sy.
३. भवति P. हृष्यन् भवसि Sy.
४. अस्मदीयं यज्ञं प्रत्यागच्छते Sy.
५. प्रसिस्रक्ते M. प्रसिसृते P. (त्वदर्थमेव) प्रसरन्ति Sy.
६. न सम्प्रत्यर्थे। ता अधुना सेवस्व Sy.
७. दीप्यमानाः Sy.
८. This is a comment on तुभ्य, इत्, एताः, प्र सिस्रिते, शुभ्राः, all of which have already been explained in their proper places.
९. VM. ignores इत् । नु and इन्द्रः । नु क्षिप्रम् Sy.
१०. According to Sy. स्तुतिभिः goes with वर्धयन्तः । स्तोत्रैः Sy.
११. दीप्तम् Sy.
१२. आयुधम् Sy.
१३. दधान P. निदधानाः । स्तूयमानो हि इन्द्रः असुरवधाय वज्रमादत्त इतीत्थंरूपेण आयुधं निदधाना भवामः Sy.
१४. भवन्ति M. and P.
१५. तेजसा युक्तः Sy.
१६. स्तोत्रैर्वर्धमानः Sy.
१७. उपक्षयित्रीः M. and P.
१८. आसुरीः प्रजाः Sy.
१९. सूर्येण सुष्ठु प्रेरकेण । आयुधं हि प्रेरयति त्वं युध्यस्वेति । एवंरूपेण बाह्वोर्निहितेन वज्रेण Sy.
२०. सहतेर्व्यत्ययेन लिङि परस्मैपदम् Sy.
२१. VM. ignores नु । नु क्षिप्रम् Sy.
२२. अत एव अप्रकाश्यम् Sy.
२३. गूढम् Sy.

अच्छाद्यमानम्[1]। मायिनम्[2]। निवसन्तम्। अपि च। आदित्यम्[3]। अश्वम्[4]। स्तम्भितवन्तम्[5]। हे शूर[6] ! वीर्येण[7]। अहिम्[8]। हतवानसि[9]।

**स्तवा नु तं इन्द्र पूर्व्या महान्युत स्तवाम नूतंना कृतानि ।**
**स्तवा वज्रं बाह्वोरुशन्तं स्तवा हरी सूर्यस्य केतू ॥६॥**

स्तवा नु। हे इन्द्र ! तव[10]। पूर्वकालभावीनि[11]। माहात्म्यानि[12]। अधुना[13]। स्तवाम[14]। अपि च। स्तवाम। सम्प्रतितनानि[15]। कृतानि[16]। स्तवाम। वज्रम्। बाह्वोः। दीप्यमानम्। स्तवाम[17] च। अश्वौ[18]। बलस्य[19]। प्रज्ञापकौ[20]।

**हरी नु तं इन्द्र वाजयंन्ता घृतश्चुतं स्वारमस्वार्ष्टाम् ।**
**वि संमना भूमिंरप्रथिष्टारंस्त पर्वंतश्चित्सरिष्यन् ॥७॥**

हरी नु ते। इन्द्र ! तव। अश्वौ[21]। बलं कुर्वन्तौ[22]। उदकस्य च्यावकम्[23]। शब्दम्[24]।

---

१. तिरोहितम्। अत्रैकस्मिँस्तिरोधानरूपेऽर्थे पुनरुक्तयस्तिरोधानभूयस्त्वप्रतिपादनपराः। अभ्यासे हि भूयानर्थो भवति। यथाहो दर्शनीयाहो दर्शनीयेति Cf. N. 10.42. तावृताम् Sy.

२. मायिना यम् M. मायियिन् P. मायाविनमसुरम् Sy.

३. This seems to be an explanation of द्याम्।

४. अश्व M. अवश्यम् P. उदकम् is suggested for अश्वम्॥ दिवञ्च Sy.

५. स्वसामर्थ्येन स्तम्भयन्तम् Sy.

६. शूर ! इन्द्र ! Sy.

७. सामर्थ्यभूतेन वज्रेण Sy.

८. इत्थम्भूतम् असुरं मेघं वा Sy.

९. 'हन हिंसागत्योः' इत्यस्य लङि रूपम् Sy.

१०. तव कर्माणि Sy. ११. ०भाविनी M. ०भावीनी P. पुरातनानि Sy.

१२. महान्ति Sy. १३. This is an explanation of नु। नु क्षिप्रम् Sy.

१४. स्तवम P. १५. सम्प्रतिभनानि M. अधुनातनानि Sy. १६. कर्माणि Sy.

१७. 'ष्टुञ् स्तुतौ'। 'तिङां तिङो भवन्ति' (Cf. Pa. 3.1.85.) इत्युत्तमबहुवचनस्य मध्यमैकवचनादेशः। 'बहुलं छन्दसि' (Pa. 2.4.73.) इति शपो लुगभावः Sy.

१८. हरी एतन्नामकावश्वौ Sy.

१९. बलश्च P. सुष्ठु प्रेरकस्य सुवीर्यस्य वा सूर्यात्मनो वेन्द्रस्य Sy.

२०. प्रज्ञाचकौ P.

२१. हरी एतन्नामकावश्वौ Sy.

२२. वेगं कुर्वन्तौ 'तत्करोति तदाचष्टे' (गणसूत्र on Pa. 3.1.26.) इति णिच् Sy.

२३. च्यावीणात्र P. घृतस्योदकस्य च्यावयितारम् Sy.

२४. 'शब्दम्. . .स्वस्थाने रमते' is missing in P. मेघध्वनिम् Sy.

शब्दितवन्तौ[१] । तथा तव भयात् समस्थला[२] भूत्वा । भूमिः । विप्रथिताऽऽसीत्[३] । तथा शिलोच्चयः[४] । सरिष्यन्[५] । स्वस्थाने[६] रमते ।[७]

**नि पर्वतः साद्यप्रयुच्छन्त्सं मातृभिर्वावशानो अक्रान् ।**
**दूरे पारे वाणीं वर्धयन्त इन्द्रेषितां धमनिं पप्रथन्नि ॥८॥**

नि[८] पर्वतः । निषसाद[९] । पर्वतस्यास्मिन्[१०] स्थाने । अप्रमाद्यन्[११] । तथाऽद्भ्यः पवमानो वायुश्चाभिः[१२] । पुनः समक्रान्[१३] सङ्गतो भवति । कामयमानः[१४] । तथा दूरे । पारे देशे[१५] ।[१६] ....... ...प्रथितवन्त इति ।

**इन्द्रो महां सिन्धुमाशयानं मायाविनं वृत्रमस्फुरन्निः ।**
**अरेजेतां रोदसी भियाने कनिक्रदतो वृष्णो अस्य वज्रात् ॥९॥**

इन्द्रो[१७] महाम् । इन्द्रः[१८] । महान्तम् । सिन्धुम्[१९] । आवृत्य शयानम्[२०] । मायाविनम् । वृत्रम्[२१] ।

---

१. स्वरतिःशब्दकर्मा (Cf. Ngh. 3.14.) पाकं पचतीतिवत् एकधातोरनुवादः । लङि रूपम् Sy.
२. यद्वा समना सर्वतः Sy.
३. गर्जनं श्रुत्वा ममोपरि वृष्टिर्भवतीति प्रथिताभूत् Sy.
४. मेघः Sy.
५. वर्षणार्थमितस्ततो गमिष्यन् Sy.
६. अरमत । रमतेर्लुङि रूपम् Sy.
७. VM. ignores नु and चित् । नु क्षिप्रम् । चित् अपि Sy.
८. P. omits words between पर्वतः and पारे
९. नभसि निषण्ण आसीत् Sy.
१०. मेघः Sy.
११. अप्रमाद्यन्, वर्षणे सावधानः Sy.
१२. ०श्चाद्भिः is suggested for ०श्चाभिः । मातृभिरद्भिर्माध्यमिकाभिर्वाग्भिर्वा Sy.
१३. सुम० M. अक्रमीत् । इतस्ततः सञ्चारमकरोत् । अक्रान्—क्रमतेर्लङि 'बहुलं छन्दसि' (Pa. 2.4.73.) इति विकरणस्य लुक् Sy.
१४. सह शब्दं कुर्वाणः Sy.
१५. अतिदूरेऽन्तरिक्षे स्थिताम् Sy.
१६. Sy. explains the missing part as वाणीं माध्यमिकां वाचम् । वर्धयन्तः स्तोत्रैः समृद्धां कुर्वन्तः । स्तोतारो मरुतो वा इन्द्रेषिताम् इन्द्रेण प्रेरितां धमनिं शब्दं कुर्वाणां तां वाचम् । नितरां पप्रथन् अप्रथयन् ।
१७. M. omits words between इन्द्रो and भियाने ।
१८. बलवानिन्द्रः Sy.
१९. स्यन्दत इतस्ततः सञ्चरतीति सिन्धुर्मेघस्तम्, यद्वा सिन्धुरुदकम् Sy.
२०. तमधिष्ठाय शयानम् Sy.
२१. वृत्रमसुरं यद्वा वृणोत्याकाशमिति वृत्रो मेघः तम् Sy.

निर्जघान[1]। अकम्पेताम्। द्यावापृथिवी[2]। भियाने[3]। शब्दं कुर्वतः[4]। वर्षितुः[5]। अस्य[6]। वज्रात्[7]।

**अरोरवीद्वृष्णो अस्य वज्रोऽमानुषं यन्मानुषो निजूर्वात् ।**
**नि मायिनो दानवस्य माया अपादयत्पपिवान्त्सुतस्य ॥१०॥**

अरोरवीत्[8]। वर्षितुः[9]। अस्य[10]। वज्रः। शब्दं चकार[11]। यदा। मनुष्याणामभि-हितम्[12] ? मनुष्यहितः[13]। निहतवान्[14]। तदा[15] मायाविनः[16]। दानवस्य[17]। मायाश्च[18]। न्यपादयत्[19]। सोमम्। पपिवानिति[20]।

**पिबापिबेदिन्द्र शूर सोमं मन्दन्तु त्वा मन्दिनः सुतासः ।**
**पृणन्तस्ते कुक्षी वर्धयन्त्वित्था सुतः पौर इन्द्रमाव ॥११॥**

पिबापिब। इन्द्र! शूर[21]! सोमम्। पिब[22]। एव। मन्दन्तु[23]। त्वाम्[24]। मदकराः[25]। सोमाः[26]।

---

१. निरहन् Sy.
२. द्यावापृथिव्यौ Sy.
३. भयं प्राप्ते Sy.
४. शब्दं कुर्वाणात् 'दार्धातिदर्धर्ति०' (Pa. 7.4.65.) इत्यादिना कनिकदच्छब्दो निपातितः Sy.
५. वर्षकस्य Sy.
६. इन्द्रस्य Sy.
७. वज्रान् M. and P.
८. Missing in both P. and D.
९. कामानां वर्षकस्य Sy.
१०. अस्य च M. इन्द्रस्य Sy.
११. भृशं शब्दमकरोत् Sy.
१२. ०ष्यामभिहितम् P. ०ष्याणामभिहित M. ०णामहितम् is suggested for ०णामभिहितम्।
अमानुषं मनुष्याणां रहितम्, यद्वा मानुषोऽहं न भवामीत्येवंमन्यमानं तम् Sy.
१३. मनुष्याणां हितकारी, यद्वा मतिमानिन्द्रः Sy.
१४. निहित० M. and P. नितरां हिंस्यात्। जिघांसतीत्यर्थः। जूर्वतेर्हिंसाकर्मणो लेटि रूपम् Sy. १५. ततः P.
१६. M. omits it. P. reads मायवितः।
१७. दावान० P. दानुर्नाम वृत्रमाता, 'दानुः शये' इत्यादिषु दृष्टत्वात्। तस्याः पुत्रस्य वृत्रस्य Sy.
१८. वञ्चनानि Sy.
१९. अस्यपा० P. न्यपातयत्, बबाधेति ? (बबाध इति) यावत् Sy.
२०. पविमानि० M. पीतवान् Sy.
२१. बलवन्! हे इन्द्र! अभिषुतमिमम् Sy.
२२. M. repeats पिब। आदरार्थैवा वीप्सा Sy.
२३. मन्दतु M. मादयन्तु। मदिः स्तुत्यादिषु। व्यत्ययेन परस्मैपदम् Sy.
२४. त्वा M.
२५. मन्द० M. and P.
२६. सुतास्तेऽभिषुताः सोमाः Sy.

परयन्तः[1] । तव । कुक्षी[2] । वर्धयन्तु । सत्यमेव[3] । सुतः[4] । परयिता[5] सोमः[6] । इन्द्रम्[7] । रक्षति[8] ।

**त्वे इ॒न्द्राप्य॑भूम॒ विप्रा॒ धियं॑ वनेम ऋत॒या सप॑न्तः ।**
**अ॒व॒स्यवो॑ धीमहि॒ प्रश॑स्तिं स॒द्यस्ते॑ रा॒यो दा॒वने॑ स्याम ॥१२॥**

त्वे इन्द्र । इन्द्र ! वयं[9] त्वयि[10] । किञ्चित्[11] । स्याम । मेधाविनः[12] । कर्म[13] च । भजेम[14] । सत्यया वाचा[15] । त्वां स्पृशन्तः[16] । अन्नेच्छवो वयम्[17] । धारयामः[18] । प्रशस्तिम्[19] । सद्यश्च[20] । तुभ्यम्[21] । धनस्य । दात्रे[22] । स्यामेति[23] ।

**स्याम॒ ते त॑ इन्द्र॒ ये त॑ ऊ॒ती अ॑व॒स्यव॒ ऊर्जं॑ व॒र्धय॑न्तः ।**
**शु॒ष्मिन्त॑मं॒ यं चा॒कना॑म देवा॒स्मे र॒यिं रा॑सि वी॒रव॑न्तम् ॥१३॥**

स्याम ते । हे इन्द्र ! तव । रक्षणेन[24] । ये प्रीणयन्ते । वयं च तव । ते[25] । स्याम[23] । रक्षणेच्छवः[26] । हविः[27] । वर्धयन्तः[28] । बलवत्तमम्[29] । यम्[30] । कामयानो[31] वयम्[32] । देव[33] ! तम् । अस्म-

---

१. पूरयन्तः सन्तस्त्वाम् Sy.
२. कुक्षिम् P. उदरस्योभौ पार्श्वौ Sy.
३. अनेन प्रकारेण Sy.
४. अभिषुतःसोमः Sy. ५. उदरपूरकः Sy.
६. सोमम् P. ७. इन्द्रं त्वाम् Sy.
८. M. omits it. तर्पयतु । प्राव-अवते-स्तर्पणार्थस्य लिटि रूपम् Sy.
९. It goes with स्याम ।
१०. त्वद्धृदये Sy.
११. अपिः सानुनयप्रश्ने वर्तते । तव हृदये किं वर्तामहे ? इति Sy.
१२. मेधाविनो वयम् Sy.
१३. त्वदुद्देशेन क्रियमाणं कर्म Sy.
१४. सम्भजेमहि । 'वन षण सम्भक्तौ' आशीर्लिङि 'लिङ्याशिष्यङ्' (Pa.3.1.86.) इत्यङ्प्रत्ययः Sy.
१५. ऋतं कर्मफलं तत्कामनया Sy.
१६. स्पृशान्तः M. त्वां परिचरणाख्येन कर्मणा स्पृशन्तो वयम् Sy.
१७. त्वत्तो रक्षणमिच्छन्तः Sy.
१८. त्वयि निदधीमहि Sy.
१९. प्रमस्तम् P. शस्तिः शंसनं प्रकृष्टं शंसनं स्तोत्रम् Sy. २०. इदानीम् Sy.
२१. त्वदीयस्य Sy. २२. दानाय पात्रभूताः Sy. २३. भवेम Sy. २४. ऊत्या प्रणयनेन । अवतेः प्राप्त्यर्थस्य क्तिनि रूपम् Sy. २५. त्वदधीनाः Sy.
२६. रक्षाकामाः Sy.
२७. हविर्लक्षणमन्नम् Sy.
२८. विवर्ध० P. ०भवन्ति Sy.
२९. ०वत्तम M. दानभोगायार्हतया बलवत्तमं यद्वा शत्रूणां शोषयितृतमम् Sy.
३०. It refers to रयिम् ।
३१. कामयानाः or कामयमानाः is suggested for कामयानो ॥ कामयामहे । चाकनाम—कनतेः कान्त्यर्थस्य यङ्लुगन्तस्य लोटि रूपम् Sy.
३२. वय P. ३३. द्योतमान ! हे इन्द्र ! Sy.

भ्यम्[1]। रयिम्। प्रयच्छसि[2]। पुत्रयुक्तमिति[3]।

रासि क्षयं रासि मित्रमस्मे रासि शर्ध इन्द्र मारुतं नः।
सजोषसो ये च मन्दसानाः प्र वायवः पान्त्यग्रणीतिम् ॥१४॥

रासि क्षयम्। देहि। निवासम्[4]। मित्रं[5] च। अस्मभ्यम्। रासि[6] च। मारुतवेगम्[7]। तथा। त्वया सङ्गताः[8]। ये[9] भवन्ति। मोदमानाः। ते गन्तारो[10] वीराः। प्रकर्षेण रक्षन्तु[11]। अग्रणीति[12] सेनाग्रमिति[13]।[14]

व्यन्त्विन्नु येषु मन्दसानस्तृपत्सोमं पाहि द्रह्यदिन्द्र।
अस्मान्त्सु पृत्स्वा तरुत्रावर्धयो द्यां बृहद्भिरर्कैः ॥१५॥

व्यन्तु। गच्छन्तु[15]। एव[16]। क्षिप्रं मरुतस्त्वाम्। येषु[17]। त्वं[18] मन्दसानो[19] भवसि। ततस्तृप्यन्[20]। इन्द्र[21]! सोमम्[22]। पिब। आत्मानं दृंहयन्[23]। अथ[24]। अस्मान्[25]। तारयितः[26]! सुष्ठु। अवर्धयः[27]।

---

१. अभ्यम् P.
२. देहि Sy.
३. पुत्रपौत्रैः सहितं तादृशम् Sy.
४. निवास M. क्षियन्ति निवसन्त्यत्रेति क्षयो गृहं तत् Sy.
५. सखायम् Sy.
६. सि P. वाक्यभेदादनिघातः Sy.
७. It is a joint explanation of two words शर्धः and मारुतम्। मरुतां देवविशां सम्बन्धि बलम्। एतेन मरुतामप्यागमनं प्रार्थ्यते Sy.
८. सह प्रीयमाणाः Sy.
९. ये मरुतः Sy.
१०. यज्ञं प्रति गन्तारः सन्तः Sy.
११. प्रकर्षेण पिबन्ति तेषां शर्ध इति समन्वयः Sy.
१२. आग्र० P. अग्रे नीयमानं सोमम् Sy.
१३. सेनाविति M. यद्वा ये च वायवः अग्रे नीयमानं सोमं पिबन्ति तेषां वायूनां बलं रासि। वायव इति पूजायां बहुवचनम्। वायुर्हि सोमस्याग्रपातेति Sy.
१४. VM. ignores इन्द्र। नः। and explains रासि once only.
१५. सोमं भक्षयन्तु Sy.
१६. एवम् M.
१७. येषु तव सहायभूतेषु मरुत्सु Sy.
१८. त्वम् P.
१९. माद्यन् भवसि ते मरुतः Sy.
२०. ०स्तुप्यन् P. तर्पयन्तमिमम् Sy.
२१. इद्र P.
२२. सोमम P.
२३. दृंहतेरिदं रूपम्। आत्मानं दृढीकुर्वन् Sy.
२४. This appears to be the explanation of आ॥ आ इति चार्थे Sy.
२५. ०स्माकम् P. अस्मत्पालनेन Sy.
२६. ०रयत P. शत्रूणां हिंसक! हे इन्द्र! Sy.
२७. वर्धं० P.

सङ्ग्रामेषु । दिवं च । महद्भिः[१] । मन्त्रैः[२][३] ।

बृहन्त॒ इन्नु॒ ये ते॑ तरुत्रो॒क्थेभि॑र्वा सु॒म्नमा॒विवा॑सान् ।
स्तृ॒णाना॑सो ब॒र्हिः प॒स्त्या॑व॒त्त्वोता॒ इदि॑न्द्र॒ वाज॑मग्मन् ॥१६॥

बृहन्तः । महान्तः । एव । ते[४] भवन्ति । ये[५] । नु[६] भवन्तीह । तरुत्र[७] ! शस्त्रैः । च[८] । त्वां सुखकरम् । परिचरन्ति[९] । स्तृणन्तः[१०] । बर्हिः[११] । देवैर्विड्भिस्तद्वत्[१२] । त्वया रक्षिताः[१३] । एव । हे इन्द्र ! अन्नम् । आप्नुवन्[१४] ।

उ॒ग्रेष्विन्नु शू॑र मन्दसा॒नस्त्रिक॑द्रुकेषु पाहि॒ सोम॑मिन्द्र ।
प्र॒दोधु॑व॒च्छ्मश्रु॑षु प्रीणा॒नो या॒हि हरि॑भ्यां सु॒तस्य॑ पी॒तिम् ॥१७॥

उग्रेषु । उद्गूर्णेषु[१५] युद्धेषु । हे शूर[१६] ! मोदमानः[१७] । अभिप्लववदहः[१८][१९], त्रिकद्रुका[२०] इत्याचक्षते, तेषु[२१] । पिब । सोमम् । इन्द्र ! प्रकम्पयन्[२२] । श्मश्रुस्थितं[२३] सोमम् । प्रीयमाणः[२४] । याहि[२५] । अश्वाभ्याम् । सोमस्य[२६] । पानम्[२७][२८] ।

---

१. बलवद्भिः Sy.
२. अर्चनीयैर्मरुद्भिः सहितस्त्वम् Sy.
३. यद्वा येषु सोमेषु मन्दसानो मोदमानो भवसि ते सोमा व्यन्तु त्वां गच्छन्तु । शेषं पूर्ववत् Sy.
४. ते तव पुमांसः Sy.
५. य P. पुमांसः Sy.
६. नुतभ॰ M. नु क्षिप्रमविलम्बेन Sy.
७. त रुद्र M. आपद्भ्यस्तारक ! Sy.
८. वेति पूरणः Sy.
९. ॰चरति M. परिचरेयुः । विवासतेर्लेटि, अडागमः Sy.
१०. वेद्याम् आच्छादयन्तो ये त्वां परिचरन्ति ते Sy. ११. बर्हि: M.
१२. ॰विभस्तंद्यत् P. गृहसहितम् Sy.
१३. तया M. and P. त्वया रक्षिताः सन्त एव Sy.
१४. गच्छन्ति Sy.
१५. बहुस्तोत्रशस्त्रवत्सु Sy.
१६. बलवन् ! Sy. १७. हृष्यन् Sy.
१८. ॰प्लववत्यहं M. ॰प्लवति अहं P.
१९. Both M. and P. add 'पूर्वं' after ॰वहः
२०. त्रितद्रु॰ P.
२१. भेषु P. ज्योतिर्गौरायुरित्येतन्नामकेष्वाभिप्लविकेष्वहःसु Sy.
२२. व्रतं प॰ M. 'धूञ् कम्पने' यङ्लुगन्तस्य शतरि रूपम् । पुनः पुनर्धुन्वन् Sy.
२३. श्रूत्यि॰ P. श्मश्रुषु लिप्तं सोमम् Sy.
२४. सोमपानेन प्रीतो भवन् Sy.
२५. गच्छ Sy. २६. अभिषुतस्य Sy.
२७. P. adds इति after पानम् ॥ पानमुद्दिश्य Sy.
२८. VM. ignores इत् and नु ।

धिष्वा शवः शूर येन वृत्रमवाभिनद्दानुमौर्णवाभम् ।
अपावृणोर्ज्योतिरार्याय नि सव्यतः सादि दस्युरिन्द्र ॥१८॥

**धिष्वा शवः** । धारयत[1] । बलम्[2] । शूर ! येन[3] । वृत्रम् । अवभिन्नवान्[4] । दानुम्[5] । और्णवाभं[6] चासुरी । सोमज्योतिः[7] । आर्याय[8] । प्रकाशार्थमपावृणोति[9] । तव स्तोतुः[10] सव्याद् ऋषेः[11] । दस्युरसुरः[12] । नि सादि निषीदति[13] विनश्यति, अथवा तव सव्यादपि हस्तान्निर्गच्छति[14] ।

सनेम ये त ऊतिभिस्तरन्तो विश्वाः स्पृध आर्येण दस्यून् ।
अस्मभ्यं तत्त्वाष्ट्रं विश्वरूपमरन्धयः साख्यस्य त्रिताय ॥१९॥

**सनेम** । भजेम[15] तान्[16] वयमपि । ये । तव । रक्षणैः[17] । त्वया चाऽऽर्येण[18] । सर्वान्[19] । स्पर्धमानान्[20] । उपक्षपयितृंश्च[21] । तरन्तो[22] भवन्ति । अस्मभ्यम्[23] । तदानीम् । त्वष्टुः पुत्रम् । विश्वरूपम्[24] । वशमनयः[25] ।

---

१. ०यत् P. धारय is suggested for धारयत ॥ धिष्व-दधातेर्लोटि 'बहुलं छन्दसि' इति शपो लुक् । 'छन्दस्युभयथा' इति थास आर्धधातुकत्वाद् इडागमः Sy.
२. तादृशं बलम् Sy.
३. येन बलेन Sy.
४. ०न्नपान् P. बिभेदिथ Sy.
५. दातुम् M. and P. दानोः पुत्रम् Sy.
६. ऊर्णवाभिः कीटविशेष और्णवाभ इत्युच्यते तमिव । यद्वा और्णव ऊर्णनाभिः तदाभं तत्सदृशमित्यर्थः Sy.
७. सोम P. प्रकाशकमादित्यम् Sy.
८. आर्यया P. ततस्तमोरूपस्य हननादार्याय कर्मणामनुष्ठात्रे जनाय कुत्साय राजर्षये वा Sy.
९. ०र्थमावृ० P. उद्घाटितवानसि Sy.
१०. स्तोतः P.
११. ऋष्टेः M.D. तव सव्यपार्श्वे Sy.
१२. कर्मणामुपक्षपयिता स वृत्रः Sy.
१३. त्वया नितरां सन्नो बाधितो वर्तते Sy.
१४. VM. ignores इन्द्रः ।
१५. P. repeats भजेम ॥ तान् पुरुषान् सम्भजेम यद्वा प्रवृद्धा भवेम Sy.
१६. ता M. and P.
१७. पालनैः Sy.
१८. आर्यभावेन Sy.
१९. सर्वा विशः Sy.
२०. ०माना M. स्पर्द्धमानाः Sy.
२१. अनुप० M.
२२. हिंसन्तः, यद्वा अतिक्रामन्तः Sy.
२३. अस्मभ्यं वशमानय Sy.
२४. एतन्नामकमसुरम् Sy.
२५. अवशनः P. 'रध्यतिर्वशगमने' । वशमानयः यद्वा तमसुरमवधीः । 'रध हिंसासंराद्ध्योः' 'रधिजभोरचि' इति नुम् । इन्द्रस्त्वाष्ट्रमवधीदित्ययमर्थस्तैत्तिरीयके 'विश्वरूपो वै त्वाष्ट्रः' (TB. II. 5. 1.1.) इत्यत्र महता प्रबन्धेन प्रपञ्चितः Sy.

सख्यनिष्कृत्यर्थम्[1] । त्रितायेति[2] तादर्थ्ये[3] चतुर्थ्यौ[4] व्यधिकरणे[5] ।

**अ॒स्य सु॑वा॒नस्य॑ म॒न्दिनं॑स्त्रि॒तस्य॒ न्यर्बु॑दं वावृधा॒नो अ॑स्तः ।**
**अव॑र्तय॒त्सूर्यो॒ न च॒क्रं भि॒नद्व॒लमिन्द्रो॒ अङ्गि॑रस्वान् ॥२०॥**

**अस्य सुवानस्य** । अस्य । सोमं[6] सुष्ठु सुवानस्य[7] । स्तोतुः[8] । त्रितस्य[9] । अर्बुद[10] इति विश्वरूपस्य नामान्तरम् । वर्धमानः[11] । न्यस्तः[12] हिंसितवानसि[13] । अवर्तयत्[14] । सूर्यः । इव[15] । रथचक्रमात्मीयम्[16] । अभिनत्[17] । बलं[18] चासुरम् । अङ्गिरोभिः सहितः[19] । इन्द्रः[20] ।

---

१. सखिभावस्यानुपालनाय Sy.
२. तिता० M. त्रिताय महर्षये वशमानयः Sy. ३. तायद० M.
४. चतुर्थ्या M. D.
.५ यद्वा सनेम ते वयं प्रवृद्धा भवेम ये वयं तव रक्षाभिः स्पर्धमानाः प्रजा दस्यूंश्च तरन्तोऽतिक्रामन्तो भवेम । सनेम इति वृद्धयर्थ आद्युदात्तः । यथा 'सनेम मित्रावरुणा सनन्तः' (RV. 7. 52. 1.) इति । सकर्मकश्चेत् मध्योदात्तः 'सनेम वाजं तव' (RV. 8. 61. 4.) इति । तरन्तः—'तॄ प्लवनतरणयोः' । शतरि रूपम् । संज्ञावचनश्चेदन्तोदात्तः । यथा 'तरन्त इव मंहना' (RV. 5. 61. 10.) इति Sy.
६. सोम P.
७. सु सुवाणस्य P. सुतवतः Sy.
८. मन्दिनः अस्य मदकरमिमम् Sy.
९. तीर्णतमस्कस्य महर्षेरर्थम् Sy.
१०. अबुद P. अम्बूनि ददातीत्यर्बुदो मेघः । अनुस्वारस्य रेफश्छान्दसः । यद्वा नामैतत् । अर्बुदाख्यमसुरम् Sy.
११. सोमेन वर्धमान इन्द्रः Sy.
१२. अन्य० M.
१३. ०स्तारी हि० M. ०स्तस्यस्तारी हि० P. नि अस्तः—'स्तृ हिंसायाम्' इत्यस्य लङि तिपि 'बहुलं छन्दसि' इति विकरणस्य लुक् । गुणे कृते हल्ङ्यादिना तिलोपः । नितरामवधीत् । 'महान्तं चिदर्बुदं नि क्रमीः पदा' (RV. I. 51. 6.) इत्यादिषु अर्बुदवधः स्पष्टमुक्तः Sy.
१४. असुरहननार्थं वज्रमभ्रामयत् Sy.
१५. यथा सूर्यश्चक्रं भ्रामयति तद्वत् । यद्वा यस्मादसुराद्भिया सूर्यः स्वकीयं रथचक्रं नावर्तयत् । निषेधार्थीयोऽत्र नकारः । यद्वा द्विचक्रो हि पूर्वं सूर्यस्य रथः, तस्यैकं चक्रमिन्द्रेणापहृतम् । सूर्यस्य सम्बन्ध्यपहृतं तदेकं चक्रमवर्तयत् रक्षोहननार्थमभ्रामयत् । तेन चक्रेण बलमभिनच्च । नश्चार्थे । सूर्य इति 'सुपां सुलुक्०' इति षष्ठ्येकवचनस्य सुः Sy.
१६. ०क्रमायुधमात्मी० M.
१७. अस्तिन० P.
१८. पणीनां प्रभुमसुरम् Sy.
१९. संहि० M.
२०. इन्मः M. इन्न P.

**नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी ।**
**शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥२१॥**

नूनं[1] सा ते । नूनमिति[2] पदपूरणः । सा[3] । तव[4] । मघवती[5] । दक्षिणा[6] । स्तोत्रे मह्यम् । वरणीयम्[7]अभिलषितम् । प्रतिदुग्धाम्[8] । देहि[9] । स्तोतृभ्यः कामान्[10] । मा । अस्मान् । अतिधाक्षीत्[11] । भजनीय[12] इन्द्रः । बृहत्[13] । वदेम[14] । यज्ञे[15] । कल्याणवीराः[16] ।[17]

---

१. अहर्गणेषु माध्यन्दिनसवनेषु तायमानरूपेषु अच्छावाकस्य अहरहः शस्यसंज्ञकम् 'अभितष्टेव' इति सूक्तम् । 'नूनं सा ते' इत्येषा तस्यान्ते शंसनीया । सूत्रितञ्च—'नूनं सा त इत्यन्तमुत्तमम्' (ASS. 7. 4.) इति Sy.

२. नूनम् इदानीम् Sy.

३. सं M.

४. Omitted in M. त्वत्सम्बन्धिनी Sy.

५. भवति M. मघवति P. धनवती Sy.

६. दक्षमुत्साहनं करोतीति दक्षिणा स्तोतृभ्यो देया Sy.

७. वरं श्रेष्ठमभिमतमर्थम् Sy.

८. ०दुग्धान् M. ०दुग्धं P. प्रतिदोग्धि सम्पादयतीत्यर्थः Sy.

९. प्रयच्छ Sy.

१०. कामात् M. तादृशीं दक्षिणां स्तोतृभ्योऽस्मभ्यम् Sy.

११. अभिधा० M. and P. अति धक्–दहेर्दानार्थस्य लुङि 'मन्त्रे घस. . .' इत्यादिना च्लेर्लुक् । अस्मानतिक्रम्यान्येभ्यो दक्षिणां मा दाः । प्रथममस्मभ्यं दत्वा पश्चादन्येभ्यो दीयतामित्यर्थः । यद्वा नोऽस्माकं कामान् मा धक् मा धाक्षीः, अपेक्षितफलदानेन पूरयेत्यर्थः Sy.

१२. नीयं M. भजनीयस्त्वम् Sy.

१३. महत् M. प्रभूतं स्तोत्रम् Sy.

१४. त्वामुद्दिश्य ब्रवाम Sy.

१५. अस्मिन् यज्ञे Sy.

१६. ०णशीलाः M. शोभनपुत्रपौत्राः सन्तो वयम् Sy.

१७. VM. ignores इन्द्र.

नूनमिति. . .अथापि पदपूरणः. . .सा ते प्रतिदुग्धां वरं जरित्रे । वरो वरयितव्यो भवति । जरिता गरिता । दक्षिणा मघोनी मघवती । मघमिति धननामधेयम् । मंहतेर्दानकर्मणः । दक्षिणा दक्षतेः समर्धयतिकर्मणः । व्यृद्धं समर्धयतीति । अपि वा प्रदक्षिणागमनात् । दिशमभिप्रेत्य । दिग्घस्तप्रकृतिर्दक्षिणो हस्तः । दक्षतेरुत्साहकर्मणः । दाशतेर्वा स्याद्दानकर्मणः । हस्तो हन्तेः, प्राशुर्हनने । देहि स्तोतृभ्यः कामान् । मास्मानतिदंहीः । माऽस्मानतिहाय दाः । भगो नोऽस्तु । बृहद्वदेम स्वे वेदने । भगो भजतेः । बृहदिति महतो नामधेयम् । परिवृढं भवति । वीरवन्तः कल्याणवीरा वा । वीरो वीरयत्यमित्रान् । वेतेर्वा स्याद्गतिकर्मणः । वीरयतेर्वा (N. 1. 7.)

## II. 12.

यो जा॒त ए॒व प्र॑थ॒मो मन॑स्वान्दे॒वो दे॒वान्क्रतु॑ना प॒र्यभू॑षत् ।
यस्य॒ शुष्मा॒द्रोद॑सी॒ अभ्य॑सेतां नृ॒म्णस्य॑ म॒ह्ना स ज॑नास॒ इन्द्रः॑ ॥१॥

यो[1] जातः । शौनकः—

संयुज्य[2] तपसाऽऽत्मानमैन्द्रं बिभ्रन् महद् वपुः[3] ।
अदृश्यत मूहूर्तेन दिवि च व्योम्नि चेह च ॥
तमिन्द्रमिति[4] मत्वा तु दैत्यौ भीमपराक्रमौ ।
धुनिश्च चुमुरिश्चोभौ[5] सायुधावभिपेततुः[6] ॥

---

१. द्वितीयेऽनुवाके एकादशसूक्तानि । तत्र 'यो जातः' इति पञ्चदशर्चं प्रथमं सूक्तं गार्त्समदं त्रैष्टुभमैन्द्रम् । संस्तवे निष्केवल्ये निविद्धानीयस्य पुरस्तात् 'यो जात एव' इति सूक्तं शंसेत् । 'यदि पर्यायान्' इति खण्डे सूत्रितम्—'यो जात एवेति निष्केवल्ये' (ĀŚS. 6. 6.) इति । आभिप्लविके तृतीयेऽहनि निष्केवल्ये 'यो जात एव' इति निविद्धानीयम् । सूत्रितञ्च—'तृतीयस्य स्यर्यमा यो जात एवेति मध्यन्दिनः' (ĀŚS. 7. 7.) इति । विश्वजिति माध्यन्दिनसवने मैत्रावरुणः स्वशस्त्रे प्राकृतात् सूक्तात्पूर्वं 'यो जातः' इति सामसूक्तं शंसेत् । 'विश्वजितोऽग्नि नरः' इति खण्डे सूत्रितम्—'सत्रा मदासो यो जात एवाभूरेक इति सामसूक्तानि' (ĀŚS. 8. 7.) इति । अग्निष्टुन्निष्केवल्ये निविद्धानमिदम् । 'श्येनाजिराभ्याम्' इति खण्डे सूत्रितम्—'तिष्ठा हरी इति यो जात एवेति मध्यन्दिनः' (ĀŚS. 9. 7.) इति । महाव्रते निष्केवल्ये 'यो जात एव' इति सूक्तम् । 'ऊह' इति खण्डे सूत्रितम्—'वने न वा यो न्यधायि चाकन् यो जात एव प्रथमो मनस्वान्' (AA. 5. 3. 1.) इति Sy. गृत्समद ऐन्द्रं रूपमास्थित इन्द्रोऽयमिति मन्यमानैरसुरैर्हन्यमानस्तानाह SKN. गृत्समदमिन्द्रवरप्रदानादैन्द्रं रूपं बिभ्रतमिन्द्रोऽयमिति मन्यमाना जिघांसवोऽसुराः किल मरुद्गणैर्विना कुतोऽयमिदानीमेकः शक्यो हन्तुमिति परिवव्रिरे । स किल भीतोऽनेन सूक्तेनेन्द्रं तुष्टाव । आत्मानं च ब्राह्मणं परेभ्यः प्रतिवेदयाञ्चकार Dur.

२. युज्यन् M.

३. ०वर्षम् P.

४. तमिन्द्र इति Sy.

५. युमु० M. वमु० P.

६. ०वपिपे० M.

विदित्वा स[1] तयोर्भावमृषिः पापं चिकीर्षतोः[2]।
यो जात इति सूक्तेन कर्माण्यैन्द्राण्यकीर्तयत् ॥[3] इति ।

---

१. सा M.

२. ०कीषतोः P.

३. BD. IV. 66–68. DDN. adds after these verses of BD.—उक्तेषु कर्मस्वैन्द्रेषु भीतौ सुषुपतुस्तदा । इदमन्तरमिति ज्ञात्वा ताविन्द्रोऽभ्यबर्हयत् ॥६६॥ Cf. BD. अत्रार्थे मन्त्राः—त्वं तो धुनीचुमुरी या ह सिष्वंप् (RV. 6. 20. 13.) त्वं नि दस्युं चुमुरिं धुनिञ्च (RV. 7. 19. 4.) इन्द्रो धुनिञ्च चुमुरिञ्च दम्भयंन (RV. 10. 113. 9.) स्वप्नेनाभ्युप्या चुमुरिं धुनिञ्च (RV. 2. 15. 9.) इत्येवमादयः। Both Sy. and DDN. add after the quotation of BD. अन्ये त्वन्यथा वर्णयन्ति—पुरा किल इन्द्रादयो वैन्ययज्ञं समाजग्मुः । गृत्समदोऽपि तत्रागत्य सदस्य आसीत् । दैत्याश्चेन्द्रजिघांसया तत्र समागमन् । तान् दृष्ट्वा निर्जगामेन्द्रो यज्ञाद् गृत्समदाकृतिः । स च गृत्समदो वैन्येन पूजितो यज्ञवाटान्निरगच्छत् । निर्गच्छन्तं तं दृष्ट्वा अयमेवेन्द्र इति मन्यमानास्तमसुराः परिवव्रुः । नाहमिन्द्रस्त्वुच्चैः किन्त्वेवंगुणोपेतः स इत्यनेन सूक्तेन तान्प्रत्युवाच । अपरे त्वेवं कथयन्ति—गृत्समदस्य यज्ञे प्रविष्टमेकाकिनमिन्द्रं ज्ञात्वाऽसुराः परिवव्रुः । स इन्द्रो गृत्समदरूपेण यज्ञवाटान्निर्गत्य स्वर्गं जगाम । ततोऽसुरा इन्द्रो विलम्बित इत्यन्तः प्रविश्य गृत्समदं दृष्ट्वा पूर्वमेव गृत्समदो गतः अयं त्विन्द्रोऽस्मद्भयाद् गृत्समदरूपेणास्त इति तं जगृहुः । स तान्नाहमिन्द्रोऽयमित्यनेन सूक्तेन प्रत्युवाच । अयमेवार्थो महाभारते प्रपञ्चितः—(म० भा० अनु० पूर्व (८. ५६; ४६. १६.) Then DDN. only adds—तस्मादेतत्सूक्तमिन्द्रशरीररूपं तृतीयेऽहनि ब्राह्मणे विनियुक्तम् । "यो जात एव प्रथमो मनस्वानित्येतस्मिंस्त्रैष्टुभे निविदं दधाति तदेतदिन्द्रतनूःसूक्तम्" (Kau. Br. 22. 4.) इति । 'अहं भुवं यो जात इति निष्कैवल्यम्' (SSS. 10. 4. 11.) । ब्राह्मणसूत्रयोर्महाव्रते—'या त ऊतीयं च सजनीयञ्च' इति (SA. 2. 16.) तथा (SSS. 18. 19. 3-4) । ऋग्विधाने—'यो जात इति सूक्तं तु ऋषिं गृत्समदं स्मरन्' इति (Ṛgvidh. 1. 158.) गृत्समदस्त्रिष्टुभा असुरान् प्रति अस्तौदिन्द्रम्

यः । जायमानः[1] । एव । प्रथमः[2] । मनस्वी[3] । देवः[4] । देवान्[5] । कर्मणा[6] । 'पर्यभवत्[7] पर्यगृह्णात् पर्यरक्षदत्यक्रामदिति वा' इति[8] यास्कः । यस्य[9] । शोषकात्[10] तेजसः । द्यावापृथिव्यावपि । अबिभीताम्[11] । बलस्य[12] च । महत्त्वेन[13] । सः । जनासः[14] !

---

१. ०मानम् M. जायमान एव सन् Sy., DDN. जातमात्र एवेत्यर्थः SKN. जातमात्र एव, अन्येन संस्कारेण विनैव BB. जातमात्रः Dur.

२. देवानां प्रधानभूतः Sy. देवानां प्रधानभूतः DDN. उत्कृष्टः SKN. मुख्यः, सर्वभूतानां प्रतिमुख्यतां सम्पेदे Dur. 'प्रथम इति मुख्यनाम' इति यास्कः (N. 2. 22.)

३. मनसि P. मनस्वान् मनस्विनामग्रगण्यः Sy. मनस्विनामग्रणीः। 'अस्मायामेधा०' (Pa. 5. 2. 121.) इति विनिप्राप्ते 'बहुलं छन्दसि' (Pa. 5. 2. 122.) इति वतुप् DDN. मनस्वी तेजस्वी BB. प्रशंसायां मतुप् । मनस्वी । मनस्विनां मध्ये कश्चित्प्रत्यनुपनतेन शौर्योत्कर्षविशेषयोगिना मनसा तद्वान् SKN. मेधावी । अन्ये हि कालेन मुख्याः सम्पद्यन्ते मेधाविनश्च Dur.

४. द्योतमानः Sy. द्योतमानः सन् DDN. देवनादिगुणयुक्तः SKN. देवो दीप्तिमान् BB. सत्यपि देवत्वाविशेषे Dur.

५. सर्वान् यागदेवान् Sy. अग्न्यादीन् सर्वान् देवान् DDN. देवानन्यान् SKN. इतरान् देवान् Dur.

६. वृत्रवधादिलक्षणेन स्वकीयेन कर्मणा Sy., DDN. कर्मणा वृत्रवधवृष्टिप्रदानादिना SKN. क्रतुना कर्मणा वृत्रवधादिना प्रज्ञया वा BB.

७. Omitted in M. रक्षकत्वेन पर्यग्रहीत्, 'भूष अलङ्कारे' भूवादिः लङि रूपम् । यद्वा पर्यभवत् अत्यक्रामत् अस्मिन्पक्षे भवतेर्व्यत्ययेन कुसः । 'श्र्युकः किति' इतीट्प्रतिषेधः Sy. परिगृहीतवान् स्वामित्वेन । पर्यरक्षद्वा मुख्यत्वात् । अत्यक्रामद्वा प्रभावेण Dur. 'भूष अलङ्कारे' भौवादिकः लङि रूपम् । धातूनामनेकार्थत्वाद् रक्ष्यत्वेन पर्यग्रहीत् DDN. परिपूर्वो भवतिः परिग्रहे परिरक्षायामतिक्रमे वा । केन परिगृहीतवान् परिरक्षितवान्वाऽतिक्रान्तवान्वा ? माहात्म्येन SKN. अत्यक्रमत् पर्यगृह्णाद्वा स्वामित्वेन BB.

८. N. 10. 10.

९. यत् P. इन्द्रस्य DDN.

१०. शरीरात् बलात् Sy.
शरीरबलाद् DDN.
बलात् SKN.
शारीराद् बलात् Dur

११. अबभी० P. तथात्र भये धातुः । अबिभीताम् SKN. 'भ्यसते रेजत इति भयवेपनयोः' N. 3.21.

१२. सेनालक्षणस्य बलस्य Sy., DDN. नृमणस्य तस्य बलस्य SKN. बलस्य सेनालक्षणस्य Dur.

१३. ०हतोन P. महत्त्वेन हेतुना SKN. अतिमहदसह्यमस्य बलम् । अवश्यमयमावां सादयिष्यतीत्येवमतिमहत्यावेते द्यावापृथिव्यावबिभीतां यस्य शुष्मात् Dur. महत्त्वेन युक्तः DDN.

१४. ०नासम् P. हे जनाः ! हे असुराः ! Sy. हे असुरजनाः ! SKN. जनाः ! BB. हे असुरजनाः ! Dur.

इन्द्रः[1], नाहमिति[2]।

**यः पृ॑थि॒वीं व्यथ॑माना॒मदृं॑ह॒द्यः पर्व॑ता॒न्प्रकु॑पिताँ॒ अर॑म्णात्।**
**यो अ॒न्तरि॑क्षं विम॒मे वरी॑यो॒ यो द्याम॒स्तभ्ना॒त्स जना॑स॒ इन्द्रः॑ ॥२॥**

**यः पृथिवीम्।** यः[3]। पृथिवीम्। चलन्तीम्। अदृंहत्[4]। यश्च। पर्वतान् पक्षवतः[5]। प्रकुपितान्[6]। नृम्णातिः संयमनकर्मा, स्वे स्वे[7] स्थाने रमयामासेति[8]। यश्च[9]। अन्तरिक्षम्। विस्तीर्णम्[10]। चकार[11]। यश्चाधः स्थित्वा। दिवम्। धारयति[12]।[13]

**यो ह॒त्वाहि॒मरि॑णात्स॒प्त सिन्धू॒न्यो गा उ॒दाज॑दप॒धा व॒लस्य॑।**
**यो अश्म॑नोर॒न्तर॒ग्निं ज॒जान॑ सं॒वृक्स॒मत्सु॒ स जना॑स॒ इन्द्रः॑ ॥३॥**

[14]**यो हत्वाहिम्।** यश्च। अहिम्[15]। हत्वा[16]। निरगमयत्[17]। सप्त[18]।

---

१. इत्थम्भूतस्तादृशो महाबलोऽन्यो नास्ति तस्मान्मा भैष्ट जना दास्यत्यस्मभ्यमिन्द्रियं बलं चेति BB. नाहमिन्द्रो ब्राह्मणोऽहं तत्प्रसादादेवाप्ततद्रूप इति Dur.

२. स जनासः—'ऊष्मा परिलुप्यते त्रयाणां॰' (RPR.2.11.) इत्यूष्मलोपः DDN. अत्र निरुक्तम्—'यो जात एव प्रथमो मनस्वी देवो देवान्। क्रतुना कर्मणा। पर्यभवत्पर्यगृह्णात्पर्यरक्षदत्यक्रामदिति वा। यस्य बलात् द्यावापृथिव्यावप्यबिभीतां नृम्णस्य मह्ना बलस्य महत्त्वेन। स जनास इन्द्रः इति ॥ ऋषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता' N.10.10., SKN. IV. 13. This stanza=TS. 1.7.13.2.

३. इन्द्रः Sy. ४. शर्कराविभिर्दृढामकरोत् 'दृह दृहि वृद्धौ' Sy. ५. पक्षयुक्तान् Sy. ६. इतस्ततश्चलितान् Sy.

७. P. adds काले after स्वे स्वे।

८. नियमितवान् स्वे स्वे स्थाने स्थापितवान्। 'रमु क्रीडायाम्' अन्तर्भावितण्यर्थस्य व्यत्ययेन श्नाप्रत्ययः Sy.

९. वायुश्च M. and P.

१०. उरुतमम् Sy.

११. निर्ममे विस्तीर्णं चकारेत्यर्थः Sy.

१२. अस्तभ्नात् तस्तम्भ निरुद्धामकरोत्। 'स्तम्भु रोधने' इति सौत्रो धातुः Sy.

१३. VM. ignores वि। सः। जनासः। इन्द्रः ॥ हे जनाः! स एव इन्द्रः, नाहमिति Sy. १४. गृत्समद आहैन्द्रं रूपमास्थितः। इन्द्रोऽयमिति मन्यमानैरसुरैर्हन्यमानस्तानाह स्मेत्याख्यानम् SKN. गृत्समदो ब्रवीति, ऐन्द्रं रूपमास्थितोऽसुरैर्हन्यमानः, किं मा हथ? नाहमिन्द्र इति। कस्तर्हीन्द्रः? Dur. १५. मेघम् Sy., SKN., Dur. १६. मेघहननं कृत्वा Sy.

१७. प्रैरयत् यद्वा अरिणात् 'रीङ् स्रवणे' क्र्यादिः Sy. रिणातेर्गतिकर्मणोऽन्तर्णीतण्यर्थस्येदं रूपम्। अगमयत् SKN.

१८. सर्पणशीलाः, यद्वा सप्त गङ्गायमुनाद्या मुख्या नदीः Sy.

नदीः[1]। यो वा। पशून्[2]। उदाजत्[3]। अपधा[4] बिलान्तरपिहिता[5]। बलस्यासुरस्य[6]। यश्च। मेघयोः[7]। मध्ये[8]। अभिघातजं वैद्युतमग्निम्[9]। जनयति[10]। सः[11]। छेत्ता[12]। सङ्ग्रामेषु[13]।[14]

**येनेमा विश्वा च्यवना कृतानि यो दासं वर्णमधरं गुहाकः।**
**श्वघ्नीव यो जिगीवाँ लक्षमाददर्यः पुष्टानि स जनास इन्द्रः ॥४॥**

येनेमा। येन[15]। एतानि[16]। सर्वाणि[17]। च्यवनानि[18]। कृतानि[19]। यश्च। असुरम्[20]।

१. नः P. स्यन्दनशीला अपः Sy. व्यत्ययेन पुंल्लिङ्गम्। सिन्धूर्नदीः। नदीनां मध्ये याः प्रधानभूता गङ्गाद्याः सप्त नद्यस्ताः प्राधान्यान्निर्दशिता मन्त्रदृशा। अन्तरिक्षनदीर्वा सप्त, अम्बा चाम्बाला चेत्येवमाद्याः SKN. स्यन्दना आकाशनदीः एला चेला चेत्येवमाद्याः Dur.

२. अपः Dur.

३. ०जत M. ०जन P.
निरगमयत् Sy.
उद्गमयतीत्यर्थः SKN. उदगमयत् Dur.

४. अवधा M., P. तत्-(बल-)कर्तृकान्निरोधान्निरुद्धाः। अपपूर्वाद्दधातेः 'आतश्चोपसर्गे' (Pa.3.3.106.) इति भावे अङ् प्रत्ययः। 'सुपां सुलुक्०' इति पञ्चम्या आकारः Sy.

५. विला० P. अपेत्येतेषामपेत्येतस्य ? (अपेत्येदात्मन इत्येतस्य) स्थाने, आत्मनो वा निधानेन स्थापनेन। मेघमात्मनोऽधो निधाय तावत् पादाभ्यां मृद्नाति यावदुदकमस्मिञ्जातमित्यर्थः। अवधातेनैव बिलोद्घाटनेनैव SKN. अपधानेनोद्घाटनेन Dur.

६. मेघस्य SKN. मेघस्य शिराणां छिद्राणाम् Dur.

७. अश्नुते व्याप्नोत्यन्तरिक्षमित्यश्मा मेघः। अत्यन्तमृदुरूपयोर्मेघयोः Sy. अश्मेति मेघनाम पर्वतनाम वा, द्यावापृथिव्यौ वा तद् व्यापनयोगात् SKN. अशनवत्योर्द्यावापृथिव्योः Dur.

८. अन्तरित्यव्ययमधिकरणभूतं मध्यमाचष्टे, द्यावापृथिव्यौ वा SKN.

९. विद्या० P. अत्राश्मयवंशयोस्तरुशाखयोर्वा वायुना सङ्घर्षाज्जायते तं दावरूपमग्निं वैद्युतं वा SKN.

१०. उत्पादयामास Sy.

११. सन् P. सः जनासः, हे असुरजनाः इन्द्रो नाहमिति SKN. स इन्द्रो नाहमिन्द्र इति Dur.

१२. छेता P. वृणक्तेर्हिंसार्थस्य क्विपि रूपम् Sy. सम्यक् छेत्ता हन्ता शत्रूणाम् SKN. शत्रूणाम्...सञ्छेत्ता Dur.

१३. सम्भक्षयन्ति योद्धृणामायूंषीति समदः सङ्ग्रामास्तेषु Sy.

१४. VM. ignores जनासः। and इन्द्रः॥ N. 8.2.; SKN. III. 115.

१५. स्वेन M. इन्द्रेण Sy.

१६. इमानि Sy.

१७. शत्रुणा M. शत्रूणाम् P.

१८. च्याव० P.M. नश्वराणि भुवनानि Sy.

१९. कता० P.
स्थिरीकृतानि Sy.

२०. उपक्षपयितारम् Sy.

वारयितारम्[1] । अधरम्[2] । गुहायाम्[3] । करोति[4] । लुब्धक[5] इव । यः[6] । जिगीवान्[7] । लक्ष्यमाणं शत्रुम् । भक्षयति[8] विनाशयति । पोषणानि[9] स्तोतॄणाम् । प्रेरयन्निति[10] ।[11]

**यं स्मा पृच्छन्ति कुह सेति घोरमुतेमाहुर्नैषो अस्तीत्येनम् ।**
**सो अर्यः पुष्टीर्विज इवा मिनाति श्रदस्मै धत्त स जनास इन्द्रः ॥५॥**

**यं स्मा पृच्छन्ति**[12] । युद्धे प्रविशन्तो[13] यमिन्द्रम् । पृच्छन्ति[14] । घोरम्[15] । क्व[16] । स इन्द्रः ? इति[17] । अपि च । एनम् । आहुः[18] । न[19] । एषः । अत्र विद्यते । शीघ्रं प्रविश युद्धमिति । स ईश्वरः । शत्रूणाम्[20] । पुष्टीः[21] । हिनस्ति[22] । यथा[23] श्वघ्नी[24] पक्षिणो हिनस्ति । अस्मै[25] । श्रत्[26] । धत्त[27] इति[28] ।

---

१. शूद्राविकम् Sy.
२. अधार० P. निकृष्टमसुरम् Sy.
३. गूढस्थाने नरके वा Sy.
४. अकार्षीत् । अकः—करोतेर्लुङि 'मन्त्रे घस०' इत्यादिना च्लेर्लुकि रूपम् Sy.
५. श्वभिर्मृगान् हन्तीति श्वघ्नी व्याधः, यथा व्याधो जिघृक्षितं मृगं परिगृह्णाति तद्वत् Sy.
६. Omitted by M.
७. जिगीयान् M. जिहिवान् P. 'जि जये' । क्वसौ 'सन्लिटोर्जेः' इति अभ्यासादुत्तरस्य कुत्वम् । दीर्घश्छान्दसः । जितवान् Sy. ८. आदत्ते Sy.
९. पुष्टानि समृद्धानि Sy.
१०. प्रेरयन् seems to be the explanation of अर्यः ॥ अर्यः अरेः षष्ठ्येकवचने छान्दसो यणादेशः । शत्रोः सम्बन्धीनि Sy.
११. VM. ignores सः । जनासः । and इन्द्रः ।
१२. Omitted by P.
१३. अपश्यन्तो जनाः. . .यम् Sy.
१४. इच्छ० P. १५. घोर P. शत्रूणां घातकम् Sy. १६. त्व P.
१७. सेति—'सोऽचि लोपे चेत्पादपूरणम्' इति सोर्लोपे गुणः Sy.
१८. आहः P. न क्वचिदसौ तिष्ठतीति मन्यमाना जना एनमिन्द्रमाहुः Sy.
१९. तथा च मन्त्रः—'नेन्द्रो अस्तीति नेम उ त्व आह' (RV. 8. 100. 3.) इति Sy.
२०. अरेः सम्बन्धीनि Sy.
२१. पुष्टीः M. पोषकाणि गवाश्वादीनि धनानि Sy.
२२. आ मिनाति सर्वतः हिनस्ति । 'मीङ् हिंसायाम्' । 'मीनातेर्निगमे' इति ह्रस्वः Sy.
२३. इवशब्द एवार्थे Sy.
२४. उद्वेजक एव सन् Sy.
२५. यस्मै P.
२६. विश्वासम् Sy.
२७. धत्तवचस M. धत्र वच P. स इन्द्रोऽस्तीति विश्वासमत्र कुरुत । यद्यप्यसौ विशेषतोऽस्माभिर्न दृश्यते तथापि अस्तीति विश्वासं कुरुत Sy.
२८. VM. ignores स्म । एनम् । आ । सः । जनासः । and इन्द्रः ॥ सः-एवं निर्धारणीयमहिमोपेत इन्द्रो नाहमिति Sy.

यो र॒ध्रस्य॑ चोदि॒ता यः कृ॒शस्य॒ यो ब्र॒ह्मणो॒ नाध॑मानस्य की॒रेः ।
यु॒क्तग्रा॑व्णो॒ योऽवि॒ता सु॑शि॒प्रः सु॒तसो॑मस्य॒ स जना॑स॒ इन्द्रः॑ ॥६॥

यो रध्रस्य । यः । समृद्धस्य[1] । कृशस्य[2] च । धनं चोदयति[3] । यो वा । ब्राह्मणस्य[4] । याचमानस्य[5] । स्तोतुः[6] । यश्च । युक्तग्राव्णः[7] । सुतसोमस्य[8] । रक्षकः[9] । सुहनुः[10] ।[11]

यस्याश्वा॑सः प्र॒दिशि॒ यस्य॒ गावो॒ यस्य॒ ग्रामा॒ यस्य॒ विश्वे॒ रथा॑सः ।
यः सूर्यं॒ य उ॒षसं॑ ज॒जान॒ यो अ॒पां नेता॒ स जना॑स॒ इन्द्रः॑ ॥७॥

यस्याश्वासः । यस्य[12] । प्रदेशने[13] । स्तोतृणामश्वादयो भवन्ति । शिष्टं स्पष्टमिति[14] ।

यं क्रन्द॑सी सं॒यती॑ वि॒ह्वये॑ते॒ परेऽव॑र उ॒भया॑ अ॒मित्राः॑ ।
स॒मा॒नं चि॒द्रथ॑मातस्थि॒वांसा॒ नाना॑ हवेते॒ स जना॑स॒ इन्द्रः॑ ॥८॥

यं क्रन्दसी[15] । यम्[16] । सङ्क्रन्दमाने[17] । सेने[18] । मामागच्छ मामागच्छेत्याह्वयत[19] इति । एत-

१. सयंद्धस्य M. समृध्यस्य P. रध्रस्य-'रध हिंसासंराद्धयोः' समृद्धस्य Sy.
२. दरिद्रस्य च Sy.
३. धनानां प्रेरयिता भवति Sy.
४. ब्राह्मणस्य च । ब्रह्मशब्दस्य त्वन्नपरत्वे ह्याद्युदात्तता स्यात् यथा 'ब्रह्मं वन्वा॒नो अ॒जरं॑ सु॒वीर॑म्' (RV. 3.8.2.) इति । अयन्त्वन्तोदात्तः पठ्यत इति नान्नपरः Sy.
५. नाधमानस्य-'नाधृ णाधृ याच्ञोपतापैश्वर्याशीःषु' याचमानस्य Sy.
६. कीरेः करोतेः कीर्तयतेर्वा । स्तोतुः Sy.
७. ०प्रावण: P. अभिषवार्थमुद्यतग्राव्णः Sy.
८. अभिषुतसोमस्य यजमानस्य Sy.
९. ०क्षक P. रक्षिता भवति Sy.
१०. सुहः. . .M. शोभनहनुः सुशीर्षको वा सन् Sy.
११. VM. ignores यः (after चोदिता) सः । जनासः । and इन्द्रः ।
१२. सर्वान्तर्यामितया वर्तमानस्य Sy.
१३. ०देशेन P. अनुशासने Sy.
१४. VM. explains only first three words of the stanza. Sy. explains the stanza in the following manner :— अश्वासः अश्वा वर्तन्ते । यस्य अनुशासने गावः । यस्य अनुशासने ग्रामाः । ग्रसन्तेऽत्रेति ग्रामा जनपदाः । यस्य आज्ञायां विश्वे सर्वे रथासः रथा वर्तन्ते । यश्च वृत्रं हत्वा सूर्यं जजान जनयामास । यश्च उषसम् । तथा मन्त्रः—'ज॒जान॒ सूर्य॑मु॒षसं॑ सु॒दंसाः॑' (RV. 3.32.8.) इति । यश्च मेघभेदनद्वारा अपां नेता प्रेरकः स इन्द्रः इत्यादि प्रसिद्धम् ॥
१५. ०न्दसि P. १६. इन्द्रम् Sy.
१७. सकन्द० M. क्रन्द० P. रोदसी शब्दं कुर्वाणे मानुषी दैवी च द्वे सेने Sy.
१८. सेने seems to be the explanation of संयती ॥ परस्परं सङ्गच्छन्त्यौ Sy.
१९. विह्वयेते स्वरक्षार्थं विविधमाह्वयतः Sy.

देवोक्तम्[1] तत्रत्याः[2]। अत्रत्याश्च[3]। उभये[4]। अत्रैव[5] आह्वयन्तः[6]। एकम्[7]। एव। इन्द्ररथम्[8]। आतस्थिवांसौ[9] युयुत्सू राजानौ। नाना[10]। हवेते[11] तमिन्द्रमिति[12]।

उत्तरा निगदव्याख्याता।

**यस्मा॒न्न ऋ॒ते वि॒जय॑न्ते॒ जना॑सो॒ यं युध्य॑माना॒ अव॑से॒ हव॑न्ते।**
**यो विश्व॑स्य प्रति॒मानं॑ ब॒भूव॒ यो अ॑च्युत॒च्युत्स जना॑स॒ इन्द्रः॑ ॥९॥**

[ यस्मान्न ऋते ][13]

**यः शश्व॑तो॒ मह्ये॑नो॒ दधा॑ना॒नम॑न्यमाना॒ञ्छर्वा॑ ज॒घान॑।**
**यः शर्ध॑ते॒ नानु॒ददा॑ति शृ॒ध्यां यो दस्यो॑र्ह॒न्ता स जना॑स॒ इन्द्रः॑ ॥१०॥**

यः शश्वतः। यः। बहून्। महत्। पापम्। दधानान्। इन्द्रममन्यमानान्[14]। हिंसकेन[15]। जघान[16]। यश्च[17]। बलमाचरते[18]। बलवत्तमाम्[19]। न। अनुप्रयच्छति[20]—

१. वोक्त P. २. उत्कृष्टाः Sy.
३. अधमाश्च Sy.
४. उभ M. उभयविधाः Sy.
५. Omitted by M.
६. ०ह्वन्तः P. यमाह्वयन्ति Sy.
७. समानम् इन्द्ररथसदृशम् यद्वा समानमेकरथम् Sy. ८. ०रम P.
९. आस्थितौ द्वौ रथिनौ तमेवेन्द्रम् Sy.
१०. पृथक् पृथक् Sy.
११. आह्वयेते, यद्वा यज्ञार्थं यजमानैः पृथगाहूयेते। यद्वा समानमेकरथमारूढाविन्द्राग्नी हवेते यज्ञार्थं यजमानैः पृथगाहूयेते तयोरन्यतरः स इन्द्रः नाहमिति Sy.
१२. VM. ignores सः। जनासः। and इन्द्रः।
१३. The *pratika* is supplied by the Editor. Sy. explains the stanza in the following manner:—यस्मात् ऋते जनासः जनाः न विजयन्ते विजयं न प्राप्नुवन्ति। अतः युध्यमानाः युद्धं कुर्वाणा जनाः अवसे स्वरक्षणाय यम् इन्द्रं हवन्ते आह्वयन्ति। यश्च विश्वस्य सर्वस्य जगतः प्रतिमानं प्रतिनिधिः बभूव। यश्च अच्युतच्युत् अच्युतानां क्षयरहितानां पर्वतादीनां च्यावयिता सः इन्द्रः इत्यादि प्रसिद्धम्॥
१४. आत्मानमजानत इन्द्रमपूजयतो वा जनान् Sy. १५. हिंसके P. शृणाति शत्रूननेनेति शरुर्वज्रः। तेनायुधेन Sy.
१६. जद्या० M. जघान-हन्तेर्लिटि रूपम् Sy.
१७. M. omits यश्च।
१८. ०चरेत M. उत्साहं कुर्वतेऽनात्मज्ञाय जनाय Sy. १९. ०त्तमान् M. ०त्तमन् P. उत्साहनीयं कर्म Sy.
२०. ०यति P. अनुपूर्वात् 'डुदाञ् दाने' जौहोत्यादिकात् 'अभ्यस्तानामादिः,' इति 'तिङि चोदात्तवति' इति गतेर्निघातः Sy.

शीघ्रं[1] तं[2] हन्ति । यश्च । असुरस्य[3] । हन्तेति[4] ।[5]

**यः शम्बरं पर्वतेषु क्षियन्तं चत्वारिंश्यां शरद्यन्वविन्दत् ।**
**ओजायमानं यो अहिं जघान दानुं शयानं स जनास इन्द्रः ॥११॥**

**यः शम्बरम् ।** यः । शम्बरमसुरम्[6] । इन्द्रभयात् पर्वतेषु[7] निलीय । निवसन्तम् । चत्वारिंश्याम्[8] । शरदि[9] संवत्सरे । लब्धवान्[10] । यः । वलमाचरन्तम्[11] । अहिम्[12] । हतवान् । दानुं[13] च । शयानमिति[14] ।[15]

**यः सप्तरश्मिर्वृषभस्तुविष्मानवासृजत्सर्तवे सप्त सिन्धून् ।**
**यो रौहिणमस्फुरद्वज्रबाहुर्द्यामारोहन्तं स जनास इन्द्रः ॥१२॥**

**यः सप्तरश्मिः ।** यः । सप्तरश्मिः[16] । वर्षिता[17] । बलवान्[18] । अवासृजत्[19] । सरणाय । सप्त[20] । नदीश्च[21] । रौहिणमसुरम्[22] । हतवान्[23] । वज्रबाहुः[24] । दिवम् । आरोहन्तम् ।[25]

---

१. शीघं M. शीघ्र P.
२. त्तं P.
३. उपक्षपयितुः शत्रोः Sy.
४. घातकः Sy.
५. VM. ignores सः । जनासः । and इन्द्रः ।
६. एतन्नामकं मायाविनमसुरम् Sy.
७. इन्द्रभिया बहून् संवत्सरान् प्रच्छन्नो भूत्वा पर्वतगुहासु Sy.
८. चत्वाररंश्यां P. चत्वारिंशे Sy.
९. ०रदसदि सं० P.
१०. ०ब्धवा M. अन्विष्यालभत Sy.
११. लब्ध्वा च य ओजायमानम्—'कर्तुः क्यङ् सलोपश्च' 'ओजसोऽप्सरसो नित्यम्' (VPa. 3.1.11.8.) इति सकारलोपः । बलमाचरन्तम् Sy.
१२. आहन्तारम् Sy.
१३. दातुं M. दानवम् Sy.
१४. शम्बरमसुरम् Sy.
१५. VM. ignores सः । जनासः । and इन्द्रः ।
१६. सप्तसंख्याकाः पर्जन्या रश्मयो यस्य । ते च रश्मयः 'वराहवः स्वतपसो विद्युन्महसो धूपयः श्वापयो गृहमेधाश्चेत्येते ये चेमेऽशिमिविद्विषः पर्जन्याः सप्त पृथिवीमभिवर्षन्ति वृष्टिभिः' (TA. 1.9.4,5.) इति तैत्तिरीयारण्यके ह्याम्नाताः Sy.
१७. ०तार P. वर्षकः Sy.
१८. वृद्धिमान्बलवान्वा Sy.
१९. असृ० P. अवसृष्टवान् यद्वा असृजत् Sy.
२०. सर्पणस्वभावान्. . .यद्वा गङ्गाद्याः सप्त मुख्याः Sy.
२१. ०दीनयंश्च P. अपः, नदीः Sy.
२२. रोहि० M.
२३. जघान । 'स्फुर स्फुरणे' तुदादिः Sy.
२४. ०ब्रमाहुः M. and P.
२५. VM. ignores यः (third verse) सः । जनासः and इन्द्रः ।

**द्यावा॑ चिद॑स्मै पृथि॒वी न॑मेते॒ शुष्मा॑च्चिदस्य॒ पर्व॑ता भयन्ते ।**
**यः सो॑म॒पा नि॑चि॒तो वज्र॑बाहु॒र्यो वज्र॑हस्तः॒ स ज॑नास॒ इन्द्रः॑ ॥१३॥**

द्यावा चित्। अस्मै[1]। द्यावापृथिवी[2]। प्रह्वीभवतः[3]। तथा[4]। अस्य[5]। भयात्[6]। पर्वताः[7]। बिभ्यति। यः। सोमपाः[8]। दृढशरीरः[9]। तस्य बाहौ[10] कदाचिद् वज्रः, कदाचिद्धस्त[11] इति[12]।

**यः सु॒न्वन्त॒मव॑ति॒ यः पच॑न्तं॒ यः शंस॑न्तं॒ यः श॑शमा॒नमू॒ती ।**
**यस्य॒ ब्रह्म॒ वर्ध॑नं॒ यस्य॒ सोमो॒ यस्ये॒दं राधः॒ स ज॑नास॒ इन्द्रः॑ ॥१४॥**

यः सुन्वन्तम्। यः। अभिगमनेन सुन्वन्तम्[13]। रक्षति। चरून् पश्वङ्गानि[14] च पचन्तम्। शस्त्राणि शंसन्तम्। स्तुतिभिः[15]। अर्चयन्तम्[16]। यस्य च। ब्रह्म[17]। वर्धनं[18] भवति। सोमश्च[19]।

---

१. इन्द्राय Sy. M. makes it a part of *pratika*.

२. 'द्यावा चिदस्मै पृथिवी' इतरेतरापेक्षया द्विवचनं 'प्र मित्रयोर्वरुणयोः' (RV. 7.66.1.) इतिवत् Sy.

३. स्वयमेव प्रह्वीभवतः। 'णमु प्रह्वत्वे' कर्मकर्तरि 'न दुहस्नुनमां यक्चिणौ' इति यकः प्रतिषेधः Sy.

४. चित् अपि च Sy.

५. इन्द्रस्य Sy.

६. शुष्माद् बलात् Sy.

७. पर्वतात् P.

८. सोमस्य पाता Sy.

९. निचितः सर्वैः। यद्वा अन्येभ्योऽपि देवेभ्यो दृढाङ्गः Sy.

१०. वज्रसदृशबाहुः Sy.

११. कदाचिद्धस्तः seems to be the explanation of वज्रहस्तः but it is rather incorrect. If हस्त is taken as हस्ते loc. sing. then it can mean that he holds the thunderbolt sometimes in the hand and sometimes on the arm. The use of the word कदाचित् can be significant if this interpretation is accepted. यश्च वज्रहस्तो वज्रयुक्तः Sy.

१२. VM. ignores चित्। यः। (fourth verse) सः। जनासः। and इन्द्रः।

१३. सोमाभिषवं कुर्वन्तं यजमानम् Sy.

१४. इवगा० P. पुरोडाशादीनि हवींषि पचन्तम् Sy.

१५. स्तुतिभिः seems to be the explanation of ऊती॥ ऊती ऊतये। 'सुपां सुलुक्...' इति चतुर्थ्याः पूर्वसवर्णदीर्घः। स्वरक्षार्थं Sy.

१६. ०चंन्त० M. स्तोत्रं कुर्वाणं रक्षति Sy.

१७. परिवृढं स्तोत्रम् Sy.

१८. वृद्धिकरं भवति Sy.

१९. सोमः वृद्धिहेतुर्भवति Sy.

यस्य । इदमपि[1] । अन्नं[2]हविश्च[3] ।

**यः सुन्वते पचते दुध्र आ चिद्वाजं दर्दर्षि स किलासि सत्यः ।**
**वयं त इन्द्र विश्वह प्रियासः सुवीरासो विदथमा वदेम ॥१५॥**

यः[4] सुन्वते । यस्त्वम् । दुर्धरः । सुन्वते[5] । पचते[6] च[7] । अन्नम्[8] । आदयसि[9] । स त्वम्[10] । असि[11] ।
अम[12]. . . । वयम् । ते[13] । इन्द्र ! सदा । प्रियाः । सुपुत्राः[14] । गृहम्[15] । सर्वदा[16] । आभिमुख्येन वदाम[17]इति[18] ।

II. 13.

**ऋतुर्जनित्री तस्या अपस्परि मक्षू जात आविशद्यासु वर्धते ।**
**तदाहना अभवत्पिप्युषी पयोंऽशोः पीयूषं प्रथमं तदुक्थ्यम् ॥१॥**

ऋतुर्जनित्री[19] । ऋतुः[20] । चन्द्रमसो जनयित्री[21] । तस्या जनयित्र्या वेगात्[22] । पश्चादौ शीघ्रम् ।

---

१. अस्मदीयम् Sy.
२. अंगविद्वः M. अहंविश्च P. पुरोडाशादिलक्षणमन्नं वृद्धिकरं भवति Sy.
३. VM. takes notice of यः once only and ignores यस्य (once)। सः । जनासः । and इन्द्रः ॥ स इन्द्रः इत्यादि प्रसिद्धम् Sy.
४. इदानीमृषिः साक्षात्कृतमिन्द्रं प्रति ब्रूते Sy.
५. सोमाभिषवं कुर्वते Sy.
६. पुरोडाशादिहर्वींषि पचते यजमानाय Sy.
७. Omitted in P. ८. अन्नं बलं वा Sy. ९. आद D. अदारयसि P. भृशं प्रापयसि Sy. १०. स तादृशस्त्वम् Sy.
११. असि न पुनर्नास्तीति बुद्धियोग्योऽसि Sy.
१२. अममापः M. अमारः P. अम seems to be the doubtful explanation of सत्यः ॥ अमर्त्यः or अमरः is suggested for अम . . . ॥ यथार्थभूतः Sy.
१३. तु P. तव Sy.
१४. कल्याणपुत्रपौत्राः सन्तः Sy.
१५. ग्रहम् P. विदथम् स्तोत्रम् Sy.
१६. सर्वेष्वहःसु Sy. १७. ब्रूयाम Sy.
१८. VM. ignores चित् and किल ॥ किलेति प्रसिद्धौ Sy.
१९. 'ऋतुर्जनित्री' इति त्रयोदशर्चं द्वितीयं सूक्तं गार्त्समदम् । 'ऋतुः सप्तोनान्त्या त्रिष्टुप्' (KSA. 14. 13. p. 13.) इत्यनुक्रमणिका । 'अस्मभ्यं तद्वसो' इति त्रयोदशी त्रिष्टुप् । शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः । (Cf. KSA. 12. 13. p. 5.) । इन्द्रो देवता । उक्थ्ये तृतीयसवने अच्छावाकशस्त्रेऽस्य सूक्तस्य विनियोगः । सूत्रितञ्च—'ऋतुर्जनित्री नू मर्त्तो भवा मित्रः' (ASS. 6. 1.) इति । दशरात्रे षष्ठेऽहन्यपि तृतीयसवने अच्छावाकशस्त्रे एतत्सूक्तम् । 'ऋतुर्जनित्रीति नित्यान्यैकाहिकानि' (ASS. 8. 4.) इति सूत्रितम् Sy.
२०. वर्षाख्यः कालः Sy.
२१. सोमस्य जननी भवति Sy.
२२. वेगनात् P. सकाशात् Sy.

जातः[1] । आविशत्योषधीः । यास्वोषधीषु[2] । वर्धते । तत्र ग्रावस्वाहन्त[3][4] । तद्[5] या[6] । अतिशयेन[7] रसम्[8] । आप्यायन्ती[9] । भवति[10] लता । तदिदं[11] त्वयोत्पद्यमानम्[12] । सोमांशोः[13] । पीयूषं सुतम्[14] । प्रथममेव । हे इन्द्र ! तुभ्यं स्तोतव्यम्[15] ।[16]

सध्रीमा यन्ति परि बिभ्रतीः पयो विश्वप्स्न्याय प्र भरन्त भोजनम् ।
समानो अध्वा प्रवतामनुष्यदे यस्ताकृणोः प्रथमं सास्युक्थ्यः ॥२॥

सध्रीमा[17] यन्ति[17] । सध्रीचीनाः[18] । एनं[19] समुद्रम् । आगच्छन्ति[20] । परितः । बिभ्रत्यः[21] ।

---

१. जातं M. सोमः Sy.

२. योष० P. यास्वप्सु सोमो वर्धते ता अविशदित्यन्वयः Sy.

३. ग्रावयस्वा० M. तस्मादप्सु प्रविष्टत्वात्सोमः Sy.

४. ०स्वानन्त P. आहन्तव्या is suggested for आहन्त ॥ आहन्तव्योऽभिषोतव्यो भवति । 'आहनाः' इति सकारान्तमिदं पदम् । तथा च मन्त्रवर्णः—'ये ते मदा आहनसो विहायसः' (RV. 9.75.5.) इति Sy. Also see RV. X. 10.8. 'अन्येन मदाहनो याहि तूयम्'—हे आहनः ! ममापहन्त्र्यसह्यभाषणेन दुःखयित्रि ! त्वं मन्मत्तोऽन्येन त्वत्सदृशेन सह तूयं क्षिप्रं याहि सङ्गच्छ Sy. ॥ अन्येन मदहनो गच्छ क्षिप्रम् । आहंसीव भाषमाणेत्यसभ्यभाषणादाहना इव भवति । एतस्मादाहनः स्यात् N. 5.2.

५. Omitted in P.

६. ध्या P. It goes with लता ॥ या च अंशुरूपा सोमलता Sy.

७. It goes with आप्यायन्ती ।

८. सरसं P. पयः सारभूतम् Sy.

९. ०यन्ति P. वर्धयन्ती प्यायतेर्लिटि क्वसौ 'लिड्यङोश्च' इति पीभावः । 'वसोः सम्प्रसारणम्' । 'उगितश्च' ङीप् Sy.

१०. भवन्ति M. and P. अभवत् Sy.

११. विद्धं P. १२. ०योत्पाद्य. P.

१३. सोमाः M. तस्याः सोमलतायाः Sy.

१४. रसभूतं पयः Sy.

१५. ०व्यः P. प्रशस्यं हविरिन्द्रस्य भवति Sy.

१६. VM. ignores अपः । परि ॥ अपः, उदकानि Sy. If VM. does not ignore अपः, the only possibility is that he explains अपः as वेगात्, construing अपः as abl. sing. VM. explains सरपसः (सरऽअपसः PP.) (RV. 2.13.12.) as सरणशीलवेगः taking सरपसः as nom. sing. ॥ Sy. takes सरपसः in the nom. pl. and explains it as सरणमपः कर्म यासां ताः सरपसः ।

१७. मायान्ति P.

१८. सध्री–अञ्चतेर्लुक् छान्दसः । 'सहस्य सध्रिः' इति सध्र्यादेशोऽन्तोदात्तत्वेन निपातितः Sy.

१९. ईम् एता नद्यः Sy.

२०. आविशन्ति P. सर्वतो गच्छन्ति Sy.

२१. बिभ्राणाः Sy.

उदकम् । विश्वं व्याप्तं येन[१] स[२] विश्वप्स्न्यः[३] समुद्रस्तस्मै । भोजनम्[४] । प्रभरन्ति[५] । समानः[६] । मार्गः समुद्राख्यः[७] । प्रवणवतां[८] नदीनाम् । अनु स्यन्दनाय[९] । यः[१०] । तान्येतान्येवंविधानि[११] कर्माणि । अकृणोः[१२] । स त्वम्[१३] । प्रथममेव[१४] । स्तोतव्यः[१५] ।[१६]

**अन्वेको वदति यद्ददाति तद्रूपा मिनन्तदपा एक ईयते ।**
**विश्वा एकस्य विनुदस्तितिक्षते यस्ताकृणोः प्रथमं सास्युक्थ्यः ॥३॥**

अन्वेकः । एक[१७] उदारः सन्[१८] । मनसा यद्[१९] । ददाति । तद् । वाचाऽनुवदति[२०], तुभ्यमिदं ददामीति[२१] । अथापरः[२२] कश्चिल्लुब्धकादिः[२३] । मृगादीन्[२४] । हिंसन् । तत्कर्मा[२५] भूत्वा । गच्छति[२६] । अथान्यः[२७] शान्तोऽन्यस्य । विविधानि नोदनानि[२८] । बलाभावात् परलोकभयाच्च सहते[२९] । यस्त्वम् ।

---

१. M. repeats येन ।

२. य M.

३. विश्वस्य P. विश्वप्स्न्याय विश्वासामपामाश्रयभूताय समुद्राय Sy.

४. नाभोजम् M. and P. भुज्यत इति भोजनं पयः Sy.

५. प्रकर्षेण सम्पादयन्ति Sy.

६. एको हि Sy.

७. ०द्राख्यं M.

८. ०णता P. As नदी is fem. the reading should be प्रवणवतीनाम् or प्रवणवतां नदानाम् ॥ कुत एतत् ? तदाह । निम्नगानां पयसाम् Sy.

९. अनुष्यदे—'कृत्यार्थे तवैकेन्केन्यत्वनः' इति केन्प्रत्ययः । अनुष्यन्दनीयः Sy.

१०. स् M. Omitted by P.

११. तान्येतान्येवंवि० M. तान्येवमसिवि० P. तानि सोमोत्पादननदीप्रवर्तनादीनि कर्माणि Sy.

१२. ०कृतोः P. अकरोः Sy.

१३. तादृङ्महिमोपेतः Sy.

१४. पूर्वम् Sy.

१५. सर्वैः प्रशस्यः Sy.

१६. VM. ignores असि ॥ असि भवसि Sy. १७. एत P. होता Sy.

१८. स P.

१९. यजमानः यद्धविर् (यद् हविर्) देवेभ्यः Sy.

२०. याज्यापुरोनुवाक्याभ्यां देवताः स्मारयति Sy.

२१. बदातीति M. दातीति० P.

२२. ०थापरं M. एकोऽध्वर्युः Sy.

२३. ०कादि M.

२४. म्यगादीत् M. पश्वादीनां रूपाणि Sy.

२५. ०कर्म P. तद्रपाः तद्विशसनाख्यमपः कर्म यस्य तादृशः सन् Sy.

२६. अवगच्छन्ति M. गच्छसि P. देवयजने सर्वत्र गच्छति Sy.

२७. ०थान्यं P. एकस्याध्वर्योः Sy.

२८. तत्कर्तृकाणि विक्षेपणरूपाणि कर्मवैगुण्यानि Sy.

२९. ०हसे M. तद्योग्यप्रायश्चित्तकरणेन ब्रह्मा सहते । तितिक्षते—'गुप्तिज्किद्भ्यः सन्' क्षमायामिष्यते Sy.

एवंविधानि ता कर्माणि । अकृणोरिति ।

प्रजाभ्यः पुष्टिं विभजन्त आसते रयिमिव पृष्ठं प्रभवन्तमायते ।
असिन्वन्दंष्ट्रैः पितुरत्ति भोजनं यस्ताकृणोः प्रथमं सास्युक्थ्यः ॥४॥

प्रजाभ्यः । माध्यमिका देवगणाः स्वपुष्टिम् । प्रजाभ्यः । विभजन्तः । आसते । वर्षाख्यं धनमिव । धारकम् । भूतम्, अतिशयेन । आयते । लोको दंष्ट्रैः । अखादन् । दिवः पितुरागतम् । भोजनम् । अत्ति, नह्योषध्यादेर्दन्ता भवन्ति ।

अधाकृणोः पृथिवीं सन्दृशे दिवे यो धौतीनामहिहन्नारिणक्पथः ।
तं त्वा स्तोमेभिरुदभिर्न वाजिनं देवं देवा अजनन्त्सास्युक्थ्यः ॥५॥

अधाकृणोः । अपि च । अकरोः । पृथिवीम् । आदित्यस्य । दर्शय । यस्त्वम् ।

---

१. ना M. and P. हविष्प्रदानादीनि कर्माणि Sy.
२. अकारयः Sy.
३. VM. ignores विश्वाः । प्रथमम् । सः । असि and उक्थ्यः ॥ विश्वानि सर्वाणि स त्वमुक्थ्यः असि Sy.
४. व्रजा० P.
५. गृहमेधिनः Sy.
६. त्वया दत्तं पोषकं धनम् Sy.
७. स्वकीयाभ्यः प्रजाभ्यः Sy.
८. अस्यैतावदस्यैतावदिति विभागं कुर्वन्तः Sy.
९. आसेते P. स्वस्वगृहेषु निवसन्ति । तत्र दृष्टान्तः Sy.
१०. ०र्षाख्यध० M. रयिं धनं यथा विभज्य प्रयच्छन्ति तद्वत् Sy.
११. अतीतं यन् P. बहुभरणसमर्थम् Sy.
१२. आय M. आयं P. गृहं प्रत्यागच्छतेऽतिथये Sy.
१३. लोको M.
१४. दंष्ट्रैर्दन्तैर्दन्तरूपैर्ज्वालैः Sy.
१५. ०दम M. सेतुबन्धादिकं कर्म कुर्वन् लोकः । यद्वा असिन्वन् अव्याप्रियमाणोऽग्निः Sy.
१६. पितुः पालयित्र्या दिवः सकाशादागतम्, यद्वा पितुः पालकस्य यजमानस्य सम्बन्धि Sy.
१७. भोजड P. भोजनमुदकं तत्कार्याः ओषधीः, यद्वा हविर्लक्षणमन्नम् Sy.
१८. त्ति P. भक्षयति Sy.
१९. ह्योमध्या० P.
२०. ०र्दन्त P. २१. ०वत्ति P.
२२. VM. ignores यः । ता । अकृणोः । प्रथमम् । सः । असि and उक्थ्यः ॥
२३. पृथिवीं चलितां सतीं दृढीकृत्य Sy.
२४. दिवे द्योतमानाय सूर्याय Sy.
२५. शोय M. दर्शनाय is suggested for दर्शय ॥ सन्दर्शनीयाम् । सन्दृशे—'दृशे विख्ये च' इति केन्प्रत्ययान्तत्वेन निपातितः Sy.

धावन्तीनाम्[1] । हे अहिहन्[2] ! अगमयः[3] । मार्गान् । तम्[4] । त्वा[5] । स्तोमैः[6] । उदकैः[7] । इव । अश्वम्[8] । देवम्[9] । देवाः[10] । अजनयन्[11], स्तुतवतो[12] ह्यग्रत इन्द्रः प्रादुर्भवति, यथाऽद्भ्योऽश्वो[13] जात[14] इत्यप्सु योनिर्वा अश्व इति श्रुतिः[15] ।

**यो भोजनं च दयसे च वर्धनमार्द्रादा शुष्कं मधुमद्दुदोहिथ ।**
**स शेवधिं नि दधिषे विवस्वति विश्वस्यैक ईशिषे सास्युक्थ्यः ॥६॥**

यो भोजनम् । यस्त्वम्[16] । अन्नम्[17] । वर्धनम्[18] । च । प्रयच्छसि[19] । यश्च । आर्द्रादोषध्यादेः[20] । शुष्कं[21] पक्वं व्रीह्यादिकम् । मधुरसवत्[22] । दुदोहिथ[23] । स त्वम्[24] । निधिं[25] धनम् । यजमाने[26] । निदधासि[27] । विश्वस्य[28] च । एकस्त्वम्[29] । ईशिषे[30] इति[31] ।

---

१. चलन्तीनां नवीनाम् Sy.
२. अन्न P. अहेर्वृत्रस्य मेघस्य वा हन्तः ! हे इन्द्र ! Sy.
३. अगमयोः M. गमनयोः P. व्यरेचयः, गन्तुं योग्यानकरोरित्यर्थः । अरिणक्—'रिचिर् विरेचने' लङि सिप् । तस्य हल्ङ्यादिना लोपः Sy.
४. तनु M. तादृशम् Sy.
५. ञ्वा M.
६. स्तोत्रैः Sy.
७. उदभिः—'पदन्नोमास्०' इत्यादिना उदकस्य उदन्भावः Sy.
८. यथा वाजिनमश्वमुदभिरश्वकैर्वर्धयन्ति तद्वत् Sy.
९. त्वाम् Sy.
१०. स्तोतारः Sy.
११. अवर्धयन् । तत्र दृष्टान्तः Sy.
१२. स्तुत वा M. स्तुवता P.
१३. भ्यो P.
१४. जा P.
१५. VM. ignores सः । असि and उक्थ्यः ।
१६. हे इन्द्र ! Sy.
१७. भुज्यते इति भोजनमन्नादि Sy.
१८. ०र्धयन् P. वृद्धिकरं धनं बलं वा दयसे Sy.
१९. यजमानेभ्यः प्रयच्छसि । दयसे-'दय दानगतिरक्षणहिंसाग्रहणेषु' आत्मनेपदी Sy.
२०. आर्द्रात् काण्डात् Sy.
२१. शुष्कमनार्द्रं व्रीह्यादिकम् Sy.
२२. ०सवर P. मधुररसोपेतम् Sy.
२३. दोहित M. दोहिथ P. दुग्धवानसि । दुदोहिथ-दुहेर्लिटि क्रादिनियमादिडागमः Sy.
२४. तादृशस्त्वम् Sy.
२५. धनसदनम् Sy.
२६. ते परिचरणं कुर्वाणे यजमाने Sy.
२७. निधासि M.
२८. किंबहुना ? सर्वस्य जगतः Sy.
२९. इतस्त्वम् M. and P. अद्वितीय एव सन् Sy.
३०. स्वामी भवसि । ईशिषे—'ईश ऐश्वर्ये' 'ईशः से' इतीडागमः Sy.
३१. VM. ignores आ । सः । असि । and उक्थ्यः ।

यः पुष्पिणीश्च प्रस्वश्च धर्मणाधि दाने व्यवनीरधारयः ।
यश्चासमा अजनो दिद्युतो दिव उरुरूर्वाँ अभितः सास्युक्थ्यः ॥७॥

यः पुष्पिणीः । यः । पुष्पवतीः । प्रसूतवतीः[1] । च । धारणेन[2] । विविधं धारयसि[3] । फलप्रदाने[4] । ओषधीरवित्रीः[5] । यः । च त्वम् । नानाविधाः[6] । द्योतमाना विद्युतः[7] । दिवः[8] । जनयसि[9] । विस्तीर्णः[10] । विस्तीर्णवान्[11] । सर्वत[12] इति[13] ।

यो नार्मरं सहवसुं निहन्तवे पृक्षाय च दासवेशाय चावहः ।
ऊर्जयन्त्या अपरिविष्टमास्यमुतैवाद्य पुरुकृत् सास्युक्थ्यः ॥८॥

यो नार्मरम् । नृमरस्यापत्यम्[14] । वसुनासुरेण सहितम्[15] । निहन्तुम्[16] । पृक्षाय[17] ऋषये । दासवेशाय[18] । च प्रीणनार्थम्[19] । ऊर्जयन्त्याः[20] पिशाचिकायाः । वृतमपरिमितम्[21] । आस्यम् । यस्त्वम् । पुरावहः[22] । स त्वम् । इदानीम् । अपि । बहुकृत्[23] ! भवसि[24] ।

---

१. प्रसुव० P.
प्रसूताः प्रसूयमाना वा Sy.
२. सकललक्षणेन कर्मणा Sy.
३. न्यवधाः Sy.
४. उपलूयन्ते सस्यान्यत्रेति दानं क्षेत्रं तस्मिन् क्षेत्रे, अधिकरणे ल्युट् Sy.
५. ०रवित्री M. ०रवित्रि P.
६. असमाः विषमा नानाप्रकाराः Sy.
७. दीप्तीः Sy.
८. द्योतमानस्य सूर्यस्य । यद्वा दिवो नक्षत्राणि Sy.
९. अजनयः—जनेर्लङि व्यत्ययेन शप् Sy.
१०. महांस्त्वम् Sy.
११. विस्तीर्णान् is suggested for विस्तीर्णवान् ॥ महतः प्राणिनिकायान् पर्वतान् Sy.
१२. सर्वं M.
१३. VM. ignores च (twice) । अधि । सः । असि and उक्थ्यः ।
१४. नॄन् मनुष्यान् मारयतीति नृमरः कश्चिदसुरः । तस्यापत्यं नार्मरः, तम् Sy.
१५. वसुना सह वर्तत इति सहवसुः । असुरनामैतत् । एतन्नामकमसुरम् Sy.
१६. निहन्तवे हन्तेस्तुमर्थे तवेन्प्रत्ययः । 'तादौ च निति' इति गतेः प्रकृतिस्वरत्वम् । निहन्तुम् Sy.
१७. वृक्षा० P. तव हविर्लक्षणान्नलाभाय, यद्वा अस्माकमन्नलाभाय दस्युविनाशाय च Sy.
१८. देवस P. दासानां दस्यूनां वेशाय विनाशाय च Sy.
१९. ०नार्थम् P.
२०. बलवत्या वज्रधारायाः Sy.
२१. विवृत्तम D.M. अवृतम् is suggested for वृतम् ॥ मलादिभिरव्याप्तम् Sy.
२२. तमसुरं प्रापयः Sy.
२३. पुरूणां कर्मणां कर्तः ! हे इन्द्र ! Sy.
२४. VM. ignores च । एव । सः । असि । and उक्थ्यः ।

**श॒तं वा॒ यस्य॒ दश॑ सा॒कमाद्य॒ एक॑स्य श्रु॒ष्टौ यद्ध॑ चो॒दमावि॑थ ।**
**अ॒र॒ज्जौ दस्यू॒न्त्समु॑नब्द॒भीत॑ये सुप्रा॒व्यो॑ अभवः॒ सास्यु॒क्थ्यः॑ ॥९॥**

**शतं वा यस्य ।** 'आशु अष्टीति'[1] श्रुष्टी[2]—इति यास्कः[3], यस्य तव । पानीयः सोमः[4]...शतं भवति । अपि वा[5] । दश शतम् । साकं सहस्रमित्यर्थः[6] । स त्वम् । एकस्य दभीतेः[7] । आश्वभिगमने[8] समाश्रयणे । तस्य चोदकं[9] परबलम् । यदा । रक्षितवानसि । तदानीं रज्जुवर्जित उदकबन्धे[10] । दभीतेर्जयार्थम्[11] । अनेकान्[12] दस्यून्[13] । समुनवमज्जयत्[14][15] । ततश्च सुष्ठ्वभिगन्तव्यः[16] । अभव इति ।[17]

---

१. पुष्टीति M.
पुष्टिति P.

२. शुष्टिः M.
शुष्टः P.

३. Cf. N. 6. 12. श्रुष्टीति क्षिप्रनाम । आशु अष्टीति । The passage आशु...यास्कः should immediately follow आश्वभिगमने समाश्रयणे and precede तस्य चोदकम् ।

४. सोम P. 'आ अद्यः' सर्वेषां सर्वत उपजीव्यः । 'न तस्येशे यं नाद्याद्वैनं नाद्युः' इति हि श्रुतिः Sy.

५. द्वा P.

६. ०त्यर्थः P. दश शतानि हरयो वाहनार्थं भवन्ति । तथा च मन्त्रवर्णः—'इन्द्रो॑ मा॒याभि॑ः पु॒रु॒रूप॑ ईयते यु॒क्ता ह्य॑स्य॒ हर॑यः श॒ता दश॑ (RV. 6. 41. 18.) इति Sy.

७. वेभितेः P. एकाकिनः श्रेष्ठस्य वा Sy.

८. आ इत्वभि० M.
सुखनिमित्ते Sy.

९. स्तोत्राणां प्रेरकं यजमानम् Sy.

१०. किञ्च यस्त्वं रज्जुवर्जिते बन्धनागारे Sy.

११. ०ते ज्ञयार्त्थम् P. M. omits दभीतेर्जयार्थम् ॥ दभीतिर्नाम कश्चिदृषिः तदर्थम् Sy.

१२. नकान् M.

१३. उपक्षपयितॄन् Sy.

१४. संमनन्यम० M. समुनबन्यम० P. हिंसितवानसि । उनप्-उभतेर्हिसाकर्मणो लङि व्यत्ययेन श्नम् । हल्ङ्यादिना सिपो लोपः । अडभावश्छान्दसः Sy.

१५. ज्जयन् M. and P.

१६. सुभिग० M. सुष्वभिग० P. सुखेन सर्वैरुपसर्पणीयः Sy.

१७. VM. ignores आ । ह । असि and उक्थ्यः ।

विश्वेदनु रोधना अस्य पौंस्यं ददुरस्मै दधिरे कृत्नवे धनम्।
षळस्तभ्ना विष्टिरः पञ्च संदृशः परि परो अभवः सास्युक्थ्यः ॥१०॥

विश्वेदनु। इन्द्रस्य। पौंस्यम्[1]। आत्मनो[2] निरुद्धा[3] यजमानाः[4]। सर्वाणि[5]। एव। हवींषि क्रत्नवे[6]। इन्द्राय। अनु[7]प्रददुः[8]। धारयन्ति[9] च प्रदातुम्। धनम्। षडिमा[10] उर्वीः। इन्द्रोऽस्तभ्नात्[11]। विस्तारयन्[12]। पञ्च। कृष्टीः[13]। पर्य्य[14]भवश्च[15]। सर्वं[16] पारयिता[17] त्वम्[18][19]।

सुप्रवाचनं तव वीर वीर्यं यदेकेन क्रतुना विन्दसे वसु।
जातूष्ठिरस्य प्र वयः सहस्वतो या चकर्थ सेन्द्र विश्वास्युक्थ्यः ॥११॥

सुप्रवाचनम्[20]। सुष्ठु प्रकर्षेण सर्व[21]सन्निधाने प्रकाश्यम्। तव। हे वीर[22]! वीर्यम्[23]। यत्[24] त्वम्। एकेन। कर्मणा। शत्रुभ्यो धनम्। लभसे[25]। जायमानस्यै-

---

१. वेनस्यम् P. पुंसो भावः पौंस्यं वीर्यमिति यावत् Sy.
२. अत्मानो P.
३. ०रुन्धानं M. निरुन्धानः D. रोधस्वत्यो नद्यः Sy.
४. ०मानः P.
५. विश्वेत्—'सुपां सुलुक्०' इति जस आकारः। सर्वा एव Sy.
६. कृत्नवे कर्मणां कर्त्रे इन्द्राय Sy.
७. अनु तद्वीर्यमनुवर्तन्ते Sy.
८. ०ददः P. हविर्लक्षणमन्नं यजमानाः प्रयच्छन्ति Sy.
९. सर्वे जना धारयन्ति। तथा च मन्त्रः—'इन्द्राय द्याव ओषधीरुतापो रयिं रक्षन्ति जीरयो वनानि' (RV. 3. 51. 5.) इति Sy.
१०. षट् षट्संख्याका उर्वीः, ताश्च द्यौश्च पृथिवी चाहश्च रात्रिश्चापश्चौषधयश्च इत्येवंरूपाः Sy.
११. ०स्तब्ध्यात् M. and P. त्वा नियमितवानसि Sy.
१२. विधार० P. विस्तीर्णाः Sy.
१३. कृष्टिः M. and P. सम्यक् पश्यन्तीति सन्दृशो जनाः, पञ्च जनान् Sy.
१४. पर्य्यभ० P. परि सर्वतः Sy.
१५. बच्च P. अभवः, भवसि Sy.
१६. P. reads भवा० for सर्वं पा०
१७. परः पारयिता पालयिता वा Sy.
१८. त्व P.
१९. VM. ignores सः। असि and उक्थ्यः।
२०. सुप्राचाच० P.
२१. M. omits सर्व ॥ सुष्ठु प्रवचनीयं सर्वैः श्लाघनीयमित्यर्थः Sy.
२२. हे बलवन्! Sy.
२३. वीर्यं सामर्थ्यम् Sy.
२४. य P.
२५. शत्रूणां धनं लभसे यद्वा तदीयं धनं स्तोतृन् प्रापयसीति यत्तत्प्रवाच्यम्। 'विद्लृ लाभे' तुदादिः स्वरितेत् Sy.

यस्य[1] । अरिच्यन्ते[2] । अन्नानि[3] । बलवतस्तव[4][5] । यानि[6] । त्वम् । कृतवान्, असि, आहृतवान् । असि शत्रुभ्यः सर्वम् । इन्द्र ! सर्वदा[7] । स्तुत्यः[8] ।

**अरंमयः सरंपसस्तराय कं तुर्वीतये च वय्याय च स्रुतिम् ।**
**नीचा सन्तमुदंनयः परावृजं प्रान्धं श्रोणं श्रवयन्त्सास्युक्थ्यः ॥१२॥**

अरमयः । अरमयः[9] । सरणशीलवेगः[10] । सुखम्[11] । तरणाय । उदकमध्येऽसुरैः[12] प्रक्षिप्ताय तुर्वीतये[13] । च । वय्याय[14] । च । स्रुतिमुदकम्[15] । कुब्जत्वात्[16] पृथिव्यामेव वर्तमानम् । परावृजम्[17] । आमोदमनयः[18] । प्रकर्षेण ।[19]...श्रवयन्[20] । अन्धम्[21] । पङ्गुं[21] च तमिति[22] ।

---

१. जातूष्ठिरस्य । एतन्नामकः कश्चित् तस्य । यद्वा जातु कदाचित् सर्वदा स्थिरस्य सहस्वतो बलवतो यज्ञादेः कर्मणः सम्बन्धि वयः हविर्लक्षणमन्नं प्रविन्दसे इति समन्वयः Sy.

२. प्र च्य० P.

३. हानि P.

४. बलवतो यज्ञादेः कर्मणः सम्बन्धि Sy.

५. ०वतस्त M. वतस्तान्व P.

६. यानीमान्यन्यानि Sy.

७. सर्वाणि कर्माणि Sy.

८. स्तुत्वा M. सर्वैः प्रशंसनीयो भवसि Sy.

९. Omitted by M. अक्रीडयः Sy.

१०. ०शीलावे० P. सरणमपः कर्म यासां ताः सरपसः, शकन्ध्वादित्वात् पररूपत्वम् । ता अपः Sy.

११. सुगम् P. सुखेन Sy.

१२. P. omits the whole of the commentary of this stanza after उ of उदक० ।

१३. तुर्वीतिर्नाम कश्चिद्राजर्षिः, तस्मै Sy.

१४. पर्याय M. वय्यो नाम कश्चित्तस्मै Sy.

१५. श्रुति० M. स्रुति सरणं प्रत्यरमयः । तौ हि जलपूर्णां महानदीं दृष्ट्वा तरीतुमसमर्थावास्ताम् । तौ च त्वया तारितौ Sy.

१६. VM. seems to explain नीचा सन्तम् together as कुब्ज . . . मानम्॥ नीचा नीचं सन्तम् Sy.

१७. ०वृजन् M. परितः पापानि वृणक्ति वहतीति परावृक् कश्चिदृषिः । तम् । अप्सु मग्नम् Sy.

१८. ०दं न० M. आपद्भ्य ऊर्ध्वं नीतवानसि Sy.

१९. This part of the commentary is missing in MSS.

२०. आत्मानं कीर्तिमन्तं कुर्वन् उदनय इति समन्वयः Sy.

२१. अन्धं सन्तं पङ्गु सन्तं चक्षुर्दानादपङ्गुकरणाच्चोदनयः Sy.

२२. VM. omits उत् । सः । असि and उक्थ्यः ।

अस्मभ्यं तद्वसो दानाय राधः समर्थयस्व बहु ते वसव्यम् ।
इन्द्र यच्चित्रं श्रवस्या अनु द्यून्बृहद्वदेम विदथे सुवीराः ॥१३॥

अस्मभ्यं[2] तत् । अस्मभ्यम् । तत् । हे वासयितः[3] ! दानाय । धनम्[4] । सङ्क्रमय प्रेरय[5] । बहु । ते । धनम्[6] । इन्द्र ! यदि । चित्रम्[7] अन्नम् । दिवसेषु[8] । ऋच्छतीति[9] ।[10]

II. 14.

अध्वर्यवो भरतेन्द्राय सोममामत्रेभिः सिञ्चता मद्यमन्धः ।
कामी हि वीरः सदमस्य पीतिं जुहोत वृष्णे तदिदेष वष्टि ॥१॥

अध्वर्यवः[11] । अध्वर्यवः[12] । सोमम्[13] । इन्द्राय[14] । भरत[15] । आसिञ्चत[16] चाग्नौ[17] ।

---

१. P. omits the whole of the commentary of this stanza.

२. अस्मभ्यं स्तोतृभ्यः Sy. ३. वसो ! सर्वस्य वासक ! वसुमन् ! वा Sy.

४. उपलक्षणमेतत् । भोगाय च Sy.

५. देहि अस्मान् सङ्क्रमयेत्यर्थः । 'अर्थ याचने' चुरादिरदन्त आत्मनेपदी Sy.

६. वस्वेव वसव्यम् । वस्वादित्वात्स्वार्थिको यत् । तादृशं प्रभूतं धनमस्ति खलु Sy.

७. चायनीयम् Sy.

८. अनु द्यून्=अन्वहम् । 'कालाध्वनोरत्यन्त०' इति द्वितीया Sy.

९. श्रवस्याः भोग्यमिच्छेः । अन्तर्णीतण्यर्थत्वाद् अकर्मकत्वम् । यथा रोदितीति । सत्यम् । द्वे ह्यत्र कर्मणी उद्देश्यकर्म च विधेयकर्म च । विधेयकर्मान्तर्भूतम् । उद्देश्यकर्मणा सकर्मको भविष्यति । यथा 'माणवकं पुत्रीयति' (Pa. 3.1.8.2.) इति भाष्ये उदाहृतम् । श्रवःशब्दाच्छन्दसि परेच्छायां क्यच् । तदन्तस्य लेटचाडागमे रूपम् Sy.

१०. VM. ignores अनु । बृहत् । वदेम । विदथे and सुवीराः ॥ सुवीराः कल्याणपुत्रपौत्राः सन्तो वयं विदथे अस्मिन्यज्ञे बृहत् प्रभूतं शस्त्रादिकं वाक्यं वदेम Sy.

११. 'अध्वर्यवो भरत' इति द्वादशर्चं तृतीयं सूक्तं गार्त्समदं त्रैष्टुभमैन्द्रम् । 'अध्वर्यवो द्वादश' (KSA.14.14.p.13.) इत्यनुक्रान्तम् । सूक्तविनियोगो लैङ्गिकः । अतिरात्रे प्रथमे पर्याये होतुः शस्त्रयाज्या 'अध्वर्यवः' इत्येषा । 'अध्वर्यवो भरतेन्द्राय सोममिति याज्या' (ASS. 6. 4.) इति सूत्रितम् Sy. १२. Omitted in P.

१३. वः P. गृत्समदो ब्रूते—अध्वरस्य नेतारः । अध्वरं यजमानायेच्छन्तः 'कव्यध्वरपृतनस्यर्चि लोपः' इत्यकारलोपः । हे अध्वर्यवः ! Sy. अध्वर्युरध्वरयुरध्वरं युनक्त्यध्वरस्य नेताध्वरं कामयते N. 1.8.

१४. देवाय Sy. इन्द्रार्थम् SKN., Dur.

१५. हविर्धानादुत्तरवेदिं प्रति हरत । आमन्त्रितस्याविद्यमानत्वादनिघातः Sy. हरत हविर्धानादुत्तरवेदिदेशम् SKN. प्रापयत...एतस्माद्धविर्धानादुत्तरवेदिम् । ...अथवा भरत धारयताग्नेरुपरि Dur.

१६. अग्नौ प्रक्षिपत Sy. अग्नौ जुहुतेत्यर्थः SKN. वषट्कारे प्राप्ते, आसिञ्चत Dur. आ सिञ्चतामत्रैर्मदनीयमन्धः । अमत्रं पात्रम् । अमा अस्मिन्मदन्ति N.5.1.

१७. वानग्नौ P. तस्मिन्नग्नौ Dur.

पात्रैः[1] । मदकरम्[2] । तदन्नम्[3] । सदैव[4] । हि[5] । असौ[6] । अस्य[7] । पानम्[8] । कामयते[9] । ततोऽस्मै[10] । जुहोत[11] । तत्[12] । एव[13] । असौ[14] । अन्नं कामयते[15] ।

अध्व॑र्यवो॒ यो अ॒पो व॑व्रि॒वांसं॑ वृ॒त्रं ज॒घाना॒शन्ये॑व वृ॒क्षम् ।
तस्मा॑ ए॒तं भ॑रत तद्व॒शाय॑ँ ए॒ष इन्द्रो॑ अर्हति पी॒तिम॑स्य ॥२॥

अध्वर्यवः । अध्वर्यवः ! यः । उदकानि । वारयन्तम्[16] । वृत्रम्[17] । अशन्या[18] । वृक्षमिव[19] । हतवान्[20] । तस्मै । एतं सोमम् । भरत[21] । तत्कामाय[22] । सः[23] । अयम् । अस्य । पानम् । अर्हति ।

---

१. अमा सहावन्त्यत्र होत्रादय इत्यमत्राणि चमसाः तैः Sy. हुत्वा आ अमत्रेभिः पात्रैश्चमसाख्यैः SKN. ततश्चैनम्. . . पात्रैरेभिः सोमचमसैः Dur.

२. मदरत् P. मदनीयमेतत् SKN. मदनीयम् Dur.

३. सोमलक्षणमन्नम् Sy. एतत्सोमाख्यमन्धः. . .एवमत्र दानसम्बन्धादन्धःशब्दोऽन्नार्थं उपपद्यते Dur.

४. नित्यकालमेव Dur.

५. यस्मात् SKN. कस्मात्पुनरेवमहं ब्रवीमि ? इतो यस्मात् Dur.

६. अपसात् P. It seems to be the explanation of वीरः ॥ स इन्द्रः Sy. इन्द्रः SKN., Dur.

७. अन्य P. सोमस्य Sy., Dur.

८. पानं प्रति Sy. पानमित्यर्थः Dur.

९. कामयमानः Sy. कामयत एव Dur.

१०. अस्मै seems to be the explanation of वृष्णे ॥ तस्माद् वर्षित्रे इन्द्राय Sy. वर्षित्रे सवनीयादिहविः SKN. तस्मात्कारणात्. . .तस्मै वृष्णे वर्षित्र इन्द्राय, एतं सोमम् Dur.

११. It is a vedic form. In classical sanskrit, the form would be जुहुत ॥ जुहोत—'हु दानादनयोः' । लोटि 'तप्तनप्तनथनाश्च' इति तबादेशः Sy. जुहुत च SKN.

१२. M. reads तन्देवोऽसौ and P. reads तन्देवो सौ for तत् । एव । असौ ॥ तदपि SKN. किमेतमेव केवलं सोममेष कामयते ? नेत्युच्यते । . . .तत्तत्सोमप्रदानमेव Dur.

१३. इच्छशब्दोऽत्राप्यर्थे SKN. तदित् तदेव सोमद्रव्यम् Sy.

१४. इन्द्रः Sy., Dur. वृषा SKN.

१५. ०मयेते M. कामयत एव SKN. कामयत इत्यर्थः । न केवलं रात्रिपर्यायेष्वित्यर्थः । तस्मादासिञ्चतेमं सोमं मा विलम्बध्वमित्यभिप्रायः Dur. N. 5.1., SKN. II. 285.

१६. पारय० M. आवृत्य स्थितम् Sy.

१७. वृणोत्याकाशमिति वृत्रो मेघस्तम् Sy.

१८. यथा वैद्युताग्निना Sy.

१९. वृक्षं दहति तद्वत् Sy.

२०. वज्रेण हतवान् Sy.

२१. उत्तरवेदिं प्रति हरत Sy.

२२. तत्कामय M. तं कामय P. सोमकामाय Sy.

२३. P. reads सोमस्य for सः । अयम् । अस्य ॥ सः seems to refer to इन्द्रः ।

अध्वर्यवो यो दृभीकं जघान यो गा उदाजदप हि वलं वः ।
तस्मा एतमन्तरिक्षे न वातमिन्द्रं सोमैरोर्णुत जूर्न वस्त्रैः ॥३॥

अध्वर्यवः । दृभीकमसुरम्[1] । यः । हतवान् । पणिभिरपहृता गाश्च[2] । उदाजत्[3] । अपावृणोच्च[4] । मेघरूपं वलमसुरं[5] गवामानयनाय[6] । तस्मै[7] । एतं[8] सोमं विसृजत । अन्तरिक्षे । इव । वायुम् । इन्द्रम् । सोमैः[9] । आच्छादयत[10] । जीर्णम् । इव[11] । वस्त्रैः शीतार्तम् ।[12]

अध्वर्यवो य उरणं जघान नव चख्वांसं नवतिं च बाहून् ।
यो अर्बुदमव नीचा बबाधे तमिन्द्रं सोमस्य भृथे हिनोत ॥४॥

अध्वर्यवः । अध्वर्यवः ! यः[13] । उरणमसुरम्[14] । जघान । नव[15] । नवतिम्[16] । च । आत्मनो बाहून् । युद्धाय[16] सम्पश्यन्तम् । यः । अर्बुदम्[17] । नीचैरेव[18] । अववबाधे[19] । तम्[20] । इन्द्रम् । अभिगच्छत[21] । सोमस्य । सम्भरणे सति[22] ।

---

१. सर्वान् विदारयति भियं करोतीति दृभीको नामासुरस्तम् Sy.

२. पाणि M. यश्च बलासुरेण निरुद्धा गाः Sy.

३. उदराजन् M. उवाजन् P. निरगमयत् Sy.

४. अपवावृ० M. आवावृ P. हिंसितवानित्यर्थः । वः—वृणोतेर्लुङि 'मन्त्रे घस०' इत्यादिना च्लेर्लुक् । हल्ङ्यादिना तिपो लोपः Sy.

५. बलम० M. and P.

६. P. omits the rest of the commentary of this stanza after ०नाय ।

७. इन्द्राय Sy.

८. एकम् M.

९. धाराभिर्व्याप्तं कुरुत Sy.

१०. 'ऊर्णुञ् आच्छादने', आदादिकः । लोटि रूपम् Sy.

११. जीर्णो यथा वस्त्रैरङ्गमाच्छादयति तद्वत् Sy.

१२. VM. ignores अध्वर्यवः । यः । (before गाः) and हि ।

१३. इन्द्रः Sy.

१४. उरणमेतन्नामकमसुरम् Sy.

१५. एकोनशतम् Sy.

१६. P. omits the commentary on this stanza up to युद्धाय ॥ सर्वस्य दर्शयन्तम् । चख्वांसम्—चष्टेरिदं रूपम् । यद्वा खनतेः क्वसौ रूपम् । आत्मनो देहे निखातवन्तम् Sy.

१७. वायुद M. वर्बदन्नि P. एतन्नामकमसुरं च Sy.

१८. अधोमुखं कृत्वा Sy.

१९. बबाधे P.

२०. एनम् Sy.

२१. हिनोत वर्धयत यद्वा स्तोत्रैः प्रीणयत । 'हि गतिवृद्धयोः' स्वादिः Sy.

२२. सोमस्य भृथे सोमं बिभ्रति पात्रे । यद्वा सोमस्य भृथे भरणे सम्पादने सति Sy.

अध्वर्यवो यः स्वश्नं जघान यः शुष्णमशुषं यो व्यंसम् ।
यः पिप्रुं नमुचिं यो रुधिक्रां तस्मा इन्द्रायान्धसो जुहोत ॥५॥

अध्वर्यवः । स्वयं[1] न शुष्यति । शोषयति चान्यान्[2] शुष्णः[3] । तानेवमादीन्[4] । सुष्ठु[5] ।
जघानेति ।[6]

अध्वर्यवो यः शतं शम्बरस्य पुरो बिभेदाश्मनेव पूर्वीः ।
यो वर्चिनः शतमिन्द्रः सहस्रमपावपद्भरता सोममस्मै ॥६॥

अध्वर्यवः[7] । यः[8] । शम्बरस्य[9] । शतम् । पूर्वीः[10] । पुरः[11] । अश्मनेव[12] बीजादीन्[13] । अनायासेन
विभेद[14] । तथा वर्चिनश्चासुरस्य[15] । शतम्[16] । सहस्रं[16] च वीरान्[16] । साकमपावपत्[17] पराङ्मुखान्

---

१. अयं M. अशुषम्—केनाप्यशोषणीयम् Sy. २. तान्य P.

३. जुष्णः P. असुरम् Sy.

४. Here VM. seems to refer to the words अश्नम् । व्यंसम् । प्रिप्रुम् । नमुचिम् and रुधिक्राम् ॥ अश्नाति भक्षयति प्राणिजातमिति । यद्वा अश्नुते स्वतेजसा सर्वं व्याप्नोत्यश्नः कश्चिदसुरस्तम्। व्यंसम् अंसहीनं कृत्वा। पिप्रुं तेजसा जगद् व्याप्य वर्तमानमेतन्नामकमसुरम्। नमुचिम्—असुरम्। तैत्तिरीयके 'नमुचिमसुरं नालभत'इति प्रकृत्य 'फेनेन शिर उदवर्तयत्' (TB. 1.7.1.5–6.) इत्यन्तेन वाक्यसन्दर्भेण नमुचिवधः प्रपञ्चितः । तथा मन्त्रश्च 'अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः' (RV. 8.14.13.) इति। रुधिक्रामेतन्नामकमसुरम् Sy.

५. सु P.

६. VM. ignores अध्वर्यवः । यः । तस्मै । इन्द्राय । अन्धसः । जुहोत ॥ तस्मै इन्द्राय अन्धसो हविर्लक्षणान्यन्नानि जुहोत जुहुत Sy.

७. गृत्समदोऽध्वर्युं प्रति त्रिष्टुभा इन्द्रं तुष्टाव । "यात ऊतीयं (च बार्हतरायन्तरबृहद्रथन्तरे हि पुरस्तात्कृते भवतः सजनीयं) चाध्वर्यवो भरतेन्द्राय सोममिति" चेति महाव्रते विनियोगः (SA. 2. 16.) DDN.

८. हे अध्वर्यवः ! यः इन्द्रः Sy., DDN.

९. मायाविनोऽसुरस्य Sy., DDN.

१०. पुरातनीः Sy.

११. पुरे P. शतं पुरः पुरीः Sy., DDN.

१२. स्मनेव P. अश्मसदृशेन वज्रेण Sy., DDN. १३. बीजा० P.

१४. हतवान् DDN.

१५. वलीन० P. 'वर्च दीप्तौ'। 'गमेरिनिः' (Uṇādi 4.446.) इति विधीयमान इनिर्बहुलवचनादस्माद्भवति। यद्वा नामैतत् । तस्यासुरस्य Sy. यश्चेन्द्रो वर्चिनोऽसुरस्यानिष्टवक्तुः DDN.

१६. एतत्संख्याकानपरिमितान् पुत्रान् Sy. शतं सहस्रम् एतत्संख्याकान्, अपरिमितान् पुत्रभृत्यादिवीरान् DDN.

१७. सातमपापवत् M. साकमवावत् P. युगपदेव भूम्यामपातयत् Sy., DDN.

कृतवानिति[1]।

अध्वर्यवो यः शतमा सहस्रं भूम्या उपस्थेऽवपज्जघन्वान् ।
कुत्सस्यायोरतिथिग्वस्य वीरान्न्यवृणग्भरता सोममस्मै ॥७॥

अध्वर्यवः । यः[2]। शतम् । सहस्रं च वीरान्[3] युद्धेषु । भूम्याः । उपस्थे[4]। बीजानिव[5] हत्वा । निवपति[6]। कुत्सादीनां[7] च । शत्रून्[8]। निजघानेति[9]।[10]

अध्वर्यवो यन्नरः कामयाध्वे श्रुष्टी वहन्तो नशथा तदिन्द्रे ।
गभस्तिपूतं भरत श्रुतायेन्द्राय सोमं यज्यवो जुहोत ॥८॥

अध्वर्यवः । हे नेतारः[11]! अध्वर्यवः ! यत्[12]। यूयं कामयध्वे[13]। तत्[14]। क्षिप्रम् । इन्द्राय

---

१. VM. ignores अध्वर्यवः । यः । (of third verse) इन्द्रः । भरत । सोमम् । अस्मै ॥ अस्मै इन्द्राय सोमं भरत हरत । 'हृग्रहोर्भश्छन्दसि' (VPa. 3.1.84.) इति भत्वम् । भरता सोममिति 'मृलयद्भूषां वसुवित्तमम्' (RPR.7.19.) इति प्लुतिः DDN. तथा च मन्त्रवर्णः—'शतं वर्चिनः सहस्रं च साकं हथो अप्रत्यसुरस्य वीरान्' (RV. 7.99.5.) इति Sy. तथा निगमाः—
उत दासस्य वर्चिनः सहस्राणि शतावधीः (RV.4.30.15.) शतं वर्चिनः सहस्रं च साकम् (RV. 7.99.5.)
अहन्दासा वृषभो वस्नयन्तोदव्रजे वर्चिनं शम्बरञ्च (RV. 6.47.21.) इत्येवमादयः DDN.

२. Omitted in M.
इन्द्रः Sy.

३. असुरान् Sy.

४. उत्सङ्गे Sy.

५. जघन्वान् पूर्वं शत्रून् हतवान् Sy.

६. पतति P. एकैकेन प्रकारेणापातयत् Sy.

७. M. and P. read न before कुत्सादीनाम् ॥ आदि refers to the words आयोः । अतिथिग्वस्य ॥
कुत्सस्यैतन्नामकस्य राजर्षेः । आयोः पौरूरवसस्य राजर्षेः । अतिथिग्वस्य दिवोदासस्य Sy.

८. एतेषां त्रयाणां वीरानभिगन्तॄन्प्रतिद्वन्द्विनः शुष्णादीनसुरान् Sy.

९. वृणक्तिर्हिंसाकर्मा । अवधीत् । तथा च मन्त्रवर्णः—'त्वं कुत्सं शुष्णहत्येष्वाविथारन्धयोऽतिथिग्वाय शम्बरम्' (RV. 1.51.6.) इति Sy.

१०. VM. ignores आ । अध्वर्यवः । आयोः । अतिथिग्वस्य । भरत । सोमम् and अस्मै ।

११. नता० P.
कर्मणां नेतारः ! Sy.

१२. अभिलषितमर्थम् Sy.

१३. कामयतेर्लेट्याडागमः Sy.

१४. तदभिलषितं फलम् Sy.

सोमं वहन्तः[1] । तस्मिन्[2] । प्राप्नुत[3] । बाहुपूतम्[4] । सोमम् । विश्रुताय[5] । इन्द्राय । भरत[6] । जुहोत[7] च । हे यष्टारः[8] !

**अध्वर्यवः कर्तना श्रुष्टिमस्मै वने निपूतं वन उन्नयध्वम् ।**
**जुषाणो हस्त्यमभि वावशे व इन्द्राय सोमं मदिरं जुहोत ॥९॥**

अध्वर्यवः । अस्मै[9] । आशुव्यापिनं सोमम्[10] । कुरुत[11] । वृक्षविकारे कलशे[12] । पूतम्[13] । पात्रे[14] । उन्नयध्वम्[15] । हस्तस्थितं[16] सोमम् । सेवमानः[17] । तमभिकामयते[18] । युष्मदयमिन्द्रः[19] ? ततोऽस्मै[20] । मदकरम् । सोमम् । जुहोतेति[21] ।[22]

---

१. वह् P.
प्रापयन्तो यूयम् Sy.
२. तस्मिन् stands for इन्द्रे ।
३. प्राप्सुवत M.
प्राप्नुवत् P.
४. बाहुभूतम् M. त्वाभूतम् P. हस्ताभ्यां मार्जनदोहनादिभिः शोधितम् Sy.
५. लोके प्रसिद्धाय Sy.
६. उत्तरवेदिं प्रति हरत Sy.
७. जुहुत । अग्नौ प्रक्षिपत Sy.
८. यागं कुर्वाणाः हे अध्वर्यवः ! Sy.
९. इन्द्राय, सोमम् Sy. अस्येन्द्रस्यार्थाय संस्कृत्य SKN.
१०. सुखकरम् Sy.
सुखनामस्वपठितोऽपि श्रुष्टिशब्दः सामर्थ्यात् सुखवचनः । सुखम्, कम् ? सोमम् SKN.
११. करोतेर्लोटि 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'तप्तनप्तनथनाश्च' इति तनबादेशः । आमन्त्रितस्याविद्यमानत्वान्न निघातः Sy.
शुद्धोऽपि करोतिरत्र सम्पूर्वार्थे । संस्कुरुत SKN.
१२. वने सम्भजनीये यद्वा वने तद्विकारे चमसे Sy. वनं वृक्षाः । अथवा तद्धितेनेत्येवमयं वनशब्दस्तद्विकारे द्रष्टव्यः । वनविकारभूते द्रोणकलशे SKN.
१३. आप्यायनेन शोधितम् यद्वा दशापवित्रेण शोधितं सोमम् Sy. नियमेन शास्त्रलक्षणे(न) तत्पूतम् SKN.
१४. उदके, चमसे वा Sy. वनविकारभूत एव ग्रहचमसादौ SKN.
१५. ऊर्ध्वं नयत Sy.
१६. हस्ताभ्यामभिषुतं सोमम् Sy.
हस्ते भवं सोमम् SKN.
१७. प्रीयमाणः स इन्द्रः Sy. जुषाणः प्रीयमाणः SKN.
१८. 'वश कान्तौ' यङ्लुगन्तस्य लटि व्यत्ययेनात्मनेपदम् । 'लोपस्त आत्मनेपदेषु' इति तलोपः Sy. 'वश कान्तौ' अभिकामयत इन्द्रः SKN.
१९. वः युष्माकम् Sy. कस्य हस्त्यम् ? उच्यते, युष्माकम् SKN.
२०. एतज्ज्ञात्वा इन्द्राय SKN.
२१. इन्द्रोद्देशेनाग्नौ प्रक्षिपत Sy. जुहोत, मा विलम्बध्वम् SKN.
N. 4.7., SKN. II. 214.
२२. VM. ignores अध्वर्यवः ।

अध्वर्यवः पयसोधर्यथा गोः सोमेभिरीं पृणता भोजमिन्द्रम् ।
वेदाहमस्य निभृतं म एतद्दित्सन्तं भूयो यजतश्चिकेत ॥१०॥

अध्वर्यवः । यथा । गोः । ऊधः[१] । पयसा मनुष्यान् पूरयत्यवम्[२] । सोमैः । इन्द्रम् । पूरयत । दातारम्[३] । अहम् । अस्य । स्वभावं जानामि । निभृतम्[४] । मम[५] । एतत्, इतः[६] पूर्वं न वः कथितम् । दातुमिच्छन्तं[७] यजमानम् । यष्टव्यः । बहुतरम् । जानाति[८] ।

अध्वर्यवो यो दिव्यस्य वस्वो यः पार्थिवस्य क्षम्यस्य राजा ।
तमूर्दरं न पृणता यवेनेन्द्रं सोमेभिस्तदपो वो अस्तु ॥११॥

अध्वर्यवः । पृथिवीत्यन्तरिक्षनाम[९] । क्षमेति पृथिव्याः[१०] । तम्[११] । इन्द्रम् । कुसूलम्[१२] । इव । यवेन । सोमैः । पूरयत । तत्[१३] । भवतु । भवताम्[१४] । कर्मेति[१५] ।

---

१. उधः M.

२. पयसा पूर्णं तद्वत् Sy.

३. दाताम् M. फलस्य दातारं रक्षितारं च Sy.

४. निभृत M. गूढं सुखसाधनस्वभावम् Sy.

५. मम् P.

६. इति D.P. इति पूर्वं न परस्मै कथितं तथापि युष्मभ्यं ब्रवीमीत्येवम् Sy.

७. सोमं दातुमिच्छन्तं यजमानम् । दित्सन्तम्-'डुदाञ् दाने' इच्छायां सन् । 'सनिमीमाघु०' इत्याकारस्य इसादेशः । 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः । सः स्यार्धधातुके' इति सकारस्य तत्वम् Sy.

८. VM. ignores अध्वर्यवः and ईम् ॥ ईम् एनम् Sy.

९. पार्थिवस्य—पृथिवीशब्देन विस्तीर्णमन्तरिक्षमुच्यते (Ngh. 1.3.) । तत्रत्यं धनं पार्थिवम् । तस्य Sy.

१०. क्षमा भूमिः (Ngh. 1.1.) । तत्रत्यं धनं क्षम्यम्, तस्य च राजा भवति Sy.

११. एवंविधम् Sy.

१२. तत्र दृष्टान्तः । ऊर्दरं न । ऊर्ध्वं दीर्णमूर्दरं कुसूलम् यथा यवेन तत्पूर्णं तद्वदिन्द्रं पूरयतेति Sy.

१३. तादृशं सोमादिनेन्द्रोदरपूरणलक्षणम् Sy.

१४. युष्माकम् Sy.

१५. VM. ignores अध्वर्यवः । यः । दिव्यस्य । वस्वः । यः and राजा ॥ Sy.'s explanation of these words is the following:—हे अध्वर्यवः ! य इन्द्रः । दिव्यस्य द्युलोकार्हस्य । वस्वः वसुनः । राजा भवति ।

अस्मभ्यं तद्वसो दानाय राधः समर्थयस्व बहु ते वसव्यम् ।
इन्द्र यच्चित्रं श्रवस्या अनु द्यून्बृहद्वदेम विदथे सुवीराः ॥१२॥

[अस्मभ्यं तत् । पू०[1] व्या०[2]][3]

II. 15.

प्र घा न्वस्य महतो महानि सत्या सत्यस्य करणानि वोचम् ।
त्रिकद्रुकेष्वपिबत्सुतस्यास्य मदे अहिमिन्द्रो जघान ॥१॥

प्र[4] घा न्वस्य । इदानीम्[5] । अस्य[6] । महतः[7] । महानि[8] । कर्माणि[9] । अहं प्रवोचम्[10] । अमायस्य[11] । तत्रैकं कर्म—त्रिकद्रुकेषु[12] । सोमम्[13] । अपिबदिति । तथा सोमस्य[14] । मदे[15] । अहिं[16] च । अयम्[17] । हतवानिति[18] ।[19]

---

१. It is an abbreviation for पूर्वम् ।

२. It is an abbreviation for व्याख्याता ।

३. The line अस्मभ्यं तत् । पू० व्या० is found in M. only. It appears to be a remark of the scribe.
This stanza has already been explained. See RV. 2. 13.13.

४. 'प्र घा न्वस्य' इति दशर्चं चतुर्थं सूक्तं गार्त्समदं त्रैष्टुभमैन्द्रम् । अत्रानुक्रमणिका–'प्र घ दश' (KSA. 14. 15. p. 13.) इति । दशरात्रे षष्ठेऽहनि निष्केवल्ये त्रीणि सूक्तानि । तत्रेदं द्वितीयम् । 'षष्ठस्य' इति खण्डे सूत्रितम् 'एन्द्र याह्युप नः प्र घा न्वस्याभूरेक इति निष्केवल्यम्' (ASS.8.1.) इति । त्र्येकमामके निष्केवल्ये 'प्र घा न्वस्य' इत्येषा सूक्तमुखीया । उशनः स्तोमे सूत्रितम् 'त्र्यर्यमा मनुषो देवताता प्र घा न्वस्य महतो महानि' (ASS. 9. 5.) इति . . . गृत्समदो ब्रूते Sy.

५. नु अद्य Sy. ६. इन्द्रस्य Sy.

७. बलवतः Sy. ८. महनि P. महान्ति Sy. ९. कमाणि P. अस्मिन् सूक्ते वक्ष्यमाणानि कर्माणि Sy.

१०. प्रकर्षेण ब्रवीमि । वोचम्–'वच परिभाषणे' 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लुङि 'अस्यतिवक्तिख्यातिभ्योऽङ्' 'वच उम्' Sy. ११. सत्यसङ्कल्पस्य Sy.

१२. कानि तानि P. उच्यन्ते ज्योतिर्गौरायुरित्येवंरूपेष्वाभिप्लविकेष्वहःसु Sy.

१३. अभिषुतं सोमम् Sy.

१४. सोम M. ततः पीतस्य अस्य सोमस्य Sy.

१५. ममदे P. हर्षे सञ्जाते सति Sy.

१६. हि P. वृत्रमसुरम् Sy.

१७. अय P. इन्द्रः Sy. १८. ०वाति P.

१९. VM. ignores घ and सत्या ॥ घ इति प्रसिद्धौ । सत्या सत्यानि यथार्थानि Sy.

**अवंशे द्यामस्तभायद्बृहन्तमा रोदसी अपृणदन्तरिक्षम् ।**
**स धारयत्पृथिवीं पप्रथच्च सोमस्य ता मद इन्द्रश्चकार ॥२॥**

अवंशे । वंशं विनैव[1] । महान्तम्[2] । दिवम्[3] । अस्तभ्नात्[4] । आपूरयच्च[5] तेजसा । द्यावापृथिवी[6] । अन्तरिक्षं च । तथा । अनालम्बनां[7] पृथिवीम्[8] । अधारयत्[9] । विस्तीर्णां[10] चक्रे । तान्येतानि कर्माणि । सोमस्य पीतस्य । मदे[11]ऽपि[12] । करोति[13] ।

**सद्मेव प्राचो वि मिमाय मानैर्वज्रेण खान्यतृणन्नदीनाम् ।**
**वृथासृजत्पथिभिर्दीर्घयाथैः सोमस्य ता मद इन्द्रश्चकार ॥३॥**

सद्मेव[14] । यथा गृहान्[15]ृजून् । मानदण्डैः[16] । विमितवान्[17] । एवं[18] प्राचः[19] सिन्धून्[20] मानदण्डैर्विममे[21] । तथा वृत्रेण परिवृतानि नदीनाम् । द्वाराणि[22] । वज्रेण । तृण्णवान्[23] । अथ ता नदीरनायासेन । दीर्घगमनैः[24] । पथिभिः[25] । असृजदिति[26] ।[27]

---

१. ०नैवं P. आकाशे Sy.
२. ०हान्त P. महत् Sy.
३. दवम् P. द्योतमानं सूर्यं द्युलोकं वा Sy.
४. इन्द्रोऽस्तभ्नात् । अनवलम्बनस्य तस्यावस्थापनमकरोदित्यर्थः । अस्तम्भायत्—स्तम्भु इति सौत्रो धातुः क्र्यादिः । लङि 'व्यत्ययो बहुलम्' इत्यहावपि शायजादेशः Sy.
५. स्वतेजसा पूरितवान् Sy.
६. द्यावापृथिव्यौ च Sy.
७. अनल० P. विस्तीर्णाम् Sy.
८. वृवीम् P. भूमिम् Sy.
९. ०धारत् P.
१०. एनां भूमिमप्रथयत् । पप्रथत्–'प्रथ सङ्ख्याने' ण्यन्तस्य लुङि चङि रूपम् 'चङ्यन्यतरस्याम्' इति मध्योदात्तत्वम् Sy.
११. हर्षे सञ्जाते सति Sy.
१२. अप M. च P.
१३. VM. ignores सः and इन्द्रः ॥
१४. P. adds सद्मवं after सद्मेव ।
१५. यज्ञगृहान् Sy.
१६. मानैः षट्त्रिंशत्प्रक्रमप्राचीत्येवंरूपैः परिमाणैः Sy.
१७. ०विदितमत M. ०विमित्रतत P. इन्द्रो विशेषेण निर्मितवान् Sy.
१८. एव M. यथा...प्राक्प्रवणान् कुर्वन्ति तद्वत् Sy. १९. प्राङ्मुखान् Sy.
२०. सिन्धून् लोकान्वानृजून्वा Sy.
२१. विमते M.
२२. तथा निर्गमनद्वाराणि Sy.
२३. अखनत् । अतृणत्–'तृदि हिंसानादरयोः' रुधादिः । लङ् । तथा च मन्त्रः—'इन्द्रो अस्माँ अरदद्वज्रबाहुः,' (RV. 3.33.6.) इति Sy.
२४. बहुकालं गन्तव्यैः Sy.
२५. मार्गैः Sy. २६. सृष्टवान् Sy.
२७. VM. ignores सोमस्य । ता । मदे । इन्द्रः and चकार ॥ सोमस्य इति सिद्धार्थं इति Sy.

स प्रवो॒ळ्हॄन्प॑रि॒गत्या॑ द॒भीते॒र्विश्व॑मधा॒गायु॑धमि॒द्धे अ॒ग्नौ ।
सं गोभि॒रश्वै॑रसृज॒द्रथे॑भि॒ः सोम॑स्य॒ ता मद॒ इन्द्र॑श्चकार ॥४॥

स[1] प्रवोळ्हॄन्[2]। दभीतेरर्थाय[3]। तद्धनस्य वोढॄनपहर्तॄंश्[4]चोरान्[5]। सर्वतो वेष्टयित्वा[6]। चोराणां[7] सर्वम्। आयुधम्। अग्निमिद्ध्वा[8] तस्मिन्निद्धे[9]। अग्नौ[10]। दग्धवान्[11]। अथ दभीति[12] गवादिभिरात्मीयैः[13]। समसृजदिति[14]।[15]

स ईं॑ म॒हीं धुनि॒मेतो॑ररम्णा॒त्सो अ॑स्ना॒तॄन॑पारयत्स्व॒स्ति ।
त उ॑त्स्नाय॑ र॒यिम॒भि प्र त॑स्थु॒ः सोम॑स्य॒ ता मद॒ इन्द्र॑श्चकार ॥५॥

स[16] ई[17] महीम्। सः[18]। एनान्[19] मनुष्यान्। महतीम्। नदीम्[20]। गन्तुम्[21]। अरमयत्[22]। नदीं प्रवर्तयन्, ततः सोऽयम्। उदकाभावादलब्धस्नानान्[23] तान्। स्वस्ति[24]। समपारयत्। ते च[25]।

---

१. प्राक्किल चुमुरिधुनिप्रभृतयोऽसुरा दभीतेः पुरं संरुध्य परिगृह्य तस्मात्पुराग्निर्गुरिति कथा Sy.

२. ०वोढॄन् M. and P.

३. दभितेरर्त्थाय P. दभीतिर्नाम कश्चिद्राजर्षिः। तस्य Sy.

४. ०हर्तॄं चो० M. प्रवोढॄन्। 'सहिवहोरोदवर्णस्य' इत्योत्वम्। प्रकर्षेण तं दभीतिं वहतस्तानसुरान् Sy.

५. P. reads चोदरात् for चोरान्।

६. मध्येमार्गं परिगत्य Sy.

७. चोरां P.

८. ०मिध्वा M. and P.

९. ०स्मिनिद्धे P. दीप्यमाने Sy.

१०. नौग्नौ P. वह्नौ Sy.

११. ०ग्धावन् P. अधाक्षीत्। अधाक्-दहेर्लुङि 'मन्त्रे घस०' इत्यादिना च्लेर्लुक् Sy.

१२. सभीतिः M. सपीति P. पश्चात्तं दभीतिम् Sy.

१३. ०वाभिदिरात्मीयैः M. आदि refers to अश्वैः and रथेभिः॥ गोभिरश्वै रथेभी रथैश्च Sy.

१४. समम० M. संयोजितवान् Sy.

१५. VM. ignores सः। सोमस्य। ता। मदे। इन्द्रः and चकार॥

१६. प्रतिमूर्तिनाम्न्येकाहे मरुत्वतीये सूक्तमुखीया। 'प्रतिमूर्तिना' इति खण्डे सूत्रितम्—'स ईं महीं धुनिमेतोररम्णात्' (ASS. 9. 8.) इति Sy.

१७. महिम् P.

१८. इन्द्रः Sy.

१९. एनाम् Sy.

२०. नदी P. धुनिम्—धुनोति स्तोतॄणां पापानीति धुनिः परुष्णी नदी ताम् Sy.

२१. गन्त P. ऋषीणां गमनार्थम्। एतोः ईश्वरपदासन्निधानेऽपि तोसुन् प्रत्ययः 'ईश्वरे तोसुन्कसुनौ' (Pa. 3. 4. 13.) Sy.

२२. राम० P. उपाशमयत्। महाजलां नदीमल्पोदकामकरोदित्यर्थः Sy.

२३. ०ब्धस्नान् D. ०ब्धस्तानन्तान् P. स्नातुमशक्तान्, तरणासमर्थानृषीन् Sy.

२४. क्षेमेण Sy.

२५. महर्षयः Sy.

स्नात्वोत्तीर्य[1] । धनम्[2] । अभिप्रतस्थुः[3], अलक्ष्मीविनाशादिति[4] ।

सोदञ्चं सिन्धुमरिणान्महित्वा वज्रेणान उषसः सं पिपेष ।
अजवसो जविनीभिर्विवृश्चन्त्सोमस्य ता मद इन्द्रश्चकार ॥६॥

सोदञ्चम् । सः[6] । महत्त्वेन[7] । प्राङ्मुखं सिन्धुम्[8] । उदङ्मुखम् । करोति[9] । तथोचन्नुषसः[10] । रथम्[11] । आत्मनो गमनाय, वज्रेण । सम्पिनष्टि[12] । जवहीनाः[13] सेनाः[14] । विपरीताभिः[15] । विच्छिन्दन्निति[16][17] ।

स विद्वाँ अपगोहं कनीनामाविर्भवन्नुदतिष्ठत्परावृक् ।
प्रति श्रोणः स्थाद्व्यनगचष्ट सोमस्य ता मद इन्द्रश्चकार ॥७॥

स विद्वान्[18] । सः । जानन्नात्मविषयम् । कन्यकानाम्[19] । अपगोहम्[20], इन्द्रं तुष्टाव, 'पङ्गुं[21] मां कन्यका[22] उपभोगाय नोपतिष्ठन्ति' इति विषादः । अथात्मनः पङ्गुतामिन्द्रप्रसादाद् गतां

---

१. तां नदीमुत्तीर्य यं रयिमपेक्ष्य गच्छन्ति Sy.
२. तं रयिमभिलक्ष्य Sy.
३. प्रतस्थिरे Sy.
४. ०लक्षिवि० P.
५. VM. ignores सोमस्य । ता । मदे । इन्द्रः and चकार ।
६. Omitted in M. इन्द्रः Sy.
७. स्वकीयेन महिम्ना Sy.
८. सिन्धुं प्राञ्चं सन्तम् । सिन्धुशब्दश्छन्दसि पुंल्लिङ्गः Sy.
९. अकरोत् Sy.
१०. उषोदेव्याः Sy.
११. अनः शकटम् Sy.
१२. चूर्णीचकार । एतच्च 'दिवश्चिद्घा दुहितरम्' (RV. 4. 30. 9.) इत्यत्र स्पष्टं वक्ष्यते Sy.
१३. दुर्बलाः Sy.
१४. सेना P.
१५. पिरिताबि P. जवयुक्ताभिः सेनाभिः Sy.
१६. विशेषेण भिन्दन् पिपेषेति समन्वयः । विवृश्चन्–'ओव्रश्चू छेदने' शतरि 'ग्रहिज्या' इति सम्प्रसारणम् Sy.
१७. VM. ignores सोमस्य । ता । मदे । इन्द्रः and चकार ।
१८. पुरा किल कन्यकादश्चक्षुर्हीनं पादहीनं परावृजं जिघृक्षुमृषिं दृष्ट्वाभिदुद्रुवुः । ततः स ऋषिरिन्द्रं स्तुत्वा चक्षुः पादं च लेभे । तदेतदाह Sy.
१९. ०काम् P.
२०. अपगोहनं तिरोभावम् Sy.
२१. पंकुं० P.
२२. ०न्यक P.

प्रकाशयन्[१] । उदतिष्ठत्[२] । परावृग्ऋषिः[३] । किं मम पङ्गुता नष्टेति[४] परीक्षितुं प्रत्यष्ठात्[५] । तथेन्द्रप्रसादादनक्षः[६][७][८] सन् । व्यपश्यच्च[९] ।[१०]

भिनद्वलमङ्गिरोभिर्गृणानो वि पर्वतस्य दृंहितान्यैरत् ।
रिणग्रोधांसि कृत्रिमाण्येषां सोमस्य ता मद इन्द्रश्चकार ॥८॥

भिनद्वलम् । भिनद्[११] । वलासुरम्[१२] । अङ्गिरोभिः[१३] । स्तूयमानः[१४] । व्यैरत्[१५] । गवामावरणस्य[१६] । दृढीकृतानि[१७] । तथैषामसुराणाम् । कृत्रिमाणि[१८] । निरोधनानि[१९] प्राकारादीनि[२०] । अरिणक्[२१] ।[२२]

स्वप्नेनाभ्युप्या चुमुरिं धुनिं च जघन्थ दस्युं प्र दभीतिमावः ।
रम्भी चिदत्र विविदे हिरण्यं सोमस्य ता मद इन्द्रश्चकार ॥ ९ ॥

[२३]स्वप्नेन । अभिवपनमुपरि[२४] प्रक्षेपः[२५] । चुमुरिर्नामासुरः,[२६] तस्योपरि निद्राम्[२७] ।

---

१. सर्वेषां प्रत्यक्षो भवन् Sy.
२. उपतिष्ठत् M. उपतिष्ठन् P.
३. ०राप्रगृ० M. ४. नेष्टोतनेति P.
५. ०त्यष्ठाः M. ६. तथैन्द्र० P.
७. ०प्रसदा० M. ८. ०न क्ष स० P.
९. ०श्यच्च P. पूर्वमन्धोऽधुना चक्षुर्लाभात् ताः कन्यका विशेषेण पश्यति स्म Sy.
१०. VM. ignores श्रोणः । सोमस्य । ता । मदे । इन्द्रः and चकार ॥ Sy. explains श्रोणः as पूर्वं पङ्गुरिदानीमिन्द्रस्य प्रसादाद् विभग्नजानुः ?
११. अभिनत् Sy. १२. वलनामकमसुरम् Sy.
१३. ०रोपि M. and P.
१४. स्तूयमानः स इन्द्रः Sy.
१५. अप्यैरदा M. व्यैरत्वे P. उद्घाटितवान् Sy. १६. ०मवारणात्यं P. गवां निरोधकस्य पर्वतस्य Sy.
१७. शिलाभिर्दृढीकृतानि द्वाराणि Sy.
१८. क्रित्रिमाणि P. ०माति M. क्रियया निर्वृत्तानि Sy. १९. निरुद्धानि द्वाराणि Sy.
२०. प्रका० M. २१. रिणात् M. रीणात् P. उदघाटयत् Sy. २२. VM. ignores सोमस्य । ता । मदे । इन्द्रः and चकार ।
२३. अतिमूर्तिनाम्न्येकाहे निष्केवल्ये सूक्तमुखीया 'स्वप्नेन' इत्येषा । सूत्रितम्— 'स्वप्नेनाभ्युप्या चुमुरिं धुनिं चेति सूक्तमुखीया' (ASS. 9.8.) इति Sy.
२४. ०भिपवन० M.
२५. ०क्षेपं P. The passage अभिव . . . प्रक्षेपः should immediately follow निधाय and precede स्वपन्तम् ।
२६. ०मासुरो धुनिश्च त० M. ०माधुश्च त० P. चुमुरिनामा० is suggested for चुमुरिर्नामा० । The passage चुमुरिनामासुरः should immediately follow स्वपन्तं तम् and precede दस्युम् ।
२७. निद्राम् seems to be the explanation of स्वप्नेन ॥ दीर्घनिद्रया Sy.

निघाय[1] । स्वपन्तं तम् । दस्युम्[2] । हतवानसि । एवं धुनिम्[3] । च । दभीतिमपि[4] च । प्रावः[5] ।
रम्भी[6] नाम कश्चित् सः । अपि । अस्मिन् कलहे[7] । त्वत्तो[8] हिरण्यम् । लेभे[9] ।[10]

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी ।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥१०॥

[नूनं सा ते प्रति । पू० व्या०][11]

## II. 16.

प्र वः सतां ज्येष्ठतमाय सुष्टुतिमग्नाविव समिधाने हविर्भरे ।
इन्द्रमजुर्यं जरयन्तमुक्षितं सनाद्युवानमवसे हवामहे ॥१॥

प्र[12] वः सताम् । युष्मदर्थमहम्[13] । सताम्[14] । श्रेष्ठतमायेन्द्राय[15] । सुस्तुतिम्[16] । प्रभरामि[17] । यथा[18]

---

१. निघाय seems to be the explanation of अभ्युप्य ॥ संयोज्य Sy.
२. सर्वस्योपक्षपयितारम् Sy.
३. चुमुरिं धुनिञ्च, एतन्नामानावसुरौ Sy.
४. भीति० M. दभिति० P. ततस्ताभ्यां युध्यमानं दभीतिं राजर्षिम् Sy.
५. प्राव M. रक्षितवानसि । तथा च मन्त्रवर्णः-'त्वं नि दस्युं चुमुरिं धुनिं चास्वापयो दभीतये सुहन्तु' (RV.7.19.4.) इति । आवः-अवते रक्षणार्थस्य लिङि सिपि रूपम् Sy.
६. रम्भी P. वेत्रधारी चास्य दौवारिकः Sy.
७. युद्धे Sy. ८. तयोरसुरयोर्धनम् Sy.
९. विविदे–'विद्लृ लाभे' स्वरितेत् Sy.
१०. VM. ignores सोमस्य । ता । मदे । इन्द्रः and चकार ॥ तानीमानि कर्माणि सोमस्य मदे सति चकार इति Sy.
११. Only M. contains this line. This seems to be the remark of the scribe. This stanza has already been explained. See RV.2.11.21.
१२. 'प्र वः सताम्' इति नवर्चं पञ्चमं सूक्तं गार्त्समदमैन्द्रम् । अत्रानुक्रमणिका—'प्र वो नवान्त्या त्रिष्टुप्' (KSA. 14. 16. p.13) इति । नवमी त्रिष्टुप् शिष्टास्त्रिष्टुबन्तपरिभाषया (KSA. 12. 13.p.5.) जगत्यः । तृतीये पर्यायेऽच्छावाकशस्त्रे 'प्र वः सताम्' इति सूक्तम् । 'अतिरात्रे' इति खण्डे सूत्रितम् 'प्र वः सताम् प्रो द्रोणे हरयः कर्माण्यग्निति याज्या' (ASS. 6.4.) इति Sy.
१३. युष्मदर्थमहम् is omitted in P. गृत्समदो ब्रूते । हे यजमानाः ! वः युष्मदर्थम् Sy.
१४. Omitted in M. महतां देवानाम् Sy. १५. श्रुत० M. अतिशयेन श्रेष्ठायेन्द्राय तदर्थम् Sy. १६. सुस्तुम् M. सुस्तम् P. शोभनां स्तुतिं करोमि Sy.
१७. सम्पादयामि । भर इति 'भृञ् भरणे' ञित्वादुभयपदी । लटि रूपम् Sy.
१८. इवशब्द एवार्थे Sy.

समिध्यमाने[1]। अग्नौ। हविः प्रभरन्त्येवमिति[2]। इन्द्रम्। अन्यैर्[3]जरयितुम्[4]अशक्यम्। अन्याञ्[5]जरयन्तम्[6]। हविर्भिरुक्षितम्[7]। सनातनम्। युवानम्[8]। रक्षणाय[9]। हवामहे[10]।

यस्मादिन्द्राद् बृहतः किं चनेमृते विश्वान्यस्मिन्त्सम्भृताधि वीर्या।
जठरे सोमं तन्वीः सहो महो हस्ते वज्रं भरति शीर्षणि क्रतुम् ॥२॥

यस्मादिन्द्रात्[11]। महतः। यस्मात्। इन्द्रात्। ऋते। बलवत् किम् ? अपि[12] न विद्यते इति वाक्यशेषः। तस्मिन्निन्द्रे[13]। विश्वान्यपि[14]। वीर्याणि[15]। सम्भृतानि भवन्ति[16]। स[17] जठरे। सोमं[18] चक्रे। शरीरे[19] च[20]। महत्[21]। बलम्। हस्ते च। वज्रम्[22]। बिभर्ति[23]। शिरसि[24]। प्रज्ञानं[25] यज्ञं वा[26]।

---

१. दीप्यमान एव Sy.
२. ०रत्येव० P.
३. मन्यै० M.
४. ०जनयन्तु० P.
अजरणीयम् Sy.
५. ०न्याज्ज० M.
६. ०रन्तम् M. and P. सर्वमन्यज्जरयन्तम् Sy.
७. सोमेन सिक्तम् Sy.
८. युवां न M.
नित्यतरुणम् Sy.
९. अस्माकं रक्षणाय तस्य तर्पणाय वा Sy.
१०. आह्वयामः Sy.
११. यादिन्द्रा M.
१२. नि M. चन नास्तीत्यर्थः। चेति नेति निपातद्वयसमुदायश्चनेति। चेति चिदित्यर्थे नेति निषेधार्थे। ऐकपद्यं तु साम्प्रदायिकम्। उक्तार्थे मन्त्रः— 'नेन्द्रादृते पवते धाम किं चन' (RV. 9.69.6.) इति। यद्वा इन्द्रादृते ईम् इदं जगत् किम् ? न क्षुद्रमत्यल्पमित्यर्थः Sy.
१३. कुत एतत् ? तदेवोच्यते, अस्मिन्, इन्द्रे Sy.
१४. सर्वाणि Sy.
१५. सामर्थ्यानि Sy.
१६. हवन्ति M. and P.
सम्भृतान्यासते Sy.
१७. यश्चेन्द्रः स्वोदरे Sy.
१८. सोममभिषुतं सोमरसं भरति बिभर्ति Sy.
१९. ०रीर० P. किञ्च तन्वां स्वकीये सर्वस्मिन् शरीरे Sy.
२०. Omitted in P.
२१. महः तेजश्च बिभर्ति Sy.
२२. पत्तं P. आयुधं बिभर्ति Sy.
२३. भरति-यद्वृत्तयोगादनिघातः। वाक्यभेदाद्वा निघाताभावः Sy.
२४. शीर्षणि–'शीर्षंश्छन्दसि' इति Sy.
२५. विज्ञानं भरति बिभर्ति Sy.
२६. VM. ignores ईम् and अधि ॥
ईम्—इदं जगत्। अधि अधिकम् Sy.

न द्योणीभ्यां परिभ्वे त इन्द्रियं न संमुद्रैः पर्वतैरिन्द्र ते रथः ।
न ते वज्रमन्वश्नोति कश्चन यदाशुभिः पतसि योजना पुरु ॥३॥

न क्षोणीभ्याम्[1] । न । द्यावापृथिवीभ्याम् । तव वीर्यम्[2] । परिभवितुं[3] शक्यते । तया गच्छतस्तव । रथः[4] । उदकैः । शिलोच्चयैर्वा । अविहतगतिर्भवति[5] । न । तव । वज्रम् । प्रति । कः । चिद्[6] । आगच्छति[7] । यदा[8] । त्वमाशुभिरश्वैः । पुरूणि[9] । योजनानि । गच्छसि[10] ।[11]

विश्वे ह्यस्मै यजताय धृष्णवे क्रतुं भरन्ति वृषभाय सश्चते ।
वृषा यजस्व हविषा विदुष्टरः पिबेन्द्र सोमं वृषभेण भानुना ॥४॥

विश्वे ह्यस्मै । सर्वे[12] । हि[13] । अस्मै । यष्टव्याय[14] । धृष्णवे[15] । वृषभाय[16] । सज्जच्छमानाय[17] । कर्म[18] । सम्भरन्ति[19] । त्वं च वर्षिता[20] हविषाम् । एनं हविषा । यजस्व । विद्वत्तरस्त्वं[21] च । इन्द्र[22] ! वर्षिता[23] । स्वतेजसा[24] । सोमम् । पिबेति ।

---

१. क्षोणिभ्या० P.
२. बलम् Sy.
३. परिभवनीयम् । परिभ्वे-'कृत्यार्थे तवैकेन्केन्यत्वनः' इति केन्प्रत्ययः । 'उदात्तस्वरितयोः' इति स्वरितत्वम् Sy.
४. मद्यः P.
५. पिहित इति भ० P. अविहतगतिर्भवति seems to be the explanation of न (परिभ्वे) ॥ न परिभवनीयः Sy.
६. पुमान् Sy.
७. व्याप्नोति परिभवितुम् । 'अशू व्याप्तौ' । व्यत्ययेन परस्मैपदम् Sy.
८. यदासुरवधार्थं दिग्विजयकाले Sy.
९. बहूनि Sy.
१०. गच्छसि तदा तव बलादि न परिभवनीयमिति समन्वयः Sy.
११. VM. ignores इन्द्र ।
१२. Omitted by P. हे यजमान ! सर्वे जनाः Sy.
१३. Omitted by P.
१४. सर्वैर्यजनीयाय Sy.
१५. शत्रूणां धर्षणशीलाय Sy.
१६. कामानां वर्षित्रे Sy.
१७. सज्जमानाय स्तुत्यादिकर्मवत्सु स्तोतृषु, एतादृशायेन्द्राय Sy.
१८. यज्ञादिलक्षणं कर्म Sy.
१९. हरन्ति खलु प्रणयन्तीत्यर्थः । भरन्ति । हियोगादनिघातः Sy.
२०. यस्मादेवं तस्मात् सोमरससेचनसमर्थः Sy.
२१. विद्यस्तरत्वं M. विद्वत्तरस्त्वं P. विदुष्टरः—विद्वच्छब्दात्तरपि छान्दसं सम्प्रसारणम् । 'शासिवसिघसीनां च' इति संहितायां षत्वम् Sy.
२२. इदानीमिन्द्रं सम्बोध्याह—हे इन्द्र ! Sy.
२३. वर्षित्रा is suggested for वर्षिता ॥ कामानां वर्षकेण Sy.
२४. दीप्यमानेनाग्निना सह Sy.

वृष्णः कोशः पवते मध्व ऊर्मिर्वृषभान्नाय वृषभाय पातवे ।
वृषणाध्वर्यू वृषभासो अद्रयो वृषणं सोमं वृषभाय सुष्वति ॥५॥

वृष्णः । वर्षितुः[1] सोमस्य[2] । मधुनः[3] । प्रेरकः[4] । अंशुः[5] । पवते[6] । सोमान्नाय[7] । इन्द्राय[8] । पानार्थम्[9] । वर्षितारौ[10] । अध्वर्युः प्रतिप्रस्थाता च[11] । तथा वर्षणशीलाः । ग्रावाणश्च[12] । वर्षितारम्[13] । सोमम् । वर्षणशीलम्[14] । सुन्वन्तु[15] ।

उत्तरा निगदव्याख्यातेति ।

वृषा ते वज्र उत ते वृषा रथो वृषणा हरी वृषभाण्यायुधा ।
वृष्णो मदस्य वृषभ त्वमीशिष इन्द्र सोमस्य वृषभस्य तृप्णुहि ॥६॥

[ वृषा ते वज्रः ][16]

---

१. फलस्य वर्षितुः Sy.

२. P. omits स्य ।

३. मदकरस्य सोमस्य Sy.

४. प्रेररः P. अनुष्ठातॄणां पातॄणां च प्रेरकः सन् Sy.

५. रसः Sy.

६. ववते P. गच्छति । 'पव गतौ' । अनुवातेत् Sy.

७. सोमममन्नाय P. बलवर्धकाण्यन्नानि यस्य स तथोक्तः, तादृशाय Sy.

८. इन्द्रय P. कामानां वर्षित्र इन्द्राय Sy.

९. वनायर्त्थं P. पानार्थं पवत इति समन्वयः Sy.

१०. सोमरससेचनसमर्थौ Sy.

११. अध्वर्युप्रतिप्रस्थातारौ Sy.

१२. वावा P. अभिषवग्रावाणश्च Sy.

१३. ०तार P.
स्वर्गादिफलस्य सेक्तारम् Sy.

१४. VM. seems to take वृषभाय as वृषभम् and explains it as वर्षणशीलम् ॥ देवानां श्रेष्ठाय तुभ्यम् Sy.

१५. सुन्वत्ता P.
सुन्वन्ति-सुनोतेर्लटि 'बहुलं छन्दसि' इति विकरणस्य श्लुः । 'अदभ्यस्तात्' इति झेरदादेशः Sy.

१६. The *pratika* within brackets has been supplied by the Editor. Sy. explains this stanza in the following manner:—
वृषभ ! कामानां वर्षक ! हे इन्द्र ! ते तव वज्रः वृषा कामवर्षकः । तथा ते रथः अपि वृषा । ते हरी एतन्नामकावश्वौ वृषणा वर्षकौ । तव आयुधा वज्रव्यतिरिक्तान्यायुधान्यपि वृषभाणि । वृष्णः वर्षकस्य मदस्य मदकरस्य सोमस्य त्वम् एव ईशिषे स्वामी भवसि । हे इन्द्र ! वृषभस्य वर्षकेण सोमस्य सोमेन तृप्णुहि तृप्तो भव । 'तृप प्रीणने' स्वादिः । 'क्षुभ्नादिषु०' (Pa. 8. 4. 39.) 'नृमन तृप्नोति' इति पठितम् । तथापि सर्वविधीनां छन्दसि विकल्पितत्वादत्र णत्वप्रतिषेधो न भवति Sy.

**प्र ते नावं न समने वचस्युवं ब्रह्मणा यामि सवनेषु दाधृषिः ।**
**कुविन्नो अस्य वचसो निबोधिषदिन्द्रमुत्सं न वसुनः सिचामहे ॥७॥**

**प्र ते नावम्** । हे यजमान ! तवाहम्[१] । नावम्[२] । इव नद्याम् । सङ्ग्रामे तारकम् । स्तोत्रमिच्छन्तमिन्द्रम्[३] । धृष्टः[४] । यज्ञेषु[५] । स्तोत्रेण । अभिगच्छामि[६] । अस्माकम् । इदम् । वचनमिन्द्रः[७] । बहु[८] । निबुध्यताम्[९] । इन्द्रम् । कूपम्[१०] । इवोदकार्थम्[११] । धनानाम्[१२] । सिञ्चामहे[१३] इति ।

**पुरा सम्बाधादभ्या ववृत्स्व नो धेनुर्न वत्सं यवसस्य पिप्युषी ।**
**सकृत्सु ते सुमतिभिः शतक्रतो सं पत्नीभिर्न वृषणो नसीमहि ॥८॥**

**पुरा सम्बाधात्**[१४] । सम्बाधायाः[१५] । पूर्वमेव । अस्मान्[१६] । अभ्याववृत्स्व[१७] । धेनुः[१८] । इव । वत्सम् । यवसेन[१९] । तृप्ता[२०] । शतक्रतो[२१] ! वयं तव । सुमतिभिः[२२] । सकृत्[२३] । सुसंनसीमहि[२४] संसृष्टा भवेम । यथा पुमांसः । पत्नीभिः सङ्गच्छन्ते तद्वत्[२५] । वृषण इव[२६] पत्नीभिरिवेति द्वावुपमार्थीयावप्यन्वितौ[२७] इति ।

---

१. ते त्वाम् Sy.
२. नावमिवापद्भ्यस्तारकम् Sy.
३. वचस्युवम्—अमि तन्वादित्वादुवङादेशः Sy. ४. त्वत्प्रसादाच्छत्रूणां धर्षकोऽहम् Sy. ५. सवनेषु त्रिषु Sy.
६. प्राप्नोमि Sy.
७. इन्द्रम् P. स्तुतिलक्षणमेतद्वाक्यम् Sy.
८. बहू P.
९. निध्य० M. नियुध्य P. नितरां बुध्यताम् । 'बुध अवगमने' लेटि 'सिब्बहुलम्' इति सिप् । कुवियोगादनिघातः । 'तिङि चोदात्तवति' इति गतेर्निघातः Sy.
१०. जलस्य निधानभूतं कूपमिव Sy.
११. ०कार्त्थम् P.
१२. धनाना M. धवोनां P. वसुनः निधानभूतम् Sy.
१३. सिचामहे M. सिञ्चाम ग P. सोमेन सिञ्चामः । 'सिचिर् क्षरणे' स्वरितेत् । आगमानुशासनस्यानित्यत्वात् नुमभावः Sy. १४. हे इन्द्र ! Sy.
१५. बाधायाः M. शत्रुजन्यात्सम्बाधात् Sy.
१६. अन् M.
१७. अभ्यव० P. आवर्तय । यथा सम्बाधोऽस्मान् न स्पृशति तथा कुर्वित्यर्थः । तत्र दृष्टान्तः Sy.
१८. धेरिः P. १९. यवसस्य घासेन Sy.
२०. तृप्त P. आप्यायिता धेनुर्वत्सं क्षुद्बाधात्परावर्तयति तद्वत् Sy.
२१. ०क्ता P.
२२. त्वद्विषयैः शोभनैः स्तोत्रैः Sy.
२३. सकृदपि Sy.
२४. ससन्न० M. सन्न P. सुष्ठु व्याप्येमहि । तत्र दृष्टान्तः Sy.
२५. तद्दत् P. २६. सेक्तारो युवानो यथा पत्नीभिर्व्याप्यन्ते तद्वत् Sy.
२७. ०वप्यन्विता० M. ०वव्यविता० P.

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी ।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥९॥

[ नूनं सा ते । पूर्वं व्या० ][1]

---

१. This line is found in M. only. It seems to be a remark of the scribe in M. The stanza has already been explained. See RV. 2.11.21. The following are the commentaries of Skandasvāmin, Durga and Yāska on this stanza:—

गृत्समदस्यार्षम् । नूनं पादपूरणः । सा, तच्छ्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । यां त्वया यज्ञं कुर्वन्नहं दापितः सा ते तव स्वभूता । चतुर्थी वा एषा । वरं प्रार्थितमर्थं जरित्रे स्तोत्रे मह्यं प्रति दुहीयत् प्रतिदुग्धां प्रतिपादयत्वित्यर्थः । हे इन्द्र ! दक्षिणा मघोनी मघेन धनेन रायोभूतेन तद्वती । किञ्च शिक्ष सर्वदैव त्वं देहि स्तोतृभ्यः कामान् । मा चातिधक् अतीत्युपसर्गश्रुतेर्योग्यसाधनयुक्तं क्रियापदमध्याहार्यम् । धगितीदं पदं दहेर्दानार्थस्य रूपम् । माऽस्मानतिहाय, अन्येभ्यो दाः प्रथममस्मभ्यं देहि पश्चादन्येभ्य इत्यर्थः । भगो नो धनं च नोऽस्तु, इति वाक्यशेषः । बृहद् महच्चोर्जितं दीयतां भुज्यतामित्यादिवाक्यमन्यच्च वदेम । विदथे यज्ञे सुवीराः सुपुत्राश्च स्यामेति वाक्यशेषः । यदि पुत्रा न सन्ति तर्हि शोभनत्वविशिष्टानां तेषामपीयं प्रार्थना । अथ यदि सन्ति ततः शोभनमात्रस्य । तेषां भाष्यमृग्व्याख्यानेन व्याख्यातम् । यद्वाग्निगदव्याख्यानं तत्सर्वं न व्याख्यायते । इतरद् व्याख्यायते ग्रन्थगौरवभयात् । तस्य स्वयमेव ज्ञायमानत्वाच्च SKN.

नूनं पदपूरण एव । सा दक्षिणा, ते तव या पुत्रभावके कर्मणि । सा किं करोतु ? प्रतिदुग्धाम् । किम् ? वरम्, कर्मणो दक्षिणागुणकात्फलप्राप्तिस्तथापि तु दक्षिणायामुपचर्यते । कस्मै ? जरित्रे स्तुवते यजमानाय । किंलक्षणा ? मघोनी मघवती हिरण्यधान्यादिधनसंयुक्ता तद्वतीत्यर्थः । किञ्च हे इन्द्र ! शिक्षा देहि । कस्मै ? स्तोतृभ्य ऋत्विग्भ्योऽनुकामान् । किञ्च माति धक्, मास्माननतिहायातीत्यान्येभ्यो देहीति, मा दा इत्यर्थः । अस्मभ्यं तावद्देहि ततोऽन्येभ्योऽपि दास्यसि चेत्यभिप्रायः । किञ्च भगो नो धनं नोऽस्तु । येन किं कुर्याम ? बृहद् वदेम महदूर्जितं वदेम दीयतां भुज्यतामिति । क्व ? विदथे यज्ञे, अथवा स्वे गृहे । किञ्च युष्मदनुग्रहाच्च सुवीरा वीरवन्तो भवेम पुत्रवन्तो यद्यपुत्राः । एवमयं मत्वर्थीयः सुः । अथ पुनः पुत्रवन्त एव ततः कल्याणवीरा इति समस्तार्थः Dur.

अथापि पादपूरणः . . . सा ते प्रति दुग्धां वरं जरित्रे । वरो वरयितव्यो भवति । जरिता गरिता । 'दक्षिणा मघोनी' मघवती । मघमिति धननामधेयं मंहतेर्दानकर्मणः । दक्षिणा दक्षतेः समर्द्धयतिकर्मणः, व्यृद्धं समर्द्धयतीति । अपि वा प्रदक्षिणागमनात् । दिशमभिप्रेत्य दिग्घस्तप्रकृतिः । दक्षिणो हस्तः दक्षतेरुत्साहकर्मणः । दाशतेर्वा स्याद्दानकर्मणः । हस्तो हन्तेः प्राशुर्हनने । देहि स्तोतृभ्यः कामान् । मास्माननतिदंहीर्मास्माननतिहाय दाः । भगो नोऽस्तु बृहद् वदेम स्वे वेदने । भगो भजतेः । बृहदिति महतो नामधेयं परिवृढं भवति । वीरवन्तः कल्याणवीरा वा । वीरो वीरयत्यमित्रान् । वेतेर्वा स्याद् गतिकर्मणः । वीरयतेर्वा N.1.7., SKN.I.68.

II. 17.

तद॑स्मै॒ नव्य॑मङ्गिर॒स्वद॑र्चत॒ शुष्मा॒ यद॑स्य प्र॒त्नथो॒दीर॑ते ।
विश्वा॒ यद् गो॒त्रा सह॑सा॒ परी॑वृता॒ मदे॒ सोम॑स्य दृंहि॒तान्यैर॑यत् ॥१॥

तदस्मै[1]। [2]तत्[3]। अस्मा इन्द्राय। सोतव्यम्[4]। अङ्गिरस इव। अर्चत[5]। शोषकारश्च[6] यः। यत्[7]। अस्य[8]। पुराणाः[9]। उच्चलन्ति[10]। यच्च[11]। सर्वान्। मेघान्[12]। बलेन। परिवृतान्[13]। सोमस्य। मदे[14]। दृढानपि[15]। प्रेरितवानिति[16]।

स भू॑तु॒ यो ह॑ प्रथ॒माय॒ धाय॑स॒ ओजो॒ मिमा॑नो मह॒िमान॒मातिर॑त् ।
शूरो॒ यो यु॒त्सु त॒न्वं॑ परि॒व्यत॑ शी॒र्षणि॒ द्यां म॑ह॒िना प्रत्य॑मुञ्चत ॥२॥

स भूतु यः। सः[17]। भवतात्[18]। यः[17]। प्रथमाय[19]। धास[20] इन्द्राय। बलम्[21]। कुर्वन्[22]। महि-

---

१. 'तदस्मै' इति नवर्चं षष्ठं सूक्तं गार्त्समदमैन्द्रम्। अत्रानुक्रमणिका—'तदस्मै द्वित्रिष्टुबन्तम्' (KSA. 14.17.p. 13.) इति। अन्त्ये द्वे त्रिष्टुभौ शिष्टाः सप्त जगत्यः। अतिरात्रे द्वितीये पर्याये अच्छावाकशस्त्रे 'तदस्मै' इति सूक्तम्। 'अतिरात्रे पर्यायाणाम्' इति खण्डे सूत्रितम्—'तदस्मै नव्यमस्य पिब यस्य जज्ञान इन्द्रेति याज्या' (ASS.6.4.)इति Sy.

२. गृत्समदो ब्रूते। हे स्तोतारः! Sy.

३. तादृशं स्तोत्रम् Sy.

४. सोतव्यम् seems to be the explanation of नव्यम्–'णू स्तवने'। Therefore स्तोतव्यम् is suggested for सोतव्यम्॥ नव्यं नवतरमन्येष्वदृष्टपूर्वम् Sy.

५. अच्चत P. ब्रूत Sy.

६. रक्षम P. शत्रूणां शोषकाणि तेजांसि Sy.

७. यस्माज्जातमात्रस्य Sy.

८. इन्द्रस्य Sy. ९. पुरातनानीव। प्रत्नथा–'प्रत्नपूर्वविश्वेमात्थाल् छन्दसि' इति इवार्थे थाल् प्रत्ययः Sy.

१०. ०च्चवन्ति P. उद्गच्छन्ति। उदीरते–'ईर गतौ' अनुदात्तेत्। 'तिङि चोदात्तवति' इति गतेर्निघातः Sy. ११. यव M. यस्माच्च Sy. १२. गा उदकानि त्रायन्ते रक्षन्तीति गोत्रा मेघाः तान् Sy.

१३. वृत्रेणाक्रान्तान्, सर्वत्र सुपो डादेशः Sy.

१४. हर्षे सञ्जाते सति Sy.

१५. बलान० M. दृढीकृतान् मेघान् Sy.

१६. उदघाटयत्। मेघभेदनेनापः प्रेरयामासेत्यर्थः। यद्वा विश्वा सर्वाणि परीवृता बलासुरेणाक्रान्तानि दृंहितानि पर्वतबिले निरुद्धानि। गोत्रा–'इनित्रकट्यचश्च' इति समूहार्थे त्रप्रत्ययः। गवां वृन्दानि सहसैरयत्। तस्माद्बिलान्निरगमयत् तस्मादर्चतेति समन्वयः। ऐरयत्'ईर गतौ' ण्यन्तस्य लङि रूपम्। यद्वृत्तयोगादनिघातः Sy.

१७. इन्द्रः Sy. १८. ०वतां M. and P. भवतु वर्धतामित्यर्थः Sy.

१९. प्राथमिकाय Sy. २०. धात्रा P. धायसे–'धेट् पाने'। सोमपानाय Sy.

२१. वलवलं M. बलबं P. तेजो बलम् Sy.

२२. कुर्वं P. कुर्वाणः सन् Sy.

मानम् । स्तोत्रैर्वर्धयति[1] । यः । शूरः[2] । सङ्ग्रामेषु । आत्मीयं शरीरम् । शत्रुभ्यः परिनिषत्ते रक्षति[3] । शिरसि । द्याम् । माहात्म्येन[4] । प्रतिमुञ्चते धारयति[5] ।[6]

**अधाकृणोः प्रथमं वीर्यं महद्यदस्याग्रे ब्रह्मणा शुष्ममैरयः ।**
**रथेष्ठेन हर्यश्वेन विच्युताः प्र जीरयः सिस्रते सध्र्यक् पृथक् ॥३॥**

अधाकृणोः । अपि च त्वम्[7] । पूर्वम्[8] । महत् । वीर्यम्[9] । कृतवानसि[10] । यत्[11] । अस्य[12] वीर्यस्य । अग्रतः[13] । शुष्मम्[14] । समैरयस्तस्मै[15] वीर्यायोपहृतवानसीत्यर्थः । रथस्थेन[16] । हर्यश्वेनेन्द्रेण[17] । विच्याविताः[18] । क्षिप्रकारिणो[19] वीराः[20] । युद्धमपहाय[21] सङ्घशः । गच्छन्ति[22] । एकैकशश्च[23] ।[24]

---

१. ०र्धयति P. अवर्धयत् । तिरतेर्व्यत्ययेन शः । यद्योगादनिघातः Sy.

२. शात्रूणां शातयिता Sy.

३. रक्षसि M. and P. वर्मणा परिवीतमकरोत् Sy.

४. स्वकीयेन महिम्ना Sy.

५. प्रत्यमुञ्चत अधारयत् Sy.

६. VM. ignores ह ।

७. त्वत् M. हे इन्द्र ! Sy.

८. मुख्यं तत् Sy.

९. सामर्थ्यम् Sy.

१०. अकरोः Sy.

११. तद P.

१२. अस्य वीर्यस्य स्तोतुर्जनस्य Sy.

१३. पुरतः Sy.

१४. शुष्णं M. कृष्णं P. शत्रूणां शोषकं बलम् Sy.

१५. उदगमयः Sy.

१६. रथस्तन P. रथस्थितेन Sy.

१७. हश्चन्द्रेयेन्न P. त्वया Sy.

१८. पिच्यापिताः P. स्वस्थानाच्च्याविताः सन्तः Sy.

१९. जरयितारो बाधका असुराः Sy.

२०. वीर्यं P.

२१. ०महा० P. सध्रीचीनाः परस्परं सङ्गताः । सध्र्यगिति 'सहस्य सध्रिः' इति सध्र्यादेशः । अध्रिसध्र्योरन्तोदात्तत्वेन निपातनाद् 'उदात्तस्वरितयोः' इति यणः स्वरितत्वम् Sy.

२२. प्रकर्षेण धावन्ति । सिस्रते—'सृ गतौ' । जुहोत्यादिः । 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम् Sy.

२३. पृथक् भीत्या वियुक्ताः सन्तः Sy.

२४. VM. ignores ब्रह्मणा and प्र ॥ ब्रह्मणा स्तोत्रेण स्तुतिसाधनभूतेन वेदवाक्येन । प्र प्रकर्षेण Sy.

अधा यो विश्वा भुवनाभि मज्मनैशानकृत्प्रवया अभ्यवर्धत ।
आद्रोदसी ज्योतिषा वह्निरातनोत्सीव्यन्तमांसि दुधिता समव्ययत् ॥४॥

अधा यः । अपि च । यः[1] । सर्वाणि[2] । भुवनानि[3] । बलेन । अभिभवति[4] । स[5] स्वामित्वस्य कर्ता[6] । प्रसिद्धान्नः[7] । अभिवर्धते[8] । अनन्तरमेव । द्यावापृथिवी[9] । ज्योतिषः[10] । वोढेन्द्रः[11] । विस्तारयति[12] । सूच्येव तेजसा तमांसि[13] । सीव्यन्[14] । दुर्निहितानि[15] । सङ्क्रमयति[16] ।[17]

स प्राचीनान्पर्वतान्दृंहदोजसाधराचीनमकृणोदपामपः ।
अधारयत्पृथिवीं विश्वधायसमस्तभ्नान्मायया द्यामवस्रसः ॥५॥

स प्राचीनान् । सः[18] । शिलोच्चयान् । ऊर्ध्वाग्रान्[19] । अदृंहत्[20] पृथिव्याम्[21] । बलेन । तथापाम्[22] । वेगम्[23] । अवाङ्मुखं[24] प्रवणाभिमुखम् । अकरोत्[25] । अधारयच्च । विश्वस्य धात्रीम् । पृथिवीम् । द्यां[26] च । अस्तभ्नात्[27] । प्रज्ञानेन[28] । अवस्रंसनात्[29] ।

---

१. इन्द्रः Sy.
२. सर्वान् Sy.
३. Omitted by P. लोकान् Sy.
४. अभिभूय Sy.
५. न M.
६. आत्मानं सर्वस्याधिपतिं कुर्वन् । यद्वा अग्न्यादीन् देवान् तत्तल्लोकाधिपतीन् कुर्वन् Sy.
७. ०द्धानं P. प्रवृद्धान्नः पुरातनो वा Sy.
८. सर्वतः प्रवृद्धोऽभवत् Sy.
९. द्यावापृथिव्यौ Sy.
१०. ०तिषां P. स्वीयेन तेजसा Sy.
११. ०ढेस्तः P.
जगतां वोढा स इन्द्रः Sy.
१२. व्याप्नोत् Sy.
१३. तमोरूपाणि रक्षांसि Sy.
१४. विस्तारयन् Sy.
१५. दुर्हिहिता० P. दुःस्थितानि दुर्गतानि Sy.
१६. सहग० M. आवृणोत् । जगद्व्याप्य वर्तत इत्यर्थः Sy.
१७. VM. ignores आ ।
१८. इन्द्रः Sy.
१९. इतस्ततः प्रकर्षेणाञ्चतो गच्छतः सपक्षान् Sy.
२०. अदहत् P. पक्षच्छेदं कृत्वा भूमौ दृढीचकार । अचलानकरोदित्यर्थः Sy.
२१. पृथ्या० P.
२२. तयावां M. मेघस्थितानामुदकानाम् Sy.
२३. स्यन्दनलक्षणं कर्म Sy.
२४. अधःप्रदेशमञ्चति गच्छतीत्यधराचीनं तादृशम् Sy.
२५. मेघभेदनं कृत्वापो भूमावपातयदित्यर्थः Sy.
२६. द्युलोकम् Sy.
२७. स्तभ्नात् P. अधारयत् Sy.
२८. प्रज्ञयोपायेन Sy.
२९. अवस्रंसः । 'स्रंसु गतौ' । सम्पदादिलक्षणो भावे क्विप् । अवपतनात् Sy.

सास्मा अरं बाहुभ्यां यं पिताकृणोद्विश्वस्मादा जनुषो वेदसस्परि ।
येना पृथिव्यां नि क्रिविं शयध्यै वज्रेण हत्व्यवृणक् तुविष्वणिः ॥६॥

सास्मा । स[१] सोमः । अस्मा[२] इन्द्राय । पर्याप्तो[३] भवति । यम् । अस्य । पालयिता[४] । यजमानः । करोति । बाहुभ्याम्[५] । सर्वस्मादेव[६] । जातात्[७] । धनात्[८] । परिः[९] पञ्चम्यर्थं[१०] स्फुटीकरोति । येन[११] सोमेन । गौतमस्याग्रतः[१२] । शाययितुम्[१३] । दूरस्थं[१४] कूपम्[१५] । वज्रेण । हत्वा[१६] । न्यवृणक्[१७] । महास्वनः[१८] आनयनार्थं[१९] कूपम्, अस्य वज्र[२०]मूले[२१] निधाय[२२] मूलमच्छिनदित्यर्थः[२३][२४] ।

अमाजूरिव पित्रोः सचा सती समानादा सदसस्त्वामिये भगम् ।
कृधि प्रकेतमुप मास्या भर दद्धि भागं तन्वोऽयेन मामहः ॥७॥

अमाजूरिव । दौर्भाग्यादलब्ध[२५]पतिका यावज्जीवम्[२६] । पित्रोः[२७] । सह[२८] जीर्णा, अस्मिन् गृहे पितृभ्यां भवामीति यदाऽमन्यत । आत्मनः पितृभ्यां च साधारणात्[२९] । पितृगृहादन्यत्र[३०] पतिगृहं

१. स तादृश इन्द्रः Sy.
२. अस्मै जगते Sy.
३. पर्याप्तं M. and P. अलं पर्याप्तो बभूव रक्षकत्वेन स्वामी बभूवेत्यर्थः Sy.
४. सर्वस्य पालकः प्रजापतिः Sy.
५. स्वकीयाभ्यां बाहुभ्याम् Sy.
६. सर्वदि० P.
७. जनात् Sy.
८. ज्ञानात् Sy.
९. परि M.
१०. म्यर्त्थं P. परि ततोऽप्युत्कृष्टात् Sy.
११. येन ज्ञानेन Sy.
१२. गौतमस्याग्रतः seems to be the explanation of पृथिव्यां and is not quite clear. भूमौ Sy.
१३. शयितुं M. शयनाय दीर्घनिद्रायै Sy.
१४. रस्थं P.
१५. Omitted in P. खातः । अवतः । क्रिविः (Ngh. 3.23.) इति कूपनामानि ॥ क्रिविम्—एतन्नामानमसुरम् Sy.
१६. हत्वी—'स्नात्व्यादयश्च' इति त्वी। हत्वा ताडयित्वा Sy.
१७. न्यावृणक् P. न्यावृण् M. न्यवधीत् । वृणक्तिर्हिंसाकर्मा Sy.
१८. महस्व P. बहुकीर्तिर्महास्वनो वा Sy.
१९. नयनात्थं P.
२०. वज्रे M. and P.
२१. भूवं M. मूरं P.
२२. निधारय P.
२३. ०दित्यर्त्थः P.
२४. VM. ignores आ ।
२५. ०लभ्यप० P. पतिमलभमाना Sy.
२६. ०वज्जिवं P. यावज्जीवं गृह एव जीर्यन्ती Sy.
२७. मातापितृभ्याम् Sy.
२८. सह भवन्ती, तयोः शुश्रूषणपरा Sy.
२९. असाधा० M. आत्मनः पित्रोश्च साधारणात् Sy.
३०. सदसः गृहात् । 'अधिकरणे चोपसङ्ख्यानम्' इति पञ्चमी । गृह उपस्थायैव यथा भागं याचति Sy.

गन्तुम् । इन्द्र ! त्वाम् । कन्यका[1] । भगम्[2] । ययाचे[3] । तदा त्वं च कृतवानसि[4] । प्रज्ञानं[5] तद्वचनस्य । तामुपमासि[6] पूजयसि । आहरसि[7] च तस्यै[8] । भागम्[9] । प्रयच्छसि[10] । शरीरस्य[11] । येन[12] । तां पूजित[13]-वानसि । पूरणमिवेति ।

भोजं त्वामिन्द्र वयं हुवेम ददिष्ट्वमिन्द्रापांसि वाजान् ।
अविड्ढीन्द्र चित्रया न ऊती कृधि वृषन्निन्द्र वस्यसो नः ॥८॥

भोजं त्वाम् । दातारम्[14] । इन्द्र ! त्वा । वयम्[15] । हुवेम[16] । दाता[17] । त्वम् । इन्द्र ! कर्माणि । अन्नानि च । रक्ष । अस्मान् । इन्द्र ! चित्रेण[18] । रक्षणेन[19] । कुरु । वृष[20] ! वसीयसः[21] । अस्मानिति[22][23] ।

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी ।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥९॥

[नूनं सा ते । व्या॰ पू॰][24]

---

१. This seems to be the paraphrase of सती ।

२. स्तोताहं भगं भजनीयं धनम् Sy.

३. इये-'ई गत्यादिषु' । लिट्युत्तम इति व्यत्ययेनात्मनेपदम् । इयङादेशः । त्वां याचे Sy.

४. प्रत॰ P. कुरु Sy.

५. ॰ज्ञान्तद्व॰ P. तत्र देयं धनं प्रकर्षेण ज्ञातव्यं विश्वसनीयम् Sy.

६. ॰मुपासि P. एतावदिदं धनमिति कुरु Sy.

७. तत्र धनं सम्पादय Sy.

८. तस्मै M. P.

९. भजनीयं धनम् Sy.

१०. गच्छसि P. देहि Sy.

११. शरीराय मह्यमिति यावत् Sy.

१२. येन धनेन Sy.

१३. स्तोतॄनिमान् पूजयसि Sy.

१४. भोजं पालयितारं भोजयितारं वा Sy.

१५. Omitted by P.

१६. हुवेम-ह्वयतेर्लिङि 'बहुलं छन्दसि' इति सम्प्रसारणम् Sy.

१७. ददिः—'दाण् दाने' । 'आदृगमहनजनः॰' इति किप्रत्ययः । लिड्वद्भावादभ्यासादि कार्यम् । 'न लोकाव्ययनिष्ठा॰' इति षष्ठीप्रतिषेधः । दाता खलु Sy.

१८. चित्रया नानाप्रकारया Sy.

१९. ऊत्या पालनेन Sy.

२०. कामानां वर्षक ! Sy.

२१. पसी॰ P.
अतिशयेन वसुमतः Sy.

२२. ॰स्माति P.

२३. VM. ignores इन्द्र ।

२४. Only M. contains this line. It seems to be a remark of the scribe. This stanza has already been explained. See RV. 2.11.21., 2.16.9.

## II. 18.

प्राता रथो नवो योजि सस्निश्चतुर्युगस्त्रिकशः सप्तरश्मिः ।
दशारित्रो मनुष्यः स्वर्षाः स इष्टिभिर्मतिभी रंह्यो भूत् ॥ १ ॥

प्राता[1] रथः । प्रातरेव । रथः[2] । नवतरः[3] । युज्मः[4]? शुद्धः[5] । चतुर्भिर्युगैर्युक्तः[6] । तिसृभिश्चाश्वाजनीभिर्युक्तः[7] । सप्तभिश्च रश्मिभिः[8] । यमनसाधनैर्दशभिररित्रैश्च[9] । मनुष्येभ्यो हितः[10] । स्वर्गस्य सम्भक्ता[11] । स रथः[12] । इष्टिभिः[13] । स्तुतिभिश्च[14] । रंहणीयो नेयः[15] । भवति[16], तत्र महर्त्विजो युगाः, ऋचो यजूंषि सामानीति कशाः[17], दश चमसा भवन्ति, सप्त छन्दांसि[18] ।

---

१. 'प्राता रथः' इति नवर्चं सप्तमं सूक्तं गार्त्समदं त्रैष्टुभमैन्द्रम् । 'प्रातः' इत्यनुक्रान्तम् (KSA. 14.18. p. 13) । लैङ्गिको विनियोगः Sy.

२. रंहणाद्रथो यज्ञः Sy.

३. नूयते स्तूयतेऽत्रेति नवः स्तुतिमान् Sy.

४. योजि प्रयोज्यस्माभिः Sy. युक्तः or योजितः is suggested for युज्मः which should have been युञ्ज्मः in the active voc.

५. सस्निः । 'षृणा शौचे' । 'आदृगमहन०' इति किन्प्रत्ययः Sy.

६. चतुर्युगः—युज्यन्ते इति युगानि ग्रावाणः, चत्वारि युगानि यस्य स तथोक्तः । अध्वर्य्वाद्यृत्विगभिप्रायं वा Sy.

७. तिस्रः कशा वाचो मन्द्रमध्यमोत्कृष्टरूपा यस्य स तथोक्तः । सवनत्रयाभिप्रायं वा Sy.

८. अश्नुवते व्याप्नुवन्ति कर्माणीति रश्मयश्छन्दांसि । सप्तसङ्ख्याकानि गायत्र्यादीनि छन्दांसि यस्य स तथोक्तः Sy.

९. ०भिरितिर० M. अरिभ्यः पापेभ्यस्त्रायन्त इत्यरित्रा ग्रहाः । दशसङ्ख्याका ग्रहा यस्य स तादृशः, चमसाध्वर्य्वभिप्रायं वा Sy.

१०. हित M. मनुष्याणां हितः Sy.

११. स्वर्गस्य दाता Sy.

१२. स एवंविधो यज्ञः Sy.

१३. इषिभिः M. प्रायणीयातिथ्यादिभिः Sy.

१४. मतिभिर्मननीयैः स्तोत्रैः Sy.

१५. शब्दनीयः Sy.  १६. अभूत् Sy.

१७. कशरः M.

१८. यद्वा—नवोऽभिनवः । सस्निः । सनोतेर्द्विवचनादि । कामानां दाता । रथो रमन्तेऽस्मिन्निति रथः स्यन्दनः । प्रातःसवने च सोमपानार्थं योजि अस्वैरयोजि । कीदृशः ? चतुर्युगः । त्रिकशः । तिस्रः कशा यस्य स तथोक्तः । सप्तरश्मिः सप्तरज्जुः । दशारित्रो दशचक्रः । मनुष्यो मनुष्यहितः । स्वर्षाः स्वर्गस्य सङ्गमयितेन्द्रस्य इष्टिभिर्यागैर्मतिभिः स्तोत्रैश्च प्राप्तव्यो भवति Sy.

**सास्मा अरं प्रथमं स द्वितीयमुतो तृतीयं मनुषः स होता ।**
**अन्यस्या गर्भमन्य ऊं जनन्त सो अन्येभिः सचते जेन्यो वृषा ॥२॥**

सास्मा । स[1] यज्ञः । इन्द्राय । प्रथमम् । पर्याप्तम्[2], प्रातःसवने[3] । एवं[4] माध्यन्दिने । तृतीयसवने[5] । च[6] । स[7] यज्ञः[8] । मनुष्यस्य देवेभ्यः स्वधनं प्रयच्छतः । प्रदाता, देवान् वात्मना[9]ऽऽह्वयति[10] । पृथिव्या उत्पन्नै[11]र्हविर्भिर्वायव्यैश्च यज्ञो जायते इति पृथिव्याः[12] । गर्भ उच्यते, तम्[13] । ऋत्विजः[14] । जनयन्ति[15] । स[16] च जातः । देवैः[17] । सङ्गच्छते[18] । जयशीलः[19] । कामानां[20] वर्षितेति[21] ।

**हरी नु कं रथ इन्द्रस्य योजमायै सूक्तेन वचसा नवेन ।**
**मो षु त्वामत्र बहवो हि विप्रा नि रीरमन्यजमानासो अन्ये ॥३॥**

हरी[22] । एवं वितते यज्ञेऽश्वौ[23] । सम्प्रत्यहम्[24] । इन्द्ररथे[25] । योजयामि[26] । आयातुम्[27] । सुष्ठूच्यमानेन[28] । स्तोत्रेण[29] । नवतरेण[30] । मा । त्वाम् । अन्ये यजमानाः । अस्मिन्नहन्याह्वयन्तु[31] ।

---

१. सं P. यज्ञः सोमो वा Sy.
२. पर्याप्तोऽभूत् Sy.
३. प्राप्तः स० P. प्रातःसवने is the paraphrase of प्रथमम्, therefore प्रातःसवने should immediately follow प्रथमम् ।
४. एकं P. माध्यन्दिने सवने पर्याप्तोऽभूत् Sy.
५. तृतीये सवने पर्याप्तोऽभूत् । सर्वत्र 'काला-ध्वनो०' इति द्वितीया Sy.
६. अपि च Sy.
७. Omitted by M.
८. यज्ञे P.
९. वात्माना० M.
१०. ०ह्वति M. शुभानां वोढा भवति Sy.
११. उत्पन्नै P.
१२. अन्यस्याः पृथिव्याः, वेदात्मिकाया वाचो वा Sy.
१३. गर्भं सन्तं सोमं यज्ञं वा Sy.
१४. यत्वि० M.
१५. अजनयन्त Sy.
१६. म P. स यज्ञः सोमो वा Sy.
१७. अन्यैरिन्द्रादिभिर्देवैः Sy.
१८. 'षच समवाये' । अनुदात्तेत् Sy.
१९. जयसमर्थः Sy.
२०. अभिमतफलवर्षकः Sy.
२१. VM. ignores स (following प्रथमम्) and उ ॥ उः प्रसिद्धयर्थः Sy.
२२. हरिम् P.
२३. हरी एतन्नामकावश्वौ Sy. 'हरी इन्द्रस्य' Ngh. 1.15
२४. नु क्षिप्रम् Sy.
२५. इन्द्रस्य सम्बन्धिनि रथे Sy.
२६. योजं-युनज्मि । 'युजिर् योगे' । लुङि 'इरितो वा' इति च्लेरङादेशः Sy.
२७. ०यातम् M. गमनाय Sy.
२८. साधनेन Sy.
२९. वेदात्मकेन Sy.
३०. अन्यैरकृतपूर्वेण Sy.
३१. ०स्मिह् M. अत्रास्मिन्यज्ञे Sy.

बहवः। हि[1] भवन्तु[2]। मेधाविनो[3] लोके। ते सर्वे निरमयन्त्वद्य[4] विरमन्तु[5]। अन्ये[6] यजमाना इति[7]।

तिस्रो निगदव्याख्याताः।

**आ द्वाभ्यां हरिभ्यामिन्द्र याह्या चतुर्भिरा षड्भिर्हूयमानः।**
**आष्टाभिर्दशभिः सोमपेयमयं सुतः सुमख मा मृधस्कः ॥४॥**

आ द्वाभ्याम्। सोमपानं[8] प्रत्यागमनम्। अयं सोमः। त्वदर्थं[9] सुतः[10] सम्प्रति। मा[11]। सङ्ग्रामम्[12]। कार्षीः[13], क्रोधं वा मा कुर्विति[14]।

---

१. भि M. २. ०वन्ति P. भवन्ति Sy. ३. स्तोतारः Sy.
४. ०मन्त्व० M. मो नि रीरमन् नितरां मा रमयन्तु अतोऽस्मदीयं यज्ञमागत्य सोमं पिबेति भावः। रीरमन्—रमतेर्ण्यन्तस्य लुङि चङि सन्वद्भावादभ्यासस्येत्वदीर्घौ। वाक्यभेदादत्र हि योगाभावेन निघातः Sy. ५. ०मन्यतु P.
६. मद्व्यतिरिक्ताः Sy.
७. VM. ignores कम् and सु ॥ कम् सुखेन, सु सुष्ठु Sy.
८. पातव्यं सोमं प्रति Sy. सोमपानमस्मदीयम्प्रतीत्यध्याहारः SKN. इदं सोमपेयं सोमपानकर्म प्रति Dur.
९. त्वदर्थं P. १०. स्तुतः P. किमर्थम्? उच्यत आयाहीति। यस्मादयं सुतः सोमः SKN. किमिति? एवं ब्रूमहे-अयं सुतः सोमोऽभिषुतस्त्वदर्थम् Dur.
११. Omitted by P. १२. हिंसाः Sy. कैश्चित्सह (मा) मृधः सङ्ग्रामान् SKN. स त्वं केनचिद् मृधः सङ्ग्रामम् Dur.
१३. कार्षीः P. कः—कार्षीरित्यर्थः। अविलम्बितमित्यभिप्रायः SKN. कः कार्षीः, अविलम्बितमागच्छेत्यभिप्रायः Dur.
१४. VM. ignores द्वाभ्याम्। हरिभ्याम्। इन्द्र। चतुर्भिः। षड्भिः। हूयमानः। अष्टाभिः। दशभिः and सुमख ॥ This stanza is explained in the following manner:—

हे इन्द्र! होतृभिः आहूयमानः त्वं द्वाभ्यां हरिभ्यामिमं यज्ञं प्रति सोमपानार्थम्, आ याहि चतुर्भिः हरिभिः आ याहि। तथा षड्भिः आगच्छ सोमपेयम्। 'पा पाने'। कर्मणि 'अचो यत्'। 'ईद्यति' इतीत्वम्। पातव्यं सोमं प्रति अष्टाभिः अश्वैः आयाहि। 'अष्टनो दीर्घात्' (Pa. 6.1.172.) इति विभक्तेरुदात्तत्वम्। दशभिः हरिभिरागच्छ। सुमख! सुयज्ञ! सुधन! वा हे इन्द्र! अयं सोमस्त्वदर्थमभिषुतः। अतो यज्ञस्य मृधः हिंसा मा कः मा कार्षीः। करोतेर्लुङि 'मन्त्रे घस०' इत्यादिना च्लेर्लुक्। गुणे कृते हल्ङ्यादिना सिपो लोपः। यद्यपीन्द्रस्य द्वावेव हरी तथापि तयोर्विभूतिभेदान्नानात्वम्। अतोऽश्वबहुत्वमविरुद्धम् Sy.॥ आ इत्युपसर्गो 'याहि' इत्यनेन सम्बध्यते। द्वाभ्यां हरिभ्यां हे इन्द्र! आ याहि। आ चतुर्भिरायाहि। हूयमानोऽस्माभिरायाहि। अष्टाभिर्दशभिर्वा प्रभूतत्वादश्वानाम्। हे सुयज्ञ! यावद्भ्यो रोचते तावद्भिरायाहीत्यर्थः SKN.॥ हे भगवन्निन्द्र! यदि तावत्तव द्वौ हरी सन्निहितौ, ततस्तावेव रथे युक्त्वा ताभ्यां हरिभ्यामायाहि। अथ चत्वारः, ततस्तैश्चतुर्भिः। अथ षट्, ततस्तैः षड्भिः। अथाष्टौ, ततस्तैरष्टाभिः। अथ दश, ततस्तैर्दशभिरायाहि हे सुधन! Dur.॥ N.VII.6., SKN.III.41.

आ विंशत्या त्रिंशता याह्यर्वाङा चत्वारिंशता हरिभिर्युजानः ।
आ पंञ्चाशता सुरथेभिरिन्द्रा षष्ट्या सप्तत्या सोमपेयम् ॥४॥

[आ विंशत्या ।][1]

आशीत्या नवत्या याह्यर्वाङा शतेन हरिभिरुह्यमानः ।
अयं हि ते शुनहोत्रेषु सोम इन्द्र त्वाया परिषिक्तो मदाय ॥६॥

[आशीत्या][2] । त्वया[3] त्वत्कामनया । तव मदार्थम्[4] । परिषिक्त इति[5] ।

मम ब्रह्मेन्द्र याह्यच्छा विश्वा हरी धुरि धिष्वा रथस्य ।
पुरुत्रा हि विहव्यो बभूथास्मिञ्छूर सवने मादयस्व ॥७॥

मम ब्रह्म । इन्द्र ! मम[7] । स्तोत्राणि[8] । प्रति[9] । आगच्छ । तदर्थं[10] रथस्य । धुरि[11] । अश्वौ । स्थापय[12]

---

१. VM. does not explain this stanza as it is quite easy and does not stand in need of any commentary.

Sy. explains this stanza in the following manner:— हे इन्द्र ! सोमपेयं पातव्यं सोमं प्रति अर्वाङ् अस्मदभिमुखः सन् विंशत्या विंशतिसंख्याकैरश्वैः आ याहि । त्रिंशता त्रिंशत्संख्याकैर्हरिभिरागच्छ । चत्वारिंशता चत्वारिंशत्संख्याकैः हरिभिः युजानः युज्यमानस्त्वं सोमपानं प्रति आ याहि । सुरथेभिः सुरंहणैः सुगमनैः पञ्चाशता हरिभिः आयाहि । तथा षष्ट्या षष्टिसंख्याकैर्हरिभिः सोमपानं प्रत्यागच्छ ।

२. The *pratika* has been supplied by the Editor.

३. त्वाया is suggested for त्वया।

४. ०दार्थम् P. हर्षाय Sy.

५. पुरिक्त P.

६. VM. explains the last three words of this stanza only.

Sy. explains the stanza in the following manner:— अशीत्या अशीतिसंख्याकैरश्वैः सोमपानार्थम् अर्वाङ् अस्मदभिमुखः सन् आ याहि । नवत्या एतत्संख्याकैरश्वैरागच्छ । शतेन शतसंख्याकैः हरिभिरुह्यमानः धार्यमाणस्त्वम् आयाहि । हे इन्द्र ! हि यस्मात् ते मदाय हर्षाय शुनहोत्रेषु । सुखेन हूयते सोमो यैरिति शुनहोत्राः पात्रविशेषाः । तेषु अयं सोमः त्वाया त्वत्कामनया परिषिक्तः ।

७. अस्मदीयामेव Sy.

८. स्तुतिम् Sy.

९. अच्छाभिलक्ष्य Sy.

१०. तदर्थं P.

११. युगप्रान्ते Sy.

१२. संयोजय Sy.

त्वम्। बहुषु स्थानेषु। विविधं 'मय्यागच्छ मय्यागच्छेत्याह्वातव्यः। भवसि। सम्प्रत्यस्मिन्। यज्ञे। शूर! मादयस्वेति।

**न म इन्द्रेण सख्यं वि योषदस्मभ्यमस्य दक्षिणा दुहीत।**
**उप ज्येष्ठे वरूथे गभस्तौ प्रायेप्राये जिगीवांसः स्याम ॥८॥**

न म इन्द्रेण। शौनकः—

निहत्य तौ गृत्समदमृषिं शक्रोऽभ्यभाषत।
यथेष्टं मां सखे! पश्य प्रियस्त्वभ्यागतोऽसि मे ॥

वरं गृहाण मत्तस्त्वमक्षयं चास्तु ते तपः।
प्रभुस्त्वं प्रत्युवाचर्षिरस्माकं वदतां वरः ॥ २ ॥

तनूनामस्तु चारिष्टिर्वाचश्च हृदयङ्गमाः।
सुवीरा रयिमन्तश्च वयं त्वामिन्द्र! धीमहि ॥ ३ ॥

इन्द्रं त्वां न विजानीमो वयं जन्मनि जन्मनि।
त्वद्गतश्चैष मे भावो मापगात् तु रथीतर! ॥ ४ ॥

तथेत्युक्त्वा तुराषाट् तं पाणौ जग्राह दक्षिणे।
ऋषिश्चास्य सखित्वेन पाणिना पाणिमस्पृशत् ॥ ५ ॥ इति ॥

---

१. पुरुभिर्बहुभिर्यजमानैः Sy.
२. मर्याग० M.
३. त्वं विविधं ह्वातव्यः Sy.
४. बभूथ बभूविथ। 'बभूथाततन्थजगृम्भ ववर्थ०' इति निपातनादिडभावः Sy.
५. M. and P. read शूराद० for शूरमाद०।
६. सोमपानेन हृष्टो भव Sy.
७. VM. ignores विश्वा and हि॥ विश्वा व्याप्तौ Sy.
८. तेन M.
९. प्रियत्वं ह्यागतो० BD.
१०. प्रह्वस्तम् BD.
११. वेदतां M.
१२. वाक् चास्तु BD.
१३. सीमहि P.
१४. इन्द्र त्वां च BD.
१५. गान्तु P. मापगास्त्वं रथीतरः BD.
१६. रथेत्यु० P.
१७. ०षात् तं P. तुराषाट् तु BD.
१८. BD. IV. 70–73, 75.

न। मे[१] इदम्। इन्द्रेण[२] सञ्जातम्। सख्यम्[३]। वियुतं भवतु[४]। अस्मभ्यम्। अस्येन्द्रस्य। दानम्[५]। अभिलषितं प्रयच्छतु[६]। वयमिन्द्रस्य श्रेष्ठे[७]। वारके[८] शत्रूणाम्। बाहौ। उपस्याम[९] तदाश्रया[१०] भवाम। प्रयाणे[११] प्रयाणे। शत्रून्[१२] जिगीवांस[१३] इति।

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥६॥

[नूनं सा ते। पू० व्या०][१४]

II. 19.

अपाय्यस्यान्धसो मदाय मनीषिणः सुवानस्य प्रयसः।
यस्मिन्निन्द्रः प्रदिवि वावृधान ओको दधे ब्रह्मण्यन्तश्च नरः ॥१॥

अपायि[१५]। अस्य[१६]। अद्यमानस्य। मदार्थम्[१७]। मेधाविनः[१८]। प्रसूयमानस्य[१९]। अन्नस्य[२०]।

---

१. मम Sy.

२. इन्द्रेण सह Sy.

३. यष्टृयष्टव्यलक्षणं सख्यम् Sy.

४. ०वन्ति P. कदाचिदपि न वियुज्यताम्। योषत्–यौतेर्लेटि 'सिब्बहुलं लेटि' इति सिप्। अडागमः Sy.

५. इन्द्रकर्तृकं दानम् Sy.

६. अभिमतफलं दुग्धाम्। दुहीत–दुहेर्लिङि रूपम् Sy.

७. अतिशयेन प्रशस्ये Sy.

८. आपदां वारके, वरणीये वा Sy.

९. उप समीपे वर्तिनः स्याम। इन्द्रस्य हस्तस्पर्शयोग्या भवेमेत्यर्थः Sy.

१०. दाश्र० P.

११. प्रायेण M. सोमपानार्थमिन्द्रस्य यज्ञशालायां प्रवेशे प्रवेशे यद्वा प्राये प्राये। प्रकर्षेणेयते गम्यते योद्धृभिरिति प्रायं युद्धं तस्मिन् Sy.

१२. शत्रुं M.

१३. जिनीवां० M. जिगिवां० P. शत्रूणां जेतारो यद्वा शत्रून् जितवन्तो भवेम Sy.

१४. The line, apparently a remark of the scribe, is found in M. only. This stanza has already been explained. See RV. 2.11.21.

१५. 'अपाय्यस्य' इति नवर्चमष्टमं सूक्तं गार्त्समदं त्रैष्टुभमैन्द्रम्। 'अपायि' (KSA. 14.19., p.13.) इत्यनुक्रान्तम्। लैङ्गिकः सूक्तविनियोगः। 'द्वितीये पर्याये होतृशस्त्रयाज्या अपायीत्येषा' (ASS. 6. 4.) Sy.

१६. सोमलक्षणस्य Sy.

१७. ०दार्थं P.

१८. प्राज्ञस्य यजमानस्य सम्बन्धिनः Sy.

१९. प्रस्तूय० M. सोमाभिषवं कुर्वाणस्य Sy.

२०. अन्नस्य is suggested for अन्नस्य॥ प्रयसः 'प्रीङ् तर्पणे'। असुन्। प्रीतिकरस्य Sy.

अंशोऽपायि[1] । यस्मिन्[2] । इन्द्रः[3] । पुराणे प्रदीप्यमाने वा । वर्धमानः[4] । स्थानम्[5] । धारयति[5] । स्तोत्रमिच्छन्तः[6] । मनुष्याः[7] । चेति ।

**अस्य मन्दानो मध्वो वज्रहस्तोऽहिमिन्द्रो अर्णोवृतं वि वृश्चत् ।**
**प्र यद्वयो न स्वसराण्यच्छा प्रयांसि च नदीनां चक्रमन्त ॥२॥**

**अस्य मन्दानः ।** अस्य[8] । मधुसदृशस्य सोमस्य[8] । तृप्यन्[9] । वज्रहस्तः[10] । इन्द्रः । उदकस्य वारकम्[11] । अहिम्[12] । विवृश्चत्[13] । यदा[14] । पक्षिणः[15] । इव । स्वावस्थानानि[16] । प्रति[17] । नदीनाम् । वेगान्[18] । च । प्रचक्रमन्त[19] गन्तुमुपचक्रमिरे[20], अहिं[21] च हतवान्, तदानीमेव नदीश्च प्रावर्तयदित्यर्थः[22] ।

**स माहिन इन्द्रो अर्णो अपां प्रैरयदहिहाच्छा समुद्रम् ।**
**अजनयत्सूर्यं विदद् गा अक्तुनाह्नां वयुनानि साधत् ॥३॥**

**स माहिनः ।** सः । महान्[23] । इन्द्रः । अपाम् । स्रोतः[24] । समुद्रम् । प्रति[25] । प्रैरयत्[26] ।

---

१. ०पायी P. एतदन्नमिन्द्रेण पीतमित्यर्थः । यद्वा अपायीति पातेः 'व्यत्ययो बहुलम्' इति चिण् कर्तरि भवति । 'छन्दसि लुङ्लङ्लिटः' इति लोडर्थे लुङ् । प्रीतिकरस्य अन्धसो मदायापायि । शेषत्वविवक्षया कर्मणि षष्ठी । इन्द्रः सोमं पिबतु Sy.

२. सोमलक्षणेऽन्धसि Sy.

३. इन्द्र M.    ४. वर्धमान P.

५. सेव्यतया निवासं चकार Sy.

६. किञ्च इन्द्राय स्तोत्रमिच्छन्तः Sy.

७. कर्मणां नेतार ऋत्विजो यस्मिन्निवासं दधिरे । तदेतदपायीति पूर्वेण सम्बन्धः Sy.    ८. तृतीयार्थे षष्ठी । अनेन मदकरेण सोमेन Sy.

९. हृष्यन् Sy.

१०. वज्रयुक्तो हस्तो यस्य सः Sy.

११. उदकस्यावरकमुदकेनावृतं वा Sy.

१२. वृत्रं मेघं वा Sy.

१३. वृणोश्च M. विशेषेणाच्छिनत् वृश्चत्- 'ओव्रश्चू छेदने' तौदादिकः । लङि ग्रहिज्यादिना सम्प्रसारणम् Sy.

१४. यदाहिभेदने जाते Sy.

१५. तत्र दृष्टान्तः—यथा पक्षिणः कुलाया- नभिलक्ष्य गच्छन्ति तद्वत् Sy.

१६. सुप्व्यर्थन्ते प्राप्यन्त इति स्वसराणि कुलायाः तान् Sy.

१७. समुद्रमभिलक्ष्य Sy.

१८. वेगं वेगान् M. वेगा P. प्रीणयितॄणि जलानि Sy.

१९. ०चम० P. गन्तुमुपाक्रमन् Sy.

२०. गञ्चमुमिर P.

२१. हि P

२२. प्रव० P.

२३. महनीयः पूजनीयो यद्वा महिमोपेतः Sy.

२४. अर्णः—'ऋ गतौ' स्रोतोलक्षणं प्रवाहम् Sy.

२५. अभिलक्ष्य Sy.

२६. प्रेरयत् M. and P.

अहेर्हन्ता[1] । सूर्यं च[2] । अजनयत् । असुरैर्हृता[3] गाश्च । अविन्दत्[4] । अन्जनसाधनेन तेजसा । अह्नाम्[5] । प्रज्ञानानि[6] । साधयति[7] ।

**सो अप्रतीनि मनवे पुरूणीन्द्रो दाशद्दाशुषे हन्ति वृत्रम् ।**
**सद्यो यो नृभ्यो अतसाय्यो भूत्पस्पृधानेभ्यः सूर्यस्य सातौ ॥४॥**

सो अप्रतीनि[8] । सः । इन्द्रः । मनुष्याय । यजमानाय[9] । असदृशानि[10] । पुरूणि धनानि[11] । प्रयच्छति[12] । हन्ति च । वृत्रम्[13] । सद्य[14] एव । यः । मनुष्येभ्यः । समाश्रयणीयः[15] । अभूत् । स्पर्धमानेभ्यः[16] । सूर्यस्य[17] सौवश्व्यशत्रोः[18] । युद्धे सम्भजन[19] इति 'प्रैतशं[20] सूर्ये पस्पृधानम्[21]' इत्युक्तमिति च ।

---

१. अहिहा अहिं मेघं हतवानिन्द्रः । 'ब्रह्मभ्रूणवृत्रेषु क्विप्' 'बहुलं छन्दसि' इति भूतकाले क्विप् Sy.

२. किञ्च स इन्द्रोऽङ्गिरसां बिलान्तर्वर्तिनामावृतानां गवां लाभाय सूर्यम् Sy.

३. ततः पणिभिरपहृता गाः Sy.

४. अविन्दम् P. अलभत । विदत्–'विद्लृ लाभे' । लृदित्त्वादङ् Sy.

५. अन्नाम् P.
दिवसानाम् Sy.

६. प्रकाशान् Sy.

७. असाधयत् Sy.

८. प्रतिनि P.

९. दाशुषे हविर्दत्तवते यजमानाय Sy.

१०. सदृ P.
उत्कृष्टानि Sy

११. सधानि M.
बहूनि धनानि Sy.

१२. ददाति Sy.

१३. असुरम् Sy.

१४. तदानीमेव Sy.

१५. तत्प्राप्तिहेतुभूतः सन् समाश्रयणीयः Sy.

१६. अहमेव प्रथमं सूर्यं प्राप्नुयामहमेव प्रथमं सूर्यं प्राप्नुयामिति स्पर्धमानेभ्यः स्तोतृभ्यः नृभ्यः Sy.

१७. Both M. and P. put सूर्यस्य between सौवश्व्य and शत्रोः ।

१८. सौवश्च M.
सौपश्य P.

१९. सम्भजेन M. समभजेन P. सूर्यसम्भजनविषयभूते यद्वा सूर्यस्य सम्बन्धिनि युद्धे पस्पृधानेभ्यः सूर्येण सह स्पर्धमानेभ्योऽतसाय्योऽभूत् । सातौ 'षोऽन्तकर्मणि' अधिकरणे क्तिन् Sy.

२०. ऐतशं D.

२१. A fragment of RV. 1. 61. 15.

स सुन्वत इन्द्रः सूर्यमा देवो रिणङ्मर्त्याय स्तवान् ।
आ यद्रयिं गुहदवद्यमस्मै भरदंशं नैतशो दशस्यन् ॥५॥

स सुन्वते । सः । इन्द्रः । सुन्वते[1] । एतशाय[2] । सूर्यं[3] नाम शत्रुम् । आरिणक्[4] जघान । स्तूयमानः[5] । यदा[6] । अभरत्[7] । धनं हविराख्यम्[8] । निरवद्यम्[9] । अस्मा इन्द्राय । पिता पुत्रायांशम्[10] । इव । प्रयच्छन्[11] । एतशनामा[12] ऋषिः[13] ।

स रन्धयत्सदिवः सारथये शुष्णमशुषं कुयवं कुत्साय ।
दिवोदासाय नवतिं च नवेन्द्रः पुरो व्यैरच्छम्बरस्य ॥६॥

स रन्धयत् । सः[14] । वशमनयत्[15] । दीप्तिसहितः । एकं रथमास्थाय सारथ्यं कुर्वते[16] । शुष्णमसुरम्[17] । शोषयितुमशक्यम्[18] । कुयवं[19] च । कुत्सायर्षये[20] । दिवोदासाय राज्ञे[21] । नवतिम्[22] । नव । च । इन्द्रः । पुरः । शम्बरस्य स्वभूताः[23] । व्यैरयदिति[24] ।

---

१. सोमाभिषवं कुर्वते Sy.
२. एतशायः M. This refers to मर्त्याय ॥ मनुष्याय Sy.
३. एतशेन स्पर्धमानं सूर्यम् Sy.
४. आरिण M. आरीणत P. बलेनारेचयत् ॥ तथा च निगमः 'प्रैतशं सूर्ये पस्पृधानं सौवश्व्ये सुष्विमावदिन्द्रः' (RV. 1.61.15.) इति Sy.
५. सूय P. एतशेन स्तूयमानः Sy.
६. यस्मात् Sy.
७. सम्पादयामास Sy.
८. सुवि० M. सोमरूपधनम् Sy.
९. प्रशस्तावद्यम् Sy.
१०. तत्र दृष्टान्तः यथा पितांशं भागं पुत्राय भरति तद्वत् Sy.
११. प्रयच्छन् seems to be the explanation of दशस्यन् ॥ यजमानः Sy.
१२. ०तना० M. सौवश्व्यो राजा Sy.
१३. VM. ignores देवः । and आ ॥ देवः द्योतमानः Sy.
१४. इन्द्रः Sy.
१५. रध्यतिर्वशगमने (N.6.32.; 10.40.) यद्वा 'रध हिंसासंराध्योः' इत्यस्य ण्यन्तस्य 'रधिजभोरचि' इति नुम् । अवधीत् Sy.
१६. आत्मनः सारथ्यं कुर्वते Sy.
१७. पुष्ण० P. शोषयति सर्वमिति शुष्णः कश्चिदसुरः तम् Sy.
१८. शोषि० P. न केनापि शोषणीयम् Sy.
१९. कुवं P. एतन्नामानमसुरम् Sy.
२०. राजर्षये Sy.
२१. सासारयज्ञे P. एतन्नामकाय राज्ञे Sy.
२२. वत्तीन् P.
२३. भूता M. शम्बरस्य असुरस्य Sy.
२४. प्यैर० M. विदारितवान् Sy.

एवा तं इन्द्रोचथमहेम श्रवस्या न त्मना वाजयन्तः ।
अश्याम तत्साप्तमाशुषाणा ननमो वधरदेवस्य पीयोः ॥७॥

एवा त इन्द्र[1]। एवम् । तव[2]। इन्द्र ! स्तोत्रम् । प्रेरितवन्तः[3]। यथा[4]। अन्नेच्छयोदारं[5] दरिद्रा वाग्भिः[6] स्तुवन्त्येवम् । स्वयमेव । स्तुवन्तः[7]। प्राप्नवाम[8]। तत् । सप्तपरिमाणं[9] रत्नजातं शत्रुस्थम् । त्वां स्तुतिभिर्व्याप्नुवन्तस्तदर्थम्[10]। असुरस्य[11]। हिंसितुः[12]। वधार्थमात्मीयं वज्रम्[13]। नमयेति[14]।

एवा तें गृत्समदाः शूर मन्मावस्यवो न वयुनानि तक्षुः ।
ब्रह्मण्यन्तं इन्द्र ते नवीय इषमूर्जं सुक्षितिं सुम्नमश्युः ॥८॥

एवा[15] ते । एवम्[16]। ते[17]। गृत्समदाः[18]। हे शूर[19]! स्तोत्राणि[20]। स्तुतवन्तः[21]। जिगमिषवः[22]। इव । मार्गान्[23]। नवतरम्[24]। ब्रह्म तुभ्यमिच्छन्तः[25]। अन्नम्[26]। रसम्[27]। शोभनं निवासं गृहम्[28]।

---

१. इन्द्रः P. २. तुभ्यम् Sy.
३. प्रापयेम । 'अहि गतौ' Sy.
४. इदानीम् । न सम्प्रत्यर्थे Sy.
५. नेच्छ० M. श्रवस्या–'सुपां सुलुक्०' इति तृतीयायाः पूर्वसवर्णदीर्घः । यद्वा यशः-कामनया Sy. ६. वाभिः M.
७. त्वां बलिनं कुर्वन्तः यद्वा अन्नमिच्छन्तः । इच्छायामपि णिच् दृश्यते । अश्वायन्तो गव्यन्तो वाजयन्त इति । क्यजन्तत्वे चित्प्रातिपदिकस्य अन्तोदात्तत्वं स्यात् । 'वाजयन्तः शतक्रतुम्' इति यथा । तादृशा वयम् Sy. ८. व्याप्नुयाम Sy
९. ०रिणामं M. सप्तपुरुषसम्बन्धि साप्तपदीनं सख्यम् Sy.
१०. आशुषाणाः–अश्नोतेः कानचि 'व्यत्ययो बहुलम्' इति लिटयपि विकरणद्वय उप्रत्ययः स च त्वामश्नुवाना वयम् । यदभिलषितं तत् Sy. ११. ०रक् M. देवानिन्द्रादीनजानतः Sy. १२. पीयोः–पीयतिर्हिंसाकर्मा । हिंसकस्यासुरस्य Sy.
१३. M. omits वधार्थमात्मीयं वज्रम् ॥ वध्यन्ते शत्रवोऽनेनेति वधरायुधम् Sy.
१४. अधो नमय...ननम–'णमु प्रह्वत्वे' । ण्यन्तस्य लुङि चङि रूपम् । 'मितां ह्रस्वः' इति ह्रस्वः Sy.
१५. M. omits the words between 'एवा ते and स्तोत्राणि ।
१६. एव Sy. १७. तुभ्यम् Sy.
१८. 'गृत्समदो गृत्समदनो गृत्स इति मेधाविनाम गृणातेः स्तुतिकर्मणः' N. 9. 5. एकस्मिन् गृत्समदे बहुवचनं परोक्षनिर्देशश्च Sy.
१९. शूर ! बलवन् ! हे इन्द्र ! Sy.
२०. स्तोत्राणि P. मननीयं स्तोत्रम् Sy.
२१. तव M. स्तुतव P. ततक्षुः चक्रुः Sy.
२२. जेगमिषवः P. अवस्यवः—अवः–गत्यर्थादवतेरसुनि रूपम् अव इति । अवो गमनमिच्छन्तः पुमांसः Sy. २३. मायां M. मार्गान् यथा कुर्वन्ति तद्वत् Sy.
२४. ०वभरं M. नवीयः–'सुपां सुलुक्०' इति षष्ठ्या लुक् । नवीयसो नवतरस्य Sy.
२५. स्तोत्रं कर्तुमिच्छन्तो गृत्समदाः Sy.
२६. अन P. २७. साम P. बलम् Sy.
२८. गृह P. शोभननिवासोपेतम् Sy.

सुखं च। प्राप्नुयुः[1]।

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥९॥

[नूनं सा ते][3]

II. 20.

वयं ते वय इन्द्र विद्धि षु णः प्र भरामहे वाजयुर्न रथम्।
विपन्यवो दीध्यतो मनीषा सुम्नमियक्षन्तस्त्वावतो नॄन् ॥१॥

वयं ते[4]। वयम्। तुभ्यम्। इन्द्र! अन्नम्[5]। प्रेरयामः[6]। अस्मान्[7]। सुष्ठु। बुध्यस्व[8]। प्रभरस्व रथम्। अन्नमिच्छन्। इव[9]। महते कर्मणे स्तोतारः[10]। स्तुत्या[11]। दीप्यमानाः[12]। सुखम्। प्राप्तुमिच्छन्तः[13]। त्वत्सदृशान्[14]। नेतॄन्[15]भिगच्छन्तीति[16]।

---

१. M. adds. एवा ते गृत्समदास्त्रुटितम्। This is apparently a remark of the scribe.

२. VM. ignores इन्द्र and ते।

३. The *pratīka* is found in M. only. It appears to be an addition of the scribe. The stanza has already been explained. See RV.2.11.21

४. 'वयं ते वयः' इति नवर्चं नवमं सूक्तं गार्त्समदं त्रैष्टुभमैन्द्रम्। 'वयं ते' (KSA. 14.20.,p.13.) इत्यनुक्रान्तम्। सूक्तविनियोगो लिङ्गादवधार्यताम् Sy.

५. सोमलक्षणमन्नम् Sy.

६. प्रकर्षेण सम्पादयामः Sy.

७. स्मात् M. हविःसम्पादकान् नोऽस्मान् Sy.

८. जानीहि। विद्धि–विदेर्ज्ञानार्थस्य लोटि रूपम्। वाक्यादित्वादनिघातः Sy.

९. तत्र दृष्टान्तः–यथान्नमात्मन इच्छन् पुमान् रथं शकटं सम्पादयति तद्वत् Sy.

१०. किं कुर्वन्तो वयम्? तव स्तोत्रं कुर्वाणाः Sy.

११. मनस ईषया स्तुत्या Sy.

१२. ०माना P. 'दीधीङ् दीप्तिदेवनयोः' व्यत्ययेन शतृ Sy.

१३. याचमानाः Sy.

१४. ०दृशा P. त्वावतः–'युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम्' इति वतुप्। त्वत्सदृशान् Sy.

१५. अग्न्यादीन् Sy.

१६. यद्वा सुम्नं सुखेन नॄन् नेतॄन् अग्न्यादीन् देवानियक्षन्तः। इयक्षतिर्गतिकर्मा। हविषा तान् प्राप्नुवन्तो वयं भरामह इति समन्वयः Sy.

त्वं न॑ इन्द्र त्वाभि॑रू॒ती त्वा॑य॒तो अ॑भिष्टि॒पासि॒ जना॑न् ।
त्वमि॒नो दा॒शुषो॑ वरू॒तेत्थाधी॑र॒भि यो नक्ष॑ति त्वा ॥२॥

त्वं न इन्द्र । त्वम् । अस्मान्[1] । इन्द्र ! त्वदीयाभिः । ऊतिभिः[2] । त्वत्कामान्[3] । अभीष्टानां[4] रक्षिता । अस्मानपि रक्ष जनान्[5] । त्वम्[6] । स्वामी[7] । दाशुषः[8] । सम्भक्ता[9] । यः । त्वाम् । एवंविधकर्मा[10] । अभि[11]व्याप्नोति[12] ।

स नो॒ युवेन्द्रो॑ जो॒हूत्रः॒ सखा॑ शि॒वो न॒राम॑स्तु पा॒ता ।
यः शंस॑न्तं॒ यः श॑शमा॒नमू॒ती पच॑न्तं च स्तु॒वन्तं॑ च प्र॒णेष॑त् ॥३॥

स नो[13] युवा । सः । इन्द्रः । युवा[14] । अस्माकम् । आह्वातव्यः[15] । कल्याणः[16] । सखा[17] । नेतृणाम्[18] । अस्तु । रक्षकः[19] । यः[20] । शंसन्तम्[21] । मार्गेण[22] । प्रणयति[23] । शशति[24]रुद्योगकर्मा, आत्मा-

---

१. अस्मान् पाहि Sy.

२. पालनादिभिः Sy.

३. किञ्च त्वायतः । 'सुप आत्मनः क्यच्' 'शतुरनुमः०' इति विभक्तेरुदात्तत्वम् । त्वत्कामान् Sy.

४. ०ष्टान P. अभिष्टिपा–'सुपां सुलुक्०' इति सोराकारः । अभिष्टयोऽभिगन्तारः शत्रवः । तेभ्यः पाता रक्षकः Sy.

५. जनां P.

६. स्वम् P.

७. स्वामि P. ईश्वरः खलु Sy.

८. हविर्दत्तवतो यजमानस्य Sy.

९. वरूता । 'प्रसितस्कभितस्तभित०' इति निपातनादीकारस्य ऊकारः । बाधकानां निवारकोऽसि Sy.

१०. किञ्च त्वं तस्य स्तोतुः एवंविधोपद्रवोपशमरूपकर्माऽसि Sy.

११. अहिर्व्या० M.
हविषा परिचरति Sy.

१२. VM. ignores असि ॥ असि भवसि Sy.

१३. नोर्य P.

१४. युवा-तरुणो यष्टॄणां फलस्य शमयिता ? (यावयिता) वा Sy.

१५. स्तोतृभिराह्वातव्यो होतव्यो वा Sy.

१६. सुखकरः Sy.

१७. सखिभूतः Sy.

१८. नृशब्दस्यामि छान्दसो गुणः । नरशब्दस्य वा आमि आगमानुशासनस्यानित्यत्वान्नुडभावः । कर्मनेतॄणामस्माकम् Sy.

१९. रक्षा M. and P. पालको भवति Sy.

२०. यं M. य P.

२१. शंसन्त M. शसन्त P. शस्त्राणि शंसन्तम् Sy.

२२. ऊत्या रक्षणेन Sy.

२३. कर्मणां पारं प्रापयेत् । नयतेर्लटि 'सिब्बहुलं०' इति सिप् । अडागमः । 'तिङि चोदात्तवति' इति गतेर्निघातः Sy.

२४. शति० M. and P. 'शश प्लुतगतौ' क्रियाः कुर्वाणम् Sy.

धंमुद्युक्तमेव । पचन्तम्[1] । स्तुवन्तम्[2] । च[3] ।

तमु॑ स्तुष॒ इन्द्रं॒ तं गृ॑णीषे॒ यस्मि॑न्पु॒रा वा॑वृ॒धुः शा॑श॒दुश्च॑ ।
स वस्वः॒ कामं॑ पीपरदिया॒नो ब्र॑ह्मण्य॒तो नूत॑नस्या॒योः ॥४॥

तमु स्तुषे । तम् । एव । स्तौमि[4] । इन्द्रम् । तमेव च[5] । शंसामि[4] । यस्मिन्[6] । पुरा[7] । स्तोतारो वावृधुः[8] । शाशदुः[9] । च शत्रून् । सञ्जच्छन् । याचमानो[10] वा । धनेन[11] । कामम्[12] । पूरयतु[13] । स्तुतिमिच्छतः[14] । सम्प्रतितनस्य[15] । मनुष्यस्य[16] गृत्समदस्य ।[17]

सो अङ्गि॑रसामु॒चथा॑ जुजु॒ष्वान्ब्रह्मा॑ तूतो॒दिन्द्रो॑ गा॒तुमि॒ष्णन् ।
मु॒ष्णन्नु॒षसः॒ सूर्ये॑ण स्त॒वानश्न॑स्य चिच्छिश्नथत्पू॒र्व्याणि॑ ॥५॥

सो[18] अङ्गिरसाम् । सः । इन्द्रः । अङ्गिरसाम्[19] । स्तोत्राणि[20] । सेवमानः[21] । आदित्यम्[22] । प्रेरयति[23] । गमनम्[24] । इच्छन्[25] । सूर्येणोत्थिता[26] । उषसः । विनाशयन्[27] । स्तूयमानः[28] । मेघस्य[29] । अपि ।

---

१. चन्तम् P. पुरोडाशादिकानि हवींषि पचन्तम् Sy.
२. स्तव॰ P. सामभिः स्तोत्रं कुर्वाणम् । स्तुतशस्त्रयोः प्रगीताप्रगीतमन्त्रसाध्यत्वेन भेदस्य प्रतिपादितत्वादत्र पृथङ् निर्देशः Sy.
३. VM. ignores यः and च ।
४. स्तुषे, गृणीषे—उभयत्र पुरुषव्यत्ययः Sy. ५. Omitted in P.
६. यस्मिन्निन्द्रे Sy. ७. पूर्वम् Sy.
८. वावृ॰ P. प्रवृद्धा अभवन् Sy.
९. शाशदुः P. शत्रून् हिंसितवन्तश्च । 'शद्लृ शातने' । लिटि 'तुजादीनाम्॰' इत्यभ्यासस्य दीर्घः Sy.
१०. स्तोतृभिर्याच्यमानः Sy.
११. वसुनः Sy. १२. अभिलाषम् Sy.
१३. ॰यत् P. अभिलषितफलदानेन पूरयतु Sy. १४. स्तोत्रमिच्छतः Sy.
१५. नूतनस्य Sy.
१६. यजमानस्य Sy.
१७. VM. ignores सः ॥ स इन्द्रः Sy.
१८. सोऽङ्गि॰ M. सोंगि P.
१९. अङ्गिरसां सम्बन्धीनि Sy.
२०. उक्थानि Sy.
२१. ॰मान M. जुजुष्वान्–'जुषी प्रीतिसेवनयोः' इत्यस्य लिटि क्वसौ रूपम् Sy.
२२. तेषां स्तोत्रम् Sy.
२३. तूतोत्—'तु वृद्धौ' इत्यस्य लङि 'बहुलं छन्दसि' इति विकरणस्य श्लुः । कामप्रदानेन अवर्धयत् Sy.
२४. गातुं पणिभिरपहृतानामङ्गिरसां मार्गम् Sy. २५. प्रेरयन् Sy.
२६. सूर्येण स्वात्मभूतेन Sy.
२७. अपहरन् । उदिते हि सूर्ये उषसो व्यावर्तन्ते Sy.
२८. स्तोतृभिः स्तूयमानः Sy.
२९. अश्नस्य—अश्नुते स्वतेजसा सर्वं जगदित्यश्नः कश्चिदसुरः तस्य Sy.

श्लथयति[१]। पूर्वकालप्रादुर्भूतानि[२] शरीराणि।

**स ह श्रुत इन्द्रो नाम देव ऊर्ध्वो भुवन्मनुषे दस्मतमः ।**
**अव प्रियमर्शसानस्य साह्वाञ्छिरो भरद्दासस्य स्वधावान् ॥६॥**

स ह श्रुतः। सः। विश्रुतः[३]। इन्द्रः। नाम[४]। देवः[५]। प्रातरूर्ध्वः[६]। भवति। मनुष्याणाम्[७]। दर्शनीयतमः[८] सोऽयम्। प्रजा[९] बाधमानस्य[९]। वृत्रासुरस्य[१०]। प्रियम्। शिरः[११]। अवाभरत्[१२]। सहनशीलः[१३]। अन्नवानिति[१४]।[१५]

**स वृत्रहेन्द्रः कृष्णयोनीः पुरंदरो दासीरैरयद्वि ।**
**अजनयन्मनवे क्षामपश्च सत्रा शंसं यजमानस्य तूतोत् ॥७॥**

स वृत्रहा। कृष्णासुरो यासां योनिषु ताः[१६]। असुरस्त्रीः[१७]। पुरंदरः[१८]। वज्रेण व्यैरयत्[१९], 'यः[२०] कृष्णगर्भा निरहन्[२१]' इत्युक्तमिति[२२]। तथा मनवे[२३]। उदकम्[२४]। क्षेत्रम्[२५]। च। अजनयत्। सत्यमेव[२६]। यजमानस्य। अभिलषितम्[२७]। प्रेरयति[२८]।[२९]

---

१. श्लाय० M. अश्लथयत् शिथिलीचकार Sy.
२. पुरातनानि पुराणि बलानि वा Sy.
३. कीर्तिमान् Sy.
४. नाम प्रसिद्धौ Sy. ५. द्योतमानः Sy.
६. कामप्रदाने प्रवृत्त उन्मुखो भवतु Sy.
७. मनोरथम् Sy.
८. ०यत P. अत एव सर्वैरतिशयेन दर्शनीयः Sy.
९. पूजा० M. लोकं बाधमानस्य Sy.
१०. दासस्यैतन्नामकस्यासुरस्य Sy.
११. शरीरः P.
१२. ०भवत् P. अधः पातयतु। भरत्–हरतेर्लेटि अडागमः। हृग्रहोर्भश्छन्दसि Sy.
१३. सन० P. शत्रूनभिभवन् Sy.
१४. बलवानिन्द्रः Sy.
१५. VM. ignores ह ॥ हेति पूरणः Sy.
१६. निकृष्टजातीः Sy.
१७. उपक्षपयित्रीरासुरीः सेनाः Sy.
१८. शम्बरपुरां दारयिता Sy.
१९. ०रत् P. व्यनुदत् Sy.
२०. यं P. २१. ०र्भाणिर० M. D.
२२. ०न्नित्यक्तम् P. (RV. 1.101.1.)
२३. मनोरथम् Sy. २४. उदकानि Sy.
२५. पृथिवीम् Sy. २६. महान्तम् Sy.
२७. अभिलाषम् Sy.
२८. कामप्रदानेन पूरयतु। तूतोत्–'तु वृद्धौ' इति सौत्रो धातुः। शपः श्लुः। तुजादित्वाद्दीर्घः। यद्वा सत्रा महत् शंसं शंसनीयं शस्त्रं कामप्रदानेन वर्धयतु। यद्वा कृष्णयोनीः कृष्णाख्येनासुरेण निषिक्तरेतस्का दासीर्भार्या व्यैरयत् व्यनुदत् Sy.
२९. VM. ignores सः। वृत्रहा and इन्द्रः ॥ वृत्रहा वृत्रस्य हन्ता Sy.

तस्मै॑ तव॒स्य१॑मनु॑ दायि स॒त्रेन्द्रा॑य दे॒वेभि॒रर्ण॑सातौ ।
प्रति॒ यद॑स्य॒ वज्रं॑ बा॒ह्वोर्धुर्ह॒त्वी दस्यू॒न्पुर॒ आय॑सी॒र्नि ता॑रीत् ॥८॥

तस्मै । उदकं यस्मिँल्लभ्यते[1] सङ्ग्रामे । तत्रास्य बलवत्तां[2] दृष्ट्वा । तस्मै[3] । इन्द्राय । बलवद्भिर्देवैः[4] । सत्यमेव[5] । करप्रदानं कृतम्[6], 'अनु[7] ते दायि[8] मह इन्द्रियाय' इति मन्त्रः[9] । स्तोत्रेण यदा । अस्य[10] । वज्रम् । बाह्वोः । निदधुर्देवास्तदा[11] । दस्यून्[12] । हत्वा । शत्रूणामयसा[13] निर्मिताः । पुरीः[14] । नितारीदिति[15] ।[16]

नूनं सा ते॒ प्रति॒ वरं॑ जरि॒त्रे दु॑ही॒यदि॑न्द्र॒ दक्षि॑णा म॒घोनी॑ ।
शिक्षा॑ स्तो॒तृभ्यो॒ माति॑ धग्भगो॑ नो बृ॒हद्व॑देम वि॒दथे॑ सु॒वीराः॑ ॥९॥

[ नूनं सा ते । पू० व्या० ][17]

II. 21.

वि॒श्व॒जिते॑ धन॒जिते॑ स्व॒र्जिते॑ सत्रा॒जिते॑ नृ॒जित॑ उर्वरा॒जिते॑ ।
अ॒श्व॒जिते॑ गो॒जिते॑ अ॒ब्जिते॑ भ॒रेन्द्रा॑य॒ सोमं॑ यज॒ताय॑ हर्य॒तम् ॥१॥

विश्वजिते[18] । 'विश्वजिते' इत्यस्य प्रपञ्चः शेषः[19] । स्वः[20] स्वर्गः । सत्राशब्दो[21] महच्छब्द-

---

१. अर्णसातावुदकलाभे निमित्ते Sy.
२. तवसे बलाय हितं बलवर्धनं हविः Sy.
३. Omitted in P.
४. ०र्देवैः M. P. देवनशीलैः स्तोतृभिः Sy.
५. सन्ततं सर्वेष्वहःसु Sy. ६. अदायि यद्वा-यद्बलमवृद्धाय दीयते तत्तवस्यम् । देवे-भिर्देवैरुदकभजनेऽनुक्रमेण तद्बलं तस्मा इन्द्रायादायि Sy. ७. मनु M.
८. तदाहि M. ९. मनू० M. RV. 6.25.8. १०. इन्द्रस्य Sy.
११. स्तोतारोऽसुरवधसूचकेन स्तोत्रेण प्रति निदधुः । स्तूयमानो हीन्द्रो दस्युवधार्थं वज्रमादत्ते । धुः—दधातेर्लुङि 'गाति-स्था०' इति सिचो लुक् । 'आतः' इति झेर्जुस् Sy. १२. असुरान् Sy.
१३. अयोमयीः Sy. १४. पुरीम् M. पुरी P.
१५. निर्मिता० P. नितरामनाशयत् Sy.
१६. VM. ignores अनु and प्रति ॥ अनु—अनुक्रमेण सवनत्रये Sy.
१७. The line is found in M. only. The stanza has already been explained. See RV. 2.11.21.
१८. 'विश्वजिते' इति षड्चं दशमं सूक्तं गार्त्समदमैन्द्रम् । अन्त्या त्रिष्टुप् । शिष्टाः पञ्च जगत्यः । तृतीये पर्याये होतुः शस्त्रे एतत्सूक्तम् । सूत्रितं च—'विश्वजिते तिष्ठा हरी रथ आयुज्यमानेति याज्या' (ASS. 6.4.) इति Sy. 'विश्वजिते षट् त्रिष्टुबन्तम्' (KSA. 14.21., p. 13.) १९. शेष P.
२०. Omitted in P. २१. सत्राजिते सन्ततं जयशीलाय, महतो जेत्रे वा Sy.

पर्यायः, महदपि जयति धनमिति । हर्यतं[१] स्पृहणीयमिति ।[२]

**अभिभुवेऽभिभङ्गाय वन्वतेऽषाळ्हाय सहमानाय वेधसे ।**
**तुविग्रये वह्नये दुष्टरीतवे सत्रासाहे नम इन्द्राय वोचत ॥२॥**

**अभिभुवे** । शत्रूणामभिभवित्रे[३] । पुरामभिभञ्जकाय[४][५] । वननं[६] शत्रूणां कुर्वते[७] । शत्रुभिरभिसोढाय[८] । तान् सहमानाय[९] । सर्वस्य[१०] विधात्रे[११] । बहुस्तुतये[१२] । वोढ्रे[१३] । शत्रुभिर्दुस्तराय[१४] । बहूनामभिभवित्रे[१५] । नमस्कारम्[१६] । ब्रूत[१७] ।[१८]

---

१. 'हर्य गतिकान्त्योः' 'भृमृदृशि०' इत्यादिना कर्मण्यतच् । कमनीयं स्पृहणीयं वा Sy.

२. VM. ignores धनजिते...नृजिते । उर्वराजिते । अश्वजिते । गोजिते । अब्जिते । भर । इन्द्राय । सोमम् and यजताय ॥

Sy. explains these words in the following manner:—हे अध्वर्यो ! इन्द्राय सोमं भर सम्पादय। कीदृशाय ? विश्वजिते सर्वस्य जेत्रे । तदेव प्रपञ्चयति । धनजिते शत्रुविजयेन तदीयधनानां जेत्रे । स्वर्जिते स्वर्गस्य जेत्रेऽधिपतये । सत्राजिते सत्रा सन्ततं जयशीलाय महतो जेत्रे वा । नृजिते नृणां नायकानां जेत्रे । उर्वराजिते उर्वरा सर्वसस्याढ्या भूः, तस्या जेत्रे । अश्वजिते गोजिते बलेनापहृतानां गवां जेत्रे । अब्जिते वृत्रेणाक्रान्तानामपां जेत्रे । यजताय यजनीयाय तस्मा इन्द्राय ।

३. ०मभिभवः M. and P. सर्वस्याभिभवित्रे Sy.

४. ०राणाम० M. असुराणां भञ्जकाय Sy.

५. ०भिभङ्क्तः M. and P.

६. पवनं P.

७. Omitted in M. and P. शत्रूणां धनानां सम्भजकाय । 'वन षण सम्भक्तौ' व्यत्ययेन उप्रत्ययः Sy.

८. शत्रुभिरनभिभूताय । अषाळ्हाय—सहेः कर्मणि निष्ठा । उ? (ओ)त्वाभावश्छान्दसः Sy.

९. सर्वसहाय Sy.

१०. सर्वस्व M.

११. विधास्त्रे M.

१२. ०हुस्तत० P.
तुविग्रये—पूर्णग्रीवाय । यद्वा 'गॄ शब्दे' । औणादिकः कर्मणि किप्रत्ययः । तुविभिर्बहुभिः स्तोतव्याय Sy.

१३. सर्वस्य वोढ्रे Sy.

१४. अन्यैर्दुस्तराय दुर्हिसाय Sy.

१५. सर्वदाभिभवित्रे महतोऽभिभवित्रे वा एवंविधायेन्द्राय Sy.

१६. नमःशब्दपूर्वकं स्तोत्रम् Sy.

१७. हे स्तोतारः ! यूयं ब्रूत । वोचत—ब्रूञो लुङि 'ब्रुवो वचिः' । 'अस्यतिवक्तिख्यातिभ्योऽङ्' इत्यङादेशः । 'वच उम्' इत्युम् । गुणः Sy.

१८. VM. ignores इन्द्राय ।

सत्रासाहो जनभक्षो जनंसहश्च्यवनो युध्मो अनु जोषमुक्षितः ।
वृतंचयः सहुरिर्विक्ष्वारित इन्द्रस्य वोचं प्र कृतानि वीर्या ॥३॥

सत्रासाहः । बहूनामभिभविता । जनानां सम्भक्ता[1] । अभिभविता परेषाम्[2] । च्यावयिता च[3] । योद्धा[4] । सेवानन्तरम्[5] । सोमेन सिक्तः । परिवृतस्य बलस्य चाययिता[6] । सहनशीलः[7] । शत्रुषु[8] । तदायुधैः[9] सञ्जातारः । तस्येन्द्रस्य । प्रब्रवीमि[10] । कृतानि[11] । वीर्याणि[12] ।

अनानुदो वृषभो दोधतो वधो गम्भीर ऋष्वो असमष्टकाव्यः ।
रध्रचोदः श्नथनो वीळितस्पृथुरिन्द्रः सुयज्ञ उषसः स्वर्जनत् ॥४॥

अनानुदः[13] । अनुदानवर्जितोऽनपेक्षितबलप्रदानः[14] । वर्षिता कामानाम् । कम्पयितः[15] । हन्ता[16] । ग्रहणवान्[17] । महान्[18] । असमाप्तस्तोत्रः[19] । रन्ध्राः[20] असुराः[21] रन्ध्रं[22] कुर्वन्ति शरीरे

---

१. जनानां यजमानानां कामप्रदानेन सम्भक्ता तैः सम्भजनीय इति वा Sy.

२. चतेषाम् M. बलिनां जनानामभिभविता Sy.

३. Omitted in P. शत्रूणां च्यावयिता स्वस्थानात् Sy.

४. योन्धनानि P.

५. सवान्त॰ P. It seems to be the explanation of two words अनु and जोषम् ॥ प्रीतिमनु Sy.

६. वृतस्याभीष्टस्याचेता सञ्चेता दातेत्यर्थः । यद्वा वर्तते पुनः पुनरभिमुखमागच्छतीति वृत् शत्रुः, तं चयते हिनस्तीति वृतञ्चयः चयतिर्हिंसाकर्मा । तथा च ब्राह्मणम् 'यो वै भागिनं भागान्नुदते चयते वैनं स यदि वैनं न चयतेऽथ पुत्रमथ पौत्रं चयते त्वेवैनम्' (AB. 2.7.)

७. अभिभविता शत्रूणाम् । सहुरिः–'जहिसहोरुरिन्' इत्युरिन्प्रत्ययः Sy.

८. विक्षु प्रजासु Sy.

९. ॰दार्थैः P. पालकत्वेन प्रापितो भवति Sy.

१०. ब्रवी॰ P. प्रकर्षेण वदामि Sy.

११. वृत्रहननादिरूपाणि Sy.

१२. सामर्थ्यानि Sy.

१३. ॰नुदं P.

१४. अननुदः—अनु पश्चाद्ददातीत्यनुदः । 'आतश्चोपसर्गे' इति कर्तरि कः । स नास्ति यस्य स तथोक्तः । प्रभूतधनदानेन समानो नास्तीत्यर्थः Sy.

१५. हिंसकस्यासुरस्य । 'दुधिर्हिंसाकर्मा' Sy.

१६. हन्त P.

१७. Omitted by P. महत्त्वेन गाम्भीर्योपेतः Sy.

१८. Omitted in P. महान् यद्वा दर्शनीयः सर्वैः Sy.

१९. असमा॰ P. असमष्टकाव्यः–'अशू व्याप्तौ' । कर्मणि निष्ठा । नञ्समासः । अन्यैरव्याप्तकर्मा Sy.

२०. मन्त्रा P.

२१. Omitted in M. and P.

२२. रन्ध्रं P.

इति असुराणां प्रेरकः[1]। स्नथयिता[2] सेनासङ्घस्य[3]। दृढीकृतः[4]। पृथुः[5]। इन्द्रः। शोभनप्रज्ञः[6]। उषसः[7]। स्वरादित्यं[8] च। जनयति[9]।

**यज्ञेन गातुमप्तुरो विविद्रिरे धियो हिन्वाना उशिजो मनीषिणः।**
**अभिस्वरा निषदा गा अवस्यव इन्द्रे हिन्वाना द्रविणान्याशत ॥५॥**

यज्ञेन। यज्ञेन[10]। अपां[11] प्रेरयितुरिन्द्रस्य। गमनम्[12]। लब्धवन्तः[13]। कर्माणि[14]। प्रेरयन्ति[15]। ऋत्विजः[16]। मेधाविनः[17]। अभिगमनेन[18]। निषदनेन[19] च। अस्मिन्निन्द्रे। वाचः। हिन्वानाः[20]। रक्षणेच्छवो[21] मर्त्याः। धनानि[22]। प्राप्नुवन्ति[23]।

**इन्द्र श्रेष्ठानि द्रविणानि धेहि चित्तिं दक्षस्य सुभगत्वमस्मे।**
**पोषं रयीणामरिष्टिं तनूनां स्वाद्मानं वाचः सुदिनत्वमह्नाम् ॥६॥**

इन्द्र श्रेष्ठानि। इन्द्र ! त्वम्[24]। प्रशस्यतराणि[25]। धनानि। प्रयच्छ[26]। तथा प्राणस्य[27]।

---

१. ०रक P. रध्रचोदः—'रध हिंसासंराध्योः'। रध्राणां समृद्धानां प्रेरकः। यद्वा हिंसकानां शत्रूणां चोदकः Sy.
२. स्नथयितां P. शत्रूणां बलापहारेण शातयिता Sy.
३. सनानां P.
४. दृढाङ्गः Sy.
५. स्वतेजसा जगद् व्याप्य वर्तमानः Sy.
६. सुकर्मा Sy.
७. उषस P.
८. स्वः सूर्यं ज्योतिः। 'स्वः सूर्यः' इति हि ब्राह्मणम्। सूर्यं च Sy.
९. प्रादुश्चकार Sy.
१०. यज्ञेन तपसा Sy.
११. अवां P. अपां प्रेरकादिन्द्रात् Sy.
१२. गवां मार्गम् Sy.
१३. लेभिरे Sy.
१४. स्तुतीः Sy.
१५. इन्द्रे प्रेरयन्तः Sy.
१६. इन्द्रं कामयमानाः Sy.
१७. मेधाविनोऽङ्गिरसः Sy.
१८. ०मचन P.
अभितः स्वरः स्वरणं शब्दनं यस्य तेन स्तोत्रेण Sy.
१९. निषसदने० M. निषसमने० P. निषदोपसदेन च Sy.
२०. प्रेरयन्तस्तेऽङ्गिरसः। 'हि गतिवृद्ध्योः'। स्वादिः Sy.
२१. ततः रक्षणमिच्छन्तः Sy.
२२. P. adds किमि after धनानि ॥ गोधनानि Sy.
२३. प्राप्नुवन्। आशत—अश्नोतेर्लुङि 'बहुलं छन्दसि' इति विकरणस्य लुक् Sy.
२४. त्वां P.
२५. उत्तमानि Sy.
२६. निधेहि Sy.
२७. दक्षस्य—दक्षेर्भावे घञ्। कर्मकरणसामर्थ्यस्य Sy.

विज्ञानं[1] प्रयच्छ । अस्माकम्[2] । शरीरसौभाग्यं[3] देहि । धनानाम्[4] । पोषं[5] देहि । तथाज्ञानाम्[6] । अविनाशम्[7] । वाचः[8] । मधुमत्त्वम्[9] । अह्लाम् । सुदिनत्वमिति[10] ।

## II. 22.

त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृपत्सोमंमपिबद्विष्णुना सुतं यथावशत् ।
स ईं ममाद् महि कर्म कर्तवे महामुरुं सैनं सश्चद्देवो देवं सत्यमिन्द्रं सत्य इन्दुः ॥१॥

त्रिकद्रुकेषु[11] । त्रिकद्रुकेषु[12] यज्ञेषु । महान्[13] । यवसक्तुश्रयणम्[14] । बहुबलः[15] । तृप्यन्[16] ।

१. चित्ति स्याति धेहि Sy.

२. अस्मभ्यम् Sy.

३. सुभगत्वं शोभनधनवत्त्वं सौभाग्यं वा धेहि Sy. ४. Omitted in M. त्वया दत्तानां धनानाम् Sy.

५. पोषं समृद्धि धेहि Sy. ६. तनूनाम्... यद्वा तायत एभिः कुलमिति तनवः पुत्राः । तनोतेः करणे उप्रत्ययः । तेषाम् Sy.

७. अपि नाशः M. अहिंसां धेहि Sy.

८. अस्मदीयाया वाचः Sy.

९. ०मत्वम् P. स्वादुताम् Sy.

१०. शोभनदिनत्वं च धेहि । येषु हीन्द्रादयो देवा इज्यन्ते तानि सुदिनानि तेषां भावः सुदिनत्वम् Sy.

११. 'त्रिकद्रुकेषु' इति चतुर्ऋचमेकादशं सूक्तं गार्त्समदमैन्द्रम् । अत्रेयमनुक्रमणिका— 'त्रिकद्रुकेषु चतुष्कमष्ट्याद्यतिशाक्वरमन्त्याष्टिर्वा' (KSA. 14.22. p. 13) इति । आद्यायामष्टिश्छन्दश्चतुःषष्ट्यक्षरा । अवशिष्टाः षष्ट्यक्षरा अतिशक्वर्यः । अन्त्याष्टिर्वा । षोडशिशस्त्रे 'त्रिकद्रुकेषु' इति तृचः । सूत्रितम्—'त्रिकद्रुकेषु महिषो यवाशिरं प्रोष्वस्मै पुरोरथमिति तृचावातिच्छन्दसौ' (ASS. 6.2) इति । अविवाक्येऽहनि मरुत्वतीये प्रतिपत्तृचस्य 'त्रिकद्रुकेषु' इति प्रथमा । 'दशमेऽहनि' इति खण्डे सूत्रितम्—'आ त्वा रथं यथोतय इत्येतस्याः स्थाने त्रिकद्रुकेषु महिषो यवाशिरमिति (ASS. 1. 12) इति । आश्वमेधिके मध्यमेऽहनि मरुत्वतीये आद्या । 'तस्य विशेषान्वक्ष्यामः' इति खण्डे सूत्रितम् 'त्रिकद्रुकेषु महिषो यवाशिरमिति मरुत्वतीयस्य प्रतिपत्' । (ASS. 10.10.) इति । महाव्रतेऽपि माध्यन्दिने सवने ब्राह्मणाच्छंसिनः स्तोत्रियस्तृचः । 'त्रिकद्रुकेषु महिषो यवाशिरमिति स्तोत्रियः' (AA. 5.1) इति सूत्रितम् Sy.

१२. Omitted in P. गृत्समदो ब्रूते... ज्योतिर्गौरायुरित्येतन्नामकेष्वाभिप्लविकेष्वहःसु Sy. १३. महान् पूज्यः Sy.

१४. येव० P. यवाशिरं—यवमयैः सक्तुभिर्मिश्रितम् । आङ्पूर्वस्य श्रीणातेः क्विपि 'अपस्पृधेथाम्०' इत्यादिनाशिर इत्यादेशः Sy. १५. बहुवस्य P.

१६. तप्यन् P. तृपत्—'तृप प्रीणने' । तुदादिः । आगमानुशासनस्यानित्यत्वान्नुमभावः Sy.

सोमम् । अपिबत्[१] । विष्णुना सह । सुतम्[२] । यथा । कामयते[३] । स[४] च । एनम्[५] । मदयति[६] । महत् । कर्म[७] । कर्तुम् । वृत्रवधादिकं महान्तम् । विस्तीर्णम्[८] । स सोमः[९] । एनम् । सेवते[१०] । देवः[११] । देवम्[१२] । सत्यकर्माणम्[१३] । इन्द्रम्[१४] । सत्यकर्मा । इन्द्रः[१५] ।

**अध त्विषींमाँ अभ्योजसा क्रिविं युधाभंवदा रोदंसी अपृणदस्य मज्मना प्र वावृधे ।**
**अधंत्तान्यं जठरे प्रेमंरिच्यत सैनं सश्चद्देवो देवं सत्यमिन्द्रं सत्य इन्दुः ॥२॥**

अथ त्विषीमान्[१६] । अथ[१७] । दीप्तिमान्[१८] । अभ्यभवत्[१९] । युद्धेन । बलकृतेन[२०] । क्रिविरिति[२१] कूपनाम, तत्सदृशं यज्ञम् । अथास्य[२२] यज्ञस्य । बलेन । द्यावापृथिवी[२३] । तेजसाऽपूरयत्[२४] । स्वयं[२५] च प्रवृद्ध[२६] आसीत् । अथान्यं सोमम्[२७] । सः[२८] । जठरे[२९] । निदधे । प्रारेचयच्च[३०] । पानशिष्टम्[३१] ।[३२]

---

१. अपियत् P.　२. अभिषुतम् Sy.
३. पूर्वं यथा तं सोममकामयत तथापिबत् । अवशत्—'वश कान्तौ' । 'बहुलं छन्दसि' इति शपो लुगभावः Sy.
४. पीतः स सोमः Sy.　५. इन्द्रम् Sy.
६. मुदयति P. अमादयत् किमर्थम् ? Sy.
७. वृत्रहननादिलक्षणं कर्म Sy.
८. तेजसा विस्तीर्णम् Sy.　९. वो P.
१०. सश्चतिर्व्याप्तिकर्मा । व्याप्नोतु Sy.
११. दीप्यमानः Sy.
१२. सोमं कामयमानं देवम् Sy.
१३. Omitted in P. यथार्थभूतम् Sy.
१४. Omitted in P.
१५. इन्दुः is suggested for इन्द्रः ॥ इन्दुः स्रवन् Sy.　१६. ०मान P.
१७. अध P. सोमपानानन्तरम् Sy.
१८. दीप्तिमानिन्द्रः Sy.
१९. अभ्यवत् M. अस्य भवत् P. अभिभूतवान् Sy.
२०. ०कृतेनं M. बलेन Sy.
२१. कृविरि० M. कुपिरि० P. (Ngh. 3.23.) ॥ क्रिविं नामासुरम् Sy.
२२. ०थात्य P. पीतस्य सोमस्य Sy.
२३. ०थिविम् P.
२४. स्वतेजसा समन्तात्पूरयामास यद्वास्य क्रिवेरसुरस्य मज्मना सारेण रोदसी अपूरयत् Sy.
२५. तं P.　२६. प्रकर्षेण वर्धते Sy.
२७. अन्यं भागम् Sy.
२८. इन्द्रः सोमं द्वेधा विभज्य Sy.
२९. स्वकीये जठरे Sy.
३०. देवेभ्यः प्रारेचयत् एतेनार्धमिन्द्राय अर्धमन्येभ्यो देवेभ्य इत्युक्तं भवति । तथा तैत्तिरीयकम्—'यत्सर्वेषामर्धमिन्द्रः प्रति तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तमः' (TS.5.4.8.3.) इति Sy.
३१. This seems to be the interpretation of ईम् ॥ एनमपरं भागं Sy.
३२. VM. ignores the words explained in the previous stanza as एनम् । सश्चत् । देवः । देवम् । सत्यम् । इन्द्रम् । सत्यः and इन्दुः ।

**साकं जातः क्रतुना साकमोजसा ववक्षिथ साकं वृद्धो वीर्यैः सासहिर्मृधो विचर्षणिः ।**
**दाता राधः स्तुवते काम्यं वसु सैनं सश्चद्देवो देवं सत्यमिन्द्रं सत्य इन्दुः ॥३॥**

साकं जातः । प्रज्ञानेन[1] । बलेन च । सह । जातस्त्वम् । सर्वं[2] जगद् वहसि[3] । सह । वीर्यैः[4] । प्रवृद्धः[5] । सोढा[6] । शत्रून्[7] । जगतो विद्रष्टा[8] । दातेति[9] तृन्प्रत्ययः[10], दानशीलः[11] । स्तुवते[12] । साधकम् । अभिलषितम्[13] । धनं दातेति[14] ।[15]

**तव त्यन्नर्यं नृतोऽप इन्द्र प्रथमं पूर्व्यं दिवि प्रवाच्यं कृतम् ।**
**यद्देवस्य शवसा प्रारिणा असुं रिणन्नपः ।**
**भुवद्विश्वमभ्यादेवमोजसा विदादूर्जं शतक्रतुर्विदादिषम् ॥४॥**

तव त्यत् । तव । एतत् । नर्यम्[16] । नेतः[17] । कर्म । पूर्वकालकृतम्[18] । दिवि[19] स्थितस्य मम[20] । प्रथमम्[21] । प्रवाच्यं[22] भवति । किं तत् कर्म, यत्[23] त्वम् । देवस्य[24] । तव बलेन । प्रागमयः[25] ।

---

१. कर्मणा प्रज्ञया वा Sy.

२. सर्व P.

३. वह P. विश्वं वोढुमिच्छसि । ववक्षिथ-वहेः सन्नन्तस्य लिटि मन्त्रत्वादाम् न भवति Sy.

४. शत्रुहननादिलक्षणैः पराक्रमैः Sy.

५. ०वृत्तः M.

६. सासहिः-'न लोकाव्यय०' इति षष्ठी-प्रतिषेधः । तेषामभिभविता Sy.

७. शत्रुं M. हिंसकान् सङ्ग्रामान्वा Sy.

८. पुण्यकृतोऽपुण्यकृतश्च विशेषेण द्रष्टा Sy.

९. दावेति P.

१०. ०त्ययवो P.

११. ०शीले P.

१२. स्तोत्रं कुर्वाणाय यजमानाय Sy.

१३. प्रार्थनीयम् Sy.

१४. धनं दाता सन् विवक्षियेति समन्वयः । सैनमिति परोक्षनिर्देशः सिद्धार्थश्च Sy.

१५. VM. ignores साकम् । सः । एनम् । सश्चत् । देवः । देवम् । सत्यम् । इन्द्रम् । सत्यः and इन्दुः ॥

१६. नयन् M. नराणां हितकरम् Sy.

१७. नेतत् M. नेतः seems to be the explanation of नृतो ॥ सर्वेषां नर्तयितः ! हे इन्द्र ! Sy.

१८. ०पूर्वकृ० P. VM. seems to explain पूर्व्यम् and कृतम् together as पूर्वकालकृतम् ॥ पूर्वकालभवम् त्वया कृतम् Sy.

१९. दिवि स्वर्गलोके Sy.

२०. म M.

२१. प्रततम् Sy. प्रथम इति मुख्यनाम । प्रतमो भवति N.2.22.

२२. प्रकर्षेण वक्तव्यं श्लाघनीयमित्यर्थः Sy.

२३. य P.

२४. विजिगीषोरसुरस्य Sy.

२५. प्रैरयः, इति यत्कर्म तत्प्रवाच्यमिति समन्वयः Sy.

असिता[1]रमसुरं वृत्रम्। उदका[2]त्। निर्गमय[3]न्[4]। अभिभवतु। सर्व[5]म्। असुर[6]म्। बलेन। शत[7]-क्रतुः। लभ[8]ताम्। रस[9]म्। अन्नं[10] च।[11]

## II.23.

**गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम्।**
**ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥१॥**

गणानां[12] त्वा। देव[13]गणानाम्। पति[14]म्। त्वा[15]म्। हवा[16]महे। कवीना[17]मपि। कवि[18]म्। येषां श्रुतेनान्यस्य श्रुतमुपमीयते त उपमश्रव[19]सस्तानप्ययमतिशेते। श्रेष्ठानामपि

---

१. असितर॰ P. असुं प्राणम् Sy.
२. तेन निरुद्धान्युदकानि Sy.
३. हिंसन् Sy.
४. परोक्षनिर्देशोऽवशिष्टः Sy.
५. सर्वसर्वम् P. M, व्याप्तम् Sy.
६. तमोरूपमसुरम् Sy. ७. इन्द्रः Sy.
८. लतां च M. and P. विदात्—'विद्लृ-लाभे' शविकरणी। लेटयाडागमः Sy.
९. बलम् Sy. १०. हविर्लक्षणमन्नम् Sy.
११. VM. explains विदात् once and ignores इन्द्र।
१२. तृतीयेऽनुवाके दशसूक्तानि। तत्रेदमेकोनविंशत्यृचं गार्त्समदं प्रथमं सूक्तम्। अत्रेयमनुक्रमणिका—'गणानामेकोना ब्राह्मणस्पत्यं ह बार्हस्पत्यास्तु दृष्टलिङ्गाः पञ्चदश्यन्त्ये त्रिष्टुभौ' (KSA. 14.23 p. 13.) इति। पञ्चदश्येकोनविंशी च त्रिष्टुभौ। शिष्टा जगत्यः। यासु बृहस्पतिशब्दः श्रूयते ता बार्हस्पत्याः। शिष्टा ब्राह्मणस्पत्याः। प्रवर्ग्ये अभिष्टवे एतत्सूक्तम्। 'स्पृष्ट्वोदकम्' इति खण्डे सूत्रितम्—'गणानां त्वा प्रथश्च यस्य' (ASS. 4.6.) इति Sy.
१३. देवादिगणानाम् Sy. गणानां मध्ये Mah. स्त्रीगणानां मध्ये U. गणानां सर्वेषां सम्बन्धिनम् BB. १४. सम्बन्धिनं स्वीयानां पतिम् Sy. गणरूपेण प्रियस्य पालकम् Mah. युगपद् गणपतिम् U. ग्रामादिसङ्घातस्वामिनम् BB.
१५. त्वा M., D.
१६. अस्मिन् कर्मण्याह्वयामः Sy. आह्वयामः Mah., BB., त्वामेव . . . प्रियं भर्तारं हवामहे U.
१७. क्रान्तदर्शिनाम् Sy. प्रियाणां वल्लभानां मध्ये Mah. प्रियाणां मनुष्याणां मध्ये U. क्रान्तदर्शिनामपि BB.
१८. क्रान्तदर्शिनम् BB.
१९. ॰वसास्ता॰ P. उपमश्रवस्तमम् उपमीयतेऽनयेत्युपमा। सर्वेषामन्नानामुपमानं श्रवोऽन्नं यस्य स तथोक्तः। अतिशयेनोपमश्रवा उपमश्रवस्तमः। उपमा 'माङ् माने'। 'आतश्चोपसर्गे' करणेऽङ्-प्रत्ययः। 'ङ्यापो सञ्ज्ञाछन्दसोः॰' इति ह्रस्वत्वम् Sy. उपमीयतेऽनेनेत्युपमः, सर्वेषां श्रवसामन्नानामुपमानं यस्य श्रवः, न तु केनचिदुपमीयते प्रसिद्धमुपमानमिति स उपमश्रवाः। यद्वा श्रूयत इति श्रवः, यस्य (यस्तु) सर्वदा श्रूयते ते एवो-(सः) पमश्रवा न कदाचिद् दृश्यते स उपमश्रवाः। श्रूयमाणोपम इति यावत्। आहिताग्नि-(ताग्न्यादि-)र्द्रष्टव्यः। अनुभवाभावार्थैव श्रूयमाणत्वोक्तिः, 'विषं भुङ्क्ष्व' इति वदन्यपरत्वात्। सर्वानुपमश्रवसोऽतिशेत इत्युपमश्रवस्तमम् BB.

राजानम्[1]। हे मन्त्राणाम्[2]। पते[3] ! अस्माकमिदं[4] स्तोत्रम्[5] । शृण्वन् । रक्षणैः[6] सह[7] । आसीद[8] ।

**दे॒वाश्चि॑त्ते अ॒सु॒र्य॒ प्रचे॑तसो॒ बृह॑स्पते य॒ज्ञियं॑ भा॒गमा॑नशुः ।**
**उ॒स्रा इ॑व॒ सूर्यो॒ ज्योति॑षा म॒हो विश्वे॑षा॒मिज्ज॑नि॒ता ब्रह्म॑णामसि ॥ २ ॥**

देवाश्चित्ते । देवाः । अपि । तव[10] प्रसादात् । असुराणां हन्तः[11] ! प्रकृष्टज्ञानस्य[12] । बृहस्पते[13] ! यज्ञियम्[14] । भागम् । प्राप्नुवन्ति[15] । यस्मात् त्वं महान्[16] । सूर्य इव । ज्योतिषा[17] । प्रभा[18] । सर्वविधानाम्[19] । मन्त्राणाम् । जनयिता[20] । भवसि, असुरघ्नानामिति[21] ।

---

१. ज्येष्ठाः प्रशस्यतमास्तेषां मध्ये राजन्तम् Sy. ज्येष्ठं प्रशस्तं राजतीति ज्येष्ठराट् (तम्) BB.

२. मन्त्राणां स्वामिनम् Sy.

३. पत P. हे ब्रह्मणस्पते ! ब्रह्मणोऽन्नस्य परिवृढस्य कर्मणो वा पते ! पालयितः ! Sy., BB.

४. P. adds बर्हि after इदम् ।

५. श्रोत्रम् M. स त्वमेवं महानुभावोऽस्माकं स्तुतीः BB.

६. ऋक्षणैः M. ऋक्षं P. पालनैर्हेतुभूतैः Sy. तर्पणैर्वा हेतुभूतैस्ताभिर्व्याप्रियमाणाभिरुपलक्षितः BB.

७. सेह P. ८. उपविश Sy. आत्मीयमासनमासीद अधितिष्ठ, तथा ग्रामाधिपतिरिवासीदन्नस्मभ्यं ग्रामं देहीति BB. गणा॒नां त्वा ग॒णप॑ति ᳖ हवामह॒ऽइ॒ति । प॒त्न्यः प॒रियन्त्यपह्नु॒व॒तऽए॒वास्माऽएतद्व॒तो॒ न्ये॒वास्मै ह्नु॒व॒ते॒ऽथो धुवतऽए॒वैनं त्रिः प॒रियन्ति त्र॒यो वा॒ऽइ॒मे लोका॒ ए॒भि॒रे॒वैनं लोकै॒र्धुवते त्रिः पु॒नः प॒रियन्ति षट् स॒म्पद्यन्ते षड्वा॒ऽऋ॒तव ऋ॒तु॒भि॒रे॒वैनं धुवते । SB. 13.2.8.4. p. 971.

९. VM. ignores गण of गणपतिम् । ब्रह्मणः and सदनम् ॥ सीदन्त्यस्मिन्निति सदनम् । यज्ञगृहम् Sy. सीदन्त्यस्मिन्निति सादनं छान्दसं दीर्घत्वम् BB. This stanza = YV. 23.19 = TS. 2.3.14.3

१०. तं P. त्वदीयाः Sy.

११. हन्तुः M.

१२. प्रचेतसः प्रकृष्टज्ञानाः । यद्वा प्रचेतस इति बृहस्पतेर्विशेषणम् । प्रकृष्टज्ञानवतस्ते तव सम्बन्धिनो देवा इति योजनीयम् । यद्वा प्रचेतसः । विभक्तिपरिणामः । प्रचेतसि त्वयि सति देवा यज्ञियं भागमानशिरे । कर्मविघ्नकारिणामसुराणां रक्षोघ्नमन्त्रैरपाकरणात् 'नैव ब्रह्मण्वद्रिष्यति' (A.B. 1. 13) इतिश्रवणात् Sy. १३. बृहस्पतेः M.

१४. यज्ञार्हम् Sy. १५. प्राप्नुवन् Sy.

१६. महान् seems to be the explanation of महः ॥ महनीयः Sy.

१७. तेजसा Sy.

१८. प्रभावान D. प्रभा seems to be the explanation of उस्राः ॥ उस्रा इव किरणा इव 'स्फायितञ्चि' इत्यादिना रक्प्रत्ययः । यथा किरणान् जनयति तथा Sy. १९. सर्वेषाम् Sy.

२०. जनिता—'जनिता मन्त्रे' इति निपातनात् णिलोपः Sy.

२१. VM. ignores इत् ॥ इत् एव Sy.

**आ विबाध्या परिरापस्तमांसि च ज्योतिष्मन्तं रथमृतस्य तिष्ठसि ।**
**बृहस्पते भीममंमित्रदम्भनं रक्षोहणं गोत्रभिदं स्वर्विदम् ॥३॥**

आ[1] विबाध्या[2]। आतिष्ठसि[3] । परितो रक्षः[4] । तमांसि । च । विविधं[5] बाधित्वा[6] । ज्योतिष्मन्तम्[7] । रथम् । यज्ञस्य गमनार्थम्[8] । बृहस्पते[9] ! भीमम्[10]। अमित्रदम्भनम्[11] । रक्षसां हन्तारम् । मेघभिदम्[12] । उदकस्य लम्भयितारम्[13] ।

**सुनीतिभिर्नयसि त्रायसे जनं यस्तुभ्यं दाशान्न तमंहो अश्नवत् ।**
**ब्रह्मद्विषस्तपनो मन्युमीरसि बृहस्पते महि तत्ते महित्वनम् ॥४॥**

सुनीतिभिः। तं जनम् । शोभननयनैः[14] । नयसि[15]। रक्षसि च[16]। यः । तुभ्यम् । हविः प्रयच्छति[17]। न च[18]। तं होतारम्[19]। व्याप्नोति[20]। दारिद्र्यम्[21]। ब्रह्मद्विषोऽसुरस्य[22]। तापयिता[23]। प्रतिमन्योश्च[24] कर्ता । भवसि । बृहस्पते ! महत्[25] । तत्[26] । ते[26] । महत्त्वम्[27]।

---

१. अ P.
२. पिबा० P.
३. ०ष्ठति P. अधितिष्ठसि Sy.
४. परितो रपः पापरूपं रक्षः । यद्वा 'रप लप व्यक्तायां वाचि' क्विप् । परिवदतो निन्दकान् Sy.
५. विरविधं M.
६. बाधयित्वा P.
तेजसा निराकृत्य Sy.
७. ज्योतिषा तद्वन्तम् Sy.
८. ०नार्थम् P. यज्ञस्य प्रापकम् Sy.
९. हे बृहस्पते ! Sy.
१०. भीम P. शत्रूणां भयङ्करम् Sy.
११. मित्रदभ० P.
शत्रूणां हिंसकम् Sy.
१२. मेघमिदं M. मेघभिदं P. मेघानां भेत्तारम् Sy.
१३. स्वर्गस्य लम्भकम् Sy.
१४. शोभनं नीतयो येषु ते सुनीतयः सन्मार्गाः तैः Sy.
१५. अपेक्षितफलं प्रापयसि Sy.
१६. जनमापद्भ्यो रक्षसि च Sy.
१७. हविर्लक्षणमन्नं प्रयच्छेत् । दाशात्—'दाशृ दाने' । लेटयाडागमः Sy.
१८. ह P.
१९. हः M. होतं P.
२०. प्राप्नुयात् । अश्नवत्—अश्नोतेर्लेटि व्यत्ययेन परस्मैपदम् । अडागमः Sy.
२१. पापं पापरूपं दारिद्र्यं वा Sy.
२२. ब्रविद्व० P. ब्राह्मणानां मन्त्राणां वा द्वेष्टुः Sy.
२३. तपयि० P. तापकः Sy.
२४. मन्योः क्रोधस्य परेषां ज्ञानस्य वा हिंसकोऽसि । 'मीङ् हिंसायाम्' क्विप् Sy.
२५. Omitted in P. प्रभूतम् Sy.
२६. Omitted in P.
तादृशम्, तव Sy.
२७. ०हत्तत्वम् P. माहात्म्यमस्ति Sy.

**न तमंहो न दुरितं कुतश्चन नारातयस्तितिरुर्न द्वयाविनः ।**
**विश्वा इदस्माद्ध्वरसो वि बाधसे यं सुगोपा रक्षसि ब्रह्मणस्पते ॥५॥**

**न तमंहः** । न । तम्[1] । अंहो[2]ऽश्नोति । नापि । दुरितम्[3] । अस्य, कुतः[4] । चिदागच्छति । न चैनम् । शत्रवः[5] । तरन्ति[6] । नापि । द्वयाविनः[7] सत्यानृत[8]युक्ताः । तथा त्वमस्मात्[9] । सर्वाः[10] । एव । हिंसाः[11] । विबाधसे[12] । यम्[13] । त्वं सुगोपाः[14] । रक्षसि[15] ।[16]

**त्वं नो गोपाः पथिकृद्विचक्षणस्तव व्रताय मतिभिर्जरामहे ।**
**बृहस्पते यो नो अभि ह्वरो दधे स्वा तं मर्मर्तु दुच्छुना हरस्वती ॥६॥**

**त्वं नो गोपाः** । त्वम् । नः[17] । गोपायिता[18] । मार्गकृत्[19] । प्राज्ञः[20] । तव[21] । यज्ञार्थम्[22] । वयं स्तुतिभिः[23] । स्तुमः[24] । बृहस्पते ! यः[25] । अस्माकम्[26] । हिंसाम्[27] । अभिदधाति[28] । स्वैव[29] । तम्[30] । मारयतु[31] । अबुद्धि[32]हिंसायुक्ता । तेजोविशेषं ह्वरो[33] येनान्यं हरति ।

---

१. जनम् Sy.
२. आहन्तव्यं दुःखं बाधते Sy.
३. तत्कारणं पापञ्च बाधते Sy.
४. सर्वासु दिक्षु Sy.
५. हिंसकाः Sy.
६. हिंसन्ति । तिरतिर्हिंसाकर्मा । लिट् Sy.
७. द्वयाविनाः P. मनस्यन्यत्क्रियायां चान्यदित्येतद्द्वयं येषामस्ति ते द्वयाविनो वञ्चकाः । तेऽपि तं जनं न बाधन्ते Sy.
८. सत्यनृ० P.
९. ०स्मान् P.
१०. स P. सर्वाः सेनास्तदर्थम् Sy.
११. हहिस्वा P. हिंसिकाः Sy.
१२. अपि बाध० M. पिपाध० P. विशेषेण बाधस एव Sy.
१३. जनम् Sy.
१४. सुष्ठु पालयिता त्वम् Sy.
१५. पालयसि Sy.
१६. VM. ignores ब्रह्मणः । and पते ॥ हे ब्रह्मणस्पते ! Sy.
१७. नोऽस्माकम् Sy.
१८. पालयिता Sy.
१९. सन्मार्गकृच्च भवसि Sy.
२०. विशेषेण द्रष्टा सर्वज्ञस्त्वम् Sy.
२१. त्वत्सम्बन्धिने Sy.
२२. ०ज्ञार्त्थं P. यज्ञाय Sy.
२३. स्तोत्रैः Sy.
२४. स्तुमं M. जरामहे स्तुमः । जरतिः स्तुतिकर्मा Sy. जरा स्तुतिः । जरतेः स्तुतिकर्मणः N. 10.8
२५. यः पुमान् Sy.
२६. अस्मान् Sy.
२७. ह्वरः कौटिल्यम् । 'ह्वृ कौटिल्ये' भावेऽसुन् Sy. २८. अभिलक्ष्य विदधाति Sy.
२९. स्वीया Sy.
३०. मृ P.
३१. मोचयतु । 'मृङ् प्राणत्यागे' । अन्तर्भावितण्यर्थस्य यङ्लुकि लोटि रूपम् Sy.
३२. दुर्बुद्धिः Sy.
३३. हरस्वती वेगवती सती Sy.

उत वा यो नो मर्चयादनागसोऽरातीवा मर्तः सानुको वृकः ।
बृहस्पते अप तं वर्तया पथः सुगं नो अस्यै देववीतये कृधि ॥ ७ ॥

उत वा यः । अपि[1] । च[2] । यः । अस्मानसिता[3] । छिन्द्यात्[4] । अनागसः[5] । अरातित्वमाचरन्[6] । मनुष्यः[7] । समुच्छ्रितः[8] । वृकः[9] । तम्[10] । अस्माकं मार्गात्[11] । अपवर्तय[12] । शोभनगमनं[13] मार्गम् । अस्माकम् । अस्यै[14] । इष्टेः[15] । कुर्विति[16] ।[17]

त्रातारं त्वा तनूनां हवामहेऽवस्पर्तरधिवक्तारमस्मयुम् ।
बृहस्पते देवनिदो नि बर्हय मा दुरेवा उत्तरं सुम्नमुन्नशन् ॥ ८ ॥

त्रातारम् । रक्षितारम्[18] । त्वाम् । अङ्गानाम्[19] । हवामहे[20] । अवहिंसितः[21] । अस्माकमधिवक्तारम्[22] । अस्मत्कामम्[23] । बृहस्पते ! देवनिन्दकान्[24] । निवर्हय[25] । मा । दुर्गमाः[26] । नितराम्[27] । सुखम् । उन्नशन्[28], अद्य, आप्नुवन्तु[29], दुरारोहमिति ।

---

१. अ P.
२. इच P.
३. ०नसिच् P.
४. हिस्यात् । मर्चयात्–'मर्चयतिर्हिसाकर्मा' Sy.
५. अपराधहीनान् Sy.
६. अभिमुखमागमनवान् Sy.
७. ०नुष्याः P.
८. M. adds वा after समुच्छ्रितः ॥ 'सानु समुच्छ्रितम्' (N. 2.24)
९. वुवुः P.
वृकः—'वृक आदाने' । धनादीनामादाता Sy.
१०. त्वम् P. मर्तम् Sy.
११. वैदिकान्मार्गात् Sy.
१२. निवर्तय Sy.
१३. अस्माकं सुष्ठु गन्तव्यं मार्गम् Sy.
१४. अस्यै अस्मै Sy.
१५. इष्टे M.
देवानां वीतिः सोमभक्षणमत्रेति देववीतिर्यज्ञः । तस्मै यज्ञाय Sy.
१६. कुर्वन्ति M. and P. यज्ञानुष्ठानाय सुमतिं देहीत्यर्थः Sy.
१७. VM. ignores बृहस्पते ।
१८. पालयितारम् Sy.
१९. अङ्गानां पुत्रादीनां वा Sy.
२०. अस्मिन्कर्मण्याह्वयामः Sy.
२१. अवस्पर्तः उपद्रवेभ्यः पारयितः ! यद्वा अवसा रक्षणेनापद्भ्यः पारयितः ! Sy.
२२. अस्मासु पक्षपातेनाधिकं वक्तारम् Sy.
२३. हविष्प्रदानस्मान् कामयमानं त्वाम् Sy.
२४. असुरान् Sy.
२५. विनाशय Sy.
२६. दुष्टगमना दुर्बुद्धयः शत्रवः Sy.
२७. उत्कृष्टतरम् Sy.
२८. उन्नशस्रासुखाप्नु० P.
२९. व्याप्नुवन्तु Sy.

**त्वया॑ व॒यं सु॒वृधा॑ ब्रह्मणस्पते स्पा॒र्हा॑ वसु॑ मनु॒ष्या द॑दीमहि ।**
**या नो॑ दू॒रे त॒ळितो॒ या अरा॑तयो॒ऽभि सन्ति॑ ज॒म्भया॒ ता अ॑न॒प्नसः॑ ॥९॥**

त्वया वयम् । त्वया[1] । वयम् । सुवर्धयिता[2] । ब्रह्मणः । पते ! स्पृहणीयानि[3] । धनानि[4] । मनुष्येभ्यः[5] । आददीमहि[6] । याश्च । नः[7] । दूरे[8] । अरातयः[9] शत्रुसेनाः । याश्च तळितो[10]ऽन्तिकस्थाः[11] । अभिसन्ति[12] । विनाशय[13] । तान्[14] । 'अप्न[15] इति रूपनाम' इति[16] यास्कः, अरूपाः[17], अकर्मणो वेति[18]

---

१. Omitted in M. त्वया हेतुना Sy. त्वया सहायेनानुगृह्यमाणा वेति वाक्यशेषः SKN.

२. सुष्ठु वर्धयित्रा Sy. वृधिरन्तर्हितण्यर्थः । शोभनेन वर्धयित्रा SKN. सुष्ठु वर्धिता अनुगृहीताः सन्तः Dur.

३. यानि यानि स्पार्हा स्पार्हाणि स्पृहणीयानि तानि तानि Dur.

४. वसूनि SKN., Dur.

५. P. reads मे before मनुष्येभ्यः । मनुष्या—'सुपां सुलुक्०' इति चतुर्थीबहुवचनस्याकारः । मनुष्यभ्यो दातृभ्यः Sy. पञ्चम्याः स्थान आकारः । मनुष्येभ्यः सामर्थ्याच्छत्रुभूतेभ्यः SKN. तानभिभूय Dur.

६. अदवीहवमहि P. गृह्णीमहि । आददीमहि—'आङो दोऽनास्यविहरणे' इत्यात्मनेपदम् Sy. गृह्णीम इत्यर्थः SKN.

७. अस्मान् Sy. अस्माकम् SKN.

८. दूरदेशे Sy. दूरेऽध्वन्यवस्थिताः Dur.

९. अविद्यमानदानक्रियाः, अन्यमपि वा ददतं वारयन्ति ता अदानप्रज्ञाः SKN. अरातिसेनाः । अदानकर्माणः । रातिर्दानार्थः । अस्माकमभिमतानर्थान्ददतो ये निवारयन्ति तेऽरातयः । 'अदानप्रज्ञा वा' न दातव्यमस्माभिरेभ्य इत्येवं येषां प्रज्ञा तेऽदानप्रज्ञाः । द्विविधा हि शत्रवः । दुःखसम्राध्याः सुखसम्राध्याश्च । तत्र ये दुःखसम्राध्यास्तेऽदानप्रज्ञाः, येऽदानकर्माणस्ते सुखसम्राध्याः । ते चोभयेऽपि दूरे चान्तिकं चावस्थिता भवन्ति Dur.

१०. अन्तिके Sy. दूरेशब्दसन्निधानाद् दूरान्तिकवर्तिनश्च शत्रोर्विनाशस्याकाङ्क्षितत्वात् तडिदित्यत्रान्तिकनाम । तात्स्थ्यात्ताच्छब्द्यम् । अन्तिकस्थाश्च याः । स्त्रीलिङ्गनिर्देशादरातिर्जायत इत्यभिप्रायः SKN. तडिच्छब्दस्यान्तिकाभिधायित्वम् । दूरे चान्तिके च या अरातयः Dur.

११. ०न्ति अस्थाः P.

१२. अरभि० P. अभिभवन्ति Sy. अभिभवन्ति । सामस्त्यार्थो वाऽस्तिः । याः काश्चन सन्ति सर्वास्ताः SKN.

१३. नाशय । 'जभि नाशने' चुरादिः । Sy. नाशयेत्यर्थः SKN. स्तम्भय, निश्चेष्टान्कुरु त्वं ब्रह्मणस्पते ! Dur.

१४. तान् शत्रून् Sy. तान् दूरान्तिकावस्थितानुभयानपि Dur.

१५. अप्त M.

१६. N. 3.11

१७. M. and P. read अरूपाः before इति यास्कः ॥ अनप्नसः कर्महीनान् Sy. 'अप्न इति रूपनाम' अरूपाः प्रनष्टसर्वरूपाः कृत्वेत्यर्थः SKN. अरूपांश्चैतान् कुरु । 'अप्न इति रूपनाम' तद्धि आप्नोति आश्रयम् Dur.

१८. वेदि P.

द्रष्टव्यमिति, हिंसका[1] वा, तळितस्ताडयन्तीति[2] ।

**त्वया वयमुत्तमं धीमहे वयो बृहस्पते पप्रिणा सस्निना युजा ।**
**मा नो दुःशंसो अभिदिप्सुरीशत प्र सुशंसा मतिभिस्तारिषीमहि ॥१०॥**

त्वया वयम् । त्वया[3] । वयम् । उत्तमम् । अन्नम्[4] । धारयेमहि[5] । बृहस्पते[6] ! पूरयित्रा[7] । शुद्धेन । सहायेन । मा । अस्माकम् । स्तेनः[8] । अभिदम्भितुमिच्छन्[9] । ईशिष्ट[10] । तं प्रतारिषीमहि[11] वयम् । स्तुतिभिः[12] । सुशंसना[13] इति ।

**अनानुदो वृषभो जग्मिराहवं निष्टप्ता शत्रुं पृतनासु सासहिः ।**
**असि सत्य ऋणया ब्रह्मणस्पत उग्रस्य चिद्दमिता वीळुहर्षिणः ॥११॥**

अनानुदः । सकृदेव दाता[14] । कामानां वर्षिता । युद्धम्[15] । गन्ता[16] । शत्रोः[17] ।

---

१. ०सक P.

२. तरित० P. 'तळिदित्यन्तिकवधयोः संसृष्टकर्म ताळयतीति सतः । त्वया वयं सुवर्धयित्रा ब्रह्मणस्पते ! स्पृहणीयानि वसूनि मनुष्येभ्य आददीमहि । याश्च नो दूरे तळितो याश्चान्तिके । अरातयोऽदानकर्माणो वा । अदानप्रज्ञा वा । जम्भय ताः । अनप्नसः । अप्न इति रूपनाम । आप्नोतीति सतः । विद्युत्तळिद्भवतीति शाकपूणिः । सा ह्यवताळयति । दूराच्च दृश्यते । अपि त्विदमन्तिकनामैवाभिप्रेतं स्यात् । 'दूरे चित्सन्तळिदिवाति रोचसे' (RV. 1.94.7.) । दूरेऽपि सन्नन्तिक इव सन्दृश्यस इति N. 3.10,11., SKN. II. 151.

३. त्वया हेतुना Sy.

४. हविर्लक्षणमन्नम् Sy.

५. धारयामः 'धी धारणे' दैवादिकः Sy.

६. ०स्पत M. हे बृहस्पते ! Sy.

७. पप्रिणा–'पृ पालनपूरणयोः' । 'आदृगमहन०' इति किन्प्रत्ययः । छान्दसो यणादेशः । कामानां पूरकेण Sy.

८. स्तोनः M. दुःशंसनीयः Sy.

९. ०दम्भितमिच्छन् P. अभिभवितुमिच्छुः पुरुषः Sy.

१०. ईश्वरो भवतु । ईशत—'ईश ऐश्वर्ये' लेटघडागमः Sy.

११. प्रकारिषी० M. प्रतार्षी० P. प्रकर्षेण वर्धेमहि Sy. १२. स्तोत्रैः Sy.

१३. सुशस० P. शोभनशंसनोपेताः सन्तः Sy.

१४. Omitted in P. अनु पश्चाद्दातीत्यनुदः स यस्य नास्तीत्यननुदः दात्रन्तरशून्य इत्यर्थः Sy.

१५. आहूयतेऽत्रेत्याहवो युद्धम् । 'आङि युद्धे' (Pa. 3.3.73.) इत्यप्प्रत्ययः सम्प्रसारणं च Sy.

१६. जग्मिः–'आदृगमहन०' इति किन्प्रत्ययः । लिड्वद्भावादाहवमित्यत्र षष्ठीप्रतिषेधः Sy. १७. शातयितारम् Sy.

तापयिता । युद्धेषु । सहनशीलः । भवसि । सत्यकर्मा । ऋणानां च यापयिता, कामानां प्रदातेत्यर्थः । उग्रस्य । अपि । दमयिता । दृढानपि हर्षयतो भयेन हृष्टतनूरुहान् कुर्वतः ।

**अदेवेन मनसा यो रिषण्यति शासामुग्रो मन्यमानो जिघांसति ।**
**बृहस्पते मा प्रणक् तस्य नो वधो नि कर्म मन्युं दुरेवस्य शर्धतः ॥१२॥**

अदेवेन । असम्प्रमाणेन । मनसा । यः । अस्मान् बाधते । शासनं चास्मदीयम् । उद्गूर्णः । क्रुध्यन् । जिघांसति । बृहस्पते ! अस्य । आयुधम् । मा । अस्मान् । हिनस्तु । निकुर्मः । मन्युम् । दुष्टस्यागच्छतः । वेगं कुर्वतः ।

---

१. नितरां तस्य तापकः । निष्टप्ता तृन्नन्तत्वात् षष्ठीप्रतिषेधः । 'निसस्तपतावनासेवने' (Pa. 8.3.102.) इति षत्वम् । 'तादौ च निति' इति गतेः स्वरः Sy.

२. सङ्ग्रामेषु Sy.

३. शत्रूणामभिभविता Sy.

४. सत्यपराक्रमः सत्यप्रज्ञो वा Sy.

५. ऋणस्य यावयितासि । ऋणयाः 'यु मिश्रणामिश्रणयोः' ण्यन्तस्य क्विपि णिलोपे 'लोपो व्योर्वलि' इति वलोपः Sy.

६. ओजस्विनः Sy.

७. मदयिता M. and P. उपशमयिता Sy.

८. वर्ष० P. बद्धहर्षस्य कामुकस्य नास्तिकस्य चिद्दमितासि Sy.

९. कुर्वतम् M.

१०. VM. ignores ब्रह्मणः and पते ।

११. ०प्रयमा० P. देवानमन्यमानेन यद्वा आसुरवृत्तिविशिष्टेन Sy.

१२. ०नस्या P.

१३. पुमान् Sy.

१४. हिनस्ति । रिषण्यति—'दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति' इति निपातितः Sy.

१५. उक्थस्य शंसितारम् । यद्वा अस्माकमाशंसां शासितृणामुग्र इति वा योजनीयम् Sy.

१६. ०द्गूर्णम् M. and P. पापचित्तः Sy.

१७. आत्मानं बहुमन्यमानः पुमान् Sy.

१८. हन्तुमिच्छति । जिघांसति-हन्तेः सनि 'अज्झनगमां सनि' इति दीर्घः Sy.

१९. वध्यतेऽनेनेति वधरायुधम् । Sy.

२०. Omitted by P.

२१. प्रणक्—'पृची सम्पर्के' श्नम्विकरणी । व्यत्ययेनामागमः । 'चादि लोपे०' इति न निघातः । व्यत्ययेनाद्युदात्तः Sy.

२२. त्वत्प्रसादान्निराकुर्मश्च Sy.

२३. क्रोधं ज्ञानं वा Sy.

२४. दुष्टस्यागच्छेतता M. दुष्टगमनस्य यद्वा दुष्टाभिसन्धेः Sy.

२५. ०र्वतम् M. बलवतः Sy.

भरेषु हव्यो नमसोपसद्यो गन्ता वाजेषु सनिता धनंधनम् ।
विश्वा इदर्यो अभिदिप्स्वो३ मृधो बृहस्पतिर्वि ववर्हा रथाँइव ॥१३॥

भरेषु । सङ्ग्रामेषु । आह्वातव्यः[1] । हविषा । उपगन्तव्यः[2] । गन्ता[3] । युद्धेषु । दाता[4] । सर्वं धनम् । सर्वाः । एव । अभिदम्भितुमिच्छन्तीः[5] । मृधः[6] शत्रून्[7] । बृहस्पतिः । विववर्ह[8] विविञ्चति । रथानिव[9] । वेगेनापततः ।

तेजिष्ठया तपनी रक्षसस्तप ये त्वा निदे दधिरे दृष्टवीर्यम् ।
आविस्तत्कृष्व यदसत्त उक्थ्यं१ बृहस्पते वि परिरापो अर्दय ॥१४॥

तेजिष्ठया । तीक्ष्णेन[10] । शस्त्रेण[11] । राक्षसान्[12] । तप[13] । ये राक्षसाः । त्वाम्[14] । दृष्टवीर्यं[15] योद्धुमशक्नुवन्तः[16] । निन्दितुम्[17] । तिष्ठन्ति[18] । आविष्कृणुष्व[19] । तत्[20] । यत्[21] । भवति[22] । तव । स्तोतव्यं[23] वीर्यम् । बृहस्पते ! व्यर्दय[24] च । परिरपः परितो[25] लपतो राक्षसानिति ।

---

१. योद्धृभिः स्वरक्षणार्थमाह्वातव्यः Sy.
२. अप० M. सर्वैर्नमसोपसदनीयः Sy.
३. रक्षार्थं गमनशीलः सङ्ग्रामेषु Sy.
४. सम्भक्ता तृन्नन्तत्वात् षष्ठीप्रतिषेधः Sy.
५. अदि. . .तुच्छन्तिम् P. अभिभवनेच्छावतीः Sy.
६. मृगः M. मशः P. हिंसिकाः सेनाः Sy.
७. शत्रून् seems to be the explanation of अर्यः ॥ अर्यः स्वामी Sy.
८. विवह् M. बपर्ह P. विशेषेण शिथिलीचकार । लडर्थे लिट् Sy.
९. ०थानि P. युद्धेन वेगेन परकीयान् रथानिव यद्वा इवशब्दश्चार्थे । रथांश्च Sy.
१०. अतिशयेन तिग्मया Sy.
११. तापकारिण्या हेत्या Sy.
१२. रक्षसां M. रक्षान् P.
१३. तापय Sy.
१४. त्वया P.
१५. युद्धेषु दृष्टपराक्रमम् Sy.
१६. योद्धुं शक्नुवन्तः P.
१७. निन्दाया विषयम् Sy.
१८. तिष्ठन्तु P. कृतवन्तः तान् तापयेति समन्वयः Sy.
१९. विष्कृणुष्व P. प्रकटीकुरु Sy.
२०. तद् अधुना Sy.
२१. वीर्यम् Sy.
२२. पूर्वमासीत् Sy.
२३. सर्वैः प्रशंसनीयम् Sy.
२४. विशेषेण बाधस्व Sy.
२५. चरिरवः P. तेन च वीर्येण परिवदतो निन्दकानसुरान् Sy.

बृहस्पते अति यदर्यो अर्हाद् द्युमद्विभाति क्रतुमज्जनेषु ।
यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥१५॥

बृहस्पते[1] । बृहस्पते[2] ! यत्[3] । उदारः[4] । अत्यन्तं[5] पूजयति[6], कथमिदमनेन दत्तमिति । येन[7] च[8] दीप्तिमान्[9] । कर्मवच्च[10] । जनेषु[11] । विभाति[12] । यच्च । दीपयति[13] । बलेन[14] । यज्ञार्थं[15] प्रजात[16] !

---

१. बार्हस्पत्ये पशावेषा हविषोऽनुवाक्या । 'प्रदानानाम्' इति खण्डे सूत्रितम्—'बृहस्पते अति यदर्यो अर्हात्तमूत्विया उप वाचः सचन्ते' (ASS. 3.7) इति । एवंवाश्विनशस्त्रे परिधानीया । सूत्रितम्—'बृहस्पते अति यदर्यो अर्हादिति परिधानीया' (ASS. 6.5) Sy.

२. बृहतां वेदानां पते ! पालक ! Mah.

३. यद् ब्रह्मवर्चसं तेजः Sy. यद् धनम् Mah. यद् द्रविणं धनम् U. यद् द्रविणम् BB.

४. P. adds अपि after उदारः ॥ अर्यः श्रेष्ठो ब्राह्मणः Sy. अर्यः स्वामी Mah. ईश्वरः । अर्यशब्दः स्वामिन्यन्तोदात्तो वैश्ये आद्युदात्तः U. विद्वान् राजा वा BB.

५. सर्वान् कामानतीत्य Sy. अतिशयेन U. अन्यानतिक्रम्य BB.

६. ०यन्ति P. पूजयेत् । 'अर्ह पूजायाम्' लेटघाडागमः Sy. ईश्वरयोग्यं धनं देहीत्यर्थः Mah. पूजयेत U. लब्धुमर्हति BB.

७. Omitted in P. यद् धनम् Mah. येन विशिष्टेन धनेन BB.

८. चे P.

९. दीप्तियुक्तम् Sy. द्यौः कान्तिरस्यास्तीति द्युमत् Mah. द्युतिमत् U.

१०. ज्ञानोपेतं यद् ब्रह्मवर्चसम् Sy. क्रतवो यज्ञा विद्यन्ते येन तत् । येन यज्ञाः क्रियन्ते तादृशं धनं देहीत्यर्थः Mah. क्रतुमद् यज्ञवत् U. स्वाद्वन्नभोगादिक्रियावद् यथा तथा BB.

११. ब्राह्मणेषु Sy. लोकेषु Mah. जनेषु विभातीत्यनुवर्तते U.

१२. विशेषेण दीप्यते Sy. विविधं शोभते Mah. भासते U. विशेषेण भाति BB.

१३. दीदयतिर्दीप्तिकर्मा । स्वाश्रयं जनं दीपयति Sy. दापयति प्रापयति वा धनान्तरं तद्धनं देहीत्यर्थः । 'दय दानगतिहिंसादानेषु' अस्माण्णिजन्ताल्लुङि रूपम् । अडभाव आर्षः Mah. यच्च दीप्यते U. शवसो हेतुभूतं भवल्लोके पूज्यते । दीदितिर्दीप्तिकर्मा BB.

१४. रक्षितारोऽपि यस्य सन्तीत्यभिप्रायः U. अन्नेन वा BB.

१५. ०ज्ञात्थं P.

१६. ०जातम् M. सत्येनोत्पन्न ! Sy. ब्रह्मणः सकाशात् प्रजातं प्रकृष्टं जातं जन्म यस्य (सः) ऋतप्रजातः Mah. ऋतात्सत्यादविनाशिनः प्रजायत इति ऋतप्रजातस्तत्सम्बुद्धौ हे ऋतप्रजात ! U. हे ऋतप्रजात ! सत्यप्रभव ! BB.

तादृशम्[1] । धनम् । चित्रम्[2] । अस्मासु[3] । स्थापयेति[4] ।

मा नः स्तेनेभ्यो ये अभि द्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः ।
आ देवानामोहते वि व्रयो हृदि बृहस्पते न परः साम्नो विदुः ॥१६॥

मा नः[5] स्तेनेभ्यः । मा । नः[6] । स्तेनेभ्यः[7], वशं नय[8] । ये[9] स्तेनाः[10] । द्रोहस्य[11] । स्थाने तिष्ठन्तः । निर्गतरमणाः[12] । रिपवः[13] । अन्नेषु[14] । अभिजागृधुरभिकाङ्क्षन्ति[15] । अपहर्तुं मामिव[16] हन्ति[17] च । देवानाम् । हृदये[18] । व्रीडा[19] तेभ्यः[20] । बृहस्पते ! त्वदन्ये[21] । न केचन । साम[22] । जानन्ति[23], 'साम वै

---

१. तद् ब्रह्मवर्चसरूपं धनम् Sy. तद् द्रविणम् Mah., U. तादृशम् BB.

२. चायनीयम् Sy. नानाविधम् Mah. नानारूपम् U. चायनीयं प्रार्थनीयम् BB.

३. यजमानेषु Mah.

४. निधेहि । यद्वा अयं उदारोऽपि त्वया दत्तं धनमतीवाहार्त् श्रद्धीत । यच्च त्वद्दत्तं धनं जनेषु तव स्तोत्रं कुर्वाणेषु दीप्तियुक्तं कर्मसाधनं च विभाति यच्च धनं शवसाबलादिसमृद्ध्या दीदयत् स्वाश्रयं दीपयति तादृशं धनमस्मासु धेहि । तथा च ब्राह्मणम्—'बृहस्पते अति यदर्यो अर्हादित्येतया परिदध्यात्तेजस्कामो ब्रह्मवर्चसकामोऽतीव वान्यान्ब्रह्मवर्चसमर्हति द्युमदिति द्युमदिव वै ब्रह्मवर्चसं विभातीति वीव वै ब्रह्मवर्चसं भाति यद्दीदयच्छवस ऋतप्रजातेति दीदायेव वै ब्रह्मवर्चसं तदस्मासु द्रविणं धेहि चित्रमिति चित्रमिव वै ब्रह्मवर्चसं ब्रह्मवर्चसी ब्रह्मयशसी भवति' (AB. 4.11.) इति Sy. धारय... देहीत्यर्थः Mah. स्थापय देहि वा BB. This stanza =YV. 26.3.=TS. 1.8.22.2.

५. नस्ते० M.

६. नोऽस्मान् Sy.

७. स्थानमस्ति येष्वति स्तेनाश्चौराः तेभ्यः Sy.

८. न P. (मा) दा Sy.

९. य M.

१०. स्तेन: M. चौराः Sy.

११. दोह० P. प्राणद्रोहस्य Sy.

१२. ० तम० M. नितरां रमणशीलाः Sy.

१३. हिंसकाः सन्तः Sy.

१४. अन्नेषु परकीयेषु । Sy.

१५. ०जाग्रधुर० M. ०जाग्रधुर० P. 'गृधु अभिकाङ्क्षायाम्' लटि रूपम् Sy.

१६. माविव P.

१७. आवहन्ति । देवानां यागान् स्तुतीश्च न करवामेति मन्यन्त इति यावत् । तेभ्योऽस्मान् मा दा इति समन्वयः Sy.

१८. स्वकीये हृदये Sy.

१९. व्रीडां D.M.

२०. P. adds इति after तेभ्यः ॥ वियः विशेषेण वर्जनम् । व्री व्ली इति धातू वर्जने वर्तेते । 'य एवं विद्वान् दक्षिणां प्रति गृह्णाति नैनं दक्षिणा व्लीनाति' (TB.2.2.5.1.) इत्येकस्य वर्जनार्थे दृष्टत्वादपरस्यापि वर्जनार्थत्वम् Sy.

२१. ०दन्यः M. परः परस्तादन्यदुत्कृष्टम् साम यद् रक्षोघ्नम् । 'साम वै रक्षोहा' इति Sy.

२२. मसा P. साममयात्त्वत्तः Sy.

२३. किन्तु सर्वसाधकं साम त्वामेव विदुषोऽस्मान् स्तेनेभ्यो मा दाः Sy.

रक्षोहा' इति ब्राह्मणमिति ।[१]

**विश्वेभ्यो हि त्वा भुवनेभ्यस्परि त्वष्टाजनत्साम्नःसाम्नः कविः ।**
**स ऋणचिदृणया ब्रह्मणस्पतिर्द्रुहो हन्ता मह ऋतस्य धर्तरि ॥१७॥**

**विश्वेभ्यः** । सर्वेभ्यः । भूतेभ्यः[२] । उच्छ्रितम्[३] । हि । त्वाम् । त्वष्टा[४] । जनयामास[५] । त्वं[६] नानाविधानि सामानि[७] । जानासि[८] । स त्वम् । स्तोतॄणां काममृणमिव हृदये चिनोषि[९] । ऋणस्य च यापयिता भवति[१०] । ब्रह्मणः । पतिः । महतः । यज्ञस्य । धर्तारि[११] । द्रोग्धारम्[१२] । हन्ति[१३] ।

**तवं श्रिये व्यंजिहीत पर्वतो गवां गोत्रमुदसृजो यदङ्गिरः ।**
**इन्द्रेण युजा तमसा परीवृतं बृहस्पते निरपामौब्जो अर्णवम् ॥१८॥**

**तव श्रिये** । तव । श्रयणार्थम्[१४] । शिलोच्चयः । द्वारं विहायोभयतोऽतिष्ठत्[१५] । यदा । त्वमङ्गिरसां कुले जातः[१६] । गवां समूहम्[१७] । उदसृजः[१८], पणिभिरपहृतम्[१९] । तयेन्द्रेण[२०] । सहायेन[२१] ।

---

१. VM. ignores आ and वि.
२. भूतजातेभ्यः Sy.
३. उच्छ्रितम् seems to be the explanation of परि ॥ उत्कृष्टम् Sy.
४. प्रजापतिः Sy.
५. अजीजनत् Sy.
६. त्वाम् M.
७. समा० P. सर्वस्यापि साम्नः Sy.
८. जा P. कविः–'कु शब्दे' । 'अच इः' इति इप्रत्ययः । उच्चारयिता कर्तासि । यद्वा कविः क्रान्तदर्शी त्वष्टा साम्नः-साम्नः सर्वस्यापि साम्नः सारेण त्वामजीजनत् Sy. ९. स्तोतृकाममृणमिव चिनोतीति ऋणचित् Sy.
१०. भवसि is suggested for भवति ॥ पापरूपस्य ऋणस्य यावयिता पृथक्कर्ता च Sy.
११. धर्मारिन् M. धर्तारिन् P. धारके यजमाने Sy.
१२. द्रोद्धारं M. द्राद्धरं P. द्रुहः कर्मणो द्रोग्धुरसुरस्य Sy.
१३. हन्ता भवति Sy.
१४. श्रवणार्त्थं P. आश्रयणार्थम् Sy.
१५. ०भवतो P. विवृतद्वारतामगच्छत् Sy.
१६. जात P. आङ्गिरस ! Sy.
१७. VM. seems to explain गवां and गोत्रम् together as गवां समूहम् ॥ गोत्रम्—'इनित्रकटचचश्च' इति समूहार्थे त्रप्रत्ययः Sy.
१८. निरगमयः Sy.
१९. पाणि० M.
२०. तयेन्द्र P.
२१. सहायेन युक्तस्त्वम् Sy.

मेघतमसा[1] वृत्रेण । परिवृतम्[2] । बृहस्पते ! अपाम्[3] । अर्णवं[4] मेघम् । निरीब्जः[5], उब्जतिर्वधकर्मा, तेजोभिरधो विद्धवानसीति[6] ।

**ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधि तनयं च जिन्व ।**
**विश्वं तद्भद्रं यदवन्ति देवा बृहद्वदेम विदथे सुवीराः ॥१९॥**

ब्रह्मणस्पते । त्वम् । इदं जगत्[7] सर्वम् । नियच्छसि[8] । स त्वमिदं सूक्तम्[9] । बुध्यस्व[10] । त्वत्कुलजातत्वात् तव तनयं[11] माम् । च । प्रीणय[12] । विश्वम्[13] । तत्[14] । भद्रमेव[15] भवति[16] । यत्[17] । रक्षन्ति[18] । देवाः[19] । वयं च त्वद्रक्षिता बृहत्[20] । वदेम[21] । विदथे[22] । सुवीरा[23] इति[24] ।

षष्ठं व्यास्यद्[25] द्वितीयस्य[26] माधवोऽध्यायमञ्जसा ।
सङ्कर्षणानुजो यस्य भ्राताऽऽसीदनुजः कविः ॥

---

१. मेघेतमसा M.
२. परित आक्रान्तम् Sy.
३. म् M.
४. स्थानभूतं मेघम् Sy.
५. P. adds इति after निरीब्जः ।
६. विद्धवासीदिति P. नितरामधोमुखमकार्षीः Sy.
७. अस्य जगतः Sy.
८. नियामकः Sy. त्वं यतोऽस्य जगतो यन्ता नियन्ता, अतः प्रार्थ्यसे Mah. त्वमस्य जगतो यन्ता । एवं चेदं विज्ञापयामि U.
९. अस्मदीयमिदं ब्राह्मणस्पत्यं सूक्तम् Sy. सूक्तस्यास्मदुक्तस्य साधुवचनस्य । कर्मणि षष्ठी, सूक्तम् Mah. सूक्तस्य साधुवचनस्य U.
१०. अस्मदुक्ता स्तुतिर्भवता ज्ञायतामित्यर्थः Mah. अवगतार्थो भव U.
११. पुत्रपौत्रादिलक्षणं सन्तानम् Sy. तनयं चास्मदपत्यानि Mah. अपत्यानि च U.
१२. जिन्व-जिविः प्रीणनार्थः । लोटि रूपम् Sy. प्रीणीहि । 'जिन्वतिः प्रीतिकर्मा' Mah., U.
१३. सर्वम् Sy. सर्वं भद्रम् Mah.
१४. तादृशम् Sy.
१५. कल्याणं भवति Sy. कल्याणम् Mah. भन्दनीयम् U.
१६. अस्माकमस्त्विति शेषः Mah., U.
१७. Omitted in P.
१८. पालयन्ति Mah., U.
१९. भवादृशाः Sy. देवास्त्वत्प्रसादात् U.
२०. प्रभूतमिदं स्तोत्रम् Sy. महत् Mah. महदूर्जितम् U.
२१. ०देव P. ब्रूयाम Sy. दीयतां भुज्यतामित्याद्युच्चारयेम Mah. वदेम दीयतां भुज्यतामिति U.
२२. अतो वयमस्मिन् यज्ञे Sy. यज्ञे Mah., U.
२३. शोभनपुत्रपौत्राः सन्तः Sy. कल्याणपुत्राः सन्तो वयम् Mah., U.
२४. VM. ignores ब्रह्मणः and पते ॥ ब्रह्मणां स्तोत्राणामधिपते ! Sy. This stanza=YV. 34.58.
२५. व्याख्य P.
२६. द्वितय० P.

[ श्रीरस्तु[१] ]

# [ द्वितीयाष्टके[२] सप्तमोऽध्यायः ]

'सेमामविड्ढि प्रभृतिं'[३] व्याचिख्यासति माधवः ।
तत्रा[४]क्रियेषु वाक्येषु कर्तव्यमुप[५]दिश्यते ॥१॥

अपेक्षया क्रियाक्षेपः कारकाणामिति स्थितिः ।
'यास्ते प्रजा अ[६]मृतस्य परस्मिन्'[७] परिचरन्ति ॥२॥

'दस्रा ह य[८]द्रेक्णः'[९] इति याचते वामिति क्रिया ।
'ता जिह्वया सदमेदं सुमेधाः'[१०] याचते जलम् ॥३॥

उपसर्गाः प्रयुज्यन्ते क्रियाक्षेपाय च[११] क्वचित् ।
'यस्ते[१२] सखिभ्य आ[१३] वरम्'[१४] आप्रयच्छेदिति क्रिया ॥४॥

'इमे सोमास इन्दवः सुतासो अधि'[१५] आसते क्रिया ।
'अर्चन्[१६]ननु स्व[१७]राज्यम्'[१८] इत्यत्रान्वास्ते[१९] क्रियापदम् ॥५॥

---

१. P. omits the line.
२. तृतीयो० M. ३. RV. 2.24.1.[a]
४. ०त्राक्रि० P. ५. ०मुद्दि० P.
६. अम्यत० P. ७. RV. 1.43.9.[ab]
८. यदि द्रक्ण० P.
९. RV. 1.158.1.[c]
१०. RV. 6.67.8.[a]
११. Omitted by P.
१२. यत्ते M. १३. आचर० P.
१४. RV. 1.4.4.[c] १५. RV. 1.16.6.[ab] I have shown the exact quotation separately. On account of the dissolution of *Sandhi*, two syllables are too many in the second *pāda*. Metrically correct *pāda* can be obtained by the mere application of the rules of *Sandhi*, i.e., सुतासोऽध्यासते । This will however make the quotation inexact.
१६. P. omits अर्चन्.
१७. वा P. १८. RV. 1.80.1.[d]
१९. ०त्यत्रास्ते M. ०त्यत्रवास्ते P.

प[1]श्येद् यदादि[2]योगेऽपि निह[3]तं यदि तिङ्पदम् ।

मध्ये क्रियापदाक्षेप[4]स्तत्तद्वाक्यानु[5]रू[6]पतः ॥६॥

'म[7]हाँ इन्द्रो य ओजसा'[8] 'प्र यद्दिवो हरिवः'[9] च ।

'न यो वराय मरु[10]ताम्'[11] ऋचस्तत्र[12] [13]निदर्शनम् ॥७॥

'अश्वं न त्वा वार[14]वन्तम्'[15] 'मनोजवेभिरिषि[16]रैः'[17] ।

'ऋता यद्गर्भमदितिः'[18] आक्षिप[19]न्ति क्रियामिमाः[20] ॥८॥

यदो[21]पमेये नान्वे[22]ति क्रियाशब्दस्तदा[23]पि च ।

उपमेयान्व[24]ये योग्यामन्यामध्याह[25]रेत्क्रियाम् ॥९॥

'नासत्याभ्यां बर्हिरिव'[26] 'स[27]नाद्राज[28]भ्यो जुहोमि'[29] ।

'अग्नावि[30]व समि[31]धाने' ऋ[32]चस्तत्र निदर्शनम् ॥१०॥

---

१. पश्यद् M.
२. ॰योऽविनि॰ P.
३. निहितं M. and P.
४. ॰तात्त॰ P.
५. ॰क्यानिरू॰ P.
६. ॰क्यानुरूप M.
७. महं P.
८. RV. 8.6.1.[a]
९. RV. 1.35.5.[c]
१०. M. omits the words between महाँ and मरुताम् ।
११. RV. 1.143.5.[a]
१२. उतवास्तत्र P.
१३. दर्शं॰ P.
१४. पर वन्त P.
१५. RV. 1.27.1.[a]
१६. ॰र्तिषिरैः P.
१७. RV. 6.62.3.[c]
१८. ॰तिम् M. and P. RV. 6.67.4.[b]
१९. ॰पति P.
२०. ॰माम् P.
२१. ॰दोमे॰ P.
२२. नायेति M. नावेति P.
२३. ॰शब्दं तदपि P.
२४. ॰न्वयो॰ P.
२५. M. omits the words between शब्दस्तदा and हरेत्.
२६. RV. 1.116.1.[a]
२७. वस॰ P.
२८. ॰द्राजेभ्यो P.
२९. सनाद्राजभ्यो जुह्वा जुहोमि RV. 2.27.1.[b]
३०. ॰मिव P.
३१. RV. 2.16.1.[b]
३२. ॰चन् त॰ P.

'यच्चिद्धि ते विशो यथा' 'स नो वृष्टिं दिवस्परि'।

अपेक्षन्ते क्रियामेता* इत्याक्षेपः प्रपञ्चितः ॥ इति ॥११॥

II. 24.

सेमामविड्ढि प्रभृतिं य ईशिषेऽया विधेम नवया महा गिरा।
यथा नो मीढ्वान्त्स्तवते सखा तव बृहस्पते सीषधः सोत नो मतिम् ॥१॥

सेमामविड्ढि ॥ गृत्समदः ॥ सः। इमाम्। प्रभ्रियमाणां स्तुतिम्। धनप्रदानेन त्वं धनस्येशिषे। अनया। परिचरेम। नवया। महत्या। स्तुत्या। यथा। अस्माकम्। हविषां सेक्ता। तथा होता। तव। स्तुतिं करोति। बृहस्पते! साधय। अस्माकम्। अभिलषितम्। तवेति।

---

१. RV. 1.25.1.ª २. सेना M.

३. RV. 2.6.5.ª

* P. reads एते but VM. has used the word ऋचः in previous stanzas, so the reading should be एताः।

४. M. omits the words between दिवस्परि and पञ्चितः।

५. अथ ऋषिच्छन्दोदेवताविनियोगपुरस्सरं सप्तमोऽध्यायो व्याख्यायते। गार्त्समदस्य द्वितीयमण्डलस्य तृतीयेऽनुवाके दश सूक्तानि। तत्रैकं सूक्तं व्याकृतम्। 'सेमाम्' इति षोडशर्चं द्वितीयं सूक्तम्। अत्रानुक्रम्यते–'सेमां षोळशान्त्या त्रिष्टुब् द्वादशी च सैन्द्री च' (KSA. 15. 24. p. 13.) इति। मण्डलद्रष्टा गृत्समद ऋषिः। द्वादशीषोडश्यौ त्रिष्टुभौ। शिष्टाश्चतुर्दश जगत्यः। 'ब्राह्मणस्पत्यं हं' (KSA. 14. 23. p. 13.) इत्युक्तत्वात् तुह्यादिपरिभाषया (KSA. 12. 3. p. 5). इदमादीनि त्रीणि सूक्तानि ब्राह्मणस्पत्यानि। अस्य सूक्तस्य द्वादशी ऐन्द्री इन्द्रदेवत्या। चशब्दाद् ब्राह्मणस्पत्या च। सामान्यविनियोगः पूर्वमेवोक्तः। विशेषतस्तु लिङ्गादवगन्तव्यः Sy.

६. इमामस्मदीयाम् Sy. ७. प्रह्रिय M. and P. प्रकर्षेण भृतां स्तुतिम् Sy.

८. सर्वस्य जगत ईश्वरो भवसि Sy.

९. अया अनया छान्दसो वर्णलोपः Sy.

१०. विधतिः परिचरणकर्मा Ngh. 3.5, also cf. विधतिर्दानकर्मा N. 10.23.

११. नूतनया प्रत्यग्रया Sy.

१२. वेदरूपया स्तुतिलक्षणया वाचा Sy.

१३. येन प्रकारेण यत्कामनया Sy.

१४. अस्माकं मध्ये Sy.

१५. Omitted in M. १६. मीढ्वान् सेक्ता स्तुतेर्वर्षिता कर्तेति यावत् Sy.

१७. VM. seems to explain सखा as होता ॥ सखा मित्रभूतः सन् Sy.

१८. त्वां स्तौति Sy.

१९. रोति M.

२०. बृहतो ब्रह्मणो मन्त्रस्य स्वामिन्! Sy.

२१. सीषधः छान्दसे लुङि चङि एतद्रूपम् Sy.

२२. तदभिमतं फलम् Sy. २३. अपि च Sy.

२४. VM. ignores अविड्ढि। यः and सः ॥ अविड्ढि प्राप्नुहि। अवतेः प्राप्त्यर्थस्य लोटि एतद्रूपम् Sy.

योनन्त्वान्यनमन्न्योजसोतादर्दर्मन्युना शम्बराणि वि ।
प्राच्यावयदच्युता ब्रह्मणस्पतिरा चाविशद्वसुमन्तं वि पर्वतम् ॥ २ ॥

यो नन्त्वानि । यः नमनीयानि[1] । बलेन । निनमयति[2] । अपि च । स विदारयति[3] । क्रोधेन[4] । असुरकुलानि[5] । प्रच्यावयति[6] च । अच्युतानि[7] । तथा पणिभिरपहृतैः[8] पशुभिस्तद्वन्तम्[9] । शिलोच्चयम्[10] । च[11] । आविशत्[12] सः, मन्युना[13] तच्चेति[14] ।

तद्देवानां देवतमाय कर्त्वमश्रथ्नन्दृळ्हाव्रदन्त वीळिता ।
उद्गा आजदभिनद् ब्रह्मणा वलमगूहत्तमो व्यचक्षयत्स्वः ॥ ३ ॥

तद्देवानाम् । तत् । देवानाम्[15] । अतिशयेन देवाय[16] । कर्म[17] । यद्[18] गा आजिघृक्षतो[19]ऽस्य[20]

१. मनीयानि P. नमनीयानि राक्षसादीनि Sy.
२. निह्मयति P. नितरामनमयत् । प्रह्वीभूतान्यकरोत् Sy.
३. विदारयत्र P. वर्षणार्थं विदारितवान् । अदर्दः–'दॄ विदारणे' इत्यस्माद् यङ्लुगन्ताल्लङि एतद्रूपम् Sy.
४. क्रोधेनः P. मनुना क्रोधेन वा Sy. 'मन्युर्मन्यतेर्दीप्तिकर्मणः । क्रोधकर्मणो वधकर्मणो वा' N. 10.29.
५. सुकुलानि P. मेघान् Sy. शम्बरः । मेघनामैतत् Ngh. 1.10.
६. प्रकर्षेणागमयत् । मेघान्निरगमयदित्यर्थः Sy.
७. नैश्चल्येन मेघेऽवस्थितान्युदकानि Sy.
८. M. omits the words between. असुरकुलानि and पणिभिः
९. ०स्त्वदन्तम् P. गोरूपधनवन्तम् Sy.
१०. बलनाम्नासुरेण बिलद्वारे पिधानार्थं निहितं शिलोच्चयम् Sy.
११. आ च आभिमुख्येन चेत् । चशब्दश्चेदर्थः । समुच्चयार्थत्वे तु 'चवायोगे प्रथमा' इति पूर्वस्य अच्यावयदित्यस्य आद्युदात्तत्वं स्यात् । अस्य च सर्वानुदात्तत्वम् । चेदर्थे तु 'निपातैर्यद्यदिहन्त०' इति निघातप्रतिषेधः सिध्यति Sy.
१२. विशेषेण प्रविशति । तदानीं तद्गोरूपं धनं प्राप्नोदित्यर्थः Sy.
१३. मसिना P.
१४. VM. ignores ब्रह्मणः । पतिः and वि ।
१५. इन्द्रादीनां मध्ये Sy. निर्धारण एषा षष्ठी । देवानां मध्ये SKN.
१६. देवायं P. अतिशयेन दानादिगुणयुक्ताय । षष्ठ्यर्थे चतुर्थी । ईदृशस्य ब्रह्मणस्पतेः Sy. कर्मसम्बन्धव्यतिरेकजनितायाः षष्ठ्याः स्थाने, एषा चतुर्थी । देवतमस्यातिशयेन दानादिगुणयुक्तस्य ब्रह्मणस्पतेः SKN.
देवतमस्य बृहस्पतेः Dur.
१७. Omitted in P. कर्तव्यं कर्म किं पुनस्तदिति चेत् ? तत्कर्म Dur.
१८. Omitted in P.
१९. आजिघृक्ष M.
आजिघृतो P.
२०. Omitted in M.

विवृतद्वाराण्यभवन्[१] । दृढान्यपि[२] । असुरकुलानि[३] । मृदूनि[४] । ततो[५] यत् पशून् । उदाजत्[६] । अभिनच्च[७] । मन्त्रेण[८] । असुरम्[९] । अन्धकारं[१०] च तत्रत्यम्[११] । अगूहत्[१२] । व्यदर्शयच्च[१३] । आदित्यम्[१४] ।

---

१. ०भव P. 'श्नन्थ विमोचनप्रतिहर्षणयोः' अस्य बलेन श्रथितानि विश्लिष्टान्यभवन् Sy. कतमत् ? उच्यते । अश्रथ्नन् शिथिलीभवन्ति SKN. श्लथान्यभवन् Dur.

२. वृळ्हा दृढानि पर्वतादीनि Sy. दृढान्यपि सन्ति मेघवृन्दानि Dur.

३. तथा वीळितानि संस्तम्भितानि दृढीकृतानि वृक्षादीनि । Sy. वीडितानि संस्तम्भानि, अत्यन्तकठिनान्योषधिवनस्पत्यादिबीजानि SKN. कानि पुनस्तानि मृदून्यभवन् ? इत्युच्यते वीळिता यानि वीडितानि व्रीडितानि सन्नद्धानि दर्पितान्यसुरकुलानि, अन्यानि वा यानि कानिचित्तानि Dur. 'वीळयतिश्च व्रीळयतिश्च संस्तम्भकर्माणौ । पूर्वेण सम्प्रयुज्येते' N. 5.16.

४. मृदून्यभवन् Sy. शिथिलीभवन्ति च विपरीतगुणानि भवन्ति प्रतिद्वन्द्वीभूतानि मेघवृन्दानि च ।...वीडयतिश्च व्रीडयतिश्च संस्तम्भनार्थे, संस्तम्भश्च दृढं काठिन्यमुच्यते । पूर्वेण श्रुतेन, अव्रदन्तेति व्रन्दिना मृदुभावार्थे सह प्रयुज्यते मन्त्रेषु । तत्रानया संस्तम्भार्थत्वेन प्रतिद्वन्द्वीभावान्मुक्तसंशयं व्रन्दी मृदुभावार्थ इति गम्यते। रामार्जुनवत्।...व्रीडयतेर्व्रन्दिना सह प्रयोगोऽन्वेष्यः SKN. मृदून्यभवन् । ...एवमत्राव्रदन्त वीळितेति ? (वीळितेति) व्रदन्तेर्व्रीडयतिना ? (वीळयतिना) सह प्रयोगाद् व्रीडते–? (वीळते–) रर्थवैपरीत्येन व्रदन्तेर्मृदुभावार्थत्वमुपपद्यते । व्रीडयतेस्तु व्रन्दिना सह प्रयोगोऽन्यत्र क्वचिद् द्रष्टव्यः Dur. 'व्रन्दी व्रन्दतेर्मृदुभावकर्मणः' N. 5.15.

५. तो यं P.

६. ०दात्मत् M. 'अज गतिक्षेपणयोः' देवान् प्रत्युदगमयत् Sy. न चैतावदेवास्य कर्म, किं तर्हि ?...उदाजद् उद्गमयति गा वृष्टिलक्षणाः SKN. उदाजद् गाः, उदगमयदपः Dur.

७. ०भिनाच्च P. मन्त्रसामर्थ्येन अभैत्सीत् Sy. भिनत्ति च SKN.

८. आत्मीयेन मन्त्रेण Sy. परिवृढेन । केन ? सामर्थ्याद् वज्रेण ।...त्रयीलक्षणेन वा ब्रह्मणा स्तूयमान इति शेषः SKN.
ब्रह्मणा स्तूयमानः Dur.

९. वलं सर्वस्यावारकमसुरम् Sy. मेघम् SKN., Dur.

१०. बलेनोत्पादितं तमो ध्वान्तम् Sy. विद्युल्लताविलसितैः शार्वरं तमः SKN. तमो वैद्युतात्मनः Dur.

११. ०त्यनम् P.

१२. अगूहत् P. 'गुहू संवरणे' । गूढमदृश्यमकरोत् Sy. गूहितञ्च SKN. अनाशयत् Dur.

१३. तमसो निराकरणेन तत्स्थमदर्शयत् Sy. चक्षुर्दर्शनार्थे । व्यदर्शयन्नभसो व्यभ्रकरणेन SKN. चष्टिः पश्यतिकर्मा Ngh.3.11.

१४. आदित्यम्, अव्यवधानकरणेन नभसः Dur., N. 5. 16., SKN. II. 356.

अश्मास्यमवतं ब्रह्मणस्पतिर्मधुधारमभि यमोजसातृणत् ।
तमेव विश्वे पपिरे स्वर्दृशो बहु साकं सिसिचुरुत्समुद्रिणम् ॥ ४ ॥

अश्मास्यम् । अश्मपिहितास्यम्[1] । कञ्चन[2] कूपम् । ब्रह्मणः[3] । पतिः[4] । मधुधारम्[5] । अभ्यतृणत्[6] । यम्[7] । बलेन, मधुधारमिति[8] तत्रत्यगवाभिप्रायम्[9] । तम्[10] । एव । विश्वे[11] । पिबन्ति[12] । देवाः[13] । ततो हविषामुत्पत्तेर्[14] बहु[15] च । सह[16] । समुन्दनवद्[17] गोधनम् । ततः कूपाद्,

१. अश्मवद्दृढतरास्यम्. . .व्यापनवन्तमासेचनवन्तमिति तस्यार्थः Sy. अश्नोतेराङ्पूर्वस्य वा स्यन्देर्मनिन्डौ भावे, औणादिकौ द्रष्टव्यौ । ततश्चाकारो मत्वर्थे. . व्याप्तारं स्थापितारं चेत्यर्थः । कम्? वक्ष्यमाणमुत्सम् SKN. अश्मशब्दादशनवन्तमिति, आस्यशब्दादास्यन्दनवन्तमिति भाष्यकारश्चकार । तथा सामर्थ्यमपेक्ष्य किमुक्तं भवति ? उदकव्यापनक्रियया तद्वन्तम् । आस्यन्दनक्रियया चोदकप्रक्षरणक्रियया तद्वन्तम्. . . मेघम् Dur. अशनवन्तमास्यन्दनवन्तम् N.10.13.

२. कश्चन P. M. omits कञ्चन कूपम् ॥ अवतमवस्तात्तृतं विस्तृतम् Sy. अवाततमधोगतमात्मनोऽधःस्थितमित्यर्थः SKN. अवाततमवाङ्ततं भूमिमुदकभावेन गतम् Dur.

३. ब्रह्मणो मन्त्रस्य Sy.

४. पालयिता देवः Sy.

५. मधुर्मादयित्री उदकधारा यस्य तादृशम् Sy. कर्मण्यण्, उदकस्य धारयितारम् SKN. उदकं धारयितारम् Dur.

६. अभ्यगृणत् M. अतृणत्–'उतृदिर् हिंसानादरयोः' । अहिंसीत् वर्षणार्थमवधीदित्यर्थः Sy. 'अभि' इत्ययम् 'अतृणत्' इत्येतेन सम्बध्यते ।. . .'तृदि हिंसायाम्' अभिहिंसितवान् अभिहिनस्ति SKN. अभ्यहनत् ? (अभ्यहिनत्) Dur.

७. तमेवद्यम् P. मेघम् Sy.

८. ०मिची P.

९. त्येत्यगवामभि P.

१०. मेघम् Sy. पुनरादानकालमुदकस्य प्राप्य तमेव Dur.

११. विश्वे सर्वे । विश्वे के ? सामर्थ्याद्रश्मयः SKN. सर्वे Dur.

१२. पिबति P. घर्मकाले पिबन्ति मेघेन वृष्टस्योदकस्य पानात् तमेव पिबन्तीत्युच्यते Sy. पीतवन्तः पिबन्ति वा । यच्च तत्प्रवापस्योदकस्य स्वीकरणं तदेव तस्य पानमुच्यते SKN. तदुदकमाददते Dur.

१३. मेवाः P. स्वर्दृशः स्वरादित्यः तस्य सम्बन्धिनो द्रष्टारो रश्मयः Sy. स्वरादित्यस्तस्य द्रष्टारः SKN. सूर्यस्य रश्मयः, स्वरिव ये दृश्यन्ते ते सूर्यसमानदर्शनाः, स्वर्भावेन वा सूर्यभावेन ये मण्डलीभूता दृश्यन्ते ते पिबन्ति Dur.

१४. ०मुत्य M. ०मुत्पत्ते P. पीत्वा च वर्षासु SKN. पुनश्च प्राप्य तदुत्सर्गकालम् Dur.

१५. बहुतरम् Sy. उदकम् SKN. बहु तदुदकम् Dur.

१६. सह युगपदेव Sy. सहभूता मण्डलादवाञ्च आवृत्य Dur.

१७. उदकवन्तं मेघम् Sy. उदकवन्तम् । तेनैवोदकेन भावितवन्तः SKN. उदकवन्तं कुर्वन्तः Dur.

उत्सम्[1]। सिसिचुरिति, यास्कस्त्वाह[2]—'अशनवन्तमास्यन्दनवन्तम्[3]। अवातितं[4] मेघं[5] ब्रह्मणस्पति-मधुधारम्। यमोजसा[6] बलेनाभ्यतृणत्[7] तमेव सर्वे[8] पिबन्ति[9] रश्मयः सूर्यदृशः। बह्लेनं[10] सह सिञ्चन्त्युत्सम्[11]उद्रिणमुदकवन्तम्[12][13]' इति[14]।

**सना ता का चिद्भुवना भवीत्वा माद्भिः शरद्भिर्दुरो वरन्त वः।**
**अयतन्ता चरतो अन्यदन्यदिद्या चकार वयुना ब्रह्मणस्पतिः ॥५॥**

सना ता। यानि। प्रज्ञानानि[15] मन्त्रैः[16]। ब्रह्मणः। पतिः। चकार[17]। तानि[18]। कानि[19]। चित्। सनातनानि। भूतानि[20]। भूत्वा[21]। असुरान् माथयद्भिः[22]। शरैः[23] सह देवाः! युष्मदर्थम्[24]। पर्वतस्य द्वाराणि। अभजन्[25]। तेषां भूतानामन्यदन्यच्च[26] भूतम्। प्रयत्नमकुर्वाणे[27] सम्भ्रान्ते।

---

१. उत् P. M. omits the words between बहु च and उत्सम्॥ ते च रश्मयो वर्षासूत्सेचनवन्तम् Sy. मेघम्। द्वितीयाश्रुतेः प्रतीति शेषः SKN. एनमन्तरिक्षे मेघम् Dur.

२. घर्मकाले यत्पीतं ततोऽपि बहुतरं सहस्रगुणितं सिञ्चन्तीत्यर्थः Sy. सिञ्चन्ति SKN. तं च पुनरेव मेघं यो ब्रह्मणस्पतिर्लोकानुग्रहाय प्रतिसंवत्सरं तृणेढि सोऽस्माकमिदं नाम करोत्विति Dur.

३. N.10.13.

४. अवाडितं M. आवड्तिम् P.

५. मेघं is not found in the *Nirukta*. This seems to be VM.'s addition to the *Nirukta*.

६. N. adds अभि before यमोजसा। VM. seems to omit it as it has been repeated with अतृणत् later on.

७. ०तृण P.

८. सर्व P.

९. पियन्ति M.

१०. ह्लेन P.

११. तिञ्चत्यु० P.

१२. M. omits the words between रश्मयः and. समु०

१३. ०मुदवन्तम् P.

१४. इव P.

१५. ०ज्ञानि P. वयुना ज्ञाननामैतत्। Cf. Ngh. 3.9; N. 5.14. । ज्ञानानि मन्त्रविषयाणि Sy.

१६. Omitted in P.

१७. कृतवान् Sy.

१८. हे ऋत्विग्यजमानाः! Sy.

१९. ब्रह्मणस्पतेः प्रज्ञानानि Sy.

२०. भुवना 'सुपां सुलुक्०' षष्ठ्या लुक्। भुवनानामुदकानाम् Sy.

२१. भाव्यानाम् Sy.

२२. मथयद्भिः P. मासैः–'पदन्०' इत्यादिना मासशब्दस्य मास्भावः। 'स्वतवस्मासोषसां च त इष्यते' इति तत्वम् Sy.

२३. शरद्भिः संवत्सरैश्च Sy.

२४. युष्मदत्थं P.

२५. M. omits the words between शरैः सह and अभजन्॥ वरन्त–विवृण्वन्ति। तत्काले वर्षणार्थं मेघद्वाराण्युद्घाटयन्तीत्यर्थः Sy.

२६. ०दत् M. अन्यदन्यदित् अन्यदन्यदेव पृथिवी वृष्टिजलं दिव्यमुदकम्, द्यौश्च ककार्यं हविर्लक्षणं पार्थिवमन्नम्, एवं परस्परव्यतिहारेण Sy.

२७. अयन्तता अयतमानौ अप्रयत्नौ उभौ लोकौ द्यौश्च पृथिवी च Sy.

ब्रह्मणस्पतेर्[1]निर्गच्छते[2] इति ।[3]

**अ॒भि॒नक्ष॑न्तो अ॒भि ये तमा॑न॒शुर्नि॒धिं प॒णी॒नां प॑र॒मं गुहा॑ हि॒तम् ।**
**ते वि॒द्वांसः॑ प्रति॒चक्ष्यानृ॑ता॒ पुन॒र्यत॑ उ॒ आय॒न् तदुदी॑यु॒रा॒विशं॑म् ॥ ६ ॥**

अभिनक्षन्तः[4] । अभिगच्छन्तः[5] । ये[6] । तम् । आप्तवन्तः[7] । निधिम्[8] । पणिभिरपहृतम्[9] । उत्तमम्[10] । गुहायाम् । निहितम्[11] । ते । प्राज्ञाः[12] । तत्र गोधनविषयाण्यसुराणामनृतानि[13] मायाः[14] । दृष्ट्वा[15] । पुनश्च । यतो[16] देवलोकात् । आयन्[17] । तम् । एव । आविश्य[18] । उदीयुरिति[19] दूतानाह[20] । अस्योत्तरा भूयसे निर्वचनाय[21] ।[22]

**ऋ॒तावा॑नः प्रति॒चक्ष्यानृ॑ता॒ पुन॒रात॒ आ त॑स्थुः क॒वयो॑ म॒हस्प॒थः ।**
**ते बा॒हुभ्यां॑ धमि॒तम॒ग्निमश्म॑नि॒ नकि॒ष्षो अ॒स्त्यर॑णो ज॒हुर्हि तम् ॥७॥**

ऋतावानः । सत्यवन्तः[23] । असुराणामनृतानि[24] । दृष्ट्वा[25] । ततस्ते[26] । पुनश्च[27] । आस्थिताः[28] ।

१. ०स्पत न P. २. चरतः–भुञ्जाते । 'चर गतिभक्षणयोः' Sy.
३. VM. ignores इत् ।
४. गोसमूहे पणिभिरसुरैरपहृते सति पणीनां स्थानं सरमाख्याया देवशुन्या ज्ञात्वा ब्रह्मणस्पतिना सृष्टा अङ्गिरसस्तत्स्थानं प्राप्य गोसमूहं पणिभिर्निर्मिता मायाश्च बृष्ट्वा असुरनिवासस्थानं स्वहस्तोद्भूतेनाग्निना दग्ध्वा प्रत्यागच्छन् । तदेतद्वद्ब–? (द्रप्–)चेनोच्यते Sy.
५. अभितो गच्छन्तः Sy.
६. अङ्गिरसः Sy.
७. अभिलक्ष्यानशिरे प्राप्तवन्तः Sy.
८. गोसमूहरूपं निधानं धनम् Sy.
९. पणीनाम्–तृतीयार्थे षष्ठी । पणिभिः Sy. १०. उत्कृष्टम् Sy.
११. स्थापितम् Sy.
१२. M. omits the words between पणिभिः and प्राज्ञाः ॥ अभिज्ञाः Sy.
१३. ०राणमनुता P.
१४. मायिन् P. अनृता अनृतानि असुरैः कृता मायाः Sy.
१५. बृष्टचा M. बृष्वष्त्वा व P.
१६. यत उ, यत एव स्थानात् Sy.
१७. अगच्छन् Sy.
१८. आविश्य M. and P. आवेष्टुं प्रवेष्टुम् Sy. १९. अवी० P. उदगच्छन् उत्कर्षेण प्राप्ताः Sy.
२०. ०तानमाह P. २१. M. omits अस्योत्तरा भूयसे निर्वचनाय.
२२. VM. ignores अभि ।
२३. M. omits सत्यवन्तः ॥ ऋतमिति सत्यनामधेयम् । तद्वन्तः Sy.
२४. ०महता० M.
२५. पूर्वोक्तप्रकारेण दृष्ट्वा Sy.
२६. अस्मात्स्थानात् Sy.
२७. पुनराजिगमिषवः Sy.
२८. अवतस्थिरे Sy.

विद्वांसः[1] । महतः । मार्गात्[2], देवलोकं प्रति गन्तुम्[3] । ते । बाहुभ्याम्[4] । धमितम्[5] । अग्निम् । अश्मनि[6] तस्मिन् पर्वते निदधुः[7] । ततश्च तस्मिन् पुरे न कश्चित् । सः[8] । विद्यते । पुरः[9] सर्वोऽप्यग्निना दग्धो, यस्मात्[10], तत्र द्रुताः[11] । अग्निं तम् । जहुरिति[12] ।[13]

**ऋ॒तज्ये॑न क्षि॒प्रेण॒ ब्रह्म॑ण॒स्पति॒र्यत्र॒ वष्टि॒ प्र तद॑श्नोति॒ धन्व॑ना ।**
**तस्य॑ सा॒ध्वीरिष॑वो॒ याभि॒रस्य॑ति नृ॒चक्ष॑सो दृ॒शये॒ कर्ण॑योनयः ॥ ८ ॥**

**ऋतज्येन** । सत्यज्येन[14] दृढज्येन । शराणां[15] क्षेपकेण । धनुषा[16] सह । यत्र[17] । इच्छति[18] । ततः[19] । प्रगच्छति[20] । ब्रह्मणः[21] । पतिः[22] । तस्य[23] । साधवः[24] । शराः[25] । यैः[26] । प्रेरयति[27] । मनुष्याणां द्रष्टॄन्[28] । भूम्याः कृत्तप्रदेशजातान् असुरान्[29] । देवानां दर्शनाय[30], देवानामग्रतो[31] वधाय तान् दर्शयतीति ।

---

१. कान्तदर्शिनः सर्वज्ञा अङ्गिरसः Sy.
२. मार्गान् प्रति Sy.
३. ०गंस्तं P.
४. ०हुभ्यम् P. अवतिष्ठमानाश्च ते हस्ताभ्याम् Sy.
५. तमित्राम् P. मथनोत्पादितं प्रज्वालितम् Sy.
६. पणीनां निवासभूते शिलोच्चये Sy.
७. निधुः P.
८. सोऽग्निः Sy.
९. M. omits the words between पर्वते and पुरः
१०. हि खलु Sy.
११. M. reads द्रुतानिन्तं and P. reads द्रुतानि तम् for द्रुताः । अग्निं तम् ।
१२. जगुरि० M. जहुर्हि दग्धुं त्यक्तवन्तः । . . . अविद्यमानमग्निं स्वसामर्थ्यादुत्पाद्य तत्र प्रचिक्षिपुरित्यर्थः Sy.
१३. VM. ignores आ and अरणः ॥ अरणोऽरमयिता दाहेन दुःखकारी Sy.
१४. ऋतं सत्यमेव ज्या यस्य तेन Sy.
१५. इषूणां क्षेपकेण Sy.
१६. धरणभूतेन धनुषा Sy.
१७. यस्मिन् विषये Sy.
१८. गच्छ० P. कामयते Sy.
१९. तत P.
२०. प्रकर्षेण व्याप्नोति । अश्नोतेर्व्यत्ययेन परस्मैपदम् Sy.
२१. ब्रह्मः P. ब्रह्मणो मन्त्रस्य Sy.
२२. पालयिता देवः Sy.
२३. धनुषः Sy.
२४. साधवा P.
M. omits the words between यत्र and साधवः ॥ साधिकास्ताः Sy.
२५. इषवः भवन्ति Sy.
२६. याभिरिषुभिः Sy.
२७. राक्षसादीनि क्षिपति Sy.
२८. दृष्टा P. नॄन् पश्यतः । उपलक्षणमेतत् Sy.
२९. ०सुरा M. and P. कर्णयोनयः श्रोत्रेन्द्रियेण ग्राह्या मन्त्रभूताः, आकर्णकृष्टा वा बाणाः Sy.
३०. सर्वज्ञस्य ब्रह्मणस्पतेः दर्शनाय ज्ञानाय जाताः Sy.
३१. ०नां प्र० P. ब्रह्मणस्पतिर्मन्त्रैरेव सर्वं साधयतीति भावः Sy.

स सँनयः स विनयः पुरोहितः स सुष्टुतः स युधि ब्रह्मणस्पतिः ।
चाक्ष्मो यद्वाजं भरते मती धनादित्सूर्यस्तपति तप्यतुर्वृथा ॥ ९ ॥

स संनयः । सः[1] । मन्त्रैः, विश्लिष्टान्[2] सन्नयति । सङ्गतांश्च[3] विश्लथयति । देवैः पुरोहितः[4] । सुष्ठु च स्तूयते[5] । युद्धेषु[6] च प्रादुर्भवति । सोऽयम् । दर्शयति[7] मनुष्यस्य । स्तुत्यम्[8] । यत् । अन्नम्[9] । धनानि[10] च । हरते[11] । ततोऽनन्तरम् । [12]स सुवीर्यः[13] । तपति[14] । शत्रूंस्तापयिता[15] । अनायासेन[16][17] ।

विभु प्रभु प्रथमं मेहनावतो बृहस्पतेः सुविदत्राणि राध्या ।
इमा सातानि वेन्यस्य वाजिनो येन जना उभये भुञ्जते विशः ॥ १० ॥

विभु प्रभु । विभूनि[18] । प्रभूणि[19] च । प्रथममेव[20] । हविर्भिः सिञ्चतो[21] यजमानस्य । बृहस्पतेः[22] । शोभन[23]धनानि । राध्यानि[24] भवन्ति । इमानि । दानानि[25] । वेनानां कामयितॄणामा-[26]

---

१. ब्रह्मणस्पतिः Sy.

२. M. omits यः। सः। मन्त्रैः and विश्लिष्टान् ॥ विश्लिष्टानां मन्त्रैः सङ्गमयिता भवति Sy.

३. संनतां० P. सङ्गतानां विविधं नेता पृथक्कर्तापि स एव Sy.

४. देवैः पुरतोऽत्र स्थापितः Sy.

५. श्रूय० P. शोभनं स्तोतृभिः स्तुतश्च भवति Sy.

६. विद्धेषु M. युधि सङ्ग्रामे स स्तोतॄणामनुग्रहाय प्रादुर्भवतीति शेषः Sy

७. दर्शयेति P. चाक्ष्मः—चष्टेः क्षमतेर्वा । सर्वस्य द्रष्टा सर्वसहो वा ब्रह्मणस्पतिः Sy.

८. स्तुत्य P. मती मननीयं प्रशस्तम् Sy.

९. यत्र P.

१०. यनानि P. धनं च स्तोतॄणामर्थाय Sy.

११. बिभर्ति । वृष्टिद्वारा पोषयति Sy.

१२. M. omits the words between यत् and सः

१३. सवीर्यः M.

१४. दीप्यते । ब्रह्मणस्पतिना वर्त्तैरन्नैर्धनैश्च यज्ञस्य सिद्धत्वात् स्वयं केवलं हवींषि भुञ्जान एव वर्तत इत्यर्थः Sy.

१५. तापकः Sy.

१६. ०सेना M. वृथा अनायासवचनमेतत् । अनायासेन Sy.

१७. VM. ignores सः (twice) । ब्रह्मणः । पतिः and इत् ।

१८. व्याप्तानि Sy.

१९. प्रौढानि Sy.

२०. प्रथमानि मुख्यानि Sy.

२१. सिञ्चन्तो M. मेहनावतः वर्षणवतो वृष्टिप्रदस्य Sy.

२२. बृहस्पते P. बृहतो मन्त्रस्य पालयितुः सम्बन्धीनि Sy.

२३. सुष्ठु लब्धव्यानि । सुविदत्राणि 'विद्लृ लाभे' । 'सुविदेः कत्रन्' (Uṇādi. 3. 308.) Sy. 'सुविदत्रं धनं भवति' N. 7.9.

२४. सम्यक् साधनीयानि । प्राप्तव्यानीति यावत् Sy.

२५. M. omits the words between शोभन and दानानि ॥ धनानि Sy.

२६. ०यितृणा० P. वेन्यस्य कमनीयस्य Sy.

अयस्य। बलवतोऽस्य[1]। येन[2]। देवा मनुष्याश्च[3]। भुञ्जत[4] इति[5]।

**योऽव॑रे वृ॒जने॑ वि॒श्वथा॑ वि॒भुर्म॒हामु॑ र॒ण्वः शव॑सा व॒वक्षि॑थ।**
**स दे॒वो दे॒वान्प्रति॑ पप्रथे पृ॒थु विश्वेदु॒ ता प॑रि॒भूर्ब्रह्म॑ण॒स्पतिः॑ ॥ ११ ॥**

योऽवरे। यस्त्वम्[6]। अवरे[7] न्यूने[8]। वृजने[9]। विश्वथा[10]। विभुः[11]। महाम्[12]। उ[13]। रण्वः[14]।[15] बलेन[16]। वहसि[17]। परोक्षः शेषः—सः। देवः[18]। देवान्। प्रति[19]। पप्रथे[20] प्रथयामास[21]। पृथु[22] बलमात्मीयम्। विश्वानि[23]। एव। तानि[24]। परिभवति[25], युद्धानि अयम् अरानिव[26] नेमिः[27]।

---

१. अन्नवतो ब्रह्मणस्पतेः। तृतीयार्थे षष्ठी। ब्रह्मणस्पतिना दत्तानि Sy.

२. येन धनेन Sy.

३. VM. seems to explain उभये जनाः as. देवा मनुष्याश्च ॥ उभये उभयविधा जनाः स्तोतारो यजमानाश्च, देवा मनुष्याश्च वा Sy.

४. भोगान् लभन्ते। तत्सर्वं ब्रह्मणस्पतिना दत्तमित्यर्थः Sy.

५. VM. ignores विशः ॥ विशो निविष्टाः सन्तः Sy.

६. तस्त्वम् P.
यः ब्रह्मणस्पतिः Sy.

७. अमरे P. निकृष्टे Sy.

८. न्यूहे P.

९. वर्जनहेतुभूते बले वर्तमानम्। दुर्बलमिति यावत् Sy.

१०. सर्वप्रकारेण Sy.

११. व्याप्तः Sy.

१२. महान्तम्। छान्दसो वर्णलोपः Sy.

१३. च। उभयविधं स्तोतारम् Sy.

१४. रमयिता स्तोतव्यो वा Sy.

१५. VM.'s commentary on Vedic words, beginning with वृजने and ending with रण्वः, is missing in MSS. D., P.

१६. ०लेसः P.
आत्मीयेन बलेन Sy.

१७. हवसि P. वोढुमिच्छति। सर्वदा वहतीति यावत्। ववक्षिथ—वहतेः सन्नन्तस्य लिटि एतद्रूपम्। पुरुषव्यत्ययः Sy.

१८. देवो दानादिगुणयुक्तः Sy.

१९. सर्वेषां देवानां प्रतिनिधिः सन् Sy.

२०. पपथ P.

२१. प्राथ० P. प्रथते। यशसा विस्तीर्णो भवतीति यावत् Sy.

२२. अत्यन्तम् Sy.

२३. यस्मादेवं तस्मात् सर्वाण्येव Sy.

२४. सर्वाणि भूतजातानि Sy.

२५. ०वन्ति M. परिभवन्, अभिभवन् वर्तत इति शेषः Sy.

२६. M. omits अरानिव नेमिः।

२७. VM. ignores उ।

विश्वं सत्यं मघवाना युवोरिदापश्चन प्र मिनन्ति व्रतं वाम् ।
अच्छेन्द्राब्रह्मणस्पती हविर्नोऽन्नं युजेव वाजिना जिगातम् ॥१२॥

विश्वं सत्यम्[1] । इन्द्रश्च देवता[1] । हे धनवन्तौ[2] ! युवयोः[3] । एव[4] । विश्वम्[5] । सत्यं[6] भवति । तथा युवयोरेव[7] । वृष्ट्यर्थं[8] कर्म । आपः[9] । अपि[10] न । हिंसन्ति[11] । हे इन्द्राब्रह्मणस्पती[12] ! अस्मदीयम्[13] । हविः[14] । आगच्छतम्[15][16] । यथा घासलक्षणमन्नम्[17] । सहितौ[18] । द्वावश्वाविति[19] ।

---

१. M. omits सत्यम् and इन्द्रश्च देवता।

२. मघमिति धननाम (Ngh. 2.18) तद्वन्ताविन्द्राब्रह्मणस्पती ! Sy. मघवन्तौ ! SKN. हे मघवानौ ! धनवन्तौ ! Dur.

३. युवयोः सर्वमेतत्स्वभूतम् Dur.

४. इदिति पदपूरणः । अथवा सत्यमेतत् सर्वं जगद् युवयोः स्वभूतम् SKN.

५. विश्वं स्तोत्रम् Sy. बहु SKN. सर्वं जगत् Dur.

६. यथार्थम् । स्तुत्या यद्यद् गुणजातं प्रतिपाद्यते तत्सर्वं युवयोर्विद्यमानमेव न त्वारोपितमित्यर्थः Sy. सत्यं यावदिदमस्ति Dur.

७. युवयोः फलाभावो हिंसाकर्मणः SKN. युवयोर्यथासङ्कल्पं वर्तते Dur.

८. वृष्ट्यर्थं P. व्रतं मेघहननादिकम् SKN. कर्म Dur.

९. आपश्च, आपोऽपि । उपलक्षणमेतत् । एतदुपलक्षितानि सर्वाण्यपि भूतानि Sy.

१०. चन इत्येतत्पदद्वयसमुदायः । ऐकपद्यं त्वध्यापकसाम्प्रदायिकम् Sy. चनेति निपातोऽन्यत्राप्यर्थे । इह तु प्रतिषेधे । द्वेधा पदे पदकारेण नाधिते अप्यार्थयितव्ये SKN.

११. Omitted in M. 'मीङ् हिंसायाम्' । क्रैयादिकः । 'मीनातेर्निगमे' इति ह्रस्वत्वम् Sy. अत एतदुक्तं भवति हतमात्र एव मेघे, आपश्चन प्रमिनन्ति न हिंसन्ति SKN.

१२. इन्द्राबृहस्पते P. इन्द्राब्रह्मणस्पती ! युवामुच्येथे Dur.

१३. अस्माकम् Sy. अस्माकं स्वभूतम् SKN. अत्रैकवाक्यतायै यत्तच्छब्दाध्याहारः । यावीदृशौ स्वस्तौ.... यौ युवामेवमतिमहानुभावौ तौ नोऽस्माकम् Dur.

१४. इदं हविः Dur.

१५. आभिमुख्येन Sy., Dur. अच्छं अभेरर्थे, जिगातमित्येतेन सम्बध्यते SKN.

१६. ०च्छतं P. आभिमुख्येन जिगातं गच्छतम् । आगच्छतमिति यावत् । जिगातिर्गतिकर्मा । जौहोत्यादिकः । तत्र दृष्टान्तः Sy. एवमभिजिगातमभिगच्छतम् SKN. आगच्छतं भोक्तुम् Dur.

१७. अन्नं घासं प्रति यथा स्वयमेव शीघ्रं गच्छतस्तद्वत् शीघ्रमागच्छतमित्यर्थः Sy. अन्नं योग्याशनादि SKN. बुभुक्षू स्वमन्नम् Dur.

१८. M. omits the words between हविः and हितौ ॥ युजा रथे नियुक्तौ वाजिनौ वेजनवन्तावश्वौ । युजेवेत्यत्र 'सुपां सुलुक्०' इति प्रथमाद्विवचनस्याकारः । तृतीयायां हि 'सावेकाचः' इति विभक्तेरुदात्तत्वम् Sy. यथा युजौ सहयोगिनौ SKN. युजाविव सहचारिणौ Dur.

१९. वाजिनावश्वौ SKN. वाजिनौ रथविमुक्तौ Dur. N. 7.10., SKN. III. 57.

उताशिंष्ठा अनु शृण्वन्ति वह्नयः सभेयो विप्रो भरते मती धना ।
वीळुद्वेषा अनु वश ऋणमाददिः स ह वाजी समिथे ब्रह्मणस्पतिः ॥१३॥

उताशिष्ठाः । अपि च । शीघ्रतरा[1] भूत्वा । भवतोरनुशासनम्[2] । देवाश्चानुशृण्वन्ति[3] । वोढारः[4] । तथा तुभ्यं सभायां साधुः[5] । होता[6] । भरते[7] । स्तुत्या[8] । हवींषि[9] । स दृढक्रोधः[10] । वशायाः पशोः[11] । पश्चाद्[12] । यजमानानामृणम्[13] । आददिः[14], 'एभ्यो देयमस्ति' इति मन्यमानः[15] । सोऽयम् । बलवान्[16] भवति । युद्धे[17] इति[18] ।

ब्रह्मणस्पतेरभवद्यथावशं सत्यो मन्युर्महि कर्मा करिष्यतः ।
यो गा उदाजत्स दिवे वि चाभजन्महीव रीतिः शवसासरत्पृथक् ॥१४॥

ब्रह्मणस्पतेः[19] । ब्रह्मणस्पतेः । स्वबुद्ध्यनुगुणम्[20] । सत्य[21] एव । क्रोधः[22] । भवति[23] । महत् ।

---

१. आशुतरा शीघ्रगामिनः Sy.

२. ०रशा० P.

३. अस्माभिः कृतं स्तोत्रमनुक्रमेण शृण्वन्ति । यद्वा ब्रह्मणस्पतिना कृतमनुशासनं शृण्वन्ति । अतस्ते तमस्मदीयं यज्ञं प्रापयन्त्विति शेषः Sy.

४. वह्नयः । अश्वनामैतत् (Ngh. 1.14.) वोढारो ब्रह्मणस्पतेरश्वाः Sy.

५. सभेयः–'ढश्छन्दसि' इति ढः Sy.

६. मेधावी अध्वर्युर्होता वा Sy.

७. भवन्ते P. तस्मै ब्रह्मणस्पतये बिभर्ति । सम्पादयतीति यावत् । यद्वा (स्तोत्रेण धनानि भरते) बिभर्ति पोषयति Sy.

८. स्तत्या P. मत्या मननीयेन स्तोत्रेण । मती–'सुपां सुलुक्०' इति पूर्वसवर्णः Sy.

९. P. adds हव before हवींषि ॥ हविर्लक्षणानि धनानि Sy.

१०. वीळून् दृढानि प्रबलान् राक्षसादीनि द्वेष्टीति तादृशो ब्रह्मणस्पतिः Sy.

११. M. omits the words between स्तुत्या and पशोः ॥ वशाया गोः । वशा–'सुपां सुलुक्०' इति षष्ठ्या लुक् । वश ऋणम्–'ऋत्यकः' इति प्रकृतिभावः Sy.

१२. अनुक्रमेण । यद्वा अनुरानुगुण्ये Sy.

१३. ऋणमस्माभिर्यज्वभिः प्रदेयमवदानात्मकम्. . . अवदानस्य ऋणत्वं च तैत्तिरीये 'त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यः' (TS. 6.3.10.5.) इत्यादिना स्पष्टमाम्नातम् Sy.

१४. आदाता भवत्विति शेषः । यद्वा अनुः आनुगुण्ये । वश वशस्य कामस्याभिलाषस्य अनुगुणमादाता भवत्विति योज्यम् Sy.

१५. मान्य० P.

१६. अन्नवान् तस्माद् हविष आदाता भवत्वित्यर्थः Sy.

१७. संयन्ति सङ्गच्छन्तेऽस्मिन्नाहुतिभिर्देवा इति समिथो यज्ञस्तस्मिन् Sy.

१८. VM. ignores ह । ब्रह्मणः and पति ॥ हशब्दः प्रसिद्धो Sy.

१९. ०स्पते P.

२०. ०बुद्ध्यानु० M. ०बुध्यमानु P. यथाकामम् Sy.

२१. सत्योऽवितथः Sy.

२२. मननसाधनो मन्त्रः क्रोधो वा Sy.

२३. स यथा कामयते तथा करोतीत्यर्थः Sy.

कर्म । करिष्यतः[1] । यः पणिभिरपहृता गाः[2] । उदाजत्[3] सः[4] । दिवे तत्रत्येभ्यो[5] देवेभ्यः । यथास्वं व्यभजत्[6] । च । महतीव[7] । उदकरीतिः[8] । वेगेन[9] । स्वं स्वं गृहं[10] प्रति । प्रसरत्[11], गवां समूह इति ।

ब्रह्मणस्पते सुयमस्य विश्वहा रायः स्याम रथ्यो३ वयस्वतः ।
वीरेषु वीराँ उप पृङ्धि नस्त्वं यदीशानो ब्रह्मणा वेषि मे हवम् ॥१५॥

ब्रह्मणस्पते । ब्रह्मणः । पते[12] ! शोभननियमनस्य[13] । सर्वदा[14] । धनस्य[15] । नेतारः[16] । स्याम[17] । अन्नवतः[18] । वीरेषु पुत्रेषु[19] । अस्माकम् । त्वम् । वीरान्[20] । उपचर्यया[21]-ऽनुस्यूतं, वीरान् प्रयच्छ[22] । यदा[23] । स्वामी[24] । हविषा[25] सह । कामयसे[26] । मम । आह्वानम्[27] ।

---

१. रिष्यतः P.
२. M. omits the words between क्रोधः and गाः ।
३. युदाजात् P. उदगमयत् । गुहाया निरगमयदित्यर्थः Sy.
४. ब्रह्मणस्पतिः Sy.
५. तत्रोत्यो P. द्युलोकाय तत्रत्येभ्यो देवेभ्य इत्यर्थः Sy.
६. विभक्तांश्चाकरोत् Sy.
७. महन्तिव P.
८. स्रुतिरिव । रीतिः–'रीङ् स्रवणे' । यथा गङ्गादीनां स्रोतो विभक्तं सन्निम्नदेशाभिमुखं प्रसरति तथा Sy.
९. आत्मीयेन बलेन Sy.
१०. तत्तद्देवगृहं विभिन्नम् Sy.
११. अगच्छत् Sy.
१२. हे मन्त्राधिपते ! Sy.
१३. सुष्ठु नियन्तव्यस्य Sy.
१४. विश्वेषु सर्वेष्वहःसु Sy.
१५. नस्य P. M. omits the words between शोभन and धनस्य ।
१६. नतार M. अधिपतयः । रथा एषां सन्तीति रथ्यः 'छन्दसीवनिपौ च' इति मत्वर्थीय ईकारः Sy.
१७. भूयास्म Sy.
१८. अन्नवते M. अन्नयुक्तस्य Sy.
१९. पुत्वेषु P. वीर्याज्जातेष्वस्मदीयेषु पुत्रेषु Sy.
२०. पुत्रान् Sy.
२१. उपवर्ह्यया P.
२२. सम्पृक्तान् कुरु । उत्पादय । पृङ्धि–'पृचि सम्पर्के' रौधादिकः । वयं पौत्रानपि लभेमहीति यावत् Sy.
२३. वा M. and P.
२४. सर्वस्येश्वरस्त्वम् Sy.
२५. हवींषा P. ब्रह्मणा । अन्ननामैतत् । हविर्लक्षणेनान्नेन सह Sy.
२६. वेषि–'वी गतिप्रजननकान्त्यशनखादनेषु' । अतो मयोक्तं कुर्वित्यर्थः Sy.
२७. आह्वा M. स्तुतिलक्षणमाह्वानम् Sy.

ब्रह्मंणस्पते त्वमस्य युन्ता सूक्तस्यं बोधि तनंयं च जिन्व ।
विश्वं तद्भद्रं यदवंन्ति देवा बृहद्वंदेम विदथें सुवीराः ॥ १६ ॥

[ ब्रह्मणस्पते त्वम् । ][1]

II. 25.[2]

इन्धांनो अग्निं वंनवद्वनुष्यतः कृतब्रंह्मा शूशुवद्रातहंव्य इत् ।
जातेनं जातमति स प्र संसृते यंयं युजं कृणुते ब्रह्मंणस्पतिंः ॥ १ ॥

इन्धानः[3] । अयं[3] ब्रह्मणः । पतिः[4] । यं[5] यम् । सहायम्[6] । करोति[7] । सः[8] । अग्निम् । इन्धानः[9] । यज्ञार्थं हन्ति[10] । हन्तुमिच्छतः शत्रून्[11] । तथा कृतस्तोत्रो[12] देवानां वर्धते[13] । दत्तहविष्कः[14] । च । तथा स्वेन मनुष्येण[15] । शत्रुमनु[16] । अतिप्रसरति[17] अतिसर[18]स्यति[19] च ।

---

१. The *pratika* has been supplied by the Editor. The stanza has already been explained. See RV. 2.23.19. Sy. explains this stanza in the following manner:—
हे ब्रह्मणस्पते ! यन्ता सर्वस्य जगतो नियन्ता । त्वमस्य सूक्तस्य इदं सूक्तम्–'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी । बोधि बुध्यस्व । बुध्वा तनयं पुत्रञ्च अस्मभ्यं जिन्व प्रेरय । जिविः प्रीणनार्थोऽत्र प्रेरणे वर्तते धातूनामनेकार्थत्वात् । यद् भद्रं कल्याणं देवाः सर्वे अवन्ति रक्षन्ति । विश्वं सर्वं तद् भद्रं च जिन्वेति शेषः । वयं च सुवीराः शोभनैर्वीरैः पुत्रपौत्रादिभिरुपेताः सन्तः बृहत्प्रौढं स्तोत्रं विदथे–विदन्ति यष्टव्यतया अस्मिन् देवान् जानन्तीति विदथो यज्ञः । तस्मिन् वदेम ब्रवाम Sy.

२. 'इन्धानः' इति पञ्चर्चं तृतीयं सूक्तं गार्त्समदं जागतं ब्राह्मणस्पत्यम् । तथा चानुक्रान्तम्–'इन्धानः पञ्च जागतं तु' (KSA. 15.25.p.13.) इति लैङ्गिको विनियोगः Sy.

३. M. omits इन्धानः and अयं ।

४. पते M.

५. Omitted in M. यजमानम् Sy.

६. स्तोत्रहविषोः स्वीकरणेन सखायम् Sy.

७. कुरुते Sy.

८. समान एव भवतीत्यर्थः Sy.

९. ब्रह्मणस्पतेर्यागार्थमग्निम् प्रज्वलयन् यजमानः Sy. १०. वनुयात् हिंस्यात् Sy. 'वनुष्यतिर्हन्तिकर्मा' N.5.2

११. हिंसिष्यतो हिंसां कुर्वतो वा शत्रून् Sy.

१२. ब्रह्म स्तोत्रं कृतं येन स तथोक्तः Sy.

१३. शूशुवत्–'टुओश्वि गतिवृद्ध्योः' अस्माण्ण्यन्तात् लुङि चङि रूपम् Sy.

१४. रातं दत्तं हव्यं हविर्येन एवम्भूतः सन् Sy.

१५. पुत्रेण Sy.

१६. जातं जनितमुत्पादितं स्वस्य पौत्रम् Sy.

१७. अतीत्य भृशं प्रसरति । पौत्रमपि पश्यन् चिरकालं जीवेदित्यर्थः । ससृते–सर्तेर्यङ्लुगन्तात् व्यत्ययेनात्मनेपदम् Sy.

१८. M. omits the words between स्वेन and प्रति ।

१९. अतिसरस्वती M. अतिरसस्यति P.

**वीरेभिर्वीरान्वनवद्वनुष्यतो गोभी रयिं पप्रथद्बोधति त्मना ।**
**तोकं च तस्य तनयं च वर्धते यंयं युजं कृणुते ब्रह्मणस्पतिः ॥ २ ॥**

वीरेभिः । आत्मीयैर्वीरैः[1] । अन्यान् वीरान्[2] । हन्तुमिच्छतः[3] । हन्ति[4] । गोभिश्च[5] । धनम् । प्रथयति[6] । बुध्यते[7] च । आत्मना विधेयम् । तथा । पुत्रम्[8] । तस्य[9] पुत्रम्[10] । च[10] । वर्धयति[11] ।[12]

**सिन्धुर्न क्षोदः शिमीवाँ ऋघायतो वृषेव वध्रींरभि वष्ट्योजसा ।**
**अग्नेरिव प्रसितिर्नाह वर्तवे यंयं युजं कृणुते ब्रह्मणस्पतिः ॥ ३ ॥**

सिन्धुर्न[13] क्षोदः[14] । सिन्धुनदी[15] । इव[16] । उदकम्[17] । कर्मवान्[18] भूत्वा । हिंसकान्[19] शत्रुषु प्रहिणोति । तथा शत्रूनयमभिभवति[20] । यथा साण्ड[21] ऋषभः । छिन्नवृषणान्[22] । सोऽग्नेरिव ।

---

१. आत्मीयैः पुत्रैः Sy.
२. शत्रुपुत्रान् Sy.
३. हिंसतः Sy.
४. वनुयात् हिंस्यात् Sy.
५. गोभिः सहितम् Sy.
६. विस्तारयति । पप्रथत्–प्रथयतेर्लुङि चङि एतद्रूपम् Sy.
७. सर्वं जानाति । अनन्याधीनज्ञानो भवतीत्यर्थः Sy.
८. स्तोकं पुत्रः तनयं विभक्तिव्यत्ययः । तनयस्तत्पुत्रश्च । यद्वा तोकं तनयं पुत्रं पौत्रं च ब्रह्मणस्पतिर्वर्धयति Sy.
९. यजमानस्य Sy.
१०. Omitted by M.
११. प्रवृद्धो भवति यद्वा वृधिरन्तर्भावितण्यर्थो द्रष्टव्यः Sy.
१२. VM. ignores यंयम् । युजम् । कृणुते । ब्रह्मणः and पतिः ।
१३. ०र्न्न P.
१४. M. omits सिन्धुर्न क्षोदः ।
१५. Omitted in P. सिन्धुः स्यन्दनशीला नदी Sy.
१६. नव P. यथा Sy.
१७. उदक P. क्षुद्यमानं कूलं यथा भिनत्ति तथा Sy.
१८. भवान् M. ब्रह्मणस्पतेः परिचरणात्मना कर्मणा युक्तो यजमानः Sy. शिमीति कर्मनाम (Ngh. 2.1.)
१९. हिंसतः शत्रून् Sy.
२०. हन्तुमभितः कामयते । वष्टि–'वश कान्तौ' Sy.
२१. साण्ड M. यथा सेचनसमर्थः सवीर्यो वृषभोऽभिभवति तद्वच्छत्रूनभिभवतीत्यर्थः Sy.
२२. वध्रयो निष्पिष्टमुष्का निर्वीर्या बलीवर्दास्तान् Sy.

ज्वाला[1]बन्धः । न[2] । निवारयितुं[3] शक्यत इति[4] ।

तस्मा॑ अर्षन्ति दि॒व्या अ॑स॒श्चतः॑ स सत्व॑भिः प्रथ॒मो गोषु॑ गच्छति ।
अनि॑भृष्टतविषिर्हु॒न्त्योज॑सा॒ यंयं॒ यु॒जं॑ कृणु॒ते ब्रह्म॑ण॒स्पतिः॑ ॥ ४ ॥

तस्मा अर्षन्ति । तस्मै[5] । निपतन्ति[6] । दिव्या[7] आपः । सङ्गवर्जिताः[8] । सः[9] । आत्मीयैः परिचारकैः[10] सह । प्रथममेव[11] । गोषु[12] । गच्छति[13] । शत्रुभिरनपभ्रंशितबलः[14] । हन्ति तान्[15] । बलेन[16] ।

तस्मा॒ इद्विश्वे॑ धुनयन्त॒ सिन्ध॒वोऽच्छि॑द्रा॒ शर्म॑ दधिरे पु॒रूणि॑ ।
दे॒वानां॑ सु॒म्ने सु॒भगः॒ स एध॑ते॒ यंयं॒ यु॒जं॑ कृणु॒ते ब्रह्म॑ण॒स्पतिः॑ ॥ ५ ॥

तस्मा[17] इद्विश्वे[18] । तस्मै[19] । एव । सर्वे[20] । सिन्धवः[21] । स्यन्दन्ते[22] । तथा च्छिद्राणि[23] । बहूनि ।

---

१. प्रसीयते बध्यतेऽनयेति प्रसितिर्ज्वाला । 'षिञ् बन्धने' करणे क्तिन् । यथाग्नेर्ज्वाला प्रतिहतप्रसरा Sy.

२. नै P.

३. M. omits the words between ज्वाला and शक्यते ॥ निवर्तयितुं वा शक्यते । वर्तवे—वृणोतेरन्तर्भावितण्यर्थाद् वर्ततेर्वा तुमर्थे तवेन्प्रत्ययः Sy.

४. VM. ignores ओजसा । अह । यंयम् । युजम् । कृणुते । ब्रह्मणः and पतिः ॥ Sy. explains these words in the following manner :— ओजसा बलेन । अहशब्दोऽवधारणे । यंयमित्यादि व्याख्यातचरम् ।

५. यजमानाय Sy.

६. गच्छन्ति प्राप्नुवन्ति Sy.

७. दिवि भवा वृष्टिलक्षणा आपः Sy.

८. असज्यमाना अनिरुद्धाः सत्यः Sy.

९. यजमानः Sy.

१०. सत्वानः साधकाः परिचारकास्तैः सहितः Sy.

११. प्रथमोऽन्येभ्यो यजमानेभ्यः पूर्वभावी सन् Sy.

१२. गोष्ठे P.

१३. गवादिधनं प्राप्नोतीत्यर्थः Sy.

१४. अनिभृष्टा परैरबाधिता तविषी बलं यस्य तादृशः सन् Sy. तविषीति बलनाम (Ngh. 2.9.) ।

१५. M. omits भ्रंशितबलः । हन्ति and तान् ॥ शत्रून् Sy.

१६. VM. ignores यंयम् । युजम् । कृणुते । ब्रह्मणः and पतिः ।

१७. तस्मै M.

१८. P. omits विश्वे

१९. M. omits तस्मै ॥ यजमानाय Sy.

२०. सर्वाः Sy.

२१. स्यन्दनशीला नद्यः Sy.

२२. स्यन्दन P. चलयन्ति । एतदभीष्टफलसिद्ध्यर्थं प्रवहन्तीत्यर्थः Sy.

२३. अच्छिद्राणि छिद्ररहितानि सन्ततानि Sy.

गृहाणि[1] । तं धारयन्ति[2] । देवदत्ते[3] । सुखे[4] । सुधनः[5] । सः । वर्धते[6] ।

## II. 26.

ऋजुरिच्छंसो वनवद्वनुष्यतो देवयन्निददेवयन्तमभ्यसत् ।
सुप्रावीरिद्वनवत्पृत्सु दुष्टरं यज्वेदयज्योर्वि भजाति भोजनम् ॥ १ ॥

ऋजुरित्[7] । ऋजुः[8] । एव । देवानां स्तोमः[9] । हन्ति[10] । शत्रून्[11] । देवानिच्छन्[12] । एव । अदेवयन्तम्[13] । अभिभवति[14] । देवैः[15] सुष्ठु प्ररक्ष्यमाणः[16] । एव[17] । हन्ति[18] । युद्धेषु[19] । दुस्तरं[20] शत्रुम्[21] । यज्वा[22] । एव[17] । अयजमानस्य[23] । धनम्[24] । आदत्त[25] इति, तदिदं सर्वं ब्रह्मणस्पतिनेत्थं भवतीति

यजस्व वीर प्र विहि मनायतो भद्रं मनः कृणुष्व वृत्रतूर्ये ।
हविष्कृणुष्व सुभगो यथाससि ब्रह्मणस्पतेरव आ वृणीमहे ॥ २ ॥

यजस्व वीर[26] । युयुत्सो[27] ! ब्रह्मणस्पतिं यजस्व[28] । प्रगच्छानन्तरम्[29] । मन्यमानान्

---

१. शर्माणि सुखानि यद्वा सदनानि Sy. शर्मेति गृहनाम (Ngh. 3.4.)
२. धारयति M. तस्मा एव धार्यन्ते Sy.
३. देवैः प्रत्ते Sy.
४. सुवे M. सुखे वर्तमानः सन् Sy.
५. शोभनधनः Sy.
६. VM. ignores यंयम् । युजम् । कृणुते । ब्रह्मणः and पतिः ।
७. 'ऋजुः' इति चतुर्ऋचं चतुर्थं सूक्तं गृत्समदस्यार्षं जागतं ब्राह्मणस्पत्यम् । तथा चानुक्रान्तम्—'ऋजुश्चतुष्कम्' इति (KSA. 15.26, p. 13.) । गतो विनियोगः Sy. ८. आर्जवयुक्तः । यद्वा स्तोत्राणां प्रसाधकः Sy. ऋञ्जतिः प्रसाधनकर्मा N. 6.21.
९. ब्रह्मणस्पतेः स्तोता Sy.
१०. वनुयात् हिंस्यात् । वनोतेर्हन्तिकर्मण एतद्रूपम् Sy. ११. हिंसतः शत्रून् Sy.
१२. देवं दानादिगुणयुक्तं ब्रह्मणस्पतिमात्मन इच्छन् Sy.
१३. अनेवयन्तम् P. तद्-(देवयज्ञ-) विपरीतं पुरुषम् Sy.
१४. अभिभवेत् । अस्तेर्लेटि एतद्रूपम् Sy.
१५. M. omits the words between हन्ति and देवैः
१६. प्ररक्षमाणः M. सुप्रावीः—अवतेस्तृप्त्यर्थादौणादिक ईकारप्रत्ययः । सुष्ठु प्रकर्षेण ब्रह्मणस्पतेस्तर्पयिता Sy.
१७. ए P. १८. हिंस्यात् Sy.
१९. पृतनासु सङ्ग्रामेषु Sy.
२०. तरीतुमशक्यम् Sy. २१. शत्रु P.
२२. ब्रह्मणस्पतिं हविषा इष्टवान् Sy.
२३. यजमानस्य M. and P. अयज्वनः Sy.
२४. धनेम् P. भोगसाधनम् Sy.
२५. विशेषेण भजेतेत्यर्थः Sy.
२६. ऋषिरात्मीयं पुरुषं शास्ति Sy.
२७. हे वीर ! विशेषेण स्तुतीनां प्रेरक ! सखे ! Sy. २८. स्तुत्या पूजय Sy.
२९. प्रकर्षेण युद्धार्थं गच्छ । 'वी गत्यादिषु' । छान्दसो ह्रस्वः Sy.

शत्रून्[1]। गत्वा च भद्रम्[2]। मनः[3] इत्युक्तम्। कुरु[4]। युद्धे[5]। हविश्च[6]। देवेभ्यः[7] कुरु। यथा। सुधनः[8]। भवसि[9]। सर्वे[10] वयं तव ब्रह्मणः[11]। पतेः[12]। रक्षणम्। आवृणीमहे[13]।

**स इज्जनेन स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः।**
**देवानां यः पितरमाविवासति श्रद्धामना हविषा ब्रह्मणस्पतिम् ॥ ३ ॥**

**स इज्जनेन**[14]। सः[15]। एव। जनपदेन[16]। जनपदस्थैर्मनुष्यैश्च[17]। अन्नम्। धनानि च। बिभर्ति[18]। यथा सर्वेण जातेन रक्षणेन[19]। आत्मीयैः पुत्रैः[20]। दासैश्च[21] सह। यः[22]। देवानाम्।

---

१. M. omits the words between युयुत्सो and शत्रून्।
मन इव शीघ्रं प्रवर्तमानान् हिंसकान् यद्वा अभिमन्यमानान् शत्रून् प्रति Sy.

२. कल्याणम् Sy.

३. धाष्टर्योपेतं मनः Sy.

४. कुरुष्व। ब्रह्मणस्पतेरनुग्रहात्तवैव जयो भविष्यति Sy.

५. वृत्राणामावारकाणां शत्रूणां हिंसाहेतुभूते सङ्ग्रामे Sy.

६. हविश्वे P. तथा ब्रह्मणस्पतये चरुपुरोडाशादिकम् Sy.

७. देभ्यः P.
ब्रह्मणस्पतये Sy.

८. शोभनधनः Sy.

९. भवतीति P. भवेः। अस्तेर्लेटि अडागमः। ब्रह्मणस्पतेर्यागेन त्वं शोभनधनो भविष्यसीति यावत् Sy.

१०. सर्वा M. सर्वात्यं P.
अपि च वयम् Sy.

११. बृहः P.

१२. पते P.

१३. आणवृ॰ P. आ आभिमुख्येन वृणीमहे प्रार्थयामहे Sy.

१४. इज्जने P.

१५. स एव यजमानः Sy.

१६. जातेन सर्वेण लोकेन Sy. परिजनेन किङ्करादिना BB.

१७. M. omits the words between सः and मनुष्यै ॥ प्रजया Sy.
विड्भिरुपजीवनीभिः प्रजाभिः BB.

१८. दधाति BB. सम्भरति . . . सम्पादयति वा। ब्रह्मणस्पतिमिष्टवतो यजमानस्य सर्वतो जना अन्नधनयोः साधका भवन्तीति यावत् Sy.

१९. आत्मीयेन बन्धुजनेन Sy. जनोर्जन्म प्रभृति BB.

२०. आत्मीयैरपत्यैः Sy. पुत्रपौत्रादिभिरेतैस्सर्वैः सह BB.

२१. नेतृभिरन्यैः परिचारकैः Sy. अन्यैश्च बन्धुसुहृदादिभिः सह BB.

२२. यजमानः Sy.

पालयितारम्[1] । ब्रह्मणः । पतिम् । परिचरति[2] । श्रद्धानमनस्कः[3] । हविषेति[4][5] ।

**योऽअस्मै हृव्यैर्घृतवद्भिरविधत्प्र तं प्राचा नयति ब्रह्मणस्पतिः ।**
**उरुष्यतीमंहसो रक्षंती रिषोंऽहोश्चिदस्मा उरुचक्रिरद्भुतः ॥ ४ ॥**

यो अस्मै[6] । यः[7] । अस्मै[8] । हविर्भिः । घृतसहितैः[9] । परिचरति[10] । तम्[11] । असौ[12] देवः[13] । ऊर्ध्वम्[14] । नयति[15] । अप्रवृत्तश्च[16] । रक्षति[17] । एनम्[18] । तथा हिंसितुश्च[19] । रक्षति । आहन्तुः[20] । च । अस्मै[21] । बहुकरोति[22] । महानिति[23][24] ।

---

१. देवानां पितरं पातारम् BB.

२. विवासतिः परिचरणकर्मा Sy. आविवासतिः परिचरणकर्मा BB. विवासतिः परिचर्यायाम् N. 11.23.

३. श्रद्धामनस्कः is suggested for श्रद्धानमनस्कः ॥ श्रद्धा मनसि यस्य तादृशः सन् Sy. स एव दधातीति । इति? आह यः श्रद्धामनाः श्रद्धायुक्तमनाः BB.

४. M. omits words between पतिम् and ॰षेति ।
हविषा चरुपुरोडाशादिना Sy.
This stanza=TS. 2.3.14.3.

५. VM. explains सः once only.

६. या M.

७. यजमानः Sy.

८. M. omits यः and अस्मै ।
ब्रह्मणस्पतये । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वाच्चतुर्थी । इमं ब्रह्मणस्पतिम् Sy.

९. उपस्तरणाभिघारणात्मकेनाज्येनोपेतैः Sy.

१०. 'विध विधाने' तौदादिकः । अयं परिचरणकर्मसु पठितः Sy.

१२. सौ M. असो P.

१३. असौ देवः represents ब्रह्मणस्पतिः of the *mantra*.

१४. ऊर्ध्व P. ऊर्ध्वम् seems to be the explanation of प्र ॥ प्रकृष्टं फलम् Sy.

१५. नयन्ति M. नवदि P. प्रापयति Sy.

१६. अपर्त॰ M. आवर्त॰ P. अंहसः पापात् Sy.

१७. रति P. उरुष्यती रक्षाकर्मा N. 11.8.

१८. एन् P.

१९. हिंसकात् Sy.

२०. अप्रवृत्तेर्द्वारिद्रयात् । यद्वाऽऽगत्य हन्तुरपि रक्षति Sy.

२१. अपि च यजमानाय Sy.

२२. उरोर्विस्तीर्णस्योपकारस्य कर्ता भवति Sy.

२३. Words between आहन्तुश्च and ॰निति are omitted in M. महश्चामंतत् (Ngh. 3.3.) आश्चर्यभूतो महान् ब्रह्मणस्पतिः Sy.

२४. VM. ignores प्राचा ॥ प्राचा प्राचीनेन ऋजुना मार्गेण Sy.

११. त M. यजमानम् Sy.

## II. 27.

**इमा गिर आदित्येभ्यो घृतस्नूः सनाद्राजभ्यो जुह्वा जुहोमि ।**
**शृणोतु मित्रो अर्यमा भगो नस्तुविजातो वरुणो दक्षो अंशः ॥ १ ॥**

इमा[१] गिरः[२] ॥ कूर्मो[३] गार्त्समदः ॥ इमाः । स्तुतीः[४] । आदित्येभ्यः[५] । घृतप्रस्राविणीरिव[६,७] । स्वादुतया । सनातनेभ्यः[८] । राजभ्यः[९] । यथा जुह्वा[१०]ऽऽहुतीर्[११]जुहोत्येवम् । प्रब्रवीमि[१२] ।

---

१. 'इमा गिरः' इति सप्तदशर्चं पञ्चमं सूक्तं गृत्समदपुत्रस्य कूर्मस्यार्षं गृत्समदस्यैव वा, त्रैष्टुभमादित्यदेवताकम् । तथा चानुक्रान्तम्—'इमा गिरस्त्र्यूना कूर्मो गार्त्समदो हि वादित्यम्' (वादित्येभ्यः KSA. 15.27.p.13.) इति । सूक्तविनियोगो लैङ्गिकः । आदित्यदेवताके पशौ पुरोडाशस्य 'इमा गिरः' इत्येषानुवाक्या । 'अग्नीषोमौ' इति खण्डे सूत्रितम्—'इमा गिर आदित्येभ्यो घृतस्नूरुत आदित्यास उरवो गभीराः' (ASS. 3.8.) इति Sy. गृत्समदस्यार्षं तत्पुत्रस्य वा कूर्मस्य गार्त्समदस्य गृत्समदस्य वेदमार्षम् Dur.

२. M. omits इमा गिरः

३. गार्त्समदं M. गात्समदः P.

४. स्तुतिलक्षणा वाचः Sy. वाचः Mah., U. एतज्ज्ञात्वा इमाः स्तुतीः शृणोतु SKN. ताः पुनर्गिरोऽस्मदाशीर्युक्ताः Dur.　५. अदितेः पुत्रेभ्यः Sy.

६. प्रस्रविणीः P. घृतस्नूर्घृतप्रस्राविणीर्घृतं क्षरन्तीः Sy. किम्भूता गिरः ? . . . घृतं स्नुवन्ति स्रवन्ति ता घृतस्नवस्ता घृतस्नूः । दुगभाव आर्षः । घृतप्रसारिणीर्घृतहोमसहचरिता वा Mah. घृतप्रस्राविणीः U. 'स्नु प्रस्रवणे' घृतं स्नुवन्ति प्रस्रवन्ति सारयन्ति सम्भजन्ति वा यास्ता घृतप्रस्राविण्यः । काः पुनस्ताः ? सामर्थ्यादाहुतयः SKN. घृतमाहुतिलक्षणं याः प्रस्नुवन्ति प्रक्षरन्ति ता घृतस्नूः । अथवा घृतप्रस्राविण्यः । धात्वन्यत्वमर्थैकत्वम् । घृतसानिन्यो वा, घृतं देवान् प्रति सानयन्ति सम्भाजयन्तीति तथा । सनोतेः सम्भजनार्थस्य । घृतसारिण्यो वा, 'सृ गतौ' इत्यस्य । देवान् प्रति घृतं याः सारयन्ति गमयन्तीति Dur.

७. ०रितिव M.　८. सर्वदा Sy. चिरकालम् Mah., U. चिरपर्यायोऽयं चिरमित्यर्थः SKN. चिरन्तनेभ्यः अथवा सनादिति यावदायुषमनुत्सर्गेण Dur.

९. राजमानेभ्य ईश्वरेभ्यो वा मित्रादिभ्यः Sy. दीप्यमानेभ्यः Mah. चिरराजभ्यो वा U. आदित्यविशेषणमिदम् । दीप्यमानेभ्यः । चिरमिति जुह्वा जुहोमीत्यनेन सम्बध्यते । राजभ्य इत्यनेन वा । चिरं जुहोमि चिरं वा दीप्तेभ्यः इति SKN. सर्वलोकराजभ्यः Dur.

१०. जुह्वा वाङ्नामैतत् । वागिन्द्रियेण Sy. जुह्वा स्रुचा कृत्वा Mah. स्रुचा U. स्रुग्विशेषणम् SKN. जुहसञ्ज्ञकेन पात्रेण Dur.　११. ० हुति० P.

१२. जुहोमि प्रयच्छामि करोमीति यावत् । यद्वा जुहूस्थानीयेन घृतं क्षरन्ति वाग्रूपाणि हवींषि जुहोमि । आदित्यानुद्दिश्य त्यजामि । मन्त्राणां पयोघृतादिक्षरणहेतुत्वं च 'य ऋचोऽधीते पयसः कुल्या अस्य' (TA. 2.10.7.) इत्यादिना तैत्तिरीये स्पष्टमाम्नातम् Sy. स्तुतिलक्षणा वाणीर्बुद्धिरूपया स्रुचाऽऽदित्येभ्यः समर्पयामीत्यर्थः Mah.

ताश्चास्माकम्[1] । मित्रादयः[2] सप्तादितेः[3] पुत्राः[4] । शृण्वन्तु[5] । अन्वहं[6] जायमाना[7] बहुजनन इन्द्रो धाता । दक्ष[8] इति ।[9]

**इमं स्तोमं सक्रतवो मे अद्य मित्रो अर्यमा वरुणो जुषन्त ।**
**आदित्यासः शुचयो धारपूता अवृजिना अनवद्या अरिष्टाः ॥ २ ॥**

इमं[10] स्तोमम् । इमम् । स्तोमम्[11] । समानकर्माणः[12] । मे[13] । अद्य[14] । मित्रादयः । सेवन्ताम्[15] ।

---

१. नोऽस्मदीयास्ता गिरः Sy.
२. M. omits words between ०त्येवम् and मित्रादयः
मित्रः प्रमीतेस्त्रायकः । यद्वा सर्वेषां स्निग्धः Sy.
३. सप्तदितेः P. ते च तैत्तिरीये 'अष्टौ पुत्रासो अदितेः' इत्युपक्रम्य स्पष्टमनुक्रान्ताः—'मित्रश्च वरुणश्च धाता चार्यमा च अंशुश्च भगश्च इन्द्रश्च विवस्वांश्चेत्येते' (TA. 1.13.3.) Sy.
४. पुत्रा इति M.
५. मित्रादयः प्रत्येकं शृणोतु Sy. ताः स्रुचा हूयमाना नोऽस्माकं गिरः शृणोतु Mah., U. तत्समर्द्धनाय शृणोतु Dur.
६. अन्वप P.
७. ज्ञायत्मायमाने P. जायमाने M. It seems to be the explanation of तुविजातः ।
तुवीति बहुनाम (Ngh. 3.1.) बहुषु देशेष्वनुग्रहार्थं प्रादुर्भूतः । वरुणविशेषणमेतत् Sy. तुविजातो बहुजातस्त्वष्टा वातो वा । स हि बहुशः प्रजायते Mah. तुविजातश्च धाता च U. नोऽस्माकं स्वभूताः । तुविजातस्तुवि जातं प्रभूतं जातं यस्य सः । बहुजातो बहुप्रज इत्यर्थः । के ते? सामर्थ्याद् धाता वरुणो दक्षोंऽशश्च SKN. तुवीति बहुनाम (Ngh. 3.1.) सर्वविधातृत्वाद् बहुजन्मा धाता यावदधिकारं जन्मेति Dur.
८. दक्षः समर्थः । एतच्चांशस्य विशेषणम् । एते प्रत्येकं शृण्वन्तु Sy.
९. VM. ignores अर्यमा । भगः । वरुणः and अंशः ॥ अरीन् यच्छति नियच्छतीत्यर्यमा । भगो भजनीयो देवः । पापस्य निवारणाद्वरुणः Sy. वरुणो दक्षोंऽशश्च । एते सूर्यविशेषाः Mah. घृतस्नूर्घृतप्रस्नाविन्यः । घृतप्रस्राविण्यः । [ घृतसानिन्यः । घृतसारिण्यः ] इति वा । आहुतीरादित्येभ्यश्चिरं जुह्वा जुहोमि । [ चिरं जीवनाय । ] चिरं राजभ्य इति वा । शृणोतु न इमा गिरः । मित्रश्चार्यमा च भगश्च बहुजातश्च धाता दक्षो वरुणोंऽशश्च । अंशोऽशुना व्याख्यातः N. 12. 36.; SKN. IV. 134. This stanza=YV.34.54.
१०. पूर्वोक्त एव पशौ 'इमं स्तोमम्' इत्येषा वपाया याज्या । सूत्रितञ्च—'इमं स्तोमं सक्रतवो मे अद्य तिस्रो भूमीर्धारयन् त्रींरुत द्यून्' (ASS. 3.8.) इति Sy.
११. स्तोत्रम् Sy.
१२. ०कर्मण M. and P. समानकर्माणः, समानप्रज्ञा वा Sy.
१३. अस्मदीयम् Sy.
१४. इदानीम् Sy.
१५. सचरन्तां P. जुषन्ताम् Sy.

आदित्याः[1] । निर्मलाः[2] । पूतसोमधाराः[3] । अच्छोदकाः[4] । अवद्यरहिताः[5] । अहिंसिताः[6] ।[7]

**त आ॒दि॒त्यास॑ उ॒रवो॑ गभी॒रा अद॑ब्धासो॒ दिप्स॑न्तो भूर्य॒क्षाः ।**
**अ॒न्तः प॑श्यन्ति वृजि॒नोत सा॒धु सर्वं॒ राज॑भ्यः पर॒मा चि॒दन्ति॑ ॥ ३ ॥**

[8]ते[9] आदित्यासः[10] । ते[11] । आदित्याः[12] । बृहच्छरीराः[13] । गम्भीराः[14] । अहिंसिताः[15] । शत्रून् हिंसितुमिच्छन्तः[16] । बहुदर्शनाः[17] । ते[18] मनुष्याणाम्[19]अन्तः[20] स्थित्वा । पापानि[21] । साधूनि[22] । च[23] । पश्यन्ति[24] । सर्वम्[25] । एषाम्[26] । अपि । दूरस्थानि[27] । अन्तिके[28] भवन्ति तत्र तत्र सद्भावात्[29] ।

---

१. कीदृशास्ते ? अदितेः पुत्राः Sy.
२. M. omits words between अद्य and निर्मलाः ॥ दीप्यमानाः Sy.
३. उदकधाराभिरिव पूताः, निर्मला इत्यर्थः Sy.
४. आच्छोदकाः M. 'वृजी वर्जने' । अवर्जितारः । सर्वानुग्राहका इत्यर्थः Sy.
५. अवद्येन गर्ह्येण पापेन रहिताः Sy.
६. केनाप्यहिंसिताः Sy.
७. VM. ignores अर्यमा and वरुणः ।
८. तस्मिन्नेव पशौ 'त आदित्यासः' इति हविषोऽनुवाक्या । सूत्रं तु पूर्वमेवोदाहृतम् Sy.
९. Omitted in M. and P.
१०. Omitted in M.
११. Omitted in P.
१२. अदितेः पुत्राः Sy.
१३. महान्तः Sy.
१४. गाम्भीर्योपेताः Sy.
१५. शत्रुभिरहिंसिताः सन्तः Sy.
१६. दम्भितुं हिंसितुमिच्छन्तः । 'दम्भु दम्भे' अस्मादिच्छासनि 'सनीवन्तर्ध०' (Pa.7.2.49.) इतीडभावपक्षे 'दम्भ इच्च' (Pa.7.4.56.) इतीकारः । 'दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् सिद्धम्' (Vārtika on Pa. 1.2.10. Kielhorn's ed. I. 197.) इति सनः कित्वेऽनुनासिकलोपः Sy.
१७. भूरीणि बहून्यक्षीणि चक्षूंषि येषां ते तथोक्ताः । बहुतेजसो वा । 'बहुव्रीहौ सक्थ्यक्ष्णोः०' (Pa. 5.4.113.) इति षच्समासान्तः Sy.
१८. तमेननुष्यम० P.
१९. M. omits words between हिंसितुमि and मनुष्याणाम् ।
२०. एवम्भूता आदित्या अन्तर्मध्ये प्राणिनां हृदि प्रेरकतया वर्तमानाः सन्तः Sy.
२१. बाधानि M. पपानि P.
२२. पुण्यानि च प्राणिभिः कृतानि Sy.
२३. व P. अपि च Sy.
२४. जानन्ति Sy.
२५. सर्वाणि दृश्यमानानि Sy.
२६. This is the explanation of राजभ्यः ।
राज्ञामीश्वराणामादित्यानाम् Sy.
२७. परमाणि दूरदेशावस्थितान्यपि Sy.
२८. अन्ति अन्तिके समीपे वर्तत इति शेषः । 'कादिलोपः' । (Cf. Vārtika 8 on Pa. 6.4.149. Kielhorn's ed. III. 224.) बहुलमित्यन्तिकशब्दस्य कादिलोपः Sy.
२९. सम्भवान् P.

धा॒रय॑न्त आ॒दि॒त्यासो॑ जग॒त्स्था दे॒वा विश्व॑स्य॒ भुव॑नस्य गो॒पाः ।
दी॒र्घाधि॑यो॒ रक्ष॑माणा असु॒र्य॑मृ॒तावा॑न॒श्चय॑माना ऋ॒णानि॑ ॥ ४ ॥

[1] धारयन्तः [2] । धारयन्तः [3] । आदित्याः । जङ्गमम् । स्थावरं [4] च । देवाः [5] । विश्वस्य [6] । भुवनस्य [7] । गोपायितारः [8] । दीर्घकर्माणः [9] । रक्षमाणाः [10] । असुराणां स्वभूतं बलम् [11] । यज्ञियाः [12] । मनुष्याणामृणानि [13] । चायमानाः [14] ।

---

१. साग्निचित्ये क्रतौ दीक्षणीयायामादित्ययागस्य 'धारयन्तः' इत्यादिके द्वे याज्यानुवाक्ये । अत एव भुवद्वद्भुवनपतिविशेषणविशिष्टादित्ययागेऽपि । तथा च 'दीक्षणीयायाम्' इति खण्डे सूत्रितम्—'धारयन्त आदित्यासो जगत्स्था इति द्वे एते एव भुवद्वद्भ्यो भुवनपतिभ्यो वा (ASS. 4.2.) इति Sy.

२. धारयः P.

३. अवस्थापयन्तः Sy. स्थापयन्तः BB.

४. तिष्ठतेः कर्तरि असुन् । एतदुभयविधं भूतजातम् Sy. स्थास्नवः । 'क्विप् च' (Pa. 3.2. 76.) इति क्विप् BB.

५. दानादिगुणयुक्ताः Sy. देवनशीलाः BB.

६. सर्वस्य Sy.

७. M. omits words between जङ्ग॰ and भुवनस्य ।
लोकस्य Sy. भूतजातस्य BB.

८. Omitted in P. रक्षकाः Sy. पोषकाः BB.

९. दीर्घाणि धियः कर्माणि ज्ञानानि वा येषां तादृशाः । 'अन्येषामपि दृश्यते' (Pa. 6.3. 137.) इति पूर्वपदस्य दीर्घः Sy. दीर्घाण्यविच्छिन्नानि धियः कर्माणि, उदयास्तमयलक्षणानि, बुद्धयो वा येषां ते दीर्घाधियः । छान्दसं पूर्वपदस्य दीर्घत्वम् BB.

१०. तत्तत्काले वृष्ट्युत्पादनाय रक्षन्तः Sy., BB.

११. असवः प्राणाः । तेन च तद्धेतुभूता आपो लक्ष्यन्ते । अपां तद्धेतुत्वं च छान्दोग्ये स्पष्टमाम्नातम् 'आपोमयः प्राणः' (Chh. U. 6.5.4.) इति । असुमुदकं ददातीत्यसुरो मेघः । तत्र भवं मेघान्तर्वर्तमानमुदकम् । असुरशब्दात् 'भवे छन्दसि' (Pa. 4.4. 110.) इति यत् । Sy. असुर्यम्, असुरमर्हतीति । 'छन्दसि च' (Pa. 5.1. 67.) इति यत् । असुरस्थानीयमुदकं ददातीत्यसुरो मेघः । तेन धार्यमुदकम् BB.

१२. ऋतावानः सत्यवन्तो यज्ञवन्तो वा । 'छन्दसीवनिपौ॰' (Vārtika on Pa. 5.2. 109.) इति मत्वर्थीयो वनिप् । पूर्ववद्दीर्घः Sy.

१३. मनुष्याणानि M. स्तोतृभिरन्येभ्यः प्रदेयानि Sy. ऋणानि दिव्यानि मानुषाणि; वृष्ट्या हि सस्योत्पत्तौ यजमानस्य सर्वाण्यृणान्यपाक्रियन्त इति । क्रियापदाभावाद्योग्यं पदमध्याह्रियते । ईदृशा आदित्या इमं यजमानमनपर्द्धं कुर्वन्त्विति BB.

१४. चातयमान M. चायमाणाः D. अपगमयन्तः । 'चय गतौ' । भौवादिकोऽनुदात्तेत् । एवंगुणविशिष्टा महानुभावा अस्मदधीना भवन्त्विति शेषः Sy. चायन्तो गमयन्तः । 'चय गतौ' अनुदात्तेद् भौवादिकः BB.

This stanza=TS. 2.1.11.4.

विद्यामादित्या अवसो वो अस्य यदर्यमन्भय आ चिन्मयोभु ।
युष्माकं मित्रावरुणा प्रणीतौ परि श्वभ्रेव दुरितानि वृज्याम् ॥ ५ ॥

विद्यामादित्याः[1]। हे[2] आदित्याः! युष्मदीयम्[3]। रक्षणम्[4]। अहं[5] लभेय[6]। अर्यमन्[7]! यत्[8]। मनुष्यस्य[9]। भये[10] सति। यद् रक्षणमागत्य[11]। सुखं भावयति[12]। हे मित्रावरुणौ! अहमादित्यानां[13] प्रणयने। परिवर्जयामि[14]। अवटानीव[15]। दुरितानि[16]।[17]

सुगो हि वो अर्यमन्मित्र पन्था अनृक्षरो वरुण साधुरस्ति ।
तेनादित्या अधि वोचता नो यच्छता नो दुष्परिहन्तु शर्म ॥ ६ ॥

सुगो हि वः[18]। हे अर्यमन्[19]! मित्र[20]! वरुण! सुगमः[21]। कण्टकवर्जितश्च[22]। पन्थाः[23]। युष्माकम्। अस्ति[24]। हि[25]। तेनास्मान्[26] प्रणयत[27]। अस्माकम्। अधिवचनं[28] कुरुत। यच्छत[29]

१. Omitted in M.
२. हे अदितेः पुत्राः! Sy.
३. युष्माकम् Sy.
४. रक्षम् P.
५. अयं P.
६. भेय M. लंभय P.
७. अय्यमन् P.
८. युष्मदीयं रक्षणम् Sy.
९. This seems to be the interpretation of अस्य ॥ Sy. takes अस्य=इदं qualifying अवसः (रक्षणम्) कर्मणि षष्ठी ।
१०. भये राक्षसादिभ्य आगते सति Sy.
११. ०मादित्य P.
१२. भवायति P. मयसः सुखस्य भावयितृ च तदिदं लभेयेत्यन्वयः Sy.
१३. ०दित्याना M. अहान्तं P. अस्मद्विषये प्रकृष्टे नयने सति Sy.
१४. वर्जयापि P. परित्यजेयम्। 'वृजी वर्जने'। 'बहुलं छन्दसि' (Pa. 2.4.73.) विकरणस्य लुक् Sy.
१५. अवरानीव P. श्वभ्राणीव स्वातुमयोग्यानि गर्तवन्ति स्थलानीव Sy.
१६. M. omits words between प्रणयने and दुरितानि। पापानि Sy.
१७. VM. ignores चित् and युष्माकम् ॥ चिच्छब्दश्चार्थे Sy.
१८. M. omits सुगो हि वः ।
१९. अर्यम P.
२०. मित्रा M.
२१. सुखेन गन्तव्यः Sy.
२२. ऋक्षरः कण्टकः, ऋच्छतेः N. 9.32.
२३. मार्गः Sy.
२४. विद्यते Sy.  २५. खलु Sy.
२६. तेन तान् P. अतस्तेन पथास्मान् Sy.
२७. प्रणयन्तः M. and P. शोभनं नयतेति शेषः Sy.
२८. पक्षपातेन वचनं कुरुत Sy.
२९. दत्त। 'दाण् दाने' अपि 'पाघ्रा०' (Pa. 7.3.78.) इत्यादिना यच्छादेशः Sy.

च । अस्मभ्यम् । शत्रुभिर्दुष्परिहणनम्[१] । सुखम्[२] ।[३]

पिपर्तु नो अदिती राजपुत्राति द्वेषांस्यर्यमा सुगेभिः ।
बृहन्मित्रस्य वरुणस्य शर्मोप स्याम पुरुवीरा अरिष्टाः ॥ ७ ॥

पिपर्तु नः[४] । राजानः पुत्रा यस्याः सा[५] । अदितिः[६] । अस्मान् । अतिपारयतु[७] । सुगमैर्मार्गैः[८] । शत्रून्[९] । अर्यमा च । मित्रावरुणयोः । महत्[१०] । शर्म[११] । वयमुपस्याम[१२] । बहुपुत्राः[१३] । अहिंसिताः[१४] ।

तिस्रो भूमीर्धारयन् त्रीँरुत द्यून्त्रीणि व्रता विदथे अन्तरेषाम् ।
ऋतेनादित्या महि वो महित्वं तदर्यमन्वरुण मित्र चारु ॥ ८ ॥

[१५]तिस्रो भूमीः । महत्त्वाल्लोका भूमय उच्यन्ते, दीप्तत्वाद्[१६] दिवः[१७], तिस्र[१८] एव[१९] । वः[२०] भूमयः[२१]

---

१. ०हननं P. परिहन्तुं विनाशयितुमशक्यम् Sy.
२. M. omits words between च and सुखम् ।
३. VM. ignores साधुः and आदित्याः ।
साधुः साधकः शोभनो वा । एवंगुणविशिष्टः Sy.
४. M. omits पिपर्तु नः ।
५. राजानो राजमाना मित्रादयः पुत्रा यस्यास्तादृशी Sy.
६. अदितिरदीना अखण्डनीया वा देवी Sy.
७. अतिपरत P. अतिक्रम्य तद्रहितं देशं प्रापयत्वित्यर्थः Sy.
८. सुष्ठु गन्तव्यैर्मार्गैरस्मान् पारयतु Sy.
९. द्वेष्टॄणि रक्षांसि Sy.
१०. परिवृढम् Sy.
११. सुखम् Sy.
रिक्षद्युलोकान्वा । ये इत्यध्याह्रियते BB.
१२. उपगता भवेम Sy.
१३. अपि च वयं बहुभिर्वीरैः पुत्रादिभिरुपेताः Sy.
१४. केनाप्यहिंसिताश्च सन्तः Sy.
१५. पूर्वोक्ते पशौ 'तिस्रो भूमीः' इति पुरोडाशस्य याज्या । सूत्रं पूर्वमेवोदाहृतम् Sy. १६. दीप्तत्वा P.
१७. दिव P.
१८. रस्तिस्र P. M. omits words between महत्त्वा and तिस्रः ।
१९. व M.
२०. पा M. व P.
२१. तिस्रो भूमीः । अत्र भूमिशब्दो लोकत्र वर्तते । 'यो द्वितीयस्यां तृतीयस्यां पृथिव्याम्' इत्यत्र यथा पृथिवीशब्दः । भूम्यन्तरिक्षस्वर्गांस्त्रीन् लोकान् Sy. पृथिवीपातालनागलोकान् पृथिव्यन्त-

सन्ति । दिवः । च । 'तिस्रो द्यावः सवितुः' इति मन्त्रः । त्रीणि च । यज्ञे । अन्तः । एषाम् । व्रतानि, इति सवनाभिप्रायम् । सत्येनैव । महत् । आदित्याः । भवताम् । महत्त्वम् । तत् । कल्याणं चेति ।

त्री रो॑च॒ना दि॒व्या धा॑रयन्त हिर॒ण्यया॒ः शुच॑यो॒ धार॑पूताः ।
अस्व॑प्नजो अनिमि॒षा अद॑ब्धा उरु॒शंसा॑ ऋ॒जवे॒ मर्त्या॑य ॥ ९ ॥

त्री रोचना । दिव्यानि । त्रीणि । रोचनानि लोकान् । इमे धारयन्ति । हिरण्मय-

---

१. दीप्तान् तत उपरितनान् महरादिकानपि लोकान् धारयन्ति । यद्वा दीप्तान् अग्निं वायुं सूर्यं च धारयन्ति Sy. द्यून् दिवः परान् द्युतिमतो लोकान् BB.

२. अपि च Sy.

३. RV. I. 36.6.[a]

४. सवनत्रयनिष्पाद्यानि त्रीणि Sy.

५. निमित्तभूते Sy. यज्ञे यज्ञार्थम्, उपलक्षणत्वात् सर्वव्यापारार्थम् BB.

६. मध्ये Sy., BB.

७. आदित्यानां यद्वा लोकानाम् Sy. लोकानाम् BB.

८. कर्माणि सन्ति । यद्वा एषां लोकानामन्तर्मध्ये विदथे यज्ञे निमित्तभूते सति एषामादित्यानां त्रीणि कर्माणि रसादानधारणविसर्जनरूपाणि सन्ति Sy. त्रीणि व्रतानि कर्माणि लोकत्रयगोचराणि त्रीणि व्रतानि सर्वलोकधारणार्थानि रसादानधारणमध्यस्थानायनलक्षणानि च कर्माणि ये धारयन्त्यादित्याः BB.

९. उत्तरोऽर्धर्चः प्रत्यक्षकृतः । . . . यज्ञेन वा Sy. सत्येन, नात्र कार्या विचारणेति BB.

१०. महवत् P. प्रभूतम् Sy.

११. इत्थं कुर्वन्त्येत आदित्याः । यद्वा धारयन्तीति वचनव्यत्ययेनैकवचनम् । हे धारयन्त आदित्याः ! किं ? तिस्रो भूमीस्त्रींश्च द्यून् येषां च मध्ये त्रीणि व्रतानि यज्ञार्थं धारयन्तः BB.

१२. युष्माकम् Sy., BB.

१३. महाभाग्यम् Sy. माहात्म्यम् BB.

१४. महाभाग्यम् Sy. तादृशं यथोक्तलक्षणम् BB.

१५. कवा M. शोभनं सर्वोत्कृष्टमित्यर्थः । Sy. चारु शोभनं चायनीयं वा BB.

१६. Omitted in M.

१७. VM. ignores धारयन् । अर्यमन् । वरुण and मित्र ।
धारयन् वृष्टिप्रदानादिना धारयन्ति । हे अर्यमन् ! वरुण ! मित्र ! Sy. धारयन्ति धारयतेश्छान्दसो लङ् । इदानीमादित्यानेकैकत्वेनामन्त्रयते—अर्यमन् वरुण मित्रेति । प्रदर्शनं चैतदन्येषामपि BB.
This Stanza=TS. 2. 1. 11. 5.

१८. त्रि P.

१९. M. omits रोचना । दिवि भवानि Sy. २०. त्री M.

२१. रोचमानान्यग्न्यादीनि तेजांसि Sy.

२२. Omitted in M.

२३. मे M. आदित्या अवास्थापयन् Sy.

शरीराः[1] । निर्मलाः[2] । धाराभिरिव[3] पूताः । जाग्रतः[4] । निमेषवर्जिताः[5] । अहिंसिताः[6] । साधवे[7] । यजमानाय[8] । बहुशंसनाः[9] ।

त्वं विश्वे॑षां वरुणासि॒ राजा॒ ये च॑ दे॒वा अ॑सुर॒ ये च॒ मर्ताः॑ ।
श॒तं नो॑ रास्व श॒रदो॑ वि॒चक्षे॒ऽश्यामायूं॑षि॒ सुधि॑तानि॒ पूर्वा॑ ॥ १० ॥

त्वं विश्वेषाम् । उभयेषाम्[10] । वरुण[11] ! देवानाम्[12] । मानुषीणाम्[13] । च[14] विशाम् । राजा[15] बलवान् । स त्वम्[16] । अस्माकम्[17] । शतम्[18] । शरदः[19] । विदर्शनाय[20] । देहि[21] । अश्याम[22] । अन्नानि[23] । त्वयि सुनिहितानि[24] । पूर्वाणि[25] ।[26]

---

१. कीदृशा आदित्याः ? हिरण्यालङ्कृतसर्वाङ्गाः, यद्वा हितरमणीयवेषाः Sy.

२. निर्मलां P.
दीप्यमानाः Sy.

३. गारा० P. उदकधारया क्षालिता इव निर्मलाः Sy.

४. जग्रतो ग्रतः P. असञ्जातस्वप्नाः । 'सुपां सुलुक्०' (Pa. 7.1.39.) इति जसः सुः । अस्वपन्तो विगतनिद्राः । 'स्वपितृषोर्नजिङ्' (Pa. 3.2.172.) इति नजिङ्प्रत्यय इति । तदेतत्पदकारस्यानभिमतम् Sy.

५. निमेषरहिताः Sy.

६. असुरादिभिरहिंसिताः Sy.

७. साधवो P.
ऋजीकाय स्तोत्राणाम् Sy.

८. मनुष्याय भोगसिद्ध्यर्थमिति यावत् Sy.

९. उरुभिर्बहुभिः शंसनीयाः स्तोतव्याः एवङ्गुणविशिष्टा अधारयन्तेत्यन्वयः Sy.

१०. सर्वेषाम् Sy.

११. वरुणः P.

१२. ये च देवा देवजनाः Sy.

१३. मर्ता मरणधर्माणो मनुष्याः । तेषामित्यर्थः Sy.

१४. M. omits words between उभये and च

१५. राजा असि । केषाम् ? Sy.

१६. अतस्त्वम् Sy.

१७. अस्मभ्यम् Sy.

१८. शतसंख्याकान् Sy.

१९. संवत्सरान् Sy.

२०. पिदर्श० P.
विशेषेण दर्शनाय Sy.

२१. प्रयच्छ । 'रा दाने' व्यत्ययेनात्मनेपदम् Sy.

२२. व्याप्नुयाम Sy.

२३. शतसंवत्सरलक्षणान्यायूंषि Sy.

२४. सुष्ठु हितानि । 'सुधितवसुधितनेमधितधिष्वधिषीय च' (Pa. 7.4.45.) इति निपात्यते । 'गतिरनन्तरः' (Pa. 6.2.49.) इति गतेः प्रकृतिस्वरत्वम् Sy.

२५. वयस्व पूर्वैर्देवैः । 'सुपां सुलुक्०' (Pa. 7.1.39.) इति तृतीयाया डादेशः Sy.

२६. VM. ignores असि । ये । असुर । ये and च ।
हे असुर ! शत्रूणां क्षेपक ! Sy.

**न दक्षिणा वि चिकिते न सव्या न प्राचीनमादित्या नोत पश्चा ।**
**पाक्या चिद्वसवो धीर्या चिद्युष्मानीतो अभयं ज्योतिरश्याम् ॥ ११ ॥**

[1]न दक्षिणा । रात्रावन्धकारसद्भावात्[2] । चतसृष्वपि दिक्षु । किञ्चिदपि ज्ञायते[3] । तथा सति[4] पक्तव्योऽप्राज्ञः[5] । धीरः[6] । वाऽहम् । युष्माभिः प्रणीतः[7] । अभयम्[8] । तेजः[9] । अश्याम्[10] । हे वासयितारः[11] ![12]

---

१. आदित्यदेवताके पशौ 'न दक्षिणा' इत्येषा हविषो याज्या । 'तिस्रो भूमीर्धारयन् त्रीरुत द्यून् न दक्षिणा वि चिकिते न सव्या' (ASS. 3.8.) इति Sy.

२. ०रः सद्भा० M. ०रसंभ० P.

३. मया न विज्ञायते Sy. किततेश्छान्दसो लिट् BB. ४. M. omits words between चतसृष्वपि and सति ॥ यस्मादेवं तस्मात् BB.

५. वक्त M. and P. अपरिपक्वज्ञानोऽपि । 'डुपचष् पाके' । 'ऋहलोर्ण्यत्' (Pa. 3.1.124.) 'तित्स्वरितम्' (Pa. 6.1.185.) Sy. अहं पाक्या चित् पाकयितव्यः । अपरिपक्वः पाक्यो बालः BB.

६. धीरे नेतव्यत्वेन भवो धीर्यः कातरः, कातरोऽपि । 'भवे छन्दसि' (Pa. 4.4.110) इति यत् । उभयत्र 'सुपां सुलुक्०' (Pa. 7.1.39.) इत्याकारः Sy. धीरयितव्यः, धीर्यः कातर इति । 'तत्करोति०' (Gaṇasūtra on Pa. 3.1.26.) इति णिजन्ताण्ण्यत् । पूर्ववदाकारः । यथा बालाः कातराश्च स्वयं किञ्चिद्धिताहितमजानन्तोऽन्यैर्हिताहितकारिभिर्दैवेन वा नीयमाना भवन्ति BB.

७. शोभनेन मार्गेण प्रापितः सन् Sy. एवमहमपि युष्माभिर्नीतो युष्माभिस्-समिद्धते ? (युष्माभिरस्मद्धिते) पथि प्रवर्तमानः । वर्णविकारश्छान्दसः BB.

८. भयरहितम् Sy. ९. सौरं तेजः, आन्तरं वा ज्ञानात्मकम् Sy. ज्योतिर्ज्ञानम् BB.

१०. अग्न्या M. अश्यं P. प्राप्नुयाम् Sy. प्राप्नुयाम् ।...यद्वा युष्मत्प्रसादेनाभयम्, अपुनरावृत्तिभयं परं ज्योतिरश्याम् BB.

११. Omitted in M. वासहेतवः Sy.

१२. VM. ignores दक्षिणा । वि । न । सव्या । न । प्राचीनम् । आदित्याः । न । उत । पश्चा and चित् । These words are explained in this manner—हे आदित्याः ! दक्षिणा दक्षिणो भागः । सव्यो वामभागोऽपि न ज्ञायते । उभयत्र 'सुपां सुलुक्०' (Pa. 7.1.39.) इति सोराजादेशः । प्राचीनं पुरस्तादपि न ज्ञायते 'विभाषाञ्चेरदिक्स्त्रियाम्' (Pa. 5.4.8.) इति स्वार्थे खः । उत अपि च पश्चा पश्चात् पृष्ठभागेऽपि न ज्ञायते । नैशेन तमसावृतत्वादान्तरावज्ञानात् । 'पश्च पश्चा च छन्दसि' (Pa. 5.3.33.) इति निपात्यते Sy. ॥ दक्षिणा दक्षिणं, सव्या सव्यम्, ...दक्षिणं सव्यं च न विचिकिते न विजानामि विशेषेण न जानामि । दक्षिणसव्यविभागज्ञानमपि मे नास्तीत्यर्थः । हे आदित्याः ! प्राचीनं प्राक् पश्चा पश्चात्...प्राक् पश्चाच्च न विचिकित इति । प्राक्प्रत्यग्विभागज्ञानमपि मे नास्तीति BB.

This stanza=TS. 2.1.11.5.

उत्तरा निगदव्याख्याता ।

यो राजभ्य ऋतनिभ्यो ददाश यं वर्धयन्ति पुष्टयश्च नित्याः ।
स रेवान्याति प्रथमो रथेन वसुदावा विदथेषु प्रशस्तः ॥ १२ ॥

[यो राजभ्यः ।][1]

शुचिरपः सूयवसा अदब्ध उप क्षेति वृद्धवयाः सुवीरः ।
नकिष्टं घ्नन्त्यन्तितो न दूराद्य आदित्यानां भवति प्रणीतौ ॥ १३ ॥

शुचिरपः ।[2] शुचिः[3] शोचतेर्दीप्ति[4]कर्मणः । उदकानि[5] । सुसस्यानि[6] । अहिंसितः[7] । उपनिवसति[8] । प्रवृद्धान्नः[9] । सुपुत्रः[10] । तम् । न केचन[11] । घ्नन्ति[12] । समीपात्[13] । दूराद्[14] वोत्थाय ।

---

१. The *Pratika* within brackets is supplied by the Editor. Sy. explains this mantra in the following manner:—यः यजमानः । राजभ्यः राजमानेभ्यः । ऋतनिभ्यः ऋतस्य यज्ञस्य सत्यस्य वा नेतृभ्यः आदित्येभ्यः । ददाश चरुपुरोडाशादिकं ददाति । यं यजमानम् । पुष्टयः पोषकाः । नित्याः शाश्वता आदित्याश्च वर्धयन्ति । सः यजमानः । रेवान् धनवान् । प्रथमः प्रथितः प्रख्यातः । वसुदावा वसूनां धनानां दाता सन् । प्रशस्तः सर्वैः प्रशस्यमानः । विदथेषु वेद्येषु लब्धव्येषु गृहेषु । रथेन वाहनेन । याति गच्छति ।

२. स यजमानः Sy.

३. N. 6.1. reads शुचिः शोचतेर्ज्वलतिकर्मणः ॥ दीप्यमानः शुद्धो वा Sy. शुचिः शुद्धो भूत्वा BB.

४. दीप्ते० M.

५. वृष्टिलक्षणानि Sy. कर्माणि कर्मफलानि वा BB.

६. सुसह्य P. शोभनसस्यानि Sy. शोभनयवसाः शोभनांशुकाः BB.

७. हिंसितु P. सपत्नैरबाधितः Sy. केनचिदप्यहिंसितः BB.

८. M. omits words between ०कर्मणः and निवसति ।
सर्वदा सुसस्यानामपां समीपे निवसतीत्यर्थः Sy. उपगच्छति । 'क्षि निवासगत्योः' BB.

९. ०द्धान्न P. प्रभूतान्नः Sy. प्रभूतान्नतमः BB.

१०. शोभनपुत्रश्च सन् Sy. शोभनपुत्रपौत्रादिकः BB.

११. तेचन M.
केचिदपि BB.

१२. हिंसन्ति Sy.
हन्तुं समर्था भवन्ति BB.

१३. समीपा M. अन्तिकात्समीपदेशाच्च । 'अन्तिकस्य तसि कादिलोपः' (Vārtika on Pa. 6.4.149. Kielhorn's ed. III. 224.) इति लोपः Sy.
अन्तिकेऽपि स्थिताः BB.

१४. विप्रकृष्टाच्च देशादागता बाधकाः Sy.
न च दूराद् दूरेऽपि स्थिताः BB.

यः[1]। आदित्यानाम्[2]। भवति[3]। प्रणयने[4]।[5]

अदिते मित्र वरुणोत मृळ यद्वो वयं चकृमा कच्चिदागः ।
उर्वश्यामभयं ज्योतिरिन्द्र मा नो दीर्घा अभि नशन्तमिस्राः ॥ १४ ॥

अदिते[6]। अदिते ! मित्र ! अपि च । वरुण[7]! दयां कुरु[8]। यत्[9]। किम् । चित् । वः[10]। वयम् । आगः[11]। कृतवन्तः[12]। हे इन्द्र[13]! महत्[14]। अभयम्[15]। ज्योतिः[16]। अश्याम्[17]। मा[18]। अस्मान्[19]। दीर्घाः[20]। अभिव्याप्नुवन्तु[21]। तमिस्राः[22]।

उभे अस्मै पीपयतः समीची दिवो वृष्टिं सुभगो नाम पुष्यन् ।
उभा क्षयावाजयन्याति पृत्सूभावर्धौ भवतः साधू अस्मै ॥ १५ ॥

उभे अस्मै[23]। द्यावापृथिवी[24]। अस्मै[25]। काममाप्याययतः[26]। तत्र दिवः[27]। असौ सुधनः[28]।

---

१. Omitted by P. यजमानः Sy.

२. अदितेः पुत्राणां मित्रादीनाम् Sy. कस्यैतदेवं भवतीत्याह—य आदित्यानामादित्यार्यम् BB. ३. वर्तते स इति पूर्वत्र सम्बन्धः Sy. वर्तते BB.

४. प्रकृष्टे नयने प्रापणे Sy. परिचरणे BB.

५. VM. ignores न ॥
This stanza=TS. 2.1.11.4.

६. अभिते M. and P.

७. 'आमन्त्रितं पूर्वमविद्यमानवत्' (Pa. 8.1.72.) इति पूर्वपूर्वस्य आमन्त्रितस्य अविद्यमानवद्भावात्सर्वेषां षाष्ठिकं 'आमन्त्रितस्य' (Pa. 6.1.198.) इत्याद्युदात्तत्वम् । यूयं प्रत्येकम् Sy.

८. अस्माकमुपरि दयां कुरु रक्षेत्यर्थः Sy.

९. यदि P. यद्यपि Sy. १०. युष्माकम् Sy. ११. आग P. अपराधम् Sy.

१२. अकुर्म । तथापि मृळेत्यर्थः Sy.

१३. M. omits words between यत् and इन्द्र ! हे परमैश्वर्योपेत ! आदित्य ! Sy.

१४. विस्तीर्णम् Sy. १५. भयरहितम् Sy.

१६. त्वदीयं प्रकाशं ज्ञानात्मकं वा Sy.

१७. अहं प्राप्नुयाम् Sy. १८. Omitted by P. १९. आत्मान् P.

२०. इर्घाः P. विस्तृताः Sy.

२१. ०व्याप्तव० P. आभिमुख्येन व्याप्नुवन्तु Sy. २२. तमसा युक्ता निशाः 'ज्योत्स्नातमिस्राशृङ्गिण०' (Pa. 5.2.114.) इति निपात्यते । ताः Sy.

२३. 'य आदित्यानां भवति प्रणीतौ' (RV. 2.27.13.) इति व्यवहितोऽप्यत्रेदंशब्देन परामृश्यते Sy. २४. द्यावापृथिव्यौ Sy. २५. यजमानाय Sy.

२६. आप्यायतः M. आप्ययतः P. कामान्वर्धयतः । 'प्यायी वृद्धौ' अस्माण्ण्यन्तात् छान्दसो लुङ् । व्यत्ययेन तसस्तामादेशाभावो धातोः पीभावश्च Sy.

२७. द्युलोकादागताम् Sy.

२८. शोभनधनः Sy.

वृष्टिम् । पुष्यन्[1] भवति । नामेति पूरणम्[2] । एवमह्नि रात्रौ च[3] । आभिमुख्येन[4] जनयन्[5] । याति[6] । युद्धेषु[7] । तथोभे । अर्द्धे पूर्वकायोऽपरकायश्च[8] । अस्मै[9] । साधुनी[10] । भवतः[11] ।

**या वो॑ मा॒या अ॑भि॒द्रुहे॑ यजत्रा॒ः पाशा॑ आदित्या रि॒पवे॒ विचृ॑त्ताः ।**
**अ॒श्वीव॒ ताँ अति॒ येषं॒ रथे॒नारि॑ष्टा उ॒रावा शर्म॑न्त्स्याम ॥१६॥**

या वः[12] । याः । वः[13] । पाशाः[14] । अभिद्रोग्धुः[15] । ये[16] यज्ञियाः[17] ! आदित्याः ! रिपूणा[18]-मर्त्याय[19] । प्रसारिताः[20] । अश्ववानिव[21] । तान्[22] । रथेन । अहमतीत्य[23] यायाम्[24] । अक्षतास्च[25] । महति[26] । सुखे[27] । भवेमेति[28] ।[29]

---

१. वर्धयन् भवति Sy.

२. M. omits words between सुधनः and पूरणम् ।
नामेति प्रसिद्धिर्द्योत्यते Sy.

३. प्र P. ४. शत्रूनाभिमुख्येनाभिभवन् Sy. ५. जयन् M.

६. तौ परैरनाक्रान्तं स्वकीयं निवासस्थानम्, आत्मनाऽपहृतं परकीयं निवासस्थानञ्च याति गच्छति Sy.

७. पृतनासु सङ्ग्रामेषु Sy.

८. ०कायोत्तर० M. अर्द्धौ जगतो भागौ चराचरात्मकौ मर्त्यामर्त्यात्मकौ वा Sy.

९. यजमानाय Sy.

१०. साधूनि P. साधकौ Sy.

११. VM. ignores समीची and क्षयौ ॥ समीची सङ्गच्छमाने। क्षयौ उभौ निवासौ। क्षियन्ति निवसन्त्यस्मिन्निति क्षयो निवासस्थानम्। 'पुंसि संज्ञायां घः प्रायेण' (Pa. 3.3.118.) इत्यधिकरणे घः । 'क्षयो निवासे' (Pa. 6.1.201.) इत्याद्युदात्तत्वम् Sy.

१२. P. omits या वः ।

१३. युष्माकम् Sy.

१४. प्रज P. १५. अभितो द्रोहं कुर्वते राक्षसादये निर्मिताः Sy.

१६. हे is suggested for ये ।

१७. हे यष्टव्याः ! Sy.

१८. M. omits words between पाशाः and रिपूणाम् ।

१९. मर्त्याय P. शत्रवे Sy.

२०. 'चृती हिंसासंग्रन्थनयोः' (DP.6.35.) प्रसारिता इत्यर्थः Sy.

२१. तत्र दृष्टान्तः । यथा शोभनाश्वः कश्चित्पुरुषो दुस्तरान्मार्गान् शीघ्रमतिक्रामति तद्वत् Sy. २२. तन् P. पाशान् मायाश्च Sy. २३. अहमं ती० P.

२४. यायम् P. अति येषम् अतीत्य प्रयतेयम् ? प्रतितरेयमित्यर्थः। 'येषृ प्रयत्ने' (येषृ प्रयत्ने) (DP. 1.646.) भौवादिकोऽनुदात्तेत् । छान्दसो लङ् । व्यत्ययेन परस्मैपदम् Sy.

२५. शत्रुभिरहिंसिताः सन्तः Sy.

२६. विस्तीर्णे Sy.

२७. शर्मेति गृहनाम (Ngh.3.4.) त्वया दत्ते गृहे वा Sy.

२८. स्याम वर्तमाना भवेम Sy.

२९. VM. ignores मायाः and आ ॥ आ समन्तात् Sy.
The word मायाः is not explained by Sy. also.

माहं मघोनो वरुण प्रियस्य भूरिदाव्न आ विदं शूनमापेः ।
मा रायो राजन्त्सुयमादव स्थां बृहद्वदेम विदथे सुवीराः ॥ १७ ॥

माहं मघोनः[1] । न । अहम् । धनवतः । सख्युः[2] । हे वरुण ! शूनं[3] मां वृद्धम्[4] । त्वं धनप्रदानेन वर्द्धयेत्याविदमावेदयानि[5] । बहुदानस्य[6] । आपेश्च[7] । माऽहम्[8] । सुयमात्[9] । अवरुद्धो[10] भवामि[11] । सुष्ठु नियच्छतीति[12] ।[13]

II. 28.

इदं कवेरादित्यस्य स्वराजो विश्वानि सान्त्यभ्यस्तु मह्ना ।
अति यो मन्द्रो यजथाय देवः सुकीर्तिं भिक्षे वरुणस्य भूरेः ॥ १ ॥

इदं[14] कवेः । इदमहम्[15] । क्रान्तस्य[16] । अदितेः पुत्रस्य । स्वराजः[17] । विश्वानि[18] । विद्य-

---

१. मघव० P. २. अनुकूलस्य Sy.

३. शूनां P. शून्यं दारिद्र्यम् । वर्णलोपश्छान्दसः । यद्वा शूनं गतं प्राप्तं दारिद्र्यम् । 'टुओश्वि गतिवृद्ध्योः' (DP. 1.1059.) । 'श्वीदितो निष्ठायाम्' (Pa. 7.2.14.) इतीट्प्रतिषेधः । यजादित्वात् सम्प्रसारणम् । 'ओदितश्च' (Pa. 8. 2. 45.) इति नकारः । वृषादित्वादाद्युदात्तत्वम् । एतदुक्तं भवति—अस्मदीयाः पुत्रादयः क्षुधिता इति प्रभुसमीपे अभिधाय याचमानो मा भूवमिति । Sy. ४. त्म P. ५. आविदमेवन् P. आवेदनं विज्ञापनं करवाणि Sy.

६. M. omits words between शूनं and बहुदानस्य ॥ दातुराढ्यस्य Sy.

७. वे श्च M. अपेश्य P. ज्ञातेः Sy.

८. माहत् P.

९. सुमात् M. सुदमात् P. सुष्ठु नियम्यतेऽनेन पुरुषो गृहे इति सुयमः तादृशात् । 'ईषद्दुःसुषु०' इति खल् Sy.

१०. अमरुद्धो M. अपयुत्य Sy.

११. भवावि P. स्थितो (मा) भूवम् Sy.

१२. नियच्छन्तीति P.

१३. VM. ignores रायः । राजन् । बृहत् । वदेम । विदथे । and सुवीराः ॥ Sy. explains these words in the following manner:—रायः धनात् । सुवीराः शोभनपुत्राः । विदथे यज्ञे गृहे वर्तमानाः सन्तः । बृहत् प्रौढं स्तोत्रम् । वदेम उच्चारयाम ।

१४. 'इदम्' इत्येकादशर्चं षष्ठं सूक्तम् । अत्रानुक्रम्यते 'इदमेकादश वारुणम्' (KSA. 15.28. p. 14) इति । पूर्वसूक्ते 'कूर्मो गार्त्समदो हि वा' (KSA. 15.27. p.13) इत्युक्तत्वादस्योत्तरस्य च कूर्मो गृत्समदो वा ऋषिः । त्रिष्टुप् छन्दः । वरुणो देवता । विनियोगो लैङ्गिकः । अत्र केचिदाहुः—'इदमेकादशर्चं तु वारुणं भयपापनुत् । ऋणदारिद्र्यदुःस्वप्ननाशनं चेति शुश्रुम' इति Sy.

१५. इदं हविः स्तोत्रं वा यजमानः करोतीति शेषः Sy. १६. क्रान्तदर्शिनः Sy.

१७. स्वयमेव राजमानस्येश्वरस्य वा Sy.

१८. स च सर्वाणि Sy.

मानानि[1] कर्माणि । महता[2] स्तोत्रेण । अभिभवामि[3] । मादयिता[4] । देवः[5] । अत्यन्तम्[6] । यजमानाय[7] भवति । तस्य प्रवृद्धस्य[8] । वरुणस्य । शोभनकीर्तनं[9] धनम् । भिक्षे[10] ।[11]

तव॑ व्र॒ते सु॒भगा॑सः स्याम स्वा॒ध्यो॑ वरुण तुष्टु॒वांसः॑ ।
उ॒पाय॑न उ॒षसां॒ गोम॑तीनाम॒ग्नयो॒ न जर॑माणा॒ अनु॒ द्यून् ॥ २ ॥

तव व्रते[12] । तव[13] । कर्मणि[14] । सुभगाः[15] । स्याम[16] । सुकर्माणः[17] । हे वरुण ! त्वां तुष्टुवांसः[18] । उषसाम्[19] । शब्दवतीनाम्[20] । अग्नयः[21] । इव[22] । स्तूयमानाः[23] । अन्वहं[24] ते[25] यथा दीप्ताः[26] शोभना एवं[27] वयमपि स्यामेति ।[28]

---

१. द्वितीयभावविकारभाञ्जि भूतजातानि Sy.

२. महिम्ना वरुणप्रसादाल्लब्धेन Sy.

३. अभिभवतु Sy.

४. स्तुत्यो हर्षयिता वा भवति Sy.

५. द्योतमानो वरुणः Sy.

६. भ्यन्तं P. अतिशयेन Sy.

७. M. omits the words between कर्माणि and यजमानाय ॥ यष्ट्रे पुरुषाय Sy.

८. भर्तुः Sy.

९. ०कीर्तन P. शोभनां स्तुतिम् Sy.

१०. भिक्ष P. प्रार्थये । यद्वा वरुणस्येति तृतीयार्थे षष्ठी । तेन वरुणेन दातव्यां शोभनां कीर्तिमहं याचे Sy.

११. VM. ignores यः ।

१२. वृते P.

१३. त्वदीये Sy.

१४. कर्माणि P. परिचरणाख्ये कर्मणि वर्तमानाः Sy.

१५. शोभनधनाः Sy.

१६. भवेम Sy.

१७. ०कर्मणः M. शोभनाध्यानाः Sy.

१८. स्तुतवन्तो वयम् Sy.

१९. P. adds उषस before उषसाम् । The additional word may be an incorrect or incomplete explanation of उपायने or simply a partial dittography of the following उषसाम् ।

२०. रश्मिभिर्युक्तानाम् Sy.

२१. अग्नय P.

२२. यथाग्नयोऽग्निहोत्रादिकर्मार्थं समिध्यन्ते एवम् Sy.

२३. ०मानः P.

२४. अनुदिनम् Sy.

२५. M. omits words between तुष्टुवांसः and ते ।

२६. दीप्त P. त्वां स्तुवन्तो वयं दीप्यमाना भवेम Sy.

२७. एव M.

२८. VM. ignores उपायने । उपायने उपागमने सति Sy.

तवं स्याम पुरुवीरस्य शर्मन्नुरुशंसस्य वरुण प्रणेतः ।
यूयं नः पुत्रा अदितेरदब्धा अभि क्षमध्वं युज्याय देवाः ॥ ३ ॥

तव स्याम । तव । स्याम । बहुवीरस्य[१] । सुखे[२] । बहुस्तुतस्य[३] । हे वरुण[४] ! प्रणेतः[५] ! यूयम् । अस्मान्[६] । अदितेः । पुत्राः[७] । अहिंसिताः[८] । अश्ववहनाय[९] । शक्तं[१०] कुरुत[११] । 'अभि नो वीरो अर्वति[१२] क्षमेत' इति[१३] मन्त्रः ।[१४]

प्र सीमादित्यो असृजद्विधर्ता ऋतं सिन्धवो वरुणस्य यन्ति ।
न श्राम्यन्ति न वि मुचन्त्येते वयो न पप्तू रघुया परिज्मन् ॥ ४ ॥

प्र[१५] सीमादित्यः[१६] । सिन्धून्[१७] वरुणः[१८] । सर्वतः[१९] । प्रासृजत्[२०] । विधर्ता[२१] । वरुणस्य[२२] । उदक-

---

१. ०वीर्यस्य M. पुरुभिर्बहुभिर्वीरैरुपेतस्य यद्वा पुरूणां बहूनां शत्रूणां विशेषेण प्रेरकस्य Sy.
२. शर्मणि सुखे गृहे वा Sy.
३. उरुभिर्बहुभिः स्तूयमानस्य Sy.
४. वरुणस्य M. ५. प्रणेत M. and P. हे सर्वस्य जगतः प्रकर्षेण नेतः ! Sy.
६. अस्मान् कृतापराधान् Sy.
७. मित्रादयः । 'परमपि छन्दसि' ? इति परस्य षष्ठ्यन्तस्य पूर्वामन्त्रिताङ्गवद्भावेनानुप्रवेशात्पदद्वयसमुदायस्याष्टमिकं सर्वानुदात्तत्वम् Sy.
८. शत्रुभिरहिंसिताः Sy.
९. सख्याय Sy.
१०. शक्तान् is suggested for शक्तम् ।
११. P. omits the words between अस्मान् and कुरुत ॥ अस्माभिः कृतमपराधं सहध्वम् Sy.
१२. अर्वन्ति P. १३. RV. 2.33.1.
१४. VM. ignores देवाः । एवम्भूता हे देवाः ! Sy.
१५. गृत्समदस्य तत्पुत्रस्य वार्षम् SKN. गृत्समदस्य तत्पुत्रस्य वा कूर्मस्येदमार्षम् Dur. १६. ०दित्यम् M.
१७. रश्मीन् SKN., Dur.
१८. Omitted by P. अदितेः पुत्रो वरुणः Sy. अदितेः पुत्रो घृणिः SKN. सूर्यः पुनरस्यां वरुणनाम्ना स्तूयते Dur.
१९. सीमिति पादपूरणः परिग्रहार्थीयो वा । यदा परिग्रहार्थीयस्तदा विशेषस्यानुपादानात् सर्वतः (इति) SKN. सीमिति पादपूरण एव । कुतोऽपीत्यविवक्षितमेवैतत् पदपूरणपक्षे । अथ परिग्रहार्थीयः, सर्वमेव परिगृह्णाति प्रासृजत्सर्वत इति वा Dur.
२०. प्रसृ० M. प्रकर्षेण सृष्टवान् । 'अणोऽप्रगृह्यस्यानुनासिकः' (Pa. 8.4.57.) इत्यकारः सानुनासिकः Sy. एव (प्र) 'वि' इत्येतस्य स्थाने । विसृजति SKN.
२१. धत्ता M. सेतुरिव जलस्य विधारयिता Sy. विधारयिता तेषामेव कृत्स्नस्य वा जगतः SKN. विधारयिता रसानां रश्मीनां वा स्वरश्मिजालान्तर्गतस्य वा धर्ता सर्वस्य जगतः Dur.
२२. तेन वरुणस्य ऋतेन Sy. वरुणस्य सकाशादिति वाक्यशेषः SKN. सूर्यस्य स्थानं मण्डलम् Dur.

मेव[1] । तै[2] । न प्राप्नुवन्ति[3] । न । श्राम्यन्ति[4] । न च । स्यन्दनं कदाचिद्विमुञ्चति[5] । पक्षिणः[6] ।
इव । पतन्ति[7] । लघवः[8] । परितो गमने[9] ।[10]

**वि मच्छ्रथाय रशनामिवाग ऋध्याम ते वरुण खामृतस्य ।**
**मा तन्तुश्छेदि वयतो धियं मे मा मात्रा शार्यपसः पुर ऋतोः ॥ ५ ॥**

वि मच्छ्रथाय । हे वरुण ! मत्तः[11] । रज्जुमिव । पापम्[12] । विश्लथय[13] । प्राप्नुमः[14] ।

---

१. उदकमे M. विचारणहेतुभूतं सत्यम् । यद्वा नदीनामुपादानभूतमुदकम् Sy. ते च विसृष्टा ऋतमुदकं भूमिरसलक्षणमादायेति वाक्यशेषः SKN. उदकमादाय, पृथिवीलोकादन्तरिक्षलोकाच्च Dur.

२. के M. (सिन्धवः) स्यन्दनशीला नद्यः Sy. सिन्धवो रश्मयः SKN. स्यन्दनाः सूर्यरश्मयः Dur.

३. गच्छन्ति प्रवहन्ति Sy. यन्ति गच्छन्ति SKN. ते ह्यादित्यमण्डलान्न्यञ्चो वर्तमानाः स्यन्दन्ते वर्षकाले । सूर्येण प्रसृष्टा उदकमादाय सार्वलौकिकम् . . . यन्ति Dur.

४. श्रान्ति (न) प्राप्नुवन्ति Sy. च श्राम्यन्ति SKN. तदेवमप्यनिशमुत्सर्गादानलक्षणं स्वकर्म कुर्वाणा (न) श्राम्यन्ति Dur.

५. विमुञ्चन्ति is suggested for विमुञ्चति ॥ विमुञ्चन्ति (न) उपरता भवन्ति । अनलसा सर्वदैकरूप्येण प्रवहन्तीत्यर्थः Sy. न च कदाचिदप्येतत्कर्म विमुञ्चन्ति SKN. न वा श्रान्ता अपि सन्तो विरागान्नाप्येतत्कर्म विमुञ्चन्त्येते Dur.

६. एते वयो न पक्षिण इव SKN. कथं पुनः पतन्तो न श्राम्यन्ति ? किं शनकैः ? न ।. . .वय इव पक्षिण इव Dur.

७. M. omits the words between श्राम्यन्ति and पतन्ति ॥ गच्छन्ति । 'पत्लृ गतौ' । लिट्युसि 'तनिपत्योश्छन्दसि' (Pa. 6.4.99.) इत्युपधालोपः । स्थानिवद्भावाद् द्विर्वचनादि Sy. गच्छन्ति SKN. शीघ्रम् . . .पतन्तः Dur.

८. शीघ्रगामिनः। रघुया इत्यत्र 'सुपां सुलुक्०' (Pa. 7.1.39.) इति जसो याजादेशः Sy. लघ्व्या शीघ्रया गत्या SKN. लघुया लघ्व्या शीघ्रिकया गत्यापि Dur.

९. परिज्मनि भूम्याम् Sy. अञ्जेरिदं रूपम् । सर्वतोऽञ्जन्तो गच्छन्त इत्यर्थः SKN. परिजमन्तः परिगच्छन्तः सर्वमप्येतज्जगन्न श्राम्यन्ति न विमुञ्चन्ति, एतत्कर्म । एतद्गुणयुक्तानामप्येतेषां सूर्य एव प्रविसर्गे संयमे चेश्वर इत्येवं सूर्यस्य स्तुतिरेषा Dur.

१०. VM. ignores एते ।
एते सिन्धवः Sy. सीमिति परिग्रहार्थीयो वा पदपूरणो वा। 'प्र सीमादित्यो असृजत्' (RV. 2. 28. 4.[a]) प्रासृजदिति वा। प्रासृजत् सर्वत इति वा N. 1. 7., SKN. I. 69.

११. मत्सकाशात् Sy.

१२. विहिताननुष्ठानजनितं पापम् Sy.

१३. विश्लेषय M. शिथिलीकुरु, विमोचयेत्यर्थः Sy.

१४. लभेमहि Sy.

तव[1] । अभ्युदयस्य[2] । नदीम्[3] । मा । सूत्रम्[4] । छिन्नं भवतु[5] । कर्म[6] । वयतः[7] । मे[8] । मा च[9] । मात्रा[10] । शीर्णा भवतु[11] । कर्मणः[12] । पुरा[13] । संस्थानकालाद्[14], इति कर्मकरणं वस्त्रकरणमिवाह[15] ।

**अपो॒ सु म्य॑क्ष वरुण भि॒यसं॒ मत्सम्रा॒ळृता॒वोऽनु॑ मा गृभाय ।**
**दामे॑व व॒त्साद्वि मु॑मु॒ग्ध्यंहो॒ न॒हि त्वदा॒रे नि॒मिष॑श्च॒नेशे॑ ॥ ६ ॥**

अपो सु[16] । हे वरुण[17] । मत्तः[18] । भयम्[19] । सुष्ठु । अपगमय[20] । हे सम्राट्[21] ! सत्यवन्[22] ! माम् । अनुगृहाण[23] । वत्सात्[24] । तन्तिमिव[25] । पापम्[26] । विमोच[27] । न हि[28] ।

---

१. त्वत्सम्बन्धिनः Sy.
२. उदकस्य पूर्णाम् Sy.
३. नदी M. and P. खा इति नदीनाम Ngh. 1.13.
४. स्तत्र M. कर्मसन्ततिः Sy.
५. छिन्नो (मा) भूत् नैरन्तर्येणेत्यर्थः Sy.
६. पकर्म P. ७. पयेतो P. सन्तन्वतः Sy. ८. मम Sy.
९. P. repeats मा च ।
१०. शरीरं प्राच्योदीच्याङ्गलक्षणम् Sy.
११. शीर्णं विकलं (मा) भूत् । 'शॄ हिंसायाम्' । कर्मणि लुङ् Sy.
१२. M. omits words between वयतः and कर्मणः ।
१३. पूर्वम् Sy.
१४. संस्थानं कलात् P. समाप्तिकालात् । पुर ऋतोः इत्यत्र 'ऋत्यकः' (Pa. 6.1.128.) इति प्रकृतिभावः Sy.
१५. P. omits कर्म ।
१६. कूर्मस्य गात्संमदस्यार्षम् । गृत्समदस्यैव वा SKN. १७. हे भगवन्वरुण ! Dur. १८. मत्सकाशादित्यर्थः SKN. तदस्मत्तः Dur.
१९. आधिदैविकमाधिभौतिकमाध्यात्मिकं च दुःखमित्यर्थः SKN. यदेतदपः कर्म किञ्चिद् भियसं भयङ्करमस्मासु Dur.
२०. म्यक्षतिर्गतिकर्मा, (Ngh. 2.14.) तेनास्य सम्बन्धः । सुम्यक्ष सुष्ठु, अपगमय SKN. ततश्च तत्प्रमुच्य... सुष्ठु गमय नाशयेत्यर्थः Dur.
२१. सम्रा P. हे सम्यग्राजमान ! Sy. सम्यग्दीप्त ! SKN.
२२. हे सत्यवन् ! यज्ञवन् ! वा Sy. ऋतं सत्यमुदकं यज्ञो वा तेन तद्वत्, सत्यवदुदकवद्यज्ञवद्वा SKN.
२३. अनुग्रहाण P. 'छन्दसि शायजपि' (Pa. 3.1.84.) इति श्नः शायजादेशः । 'हृग्रहोर्भः' इति भत्वम् Sy. अनुगृहाण मां तैस्तैरनुग्रहविशेषैः SKN.
२४. वत्ससकाशात् Sy.
२५. तन्तिम P. यथा दोग्धा बन्धनीं रज्जुं विमुञ्चति तथा Sy. दाम बन्धनं यथा कश्चिद् वत्साद् विमुञ्चेत्तद्वत् SKN.
२६. पापं मत्सकाशात् Sy. जन्मान्तरकृतमपि पापं वत्सस्थानीयादात्मनः SKN. पापं यदात्मनः कायकृतं तत् Dur.
२७. छान्दसः शपः श्लुः । विमुञ्च पृथक्कुरु Sy. विमुञ्च SKN. अस्मत्तः...त्वं प्रमुञ्च Dur.
२८. कस्मादेवमुच्यते ? इयमत्रातिस्तुतिः—हिर्यस्मादर्थे, यस्मात् SKN. कस्मात्पुनरेवं ब्रूमहे ? इतः, यस्मात् Dur.

त्वयि । असति । कश्चन । निमेषस्य च । ईश्वरो भवति ।

**मा नो॑ व॒धैर्व॑रुण॒ ये त॑ इ॒ष्टावेनः॑ कृ॒ण्वन्त॑मसुर भ्री॒णन्ति॑ ।**
**मा ज्योति॑षः प्रवस॒थानि॑ गन्म॒ वि षू मृधः॑ शिश्रथो जी॒वसे॑ नः ॥ ७ ॥**

मा नो वधैः । मा । अस्मान् । आयुधैः । हे वरुण ! हिंसीः । ये । तव । यज्ञे वर्तामहे । पापम् । कुर्वन्तम् । बलवन् ! तं वायुधानि यानि हिंसन्ति । मा वयम् । ज्योतिषः । प्रवासान् वियोगान् । अगन्म सूर्यं पश्येम । अस्माकम् । जीवनाय । शत्रून् । सुष्ठु । विश्रथयेति ।

---

१. त्वायि P. त्वत्तोऽन्य इति शेषः SKN. त्वदन्तिकेऽपि वर्तमानस्य Dur.

२. M. omits the words between वत्सात् and असति ॥ त्वदारे त्वत्तो दूरदेशे वर्तमानः । त्वदन्यः कश्चिदित्यर्थः Sy. दूरनामैतत् (Ngh. 3.26.) अपिशब्दलोपश्चात्र द्रष्टव्यः । दूरेऽपि सतः SKN. दूरेऽपि च Dur.

३. Sy. construes चन with निमिषः ।

४. अग्नि० M. निमिषश्चन निमेषस्यापि अक्षिपक्ष्मचलनस्यापि Sy. चनशब्दश्चार्थे निमिषतश्चशब्दादनिमिषतो मनुष्यलोकस्य चेत्यर्थः । सर्वदेवमनुष्यजातस्य SKN. यः कश्चित्तस्यापि Dur.

५. ईष्टे । त्वमेवेश्वर इत्यर्थः । 'लोपस्त आत्मनेपदेषु' (Pa. 7.1.41.) इति तलोपः Sy. पुरुषव्यत्ययः । ईष्टे स्वामी भवतीत्यर्थः । इन्द्रस्यातिस्तुतिः SKN. त्वदन्यो नेशे, त्वमेव दूरे चान्तिके चेशिष इत्यभिप्रायः Dur.

N. 13.1., SKN. IV.148.

६. हननसाधनैरायुधैः Sy.

७. हिंसी P. हिंसीरिति शेषः Sy.

८. ये वधाः Sy.

९. त्वदीये Sy. १०. वार्ता० M.

११. विहितानननुष्ठानेन जनितं पापम् Sy.

१२. कुर्वन्तं पुरुषम् Sy.

१३. VM. seems to explain असुर by बलवन् ॥ हे असुर ! पापकृतां निरसितः ! Sy.

१४. हिंसन्ति तैरिति पूर्वत्र सम्बन्धः । 'भ्रीष् हिंसायाम्' क्र्यादिकः Sy.

१५. वयः P.

१६. ज्योतिषः गृहे वर्तमानादग्नेः सौरप्रकाशाद्वा Sy. १७. प्रवासाद् P.

१८. अनन्म P. गच्छाम । सर्वदा गृहे वर्तमानः सूर्यं पश्यंश्चिरकालं जीवेयमित्यर्थः । गमेर्लुङि 'मन्त्रे घस०' (Pa. 2.4.80.) इति च्लेर्लुक् Sy.

१९. हिंसकान् Sy.

२०. विश्रन्थयेयति M. विश्लेषय बाधस्वेत्यर्थः Sy.

नमः पुरा ते वरुणोत नूनमुतापरं तुविजात ब्रवाम ।
त्वे हि कं पर्वते न श्रितान्यप्रच्युतानि दूळभ व्रतानि ॥ ८ ॥

नमः पुरा ते । पुरा[1] च । तव[2] । नमः[3] । सम्प्रति[4] । च[5] । अपि[6] च तव । ऊर्ध्वमपि[7] । बहुजनन[8] ! ब्रवाम[9] । त्वयि । हि[10] । पर्वते[11] । इव । श्रितानि[12] । कमिति पूरणम् । अच्युतानि[13] । दुर्दभ[14] ! तव कर्माणि[15] ।[16]

परं ऋणा सावीरध मत्कृतानि माहं राजन्नन्यकृतेन भोजम् ।
अव्युष्टा इन्नु भूयसीरुषास आ नो जीवान्वरुण तासु शाधि ॥ ९ ॥

परा[17] । अपि च[18] । अस्मत्कृतानि[19] । ऋणानि[20] । परासावीः[21] । मा । अहम्[22] ।

---

१. पूर्वस्मिन् काले Sy.
२. ते M. D. तुभ्यम् Sy.
३. नमस्कारप्रतिपादकं नम इति शब्दमवादिष्म Sy.
४. अद्यापि Sy.
५. अपि च Sy. ६. अधि P.
७. अपरमागामिन्यपि काले नमःशब्दम् Sy. ८. हे बहुषु प्रदेशेषु प्रादुर्भूत ! वरुण ! Sy.
९. उच्चारयाम Sy.
१०. यस्मात् Sy. ११. शिलोच्चये Sy.
१२. श्रवणानि M. श्रमणादि P. आश्रितानि Sy.
१३. अन्यैः प्रच्यावयितुमशक्यानि Sy.
१४. दुर्दुम्भ M. दुदुर्द P. दुर्दभ ! दम्भितुं हिंसितुमशक्य ! 'दुरो दाशनाशदभध्यादभेषु' (VPa. 6.3.109. 5.) इति रेफस्योत्वम्, 'उत्तरपदादेः ष्टुत्वं च' (VPa. 6.3.109. 5.) Sy.
१५. कर्माणि विधरणानि Sy.
१६. VM. ignores वरुण ।
१७. कूर्म ऋषिः, तस्य पिता वा गृत्समद ऋणविध्वंसकं वरुणं त्रिष्टुभा तुष्टाव । तथा चोक्तम्—'इदमेकादशर्चं तु वारुणं भयपापनुत् । ऋणदारिद्र्यदुःस्वप्ननाशनं चेति शुश्रुम' इति विनियुक्तम् DDN.
१८. अधुना Sy. अध DDN.
१९. मया निष्पादितानि Sy. मत्कृतानि मया निष्पादितानि च परा कुरु, नाशयेति यावत् । एकस्यैव पराशब्दस्य तन्त्रादिवृत्त्या कर्मक्रिययोरन्वयः DDN.
२०. पित्रादिभिः कृतान्यस्माभिर्देयानि Sy. अस्माभिर्देयानि पूर्वं पित्रादिभिः कृतानि । ऋणा—छान्दसो डादेशः 'सुपां सुलुक्०' (Pa. 7.1.39.) DDN.
२१. परा सुव पराचीनं प्रेरय । 'षू प्रेरणे' । छान्दसो लुङ् Sy. परासुव (पराचीनं प्रेरय) 'षू प्रेरणे' छान्दसो लुङ् । पराङ्मुखानि कुर्वित्यर्थः । दूरे प्रेरय । पर ऋणा—'ऋकार उदये कण्ठ्यावकारम्०' (RPr. 2. 32.) इत्यकारः । सावीरिति तिङ्त्वान्निघातः 'तिङ्ङतिङः' इति (Pa. 8.1.28.) DDN. आ इत्यर्वागर्थे प्र परा इत्येतस्य प्रातिलोम्यम् N.1.3.
२२. P. reads च for अहम् ।

राजन्[1] ! अन्यप्रयुक्तेन[2] धनेन[3] । भोजम्[4] । अव्युष्टाः[5] । एव । मम[6] बह्व्यः[7] । उषसः[8] । ऋणभयादनागतायां निद्रायामेवमव्युच्छन्तीषु[9] तासु[10] । अस्मान् । जीवतः[11] । कुरु[12] स्वेनैव[13] धनेन ।[14]

**यो मे राजन्युज्यो वा सखा वा स्वप्ने भयं भीरवे मह्यमाह ।**
**स्तेनो वा यो दिप्सति नो वृको वा त्वं तस्माद्वरुण पाह्यस्मान् ॥१०॥**

यो[15] मे राजन् । यः । मे[16] । राजन्[15] ! वरुण[17] ! नियोक्तव्यः[18] । वा । सखा[19] । वा । स्वप्ने[20] । भयं दृष्टमिति । भीरवे[21] । मह्यम् । वदति[22] । स्तेनः[23] । वा । वृकः[24] । वा । अस्मान् ।

---

१. स्वामिन् ! Sy. अपि च हे राजन् ! स्वामिन् ! ऋणान्यपाकृत्य पश्चात् DDN.
२. अन्यैरर्जितेन Sy., DDN.
३. धने P.
४. भोजमाम् P. भोगं लभेयम् ? Sy. भोगम् आलभेय 'न माङ्योगे' (Pa. 6.4. 74.) इत्यडभावः DDN.
५. अत्युष्टाः P. सत्यमव्युष्टा एव । अपररात्रेषूत्थाय ऋणानि चिन्तयतो जाग्रतो मम व्युष्टा अप्यव्युष्टकल्पा आसन् Sy. व्युष्टाः सन्तः अव्युष्टा इत् अव्युष्टा एव । अपररात्रेषूत्थायोत्थाय ऋणानि चिन्तयतो जाग्रतो मम व्युष्टा अपि अव्युष्टकल्पा आसन् DDN.
६. M. omits the words between राजन् and मम ।
७. हव्यः M. किं कारणमिति चेत् ? उच्यते । भूयसीः भूयस्यो बहुतराः Sy. 'बहोर्लोपो०' (Pa. 6.4.158.) इति भूरादेशः DDN.
८. उषसः उषःकालाः (प्रातःकालाः) उषासः इत्यत्र 'पादस्यैकादशिनः०' (RPr. 9. 42.) इति प्लुतिः । उषःशब्देन रात्र्येकदेशवाचकेन रात्रयो लक्ष्यन्ते । तेन तादृश्यो रात्रयो बोद्धव्याः DDN.
९. ०मप्यच्छिन्ति P.
१०. तसु P. उषःसु Sy. हे वरुण ! तासु उषःसु DDN.
११. जीवनवतः Sy. अस्मत्सम्बन्धिनो जीवान् प्राणिनः DDN.
१२. आ समन्तादनुशिष्टान् कुरु । ऋणान्यपाकृत्य भोगपर्याप्तं धनं प्रयच्छेत्यर्थः Sy. आ समन्तादनुशिष्टान् कुरु । 'शासु अनुशिष्टौ' । ऋणान्यपहृत्य भोगपर्याप्तं धनं प्रयच्छेत्यर्थः DDN.
१३. स्वेनैव M. स्वेनं P.
१४. VM. ignores नु and वरुण ॥ नु सत्येन DDN. हे वरुण ! Sy., DDN.
१५. Omitted in M.
१६. Omitted in M. मदीयः Sy.
१७. वरुणं P.
१८. योजनसमर्थः पित्रादिः Sy.
१९. समानख्यानोऽन्यो बान्धवः Sy.
२०. सप्ने P.
स्वप्ने दृष्टं त्वद्विषयम् Sy.
२१. भयशीलाय Sy.
२२. वदन्ति P. ब्रूते Sy.
२३. M. omits the words between सखा and स्तेनः ॥ चोरः Sy.
२४. अरण्यश्वा Sy.

हिंसितुमिच्छति[1]। त्वम्। तस्मात्[2]। अस्मान्[3]। रक्षेति[4]।[5]

माहं मघोनो वरुण प्रियस्य भूरिदाव्न आ विदं शूनमापेः।
मा रायो राजन्त्सुयमादव स्थां बृहद्वदेम विदथे सुवीराः॥ ११ ॥

[ माहं मघोनः। ][6]

II. 29.

धृतव्रता आदित्या इषिरा आरे मत्कर्त रहसूरिवागः।
शृण्वतो वो वरुण मित्र देवा भद्रस्य विद्वाँ अवसे हुवे वः॥ १ ॥

[7]धृतव्रताः। हे धृतकर्माणः! आदित्याः[8]![9] हविषामेषणशीलाः[10][11]। दूरे[12]। मत्तः। कुरुत[13]। पापम्[14]। ये रहस्यमन्यस्मै[15] प्रेरयन्ति तानिव। मन्त्रवेलायां हे वरुणादयः[16]! स्तुतीः शृण्वतः[17]।

---

१. ०च्छन्ति P. जिघांसति। 'सनीवन्तर्ध०' (Pa. 7.2.49) इति विकल्पनादिड-भावः। 'दम्भ इच्च' (Pa. 7.4.56.) इतीत्वम् Sy.

२. तस्मात्सर्वस्मात् Sy.  ३. अस्मात् P.

४. रक्षति M. रक्षसेति P.  ५. VM. ignores यः (before विप्सति)

६. This stanza has already been explained. See RV. 2.27.17. Sy. explains this stanza again in the following manner:—
हे वरुण! प्रियस्य भूरिदाव्नः भूरेर्ध-नस्य दातुर्धनवत आढ्यस्य पुरतः पुत्रा-देर्दारिद्र्यम् अहं मा आ विदमावेदयानि ज्ञापयानि। हे राजन्! सुष्ठु नियामका-द्धनाद् अव स्वामवयुत्य स्थितः मा भूवम्। शोभनपुत्राः यज्ञे गृहे वा वर्तमानाः प्रौढं स्तोत्रमुच्चारयाम।

७. 'धृतव्रताः' इति सप्तर्चं सप्तमं सूक्तं गार्त्समदस्य कूर्मस्य गृत्समदस्य वा आर्षं त्रैष्टुभं वैश्वदेवम्। तथा चानु-क्रान्तम्—'धृतव्रताः सप्त वैश्वदेवम्' (KSA. 15.29. p. 14.) इति। गतो विनियोगः Sy.

८. अदितेः पुत्राः! Sy.

९. M. adds यो मे राजन् after आदि-त्याः। These words were omitted in M. while explaining यो मे राजन् (RV. 2.28.10.)  १०. हिवि० P.

११. गमनशीलाः सर्वैरभ्येषणीयाः प्रार्थनीया वा हे विश्वे देवाः! Sy.

१२. दूरदेशे Sy.  १३. करोतेश्छान्दसो विकरणस्य लुक्। 'तप्तनप्तनथनाश्च' (Pa. 7.1.45.) इति तबादेशः Sy.

१४. विहिताननुष्ठानादिजनितं पापम् Sy.

१५. रहस्यन्यैरज्ञाते प्रदेशे सूयत इति रह-सूर्व्यभिचारिणी। सा यथा गर्भं पात-यित्वा दूरदेशे परित्यजति तद्वत् Sy.

१६. आदयः refers to मित्र and देवाः।

१७. मत्कृतानि स्तोत्राणि श्रोत्रेण जानतः Sy.

भवताम्[1]। भद्रम्[2]। जानन्[3]। रक्षणाय[4]। आह्वयामि। पुनर्वै[5] इति पूरणमिति[6]।

यूयं देवाः प्रमतिर्यूयमोजो यूयं द्वेषांसि सनुतर्युयोत।
अभिक्षत्तारो अभि च क्षमध्वमद्या च नो मृळयतापरं च॥ २॥

यूयं[7] देवाः। यूयम्। देवाः! प्रमतिमाश्रिताः[8] कुरुत[9]। ओजश्च[10]। यूयमेव। अन्तर्हि[11]तानि। द्वेषांसि[12]। पृथक् कुरुत[13]। अभिक्षमणशीलाः[14]। अभि[15]। च। क्षमध्वम्[16]। अद्य[17]। च। श्वः[18]। च। अस्मान्। सुखयतेति[19]।

किमू नु वः कृणवामापरेण किं सनेन वसव आप्येन।
यूयं नो मित्रावरुणादिते च स्वस्तिमिन्द्रामरुतो दधात॥ ३॥

किमू[20] नु वः। युष्मभ्यम्। सम्प्रतितनेन[21]। किम्। उ[22]। सनातनेन[23]। हविषा[24]। परि-

---

१. युष्मदीयस्य Sy.
२. युष्माभिः करणीयं श्रेयः Sy.
३. जानन्नहम् Sy.
४. रक्षणार्थम् Sy.
५. युष्मान् Sy.
६. M. omits the words between शीलाः and पूरणमिति।
७. M. omits the commentary on this stanza.
८. प्रकृष्टा मतिर्यस्य पित्रादेस्तादृशा अपि Sy. ९. कुरुथ P.
१०. बलमपि Sy.
११. सनुतः इत्यव्ययम्। अन्तर्हितनामैतत् (Ngh. 3.25.) अन्तर्हिते प्रदेशे Sy.
१२. द्वेष्टॄणि रक्षःपिशाचादीनि Sy.
१३. कुरुतः P. 'यु मिश्रणामिश्रणयोः'। छान्दसः शपः श्लुः। पूर्ववत् तस्य तबा-देशः Sy. १४. अभितः शत्रूणां हिंसितारो यूयम् Sy. १५. अपि P.
१६. अभिभवत च शत्रून् Sy.
१७. अस्मिन् दिने Sy.
१८. अपरमपि कालम्। आगामिन्यपि काले अस्मान् मृळयत Sy.
१९. VM. ignores यूयम् (before ओजः)
२०. M. omits the explanation of this stanza.
२१. This seems to be the explanation of नु।
२२. P. reads तेन नाप्नु for ॰तनेन किमु
२३. संस्तुतेन P. This seems to be the explanation of सनेन।
२४. This seems to be the explanation of आप्येन।

चरणं[१] कृणवाम[२]। अथवाऽरणेति[३]। शिष्टं स्पष्टम्।[४]

**हये दे॑वा यूयमिदा॒पयः॑ स्थ॒ ते मृ॑ळत॒ नाध॑मानाय॒ मह्य॑म्।**
**मा वो॒ रथो॑ मध्यम॒वाळ्ऋ॒ते भू॒न्मा यु॒ष्माव॑त्स्वा॒पिषु॑ श्रमिष्म ॥ ४ ॥**

[५] हये[६] देवाः। हे। देवाः! यूयम्। एव। मम बन्धवः[७]। स्थ[८]। ते[९]। सुखयत। याचमानाय[१०]। मह्यम्[११]। मा। युष्माकम्। रथः। मध्ये भवन्तमन्तरिक्षं यो वहति[१२] दिवो युष्मान् सः। युष्माभिर्ऋते[१३]। भवतु[१४], भवद्भिः सह गच्छतु। मा वयम्। युष्मत्सदृशेषु[१५]। बन्धुषु सन्तु[१६]। श्रमाम[१७] धनाभावादिनेति।

---

१. वरिवरणं P.

२. कृतवाम P. ३. पूरणेनेति P.

४. The text of the commentary on this stanza is available in MS. P. only and that also is in a very bad condition. The text presented above is conjectural. Many Vedic words have been ignored by VM. as किम्। वसवः। यूयम्। नः। मित्रावरुणा। अदिते। च। स्वस्तिम्। इन्द्रामरुतः। दधात॥ Sy. explains the stanza in the following manner:—हे देवाः! वः युष्माकं नु अद्येदानीं किमु कृणवाम किं खलु कर्तुं शक्नवाम? न किमपीत्यर्थः। तथा अपरेण अपरकालभाविना कर्मणा किं कर्तुं शक्ताः? तथा हे वसवः! वासयितारो देवाः! सनेन सनातनेन प्राप्येन प्राप्तव्येन कर्मणा युष्माकं किं कर्तुं शक्ताः? सर्वदापि युष्मदनुगुणं परिचरणं कर्तुं न शक्ता इत्यर्थः। हे मित्रावरुणौ! हे अदिते! हे इन्द्रामरुतः! 'देवताद्वन्द्वे च' (Pa.6.3.26.) इति पूर्वपदस्यानङ्। ते च सर्वे यूयं स्वस्तिम-विनाशं नोऽस्मभ्यं दधात धत्त प्रयच्छत। लोटि तस्य तबादेशे ङित्त्वाभावेनातो लोपाभावः॥

५. M. omits the commentary on this stanza.

६. हये छान्दसो वर्णोपजनः। हे Sy.

७. धनस्य प्रापयितारो बन्धवः Sy.

८. भवथ Sy. ९. यूयम् Sy.

१०. अभिमतं फलं याचमानाय Sy.

११. स्तोत्रे Sy.

१२. मध्यमेन मन्दगमनेन वाहकः Sy.

१३. अस्मदीये यज्ञे निमित्तभूते Sy.

१४. (मा) भूत्। शीघ्रं युष्मान् वहत्वित्यर्थः Sy.

१५. 'युष्मदस्मदोस्सादृश्ये वतुब्वाच्यः'(VPa. 5.2.39.) इति वतुप्। 'आ सर्वनाम्नः' (Pa. 6.3.91.) इत्यात्वम् Sy.

१६. सधुसु P.

१७. अयायाम P. श्रान्ता भूम Sy.

प्र व॒ एको॑ मिमय॒ भूर्यागो॒ यन्मा॑ पि॒तेव॑ कित॒वं श॑शा॒स ।
आ॒रे पाशा॑ आ॒रे अ॒घानि॑ देवा॒ मा माधि॑ पु॒त्रे विमि॑व ग्रभीष्ट ॥ ५ ॥

प्र[1] वः। युष्माकम्[2]। एको[3] वरुणः। भूरि[4]। पापम्[5]। हिनस्ति[6]। यस्मात्। मां[7]। पितेव। कितवपुत्रम्[8]। शशास[9], वरुणभयाद्धि चापन्नानुतिष्ठति[10]। हे देवाः! वरुणपाशाः[11]। मत्तः[12] दूरे भवन्तु। एवमाहन्तॄणि[13] चान्यानि। मा। माम्। अधि[14]। पुत्रे[14] पश्यति। पक्षिणमिव। व्याधो ग्रभीष्ट[15] गृह्णीध्वं[16] पाशैः।[17]

अ॒र्वाञ्चो॑ अ॒द्या भ॑वता यजत्रा॒ आ वो॒ हार्दि॒ भय॑मानो व्ययेयम् ।
त्राध्वं॑ नो देवा नि॒जुरो॒ वृक॑स्य॒ त्राध्वं॑ क॒र्तादव॒पदो॑ यजत्राः ॥ ६ ॥

अर्वाञ्चः[1]। हे यष्टव्याः[18]! देवाः! इतोऽभिमुखाः[19]। अद्य[20]। भवत। अहं बिभ्यत्[21]। युष्माकम्। हार्दं[22] प्रियम्। आव्ययेयं[23] तेनात्मानमावृणोमि। तथा सति रक्षध्वम्[24]। अस्मान्।

---

१. The commentary on this stanza is omitted in M.
२. युष्माकं मध्येऽहम् Sy.
३. एकः सन् Sy. ४. बहुलम् Sy.
५. पानम् P. ६. अहिंसिषम्। कथमस्माकं मध्ये त्वमेवेति चेत्? उच्यते Sy.
७. माम् Sy. ८. तित॰ P. यथापथप्रवृत्तं पुत्रं पितानुशास्ति तथा Sy.
९. अनुशिष्टं चकृद्वे। 'शासु अनुशिष्टौ' इत्यस्माल्लिटि मध्यमस्य रूपम् Sy.
१०. पापं is suggested for चापन्।
११. युष्मदीयाः पाशाः Sy.
१२. अस्मत्तो दूरदेशे सन्तु Sy.
१३. पापानि च आरे सन्तु Sy.
१४. पक्षि P. अधिः सप्तम्यर्थानुवादी। पुत्रे पश्यति सति पितरं सन्तम् Sy.
१५. गृभी॰ P. १६. गृह्णीत्वार्थं P.
१७. VM. explains आरे once and ignores प्र ॥ प्र प्रकर्षेण Sy.
१८. यजन्तं त्रायन्ते यजत्रा यष्टव्या वा। हे यजत्राः! देवाः! Mah. हे यजनीयाः! U.
१९. तोभि॰ P. अस्मदभिमुखाः Sy. यूयम् ...अस्मदभिमुखा भवत। दीर्घो संहितायाम् Mah. अर्वागञ्चनाः U.
२०. इदानीम् Sy.
२१. बिभेतेर्विकरणव्यत्ययेन शानचि शप् U.
२२. हृदयवस्थितं रक्षणम् Sy. हृदि भवं मनः Mah. हृदयम् U.
२३. आमप्येययम् P. आभिमुख्येन प्राप्नुयाम्। 'व्यय गतौ' भौवादिकः Sy. आगमयेयम्। अभिमुखं सम्पादयेयमित्यर्थः। 'व्यय गतौ' णिजन्तः Mah. व्ययतिर्गत्यर्थः... अभिमुखमापादयेयम् U.
२४. रक्षत is suggested for रक्षध्वम् as √रक्ष् is *parasmaipadi* in the classical language. In Vedic language, it is however both. त्रायध्वम् Sy. पालयत Mah. यत एवमतो ब्रवीमि...पालयत U.

नितरां हिंसातः। वृकस्य। रक्षध्वं च। अवपातयितुश्च। अभ्रादिति।

माहं मघोनो वरुण प्रियस्य भूरिदाव्न आ विदं शूनमापेः।
मा रायो राजन्त्सुयमादव स्थां बृहद् वदेम विदथे सुवीराः॥ ७॥

[ माहं मघोनः। ]

II. 30.

ऋतं देवाय कृण्वते सवित्र इन्द्रायाहिघ्ने न रमन्त आपः।
अहरहर्यात्यक्तुरपां कियात्या प्रथमः सर्ग आसाम्॥ १॥

ऋतं देवाय॥ गृत्समदः। यथालिङ्गदेवतं सूक्तम्। एवं पूर्वमपि च। आदितः

१. निहननात्। जूरी हिंसार्थः। अस्मात्सम्पदादिलक्षणो भावे क्विप्। छान्दसो ह्रस्वः Sy. कीदृशाद् वृकात्...'जूरी वधे' नितरां जूर्यते हिनस्ति निजूः, क्विप्। तस्मान्निजुरो हिंसकात् Mah. नितरां यो भक्षितं जरयति स निजूर्बुभुक्षितादित्यः U.

२. तस्करस्यारण्यशुनो वा सम्बन्धिनः Sy. वृकात् Mah. वृकाविति विभक्तिव्यत्ययः U.

३. आपदः Sy. कीदृशात्कर्तात्? अवाचीनाः पादन्यासा यत्र सोऽवपात् तस्मादवपदः। सोपानैर्यत्रोत्तरीतुं न शक्यत इत्यर्थः Mah. अवाचीनानि यत्र पदानि स तथोक्तस्तस्मात् U.

४. VM. explains कर्तात्(synonym of well Ngh. 3.23.) as अभ्रात् which may mean a 'well'—अपो बिभर्ति *i.e.*, which has water stored in it.
कर्तुः सकाशात् Sy. कर्तात् कूपाच्च Mah., U.

५. VM. explains यजत्राः once only.
This stanza=YV. 33.51.

६. This stanza has already been explained. (See. RV. 2.27.17.) It is therefore omitted here in all MSS.

७. 'ऋतं देवाय' इत्येकादशर्चमष्टमं सूक्तं गार्त्समदम्। अन्त्या जगती शिष्टास्त्रिष्टुभः। 'प्र हि क्रतुम्' इत्येषा इन्द्रासोमदेवताका। 'सरस्वति त्वमस्मान्' इत्यर्धर्चः सारस्वतः। 'यो नः सनुत्यः' इत्येषा बार्हस्पत्या। अन्त्या मारुती। शिष्टा ऐन्द्र्यः। तथा चानुक्रान्तम्—'ऋतमेकादश जगत्यन्तं षष्ठ्यैन्द्रासोमी सरस्वति त्वमिति सारस्वतोऽर्धर्चो यो नो बृहस्पतिस्तं वोऽन्त्या (बार्हस्पत्या तं वो) मारुती' (KSA. 15.30. p. 14.) इति। गतो विनियोगः Sy.

८. M. omits the commentary on this stanza.

पञ्चैन्द्रयः[१] ॥ सत्यम्[२] । कुर्वते । प्रेरयित्रे[३] । देवाय[४] । इन्द्राय[५] । अहिघ्ने[६] । न कदाचिदपि । आपः । विमिश्रं कुर्वन्ति सर्वदा निर्गच्छन्ति[७] । अन्वहम्[८] । अपाम् । विन्दुः[९] । आगच्छति, एवमपामन्तोऽस्माभिर्न दृश्यते । अथ कियति[१०] काले न्वित्[११] । आसामपाम् । प्रथमः[१२] । सर्गः[१३], अनादिरपर्यन्त इत्युक्तं भवति ।

**यो वृत्राय सिनमत्राभरिष्यत्प्र तं जनित्री विदुषे उवाच ।**
**पथो रदन्तीरनु जोषमस्मै दिवेदिवे धुनयो यन्त्यर्थम् ॥ २ ॥**

यो वृत्राय[१४] । य[१५] इन्द्रः । वृत्रं[१६] हन्तुम् । बन्धकं[१७] वधनिमित्तगन्धम्[१८] । अभरत्[१९] । तमिन्द्रम्[२०] । वृत्रस्य माता[२१] । विदुषे[२२] वृत्राय । अयं त्वां हन्तुमुद्युक्त इत्युवाच[२३], उक्त्वा च तस्योपर्यशेत, तथा मन्त्रः 'उत्तरासूरः पुत्र आसीद्'[२४] इति । अथ वृत्रे हते मार्गान् । खनन्त्यः[२५] । इन्द्रस्य । वशम्[२६] । अन्वहम्[२७] । नद्यः । प्रवणं[२८] प्रति । गच्छन्ति[२९] ।

---

१. पञ्चैन्द्रयः P.
२. उदकं वृष्टिलक्षणम् Sy.
३. सर्वस्य प्रेरकाय Sy.
४. वाम् P. द्योतमानाय Sy.
५. इन्द्राय यागार्थम् Sy.
६. अहिं वृत्रं हतवते Sy.
७. तस्माद्धेतोर्भीत्या उपरता भवन्ति । तस्माद् व्यत्ययेन चतुर्थी Sy.
८. प्रत्यहम् Sy.
९. अपि तु तासां...सेचकं स्रोतः Sy.
१०. Sy. construes आ with कियति and not with याति ॥ कियति काले निष्पन्नम् ? आकारः प्रश्ने । किंशब्द आक्षेपे । यावति काले ता अजायन्त स कालः कियान् । किं परिमाणं तस्य कालस्य ? न किमपि । नित्या एव हि ता इत्यर्थः Sy.
११. चित् is suggested for न्वित् ।
१२. प्राथमिकम् Sy. १३. जन्म Sy.
१४. M. omits the commentary on this stanza.
१५. पुरुषः Sy. १६. असुराय Sy.
१७. सिनमन्नम् Sy.
१८. ०बन्धम् is suggested for ०गन्धम् ।
१९. अरत् P. सम्पादितवान् Sy.
२०. तं पुरुषम् Sy.
२१. जनयित्री इन्द्रस्य माता, अदितिः Sy.
२२. अभिज्ञायेन्द्राय Sy.
२३. प्रोक्तवती । प्रवचनस्य हननार्थत्वात् तं वृत्रं हतवानिति शेषः Sy.
२४. Cf. RV. I. 32.9ᶜ. उत्तरा सूरधरः पुत्र आसीत् ।
२५. विलिखन्त्यः Sy.
२६. अनुजोषमनुकामम् इच्छामनुसृत्य Sy.
२७. प्रतिदिवसम् Sy.
२८. अर्थमर्तव्यं गन्तव्यं समुद्रं प्रति Sy.
२९. VM. ignores अत्र । प्र and अनु ॥ Sy. explains अत्र as पाकस्थाने आहर्तुम् and construes प्र with उवाच and अनु with जोषम् ।

ऊ॒र्ध्वो ह्य॒स्था॒दध्य॒न्तरि॑क्षे॒ऽधा॑ वृ॒त्राय॒ प्र व॒धं ज॑भार।
मिहं॒ वसा॑न॒ उप॒ हीमदु॑द्रोत्ति॒ग्माायु॑धो अजय॒च्छत्रु॒मिन्द्रः॑ ॥ ३ ॥

ऊर्ध्वो[1] ह्यस्थात्। इन्द्र ऊर्ध्वः[2]। अतिष्ठत्[3]। अन्तरिक्षे। वृत्रस्य[4]ाधः स्थितस्य। वज्रम्[5]। प्रजहार[6]। तदानीम्[7]। स वृत्र एनम्[8]। वृष्टिम्[9]। प्राच्छादयन्[10]। उपदुद्राव[11]। तम्[12]। इन्द्रः। तीक्ष्णायुधः। अजयदिति[13]।[14]

बृह॑स्पते॒ तपु॒षाश्ने॑व विध्य॒ वृक॑द्वरसो॒ असु॑रस्य वी॒रान्।
यथा॑ ज॒घन्थ॑ धृष॒ता पु॒रा चि॑दे॒वा ज॑हि॒ शत्रु॑म॒स्माक॑मिन्द्र ॥ ४ ॥

बृहस्पते[1]। इन्द्रसहाय! बृहस्पते[15]! तेजसा[16]। अश्नेव[17]। विध्य[18]। मदीयमानः[19]? मदकान्? वृत्रस्य। वीरान्[20]। इन्द्र! त्वम्[21]। यथा। पुरा। वज्रेण[22]। हतवानसि। तथे[23]-दानीम्। अपि। अस्माकम्। शत्रुम्। जहि[24]।

---

१. The commentary on this stanza is omitted in M.

२. ऊर्ध्वः सन् Sy.

३. अतिष्ठन् P. सर्वमावृत्य अधिष्ठितोऽभूत् Sy.

४. वृत्रं प्रति Sy.

५. हननसाधनं वज्रम् Sy.

६. इन्द्रः प्रचिक्षेप Sy.

७. अथ अतः कारणात् Sy.

८. एनमिन्द्रम् Sy.

९. वृष्टेः सेक्तारं मेघम् Sy.

१०. आच्छादयन् P.

११. उपागमत्। 'द्रु द्रु गतौ'। लङि छान्दसः शपः श्लुः Sy.

१२. शातयितारं तं वृत्रम् Sy.

१३. जितवान् Sy.

१४. VM. ignores अधि once and हि twice.
हि हेतौ। यस्मादयं वृत्रः। हि खलु Sy.

१५. हे बृहतां परिबृढानां पालयितरिन्द्र! Sy.

१६. तापकेन दीप्तेन वज्रेण Sy.

१७. अश्मव P. अशन्येव Sy.

१८. ताडय Sy.

१९. मदीयमानः मदकान् seems to be the incorrect explanation of वृकद्वरसः॥ वृकद्वरसः संवृतद्वारस्य। यद्वा संवृतद्वारान्। वृणोतेः 'सृवृभूशुषिमुषिभ्यः कित्' (Uṇādi. 3.321.) इति कर्मणि कन्प्रत्ययः। 'द्रु गतौ'। अस्मादौणादिकोऽसन्प्रत्ययः। वृकाणि संवृतानि द्वरांसि द्वाराणि येषाम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् Sy.

२०. पुत्रान् Sy.

२१. त्वां च P.

२२. धर्षकेण वज्रेण Sy.

२३. एवमेव Sy.

२४. नाशय। 'हन्तेर्जः' (Pa. 6.4.36.) इति हौ जादेशः Sy.

अव॑ क्षिप दि॒वो अश्मा॑नमु॒च्चा येन॒ शत्रुं॑ मन्दसा॒नो नि॒जूर्वाः॑ ।
तो॒कस्य॑ सा॒तौ तन॑यस्य॒ भूरे॑र॒स्माँ अ॒र्धं कृ॑णुतादिन्द्र॒ गोना॑म् ॥ ५ ॥

अव[1] क्षिप । उच्चैः स्थितम्[2] । दिवः[3] । अवक्षिप[4] । वज्रम्[5] । येन[6] पुरा त्वम् । हृष्यमाणः[7] । शत्रुम् । हिंसितवानसि[8] । बहोः[9] । पुत्रस्य । पौत्रस्य । भजननिमित्तम्[10] । अस्मान्प्रति[11] । त्वदीयानां गवाम्[12] । अर्धम्[13] । कृणुतादिति[14] ।[15]

प्र हि क्रतुं॑ वृ॒हथो॒ यं व॑नु॒थो र॒ध्रस्य॑ स्थो॒ यज॑मानस्य चो॒दौ ।
इन्द्रा॑सोमा यु॒वम॒स्माँ अ॑विष्टम॒स्मिन्भ॒यस्थे॑ कृणुतमु लो॒कम् ॥ ६ ॥

प्र[1] हि । इन्द्रासोमौ ! यम्[16] । हवः[17] । तस्य कर्म[18] । प्रवृहथो[19] विश्लथयथः[20] । राधकस्य । यजमानस्य । चोदयितारौ[21] च । भवथः । तौ युवम्[22] । अस्मान् । रक्षतम्[23] । अस्मिन्[24] । सङ्ग्रामे[25] । कृणुतम्[26] । विलोकनमथवा[27] स्थानमिति[28] ।

---

१. The commentary on this stanza is omitted in M.
२. उच्चैर्वर्तमानस्त्वम् Sy.
३. जवः P. नभसः सकाशात् Sy.
४. उपक्षिप P. अस्मदीयान् शत्रूनुद्दिश्य अवस्तात्क्षिप Sy.
५. अश्मवत्कठिनं वज्रम् Sy.
६. वज्रेण Sy.
७. ०माण P. स्तोतृभिः स्तूयमानः सन् Sy.
८. न्यहिंसीः । जूर्वी हिंसार्थः । लेटचाडागमः Sy.
९. भर्तव्यस्य Sy.
१०. सम्भजने सम्भजनार्थम् Sy.
११. अस्माकम् । विभक्तिव्यत्ययः Sy.
१२. गोनाम् गवां सम्भजनार्थं च । 'गोः पादान्ते' (Pa. 7.1.57.) इति गोशब्दस्यामो नुडागमः Sy.
१३. समृद्धिम् Sy.
१४. कुरु Sy.
१५. VM. ignores इन्द्र ।
१६. वैरिणम् Sy.
१७. हिंसथः Sy. वनुष्यतिर्हन्तिकर्मा N. 5.2.
१८. तस्यक० P. तं क्रतुं द्वेषस्य कर्तारम् Sy.
१९. प्रवृहथ P. प्रकर्षेणोद्यच्छथः । उन्मूलयथ इत्यर्थः । 'वृहू उद्यमने' तौदादिकः Sy.
२०. विश्लथयथः P.
२१. चोदयितौ P. शत्रूणां प्रेरकौ Sy.
२२. युवाम् Sy.
२३. रक्षतं P. अवतम् Sy.
२४. तस्मिन् P.
२५. भयस्थाने युद्धे । 'घञर्थे कविधानम्' (VPa. 3.3.58.) इत्यधिकरणे कप्रत्ययः । मरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वम् Sy.
२६. कुरुतम् Sy.
२७. विलोभन० P. तस्मिन् युद्धे भयरहितं स्थानम् Sy.
२८. VM. ignores हि and उ ॥ हि खलु । उ इति पूरणः Sy.

न मां तमन्न श्रमन्नोत तन्द्रन्न वोचाम मा सुनोतेति सोमम् ।
यो मे पृणाद्यो ददद्यो निबोधाद्यो मां सुन्वन्तमुप गोभिरायत् ॥ ७ ॥

न[1] मा तमत् । न । माम्[2] । इन्द्रो ग्लपयतु[3] । स्वयं च न । श्राम्यतु[4] । अपि[5] च । मां[6] तन्द्रि[7] करोतु । वयं प्रमादादपि सोमम्[8] । मा । सुनोत[9] । इति[10] । न[11] । वोचाम[12] । यः[13] । मम । कामं पूरयति[14] । यश्च । धनं प्रयच्छति[15] । उक्तं[16] च शृणोति । यश्च । माम् । सुन्वन्तम्[17] । गोभिः[18] सह । उपागच्छतीति[19] ।

सरस्वति त्वमस्माँ अविड्ढि मरुत्वती धृषती जेषि शत्रून् ।
त्यं चिच्छर्धन्तं तविषीयमाणमिन्द्रो हन्ति वृषभं शण्डिकानाम् ॥ ८ ॥

सरस्वति[20] । "सरस्वति त्वमसि' अस्मिन्नर्धर्चे मध्यमा तु वाक्" इति शौनकः ॥ हे

---

१. M. omits the commentary on this stanza.
२. स इन्द्रो माम् Sy.
३. ग्लपयतु P.
तमयतु ग्लपयतु Sy.
४. श्रान्तं करोतु । 'तमु ग्लानौ', 'श्रमु तपसि खेदे च' अनयोर्हेतुमण्ण्यन्तयोर्लेटचडागमः । 'छन्दस्युभयथा' (Pa. 3.4.117.) इति शप आर्धधातुकत्वात् 'णेरनिटि' (Pa. 6.4.51.) इति णिलोपः Sy.
५. अविग P.
६. माना P.
७. वीन्द्रीं P. तन्द्रयेत् । तन्द्रयालस्येन युक्तं मा करोतु । तन्द्रीशब्दात् 'तत्करोति०' (GaṇaSūtra on Pa. 3.1.26.) इति णिच् । 'णाविष्ठवत्प्रातिपदिकस्य' ? (प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च) इति (GaṇaSūtra 3. on Pa. 3.1.26.) टिलोपः । अन्यत्पूर्ववत् Sy.
८. इन्द्रयागाय सोमम् Sy.
९. अभिषुणुत । सुनोतेत्यत्र 'तप्तनप्तनथनाश्च' (Pa. 7.1.45.) इति तस्य तबादेशः । तस्य पित्त्वेन ङित्त्वाभावाद् गुणः Sy.
१०. इति अन्यान् यजमानान् प्रति Sy.
११. प्र P.
१२. हिचोम P. अवाम । वक्तेश्छान्दसो लुङ् Sy. १३. इन्द्रः Sy.
१४. कामान् पूरयेत् । लेटचाडागमः Sy.
१५. अभीष्टं फलं दद्यात् Sy.
१६. यश्चास्मदीयं स्तोत्रं यागं वाऽवगच्छेत् Sy.
१७. सोममभिषुण्वन्तं माम् Sy.
१८. अस्मभ्यं दातव्यैः गोभिः सह Sy.
१९. उपग P. उपागच्छेत् । स इन्द्र इति पूर्वत्रान्वयः Sy.
२०. BD. 4.85. BD. reads त्वमित्यस्मिन्न० for त्वमसि अस्मिन्न०

सरस्वति[1] ! त्वम्। अस्मान्[2]। रक्ष[3]। मरुद्भिस्तद्वती[4]। धर्षयन्ती। जयसि[5]। शत्रून्[6]। त्वम्[7]। चित्। वेगं कुर्वन्तम्[8]। बलमिवाचरन्तम्[9]। इन्द्रः। हन्ति[10]। असुराणाम्[11]। ईश्वरं[12] वृत्रम्, ऋर्तुति ?

**यो नः सनुत्य उत वा जिघत्नुरभिख्याय तं तिगितेन विध्य।**
**बृहस्पत आयुधैर्जेषि शत्रून्द्रुहे रीषन्तं परि धेहि राजन् ॥ ९ ॥**

यो[13] नः सनुत्यः। यः। अस्माकम्। अन्तस्तिष्ठति[14]। अपि। च[15]। अस्मान् जिघांसति[16]। तम्। अभिदृष्ट्वा[17]। तेजितेनायुधेन[18]। तं विध्य[19]। बृहस्पते ! त्वम्। आयुधैः[20]। शत्रून्[21]। जेषि[22]। हे राजन्[23] ! हिंसन्तम्[24]। द्रोग्धुम्[25]। परितो निधेहि[26]।

---

१. हे सरणवति ! देवि ! Sy.
२. अस्मन् P. स्तोतॄन् Sy.
३. अविद्धि रक्ष। रक्षार्थस्यावतेर्लेटि एतद्रूपम् Sy.
४. तथा मरुद्भिर्युक्ता। मध्यमस्थाना हि वाक् सरस्वती, मरुतश्च मध्यमस्थानस्थाः। अतस्तद्वती सती Sy.
५. जेषि जय। जयतेश्छान्दसः शपः श्लुः ? (शपो लुक्) Sy.
६. शत्रु P. शातयितॄन् वैरिणः Sy.
७. तमप्यसुरम् Sy.
८. प्रसहनशीलम्। 'शृधु प्रसहने' Sy.
९. बलं चापरन्तम् P. तविषी बलमिवाचरन्तं सर्वस्य भञ्जने शक्तम् Sy.
१०. हतवान्। व्यत्ययेन भूतार्थे लट् Sy.
११. अस्वरा० P. 'शण्डामर्कावसुरपुरोहितौ' (TS. 6.4.10.1.) शण्डवंश्यानां मध्ये Sy.
१२. प्रधानम् Sy.
१३. M. omits the commentary on this stanza.
१४. अन्तर्हिते देशे भवश्चोरः। 'सगर्भसयूथसनुताद्यन्' (Pa. 4.4.114.) Sy. सनुतरित्यन्तर्हितनाम Ngh. 3.25.
१५. वा Sy.
१६. यो जिघांसुर्भवति Sy.
१७. अभिवृश्य is suggested for अभिदृष्ट्वा ॥ संवीक्ष्य Sy.
१८. तीक्ष्णेनायुधेन Sy.
१९. ताडय Sy.
२०. आयोधनसाधनैरिष्वादिभिः Sy.
२१. तथास्मदीयान् शत्रून् Sy.
२२. जय Sy.
२३. तथा हे राजमान ! Sy.
२४. हिंसन्तं वज्रम् Sy.
२५. द्रोग्धम P. द्रोग्ध्रे शत्रवे Sy.
२६. परितो धारय प्रक्षिपेत्यर्थः Sy.

**अस्माकेभिः सत्वभिः शूर शूरैर्वीर्या कृधि यानि ते कर्त्वानि ।**
**ज्योगभूवन्ननुधूपितासो हत्वी तेषामा भरा नो वसूनि ॥ १० ॥**

[1]अस्माकेभिः । अ[2]स्माकीनैः । शू[3]रैः । पुरु[4]षैः सह । त्वं वीर्या[5]णि । कुरु । यानि । त[6]व वीर्येण । कर्त[7]व्यानि । चि[8]रम् । अभू[9]वन् शत्रवः । धूमाय[10]मानहृदयाः । तान्[11]हत्वा । तेषा[12]म् । वसू[13]नि । अस्मा[14]कम् । आभ[15]र ।[16]

**तं वः शर्धं मारुतं सुम्नयुर्गिरोप ब्रुवे नमसा दैव्यं जनम् ।**
**यथा रयिं सर्ववीरं नशामहा अपत्यसाचं श्रुत्यं दिवेदिवे ॥ ११ ॥**

[1]तं वः शर्धम् । शौनकः—"बृह[17]स्पतिस्तुतिः 'यो[18] नः' 'तं व[19]ः' ऋक् मरुतां स्तुतिः" इ[20]ति । हे ज[21]नाः ! युष्माकम् । त[22]म् । मा[23]रुतम् । ब[24]लिनम् । सुखमिच्छन्तम् । स्तु[25]त्या । उप[26]ब्रुवे । न[27]मसा च । दै[28]व्यम् । ज[29]नम् । मरुतां प्र[30]सादाद् धनम् । वी[31]रम् । व्या[32]प्नुवाम । पुत्राणां स[33]म्भक्ता ।

---

१. The commentary on this stanza is omitted in M.
२. आस्माकीनैः is suggested for अस्माकीनैः ।
३. शौर्योपेतैः Sy.
४. सत्वभिः परेषां सादकैर्भटैः Sy.
५. वीरकर्माणि Sy. ६. त्वया Sy.
७. करणीयानि । 'कृत्यार्थे तवैकेन्०' (Pa. 3.4.14.) इति करोतेस्त्वन्प्रत्ययः Sy.
८. चिरकालम् Sy. ९. आसन् Sy.
१०. धूमायमानहृदया मदीयाः शत्रवः Sy.
११. हत्वी–'स्नात्व्यादयश्च' (Pa. 7.1.49.) इतीकारः Sy.
१२. शत्रूणाम् Sy. १३. धनानि Sy.
१४. अस्मभ्यम् Sy. १५. आहर Sy.
१६. VM. ignores शूर ॥ हे शौर्यवन्निन्द्र! Sy.
१७. ०स्पति तु P.
१८. RV. 2.30.9.
१९. RV. 2.30.11.
२०. BD. IV. 85.
२१. हे मरुतः ! Sy.
२२. तत् P.
२३. मरुत्समूहरूपम् Sy.
२४. बलम् Sy.
२५. स्तोत्या P. स्तोत्रेण Sy.
२६. स्तौमि Sy.
२७. मनसा P. नमस्कारेण हविषा वा Sy
२८. देवेनेन्द्रेण सम्बद्धम् Sy.
२९. प्रादुर्भूतम्, एवंगुणविशिष्टं बलम् Sy.
३०. प्रसाद् P.
३१. सर्वैर्वीरैर्विशेषेण शत्रूणां प्रेरकैर्भटैरुपेतम् Sy.
३२. व्याप्नवाम is suggested for व्याप्नुवाम ॥ लेटचाडागमः 'वैतोऽन्यत्र' (Pa. 3.4.96.) इत्यैकारः Sy. नशतिर्व्याप्तिकर्मा Ngh. 2.18.
३३. सम्भक्त is suggested for सम्भक्ता ॥ अपत्यैरपतनहेतुभूतैः पुत्रादिभिरुपेतम् Sy.

श्रवणीयम्[१] । अन्वहमिति[२] ।[३]

II. 31.

अस्माकं मित्रावरुणावतं रथमादित्यै रुद्रैर्वसुभिः सचाभुवा ।
प्र यद्वयो न पप्तन्वस्मनस्परि श्रवस्यवो हृषीवन्तो वनर्षदः ॥ १ ॥

[४]अस्माकम्[५] ॥ वैश्वदेवमिदम् ॥ हे मित्रावरुणौ ! अस्माकम् । रथम्[६] । रक्षतम् । आदित्यादिभिः[७] । सहभुवौ[८] । यथा[९] । प्रपतन्ति[१०] । वसतेः स्वावासात्[११] । पक्षिणः । इव । अन्नमिच्छन्तः । हृष्टाः[१२] । वने सीदन्तो[१३] युद्धार्थमश्वाः[१४] ।[१५]

अध स्मा न उदवता सजोषसो रथं देवासो अभि विक्षु वाजयुम् ।
यदाशवः पद्याभिस्तित्रतो रजः पृथिव्याः सानौ जङ्घनन्त पाणिभिः ॥ २ ॥

अध स्मा[१६] नः । अथ[१७] । अस्माकम् । उद्रक्षत[१८] । सङ्गताः[१९] । रथम् । हे देवाः ! अभि[२०] ।

---

१. श्रवणी P. प्रशस्यभूतम् Sy.

२. अह० P. प्रतिदिवसम् Sy.

३. VM. ignores यथा ।
यथा येन प्रकारेण Sy.

४. 'अस्माकम्' इति सप्तर्चं नवमं सूक्तं गृत्समदस्यार्षं वैश्वदेवम् । अन्त्या त्रिष्टुप् शिष्टा जगत्यः । तथा चानुक्रान्तम्— 'अस्माकं सप्त वैश्वदेवं त्रिष्टुबन्तम्' (KSA. 15.31. p. 14.) इति । विनियोगो लैङ्गिकः Sy.

५. The commentary on this stanza is missing in M.

६. रथमन्नलाभाय प्रवृत्तम् Sy.

७. आदिभिः includes रुद्रैः and वसुभिः ॥ आदित्यैः धात्रर्यमादिभिर्द्वादशभिः, रुद्रैरेकादशसंख्याकैः, वसुभिः धरो ध्रुव इत्यादिभिरष्टसंख्याकैः, एवं त्रिभिर्देवगणैः Sy.

८. सह भवन्तौ सह वर्तमानौ युवाम् Sy.

९. It seems to be the explanation of यत् ॥ यदास्मदीया रथाः Sy.

१०. प्रपतति P. प्रकर्षेण गच्छन्ति । पतेश्छान्दसे लुङि लृदित्वाच्च्लेरङादेशः । 'पतः पुम्' इति पुमागमः Sy.

११. स्वावासत् P. वसन्त्यस्मिन्निति वस्म निवासस्थानम् । औणादिको मनिन् । तस्मात् स्थानात् Sy.

१२. प्राप्तहर्षाः Sy.

१३. वने वृक्षादौ निषण्णाः । वनर्षदः—सांहितिकश्छान्दसो रेफोपजनः Sy.

१४. युद्धार्तमश्वाः P.

१५. VM. ignores परि ।
परि उपरि देशान्तरे । 'पञ्चम्याः परावध्यर्थे' इति सत्वम् । 'अध्यर्थ उपर्यर्थः' इति वृत्तिः Sy.

१६. स्म M. स्व P. १७. अधुना Sy.

१८. उदगमयत । अवतिरत्र गत्यर्थः Sy.

१९. हे समानं प्रीयमाणाः ! Sy.

२०. अभि P. अभिमुखम् Sy.

विशु[१] । अन्नमिच्छन्तम्[२] । यदा । अश्वाः[३] । पद्याभिर्गतिभिः[४] । युद्धदेशम्[५] । तरन्तः[६] । पृथिव्याः[७] । उच्छ्रिते देशे[८] । पुनः पुनर्गच्छन्ति[९] । पाणिभिरश्वपादैः[१०] ।[११]

**उत स्य न इन्द्रो विश्वचर्षणिर्दिवः शर्धेन मारुतेन सुक्रतुः ।**
**अनु नु स्थात्यवृकाभिरूतिभी रथं महे सनये वाजसातये ॥ ३ ॥**

उत स्य[१२] नः । अपि च । अयम्[१३] । इन्द्रः । सर्वद्रष्टा[१४] । अस्माकम् । रथम् । दिव[१५] आगत्य । मारुतेन[१६] । देवेन[१७] सह । सुकर्मा[१८] । सम्प्रति[१९] । अनुतिष्ठति[२०] । अवृकैः[२१] । मरुद्भिः[२२] सह । महते[२३] । लाभाय[२४] । युद्धार्थ[२५]मिति ।

---

१. वि P. प्रजासु जनपदेषु Sy.
२. वाजमन्नं कामयमानं गतिविशेषयुक्तं वा Sy.
३. M. omits the words between अथ and अश्वाः ।
अस्मिन् रथे युक्ता व्यापनशीला अश्वाः Sy.
४. ०र्गदिभिः P.
पादसाध्याभिर्गतिभिः Sy.
५. रञ्जकं मार्गम् Sy.
६. चरन्तः M. तरतेः शतरि 'बहुलं छन्दसि' इति शपः श्लुः । 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम् । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् Sy.
७. प्रथिताया भूमेः Sy.
८. समुच्छ्रिते प्रदेशे Sy.
९. अत्यर्थं गच्छन्ति । हन्तेर्यङ्लुगन्तात् छान्दसो लङ् । व्यत्ययेनात्मनेपदम् । 'बहुलं छन्दसि' इति शपो लुगभावः Sy.
१०. ०पादै P.
पाण्युपलक्षितैः पादैः Sy.
११. VM. ignores स्म and probably explains रजः by युद्धदेशम् ।
१२. स्यः M. and P.
१३. म् P. सः Sy.
१४. स्यद्रष्टा P. विश्वस्य सर्वस्य द्रष्टा, यद्वा विश्वे चर्षणयो मनुष्या यस्य परिचारकाः । अथवा विश्वे सर्वे लोकाश्चर्षणयो द्रष्टव्या येन । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् Sy.
१५. M. omits the words between अपि and दिवः ॥ द्युलोकादागत्य Sy.
१६. मरुत्समूहरूपेण Sy.
१७. देवेन seems to be the explanation of शर्धेन ॥ वेगेन is suggested for देवेन ॥ बलेन सह Sy.
१८. M. omits the words between मारुतेन and सु० ।
शोभनकर्मा शोभनप्रज्ञो वा Sy.
१९. अद्य Sy.
२०. अनुष्टति P.
आनुगुण्येनाधितिष्ठतु । छान्दसः शपो लुक् Sy.
२१. हिंसकरहिताभिः Sy.
२२. रक्षाभिः सहितः सन् Sy.
२३. मते P.
२४. धनाय Sy.
२५. युद्धार्त्थ० P. वाजस्यान्नस्य सातये सम्भजनार्थम् Sy.

उत स्य देवो भुवनस्य सक्षणिस्त्वष्टा ग्नाभिः सजोषा जूजुवद्रथम् ।
इळा भगो बृहद्दिवोत रोदसी पूषा पुरंधिरश्विनावधा पती ॥ ४ ॥

उत स्यः । अपि च । अयम्[1] । देवः[2] । भुवनस्य[3] । सेवको[4] द्रष्टा च । त्वष्टा[5] । देवपत्नीभिः[6] । सहितः[7] । रथम्[8] । प्रेरयति[9] । इळा[10] च देवी । भगश्च तथा[11] । बृहद्दिवा[12] च भारती । द्यावापृथिवी[13] । पूषा[14] । सरस्वती[15] । अश्विनौ । च[16] । सर्वस्येश्वरौ[17] इति[18] ।

उत त्ये देवी सुभगे मिथूदृशोषासानक्ता जगतामपीजुवा ।
स्तुषे यद्वां पृथिवि नव्यसा वचः स्थातुश्च वयस्त्रिवया उपस्तिरे ॥ ५ ॥

उत त्ये । अपि च । एते[19] । देव्यौ[20] । शोभनरूपे[21] । मिथुनं[22] दृश्यमाने[23] । उषासानक्ता[24] । लोकानाम्[25] । अपि[26]जुवा प्रेरयित्र्यौ[27] । स्तौमि[28] । यदा । हे[29] विस्तृते[30] ! नवतरेण[31] । वाम्[32] । वचसा[33]

१. सः Sy. २. दानादिगुणयुक्तः Sy.
३. भूतजातस्यSy. ४. सचनीयः सेव्यःSy.
५. M. omits द्रष्टा च त्वष्टा ॥ एवङ्गुणविशिष्टस्त्वष्टा Sy.
६. 'छन्दांसि वै ग्नाः' (SB. 6.5.4.7.) इति तैत्तिरीयकम् । 'गायत्र्यादीनि छन्दांसि च देवपत्न्यः' इत्युक्तम् Sy.
७. समानप्रीतिः Sy.
८. अस्मदीयं रथम् Sy.
९. प्रेरयतु । जु इति सौत्रो धातुर्गत्यर्थः । अस्माण्ण्यन्ताल्लुङि चङि रूपम् Sy.
१०. त्विडा P. तिसृणां देवीनामाद्येडाख्या देवी च रथं प्रेरयतु Sy.
११. M. omits words between इळा and तथा ।
१२. बृहद्दिवां P. बृहन्महद्दीव्यति द्योतत इति बृहद्दिवः । इगुपधलक्षणः कः । 'सुपां सुलुक्०' इति विभक्तेराकारः Sy.
१३. द्यावापृथिव्यौ Sy.
१४. पोषको देवश्च Sy.
१५. बहुधीः Sy. १६. अथशब्दश्चार्थे Sy.
१७. सूर्याया भर्तारौ अश्विनौ च एते सर्वेऽस्मदीयं रथं प्रेरयन्त्वित्यर्थः Sy.
१८. VM. seems to explain सजोषाः by सहितः ।
१९. ते प्रसिद्धे Sy. २०. देव्यः M. देवनशीले Sy. २१. ०रूप P. शोभनधने Sy. २२. मिन् P.
२३. हृश्य० P. मिथः परस्परं पश्यन्त्यौ Sy.
२४. उषाश्च रात्रिश्च Sy.
२५. लेकानाम् M. जङ्गमानाम् Sy.
२६. अपि P.
२७. M. omits अपिजुवा ॥ प्रेरयित्र्यौ भवतः । तस्मादस्मदीयमपि रथं प्रेरयताम् । उत्तरोऽर्धर्चो द्यावापृथिव्योः प्रत्यक्षकृतः Sy.
२८. स्तुवे । उत्तमस्य व्यत्ययेन मध्यमः Sy.
२९. हि P. ३०. ०तेन P.
३१. नवीयसा नवतरेण प्रशस्येन Sy.
३२. युवां त्वां दिवञ्च Sy.
३३. वचः—'सुपां सुलुक्०' इति तृतीयाया लुक् Sy.

सह । स्थावरम्[१] । जङ्गमं च[२] । हविः[३] । त्रिविधान्नाः[४] पुरुषाः । यां प्रदानार्थमुपशृण्वन्ति[५] तदानीं स्तौमीति[६], 'तं[७] वस्त्वराया[८]' इति[९] मन्त्रः ।

उत वः शंसमुशिजामिव श्मस्यहिर्बुध्न्योऽज एकपादुत ।
त्रित ऋभुक्षाः सविता चनो दधेऽपां नपादाशुहेमा धिया शमि ॥ ६ ॥

उत वः शंसम् । अपि च । युष्माकम् । स्तोत्रम्[१०] । कामयमाना[११]नाम[१२]न्येषां यथाऽभ्युदयो[१३] भवत्येवम् । यथाऽभ्युदय[१४]युक्ताः । बुध्ने[१५]ऽन्तरिक्षे भवोऽहिः, बुध्न्यः । अजः[१६] । एकपा[१७]दादित्यः[१८] । त्रिस्थानः[१९] । इन्द्रस्थान[२०] इन्द्रः । सविता[२१] च । अस्मभ्यमन्नम्[२२] । प्रयच्छतु[२३] । अपान्नपा[२४]च्च ।

१. स्थावरस्य व्रीह्यादेः सम्बन्धि Sy.

२. अत्रत्यश्चशब्दश्चर्णिति निपातान्तरं पादपूरणम् Sy.

३. अन्नं चरुपुरोडाशादिलक्षणम् Sy.

४. तिनधानाः P. ओषधिपशुसोमात्मकानि हविर्लक्षणान्यन्नानि यस्य तादृशोऽहम् Sy. वय इत्यन्ननाम N. 6.4.

५. प्रदानात्वमुप॰ M. प्रदार्थमुप॰ P. उपस्तृणे । आज्येनोपस्तरणाभिघारणपूर्वकं प्रयच्छामीत्यर्थः । 'स्तृञ् आच्छादने' लिट्युत्तमे छान्दसो विकरणस्य लुक् । 'ऋत इद्धातोः' इतीत्वम् । . . . 'निपातैर्यद्यदि॰' इति निघातप्रतिषेधः Sy.

६. तेमि P.    ७. नं P.

८. स्वराया P.

९. RV. 1.66.5.

१०. स्तुतिम् Sy.

११. काकाम॰ M.

१२. ॰नानम॰ P.

१३. इवेति सम्प्रत्यर्थीयः । अस्मत्तः स्तुतिं कामयमानानाम् . . . सम्प्रति Sy.

१४. It seems to be the explanation of श्मसि ॥ उश्मसि कामयामहे । 'वश कान्तौ' । 'इदन्तो मसि' । ग्रहिज्यादिना सम्प्रसारणम् । छान्दसो वर्णलोपः Sy.

१५. बुद्धेनन्त॰ M. बुध्नमन्तरिक्षं तत्र भवोऽहिनामा देवः Sy.

१६. न जायत इत्यजः Sy.

१७. एकपदा॰ P.
एक एव पद्यते गच्छतीत्येकपात् । अज एकपात्संज्ञकः सूर्यः Sy.

१८. आदित्य P.

१९. तीर्णतमः Sy.

२०. इन्द्रस्था P. उरुक्षय उरुनिवास ऋभूणां निवासयिता वेन्द्रश्च Sy.

२१. सर्वस्य प्रसविता Sy.

२२. M. omits the words between त्रिस्थानः and अस्म॰ ॥ चनोऽन्नम् Ngh. 4. 3., N. 6. 16.

२३. विदधातु । अस्मभ्यं करोतु Sy.

२४. अपां पौत्रस्थानीयोऽग्निः । अद्भ्य ओषधिवनस्पतयो जायन्ते । ओषधिवनस्पतिभ्यश्चायमग्निर्जायत इत्यग्नेरपां पौत्रत्वम् Sy.

आशुगन्ता[१] । गमनकर्मणा[२] । कर्मणि[३] ।[४]

एता वो वश्म्युद्यता यजत्रा अतक्षन्नायवो नव्यसे सम् ।
श्रवस्यवो वाजं चकानाः सप्तिर्न रथ्यो अह धीतिमश्याः ॥ ७ ॥

एता वः । एतानि । वः[५] । कामये[६] । उद्यतानि[७] । हे यष्टव्याः[८] ! समतक्षन्[९] । मनुष्याः[१०] । नवतराय[११] यानि स्तोत्राणि । यश इच्छन्तः[१२] । अन्नम्[१३] । कामयमानाः[१४] । यथा । अश्वः[१५] । रथे युक्तो[१६] युद्धं प्राप्नोति । एवम् । कर्म[१७] । प्राप्नुवन्तु[१८] ।

## II. 32.

अस्य मे द्यावापृथिवी ऋतायतो भूतमवित्री वचसः सिषासतः ।
ययोरायुः प्रतरं ते इदं पुर उपस्तुते वसूयुर्वां महो दधे ॥ १ ॥

अस्य[१९] मे । हे द्यावापृथिवी[२०] ! युवां[२१] सम्भक्तुमिच्छतः । मम । अस्य ।

---

१. शीघ्रगामी । 'हि गतौ' इत्यस्मात् 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् Sy.
२. स्तुत्या Sy. ३. यज्ञकर्मणि प्रीतो भवत्विति शेषः । यद्वा धिया कर्मणा अस्मदीयेन परिचरणलक्षणेन शमि शं सुखं तन्निमित्तं भवत्विति शेषः Sy. शमीति कर्मनाम Ngh. 2.1.
४. VM. explains उत once only. उत अपि च Sy. ५. युष्मदीयानि Sy.
६. कामयाम् M. कामयम् P.
७. उद्यतानि वचांसि Sy. ८. हे यजनीयाः विश्वे देवाः ! Sy. ९. समक्षन् M. समक्षम् P. कामितानि स्तोत्राणि समस्कुर्वन् Sy. १०. मत्प्रभृतयो मनुष्याः Sy.
११. नववराय M. स्तुत्यतमाय युष्मद्गणाय Sy. १२. श्रवणीयं यशोऽन्नं वात्मन इच्छन्तः Sy. १३. M. omits the words between स्तोत्राणि and अन्नम् ॥ बलम् Sy. १४. "कन दीप्तिकान्तिगतिषु" लिटः कानच् Sy.
१५. सर्पणशीलोऽश्व इव युष्मद्गणः Sy.
१६. युक्ता M. रथसम्बन्धी Sy.
१७. अस्मदीयं कर्म Sy. १८. प्राप्नोतु । 'अशू व्याप्तौ' व्यत्ययेन परस्मैपदमध्यमौ । 'बहुलं छन्दसि' इति विकरणस्य लुक् Sy.
१९. 'अस्य मे' इत्यष्टर्चं दशमं सूक्तं गृत्समदस्यार्षं षष्ठ्याद्यास्तिस्रोऽनुष्टुभः । शिष्टाः पञ्च जगत्यः । प्रथमा द्यावापृथिवीया, ततो द्वे ऐन्द्र्यौ त्वाष्ट्र्यौ वा, ततो द्वे राकादेवत्ये, द्वे सिनीवालीदेवत्ये, अन्त्या गुङ्ग्वादिषड्देवताका । तथा चानुक्रान्तम् 'अस्य मेऽष्टौ जागतं त्र्यनुष्टुबन्तं द्यावापृथिव्यैका द्वे ऐन्द्र्यौ त्वाष्ट्र्यौ वा द्वे द्वे राकासिनीवाल्योरन्त्या लिङ्गोक्तदेवता' (KSA. 15.32. p. 14.) इति । आभिप्लविके चतुर्थेऽहनि वैश्वदेवशस्त्रे आद्यस्तृचो द्यावापृथिवीयनिविद्धानः । तथा च सूत्रितम्—'अस्य मे द्यावापृथिवी इति तिस्रस्ततं मे अप इति वैश्वदेवम्' (ASS. 7.7.) इति Sy.
२०. हे द्यावापृथिव्यौ ! Sy.
२१. वाम् M. माम् P.

वचनस्य[1] । रक्षके[2] । भवतम् । यमोर्द्यावापृथिव्योः[3] । प्रकृष्टम्[4] । अन्नमुत्पन्नं[5] भवति । ते[6] मया । पुरो वर्तमाने । उपस्तुते[7] । तथार्थमिच्छन्[8] । वाम्[9] । महद्धविः[10] । प्रयच्छामि[11] ।[12]

**मा नो गुह्या रिप आयोरहन्दभन्मा न आभ्यो रीरधो दुच्छुनाभ्यः ।**
**मा नो वि यौः सख्या विद्धि तस्य नः सुम्नायता मनसा तत्त्वेमहे ॥ २ ॥**

मा नो गुह्याः ॥ द्वयोरिन्द्रो देवता[13] ॥ मा । अस्मान् । आयोः[14] । गूढाः[15] । हिंसकाः[16] । हिंसिषुः[17] । मा च दम्भिषुः[18] । मा च[19] । अस्मान् । एभ्यः । दुःसुखेभ्यः[20] शत्रुभ्यः । वशं नय[21] । मा[22] च । अस्माकम् । सख्यानि[23] । विश्लथय[24] । तस्यास्य[25] सर्वस्य । अस्मदीयस्य[26] वचनस्य ।

---

१. वक्तीति वचाः स्तोता । असुन् । स्तोतुः Sy.

२. क्षके P. रक्षिके is suggested for रक्षके ।
पालयित्र्यौ Sy.

३. M. omits the words between रक्षके and द्यावा ।

४. प्रकृष्टतरमुत्पद्यत इति शेषः Sy.

५. आयुरित्यन्ननाम Ngh. 2.7.

६. ते द्यावापृथिव्यौ Sy.

७. तत्र तत्र स्थितैः स्तोतृभिः स्तुते Sy.

८. ०र्थमिच्छद् M. ०र्थद P. धनकामोऽहम् Sy.

९. युवाम् Sy.

१०. महो महतः । विभक्तिव्यत्ययः । महता स्तोत्रेण Sy.

११. पुरोदधे पुरस्करोमि Sy.

१२. VM. ignores ऋतायतः and इदम् ॥
ऋतं यज्ञमात्मन इच्छन्तः । इदम् इदानीम् Sy.

१३. हे इन्द्र ! त्वष्टः ! वा Sy.

१४. आय P.
मनुष्यस्य शत्रुभूतस्य Sy.

१५. गूढः M. गोप्या ज्ञातुमशक्याः Sy.

१६. हिंसि० P. M. omits the words between माऽस्मान् and हिंसकाः ॥
हिंसारूपा मायाः Sy.

१७. हिंसिषः P. अहन् उपलक्षणमेतत् । अहनि रात्रौ च Sy.

१८. दम्भीषु P. हिंसिषुः Sy.

१९. तथा Sy.

२०. दुःशुनाः दुच्छुनाः । दुःखकारिणीभ्यः शत्रुसेनाभ्यः Sy. शुनमिति सुखनाम Ngh. 3.6.

२१. नैषीः । 'रध हिंसासंराध्योः' । अस्माण्ण्यन्ताल्लुङि चङि रूपम् Sy. रध्यतिर्वशगमने N. 6.32., 10.40.

२२. वा M.

२३. सखित्वानि Sy.

२४. त्वया वियुक्तानि कार्षीः Sy.

२५. स्यास्य P.
तत् सखित्वम् । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी Sy.

२६. अपि तु अस्माकम् Sy.

बुध्यस्व[1] । सुखमिच्छता[2] । मनसा । तदिदं[3] सर्वम् । त्वाम्[4] । याचामहे[5] ।

**अहेळता मनसा श्रुष्टिमा वह दुहानां धेनुं पिप्युषीमसश्चतम् ।**
**पद्याभिराशुं वचसा च वाजिनं त्वां हिनोमि पुरुहूत विश्वहा ॥ ३ ॥**

अहेळता ।[6] अक्रुध्यता । मनसा । क्षिप्रकारिणीम्[7] । आवह[8] । दुहानाम्[9] । धेनुम्[10] । पय आप्यायन्तीम्[11] । असक्ताम्[12] । ऋग्भिः[13] । स्तोत्रेण[14] । च । शीघ्रम्[15] । बलिनम्[16] । त्वाम् । प्रेरयामि[17] अस्मत्कार्ये[18] । हे पुरुभिराहूत[19] ! सर्वदेति[20] ।

**राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना ।**
**सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम् ॥ ४ ॥**

राकाम्[21] । राकाम्[22] । अहम्[23] ।

---

१. जानीहि Sy.
२. सुखमस्माकमिच्छता Sy.
३. तत् तादृशम् । 'सुपां सुलुक्०' इति तच्छब्दाद् उत्तरस्या विभक्तेर्लुक् Sy.
४. M. omits the words between ०मिच्छता and त्वाम् ।
५. अभिमतफलं याचामहे Sy.
६. हे इन्द्र ! त्वष्टः ! वा Sy.
७. ०कारीणिम् P. सुखकरीम् Sy.
८. आभिमुख्येन प्रापय Sy.
९. दोग्ध्रीम् Sy. १०. गाम् Sy.
११. आप्यायन्तिम् P. प्रवृद्धां पीनाम् । 'प्यायी वृद्धौ' । लिटः क्वसुः । 'लिड्यङोश्च' इति पीभावः । 'उगितश्च' इति ङीप् । 'वसोः सम्प्रसारणम्' इति सम्प्रसारणम् । 'शासिवसिघसीनाञ्च' इति षत्वम् Sy.
१२. सक्तम् P. असक्तावयवाम् Sy.
१३. पादगतिभिः Sy.
१४. वाचा Sy. १५. व्यापनशीलम् Sy.
१६. वेगवन्तम् Sy.
१७. प्रेरयाम M. स्तुतिभिः प्रेरयामि । 'हि गतौ वृद्धौ च' Sy.
१८. ०म्यस्मं कार्ये P.
१९. ०राभूत P. बहुभिराहूतेन्द्र ! त्वष्टः ! वा Sy.
२०. M. omits the words between हे and सर्वदेति । सर्वेष्वहःसु Sy.
२१. पत्नीसंयाजेषु गृहपतेः प्राक् राकासिनीवाल्यौ यष्टव्ये। तत्र राकायागस्य 'राकामहम्' इत्यादिके याज्यानुवाक्ये । सूत्रितञ्च—'राकामहं सिनीवालि कुहूमहमिति द्वे द्वे याज्यानुवाक्ये' (ASS. 1.10.) इति । तथाऽग्निमारुते अप्येते धाय्ये । सूत्रितञ्च—'राकामहमिति द्वे' (ASS. 5. 20.) इति Sy. गृत्समदस्य SKN. गृत्समदस्यार्षम् Dur.
२२. लकान् M.
२३. सम्पूर्णचन्द्रा पौर्णमासी राका, तां देवीम् Sy., BB. मध्यमस्थानां कालविशेषाधिदेवतां वा SKN.

शोभनाह्वानाम्[१] । सुष्टुत्या[२] । हुवे[३] । शृणोतु[४] । अस्मान्[५] । सुघना[६] । तयाऽत्मनैव[७] च । बुध्यताम्[८] । सीव्यतु[९] च । वृष्टिलक्षणा अपः[१०] । सूच्या[११] । अच्छिद्यमानया[१२] स्वायुधभूतया, यास्कस्त्वाह—'सीव्यत्वपः[१३] प्रजननकर्म सूच्या[१४]' इति । ददातु । वीरम्[१५] । शतप्रदम्[१६] ।

---

१. शोभनां ह्वानम् M. स्वाह्वानामाह्वानप्रयोजनकारिणीम् Sy., BB. सुह्वानाम् SKN. स्वाह्वानां, यस्याः शोभनमाह्वानं ताम् Dur.

२. सुष्ठुत्या M. शोभनया स्तुत्या सुष्टुतिशब्दात्तृतीयैकवचनस्य 'सुपां सुलुक्०' इति पूर्वसवर्ण ईकारः Sy. तृतीयैकवचनस्य पूर्वसवर्णः, शोभनया स्तुत्या SKN. शोभनया स्तुत्या Dur.

३. आह्वयामि Sy., BB. ह्वयतेर्लटि, आत्मनेपदे, उत्तमैकवचने 'बहुलं छन्दसि' इति सम्प्रसारणे शपश्च लुकि कृत एतत् । हुवे ह्वयामि SKN. आह्वये Dur.

४. सा च हूयमाना शृणोतु SKN. अस्माभिराहूयमाना शृणोतु Dur.

५. अस्माकमाह्वानम् Sy. अस्माकम् SKN., BB.

६. सुधा P. शोभनधना Sy. सुज्ञानादिका BB. सा च पुनः सुभगा सुघना Dur.

७. आत्मनेव P. श्रुत्वा च स्वयमेव Sy. आत्मना BB. आत्मनैव, यदस्माकं कर्तव्यम् SKN. यदपि च न ब्रूमहे तदपि. . .आत्मनैव बुध्यताम् Dur.

८. अस्मदभिप्रायं बुध्यताम् Sy. आह्वानं श्रुत्वा बोधतु BB. श्रुत्वा च. . .बुध्यतु ? (बोधतु) SKN. कर्तव्यतया तदवगच्छतु Dur.

९. सन्तनोतु यथा वस्त्रादिकं सूच्या स्यूतं चिरं तिष्ठति एवमिदं करोतु Sy., BB. सन्तनोतु SKN. अपि चेदमुच्यते । एवं सीव्यतु, अपः सन्तनोतु Dur.

१०. बुद्ध्वा च कर्म पुत्रोत्पादनलक्षणम् Sy. बुद्ध्वा च कर्म प्रजननाख्यमस्मदभिप्रेतम् BB. कर्मनामैतत्, कर्मप्रजोत्पत्तिलक्षणम् SKN. प्रजननकर्मास्माकम् Dur.

११. सूचीस्थानीयया Sy., BB. सूच्या पुत्रपौत्रादिसन्ततिलक्षणया SKN. प्रजासन्तानेन Dur.

१२. सिच्यमानया (or असिच्यमानया) M. अविच्छिन्नयानुग्रहबुद्ध्या Sy., BB. अविच्छिन्नेन Dur.

१३. M. omits the words between स्वायुधभूतया and त्वपः ।

१४. N. 11.31.

१५. कृत्वा च विक्रान्तम् Sy. विक्रान्तं पुत्रम् BB. पुत्रम् SKN. न च पुनः प्रजामात्रमर्थयामहे, किं तर्हि ? . . . पुत्रम् Dur.

१६. बहुधनं बहुप्रदं वा Sy. बहुधनम् BB. शतानां दातारमर्थिभ्यः SKN. किंलक्षणम् ? शतदायं बहुप्रदम् Dur.

स्तोतव्यमिति ।

यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि ।
ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा ॥ ५ ॥

यास्ते राके । याः । ते । राके ! सुमतयः । सुरूपाः । याभिः सुमतिभिः । प्रयच्छसि ।

---

१. प्रशस्यम् पुत्रम् Sy. कर्मभिः प्रशस्यं स्तोत्रार्हं ददातु BB. वक्तव्या प्रशंसा यस्य तं वक्तव्यप्रशंसमनुपक्षीणकीर्तिमित्यर्थः SKN. अपरिसमाप्तस्तुतिम् Dur. राका रातेर्दानकर्मणः. . . राकामहं सुह्वानां सुष्टुत्या ह्वये । शृणोतु नः सुभगा । बोधत्वात्मना । सीव्यत्वपः प्रजननकर्म । सूच्याऽच्छिद्यमानया । सूची सीव्यतेः । ददातु वीरम् । शतप्रदम् । उक्थ्यं वक्तव्यप्रशंसम् N. 11.32., SKN. IV. 79.

जगतीयं राकादेवता पूर्णतर्कुणा सीमन्तोन्नयने विनियुक्ता । पूर्वपौर्णमासी 'अनुमतिः,' उत्तरा तु 'राका' इत्युच्यते । ताम् 'अहं' भर्ता 'हुवे' ह्वयामि । किम्भूताम् ? 'सुहवां' शोभनाङ्गाम् । कया हुवे ? 'सुष्टुती' शोभनया स्तुत्या । आह्वानप्रयोजनमाह—'शृणोतु' 'नः' अस्माकं वचः । किम्भूता सा ? 'सुभगा' शोभनपुण्या । न केवलं शृणोतु अपि च 'त्मना' आत्मना 'बोधतु' अवधारयतु । सैव भूयः प्रार्थ्यते—'अयः' [The reading of the Veda is अपः and not अयः as read by GV.] एतत् पुत्रजननकर्म्म पुत्रपौत्रादिलक्षणं 'सीव्यतु' । कया ? 'सूच्या' संघट्टनशीलया । किम्भूतया ? 'अच्छिद्यमानया' अभज्यमानया । किञ्च 'वीरं' पुत्रं 'ददातु' । किम्भूतम् ? 'शतदायुमुख्यं' [The reading of the Veda is शतदायमुक्थ्यम् and not शतदायुमुख्यं as read by GV.] शतदायवः प्रभूतदातारः तेषु मुख्यं प्रधानम् । दायुरौणादिकः । सुष्टुती इति 'सुपां सुलुक्०' (Pa. 7.1.39.) इति पूर्वसवर्णः । हुवे इति 'बहुलं छन्दसि' (Pa. 6.1.34.) इति सम्प्रसारणम् । त्मना इति 'मन्त्रेष्वाङ्यादेरात्मनः' (Pa. 6.4.141.) इत्याकारलोपः । अयः इति अदसो दकारस्य व्यत्ययेन यकारः CHMB. 4. 15., p. 57. (Calcutta ed. 1930) This stanza=TS. 3. 3.11.5.

२. M. repeats राके

३. तव Sy., BB.

४. M. omits राके ॥ हे देवि ! Sy., BB.

५. शोभनबुद्धयः Sy. शोभनबुद्धयोऽनुग्रहात्मिकाः BB.

६. शोभनरूपाः Sy. सुरूपाः शोभनविषया वा BB.

७. ददासि BB.

यजमानाय[1] । धनानि । ताभिः सह[2] । अस्मान्[3] । अद्य[4] । सुमना भूत्वा[5] । उपागच्छ[6] [7] । सहस्रधन-पोषम्[8] । यजमानेषु रममाणेति[9] ।[10]

**सिनीवालि पृथुष्टुके या देवानामसि स्वसा ।**
**जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ॥ ६ ॥**

सिनीवालि[11] [12] । यास्कः—'सिनीवालि ! पृथुजघने[13] ! स्तुकः स्त्यायतेः[14] [15] सङ्घातः ।

---

१. हविर्दत्तवते यजमानाय Sy., BB.
२. ताभिर्मतिभिः सहिता त्वम् Sy. ताभिर्मतिभिरुपलक्षिता तथाभूतसङ्कल्पा BB.
३. अन् P. ४. इदानीम् Sy., BB.
५. शोभनमना भूत्वा Sy., BB. ६. उपग॰ P. गमेश्छान्दसः शपो लुक् । 'अनुदात्तोपदेश॰' इत्यादिनानुनासिकलोपः । 'असिद्धवदत्राभात्' इत्यस्यासिद्धत्वाद् हेर्लुगभावः Sy. ७. M. omits the words between अस्मान् and ॰गच्छ ।
८. सहस्रसंख्याकस्य धनस्य पुष्टिम् Sy. बहुनो धनस्य पुष्टिम् BB. ९. ददती । 'रा दाने' । व्यत्ययेन शानच् । छान्दसः शपः श्लुः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् Sy. ददती उपागच्छतीति BB.
१०. VM. ignores सुभगे ॥ हे सुभगे ! शोभनधने ! Sy. हे सुभगे ! कल्याणधनप्रापिणि ! BB.
This stanza=TS. 3.3.11.5. शलल्या सीमन्तोन्नयने विनियोगः । हे 'राके' ! 'याः' 'ते' तव 'सुमतयः' शोभनबुद्धयः । किम्भूताः ? 'सुपेशसः' सुरूपाः । किञ्च 'याभिः' त्वं 'दाशुषे' यजमानाय 'वसूनि' धनानि 'ददासि' । 'ताभिः' सुमतिभिः उपलक्षिता त्वम् 'अद्य' अहनि 'नः' अस्माकम् 'उप' समीपम् 'आगहि' आगच्छ। किम्भूता ? 'सुमनाः' प्रसन्नहृदया । किं कुर्वाणा ? हे 'सुभगे' ! सर्वलोकवल्लभे ! 'सहस्रपोषं' बहुजनपोषकं सुतं 'रराणा' ददाना । दाशुषे इति 'दाशृ दाने' "दाश्वान्साह्वान्मीढ्वांश्च" (Pa. 6. 1.12.) इति लिटि क्वसौ निपात्यते, चतुर्थ्येकवचने वसोः सम्प्रसारणम् । उपागहि इति "बहुलं छन्दसि" (Pa. 2.4.73.) इति शपो लुक्, "अनुदात्तोपदेश॰" (Pa. 6.4.37.) इत्यादिना अनुनासिकलोपः, तस्य "असिद्धवदत्राभात्" (Pa. 6.4.22.) इत्यसिद्धत्वाद् "अतो हेः" (Pa. 6.4.105.) इति हेर्लुग् न भवति ॥ सहस्रपोषम् इति कर्मण्यण् ॥ रराणा इति "रा दाने" इत्यस्मात् परस्य शपो "बहुलं छन्दसि" (Pa. 2.4.76) इति श्लुः, "श्लौ" (Pa. 6.1.10.) इति द्विर्वचनं व्यत्ययेनात्मनेपदं शानच् CHMB. 4.16., p. 58.
११. सिनीवाल्या यागे 'सिनीवालि' इत्यादिके द्वे याज्यानुवाक्ये। सूत्रं पूर्वमुदाहृतम् । तत्रानुवाक्या Sy. १२. ॰वाली P. दृष्टचन्द्रामावास्या सिनीवाली, हे सिनीवालि! Sy. हे सिनीवालि ! मध्यमस्थाने ! देवपत्नि ! पूर्वामावास्याधिदेवते वा ! SKN.
१३. ॰जङ्घने M. पृथुजघने पृथुसंहते वा Sy., BB. स्तुकः स्त्यायतेः, संघातो नितम्बः केशपाशरूपो वा । यद्वा स्तुकशब्देन स्तुतिरुच्यते । पृथुनितम्बे ! पृथुकेशपाशे ! पृथुस्तुके ! SKN. विस्तीर्णजघने! अथवा . . . पृथुकेशकलापे ! अथवा पृथुष्टुते ! Dur. १४. ॰क स्त्या॰ M. ॰कस्त्या॰ P. The omission of *visarga* is not grammatically wrong. १५. ॰यते M. ॰यतः P.

पृथुकेशस्तुका[1] । पृथुष्टुतिर्वा[2] । या[3] देवानामसि[4] । स्वसा[5], सु असि[6] । स्वेषु सीदतीति वा । जुषस्व[7] हव्यम[8]आहुतम्[9] । प्रजां[10] च देवि[11] ! दिश[12] नः[13] ।[14]

**या सुबाहुः स्वङ्गुरिः सुषूमा बहुसूवरी ।**
**तस्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोतन ॥ ७ ॥**

या सुबाहुः । या[15] । शोभनबाहुः[16] । शोभनाङ्गुलिः[17] । शोभनप्रजा[18] । बहूनां[19] जनयित्री ।

---

१. पृथुकश॰ P. N. reads पृथुकेशस्तुके ।। स्तुकं केशभारः स्तुतिः कामो वा । हे पृथुकेशभारे ! महास्तुते ! वा पृथुकामे ! वा Mah. पृथुसंयमितकेशभारे ! महास्तुतिर्वा पृथुष्टुका U. २. वा is omitted by P. N. reads पृथुष्टुते वा । ३. N. adds त्वम् after या ।

४. भवसि Sy., Mah., U. N. adds स्वसा after असि ।

५. स्वयं सञ्चारिणी भगिनी Sy. भगिनी Mah., U. स्वयं सारिण्यसि वृष्ट्यादीनां भगिन्येव वा समानकार्यत्वात् BB. साहचर्याद् भगिनीस्थानीया SKN. भगिनी माध्यमिकानाम् Dur.

६. स्वसा M. P. ७. सेवस्व Sy., BB. प्रीत्या गृह्णीष्व Mah. तां त्वां ब्रवीमि, जुषस्व प्रीत्या परिगृह्णीष्व U. सा त्वम् . . .सेवस्व SKN. सा त्वम् . . . आसेवस्वैतत् Dur.

८. अस्मदीयं हविः Sy. हविः U. इदं हव्यं हविः SKN. ९. सा त्वमाहुतमाभिमुख्येनाग्नौ प्रक्षिप्तम् Sy. अभिहुतमग्नौ U. मर्यादया हुतम् SKN. मर्यादया विधानतो हुतमस्माभिः Dur. The reading of the shorter recension in N. is अदनम् for आहुतम् ।

१०. पुत्रादिकाम् Sy. प्रजां पुत्रादिकाम् BB. आसेव्य च. . .प्रजामस्माकम् Dur.

११. देवी P. सिनीवालि ! Sy.

१२. उपचिनु अतिसर्जय वा । देहीत्यर्थः । 'दिह उपचये' लोटि छान्दसः शपः श्लुः । 'दिश अतिसर्जने' इत्यस्माद्वा Sy. देहि Mah. अतिसृज U. उपचिनु । देहीत्यर्थः । दिहेर्लोटि शपश्श्लुः BB. प्रदिश देहि SKN. अतिसृज देहीत्याशास्महे Dur.

१३. N. 11.32. नोऽस्माकम् Sy., Dur. अस्मभ्यम् Mah., U., BB., SKN.

१४. सिनीवाली कुहूरिति देवपत्न्याविति नैरुक्ताः । अमावास्ये इति याज्ञिकाः । 'या पूर्वामावास्या सा सिनीवाली । योत्तरा सा कुहूः'(KS. XII. 8. AB. VII. 11. 3.). इति विज्ञायते । सिनीवाली सिनमन्नं भवति । सिनाति भूतानि । वालं पर्व वृणोतेः । तस्मिन्नन्नवती । वालिनी वा । वालेनेवास्यामणुत्वाच्चन्द्रमाः सेवितव्यो भवतीति वा । तस्या एषा भवति N. 11. 31., SKN. IV. 80.
This stanza=YV. 34.10=TS. 3.1.11.3.

१५. सिनीवाली Sy. १६. ॰बाहोः P.

१७. ॰लि P.

१८. ॰प्रबजा P. सुष्ठु प्रसवित्री । 'षूङ् प्राणिप्रसवे' । 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । कृदुत्तरपदप्रकृतिस्वरत्वम् Sy.

१९. बहूव् P. बह्वीनां प्रजानां सवित्री । तेनैव सूत्रेण क्वनिप् । 'वनो र च' इति ङीब्रेफौ । कृदुत्तरपदप्रकृतिस्वरत्वम् Sy.

तस्यै । विशां पालयित्र्यै । सिनीवाल्यै । जुहोतन । हविः ।

उत्तरा निगदव्याख्याता ।

या गुङ्गूर्या सिनीवाली या राका या सरस्वती ।
इन्द्राणीमह्व ऊतये वरुणानीं स्वस्तये ॥ ८ ॥

[ या गुङ्गूः । ] या । गुङ्गूः इति कुहूमाहेति ।

II. 33.

आ ते पितर्मरुतां सुम्नमेतु मा नः सूर्यस्य संदृशो युयोथाः ।
अभि नो वीरो अर्वति क्षमेत प्र जायेमहि रुद्र प्रजाभिः ॥ १ ॥

आ ते पितः ।

---

१. विश्पत्न्यै–'विभाषा सपूर्वस्य' इति पत्युर्नकारान्तादेशः । अयस्मयादित्वेन भत्वाद् विशो जश्त्वाभावः । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् Sy.

२. M. omits सिनीवाल्यै ।

३. हे ऋत्विग्यजमानाः ! जुहुत । 'तप्तनप्तनथनाश्च' इति तनबादेशः Sy.

४. The *pratika* is supplied by the Editor.

५. याम् P.                ६. ङ्गूः P.

७. अत्र गुङ्गूशब्देन राकासिनीवाल्योः साहचर्यात् कुहूरुच्यते । या । गुङ्गूः कुहूः । तामह्वे आह्वयामि । एवमुत्तरत्रापि योज्यम् । इन्द्राणीमिन्द्रस्य पत्नीम् । ऊतये रक्षणार्थमह्वे आह्वयामि । तथा वरुणानीं वरुणस्य पत्नीम् । स्वस्तयेऽविनाशाय आह्वयामि । 'इन्द्रवरुण०' इत्यादिना ङीष् आनुगागमश्च Sy.

८. चतुर्थेऽनुवाके एकादश सूक्तानि । तत्र 'आ ते पितः' इति पञ्चदशर्चं प्रथमं सूक्तं गृत्समदस्यार्षं त्रैष्टुभं रौद्रम् । अनुक्रान्तञ्च—'आ ते पञ्चोना रौद्रम्' (KSA. 15.33. p. 14.) इति । शीलगवादिरुद्रयागेषु अनेन सूक्तेन प्रतीची दिगुपस्थेया । सूत्रितं च 'कद्रुद्रायेमा रुद्राया ते पितरिमा रुद्राय स्थिरधन्वन इति सर्वरुद्रयज्ञेषु दिशामुपस्थानम्' ( AGS. 4.8.23. ) इति । रुद्रदेवत्ये पशौ 'आ ते पितः' इति हविषोऽनुवाक्या । सूत्रितञ्च–'आ ते पितर्मरुतां सुम्नमेतु प्र बभ्रवे वृषभाय श्वितीच इति तिस्रः' (ASS. 3.8.) इति । अत्र शौनकः—

'चतुर्दशीमुपोष्यैकां कृष्णस्य जुहुयाच्चरुम् ।
'आ ते' सूक्तेन रौद्रेण प्रत्यृचं वाग्यतः शुचिः ॥
पूर्वमाज्याहुतीर्हुत्वाऽथोपस्थाय च शङ्करम् ।
हविःशेषेण वर्तेत एकान्तरमतन्द्रितः ॥
पूर्णमासे जयेन्मृत्युं रोगांश्च परिमुच्यते' ।
[पूर्णे मासि. . .रोगेभ्यश्च प्रमुच्यते RgV.]
(RgVidhāna 1.167–169) इति Sy.

हे[1] मरुताम्,[2] पितः[3] ! तव[4] । सुखम्[5] । अस्मानायातु[6] । मा । अस्मान् । सूर्यस्य । सन्दर्शनात्[7] । पृथक्[8] कुरु । तथाऽस्माकम्[9] । पुत्रः[10] । अश्वे[11] । शक्तो भवतु[12] । हे रुद्र ! तव प्रसादात् । प्रजाभिश्च[13] । वयं प्रजायेमहि[14] ।

**त्वादत्तेभी रुद्र शन्तमेभिः शतं हिमा अशीय भेषजेभिः ।**
**व्यस्मद् द्वेषो वितरं व्यंहो व्यमीवाश्चातयस्वा विषूचीः ॥ २ ॥**

त्वादत्तेभिः । त्वया दत्तैः । हे रुद्र ! सुखतमैः[15] । भैषजैः[16] । शतम् । संवत्सरान्[17] । व्याप्नुयाम्[18] । अस्मत्तः[19] । शत्रून्[20] । विचातय[21] । पृथक् कुरु[22] । पापं च दूरतरम्[23] । एवं राक्षसांश्च[24] । नानादिक्कानिति[25] ।[26]

---

१. तव P.

२. मरुत्संज्ञानां देवानाम् Sy.

३. उत्पादक ! रुद्र ! ...रुद्रस्य च मरुतां पितृत्वम् 'इदं पित्रे मरुताम्' (RV. 1.114.6.) इत्यत्राख्यायिकामुखेनावादिष्म...'परमपि छन्दसि' इति षष्ठ्यन्तस्य पूर्वामन्त्रिताङ्गवद्भावात्सर्वानुदात्तत्वम् Sy.

४. त्वदीयम् Sy.

५. अस्मभ्यं दातव्यं सुखम् Sy.

६. आगच्छतु Sy. ७. संदर्शन M.

८. पृथक्कार्षीः । 'पृ मिश्रणामिश्रणयोः' । लङि छान्दसः शपः श्लुः । 'छन्दस्युभयथा' इत्यार्धधातुकत्वेन ङित्त्वाभावाद् गुणःSy.

९. M. omits कुरु and तथा ।

१०. पुत्रे P. वीर्यवान् पुत्रादिः Sy.

११. अर्वति शत्रौ । 'भ्रातृव्यो वा अर्वा' (TS. 6.3.8.4.) इति श्रुतेः Sy.

१२. अभिभवतु । यद्वा वीरस्त्वं नोऽस्मानभिक्षमेथाः, अस्मान् कृतापराधान् अभिक्षमस्व Sy.

१३. पुत्रपौत्रादिभिः Sy.

१४. प्रभूताः स्याम Sy.

१५. अतिशयेन सुखकरैः Sy.

१६. औषधैः Sy.

१७. हेमन्तान्, शतसंवत्सरान् Sy.

१८. प्राप्नु० P. M. omits व्याप्नुयाम् ॥ अशीय–अश्नोतेर्लिङि छान्दसो विकरणस्य लुक् Sy.

१९. ०स्मत्त P. २०. द्वेष्टृन् Sy.

२१. विमात० P. विनाशय Sy.

२२. अत्यन्तं विचातयस्व Sy.

२३. दूरम् P.

२४. रोगान् Sy.

२५. ०दिकानि० P. विषु नाना अञ्चतीः कृत्स्नशरीरव्यापकान् रोगान् विचातयस्व अस्मत्तः पृथक्कृत्य विनाशय Sy.

२६. VM. ignores वि twice and seems to explain वितरम् by पृथक्कुरु ।

श्रेष्ठो जातस्य रुद्र श्रियासि तवस्तमस्तवसां वज्रबाहो ।
पर्षि णः पारमंहसः स्वस्ति विश्वा अभीती रपसो युयोधि ॥ ३ ॥

श्रेष्ठः[१]। सर्वस्य भूतजातस्य[२]। त्वमेव श्रेष्ठः[३]। भवसि। श्रिया[४]। वेगवत्तमः[५]। वेगवतामपि[६]। आयुधयुक्तबाहो[७]! स त्व[८]मस्मान्[९]। पारय[१०]। पापस्य। पारम्[११]। अविनाशेन[१२]। रपसः[१३] पापस्य। सर्वाः[१४]। अभीतीः[१५], अभिगतीः[१६]। पृथक्[१७] कुरु[१८]।

मा त्वा रुद्र चुक्रुधामा नमोभिर्मा दुष्टुती वृषभ मा सहूती ।
उन्नो वीराँ अर्पय भेषजेभिर्भिषक्तमं त्वा भिषजां शृणोमि ॥ ४ ॥

मा त्वा। हे रुद्र! नमस्कारैः[१९]। मा। त्वाम्। क्रोधयाम[२०]। मा[२१] च। दुस्तोत्रेण[२२]। हे वृषभ[२३]! मा च। अन्यैर्देवैः सहूत्या[२४] 'सोमारुद्रा वि वृहतम्'[२५] इत्यादिकया। अस्माकम्। वीरान्[२६]। उत्थापय[२७]। भेषजैः[२८]। भिषक्तमम्[२९]। त्वा[३०]। भिषजाम्[३१]। शृणोमि[३२] वृद्धेभ्य इति।

---

१. श्रेष्ठ P.
२. जातस्योत्पन्नस्य सर्वस्य जगतो मध्ये Sy.
३. प्रशस्यतमः Sy. ४. ऐश्वर्येण Sy.
५. अतिशयेन प्रवृद्धोऽसि Sy.
६. M. omits वेगवतामपि ॥ प्रवृद्धानां मध्ये Sy. ७. ०बाहा P. आयुधहस्त! रुद्र! Sy. ८. त्व P.
९. मस्मान् is omitted in P.
१०. पराय P.
११. तीरम् Sy.
१२. विना० P. क्षेमेण Sy.
१३. रपसा M.
१४. सर्व M. १५. अभितीः P.
१६. अभिगच्छतीः M. अभिगमनानि Sy.
१७. युयोधि यौतेश्छान्दसः शपः श्लुः। 'वा छन्दसि' अपित्त्वस्य विकल्पनाद् ङित्त्वाभावे 'अङितश्च' इति हेर्धिः Sy.
१८. VM. ignores रुद्र।
१९. अयथाक्रियमाणैर्नमस्कारैर्हविर्भिर्वा Sy.
२०. क्रोधेयम P. क्रुद्धं (मा) कार्ष्म। 'क्रुध कोपे'। अस्माण्ण्यन्ताल्लुङि चङि रूपम् Sy.
२१. P. omits मा. M. omits मा च
२२. दुःस्तुत्याऽशोभनया स्तुत्या मा चुक्रुधामेत्येव Sy.
२३. हे कामानां वर्षितः! Sy.
२४. सभूत्या M. सुभूत्या P. विसदृशैरन्यैर्देवैः सहाह्वानेन मा क्रोधयाम। श्रेष्ठो हि स्वस्मान्न्यूनेन सहाह्वाने क्रुद्धो भवति Sy.
२५. RV. VI. 74.2[a].
२६. पुत्रान् Sy.
२७. उत्कृष्टं संयोजय Sy.
२८. भेषजे P. त्वदीयैर्भेषजैरौषधैः Sy.
२९. ०तम M., P. अतिशयेन भैषज्यस्य कर्तारम् Sy.
३०. त्वात् M.
३१. चिकित्साभिज्ञानां मध्ये Sy.
३२. ०णोति M., P. 'प्रथमो दैव्यो भिषक्' (TS. 4.5.1.2., VS. 16.5.) इति च मन्त्रान्तरेऽप्युक्तम् Sy.

**ह॒वीम॑भि॒र्हव॑ते॒ यो ह॒विर्भि॒रव॒ स्तोमे॑भी रु॒द्रं दि॑षीय ।**
**ऋ॒दू॒दरः॑ सु॒हवो॒ मा नो॑ अ॒स्यै ब॒भ्रुः सु॒शिप्रो॑ रीरधन्म॒नायै॑ ॥ ५ ॥**

हवीमभिः । होमयोग्यैः[1] । हविर्भिः[2] सह । यः[3] । आहूयते[4] । तं रुद्रम् । स्तोमैः[5] । अवदिषीय[6] पृथक् करोम्यस्मत्[7] । 'ऋदूदरः[8] सोमः[9], मृदूदरः' इति यास्कः[10] । स्वाह्वानः[11] । मा । अस्मान् । अस्यै । पुरुषान्मन्यमानायै[12] । वशं[13] नयतु, अस्य बुद्धिः सर्वान्[14]मन्यत[15] इति । बभ्रुवर्णः[16] । सुहनुः[17] ।

**उन्मा॑ ममन्द वृष॒भो म॒रुत्वा॒न्त्वक्षी॑यसा॒ वय॑सा॒ नाध॑मानम् ।**
**घृणी॑व च्छा॒याम॑र॒पा अ॑शी॒या वि॑वासेयं रु॒द्रस्य॑ सु॒म्नम् ॥ ६ ॥**

उन्मा ममन्द[18] । उन्मदितवान्[19] । कामानां[20] वर्षिता । मरुद्भिः[21] सहितः । दीप्तेन । हविषा[22] । याचमानम्[23] । यथा घर्मगृहीतं[24] भूतम् । छायामश्नुते[25] । एवमरपा[26] अहमपि । सुखम् ।

---

१. M. omits योग्यैः । ह ॥ आह्वानैः स्तुतिलक्षणैः Sy.
२. चरुपुरोडाशादिभिः सहितैः Sy.
३. रुद्रः Sy.
४. आहूयते । स्तूयते । व्यत्ययेन कर्मणि कर्तृप्रत्ययः । 'बहुलं छन्दसि' इति ह्वयतेः सम्प्रसारणम् Sy.
५. स्तोत्रैः Sy.
६. ०दिषिय P. अवखण्डयामि पृथक्करोमि । अपगतक्रोधं करोमीति यावत् । 'दो अवखण्डने' व्यत्ययेनात्मनेपदम् । 'बहुलं छन्दसि' इतीत्वम् Sy.
७. ०स्मत्त P.
८. तद्रूदरः M. ऋद्रूद्रो P.
९. Omitted in M. and P.
१०. N. 6. 4.
११. शोभनाह्वानः Sy.
१२. हन्मीति मन्यमाना बुद्धिर्मना, तस्यै Sy.
१३. वशं नैषीत् । 'रध हिंसासंराद्ध्योः' । अस्माण्ण्यन्ताल्लुङि चङि रूपम् Sy. रध्यतिर्वशगमने N. 6.32.
१४. ०र्वाम० P.
१५. M. omits the words between वशं and ०मन्यत ।
१६. बभ्रुर्भर्ता सर्वस्य, बभ्रुवर्णो वा Sy.
१७. शोभनशिप्रः । एवंगुणविशिष्टः स रुद्रः Sy. शिप्रे हनू नासिके वा N. 6.17.
१८. मन्द M. ममन्दः P.
१९. उन्मन्दि० P. उत्कर्षेण तर्पयतु Sy.
२०. कामनान् M.
२१. मरुद्भिः पुत्रैर्युक्तो रुद्रः Sy.
२२. अन्नेन Sy.
२३. यावामा० P.
२४. अपि चाहं यथा सूर्यकिरणसन्तप्तः Sy.
२५. जाया P. M. omits the words between याचमानम् and छाया० ॥ छायां प्रविशति, एवम् Sy.
२६. ०मरवा M. ०मरपाम् P. अपापः सन् Sy.

प्राप्नुयाम्[1]। आविवासेयम्[2]। अस्य। सुखमधिष्ठानम्[3] आविवासः[4]।[5]

**क्व१ स्य ते रुद्र मृळयाकुर्हस्तो यो अस्ति भेषजो जलाषः।**
**अपभर्ता रपसो दैव्यस्याभी नु मा वृषभ चक्षमीथाः॥ ७॥**

क्व[6] स्य ते। क्व[7]। सः। ते[8]। रुद्र! सुखयिता[9]। हस्तः। यः[10]। विद्यते[11]। भैषज्यकृत्। सुखकरः[12]। अपहर्ता[13]। पापस्य[14]। देवकृतस्य। तादृश[15]! त्वम्। माम्[16]। अत्यन्तम्[17]। अभिक्षमस्वेति[18]।

**प्र बभ्रवे वृषभाय श्वितीचे महो महीं सुष्टुतिमीरयामि।**
**नमस्या कल्मलीकिनं नमोभिर्गृणीमसि त्वेषं रुद्रस्य नाम॥ ८॥**

प्र[19] बभ्रवे। प्रेरयामि[20]। बभ्रवे[21]। वर्षित्रे[22]। श्वेतिमानमञ्चते[23][24]। महतोऽपि। महतीम्।

---

१. व्याप्नुयाम् Sy.

२. अपपिवासेयम् P. अ M. तदर्थं तं रुद्रं परिचरेयम् Sy. विवासतिः परिचर्यायाम् N. 11.23.

३. M. omits सुखमधिष्ठानम्।

४. आपिपास M.

५. VM. ignores मा॥ मा माम् Sy.

६. क्वा M., P.

७. कुत्र वर्तते? Sy.

८. तव Sy.

९. सुखहिता M.

१०. हस्तः Sy.

११. भवति। स हस्तो विद्यत एव। तेन हस्तेन मां रक्षेति भावः Sy.

१२. सर्वेषां सुखकरः Sy.

१३. विनाशयिता भूत्वा Sy.

१४. वामस्य P.

१५. This refers to वृषभ॥ अपि च हे वृषभ! कामानां वर्षितः! Sy.

१६. मम् P.
कृतापराधं माम् Sy.

१७. ०त्यान्त० P.
It seems to be the explanation of नु॥ नु क्षिप्रम् Sy.

१८. 'क्षमूष् सहने' लङि छान्दसः शपः श्लुः। 'बहुलं छन्दसि' इतीडागमः Sy.

१९. रुद्रदेवत्ये पशौ वपापुरोडाशहविषां क्रमेण 'प्र बभ्रवे' इत्याद्यास्तिस्रो याज्याः। 'प्र बभ्रवे वृषभाय श्वितीच इति तिस्र आ पश्चातात्सत्या पुरस्तात्' (ASS.3.8.) इति Sy.

२०. प्रकर्षेणोच्चारयामि Sy.

२१. विश्वस्य भर्त्रे बभ्रुवर्णाय वा Sy.

२२. M. omits वर्षित्रे॥ कामानां वर्षित्रे तद्वत् प्रसह्यकारिणे वा Sy.

२३. श्वेति० P.

२४. ०नञ्च० M. ०नवञ्च० P. श्वैत्यमञ्चते। 'श्विता वर्णे'। औणादिक इन्प्रत्ययः। श्वितिमञ्चतीत्यञ्चतेः 'ऋत्विक्०' इत्यादिना क्विन्। चतुर्थ्येकवचने 'अचः' इत्यकारलोपे 'चौ' इति दीर्घत्वम्। उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम्। एवङ्गुणविशिष्टाय रुद्राय Sy.

सुस्तुतिम्[1] । नमस्यत[2] । नमस्कारैः[3] । दीप्तम्[4], ज्वलन्नामसु पठितं 'कल्मलीकिनम्'[5] इत्युज्ज्वलम्[6] । उच्चारयामः[7] । दीप्तम्[8] । रुद्रस्य[9] । नामधेयम् ।

**स्थि॒रेभि॒रङ्गैः॑ पुरु॒रूप॑ उ॒ग्रो ब॒भ्रुः शु॒क्रेभिः॑ पिपिशे॒ हिर॑ण्यैः ।**
**ईशा॑नाद॒स्य भुव॑नस्य॒ भूरे॒र्न वा उ॑ योषद्रु॒द्राद॑सु॒र्य॑म् ॥ ९ ॥**

स्थिरेभिः । दृढैः[10] । अङ्गैर्युक्तः[11] । बहुरूपः[12] । उद्गूर्णः[13] । बभ्रुवर्णः[14] । 'शुक्रं शोचतेर्ज्वलतिकर्मणः'[15], दीप्तैराभरणैः[16] । अङ्गानि संयोजयति[17] । हिरण्मयैः[18] । अस्य सर्वस्य । बहोः[19] । भुवनस्य[20] । ईश्वरात् । अस्मात् । न । पृथग्भवतु[21] । असुराणां हन्तृ रूपमिति[22] ।[23]

**अर्ह॑न्बिभर्षि॒ साय॑कानि॒ धन्वार्ह॑न्नि॒ष्कं य॑ज॒तं वि॒श्वरू॑पम् ।**
**अर्ह॑न्नि॒दं द॑यसे॒ विश्व॒मभ्वं॒ न वा ओजी॑यो रुद्र॒ त्वद॑स्ति ॥ १० ॥**

अर्हन् । तदर्हस्त्वम्[24] । सायकानि[25] । धनुश्च । बिभर्षि[26] । निष्कमाभरणम्[27] । शोभनम्[28] ।

---

१. शोभनस्तुतिम् Sy. २. पूजय Sy.
३. नमस्कारं P. हविर्भिर्वा Sy.
४. दीप्त M. and P. हे स्तोतः ! कल्मलीकिनम् । ज्वलतो नामधेयमेतत् (Ngh. 1.17.) । ज्वलन्तम् । कलयत्यपगमयति मलमिति कल्मलीकं तेजः तद्वन्तं रुद्रम् Sy. ५. कल्मलिकि० P.
६. इत्युज्वलवद् P.
७. उद्दार० P. गृणीमः सङ्कीर्तयामः । 'गॄ शब्दे' क्र्यादिकः । 'इदन्तो मसि' । 'प्वादीनां ह्रस्वः' Sy.
८. दीप्तं व M. दीप्त P.
९. महादेवस्य Sy.
१०. ०ढै M. स्थिरैर्दृढैः Sy.
११. अवयवैर्युक्तः Sy.
१२. M. omits बहुरूपः । अष्टमूर्त्यात्मकैर्बहुभी रूपैरुपेतः Sy.
१३. उद्गूर्णस्तेजस्वी Sy.
१४. भर्ता बभ्रुवर्णो वा रुद्रः Sy.
१५. ०तेज्व० M. N. 8.11.
१६. ०प्तो आ० P.
१७. दीप्यते । 'पिश अवयवे' । कर्मणि लिट् Sy.
१८. हिरण्मयैर्हितरमणीयैर्वाऽलङ्कारैः Sy.
१९. बहो M. भर्तुः Sy.
२०. भूतजातस्य Sy.
२१. वृभ० P. पृथग्भवति । यौतेर्लेटयडागमः । 'सिब्बहुलं लेटि' इति सिप् Sy.
२२. M. omits असुराणां हन्तृरूपमिति ॥ 'असु क्षेपणे' । 'असेरुरन्' । असुरः क्षेप्ता । 'तत्र साधुः' । असुर्यं बलम् Sy.
२३. VM. ignores वै and उ ।
२४. तदर्हस्त्वम् M. हे रुद्र ! अर्हो योग्य एव सन् Sy. २५. शरान् Sy.
२६. धारयसि Sy. २७. हारं बिभर्षि Sy.
२८. शोभनम् seems to be the explanation of यजतम् ॥ यजनीयं पूजनीयम् Sy.

नानारूपम्[१] । तथार्हस्त्वम्[२] । सर्वम् । महत्[३] । भुवनम्[४] । अनुगृह्णासि[५] । न । त्वत्तः[६] । बलवत्तर-[७] मिह किञ्चित्[८] । अस्ति[९] ।[१०]

स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम् ।
मृळा जरित्रे रुद्र स्तवानोऽन्यं ते अस्मन्नि वपन्तु सेनाः ॥ ११ ॥

स्तुहि[११] श्रुतम्[१२] । स्तोतः ! स्तुहि[१३] । विश्रुतम्[१४] । रथस्थम्[१५] । युवानम्[१६] । मृगम्[१७] । इव । भीमम्[१८] । उपहन्तारं शत्रूणाम् । उद्गूर्णम् । त्वं च रुद्र[१९] ! स्तूयमानः[२०] । स्तोत्रे[२१] । सुखं[२२] कुरु । मत्तः[२३] । अन्यम्[२४] । तव[२५] । सेनाः । निवपन्तु[२६] छिन्दन्तु ।

कुमारश्चित्पितरं वन्दमानं प्रति नानाम रुद्रोपयन्तम् ।
भूरेर्दातारं सत्पतिं गृणीषे स्तुतस्त्वं भेषजा रास्यस्मे ॥ १२ ॥

कुमारश्चित् । बालः[२७] । इव[२८] । पितरम् । प्रह्वीभवन्तम्[२९] । उपगच्छन्तमहं[३०] त्वाम्[३१] ।

---

१. बहुविधरूपयुक्तम् Sy. २. ०र्हस्त्व० P. अर्हन् एव Sy. ३. अतिविस्तृतं जगत् Sy. महन्नामैतत् Ngh. 3.3.

४. भुवनम् seems to be the explanation of इदम् ।

५. गृह्णाति P. दयसे रक्षसि । 'देङ् रक्षणे' Sy.

६. त्तः P. त्वत्तोऽन्यत्किञ्चित् Sy.

७. ओजस्वितरम् । बलवत्तरम् । ओजः-शब्दान्मत्वर्थीयो विनिः । आतिशायनिक ईयसुन् । विन्मतोर्लुक् । 'टेः' इति टिलोपः Sy. ८. किंचि M.

९. Omitted in M. विद्यते । अतस्त्वमेवोक्तव्यापारेषु योज्य इत्यर्थः Sy.

१०. VM. ignores अर्हन् (before निष्कम्) वै and रुद्र ॥ अर्हन् एव । वै खलु । हे रुद्र ! Sy.

११. प्रयाणे मृगस्यामनोज्ञवचः श्रुत्वा 'स्तुहि श्रुतम्' इत्येतां जपेत् । सूत्रितञ्च— 'स्तुहि श्रुतं गर्तसदं युवानमिति मृगस्य' (AGS. 3.10.10.) इति Sy.

१२. M. omits श्रुतम् ।

१३. स्तुति M. १४. प्रख्यातं रुद्रम् Sy.

१५. गर्तो रथस्तत्र सीदन्तम् Sy.

१६. नित्यतरुणम् Sy. १७. सिंहम् Sy.

१८. भयङ्करम् Sy. १९. रुद्रः M.

२०. अस्माभिः स्तूयमानः सन् Sy.

२१. स्तोत्रैः P. स्तोत्रे मह्यम् Sy.

२२. सुखय Sy. २३. मर्तः P.

२४. अस्मद्व्यतिरिक्तं पुरुषम् Sy.

२५. त्वदीयाः Sy. २६. च्छ्यसिन्तु P. निरनन्तु Sy. २७. बलः P.

२८. M. omits इव ॥ यथा Sy. चिदित्येषो ...उपमार्थे N. 1.4.

२९. बह्वीभ० M. वीभ० P. आयुष्मान् भव सौम्य ! इति स्तुवन्तम् Sy.

३०. गच्छन्त्वमह P. अस्मत्समीपे गच्छन्तं त्वाम् Sy. ३१. त्वा M. स्याम् P.

प्रतिर्नाम प्रणतोऽस्मि । तथा स्तौमि च । बहूनः । दातारम् । सतां पतिम् । स्तुतश्च । त्वम् । अस्मभ्यम् । भेषजानि । प्रयच्छसि ।

**या वो भेषजा मरुतः शुचीनि या शंतमा वृषणो या मयोभु ।**
**यानि मनुरवृणीता पिता नस्ता शं च योश्च रुद्रस्य वश्मि ॥ १३ ॥**

या वो भेषजा । हे मरुतः ! यानि । वः । भेषजानि । शुचीनि । यानि । सुखतमानि । यानि च । मयोभूनि । यानि च । सर्वेषामस्माकमर्थाय भवद्भ्यो मनुः । अवृणीत । तानि । रुद्रस्य । शम् । च । योः । च । कामये ।

**परि णो हेती रुद्रस्य वृज्याः परि त्वेषस्य दुर्मतिर्मही गात् ।**
**अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृळ ॥ १४ ॥**

परि णः । रुद्रस्य । आयुधम् । अस्मान् । वर्जयतु । तथा दीप्तस्य ।

---

१. प्रतिनतोऽस्मि Sy.
२. गृणीषे मिपः 'तिङां तिङो भवन्ति' इति सेप्रादेशः Sy.
३. ०हुना M. बहुनो धनस्य Sy.
४. पालयितारम् । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् Sy.
५. स्तुतवतश्च M. स्तुवतश्च P.
६. देहि Sy.
७. VM. ignores रुद्र ।
८. M. omits हे मरुतः ॥ हे रुद्रपुत्राः ! Sy. ९. युष्माकम् Sy.
१०. अस्मदारोग्यहेतुभूतान्यौषधानि Sy.
११. शुद्धानि निर्मलानि सन्ति Sy.
१२. यानि च युष्मदीयानि भेषजानि Sy.
१३. अतिशयेन सुखकराणि Sy.
१४. यानि P.
यानि भेषजानि युष्मदीयानि Sy.
१५. ०भूनि P. मयसः सुखस्य भावयितॄणि Sy. १६. ०मर्त्या० P.
१७. वृतवान् Sy. १८. भेषजानि Sy.
१९. महादेवस्य सम्बन्धि Sy.
२०. यच्छमनीयानां रोगाणामुपशमनम् Sy.
२१. यावनीयानां भयानां यद्यावनमस्मत्तः पृथक्करणं तदुभयञ्च Sy.
२२. काममेय P. वश्मि—'वश कान्तौ' । आदादिकः Sy.
२३. VM. ignores वृषणः । पिता and नः ॥
हे वृषणः ! कामानां वर्षितारः ! मरुतः ! नः अस्मत्पिता Sy.
२४. वरि P.
२५. नः हे तिः is written in a different hand in M.
२६. महादेवस्य Sy.
२७. अस्मात् P.
२८. परिवर्जयतु Sy.
२९. M. omits the words between रुद्रस्य and तथा ॥ दीप्तस्य रुद्रस्य Sy.

दुर्मतिश्च[1]। अस्मानपहाय[2]। गच्छतु[3]। महती। किन्त्वाततज्यानि[4] स्थिराणि धनूंषि। हविष्मद्भ्यः[5]। अवततज्यानि कुरु। हे वर्षितः[6]! पुत्राय[7]। तत्पुत्राय च। न क्रुद्धो भव[8]।

एवा बभ्रो वृषभ चेकितान यथा देव न हृणीषे न हंसि।
हवनश्रुन्नो रुद्रेह बोधि बृहद्वदेम विदथे सुवीराः॥ १५॥

एवा[10] बभ्रो। एवमेव। बभ्रुवर्ण[11]! वृषभ[12]! विद्वन्[13]! देव[14]! यथा[15]। न। क्रुध्यसि[16]। न तम्[17]। हंसि[18] च। तथा स्तोत्रस्य श्रोता[19]। अस्मान्। इहानुकम्प्यान्[20]। बुध्यस्वेति[21][22]।

---

१. दुमति० M. दुःखकारिणी बुद्धिश्च Sy.
२. अस्मान् वर्जयित्वा। 'अपपरी वर्जने' (Pa. 1.4.88.) Sy.
३. गच्छन्तु M.
४. तिज्या० P. स्थिराणि त्वदीयानि धनूंषि Sy.
५. हविर्लक्षणधनयुक्तेभ्यो यजमानेभ्यः Sy.
६. हे सेचनसमर्थ! रुद्र! Sy.
७. अस्मत्पुत्राय Sy.
८. सुखं कुरु Sy.
९. VM. ignores परि।
१०. एवा is written in a different hand in M.
११. M. omits बभ्रु ॥ हे जगतो भर्तः! बभ्रुवर्ण! वा Sy.
१२. कामानां वर्षितः! Sy.
१३. विद्वन् M. सर्वं जानन् Sy.
१४. हे द्योतमान! Sy.
१५. येन प्रकारेण Sy.
१६. 'हृणीङ् लज्जायाम्' अयं क्रुध्यतिकर्मा च Sy.
१७. तम P.
१८. हंसि P. M. omits हंसि
१९. अस्मदीयमाह्वानं शृण्वन् Sy.
२०. इहास्मिन् देशे Sy.
२१. ०स्वेनि P.
२२. VM. ignores रुद्र and the fourth verse.
Sy. explains these words in the following manner:—
हे रुद्र! विदथे यज्ञे गृहे वा। सुवीराः शोभनपुत्राः सन्तः। बृहत् प्रौढं त्वदीयं स्तोत्रं वदेम उच्चारयाम।

## II. 34.

धारावरा मरुतो धृष्ण्वोजसो मृगा न भीमास्तविषीभिरर्चिनः ।
अग्नयो न शुशुचाना ऋजीषिणो भृमिं धमन्तो अप गा अवृण्वत ॥ १ ॥

धारावराः[1] । उदकधाराणां सम्भक्तारः[2] । मरुतः । धृष्टबलाः[3] । मृगाः[4] । इव । भयावहाः[5] । बलैः[6] । अर्चिष्मन्तः[7] । अग्नयः[8] । इव । दीप्यमानाः[9] । पांसुयुक्ताः[10], सोमस्य वा ऋजीषेण तद्वन्तः[11] । भूमिशब्दो[12] वाणवचनः, तथा मन्त्रः—'धमन्तो वाणं[13] मरुतः'[14] इति । ते इमे अपवृण्वन्ति[15] । उदकानि[16][17] ।

---

१. 'धारावराः' इति पञ्चदशर्चं द्वितीयं सूक्तं गार्त्समदं मारुतम् । अन्त्या त्रिष्टुप् शिष्टा जगत्यः । तथा चानुक्रान्तम्—'धारावरा मारुतं त्रिष्टुबन्तम्' (KSA. 15.34. p. 14.) इति । पृष्ठ्याभिप्लवषडहयोस्तृतीयेऽहन्याग्निमारुतशस्त्रस्येदं मारुतनिविद्धानम् । सूत्रितञ्च—'वैश्वानराय धिषणां धारावरा मरुतस्त्वमग्ने—प्रथमो अङ्गिरा इत्याग्निमारुतम्' (ASS. 7.7.) इति Sy.

२. उदकं P. उदकधारयान्तरिक्षमावृण्वन्तः । यद्वा धाराणां धृतानां स्थिराणां वृक्षादीनां निवारयितारश्चालयितारः यद्वा सर्वस्य जगतो धारयितारः Sy.

३. परेषां धर्षकेण बलेन युक्ताः Sy.

४. सिंहाः Sy.

५. भयङ्कराः Sy.

६. आत्मीयैर्बलैः Sy.

७. M. omits the words between वृष्ट० and अर्चिष्० ॥ वृष्टिप्रदानादिना सर्वं जगत्पूजयन्तः Sy.

८. वह्नयः Sy.

९. शुशुचानाः—शुच् दीप्तौ । लिटः कानच् Sy.

१०. पाठसु० M.

११. तद्वन्तः P. ऋजीषमुदकं तद्वन्तः । यद्वा ऋजीषोऽपगतसारः सोमः तेन युक्ताः । तृतीयसवने ह्याग्निमारुते मरुतः स्तूयन्ते । तत्र च दशमद्वयेऽभिषुतं गतसारं सोममभिषुण्वन्ति । अतस्तेषां तद्युक्तत्वम् Sy.

१२. भूमि० M. भ्रमि० P. भ्राम्यन्तं मेघम्, यद्वा भूम्याख्यो वीणाविशेषस्तम् Sy.

१३. वामणं P.

१४. मरुतो M. RV. 1.85.10c.

१५. अव० M. अपावृताः कुर्वन्ति । यथा सर्वैर्दृश्यन्ते तथा प्रवर्षन्तीत्यर्थः । यद्वा अपगतावरणा अकुर्वन् Sy.

१६. मेघान्तर्गता वर्ष्या अपः, यद्वा बलनाम्नासुरेणापिहिता गाः Sy.

१७. VM. ignores धमन्तः ॥ वर्षणार्थमितस्ततः प्रेरयन्तः, यद्वा वादयन्तः Sy.

**द्यावो न स्तृभिश्चितयन्त खादिनो व्यभ्रिया न द्युतयन्त वृष्टयः।**
**रुद्रो यद्वो मरुतो रुक्मवक्षसो वृषाजनि पृश्न्याः शुक्र ऊधनि ॥ २ ॥**

द्यावो न स्तृभिः[1]। द्यावः[2]। इव[3]। नक्षत्रैः[4]। जायन्ते[5] शोभया। खादिभिरुज्ज्वलै[6]रायुधैः। विद्योतन्ते[7] च। अभ्रेभ्यो[8] विनिर्गताः। वृष्टयः[9]। इव धाराकाराः पतन्तः। रुद्रः[10]। यदा। अजनयत्[11]। युष्मान्। रुक्माभरणवक्षसः[12]। वर्षिता[13]। पृश्न्याः[14]। ऊधनि[15] पयसि। शुक्रवर्णे[16], 'पृश्नियै[17] वै पयसो मरुतो जाताः'[18] इति ब्राह्मणम्।[19]

---

१. स्त्रिभिः P.

२. द्युलोकाः Sy. ३. यथा Sy.

४. M. omits इव नक्षत्रैः ॥ स्तृभिः। नक्षत्रनामैतत्। यदाह यास्कः—'ऋक्षाः स्तृभिरिति नक्षत्राणाम्' (N. 3.20.) इति। नक्षत्रैः Sy.

५. ज्ञायन्ते is suggested for जायन्ते ॥ चेतयन्ति स्वात्मानं ज्ञापयन्ति। 'चिती संज्ञाने'। प्रकाशन्त इत्यर्थः Sy.

६. ०रुज्ज्वलै० P. तथा खादिनः शत्रूणां खादका मरुतः स्वकीयैराभरणैर्ज्ञायन्ते। यद्वा खादः कटकम्। तद्युक्ताः सन्तः प्रकाशन्ते Sy.

७. सर्वं जगद्विद्योतयन्ति प्रकाशयन्ति Sy.

८. अभ्रेषु भवा विद्युतः। अभ्रशब्दाद्भवार्थे 'समुद्राभ्राद्घः' इति घप्रत्ययः Sy.

९. वर्षका मरुतः Sy.

१०. महादेवः Sy.

११. अजनयत्। तदानीमिति पूर्वत्र सम्बन्धः Sy.

१२. शेषः प्रत्यक्षकृतः। रुक्मं रोचमानाभरणं वक्षस्युरसि येषां तादृशाः Sy.

१३. वर्षित M. सेचनसमर्थः यद्वा वृषरूपो रुद्रः Sy.

१४. पृश्निर्माध्यमिका वाक् तस्याः सम्बन्धिनि यद्वा पृश्निर्नानावर्णेयं भूमिः गोरूपधरासीत्। तस्यां महेशो वृषो भूत्वा मरुत उत्पादयामासेत्याचक्षते। तदत्रोच्यते। हे मरुतः! यद् यस्माद्वो युष्मान् वृषा वृषरूपो रुद्रः पृश्न्याः गोः शुक्रे निर्मले ऊधनि ऊधसि पयस उत्पत्तिस्थाने अजनि अजीजनत्, तस्माद् यूयमेवंमहानुभावा जाता इत्यर्थः। तथा च तैत्तिरीयकम् 'पृश्नियै वै पयसो मरुतो जाताः' (TS. 2.2.11.4.) इति Sy.

१५ उद्धते प्रदेशे Sy.

१६. M. omits the words between पृश्न्याः and वर्णे। निर्मले Sy.

१७. पृश्न्यायै: M.

१८. TS. 2.2.11.4.

१९. VM. ignores मरुतः।

उक्षन्ते अश्वाँ अत्याँइवाजिषु नदस्य कर्णैस्तुरयन्त आशुभिः ।
हिरण्यशिप्रा मरुतो दविध्वतः पृक्षं याथ पृषतीभिः समन्यवः ॥ ३ ॥

उक्षन्ते[1] । स्नापयन्ति[2] । आत्मीयान्[3] । अश्वान्[4] । गवार्थं[5] यथा युद्धार्थं[6]मश्वान् योद्धारः । तन्तः[7], नदस्य[8] सिन्धोः । कृत्तप्रदेशात्[9] । निर्गच्छन्ति[10] । अश्वैः[11] । हिरण्मयशिरस्त्राणा[12] हिरण्मयहनुका[13] वा । मरुतः । दविध्वतो[14] विध्यन्तः । हविः[15] प्रति । गच्छथ । पृषद्वर्णाभिरश्वाभिः[16] । हे समान[17]मनस्काः !

पृक्षे ता विश्वा भुवना ववक्षिरे मित्राय वा सदमा जीरदानवः ।
पृषदश्वासो अनवभ्रराधस ऋजिप्यासो न वयुनेषु धूर्षदः ॥ ४ ॥

पृक्षे[18] ता[19] । यानि भूतानि[20] मरुतो यजन्ते[21] । तान्यमी[21] । सर्वाण्येव[22] । अन्ने[23] । वहन्ति[24] । मित्रापेक्षायाम्[25], मित्रं प्रति । च[26] । सदैव[27] । क्षिप्रदानाः । पृषद्वर्णाश्वाः[28] ।

---

१. उघन्ते P.
२. सनापयन्त् P. सिञ्चन्ति Sy.
३. आत्मीयात् M. and P. अत्यानिव सततगामिनस्तुरगान् यथा स्वेदापनोदाय उदकैः सिञ्चन्ति तद्वत् Sy.
४. अश्वान् व्याप्तान् लोकान् ॥ 'अशू व्याप्तौ' । औणादिकः क्वन्प्रत्ययः Sy.
५. गवार्त्थं P.
६. युद्धार्त्थं P. सङ्ग्रामेषु Sy.
७. तन्ता P. ८. शब्दवतो मेघस्य Sy.
९. ०प्रदर्शन् P. कृत्तैर्मध्यप्रदेशैः Sy.
१०. M. omits शात् निर्गच्छन्ति ॥ तुरयन्ते वर्षणार्थं वृष्ट्युत्पादनाय त्वरितं गच्छन्ति । 'तुर त्वरणे' । शेषः प्रत्यक्षकृतः Sy. ११. अपि च ते मरुतः शीघ्रगमनैरश्वैः Sy. १२. ०स्त्राण M.
१३. ०मयीह० M. शिप्रं शिरस्त्राणम् । सुवर्णमयशिरस्त्राणाः Sy.
१४. महीरुहादिकं कम्पयन्तो यूयम् । 'धूञ् कम्पने' इत्यस्माद्दाधर्त्यादावेतद्रूपं निपात्यते Sy.
१५. हविर्लक्षणान्नवन्तं यजमानम् । अर्श-आदित्वादच् Sy. पृक्षमन्ननामैतत् Ngh. 2.7.
१६. युष्मद्रथे योजिताभिः श्वेतबिन्द्वङ्किताभिर्मृगीभिर्वडवाभिर्वा Sy.
१७. समानमनस्काः समानक्रोधा वा Sy.
१८. वृक्षे M. वृक्षो P. १९. तां P.
२०. M. omits भूतानि ॥ भुवनान्युदकानि Sy. २१. Omitted by M.
२२. सर्वाप्येव M. सर्वाण्यप P.
२३. पृक्षवते हविर्लक्षणान्नयुक्ताय यजमानाय Sy. २४. मरुत आवहन्ति Sy.
२५. ०पेक्षया P.
२६. प M. वाशब्द उपमार्थः । यद्वा वाशब्दोऽवधारणे । मित्रभूताय यजमानायैव पृक्षेऽन्ने निमित्तभूते सति वृष्ट्युदकान्यावहन्ति Sy. २७. सदा Sy.
२८. ०र्णा श्व M. पृषद्भिः श्वेतबिन्दुभिर्युक्ता अश्वा येषां ते तथोक्ताः Sy.

अनपभ्रष्टधनाः[1] सारथयः । इव । भूतानि[2] मार्गेषु । धुरि सीदन्तः[3] । ऋजु प्रापयन्ति ऋजिप्यास[4] इति[5] ।[6]

इन्धन्वभिर्धेनुभी रप्शदूधभिरध्वस्मभिः पथिभिर्भ्राजदृष्टयः ।
आ हंसासो न स्वसराणि गन्तन मधोर्मदाय मरुतः समन्यवः ॥ ५ ॥

इन्धन्वभिः[7] । उदकप्रधानान्[8]मनुष्यान् दीपयन्तीभिः । महोघ्नीभिः[9] । धेनुभिः[10] सह । अध्वंसनैः[11] । मार्गैः[12] । हे दीप्यमानायुधाः[13] ! आगच्छत[14] । हंसाः । इव श्रेणिशः । स्वनिलयानि[15] । सोमस्य । मदाय[16] । हे मरुतः ! समानमनस्काः[17] ।

आ नो ब्रह्माणि मरुतः समन्यवो नरां न शंसः सवनानि गन्तन ।
अश्वामिव पिप्यत धेनुमूधनि कर्ता धियं जरित्रे वाजपेशसम् ॥ ६ ॥

आ नो[18] ब्रह्माणि । हे मरुतः ! अस्माकम् । स्तोत्राणि[19] । प्रत्यागच्छत[20] । यथा ।

---

१. अप P. 'भृशु भ्रंशु अधःपतने' । अवभ्रंशनमवभ्रः । 'डोऽन्यत्रापि दृश्यते' ? 'अन्यत्रापि दृश्यत इति वक्तव्यम्' (Vārtika 5. on Pa. 3.2.48.) इति डप्रत्ययः । नास्त्यवभ्रो यस्येति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । अनवभ्रं भ्रंशनरहितं राधो धनं येषां ते । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् Sy. २. Omitted by P. गन्तृषु मध्ये Sy. ३. ०दन्त M. धुरि मेघस्य वहने सीदन्तो निषण्णा इत्यर्थः Sy.

४. ऋजिह्वां P. ऋजु अकुटिलं प्राप्नुवन्तो गच्छन्तोऽश्वाः Sy.

५. M. omits the words between ऋजु and इति ।

६. VM. ignores आ ।

७. इन्वभिः P.

८. ०प्रदाना० P. समिन्धनवद्भिः ॥ इन्धनशब्दात् 'छन्दसीवनिपौ०' इति मत्वर्थीयो वनिप् । छान्दसो वर्णलोपः Sy.

९. माहघ्नी० P. महोधस्कैः । ऊधांसि जलस्रोतोमार्गाः । यद्वा 'रप लप व्यक्तायां वाचि' । शब्दायमानोच्छ्रितप्रदेशैः Sy. रिरप्शीति महन्नाम Ngh. 3.3.

१०. प्रीणयितृभिश्च Sy. ११. ध्वंसनरहितैः Sy. १२. पतन्ति गच्छन्तीति पन्थानो मेघाः । एवम्भूतैर्मेघैः सह, मार्गैरेव वा Sy. १३. दीप्यमानायुधा यूयम् Sy.

१४. ०तम M. १५. स्वकीयानि निवासस्थानानि प्राप्नुवन्ति तद्वत् Sy.

१६. मदार्थम् । तत्र दृष्टान्तः Sy.

१७. M. omits the words between निलयानि and मनस्काः ॥ समानक्रोधाः समानतेजसो वा Sy.

१८. ह्नो M. १९. अन्नानि Sy. ब्रह्माणि—अन्ननामैतत् Ngh. 2.7.

२०. आगच्छत । गमेर्लोटि छान्दसः शपो लुक् । 'तप्तनप्तनथनाश्च' इति तस्य तनबादेशः । अत एव ङित्त्वाभावादनुनासिकलोपाभावः । (तत्र दृष्टान्तः) Sy.

ऋत्विजाम्[1] । स्तुतिः[2] । सवनान्[3]यभिगच्छति । तथा[4]ऽस्मदीयां[5] धेनुम्[6] । ऊधनि । आप्यायत[7] पयसा । यथाऽश्वान्[8] यवसेन सुहितान् कुर्वन्ति । कुरु[9] च । स्तोत्रे । कर्म । अत्र संश्लिष्टम्[10]िति[11] ।

**तं नौ दात मरुतो वाजिनं रथं आपानं ब्रह्म चितयद्दिवेदिवे ।**
**इषं स्तोतृभ्यो वृजनेषु कारवे सनिं मेधामरिष्टं दुष्टरं सहः ॥ ७ ॥**

तं नो दात[12] । तम्[13] । अस्माकम्[14] । अश्वम्[15] । रथे[16] नियोगाय । प्रयच्छत[17] । व्याप्नुवानम्[18] । अन्वहम्[19]स्मदर्थम्[20] । शत्रुध्वंसनम्[21] । चेतयत्[22] । तथाऽन्नम्[23] । स्तोतृभ्यः[24] । कर्मणः कर्त्रे[25] च । शत्रुबलेषु[26] स्थितं प्रयच्छत । तथा धनम्[27] । प्रज्ञाम्[28] । अहिंसितम्[29] । दुस्तरम्[30] । सहः[31]स्व[32] ।

---

१. नरामस्माकम् । नरशब्दात् षष्ठीबहुवचनस्य 'अनित्यमागमशासनम्' इति नुडभावः Sy.

२. शंसः शंसनीयं स्तोत्रम् । शंसः कर्मणि घञन्त आद्युदात्तः । 'सुपां सुलुक्०' इत्यमः सुआदेशः Sy.

३. अभिषुतसोमलक्षणानि हवींषि Sy.

४. तदा M. आगत्य च Sy.

५. अस्मयाद् M.

६. धेनु M. उदकदानेन प्रीणयितारम् Sy.

७. M. omits आप्यायत ॥ आप्यायितं कुरुत Sy.

८. ०श्वां M. अश्वामिव । यथाऽश्वाः पीनावयवा भवन्ति तद्वन्मेघं वर्षणसमर्थमाप्यायितं कुरुतेत्यर्थः Sy.

९. कुरुत is suggested for कुरु च. कुरुत । करोतेश्छान्दसः शपो लुक् । पूर्ववत् तशब्दस्य तबादेशः Sy.

१०. वाजेरश्रैराश्लिष्टम् । 'पिश अवयवे' Sy.

११. VM. ignores समन्यवः । समन्यवः समानमनसः समानक्रोधा वा Sy.

१२. दातः M. and P.

१३. पुत्रम् Sy.

१४. अस्मभ्यम् Sy.

१५. वाजिनमन्नवन्तं बलवन्तं वा Sy.

१६. रथे रंहणे युष्मदीय आगमने निमित्तभूते सति Sy.

१७. दत्त प्रयच्छत । छान्दसः शपो लुक् Sy.

१८. आप्नुवन्तम् Sy.

१९. प्रतिदिवसम् Sy.

२०. ०दर्थम् P.

२१. This seems to be the explanation of ब्रह्म ॥ स्तोत्रम् Sy.

२२. प्रज्ञापयत् युष्मद्गुणप्रख्यापकम् Sy.

२३. M. omits the words between शत्रुषु and ऋम् ।

२४. स्तोतृभ्यः, अस्मभ्यं प्रयच्छत Sy.

२५. कत्रे P. स्तोत्रे । वचनव्यत्ययः Sy.

२६. सङ्ग्रामेषु Sy.

२७. धनदातृत्वम् Sy.

२८. ०ज्ञा P. युद्धप्रज्ञानम् Sy.

२९. हिंसि० P. शत्रुभिरहिंसितम् Sy.

३०. शत्रुभिस्तरीतुमशक्यम् Sy.

३१. बलञ्च प्रयच्छत Sy.

३२. VM. ignores मरुतः ।

यद्युञ्जते मरुतो रुक्मवक्षसोऽश्वान्रथेषु भग आ सुदानवः।
धेनुर्न शिश्वे स्वसरेषु पिन्वते जनाय रातहविषे महीमिषम् ॥ ८ ॥

यद्युञ्जते । यदि । युञ्जते[1] । मरुतः । रुक्मालङ्कृतवक्षसः[2] । अश्वान्[3] । आत्मीयेषु रथेषु[4] । धनार्थम्[5] । सुदानाः[6] । तथा धेनुः[7] । इव । वत्साय[8] । अहःसु[9] । पिन्वते[10] । दत्तहविषे[11] । यजमानाय । महद्[12] । अन्नम्[13]इति[14] ।

यो नो मरुतो वृकताति मर्त्यो रिपुर्दधे वसवो रक्षता रिषः।
वर्तयत तपुषा चक्रियाभि तमव रुद्रा अशसो हन्तना वधः ॥ ९ ॥

यो[15] नः[16] । हे मरुतः ! यः । अस्माकम् । वृकतातिः[17], सोल्लोपः[18], आदानपरः । मनुष्यः । हिंसाकर्मा[19] । हे वासयितारः[20] ! तस्माद्धिंसकात्[21] । रक्षतास्मान्[22] । किं च[23] तापयित्र्या । क्रकचाकारया[24]

1. युक्तान् कुर्वन्ति Sy.
2. रोचमानाभरणोरस्काः Sy.
3. अश्व M.
4. M. omits रथेषु ।
5. ०नार्थं P. भजनीये स्थाने धुरीत्यर्थः Sy.
6. शोभनदानाः Sy.
7. धेनुः प्रस्नुतस्तनी सती Sy.
8. वत्सय M. स्वकीयाय वत्साय क्षीरं प्रयच्छति तद्वत् Sy.
9. अहस्सु M. स्वकीयेषु गृहेषु Sy.
10. पिवते P. सिञ्चन्ति किरन्ति । 'पिवि सेचने' । तत्र दृष्टान्तः Sy.
11. तदानीमेव दत्तहविष्काय Sy.
12. महतीम् Sy.
13. अन्नं तत्कारणभूतमुदकं वा Sy.
14. VM. ignores आ । आभिमुख्येन Sy.
आ इत्यर्वागर्थे N. 1.3.
15. ये P.
16. न P.
17. ०तानिः M. and P. आदाता वृकः । 'वृक आदाने' । 'वृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि' (Pa. 5.4.41.) इति स्वार्थिकस्तातिल्प्रत्ययः । तादृशः सन् Sy.
18. सोल्लो० P.
19. M. omits हिंसा ॥ रिषतिः seems to be missing before हिंसाकर्मा।
20. ०यितर् P. मरुतः ! Sy.
21. अस्मा० P.
22. पालयत Sy.
23. चि P.
अस्माकं शत्रुभूतं मर्त्यं तापयित्र्या Sy.
24. ०कपकार० P.
कचकार० M.
ऋष्टयाख्यया शक्त्या Sy.

च । भवतां[1] चक्रियया[2] । तम् । हे रुद्रपुत्राः[3] ! अस्तोत्रस्य[4] । आत्मीयमायुधम्[5] । अवसृजतेति[6] ।[7]

**चित्रं तद्वो मरुतो याम चेकिते पृश्न्या यदूधरप्यापयो दुहुः ।**
**यद्वा निदे नवमानस्य रुद्रियास्त्रितं जराय जुरतामदाभ्याः ॥ १० ॥**

चित्रं तद्वः । हे मरुतः ! तद् । वः[8] । प्रयाणम्[9] । चित्रम्[10] । प्रज्ञायते[11] । पृश्नीति[12] दिवो नाम, तस्याः । मरुत आपयः[13], तत्पुत्रत्वात्[14] । तस्या ऊधः[15] । यत्[16] यस्मिन् प्रयाणे । वृष्टिं भवन्तो दुहन्ति[17] । अपिशब्दः[18] समुच्चये । यत्[19] । वा[19] प्रयाणम् । भवतां स्तुतेः कर्तुः[20] । यो[21] निन्दिता-[22]स्तः[23] शत्रुस्तस्य हननाय[24] भवति । हे रुद्रपुत्रकाः[25] ! किं तदित्याह त्रितमिति, त्रितमृषिम् । जरयितुम्[26] । अनुधावतां वृकाणां[27] हननाय । हे[28] अहिंसिताः !

---

१. भवत is suggested for भवताम् । It seems to be the explanation of वर्तयत ॥ निवर्तयत Sy.
२. क्रिया M. and P.
३. रुद्र is omitted by M.
यद्वा रोदयमाणाः ! द्रवन्तः ! Sy.
४. भक्षकस्य । 'अश भोजने' इत्यस्मादौणादिकोऽसिप्रत्ययः । तादृशस्य राक्षसादेः Sy.
५. हननसाधनमायुधम् Sy.
६. अपविसृ० P. अवयुत्यास्मत्तः पृथक्कृत्य नाशयत । हन्तेर्लोटि 'तप्तनप्तनथनाश्च' इति तनप् Sy.
७. VM. ignores रिपुः । वधे and अभि। रिपुर्वधे रिपुतयात्मानं धारयति । अभि अभितः Sy.
अभि इत्याभिमुख्यम् N. 1.3.
८. M. omits मरुतः । तद् and वः ॥ युष्माकम् Sy.
९. प्रापणम् Sy.
१०. चायनीयम् Sy.
११. सर्वैर्ज्ञायते । इदानीं परोक्षवदाह Sy.
१२. प्रश्नी० P. (Ngh. 1.4.;N. 2.14.) माध्यमिकाया वाचः सम्बन्धिनम् Sy.
१३. आवयः M. प्रापयितारः Sy.
१४. ततपुत्रपात् P.
१५. ऊध M. ऊधर् P. उद्धतं मेघम् Sy.
१६. M. reads प्रर् for यत् which is omitted by P. यद्यदा खलु Sy.
१७. दुहुः दुहेश्छान्दसो लिट् । 'छन्दसि चेति वक्तव्यम्' इति द्विर्वचनाभावः Sy.
१८. अपिशब्दः प्रसिद्धौ Sy.
१९. तद् P. यद्वा यदा च Sy.
२०. स्तुते कर्तु P. नवमानस्य स्तुवतस्त्रितस्य Sy.
२१. M. omits the words between भवतां and यो.
२२. निन्द्रता P.
२३. तादृश० P.
२४. निदे निन्दकाय शत्रवे हिंसां कृतवन्त इति शेषः । 'निदि कुत्सायाम्' । 'क्विप् च' इति क्विप् Sy.
२५. हे रुद्रस्य पुत्रा ! मरुतः ! Sy.
२६. जरणाय विनाशाय—अभूतेति शेषः Sy.
२७. हिंसतां शत्रूणाम् Sy.
२८. ए P. तदानीं हे अहिंस्याः ! Sy.

तान्वो॑ म॒हो म॒रुत॑ एव॒याव्नो॒ विष्णो॑रे॒षस्य॑ प्रभृ॒थे ह॑वामहे ।
हिर॑ण्यवर्णान्ककु॒हान्य॒तस्रु॑चो ब्रह्म॒ण्यन्तः॒ शंस्यं॒ राध॑ ईमहे ॥ ११ ॥

तान्वः[1] । तान् । वः[2] । महतः[3] । मरुतः[4] । एवं गच्छतः[5] । यज्ञस्य[6] । अद्वेषयितुर्यजमानस्य[7] । हविषः सम्भरणानन्तरम्[8] । हवामहे[9] । हिरण्यवर्णान्[10] । उच्छ्रितान्[11] । उद्यतस्रुचो वयम्[12] । स्तुतिं[13] चेच्छन्तः । शंसनीयम्[14] । धनम्[15] । याचामहे ।

ते द॑श॒ग्वाः प्र॑थ॒मा य॒ज्ञमू॑हिरे॒ ते नो॑ हिन्वन्तू॒षसो॒ व्यु॑ष्टिषु ।
उ॒षा न रा॒मीर॑रु॒णैरपो॑र्णुते म॒हो ज्योति॑षा शु॒च॒ता गोअ॑र्णसा ॥ १२ ॥

ते दशग्वाः[16] । ते मरुतः । दर्शनीयगमनाः[17] । प्रथममेव[18] । यज्ञम्[19] । वहन्ति[20] । ते[21] । अस्मान् । प्रेरयन्तु[22] कार्येषु[23] । उषसः[24] । व्युच्छनेषु[25] । उषा । इव[26] । रात्रीः[27] । अरुणैः[28] । महानादित्यः[29] ।

---

१. Both M. and P. omit this *pratika*. A different hand supplies तान् वः महः in M.
२. युष्मान् Sy.
३. M. omits तान् । वः । महतः । महतो महानुभावान् Sy.
४. मता P.
५. एवं गन्तव्यं स्तोत्रं यज्ञं वा गन्तॄन् Sy.
६. विष्णोर्व्यापकस्य ग्रहचमसादिषु सर्वत्र व्याप्य वर्तमानस्य Sy.
७. द्वेषितु० P. एषणीयस्य प्रार्थनीयस्य सोमस्य Sy.
८. ०नन्तर P. प्रभरणेऽभिषवादिभिः प्रकर्षेण सम्पादने सति Sy.
९. हेवम० P. आह्वयामहे Sy.
१०. आहूय च हितरमणीयवर्णान् वा Sy.
११. श्रेष्ठान् स्तुत्यान्वा Sy.
१२. यागायोद्यतस्रुचः Sy.
१३. स्तुति M. ब्रह्म स्तोत्रं तदिच्छन्तो वयम् Sy. १४. प्रशंसनीयम् Sy.
१५. Omitted by M.
१६. दशन्वाः M.
१७. ये दशभिर्मासैः सिद्धिं गता अङ्गिरसस्तद्रूपा भूत्वा Sy.
१८. आदित्येभ्यः प्रथमभाविनः सन्तः Sy.
१९. वयम् M.
२०. अवहन् । आदित्यानामङ्गिरसां च स्वर्गगमनं प्रति स्पर्धमानानां मध्ये पूर्वमेवाङ्गिरसो यागाननुष्ठाय स्वर्गं प्राप्ताः । तथा च श्रूयते—'आदित्याश्चवेहासन्नङ्गिरसश्च तेऽग्रेऽग्निनाग्निमयजन्त' (AB. 1.16.) इति Sy.
२१. तादृशाः Sy.
२२. ०यन्ति M. 'हि गतौ वृद्धौ च' Sy.
२३. कार्येषु M.
२४. ०षसोः M.
२५. विवासेषु प्रभातेषु सत्सु Sy.
२६. यथा Sy.
२७. कृष्णवर्णा रात्रीः Sy.
२८. ०रुणौ M. आरोचमानैः स्वतेजोभिः Sy. २९. महता Sy.
३०. Omitted by M.

ज्योतिषा[1] । दीप्यमानेन । गच्छत्स्रोतसा[2] । रात्रि[3]रपोर्णते[4], सम्प्रति रात्रि[5]र्गतेत्यर्थः ।

ते क्षोणीभिररुणेभिर्नाञ्जिभी रुद्रा ऋतस्य सदनेषु वावृधुः ।
निमेघमाना अत्येन पाजसा सुश्चन्द्रं वर्णं दधिरे सुपेशसम् ॥ १३ ॥

ते क्षोणीभिः[6] । ते मरुतः । आरोचमानैः[7] । आत्मीयैराभरणैः[8] । इव[9] । वीणाभिः[10] सह । रुद्रपुत्राः । उदकस्य । स्थानेष्वन्तरिक्षेषु[11] । वावृधुः[12] । नितरां सिञ्चन्तः[13] । सन्ततगमनेन[14] । बलेन[15] । सुकान्तम्[16] । वर्णम्[17] । धारयन्ति । शोभनपुष्टिकमिति[18] ।

ताँ इयानो महि वरूथमूतय उप घेदेना नमसा गृणीमसि ।
त्रितो न यान्पञ्च होतॄनभिष्टय आववर्तदवरांश्चक्रियावसे ॥ १४ ॥

ताँ इयानः[19] । तान्[20] । अभिगच्छन्[21] । महद् । वारकं[22] लभते । रक्षणार्थम्[23] । तथा सति वयं च[24] । अनेन[25] । नमस्कारेण[26] हतान् । स्तुमः । यो मनुष्यस्त्रितः[27] । इव[28] कूपपतितः ।

---

१. सूर्याख्येन Sy.
२. ०च्छन्स्रो P. ०तस्रसा M. गच्छदुदकेन Sy.
३. रोत्रि० M.
४. ०पोर्जते P. अपोर्णुते is suggested for अपोर्णते ॥ अपवृणोत्यपसारयति । तथा...तमो निवारयन्ति । सूर्यमण्डलमावृण्वतो वृत्रादीन् हत्वा सर्वं जगत्प्रकाशयन्तीत्यर्थः Sy.
५. M. omits रात्रिः ।
६. क्षोभिः P. क्षोणिभिः M.
७. अरुणवर्णैर्वा Sy.
८. रूपाभिव्यञ्जकैरलङ्कारैश्च समन्विताः सन्तः Sy.
९. Omitted by M. नशब्दः समुच्चये Sy.
१०. शब्दकारिभिर्वीणाख्यैर्वीणाविशेषैः Sy.
११. निवासभूतेषु मेघेषु Sy.
१२. वावृधुः M. पृथिन् P. वर्धन्ते Sy.
१३. नितरां मेघादुदकं चिन्तयन्तस्ते Sy.
१४. सततगामिना शीघ्रं व्याप्नुवता Sy.
१५. आत्मीयेन बलेन Sy.
१६. शोभनाह्लादनम् Sy.
१७. कान्तिम् Sy.
१८. M. omits पुष्टिकमिति ॥ शोभनरूपम् Sy. पेश इति रूपनाम Ngh. 3.7.
१९. M. omits the *pratīka*. तानियानः P.
२०. मरुतः Sy.
२१. इयाना याचमाना वयं 'सुपां सुलुक्०' इति जसः सुः Sy.
२२. वांकं M. वरणीयं प्रशस्तं धनम् Sy.
२३. ०णार्थं P.
२४. घेति पादपूरणः Sy.
२५. अन्नेन M. and P. एनेत्यत्र 'सुपां सुलुक्०' इति तृतीयाया आजादेशः Sy.
२६. स्तोत्रेण वा Sy.
२७. ऋषिः Sy.
२८. नशब्दः समुच्चये Sy.

यानिमान्। पञ्च[1]। मरुतः[2]। अभिलषितसिद्ध्यर्थम्[3]। आत्माभिमुखान्[4]। रक्षणाय[5]। चक्रियायुधेन[6] सह। आवर्तयति[7], स तान् इयानः इति सम्बन्धः, पञ्च प्राणाः[8] पुरुषप्रेरणाद्[9] होतार[10] उच्यन्त[11] इति 'मरुतः प्राणैरिन्द्रं बलेन' इति[12] ब्राह्ममिति[13]।[14]

**यया रध्रं पारयथात्यंहो यया निदो मुञ्चथ वन्दितारम्।**
**अर्वाची सा मरुतो या वः ऊतिरो षु वाश्रेव सुमतिर्जिगातु॥ १५॥**

यया रध्रम्[15]। यया[16]। आराधकम्[17]। अंहः[18]। अतिपारयथ[19]। यया च[20]। शत्रोः[21]। मुञ्चथ[22]। स्तोतारम्[23]। हे मरुतः! सा। अस्मदभिमुखीभवतु। युष्माकं[24] स्वभूता। ऊतिः[25]। निर्गच्छतु[26]। सुष्ठु। धेनुरिव[27][28]।

---

१. अध्यात्मप्राणापानादिपञ्चवृत्त्यात्मना वर्तमानान् Sy.
२. अत एव होमनिष्पादकान् Sy.
३. ०द्ध्यर्थम् P.
४. M. omits the words between मरुतः and आत्मा॥ मुख्यान् Sy.
५. अवितुं सङ्गन्तुम् Sy.
६. नाभिचक्रेण Sy.
७. आवर्तयत्। स्वस्मान्निर्जिगमिषून् प्राणान् स्वात्माभिमुखमावर्तयत्। यद्वा चक्रिया ऋष्ट्याख्येनायुधेन युक्तान् अवसे स्त्युत्यादिभिस्तर्पयितुमावर्तयत्। तान् स्तुम इति सम्बन्धः। ववर्तदिति वृतेर्ण्यन्ताल्लुङि चङि रूपम् Sy.
८. ०णानां P.
९. ०षप्रीणनाबोता० P.
१०. होताद्वारः M.
११. ०च्यते M. and P.
१२. नेति is omitted by M.
१३. ब्राह्मणम् is suggested for ब्राह्मम् (TA. 2.18.1.)
१४. VM. seems to explain उप as लभते and ignores इत्।
Sy. explains उप and इत् as उपेत्य।
१५. M. omits the *pratīka*.
१६. ययोत्या Sy.
१७. रधकम् M. and P. आराधकं यजमानम् Sy.
१८. पापम् Sy.
१९. ०यथा P. अतिक्रमयथ Sy.
२०. Omitted by M.
२१. निन्दितुः शत्रोः सकाशात् Sy.
२२. Omitted by P.
मोचयथ Sy.
२३. स्ताता० M.
२४. युष्मदीया या ऊतिः Sy.
२५. ऊति M. and P.
२६. एव गच्छतु अस्मान् प्रति सर्वथाऽऽगच्छत्वित्यर्थः Sy.
२७. वाश्रेव हम्भारवं कुर्वती धेनुरिव वत्सम् Sy.
२८. VM. ignores या। ओ and सुमतिः॥ सुमतिर्युष्मदीया शोभना मतिरनुग्रहात्मिका बुद्धिश्च। ओ एव Sy.

II. 35.

उपेमसृक्षि वाजयुर्वचस्यां चनो दधीत नाद्यो गिरो मे ।
अपां नपादाशुहेमा कुवित्स सुपेशसस्करति जोषिषद्धि ॥ १ ॥

उपेमसृक्षि[1] ॥ मध्यमस्थानपठितोऽग्निरपांनपादिति[2] ॥ उप । एनाम्[3] । सृजामि[4] । अन्नमिच्छन्[5] । स्तुतीच्छाम्[6] । हविः[7] । धारयतु[8] । स्तुतीश्च[9] । नादेयः[10] । सोऽयम्[11] । अपाम् । पुत्रः[12] । यजमानेषु बहुः[13] । शीघ्रं गन्ता[14] भवति । सुरूपांश्च[15] । करोति[16] । सेवते[17] । हि[18] स्तोतृ[19]निति[20] ।

---

१. 'उपेम्' इति पञ्चदशर्चं तृतीयं सूक्तं गार्त्समदं त्रैष्टुभमपांनपाद्देवताकम् । तथा चानुक्रान्तम्—'उपेमपोनप्त्रीयम्' इति (KSA. 15.35. p. 14.) । सूक्तविनियोगो लैङ्गिकः Sy.

२. M. omits the words between उपेमसृक्षि and नपादिति. The *pratika* उपेमसृक्षि has been supplied by a later hand in M. ३. नाम P.

४. सृजानि P. उत्पादयामि । अपांनपातं स्तोतुं प्रवृत्तोऽस्मीत्यर्थः । असृक्षि सृजेश्छान्दसो लुङ् । 'लिङ्सिचावात्मनेपदेषु' इति सिचः कित्वाद् गुणाभावः Sy.

५. वाजमन्नमात्मन इच्छन्नहम् Sy.

६. स्तुतिच्छाम् P.
वचसः स्तोत्रस्येच्छाम् Sy.

७. अन्नम् Sy.

८. दधातु । विदधातु प्रयच्छत्वित्यर्थः Sy.

९. स्तुति च P. गृणातीति गीः स्तोता तस्य Sy.

१०. श्वानदे० P.
नदीनां शब्दकारिणीनां मेघस्थानामपां सम्बन्धी Sy.

११. सायम् M. and P.

१२. पौत्रस्थानीयः । अद्भ्य ओषधिवनस्पतयो जायन्ते ओषधिवनस्पतिभ्य एषोऽग्निर्जायत इति तत्पौत्रत्वम् । एतत्संज्ञको देवः Sy. १३. बहुलम् Sy. कुवित् बहुनामैतत् Ngh. 3.1.

१४. 'हि गतौ' इत्यस्मात् 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् Sy.

१५. अपि चास्मान् शोभनरूपान् शोभनालङ्कारान्वा Sy.

१६. करोतु । करति करोतेर्व्यत्ययेन शप् । 'कःकरत्करतिकृधिकृतेष्वनदितेः' (Pa. 8.3.50.) इति विसर्जनीयस्य सत्वम् Sy.

१७. सेते P. स्तोत्राणि सेवते । तस्मादस्मानेवमनुगृह्णात्वित्यर्थः । जोषिषत्—'जुषी प्रीतिसेवनयोः' । लेटघडागमः । विकरणः । सिप् । इडागमश्च । 'हि च' इति निघातप्रतिषेधः Sy.

१८. यस्मादयं देवः Sy.

१९. M. omits हि स्तोतृ.

२०. VM. ignores मे ॥ मे मम Sy.

इमं स्वस्मै हृद आ सुतष्टं मन्त्रं वोचेम कुविदस्य वेदत् ।
अपां नपादसुर्यस्य मह्ना विश्वान्यर्यो भुवना जजान ॥ २ ॥

इमम्[१] । इमम्[१] । मन्त्रम् । मदीयाद्धृदयात् । सुष्ठु तष्टम्[२] । वोचेम[३] । अस्मै[४] । बहु । इमं[५] मन्त्रमुच्यमानम् । अयं वेत्ति[६] हि । सोऽयम्[७] । असुरहननिमित्तस्य[८] बलस्य । महत्त्वेन[९] । विश्वानि[१०] । भुवनानि[११] । जनयितुम्[१२] । स्वामी[१३][१४] ।

समन्या यन्त्युप यन्त्यन्याः समानमूर्वं नद्यः पृणन्ति ।
तमू शुचिं शुचयो दीदिवांसमपां नपातं परि तस्थुरापः ॥ ३ ॥

समन्या[१५][१६][१७] यन्ति[१८] । काश्चिन्[१९]महानद्यः[२०] । स्वरूपेण[२१] सङ्गच्छन्त[२२] ऊर्वेण[२३] । अथान्याः[२४] क्षुद्रनद्यः ।

---

१. M. omits इमम् । इमम् ।

२. सुष्ठु निर्मितम् Sy.

३. वोचम P. सुष्ठु आभिमुख्येन ब्रवाम Sy.

४. अस्मा अपांनपात्संज्ञकाय देवाय Sy.

५. ईमम् P. अस्माभिरुक्तमिमं मन्त्रम् Sy.

६. जानातु । वेदत्- वेत्तेर्लेटयडागमः 'निपा-, तैर्यद्यदिहन्त०' इति निघातप्रतिषेधः Sy.

७. It seems to refer to अपां नपात् ।

८. असुरः शत्रून् क्षेप्ता, तस्य स्वभूतस्य बलस्य Sy.

९. महत्वे० M. महिम्ना Sy.

१०. सर्वाणि Sy.

११. वृष्टयुदकानि वृष्टयुत्पादनेन भूतजातानि वा Sy.

१२. जनयामास Sy.

१३. M. omits यितुं स्वामी ॥ स्वामी अपांनपात्संज्ञको वैद्युतोऽग्निः Sy.

१४. VM. ignores सु and आ ॥ सु सुष्ठु । आ आभिमुख्येन Sy.

१५. अपोनप्त्रीये वसतीवरीसमीप एकधनासु प्राप्तासु 'समन्या यन्ति' इत्येषानुवक्तव्या । सूत्रितञ्च 'समन्या यन्त्युप यन्त्यन्या इति तीर्थदेशे' (ASS. 5.1.) इति । सारस्वते च शस्त्रे यद्यप्सु शम्या निपतेत् तदानीमपोनप्त्रीयश्चरुः कार्यः । तत्रैवैव याज्या । सूत्रितञ्च 'समन्या यन्त्युप यन्त्यन्या इत्यतः समानं सर्वेषाम्' (ASS. 12.6.) इति ।

१६. A later hand has supplied the *pratika* in M.

१७. या M. १८. तं M. यतु P.

१९. वा M.

२०. M. omits महा । अन्या वर्ष्या आपः Sy. अन्या आपः BB. २१. स्वरू० P.

२२. सङ्गच्छते P. भूम्या सङ्गच्छन्ते Sy. एकीभूताः प्रवहन्ति BB.

२३. उर्वे० P. २४. पूर्वं तत्रावस्थिताः Sy.

महानदीभिः सङ्गताः[1] । उपगच्छन्ति[2] । ताः[3] सर्वाः[4] । नदीनामसाधारणमिममपूर्वम्[5] । पूरयन्ति[6] । तम्[7] । एव[8] । शुचिम्[9] । दीप्तम्[10] । निर्मलाः[11] । अपां[12] । नपातम्[13] । परितः[14] । तिष्ठन्ति[15] । आपः[16] ।

**तमस्मेरा युवतयो युवानं मर्मृज्यमानाः परि यन्त्यापः ।**
**स शुक्रेभिः शिक्वभी रेवदस्मे दीदायानिध्मो घृतनिर्णिगप्सु ॥ ४ ॥**

तमस्मेराः । स्मेरमुखा युवतयो भवन्ति, अतादृशाः[17] । काश्चिद् युवतयः[18] । युवानम्[19] ।

---

१. समानं सह Sy.

२. अन्या उपयन्ति परितस्सङ्गता इव त्वां मध्येन प्रवहन्ति BB.

३. तः P.

४. सर्वान् P. ताः सर्वा आपः. . .नदीभूताः Sy. ताः सर्वा अपि समानं नद्यो भूत्वा BB.

५. ०मिममूर्वम् is suggested for ०मिममपूर्वम् ॥ समुद्रमध्ये वर्तमानं वडवानलम् Sy. और्वस्याग्नेराधारं महान्तम् BB.

६. प्रीणयन्ति । 'पृण प्रीणने' तौदादिकः Sy. आपगाः पृणन्ति पूरयन्ति । 'पृण प्रीणने' BB.

७. अपांनपातम् Sy. अथ तं तत्रस्थमौर्वम् BB.

८. उ अवधारणे पादपूरणे वा । 'अन्येषामपि दृश्यते' इति सांहितिको दीर्घः BB.

९. निर्मलम् Sy.
शुद्धम् BB.

१०. M. omits दीप्तम् ॥ दीप्यमानम् । दीदेतिश्छान्दसो दीप्तिकर्मा । लिटः क्वसुः । 'वस्वेकाजाद्घसाम्' इति नियमादिडभावः । 'छन्दसि वेति वक्तव्यम्' इति वचनाद् द्विर्वचनाभावः Sy. मध्ये दीप्यमानम् । दीदितिर्दीप्तिकर्मा छान्दसः BB.

११. शुद्धा आपः Sy.
शुचय आपः BB.

१२. अस्माकम् M.

१३. M. omits नपातम् ।

१४. दीरिः M. परिवृत्य Sy.
सर्वतोऽपि BB.

१५. तष्ठन्ति P. एव हि वैद्युताग्निरूपेण मेघे वर्तमानोऽस्मानजीजनदिति बुद्धया वडवानलरूपेण वर्तमानं तं पर्युपासत इत्यर्थः । यद्वा—अन्या एकधनाख्या आपः संयन्ति । चात्वालोत्करयोर्मध्ये वसतीवरीभिः सङ्गच्छन्ते । अन्या वसतीवर्याख्या आपश्चोपयन्ति उपगच्छन्ति । ऐकमत्यं प्राप्ता भवन्ति । एताश्च मिलित्वा यज्ञं साधयन्त्यस्तत्साध्यवृष्टिद्वारा नद्यो भूत्वोर्वं पृणन्तीत्यादि समानम् । एवं हि 'आपो वा अस्पर्धन्त वयं पूर्वं यज्ञं वक्ष्यामः' (AB. 2.20.) इत्यादिकब्राह्मणविनियोगश्चानुगृह्यते Sy.

१६. This stanza=TS. 2.5.12.1.

१७. अस्मयमाना दर्परहिताः Sy. विदग्धाः BB.

१८. P. omits the words between भवन्ति and युवतयः ।

१९. युवराजमिव Sy., BB.

अत्यन्तं परिचरन्त्यः । परितः । यन्ति । आपः । सः । दीप्तैः । तेजोभिः । धनयुक्तम् । अस्माकम् । दीप्यते । काष्ठरहितम् । तेजसाक्षररूपः । उदकेषु ।

**अस्मै तिस्रो अव्यथ्याय नारीर्देवाय देवीर्दिधिषन्त्यन्नम् ।**
**कृताइवोप हि प्रसर्स्रे अप्सु स पीयूषं धयति पूर्वसूनाम् ॥ ५ ॥**

अस्मै तिस्रः । व्यथिर्हिंसाकर्मा, अव्यथनीयाय । अस्मै । देवाय । इळा सरस्वती भारती च तिस्रः । देव्यः । धारयन्ति । अन्नम् । नार्यः । जनयित्रीरिव पुत्रे । उपससार । अप्सु । पीयूषं सारम् । पिबति । पूर्वं या एनमजनयन्निति ।

---

१. अत्यर्थमलङ्कुर्वाणाः । 'मृजू शौचालङ्कारयोः' Sy., BB.

२. यदि P. गच्छन्ति, प्राप्नुवन्ति Sy. सेवन्ते । यद्वा नित्यतरुणमग्निं नित्यतरुण्य आपः परियन्ति BB.

३. सन् P. अपांनपादग्निः Sy. स चाग्निः BB.

४. दी M. दीप्तैः P. शुभ्रैर्निर्मलैः Sy. तास्वप्सु मध्ये शुक्रेण निर्मलेन BB.

५. Omitted by M. शिक्वना रोचिषा इत्थम्भूतः BB.

६. त्वन्नमयम् M. धनयुक्तमन्नं यथा भवति तथा Sy. महाधनो राजेव । छान्दसो लिङ्गव्यत्ययः BB.

७. Omitted by M.

८. दीव्यते M. छान्दसो लिट् । छान्दसो द्विर्वचनाभावः । दीधिङो वा वर्णव्यत्ययः BB.

९. इन्धनरहित एव सन् Sy. सलिलव्यतिरिक्तेन काष्ठादीन्धनरहितः BB.

१०. क्षरणशीलोदकनिर्णेजनः । यद्वा दीप्तरूपः Sy. निर्णिगिति रूपनाम Ngh. 3.7. घृतेनोदकेन वा एषणीयः । घृतनिर्णेजनमस्येति बहुव्रीहिः । यद्वा तेजोरूपनाम । एवंमहानुभावोऽयमस्मान् प्रतिग्रहदोषापनयनेन शोधयत्विति BB.

११. मेघान्तर्गतासु समुद्रगतासु वा मध्ये Sy.

१२. VM. ignores तम् । तमपांनपातमग्निम् Sy. This stanza=TS. 2.5.12.2.

१३. पयि० M.

१४. अव्यथनाय Sy.

१५. अपांनपाते Sy.

१६. M. omits the words देव्यः । and धारयन्ति ॥ दिधिषन्ति । 'धिष शब्दे' जौहोत्यादिकः । व्यत्ययेनान्तादेशः । धातूनामनेकार्थत्वादत्र धारणार्थः Sy.

१७. सोमाख्यम् Sy.

१८. नामा M. अयं P. नेत्र्यः Sy.

१९. ०पघस्ता० M. प्रसरन्ति । प्रसर्स्रे—'सृ गतौ' । लिटि 'इरयो रे' इति रेआदेशः । छान्दसो हलादिशेषाभावः Sy.

२०. उदकेषु Sy.

२१. सारभूतं सोमाख्यममृतम् Sy.

२२. यस्मादेवं तस्मात्पूर्वं ब्रह्मणः सकाशादुत्पन्नानामपाम् Sy.

२३. VM. ignores हि and सः । हि पूरणः । सोऽपांनपादग्निः Sy.

अश्वस्यात्र जनिमास्य च स्वर्द्रुहो रिषः संपृचः पाहि सूरीन् ।
आमासु पूर्षु परो अप्रमृष्यं नारातयो वि नंशन्नानृतानि ॥ ६ ॥

अश्वस्य । 'अप्सु योनिर्वा अश्वः' इति ब्राह्मणम्[1] । अस्मात्[2] । अश्वः[3] । अजायत[4] । स्वरित्युदकनाम[5], अस्योदकस्य[6] । च । अस्मादेव[7] जन्म । स त्वं द्रोग्धुः[8] । विनाशयितुश्च[9] । सम्पर्कात् । स्तोतॄन्[10] । रक्ष[11] । आर्द्रासु[12] । पूरयित्रीषु[13] नदीषु । परोऽग्र्यमपांनपात्[14] । अनभिभवनीयमुग्रं[15] तेजो विसृजति । नास्मान् । अरातयः[16] । व्याप्नुवन्तु[17] । न च । रक्षांसि[18] ।

स आ दमे सुदुघा यस्य धेनुः स्वधां पीपाय सुभ्वन्नमत्ति ।
सो अपां नपादूर्जयन्नप्स्व१न्तर्वसुदेयाय विधते वि भाति ॥ ७ ॥

स[19] आ[20] दमे । स्वे[21] । गृहे[22] । सुदोहा[23] । यस्य । धेनुर्नदी[24] । स्वधाम्[25] । आप्यायति[26] ।

---

१. [TB. 3.8.4.3.; 3.8.19.2.; 3.8.20.4.] The passage, 'अप्सु योनिर्वा अश्वः' इति ब्राह्मणम् should immediately follow अश्वः and precede अजायत ।
२. अस्मा M. अत्रास्मिन्नपांनपात्संज्ञके देवे Sy.
३. वि M.
४. Omitted in M. जन्म भवति, अपांनप्त्रधिष्ठितात्समुद्रादुच्चैःश्रवसो जातत्वात् Sy.
५. सु M.
६. ज्स्यो० M. This is the explanation of स्वः Ngh. 1.12. ॥ किं बहुना ? . . . स्वः सुष्ठ्वरणीयस्य सर्वस्य जगतो जन्मास्मिन्नेव भवति । अयं हि मेघमध्ये वर्तमानो वृष्टिद्वारेण सर्वं जगज्जनयति Sy.
७. अस्य च Sy.
८. दोग्धुः M. देग्धुः P. अपहर्तुः Sy.
९. ०शयतुश्च M. ०शयतुश्व P. हिंसकस्य Sy.
१०. स्तोतॄन् P. अस्मान् Sy.
११. ऋक्ष P.
१२. आद्रासु M. न्द्रासु P. अपरिपक्वासु Sy.
१३. पूरयितव्यास्वप्सु Sy.
१४. परस्ताद्वर्तमानम् Sy.
१५. M. omits the words between नपात् and तेजो ॥ अप्रधृष्यमाणं देवम् Sy.
१६. अदातारः पुरुषाः Sy.
१७. प्राप्नुवन्ति । 'नशतिर्व्याप्तिकर्मा' लेटयडागमः Sy.
१८. मायाविनो रक्षांसि च Sy.
१९. स्वं P.
२०. तू P.
२१. योऽपांनपात् स्वकीये Sy.
२२. गृहेऽन्तरिक्षलक्षणे आसीदति Sy.
२३. सुखेन दोग्धव्या Sy.
२४. माध्यमिका वाक् Sy.
२५. वृष्ट्युदकम् Sy.
२६. वर्धयति । 'प्यायी वृद्धौ' । 'लिड्यङोश्च' इति पीभावः Sy.

स शोभनभवनम्[1] । अन्नम्[2] । अत्ति[3] । सोऽयम्[4] । अपांनपात्[5] । अप्सु[6] । अन्तः[7] । बलं कुर्वन् । वसुदानाय[8] । परिचरते । दीप्यते[9] ।

**यो अप्स्वा शुचिना दैव्येन ऋतावाजस्र उर्विया विभाति ।**
**वया इदन्या भुवनान्यस्य प्र जायन्ते वीरुधश्च प्रजाभिः ॥ ८ ॥**

यो अप्सु[10] । यः[11] । अप्स्वन्तः[12] । निर्मलेन[13] । देवार्हेण[14] तेजसा । यज्ञवान्[15] । नित्यः[16] । उरुः[17] । विभाति[18] । अस्यापांनप्तुः[19] । शाखाः[20] । एव । अन्यानि[21] । भूतानि[22] । किं च[23] । अस्य प्रसादाद् वीरुधः[24] । प्रजायमानैः पुष्पफलैः[25] । प्रजायन्ते[26] इति[27] ।

**अपां नपादा ह्यस्थादुपस्थं जिह्मानामूर्ध्वो विद्युतं वसानः ।**
**तस्य ज्येष्ठं महिमानं वहन्तीर्हिरण्यवर्णाः परि यन्ति यह्वीः ॥ ९ ॥**

[28] अपां नपात् । अपांनपात्[29] । आतिष्ठति[30] । अपामुपस्थम्[31] । तिर्यग् गच्छन्तीनां[32] मध्ये ।

---

१. सुष्ठु भूतं वृष्टेः सकाशादुत्पन्नम् Sy.
२. हविर्लक्षणमन्नम् Sy.
३. अत्युद M. अत्युदकं P. भक्षयति Sy.
४. सा P. ५. अपांनपात्संज्ञको देवः Sy.
६. अद्यु P. मेघस्यास्वप्सु Sy.
७. M. omits the words between सो and अन्तः ॥ मध्ये Sy.
८. यजमानाय धनदानार्थम् Sy.
९. VM. ignores वि । वि विशेषेण Sy.
१०. P. omits the *pratika*.
११. अपांनपात् Sy. १२. मेघस्यासु मध्ये Sy. १३. शोचकेन Sy.
१४. देवसम्बन्धिना तेजसा Sy.
१५. ०वा P. ऋतमित्युदकनाम तद्वान् सत्यवान्वा Sy. (Ngh. 1.12.; 3.10.)
१६. नित्यः, एकरूपेण सदा वर्तमानः Sy.
१७. उरु P. विस्तीर्णः Sy.
१८. विशेषेण प्रकाशते Sy. १९. नप्तः P.
२०. शाखा M. २१. सर्वाणि Sy.
२२. भूतजातानि Sy.
२३. M. omits the words between एव and किम् । ०न्या० M. च पूरणः Sy.
२४. ०धश्च M. ओषधयः Sy.
२५. पुष्पफलादिभिः सह Sy.
२६. अस्मादेव प्रजायन्ते Sy. २७. VM. ignores आ ॥ आ समन्तात् Sy.
२८. पूर्वोक्ते सारस्वतसत्रस्यापोनप्त्रीये चरौ 'अपां नपादा हि' इत्येषानुवाक्या। सूत्रितञ्च—'अपां नप्त्रे चरुमपां नपादा ह्यस्थादुपस्थम्' (ASS. 12.6.) इति Sy.
२९. अपांनपात्संज्ञकोऽग्निः Sy. अपांनपात्वतुर्योऽग्निः BB. ३०. आभिति० P. आस्थितवान् आरूढवान् Sy.
३१. अपामुपस्थानमन्तरिक्षम् Sy. उपस्थमन्तरिक्षं मेघं वा, अपामुपस्थानम् BB.
३२. कुटिलगतीनामपां मध्ये Sy., BB.

स्वयमूर्ध्वः । दीप्तिम् । आच्छादयन् । तस्य । प्रशस्यतमम् । तेजः । वहन्त्यः । नद्यः । परितो गच्छन्ति । महत्यः ।

हिरण्यरूपः स हिरण्यसंदृगपां नपात्सेदु हिरण्यवर्णः ।
हिरण्ययात्परि योनेर्निषद्या हिरण्यदा ददत्यन्नमस्मै ॥ १० ॥

हिरण्यरूपः । हिरण्मयाङ्गः । हिरण्मयसन्दर्शनः । अयम् । तथा । सः ।

१. स्वयमूर्ध्वं ज्वलन् Sy. उपरिवर्ती BB.
२. विद्योतमानं मेघम् Sy. विद्युद्रूपेणात्मानम् BB.
३. अन्तरिक्षमास्थाय वर्षणं कृतवान् Sy. द्यावयंस्तासामुपस्थमातिष्ठति BB.
४. वर्षितुरपांनपातः Sy.
५. ०शतमं P. हि यदेवं तस्मात्त्ता आपस्तस्याग्नेरपांनपातो ज्येष्ठं प्रशस्तम् BB.
६. माहात्म्यम् Sy.
७. सर्वत्र प्रापयन्त्यः Sy. वहन्त्यः स्यापयन्त्यः, अनेन हि मेघं भित्वा वयं प्रवर्तिता इति कृतज्ञतामिव दर्शयन्त्यः BB.
८. VM. seems to explain हिरण्यवर्णाः by नद्यः ॥ हिरण्यवन्निर्मलरूपाः नद्यः Sy. हिरण्यवर्णाः नदीनामैतत् Ngh. 1.13.
तेजोरूपा एव भासमानाः BB.
९. अपांनप्त्रा महती वृष्टिरस्माकं प्रवहनायोत्पादितेति कृतज्ञतया तदीयं माहात्म्यं सर्वत्र प्रकटयन्त्य इव नद्यः प्रवहन्तीत्यर्थः Sy. तमग्निं परियन्ति परिगच्छन्ति परित इवासते BB.
१०. VM. ignores हि ।
हि खलु Sy.
This stanza=TS. 2.5.12.1.
११. गृत्समदस्य SKN. गृत्समदस्येदमार्षम् Dur. १२. ०मय M. ०मयाङ्गा P. रूप्यत इति रूपं शरीरम्। सुवर्णमयशरीरो हितरमणीयशरीरो वा Sy. हिरण्यस्येव रूपं यस्य स हिरण्यरूपो वैद्युतोऽग्निः सः SKN. हिरण्यसमानरूपः Dur.
१३. M. omits हिरण्मय० ।
१४. ०संदर्शन M. ०सदृशनः P. सम्यक् पश्यन्तीति सन्दृश इन्द्रियाणि । सुवर्णमयेन्द्रियो हितरमणीयेन्द्रियो वा Sy. हिरण्यमिव च परया प्रीत्या सन्दृश्यते SKN. हिरण्यसन्दृक्, हिरण्यमिव सन्दृश्यमानः मनःप्रीतिजनकः Dur.
१५. यो M. अपांनपात्, अपां पौत्रः। कथम्? अद्भ्यो हि मेघो जायते तत्संघातरूपत्वात्तस्य मेघाद्वैद्युतः। 'अद्भ्यो वा एष प्रातरुदेत्यपः सायं प्रविशति' (AB. 4.20.) इति श्रुतेः। प्रातरुद्भूय आदित्यो जायते, आदित्याद् वर्षासु रसादानद्वारेण वैद्युत इत्येवमस्य पौत्रत्वम् SKN. अपि च सोऽपांनपाद्, मध्यस्थानो वैद्युतोऽग्निरादित्यस्य पुत्रोऽपांनपात् प्रावृट्काले घर्मार्तानां, प्रजानामन्नार्थिनीनां च ।...'समुद्रादूर्मिर्मधुमाँ उदारत्' (RV. IV. 58.1ª.) इत्यादित्यमुक्तं मन्यन्ते । इत्येतस्माद् दर्शनादपां पुत्र आदित्यः । 'आ दूतो अग्निमभरद् विवस्वतः' (RV. VI. 8.4.) इत्यतश्चादित्यस्यापि वैद्युतोऽग्निः पुत्रः। इत्येवमसावपांनपाद् अपांनप्ता Dur.
१६. स एवात्यन्तोपकारित्वात् SKN. अपि च स एव Dur.

एव[1]। हिरण्यवर्णः[2]। तस्य योनिश्च[3]। हिरण्मयः[4], तस्मात् आगत्य[5]। इह निषद्य[6]। हिरण्यस्य दाता[7]। अस्मै यजमानाय[8]। अन्नम्[9]। प्रयच्छति[10]।[11]

**तदु॒स्यानी॑कमु॒त चारु॒ नामा॑पी॒च्यं॑ वर्धते॒ नप्तु॑र॒पाम्।**
**यमि॒न्धते॑ युव॒तयः॒ समि॒त्था हिर॑ण्यवर्णं घृ॒तमन्न॑मस्य ॥ ११ ॥**

तदस्यानीकम्। तत्। अस्य[12]। तेजः[13], 'तस्य रश्मयोऽनीकानि'[14] इति ब्राह्मणम्। अपि चास्य[15]। शोभनम्। नाम[16]। अन्तर्हितम्[17]। वर्धते। अपांनप्तुः[18], तद् वेदविद्भ्योऽवगन्तव्यम्। यम्[19]। इत्थम्[20]। नद्यः[21]। समिन्धते[22]। हिरण्यवर्णम्[23]। अस्य[24]। उदकम्[25]। अन्नं भवति[26]।

१. M. omits स एव ॥ इदेवार्थे SKN.
२. हिरण्यसदृशकान्तियुक्तः Sy. हिरण्यमिव वर्णनीयः SKN. हिरण्यमिव वरणीयः प्रार्थनीयो भूतानाम् Dur.
३. योग्निश्च P. योनेः स्थानात् Sy. स्थानादन्तरिक्षाख्यात् SKN. आदित्याद् विनिर्गत्य Dur.
४. सुवर्णमयात् Sy. हिरण्यशब्देनात्र तद्रूपमुच्यते न सुवर्णं तन्मयसदृशादत्यन्तस्वच्छशुक्लरूपादित्यर्थः SKN. य एवंगुणयुक्तोऽपांनपात् स किं करोतु ? . . . तेजोमयात् Dur. ५. उह M.
६. उपविश्य राजत इति शेषः Sy. सर्वतो निषद्य मध्यस्थानेऽभ्रजालेनान्तरिक्षलोकं व्याप्य Dur.
७. दक्षिणारूपस्य सुवर्णस्य दातारो यजमानाः Sy. हिरण्यसदृशस्य दाता SKN. 'हिरण्यदाः' इत्येकं पदं विसर्जनीयान्तम्। . . . हिरण्यदाता Dur.
८. ईदृग्विधायापांनपाते Sy. सर्वस्मै वा प्राणिजाताय SKN.
९. हविर्लक्षणम् Sy. अन्नवृष्ट्युदकम् SKN. अन्नहेतूदकम् Dur.
१०. प्रयच्छन्ति Sy. 'दा दाने' इत्यस्य लेटि व्यत्ययेन परस्मैपदम्। बहुवचनमेकवचनस्य स्थाने, ददात्वित्यर्थः SKN. सोऽपांनपात् परिषद्य . . . ददातु Dur.
११. VM. ignores अपां नपात्। उ and परि।
पर्युपरि Sy. परि सर्वतः, उः पदपूरणः SKN. N. 3.16., SKN. II. 174.
१२. अपांनप्तुर्देवस्य Sy.
१३. रश्मिसमूहरूपं शरीरम् Sy.
१४. TB. 16.6.2.
१५. च स P. १६. नाम् P. संज्ञा च। न पातयति न विनाशयतीति नपादिति तद्व्युत्पत्तेः Sy.
१७. तदुभयम्। अपीच्यम् अन्तर्हितनामैतत्। (Ngh. 3.25.) मेघान्तर्हितं सत् Sy.
१८. नप्त P. १९. यमपांनपातम् Sy.
२०. अमुत्रान्तरिक्षे Sy.
२१. सङ्गमनस्वभावा आपः Sy.
२२. सम्यक् दीपयन्ति Sy.
२३. ०वर्ण P. हिरण्यसमानतेजसम् Sy.
२४. स्य P. देवस्य Sy.
२५. क्षरणशीलमुदकम् Sy.
२६. Omitted by P. अन्नं भक्ष्यम्। अविन्धनो ह्यसौ वैद्युतोऽग्निः Sy.

अस्मै बहूनामवमाय सख्ये यज्ञैर्विधेम नमसा हविर्भिः ।
सं सानु मार्ज्मि दिधिषामि बिल्मैर्दधाम्यन्नैः परि वन्द ऋग्भिः ॥१२॥

अस्मै[1] । अस्मै[2] । बहूनामपि देवानाम्[3] । अन्तिकतमाय[4] 'अग्निर्वै देवानामवमः' इति ब्राह्मणम्[5] । सख्ये[6] । यज्ञैः[7] । परिचरेम[8] । नमस्कारेण[9] । हविर्भिश्च[10] । तस्य[11] निधानार्थं[12] समुच्छ्रितं[13] विष्ण्यम् । सम्मार्ज्मि[14] । बिलमशब्द[15] उपायवचनः[16], धारयामि[17] च । उपायैः[18] । धारयामि[19] च । हविर्भिः[20] परि[21] स्तौमि च । मन्त्रैः[22] ।

---

१. Omitted by M. गृत्समदस्यार्षम् । अस्या ऋचोऽपांनपाद्देवता, अपोनप्त्रीये सूक्ते समाम्नातत्वात् । अपांनपाच्च मध्यमः SKN.

२. पुरोवर्तिने Sy. प्रकृतायापांनप्त्रे SKN.

३. यजमानानाम् SKN.

४. अवति P. आद्याय Sy. अवम इत्यन्तिकनाम । अन्तिकाय सन्निकृष्टायात्यन्तं प्राप्तायेत्यर्थः । सर्वत्रात्र द्वितीयार्थे चतुर्थी SKN.

५. AB. 1.1.

६. अस्माभिः समानस्थानायापांनपाते Sy. बहूनां सखायम् SKN.

७. यागसाधनैः Sy. सोमयागैर्ज्योतिष्टोमादिभिः SKN.

८. परिचरेमेत्याशास्महे SKN.

९. स्तुत्या च SKN.

१०. चरुपुरोडाशादिभिः Sy; SKN.

११. अस्यापांनपातः Sy.

१२. ०नार्त्थं P. तदर्थं च SKN.

१३. ध्रिष्टयं M. समुच्छ्रितप्रदेशम् Sy. समुच्छ्रितं प्रदेशं गार्हपत्यादिस्थललक्षणं वेदिलक्षणं च SKN.

१४. सध P. सम्यक् शोधयामि अलङ्करोमि वा । 'मृजू शौचालङ्कारयोः' । 'चादिलोपे विभाषा' इत्यस्य निघातप्रतिषेधः । Sy. सम्मार्ज्मि गोमयपाण्डुमृत्तिकादिना SKN.

१५. बिल्वश० M. बिलुश० P.

१६. ०यवच० P. The passage: बिलमशब्द उपायवचनः should immediately follow उपायैः and precede धारयामि ॥ बिल्म उपायः SKN.

१७. 'धिष शब्दे' अयं धारणार्थोऽपि । जुहोत्यादित्वाच् शपः श्लुः । मिपो व्यत्ययेनाडागमः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् Sy. 'धिष धारणे' धारयितुं चेच्छामि गार्हपत्यमग्निम् SKN.

१८. बिल्मैर्भासनैः काष्ठैरेनम् Sy. उपायैर्ज्वलनस्याधो भस्मनि गोमयनिखननादिभिः । एवमस्मिन्मन्त्रे बिल्मशब्दस्य प्रयोगादिहोपादानं निर्वचनं चैवमर्थं द्रष्टव्यम् SKN.

१९. धारयामि चैनम् SKN.

२०. हविर्लक्षणैः Sy. सायं प्रातश्चाग्निहोत्रद्रव्यलक्षणैर्यवाग्वादिभिः SKN.

२१. परितः स्तौमि Sy. सर्वतः स्तौमि SKN.

२२. स्तुतिभिः SKN. बिल्मं भिल्मं भासनमिति वा N. 1.20., SKN. I.11.6.

**स ईं वृषाजनयत्तासु गर्भं स ईं शिशुर्धयति तं रिहन्ति ।**
**सो अपां नपादनभिम्लातवर्णोऽन्यस्येवेह तन्वा विवेष ॥ १३ ॥**

स ईम् । अग्निरेव । एनम्[1] । रेतसो[2] वृषा[3] । अजनयत्[4] । ओषधीषु[5] । गर्भम् । अथौषधिवनस्पतिभ्यो जातः सः[6] । एता ओषधीः । शिशुर्भूत्वा[7] । धयति[8] । तादृचैनं वत्समिव[9] । जिह्वया लिहन्ति[10] । सोऽयम् । अपाम्[11] । पौत्रः[12] । अग्लानवर्णः[13] । अन्यस्येव[14] । शरीरेण[15] । अस्मिंल्लोके । आविवेष[16] व्याप्तः[17] ।

**अस्मिन्पदे परमे तस्थिवांसमध्वस्मभिर्विश्वहा दीदिवांसम् ।**
**आपो नप्त्रे घृतमन्नं वहन्तीः स्वयमत्कैः परि दीयन्ति यह्वीः ॥ १४ ॥**

अस्मिन् । अस्मिन्[18] । परमे[19] । पदे[20] । तस्थिवांसमन्तरिक्षे[21][22] । अशुष्यद्भिस्तेजोभिः[23] । सदा[24] । दीप्यमानम् । स्वयमेव[25] । अत्नैः[26] । आपः । परितः । यन्ति[27] । महत्यः[28] । तस्मा अग्नये[29] । अन्नभूतम्[30] । घृतम्[31] । वहन्त्यः ।

---

१. एन P. सोऽयमपांनपात्संज्ञको देवः Sy.
२. रैत॰ M. रोत॰ P.
३. सेक्ता भूत्वा Sy.
४. स्वात्मानमेव गर्भरूपेण वर्षणार्थं कृतवानित्यर्थः Sy.
५. औष॰ M. and P. मेघस्थास्वप्सु Sy.
६. गर्भो भूत्वा च सोऽयं माध्यमिको वैद्युतोऽग्निः Sy. ७. तासां पुत्रः सन् Sy.
८. मेघस्थास्ताः पिबति अबिन्धनो ह्यसौ Sy.
९. पुत्रस्थानीयम् Sy.
१०. अद्भिरापश्च लिहन्ति । 'लिह आस्वादने' । कपिलकादित्वाल्लत्वविकल्पः Sy. ११. अवां M.
१२. वृष्टया सह भूमौ निपतितः Sy.
१३. अम्यान॰ P. अभितो म्लातो म्लानः क्षीणो वर्णो यस्य तद्विपरीतोऽस्थिरं दीप्यमानः सन् Sy.
१४. इवशब्दोऽवधारणे। पार्थिवस्यैवाग्नेः Sy.
१५. काष्ठेन्धनत्वलक्षणेन Sy.
१६. आविवेष्ट M. अविवेष P.
१७. व्याप्तम् M. व्याप्तो बभूव । 'विष्लृ व्याप्तौ' Sy.
१८. Omitted by P.
१९. उत्कृष्टे Sy. २०. अन्तरिक्षलक्षणे स्थाने Sy. २१. स्थितवन्तम् Sy.
२२. It goes with पदे
२३. ध्वंसनरहितैस्तेजोभिः Sy.
२४. सर्वाण्यहानि Sy. २५. आत्मनैव Sy.
२६. अतनशीलैः सततगन्तृभिः स्वकीयै रूपैः Sy. २७. गच्छन्ति। दीयतिर्गतिकर्मा । 'दीङ् क्षये' । व्यत्ययेन परस्मैपदम् Sy.
२८. मनत्यः M.
२९. तस्मा अग्नये seems to be the explanation of नप्त्रे.
अपां नपाते Sy. ३०. अन्नम् Sy.
३१. क्षरणशीलोदकात्मकम् Sy.

अयांसमग्ने सुक्षितिं जनायायांसमु मघवद्भ्यः सुवृक्तिम् ।
विश्वं तद्भद्रं यदवन्ति देवा बृहद्वदेम विदथे सुवीराः ॥ १५ ॥

अयांसम् । अग्ने ! त्वामहं शोभननि[1]वासम् । जयार्थम्[2] । अयांसम्[3] । तथा । अयांसमिह[3] । हविष्मद्भ्यः[4] । शोभन[5]स्तुतिमिति ।[6]

II. 36.

तुभ्यं हिन्वानो वसिष्ट गा अपोऽधुक्षन्त्सीमविभिरद्रिभिर्नरः ।
पिबेन्द्र स्वाहा प्रहुतं वषट्कृतं होत्रादा सोमं प्रथमो य ईशिषे ॥ १ ॥

तुभ्यं[7] हिन्वानः । इन्द्र[8] ! तुभ्यम्[9] । प्रेरयामीति[10] । गन्त्रीः[11] । अपो[12] गृहीत्वा । वासयति[13] ।

---

१. ०निविसं M.

२. जयात्र्थम् P. This seems to be the explanation of जनाय । जनार्थम् is suggested for जयार्थम् ॥ अस्मदीयपुत्रादिजननार्थम् Sy.

३. उपागच्छम् । 'यम उपरमे' Sy.

४. हविर्लक्षणधनयुक्तेभ्यो यजमानेभ्यश्च Sy.

५. शोभनावर्जकं त्वद्विषयं स्तोत्रम् Sy.

६. VM. ignores विश्वम् । तत् । भद्रम् । यत् । अवन्ति । देवाः । बृहत् । वदेम । विदथे and सुवीराः । Sy. explains these two verses in the following manner:– अतः कारणाद्भद्रं सर्वे देवा अवन्ति रक्षन्ति विश्वं सर्वं तद्भद्रमस्माकं भवतु । सुवीराः सुपुत्रा वयं विदथे यज्ञे गृहे वा बृहत् प्रौढं स्तोत्रं वदेम उच्चारयाम ॥

७. 'तुभ्यम्' इति षड्चं चतुर्थं सूक्तं गार्त्समदं जागतम् । प्रथमाया इन्द्रो मधुश्च देवता । द्वितीयाया मरुतो माधवश्च । तृतीयायास्त्वष्टा शुक्रश्च । चतुर्थ्या अग्निः शुचिश्च । पञ्चम्या इन्द्रो नभश्च । षष्ठ्या मित्रावरुणौ नभस्यश्च । तथा चानुक्रान्तम्— 'तुभ्यं षळृतव्यं तु जागतं तु' (KSA. 15. 36. p. 14.) इति । दशरात्रे षष्ठेऽहनि ऋतुयाजेषु ऋक्शिरस्कैः प्रैषैः प्रेषितव्यं यष्टव्यञ्च । तत्राद्यानां षण्णां प्रैषाणामुपरिष्टाद् देवताः षडृचोऽहोरात्रादिभिः क्रमेणावपनीयाः । तथा च सूत्रितम्—'उपरिष्टात्त्वृच ऋतुयाजानाम्' इत्युपक्रम्य 'तुभ्यं हिन्वानो वसिष्ट गा अप इति द्वादशे' (ASS. 8.1.) इत्यन्तेन Sy.

८. P. places it after तुभ्यम्

९. त्वदर्थम् Sy.

१०. प्रेर्यमाणः सोमः Sy.

११. त्रिः P. गोविकाराणि दधिपयःप्रभृतीनि श्रपणद्रव्याणि Sy.

१२. वसतीवर्याख्या अपश्च Sy.

१३. वस्ते आच्छादयति । तैः संयुज्यत इत्यर्थः Sy.

अथ प्रातरेवर्त्विजस्ताः[1] परिगृह्य । अविभि[2]र्दशा[3]पवित्रैः[4] । ग्रावभिश्च । सोमम्[5] । दुहन्ति[6] । तं हुतम्[7] । वषट्कृतं[8] सोमम् । इन्द्र ! त्वं पिब । तथा मम[9] 'स्वा वागाह'[10] । होतुः सकाशात्[11] । सोमम् । प्रथमः[12] । यस्त्वम् । ईशिषे[13] सोमपानस्येति[14] ।

**यु॒ज्ञैः संमि॑श्लाः॒ पृष॑तीभिर्ऋ॒ष्टिभि॒र्याम॑ञ्छु॒भ्रासो॑ अ॒ञ्जिषु॑ प्रि॒या उ॒त ।**
**आ॒सद्या॑ ब॒र्हिर्भ॑रतस्य सूनवः पो॒त्रादा सोम॑ं पिबता दिवो नरः ॥ २ ॥**

यज्ञैः । हविर्भिः[15] । वडवाभिः[16] । आयुधैश्च[17] । संयुक्ताः[18] । आगमनवेलायाम्[19] । शोभा-युक्ताः[20] । अपि[21] च । आभरणेषु । प्रियास्ते । आदित्यस्य[22] । सूनवो[23] मरुतः ! अस्मिन्[24] बर्हिषि[25] । आसद्य[26] । पोतुः[27] । आकृष्य । सोमम् । पिबत । दिवः[28] । नेतारः[29] ।

---

१. नरो यज्ञस्य नेतारोऽध्वर्यवश्च Sy.
२. अविभि P. अवेर्वालमयैर्दशापवित्रैः Sy.
३. शा० P.
४. ०त्रे P.
५. सोम P.
६. दुहितन्ति P. अक्षारयन् । ग्रावभिरभि-षुत्य दशापवित्रेण पुनन्तीत्यर्थः Sy.
७. प्रहुतम् प्रकर्षेणाग्नौ क्षिप्तम् Sy.
८. वर्षकृ० P. वषट्कारेण च त्यक्तम् Sy.
९. मद P.
१०. ०गाहा P. Cf. स्वाहेत्येतत् सु आहेति वा । स्वा वागाहेति वा । स्वं प्राहेति वा । स्वाहुतं हविर्जुहोतीति वा N. 8.20. ॥ स्वाहाकारेण Sy.
११. होतुर्यागात् Sy.
१२. ०थमेव P. ०थमेव M. अन्येभ्यो देवेभ्यः पूर्वभावी सन् Sy.
१३. ०शिशे M. सर्वस्य जगत ईश्वरो भवसि Sy.
१४. VM. ignores आ । आ समन्तात् Sy.
१५. ०विर्भि P. यागैः Sy.
१६. वाभिः P. M. omits भिः वड ॥ स्ववाहनभूताभिः पृषद्वतीभिर्वडवाभिर्युक्ते Sy.
१७. स्वकीयैरायुधैः Sy.
१८. ०युक्तः P.
१९. यामनि गमनसाधने रथेऽवस्थिताः Sy.
२०. शुभ्राः शोभमानाः Sy.
२१. उतशब्दश्चार्थे Sy.
२२. सर्वस्य जगतो भर्तू रुद्रस्य Sy.
२३. पुत्राः ! Sy.
२४. Omitted by P.
२५. बनिष्वौ P. ते यूयमास्तीर्णे बर्हिषि Sy.
२६. सद्य P. उपविश्य Sy.
२७. पोतुर्यागात् Sy.
२८. दिवोऽन्तरिक्षस्य Sy.
२९. Omitted by M.

अमेवं नः सुहवा आ हि गन्तन नि बर्हिषि सदतना रणिष्टन ।
अथा मन्दस्व जुजुषाणो अन्धसस्त्वष्टर्देवेभिर्जनिभिः सुमद्गणः ॥ ३ ॥

[1]अमा । हे देवपत्न्यः ! [2]यज्ञागता इव । [3]स्वाह्वानाः । [4]अस्मान् । [5]आगच्छत । [6]आगत्य चास्मिन् [7]बर्हिषि । [8]निषीदत । [9]तत्र [10]रमत । [11]च । अथ [12]तास्वागतासु । त्वं च हे [13]त्वष्टः ! [14]सोमेन । [15]तृप्यस्व । [16]सम्प्रीयमाणः । [17]देवैः । तेषां जायाभिश्च । [18]

---

१. तृतीयसवने 'अमेव नः' इत्येषा नेष्टुः प्रस्थितयाज्या च । तथा च सूत्रितम् 'अमेव नः सुहवा आ हि गन्तनेन्द्राविष्णू पिबतं मध्वो अस्य' (ASS. 5.5.) इति Sy.

२. देवपत्न्यः प्रार्थ्यन्ते Mah. देवपत्न्यस्त्वष्टा चात्र दृश्यन्ते U.

३. यज्ञाय त P. M. omits the words between हे and गता ॥ इवशब्दोऽवधारणे । सहैव Sy. अमाशब्दो गृहवाचकः । अमेव स्वगृहमिव Mah. अमाशब्दो गृहवचनः । यथा गृहाणि स्वानि, एवम् U.

४. स्वाहानाः M. and P. हे शोभनाह्वानास्त्वष्ट्टप्रभृतयः ! Sy. कीदृश्यो यूयम् ? सुहवाः शोभनः सुकरो हव आह्वानं यासां ताः Mah. साध्वाह्वानाः U.

५. नोऽस्माकं यज्ञगृहाणि Mah., U.

६. अग० M. गन्तन. . .,गमेश्छान्दसः शपो लुक् । 'तप्तनप्तनथनाश्च' इति तनबादेशः Sy. आगच्छत Mah., U.

७. चास्मि P.

८. बहि P. वेद्यामास्तीर्णे Sy. दर्भे Mah.

९. षी० P. निषीदत is suggested for निषीदय ॥ सदतन निषण्णा भवत । सदेश्छान्दसः सीदादेशाभावः Sy. निषीदत, उपविशत 'षद्लृ गतौ' Mah., U.

१०. M. adds अथ before तत्र ॥ उपविश्य च Sy.

११. रमध्वम् is suggested for रमत ॥ रणिष्टन रमध्वम् । रण शब्दार्थः । अत्र क्रीडायां वर्तते । धातूनामनेकार्थत्वात् । अस्माच्छान्दसो लुङ् । पूर्ववत्तनबादेशः Sy. 'रण शब्दे' अस्य लुङि रूपम् ।. . .परस्परं वार्तां कुरुतेत्यर्थः Mah. निषद्य च रणिष्टन रतिं कुरुत U.

१२. स्वा० M. and P. अथानन्तरम् Sy. अथानन्तरं देवपत्नीष्वागतासु Mah. अथोपविष्टासु देवपत्नीषु U.

१३. एवं देवपत्नीरुक्त्वाऽथ त्वष्टारमाह—हे त्वष्टः ! Mah.

१४. सोमलक्षणस्यान्नस्य । द्वितीयार्थे षष्ठी । सोमलक्षणमन्नम् Sy. अन्धो हविर्लक्षणमन्नम्. . .। अन्धस इति कर्मणि षष्ठी Mah. अन्धसः सोमस्य स्वमंशम् U.

१५. तृप्तो भव Sy. मोदस्व । तृप्यस्वेत्यर्थः Mah. मन्दस्व तृप्यस्व U.

१६. सेवमानः Sy. सेवमानः । 'जुषी प्रीतिसेवनयोः' व्यत्ययेन शानचि शपः श्लुः Mah., U.

१७. अन्यैर्देवैः Sy.

१८. देवपत्नीभिश्च Sy. देवपत्नीभिश्च. . . जनयन्तीति जनयो नार्यः Mah. जननहेतुभूताभिर्देवपत्नीभिः U.

शोभनगणः[1] ।[2]

आ वक्षि देवाँ इह विप्र यक्षि चोशन्होतर्नि षदा योनिषु त्रिषु ।
प्रति वीहि प्रस्थितं सोम्यं मधु पिबाग्नीध्रात्तव भागस्य तृप्णुहि ॥ ४ ॥

आ वक्षि[3] । अग्ने[4] ! देवान्[5] । इह । आवह[6] । यक्षि[7] । च तान् । कामयमानः[8] । होतः[9] ! निषीद[10] च । गार्हपत्यादिषु स्थानेषु[11] । प्रतिकामय[12] । प्रस्थितम्[13] । सोममयम् । मधु । पिब[14] च[15] । आग्नीध्रात्[16] । त्वदीयेन । भागेन[17] । तृप्यस्व[18] ।

एष स्य ते तन्वो नृम्णवर्धनः सह ओजः प्रदिवि बाह्वोर्हितः ।
तुभ्यं सुतो मघवन्तुभ्यमाभृतस्त्वमस्य ब्राह्मणादा तृपत्पिब ॥ ५ ॥

एषः[19] । नृषु[20] मनो यस्य, नृन्वा नमयति स नृम्ण इत्युच्यते, हे[21] इन्द्र ! सः । अयं सोमः ।

---

१. M. omits भिश्च । शोभन ॥ सुमद्गणः सुष्ठु माद्यन्ति हृष्यन्ति सुमदः । मदेः क्विप् । सुमदः सन्तुष्टा गणा देवाः स्त्रीगणाश्च यस्य स सुमद्गणः Mah. शोभनमदा देवास्तेषां स्त्रीणां च गणो यस्य स सुमद्गणः U.

२. VM. ignores हि ॥ हिशब्दः पूरणः Sy. हिः पादपूरणः Mah., U. This stanza=YV. 26.24.

३. M. omits the *pratīka*, but some later hand has supplied आवन्ति in M.

४. हे विप्र ! मेधाविन् ! अग्ने ! Sy.

५. M. omits देवान् ॥ यष्टव्यानिन्द्रादीन् Sy. ६. आव P. M. omits आ which has been supplied by a later hand. ७. यज च Sy.

८. कामय M. कामान् P. अस्मदीयं कामयमानः सन् Sy. ९. होँ P. देवानामाह्वातः ! त्वम् Sy.

१०. उपविश Sy.

११. Omitted in P. स्थानेषु गार्हपत्यादिलक्षणेषु Sy. १२. प्रतिकामयस्व Sy.

१३. M. repeats the word प्रस्थितम् ॥ उपविश्य च, होमार्थमुत्तरवेदि प्रत्यानीतम् Sy. १४. पिबत M.

१५. म P. १६. ०ध्रा P. कामयित्वा च. . .आग्नीध्रयागात् Sy. १७. पृष्य P. पीत्वा च. . .तृप्तो भव Sy.

१८. VM. ignores त्रिषु ।

१९. Omitted in P. A later hand adds एष स्यः ते in M.

२०. VM. evidently explains नृम्ण separately as a vocative in the sense of हे इन्द्र ! but नृम्ण is not an independent word. It is the first member of a compound नृम्णवर्धनः, which is not in the vocative. Sy. takes नृम्णवर्धनः as one compound word and explains it as बलस्य वर्धकः, तुभ्यं सुत इत्युत्तरत्र सम्बन्धः । २१. M. omits the words between मनो and हे ।

तव । शरीरस्य । वर्धनः । तथा पुराणे त्वयि । बाह्वोः[१] । सहस्करः[२] । ओजस्करश्च[३] । अभिहितः[४] । सोऽयं तुभ्यम्[५] । सुतः[६] । मघवन्[७] ! तथा तुभ्यमेव[८] । सम्भृतः[९] । त्वम् । इमम्[१०] । ब्राह्मणाच्छंसिनो[११] यागात्[१२] । तृप्यन्[१३] । सुपिबेति[१४] ।

**जुषेथां यज्ञं बोधतं हवस्य मे सत्तो होता निविदः पूर्व्या अनु ।**
**अच्छा राजाना नम एत्यावृतं प्रशास्त्रादा पिबतं सोम्यं मधु ॥ ६ ॥**

जुषेथाम् । हे मित्रावरुणौ ! सेवेथाम् । यज्ञम् । बुध्यतं[१५] च । मदीयस्य[१६] । आह्वानस्य[१७] । निषण्णः[१८] । होता[१९] । वाचः[२०] । पूर्व्याः[२१] । लक्ष्यीकृत्य[२२] यज्ञार्थं[२३] । युवाम्[२४] । सोमाख्यमन्नम्[२५] । अच्छैति[२६] । भवद्भ्यामाभिमुख्येन[२७] वृतम्[२८] । मैत्रावरुणात्[२९] । आपिबतम्[३०] । सोममयम् । मध्विति[३१] ।

व्याख्यत्सप्तममध्यायं द्वितीयस्येति माधवः ।

गोविन्दो यस्य तनयो ज्येष्ठः पुत्रश्च वेङ्कटः[३२] ॥

---

१. बाह्वोः M. बाहोः P. हस्तयोः Sy.
२. समहस्कारः M. सहस्तर P. सहः परेषामभिभवनलक्षणं सामर्थ्यम् Sy.
३. ओजस्करश्च M. बजस्तररश्च P. ओजस्तत्कारणभूतं बलञ्च Sy.
४. निहितं भवति लिङ्गव्यत्ययः Sy.
५. सोपस्तु० P. त्वदर्थम् Sy.
६. तादृशः सोमः अध्वर्युभिरभिषुतः Sy.
७. हे धनवन्निन्द्र ! Sy.
८. P. adds तुभ्यं सुतो मघवन् तथा ॥ तुभ्यं होतुम् Sy.
९. उत्तरवेद्यां प्रत्याहृतश्च Sy.
१०. सोमम्...'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वादस्येति चतुर्थ्यर्थे षष्ठी Sy. ११. ०च्छंसिनि P.
१२. Omitted in P. १३. थ्यन् P.
१४. M. omits the words between ब्राह्मणा and बेति । आभिमुख्येन पिब Sy.
१५. बुध्य P. बुध्येथाम् is suggested for बुध्यतम् ॥ अवगच्छतम् Sy.
१६. मम Sy.
१७. आह्वानम् । पूर्ववत् कर्मणि षष्ठी Sy.
१८. ०षणः M.
१९. अस्मदीयो होता Sy.
२०. निविदः । वाङ्नामैतत् । शस्त्रलक्षणा वाचः Sy. २१. चिरन्तनीः Sy.
२२. अनु शंसतीति शेषः । उद्गातृभिः कृतस्य स्तोत्रस्यानुगुण्येनाज्यादीनि शस्त्राणि शंसतीत्यर्थः Sy.
२३. ज्ञात्यं P.
२४. राजाना राजमानौ युवाम् Sy.
२५. ०ख्यन्न P. अपि च सोमलक्षणमन्नम् Sy.
२६. अच्छेति P., M. गच्छति प्राप्नोति Sy.
२७. भवभ्या० P.
२८. वृत P. ऋत्विग्भिर्वेष्टितम् Sy.
२९. मैत्रावरुणौ P. प्रशास्तुर्यागात् Sy.
३०. आभिमुख्येन पिबतम् Sy.
३१. मादकं हविः Sy.
३२. वंकटः P.

# [ अथ द्वितीयेऽष्टकेऽष्टमोऽध्यायः ][1]

'मन्दस्व[2] होत्राद्'[3] अध्यायं व्याचिख्यासति माधवः ।

दर्शयन्नात्मनेपदप्रयुक्तं भेदमादितः[4] ॥

किमत्र कारणं ब्रूहि[5] धातवो[6]ऽमी व्यवस्थिताः[7] ।

परस्मैपदिनः केचिदात्मनेपदिनोऽपरे ॥

आत्मनेपदमेवैषु दृश्यते 'भावकर्मणोः'[8] ।

उदाहरणमेतेषां बहुत्वान्न प्रदर्श्यते[9] ॥

वदन्ति तत्र कवयः स्वभावादिह केचन[10] ।

अभिसंयति[11] कर्तारम् 'अग्निमीळे पुरोहितम्'[12] ॥

फलं[13] स्तुतेः[14] स्वभावेन कर्तारमुपगच्छति ।

अन्यार्थत्वं स्तुतेर्यत्नात्[15]प्रतिपाद्यमिति स्थितिः ॥

आत्मनेपदिनस्ते स्युः[16] परस्मैपदिनोऽपरे ।

ईक्षतेः पश्यतेश्चापि भेदः सूक्ष्मोऽस्ति कश्चन ॥

अभिसन्धाय कार्यार्थे[17] दर्शनं विदुरीक्षणम् ।

'अवेक्षे[18] सुप्र[19]ज[20]स्त्वाय' तत्राहु[21]श्च निदर्शनम् ॥

---

१. अथ . . .ध्यायः is omitted by P.
२. मन्दं स्व० M.
३. RV. 2.37.1.
४. वेद० P. ५. बूरा P.
६. धावको P. ७. ध्यवस्थिताः P.
८. Cf. Pa. 1.3.13.
९. प्रदृश्यते P.
१०. काश्चन M. कश्चन P.
११. ०यन्ति M. and P.
१२. RV. 1.1.1.
१३. न फलं P. १४. कृतेः P.
१५. ०र्थस्मात्प्र० M.
१६. युः M. १७. ०र्यात्यं P.
१८. अपेक्षते P.
१९. सुप्रजा० M., P.
२०. Q. UT. २१. तदाहु० P.

नियमः पश्यतेर्नास्ति 'नराशंसं सुधृष्टमम्'[1] ।
परस्मैपदि[2] पश्यतिरन्य[3]स्तेनात्मनेपदी[4] ॥

भवन्ति चोभयविधाः 'प्राता[5] रत्नं प्रातरित्वा'[6][7] ।
'अञ्जन्ति त्वामध्वरे'[8] च 'चित्रैरञ्जिभि[9]र्वपुषे'[10][11] ॥

कर्तृ[12]गामिन्यपि फले[13] न भवत्यात्मनेपदम् ।
आविवक्षयोपपदा[14]त्प्रतीतेश्च तथा क्वचित् ॥

आत्मनेपदमित्येषा संज्ञा[15]ऽर्थं दर्शयत्यमुम् ।
यदि[16] प्रयोगकर्मा स्यादात्मने भाष्यत इति ॥

अल्पं[17] भेदमनाश्रित्य परोक्षादौ लुङादयः ।
प्रयुज्यन्ते तथा तद्वत्सङ्करश्चापि दृश्यते ॥

वदन्ति वैयाकरणा[18] इमं भेदमुपग्रहम् ।
स चायं दुर्ग्रहो[19] भेदः स्पष्टं तेभ्योऽवधार्यताम्[20] ॥ इति ॥

---

१. RV. 1.18.9.
२. ०पदी is suggested for ०पदि
३. ०श्यन्ति अन्य० M.
४. ०पदि P.
५. प्रातर० M.
६. प्रत० P.
७. RV. 1.125.1.
८. RV. 3.8.1.
९. ०रञ्जिभि० M.
१०. P. omits वपुषे
११. RV. 1.64.4.
१२. कतृगा० P.
१३. Cf. Pa. 1.3.72.
१४. ०पपादा० P.
१५. ०ज्ञार्थं P.
१६. यदित् M. यदिः P.
१७. अलपं P.
१८. ०रणम् M.
१९. दुर्हो P.
२०. ०वर्धायमाम् M.

## II. 37.

मन्दस्व होत्रादनु जोषमन्धसोऽध्वर्यवः स पूर्णां वष्ट्यासिचम् ।
तस्मा एतं भरत तद्वशो ददिर्होत्रात्सोमं द्रविणोदः पिब ऋतुभिः ॥ १ ॥

[1]मन्दस्व ॥ गृत्समदः ॥ [2]यथाकामम् । [3]होत्रात् । [4]सोमेन । तृप्यस्व । हे अध्वर्यवः ! द्रविणोदाः । [5]पूर्णाम् । [6]सिचं [7]सिञ्चतेः, [8]स्रुतम् । [9]कामयते । [10]ततश्च तस्मै । एतं सोमम् । [11]भरत । तत्कामः । अयं [12]दानशीलो द्रविणोदाः । [13]हे द्रविणोदः ! [14]होतुः । सोमम् । [15]ऋतुभिस्सह । [16]पिब ।

यमु पूर्वमहुवे तमिदं हुवे सेदु हव्यो ददिर्यो नाम पत्यते ।
अध्वर्युभिः प्रस्थितं सोम्यं मधु पोत्रात्सोमं द्रविणोदः पिब ऋतुभिः ॥२॥

यमु पूर्वम् । [17]यम् । एव । [18]पूर्वम् । [19]आहूतवान् । [20]तम् । [21]इदानीम् । आह्वयामि ।

---

१. द्वितीयमण्डलस्य चतुर्थानुवाके 'मन्दस्व' इति षडृचं पञ्चमं सूक्तं गार्त्समदम् । 'मन्दस्व' (KSA. 16. 37. p. 14.) इत्यनुक्रान्तम् । पूर्वत्र (KSA. 15. 36., p. 14.) 'ऋतव्यं तु जागतं तु' इति तुशब्दप्रयोगादिदमपि जागतमृतव्यम् । तत्राद्याश्चतस्र ऋचो द्रविणोदोदेवताकाः पञ्चम्याश्विनी षष्ठ्याग्नेयी । दशरात्रे षष्ठेऽहनि ऋतुयाजेषु प्रैषानृक्शिरस्कान् कृत्वा तैः प्रैषैः प्रेषितव्यं यष्टव्यञ्च । तत्र सप्तमादीनां प्रैषाणामुपरिष्टात् 'मन्दस्व' इत्याद्याः षडृचः क्रमेण प्रक्षेपणीयाः । सूत्रं तु पूर्वमेवोदाहृतम् Sy.

२. It seems to be the explanation of अनुजोषम् ॥ प्रीतिमनु Sy.

३. होत्रा P. होतृकर्तृकाद्यागात् Sy.

४. अन्धसो देवानामन्नरूपस्य सोमस्य । सोमेन Sy.

५. पूर्णा P. सम्पूर्णाम् Sy.

६. सीत् P. M. adds सिचं before सिचम् ॥ आसिचम् सिच्यमानाहुतिम् Sy.

७. ०ते M. and P.

८. स्रुं M. स्रुत्वं P.

९. ०यत M.

१०. P. omits ततः ॥ तस्मै द्रविणोदसेऽग्नये Sy.

११. प्रापयत Sy.

१२. ददिर्दाता युष्माकमभीष्टफलस्य दाता भवतीति शेषः Sy.

१३. हे द्रविणोदः is omitted by P. हे द्रविणसो धनस्य दातः ! एतन्नामक ! देव ! Sy.

१४. होतः P. होतुर्यागात् Sy.

१५. यतुभिः M. इषमासाभिमानिभिर्ऋतुदेवैस्सह Sy.

१६. VM. paraphrases सः by द्रविणोदाः and ignores आ in आसिचम् ।

१७. त्वाम् Sy.

१८. होतृकर्तृके सोमयागे Sy.

१९. आहूतवानस्मि Sy.

२०. तमेव Sy.

२१. सम्प्रति. . .पोतृकर्तृके सोमयागे Sy.

सः । एवं[1] । ज्ञातव्यः[2] । दाता[3] । यः[4] । नाम[5] । ईश्वरो भवति[6] सर्वस्य । अध्वर्युभिः सह[7] । प्रस्थितम्[8]इति[9] ।

**मेद्यन्तु ते वह्नयो येभिरीयसेऽरिषण्यन्वीळयस्वा वनस्पते ।**
**आयूया धृष्णो अभिगूर्या त्वं नेष्ट्रात्सोमं द्रविणोदः पिब ऋतुभिः ॥ ३ ॥**

मेद्यन्तु[10] ते । सुहिता[11] मेद्यन्तु[12] । ते[13] । वह्नयो वोळ्हारोऽश्वाः[14] । यैरश्वैः[15] । गच्छसि[16] । अहिंसन्[17] । स्तम्भय[18] । अत्र यास्कः[19]—'दृढीभव[20] । आयूय[21] धृष्णो अभिगूर्य[22] त्वं

---

१. द्रविणोदाः Sy.

२. आह्वात० M.

३. अभीष्टफलस्य दाता Sy.

४. अयम् M. and P.

५. खलु Sy.

६. भवसि M. and P. देवतात्वेनेष्टे Sy.

७. स M. and P.

८. प्रस्थितं प्रणीतमासीत् Sy.

९. VM. ignores उ । सोम्यम् । मधु । पोत्रात् । सोमम् । द्रविणोदः । पिब and ऋतुभिः ।
Sy. explains these words in the following manner:—उ इति पूरणे । सोम्यं सोमात्मकम् । मधु । हे द्रविणोदः ! पोत्रात्पोतुर्यागात् । ऋतुभिरृत्विक्संज्ञकैः सह । सोमम् । पिब ।

१०. मन्त्यन्तु P.  ११. सहितः P.

१२. मद्य० M. तृप्यन्तु Sy. स्निह्यन्तु SKN. 'ञिमिदा स्नेहने' तस्य लोटि मेद्यन्त्विति भवति...स्निह्यन्तु Dur.

१३. प्रथमाबहुवचनमेतत्, न षष्ठ्येकवचनम् । येभिरितियच्छब्दसम्बन्धात् । छान्दसत्वान्निघातः । षष्ठीपक्षेऽपि वा यच्छब्दश्रुतेस्तच्छब्दाध्याहारः । ते तव स्वभूतास्तेऽश्वाः SKN. ते तव Dur.

१४. बोळहारः M. बोह्ळारः P. वह्नयो वोळ्हारः N. 8.3.

१५. वाहैः Sy.

१६. प्राप्नोषि Sy. नित्यं गच्छसि Dur.

१७. अहिंसंश्च कञ्चित् SKN. अहिंस्यमानः केनचिदपि Dur.

१८. दृढीभव Sy. संस्तम्भयस्व, दृढो भव SKN. स त्वमेभिरश्वैरागत्यास्मद्यज्ञं वीळयस्व दृढमात्मानं कुरुष्व सोममस्मत्त्वत्तं पातुम् Dur.

१९. N. 8.3.

२०. ०भाव M. and P.

२१. आयय M. and P. आगत्य Sy.

२२. M. and P. add त्वम् before अभिगूर्य and not after it. उद्यम्य Sy. अभ्युद्यम्य च SKN., Dur.

नेष्ट्रीयात्,[1] धिष्ण्यात्[2] इति। वनानां[3] पते! आलोड्य[4]। हे धृष्णो[5]! सोमम्[6]। पिब। अभिगोरणम्[7], आत्माभिमुखं नयनमिति।[8]

**अपाद्धोत्रादुत पोत्रादमत्तोत नेष्ट्रादजुषत प्रयो हितम्।**
**तुरीयं पात्रममृक्तममर्त्यं द्रविणोदाः पिबतु द्राविणोदसः॥ ४॥**

[9]अपाद्धोत्रात्[10]। होतुः[11]। सोमम् अपात्[12]। अपि च[13]। पोतुः[14] सोमेन। अमाद्यत्[15]। अपि च। नेष्टुः[16]। अन्नम्[17]। सेवितवान्[18]। निहितम्[19]। अधुना चतुर्थम्[20]। पात्रम्[21]। दशापवित्रेणापरामृष्टम्[22]।

---

१. नेष्ट्यं M. नेष्टा P. नेष्टुर्यागात् Sy.
२. धिष्ण्यत् P. नेष्टुस्वभूतात्पात्रात् SKN.
३. वनानां पातरग्ने! SKN. हे भगवन्! वनस्पते! Dur.
४. ०लोप्य M. आगत्य Sy. कथं चैनं पिब...आमिश्य मिश्रीकृत्याङ्गुल्या, स हि पानपातॄणां स्वभावो यदङ्गुल्या मन्थनम् Dur.
५. हे धर्षक! Sy. हे धर्षितः! तमसाम् SKN. शत्रूणां धर्षयितः! Dur.
६. सोमं नेष्ट्रा वषट्कृतम् Dur.
७. ०भिघोर० M. उद्यम्य Sy.
८. VM. ignores द्रविणोदः and ऋतुभिः।
हे द्रविणोदः! ऋतुभिः सहःसंज्ञकैः सह Sy. हे द्रविणोदः! धनस्य बलस्य वा दातः! पिब ऋतुभिः सह SKN. पिब ऋतुभिः कालैः सहेत्येतद् ब्रूमहे Dur. मेद्यन्तु ते। वह्नयो वोळ्हारः। यैर्यासि। अरिष्यन्... धिष्णो धिष्ण्यो धिषणाभवः! धिषणा [वाक्] धिषेर्दधात्यर्थे। धीसादिनीति वा धीसानिनीति वा। वनस्पत इत्येनमाह। एष हि वनानां पाता वा पालयिता वा। वनं वनोतेः। पिब। ऋतुभिः कालैः N. 8.3.
९. प्रच्छावाकस्येयम् Sy.
१०. ०पाध्रो० P.
११. होतुर्यागात् Sy. होतृस्वभूतात्पात्रात् SKN.
१२. पीतवान् Sy., SKN.
१३. अधि M. किञ्च Sy.
१४. उपोतुः P. पोतुर्यागात् Sy. होतुः? (पोतुः) स्वभूतात् SKN.
१५. मात् P. सोमं पीत्वामाद्यत् Sy. 'मद तृप्तौ' इत्यस्यैतद्रूपम्। छान्दसत्वाद्विकरणाभावः। तृप्त इत्यर्थः SKN.
१६. नेष M. नेष्टुर्यागात् Sy. नेष्टुस्वभूतात् SKN.
१७. अन्ना P. देवानामन्नरूपं सोमम् Sy. अन्नं सोमाख्यम् SKN.
१८. असेविष्ट Sy.
१९. नि एतम् P. दत्तम् Sy. हितमुपकारकमात्मनः। दधातेर्वा दानार्थस्य निष्ठायामिदं रूपम्। हितं दत्तं सदस्माभिः SKN.
२०. ०तुर्थं P.
२१. चतुर्थपात्रस्थं सोमम् Sy. चतुर्थमिदं पात्रम् SKN.
२२. ०त्रेणापरि० P. अमृष्टम् Sy. अमृक्तम्—अमृतसदृशम्। ककारस्योपजनः SKN.

सोमसम्बन्धात्[१] । अयं द्रविणोदाः[२] । पिबतु[३] । आत्मीयस्य सोमस्य[४] ।[५]

अर्वाञ्चमद्य यय्यं नृवाहणं रथं युञ्जाथामिह वां विमोचनम् ।
पृङ्क्तं हवींषि मधुना हि कं गतमथा सोमं पिबतं वाजिनीवसू ॥ ५ ॥

अर्वाञ्चम् । अस्मदभिमुखम्[६] । अद्य[७] । अत्यन्तं यन्तम्[८] । नेत्रोर्युवयोर्वाहनम्[९] । रथम् । युञ्जाथाम् । यो रथो वाम्[१०] । इह[११] । विमोचयति[१२] । सम्पर्चयतम्[१३] । हवींषि सेचने[१४] । तदर्थ[१५] भवदीयेन मधुना[१६] सह । आगच्छतम् । कमिति[१७] पूरणम् । अथा[१८] । सोमम् । पिबतम् । हे अन्नवसू[१९] ! अश्विनौ[२०] !

जोष्यग्ने समिधं जोष्याहुतिं जोषि ब्रह्म जन्यं जोषि सुष्टुतिम् ।
विश्वेभिर्विश्वाँ ऋतुना वसो मह उशन्देवाँ उशतः पायया हविः ॥ ६ ॥

जोष्यग्ने । जुषस्व । अग्ने ! समिदादिकम् । जनभवम्[२१] । उक्थम्[२२] । सर्वैः[२३] । ऋतुभिः[२४]

---

१. The phrase सोमसम्बन्धात् is incomplete. The addition of the word अमर्त्यम् after it, will make it complete and the meaning significant, *i.e.*, immortal on account of drinking soma. अमरणसाधनम् Sy. अमरणधर्मम् SKN.

२. तस्मादिन्द्रो द्रविणोदा इति पूर्वः क्रौष्टुकिपक्षः. . .अतः परं सिद्धान्तमाह. . .। अयमेव पार्थिवोऽग्निः SKN.

३. पिबत P.

४. Omitted by P. हवीरूपद्रविणस्य प्रदातृभ्य ऋत्विग्भ्यो हितः Sy. द्रविणोदसोऽग्निः लुप्तोपमं चैतत् । तैरध्यादिना (अग्नि-) सदृश इत्यर्थः । यस्यासावपत्यम् SKN. यथो एतदग्निं द्राविणोदसमाहेति । ऋत्विजोऽत्र द्रविणोदस उच्यन्ते । हविषो दातारस्ते चैनं जनयन्ति N. 8.2., SKN. III. 117,118.

५. VM. ignores अमर्त्यम् ।

६. यथार्वाग्भवति तथा Sy.

७. अस्मिन्नहनि Sy.

८. त्य० P. यांग गन्तारम् Sy.

९. नेत्रोर्युवयोर्वोढारम् Sy.

१०. युवयोः Sy. ११. यज्ञे Sy.

१२. विमोचयितारम् Sy.

१३. पर्चं० P. संयोजयतम् Sy.

१४. ०नेन P. १५. ०दर्थं P.

१६. स्वादुरसेन Sy.

१७. किमि० M. हि कमिति पूरणे Sy.

१८. अथ is suggested for अथा ॥ अथानन्तरम् Sy.

१९. अन्नं व० P. वाज एव वाजिनी । अन्नेन वासयितारौ बलवर्धनौ वा Sy.

२०. VM. ignores हि ॥ हि पूरणे Sy.

२१. जनेभ्यो हितम् Sy.

२२. उत्थं M. शोभनस्तोत्रम् Sy.

२३. सर्वैर्देवैः सह Sy.

२४. ऋतुना तपस्यसंज्ञकेन सह Sy.

सह । सर्वान् । वासयितः[1] ! महतः । कामयमानान् । कामयमानः[2] । सोमम्[3] । पायय[4] ।[5]

## II. 38.

उदु ष्य देवः सविता सवायं शश्वत्तमं तदपा वह्निरस्थात् ।
नूनं देवेभ्यो वि हि धाति रत्नमथाभजद्वीतिहोत्रं स्वस्तौ ॥ १ ॥

उदु[6] ष्यः । उत्तिष्ठति[7] । अयम्[8] । देव्यः[9] । सविता । सर्वेषां प्रसवाय[10] । नित्यम्[11] । तत्कर्मा[12] । वोढा[13] । नूनम्[14] । स देवेभ्यः[15] । रमणीयं धनम् । विदधाति[16] । तथा[17] । प्रिययज्ञं[18] च यजमानम् । अविनाशे[19] । प्रापयति[20] ।[21]

---

१. ०यितं M. सर्वेषामावासभूत ! हे अग्ने ! Sy.

२. ०मानाः P. कामयमानस्त्वम् Sy.

३. हविर्हवीरूपं सोमम् Sy.

४. वायवः P.

५. VM. explains जोषि once and ignores देवान् । (आहुतिम् and ब्रह्म are included in आदि in समिदादिकम्)
Sy. explains these words in the following manner:— आहुतिं जोषि जुषस्व । ब्रह्म शस्त्रं जोषि जुषस्व ।

६. 'उदु ष्यः' इत्येकादशर्चं षष्ठं सूक्तं गार्त्समदं त्रैष्टुभं सवितृदेवताकम् । अत्रानुक्रमणिका—'उदु ष्य एकादश सावित्रम्' (KSA. 16.38. p. 14.) इति । व्यूढे दशरात्रे षष्ठेऽहनि वैश्वदेवशस्त्रे एतत्सूक्तं सावित्रनिविद्धानीयम् । 'व्यूळ्हश्चेत्' इति खण्डे सूत्रितं—'षष्ठस्योदु ष्य देव इति गार्त्समदम्'(ASS. 8.8.) इति Sy.

७. ०ष्ठतु M.

८. सः Sy.

९. देवः is suggested for देव्यः ॥ द्योतमानः Sy.

१०. लोकानां प्रसवायानुज्ञायै Sy.

११. नित्य P. प्रतिदिनम् Sy.

१२. तदपाः । तत्प्रसवकर्मा Sy. अपः कर्मनाम Ngh. 2.1.

१३. वोढा जगताम् Sy.

१४. सम्प्रति Sy.

१५. स देवेभ्यः is omitted by M. स्तोतृभ्यः Sy.

१६. प्रयच्छति Sy.

१७. अपि च Sy.

१८. कान्तयज्ञं यजमानम् Sy.

१९. अविना० M. स्वस्तौ अविनाशे क्षेमे . . . यद्यपि स्वस्तिशब्दो विभक्त्यन्तनिर्दिष्टः शब्दपरस्तथापि अपर्यवसानादर्थपरो भवति Sy.

२०. भागिनं करोतु Sy.

२१. VM. ignores उ । हि and आ ।

विश्वस्य हि श्रुष्टये देव ऊर्ध्वः प्र बाहवा पृथुपाणिः सिसर्ति ।
आपश्चिदस्य व्रत आ निमृग्रा अयं चिद्वातो रमते परिज्मन् ॥ २ ॥

विश्वस्य हि । विश्वस्य[1] । स्वकार्येषु क्षिप्रत्वाय[2] । देवः[3] । ऊर्ध्वम्[4] । प्रसारयति । बाहू[5] । पृथुपाणिः[6] । आपः । चित्[7] । अस्य । कर्मणि[8] । आ[9] । निर्मर्ण्यानि[10] मृज्यन्ते वृष्टिलक्षणाः । अयम्[11] । वातः[12] । च[13] । परितो गन्तरि सवितरि[14] । रमते[15] ।

आशुभिश्चिद्यान्वि मुचाति नूनमरीरमदतमानं चिदेतोः ।
अह्यर्षूणां चिन्न्ययाँ अविष्यामनु व्रतं सवितुर्मोक्यागात् ॥ ३ ॥

आशुभिः । आशुभिरश्वैः[16] । सम्प्रत्यस्तमन[17]वेलायां[18] यान्[19] । विमुञ्चति[20] । नूनम्[21] । रमयति[22] । गच्छन्तम्[23] । चापि[24] । पथि[25] गमनात् । पुनःशब्दः सर्पाणां[26] तेषाम् । न्ययान्[27] निर्गमनानि करोति । प्राणिनां[28] रक्षणीयां[29] रात्रिं प्रतीति गम्यते । सवितुः[30] । इदमस्तमयकर्म । अनु[31] ।

---

१. जगतः Sy.
२. श्रुष्टीति क्षिप्रनाम । आशु अष्टीति N. 6. 12. Also cf. Ngh. 4.3.; सुखाय Sy.
३. द्योतमानः सविता Sy.
४. ऊर्ध्वः P. उद्गतः सन् Sy.
५. बाहु P.
६. महत्करः Sy.
७. अपि Sy.
८. प्रसवाख्ये कर्मणि सति । 'व्रतं कर्वरम्' (Ngh. 2. 1.) इति तन्नामसु पाठात् Sy.
९. आ स्यन्दत इति शेषः Sy.
१०. M. omits the words between पृथु and निर्मर्ण्यानि ॥ नितरां शोधयित्र्यो गङ्गादिरूपेण जगत्पावयन्तीत्यर्थः Sy.
११. यं M.
१२. वायुः Sy.
१३. अपि Sy.
१४. परितो गते व्याप्तेऽन्तरिक्षे Sy.
१५. VM. ignores हि ।
१६. आशुभिश्चित् शीघ्रगामिभिरपि रश्मिभिः Sy.
१७. सप्र० P.
१८. ०मवे० P.
१९. यां M. and P. गच्छन् सविता Sy.
२०. विमुच्य M. विमुच्यते Sy.
२१. Omitted in M. P. reads उप ॥ नूनमिति पूरणः Sy.
२२. उपरमयति Sy.
२३. गच्छ M. सततं गच्छन्तमपि जनम् Sy.
२४. अपि Sy.
२५. M. omits पथि ।
२६. अहंयो येषां दर्शनं सर्पाणां तेषाम् P. पुनः शब्दः is redundant. सर्पाणां seems to be the explanation of अह्यर्षूणाम् । Sy. explains अह्यर्षूणाम् as अहिमाहन्तारं शत्रुमर्षन्त्यभिगच्छन्तीत्यह्यर्षवस्तेषाम् ।
२७. न्यायान् M. न्यया P. नियच्छति Sy.
२८. प्रणि० P.
२९. रणी० P. गमनेच्छाम् Sy.
३०. प्रेरकस्य सूर्यस्य Sy.
३१. पश्चात् Sy.

रात्रिः[1]। आगतेति[2]।[3]

**पुनः समव्यद्विततं वयन्ती मध्या कर्तोर्न्यधाच्छक्म धीरः।**
**उत्संहायास्थाद् व्यृ१तूँरदर्धररमतिः सविता देव आगात्॥ ४॥**

पुनः[4] समव्यत्। पुनश्शब्दो मध्यमवचनः[5], पुनर्निगतः[6], दक्षिणेऽन्यकाले[7] प्रागेव जरणात्सं[8]-स्कृत[9] इत्यर्थः[10]। रथ्यायां[11] विततं[12] वस्त्रम्[13]। वयन्ती[14] तन्तुवायस्त्री[15]। मध्ये तत् समव्यत्[16] संवेष्टयति[17], आदाय गृहे निधातुम्[18]। तथा करणस्य[19]। मध्ये[20]। कर्म[21]। निधत्ते[22] प्रातः करिष्यामीति।

---

१. मोकी । शोकी । वस्वीति. . .रात्रिनामानि (Ngh. 1.7.)
२. आगच्छति । सवितुश्चेष्टोपरतौ रात्रिरागच्छतीति यावत् Sy.
३. VM. explains चित् once only.
४. गृत्समदस्यार्षम् SKN. गृत्समदस्येदमार्षम् Dur.
५. M. omits मध्यम ॥ पुनःशब्दः पूर्वेद्युरप्येवमाकार्षीदिति द्योतयति Sy. यदा तावत्पूर्वस्यामृचि तनुत इत्युपमार्थे तदाऽस्या ऋचः प्रथमोऽर्धर्च एवं व्याख्येयः। यदुदयकाले ततदस्तमयकाले पुनः समव्यत् SKN.
६. M. reads रथः for पुनर्निगतः।
७. ग्रत्य० P.
८. ०णां सं० M.
९. संस्तुत P.
१०. इत्यत्र्थः P.
११. रथ्याया M.
१२. विततम् आलोकम् Sy. एतद्रश्मिजालम् Dur.
१३. Omitted by P.
१४. वयन्तीं M. सूपयन्ति P.
१५. ०यः स्त्री M. वस्त्रं वयन्ती नारीव रात्रिः Sy. काचित् स्त्री SKN. यथा योषित्कदाचित् वासो वयन्ती पुनः संवेष्टयत्यस्तमयकाले पुनश्च वितनोत्यादित्ये उदिते, एवमियं रात्रिः पुनरेव तमः संवेष्टयति योषिदिव वासो वयन्ती Dur.
१६. संव्यत् M. सव्ययत् P. संवेष्टयते Sy. 'व्येञ् संवरणे'। प्रावृणोति वेष्टयतीत्यर्थः। भाष्ये समनात्सीदिति समव्यदित्यस्यार्थस्य कथनम्। 'णह बन्धने' इत्यस्यैतद्रूपम्। सम्यग् बध्नाति संवृणोति वेष्टयतीत्यर्थः SKN. समवेष्टयदित्यर्थः Dur.
१७. सवे० P.
१८. Omitted by M.
१९. कर्तोः क्रियमाणं कर्म Sy. कर्मणः SKN. कर्मणां क्रियमाणानां लौकिकवैदिकानाम् Dur. कर्तोः। कर्तवै।. . .शिल्पमिति. . .कर्मनामानि Ngh. 2.1.
२०. मध्ये उपक्रान्तं कर्मापरिसमाप्येत्यर्थः Sy.
२१. कर्तुं शक्यमपि Sy. तृतीयार्थे चात्र प्रथमा। कर्मणा, उदयादिनाऽस्तमयपर्यन्तेन SKN. स्वात्मप्रसवादपत्यभूतम् Dur. शक्म कर्मनामैतत् Ngh. 2.1.
२२. निमित्ते P. निहितवान्, इति शेषः सवितर्युपरते Sy. न्यदधात् नीचैर्धत्ते लोकानां प्रकाशनाय। अथवा शक्मेति कर्मनाम स्यात्। यदा स्वं प्रकाशं पुनः कर्म निधत्ते निदधाति, उदेति Dur.

धीरः[1] सोयं सविता। रात्रिं[2] संहाय[3]। प्रातरुत्तिष्ठति[4]। ऋतूंश्च[5]। विदारयति[6] स्वागमनेन[7] विवेचयति मासोऽयमर्धमासोऽयम्[8]। अनुपरमणः[9]। सविता[10]। देवः[11]। आगच्छत्विति[12][13]।

---

१. वीरः P. प्रज्ञोऽपि सर्वो लोकः Sy. प्रज्ञावान् सविता। किं पुनस्तत्? तत्कर्मणां मध्ये, उदयादिनाऽस्तमयपर्यन्तेन कर्मणा सविता नियत्ते। यदा तु पूर्वस्यामृचि 'वासः' इत्येतदुपमार्थे तदायमर्थश्च एवं व्याख्येयः—यदुदयकाले ततमासीत्तत् पुनः संवृणोति, रात्रिस्तमपि विततमिव वस्त्रं वयन्ती काचित् स्त्री। कदा? उच्यते, यदा मध्ये कर्मणां वियत्ते स्वेन कर्मणा यदाख्येयेनाहुः प्रज्ञावान् सविता, यदोदयेनाहुः सविता प्रवर्तयतीत्यर्थः SKN. धीरो धीमानादित्यस्तदाऽहनि अभ्युपस्थिते पुनः संवेष्टयति रात्रिस्तम इति, अस्तमयं प्रति पुनर्वास इव तनोतीति। एवमेतस्मिन्नपि मन्त्रे सामर्थ्यादसत्यप्युपमाशब्दे वाससा तम उपमीयते। यथेह तथा पूर्वस्मिन्नपि निगमेऽपीत्येवमेके मन्यन्ते। अपरे पुनः, अपि वोपमार्थे स्यादित्यत्रैव वर्णयन्ति। रात्रीव वासस्तनुत इत्यत्र वासश्शब्दोऽहःशब्दपर्यायवाची। तस्योक्ता व्युत्पत्तिः—वेसरमहरिति। सा रात्रिः वासस्तनुते, अहस्तनुत इत्यर्थः। रात्रिप्रान्ते हि शुक्लमहर्लक्ष्यते, तेन ज्ञायते रात्र्यैवेदं ततमिति। एवमुपमार्थत्वमेके मन्यन्ते। यदा चायमर्थस्तदा "पुनः समव्यद्विततं वयन्ती" (RV. II. 38. 4ª.) इत्यत्र पुनः समवेष्टयदहो रात्रिः। विततमिव वासो वयन्ती। कदा? यदा मध्ये कर्मणां न्यधाद् निदधाति, अस्तं गच्छन्नादित्यः स्वमण्डले शक्म रश्मिजालम् Dur.    २. रात्री P.

३. सहोय M. शय्यां विहाय, सम्पूर्वो जहातिः शय्यापरित्यागे वर्तते। तथा च श्रूयते—'कलिः शयानो भवति सञ्जिहानस्तु द्वापरः' (AB. 7.15.) इति Sy. 'आहोक् त्यागे' इत्यस्य वा 'ओहाङ् गतौ' इत्यस्य वैतद्रूपम्। सम्यक् त्यक्त्वा रात्रिं सङ्गम्य वा SKN. स्वरश्मीनुपसंहृत्य Dur.

४. अवशिष्टं कर्म कर्तुम् पुनरुत्तिष्ठति Sy. स्वरश्मिभिरुदस्थाद् उत्तिष्ठति, उदेतीत्यर्थः SKN. यदा च . . . उत्तिष्ठति Dur.

५. अर्कुंश्च M. कालविशेषांश्च Sy. उत्थाय चाप्यृतून् . . . विविधमृतून्वसन्तादीन् SKN. ऋतूनहोरात्रलक्षणान् Dur.

६. धारयति किञ्चिन्मन्देनातपेन किञ्चिन्मध्येन किञ्चित्तीव्रेण SKN. विदधाति Dur.

७. गमने P.

८. ०सोतिसाय० P.

९. अणुपरिमाणः M. अनुपरतिः Sy. अलंशब्दस्य पर्याप्त्यर्थस्य लकारस्यायं रकारः? (रेफः) मकारलोपश्च। अलम्मतिः पर्याप्तज्ञानः SKN. पर्याप्तमतिः Dur.

१०. सन्निता M. सर्वस्य प्रसविता सूर्यः Sy. यदैवमेष सविता Dur.

११. द्योतमानः Sy.

१२. आगच्छति उदेतीति यावत् Sy. आगच्छति च नभसो मध्येनास्तमयदेशम् SKN. आगच्छति, तदा रात्रिस्तनुते वासोऽहर्लक्षणम्। पुनः संवेष्टयतीत्येवं मन्यन्ते। यदत्रार्थाविरोधि तत् प्रतिपत्तव्यम् Dur.

१३. समनात्सीत् N. 4.11., SKN. II. 223.

नानौकांसि दुर्यो विश्वमायुर्वि तिष्ठते प्रभवः शोको अग्नेः ।
ज्येष्ठं माता सूनवे भागमाधादन्वस्य केतमिषितं सवित्रा ॥ ५ ॥

नानौकांसि । नाना । वासान्[1] । वासरेषु[2] प्रविशन् । सर्वम् । अन्नं[3] हविर्लक्षणं प्रति । वितिष्ठते[4] । अग्नेः । प्रभावतः[5] । शोको[6] दीप्तिः सवितुः, दिनान्ते[7]ऽग्निमयं प्रविशतीत्यर्थः[8] । अथ प्रशस्यतमम्[9] । अग्निहोत्राख्यं[10] भागम् । रात्रिः[11] । पुत्रायाग्नये । तस्य । आगमनज्ञानानन्तरम्[12] । आदधाति । प्रेषितम् । सवित्रेति ।

समाववर्ति विष्ठितो जिगीषुर्विश्वेषां कामश्चरताममाभूत् ।
शश्वाँ अपो विकृतं हित्व्यागादनु व्रतं सवितुर्दैव्यस्य ॥ ६ ॥

समाववर्ति[13] । समावर्तते[14] । युद्धार्थं प्रस्थितः । योद्धा[15] । तथा सर्वेषामेव । जङ्गमानाम् । अस्तं गच्छति सवितरि गृहं[16] प्रति । कामः । भवति । अमेति गृहनाम[17] । कस्मिन्नभूत्[18] काम इति ? तथा[19] तनूकरणस्य[20] कर्ता शश्वान्[21] तक्षा[22] । सामिकृतम्[23] । कर्म । हित्वा । आगच्छति । दैव्यस्य[24] । सवितुः[25] । अस्तमयम्[26] । प्रति[27] ।

१. यजमानानां पृथग्भूतान् गृहान् Sy.
२. वारेषु P. गृह्यो गृहे भवः Sy.
३. अहं M. आयुः । सूनृता । . . . यश इत्यन्ननामानि Ngh. 2.7.
४. तिष्ठते M. अधितिष्ठति Sy.
५. ०वन P. प्रभूतः Sy.
६. शोका P. तेजः Sy.
७. दाना० P. ८. ०त्यर्त्थः P.
९. प्रथमम् Sy. १०. ०होत्रा P.
११. मातोषाः Sy.
१२. This seems to be the explanation of अनु and केतम् ॥ केतं प्रज्ञापकम् Sy.
१३. त्वयाहितं समावर्तितः P.
१४. समावर्तयति Sy. १५. विजयेच्छुर्योद्धा Sy. १६. वितृगृ० D. M.
१७. The passage: अमेति गृहनाम should immediately follow गृहं प्रति ॥ अमा दमे . . . अज्मेति . . . गृहनामानि Ngh. 3.4.
१८. गस्थिन्न० P. कस्मिन्नभूत् काम इति should precede गृहं प्रति ।
१९. Omitted in P.
२०. ०करस्य M.
२१. शश्वा M. शश्व P. VM. evidently derives शश्वान् from √ शो तनूकरणे ॥ नित्यं कर्मरतः Sy.
२२. तक्ष P. २३. अर्धकृतम् Sy.
२४. दैह्यस्य M. and P. दिवि भवस्य Sy.
२५. प्रेरकस्य सूर्यस्य Sy.
२६. VM. seems to paraphrase व्रतम् as अस्तमयम् ॥ अस्तमयाख्यं कर्म Sy. २७. अनु जायत इत्यर्थः Sy.

त्वया हितमप्यमप्सु भागं धन्वान्वा मृगयसो वि तस्थुः ।
वनानि विभ्यो नकिरस्य तानि व्रता देवस्य सवितुर्मिनन्ति ॥ ७ ॥

त्वया हितम्[1] । त्वया । हितम्[2] । अप्यम्[3] । भागम् । अन्तरिक्षे[4] । निरुदकां[5] भूमिम् । अनु मृगयमाणा[6] मनुष्याः । तिष्ठन्ति[7] । तथाऽरण्यानि[8] । पक्षिभ्य[9] आवासाय[10] भवन्ति, उदकवर्धितानि । न केचित्[11] । अस्य । तादृशानि । देवस्य । कर्माणि । हिंसन्ति[12] ।

याद्राध्यं[1] वरुणो योनिमप्यमनिशितं निमिषि जर्भुराणः ।
विश्वो मार्ताण्डो व्रजमा पशुर्गात्स्थशो जन्मानि सविता व्याकः ॥ ८ ॥

याद्राध्यम् । अन्तर्गच्छतां संराधनीयम्[13] । अप्सु भवम्[14] । वरुणः । स्थानम् । अतीक्ष्णम्[15] । रात्रौ मनुष्याणां निमेषणवेलायाम्[16] । जर्भुराणो[17] भवति गृह्णातीत्यर्थः[18] । तथा सर्वः[19] । मार्तण्डः[20] पक्षी[21] । पशुश्च । व्रजम्[22] । गच्छति[23] । सर्वाणि जातानि[24] । सविता[25] । स्थाने स्थाने । व्याकरोति[26] स्वं स्वं निलयं प्रत्यागमयति[27] ।[28]

१. M. omits the *pratīka*.
२. निहितम् Sy.
३. अपां सम्बन्धिनम् Sy.
४. 'आपः पृथिवी' (Ngh. 1.3.) इत्यन्तरिक्षनामसु पाठात् । जलाधारे वा Sy.
५. निरुकां M. धन्वानु निर्जलप्रदेशेष्वरण्येषु Sy.
६. मृगयमाणा मृगाः Sy.
७. अधितिष्ठन्ति Sy.
८. वृक्षाः Sy.
९. ०क्षिभ्याम् M.
१०. ०वासय P. आवासादिरूपेण त्वया भागो दत्तः Sy.
११. ना M. केऽपि न Sy.
१२. VM. ignores आ। वि and सवितुः ॥ आ समन्तात् Sy.
१३. यातां गच्छतां राध्यं संराधनीयम् Sy.
१४. वम् M. आप्तुं योग्यम् Sy.
१५. अतीक्ष्णम् । सुखकरमिति यावत् Sy.
१६. निमेषे सवितुरस्तमये सति विश्रमार्थं प्राणिभ्यः प्रयच्छति । वरुणस्य रात्रेर्निर्वाहकत्वात् Sy.
१७. जुहुराणो P.
भृशं गच्छन् Sy.
१८. ०ह्लादती० M.
१९. सर्वेषाम् M.
२०. मृताद्‌ब्रह्मादण्डादुत्पद्यमानः पक्षी Sy.
२१. पक्षीव M. पक्षि P.
२२. लजम् M. गोष्ठम् Sy.
२३. आगच्छति Sy.
२४. जानि P. भूतानि Sy.
२५. प्रेरकः Sy.
२६. पृथगकार्षीत् Sy.
२७. ०त्यगम० P.
२८. VM. ignores आ।

उत्तरा निगदव्याख्याता—

**न यस्येन्द्रो वरुणो न मित्रो व्रतमर्यमा न मिनन्ति रुद्रः ।**
**नारातयस्तमिदं स्वस्ति हुवे देवं सवितारं नमोभिः ॥ ९ ॥**

[ न यस्येन्द्रः ][1]

**भगं धियं वाजयन्तः पुरंधिं नराशंसो ग्नास्पतिर्नो अव्याः ।**
**आये वामस्य संगथे रयीणां प्रिया देवस्य सवितुः स्याम ॥ १० ॥**

भगं धियम्[2] । ध्यातारम्[3] । बहुप्रज्ञम्[4] । भगं देवम्[5] । बलिनं कुर्वंतः[6] । अग्निः[7] । त्वष्टा[8] च । अस्मान्[9] । रक्षतु[10] । आभिमुख्येन गन्तव्ये[11] । धनानाम्[12] । श्रेष्ठस्य धनस्य । सम्भजने[13] । स्याम[14] वयम् । देवस्य[15] । सवितुः[16] । प्रिया इति ।

---

१. The *pratīka* within brackets has been supplied by the Editor. A later hand has added न यस्येन्द्रः in M.
Sy. explains this stanza in the following manner:—
यस्य सवितुर्देवस्य । व्रतं प्रसवाख्यं कर्म । इन्द्रः । न मिनाति हिनस्ति । वरुणश्च । न मिनाति । मित्रश्च, अर्यमा च, न मिनाति । रुद्रश्च न मिनाति । अरातयः असुराश्च न मिनन्ति । मिनन्तीति श्रुतमाख्यातं यथायोगं विपरिणामेन प्रत्येकमभिसम्बध्यते । तम् । सवितारं सर्वस्य प्रेरकम् । देवं द्योतमानम् । इदमिदानीम् । नमोभिः अन्नरूपैर्हविर्भिः सह । 'नमः आयुः' (Ngh. 2.7.) इत्यन्ननामसु पाठात् । स्वस्ति क्षेमाय । हुवे स्तौमि ॥
२. वयम् corrected to धियम् M. धयम् P.
३. ध्यातव्यम् Sy.
४. पुरस्य धारयितारम् । बहुप्रज्ञं वा सवितारम् Sy. पुरन्धिर्बहुधीः N. 6.13.
५. भगवन् P.
भजनीयम् Sy.
६. M. and P. add वयं तत्र after कुर्वंतः ॥ वाजयन्तः वाजिनं बलिनं कुर्वंतः । विभक्तिव्यत्ययः Sy.
७. नरैः शंसनीयः Sy.
८. देवपत्नीनां पतिश्छन्दसां पतिर्वा सविता । तथा च श्रूयते 'छन्दांसि वै ग्नाः' इति 'उत ग्ना व्यन्तु देवपत्नीः' (RV. 5.46.8.) इति च Sy.
९. स्तुवतोऽस्मान् Sy.
१०. अव्यात् Sy.
११. आगमने Sy.
१२. पशूनाञ्च । तथा च श्रूयते—'पशवो वै रयिः' TB. 1.4.4.1. इति
१३. सङ्गमने च निमित्ते Sy.
१४. भवेम Sy.
१५. द्योतमानस्य Sy.
१६. प्रेरकस्य Sy.

अ॒स्मभ्यं॒ तद्दि॒वो अ॒द्भ्यः पृ॑थि॒व्यास्त्वया॑ द॒त्तं काम्यं॒ राध॒ आ गा॑त् ।
शं यत्स्तो॒तृभ्य॑ आ॒पये॒ भवा॑त्युरु॒शंसा॑य सवितर्जरि॒त्रे ॥११॥

अस्मभ्यम्[1] । अस्मभ्यम् । तत्[2] । त्रिभ्यो लोकेभ्यः[3] । त्वया । दत्तम् । कमनीयम् । धनम् । आगच्छतु । किं च तव स्तोतृभ्यः[4] । यजमानाय च[5] । यत्[6] । शम्[7] । भवति[8] । तद्बहुस्तुतये[9] मह्यम्[10] । सवितः[11] ! जरित्रे[12] प्रयच्छ ।

## II. 39.

ग्रावा॑णेव॒ तदिदर्थं॑ जरेथे॒ गृध्रे॑व वृ॒क्षं नि॑धि॒मन्त॒मच्छ॑ ।
ब्र॒ह्माणे॑व वि॒दथ॑ उक्थ॒शासा॑ दू॒तेव॒ हव्या॒ जन्या॑ पुरु॒त्रा ॥ १ ॥

ग्रावाणेव[13] । यथा[14] दृषदुपले[15] बीजं चूर्णीकुरुत[16] एवम्[17] । तदानीम् । एव । शत्रुम्[18] । जरयेथे[19] यदेच्छथ इति । यथा गृध्रौ[20] । वृक्षं[21] प्रत्यागच्छतः । एवं हविष्मन्तम्[22] । प्रत्यागच्छथः[23] ।

---

१. ०भ्यः P.
२. तं P. प्रसिद्धम् Sy.
३. It is the explanation of दिवः, अद्भ्यः and पृथिव्याः ॥ द्युलोकात् अन्तरिक्षलोकात्, भूमेश्च Sy.
४. स्तोतृणाम् Sy.
५. बन्धवे तद्वंशजाय Sy.
६. धनम् Sy. ७. सुखकरम् Sy.
८. भवेत् Sy. ९. ०हुस्तत० P.
१०. महि P. ११. संहितं M. सहितं P.
१२. रित्रे M. जरित्रे स्तोत्रे मह्यम् Sy. जरिता । कारुः । . . . कृपण्युरिति . . . स्तोतृनामानि Ngh. 3.16.
१३. 'ग्रावाणेव' इत्यष्टर्चं सप्तमं सूक्तं गार्त्समदं त्रैष्टुभमाश्विनम् । 'ग्रावाणेवाष्टाश्विनम्' (KSA. 16.39. p. 14.) इत्यनुक्रान्तत्वात् । प्रवर्ग्येऽभिष्टवे पूर्वे पटलेऽस्य विनियोगः । सूत्रितं च- 'ग्रावाणेवेळे द्यावापृथिवी' (ASS. 4.6.) इति । प्रातरनुवाकाश्विनशस्त्रयोरपीदं सूक्तम् । सूत्रितञ्च— 'ग्रावाणेव नासत्याभ्यामिति त्रीणि' (ASS. 4.15.) इति Sy.
१४. M. omits यथा दृष
१५. द्रूप० M. १६. चूर्णीन्तिकु० P.
१७. एव P. अरातिम् प्रति प्रेषितौ पाषाणाविव । तदर्थम् Sy.
१८. इत्यूरणः Sy.
१९. अर्तेर्धातोरर्थशब्दः । . . . तमरातिमित्यर्थः Sy. अर्थोऽर्तेः N. 1.18.
२०. जरयथे यथे P. अरातिं बाधेथाम् । यद्वा यथा गुरुग्रावाणौ क्षिप्तौ तदानीमेव शीघ्रं गच्छतस्तथा तत् तमर्थं गन्तारं जरेथे शीघ्रं गत्वा स्तुतमित्यर्थः Sy. जरा स्तुतिः । जरतेः स्तुतिकर्मणः N. 10.8.
२१. पक्षिणाविव Sy.
२२. फलितं वृक्षम् Sy.
२३. धनवन्तं यजमानम् Sy.
२४. गच्छतः D., M. अच्छ । आगच्छतमिति शेषः Sy.

ब्राह्मणाविव । यज्ञे[1] । शस्त्राणां शंसितारौ शंसिन[2] प्रतिगरणयोः[3] कर्तारौ[4] । दूताविव[5] । पुरुत्रा[6] । जनपदेषु भवौ । यजमानै राह्वातव्याविति[7] ।

प्रातर्यावाणा रथ्येव वीराजेव यमा वरमा सचेथे ।
मेनेइव तन्वा३ शुम्भमाने दम्पतीव क्रतुविदा जनेषु ॥ २ ॥

प्रातर्यावाणा । प्रातरेव[8] गन्तारौ । लौकिकौ कौचिद्[9]रथिनाविव[10] । वीरौ[11] । अजाविव[12] । यम[13]जातौ सुसदृशौ[14] । पर्याप्तिम्[15] । आसचेथे[16] । स्त्रियाविव[17] । शरीरेण । शोभमाने[18] । दम्पती[19] इव च सङ्गतौ । लब्धयज्ञौ[20] । मनुष्येष्विति[21] ।

शृङ्गेव नः प्रथमा गन्तमर्वाक्छफाविव जर्भुराणा तरोभिः ।
चक्रवाकेव प्रति वस्तोरुस्रार्वाञ्चा यातं रथ्येव शक्रा ॥ ३ ॥

शृङ्गेव नः । पशोः शृङ्गे इव । अस्मदभिमुखम्[22] । आगच्छतम्[23] । प्रथममेव[24] । शफाविव[25] च । तरणैः[26] । पृथिवीं हरमाणाः[27] । मिथुनभूतौ चक्रवाकाविव[28] । अहः । प्रति । हे उत्सरणौ[29] ! अभिमुखौ[30] । आगच्छतम् । रथिनाविव । हे शक्तौ[31] !

---

१. यज P. विदथः । नार्यः । सवनम् . . . यज्ञनामानि Ngh. 3.17.
२. शंसन M. उक्थशंसितारौ Sy.
३. ०गण० P. ४. ०र्तारो M.
५. राज्ञा प्रेषितौ दूताविव Sy.
६. बहुभिः पुरुषैः Sy.
७. ०राधात० M. ह्वातव्यौ युवाम् । अत्र उपमेयद्वित्वानुसारेण उपमानद्वित्वम् Sy.
८. प्रातरेव यज्ञार्थं गन्तारौ Sy.
९. कोचिद्र० M. १०. रथिनावप P.
११. वीरव् P. स्वकर्मणि शूरौ Sy.
१२. छागाविव Sy. १३. यमलौ Sy.
१४. सुदर्शनौ P. १५. VM. seems to take यमा वरं as यमौ-अरम् and explain अरं as पर्याप्तम् ॥ सम्भक्तारम् Sy.
१६. आसेपेथे M. आसेवेथे P. आगच्छथः Sy.
१७. नार्याविव Sy.
१८. ०भनमा P. शोभमानौ Sy.
१९. जायापती इव सङ्गतौ Sy.
२०. कर्मविदौ युवाम् Sy.
२१. जनेषु विषयेषु Sy. २२. ०मुखं M.
२३. ०मा गच्छ० M.
२४. देवानां प्रथमौ Sy.
२५. अश्वादेः खुराविव Sy.
२६. P. reads चरणैः for च तरणैः । वेगैः Sy. २७. हरमाणौ is suggested for हरमाणाः ॥ भृशं गच्छन्तौ Sy.
२८. वाकः P.
२९. शत्रूणामुत्सारकौ गमनशीलौ वा Sy.
३०. अस्मदभिमुखौ Sy.
३१. चक्तौ P. स्वकर्मणि शक्तौ ! Sy.

नावेव नः पारयतं युगेव नभ्येव न उपधीव प्रधीव ।
श्वानेव नो अरिषण्या तनूनां खृगलेव विस्रसः पातमस्मान् ॥ ४ ॥

नावेव । नावा[1] नदीमिव । अस्मान् । पारयतम्[2] । तथा[3] युगाविव । नह्यं चक्रमध्यस्थं फलकम्[4] । तस्मिन् फलके दार्ढ्यार्थं[5] य उपधीयते स उपधिः । पार्श्वस्थे[6] धनुराकारे प्रधी[7] एभिः[8] सर्वैरिव पारयतमिति । यथा श्वा[9]ऽङ्गानि[10] हिनस्त्येवम् । अस्माकम् । तनूनाम्[11] । अहिंसकौ[12] । 'खृगलं[13] तनुत्राणम्[14]' इत्याहुः, ते इव[15] । विसंस्रनात्[16] । अस्मान् । रक्षतमिति ।[17]

वातेवाजुर्या नद्येव रीतिरक्षीइव चक्षुषा यातमर्वाक् ।
हस्ताविव तन्वे३ शंभविष्ठा पादेव नो नयतं वस्यो अच्छ ॥ ५ ॥

वातेवाजुर्या[18] । वाताविव । अजरौ[19] । अस्मत्[20] । आगच्छतम् । नदीभवा[21] । जलरीति[22]-रिव । तथाऽक्षी[23] इव । मध्यस्थेन[24] तेजसा सहास्मान[25]ागच्छतम् । हस्ताविव । शरीरस्य[26] । सुखस्य

---

१. नावाविव सिन्धून् Sy.
२. ०यन्त M. दुर्गाणि पारयतम् Sy.
३. या M. यथा रथस्य युगे Sy.
४. यथा च रथचक्रनाभिफलके Sy.
५. ०दर्थात्वं P. उपधी इव यथा तत्पार्श्वस्थे फलके Sy.
६. पाश्वस्थे P.
७. प्रथि P. यथा वा चक्रबाह्यवलयौ रथं पारयतस्तथा नोऽस्मान् दुर्गाणि पारयतम् Sy.
८. हिभिः P.
९. त्वां M.
१०. M. omits ऽङ्गा ॥ यथा श्वानौ बाधकेभ्यो रक्षन्तौ तनोर्हिंसामपनयतस्तथा Sy.
११. अङ्गानाम् Sy.
१२. ०हिंसितौ P. अरिषण्यौ अहिंसकौ भवतम् Sy.
१३. कुगलं M. खुथलं P. यथा तनुत्राणे तनुर्हिंसाया रक्षतः, तथा Sy.
१४. त M.
१५. उप P.
१६. विस्रंसनात् is suggested for विसंस्रनात् ॥ जरायाः Sy.
१७. VM. ignores नः of the second verse.
१८. वाजूर्या M.
१९. जरितुमशक्यौ Sy.
२०. अस्माद् M. This seems to be the explanation of अर्वाक् । अस्मदभिमुखम् is therefore suggested for अस्मत् ।
२१. ०दी मवां M. नद्याविव Sy.
२२. ०लरिति० P. व्यत्ययेनैकवचनम् । शीघ्रं गन्तारौ युवाम् Sy.
२३. थक्षी P. अक्षिणी इव Sy.
२४. मध्यर्थेन P. दर्शनेन Sy.
२५. ०स्माकं M.
२६. शरीराय Sy.

भावयितारौ[1]। पादाविव। अस्मान्। नयतम्[2]। अभ्युदयम्[3]। प्रति।

ओष्ठाविव मध्वास्ने वदन्ता स्तनाविव पिप्यतं जीवसे नः।
नासेव नस्तन्वो रक्षितारा कर्णाविव सुश्रुता भूतमस्मे ॥ ६ ॥

ओष्ठाविव[4]।[5] यथोष्ठौ[6]। अस्य[7] मधुपानसाधनावेवमिमौ[8] च भवतः। मनुष्याणामास्याय। मधुदानम्। वदन्ताविति[9]। अस्मान्[10]। स्तनाविव[11]। आप्यायतम्[12]। जीवितुम्[13]। नासिके इव। शरीरस्य[14]। रक्षितारौ[15] भवतः[16]। तथा कर्णाविव। सुश्रवणौ[17]। भवतम्। अस्माकमिति[18]।

हस्तेव शक्तिमभि संददी नः क्षामेव नः समजतं रजांसि।
इमा गिरो अश्विना युष्मयन्तीः क्ष्णोत्रेणेव स्वधितिं सं शिशीतम् ॥ ७ ॥

हस्तेव। यथा हस्तौ[19]। शक्तिम्[20]। अभिसंयच्छतम्[21]। तथा द्यावापृथिवी[22] इव। अस्माकम्। उदकानि[23]। प्रेरयत[24]। हे अश्विनौ[25]! युवामिच्छन्तीः[26]। एताः[27]। स्तुतीः[28]। यथा तेजनसाधनेन[29] शिलादिना। स्वधितिम्[30]। तीक्ष्णीकरोत्येवं संस्कुरुतम्[31]।[32]

---

१. सुखस्य भावयितृतमौ युवाम् Sy.
२. प्रापयतम् Sy.
३. वसीयः श्रेष्ठं धनम् Sy.
४. ओष्टावि० P.
५. हे अश्विनौ ! Sy.
६. रथोस्मावानि P.
७. आस्ये is suggested for अस्य।
८. ०वमभिमौ M.
९. मधुररसवद्वचनं वदन्तौ Sy.
१०. स्मात् M. स्मत् P.
११. स्मना० M.
१२. आप्याय० M. प्याययतम् Sy.
१३. जवि० P. जीवनाय Sy.
१४. तनोः Sy.
१५. लक्षि० P.
१६. भवन् P. भवतम् is suggested for भवतः।
१७. ०वणो P. सुश्रवणे Sy.
१८. VM. ignores नः before तन्वः।
१९. Omitted in M.
२०. Omitted in M. सामर्थ्यम् Sy.
२१. आभिमुख्येन सम्यक् प्रयच्छन्तौ भवतम् Sy.
२२. रोदसी इव Sy.
२३. स्थानान्युदकानि वा Sy. ॥ उदकं रज उच्यते N. 4.19.
२४. Omitted in P. प्रेरयतम् is suggested for प्रेरयत।
२५. श्विनेन P.
२६. ०न्तिः P. युवामिच्छन्तीः Sy.
२७. अस्माभिः कृताः Sy.
२८. ०ति० P.
२९. शिवादि ० M. तेजनशाणवत् Sy.
३०. असिम् Sy.
३१. सम्यक् तीक्ष्णीकुरुतम् Sy.
३२. VM. ignores one नः।

एतानि वामश्विना वर्धनानि ब्रह्म स्तोमं गृत्समदासो अक्रन् ।
तानि नरा जुजुषाणोप यातं बृहद्वदेम विदथे सुवीराः ॥ ८ ॥

एतानि । तान्येतानि वचनानि । युवयोः । वर्धनानीति द्वितीयान्तम् । बृहत् । स्तोत्रम् । गृत्समदाः । कृतवन्तः । तानि । हे नरौ ! सेवमानौ । आगच्छतमिति ।

## II. 40.

सोमापूषणा जनना रयीणां जनना दिवो जनना पृथिव्याः ।
जातौ विश्वस्य भुवनस्य गोपौ देवा अकृण्वन्नमृतस्य नाभिम् ॥ १ ॥

सोमापूषणा । हे सोमापूषणौ ! युवाम् । एतेषाम् । जनयितारौ । जातौ । सर्वस्य ।

---

१. ह्रितानि P. M. omitted it altogether, but a later hand has supplied ए only.
२. ०न्येकानि P. ३. वृद्धिसाधनानि Sy.
४. ब्रह्माणि मन्त्रान् Sy.
५. अकुर्वन् Sy. ६. ब्रह्माणि Sy.
७. नेतारौ Sy. ८. भृशं प्रीयमाणौ युवाम् Sy. ९. उपगच्छतम् Sy.
१०. VM. ignores अश्विना । बृहत् । वदेम । विदथे and सुवीराः ॥ Sy. explains these words in the following manner:— हे अश्विनौ ! किञ्च सुवीराः शोभनपुत्रा वयम् । विदथे यज्ञे । युवां बृहद्वदेम प्रभूतं स्तुमः ।
११. 'सोमापूषणा' इति षड्चमष्टमं सूक्तं गार्त्समदं त्रैष्टुभं सोमापूषदेवताकम् । तथा चानुक्रान्तम्—'सोमापूषणा षट् सोमापौष्णमन्त्योऽर्धर्चोऽप्यदितेः' (KSA. 16.40. p. 14.) इति । 'अवतु देव्यदितिः' इत्यस्य अन्त्यार्धर्चस्य अदितिर्देवता । सोमापौष्णे पशौ वपापुरोडाशहविषामाद्यास्तिस्रः क्रमेणानुवाक्या उत्तरास्तिस्रो याज्याः । 'अग्नीषोमौ' इति खण्डे सूत्रितम्—'सोमापूषणा जनना रयीणाम्' (ASS. 3.8.) इति Sy.
१२. हे सोमापूषणौ ! युवाम् Sy. सोमापूषणौ चन्द्रसूर्यौ, तावुच्येते Dur.
१३. It refers to रयीणाम्, दिवः and पृथिव्याः ॥ रयीणां धनानां दिवो द्युलोकस्यापि, पृथिव्याः प्रथितायाश्च Sy., BB. रयीणां धनानाम् । कस्य ? सामर्थ्यात् स्तोतुर्यष्टुश्च यजमानस्य च दातारावित्यर्थः । वृष्टिद्वारेण जनना जनयितारौ दिवो द्युलोकस्य 'इतः प्रदानाद्धि देवा उपजीवन्ति' (ŚB. 1.2. 5.24.) इति श्रुतेः । एवमेव जनना जनयितारौ पृथिव्याः पृथिवीलोकस्य SKN. रयीणां धनानाम् । जनना जनयितारौ च स्वेनोपकारेण दिवः । जनना जनयितारौ च पृथिव्याः Dur.
१४. भवथः Sy. जनयितारावित्यर्थः SKN. जननौ जनयितारौ Dur.
१५. जातमात्रावेव युवाम् Sy., BB., Dur. जातमात्रावेव च सन्तौ युवाम् SKN.
१६. कृत्स्नस्य Sy.

सर्व[1]भुवनस्य च । गोपायितारौ[2] । कृतवन्तौ[3] । देवाः[4] । अन्नस्य[5] । उत्पत्तिस्थानम्[6] ।[7]

इमौ देवौ जायमानौ जुषन्तेमौ तमांसि गूहतामजुष्टा ।
आभ्यामिन्द्रः पक्वमामास्वन्तः सोमापूषभ्यां जनदुस्रियासु ॥ २ ॥

इमौ देवौ । इमौ[8] । देवौ[9] । जायमानावेव[10] । देवाः कार्यार्थ[11]मजुषन्त[12] । तथैतौ[8] । तमांसि । नाशितवन्तौ[13] । अपर्याप्तानि[14] स्वतेजसा । आभ्याम्[15] । इन्द्रः । पक्वं पयः[16] । आमासु[17] । गोषु[8] । अन्तः[18] । जनयति[19], सोम ओषधीर्जनयति पृथिव्या गोभ्य इति[20] ।[21]

---

१. सर्वं is redundant as सर्वस्य is already separately added. जगतः भूतजातस्य BB., SKN., Dur.

२. गोप्तारौ Sy., SKN. गोप्तारौ बभूवथुः Dur.

३. कृतवन्तः is suggested for कृतवन्तौ । अकार्षुः Sy. ईदृशौ युवां देवाः—अकुर्वन् BB. कृतवन्तः SKN. सदा कुर्वन्ति । युवामिदं नामास्माकं कुरुतमित्याशिषा निराकाङ्क्षम् Dur.

४. देवाह् M. भव् P. रश्मयः Dur.

५. अन्नास्य P. अमरणस्य Sy. उदकस्य SKN., Dur.

६. उत्पत्ति० P. हेतुम् Sy. नहनौ बन्धनौ BB. नाभिमाश्रयम् SKN. नहनं बन्धनम्, आधारं सर्वलोकस्य Dur. N. 7. 10., SKN. III. 61.

७. VM. explains जनना once only. This stanza=TS. 1.8. 22.5.

८. सोमापूषणौ Sy.

९. द्योतमानौ Sy.

१०. ०नावप P. उत्पन्नमात्रावेव Sy. जायमानावेवावस्थितौ BB.

११. ०र्यार्थं P.

१२. ०षन् M. सर्वे देवा अजुषन्त । सेवितवन्त इति यावत् Sy. सेवितवन्तः सर्वे देवाः BB.

१३. नाशयतः Sy. अनाशयताम् । छान्दसो लिङ्. . . यद्वा, इमौ खलु सर्वस्य तमांसि . . . गूहयतः BB.

१४. ०र्याप्तनि M. असेव्यानि Sy. अजुष्टान्यप्रियाणि. . . अजुष्टौ तमोभिरसेवितौ BB.

१५. एताभ्यां सोमापूषभ्यां सह Sy.

१६. परिपक्वं पयः Sy.

१७. तरुणीषु Sy.

१८. अन्त P. अन्तर्मध्ये ऊधःप्रदेशे Sy.

१९. उत्पादयति BB.

२०. ताविमावेवंमहानुभावावस्माकं दुश्चर्मतां नाशयतां शोभनानि च दत्तामित्यर्थः BB.

२१. VM. ignores सोमापूषभ्याम् । This stanza=TS. 1.8.22.5.

**सोमापूषणा रजसो विमानं सप्तचक्रं रथमविश्वमिन्वम् ।**
**विषूवृतं मनसा युज्यमानं तं जिन्वथो वृषणा पञ्चरश्मिम् ॥ ३ ॥**

सोमापूषणा । हे सोमापूषणौ ! लोकस्य[1] । परिच्छेत्तारम्[2] । तं[3] सप्तर्तुचक्रम् । संवत्सररथम्[4] । सर्वैरपरिच्छिद्यमानम्[5] । नानावर्तमानम्[6] । एताभ्यां[7] मनसैव[8] । प्रयुज्यमानम् । तमिन्द्रम्[9] । प्रीणयथः[10] । हे वर्षितारौ[11] ! पञ्चर्तु[12]रश्मिमिति ।

**दिव्य१न्यः सदनं चक्र उच्चा पृथिव्यामन्यो अध्यन्तरिक्षे ।**
**तावस्मभ्यं पुरुवारं पुरुक्षुं रायस्पोषं वि ष्यतां नाभिमस्मे ॥ ४ ॥**

दिव्यन्यः[13] । तयोरेकः पूषा । दिवि[14] । उच्चैः[15] । सदनम्[16] । चक्रे[17] । अथान्यः[18] सोमः । ओषधिरूपेण पृथिव्यां वर्तते । चन्द्ररूपेणा[19]न्तरिक्षे । ताविमौ[20] । अस्मभ्यम् । बहूनां[21] वरणीयम् । बहूनां कीर्तनीयम्[22] । धनस्य । पोषम्[23] । विमुञ्चताम्[24] । नहनम्[25] । अस्माकमिति[26] ।[27]

---

१. लोका रजांस्युच्यन्ते N. 4.19.
२. ०त्तार M. विमानं परिच्छेदकं सर्वमानमित्यर्थः Sy.
३. Omitted in P. त्रयोदशो मासः सप्तम ऋतुः । 'अस्ति त्रयोदशो मासः' (TS. 6.5.3.4.) इति श्रुतेः Sy.
४. ०त्सर चक्रं रथं M.
५. विश्वस्यापरिच्छेद्यम् Sy.
६. विषुवृतं विष्वक् सर्वत्र परिवर्तमानम् Sy.
७. एव ता० P.
८. नसेव P. मनोमात्रेण Sy.
९. प्रसिद्धम् Sy.
१०. प्रण० M. अस्मान्प्रति प्रेरयथः Sy.
११. वृषणौ कामानां वर्षितारौ ! Sy.
१२. वच० M. and P. हेमन्तशिशिरयोः समासेनर्तवः पञ्च । तथा च श्रूयते 'द्वादश मासाः पञ्चर्तवो हेमन्तशिशिरयोः समासेन' (AB. 1.1.) इति Sy.
१३. ०व्यान्यः M. and P.
१४. पि P. द्युलोके Sy.
१५. उच्चेः P. उच्छ्रिते Sy.
१६. स्थानम् Sy.
१७. चक्र M. चकार Sy.
१८. अपरः सोमः Sy.
१९. अन्तरिक्षे सदनं चक्रे Sy.
२०. सोमापूषणौ युवाम् Sy.
२१. बहुभिर्वरणीयम् Sy.
२२. बहुकीर्तिम् Sy.
२३. पोष P. पुष्टिम् । पश्वात्मकं धनमित्यर्थः । तथा च ब्राह्मणम्—'पशवो वै रायस्पोषः' (TS. 5.4.6.2.) इति Sy.
२४. प्रयच्छतामित्यर्थः Sy.
२५. नाहनम् M. विश्वस्य भोगस्य हेतुभूतम् Sy.
२६. अस्कामिति M.
२७. VM. ignores अधि ।

विश्वा॑न्य॒न्यो भुव॑ना ज॒जान॒ विश्व॑म॒न्यो अ॑भि॒चक्षा॑ण एति ।
सोमा॑पूषणा॒वव॑तं॒ धियं॑ मे यु॒वाभ्यां॒ विश्वाः॒ पृत॑ना जयेम ॥ ५ ॥

विश्वानि । तयोः[1] पूषा । सर्वाण्येव । भुवनानि[2] । जनयति[3] । अथान्यश्चन्द्रमाः[4] । विश्वं भुवनम् । पश्यन्[5] । एति[6] । अथ प्रत्यक्षः, सोमापूषणौ[7] । रक्षतम् । कर्म[8] । अस्मदीयम् । युवाभ्याम्[9] । सर्वा एव । पृतनाः[10] । जयेमेति[11] ।

धियं॑ पू॒षा जि॑न्वतु विश्वमि॒न्वो र॒यिं सोमो॑ रयि॒पति॑र्दधातु ।
अव॑तु दे॒व्यदि॑तिरन॒र्वा बृ॒हद्व॑देम वि॒दथे॑ सु॒वीराः॑ ॥ ६ ॥

धियं पूषा । कर्म[12] । पूषा[13] । प्रीणयतु[14] । सर्वस्य[15] माता । शिष्टं[16] स्पष्टमिति[17] ।

---

१. युवयोरेकः सोमः Sy.

२. भूतानि Sy.

३. जनय P.
अजनयत् । तथा च मन्त्रः—'सोमः॑ पवते जनिता म॑ती॒नाम्' (RV. 9.96.5.) इति Sy.

४. था० P.
अन्योऽपरः पूषादित्यः Sy.

५. श्यान् M.
अभिपश्यन् Sy.

६. गच्छति Sy.

७. तौ युवाम् Sy.

८. धीः । शची । . . . कर्मनामानि Ngh. 2.1.

९. किञ्च वयं युवाभ्यां हेतुभ्याम् Sy.

१०. शत्रुसेनाः Sy.

११. अभिभवेम Sy.

१२. अस्माकं कर्म Sy.

१३. आदित्यः Sy.

१४. ०णय P.
तर्पयतु Sy.

१५. It seems to be the explanation of विश्वमिन्वः ॥ Sy. explains it as विश्वस्य प्रीणयिता ।

१६. विशि० P.

१७. VM. ignores रयिम् । सोमः । रयिपतिः । दधातु । अवतु । देवी । अदितिः । अनर्वा । बृहत् । वदेम । विदथे and सुवीराः ।
Sy. explains these words in the following manner:—
रयिपतिः धनपतिः । सोमः । रयिं धनम् । दधातु अस्मभ्यं ददातु । किञ्च देवी द्योतमाना । अनर्वा अप्रत्यृता केनापि प्रातिकूल्यमप्रापिता । अदितिः । अवतु अस्मान् रक्षतु । अन्यत् सिद्धम् ॥

II. 41.

वा॒यो ये ते॑ स॒ह॒स्रिणो॒ रथा॑स॒स्तेभि॒रा ग॑हि । नि॒युत्वा॒न्त्सोम॑पीतये ॥ १ ॥

वायो ये ते ।

१. 'वायो ये ते' इत्येकविंशत्यृचं नवमं सूक्तं गात्समदं गायत्रम् । 'अम्बितमे' इति षष्ठस्य तृचस्य आदितो द्वे अनुष्टुभौ तृतीया बृहती । 'वायो ये ते' इत्यादिके द्वे ऋचौ वायव्यौ । 'शुक्रस्याद्य' इत्येषा ऐन्द्रवायवी । 'अयं वां मित्रावरुणा' इति पञ्चानां तृचानां मित्रावरुणौ अश्विनौ इन्द्रः विश्वे देवाः सरस्वती इति क्रमेण देवताः । 'प्रेतां यज्ञस्य' इत्यन्तस्तृचो ब्राह्मणसूत्रयोर्हविर्धानप्रवर्तने द्यावापृथिव्यनिविद्धानत्वेन च विनियुक्तत्वाद् द्यावापृथिव्यो हविर्धानदेवत्यो वा । 'अग्निं च हव्यवाहनम्' इति पादोऽग्निदेवत्यो वा । तथा चानुक्रान्तम्—'वायो सैका गायत्रमुक्ता देवताः प्रउगेणाद्ये तु तृचेऽन्त्यैन्द्रवायवी द्यावापृथिव्योऽन्त्यस्तृचो हाविर्धानो वा तृतीयः पादो वाग्नेयोऽम्बितमेऽनुष्टुभौ बृहती च' (KSA. 16.41. p. 14.) इति । पृष्ठ्याभिप्लवषडहयोर्द्वितीयेऽहनि प्रउगेऽन्त्यतृचवर्जमेतत् सूक्तम् । वायव्यतृचस्य 'वायो ये ते सहस्रिणः' इत्याद्ये द्वे ऋचौ ऐन्द्रवायवतृचस्य 'शुक्रस्याद्य' इत्येषा तृतीया । तथा च सूत्रितम्—'वायो ये ते सहस्रिण इति द्वे तीव्राः सोमास आ गहीत्येकोभा देवा दिविस्पृशेति द्वे शुक्रस्याद्य गवाशिर इत्येकायं वा मित्रावरुणेति पञ्च तृचाः' (ASS. 7.6.) इति। चातुर्विंशिकेऽहनि प्रातः—सवने मैत्रावरुणशस्त्रे 'अयं वां मित्रावरुणा' इति षळहस्तोत्रियसंज्ञकः । 'चतुर्विंशे होताजनिष्ट' इति खण्डे सूत्रितम्—'अयं वां मित्रावरुणा पुरुणा चिद्धयस्ति' (ASS. 7.2.) इति । आभिप्लविकेष्वहःसु प्रातःसवने मैत्रावरुणशस्त्रेऽयमेव तृचः पञ्चदशादिस्तोमनिमित्तमावापनीयः । 'अयं वां मित्रावरुणा नो मित्रावरुणेति तृचाः' (ASS. 7.5.) इति सूत्रितत्वात् । आद्या मैत्रावरुणग्रहस्यानुवाक्या । सूत्रितञ्च-'मैत्रावरुणस्य अयं वां मित्रावरुणा' (ASS. 5.5.) इति । प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रे छन्दसि 'गोमद् षु' इति तृचो विनियुक्तः । 'गोमद् षु नासत्येति तृचाः' (ASS. 4.15.) इति सूत्रितत्वात् । अतिरात्रे प्रथमे पर्याये ब्राह्मणाच्छंसिशस्त्रे 'इन्द्रो अङ्ग महद्भयम्' इति तृचः । 'अतिरात्रे पर्यायाणाम्' इति खण्डे सूत्रितम्—'इन्द्रो अङ्ग महद्भयमभि न्यू षु वाचम्' (ASS. 6.4.) इति । आग्रयणे वैश्वदेवस्य हविषः 'विश्वे देवासः' इत्यनुवाक्या । 'आग्रयणम्' इति खण्डे सूत्रितम्—'विश्वे देवास आ गत ये के च ज्मा महिनो अहिमायाः' (ASS. 2.9.) इति । दशरात्रे प्रथमेऽहनि प्रउगशस्त्रे 'अम्बितमे नदीतमे' इति सारस्वतः सप्तमस्तृचः । 'चतुर्थेऽहनि' इति खण्डे सूत्रितम्—'अम्बितमे नदीतम इत्यानुष्टुभं प्रउगम्' (ASS. 7.11.) इति । व्यूढे दशरात्रे प्रथमे छन्दोमे वैश्वदेवशस्त्रे 'प्रेतां यज्ञस्य शम्भुवा' इति द्यावापृथिव्यनिविद्धानीयस्तृचः । 'अथ छन्दोमाः' इति खण्डे सूत्रितम्—'प्रेतां यज्ञस्य शम्भुवायं देवाय जन्मन इति तृचाः' (ASS. 8.9.) इति । हविर्धानप्रवर्तनेऽप्ययं तृचो विनियुक्तः । सूत्रितञ्च—'प्रेतां यज्ञस्य शम्भुवा यमे इव यतमाने यदैतम्'(ASS. 4.9.; AB. 1.29.) इति Sy.

हे वायो ! ये[१] । तव[२] । सहस्रसंख्याः[३] । रथाः । तैः । आगच्छ[४] । नियुद्भिर्युक्तः[५] । सोमपानाय[६] ।

**नियुत्वान्वायवा गंह्ययं शुक्रो अयामि ते । गन्तासि सुन्वतो गृहम् ॥ २ ॥**

नियुत्वान् । हे वायो ! नियुद्भिर्युक्तस्त्वम्[७] । आगच्छ । अयम् । सोमः[८] । त्वां[९] गमयामि[१०] । तुभ्यम् । त्वं[११] हि[१२] यजमानस्य[१३] । गृहम्[१४] । गन्ता[१५] । असि[१६] ।

**शुक्रस्याद्य गवाशिर इन्द्रवायू नियुत्वतः । आ यातं पिबतं नरा ॥ ३ ॥**

शुक्रस्याद्य । शुक्रस्य[१७] । अद्य[१८] । गोभिः श्रितस्य[१९] । हे इन्द्रवायू ! वायोः सम्बन्धिनः[२०] । आगच्छतम् । पिबतं[२१] च ।[२२]

---

१. Omitted in M.

२. त्वदीयाः Sy.

३. सहस्रसङ्ख्याकाः Sy., Mah. सहस्रसङ्ख्याभिर्युक्ताः U.

४. आगच्छसि M. आगच्छ । नानारूपत्वाद्वायोः सर्वाभिर्विभूतिभिः सहागमनं प्रार्थ्यंत इति भावः Sy.

५. निर्विद्भि॰ P. नियुद्भिर्युक्तस्त्वम् Sy. अश्वायुक्तः Mah. नियुत्वान् भूत्वा U. नियुतो वायोः Ngh. 1.15.

६. सोमपानार्थम् Sy.

This stanza=YV. 27.32.

७. नियुतो वाहनानि वायोः । तैर्युक्तस्त्वम् Sy. अश्वावान् सन् Mah. नियुद्गुणको भूत्वा U.

८. दीप्यमानः सोमः Sy. अयं शुक्रो ग्रहः Mah.

९. त्वं P. त्वां प्रति Mah., U.

१०. नियतो गृहीत आसीत् । अयामि—यमेः कर्मणि लुङ् Sy. आगच्छतु प्राप्नोतु । लकारपुरुषव्यत्ययः । शुक्रादिग्रहाणां पात्रं त्वमेवेति भावः Mah. आगच्छत्विति । . . .त्वमेव हि शुक्रादीनां ग्रहाणां स्थानमित्यभिप्रायः U.

११. Omitted in M.

१२. यतः Mah.

१३. सोमाभिषवं कुर्वतो यजमानस्य Sy. अभिषवं कुर्वतो यजमानस्य U.

१४. गृहं प्रति Mah. गृहान् प्रति U.

१५. याता Sy. गमनशीलोऽसि । गन्ता तृन्नन्त आद्युदात्तत्वात् Mah. तृन्नन्तोऽयं गन्ता उदात्तः । तद्धर्मा वा तत्साधुकारी वा, एते हि तृनोऽर्थाः U.

१६. भवसि Sy.

This stanza=YV. 27.29.

१७. Omitted in M. दीप्तस्य सोमस्य पानार्थम् Sy.

१८. अद्य अस्मिन्नहनि Sy.

१९. गव्यं पयः आशीराश्रपणसाधनं यस्य तस्य Sy.

२०. ॰न्धिनि P. This appears to be the explanation of नियुत्वतः ॥ नियुत्वतः—विभक्तिव्यत्ययः । नियुत्वन्तौ युवाम् Sy.

२१. आगत्य सोमं पिबतम् Sy.

२२. VM. ignores नरा ॥ हे नेतारौ ! Sy.

अनन्तरे निगदव्याख्याते—

अयं वां मित्रावरुणा सुतः सोम ऋतावृधा । ममेदिह श्रुतं हवम् ॥ ४ ॥

राजानावनभिद्रुहा ध्रुवे सदस्युत्तमे । सहस्रस्थूण आसाते ॥ ५ ॥

[अयं वां मित्रावरुणा[1] । राजानावनभिद्रुहा[2] ।][3]

---

१. This stanza is explained in the following manner:— मित्रावरुणा हे मित्रावरुणौ ! वां युवाभ्याम् । अयं सोमः । सुतः अभिषुतः । ऋतावृधा हे सत्यस्य यज्ञस्य वा वर्धकौ ! ममेत् ममैव । हवमाह्वानम् । इह अस्मिन् यज्ञे । श्रुतं शृणुतम् Sy. हे मित्रावरुणौ ! विभक्तेराकारः । हे ऋतावृधा ! ऋतं यज्ञं सत्यं वा वर्धयत इत्यृतवृधा ऋतस्य वर्धयितारौ ! वां युवयोरर्थाय । अयं सोमः सुतोऽभिषुतः । तस्मादिहास्मिन्यज्ञे । ममेत्, इद् एवार्थे । ममैव, यजमानानां मध्ये ममैव । हवमाह्वानं, श्रुतं युवां शृणुतम् Mah. हे मित्रावरुणौ ! अयं वां युवयोरयमभिषुतः सोमः । हे ऋतावृधौ ! सत्यवृधौ ! वा यज्ञवृधौ ! वा । अतः कारणात्, मम इद् इह श्रुतं हवम् । इदिति निपात एवार्थे । ममैव, इह यजमानानां मध्ये श्रुतमाह्वानम् U. हे मित्रावरुणा मित्रावरुणौ ! ऋतावृधा ऋतावृधौ ! ऋतस्य सत्यस्य यज्ञस्य वा वर्धयितारौ ! उभयत्र 'सुपां सुलुक्०' इत्याकारः । वृधेः क्विप्. . .अयं सोमो वां युवयोरर्थाय सुतोऽभिषुतः । इदिति हेतौ । यस्मादेवं तस्मादिहास्मिन् कर्मणि मम हवमाह्वानं श्रुतं शृणुतम् । श्रुत्वा चागत्य सोमं पिबतमित्यर्थः BB. अथातो गृह्णात्येव । अयं वां मित्रावरुणा सुतः सोम ऋतावृधा । ममेदिह श्रुत ꣳ हवम् । उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वेति । (अत्र ऋचोऽपेक्षया 'उपयामगृहीतोऽसि' इत्यादिकमधिकमुपलभ्यते) SB. 4.1.4.7., p. 349. This stanza=YV. 7.9.=TS. 1.4.5.1.

२. Sy. explains this stanza in the following manner :— राजानौ ईश्वरौ दीप्यमानौ वा । अनभिद्रुहा अनभिद्रोग्धारौ । यौ मित्रावरुणौ । ध्रुवे स्थिरे । उत्तमे उत्कृष्टे । सहस्रस्थूणे । सदसि स्थाने । आसाते उपविशतः, तावागच्छतमिति शेषः ॥

३. The *pratikas* within brackets have been supplied by the Editor. A later hand has added अयं वां मित्रा राजानौ अन in M.

**ता सुम्राजा घृतासुती आदित्या दानुनस्पती । सचैते अनवह्वरम् ॥ ६ ॥**

ता सम्राजा । तौ[1] । सम्राजौ[2] । घृतदोहनौ[3] । मित्रावरुणौ[4] । दानस्य[5] । स्वामिनौ[6] । सेवेते[7] । कर्मणोऽनपभ्रंष्टम्[8] ।

**गोमदू षु नासत्याश्वावद्यातमश्विना । वुर्ती रुद्रा नृपाय्यम् ॥ ७ ॥**

गोमद्रू[9] षु । हे असत्यरहितौ[10] ! अश्विनौ[11] ! गोमत्[12] । अश्ववत्[13] । च[14] । आयातम्[15] ।

---

१. तौ मित्रावरुणौ Sy., SKN.

२. आज्ञयैव सर्वेषां शास्तारौ Sy. सम्यग् दीप्तावीश्वरौ SKN. सन्दीप्तौ Dur.

३. दोहन M. ०दौहनौ P. घृताम्नौ 'तद्वां महित्वं घृतान्नावस्तु' (RV.6.67.8.) इति मन्त्रान्तरात् Sy. आसुतिरशनं रसो वा घृताशनौ घृतरसौ वा । यद्वा—आसुतिरासवः, घृतमेवासवो ययोरित्यर्थः. . . अथवा घृतमुदकं वृष्टिलक्षणं. . .सुवाते प्रेरयतस्तौ घृतासुती SKN.
तौ हि घृतमुदकमासुवाते वर्षकर्मणा जनयतः Dur.

४. आदित्या अदितेः पुत्रौ Sy., SKN., Dur.

५. दास्य P. दानुनो दानस्य देयस्य वा धनस्य Sy. दानुर्दानम् । 'दाभाभ्यां नुः' बहुलवचनाद् भावे। तस्य SKN. दानानामीशाते तौ यजमानैः सम्यक् स्तुतिभिर्हविर्भिश्च संसेवितौ सन्तौ Dur.

६. अधिपती, अत्यन्तदातारावित्यर्थः SKN.

७. सेवते P. लोडर्थे लेट्, सचेतां सेवेताम् । किम् ? सामर्थ्यादस्मद्यज्ञम् । अथवा वृष्टिप्रदानद्वारेण सचेते सर्वान्प्राणिनः SKN. प्रतिसंसेवेते यजमानमभिमतैर्दानैः Sy.

८. ०नवभ्र० P. अकुटिलं यजमानम् Sy. कीदृशम् ? अनवह्वरम् । अवपूर्वस्य ह्वरतेरस्तिकर्मणः । अवह्वरो भक्षः । अनवभक्षितं अनवहिंसितं रक्षोभिरित्यर्थः । अनवह्वरम्—'ह्वृ कौटिल्ये' अकुटिलमृजु । अशाठ्येनेत्यर्थः SKN. अनवरुध्यमानावित्यर्थः । यजमानविशेषणं वा युक्तम् । न कृतघ्नौ शक्तौ च दातुमित्येवं मित्रावरुणावत्र स्तूयेते Dur.
'दानपती' N. 2.13., SKN. II. 83.

९. ०मद्रू M.

१०. हे अनृतभाषणरहितौ ! Sy.

११. P. adds भृशं रयिमस्मभ्यमावहतं पिशङ्गरूपं हे स्तोत्राहं पूजयाऽरम्भितारम् after अश्विनौ । This additional passage has a striking resemblance with the commentary of RV. 2.41.9.

१२. गोमद्यथा भवति तथा Sy. गावो विद्यन्ते यस्मिन् गोमत्. . .गोयुक्तम् Mah. गोमद्धनं सङ्गृह्य U.

१३. अश्ववच्च यथा भवति तथा Sy. अश्वा विद्यन्ते यस्य तदश्ववत्. . .अश्वयुक्तं च धनमादाय यज्ञमागच्छतमित्यर्थः Mah. अश्ववच्च धनं सङ्गृह्य U.

१४. ऊ षु इति पूरणौ Sy., U.

१५. यातं गच्छतम् Sy.

मार्गेण[1] । युद्धे क्रूरकर्माणौ[2] । सोमम्[3] ।[4]

**न यत्परो नान्तर आदधर्षद्वृषण्वसू । दुःशंसो मर्त्यो रिपुः ॥ ८ ॥**

न यत्परः । अज्ञातिः[5] । ज्ञातिर्वा[6] । यत्[7] । अभिभवितुम्[8] । न शक्नोति । हे प्रदीयमानधनौ[9] ! यच्च[10] दुःशंसनः[11] । रिपुश्च[12] । नाधर्षति[13] ।[14] उत्तरत्र सम्बन्धः ।

**ता न आ वोळ्हमश्विना रयिं पिशङ्गसंदृशम् । धिष्ण्या वरिवोविदम् ॥ ९ ॥**

ता न आ[15] । हे अश्विनौ ! तादृशम्[16] । रयिम्[17] । अस्मभ्यम्[18] । आवहतम्[19] । पिशङ्ग-

---

१. वर्तिर्मार्गः, तेन मार्गेण रथेन वा Sy. वर्तिः, विभक्तिव्यत्ययः । वर्त्या मार्गेण Mah. वर्तिन्या प्रसिद्धेन मार्गेण U.

२. रोरुयमाणौ द्रवन्तौ युवाम् Sy. शत्रूणां रोदयितारौ Mah., U.

३. नृभिर्नेतृभिर्देवैः पातव्यं सोमम् Sy. नृपाय्यं यज्ञम्प्रति...नृभिः पीयते सोमो यस्मिन्स नृपाय्यः ।...नृशब्देऽपि तृतीयान्त उपपदे पिबतेर्धातोरधिकरणे यत्प्रत्ययो युगागमश्च निपात्यते Mah. नृपाय्यं प्रति सदेवा नरो यस्मिन् यज्ञे पिबन्ति स नृपाय्यः U.

४. VM. ignores सु ।
This stanza=YV. 20.81.

५. ॰ज्ञाति M. असम्बद्धः Mah. दूरस्थः Sy. अन्तरेणासम्बद्धः U.

६. M. omits ज्ञाति ॥ उक्तलक्षणेतरः समीपवर्ती मर्त्यो रिपुरपि यत् Sy. सम्बद्धः स्वकीयोऽपीदृशो मर्त्यः Mah. सम्बद्धः U.

७. यद्धनम् Sy. यमिन्द्रम् Mah. यमेनम् U.

८. ॰भवतुम् P. न आधृष्णुयात् न पराभूयात् Mah. अभिभूय गृह्णीयात् U.

९. दीयमानसनौ P. हे धनस्य वर्षितारौ ! Sy. वृषा वृष्टिरेव वसु धनं ययोस्तौ यद्वा वृष्ट्या वासयतो लोकं स्थापयतस्तौ वृषण्वसू Mah. वर्षणं वृष्टिर्वसु धनं ययोस्तौ तथोक्तौ, यद्वा वृष्टिद्वारेणावासयितारौ U.

१०. यच्छ P.

११. दुश्शेनो M. शंसनायोग्यः Sy. दुष्टमपवादं शंसति कथयति दुःशंसोऽपवदिता Mah. दुष्टमसद्वृत्तम् शंसति यः स तथोक्तः U.

१२. रिपुः शत्रुः Mah., U.

१३. तद्धनमावोळ्हमिति शेषः Sy. स्वजनोऽस्वजनोऽपि रिपुः पिशुनोऽपि यमिन्द्रं पराभवितुं न शक्त इत्यर्थः । 'ञिधृषा प्रागल्भ्ये' Mah.

१४. VM. ignores मर्त्यः ॥ मर्त्यो मनुष्यः Mah., U.
This stanza=YV. 20.82.

१५. मन आ M. The *pratīka* is omitted in P.

१६. ॰दृश॰ M. तौ युवाम् Sy. यौ युवामुक्तगुणौ तौ U.

१७. रेयम् M. पशुम् Sy. धनम् Mah., U.

१८. नोऽस्माकम् Mah., U.

१९. आहेतम् M. आनयतमित्यर्थः Mah.

रूपम्[1] । हे स्तोत्रार्हौ[2] ! पूजाया[3] । लम्भयितारम्[4] ।

**इन्द्रो॑ अ॒ङ्ग म॒हद्भ॒यम॒भी षदप॑ चुच्यवत् । स हि स्थि॒रो विच॑र्षणिः ॥ १० ॥**

इन्द्रः[5] । अङ्गे[6]त्यप्रतिलोम्यं[7] द्योतयति[8], क्षिप्रवचनः[9], इन्द्रः[10] । क्षिप्रम् । महत्[11] । भयम्[12] । अभिभवति[13], अस्तिमेते वैयाकरणाः सकारमाचक्षते । तथा सति शत्रूनपच्यावयत्[14] । सः । हि[15] । स्थिरः[16] । विद्रष्टा[17] ।

**इन्द्र॑श्च मृ॒ळया॑ति नो॒ न नः॑ प॒श्चाद॒घं न॑शत् । भ॒द्रं भ॑वाति नः पु॒रः ॥ ११ ॥**

इन्द्रश्च । इन्द्रः[18] । चेदम्[19] । अस्मान् । सुखयति[20] । न । ततः पश्चात्[21] । अनघम्[22] । प्राप्नोति । भद्रं[23] च । अस्माकम् । पुरः[24] । भवति[25] ।

---

१. नानारूपम् Sy. पिशङ्गं पीतं सम्यग् दृश्यते तत् पिशङ्गसंदृशं पीतवर्णं सुवर्णमित्यर्थः Mah. अनेकरूपसन्दर्शनम् U.

२. ०त्रार्हं P. हे धिषणार्हौ ! Sy. धिष्णघाग्निरूपौ ! धातारौ ! वा Mah. धिष्णघाग्निरूपौ ! दातारौ ! वा U.

३. पूजया P.

४. रम्भ० M. and P. धनस्य लम्भकम् Sy. वरिवो धनं विन्दति प्राप्नोति वरिवोविदः, तम् 'विद्लृ लाभे' .... यच्च धनं धनान्तरहेतुभूतं भवतीत्यर्थः Mah. वरिवो धनं विन्दति वरिवोविदः । वरिवो धननाम (Ngh. 2.10.) यल्लब्धं सदन्यस्य धनलाभस्य हेतुभूतं भवति U.
This stanza=YV. 20.83.

५. इन्द्रं M. and P.

६. अङ्गेति क्षिप्रनाम N. 5.17.

७. इत्यप्रतिलो० M. आगत्य प्रात्यलोः० P.

८. ०तयेति P.

९. वचनम् M. The passage अङ्गेत्य० ...क्षिप्रवचनः, should immediately follow क्षिप्रम् and precede महत् ।

१०. इन्द्रं P.

११. अधिकम् Sy.

१२. भयकारणम् Sy.

१३. अभिभवत् Sy.

१४. ०नापि च्या० M. अपच्यावयेत् Sy.

१५. ह M. हित P. हि यस्मात्कारणात् Sy.

१६. केनापि चालयितुमशक्यः Sy.

१७. ऽपिद्र० M. विश्वस्य द्रष्टा Sy.

१८. परमैश्वर्यवानिन्द्रः Sy.

१९. च चेत् Sy.

२०. ०यत M. सुखयेत् Sy.

२१. पृष्ठतः Sy.

२२. अघम् is suggested for अनघम् ॥ दुरितम् Sy.

२३. कल्याणम् Sy.

२४. पुरस्तात् Sy.

२५. VM. ignores नः (second verse.)

[१]अवशिष्टो वर्गः स्पष्टार्थः[२]—

इन्द्र आशाभ्यस्परि सर्वाभ्यो अभयं करत् । जेता शत्रून्विचर्षणिः ॥ १२ ॥[३]
विश्वे देवास आ गत शृणुता म इमं हवम् । एदं बर्हिर्नि षीदत ॥ १३ ॥[४]
तीव्रो वो मधुमाँ अयं शुनहोत्रेषु मत्सरः । एतं पिबत काम्यम् ॥ १४ ॥
इन्द्रज्येष्ठा मरुद्गणा देवासः पूषरातयः । विश्वे मम श्रुता हवम् ॥ १५ ॥

[ इन्द्र आशाभ्यस्परि । विश्वे देवासः । तीव्रो

---

१. अव is omitted by P.

२. ०ष्टात्र्थः P. ३. The stanza RV. 2. 41. 12. is explained in the following manner:– विचर्षणिः विविधस्य द्रष्टा । जेता, शत्रून् असुरान् जेता तृन्नन्तत्वात् षष्ठ्यभावः । इन्द्रः परमैश्वर्यवान् । सर्वाभ्यः । आशाभ्यो दिग्भ्यः । अस्माकमभयम् । करत् करोतु । परि इति पञ्चमीद्योतकः Sy. इन्द्र आशाभ्यो दिग्भ्यः । परि करदित्येतेन सम्बध्यते । सर्वाभ्यो दिग्भ्यः, दिग्भिरत्र तन्निवासिनो लक्ष्यन्ते । सर्वदिङ्निवासिभ्यो भयङ्करेभ्यो रक्षआदिभ्यो ऽस्माकमभयं परिकरत् सर्वतः करोत्वित्यर्थः । कीदृश इन्द्रः ? जेता, ताच्छीलिकस्तृन्प्रत्ययम् । तृन्प्रयोगे च षष्ठीप्रतिषेधाद् द्वितीयैव शत्रूनिति । शत्रूञ्जेता एवंशीलः । विचर्षणिः पश्यतिकर्मायम् । द्रष्टा यो लोकपालत्वात् कृत्स्नस्य जगतः SKN. इन्द्र आशाभ्यो दिग्भ्यो हि यद् भयमुत्पद्यते जगतां, सर्वाभ्यः(सर्वेभ्यः) नानादिङ्निवासिभ्यो भूतेभ्योऽभयं करत् करोत्वित्यर्थः । आह किंलक्षणः पुनरसाविन्द्र इति ? जेता शत्रून्, विचर्षणिः, अधिद्रष्टा सार्वभौतिकानां कर्मणाम् Dur. आशा दिशो भवन्त्यासदनात् । आशा उपदिशो भवन्त्यभ्यशनात् N. 6.1., SKN.II. 387.

४. The stanza (2.41.13.) is explained in the following manner :— विश्वे देवासः हे विश्वे देवाः ! आ गत इहागच्छत । मे मदीयम् । इमम् । हवमाह्वानम् । शृणुत । इदं बर्हिः अस्मिन् बर्हिषि । आ निषीदत उपविशत Sy. हे विश्वे देवासः ! यूयमागत, अस्मद्यज्ञं प्रत्यागच्छत । आगत्य च मे ममेमं हवमाह्वानं शृणुत । श्रुत्वेदं मदीयं बर्हिरानिषीदत बर्हिष उपर्युपविशत Mah. हे विश्वे देवाः ! इहागच्छत, आगत्य च शृणुत मे ममेमं हवमाह्वानम् । श्रुत्वा चावधार्य चानिषीदत, इदमस्मदीयं बर्हिः U. विश्वे इति पादादित्वान् न निहन्यते, देवास इति पूर्ववन्निहन्यते । पूर्ववदसुक् । हे ईदृशा विश्वे देवाः ! आगत आगच्छत । पूर्ववच्छपो लुक् BB. हे विश्वे देवासः ! विश्वे देवाः ! यूयं मे मम इमं हवम्, इवम् आह्वानं शृणुता शृणुत । श्रुत्वा च आगत आगच्छत । आगत्य च इदं बर्हिः अस्मिन् कुशे आसनार्थोपकल्पिते आनिषीदत, उपविशत । विश्वे देवासः इति 'आज्जसेरसुक्' (Pa. 7.1.50) । आगत इति गमेर्लोड्मध्यमपुरुषबहुवचनम्, 'बहुलं छन्दसि, (Pa.2.4.73.) इति शपो लुक् 'अनुदात्तोपदेश०' (Pa. 6.4.37.) इत्यादिना मकारलोपः ॥ शृणुता इति 'ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्' (Pa.6.3.133.) इति दीर्घः । इदं बर्हिः, इति सप्तम्यर्थे द्वितीया । आनिषीदत इति व्यवहितोपसर्गसम्बन्धः । CHMB. 8.13., p. 131.
विश्वे देवास आ गत of RV. 2.41. $13^a$. is identical with RV. 1. $3.7^b$. and is partly explained in SB. 4.3.1.27., p. 369.
This stanza=YV. 7.33., TS. 1.4.16.1.

वः[1] । इन्द्रज्येष्ठाः[2] ][3]

अम्बितमे नदीतमे देवितमे सरस्वति ।
अप्रशस्ताइव स्मसि प्रशस्तिमम्ब नस्कृधि ॥ १६ ॥

अम्बितमे । शौनकः[4]—

'वायव्ये चैन्द्रवायवौ[5] पञ्चाथ प्राउगास्तृचाः[6] ।
प्रेत्यृक्[7] स्तौति[8] हविर्धाने[9] अग्निस्तत्र[10] निपातभाक् ।
द्यावापृथिव्यौ द्यावेति हविर्धाने ततः[11] परे' ॥ इति ॥

मातृतमे[12] ! नदीभ्यो वरिष्ठे[13] ! दीप्ततमे[14] ! सरस्वति[15] ! धनाभावादप्रशस्ता[16] इव ।

---

१. Sy. explains the stanza (2.41.14.) in the following manner :—
हे विश्वे देवाः ! तीव्रः तीव्रमदः । मधुमान् रसवान् । मत्सरः मदकरः सोमः । अयम् । वः युष्मदर्थम् । शुनहोत्रेषु गृत्समदेष्वस्मासु स्थितः । काम्यं कमनीयम् । एतं सोमम् । पिबत ॥

२. This stanza has already been explained. See RV. 1.23.8. Sy. explains the stanza (2.41.15.) in the following manner :—
हे इन्द्रज्येष्ठाः ! इन्द्रपुरोगमाः । मरुद्गणाः मरुत्समूहरूपाः ! पूषरातयः पूषाख्यो देवो रातिर्दाता येषां ते पूषरातयः ! देवासः हे द्योतमानाः ! देवाः ! विश्वे सर्वे यूयम् । मम मदीयम् । हवमाह्वानं श्रुत शृणुत । इन्द्रज्येष्ठादयः सम्बोधनान्ताः ।

३. The *pratīkas* within brackets have been supplied by the Editor. In M. a later hand has added इन्द्र आशाभ्यः । विश्वे देवासः । तीव्रः वः मधुमान् । इन्द्रज्येष्ठाः ।

४. BD. IV. 92. p. 45.

५. वायव्यावैन्द्रवायी P. वायव्यावैन्द्रवाय्वी च M.

६. प्रउगाः P. M.

७. प्रेत्यृक M. प्रत्यृ P.
प्रेति refers to प्रेतां यज्ञस्य (RV. 2.41.19.)

८. स्तौ P.

९. विर्धा० P.

१०. ग्निस्त्व० P.

११. परा ततः P. M.

१२. मातृणां श्रेष्ठे ! Sy.

१३. ०रिष्ठे M.
नदीनां श्रेष्ठे ! Sy.

१४. दीप्यत० P.
०तमेः M.
देवीनां श्रेष्ठे ! Sy.

१५. हे सरस्वति ! Sy.

१६. धनाभावादसमृद्धा इव वयम् Sy.

स्मः[1] । तानस्मान्[2] । धनप्रदानेन प्रशस्तान्[3] । कुरु[4] ।[5]

त्वे विश्वा सरस्वति श्रितायूंषि देव्याम् ।
शुनहोत्रेषु मत्स्व प्रजां देवि दिदिड्ढि नः ॥ १७ ॥

त्वे विश्वा । त्वयि । सर्वाणि । सरस्वति ! श्रितानि[6] । अन्नानि[7] । देव्याम्[8] । सा शुनहोत्रेषु[9] । स्तोत्रेण मदस्व[10] । प्रजां च[11] । देहि ।[12]

इमा ब्रह्म सरस्वति जुषस्व वाजिनीवति ।
या ते मन्म गृत्समदा ऋतावरि प्रिया देवेषु जुह्वति ॥ १८ ॥

इमा ब्रह्म । इमानि[13] । हवींषि[14] । सेवस्व[15] । अन्नवति ! आज्यानि[16] । प्रियतमानि[17] । यानि । गृत्समदाः । देवमध्ये[18] । तुभ्यम्[19] । जुह्वति ।[20]

प्रेतां यज्ञस्य शंभुवा युवामिदा वृणीमहे । अग्निं च हव्यवाहनम् ॥ १९ ॥

प्रेतां यज्ञस्य । प्रगच्छताम्[21] । यज्ञस्य[22] । सुखस्य भावयितारौ[23] । युवाम्[24] । एव ।

---

१. भवामः Sy.
२. अस्मभ्यम् Sy.
३. प्रशस्ति धनसमृद्धिम् Sy.
४. प्रयच्छेत्यर्थः Sy.
५. VM. ignores अम्ब ।
अम्ब ! हे मातः ! सरस्वति ! Sy.
६. आश्रितानि Sy.
७. आयुः सूनृता । ब्रह्म इत्यन्ननामानि Ngh. 2.7.
८. द्योतमानायाम् Sy.
९. ०होत्रपुत्रे० M. गृत्समदेष्वस्मासु विषयेषु Sy.
१०. सोमपानेन तृप्य Sy.
११. पुत्रान् Sy.
१२. VM. ignores देवि and नः ।
हे देवि ! सरस्वति ! नोऽस्मभ्यम् Sy.
१३. इमा हि P.
१४. ब्रह्माणि हवींषि Sy.
१५. सेवस्य P. स्वीकुरु Sy.
१६. ०ज्यायनि M. मननीयानि Sy.
१७. प्रियाणि Sy.
१८. देवानां मध्ये देवेषु वा Sy.
१९. त्वदर्थम् Sy.
२०. VM. ignores सरस्वति and ऋतावरि ॥ ऋतावरि ! हे उदकवति ! सरस्वति ! Sy.
२१. उत्तरवेदेः पश्चिमभागं प्रति प्रगच्छताम् Sy.
२२. यागस्य Sy.
२३. सुखसम्पादके हविर्धाने अनसी तद्रूपे द्यावापृथिव्यौ वा Sy.
२४. अथ प्रत्यक्षकृतः Sy.

हविर्वहनायावृणीमहे[1] । अग्निम्[2] । च[3] । हविषां वोढारम्[4] ।

**द्यावा नः पृथिवी इमं सिध्रमद्य दिविस्पृशम् । यज्ञं देवेषु यच्छताम् ॥ २० ॥**

द्यावा[5] नः ॥ यज्ञे द्यावापृथिवी हविर्धाने भवत इति प्रसङ्गस्तयोः स्तुतिः ॥ द्यावा[6] । पृथिवी[7] । अस्माकम्[8] । साधकम्[9] । दिवः स्प्रष्टारम्[10] । इमम् । यज्ञम्[11] । हविर्धाने भूत्वा देवेषु[12] । यच्छताम्[13] ।[14]

**आ वामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः । इहाद्य सोमपीतये ॥ २१ ॥**

आ वाम् । आसीदन्तु[15] । युवयोः । उत्सङ्गम्[16] । अद्रुहः[17] । यज्ञियाः[18] । देवाः । अस्मिन्[19] यज्ञे । अद्य[20] । सोमपानाय[21] ।

---

१. प्रार्थयामहे Sy.
२. अग्निरत्र निपातभाक् Sy.
३. आवृणीमहे Sy. ४. वोढाराविति P.
५. द्याव P. ६. द्यौः Sy.
७. पृथिवी चोभे Sy. द्यावापृथिवीशब्दयोः सत्यपि व्यवधाने परस्परसव्यपेक्षत्वात् प्रत्येकं द्विवचनम् । अतो यः समुदितयोः प्रत्येकमप्यसावेवार्थः । द्यावापृथिव्यौ SKN. द्यावापृथिव्यौ Dur.
८. अस्माकं स्वभूतम् Sy.
९. धा धाकं P. स्वर्गादेः साधकम् Sy. साधनं फलानाम् SKN. सोऽयमस्मान् साधयति Dur.
१०. ०वस्पृ० P. देवान् गच्छन्तम् Sy. दिविस्पृशं दिवः स्प्रष्टारं गन्तारमित्यर्थः SKN. दिवि स्पृशं द्यां यः स्पृशत्यापूरयति तम् Dur. ११. एवङ्गुणं यज्ञम् Dur. १२. देवेभ्यः Dur.
१३. च्छ० P. नियच्छताम् Sy. प्रापयतामित्यर्थः SKN. दत्तमित्येतदाशास्महे Dur. द्यावापृथिव्यौ न इमं साधनमद्य दिविस्पृशं यज्ञं देवेषु नियच्छताम् N. 9.39., SKN. III. 173.
१४. VM. ignores अद्य ।
अद्य अस्मिन्नहनि SKN. एतस्मिन्नहनि वर्तमानम् Dur.
१५. आकारः सीदन्त्वित्येतेन सम्बध्यते SKN. उपगम्य सीदन्तु निषीदन्तु Dur.
१६. ०त्समंग P. समीपम् Sy. वनोपस्थं पर्वतोपस्थमित्यादौ दर्शनादुपस्थशब्देन समीपमुच्यते, उपस्थमुपस्थानमुपेत्य स्थीयते यस्मिन् SKN. यत्र युवामुपगम्य स्थिते तत्...उपस्थानम् Dur.
१७. द्रुयेहा P. द्रोहवर्जिते ! हे हविर्धाने ! तद्रूपे ! द्यावापृथिव्यौ ! Sy. हे अद्रोग्धव्ये ! हविर्धाने SKN. हे हविर्धाने !...अद्रोग्धव्ये युवामुच्येथे Dur.
१८. यज्ञार्हा Sy. यज्ञसम्पादिन इन्द्रादयो यज्ञाङ्गदेवता इत्यभिप्रायः SKN.
१९. प्रकृते SKN. एतस्मिन् कर्मणि Dur.
२०. अस्मिन्नहनि Sy., SKN.
२१. सोमपानायेत्येतदाशास्महे Dur.
आसीदन्तु । वामुपस्थमुपस्थानम् । [ अद्रोग्धव्ये इति वा ] यज्ञिया देवा यज्ञसम्पादिन इहाद्य सोमपानाय N. 9.37., SKN. III. 172.

II. 42.

कनिक्रदज्जनुषं प्रब्रुवाण इयर्ति वाचमरितेव नावम् ।
सुमङ्गलश्च शकुने भवासि मा त्वा का चिदभिभा विश्व्या विदत् ॥ १ ॥

[1]कनिक्रदत् । शौनकः[2]—

स्तुतिं[3] तु पुनरे[4]वेच्छन्[5]निन्द्रो भूत्वा[6] कपिञ्जलः ।
ऋषेर्जिगमिषोराशां[7] ववाशास्थाय दक्षिणाम् ॥
स तमार्गेण[8] सम्प्रेक्ष्य[9] चक्षुषा पक्षिरूपिणम् ।
पराभ्यां[10]मभितुष्टाव सूक्ताभ्यां तु 'कनिक्रदत्' ॥ इति[11] ॥

'न्यक्रन्दीत्[12] । जन्म[13] । प्रब्रुवाणः' इति यास्कः[14], शब्दं कुर्वन्निति वदत उत्तरत्र स्वरः[15] सिध्यति अस्योदयो[16] जन्म । शब्दं कुर्वन्[17] । अभ्युदयम्[18] । प्रब्रुवाणम्[19] । प्रेरयति[20] । वाचः ।

---

१. 'कनिक्रदत्' इति तृचं दशमं सूक्तम् । अत्रैवमनुक्रमणिका—'कनिक्रदत्तृचम्' (KSA. 16.42. p. 14.) इति । मण्डलद्रष्टा गृत्समदोऽस्य ऋषिः । त्रिष्टुप् छन्दः । कपिञ्जलरूपीन्द्रो देवता । वयसाममनोज्ञां वाचं श्रुत्वैतत्सूक्तं जपेत् । सूत्रितञ्च—'वयसाममनोज्ञां वाचः श्रुत्वा कनिक्रदज्जनुषं प्रब्रुवाण इति सूक्ते जपेत्' (AGS. 3. 10.9.) इति Sy.

२. शोन० P. ३. स्तुतिः M.

४. पुरे० P. ५. ०वेन्द्रोच्छ० M.

६. भुत्वा M. ७. ०षोवाशां P.

८. तं मार्गेण M.

९. ०प्रदेय १०. रान्याभि० P.

११. BD. iv. 93.94.

१२. ०न्वी P.

१३. यज्म P. १४. N. 9.4.

१५. सरः M. स्वर P.

१६. अस्युद० M. and P.

१७. पुनः पुनः शब्दायमानः Sy. अर्धर्चयोरेकवाक्यतायै यत्तच्छब्दाध्याहारः । प्रत्यक्षकृतत्वाच्च मन्त्रस्य । कनिक्रददिति प्रथमपुरुषस्यैकवाक्यतायै भवच्छब्दो योज्यः । भवान् कनिक्रदत्, अत्यर्थं शब्दं कृतवान् करोति वा SKN. पुनः पुनर्भृशं वा क्रन्दसीति मध्यमपुरुषेण नुतिरुत्तरमर्धर्चमपेक्ष्य Dur.

१८. अभ्युदयम् should immediately follow अस्योदयो जन्म ॥ जनुषं जनिष्यमाणमर्थम् Sy. जन्म जातिस्ताम् SKN. आत्मनोऽभिजातिम् Dur.

१९. प्रब्रुवाणः is suggested for प्रब्रुवाणम् ॥ सूचयन् कपिञ्जलः Sy. प्रायेण शकुनिनाम्नां शब्दानुकृतिनिमित्तत्वात्तस्य शब्दस्य तन्नाम्नश्च सादृश्यात् ते जातिमात्मीयां प्रब्रुवाणा इव SKN. प्रकथयन्निव Dur.

२०. न सकृदेव । किं तर्हि ? सततमेवेर्यति प्रेरयति SKN. इर्यर्षि Dur.

क्रमेण प्रेरयितेव[1] । नावमरित्रेण[2] । अथ प्रत्यक्ष[3]:, कल्याणमङ्गलः[4] । च । शकुने[5] ! भवसि[6] । विश्वो वासयिता व्यासः[7], तेन[8] निहिता । काचित्[9] । अभिभा[10], वाधः । मा । त्वाम्[11] । विन्दतु[12], 'मा च[13] त्वा[14] काचिदभिभूतिः सर्वतो विदत्[15]' इति यास्कः[16] ।

**मा त्वा श्ये॒न उद्व॑धी॒न्मा सु॑प॒र्णो मा त्वा॑ विद॒दिषु॑मान्वी॒रो अस्ता॑ ।**
**पित्र्या॒मनु॑ प्र॒दिशं॒ कनि॑क्रदत्सुम॒ङ्गलो॑ भद्रवा॒दी व॑दे॒ह ॥ २ ॥**

मा त्वा श्येनः । श्येनसुपर्णौ[17] । कपिञ्जलम्[18] । उद्धतः[19] । मा । च । त्वाम् । विन्दतु[20] ।

---

१. तेवं P. कर्णधार इव Sy. गमयितेव नाविकः SKN. नाविक इव Dur.

२. वाव० M. पुनः पुनर्नावं पारगमनाय यस्त्वमेवमीरयसि Dur.

३. अथ प्रत्यक्षकृतः Sy.

४. प्रकृष्टकल्याणः Sy. स त्वं सुमङ्गलश्चास्माकं प्रशस्तः SKN. प्रशस्तमङ्गलश्चास्माकम् Dur.

५. हे कपिञ्जल ! त्वम् Sy.

६. भव Sy., Dur.

७. व्याधत्तेः P. व्याधः is suggested for व्यासः ।

८. तन P. विश्व्या विश्वतः सर्वासु दिक्षु Sy. सर्वप्रकारा SKN. सर्वप्रकारा सर्वतः Dur.

९. काचद् P. कोऽपि Sy. कश्चित् SKN. वयमपि च तुभ्यमित्याशास्महे त्वा काचित् Dur.

१०. इभिभा P. अभिभवः Sy. पराभिभवोऽभिभूतिः SKN. परोपद्रवः Dur.

११. त्वा D. M.

१२. विन्दंगु M. विन्दन्तु P. प्रापत् Sy. विदिर्लाभार्थः । लभेत प्रापदित्यर्थः SKN. विन्दत्विति Dur.

१३. Omitted by M. and P.

१४. त्वां M. and P.

१५. विदम् M.

१६. शकुनिः शक्नोत्युन्नेतुमात्मानम् । . . . न्यक्रन्दीज्जन्म प्रब्रुवाणः । यथास्य शब्दस्तथा नामेरयति वाचम् । ईरयितेव नावम् । सुमङ्गलश्च शकुने ! भव । कल्याणमङ्गलः । मङ्गलं गिरतेर्गृणात्यर्थे । गिरत्यनर्थानिति वा । अमङ्गलमङ्गवत् । मज्जयति पापकमिति नैरुक्ताः । मां गच्छत्विति वा । मा च त्वा काचिदभिभूतिः सर्वतो विदत् N. 9.4., SKN. III. 145.

१७. VM. has combined श्येनः and सुपर्णः although they are separate in the original, and used the dual number. श्येनः प्रबलः पक्षिविशेषः, सुपर्णो गरुडः पक्षी च Sy.

१८. This seems to be the explanation of त्वा ।

१९. VM. has used the dual number of √हन् i.e. उद् हतः ॥ Sy. takes उत । वधीत् for उत् । वधीत् and explains these separately as हिंसीत् । उत अपि च ।

२०. प्रापत् Sy.

शरवान्[1] । व्याधः[2] । प्रेरयिता[3] । पित्र्याम्[4] । प्रकृष्टां[5] दक्षिणां महादिशम् । अनु[6] स्थित्वा । शब्दं[7] कुर्वन् । कल्याणमङ्गलः । भद्रवादी[8] । वदेति[9] भद्रं वदेत्यर्थः[10] ।

अव क्रन्द दक्षिणतो गृहाणां सुमङ्गलो भद्रवादी शकुन्ते ।
मा नः स्तेन ईशत माघशंसो बृहद्वदेम विदथे सुवीराः ॥ ३ ॥

अव क्रन्द । गृहाणाम् । दक्षिणतः[11] । क्रन्दनं[12] कुरु । सुमङ्गलः । भद्रवादी[13] । हे शकुन्ते[14] ! मा । अस्माकं मार्गे । स्तेनः[15] । ईश्वरो भवतु[16] । मा च[17] । पापाभिलाषः[18] ।[19]

II. 43.

प्रदक्षिणिदभि गृणन्ति कारवो वयो वदन्त ऋतुथा शकुन्तयः ।
उभे वाचौ वदति सामगा इव गायत्रं च त्रैष्टुभं चानु राजति ॥ १ ॥

प्रदक्षिणित्[20] । प्रदक्षिणं[21] कपिञ्जलं गच्छन्तम्[22] । स्तुवन्ति[23] । स्तोतारः[24] । शकुन्तयश्च[25] ।

---

१. शूर० M. शरावा० P. बाणवान् Sy.
२. व्याधं M.
३. शराणां क्षेप्ता धन्वी Sy.
४. विततयां P.
दक्षिणाम् Sy.
५. ०कृष्टा P. दिशम् Sy.
६. दक्षिणस्यां दिशीत्यर्थः Sy.
७. पुनः पुनः शब्दं कुर्वन् Sy.
८. शोभनवादी सन् Sy.
९. मङ्गलं सूचय Sy.
१०. VM. ignores इह and explains मा once only.
इह अस्मद्विषये Sy.
११. दक्षिणस्यां दिशि Sy.
१२. क्नन्दनं P.
शब्दं कुरु दक्षिणतः शब्दायमानः शकुन्तो मङ्गलसूचको हि Sy.
१३. भद्रवादी च सन् Sy.
१४. हे कपिञ्जल ! त्वम् Sy.
१५. तस्करः Sy.
१६. ईशिष्ट Sy.
१७. मेशिष्ट Sy.
१८. अनर्थानां शंसकः Sy.
१९. VM. ignores बृहद् । वदेम । विदथे and सुवीराः ।
उत्तमः पादो व्याख्यातचरः Sy.
२०. 'प्रदक्षिणित्' इति तृचमेकादशं सूक्तं गार्त्समदं जागतम् । तथा चानुक्रान्तम्—'प्रदक्षिणिज्जागतं मध्येऽतिशक्वर्यष्टिर्वा' (KSA. 16.43. p. 14.) इति । द्वितीयातिशक्वरी अष्टिर्वा । इतरे जगत्यौ । कपिञ्जलरूपीन्द्रो देवता । वयसाममनोज्ञां वाचं श्रुत्वा 'प्रदक्षिणित्' इति सूक्तं जपेत् । सूत्रं प्रागेवोदाहृतम् Sy.
२१. Omitted by M. ०क्षिणिम् P.
२२. ०च्छन्तु M.
२३. अभिवदन्तु Sy.
२४. स्तोतार इव Sy.
२५. कपिञ्जलाः Sy.

तेषामन्नम्। वदन्तो भवन्ति। कालेषु। शकुन्तानामागच्छतामभविष्यदन्नं वदति सोऽयं कपिञ्जलो न स्तेत ? इत्युभे। वाचौ। वदति। यथा सामगाः शोभनं स्तुवन्ति सोऽयमेवं वदन्। गायत्रम्। च। त्रैष्टुभम्। चोभे सामनी। सखीकृत्य। राजति, ते उच्चारयन् यथा राजत्येवं राजतीति।

---

१. सूचयन्तः। बहुवचनं पूजार्थम् Sy.

२. काले काले Sy.

३. अभविष्यत् is doubtful. I suggest भविष्यत् for अभविष्यत् in the sense of 'future'. Or अभविष्यत् may express the idea of non-existant, *i.e.*, the food which did not exist.

४. नं P.

५. M. omits the words between शकुन्तयश्च and स्तेत।

६. M. omits इत्युभे॥ उभे seems to mean, with reference to food (1) food which exists and (2) food which does not exist.

७. सामगां P.

गानं च श्रौतं च Sy.

The *Padapāṭha* in Poona edition reads सामगाऽइव but in Max Müller's edition, the reading is सामगाःऽइव। The omission of the *Visarga* in the Poona edition is a mistake for the word is printed as सामगाः in Sāyaṇa's commentary, in that very edition. सामगाः is in the singular number as shown by the verbs वदति and राजति. But VM. takes it as nom. pl. and explains सामगाः as स्तुवन्ति। VM. is evidently wrong here.

८. ०ष्टुभ P.

९. Omitted by P.

१०. कृत्वी० P.

११. शृण्वतोऽनुरक्तान्करोतीत्यर्थः Sy.

१२. इते P.

१३. It may be taken as a simile, *i.e.*, यथा सा सामगा राजति तथायं कपिञ्जलो राजति।

उद्गातेव शकुने साम गायसि ब्रह्मपुत्रइव सवनेषु शंससि ।
वृषेव वाजी शिशुमतीरपीत्या सर्वतो नः शकुने भद्रमा वद
विश्वतो नः शकुने पुण्यमा वद ॥ २ ॥

उद्गातेव[1] । यथोद्गाता[2] । साम गायति । एवं च गानं करोषि[3] । यज्ञेषु[4] । होता[5] । शंससि[6] । यथा पुमान्[7] । अश्वः[8] । शिशुमतीर्वडवाः । सङ्क्रम्य[9] शब्दं करोति, एवं वदति । स त्वं शकुने[10] ! सर्वाभ्यो दिग्भ्यः[11] । भद्रम् । आवद[12] । विश्वतश्च रक्षःप्रभृतिभ्य इति[13] ।

आवदंस्त्वं शकुने भद्रमा वद तूष्णीमासीनः सुमतिं चिकिद्धि नः ।
यदुत्पतन्वदसि कर्करिर्यथा बृहद्वदेम विदथे सुवीराः ॥ ३ ॥

आवदन्[14] । आभिमुख्येन शब्दं कुर्वन् । त्वम् । शकुने[10] ! अस्माकम् । कल्याणम्[15] । आवद । तूष्णीम् । आसीनश्च[16] । सुमतिम्[17] । चिन्तय[18] । यत्[19] । त्वमुत्पतन् । कर्करिः[20], इव महाव्रत[21] उक्तो वाद्यविशेषः शाट्यायनके । भद्रं वदसि । ततो वयं बृहद् । वदेम[22] । गृहे । सुपुत्राः ।

---

१. उद्गाता M.
२. यथोत् P.
३. गानस्वनं करोषि Sy.
४. सवनेषु Sy.
५. ब्रह्मपुत्रइव यथा ब्राह्मणाच्छंसी Sy.
६. शस्त्राणि शंसति तथा त्वं कालेषु शंससि श्रौतस्वरं करोषि Sy.
७. वृषा सेचनसमर्थः Sy.
८. अश्वं M. and P.
९. अभिगत्य ! Sy.
१०. हे कपिञ्जल ! Sy.
११. Omitted by P.
१२. वद P. तथा त्वमपि वद । शिष्टं स्पष्टम् Sy.
१३. VM. ignores शकुने । नः after सर्वतः । नः (after विश्वतः) । पुण्यम् । आ and वद ।
१४. वत् P.
१५. मङ्गलम् Sy.
१६. तिष्ठन्नपि Sy.
१७. सुमितम् P.
१८. बुध्यस्व Sy.
१९. य P. यदा Sy.
२०. ककरी० P. तदा कर्करिरिव वदसि कर्करिर्वाद्यविशेषः Sy.
२१. ०हारव्र० P.
२२. वदे M. वदे P. अन्यद् व्याख्यातचरम् Sy.

III. 1.

सोमस्य मा तवसं वक्ष्यग्ने वह्निं चकर्थ विदथे यजध्यै ।
देवाँ अच्छा दीद्यद्युञ्जे अद्रिं शमाये अग्ने तन्वं जुषस्व ॥ १ ॥

[1]सोमस्य ॥ कुशिकस्त्वै[2]षीरथिरिन्द्रतुल्यं पुत्रमिच्छन् ब्रह्म[3]चर्यं चचार । तस्येन्द्र एवं[4] गाथी पुत्रो जज्ञे । गाथिनो विश्वामित्रः । स[5] तृतीयं मण्डलमपश्यत्[6] सोमस्येति[7][8] ॥ हे अग्ने[9] ! सोमस्य[10] । वेगं[11] प्रति । माम्[12] । वह[13] च । वोढारं[14] च । कुरु[15] । यज्ञे । देवान्यष्टुम् । देवान् । प्रति[16] । दीव्यमानोऽहम्[17] ।

---

१. वैश्वामित्रे तृतीये मण्डले पञ्चानुवाकाः । तत्र प्रथमेऽनुवाके द्वादश सूक्तानि । तत्र 'सोमस्य मा' इति त्रयोविंशत्यृचं प्रथमं सूक्तम् । तथा चानुक्रान्तम्—'सोमस्य त्र्यधिका' (KSA.16.1. p. 15.) इति । अस्य मण्डलस्य द्रष्टा विश्वामित्र ऋषिः । अनुक्तत्वात् त्रिष्टुप् छन्दः । 'मण्डलादिष्वाग्नेयम्' (KSA. 12. 12. p. 5) इति परिभाषयाग्निर्देवता । प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभे छन्दसि विनियोगः । तथा च सूत्रितम्—'सोमस्य मा तवसं प्रत्यग्निरुषस इति त्रीणि' (ASS. 4. 13.) इति Sy.

२. ०कस्त्वषी० M.
०कस्त्वृषी० D.

३. ब्रह्म P.

४. इव D.

५. सवितृ P.

६. ०श्यन् P.

७. Omitted by P.

८. (KSA. 16. pp., 14. 15.) प्रथमेवेतिहासः षड्गुरुशिष्यरचितायां वेदार्थदीपिकायामित्थमुपलभ्यते — (p. 104.)

इषीरथसुतस्त्वासीत्कुशिको नाम नामतः ।
इन्द्रतुल्यः सुतो मे स्यादितीच्छन्नकरोत्तपः ॥१॥
ब्रह्मचर्यं तु चरतस्तस्मादिन्द्रोऽभ्यजायत ।
मत्समोऽन्यो न चैव स्यादहमेवास्य पुत्रताम् ॥२॥
गच्छामि सम्यगेवं स्यादिति मत्वा शतक्रतुः ।
स गाथी नाम कुशिकादिषीरथसुतादभूत् ॥३॥
इन्द्ररूपाद्गाथिनस्तु विश्वामित्रोऽपि जज्ञिवान् ।
तृतीयं मण्डलमिदं तपसा सोऽत्र दृष्टवान् ॥४॥

९. Omitted in P. हे अग्ने ! त्वम् Sy.

१०. सोमस्ये P.

११. वगम P.
तवस्विनं बलिनम् Sy.

१२. तं माम् Sy.

१३. कामयस्व Sy.

१४. वोढारं यं माम् Sy.

१५. कृतवानसि Sy.

१६. अभि Sy.

१७. दीप्यमानोऽहम् Sy.

ग्रावाणं च । युनज्मि[1] । त्वं च सुखप्राप्त्यर्थम्[2] । मम तन्वम्[3] । सेवस्वेति[4] ।[5]

**प्राञ्चं यज्ञं चकृम वर्धतां गीः समिद्भिरग्निं नमसा दुवस्यन् ।**
**दिवः शशासुर्विदथा कवीनां गृत्साय चित्तवसे गातुमीषुः ॥ २ ॥**

प्राञ्चं यज्ञम् ।[6] प्राञ्चम् । यज्ञं[7] कर्म[8] । प्रवृद्धं[9] कुर्मः[10] । वर्धताम्[11] । स्तुतिः[12] । समिद्भिः । अन्नेन[13] च । अग्निम् । परिचरन्तु[14] । तथाऽग्निं[15] कवीनाम्[16] । प्रज्ञानानि[17] । दिवः[18] पृथिव्यामागच्छन्ति[19] । शशासुः[20] । तथा[21] तानि । मेधाविने[22] । प्रवृद्धायाग्नये[23] । गमनं[24] यज्ञं प्रति । इच्छन्ति[25], ततोऽनुशासनमिति ।

---

१. अभिषवणाय युनज्मि Sy.
२. ०प्त्यर्थम् P. शमाये शाम्यामि च । तथा च मन्त्रान्तरम्–'ऋतेनं देवः सविता शंमायते' (RV. 8. 86. 5.) इति । यद्वा शमाये स्तौमि 'शशमानो जरतीति' (Ngh. 3. 14.) स्तुतिकर्मसु पाठात् । तथा च मन्त्रान्तरम्–'सो अग्न ईजे शशमे च मर्तः' (RV. 6. 1. 9.) इति Sy.
३. शरीरम् Sy.
४. सेवसेवेति P. रक्षार्थं सेवस्व । यद्वा कर्माणि तन्वन्तं मां सेवस्वेत्यर्थः Sy.
५. VM. explains अग्ने once only.
६. हे अग्ने ! वयम् Sy.
७. यज्ञ P.
८. मः P.
९. प्रवृद्धं seems to be the explanation of प्राञ्चम् । It should therefore immediately follow प्राञ्चम् ॥ प्राञ्चं प्रकर्षेण गच्छन्तम् Sy.
१०. अकार्ष्म Sy.
११. एधताम् Sy.
१२. मदीया स्तुतिः Sy.
१३. हविषा च Sy.
१४. अस्मदीयाः परिचरेयुः Sy.
१५. मया० M.
१६. स्तोतॄणाम् Sy.
१७. ज्ञानानि स्तोत्राणि वा Sy.
१८. दिवा P. किञ्च द्युलोकादागत्य देवाः Sy.
१९. आगच्छति M. आगच्छे P.
२०. अन्वशिषन् Sy
२१. ०सुथा P. तथा seems to be the explanation of चित् ॥ चिदिति चार्थे Sy.
२२. अपि च गृत्साय । गृणातेरिदं रूपम् । स्तोतव्यायाग्नये Sy.
२३. वृद्धाय Sy.
२४. मने M. स्तोतुम् Sy.
२५. ०च्छति M. गच्छन्ति P. स्तोतार इच्छन्ति च Sy.

मयो॑ दधे॒ मेधि॑रः पू॒तद॑क्षो दि॒वः सु॒बन्धु॑र्ज॒नुषा॑ पृथि॒व्याः ।
अवि॑न्दन्नु दर्श॒तम॒प्स्व१॒॑न्तर्दे॒वासो॑ अ॒ग्निम॒पसि॒ स्वसॄ॑णाम् ॥ ३ ॥

मयो दधे। शोभनबन्धनोऽग्निः[1]। जन्मना[2]। द्यावापृथिव्योः[3]। सुखम्। धारयति[4]। यज्ञियः[5]। शुद्धबलः। तमिमम्[6]। देवाः। अविन्दन्[7]। अपाम्[8]। मध्ये[9]। दर्शनीयम्। सरन्तीनां[10] नदीनाम्। वेगे[11]ऽवस्थितम्[12]।[13]

अव॑र्धयन्त्सु॒भगं॑ स॒प्त य॒ह्वीः श्वे॒तं ज॑ज्ञा॒नम॑रु॒षं म॑हि॒त्वा ।
शिशुं॒ न जा॒तम॒भ्या॑रु॒रश्वा॑ दे॒वासो॑ अ॒ग्निं जनि॑मन्वपुष्यन् ॥ ४ ॥

अवर्धयन्। अवर्धयन्[14]। सुभगम्[15]। सप्त[16]। नद्यो महत्यः[17]। श्वेतवर्णम्[18]। जायमानम्[19]। आरोचमानम्[20]। महत्तया[21]। तथा जातमात्मनः[22] पुत्रमग्निं शिशुम्। इव[23]। जातम्। बडवाः। अभ्यगच्छन्[24]। तमिमं जातमग्निम्। देवाः। जन्मना[25]। आधातुमैच्छन् वपुः[26], आवपनं भूम्यामिति।

---

१. शोभनबन्धुः। स्वत एव बन्धुरिति यावत् Sy.
२. जना M. जन्ममात्रेण Sy.
३. VM. seems to explain दिवः and पृथिव्याः together as द्यावापृथिव्योः but Sy. explains these two words separately as योऽग्निः दिवः द्युलोकस्य, पृथिव्याः भूमेश्च.
४. विदधाति। देवानां मनुष्याणां च सुखं करोतीति यावत् Sy.
५. मेधावान् प्राज्ञः Sy.
६. तमिमम् refers to अग्निम्.
७. लब्धवन्तः Sy. ८. अप्सु Sy.
९. गूढं स्थितम् Sy.
१०. सरणशीलानां नदीनाम् Sy.
११. यज्ञवहनरूपे कर्मणि निमित्ते Sy.
१२. P. adds जातमग्निं देवा जन्मना धातुमैच्छन् वपुरावपनं भूम्यामिति। शुक्रेभिरङ्गैरन्तरिक्षं विस्तारय कर्मं च शोधयन्नात्मनः after ०स्थितम्। The additional passage is a part of the commentary on RV. 3.1.4, 5.
१३. VM. ignores उ ॥ उ इति पूरणः Sy.
१४. Omitted in M. अप्सु स्थितमग्निं स्वकार्यभूताभिरोषधीभिर्वृद्धिं प्रापितवत्यः। यद्वा दिव्यमग्निमापो वर्धयन्त्यबिन्धनत्वात्तस्य Sy.
१५. शोभनधनम् Sy.
१६. सर्पणशीलाः Sy. १७. मत्ये P.
१८. शुभ्रम् Sy. १९. जातम् Sy.
२०. मारो० M.
२१. महत्त्वेन Sy.
२२. तथा नद्य उत्पन्नमग्निमभ्यारुः अभिजग्मुः Sy. २३. यथा Sy.
२४. अभिगच्छन्ति Sy.
२५. जन्मा P. जन्मन्युदके वा Sy.
२६. वपुर्दीप्तिमकुर्वन् Sy.

शुक्रेभि॑रङ्गै॒ रज॑ आतत॒न्वान् क्रतुं॑ पुना॒नः क॒विभिः॑ प॒वित्रैः॑ ।
शो॒चिर्वसा॑नः॒ पर्या॒युर॒पां श्रियो॑ मिमीते बृह॒तीरनू॑नाः ॥ ५ ॥

शुक्रेभिरङ्गैः । शुक्रैः[1] । अङ्गैः[2] । अन्तरिक्षम् । विस्तारयन्[3] । कर्म[4] च । शोषयन् । आत्मनः पवित्रैः[5] । कर्मभिः[6] । तेजः[7] । आच्छादयन् । अपाम्[8] । गन्ता[9] । महतीः[10] । कान्तीः[11] । अन्यूनाः[12] । परितः । करोति ।

व॒व्राजा॑ सी॒मन॑दती॒रद॑ब्धा दि॒वो य॒ह्वीरव॑साना॒ अन॑ग्नाः ।
सना॒ अत्र॑ यु॒वत॑यः॒ सयो॑नी॒रेकं॒ गर्भं॑ दधिरे स॒प्त वाणीः॑ ॥ ६ ॥

वव्राजा । 'सीमिति परिग्रहार्थीयः'[13] । शब्दमकुर्वतीः[14] । अहिंसिताः[15] । दिवः[16] । सप्त नदीः[17] । अग्निर्गर्भो[18] भूत्वा वव्राजाभिजगाम[19] । सर्वतः परिगृह्य वस्त्रमनाच्छादयन्तीरपि[20] । जलाच्छादनादनग्नाः[21] । पुरातनाः[22] । अन्तरिक्षे । सप्त नद्यो गच्छन्त्यः[23] । समानयोनयः[24] । एकमग्न्याख्यम्[25] । गर्भम्[26] । दधिरे[27] । सप्त । नद्यः ।

---

१. अग्निः Sy.
२. तेजोभिः Sy.
३. आतन्वन् व्याप्नुवन् Sy.
४. कर्मणां कर्तारं यजमानम् Sy.
५. शोषकैस्तेजोभिः Sy.
६. कान्तप्रज्ञैः स्तोतव्यैर्वा Sy.
७. शोचिः दीप्तिं वस्त्रस्थानीयम् Sy.
८. अपस्यतां कर्मवताम् Sy.
९. आयुरन्नम् Sy.
१०. प्रभूताः Sy.
११. सम्पदश्च Sy.
१२. सम्पूर्णाः Sy.
१३. ०हार्थो यः M. ०हार्त्यो यः P. N. 1. 7. The quotation of N. should immediately follow सर्वतः परिगृह्य ।
१४. ०र्ब्द कु० P. अभक्षयन्तीः Sy.
१५. ०सि P.
१६. अन्तरिक्षस्य Sy.
१७. अपत्यभूताः Sy.
१८. ०ग्नि भो P.
१९. मातृभूता अपोऽग्निः व्रजति । अग्निरपां शोषकः तं चापः शमयन्ति तदुभयमिह नास्तीत्युक्तं भवति Sy.
२०. वस्त्रमनाच्छादयन्त्यः । वस्त्रस्थानीयस्य जलस्य विद्यमानत्वात् Sy.
२१. ०ना निगद० M.
०ना दनना P.
२२. पुरातेन P. किं च ता अपि सनातन्यः Sy.
२३. नित्यतरुण्यः नित्यवृद्धा इत्यर्थः Sy.
२४. ०न येन M. and P. समानमन्तरिक्षं स्थानं यासां ताः Sy.
२५. एकमग्निम् Sy.
२६. गर्भत्वम् Sy.
२७. दधते Sy.

स्तीर्णा अस्य संहतो विश्वरूपा घृतस्य योनौ स्रवथे मधूनाम् ।
अस्थुरत्र धेनवः पिन्वमाना मही दस्मस्य मातरा समीची ॥ ७ ॥

स्तीर्णाः । इतस्ततो विस्तीर्णाः[1] । एनं जनयितुं सङ्गता[2] नद्यः । उदकस्य । यौनावन्तरिक्षे[3] । मधूनामुदकानाम् । स्रवणे[4] । अस्मिन्[5] । उदकं पिन्वमानाः[6] । नद्यः[7] । तिष्ठन्ति । तत्र जातस्याग्नेर्दर्शनीयस्य । महती[8] । द्यावापृथिवी[9] च । समीची[10] भवतः ।[11]

बभ्राणः सूनो सहसो व्यद्यौद्दधानः शुक्रा रभसा वपूंषि ।
श्चोतन्ति धारा मधुनो घृतस्य वृषा यत्र वावृधे काव्येन ॥ ८ ॥

बभ्राणः । उदकैर्घार्यमाणः[12] । हे सहसः सूनो[13] ! वियोतते[14] भवान् । अपामुपस्थे दधानः[15] । शुक्राणि[16] । वेगयुक्तानि[17] । अङ्गानि[18] । तत्र[19] मधुसदृशस्य[20] । उदकस्य । धाराः[21] । श्चोतन्ति[22] । वर्षिता[23] । यत्र[24] । वर्धते[25] । कर्मणा[26] ।

---

१. सर्वत्र प्रसृताः Sy.
२. संहतः पुञ्जीभूताः । हन्तेः क्विप् Sy.
३. स्थानेऽन्तरिक्षे Sy.
४. स्रवणे सति Sy.
५. अत्राग्नौ Sy.
६. पिबमानाः M. and P. पूर्यमाणाः Sy.
७. आपः धेनवः सर्वेषां प्रीणयित्र्योऽभवन् Sy.
८. महत्यौ द्यावापृथिव्यौ Sy.
९. It seems to be the explanation of मातरा ॥ मातरौ भवतः Sy.
१०. समञ्चन्त्यौ शोभमाने Sy.
११. VM. ignores अस्य and विश्वरूपाः ॥ अस्याग्ने रश्मयः । विश्वरूपा नानारूपाः Sy.
१२. धारय० M. and P. सर्वैर्धार्यमाणस्त्वम् Sy.
१३. हे सहसस्पुत्र ! Sy.
१४. वियोतसे Sy.
१५. धारयंस्त्वम् Sy.
१६. शुक्रेति M. भास्वराणि Sy.
१७. वेदयु० P. वेगवन्ति Sy.
१८. ०ङ्गान्यङ्गानि M. and P. अर्चींषि Sy.
१९. तदानीम् Sy.
२०. अत्यन्तं मधुरस्य Sy.
२१. धारये P.
२२. स्रवन्ते यदा यजमानस्तोत्रेणाग्निस्तुष्टो भवति तदानीं वृष्टिर्भवतीत्यर्थः Sy. According to DP. 1.987. √स्रु is in the *parasmaipada*, but Sy. has used it in the *ātmanepada*.
२३. ०तार D. वृषाग्निः Sy.
२४. यत्र यस्मिन् यजमाने Sy.
२५. P. reads यत्र after वर्धते ॥ वृद्धिं प्राप्नोति Sy.
२६. ०र्मणाम् D., M. काव्येन स्तोत्रेण Sy.

पितुश्चिदूधर्जनुषा विवेद व्यस्य धारा असृजद्वि धेनाः ।
गुहा चरन्तं सखिभिः शिवेभिर्दिवो यह्वीभिर्न गुहा बभूव ॥ ९ ॥

पितुश्चित्[1] । दिवः[2] । ऊधः[3] । जायमानः[4] । एव[5] । जानाति । ज्ञात्वा[6] चास्य[7] । धारा[8] उदकानि । पृथिवीं प्रति विसृजति[9] । प्रीणयित्रीः[10]रोषधीश्चापां मध्ये । गुहायाम् । चरन्तम्[11] । सखिभिः[12]रन्यैरग्निभिः । कल्याणैः[13] । दिवोऽपि[14] । महद्भिः[15] । सा गुहा[16] । न । सम्बभूव[17] ततोऽप्यमपामुपस्थानान्निश्चरति[18] तत्रासम्भूतः[19] ।[20]

पितुश्च गर्भं जनितुश्च बभ्रे पूर्वीरेको अधयत्पीप्यानाः ।
वृष्णे सपत्नी शुचये सबन्धू उभे अस्मै मनुष्ये३ नि पाहि ॥ १० ॥

पितुश्च । पितुर्दिवः[2] । जनयितुः[21] । च, अस्य लोकस्य[21] । उभयोर्गर्भम्[22] । अग्निर्बिभर्ति[23] दिवो[24] वो[25] बिभर्ति, पृथिव्या ओषधीः । तथा पूर्वीः[26]रपः[27] । एक एव[28] । धयति[29] । अग्निमाप्यायन्तीः[30] ।

---

१. तुश्चि M. ०तुश्च P.
२. पितुः अन्तरिक्षस्य Sy.
३. ऊधःस्थानीयं जलप्रदेशम् Sy.
४. ०माना P.
अयमग्निः स्वयमेव Sy.
५. एवं P.
६. ज्ञा P.
७. किञ्चायमग्निः अस्य ऊधसः सम्बन्धिन्यः Sy.
८. धारया P. पयोधाराः Sy.
९. व्यसृजत् Sy.
१०. माध्यमिका वाचश्च विसृजति Sy.
११. वर्तमानमेनमग्निम् Sy.
१२. आत्मनः सखिभूतैर्वायुभिः Sy.
१३. शिवकृरैः Sy.
१४. अन्तरिक्षस्य Sy.
१५. हृभिः P. अपत्यभूताभिरद्भिश्च सह Sy.
१६. समा P. गुहायां स्थितः कोऽपि Sy.
१७. सम्बन्धभूप P. सम्बभूव प्राप्तुं समर्थोऽभवत् Sy.
१८. ०स्निरश्चति P.
१९. P. adds विश्वः after ०सम्भूतः ।
२०. VM. explains वि once only.
२१. सर्वस्य लोकस्य जनयितुर्ब्रह्मणश्च Sy.
२२. भम् P. वृष्टिद्वारा गर्भभूतं लोकमोषध्यादिकम् Sy.
२३. ०ग्नि वि० P.
२४. विवि P.
२५. पो पो P. अपो is suggested for वो, so the reading should be दिवोऽपो बिभर्ति ।
२६. बह्वीः Sy.
२७. ०रप P.
२८. अग्निः Sy.
२९. अयमग्निः...भक्षयति Sy.
३०. ०यन्तिः P. प्यायमाना वृद्धिं प्राप्ता ओषधीः Sy.

अथ प्रत्यक्षः[1], हविषो वर्पित्रे । समानपतिके[2] । शुचये[3] । समानबन्धने[4] । द्यावापृथिव्यावुभे[5] । अस्मै[6] । मनुष्याय[7] । नितराम् । रक्ष[8][9] ।

उरौ महाँ अनिबाधे ववर्धापो अग्निं यशसः सं हि पूर्वीः ।
ऋतस्य योनावशयद्दमूना जामीनामग्निरपसि स्वसॄणाम् ॥ ११ ॥

उरौ महान् । विस्तीर्णे[10] । महान्[11] । बाधारहिते[12] । ववर्ध[13] । अपामवकाश[14] आपः[15] । एवमग्निम् । यशस्वत्यः[16] । पूर्वम्[17] । सं, हि[18], दधिर[19] इति क्रिया । ततश्च ऋतस्य । योनावुदकस्य[20][21] । अशयत्[22] । दममनाः[23] । सोऽयम्[24] । बन्धूनाम्[25] । स्वयं सरस्वतीनाम्[26] । वेगेऽशयदिति[27][28] ।

---

१. क्षिप्तः P.

२. समान एकः सूर्यः पतिर्ययोस्ते Sy.

३. अग्नये Sy.

४. सबन्धू भवतः । अनयोरग्निरेव बन्धुरित्यर्थः Sy.  ५. ०व्या पूर्वे P.

६. अस्मैर P. अग्नये Sy.

७. According to the testimony of the *Padapāṭha* मनुष्ये is a dual, qualifying सबन्धू etc ॥ मनुष्येभ्यो हिते Sy.

८. रक्षः M. and P. हे अग्ने ! त्वं ते द्यावापृथिवी नितरां रक्ष Sy.

९. VM. explains च once only.

१०. विस्तीर्णे P. विस्तीर्णेऽन्तरिक्षे Sy.

११. अयमग्निः Sy.

१२. असम्बाधे Sy.

१३. VM. repeats the Vedic forms ववर्ध and अशयत् in his commentary. ववृधे and अशेत would be the classical forms. वर्धते Sy.

१४. ०माका० M.

१५. Omitted in P.

१६. ०स्वत्या M. यशोऽन्नं तद्वत्यः Sy.

१७. पूर्वीर्बह्व्यः Sy.

१८. अस्य वर्धने कारणमाह हि यस्मात्कारणात् Sy.

१९. संवर्धयन्ति Sy.

२०. स्थानेऽन्तरिक्षे स्थितः Sy.

२१. उदकस्य seems to be the explanation of ऋतस्य.

२२. आशये P. शेते Sy.

२३. दान्तमनाः सन् Sy.

२४. This refers to अग्निः ॥ एवमद्भिर्वृद्धिं प्राप्तोऽग्निः Sy.

२५. भगिनीस्थानीयानाम् Sy.

२६. रसन्तिना P. सरन्तीनाम् is suggested for सरस्वतीनाम् ॥ Cf. VM.'s commentary on RV. 3. 1. 3. स्वतः सरन्तीनाम् Sy.

२७. हेतुभूते पयसि Sy.

२८. वे शयत् P.

अक्रो न बभ्रिः समिथे महीनां दिदृक्षेयः सूनवे भाऋजीकः ।
उदुस्रिया जनिता यो जजानापां गर्भो नृतमो यह्वो अग्निः ॥ १२ ॥

अक्रो[1] न बभ्रिः[2]। 'अक्र आक्रमणात्' इति यास्कः[3], नक्रः[4]। इव[5] वीर्यवान्। भर्ता[6]। सङ्ग्रामे[7]। महतीनां[8] सेनानाम्[9]। दर्शनीयः[10]। हविषां प्रेरयित्रे[11]। 'भाऋजीकः प्रसिद्धभाः[12]' इति यास्कः[13]। यः[14]। पशूनां जनयिता[15]। पशून्[16]। जनयति[17]। सोऽयमपाम्[18]। गर्भः[19]। नेतृतमः[20]।

---

१. अक्रो M. विश्वामित्रस्यार्षम् SKN., Dur.

२. बभ्रीः P.

३. N. VI. 17.

४. अक्रः परेषामाक्रमिता परैरनाक्रमणीयो वा Sy. प्राकारः परचक्रं धारयति तद्वत् SKN. अक्र इव प्राकार इव एवमत्र शब्दसारूप्यादर्थाविरोधाच्च अक्रः प्राकार इत्युपपद्यते। असौ ह्याक्रम्यते जनैः Dur.

५. नेति पादपूरणः Sy.

६. बभ्रिः—भृञस्ताच्छीलिके किप्रत्यय एतद्रूपम्। धारयितेत्यर्थः SKN., Dur.

७. समिथे is a synonym of सङ्ग्रामे Ngh. 2. 17.

८. महीनां M.

९. सेनां M. स्वसेनानाम् Sy. शत्रुसेनानाम् SKN., Dur.

१०. सर्वैर्दर्शनीयः Sy. यो दिदृक्षितव्यं च SKN. दृश्यते यः Dur.

११. हविषां प्रदात्रे यजमानाय तदर्थम्। सूनवे—'षू प्रेरणे' इत्यस्माद्धातोरौणादिको नुप्रत्ययः Sy. केन ? सूनवे, तृतीयायाः स्थान एषा चतुर्थी च। सूनुना पुत्रभूतेन यजमानेन SKN. सोमाभिषवकर्त्रे यजमानाय नित्यकालमेव Dur.

१२. प्रसिद्धभागा ऋजिनः M. प्रवृद्धभाग ऋजीकः P. स्वदीप्त्या प्रकाशमानः सोऽग्निः Sy. निरुक्तमेतत्प्रसिद्धम् SKN. प्रसिद्धभाः प्रसिद्धदीप्तिर्नित्यो ज्वलित इत्यर्थः Dur.

१३. N. VI. 4.

१४. एवंलक्षणो योऽग्निः Dur.

१५. सर्वस्य लोकस्य जनयिता Sy. जनयिता चित्रादिना कर्मणा वा, एवं जनयितारः SKN.

१६. अपः Sy. गोनामेदं लुप्तोपमं चेह द्रष्टव्यम्। गाव इव गोसदृशीस्त्राविणीर्भोगानामत्यन्तोपजीव्याः। काः ? सामर्थ्यादाहुतीः SKN. उस्रिया आहुतीः Dur.

१७. उदजनयत् Sy. आहुतीः स्वात्मनि प्रक्षिप्ता देवान् प्रति प्रेरणेनोर्ध्वं जनयति गमयतीत्यर्थः। गवामूर्ध्वंजननं पोषवृद्धिरुच्यते SKN. आत्मनि प्रक्षिप्ताः सतीर्देवतातृप्तिसामर्थ्येन रूपेणोर्ध्वा यो जनयति। अथवा गाव एव वोस्रियाः स्युः। ता अपि ह्यसौ पशुकामकर्मण्यङ्गभावं गच्छञ्जनयति Dur.

१८. उदकानाम् Sy. अपां च वैद्युतात्मनाम् SKN.

१९. गर्भरूपः Sy. गर्भभूतः SKN.

२०. नेत्रन॰ M. अतिशयेन मनुष्याणां रक्षिता Sy. एतदपि लुप्तोपमम्। प्रकृष्टमनुष्यवत् तत्सदृश इव चेत्यर्थः SKN. मनुष्यतमः Dur.

महान्[1] । अग्निः[2] ।

अपां गर्भं दर्शतमोषधीनां वनां जजान सुभगा विरूपम् ।
देवासश्चिन्मनसा सं हि जग्मुः पनिष्ठं जातं तवसं दुवस्यन् ॥ १३ ॥

अपां गर्भम्[3] । अपाम् । गर्भम्[4] । दर्शयितारम्[5] । ओषधीनाम् । भजनीया[6] माता । जनयांमास[7] । सुभगा[8] । विविधरूपं[9] तज्जातम् । देवाः[10] । च[11] । मनसा[12] । सञ्जग्मुः[13] । ज्ञात्वा च देवानां[14] स्तोतृतमम्[15] । जातम्[16] । प्रवृद्धम्[17] । पर्यचरन्[18] इति[19] ।

बृहन्त इद्भानवो भाऋजीकमग्निं सचन्त विद्युतो न शुक्राः ।
गुहेव वृद्धं सदसि स्वे अन्तरपार ऊर्वे अमृतं दुहानाः ॥ १४ ॥

बृहन्तः । महान्तः । एव । भानवः[20] । ऋजुदीप्तिम्[21] । अग्निम् । सेवन्ते[22] । विद्युतः । इव । दीप्यमानाः शुक्रवर्णा वा । पर्वतगुहायामिव[23] । अपामन्तः[24] । स्वस्मिन्[25] । स्थाने[26] । प्रवृद्धमग्निम्[27] । पारवर्जिते[28] । ऊर्वाख्ये तस्मिन्[29] । उदकम् । दुहाना[30] भानवः ।

---

१. यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । स यह्वो महन्नामेदम्, महानैश्वर्यात् प्रभावात् SKN.
२. स इदं नामास्माकं करोत्विति Dur. N. 6. 17., SKN. II. 451.
३. VM. ignores उत् ।
४. गर्भः P. अग्निम् Sy.
५. दर्शनीयम् Sy.
६. सर्वैर्वननीयाऽरणिः Sy.
७. अजनयत् Sy.
८. सुभाग्या Sy.
९. ता जा० P. नानाविधरूपम् Sy.
१०. सर्वे देवाः Sy.
११. अपि Sy.
१२. स्तुत्या Sy.
१३. ०जग्मु P. उपागच्छन् Sy.
१४. ०वाना P., M.
१५. तमम् M. स्तुत्यम् Sy.
१६. जातमात्रं तमग्निम् Sy.
१७. वृद्धम् Sy.
१८. त एव पर्यचरन् Sy.
१९. VM. ignores हि ॥ हीति पूरणः Sy.
२०. भाना ऋभवः P. सूर्याः Sy.
२१. प्रभया दीप्यमानम् Sy.
२२. आश्रयन्ति Sy.
२३. ०त इवाया गु० P. गुहायामिव Sy.
२४. ०मन्त P. मध्ये Sy.
२५. स्वकीये Sy.
२६. सदनेऽन्तरिक्षे Sy.
२७. अगाधे Sy.
२८. उर्वा० P. समुद्रे Sy.
२९. ०र्वाह्ये कस्मिन् M.
३०. क्षरन्तः Sy.

ईळे॒ च त्वा॒ यज॑मानो ह॒विर्भि॒रीळे॑ सखि॒त्वं सु॑म॒तिं निका॑मः ।
दे॒वैरवो॑ मिमीहि॒ सं ज॑रि॒त्रे रक्षा॑ च नो॒ दम्ये॑भि॒रनी॑कैः ॥ १५ ॥

ईळे च त्वा । याचे[1] । च[2] । त्वाम् । हविर्भिः[3] । यजमानः[4] । तया त्वया सख्यम्[5] । याचे[6] । शोभनमतिं[7] त्वाम् । निकामयमानः[8] । स्तोत्रे[9] । देवैः सह[10] । रक्षणम्[11] । कुरु । रक्ष । च[12] । अस्मान्[13] । दमनकुशलैः[14] । तव तेजोभिः[15] ।

उ॒प॒क्षे॒तार॒स्तव॑ सुप्रणी॒तेऽग्ने॒ विश्वा॑नि॒ धन्या॒ दधा॑नाः ।
सु॒रेत॑सा॒ श्रव॑सा॒ तुञ्ज॑माना अ॒भि ष्या॑म पृतना॒यूँरदे॑वान् ॥ १६ ॥

उपक्षेतारः । अग्ने ! शोभनप्रणयन ! तव । उपनिवासं कुर्वन्तः[16] । विश्वानि[17] । धन-[18]समूहनानि[19] । धारयन्तः[20] । शोभनकर्मणा[21] । अन्नेन[22] । याचमानेभ्यो दानं कुर्वन्तः[23] । अभिभवेम । पृतनामिच्छतः[24] । अदातॄन्[25] ।

---

१. M. omits याचे.
२. पश्वादिलक्षणं धनं च Sy.
३. साधनैः Sy.
४. अहम् Sy.
५. सख्य M. त्वया सह सखित्वम् Sy.
६. योचे M.
७. शोभनां मतिं धर्मविषयां बुद्धिम् Sy.
८. ०माना P.
नितरां कामयमानः Sy.
९. स्तोत्रं कुर्वते मह्यमस्तवर्थम् Sy.
१०. M. adds रक्ष after सह ।
११. अवः पश्वादिविषयां रक्षाम् Sy.
१२. P. omits it.
१३. रास्मा० P.
१४. दम्येभिर्दमनीयैर्नियन्तव्यैः । प्रयत्ननियन्तव्यतयोच्छृङ्खलतोक्ता Sy.
१५. VM. ignores सम्.
१६. ०र्वतः P. उपगन्तारः । अत्र क्षितिर्गत्यर्थे वर्तते Sy.
१७. सर्वाणि Sy.
१८. यन० M.
१९. समूहान्नि M. समूहानि P. धन्यानि पश्वादिधनप्राप्तिहेतुभूतानि कर्माणि Sy.
२०. धाय० M. विदधानाः कुर्वन्तः Sy.
२१. शोभनवीर्येण Sy.
२२. अनेन P.
त्वत्कृतेनान्नेन Sy.
२३. हवींषि प्रयच्छन्तो वयम् Sy.
२४. शरीराद्युपद्रवकारिणः शत्रूंश्च Sy.
२५. अदेवान् देवेभ्योऽन्यान् । नञिवयुक्तन्यायेन राक्षसा एव गृह्यन्ते । यज्ञविघ्नकारिणस्तान्, यद्वा देवानपूजयतः शत्रूनिति वा योज्यम् Sy.

आ दे॒वाना॑मभवः के॒तुर॑ग्ने म॒न्द्रो विश्वा॑नि॒ काव्या॑नि वि॒द्वान् ।
प्रति॒ मर्ताँ॑ अवासयो॒ दमू॑ना॒ अनु॑ दे॒वान्र॑थि॒रो या॑सि॒ साध॑न् ॥ १७ ॥

आ देवानाम् । देवानाम् । निमन्त्रयिता[1] त्वम् । मनुष्येष्वाभवसि[2] । मादयिता[3] । सर्वाणि । स्तोत्राणि[4] । जानन्[5] । तथा मर्त्यांश्च[6] । स्वे स्वे स्थाने[7] प्रतिवासयसि । दममनाः[8] । देवांश्च । अनुगच्छसि[9] । रथवान्[10] । हविर्भिः साधयन्निति[11] ।[12]

नि दु॑रो॒णे अ॒मृतो॒ मर्त्या॑नां॒ राजा॑ ससाद वि॒दथा॑नि॒ साध॑न् ।
घृ॒तप्र॑तीक उर्वि॒या व्य॑द्यौद॒ग्निर्विश्वा॑नि॒ काव्या॑नि वि॒द्वान् ॥ १८ ॥

नि दुरोणे । निषसाद[13] । गृहे । देवः[14] सः । मनुष्याणाम्[15] । राजा[16] । यज्ञान् । साधयन् । आज्येन[17] सन्धुक्षितावयवः । विस्तीर्णः । विद्योतते[18] । अग्निः । विश्वानि । कविकर्माणि[19] । जानन् ।

आ नो॑ गहि स॒ख्येभि॑ः शि॒वेभि॑र्म॒हान्म॒हीभि॑रू॒तिभि॑ः सर॒ण्यन् ।
अ॒स्मे र॒यिं ब॑हु॒लं संत॑रुत्रं सु॒वाचं॑ भा॒गं य॒शसं॑ कृधी नः ॥ १९ ॥

आ नो[20] गहि[21] । अस्मान्[22] । आगच्छ । कल्याणैः[23] । सख्यैः[24] । महद्भिः[25] । रक्षणैः[26] सह ।

---

१. यज्ञेषु प्रज्ञापकस्त्वम् Sy.
२. आ समन्ताद्भवसि । सर्वव्यापको भवसीत्यर्थः Sy.
३. स्तुत्यः Sy.
४. यजमानादिभिः कृतानि स्तोत्राणि Sy.
५. जानंस्त्वम् Sy.
६. मद्य M. मर्त्यान् स्तोतॄन् । स्वाभिलषितवस्तुसम्पादनेन प्रीतान् विधाय Sy.
७. गृहेषु Sy.
८. मद॰ P.
९. अभिग॰ P.
१०. रथी Sy.
११. देवानां हितानि कर्माणि साधयन् Sy.
१२. VM. ignores अग्ने.
१३. निषीदति Sy.
१४. नित्यः Sy.
१५. अग्निहोत्रिणाम् Sy.
१६. राजमानो योऽग्निः Sy.
१७. घृतेन Sy.
१८. द्योत॰ P.
१९. कमा॰ P. काव्यानि Sy.
२०. ने P.
२१. मंहि P.
२२. अस्मान्प्रति Sy.
२३. शिवङ्करैः Sy.
२४. सखिकर्मभिः Sy.
२५. महतभिः M. महतीभिः Sy.
२६. रक्षाभिश्च Sy.

महान्[1] । अभिसरणमिच्छन्[2] । अस्माकम्[3] । धनम् । महत्[4] । सन्तारयितृ[5] । शोभनवाचम् । भजनीयम्[6] । यशस्विनं[7] पुत्रं च । कुरु[8] । पुनः 'नः' इति पूरणमिति[9] ।

एता ते अग्ने जनिमा सनानि प्र पूर्व्याय नूतनानि वोचम् ।
महान्ति वृष्णे सवना कृतेमा जन्मंजन्मन् निहितो जातवेदाः ॥ २० ॥

एता ते । अग्ने ! तुभ्यम्[10] । पुरातनाय । सनातनानि[11] । नवतराणि[12] च[13] । एतानि[14] । जन्मानि[15] । प्रावोचम् । तथा महान्ति । सवनानि । वृष्णे[16] । कृतानि । इमानि । सोऽयमग्नि-रस्माभिः[17] । जन्मनि[18] । आहित[19] इति । अस्योत्तरा[20] भूयसे निर्वचनाय ।

जन्मंजन्मन् निहितो जातवेदा विश्वामित्रेभिरिध्यते अजस्रः ।
तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ॥ २१ ॥

जन्मञ्जन्मन्निति[21] । सोऽयम्[22] । सर्वेषु जन्मसु[23] । विश्वामित्रैः[24] । आधाय[25] । समिध्यते[26] ।

---

१. महांस्त्वम् Sy.
२. सर्वत्र सरणं गमनमिच्छन् Sy.
३. P. adds महत् after अस्माकम् ॥ अस्मभ्यम् Sy.
४. Omitted in P. विस्तीर्णम् Sy.
५. संधारयित्र P. सर्वेषामुपद्रवाणां सन्तारकम् Sy.
६. सर्वैर्भजनीयम् Sy.
७. यशसा कीर्त्या संयुक्तम् Sy.
८. देहि Sy.
९. पूरण इति P. अस्मभ्यमिति पुनर्वचनमादरातिशयार्थम् Sy.
१०. Omitted in P.
११. सनात० P. महद्भिः सम्भजनीयानि वा Sy.
१२. तवतरणानि P. अन्येष्वविद्यमानान्यतनानि वा Sy.
१३. च् P.
१४. एतनानि P.
१५. जन्मानि कर्माणि स्तोत्राणि वा Sy.
१६. सम्पदां वर्षित्रेऽग्नये Sy.
१७. ०मस्मा० P. सोऽयमग्निः seems to be the explanation of जातवेदाः ॥ जातवेदा जातप्रज्ञो जातधनो वा Sy.
१८. जन्मन्जन्मन् । जायन्त इति जन्मानः । तेषु सर्वेषु मनुष्येषु Sy.
१९. निहितो यागार्थम् Sy.
२०. अस्योक्ता M.
२१. जन्मजन्मानीति M. जं जन्मन्निति P.
२२. सोमं P.
२३. जन्मसुर P. सर्वेषु मनुष्येषु Sy.
२४. विश्वामित्रैः । पूजायां बहुवचनम् । महर्षिणा विश्वामित्रेण यो जातवेदाः Sy.
२५. ०धारय P. This seems to be the explanation of निहितः ।
२६. ०ध्यसे P. दीप्यते Sy.

प्रनवतरम् । तस्य । यज्ञियस्य । वयम् । सुमतौ । स्याम । अपि च । भजनीये । सौमनसे ।

इमं यज्ञं सहसावन् त्वं नो देवत्रा धेहि सुक्रतो रराणः ।
प्र यंसि होतर्बृहतीरिषो नोऽग्ने महि द्रविणमा यजस्व ॥ २२ ॥

इमं यज्ञम् । बलवन् ! त्वम् । अस्माकम् । इमम् । यज्ञम् । देवेषु । निधेहि । रममाणः । प्रयच्छ । होतः ! महान्ति । अन्नानि । अस्मभ्यम् । तथा महच्च । धनम् । आयजस्व ।

---

१. नव० P. अजस्रमनवरतम् Sy.

२. तस्येन्द्रस्य Mah. तस्येन्द्रस्य सुत्राम्णः U. इन्द्रस्य BB.

३. यज्ञार्हस्याग्नेः Sy. कीदृशस्येन्द्रस्य ? यज्ञाय हितो यज्ञियस्तस्य यज्ञसम्पादिनः Mah., U. यज्ञार्हस्य यज्ञसम्पादनार्हस्य 'यज्ञर्त्विग्भ्यां घखञौ' (Pa. 5. 1. 71.) BB.

४. सुमतौ वर्तमानाः Sy. शोभनबुद्धौ Mah. कल्याणमतौ U. कल्याण्यां मतौ । शोभनायां वा बुद्धौ । तत्र विषयत्वेन वयं स्याम BB.

५. भवेम । प्रार्थनायां लिङ् Sy. भवेम Mah.

६. अपिच M. किञ्च U.

७. भद्रे कल्याणरूपे Mah. भन्दनीये U. भजनीये कल्याणे BB.

८. सुमनोभावेऽनुग्रहबुद्धौ Sy. सुमनसो भावे शोभनमनस्कत्वेऽपि स्याम । इन्द्रोऽस्मासु सुमतिं मनश्च भद्रं करोत्वित्यर्थः Mah. कल्याणमनसि U. सौमनस्ये च स्याम । एतदुक्तं भवति यागसम्पादिनस्तस्य सुमतौ स्याम, यथा सर्वकालं यागकारिणो भवाम । अपि च तस्य भद्रे सौमनसे सौमनस्ये च फलं स्याम । यथा सर्वकालाभिमतभाजः सर्वकालं मोदेमहीति । छान्दसोऽण्प्रत्ययः BB. The second hemistich of this stanza=YV. 20.52.=TS. 1.7.13.5.

९. तम् P.

१०. अस्मदीयम् Sy.

११. सर्वदा रममाणः शब्दं कुर्वाणो वा Sy.

१२. हे देवानामाह्वातः ! Sy.

१३. महतीः Sy.

१४. पश्वादिलक्षणं धनम् Sy.

१५. यजस्व is omitted by M. and P. प्रयच्छ । अत्र यजिर्दानकर्मा Sy.

१६. VM. ignores सुक्रतो and अग्ने ॥ शोभनकर्मन् ! हे अग्ने ! Sy.

इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ २३ ॥

इळामग्ने । ब्रह्मकर्माणम् । गोः । प्रदात्रीम् । इडां देवीम् । बहुतममन्नञ्च । अग्ने ! साधय । यजमानाय । भवतु । अस्माकम् । अग्ने ! पुत्रः । पुत्राणां जनयिता । अग्ने ! सा । तव ।

---

१. इयं सर्वेषां पशूनां पशुपुरोडाशस्य स्विष्टकृतः पुरोऽनुवाक्या । सूत्र्यते हि— 'इळामग्ने पुरुदंसं सनिं गोर्होता यक्षदग्निं पुरोळाशस्य स्वदस्व हव्या समिधो विदीहीति पुरोळाशस्विष्टकृतः' (ASS. 3. 5.) इति Sy.

२. The *pratīka* is omitted by M. and P.

३. ०र्माणाम् P. बहुकर्माणम् Sy. दंस इति कर्मनामसु (Ngh. 2. 1.) पठितम् । पुरूणि बहूनि दंसांसि कर्माणि यया सा पुरुदंसास्तां पुरुदंससमिति प्राप्ते टिलोपश्छान्दसः । बहुकर्मसाधनभूतमन्नं देहीत्यर्थः Mah. बहुकर्मसाधनभूतम् U.

४. गवाम् Sy. गोः सम्बन्धि Mah. गोः सम्बन्धिनीं च U.

५. दानं पयोदधिघृतादिकं सर्वदा देहीत्यर्थः Mah. दानं पयोदधिघृतादिकम् U.

६. मृडाम् M. भूमिम् Sy. अन्नम् Mah. इडामन्नम् । यत्तु 'पशवो वाऽइडाः' (SB. 7. 1. 1. 27.p. 572.) इति तद् बलीवर्दन्यायात इत्यनेन हेतुना U.

७. चिरकालं यथा भवति तथा Sy. अत्यन्तमविच्छेदेन वर्तमानमनपायिनम् Mah. शाश्वतिकतमं शाश्वतिककर्मं, अनपायि U.

८. शोध० M. सम्पादय Mah. प्रसाधय । एतदुक्तं भवति अन्नं सोपसेचनं शाश्वतिकतमं यजमानाय देहि U.

९. स्तुवते मह्यम् Sy. ह्वयत्याह्वयति देवान् जुहोति वा हवमानस्तस्मै Mah.

१०. अस्तु Mah. भवेत् U.

११. अस्माकं यजमानानाम् Mah.

१२. अग्नेः M., D. हे अग्ने ! Sy.

१३. तनयः सन्तानस्य विस्तारयिता Sy. कीदृशः सूनुः ? तनयः औरसः । पुत्रस्य सूनुशब्देनोक्तत्वाद्दत्तपुत्रादिव्यावृत्त्यर्थं तनयशब्दः । यद्वा तनोत्यग्निहोत्रादिकर्माणीति तनयः Mah. भवेच्चास्माकं पुत्र औरसः U.

१४. पुत्रपौत्रादिरूपेण स्वयं विजायत इति विजावा स्यात् Sy. विविधं जायते पुत्रादिद्वारेति विजावा प्रजावान् Mah. विजावा प्रजातिमान् । यद्वा विजयशीलः पितरं वा यो जयति वीर्येण U.

१५. अन्नगोपुत्रदानविषया Mah. यया सुमत्या त्वमेतत् करोषि सा U.

१६. त्वदीया Sy.

प्रसिद्धा सुमतिः[1] । अस्मासु[2] । अस्त्विति[3] ।

III. 2.

वैश्वानराय धिषणामृतावृधे घृतं न पूतमग्नये जनामसि ।
द्विता होतारं मनुषश्च वाघतो धिया रथं न कुलिशः समृण्वति ॥ १ ॥

वैश्वानराय[4] । वैश्वानराय[5] । स्तुतिम्[6] । यज्ञस्य[7] वर्धयित्रे । घृतम्[8] । इव । पूतम्[9] । अग्नये । जनयामः[10] । तमिमम्[11] । मनुष्या यजमानाः[12] । ऋत्विजः । च सहभूताः[13] । कर्मणा ।

---

१. अनुग्रहबुद्धिः Sy.
शोभना बुद्धिः Mah.

२. भवतु Sy.
अनुग्रहेण भवतु । यजमानेभ्यस्तयाऽन्नादि देयमिति भावः । व्यत्ययेन शपो लुक् Mah.

३. If पुत्राणां जनयिता is taken to be VM.'s explanation of विजावा then he ignores तनयः ॥ For the explanation of तनयः, see footnote no. 13. on the previous page. The following is the commentary of the SB. on this stanza:—
अथ जघनेन परीत्य । उत्तरतो दक्षिणासीनोऽपरयोर्दक्षिणामुपस्पृशन्यातोडामग्ने पुरुदꣳसꣳ सनि गोरिति पशवो वाऽइडा पशूनामेवास्मा एतामाशिषमाशास्ते शश्वत्तमꣳ हवमानाय साधेति यजमानो वै हवमानः स्यान्नः सूनुस्तनयो विजावेति प्रजा वै सूनुरग्ने सा ते सुमतिर्भूत्वस्मे ऽइत्याशिषमाशास्ते ।
(SB. 7.1.1.27. p. 572.)
This stanza=YV. 12.51.

४. 'वैश्वानराय' इति पञ्चदशर्चं द्वितीयं सूक्तम् । तथा चानुक्रान्तम्—'वैश्वानराय पञ्चोना वैश्वानरीयं तु जागतं तु' (KSA. 16. 2. p. 15.) इति । विश्वामित्र ऋषिः । जगती छन्दः । वैश्वानरोऽग्निर्देवता । पृष्ठ्याभिप्लविकयोस्तृतीयेऽहन्याग्निमारुते 'वैश्वानराय धिषणाम्' इति वैश्वानरनिविद्धानीयं सूक्तम् । 'तृतीयस्य' इति खण्डे सूत्रितम्—'वैश्वानराय धिषणां धारावरा मरुतः' (ASS. 7.7.) इति Sy.

५. वैश्वानरः कस्मात् ? विश्वान्नरान्नयति । विश्व एनं नरा नयन्तीति वा । अपि वा विश्वानर एव स्यात् । प्रत्यृतः सर्वाणि भूतानि तस्य वैश्वानरः N. 7. 21.

६. स्तुतिः P.

७. ऋतस्योदकस्य यज्ञस्य वा वर्धयित्रे Sy.

८. मिमम् M.

९. तम् M.

१०. यजामानः M. जनयाम P. यथा घृतं प्रीतिं जनयति तथा प्रीतिं करोमीत्यर्थः Sy.

११. तमिमम् refers to होतारम् ॥ होतारं देवानामाह्वातारमग्निम् Sy.

१२. जनाः P.

१३. ०भूतां M.

द्विता[1] । क्षिपन्ति[2] गार्हपत्यमाहवनीयं[3] च । रथाक्षम्[4] । इव चक्र्योर्वास्यादिः[5] ।

स रोचयज्जनुषा रोदसी उभे स मात्रोरभवत्पुत्र ईड्यः ।
हव्यवाळग्निरजरश्चनोहितो दूळभो विशामतिथिर्विभावसुः ॥ २ ॥

स रोचयत् । सः[6] । रोचयति[7] । जन्मना । द्यावापृथिवी[8] । उभे अपि । सः । द्यावापृथिव्योः । भवति[9] । पुत्रः । स्तुत्यः । हविषां[10] वोढा । अग्निः[11] । जरारहितः । अन्नहितः[12] । दुर्दम्भः[13] । मनुष्याणाम् । अतिथिः[14] । दीप्ति[15]धनः[16] ।

क्रत्वा दक्षस्य तरुषो विधर्मणि देवासो अग्निं जनयन्त चित्तिभिः ।
रुरुचानं भानुना ज्योतिषा महामत्यं न वाजं सनिष्यन्नुप ब्रुवे ॥ ३ ॥

क्रत्वा दक्षस्य । कर्मणा । प्रज्ञानेन च[17] । दक्षस्य[18] । मनोस्तारकस्य[19] । विधारणार्थम्[20] । अग्निम् । अजनयन् । देवाः । दीप्यमानम्[21] । दीप्यमानेन[22] । तेजसा । महान्तम्[23] । अश्वम्[24] । इव । बलिनम्[25], सङ्ग्रामम् । भजिष्यन्[26] । उपस्तौमि[27] ।

---

१. विधा M. and P. द्विता goes with होतारम् ॥ द्विधा गार्हपत्याहवनीयरूपाभ्यां युक्तम् Sy.
२. संस्कुर्वन्ति Sy.
३. गार्हपत्यमाहवनीयञ्च refers to द्विता.
४. रथम् Sy.
५. ०र्वास्याविति M. ०र्वा न्याविति P.
६. अग्निः Sy.
७. अरोचयत् प्रकाशयति Sy.
८. द्यावापृथिव्यौ Sy.
९. अभवत् Sy.
१०. हव्यानाम् Sy.
११. अङ्गनादिगुणयुक्तः Sy.
१२. अभिहितः M. चनोऽन्नं हितं यजमाने निहितं येनासौ चनोहितः Sy.
१३. ०र्दहः P. हिंसितुमशक्यः Sy.
१४. अतिथिरिव पूज्यो भवति Sy.
१५. दीप्त० P.
१६. ०धनं M. सोऽयं प्रभाधनः Sy.
१७. प्रज्ञत्येनश्च P. ज्ञानैरुपलक्षिताः Sy.
१८. बलस्य Sy.
१९. व्यसनेभ्यस्तारकस्य Sy.
२०. ०णार्त्थम् P. विधारके यज्ञे Sy.
२१. रोचमानम् Sy.
२२. भासमानेन Sy.
२३. महान्तमग्निम् Sy.
२४. भारसहमश्वम् Sy.
२५. अन्नम् Sy.
२६. जभिष्यन् P. लिप्समानोऽहम् Sy.
२७. स्तौमि Sy.

आ मन्द्रस्य सनिष्यन्तो वरेण्यं वृणीमहे अह्रयं वाजमृग्मियम् ।
रातिं भृगूणामुशिजं कविक्रतुमग्निं राजन्तं दिव्येन शोचिषा ॥ ४ ॥

आ मन्द्रस्य । आवृणीमहे । मादयितुः । लब्धुमिच्छन्तः । वरणीयम् । अन्नमग्नेः । तमह्रयम् अलज्जमानम् । ऋग्गर्हम् । अग्निम् । भृगूणाम् । रातिम्, ते ह्येनमादधिरे । कामिनम् । कान्तप्रज्ञम् । दिव्येन । तेजसा । दीप्यमानमिति ।

अग्निं सुम्नाय दधिरे पुरो जना वाजश्रवसमिह वृक्तबर्हिषः ।
यतस्रुचः सुरुचं विश्वदेव्यं रुद्रं यज्ञानां साधदिष्टिमपसाम् ॥ ५ ॥

अग्निं सुम्नाय । अग्निम् । सुखार्थम् । आहवनीयं कुर्वन्ति । जनाः । बलिष्ठान्नम् । अस्मिल्लोके । स्तरणाय च्छन्नबर्हिषः । आत्तस्रुचः । सुरोचनम् । सर्वदेवहितम् । स्तोतारम् । यज्ञानाम् । तथा कर्मणां च ।

१. सम्भजामहे Sy.
२. स्तुत्यस्य वैश्वानरस्य सम्बन्धिनम् Sy.
३. लब्ध मि० M. लिप्समाना वयम् Sy.
४. अह्नय M.
५. अलज्जावहम् Sy.
६. प्रशस्यम् Sy.
७. ऋषीणाम् Sy.
८. जातिम् M. ज्ञातिम् P. अभिलषितार्थप्रदातारम् Sy.
९. ह्यन० M.
१०. कादिनम् P. अभिलष्यन्तम् Sy.
११. कान्तप्रज्ञम् is suggested for कान्तप्रज्ञम्.
१२. दिवि भवेन Sy.
१३. रोचिषा Sy.
१४. भ्राजमानम् Sy.
१५. अन्यदेवतानिवृत्त्यर्थोऽग्निशब्दः U.
१६. सुखार्थम् P. यज्ञाय Mah., U.
१७. VM. seems to explain पुरः and दधिरे together as आहवनीयं कुर्वन्ति ॥ आहवनीयरूपेण पुरोऽग्रतः पुरोभागे Mah. आहवनीयात्मना पुरोऽग्रतः U.
१८. स्तुवन्ति Sy. स्थापितवन्तः Mah., U.
१९. जानाः P. ऋत्विजः Sy. ऋत्विग्यजमानाः Mah. यजमानाः U.
२०. मनुष्येभ्यः प्रेरितान्नम् Sy.
२१. ०स्मि लो० M. इह यज्ञे Sy.
२२. च्छिन्न० M.
२३. ०र्वषः P. स्तीर्णबर्हिषः Sy.
२४. ०स्रुज्ञः M. प्राप्तस्रुचः Sy.
२५. प्रशस्तदीप्तिमन्तम् Sy.
२६. ०वह० M. विश्वेभ्यो देवेभ्यो हितम् Sy.
२७. दुःखानां द्रावकम् Sy.
२८. यजन्तीति यज्ञा यजमानास्तेषाम् Sy.
२९. कर्मवताम् Sy.

साधंदिष्टिम्[1], अभिलषितं येन साध्यते तमिति।[*]

**पावंकशोचे तव हि क्षयं परि होतर्यज्ञेषुं वृक्तबंर्हिषो नरः ।**
**अग्ने दुवं इच्छमानास आप्यमुपांसते द्रविणं धेहि तेभ्यंः ॥ ६ ॥**

पावकशोचे[2]। शोधकदीप्ते ! तव[3]। आवासम्[4]। परितः। होतः[5] ! यज्ञेषु। स्तीर्णबर्हिषः। मनुष्या[6]स्तिष्ठन्ति। अग्ने ! तव परिचरणम्। त्वया सख्यं[7] च। इच्छन्तः। त्वामुपासते[8] ये। तेभ्यः। धनम्। प्रयच्छ[9][10]।

**आ रोदंसी अपृणदा स्वंर्महज्जातं यदेंनमपसो अधारयन् ।**
**सो अंध्वराय परिं णीयते कविरत्यो न वाजंसातये चनोंहितः ॥ ७ ॥**

आ रोदसी। द्यावापृथिवी[11]। पूरयति[12]। महच्च[13]। अन्तरिक्षम्[14]। जातम्[15]। यत्[16]।

---

१. ०दिष्टम् M. साधितयज्ञम् Sy.* अग्निं सुम्नायं दधिरे पुरो जनाः RV. 3. 2. 5[a] is identical with RV. 10. 140. 6[b]. and has been explained in ŚB.'s commentary on the later stanza:— ऋतावानमिति। सत्यावानमित्येतन्महिषमित्यग्निर्वै महिषो विश्वदर्शतमिति विश्वदर्शतो ह्येषोऽग्निꣳ सुम्नाय दधिरे पुरो जना इति यज्ञो वै सुम्नं यज्ञाय वा ऽएतं पुरो दधते श्रुत्कर्णꣳ सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगेत्याशृण्वन्तꣳ सप्रथस्तमं त्वा गिरा देवं मनुष्या हवामहऽइत्येतत् (ŚB. 7. 3. 1. 34. p. 591.)
This stanza = YV. 12. 111.

२. ०वकः M. ३. त्वत्सम्बन्धिनम् Sy.

४. निवासं यागगृहम् Sy.

५. हे देवानामाह्वातः ! Sy.

६. नरो नेतारो यजमानाः Sy.

७. संख्यं M. सख्यम् seems to be the explanation of आप्यम् ॥ आप्यं आप्तुं योग्यम् Sy.

८. सेवन्ते Sy. ९. विधेहि Sy.

१०. VM. ignores हि.

११. द्यावापृथिव्यौ Sy., U. द्यावाभूमी Mah.

१२. आपूरयत् Sy. आ सर्वतः पूरयति स्म। स्थावराणां प्रस्तरादौ तदुपलब्धेः Mah. आपूरयति U.

१३. प्रभूतम् Sy. न केवलं रोदसी, किन्तु महत्प्रभूतम् Mah. महान्तम् U.

१४. स्वरन्तरिक्षमापृणच्च, आपूरयत् Sy. अन्तरिक्षमापृणत् सूर्यात्मना। त्रैलोक्यं जाठरात्मना पूरितमित्यर्थः। गार्हपत्यादीनां लोकत्वं श्रुत्योक्तम्—'अयं वै लोको गार्हपत्यो द्यौराहवनीयः (ŚB. 8. 6. 3. 14.) इति Mah. आपूरयति च स्वरादित्यम् U.

१५. ज्ञात P. अरणीत उत्पन्नमात्रम् Mah. जातमात्रम् U.

१६. यदा M. यम् Sy. यदा Mah., U.

एनम्। कर्मवन्तः। धारयन्ति। सोऽयम्। अध्वराय। परितः। नीयते। क्रान्तः। अश्वः।
इव। सङ्ग्रामाय। अन्नहितः।

नमस्यत हव्यदातिं स्वध्वरं दुवस्यत दम्यं जातवेदसम्।
रथीर्ऋतस्य बृहतो विचर्षणिरग्निर्देवानामभवत्पुरोहितः ॥ ८ ॥

नमस्यत। नमस्यत। आह्वातव्यदानम्, हविषां वा दातारम्। 'यजमानो वै हव्यदातिः' इति ब्राह्मणम्। शोभनयज्ञम्। परिचरतम्। दमहितम्। अग्निम्। यज्ञस्य। रथ एव रथीः, 'रथीरध्वराणामिति रथो ह वा एव भूत्वा देवेभ्यो यज्ञं वहति' इति ब्राह्मणम्। महतः। विद्रष्टा। अग्निः। देवानाम्। अभवत्। अग्रतो हितः।

---

१. अग्निम् Sy एनं वैश्वानरम् Mah., U.
२. कर्मवन्तो यजमानाः Sy., Mah., U.
३. ०यन्तः P. अधारयन् Sy. कर्मणि स्थापितवन्तः Mah., U.
४. सोमं यम् P. अग्निः Sy. उक्तार्थमेव विवृणोति....सोऽग्निः Mah. स एवायमग्निः U.
५. अध्वरं P. यज्ञार्थम् Sy., U. यागाय Mah. ६. सर्वतोऽतिप्रणीताग्नीध्रीयादिधिष्ण्यादिषु Mah.
७. प्रकर्षेण प्राप्यते Mah.
८. कान्तः M. and P. सर्वत्र व्याप्तः Sy. कीदृशोऽग्निः ? कविः सर्वज्ञः Mah. क्रान्तदर्शनः U.
९. अश्वेव D. नयने दृष्टान्तः। अत्यो न यथाऽश्वः सर्वतो नीयते। राजाश्ववान् भोगजातं लभते यथा तद्वद्विप्रोऽग्निं सेवमानो ब्रह्मलोकान्तर्भोगानिति भावः Mah.
१०. सङ्ग्रामा M. वाजस्यान्नस्य कीर्तेर्वा सातये लाभाय Sy. अन्नलाभाय Mah. अन्नसम्भजनाय U.
११. अन्निहि० P. निहितान्नः Sy. वनसेऽन्नाय भोग्याय हितः सर्वभोगसम्पादक इत्यर्थः Mah. वनस्यान्ने स्थापितः। अश्वो हि घृतादिभिरभिघारितेनान्नेन पोष्यते अतस्तेनोपमीयते U. वन इत्यन्ननाम N. 6. 16.
१२. VM. ignores आ॥ This stanza=YV. 33. 75.
१३. ०स्यतः M.
१४. पूजयत Sy. १५. ०व्यमदात् P.
१६. ŚB. 1. 4. 1. 24.
१७. परिचरत तम् is suggested for परिचरतम्।
१८. दमेभ्यो गृहेभ्यो हितम् Sy.
१९. जातप्रज्ञं तमग्निम् Sy.
२०. नेता Sy. २१. वाम् P.
२२. All the MSS. read भूतः for भूत्वा of ŚB.
२३. All the MSS. read हव्यं for यज्ञं of ŚB.
२४. ŚB. 1. 4. 2. 11; Cf. TS. 2. 5. 9. 2.
२५. द्रष्टा Sy.
२६. पुरस्ताद् द्रष्टव्यतया स्थापितः Sy.

तिस्रो यह्वस्य समिधः परिज्मनोऽग्नेरपुनन्नुशिजो अमृत्यवः ।
तासामेकामदधुर्मर्त्ये भुजमु लोकमु द्वे उप जामिमीयतुः ॥ ९ ॥

तिस्रो यह्वस्य[1] । परितो गन्तुम्[2] । महतः[3] । अग्नेः । तिस्रस्तनूः[4] । मृत्युरहिताः । कामयितारो[5] देवाः । अपुनन्[6] । तासां तनूनाम्[7] । एकां तनूमग्न्यात्मिकाम्[8] । मर्त्ये लोके[9] । निदधुः[10] । भोगसाधनीम्[11] । अथ । अन्ये द्वे[12] वायुः सूर्यश्च । जामिम्[13] । लोकम् । उपगतौ[14], अन्तरिक्षं दिवञ्चेति । 'लोकमित्वे उपजामिम्[15] ईयतुः[16]' इति[17] शाखान्तरे पाठः[18] 'देवा अकृण्वन्नुशिजो अमर्त्यवे' इति[19] च ।[20]

विशां कविं विश्पतिं मानुषीरिषः सं सीमकृण्वन्त्स्वधितिं न तेजसे ।
स उद्वतो निवतो याति वेविषत्स गर्भमेषु भुवनेषु दीधरत् ॥ १० ॥

विशां कविम् । विशाम्[21] । क्रान्तम्[22] । विशां पालयितारम्[23] । मनुष्यसम्बन्धानि[24] ।

---

१. यज्ञस्य M

२. परितो गन्तुः Sy.

३. अहंतः M.

४. पार्थिववैद्युतसूर्यरूपाः Sy.

५. कामयमानाः Sy.

६. नः M. अशोधयन् Sy.

७. P. adds तासां after तनूनाम् ॥ तनूनां मध्ये Sy.

८. तम॰ M. पार्थिवीं तनुम् Sy.

९. मर्त्यलोके Sy.

१०. न्यदधुः Sy.

११. ते देवाः सर्वेषां पालयित्रीम् Sy.

१२. इतरे द्वे तनू Sy.

१३. जामि लोकमासन्नमन्तरिक्षम् Sy.

१४. पागताम् P. उपगच्छतः, अथवा तिस्रः समिधः आघारसमिधौ द्वे अनूयाजसमिच्चैकेति, तासां समिधामेकामनूयाजसमिधं मर्त्ये इह लोके भोगहेतुमनूयाजपर्यन्तमदधुः धारयन्ति । 'प्रजा वा अनूयाजाः' (Cf. 'प्रजानूयाजाः' AB. I. 11.) इति प्रजात्वेनानूयाजानां संस्तवात् तदाश्रयत्वाच्चानूयाजसमिधः । इतरे द्वे समिधावन्तरिक्षे दिव्यभोगहेतू उपेयतुः उपगच्छतः । 'त्रीन् परिधींस्तिस्रः समिधः' TB. 3. 7. 4. 9[a]; APS. 1. 6. 1[a]. इति हि निगमः Sy.

१५. ॰जामी॰ M. ॰जामि P.

१६. ईराय॰ M.

१७. APS. 12. 7. 10. reads 'लोकमिद् द्वे उप जामी ईयतुः' इति ।

१८. ठात् P.

१९. चेति P. APS. 12. 7. 10.

२०. VM. ignores उ and समिधः ॥ उ इति पादपूरणः । समिधः समिन्धिकाः प्रकाशिकाः Sy.

२१. प्रजानाम् Sy.

२२. कान्त॰ P. मेधाविनम् Sy.

२३. प्रभुम् Sy.

२४. ॰सम्बन्धीनि is suggested for ॰सम्बन्धानि ॥ मनुष्यप्रजाः Sy.

अन्नानि[1]। सर्वतः[2]। संस्कुर्वन्ति[3]। स्वधितिम्[4]। इव। तेजनाय[5]। सः[6]। उच्छ्रितान्[7]। निम्नांश्च[8] देशान्। गच्छति। सर्वं व्याप्नुवन्। स एव वैश्वानरो भूत्वा। एषु। सर्वेषु[9] भूतेषु। गर्भम्[10]। धारयति[11]।

स जिन्वते जठरेषु प्रजज्ञिवान्वृषा चित्रेषु नानदन्न सिंहः।
वैश्वानरः पृथुपाजा अमर्त्यो वसु रत्ना दयमानो वि दाशुषे ॥ ११ ॥

स जिन्वते। सः[12]। प्रीणयति[13]। मनुष्याणामुदरेषु[14]। प्रजातः[15]। कामानां वर्षिता[16]। चित्रेष्वरण्येषु[17] स्थित्वा। शब्दं[18] कुर्वन्। इव। सिंहः। वैश्वानरः[19]। पृथुबलः[20]। अमर्त्यः[21]। वासयितॄणि[22]। रत्नानि[23]। प्रयच्छते[24] यजमानाय। विशेषेण प्रयच्छन्भवति[25]।

वैश्वानरः प्रत्नथा नाकमारुहद्दिवस्पृष्ठं भन्दमानः सुमन्मभिः।
स पूर्ववज्जनयञ्जन्तवे धनं समानमज्मं पर्येति जागृविः ॥ १२ ॥

वैश्वानरः। प्रातरादित्यात्मना[26] जातो[27] वैश्वानरः। तदानीमेव[28] पुराणः। दिवम्[29]।

---

१. °न्नाम M. इषः यवादिलक्षणं धनमिच्छन्त्यः Sy.
२. सर्वतः seems to be the explanation of सीम् which is explained by Sy. as एनम्।
३. समस्कुर्वन् Sy.
४. असिम् Sy.
५. तैक्ष्ण्यार्थम् Sy.
६. अग्निः Sy.
७. उच्छ्रायवतः Sy.
८. °म्नांश्च M. नीचैर्भावयतश्च प्रदेशान् Sy.
९. भुवनेषु Sy.
१०. गर्भमरण्याः Sy.
११. अधारयत् Sy.
१२. वैश्वानरः Sy.
१३. वर्धते Sy.
१४. प्राणिनां भेदाज्जठराणां भेदः। तेषु Sy.
१५. प्रज्ञातः M. जातः Sy.
१६. वर्धकः Sy.
१७. चित्रेषु नानाप्रकारेषु Sy.
१८. नानाविधेष्वरण्येषु अत्यर्थं शब्दं कुर्वन् Sy.
१९. किंविधः ? वैश्वानरः Sy.
२०. पृथुतेजाः। अथवा पृथुवेगः Sy.
२१. मरणधर्मरहितः Sy.
२२. वासयि° M. वसु वसूनि धनानि Sy.
२३. रमणीयानि Sy.
२४. दाशुषे हविषां प्रदात्रे यजमानाय Sy.
२५. °च्छद्भव° M.
२६. °त्मनो P.
२७. Omitted in P. जातमात्र एव Sy.
२८. °नीवे P. प्रत्न इव चिरन्तन इव Sy.
२९. कं सुखम्। अकं दुःखम्। न विद्यतेऽकं यस्मिन् तन्नाकम् Sy.

आरोहयति[1]। दिवः[2]। धर्ता[3]। स्तूयमानः[4]। स्तोत्रैः[5]। सः[6]। पुराण इव[7]। जनयन्[8]। यजमानाय[9]। धनम्[10]। एकमेव[11]। मार्गम्[12]। अन्वहं परिगच्छति[13]। जागरणशीलः[14]।

ऋतावानं यज्ञियं विप्रमुक्थ्यमा यं दधे मातरिश्वा दिवि क्षयम्।
तं चित्रयामं हरिकेशमीमहे सुदीतिमग्निं सुविताय नव्यसे ॥ १३ ॥

ऋतावानम्। सत्यवन्तम्[15]। यज्ञार्हम्। मेधाविनम्। स्तुत्यम्[16]। अन्तरिक्षे दीप्ते[17]। आत्मन आवासम्[18]। यम्[19]। मातरिश्वा[20]। आदधे[21], तमधिष्ठाय वसतीत्यर्थः। तम्। चित्रगमनम्[22]। हरितकेशम्[23]। याचामहे। शोभनदीप्तिम्। अग्निम्। अभ्युदयाय[24]। नवतरायेति।

शुचिं न यामन्निषिरं स्वर्दृशं केतुं दिवो रोचनस्थामुषर्बुधम्।
अग्निं मूर्धानं दिवो अप्रतिष्कुतं तमीमहे नमसा वाजिनं बृहत् ॥ १४ ॥

शुचि न यामन्। आदित्यम्[25]। इव[26]। गमने[27]। क्षिप्रम्[28]। सर्वस्य द्रष्टारम्[29]। प्रज्ञानम्[30]।

---

१. स्वरोहिद्भिराग्रहत् आरोहति Sy.
२. अन्तरिक्षस्य Sy.
३. धर्ता seems to be the explanation of पृष्ठम् ॥ पृष्ठमुपरितनप्रदेशम् Sy.
४. M. adds तु after स्तूयमानः।
५. स्तोतृभिः Sy.
६. वैश्वानरः Sy.
७. पुत्रारा० M. पूर्वेभ्य ऋषिभ्य इव Sy.
८. सम्पादयन् Sy.
९. स्तोत्रे Sy.
१०. पश्वादिलक्षणम् Sy.
११. सर्वेषां देवानां साधारणम् Sy.
१२. आकाशमार्गम् Sy.
१३. सूर्यरूपेण गच्छति Sy.
१४. सदा प्रबुद्धः Sy.
१५. बलवन्तम् Sy.
१६. स्तुतिम् P.
१७. द्युलोके Sy.
१८. ०वासे P., D. क्षयं निवसन्तम् Sy.
१९. अग्निम् Sy.
२०. वायुः Sy.
२१. द्युलोकादाहृत्य पृथिव्यामादधे हितवान् Sy.
२२. ०त्रवर्णम् M. नानाविधगमनम् Sy.
२३. पिङ्गलार्चिषम् Sy.
२४. सुष्ठु प्राप्तव्याय धनाय तदर्थम् Sy.
२५. दीप्तम् Sy.
२६. नेति सम्प्रत्यर्थे Sy.
२७. यामनि यज्ञे Sy.
२८. It seems to be the explanation of इषिरम् ॥ एषणीयम् Sy.
२९. सर्वदृशं सर्वपदार्थविज्ञानयुक्तम् Sy.
३०. प्रज्ञापकम् Sy.

दिवः[1] । रोचमानेषु तिष्ठन्तम्[2] । प्रातः प्रबुध्यमानम्[3] । अग्निम् । दिवम्[4] । उच्छ्रितम्[5] । अप्रस्खलितं[6] वा । तम्[7] । अभिगच्छामः[8] । अन्नेन[9] । बलिनम्[10] । महान्तम्[11] ।

मन्द्रं होतारं शुचिमद्वयाविनं दमूनसमुक्थ्यं विश्वचर्षणिम् ।
रथं न चित्रं वपुषाय दर्शतं मनुर्हितं सदमिद्राय ईमहे ॥ १५ ॥

मन्द्रं होतारम्[12] । मादकम्[13] । ह्वातारम्[14] । शुचिम्[15] । सत्यानृताभ्यामयुक्तं केवलसत्ययुक्तम्[16] । दममनसम्[17] । स्तोतव्यम्[18] । सर्वस्य द्रष्टारम् । रथम् । इव । चित्रम्[19] । रूपस्य[20] । प्रदर्शकम्[21] । मनुष्याणां हितम्[22] । सदा । एव । धनानि । याचामहे[23] ।

III. 3.

वैश्वानराय पृथुपाजसे विपो रत्ना विधन्त धरुणेषु गातवे ।
अग्निर्हि देवाँ अमृतो दुवस्यत्यथा धर्माणि सनता न दूदुषत् ॥ १ ॥

वैश्वानराय[24] । वैश्वानराय[25] । पृथुतेजसे[26] । मेधाविनो विप्राः[27] । रमणीयानि हवींषि[28] ।

---

१. द्युलोकस्य Sy.
२. रोचनः सूर्यः, तस्मिन् तिष्ठन्तम् Sy.
३. प्रबुध्य॰ M. अग्निहोत्रिकरूपेणोषसि प्रबुध्यमानम् Sy.
४. दिवः is suggested for दिवम् ॥ दिवः स्वर्गस्य Sy. ५. प्रधानम् Sy.
६. अप्रतिहतशब्दम् Sy.
७. अग्निम् Sy. ८. याचामहे Sy.
९. स्तोत्रेण Sy. १०. अन्नवन्तम् Sy.
११. P. omits the words between आदित्यमिव and महान्तम् ।
१२. P. omits the *pratīka*.
१३. स्तुत्यम् Sy. १४. देवानामाह्वातारम् Sy. १५. सर्वदा शुद्धम् Sy.
१६. द्वयहीनमकुटिलम् Sy.
१७. दानमनसम् Sy. १८. श्रेष्ठम् Sy.
१९. नानाविधवर्णम् Sy. २०. रूपार्थम् Sy.
२१. दर्शनकम् M.,D. दर्शनीयम् Sy.
२२. सर्वेभ्यो मनुष्येभ्यो हितं तमग्निम् Sy.
२३. अत्र याच्ञार्थत्वादस्य द्विकर्मकत्वम् Sy.
२४. 'वैश्वानराय' इत्येकादशर्चं तृतीयं सूक्तं वैश्वामित्रम् । अत्रेयमनुक्रमणिका—'वैश्वानरायैकादश'(KSA.16.3.p.15.) इति । पूर्वसूक्ते 'वैश्वानरीयं तु जागतं तु' (KSA. 16. 2. p. 15.) इत्युक्तत्वादस्यापि सूक्तस्य जगती छन्दो वैश्वानरोऽग्निर्देवता । अस्य सूक्तस्याग्निष्टोमे आग्निमारुते शस्त्रे विनियोगः । सूत्र्यते हि–'वैश्वानराय पृथुपाजसे शं नः करत्यर्वते' (ASS. 5. 20.) इति Sy.
२५. अग्नये Sy.
२६. बहुबलाय बह्वन्नाय वा Sy. 'अन्धः । वाजः or पाजः । पयः' इत्यन्ननामानि (Ngh. 2. 7.) ॥ 'ओजः । पाजः । शवः' इति बलनामानि (Ngh. 2. 9.)
२७. स्तोतारः Sy. २८. स्तोत्राणि Sy.

ददति[1] । धारकेषु[2] देवेषु । गन्तुम्[3] । अग्निः । हि[4] । देवान् । अमृतः[5] । परिचरति[6] । तथा[7] । चिरन्तनानि[8] । धर्माणि[9] च । न[10] । दूषयति, परिपालयति ।

**अन्तर्दूतो रोदसी दस्म ईयते होता निषत्तो मनुषः पुरोहितः ।**
**क्षयं बृहन्तं परि भूषति द्युभिर्देवेभिरग्निरिषितो धियावसुः ॥ २ ॥**

अन्तर्दूतः । दर्शनीयोऽग्निः[11] । द्यावापृथिवी[12] । अन्तः[13] । दूतो भूत्वा[14] । गच्छति । होता[15] सन् । होतृषदने निषण्णः[16] । मनुष्यस्य[17] । पुरो निहितः[18] । निवासम्[19] । महान्तम् । अलङ्करोत्युत्तर-[20]वेदिम् । दीप्तिभिः । देवैः । अग्निः । प्रेरितः[21] । प्रज्ञावसुः[22] ।

**केतुं यज्ञानां विदथस्य साधनं विप्रासो अग्निं महयन्त चित्तिभिः ।**
**अपांसि यस्मिन्नधि संदधुर्गिरस्तस्मिन्त्सुम्नानि यजमान आ चके ॥ ३ ॥**

केतुं यज्ञानाम् । पताकास्थानीयम्[23] । यज्ञानाम्[24] । गृहस्य[25] । साधयितारम्[26] । विप्राः । अग्निम् । पूजयन्ति । कर्मभिः[27] । यस्मिन्[28] । कर्माणि[29] । स्तुतीश्च[30] । सन्दधुः[31] । तस्मिन्[32] । सुखानि । यजमानो[33] मनुष्यः । कामयते[34] ।

---

१. ददती M. परिचरन्ति कुर्वन्ति Sy.
२. धर्मेषु यज्ञेषु Sy.
३. सन्मार्गलाभाय Sy.
४. हिः प्रसिद्धौ Sy.
५. ०मृतं M. मरणरहितः Sy.
६. हविषां प्रदानेन परिचरति Sy.
७. अतः कारणात् कोऽपि Sy.
८. सनातनानि Sy. ९. यज्ञान् Sy.
१०. Omitted by M. ११. ०ग्नि P.
१२. रोदस्योर्द्यावापृथिव्योः Sy.
१३. मध्ये Sy.
१४. देवानां दूतः सन् Sy.
१५. अग्निः Sy. १६. निषण्णः सन् Sy.
१७. मनोर्जातस्य मनुष्यस्य Sy.
१८. आहवनीयादिरूपेण पुरतः स्थापितः Sy.
१९. यज्ञगृहम् Sy. २०. अलङ्कुरुते Sy.
२१. ०रितं M. प्रेषितः Sy.
२२. प्रज्ञया व्याप्तः । एते द्वे अग्निविशेषणे Sy. २३. प्रज्ञापकम् Sy.
२४. P. omits पताकास्थानीयम् and यज्ञानाम् ।
२५. यज्ञस्य गृहस्य वा Sy.
२६. प्राप्तिसाधनमसाधारणकारणं सन्तम् Sy.
२७. स्वकर्मभिः Sy.
२८. यस्मात् P. यस्मिन्नग्नौ Sy.
२९. स्वानुष्ठेयानि कर्माणि Sy.
३०. गिरः स्तोतारः Sy.
३१. सन्दधते Sy. ३२. अग्नौ Sy.
३३. यजमाना M.
३४. VM. ignores अधि and आ ॥ Sy. construes अधि with सन्दधुः and आ with चके ।

पिता यज्ञानामसुरो विपश्चितां विमानमग्निर्वयुनं च वाघताम् ।
आ विवेश रोदसी भूरिवर्पसा पुरुप्रियो भन्दते धामभिः कविः ॥ ४ ॥

पिता यज्ञानाम् । पालयिता । यज्ञानाम् । विपश्चितामपि । प्रज्ञावान् । सोऽयम् । ऋत्विजाम् । विमानसाधनं भवति । वेद्याः प्रज्ञासाधनम् । च । सोऽयमाविशति । द्यावापृथिवी । ब्रह्मरूपेण तेजसा । बहूनां प्रियः । स्तौति । शरीरैः स्वैर्बहुभिः । कविः ।

१. विदुषां स्तोतृणाम् Sy. मेधाविनां मध्ये SKN. प्रज्ञावतामपि मध्ये Dur.

२. असुरो बलप्रदः Sy. असुः प्रज्ञा, रो मत्वर्थे । प्रज्ञावांश्च SKN.

३. It refers to अग्निः ॥ योऽयमेवंलक्षणोऽग्निः Dur.

४. ऋत्विजां मध्ये SKN. ऋत्विजो ह्ययमेवाग्निर्विशिष्टं यज्ञसाधनमित्येवं मन्यन्ते Dur.

५. अभिमा० M. विमीयते फलमिति विमानं यज्ञादिकर्मसाधनम् Sy. विनिर्माणहेतुत्वाद् विनिर्माता चाग्निर्हविर्नयनद्वारेण कृत्स्नस्य जगतः SKN. विनिर्माणं कृत्स्नस्य जगतः । अग्निनैव ह्यग्निहोत्रादिकर्मद्वारेण कृत्स्नं जगद्विनिर्मीयते Dur. ६. वेद्याम् P., D.

७. ०ज्ञाधः P. ज्ञानसाधनम् Sy. प्रज्ञानभूतं च प्रज्ञस्योपक्रान्तः SKN. प्रज्ञानमयमेव Dur.

८. प्रविशति Sy. एवंविशिष्टः किं चकार? उच्यते....आविष्ट आविशति वा SKN.

९. द्यावापृथिव्यौ Sy., SKN., Dur.

१०. बहुरूपेण is suggested for ब्रह्मरूपेण ॥ पार्थिववैद्युतादिबहुविधरूपेण Sy. बहुरूपेणात्मना SKN. पार्थिववैद्युतादिबहुरूपत्वेन Dur.

११. मनुष्येष्वधिकं प्रियः । अथवा पुरूणां श्रेष्ठानां प्रियः पुरुप्रियः Sy. आविश्य च पुरुप्रियो बहूनामृत्विग्यजमानानामिष्टः SKN. तमेवङ्गुणयुक्तमग्निं पुरुप्रियो बहुकामप्रियः स्तोता Dur.

१२. यजमानेन स्तूयते Sy. दैव्यहोतृत्वात् स्तौति ? कान् ? सामर्थ्याद् देवान् SKN. भन्दना भन्दतेः स्तुतिकर्मणः N. 5. 2.

१३. तेजोभिर्युक्तः Sy. स्वैर्जन्मभिर्नामभिर्वा SKN. नामभिरनेकैः प्रकारैः Dur.

१४. अग्निः Sy. मेधावी । एवं तावद्विनैव यत्तच्छब्दाध्याहारकल्पनयाऽत्रैकवाक्यता। अन्ये तु पिता यज्ञानामित्यादिगुणो योऽग्निस्तं पुरुप्रियो बहुकामो यजमानो भन्दत इति यत्तच्छब्दाध्याहारकल्पना SKN. कान्तदर्शन इत्यर्थः। पुरुप्रियो हि स्तोता धामभिरन्नैः किमन्यत् स्तुतेः कुर्यात् । तस्मादुपपद्यते स्तुत्यर्थत्वमस्य Dur. N. 5. 2., SKN. II. 291.

चन्द्रमग्निं चन्द्ररथं हरिव्रतं वैश्वानरमप्सुषदं स्वर्विदम् ।
विगाहं तूर्णिं तविषीभिरावृतं भूर्णिं देवास इह सुश्रियं दधुः ॥ ५ ॥

चन्द्रमग्निम् । कान्तम्[1] । अग्निम् । कान्तरथम्[2] । व्रतमिति रूपमाह, हरितत्वचम्[3] । वैश्वानरम् । अप्सु सीदन्तम्[4] । सर्वज्ञम् । युद्धेषु विगाहमानम्[5] । क्षिप्रम्[6] । बलैः[7] । आवृतम् । भर्तारम् । इह लोके । देवाः । सुश्रियम्[8] । निदधुरिति[9] ।

अग्निर्देवेभिर्मनुषश्च जन्तुभिस्तन्वानो यज्ञं पुरुपेशसं धिया ।
रथीरन्तरीयते साधदिष्टिभिर्जीरो दमूना अभिशस्तिचातनः ॥ ६ ॥

अग्निर्देवेभिः । अग्निः । देवानुद्दिश्य । मनोः[10] । च । जन्तुभिरपत्यैः[11], एताभिर्मानवीभिः प्रजाभिः[12] । तन्वानः[13] । यज्ञम् । बहुरूपम्[14] । प्रज्ञया[15] । रथभूतः[16] । द्यावापृथिव्योरन्तः[17] । गच्छति । साधयज्ञेभ्यो[18] मनुष्येभ्यः । क्षिप्रः[19] । दममनाः[20] । रक्षसां घातयिता[21] ।

अग्ने जरस्व स्वपत्य आयुन्यूर्जा पिन्वस्व समिषो दिदीहि नः ।
वयांसि जिन्व बृहतश्च जागृव उशिग्देवानामसि सुक्रतुर्विपाम् ॥ ७ ॥

अग्ने जरस्व । अग्ने ! जरस्वास्मान्[22] । शोभनापत्ययुक्ते[23] । जीविते[24] । हविषा[25] ।

---

१. आह्लादकरम् Sy.
२. चन्द्र आह्लादको रथो यस्येति तम् Sy.
३. हरिव्रतं पिङ्गलवर्णं हरित्वचं वा । 'हरित्वचम्' इति शाखान्तरम् Sy.
४. ०दत्तम् P.
५. सर्वत्र व्याप्तम् Sy.
६. क्षिप्रगामिनं शत्रूणां हिंसितारं वा Sy.
७. बलेन P.
८. शोभनदीप्तिम् Sy.
९. आदधुः Sy.
१०. यजमानस्य Sy.
११. ऋत्विग्भिश्च Sy.
१२. प्रज्ञाभिः P.
१३. कुर्वन् Sy.
१४. पुरोडाशपशुसोमहविर्भेदैरेकाहाहीनसत्रात्मकभेदैश्च नानाविधरूपम् Sy. पेश इति रूपनाम Ngh. 3. 7.
१५. कर्मणा Sy.
१६. यभू० M. सर्वस्य लोकस्य नेता Sy.
१७. द्यावापृथिव्योर्मध्ये Sy.
१८. ०धन्य० M. साधितयज्ञैः Sy.
१९. क्षिप्रकारी Sy.
२०. दान्तमना दानमना वा Sy.
२१. शात०P. अभिशस्तिचातनः अभिशस्तीनामरातीनां यज्ञविघ्नकारिणां रक्षसां चातयिता नाशयिताग्निः Sy.
२२. देवान् स्तुहि Sy.
२३. सुपुत्रे Sy.
२४. निमित्तसप्तम्येषा । आयुषि निमित्ते Sy.
२५. होतारमधिष्ठाय रसेनान्नेन वा Sy.

अस्माकं कामान् पिन्वस्व[१]। अन्नानि[२] च। अस्मभ्यम्। प्रयच्छ[३]। तथा। महान्ति[४]। वयांस्य[५]-श्वान्। अस्मभ्यं प्रयच्छ[६]। जागरणशील[७] ! रक्षक[८] ! कामयिता[९]। देवानाम्[१०]। भवसि। असि[११] च सुप्रज्ञः[१२]। विपश्चिताम्[१३]।

**विश्पतिं यह्वमतिथिं नरः सदा यन्तारं धीनामुशिजं च वाघताम्।**
**अध्वराणां चेतनं जातवेदसं प्र शंसन्ति नमसा जूतिभिर्वृधे ॥ ८ ॥**

विश्पतिं यह्वम्। विशां[१४] पतिम्। महान्तम्। अतिथिम्[१५]। मनुष्याः[१६]। सदा। कर्मणाम्[१७]। नियन्तारम्। कामयितारम्[१८]। च। ऋत्विजाम्। यज्ञानाम्[१९]। चेतयितारम्[२०]। जातप्रज्ञम्[२१]। प्रशंसन्ति[२२]। नमस्कारैः[२३]। स्तुतिभिश्च[२४]। वर्धनाय[२५], जूतिः[२६] 'जरतेः स्तुतिकर्मणः'[२७]।

---

१. पिबस्व P. and M. देवान् प्रीणय Sy.
२. सस्यार्थं वृष्टीः Sy.
३. सन्दिदीहि सन्दीपय Sy.
४. बृहतो महतो यजमानस्य। जिन्वेति सम्बन्धः Sy.
५. पयां० M. अन्नानि च Sy. Devarāja reads वयः as a synonym of food. Cf. Ngh. 2. 7. (Sarup's ed. p. 9.)
६. देहि Sy.
७. ०शीली P. सर्वदा जागरणशील ! Sy.
८. Omitted in M.
९. मायि० P. कान्तः Sy.
१०. मेधाविनां देवानाम् Sy.
११. अपि P., D.
१२. शोभनकर्मा शोभनयज्ञो वा त्वम् Sy.
१३. मेधाविनाम् Sy.
१४. विशां मनुष्याणां पतिं विश्वस्य पतिमिति वा Sy.
१५. सर्वस्यातिथिभूतम् Sy.
१६. नेतारः स्तोतारो वा Sy.
१७. कर्माणाम् P. धीनां बुद्धीनां कर्मणां वा Sy.
१८. कम० P. कान्तं मनोज्ञम् Sy.
१९. यज्ञाम् M. यागानाम् Sy.
२०. प्रज्ञापकम् Sy.
२१. अग्निम् Sy.
२२. प्रशस्यन्ति P. प्रशंसां कुर्वन्ति Sy.
२३. नमस्कारेण स्तुतिभिश्च Sy.
२४. जूतिभिर्वेगैर्युक्तम् Sy.
२५. वृद्धये समृद्धये Sy.
२६. Cf. जूतिर्गतिः। प्रीतिर्वा। N.10.28. जरा स्तुतिः is suggested for जूतिः।
२७. N. 10.8. This quotation should come immediately after स्तुतिभिः।

विभावा देवः सुरणः परि क्षितीरग्निर्बभूव शवसा सुमद्रथः ।
तस्य व्रतानि भूरिपोषिणो वयमुप भूषेम दम आ सुवृक्तिभिः ॥ ९ ॥

विभावा । प्रभावान्[1] । देवः[2] । सुरमणः[3] । प्रजाः सर्वाः । पर्यभवत्[4] । अग्निः[5] । बलेन । शोभनरथः । तस्य[6] । कर्माणि । बहूनां[7] पोषयितुः[8] । वयम्[9] । अलङ्कुर्मः[10] । स्वगृहे[11] । शोभनस्तोत्रैः ।[12]

वैश्वानर तव धामान्या चके येभिः स्वर्विदभवो विचक्षण ।
जात आपृणो भुवनानि रोदसी अग्ने ता विश्वा परिभूरसि त्मना ॥ १० ॥

वैश्वानर[13] । हे वैश्वानर ! तव[14] । शरीराणि[14] । आभिमुख्ये[15] । कामये[16] । यैस्त्वम्[17] । स्वर्गस्य लम्भयिता[18] । भवसि[19] । प्राज्ञ[20] ! जातः[21] । आपूरयसि[22] । भूतानि[23] । द्यावापृथिवी च[24] । अग्ने ! सर्वाणि[25] । तानि[25] । आत्मनैव । परिभवसि[26], अरानिव[27] नेमिः ।

---

१. प्रभाम् P. दीप्तिमान् Sy.
२. स्तूयमानः Sy.
३. सुरमणम् M. सुमरणम् P. शोभनं रमयतीति सुरमणः । अत्र वर्णलोपश्छान्दसः Sy.
४. परितो गृह्णाति । अत्र भवतेरुपसर्गवशात् परिग्रहार्थत्वम् Sy.
५. अग्नि P.
६. निवसतस्तस्याग्नेः Sy.
७. ०हूतं M.
८. पालयितुः Sy.
९. वनय P.
१०. वमं कुर्म P. उपभूषयामः । प्रकाशयामः Sy.
११. यज्ञगृहे Sy. स्वसराणि । अमा । दम इति गृहनामानि Ngh. 3. 4.
१२. VM. ignores आ.
१३. ०नरः M.
१४. त्वत्सम्बन्धीनि तेजांसि Sy.
१५. ०मुख्यानि D., M. आभिमुख्येन is suggested for आभिमुख्ये ।
१६. अभिष्टौमि Sy.
१७. यैस्तम् M. तेजोभिः Sy.
१८. स्वर्वित् सर्ववित् सर्वज्ञः Sy.
१९. प्रभ० P.
२०. प्रज्ञ P.
२१. जातमात्रस्त्वम् Sy.
२२. आपूरयः Sy.
२३. भूतजातानि Sy.
२४. व M.
२५. विश्वानि Sy.
२६. It seems to be the explanation of परिभूः and असि ॥ परिगृहीतासि Sy.
२७. वाराहिव M. वरा० P.

वैश्वानरस्य दंसनाभ्यो बृहदरिणादेकः स्वपस्यया कविः ।
उभा पितरा महयन्नजायताग्निर्द्यावापृथिवी भूरिरेतसा ॥ ११ ॥

वैश्वानरस्य । वैश्वानरस्य[1] । कर्मभ्यः[2] । महत्त्वमिह[3] । एकः[4] । प्राप्नोति[5] । शोभनकर्मेच्छया[6] । कविः[7] । सोऽयम्[8] । उभौ । पितरौ[9] । द्यां च पृथिवीं च[10] । बहुरेतस्के[11] । पूजयन्[12] । अजायत[13], पृथिव्या[14] ओषध्यादयो रेतः, उदकं दिव इति ।

---

१. Omitted in P. अग्नेः Sy.

२. तोषकारीभ्यः क्रियाभ्यः Sy.

३. महद्धनं भवतीति यत् तदवितथम् । यतः कारणात् Sy.
महत् BB.

४. एकं M. मुख्यः Sy.

५. यजमानादिभ्यो धनं ददाति Sy. किमरिणादधिगच्छति ? किमिति सामर्थ्याल्लभ्यते । इतोऽन्यन्महदस्तीति कविर्मेधावी कश्चिदवबुध्यते किम् ? न कश्चिदित्यर्थः । यो मेधावी न भवति स कामं मिथ्याऽवबुध्यताम्, मेधावी नैव बोद्धुमर्हतीति । 'री गतिरेषणयोः' क्रैयादिकः, छान्दसो लुङ् । 'प्वादीनां ह्रस्वः' इति BB.

६. शोभनयज्ञादिकर्मेच्छया Sy. कीदृशं महत्त्वमित्याह । स्वपस्यया शोभनकर्मतया । महदाभ्योऽन्यन्नास्त्येवेत्यर्थः । वैश्वानरस्य कर्मसदृशमन्यच्छोभनत्वेन महत्कर्म कश्चिदपि मेधावी जनो न जानातीत्युक्तं भवति । अप इति कर्मनाम (Ngh. 2. 1.) शोभनं कर्म स्वपः, तस्य भावस्स्वपस्यम् । छान्दसो यत् । 'सुपां सुलुक्०' इति तृतीयाया यादेशः BB.

७. अग्निः Sy.
कविर्मेधावी BB.

८. It refers to अग्निः ॥ तर्हि तेषामस्य कर्मणां मध्ये शोभनमेकं कर्मोदाह्रियतामित्याह । अयं खल्वग्निः BB.

९. मातापितरौ Sy. मातापितृस्थानीयौ वा BB.

१०. Omitted in M.

११. बहुरेतस्कौ Sy. भूरिरेतसौ, स्थावरजङ्गमात्मकबहुविकारे BB.

१२. पूजय M. प्रकाशयन् BB.

१३. यत् M. जायते । छान्दसो लङ् । यथा खलु कश्चित् सुजातः पुत्रो मातापितरौ भूरिरेतसौ युवानौ निजजन्मनाऽलङ्कुर्वन्नजायत एवमसौ जायते । इत्थं जन्मकाल एवास्य कुर्वाणस्य किन्नाम कर्म महच्छोभनं न भवतीति भावः । तस्मादीदृशोऽयमग्निरस्माकं जातं तमिमं पुत्रं पूतत्वतेजस्वित्वादिगुणं करोतु BB.

१४. ०व्याम् M.

This stanza=TS. 1. 5. 11. 1.

## III. 4.

स॒मित्स॑मित्सु॒मना॑ बोध्य॒स्मे शु॒चाशु॑चा सु॒म॒तिं रा॑सि॒ वस्वः॑ ।
आ दे॑व दे॒वान्य॒जथा॑य वक्षि॒ सखा॒ सखी॑न्त्सु॒मना॑ यक्ष्यग्ने ॥ १ ॥

समित्समित्[1] । समिधंसमिधम्[2] । सुमनाः । बुध्यस्व[3] । अग्ने[4] ! तेजसातेजसा[5] । भवदीयो[6] धनस्य[7] । सुमतिम्[8] । देहि । आवह[9] च । देवान्[10] । यज्ञाय । अथ तान् समानस्थानान्[11] । त्वम्[12] । सखा[13] सन् । शोभनमनाः[14] । यज[15] च[16] ।

यं दे॒वास॒स्त्रिरह॑न्ना॒यज॑न्ते दि॒वेदि॑वे॒ वरु॑णो मि॒त्रो अ॒ग्निः ।
सेमं य॒ज्ञं मधु॑मन्तं कृधी न॒स्तनू॑नपाद्घृ॒तयो॑निं वि॒धन्त॑म् ॥ २ ॥

यं देवासः । यम्[17] । वरुणादयोऽपि[18] । देवाः । अन्वहम्[19] । त्रिः[20] । आयजन्तेऽग्निं[21] त्रिषु सवनेषु । स[22] त्वम् । इमम् । यज्ञम् । मधुमन्तम्[23] । कुरु । नः[24] । हे तनूनपात्[25] !

---

१. 'समित्समित्' इत्येकादशर्चं चतुर्थं सूक्तं वैश्वामित्रं त्रैष्टुभम् । अत्रानुक्रमणिका— 'समित्समिदाप्रियः' (KSA. 16. 4. p. 15.) इति । इध्मादिस्वाहाकृत्यन्ताः पूर्वोक्ताः प्रत्यृचं देवताः । पशौ वैश्वामित्राणामाप्रीसूक्तम् । दर्शपूर्णमासयोः पत्नीसंयाजेषु त्वष्टुर्याज्या 'तन्नः' इत्येषा । सूत्रितं च–'इह त्वष्टारमग्रियं तन्नस्तुरीपमध पोषयित्नु' (ASS. 1. 10.) इति । त्वाष्ट्रे पशौ पुरोडाशस्यानुवाक्या । सूत्रितं च–'तन्नस्तुरीपमध पोषयित्नु देवस्त्वष्टा सविता विश्वरूपः' (ASS. 3. 8.) इति Sy.

२. प्रत्यर्थं समिद्धस्त्वम् Sy. ३. ध्यस्व M.

४. अस्मे is suggested for अग्ने ।

५. प्रत्यर्थं प्रसर्पकेण ज्योतिषा युक्तस्त्वम् Sy. ६. ०दीन् M.

७. वसुनो धनस्य तद्विषयाम् Sy.

८. शोभनां बुद्धिम् Sy.

९. आवहसि Sy.

१०. यजनीयान् Sy. ११. देवान् Sy.

१२. VM. seems to explain देव ! by त्वम् ॥ हे देव ! द्योतमान ! Sy.

१३. Omitted in M. देवानां सखा त्वम् Sy.

१४. ०भनाः P. सुमनाः सन् Sy.

१५. यजस्व Sy.

१६. VM. ignores अस्मे ॥ अस्मभ्यम् Sy. १७. अग्निम् Sy.

१८. आदि refers to मित्र and अग्नि ॥ वरुणो मित्रोऽग्निः, एते त्रयो देवाः Sy.

१९. अन्वह M. प्रतिदिवसम् Sy.

२०. त्रिः M. प्रातर्मध्याह्नसायन्तनेषु सवनेषु त्रिवारम् Sy. २१. आयजन्तः M.

२२. Omitted by P.

२३. वृष्ट्यादिफलयुक्तम् Sy. मध्वित्युदकनाम Ngh. 1. 12.

२४. तः M. अस्मदीयम् Sy.

२५. हे तनूनपात् ! तनूनां शरीराणां न पातयितः ! Sy.

घृतोत्पत्ति[१]स्थानम् । देवान्परिचरन्तं[२] यज्ञम्[३] ।[४]

प्र दी॒धिति॑र्वि॒श्ववा॑रा जिगाति॒ होता॑रमि॒ळः प्र॑थ॒मं यज॑ध्यै ।
अच्छा॒ नमो॑भिर्वृष॒भं व॒न्दध्यै॒ स दे॒वान्य॑क्षदिषि॒तो यजी॑यान् ॥ ३ ॥

प्र दीधितिः । प्रगच्छति[५] । दीप्तिः[६] । सर्वस्य वरणीया[७] । अग्निम्[८] । स्तुतयश्च[९] । यष्टुम्[१०] । अन्नैः[११] सह । वर्षितारमग्निम्[१२] । वन्दितुम्[१३] । अभिगच्छन्ति[१४] । सः[१५] । देवान् । यजतु । प्रेषितः । यष्टृतमः[१६] ।

ऊ॒र्ध्वो वां॑ गा॒तुर॑ध्व॒रे अ॑कार्यू॒र्ध्वा शो॒चींषि॒ प्रस्थि॑ता॒ रजां॑सि ।
दि॒वो वा॒ नाभा॒ न्य॑सादि॒ होता॑ स्तृणी॒महि॑ दे॒वव्य॑चा॒ वि ब॒र्हिः ॥ ४ ॥

ऊर्ध्वः । अग्नीषोमौ ! युवयोः[१७] । गमनम्[१८] । अध्वरे[१९] । ऊर्ध्वम्[२०] । कृतम्[२१] इति । एतदेवोक्तम्—ऊर्ध्वानि[२२] । शोचकानि[२३] । तेजांसि[२४] । प्रस्थितानि । भवतोरेको दिवः[२५] । नाभौ[२६] । इवोत्तरवेद्या[२७] नाभौ । निषीदति । ह्वाताग्निः । ततो विविधं स्तृणीमहि[२८] । देवैर्व्याप्तम्[२९] । बर्हिः[३०] ।

---

१. घृतस्योदकस्य कारणम् Sy.
२. विधीयमानं क्रियमाणम् Sy.
३. ज्ञम् P.
४. VM. ignores अहन् ॥ अहन् अहनि Sy.
५. प्रपच्छ० P. जिगातु प्रकर्षेण गच्छतु Sy.
६. स्तुतिर्दीप्तिर्वा Sy.
७. विश्वैर्जनैर्वरणीया Sy.
८. देवानामाह्वातारमग्निम् Sy.
९. इळः इषो हवीरूपाण्यन्नानि Sy.
१०. यष्टुं प्रीणयितुं प्रजिगातु Sy.
११. नमस्कारैः सह Sy.
१२. सम्पदां वर्षितारम् Sy.
१३. वन्दितुं योग्यमिति शेषः Sy.
१४. VM. seems to explain अच्छ by अभि ॥ आभिमुख्येन Sy.
१५. Omitted by P. अग्निः Sy.
१६. VM. ignores प्रथमम् ॥ प्रथमं मुख्यम् Sy.
१७. अग्निश्च बर्हिश्चोभौ वामित्युच्येते । समिदादिभिः सहितस्यैवाग्नेर्देवतात्वात् Sy.
१८. यज्ञमार्गः Sy.
१९. अध्वा P. यज्ञे Sy.
२०. उन्नतः Sy.
२१. आश्रयः क्रियते Sy.
२२. ऊर्ध्वम् Sy.
२३. अर्चिष्मन्ति Sy.
२४. हवींषि Sy.
२५. दीप्यमानस्य यागगृहस्य Sy.
२६. नाभौ मध्यप्रदेशे Sy.
२७. इव here is equivalent to वा ॥ चार्थे वाशब्दः Sy.
२८. विशेषेण स्तृणीमः Sy.
२९. ०व्याप्त M.
३०. बर्हिः P.

सप्त होत्राणि मनसा वृणाना इन्वन्तो विश्वं प्रति यन्नृतेन ।
नृपेशसो विदथेषु प्र जाता अभी३मं यज्ञं वि चरन्त पूर्वीः ॥ ५ ॥

सप्त होत्राणि । सप्त वषट्कर्तारः[1] । होतृकर्माणि[2] । मनसा । कामयमानाः[3] । सर्वं[4] जगत् । प्रीणयन्तः । प्रतियच्छन्ति[5] । सत्येन[6] मार्गेण ।[7] प्रविशद्भिर्मनुष्यैराश्लिष्टाः[8] । यज्ञेषु[9] । प्रादुर्भूता[10] इति । यज्ञम् । अभिचरन्तः[11] । पुरातना[12] द्वारो देव्याः ।[13]

आ भन्दमाने उषसा उपाके उत स्मयेते तन्वा३ विरूपे ।
यथा नो मित्रो वरुणो जुजोषदिन्द्रो मरुत्वाँ उत वा महोभिः ॥ ६ ॥

आ भन्दमाने । स्तूयमाने । अहोरात्रे[14] । परस्परान्तिके[15] । अपि च । स्तूयेते[16] सूर्येण नक्षत्रैश्च । शरीरेण[17] । विरूपे[18] । यथा[19] । अस्मान् । मित्रावरुणौ[20] । जुषेताम्[21] । इन्द्रः । च[22] । मरुत्वान् । महद्भिर्देवैस्तथाऽहोरात्रौ[23] कुरुताम् ।

---

१. वर्षः क० P.
२. होतृणां वषट्कर्तॄणां कर्माणि Sy.
३. प्रार्थ्यमानाः Sy.
४. विश्वम् Sy.
५. देवाः प्रतिगच्छन्ति Sy.
६. ऋतेनोदकेन Sy.
७. अतः परं द्वारां स्तुतिः Sy.
८. नररूपाः Sy.
९. यागेषु Sy.
१०. उत्पन्नाः Sy.
११. प्रविचरन्तु Sy.
१२. पूर्वीर्बह्व्यो विग्रहवत्यो यज्ञद्वाराभिमानिदेवताः Sy.
१३. VM. ignores इमम् and वि ॥ इममस्मदीयम् Sy.
१४. अहोतरत्रे P. उषसा नक्तापेक्षया द्विवचनम् । नक्तोषसौ राज्यहनी आगच्छताम् Sy.
१५. ०न्तिते M. परस्परान्विते is suggested for परस्परान्तिके ॥ परस्परं सङ्गते Sy.
१६. स्तूयते M. स्मयेते P. प्रकाशेते Sy.
१७. प्रकाशरूपेण शरीरेण Sy.
१८. रूपे P. पृथग्रूपे Sy.
१९. यस्था P.
२०. ०रुणा M.
२१. यथा सेवेत तथा Sy.
२२. उत वा अपि च Sy.
२३. महोभिस्तेजोभिर्युक्ते इमे द्यावापृथिव्यौ कुरुताम् Sy.

दैव्या॒ होता॑रा प्रथ॒मा न्यृ॑ञ्जे स॒प्त पृ॒क्षासः॑ स्व॒धया॑ मदन्ति ।
ऋ॒तं शंस॑न्त ऋ॒तमित्त आ॑हु॒रनु॑ व्र॒तं व्र॑त॒पा दीध्या॑नाः ॥ ७ ॥

दैव्या । दैव्यौ[1] । होतारौ[2] । प्रथमौ[3] । हविर्भिः साधयामि[4] । सप्त । होतारस्तौ[5] च । स्वधया[6] । मदन्ति[7] । सत्यमनयोः[8] स्तोत्रम् । शंसन्तः[9] । सत्यम्[10] । एव[11] । ते[12] । वदन्ति[13] । व्रतस्य रक्षितारः[14] । यज्ञे[15] । दीप्यमानाः[16] ।

आ भार॑ती॒ भार॑तीभिः स॒जोषा॒ इळा॑ दे॒वैर्म॑नु॒ष्ये॑भिर॒ग्निः ।
सर॑स्वती सारस्व॒तेभि॑र॒र्वाक् ति॒स्रो दे॒वीर्ब॒र्हिरेदं स॑दन्तु ॥ ८ ॥

आ भारती[17] । भारती[18] । स्वानुचरीभिर्भारतीभिः[19] । सहिता[20] । इळा[21] च । देवैः सहिता । तथा तत्सहचरोऽग्निश्च[22] । मनुष्यैः[23] । सरस्वती[24] च । स्वानुचरैर्देवगणैः[25] । इत्थं तिस्रः[26] । देव्यः । इदम्[27] । बर्हिः । आसीदन्तु ।[28]

---

१. देव्यौ P. दिव्यौ Sy.
२. आह्वातारावग्नी Sy.
३. मुख्यौ Sy.
४. न्यृञ्जे प्रसाधयामि Sy.
५. होत्रास्तौ M. and P. पृक्षमन्नं तद्वन्त ऋत्विजः Sy.
६. सोमेन हविषा Sy.
७. ०दन्ति M. मादयन्ति Sy.
८. उदकम् Sy.
९. आशंसमानाः Sy.
१०. अग्निम् Sy.
११. एव च P. एवकारार्थे इच्छब्दः Sy.
१२. वे P.
१३. ०दन्ति M. अग्निमेव ऋतभूतमाहुरित्यर्थः Sy.
१४. व्रतानां कर्मणां रक्षितारः Sy.
१५. It seems to be the explanation of अनुव्रतम् ॥ व्रतेषु Sy.
१६. ०मानाम् M. दीप्यमानाः, अथवा स्वकर्मभिरग्निं दीपयन्त ऋत्विजः Sy.
१७. भारतीं M.
१८. वाक् Sy.
१९. भरतस्य सूर्यस्य सम्बन्धिनीभिः Sy.
२०. सङ्गता Sy.
२१. भूमिश्चागच्छतु Sy.
२२. सत्स० P.
२३. मनुष्यैश्च सङ्गता Sy.
२४. माध्यमिका वागागच्छतु Sy.
२५. सरस्वतीसम्बन्धिभिर्मध्यमस्थानैः सह Sy.
२६. वागिळाभारत्य आगच्छन्तु Sy.
२७. एतत् Sy.
२८. VM. ignores आ (before भारती) and अर्वाक् ॥ आ गच्छतु । अर्वाक् अभिमुखम् Sy.

तन्न॑स्तु॒रीप॒मध॑ पोषयि॒त्नु देव॑ त्वष्ट॒र्वि र॑रा॒णः स्य॑स्व ।
यतो॑ वी॒रः क॑र्म॒ण्यः॑ सु॒दक्षो॑ यु॒क्तग्रा॑वा॒ जाय॑ते दे॒वका॑मः ॥ ९ ॥

तन्नस्तुरीपम्[1] । तद्रेतः[2] । अस्माकम्[3] । तारकम्[4] । अथ[5] च । पोषकम्[6] । देव ! त्वष्टः[7] ! विष्यस्व[8] । रममाणः[9] । यतो[10] रेतसः[11] । वीरः[12] । कर्मसु साधुः[13] । सुबलः[14] । यज्ञे प्रयुक्तग्रावा[15] । जायते[16] । देवान्कामयमानः[17] ।

वन॑स्पते॒ऽव॑ सृ॒जोप॑ दे॒वान॒ग्निर्ह॒विः श॑मि॒ता सू॑दयाति ।
सेदु॒ होता॑ स॒त्यत॑रो यजाति॒ यथा॑ दे॒वानां॒ जनि॑मानि॒ वेद॑ ॥ १० ॥

वनस्पते । वनस्पते ! हविर्भिर्देवान्[18] प्रति । उपावसृज[19] । अग्निः[20] । हविः । संस्कर्ता[21] । संस्करोति[22] । सः । एव । होता । सत्यतरः[23] । देवान्यजति[24] । यथा यथा[25] । देवानाम् । जन्मानि । वेद[26]इति[27] ।

१. ०रीयम् M.
२. तत्प्रसिद्धम् Sy. तद्धनम् BB.
३. अस्मान् Sy. अस्मभ्यम् BB.
४. तूर्णमाप्नोतीति तुरीपम् । पृषोदरादिः BB.
५. अथा P. अनन्तरम् Sy. इदानीम् BB.
६. पोषयित्नु BB.
७. त्वाष्ट्वः P. हे सृष्टिकर्तः ! Sy.
८. मोचय Sy. विसृज, विमुच्य देहीत्यर्थः । व्यत्ययेनात्मनेपदत्वम् BB.
९. दानशीलस्त्वम् । व्यत्ययेन रातेरात्मनेपदत्वम् । शपश्लुः BB.
१०. विमोचनात् Sy. तदित्युक्तं किं तदित्याह—यतो यस्माद्धनाल्लब्धात् BB.
११. ०तरेवसा M. ०तसा P.
१२. सत्त्ववान् Sy. विक्रान्तः BB.
१३. कर्मसु कुशलः Sy. कर्मणि साधुः कुशलः BB. १४. सुष्ठु शीघ्र उत्साही । 'दक्ष शीघ्रकरणे' BB.
१५. अभिषवार्थग्रावयुक्तः । सोममुद्दिश्येत्यर्थः Sy. युक्ता ग्रावाणो यस्य तादृशः । ग्रावभिस्तत्साध्यं कर्मोपलक्ष्यत इति कर्मशील इत्यर्थः BB. १६. जायेत Sy.
१७. ०माना M. देवान् कामयमानः पुत्रः Sy. अत एव देवकामो देवान् कामयत इति...देवैः काम्यत इति वा देवकामः । दासीभारादिर्द्रष्टव्यः । ईदृशः पुरुषो यस्माद्धनाज्जायते तत्पशुलक्षणं धनं देहीति BB.
This stanza=TS. 3. 1. 11. 1.
१८. हविर्देवान् M.
१९. उवाचसृ० M. समीपे कुरु Sy.
२०. अग्निः M. वनस्पतिश्च Sy.
२१. पशोः संस्कर्ता Sy.
२२. सूदयाति देवान्प्रति प्रेरयतु Sy.
२३. अत्यर्थं सत्यः, सत्यस्वरूपः Sy.
२४. यच्छति M. यजतु Sy.
२५. यतः कारणात् स एवाग्निः Sy.
२६. वेत्ति । अतः स एव यजत्वित्यर्थः Sy.
२७. VM. ignores उ.

आ या॑ह्यग्ने स॒मिधा॒नो अ॒र्वाङिन्द्रे॑ण दे॒वैः स॒रथं॑ तु॒रेभिः॑ ।
ब॒र्हिर्न॒ आस्ता॒मदि॑तिः सुपु॒त्रा स्वाहा॑ दे॒वा अ॒मृता॑ मादयन्ताम् ॥ ११ ॥

आ याहि । आयाहि[1] । अग्ने ! दीप्यमानः[2] । अभिमुखः[3] । इन्द्रेण[4] । देवैश्च[5] । समानं[6] रथम्[7] । त्वरमाणैः[8] । अस्माकम् । इदं बर्हिः[9] । शोभनपुत्रा[10] । अदितिश्च[11] । आस्ताम्[12] । स्वाहाकारेण । देवाश्च । अमृताः[13] । मादयन्ताम्[14] ।

## III. 5.

प्रत्य॒ग्निरु॒षस॒श्चेकि॑ता॒नोऽबो॑धि॒ विप्रः॑ पद॒वीः क॑वी॒नाम् ।
पृ॒थु॒पाजा॑ देव॒यद्भिः॒ समि॒द्धोऽप॒ द्वारा॒ तम॑सो॒ वह्नि॑रावः ॥ १ ॥

प्रत्यग्निः[15] । उषःसु[16] । ज्ञायमानः[17] । अग्निः । प्रबुद्ध[18] आसीत् । मेधावी । कवीनाम्[19] । पदानि धाता[20] । पृथुबलः[21] । देवानिच्छद्भिः[22] । समिद्धः[23] सः । तमसः[24] । द्वाराणि[25], यैस्तमांसि प्रविशन्ति तानि । अपावृतवान्[26] । वह्निः ।

---

१. देवतारूपेणागच्छ Sy.
२. समिध्यमानो ज्वालारूपेण दीप्यमानस्त्वम् Sy.
३. अस्मदभिमुखम् Sy.
४. अस्माकं यज्ञमिन्द्रेण Sy.
५. दे इवैः P. ६. समान P.
७. यथा P. सरथं समानरथं यथा तथाऽयाहि Sy.
८. ०माने P.
९. यज्ञम् Sy.
१०. सुपुत्रा Sy.
११. आदिभिश्च M. आदिभिश्व P. अदितिरपि Sy.
१२. स्तां P. अध्यास्ताम् Sy.
१३. नित्याः Sy.
१४. मादयन्तः P. तृप्यन्तु Sy.
१५. 'प्रत्यग्निरुषसः' इत्येकादशर्चं पञ्चमं सूक्तं वैश्वामित्रं त्रैष्टुभमाग्नेयम्। अत्रानुक्रमणिका—'प्रत्यग्निः' (KSA. 16. 5. p. 15.) इति। प्रातरनुवाकाश्विनशस्त्रयोरिदमादिसूक्तत्रयस्य विनियोगः। सूत्रितं च—'प्रत्यग्निरुषस इति त्रीणि' (ASS. 4. 13.) इति। 'इळामग्ने' इत्यस्योक्तो विनियोगः Sy.
१६. उषसस्सु P.
१७. जानन् Sy.
१८. प्रतिबुध्यते Sy.
१९. क्रान्तप्रज्ञाम् Sy.
२०. P. reads नि धानाः for पदानि धाता ॥ मार्गान् गच्छन् Sy.
२१. पृथुतेजाः Sy.
२२. ०नियच्छ० M. देवकामैः Sy.
२३. सम्यग्दीप्तः सः Sy.
२४. ०मसे P. अज्ञानस्य Sy.
२५. आगमनद्वाराणि Sy.
२६. अपावृणोति Sy.

प्रेद्ध्ग्निर्वावृधे स्तोमेभिर्गीर्भिः स्तोतॄणां नमस्य उक्थैः ।
पूर्वीर्ऋतस्य संदृशश्चकानः सं दूतो अद्यौदुषसो विरोके ॥ २ ॥

प्रेद्धाग्निः । प्र । एव[1] । अग्निः । वबृधे[2] । स्तोमैः[3] । ऋग्भिः[4] । उक्थैश्च[5] । स्तोतॄणाम्[6] । नमस्कार्यः[7] । दीप्यमानः[8] । अहर्मुखस्थाः[9] । सत्यस्य[10] । सन्दृष्टीः[11] । उषसो दूतः[12] सः[13] । विद्योतयति[14] । उषसाम् । प्रादुर्भावे[15] ।[16]

अधाय्यग्निर्मानुषीषु विक्ष्व१पां गर्भो मित्र ऋतेन साधन् ।
आ हर्यतो यजतः सान्वस्थादभूदु विप्रो हव्यो मतीनाम् ॥ ३ ॥

अधायि । निहितः[17] । अग्निः । मानुषीषु[18] । प्रजासु । अपाम्[19] । पुत्रः । मित्रभूतः[20] । सत्येन । अभिलषितं[21] साधयन् । आतिष्ठति[22] । स्पृहणीयः । यष्टव्यः[23] । समुच्छ्रितामुत्तरवेदिम्[24] । अभवत्[25] । च[26] । मेधावी[27] । स्तुतीनाम्[28] । आह्वातव्यः[29] ।

---

१. इत्पूरणः Sy.
२. वृद्धिं प्राप्नोति Sy.
३. स्तोतॄणां स्तोत्रैः Sy.
४. वाग्भिः Sy.
५. शस्त्रैश्च Sy.
६. स्तोतॄन् P.
७. ०स्कारैर्यः P.
पूज्यो यः Sy.
८. कामयमानः सन् Sy.
९. बह्वीः Sy.
१०. आदित्यस्य Sy.
११. सदृष्टिः D., P. दीप्तीः Sy.
१२. Omitted in M.
१३. सत् M. देवानां दूतः सः Sy.
१४. द्योत० P. द्योतते Sy.
१५. विरोचने प्रातःकाले Sy.
१६. VM. ignores उ ॥ उ पूरणः Sy.
१७. देवैराहितः Sy.
१८. मास्तीषु P.
मनोः सम्बन्धिनीषु Sy.
१९. अवाङ् P.
२०. यजमानानां मित्रभूतः Sy.
२१. कामान् Sy.
२२. अध्यतिष्ठत् Sy.
२३. ०ष्टव्य P.
२४. ०तावुत्त० P. उच्छ्रितं धिष्ण्यमुत्तरवेद्याख्यम् Sy.
२५. अभूत् Sy.
२६. उ पूरणः Sy.
२७. प्राज्ञोऽग्निः Sy.
२८. स्तुस्तो० M. स्तोतॄणाम् Sy.
२९. स्तुत्यः Sy.

मित्रो अग्निर्भवति यत्समिद्धो मित्रो होता वरुणो जातवेदाः ।
मित्रो अध्वर्युरिषिरो दमूना मित्रः सिन्धूनामुत पर्वतानाम् ॥ ४ ॥

[1] मित्रो अग्निः [2] । सखा [3] । भवति । अग्निः । यदा । समिद्धो भवति तदा । मित्रो भवति । होता । वारकः [4] । जातप्रज्ञः । तथा मित्रो भवति । अध्वरमिच्छन् [5] । एषणशीलः [6] । दममनाः [7] सोऽयम् । वर्षणान्नदीनाम् । शिलोच्चयानाम् [8] । अपि । मित्र [9] एव भवति ।

पाति प्रियं रिपो अग्रं पदं वेः पाति यह्वश्चरणं सूर्यस्य ।
पाति नाभा सप्तशीर्षाणमग्निः पाति देवानामुपमादमृष्वः ॥ ५ ॥

पाति [10] । रक्षति । शब्दयतः पक्षिणः [11] । अभिमुखम् [12] । प्रियम् । पदम् [13] । अन्तरिक्षम् [14] । रक्षति च । सूर्यस्य । स्थानम् [15] । दिवम् [16] । रक्षति [17] च । उत्तरवेद्यां [18] वर्तमानः । सप्तशिष्य-शिरस्कं यज्ञम् [19] । रक्षति [17] च । देवानाम् । उपमादयितारं यज्ञम् [20] । दर्शनीयः [21] ।

ऋभुश्चक्र ईड्यं चारु नाम विश्वानि देवो वयुनानि विद्वान्
ससस्य चर्म घृतवत्पदं वेस्तदिदग्नी रक्षत्यप्रयुच्छन् ॥ ६ ॥

ऋभुश्चक्रे । दीप्तम् [22] । करोति । स्तोतव्यम् [23] । कल्याणम् [24] । उदकम् [25] । विश्वानि [26] ।

---

१. इयमृक् अग्निं सर्वात्मकत्वेन स्तौति Sy.
२. ०त्रोऽग्निः M.
३. सुखा M. and P. सूर्यः Sy.
४. वरुणो भवति Sy.
५. अध्वर्युर्भवति Sy.
६. प्रेरको वायुर्भवति Sy.
७. दानमना दान्तमना वा Sy.
८. पर्वतानां च Sy.
९. सहायो भवति Sy. १०. पति M.
११. वेर्गन्त्र्याः सर्वव्याप्तायाः Sy.
१२. प्रथमम् Sy.
१३. वदम् M. स्थानम् Sy.
१४. It seems to be the explanation of रिपः ॥ रिपो भूम्याः Sy. रिप इति पृथिवीनाम Ngh. 1. 1.
१५. चरत्यत्रेति चरणमन्तरिक्षम् Sy.
१६. It seems to be the explanation of यह्वः ॥ यह्वो महान् Sy.
१७. पाति Sy.
१८. नाभावन्तरिक्षस्य मध्ये Sy.
१९. सप्तशीर्षाणं मरुद्गणम् Sy.
२०. यज्ञ P. उपमादकं यज्ञम् Sy.
२१. VM. ignores अग्निः ।
२२. महान् Sy. २३. स्तुत्यम् Sy.
२४. मनोज्ञम् Sy.
२५. नाम जलम् Sy. बर्हिः । नाम । सर्पिः । इत्युदकनामानि (Ngh. 1. 12.)
२६. सर्वाणि Sy.

देव[१] ! प्रज्ञानानि[२] । विद्वान्[३] । स्वपतः[४] स्थावरस्य । वेगच्छतो[५] जङ्गमस्य[६] । चरणसाधनम्[७] । उदकवत्[८] । अन्तरिक्षाख्यं स्थानम् । तत्[९] । एव[१०] । रक्षति[११] । अप्रमाद्यन् । अग्निः ।

**आ योनिम॒ग्निर्घृ॒तव॑न्तमस्थात्पृ॒थुप्र॑गाणमु॒शन्त॑मुशा॒नः ।**
**दीद्या॑नः॒ शुचि॑र्ऋ॒ष्वः पा॑व॒कः पुनः॑पुनर्मा॒तरा॒ नव्य॑सी कः ॥ ७ ॥**

आ योनिम्[१२] । आतिष्ठति[१३] । स्थानम्[१४] । अग्निः । उदकवन्तम्[१५] । पृथुप्रगमनं[१६] विस्तीर्णावकाशम् । कामयमानम् । कामयमानः । दीप्यमानः[१७] । शोचमानः[१८] । दर्शनीयः[१९] । शोधकः[२०] । पुनःपुनः । द्यावापृथिवी[२१] । नवतरे । करोति, वृष्ट्यौषधिभिश्च[२२] ।

**स॒द्यो जा॒त ओष॑धीभिर्ववक्षे॒ यदी॒ वर्ध॑न्ति प्र॒स्वो॑ घृ॒तेन॑ ।**
**आप॑इव प्र॒वता॒ शुम्भ॑माना उरु॒ष्यद॒ग्निः पि॒त्रोरु॒पस्थे॑ ॥ ८ ॥**

सद्यो जातः । सद्य एव । जातोऽग्निः । ओषधीभिः । उह्यते । यदि[२३] । वृद्धा[२४] भवन्ति । ओषधयः[२५] । उदकेन । आप[२६] इव । प्रवणवता[२७] मार्गेण । शोभमानाः[२८], निम्ने[२९] ह्योषधयो वर्धन्ते[३०] । रक्षति[३१] । अग्निः । द्यावापृथिव्योः[३२] । उत्सङ्गे[३३] ।

---

१. VM. takes **देवः** Nom. Sing. as a Voc. **अग्निः** Sy.
२. **ज्ञातव्यानि पदार्थानि ?** Sy.
३. **जानन्** Sy.
४. **स्वपतः शान्तज्वालस्याप्यग्नेः** Sy.
५. **वेग०** P. **वेव्याप्तस्य** Sy.
६. **०तो यं ज०** P.
७. **चर्म रूपम्** Sy.
८. **घृतवद्दीप्तिमद्भवति** Sy.
९. **तज्जलम्** Sy.
१०. **इत्यादपूरणः** Sy.
११. **पालयति** Sy.
१२. **योनिः** M. १३. **०ष्ठन्ति** P.
१४. **स्थानमायतनम्** Sy.
१५. **दीप्तिमन्तम्** Sy.
१६. **पृथुगीतिम्** Sy. १७. **द्योतमानः** Sy.
१८. **दर्शनीयः शुद्धो वा** Sy.
१९. **महान्** Sy.
२०. **अन्येषां शोधयिताग्निः** Sy.
२१. **मातरौ द्यावापृथिव्यौ** Sy.
२२. **०षधीभि०** P.
२३. **यदा** Sy.
२४. **वर्धयन्ति** Sy.
२५. **फलानि प्रसुवानाः** Sy.
२६. **आव इ०** M.
२७. **तदा प्रवणेन मार्गेण गच्छन्त्यः** Sy.
२८. **ता ओषध्यः** Sy.
२९. **निम्ने** M.
३०. **वर्धयन्ति** Sy.
३१. **अस्मान् रक्षतु** Sy.
३२. **०थिवी** P.
३३. **मध्यप्रदेशे वर्धमानोऽग्निः** Sy.

उदु ष्टुतः समिधा यह्वो अद्यौद्वर्ष्मन्दिवो अधि नाभा पृथिव्याः ।
मित्रो अग्निरीड्यो मातरिश्वा दूतो वक्षद्यजथाय देवान् ॥ ९ ॥

उदु ष्टुतः । उद्योतते[1] । स्तुतः[2] । समिधा[3] । महान् । दिवः[4] । वर्ष्मन्नन्तरिक्षे[5] । पृथिव्याश्च[6] । नाभावुत्तरवेद्याम्[7] । सखा[8] । अग्निः । स्तोतव्यः[9] । अन्तरिक्षे[10] वर्तमानः । वहति[11] । यज्ञाय[12] । देवान् ।[13]

उदस्तम्भीत्समिधा नाकमृष्वो३ऽग्निर्भवन्नुत्तमो रोचनानाम् ।
यदी भृगुभ्यः परि मातरिश्वा गुहा सन्तं हव्यवाहं समीधे ॥ १० ॥

उदस्तम्भीत् । उदस्तभ्नात्[14] । समिन्धनेन[15] । द्युलोकम्[16] । दर्शनीयः[17] । अग्निः । दीप्यमानानाम्[18] । उत्तमः[19] । भवन् । यदि[20] । भृगुभ्योऽभ्युदयार्थम्[21] । वायुः । गुहायाम् । सन्तम् । आहृत्य परिसमीधे[22], 'रातिं[23] भरद् भृगवे मातरिश्वा' इति[24] मन्त्रः ।[25]

---

१. उद्द्योतते is suggested for उद्योतते ।

२. अस्माभिः स्तुतः Sy.

३. समिन्धनेन Sy.

४. अन्तरिक्षस्य Sy.

५. वष्ठन्न० M. वर्ष्मन् वर्ष्मणि रूपे Sy.

६. उत्तरवेद्याः Sy.

७. मध्यप्रदेशे स्थितः सन् Sy.

८. सर्वेषां मित्रभूतः Sy.

९. स्तुत्यः Sy.

१०. मातर्यन्तरिक्षे श्वसिति प्राणिति सूर्यरूपेण चेष्टत इति मातरिश्वा । अथवा मातर्यरण्यां श्वसिति निवसतीति मातरिश्वा Sy. मातर्यन्तरिक्षे श्वसिति । मातर्याश्वनितीति वा N. 7. 26.

११. आवहतु Sy.

१२. यज्ञियान् यज्ञियान् P.

१३. VM. ignores उ । अधि । आ and दूतः ॥ उ इति पादपूरणः । दूतो देवानां दूतः सन् Sy.

१४. उत्तम्भात् M. and P.

१५. तेजसा Sy.

१६. स्वर्गम् Sy.

१७. महान् Sy.

१८. शोभनानां तेजसां मध्ये Sy.

१९. उत्कृष्टतमः Sy.

२०. यभि M. यदा Sy.

२१. ०यार्त्थ० P. आदित्यस्य रश्मिभ्यः Sy.

२२. ०मिधे M. ०मिन्धे P. यदा समीधे समैन्ध तदा नाकमस्तभ्नादिति सम्बन्धः Sy.

२३. राति P.

२४. RV. 1. 60. 1[d].

२५. VM. ignores हव्यवाहम् ॥ हव्यवाहं हव्यानां वोढारमग्निम् Sy.

इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ ११ ॥

[ इळामग्ने । ][1]

III. 6.

प्र कारवो मनना वच्यमाना देवद्रीचीं नयत देवयन्तः ।
दक्षिणावाड्वाजिनी प्राच्येति हविर्भरन्त्यग्नये घृताची ॥ १ ॥

प्र[2] कारवः । प्रणयत[3] । हे स्तोतारः[4] ! प्रज्ञानेन[5] । उच्यमानाः[6] । देवानञ्चतीम्[7] । देवान् कामयमाना[8] यूयमपरेण । आहवनीयं दक्षिणोह्यमाना[9] । स्रुक्[10] । अध्वर्युभिर्ह्रियमाणा प्राची[11] । गच्छति । हविः । भरन्ती[12] । अग्नये[13] । घृतमञ्चती[14], यूयमपि तथानयतेति ।

---

१. The *pratīka* is supplied by the Editor. Another and probably a later hand has written the *pratīka* in the ms. M., in which the word त्रुटितम् is also added in the same later hand.

The stanza has already been explained. See RV. III. 1. 23.

२. 'प्र कारवः' इत्येकादशर्चं षष्ठं सूक्तं वैश्वामित्रमाग्नेयम् । 'प्र कारवः' इत्यनुक्रान्तत्वात् (KSA. 16. 6. p. 15.)। प्रातरनुवाकाश्विनशस्त्रयोः सूक्तविनियोगः पूर्वसूक्त एव 'प्रत्यग्निरुषसस्त्रीणि' (ASS. 4. 13.) इत्यनेनोक्तः । आग्नाग्नेये पशौ हविषो याज्या । सूत्रितं च— 'प्र कारवो मनना वच्यमाना एका चेतत्सरस्वती नदीनाम्' (ASS. 3. 7.) इति । 'ऐभिरग्ने' इति पात्नीवतग्रहस्य याज्या । सूत्रितं च—'आग्नीध्रः पात्नीवतस्य यजत्यैभिरग्ने सरथं याह्यर्वाङिति' (ASS. 5. 19.) इति Sy.

३. प्रकर्षेण नयत । प्रापयत Sy.

४. हे कर्तारः ! Sy.

५. मननेन मन्त्रेण Sy.

६. प्रेर्यमाणाः सन्तः Sy.

७. P. repeats देवानञ्चतीम् ॥ अञ्चन्तीम् is suggested for अञ्चतीम् ॥ देवानञ्चन्तीं स्रुचम् Sy.

८. P. adds देवान् after कामयमानाः ॥ देवकामा यूयम् Sy.

९. आहवनीयस्य दक्षिणत उह्यमाना Sy.

१०. It seems to be the explanation of वाजिनी । If स्रुक् is not the explanation of वाजिनी then VM. ignores वाजिनी ॥ वाजिनी अन्नवती Sy.

११. प्रची P. प्रागग्रा Sy.

१२. भिर० P. धारयन्ती Sy.

१३. अग्नयः P. अग्न्यर्थम् Sy.

१४. ०ञ्चति M. अञ्चन्ती is suggested for अञ्चती ॥ घृतेनाक्ता स्रुक् Sy.

आ रोदसी अपृणा जायमान उत प्र रिक्था अध नु प्रयज्यो ।
दिवश्चिदग्ने महिना पृथिव्या वच्यन्तां ते वह्नयः सप्तजिह्वाः ॥ २ ॥

आ रोदसी[1] । प्रादुर्भवन्[2] । द्यावापृथिव्यौ । आपूरितवानसि[3] । अपि[4] च । प्ररिक्तवानसि[5] । अनन्तरम् । एवं[6] । प्रकर्षेण यष्टव्यं[7] ! द्यावापृथिव्योरुभयोः[8] । अपि । स्तूयन्ताम्[9] । महत्त्वेन[10] । ते[11] स्वभूताः । बोढारोऽग्नयः[12] । सप्तभिर्[13]जिह्वाभिः[14] कालीकरालीत्यादिभिर्युक्ताः[15] ।

द्यौश्च त्वा पृथिवी यज्ञियासो नि होतारं सादयन्ते दमाय ।
यदी विशो मानुषीर्देवयन्तीः प्रयस्वतीरीळते शुक्रमर्चिः ॥ ३ ॥

द्यौश्च त्वा । द्यावापृथिव्यौ[16] । देवाः[17] । च । होतारम् । त्वां[18] । निषादयन्ते[19] । यज्ञाय[20] । यदि[21] । मानुष्यः[22] । प्रजाम्[23] । देवानिच्छन्त्यः[24] । हविष्मत्यः । स्तुवन्ति । तव दीप्यमानम्[25] । तेजस[26]स्तदानीं निषादयन्ति ।

---

१. हे अग्ने ! Sy., BB.
२. प्रातर्भ० M. P. repeats प्रादुर्भवन् ॥
जायमानस्त्वम् Sy.
जायमान एव BB.
३. आपूरयः Sy. आपूरयसि BB.
४. किञ्च Sy.
५. अतिरिक्तश्चासि । अनेन वह्नेरतिशय उक्तः Sy.
६. नु पूरणः Sy.
७. यष्टव्यं M., D.
८. दिवश्चान्तरिक्षात्पृथिव्याश्च Sy.
९. ०यन्ता P. वच्यन्ताम् Sy.
१०. महतेन M. महिम्ना Sy.
११. एवंविधस्य तव Sy.
१२. अग्नयोंऽशभूता वह्नय आहवनीयादयः Sy.
१३. सप्तजिह्वात्मकाः Sy.
१४. ०ह्वाभि P.
१५. VM. ignores अग्ने ॥
This stanza=TS. 1. 5. 11. 2.
१६. द्यौश्चान्तरिक्षं पृथिवी च Sy.
१७. यज्ञार्हा देवाश्च Sy.
१८. त्वाम् Sy.
१९. ०यन्ते M. P. reads निषादयन्तो for निषादयन्ते and adds after it सन्तरमेव प्रकर्षेण यष्टव्य द्यावापृथिव्योरुभयोरपि । The additional passage resembles with the commentary on RV. 3. 6. 2.
उपशमयन्ति Sy.
२०. दमाय दमो यज्ञस्तस्मा अर्थम् Sy.
२१. यदा Sy.
२२. मानुषीः D. मनुष्यः M.
मनोः सम्बन्धिन्यः Sy.
२३. प्रभा P. प्रजाः is suggested for प्रजाम् ॥
प्रजा होतारः Sy.
२४. ०च्छत्यः P. देवकामाः Sy.
२५. दीप्तम् Sy.
२६. तेजः is suggested for तेजसः ।

महान्त्सधस्थे ध्रुव आ निषत्तोऽन्तर्द्यावा माहिने हर्यमाणः ।
आस्क्रे सपत्नी अजरे अमृक्ते सबर्दुघे उरुगायस्य धेनू ॥ ४ ॥

महान्त्सधस्थे[1] । महान्[2] । अस्मिन्[3] लोके । निश्चलः[4] । आनिषण्णः[5] । अन्तः[6] । द्यावापृथिवी । महत्यौ[7] । गच्छन्भवति[8] । द्यावापृथिव्यावास्कन्दनशीले[9] । समानपतिके[10] । जरावर्जिते[11] । शत्रुभिरपरिमृष्टे[12] द्यावापृथिव्यौ । विस्तीर्णगमनस्याग्नेः[13] । अमृतस्य दोग्ध्र्यौ[14] भवतः[15] ।

व्रता ते अग्ने महतो महानि तव क्रत्वा रोदसी आ ततन्थ ।
त्वं दूतो अभवो जायमानस्त्वं नेता वृषभ चर्षणीनाम् ॥ ५ ॥

व्रता ते । व्रतानि[16] । ते[17] । अग्ने ! महतः[18] । महान्ति[19] । तव । प्रज्ञानेन[20] । त्वम् । द्यावापृथिव्यौ । आततन्थ[21] । त्वम् । दूतः । भवसि[22] । जायमानः । प्रणेता[23] च । मनुष्याणाम्[24] ।[25]

---

१. ०हान्त्स० M. and P.
२. अधिकः Sy.
३. स्वकीये स्थाने Sy.
४. अचलः सन् Sy.
५. मानि० P. निषण्णो भवति Sy.
६. द्युभूम्योर्मध्ये Sy.
७. ०हत्यो P. महिम्ना युक्ते Sy.
८. हर्यमाणो यजमानादिभिः काम्यमानः, यद्वा यजमानाय धनं कामयमानोऽग्निः Sy.
९. आक्रमणशीले Sy.
१०. समान एकः सूर्यः पतिर्ययोस्ते सपत्न्यौ Sy.
११. जरारहिते Sy.
१२. शत्रुभिपरिमृष्टे P. अन्येनाहिंसिते Sy.
१३. गमस्या० P. पृथुगमनस्याधिकस्तुतेर्वाग्नेः Sy.
१४. सबरित्यमृतमुदकम् । तस्य दोग्ध्र्यौ द्यावापृथिव्यौ Sy.
१५. VM. ignores धेनू ॥ धेनू प्रीणयित्र्यौ Sy.
१६. त्वत्सम्बन्धीनि कर्माणि Sy.
१७. तव Sy.
१८. महत्रः P. सर्वोत्कृष्टस्य Sy.
१९. महान्ति भवन्ति Sy.
२०. क्रतुना प्रकाशेन Sy.
२१. विस्तृतवानसि Sy.
२२. भव Sy.
२३. फलप्रापकोऽसि Sy.
२४. यजमानानाम् Sy.
२५. VM. ignores वृषभ ॥ हे वर्षणशील ! त्वम् Sy.

ऋतस्यं वा केशिना योग्याभिर्घृतस्नुवा रोहिता धुरि धिष्व ।
अथा वह देवान्देव विश्वान्त्स्वध्वरा कृणुहि जातवेदः ॥ ६ ॥

ऋतस्य वा । समुच्चार्थीयो[1] वाशब्दः । यज्ञं प्रत्यागमनार्थम्[2] । प्रशस्तकेशौ[3] । रोहितवर्णौ[4] । घृतस्राविणावश्विनौ[5] । योक्तृ[6]रज्जुभिः[7] । स्वरथस्य धुरि । नियोजय[8] च[9] । अथ[10] । आवह च । देवान्[11] । देव ! सर्वान् । सुयज्ञांश्च[12] । कुरु । जातवेदः[13] !

दिवश्चिदा ते रुचयन्त रोका उषो विभातीरनु भासि पूर्वीः ।
अपो यदग्न उशधग्वनेषु होतुर्मन्द्रस्य पनयन्त देवाः ॥ ७ ॥

दिवश्चित्[14] । दीप्तस्य[15] । तव । आभिमुख्येन दीप्यन्ते[16] । रश्मयः[17] । उषसश्च । व्युच्छन्तीः[18] । अहर्मुखस्थाः[19] । यथोषसो विभान्ति[20] तथा दीप्यसे । यदा[21] । त्वम्[22] । प्रियदाहः[23] सन् । अरण्येषु । आप्नोषि[24] । यदा वा होतुः[25] । मन्द्रस्य[26] । स्तोत्रं[27] कुर्वन्ति । देवाः[28] ।[29]

---

१. ०च्चार्त्थी० P. समुच्चयार्थीयो is suggested for समुच्चार्थीयो ॥ वाशब्दश्चार्थे Sy.
२. प्रज्ञागमनार्त्थं P.
३. प्रशस्तकेशवन्तौ Sy.
४. रोहितावश्वौ Sy.
५. घृतं क्षरन्तौ Sy.
६. योक्त्रर० M. योजनसाधनभूताभिः Sy.
७. ०रज्जु P. रज्जुभिर्युक्तौ Sy.
८. धेहि योजयेत्यर्थः Sy.
९. Omitted in P.
१०. अनन्तरम् Sy.
११. देवा ते अग्ने महतो महान्ति तव P. The additional passage is a fragment of the commentary on RV. 3. 6. 5. ॥ देवान् रथे समारोप्य Sy.
१२. ०यज्ञांश्च P. तान् स्वध्वरान् शोभनाध्वरान् Sy.
१३. जातं वदः M. हे जातवेदः ! Sy.
१४. दिवश्चित् सूर्यादपि Sy.
१५. त्वदीयाः Sy.
१६. आरोचन्ते Sy.
१७. दीप्तयः Sy.
१८. छन्तीः M. विशेषेण भान्तीः प्रकाशमानाः Sy.
१९. It seems to be the explanation of पूर्वीः ॥ पूर्वीः पुराणीः Sy.
२०. हान्ति M.
२१. यथा M. and P.
२२. त्वत् M. त्वम् refers to अग्ने ॥ हे अग्ने ! Sy.
२३. उशधक् कामयमानो दहंश्च वर्तसे Sy.
२४. It seems to be the explanation of अपः ।
२५. होतु P. होतुस्तव रोकान् Sy.
२६. स्तुत्यस्य Sy.
२७. स्तुवन्ति Sy.
२८. स्तोतारः Sy.
२९. VM. ignores चित्.

उरौ वा ये अन्तरिक्षे मदन्ति दिवो वा ये रोचने सन्ति देवाः ।
ऊमा वा ये सुहवासो यजत्रा आयेमिरे रथ्यो अग्ने अश्वाः ॥ ८ ॥

उरौ वा । विस्तीर्णे । वा । अन्तरिक्षे । ये । देवाः । मदन्ति[1] वायुप्रभृतयः । दिवं[2] आदित्यस्य । रोचने[3] दिवि । वा । ये[4] । भवन्ति[5], अश्विप्रभृतयः । रक्षकाः[6] । ये[7] । स्वाह्वानाः । पार्थिवा देवाः[8] । आनियच्छन्ति[9] । रथिनः[10] । अग्ने[11] ! वडवाः[12], उत्तरत्र सम्बन्धः[13] ।[14]

ऐभिरग्ने सरथं याह्यर्वाङ् नानारथं वा विभवो ह्यश्वाः ।
पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमा वह मादयस्व ॥ ९ ॥

ऐभिः[15] । एभिः[16] सर्वैर्देवैः । समानरथम्[17] । याहि[18] । अभिमुखः[19] । अग्ने ! अथवा । नानारथं[20] वा । विभवः[21] । हि[22] । तवाश्वा[23] भवन्ति । तथा[24] । त्रयस्त्रिंशद्देवान्[25] । पत्नी-संयुक्तान्[26] । इदं हविः[27] प्रति । आवह[28] । मादयस्व[29] च[30] ।

---

१. हृष्यन्ति Sy.
२. सूर्यस्य Sy.
३. प्रकाशने आलोके Sy.
४. देवाः Sy.
५. सन्ति Sy.
६. रक्षताः M. ऊमा ऊमसंज्ञकाः पितरः सन्ति Sy.
७. स्वना M. शोभनाह्वानाः Sy.
८. पार्त्विº P. यष्टव्याः Sy.
९. आयच्छन्ति Sy.
१०. रथिनस्तव ये Sy.
११. अग्ने M.
१२. अश्वाः सन्ति Sy.
१३. P. omits ºरत्र सम्बº ॥ तैः सर्वैः सार्धमायाहीत्युत्तरयर्चा सम्बन्धः Sy.
१४. VM. ignores वा of the third verse.
१५. एभिः M.
१६. पूर्वोक्तैर्देवगणैः सार्धम् Sy.
१७. ºरथ M.
१८. योहि M. आयाहि Sy.
१९. अस्मदभिमुखम् Sy.
२०. त्वद्रथं समारोप्य Sy.
२१. बहवः M. and P. प्रभवः समर्थाः Sy.
२२. हिः प्रसिद्धौ Sy.
२३. तवा P. यतः कारणात्तेऽश्वाः Sy.
२४. P. adds तां after तवा
२५. ºशयत् P. त्रयस्त्रिशतम् Sy.
२६. पत्नीभिः सहितान् Sy.
२७. बलार्थमन्नार्थं वा सोममुद्दिश्य आवह Sy.
२८. आहवन P.
२९. मादयस्व सोमेनेति शेषः Sy.
३०. VM. ignores च ।

स होता यस्य रोदसी चिदुर्वी यज्ञंयज्ञमभि वृधे गृणीतः ।
प्राची अध्वरेव तस्थतुः सुमेके ऋतावरी ऋतजातस्य सत्ये ॥ १० ॥

स होता । स[1] त्वम् । होता[2] । यस्य[3] तव शस्त्रम् । उर्वी[4] । द्यावापृथिव्यौ । अभिगृणीतः[5] । यज्ञे[6]यज्ञे[7] । प्रोत्साहार्थम्[8] । ते[9] द्यावापृथिव्यौ त्वयि शंसत्य[10]भिमुखौ[11] । अध्वर्यू[12] इव[13] । तिष्ठतः । शोभनपरिमाणे[14] । यज्ञवत्यौ[15] । यज्ञजातस्य[16] । सत्यभूते[17] ।[18]

इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ ११ ॥

[ इळामग्ने । ][19]

ऋगर्थ[20]दीपिका सेयं[21] द्वितीयस्त्वायमष्टकः ।
चक्रे श्रीवेङ्कटार्यस्य तनयो माधवाह्वयः ॥१॥
[शाकल्ययष्ट[22] ऋग्वेदे द्वितीयस्याष्टकस्य यत् ।
भाष्यं तन्माधवीयाख्यं लिखितं देवशर्मणा ॥२॥][23]

---

१. स एव Sy.
२. होता भवति Sy.
३. अग्नेः Sy.
४. विस्तीर्णे Sy.
५. प्रशंसतः Sy.
६. यज्ञो M.
७. यज्ञ P. सर्वं यज्ञम् Sy.
८. ०हार्त्थम् P. समृद्धये Sy.
९. अन्ते P.
१०. ०सन्त्य० P.
११. ०मुखाभव् M. प्राची अनुकूले Sy.
१२. अध्वराविव । यज्ञाविव Sy.
१३. Omitted in P.
१४. ०रिपाणे P. सुरूपे Sy.
१५. ०वत्यो M. उदकवत्यौ Sy.
१६. जातसत्यस्य Sy.
१७. त्यभू० M. सत्यस्वरूपे Sy.
१८. VM. ignores चित् ॥ अपि Sy.
१९. The *pratīka* is supplied by the Editor. M. has it, but written in a different hand.
The stanza has already been explained. See III. 1.23.
२०. ०गर्त्थं० P.
२१. चेयं P.
२२. ०वृष्ट is suggested for यष्ट.
२३. M. does not contain stanza no. 2.

## ॥ अथ तृ[1]तीयाष्टके प्रथमो[2]ऽध्यायः ॥

तृतीयोऽयाष्टकस्तस्मिन्नध्यायादिषु वक्ष्यते ।

यद्वक्तव्यं निपातेषु ब्राह्मणैश्छान्दसैरिह ॥ १ ॥

इयन्त[3] इति संख्यानं निपातानां न शक्यते ।

उपसर्गा[4]स्तु विज्ञेयाः क्रियायोगेषु विंशतिः ॥ २ ॥

निपाताः खलु कामं[5] वै पृथङ् नाच्छा[6] सचा पुनः ।

शश्वन्नक्तं दिवा[7] माकि[8]र्यथैदिति सदं[9] मुहुः ॥ ३ ॥

आद्[10]याथमिथू[11] शीभं[12] वृथा सं[13] ज्योगृ[14]थक्पृथक्[15] ।

हिरुक्[16] श्रोषदरं[17] बट्सु[18] किल[19] हन्त[20] नहिन्वहैः[21] ॥ ४ ॥

अथो[22] यदि नमस्तेऽमी चत्वारिंशदुदाहृताः ।

आद्युदात्ताश्च सर्वेऽमी सन्त्यन्येऽपि च तादृशाः ॥ ५ ॥

---

१. तृीया० M.

२. P. omits the line. It reads instead श्रीगणपतये नमः ।

३. इनन्त M.

४. Cf. 'उपसर्गाः क्रियायोगे' Pa. I.4.59.

५. यातं P.

६. नाच्चु P.

७. दि P.

८. माकिय्य० P.

९. सदा P.

१०. था P.

११. मिथु P., D.

१२. ०भम P,

१३. शज्यो० M. इज्यो P.

१४. ०गृवक् M. ०गृहवत् P. ऋधक् is suggested for ऋपक् ।

१५. वृथक् D.

१६. हिरुश्रवद० M.
भिरु पूरवद० P.

१७. श्रौषदरं is suggested for श्रोष-दरम् ।

१८. ०रंबशु M., P.

१९. कल M.

२०. हन्ते M. हन्तन् P.

२१. हीन्वि० P.

२२. श्रज्जो M. श्रज्जो P.

नामेदा[1]शु वषट् स्वाहा नाना जोषं स्व[2]दन्तिक[3]म् ।

शनैस्सा[4]मि हि मा बत्ति माकीमा[5]कीं सना[6]ऽति तात् ॥६॥

भूयस्तूयं मृषा ह्य[7]: श्र[8]न्नर्की वस्तोः[9] षड्विंशतिः ।

श्रन्तोदात्ता[10]: निपातेषु न[11]नु नून[12]ं स्वयं पुरा ॥७॥

उतापि[13]रेव मद्रि[14]वत्या पश्चादेवममा तिरः ।

प्रातरु[15]च्चाञ्च सुष्ठ्व[16]द्धा कुवि[17]त्सद्य इह[18] मिथः ॥८॥

साकमारा[19]दहचिरम[20]न्तराशु सना[21]द्वते ।

श्रन्तरा स[22]नुतः स्वस्ति चना[23]रे[24]ऽध्यानुषक्पुन[25]ः ॥९॥

दोषा सायं चत्वारिंशत्[26] सन्ति चान्ये च तादृशाः ।

हि[27]ङ् सत्रा हिरु[28]क् परा[29]चैः शनकै[30]र्मिथुया त[31]था ॥१०॥

१. ०मेदास्वो M. मेदाशु P.
२. स्वदान्ति० M. स्वदन्ति० P.
३. ०कम P. ४. स्साहिम M.
५. ०त्रिमार्की M. ०त्रिमाकीमाकि P.
६. सनेमितत् M. and P.
७. ह्या श्र० M., P.
८. ०न्नर्वी M. ०न्नकि P.
९. ०स्तोष्मद्वि० M. ०स्तोर्षस्वि० P.
१०. निर्विसर्गः पाठो युक्तः ।
११. न P.
१२. नूनम P.
१३. ०ताविरे० M.
१४. माक्षि० M.
१५. ०च्चां M.
१६. सष्वद्धा P.
१७. त्तवित्सन्य M. स्वित्सस्य P.
१८. इवे M. उपे P.
१९. ०रात्सह M., P., R.
२०. विर० M.
२१. समावते M.
२२. ०नुत P.
२३. चरना० P.
२४. ०रेद्यषत् P.
२५. पुरः P.
२६. M. omits शत्
२७. हिन् M.
२८. हुरुक् D., M., R.
२९. प्राचैः M., P.
३०. ०कैमि० P.
३१. तुषु M. and P.

सस्वरीषाद[1]ना तेऽमी दश सन्ति तयाऽपरे ।

स्वःक्वेति[2] स्वरि[3]तौ वियाद्द्रष्ट[4]व्याश्च[5] तयाऽपरे ॥ ११॥

सीमुदुःस्वित्स्म[6]वा[7]हेवा[8] द्वादशैते चिर्दीघचै[9]ः ।

अमी च सर्वानुदात्ता द्रष्टव्याश्च तयापरे ॥ १२॥

ऋचां निरीक्षणादेते निपा[10]ताः शतमु[11]द्धृताः ।

त्रिंशच्च सूक्ष्मेकि[12]या समुद्धार्यास्तथाऽपरे ॥ १३॥

वाक्यार्थे[13]ष्वप्रवृ[14]त्तेषु निपाताश्चेदनन्विताः ।

ऋक्पादपूरणास्ते स्युरिति यास्कस्य दर्शनम्[15] ॥ १४॥

नवैकि[16]लनुनामायखल्विदा[17]दघसीमु[18]कम् ।

उतनू[19]नमिवे[20]द्धस्मचिद्धचाः[21] स्युरनर्थकाः ॥ १५॥

अन्येषां तु निपातानां पूरणत्वं न दृश्यते ।

नाद्यः पूरणाश्च स्युर्यदा वाक्येष्वनन्वि[22]ताः ॥ १६॥

---

१. ०स्वरोषं सना M., P., R.
२. स्वत्वेति P.
३. स्वरि० P.
४. ०द्याद्र० M. and P.
५. ०व्या च P.
६. M. omits दुः स्वित्. P. reads स सीमुदकमस्वित्समा ।
७. Omitted by P.
८. हे च M.
९. चिदीघेचं P.
१०. ०पातः P.
११. तारमु० P.
१२. सूक्ष्मेक्षिकया is suggested for सूक्ष्मेकिया ।
१३. ०क्यात्यें० P.
१४. ०ष्वप वृ० P.
१५. Cf. N. 1.9. 'अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति पदपूरणास्ते मिताक्षरेष्वनर्थकाः । कमीमिद्विति ।'
१६. न M., D.
१७. यत्विदा० P.
१८. ०मुखम् P.
१९. सून० P.
२०. ०मिवें घेस्म M. ०मिवेघेस्म P.
२१. ० द्वचा M., P.
२२. ष्वनिन्दिताः P.

अप्रवृत्ते[1]ऽपि वाक्यार्थे[2] ब्राह्मणेष्वपि नन्वमी ।
दृश्यन्ते यत्र[3] नापेक्षा[4] विद्यते[5] पादपूरणैः[6] ॥ १७॥

माधवस्तत्र[7] वदति स्फुटत्वोद्ग्रहणादिकम् ।
वाक्यार्थे[8] जनयन्त्येते[9] मन्त्रब्राह्मणयोरिति ॥ १८॥

स्फुटत्वोद्ग्रहणादिश्च क्वचित्सूक्ष्मः[10] क्वचित्स्फुटः ।
यत्र[11] स्फुटस्तदा[12] सार्थाः[13] सूक्ष्मे स्युः पूरणा इति ॥ १९॥

मधु ह स्म वा ऋषिभ्यस्त्रिभिः[14] स्फुटतरोऽभवत्[15] ।
तथैवोत वा घा स्यालाद्वहवः सन्ति तादृशाः ॥२०॥

उकारो विनि[16]ग्रहार्थ[17]स्तथाऽनेकत्र दर्शनात् ।
'तमु ष्टवाम यं गिरः[18]' 'तमु त्वा गोतमो गिरा[19]' ॥२१॥

'अयमु[20] ते[21] समतसि[22]' न विनि[23]ग्रहसम्भवः ।
'उदु ष्य देवः सविता[24]' पूरणस्तादृशेषु सः ॥२२॥

---

१. अपवृ० M., P.
२. ०क्यात्र्ये P.
३. यत् P.
४. ०पेक्ष P.
५. ०विद्याते P.
६. ०रणै P.
७. ०स्तत P.
८. वाक्येर्त्ये P.
९. ०यमन्त्यते P.
१०. सूक्ष्मैः P.
११. यत P.
१२. स्फुटास्त० M., R.
१३. सार्त्थ P.
१४. ०भ्यस्त्रि P.
१५. ०रो भवेत् P., R.
१६. विग्र० P.
१७. ०हार्त्थ० P.
१८. RV. VIII. 95.6.
१९. RV. I. 78.2.
२०. उयमु M.
२१. सतमसि M.
२२. RV. I. 30.4.
२३. विग्र० P.
२४. RV. II. 38. 1., VI. 71. 1., 4. and VII. 38.1.

एकारेण सदृश उकारोऽन्यत्र दृश्यते ।
मन्त्रेष्वेषु[1] तु तस्यार्थः[2] स्फुटत्वोद्ग्रहणादिकः ॥२३॥
एतावता पूरणत्वं नानर्थक्यादिति[3] स्थितिः ।
आदानन्तर्यवचनो[4] यथा 'आदहं[5] स्वधामनु'[6] ॥२४॥
'आत्सूर्यं' जनयन्द्यामुषासम्'[7] 'आदित्ते' हर्यता'[8][9] ।
'आदिद्धोतारं वृणते'[10] पूरणश्चापि विद्यते ॥२५॥
इदेत्कारसदृशः[11] 'स इद्भोजो[12] यो गृहवे'[13] ।
'स इद्देवेषु गच्छति'[14] दृश्यते[15] वाऽपि[16] पूरणः ॥२६॥
ईमिदंशब्दसदृश 'एमाशुमाशवे भर'[17] ।
'स ईं[18] पाहि[19] य ऋजीषी'[20] विद्यते चापि पूरणः ॥२७॥
उच्चावचेषु निपततामर्थेष्वेषां[21] यथायथम्[22] ।
हानोपादानविद्विप्रो[23] न मन्त्रार्थेषु[24] मुह्यति ॥२८॥

---

१. मतेष्व P. २. ०स्यार्त्थः P.

३. ०नर्त्थ्य० P.

४. नन्तस्य M. ०नं तस्य P.

५. यथेवेह P.

६. ०मनुः P. RV. I. 6.4. On account of giving the exact quotation, one syllable is too many in the fourth *pāda*.

७. RV. I. 32. 4.

८. अर्यं० P.

९. RV. VIII. 12. 25., 27.

१०. RV. I. 141. 6.

११. ०वतार० M.

१२. इत् भोजा P.

१३. RV. X. 117. 3.

१४. RV. I. 1. 4.

१५. नृत्यते M. वृस्यन्ते P.

१६. विपि P. १७. RV. I. 4. 7.

१८. ई M., P. १९. ई पोहि M.

२०. ऋजिषी M. ऋषि P. RV. VI. 17. 2.

२१. ०मर्त्वे ० P. One syllable is too many in the first *pāda*. Cf. N. 1.4.

२२. ०थावयम् P.

२३. ०नविद्धि० P.

२४. ०न्त्रार्त्थे० P.

## III. 7.

प्र य आरुः शितिपृष्ठस्य धासेरा मातरा विविशुः सप्त वाणीः ।
परिक्षिता पितरा सं चरेते प्र सर्स्राते दीर्घमायुः प्रयक्षे ॥ १ ॥

प्र[1] य[2] आरुः[3] ॥ विश्वामित्रः ॥ प्रगच्छन्ति[4] । ये[5] । नीलपृष्ठस्योदकस्य[6] । पातुरग्ने[7][8] रश्मयस्ते[9] । द्यां च[10] पृथिवीं च । आविशन्ति[11] । सप्त[12] च । गमनस्वभावा[13] नदीः[14], 'एकं[15] गर्भं[16] दधिरे सप्त वाणीः[17]' इति मन्त्रः[18] । तेनानेनाग्निना[19] द्यावापृथिवी[20] । परितो[21] वर्तमाने । सञ्चरेते[22], 'मही

---

१. 'सोमस्य' इत्यनुवाके द्वादश सूक्तानि । तत्र 'प्र य आरुः' इत्येकादशर्चं सप्तमं सूक्तम् । मण्डलद्रष्टा विश्वामित्र ऋषिः । अनुक्तत्वात्त्रिष्टुप् । मण्डलादिपरिभाषयाग्निर्देवता (Cf. KSA. 12. 12. p. 5.) । प्रातरनुवाकाश्विनशस्त्रयोः सूक्तत्रयस्य 'प्रत्यग्निरुषसस्त्रीणि' (ASS. 4. 13.) इति विनियोग उक्तः । तत्रेदं तृतीयं सूक्तम् Sy.

२. ये P. ३. Omitted in P.

४. प्रकर्षेणोद्गच्छन्ति । प्र—निपातत्वेनाद्युदात्तः । तस्य छन्दसि 'व्यवहिताश्च' इति आरुरित्यनेन सम्बन्धः । आरुः—'ऋ गतौ' । लिटयुसि रूपम् । यद्वृत्तयोगादनिघातः । प्रत्ययस्वरः Sy.

५. रश्मयः Sy.

६. ०स्याः कस्य P. शितिपृष्ठशब्दस्थक्प्रत्ययान्तोऽन्तोदात्तः । 'शितेर्नित्याबह्वज्बहुव्रीहावभसत्' (Pa. 6. 2. 138.) इत्युत्तरपदप्रकृतिस्वरत्वम् Sy.

७. ऋजीषा पा० M. सर्वस्य धारयितुरग्नेः । धासेः—'डुधाञ् धारणपोषणयोः' (DP. 3. 10.) 'धेट् पाने' (DP. 1. 951.) वा तस्मात्कर्तर्यौणादिकः सिः । प्रत्ययस्वरः Sy. ८. ०रग्नेः P. ९. ०स्त P.

१०. P. reads द्यावा for द्यां च ॥ मातरौ द्यावापृथिव्यौ । मातरा—'नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृमातृपितृजामातृदुहितृ' (Cf. Uṇādi. 2.252.) इति तृजन्तत्वेन निपातनादन्तोदात्तः । 'ऋतो ङि०' (Pa. 7. 3. 110.) इति गुणः । 'सुपां सुलुक्०' (Pa. 7. 1. 39.) इति सुपो डादेशः Sy.

११. सर्वतः प्रविष्टाः । विविशुः—'विश प्रवेशने' । लिटि 'असंयोगाल्लिट् कित्' (Pa. 1. 2. 5.) इति किद्भावाद् गुणाभावः । निघातः Sy.

१२. सर्पणस्वभावाः । सप्त—'सप्लृ गतौ' । 'सप्यशूभ्यां तुट् च' (Uṇādi. 1. 155.) इति सर्पेर्विधीयमानः कनिन् तुडागमश्च बाहुलकादेतस्यापि भवति । ऋकारस्याकारश्च । नित्त्वेऽपि व्यत्ययेनान्तोदात्तत्वम् Sy.

१३. वननीया नदीश्चाविविशुः Sy.

१४. नदीम् P. १५. कं P.

१६. रर्भं P. १७. पाणीः M. पाणू P.

१८. RV. 3. 1. 6.

१९. ०नापि P. २०. द्यावापृथिव्यौ Sy.

२१. परिक्षिता—'क्षि निवासगत्योः' । 'क्विप् च' (Pa. 3. 2. 76.) इति क्विप् । पित्वात्तुगागमः । प्रादिसमासः । कृदुत्तरपदप्रकृतिस्वरत्वम् । 'सुपां सुलुक्०' (Pa. 7. 1. 39.) इति सुपो डादेशः Sy.

२२. ०चरते P. तेनाग्निना सम्यक् व्यवहरतः । चरेते—'चर गतिभक्षणयोः' सम्पूर्वाच्चरतेः 'समस्तृतीयायुक्तात्' (Pa. 1.3. 54.) इत्यात्मनेपदम् । निघातः Sy.

वुत्सस्यं मातरा समीची' इति मन्त्रः। तथाऽग्नेः प्रकर्षेण यागाय। दीर्घम्। अन्नं च। विसृजतः।

**दिवक्षसो धेनवो वृष्णो अश्वा देवीरा तस्थौ मधुमद्वहन्तीः।**
**ऋतस्य त्वा सदसि क्षेमयन्तं पर्येका चरति वर्तनिं गौः॥ २॥**

दिवक्षसः। दिवं व्याप्नुवानाः। प्रीणयित्र्यः। वर्षितुरग्नेः। अश्वाः। सोमं मधुमुदकम्।

---

१. RV. 3. 1. 7.

२. गाय M. यष्टुम्—'यज देवपूजासङ्गतिकरणदानेषु' इत्यस्मात् तुमर्थे सेन्प्रत्ययः। प्रादिसमासः। कृदुत्तरपदप्रकृतिस्वरत्वम्। 'कृन्मेजन्तः' (Pa. 1. 1. 39.) इत्यव्ययसंज्ञायाम् 'अव्ययादाप्सुपः' इति सुपो लुक् Sy.

३. अं P. अग्नेश्चिरं जीवनं प्रभूतमन्नं वा। आयुः—'इण् गतौ'। 'उसिन्' इत्यनुवृत्तौ 'एतेर्णिच्च' (*Uṇādi*. 2. 275.) इत्युसिन्। णित्वाद् वृद्धिः, नित्वादाद्युदात्तः Sy.

४. प्रसारयतः। सम्पादयत इत्यर्थः। यद्वा द्यावापृथिव्यौ प्रयक्षे प्रकर्षेण सततं यष्टुं यजमानस्य दीर्घमायुः सम्पादयत। सस्रति—'सृ गतौ'। अयमन्तर्भावितण्यर्थः। रेफश्छान्दसः। 'ईदूदेत्०' (Pa. 1. 1. 11.) इति प्रगृह्यसंज्ञा। निघातः Sy.

५. दिव० P.

६. दिवं व्याप्य वर्तमानाः। दिवक्षसः—'अक्षू व्याप्तौ'। दिवं व्याप्नुवन्तीति दिवक्षसः। 'वक्ष रोषे' रोषार्थोऽप्ययं धातुरत्र व्याप्तौ वर्तते। दिवं वक्षन्ति व्याप्नुवन्तीति। 'असुन्' इत्यसुन्प्रत्ययः। 'लोपो व्योर्वलि' (Pa. 6. 1. 66.) इति वलोपः। कृदुत्तरपदप्रकृतिस्वरत्वम् Sy.

७. अग्नेः प्रीणयित्र्यो भवन्ति। धेनवः—'नुः' इत्यनुवृत्तौ 'धेट इच्च' (*Uṇādi*. 3. 314.) इति नुप्रत्ययः। इकारस्य गुणः। प्रत्ययस्वरः Sy.

८. कामानां वर्षितुः। वृष्णः—'वृषु सेचने'। 'कनिन्युवृषितक्षिराजि०' इत्यादिना कनिन्। कित्वाद् गुणाभावः। नित्वादाद्युदात्तः Sy.

९. वाहनरूपा रोहिताः। अश्वाः—'अशू व्याप्तौ'। 'अशिप्रुषिलटिकणि०' (*Uṇādi*. 1. 149.) इत्यादिना क्वन्। नित्वादाद्युदात्तः Sy.

१०. सोमं M.

११. ०धुवुद० P. मधुमवुदकम् is suggested for मधुमुदकम्॥ माधुर्योपेतमुदकम्। मधुमत्—'नित्' इत्यनुवृत्तौ 'फलिपाटिनमिमनिजनाम्०' (*Uṇādi*. 1. 18.) इत्यादिना मनेरुप्रत्ययः। तत्सन्नियोगेन नकारस्य धकारः। नित्वादाद्युदात्तः Sy.

वहन्तीः । नदीः । आतिष्ठति । तं त्वाम् । उदकस्य । स्थाने । क्षेमं कुर्वन्तम् । एका । गौः । परिचरति, इति माध्यमिकां वाचमाह । ज्वालाः प्रवर्तयन्तम् ।

**आ सीमरोहत्सुयमा भवन्तीः पतिश्चिकित्वान्रयिविद्रयीणाम् ।**
**प्र नीलपृष्ठो अतसस्य धासेस्ता अवासयत्पुरुधप्रतीकः ॥ ३ ॥**

आ सीमरोहत् । आरोहति । सर्वतः । सुयमाः । भवन्तीः । तासां पतिः ।

---

१. द्योतनशीला नदीः Sy.

२. प्राप्नोतीत्यर्थः । तस्थौ—'ष्ठा गतिनिवृत्तौ' । 'छन्दसि लुङ्लङ्लिटः' (Pa. 3. 4. 6.) इति वर्तमाने लिट् । 'आत औ णलः' (Pa. 7. 1. 34.) इत्यौकारः । निघातः Sy. ३. त P.

४. हे अग्ने ! त्वाम् । त्वा—द्वितीयैकवचनान्तस्य 'त्वामौ०' (Pa.8.1.23.) इति त्वादेशः अनुदात्तश्च Sy.

५. अन्तरिक्षे Sy.

६. क्षमं P. क्षेममावासमिच्छन्तम् । क्षेमयन्तम्—'क्षि निवासगत्योः' । 'अर्तिस्तुसुहुसृधृक्षि०' (*Uṇādi*. 1. 137.) इत्यादिना मन् । क्षेममावासमात्मना इच्छन्तम् 'सुप आत्मनः क्यच्' (Pa. 3. 1. 8.) इति क्यच् । 'क्यचि च' (Pa. 7. 4. 33.) इतीत्वम् 'अकृत्सार्वधातुकयोः' (Pa. 7. 4. 25.) इति दीर्घत्वञ्च 'न छन्दस्यपुत्रस्य' (Pa. 7. 4. 35.) इति प्रतिषिध्यते । क्यचश्चित्त्वादन्तोदात्तः । तदन्ताच्छतृप्रत्ययः शप् । शपः पित्त्वादनुदात्तत्वं शतुश्च सार्वधातुकस्वरेण । तयोः क्यचा सहैकादेशे कृते 'एकादेश उदात्तेनोदात्तः' (Pa. 8. 2. 5.) इत्येकादेश उदात्तः । अम् । सुप्त्वादनुदात्तः । 'उदात्तादनुदात्तस्य०' (Pa. 8. 4. 66.) इति अमः स्वरितत्वम् Sy.

७. एका—'इण् गतौ' । 'इण्भीकापा०' (*Uṇādi*. 3. 323.) इत्यादिना क्वन् । तदन्तावाप् । नित्स्वरः Sy.

८. गाः M. गौ P. गोशब्दो माध्यमिकवाग्वाची । 'माध्यमिकां वाचमिति नैरुक्ताः' (N. 12. 10.) इत्यभिधानात् । काचिदुक्तविधा वाक् । गौः—'गम्लृ गतौ' 'गमेर्डोः' (*Uṇādi*. 2. 225.) इति डोप्रत्ययः । डित्वाट्टिलोपः । 'गोतो णित्' (Pa. 7. 1. 90.) इति सुपो णित्वाद् वृद्धिः । प्रत्ययस्वरः Sy.

९. सेवते Sy.

१०. ०र्तयः P. वर्तनिम्—'वृतु वर्तने' । अन्तर्भावितण्यर्थः । 'वृतेश्च' (*Uṇādi*. 2. 263.) इत्यनिः । गुणः । व्यत्ययेनान्तोदात्तत्वम् Sy.

११. ०हतिः M. आरोहयति स्म । 'रुह प्रादुर्भावे' । लङि रूपम् । निघातः Sy.

१२. सीम्—'चादयोऽनुदात्ताः' (*Phiṭ Sūtra* 84.) इत्यनुदात्तः Sy.

१३. सुखेन नियन्तुं शक्याः । सुयमाः—'यम उपरमे' । अस्माच्छक्यार्थे 'ईषद्दुःसुषु कृच्छ्रा०' (Pa.3.3.126.) इति खल् । कृदुत्तरपदप्रकृतिस्वरत्वम् Sy.

१४. भवन्तीर्या वडवाः Sy. १५. अश्वानां पतिरग्निः । पतिः—'पा रक्षणे' । 'पातेर्डतिः' (*Uṇādi*. 4. 497.) इति डतिः । डित्वाट्टिलोपः । प्रत्ययस्वरः Sy.

प्राज्ञः[1] । धनानां[2][3] लम्भयिता । प्रकर्षेण वासयति[4] च । आत्मनः[5] सततगमनस्य[6] । पातुः[7] । पानाय तां[8] नदीः[9] । नीलपृष्ठः[10] । बहुप्रकाराङ्गः[11] ।[12]

महि त्वाष्ट्रमूर्जयन्तीरजुर्यं स्तभूयमानं वहतो वहन्ति ।
व्यङ्गेभिर्दिद्युतानः सधस्थ एकामिव रोदसी आ विवेश ॥ ४ ॥

महि त्वाष्ट्रम् । अत्यन्तम्[13] । त्वष्टुर्जायमानम्[14] । जरयितुमशक्यम्[15] । बलयन्त्यः[16] । स्तम्भनं[17] लोकानामिच्छन्तम्[18] । नद्यः[19] । धारयन्ति । दीप्यमानः[20] । अपां सधस्थेऽवस्थितः[21] ।

---

१. प्रज्ञः P. ज्ञानवान् । चिकित्वान्—'कित ज्ञाने' । क्वसौ रूपम् Sy.

२. रयीणाम्—'नामन्यतरस्याम्' (Pa. 6. 1. 177.) इति विभक्तेरुदात्तत्वम् Sy.

३. धनानां मध्ये विशिष्टधनस्य लम्भयिता । रयिवित्—'विद्लृ लाभे' । क्विप् Sy.

४. वासयति स्म । निवासेन अमेऽपनीते सततगमनं पोषयितुं शक्यमित्यर्थः । अवासयत्—'वस निवासे' । 'हेतुमति च' (Pa. 3. 1. 26.) इति णिच् । 'लुङ्लङ्लृङ्क्ष्वडु०' (Pa. 6. 4. 71.) इत्यडागमः । 'तिङ्ङतिङः' (Pa. 8. 1. 28.) इति निघातः Sy. ५. ०त्मनुः P.

६. ०मस्य P. अतसस्य—'अत सातत्यगमने' (DP. 1. 38.) इत्यस्माद् 'अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्यः०' (*Uṇādi*. 3. 397.) इत्यसच् । चित्स्वरः Sy.

७. धासेः पोषणार्थम् Sy.

८. तां M. अश्वाः Sy. ९. नदीम् M.

१०. सोऽग्निः । नीलशब्दो वृषादित्वादाद्युदात्तः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् Sy.

११. बहुधा विक्षिप्ताङ्गः । पुरुशब्द इह संख्यावाची । 'संख्याया विधार्थे धा' (Pa. 5. 3. 42.) इति धाप्रत्ययः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । ह्रस्वश्छान्दसः Sy.

१२. VM. ignores रयीणाम्.

१३. अनुत्य० P. महान्तम् Sy.

१४. त्वष्टुः सुतम् । त्वाष्ट्रम्—त्वष्टुरपत्यमित्यर्थे 'तस्यापत्यम्' (Pa. 4. 1. 92.) इत्यण् । प्रत्ययस्वरः Sy.

१५. जरयितुमनर्हम् Sy. १६. बलयन्त्यः M. बळ P. अबलं बलिनं कुर्वन्त्यः Sy.

१७. धारणम् । स्तभूयमानम्—स्तभु स्तम्भनं तदिच्छन्तम् । 'सुप आत्मनः क्यच्' (Pa. 3. 1. 8.) । 'अकृत्सार्वधातुकयोः' (Pa. 7. 4. 25.) इति दीर्घः । तदन्ताद् व्यत्ययेन शानच् । अकारान्तत्वाद् 'आने मुक्' (Pa. 7. 2. 82.) । शानचो लसार्वधातुकस्वरेणानुदात्तत्वे कृते क्यजन्तधातुस्वरः शिष्यते Sy.

१८. अग्निम् Sy. १९. वहनपराः Sy.

२०. दीप्यमानः सन् अग्निः । दिद्युतानः—'द्युत दीप्तौ' । छन्दसि लिट् । तस्य कानजादेशः । द्विर्वचनम् । हलादिशेषे कृते 'द्यु' इत्यस्य अभ्यासस्य 'द्युतिस्वाप्योः सम्प्रसारणम्' (Pa. 7. 4. 67.) इति सम्प्रसारणम् । 'सम्प्रसारणाच्च' (Pa. 6. 1. 108.) इति पूर्वरूपत्वम् । चित्त्वादन्तोदात्तत्वम् Sy.

२१. समीपे Sy.

एकामिव[1] स्त्रियमनायासेन[2]। अञ्जैः[3]। द्यां च[4] पृथिवीं[5] चोभे अपि। विविधम्[6]। आविवेशेति[7]।

**जा॒नन्ति॒ वृष्णो॑ अरु॒षस्य॒ शेव॑मु॒त ब्र॒ध्नस्य॒ शास॑ने रणन्ति।**
**दि॒वो॒रुच॑ः सु॒रुचो॒ रोच॑माना॒ ईळा॒ येषां॒ गण्या॒ माहि॑ना॒ गीः॥ ५॥**

जानन्ति। जानन्ति[8]। वर्षितुः[9]। आरोचमानस्य[10]। आश्रितविषयं[11] सुखम्। अपि च जानन्तः। महतोऽग्नेः। शासने[12]। रमन्ते[13], ‘अस्य[14] शासुरुभयासः’[15] इति[16] मन्त्रः[17]। द्युलोकस्य[18] रोचकाः। शोभनदीप्तयः[19]। रोचमानास्ते[20] भवन्ति। येषां मनुष्याणाम्[21]। ईड्या[22]। मही[23]।

---

१. यथा पुमानेकां स्त्रियं प्रविशति तद्वत्। एकामिव—‘इवेन समासो विभक्त्यलोपः’ (Vārtika on Pa. 2. 1. 4.) ‘पूर्वपदप्रकृतिस्वरत्वं च’ इति वचनात् पूर्वपदप्रकृतिस्वरः Sy.

२. स्तियमनायासन P.

३. अं P. अवयवैः। ‘बहुलं छन्दसि’ इति भिस ऐसादेशाभावः। ‘बहुवचने झल्येत्’ (Pa. 7. 3. 103.) इत्येत्वम् Sy.

४. P. reads द्यावा for द्यां च।

५. द्यावापृथिव्यौ Sy.

६. ०विसम् M.

७. प्रविष्टवान्। विवेश—‘विश प्रवेशने’ इत्यस्मात् लिटि रूपम्। निघातः Sy.

८. जना जानन्ति। ‘ज्ञा अवबोधने’। क्र्यादिः। तस्य ‘ज्ञाजनोर्जा’ (Pa. 7. 3. 79.) इति जादेशः। प्रत्ययस्वरः Sy.

९. कामानां वर्षितुः Sy.

१०. अरुषस्य। रुषा हिंसकाः तद्रहितस्य। शत्रुराहित्येन रोचमानस्येत्यर्थः। तथाविधस्याग्नेः। अरुषस्य—‘रुष रिष हिंसार्थाः ? (थौ)’। रोषन्तीति रुषा हिंसकाः। ‘इगुपधज्ञा०’ (Pa. 3. 1. 135.) इति कः। न सन्ति रुषा यस्यासावरुषः। ‘नञ्सुभ्याम्’ (Pa. 6. 2. 172.) इत्युत्तरपदान्तोदात्तत्वम् Sy.

११. आश्रयविषयं सुखम्। शेवम्—‘शीङ् स्वप्ने’। ‘इण्शीङ्भ्यां वन्’ (Uṇādi. 1.150.) इति वन्। निस्वरः Sy.

१२. आज्ञायाम्। शासने—‘शासु अनुशिष्टौ’। अस्माद्भावे ल्युट्। ‘लिति’ (Pa. 6. 1. 193.) इति प्रत्ययात्पूर्वस्योदात्तत्वम् Sy.

१३. सर्वे जना रमन्ते। रणन्ति—निघातः Sy.

१४. D. and P. add अग्ने before अस्य.

१५. सुरुरुहयासः M.

१६. A fragment of RV. 1. 60.2.

१७. मन्द्रः M.

१८. दिवोरुचः—‘रुच दीप्तौ’ अस्मात् क्विप्। ‘तत्पुरुषे कृति बहुलम्’ (Pa. 6. 3. 14.) इति षष्ठ्या अलुक्। कृदुत्तरपदप्रकृतिस्वरत्वम् Sy.

१९. सुरुचः—बहुव्रीहौ ‘नञ्सुभ्याम्’ (Pa. 6. 2. 172.) इत्युत्तरपदान्तोदात्तत्वम् Sy.

२०. देदीप्यमानाः Sy.

२१. मनुष्याणामग्निविषया Sy.

२२. मिव्य P. स्तुतिरूपा। इळा—‘ईड स्तुतौ’। ह्रस्वश्छान्दसः। यथा वाक्शब्दष्टाबन्तस्तद्वत् (टाप्)। पित्त्वादनुदात्तत्वे धातुस्वरः Sy.

२३. महि P. महती। माहिना—‘महेरिनण् च’ (Uṇādi. 2. 214.) इतीनण्। णित्त्वादुपधावृद्धिः। व्यत्ययेनाद्युदात्तः Sy.

स्तुतिः[1] । अग्नेर्गणनीया[2], येऽग्निं स्तुवन्तीत्यर्थः ।

**उतो पितृभ्यां प्रविदानु घोषं महो महद्भ्यामनयन्त शूषम् ।**
**उक्षा ह यत्र परि धानमक्तोरनु स्वं धाम जरितुर्ववक्ष ॥ ६ ॥**

उतो पितृभ्याम् । अपि[3] च । द्यावापृथिवीभ्याम्[4] । प्रवेदनेन । घुष्यमाणम्[5] । सुखम्[6] । महतोऽपि[7] । महद्भ्याम्[8] । अन्वनयन्त[9] यजमानाः । वृष्ट्युत्पादनेन[10][11] येषु[12] यजमानेषु । उदकस्य[13] सेक्ता । रात्रेः[14] । धारकम्[15] । आत्मीयम्[16] । तेजः । होतुः[17]– स्तुतिश्रवणाय[18] । हि[19] । अनुवहति[20],

---

१. स्तुतीः M. वाक् । गीः—'गॄ शब्दे' । अस्मात्क्विप् । 'ॠत इद्धातोः' (Pa. 7. 1. 100.) इतीत्वम् । 'र्वोरुपधायाः०' (Pa. 8. 2. 76.) इति दीर्घः । प्रातिपदिकस्वरः Sy.

२. पूज्या । गण्या—'गण संख्याने' । स्वार्थे ण्यन्तात् 'अचो यत्' (Pa.3.1.97.) 'यतोऽनावः' (Pa. 6. 1. 213.) इत्याद्युदात्तत्वम् Sy.

३. उतो—'ओत्' (Pa. 1. 1. 15.) इति प्रगृह्यसंज्ञा । एवमादित्वादन्तोदात्तः Sy.

४. ०थिव्याः P.

५. अनुघुष्यमाणम् । घोषम्—'घुषिरविशब्दने' (Pa. 7. 2. 23.) अस्मात्कर्मणि घञ् । लघूपधगुणः । ञित्स्वरः Sy.

६. तत्सुखं यजमानाः Sy. सुदिनं शूषं शुनमिति सुखनामानि । Ngh. 3. 6.

७. महः—अकारतकारयोर्लोपश्छान्दसः । 'बृहन्महतोरुपसंख्यानम्' (Vārtika on Pa. 6. 1. 173.) इति विभक्तेरुदात्तत्वम् Sy.    ८. महत्याम् P.

९. अन्वन्त्यं M. अन्व P. अग्निं प्रापितवन्तः । 'णीञ् प्रापणे' । इत्यस्य लङि रूपम् । निघातः Sy.

१०. वृष्यत्पा० M. वृष्युत्पा० P.

११. ०दने P.

१२. यत्र—'लिति' (Pa. 6. 1. 193.) इति प्रत्ययात्पूर्वस्योदात्तत्वम् Sy.

१३. उक्षा—'उक्ष सेचने' । 'श्वन्नुक्षन्०'—(Uṇādi. 1. 157.) इत्यादिना कनिन् प्रत्ययान्तत्वेन उक्षन्शब्दो निपातितः । व्यत्ययेनान्तोदात्तः Sy.

१४. रात्रेः P. अक्तोः । अक्तुशब्दो रात्रिमाचष्टे । अज्यते सिच्यते नीहारेण जगदस्यामिति व्युत्पत्तेश्च । तस्याः । अक्तोः—'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु' (DP. 7. 21.) इत्यस्मात् । 'व्याज्यर्तिभ्यः क्तुः' ? इति क्तुः । कित्त्वात् 'अनिदिताम्०' (Pa. 6. 4. 24.) इति नलोपः । प्रत्ययस्वरः Sy. क्षपा । शर्वरी । अक्तुः, इति रात्रिनामानि । Ngh. 1. 7.

१५. द्वार० M. परितो धारकम् Sy.

१६. ०त्मीयां P.    १७. होत्रश्रुति० P.

१८. स्तोतुः स्तुतिश्रवणार्थम् Sy.

१९. चि M. खलु । ह । चादित्वादनुदात्तः Sy.

२०. ०हन्ति P. समीपे वहति । सन्निहितं करोतीत्यर्थः । ववक्ष—'वह प्रापणे' । 'छन्दसि लुङ्लङ्लिटः' (Pa. 3.4.6.) इति वर्तमाने लिट् । सकारश्छान्दसः । तिपो णलादेशः । 'लिति' (Pa. 6. 1. 193.) इति प्रत्ययात् पूर्वस्योदात्तत्वम् Sy.

सन्निधानं करोतीत्यर्थः[1] ।[2]

**अ॒ध्व॒र्युभिः॑ प॒ञ्चभिः॑ स॒प्त विप्राः॑ प्रि॒यं र॑क्षन्ते॒ निहि॑तं प॒दं वेः ।**
**प्राञ्चो॑ मदन्त्यु॒क्षणो॑ अजु॒र्या दे॒वा दे॒वाना॒मनु॒ हि व्र॒ता गुः ॥ ७ ॥**

अध्वर्युभिः । उद्गातृ[3]व्यतिरिक्ता द्वादश[4] भवन्त्यृत्विजः, तेषु[5] सप्त वषट्कारा[6]ः, पञ्चान्ये[7]ऽध्वरं[8] नयन्ति । पञ्चभिः सह[9] । सप्त । मेधाविनः[10] । गमनस्वभावस्य[11] । प्रियमाहवनीयाख्यम् । निहितम्[12] । पदम् । रक्षन्ति[13] । प्राङ्मुखाः[14] सोमाः । जरयितुमशक्यम्[15] । देवान्मादयन्ति[16] । सेक्तारः[17] । देवाः[18] । देवानाम्[19], इति प्राणानाह 'ये दे॒वा दे॒वेष्वधि[20] दे॑व॒त्वमाय॑न्' इति मन्त्रः[21] । ते हि[22] । सोमपानार्थं[23] कर्माणि[24] प्रधानानि । अन्वगच्छन्[25]निति[26] ।

---

१. ०त्यर्थः P.
२. VM. ignores परि ।
३. उद्गातृवर्गव्यतिरिक्ताः Sy.
४. द्वादशर्त्विजो भवन्ति Sy.
५. तत्र Sy.
६. ०ट्कारः P. वषट्कर्तारः Sy.
७. ०ऽन्वन्ये P. ८. ध्वारं M.
९. Omitted in M.
१०. मेधाविनो होत्रकाः Sy.
११. गमनस्वभावस्याग्नेः । वेः—'वी कान्तिगत्यादिषु' । अस्माद्विच् । 'सार्वधातुकार्धधातुकयोः' (Pa. 7. 3. 84.) इति गुणः । 'ङसिङसोश्च' (Pa. 6. 1. 110.) इति पूर्वरूपत्वम् Sy.
१२. निहितम्—'डुधाञ् धारणपोषणयोः' इत्यस्य कर्मणि निष्ठायां 'दधातेर्हिः' (Pa. 7. 4. 42.) इति हिरादेशः । 'गतिरनन्तरः' (Pa. 6. 2. 49.) इति गतेः प्रकृतिस्वरत्वम् Sy.
१३. पालयन्ति । रक्षन्ते—'रक्ष पालने' । व्यत्ययेनात्मनेपदम् । निघातः Sy.
१४. सोमपानार्थं प्राङ्मुखा गच्छन्तः । प्राञ्चः—'अनिगन्तोऽञ्चतौ०' (Pa. 6. 2. 52.) इति पूर्वपदप्रकृतिस्वरत्वम् Sy.
१५. ०शक्याः or ०शक्यान् is suggested for ०शक्यम् ।
१६. हृष्यन्ति । मदन्ति—'मदी हर्षे' । निघातः Sy.
१७. सोमरसस्य सेक्तारः Sy.
१८. देवाः स्तोतारः Sy.
१९. किञ्च ते देवा ऋत्विजो देवानां सम्बन्धीनि Sy. २०. ०ष्वग्नधि० P.
२१. VS. 17. 14; TS. 4. 6. 1. 4.; MS. 2. 10. 1; 132. 10; KS. 17. 17; SB. 9. 2. 1. 15.
२२. हिः प्रसिद्धौ Sy.
२३. ०नात्यं P.
२४. व्रतानि यज्ञान् Sy.
२५. अग्नेः प्रसादाद् हविर्लक्षणान्नवन्तो देवा यज्ञान् लब्धवन्त इत्यर्थः । गुः—'इण् गतौ' इत्यस्माल्लुङि रूपम् । 'इणो गा लुङि' (Pa. 2. 4. 45.) इति गादेशः । 'आतः' (Pa. 3. 4. 110.) इति झेर्जुसादेशः । 'बहुलं छन्दसि' इत्यडभावः । हिशब्दयोगान्न निहन्यते Sy.
२६. VM. ignores अध्वर्युभिः ।

उत्तरा निगदव्याख्यातेति—

दैव्या॒ होता॑रा प्रथ॒मा न्यृ॑ञ्जे स॒प्त पृ॒क्षासः॑ स्व॒धया॑ मदन्ति ।
ऋ॒तं शंस॑न्त ऋ॒तमित्त आ॑हु॒रनु॑ व्र॒तं व्र॑त॒पा दीध्या॑नाः ॥ ८ ॥

[[1]दैव्या होतारा][2]

वृ॒षाय॑न्ते म॒हे अत्या॑य पू॒र्वीर्वृष्णे॑ चि॒त्राय॑ र॒श्मयः॑ सुया॒माः ।
देव॑ होतर्म॒न्द्रत॑रश्चिकि॒त्वान्म॒हो दे॒वान्रोद॑सी॒ एह व॑क्षि ॥ ९ ॥

वृषायन्ते । वृषेवाचरन्ति[3] ज्वाला:[4] । महते[5] । अत्यय[6] । बह्व्य[7] इति । एतदेवाह-

---

१. The *Pratika* has been supplied by the Editor. M. adds दैव्या होतारा in a later hand.

२. Sy. explains this stanza in the following manner:— दैव्या दैव्यौ देवतारूपौ होतारा होतारौ होमनिष्पादकौ प्रथमा प्रथमौ मुख्याविमं वायुं चाग्नी न्यृञ्जे । 'ऋञ्जतिः प्रसाधनकर्मा' इति यास्कः (N.6.21.) मन्त्रद्रष्टा विश्वामित्रोऽहं प्रसाधयामि । सप्त पृक्षासः सप्त होत्रकाः स्वधया सोमेन मदन्ति हृष्यन्ति । ऋतं स्तोत्रं शंसन्तः व्रतपाः व्रतस्य यज्ञकर्मणो रक्षितारः दीध्यानाः दीप्यमानाः ते होत्रकाः अनुव्रतं यज्ञे कर्मणि ऋतमित् सत्यमेवाग्निम् आहुः वदन्ति । ऋञ्जे—'ऋजि भृजी भर्जने' नि पूर्वोऽयं धातुः प्रसाधने वर्तते । निघातः ॥ स्वधया—स्वं लोकं यजमानस्य दधाति निदधातीति स्वधा सोमः । 'आतोऽनुपसर्गे कः' (Pa. 3. 2. 3.) इति कः । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ आहुः—'ब्रूञ् व्यक्तायां वाचि' इत्यस्य लटि 'ब्रुवः पञ्चानामादित आहो ब्रुवः' (Pa. 3. 4. 84.) इति झेर्जुसादेशो ब्रुवश्च आहादेशः । निघातः ॥ दीध्यानाः—'दीधीङ् दीप्तिदेवनयोः' (DP. 2. 67.) इत्यस्मात् शानच् । तस्य चित्त्वादन्तोदात्तत्वे प्राप्ते 'अभ्यस्तानामादिः' (Pa. 6. 1. 189.) इत्याद्युदात्तत्वम्

३. सेचका इव भवन्ति । होतारो ज्वालाभिः समिद्धमग्निं दृष्ट्वा सोमाज्यपयःप्रभृतीनि हवींषि तत्र प्रक्षिपन्तीति ज्वालानां वृषत्वम् । यद्वा षष्ठ्यर्थे चतुर्थी । तथा च महतोऽत्यस्य चित्रस्य वृष्णोऽग्नेर्बह्वो रश्मयो वृषेवाचरन्ति । वृष्टयुत्पादनद्वारा पर्जन्यवदाचरन्तीत्यर्थः । वृषायन्ते—'उपमानात्०' (Pa. 3. 1. 10.) इत्यनुवृत्तौ 'कर्तुः क्यङ् सलोपश्च' (Pa. 3. 1. 11.) इति क्यङ् । 'अकृत्सार्वधातुकयोर्दीर्घः' (Pa. 7. 4. 25.) इति दीर्घः । पादादित्वादनिघातः । धातुस्वरः Sy.

४. ज्वाल P.

५. महे—अकारतकारयोर्लोपश्छान्दसः । 'बृहन्महतोः०' इति विभक्तेरुदात्तत्वम् Sy.

६. सर्वानप्यतिक्रम्य वर्तमानाय Sy.

७. प्रभूताः । पूर्वीः—'पॄ पालनपूरणयोः' इत्यस्मात् 'कुः' इत्यनुवृत्तौ 'पॄभिदिव्यधिगृधिः०' (Uṇādi. 1. 23.) इत्यादिना कुप्रत्ययः । कित्त्वाद्गुणप्रतिषेधे 'उदोष्ठ्यपूर्वस्य' (Pa. 7. 1. 102.) इत्युत्वम् । 'उरण् रपरः' (Pa. 1. 1. 51.) । तस्मात् 'वोतो गुणवचनात्' (Pa. 4. 1. 44.) इति ङीष् । यणादेशे कृते 'हलि च' (Pa. 8. 2. 77.) इति दीर्घः । 'वा छन्दसि' (Pa. 6. 1. 106.) इति (पूर्व)सवर्णदीर्घः Sy.

वृष्णे[1]। चित्रवर्णायाग्नये[2]। रश्मयः[3]। सुयामा[4] भवन्ति[5]। अथ[6] प्रत्यक्षः—इत्थं समिद्धस्त्वं[7] देव[8]! होतः[9]! मादयितृतरः[10]। जानन्[11]। महतः[12]। देवान्। रोदसी[13] च। इह[14]। आवह[15]।

**पृक्षप्रयजो द्रविणः सुवाचः सुकेतव उषसो रेवदूषुः।**
**उतो चिदग्ने महिना पृथिव्याः कृतं चिदेनः सं महे दशस्य ॥ १० ॥**

पृक्षप्रयजः[16]। द्रविणो द्रवतेः[17], हे अग्ने! गमनस्वभाव[18]! हविर्लक्षणान्यन्नानि यासु होतुं प्रक्रम्यन्ते[19] ताः। शोभनवाचो[20] वयसां मनुष्याणां च शब्दैः। सुप्रज्ञानाः। उषसः[21]।

---

१. पृष्णे P. कामानां वर्षित्रे तुभ्यं त्वदर्थम् Sy. २. नानाविधवर्णाय। यद्वा... देवैश्चायनीयाय पूज्याय Sy.

३. रश्मय M. सर्वतो व्याप्ता ज्वालाः। रश्मयः—'अशू व्याप्तौ'। अश्नुवते सर्वं जगदिति 'मिः' इत्यनुवृत्तौ 'अश्नोते रश्च' (Uṇādi. 4. 486.) इति मिप्रत्ययो रशादेशश्च। प्रत्ययस्वरः Sy.

४. Omitted in M. अतिशयेन विस्तृताः। सुयामाः—यमनं यामः। भावे घञ्। बहुव्रीहौ 'नञ्सुभ्याम्' (Pa. 6. 2. 172.) इत्युत्तरपदान्तोदात्तत्वम् Sy.

५. Omitted in M. ६. ब M.

७. ०मिधस्त्व० M. and P.

८. देदीप्यमान! 'अपादादौ' (Cf. Pa. 8. 1.18.) इति पर्युदासात् षाष्ठिकमाद्युदात्तत्वम् Sy. ९. होत M. देवानामाह्वातः! हे अग्ने! ह्वयतेस्ताच्छीलिकस्तृन्। 'बहुलं छन्दसि' इति सम्प्रसारणम्। अपादादावामन्त्रितत्वान्निघातः Sy.

१०. ०यित० M. अपि च यजमानस्य मादयितृतमः। मन्द्रतरः—'मदि स्तुत्यादिषु' 'स्फायितञ्चिवञ्चि०' (Uṇādi. 2. 170.) इत्यादिना रक्। इदित्वान्नुम्। तरपः पित्त्वादनुदात्तत्वे रक्प्रत्ययस्वरः Sy. ११. ज्ञानोपेतः स त्वम् Sy.

१२. पूज्यान् यष्टव्यान् Sy.

१३. द्यावापृथिव्यौ Sy.

१४. वैदिकेऽस्मिन् कर्मणि Sy.

१५. ०वहन् M. वक्षि—'वह प्रापणे'। इत्यस्य 'बहुलं छन्दसि' इति शपो लुक्। ढत्वकत्वषत्वानि। निघातः Sy.

१६. वृक्ष० M. and P.

१७. दपते M. बवते P. द्रवति सततं गच्छतीति द्रविणशब्देनाग्निरभिधीयते। द्रविणः—'द्रु गतौ' इत्यस्मात् 'द्रुदक्षिभ्यामिनन्' (Uṇādi. 2. 208.) इतीनन्प्रत्ययः। गुणावादेशौ। सम्बुद्धौ सोर्लोपाभावश्छान्दसः। आमन्त्रितत्वान्निघातः Sy. धनं द्रविणमुच्यते। यदेनमभिद्रवन्ति। बलं वा द्रविणम्। यदेनेनाभिद्रवन्ति N. 8. 1.

१८. सततगमनस्वभाव! Sy.

१९. प्रक्रम्यते P. पृक्षाणि हविर्लक्षणान्यन्नानि प्रकर्षेण यष्टुं प्रक्रम्यन्ते यासूषःसु ताः पृक्षप्रयजः। पृक्षप्रयजः—'अन्येभ्योऽपि दृश्यन्ते' (Pa. 3. 2. 75.) इति कर्मणि विच्। दृशिग्रहणादधिकृतो भवतीत्युक्तम्। बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरत्वम् Sy.

२०. प्रातरनुवाकादिशोभना वाचो यासां ताः। सुवाचः—'नञ्सुभ्याम्' (Pa. 6. 2. 172.) इत्युत्तरपदान्तोदात्तत्वम् Sy.

२१. एवंविधा उषसः Sy.

धनयुक्तमस्माकम्। व्युच्छन्तु। अपि च। अग्ने ! विस्तीर्णाया ज्वालायाः। महत्त्वेन। कृतम्। अपि। पापम्। महते यजमानाय। संक्षपय।

इळा॑मग्ने पुरु॒दंसं॑ स॒निं गोः श॑श्वत्त॒मं हव॑मानाय साध।
स्यान्नः॑ सू॒नुस्तन॑यो वि॒जावाग्ने॒ सा ते॑ सुम॒तिर्भू॑त्व॒स्मे ॥ ११ ॥

[ इळामग्ने। ]

१. अस्माकं धनयुक्तं यथा भवति तथा। रेवत्—रयिर्धनमस्मिन् विद्यत इति मतुप्। 'ह्रस्वनुड्भ्याम्०' (Pa. 6. 1. 176.) इति मतुबुदात्तः। 'छन्दसीरः' (Pa. 8. 2. 15.) इति वत्वम्। 'रयेर्मतौ बहुलं छन्दसि' इति सम्प्रसारणम्। पूर्वरूपत्वे गुणः Sy.

२. व्युच्छतु P. व्युच्छन्ति। ऊषुः—'उष दाहे'। दाहार्थोऽप्ययं धातुरत्र प्रकाशने वर्तते। 'छन्दसि लुङ्०' (Pa. 3. 4. 6.) इति वर्तमाने लिट्। उसि रूपम्। निघातः Sy.

३. पृथिव्याः—'प्रथ प्रख्याने' इत्यस्मात् 'प्रथेः षिवन् सम्प्रसारणं च' (Uṇādi. 1. 148.) इति षिवन्प्रत्ययः। तत्सन्नियोगेन धातोः सम्प्रसारणम्। 'षिद्गौरादिभ्यश्च' (Pa. 4. 1. 41) इति ङीष्। प्रत्ययस्वरेणान्तोदात्तः। 'उदात्तयणो हल्पूर्वात्' (Pa. 6. 1. 174.) इति विभक्तेरुदात्तत्वम् Sy. ४. सम्पादितम् Sy. ५. चित् यत्किञ्चित् Sy.

६. प्राण्युपघातादिलक्षणं पापम् Sy.

७. यजमानाय मह्यं मदर्थम् Sy.

८. दशस्य—निघातः Sy.

९. VM. explains चित् (once only).

१०. The *pratika* written in a later hand is found in ms. M. only. The stanza has already been explained. See RV. 3. 1. 23. Sy. explains this stanza again in the following manner:—

हे अग्ने ! पुरुदंसम्। 'अप्नः दंसः वेषः' (Ngh. 2. 1.) इति कर्मनामसु पठितत्वाद् दंसःशब्दः कर्मवाची। पुरूणि बहूनि दंसांसि कर्माणि यस्याः सा। तां बहुकर्माणं गोः सनिं गवादिपशूनां सम्पादयित्रीम् इळाम् एतन्नामिकां गोरूपां देवतां शश्वत्तमं निरन्तरं हवमानाय यजमानाय मह्यं साध साधय। किञ्च नः अस्माकं सूनुः पुत्रः तनयः पौत्रः स्याद् भवतु इति। हे अग्ने ! ते तव या सुमतिः शोभना बुद्धिः सा विजावा अवन्ध्या सती अस्मे अस्माकं भूतु भवतु ॥ शश्वत्तमम्—उञ्छादिषु पाठादन्तोदात्तत्वम् ॥ साध—'राध साध संसिद्धौ'। अन्तर्भावितण्यर्थोऽयम्। लोटि व्यत्ययेन शप्। 'सेर्ह्यपिच्च' (Pa. 3. 4. 87.) इति हिरादेशः। तस्य 'अतो हेः' (Pa. 6. 4. 105.) इति लुक्। निघातः ॥ विजावा—'जनी प्रादुर्भावे' अस्मात् 'अन्येभ्योऽपि दृश्यन्ते' (Pa. 3. 2. 75.) इति वनिप् 'विड्वनोरनुनासिकस्यात्' (Pa. 6. 4. 41.) इत्यात्वम्। कृदुत्तरपदप्रकृतिस्वरत्वम्। लिङ्गव्यत्ययः। भूतु—'भू सत्तायाम्'। 'बहुलं छन्दसि' इति शपो लुक्। 'भूसुवोस्तिङि' (Pa. 7. 3. 88.) इति गुणप्रतिषेधः Sy.

## III. 8.

अ॒ञ्जन्ति॒ त्वाम॑ध्व॒रे दे॑व॒यन्तो॒ वन॑स्पते॒ मधु॑ना॒ दैव्ये॑न ।
यदू॒र्ध्वस्तिष्ठा॒ द्रवि॑णे॒ह ध॑त्ता॒द्यद्वा॒ क्षयो॑ मा॒तुर॒स्या उ॒पस्थे॑ ॥ १ ॥

अञ्जन्ति[१] । वनस्पते ! यूपभूत[२] ! त्वाम्[३] । यज्ञे[४] । देवान्

---

१. 'अञ्जन्ति' इत्यष्टमं वैश्वामित्रमेकादशर्चं सूक्तम् । अत्रानुक्रमणिका— 'अञ्जन्ति यूपस्तुतिः षष्ठ्याद्याभिर्बहुवोऽन्त्या वश्चिन्यष्टमी वैश्वदेवी वा तृतीयासप्तम्यावनुष्टुभौ' (KSA. 17. 8. p. 15) इति । 'उच्छ्रयस्व वनस्पते' 'ये वृक्णासः' इत्येते तृतीयासप्तम्यावनुष्टुभौ शिष्टास्त्रिष्टुभः । कृत्स्नस्य सूक्तस्य यूपो देवता । 'वनस्पते शतवल्शः' इत्यस्याश्छिन्नयूपस्य मूलभूतः स्थाणुर्देवता । 'आदित्या रुद्रा वसवः' इत्यष्टमी वैश्वदेवी यौपी वा । अत्र षष्ठ्यादीनां बहवो यूपा देवता बहूनां स्तूयमानत्वात् । शिष्टा एकयूपदेवत्याः । यूपाञ्जने 'अञ्जन्ति त्वाम्' इत्येषा । 'प्रेषितो यूपायाज्यमानायाञ्जन्ति त्वामध्वरे देवयन्तः' (ASS. 3. 1.) इति । यूपोच्छ्रयणे 'समिद्धस्य' इति द्वे ऋचौ । 'उच्छ्रयस्व वनस्पते समिद्धस्य श्रयमाणः पुरस्तात्' (ASS. 3. 1.) इति सूत्रितत्वात् । यूपपरिव्ययणे 'युवा सुवासाः परिवीत आगादिति परिदध्यात्' (ASS. 3. 1.) इति सूत्रितत्वात् । यूपोच्छ्रयणे 'जातो जायते सुदिनत्वे अह्नामित्यर्धर्चं आरमेत्' (ASS. 3. 1.) इति सूत्रितम् । यूपैकादशिन्यामन्यत्रापि बहुयूपयुक्ते कर्मणि 'यान्वो नरः' इत्यादिभिः षड्भिः पञ्चभिर्वा संस्तुयात् । 'संस्तुयादनभिहिङ्कृत्य यान्वो नरो देवयन्तो निमिम्युरिति षड्भिः पञ्चभिर्वा' (ASS. 3. 1.) इति Sy.

'अञ्जन्ति त्वामध्वरे देवयन्त इत्यन्वाहाध्वरे ह्येनं देवयन्तोऽञ्जन्ति वनस्पते मधुना दैव्येनेत्येतद्वै मधु दैव्यं यदाज्यं यदूर्ध्वस्तिष्ठा द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थ इति यदि तिष्ठासि यदि च शयासै द्रविणमेवास्मासु धत्तादित्येव तदाह' AB. 2. 2.

२. ०भूतं M. खदिरपलाशादिलक्षण ! हे यूप ! वनस्पते ! 'आमन्त्रितस्य च' (Pa. 6. 1. 198.) इत्याद्युदात्तत्वम् Sy. हे वनस्पतिविकारयूप ! SKN. हे यूप ! . . . एवमस्मिन् समञ्जने यूपे वनस्पतिशब्दः प्रयुक्तः । तस्माद् यूपो वनस्पतिरिति Dur.

३. त्वाम्—अमि युष्मच्छब्दस्य 'त्वमावेकवचने' (Pa. 7. 2. 97.) इति त्वादेशः । 'द्वितीयायाञ्च' (Pa. 7. 2. 87.) इत्याकारः । 'एकादेश उदात्तेनोदात्तः' (Pa. 8. 2. 5.) इत्येकादेशस्योदात्तत्वम् Sy.

४. अध्वरे—न विद्यते ध्वरो हिंसा यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वे प्राप्ते 'नञ्सुभ्याम्' (Pa. 6. 2. 172.) इत्युत्तरपदान्तोदात्तत्वम् Sy. क्व ? एतस्मिन्नध्वरे यज्ञे Dur.

कामयमाना:[1] । 'एतद्वै[2] दैव्यं मधु[3] यदाज्यम्' तेन । अञ्जन्ति[4] । तथा सति यदि[5] च । तिष्ठासि[6] । यदि[7] । च[8] । क्षयासि[9] । द्रविणमेव[10] ।

---

१. अध्वर्य्वादयः । देवयन्तः—देवानात्मन इच्छन्तः । 'सुप आत्मनः क्यच्' (Pa. 3. 1. 8.) इति क्यच् । 'क्यचि च' (Pa. 7. 4. 33.) इति ईत्वम् 'अकृत् सार्वधातुकयोः०' (Pa. 7. 4. 25.) इति दीर्घत्वं च 'न छन्दस्यपुत्रस्य' (Pa. 7. 4. 35.) इत्यनेन प्रतिषिध्यते । तदन्ताच्छतृप्रत्ययः । शपः पित्त्वाल्ल सार्वधातुकस्वरेण चानुदात्तत्वे कृते तयोः 'एकादेश उदात्तेनोदात्तः' (Pa. 8. 2. 5.) इति क्यच एव स्वरः Sy. देवान् यष्टुमिच्छन्तः । छान्दसत्वात् क्यचि, ईत्वाभावः SKN. किमिच्छन्तः ? . . . देवान्यष्टुं कामयमानाः Dur.

२. AB. reads मधु before दैव्यम् ।

३. AB. 2. 2. VM. seems to explain दैव्येन and मधुना together by the quotation of AB. दैव्येन मधुना घृतेन । दैव्येन—'देवाद्यञञौ' (VPa. 4. 1. 85.) इति यञ् । ञित्त्वाद् वृद्धिः । 'यस्य०' (Pa. 6. 4. 148.) इति लोपः । ञित्त्वादाद्युदात्तः । मधुना—'फलिपाटिनमिमनि०' (Uṇādi. 1. 18.) इत्यादिना उप्रत्ययः । 'नित्' इत्यनुवृत्तेराद्युदात्तत्वम् Sy. आज्यमत्र मधु दैवमुच्यते । तेन यूपपक्षे स्वक्तम् । अग्निपक्षे—आहुतिलक्षणेन SKN. देवानां यन्मधु, विज्ञायते हि 'देवानां मधु यद् घृतम्' इति । केनाञ्जन्ति ? संस्कृतेन घृतेनेत्यर्थः Dur.

४. त्वयि घृतं सिञ्चन्तीत्यर्थः । अञ्जन्ति—'अञ्जू व्यक्तिकान्तिगतिम्रक्षणेषु' । रुधादित्वात् श्नम् । तस्य लटि ङित्त्वात् 'अनिदिताम्०' (Pa. 6. 4. 24.) इत्युपधालोपः । 'श्नसोरल्लोपः' (Pa. 6. 4. 111.) इत्यल्लोपः । प्रत्ययस्वरेण मध्योदात्तः Sy. म्रक्षयन्ति SKN. म्रक्षयन्ति . . . ऋत्विग्यजमानाः Dur.

५. यदि त्वम् Sy. लिङ्गव्यत्ययेन यः SKN. किमित्यञ्जन्ति ? . . . यस्मादयतस्त्वम् Dur.

६. तिष्ठसि । तिष्ठाः—'ष्ठा गतिनिवृत्तौ' लेटि सिप् । 'इतश्च लोपः०' (Pa. 3. 4. 97.) इतीकारलोपः । शपः शित्त्वात् 'पाघ्रा०' (Pa. 7. 3. 78.) इत्यादिना तिष्ठादेशः । 'लेटोऽडाटौ' (Pa. 3. 4. 94.) इत्याडागमः । यच्छब्दयोगान्निघाताभावः । तिष्ठादेशस्याद्युदात्तत्वेन निपातितत्वादाद्युदात्तः Sy. लृडर्थे पञ्चमः । स्थास्यति SKN. अञ्जनादनन्तरमुच्छ्रयिष्यन्ति त्वाम् Dur.

७. यदि वा Sy. प्रथमा षष्ठ्यर्थे, वाशब्दश्चार्थे । यस्य च ते SKN. यस्माच्च ते Dur. ८. वा–चादित्वादनुदात्तः Sy.

९. Omitted in M. ते निवासः । यद्यूर्ध्वस्तिष्ठसि यदि वा भूमौ शयानो वर्तसे उभयथापि त्वम् । क्षयः—क्षियन्ति निवसन्ति । अधिकरणे घः । 'क्षयो निवासे' इत्याद्युदात्तत्वम् Sy. क्षयो निवासोऽस्वटाख्यः कृत इति शेषः SKN. क्षयो निवासः स्वर्यार्थमवटस्तस्मादवस्यमूर्ध्वः स्थास्यसि Dur.

१०. द्रविणमोवा P. धनानि । द्रविणा—'द्रुदक्षिभ्यामिनन्' इतीनन्प्रत्ययः । 'सुपां सुलुक्०' (Pa. 7. 1. 39.) इति सुपो डादेशः । नित्त्वादाद्युदात्तः Sy. द्रविणानि धनानि यज्ञफलभूतानि SKN. तथा स्थित्वा पशुधारणसमर्थः प्रधानक्रियापूर्वाङ्गं भावयित्वा तद्द्वारेण तत्फलानि द्रविणानि च Dur.

अस्मासु[1] । धेहि[2] इति[3] । अस्याः[4] । मातुः[5] पृथिव्याः । उत्सङ्ग[6] इति[7] ।

**समिद्धस्य श्रयमाणः पुरस्ताद्ब्रह्म वन्वानो अजरं सुवीरम् ।**
**आरे अस्मदमतिं बाधमान उच्छ्रयस्व महते सौभगाय ॥ २ ॥**

समिद्धस्य[8] । आहवनीयस्य[9] । पुरस्तात्[10] । श्रयणं[11] कुर्वन् । अन्नं[12] च । जरावर्जितम्[13] ।

---

१. सु P. इह । इदंशब्दात् सप्तम्यर्थे 'इदमो हः' (Pa. 5. 3. 11.) इति हः । 'इदम इश्' (Pa. 5. 3. 3.) इतीशादेशः । शित्त्वात्सर्वादेशः । प्रत्ययस्वरः Sy. अस्माकम् SKN. अवश्यमस्मभ्यम् Dur.

२. देहि M. धेहि P. धत्तात्—'डुधाञ् धारणपोषणयोः' इत्यस्य प्रार्थने लोट् । सिप् । तस्य 'सेर्ह्यपिच्च' (Pa. 3.4. 87.) इति हिरादेशः । 'तुह्योः०' (Pa. 7.1.35.) इति तातङादेशः । 'श्नाभ्यस्तयोरातः' (Pa. 6. 4. 112.) इत्याकारलोपः । 'दधस्तथोश्च' (Pa. 8. 2. 38.) इति भष्भावः । जश्त्वचर्त्वे निघातः Sy. यज्ञाङ्गमापद्यमानः. . . दास्यसि SKN. दास्यसि, इत्यतः समञ्जन्ति Dur.

३. Omitted in P. Cf. AB. 2. 2.

४. स्याः P. अस्याः । 'ऊडिदम्०' (Pa. 6. 1. 171.) इत्यादिना विभक्तेरुदात्तत्वम् Sy. वेदिसम्बन्धिन्याः SKN.

५. मातृभूतायाः पृथिव्याः मातुः । 'नप्तृनेष्टृ०' (Uṇādi. 2. 252.) इत्यादिना तृजन्तत्वेन निपातनादन्तोदात्तः । 'ऋत उत्' (Pa. 6. 1. 111.) इति ङसः पूर्वपरयोरुकारः Sy. मातृभूतायाः SKN.

६. उपस्थे—'ष्ठा गतिनिवृत्तौ' । 'आतश्चोपसर्गे' (Pa. 3. 1. 136.) इति कः । 'तत्पुरुषे तुल्यार्थ०' (Pa. 6. 2. 2.) इति मरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वम् Sy. उपस्थाने, उत्तरवेद्यामित्यर्थः । एवमयं यूपः स्तुतः । SKN. उपरि Dur. अञ्जन्ति त्वामध्वरे देवान् कामयमाना वनस्पते मधुना दैव्येन च घृतेन च । यदूर्ध्वः स्थास्यसि । द्रविणानि च नो दास्यसि । यद्वा ते कृतः क्षयो मातुरस्या उपस्थ उपस्थाने N. 8. 18; SKN. III. 135.

७. VM. ignores ऊर्ध्वः ॥ उन्नतः Sy.

८. हे यूप ! Sy.

९. दीप्यमानस्याहवनीयाख्यस्याग्नेः । समिद्धस्य—'ञिइन्धी दीप्तौ' । कर्मणि निष्ठायां 'श्वीदितो निष्ठायाम्' (Pa.7.2.14.) इतीट्प्रतिषेधः । सम्यगिद्ध इति । 'गतिरनन्तरः' (Pa. 6. 2. 49.) इति पूर्वपदप्रकृतिस्वरत्वम् Sy.

१०. प्राच्यां दिशि । पुरस्तात्—पूर्वशब्दस्य 'दिक्शब्देभ्यः सप्तमीपञ्चमी०' (Pa. 5. 3. 27.) इत्यादिनास्तातिप्रत्ययः । 'अस्ताति च' (Pa. 5. 3. 40.) इति पूर्वस्य पुरादेशः । प्रत्ययस्वरः Sy.

११. तत्र वर्तमानः । श्रयमाणः—'श्रिञ् सेवायाम्' इत्यस्य लटः शानच् । तस्य लसार्वधातुकस्वरेणाद्युदात्तत्वे कृते धातुस्वरः शिष्यते Sy. १२. अन्नः P. ब्रह्म—'नब्विषयस्यानिसन्तस्य' (Phiṭ. 2. 26.) इत्याद्युदात्तः Sy. सूनृता, ब्रह्म । वर्चः । इत्यन्ननामानि Ngh. 2. 7.

१३. ०र्जित P. जरारहितं समृद्धम् । अजरम्—'नञो जरमरमित्रमृताः' (Pa. 6.2.116.) इत्युत्तरपदाद्युदात्तत्वम् Sy.

शोभनपुत्रम्[1] । प्रयच्छन्[2] । दूर[3] एव । अस्मत्तः[4] । "'अमतिं[5] बाधमानः[6]', इत्यशनाया[7] वै[8] पाप्मा-[9]मतिस्तामेव[10] तदारान्नुदते[11][12]" इत्युक्तम्[13] । उच्छ्रयस्व[14] । महते[15] । सुधनत्वाय[16] ।[17]

उच्छ्रयस्व वनस्पते वर्ष्मन्पृथिव्या अधि ।
सुमिती मीयमानो वर्चो धा यज्ञवाहसे ॥ २ ॥

उच्छ्रयस्व । उत्तिष्ठ[18] । वनस्पते[19] ! पृथिव्याः[20] । वर्ष्मन्[21] । अधि[20] सारभूते देशे देवयजने ।

---

१. शोभनापत्ययुक्तम् । सुवीरम्—'वीरवीर्यौ च' (Pa. 6. 2. 120.) इत्युत्तरपदाद्युदात्तत्वम् Sy.

२. वन्वानः—'वनु याचने' अत्रायं धातुर्दानार्थे वर्तते । लटः शानच्प्रत्ययः । चित्त्वादन्तोदात्तः Sy.

३. दूरे । आरे—एवमादित्वादन्तोदात्तः Sy.

४. अस्मत्—'युष्मसिभ्यां मदिक्' (Uṇādi. 1. 136.) इति मदिक्प्रत्ययः । 'सुपां सुलुक्०' (Pa. 7. 1. 39.) इति सुपो लुक् । मदिक्प्रत्ययस्वरः Sy.

५. ०मति P. अस्माकं शत्रुभूतामशनायाम् । तादृशं शत्रुम् । अमतिम्—'तत्पुरुषे०' (Pa. 6. 2. 2.) इति पूर्वपदप्रकृतिस्वरत्वम् Sy.

६. ०धनः P. अपनुदंस्त्वम् Sy.

७. A fragment of RV. 3. 8. 2.

८. अना० P.

९. पाप्मम० P.

१०. ०मतीस्ता० P.

११. ०रानुद० P.

१२. AB. 2. 2.

१३. ०त्युत्तम् P.

१४. मच्छ्र० M. उच्छ्रितो भव । उत—निपातत्वेनाद्युदात्तः । श्रयस्व—'श्रिञ् सेवायाम्' इत्यस्य लोण्मध्यमैकवचने थास् । 'थासः से' (Pa. 3. 4. 80.) इत्यादेशः । 'सवाभ्यां वामौ' (Pa. 3. 4. 91.) इत्येकारस्य वकारः । निघातः Sy.

१५. महते । वर्तमाने 'पृषद्बृहन्महत्०' इति निपातनादन्तोदात्तः । 'बृहन्महतोरुपसंख्यानम्' इति विभक्तेरुदात्तत्वम् Sy.

१६. धनादिसम्पत्त्यर्थम् । सौभगाय—'प्राणभृज्जातिवयोवचन०' (Pa. 5. 1. 129.) इत्यञ् । 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' (Pa. 7. 3. 19.) इति वृद्धिः । सर्वविधीनां छन्दसि विकल्पितत्वाद् इत्युत्तरपदस्य वृद्धिर्न भवति । ञित्स्वरः Sy.

१७. समिद्धस्य श्रयमाणः पुरस्तादिति समिद्धस्य ह्येष एतत्पुरस्ताच्छ्रयते ब्रह्म वन्वानो अजरं सुवीरमित्याशिषमेवाशास्त आरे अस्मदमतिं बाधमान इत्यशनाया वै पाप्मामतिस्तामेव तदारान्नुदते यज्ञाच्च यजमानाच्चोच्छ्रयस्व महते सौभगायेत्याशिषमेवाशास्ते' (AB. 2. 2.)

१८. उच्छ्रितो भव Sy. उन्नतो भव Mah. ऊर्ध्वो भव U.

१९. वनस्पते—अपादादित्वादाष्टमिकमनुदात्तत्वम् Sy. वनस्पते ! वृक्षावयवदण्ड ! Mah. हे वनस्पते ! यूप ! U.

२०. पृथिव्या अधि पृथिव्याम् । पृथिव्याः—'उदात्तयणो हल्पूर्वात्' (Pa. 6. 1. 174.) इति विभक्तेरुदात्तत्वम् Sy.

२१. वर्षन् M. उत्कृष्टे देवयजनाख्ये देशे Sy.

शोभनेन मानेन[1] । मीयमानः[2] । यजमानाय[3] । वर्चः[4] । धेहि[5] ।

युवा॑ सु॒वासाः॒ परि॑वीत॒ आगा॒त्स उ॒ श्रेया॑न्भवति॒ जाय॑मानः ।
तं धीरा॑सः क॒वय॒ उन्न॑यन्ति स्वा॒ध्यो॒३॑ मन॑सा दे॒व॒यन्तः॑ ॥ ४ ॥

युवा सुवासाः[7] । युवा[8] । शोभनेन वाससा[9] रशनया[10] युक्तः[11] । तया परिवीतः[12] । आगतः[13] ।

---

१. ०नेनि M. and P. शोभमानया बुद्धया; अथवा शोभनेन परिमाणेन । सुमिती—'माङ् माने' (DP. 4. 34.) इत्यस्य क्तिनि 'द्यतिस्यतिमास्था०' (Pa. 7. 4. 40.) इतीकारादेशः । शोभना मतिः । 'तादौ च निति कृत्यतौ (Pa. 6. 2. 50.) इति गतेः प्रकृतिस्वरत्वम् । 'सुपां सुलुक्०' (Pa. 7. 1. 39.) इति पूर्वसवर्णदीर्घः Sy.

२. मी P. इयत्तया परिच्छिद्यमानस्त्वम् । मीयमानः—'माङ् माने' इत्यस्य कर्मणि यक् । 'घुमास्था०' (Pa. 6. 4. 66.) इतीत्वम् । प्रत्ययस्वरः Sy.

३. यज्ञनिर्वाहकाय यजमानाय । यज्ञवाहसे—यज्ञं वहति प्राप्नोति । 'वह प्रापणे' इत्यस्य 'वहिहाधाञ्भ्यश्छन्दसि' (Uṇādi. 4. 660.) इत्यसुन् । 'णित्' इत्यनुवृत्तेरुपधावृद्धिः । 'गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वं च' (Uṇādi. 4. 666.) इति पूर्वपदप्रकृतिस्वरः Sy.

४. अन्नम् Sy.

५. धेति P. धाः—धाञो लोडर्थे 'छन्दसि लुङ्लङ्०' (Pa. 3. 4. 6.) इति लुङ् । 'इतश्च०' (Pa. 3. 4.100.) इति सिप इकारलोपः । 'गातिस्था०' (Pa. 2. 4. 77.) इति सिचो लोपः । 'बहुलं छन्दसि' इत्यडभावः । निघातः Sy.

६. 'उच्छ्रयस्व वनस्पत इत्युच्छ्रीयमाणायाभिरूपा यद्यज्ञेऽभिरूपं तत्समृद्धम् । वर्ष्मन् पृथिव्या अधीत्येतद्वै वर्ष्म पृथिव्यै यत्र यूपमुन्मिन्वन्ति सुमिती मीयमानो वर्चो धा यज्ञवाहस इत्याशिषमाशास्ते' AB. 2. 2.
This stanza=YV. 4. 10.

७. सुवसाः P.

८. दृढाङ्गोऽष्टाश्रयादिलक्षणलक्षित इत्यर्थः । युवा—यौतेः 'कनिन्युवृषितक्षि०' इत्यादिना कनिन्प्रत्ययः । कित्त्वाद्गुणाभावः । उवङादेशः । नित्त्वादाद्युदात्तत्वम् Sy.

९. सुवासाः—'वस आच्छादने' । 'असुन्' इत्यनुवृत्तौ 'वसेर्णित्' इत्यसुन्प्रत्ययः णित्त्वादुपधावृद्धिः । 'सोर्मनसी०' (Pa. 6. 2. 117.) इत्युत्तरपदाद्युदात्तत्वम् Sy.

१०. ०शनाय P.

११. Omitted in P.

१२. तयापि वेष्टितः । परिवीतः—'व्येञ् संवरणे' । कर्मणि क्तः । यजादित्वात्सम्प्रसारणम् । 'गतिरनन्तरः' (Pa. 6. 2. 49.) इति पूर्वपदप्रकृतिस्वरत्वम् Sy.

१३. एवंविधो यूप आगच्छति । अगात्—'इण् गतौ' इत्यस्य लुङि 'इणो गा लुङि' (Pa. 2. 4. 45.) इति गादेशः । 'गातिस्था०' (Pa. 2. 4. 77.) इति सिचो लोपः । अडागमः Sy.

स । एव[1] । अन्येभ्यो वनस्पतिभ्यः श्रेयान्[2] । भवति । जायमानो[3] जायमानेभ्यः[4] । तं[5] च । धीरासः[6] । कवयः[7] । उन्नयन्ति[8] । शोभनकर्माणः[9] । मनसा । देवान्कामयमानाः[10] ।[11]

## जातो जायते सुदिनत्वे अह्नां समर्य आ विदथे वर्धमानः ।
## पुनन्ति धीरा अपसो मनीषा देवया विप्र उदियर्ति वाचम् ॥ ५ ॥

जातः । पृथिव्यां[12] जातः । सम्प्रत्यह्नाम्[13] । सुदिनत्वे[14] । जायते सुदिनान्यहानि[15] करोति यज्ञनयनेन । समनुष्ये[16] । यज्ञे[17] । वर्धमानः[18] । आकारः सप्तम्यर्थं[19] स्फुटीकरोति । तं[20] प्रक्षाल-[21]

---

१. एव यूपः Sy.

२. श्रेयान्—प्रशस्यस्य 'द्विवचनविभज्योपपदे०' (Pa. 5. 3. 57.) इतीयसुन्प्रत्ययः। तस्मिन् 'प्रशस्यस्य श्रः' (Pa. 5. 3. 60.) इति आदेशः। गुणः। नित्त्वादाद्युदात्तत्वम्। एकादेश आद्युदात्तः Sy.

३. उत्कृष्टतया सम्पद्यमानः Sy.

४. याजमा० P. ५. तमेवंविधम् Sy.

६. यूयं प्राज्ञाः Sy.

७. कान्तदर्शिनोऽध्वर्य्वादयः Sy.

८. उन्नतं कुर्वन्ति Sy.

९. सुष्ठु सर्वतो ध्यानयुक्ताः । स्वाध्यः—'ध्यै चिन्तायाम्' । स्वाङोरुपसर्गयोः प्राक् प्रयोगः । 'अन्येभ्योऽपि दृश्यते' (Pa. 3. 2.178.) इति क्विप् । दृशिग्रहणात् सम्प्रसारणम् । 'सम्प्रसारणाच्च' (Pa. 6. 1. 108.) इति पूर्वरूपत्वम् । 'हलः' (Pa. 6. 4. 2.) इति दीर्घः । जसि 'एरनेकाचः०' (Pa. 6. 4.82.) इति यणादेशः। कृदुत्तरपदप्रकृतिस्वरत्वम् । 'उदात्तस्वरितयोर्यणः०' (Pa. 8. 2. 4.) इति जसः स्वरितत्वम् Sy.

१०. देवयन्तः—'सुप आत्मनः क्यच्' (Pa. 3. 1. 8.) इति क्यचि चित्त्वादन्तोदात्तः Sy.

११. युवा सुवासाः परिवीत आगादित्युत्तमया परिदधाति प्राणो वै युवा सुवासाः सोऽयं शरीरैः परिवृतः स उ श्रेयान् भवति जायमान इति श्रेयाञ्छ्रेयान्ह्येष एतद्भवति जायमानस्तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्त इति ये वा अनूचानास्ते कवयस्त एवैनं तदुन्नयन्ति' (AB. 2. 2.)

१२. पृथिव्यां प्रथममुत्पन्नो यूपः Sy.

१३. सप्र० P. १४. सुदिनत्वे सुदिनानां भाव इति। 'तस्य भावस्त्वतलौ' (Pa. 5. 1.119.) इति त्वः। प्रत्ययस्वरः Sy.

१५. पशुनियोजनादिद्वारेण यज्ञनिर्वाहकतयाहानि सुदिनानि करोतीत्यर्थः Sy.

१६. तैः सहिते। समर्ये—'मृङ् प्राणत्यागे' इत्यस्मात् 'छन्दसि निष्टर्क्य०' (Pa. 3. 1. 123.) इति क्यप्रत्ययान्तत्वेन निपातनाद् गुणः। 'समासस्य' (Pa. 6. 1. 223.) इत्यन्तोदात्तत्वम् Sy. हरयः । मर्याः । मर्त्याः । इति मनुष्यनामानि Ngh. 2. 3.

१७. विदथः । नार्यः । सवनमिति यज्ञनामानि Ngh. 3. 17.

१८. घृताञ्जनरशनापरिव्ययणादिना सर्वतः शोभमानः सन् Sy. १९. म्यर्थं P.

२०. तत् M. तं यूपम् Sy.

२१. प्रज्वाल M.

नादिभिः शोधयन्ति। धीराः। कर्मणः। बुद्ध्या। देवानां यष्टा। मेधावी च होता। स्तुतिलक्षणां वाचम्। युष्मान् प्रति प्रेरयति।

यान्वो नरो देवयन्तो निमिम्युर्वनस्पते स्वधितिर्वा ततक्ष।
ते देवासः स्वरवस्तस्थिवांसः प्रजावदस्मे दिधिषन्तु रत्नम् ॥ ६ ॥

यान्वः। नरः बहवो यूपाः। यान्। युष्मान्। देवान्कामयमानाः। यागार्थमवटेषु प्रक्षिप्तवन्तः। वनस्पते! वा। इमान्युष्मदीयान्परशुः। चिच्छेद। ते। दीप्ताः। स्वरुमन्तः।

---

१. पुनन्ति—'पूञ् पवने'। क्र्यादित्वात् श्ना। प्वादित्वात् ह्रस्वः। प्रत्ययस्वरः Sy.

२. सुप्रज्ञा अध्वर्य्वादयः Sy.

३. कर्मवन्तः Sy.

४. युध्या M. बुध्य P.

५. युष्मा M. हवींषि प्रापयिता वा। देवयाः—'या प्रापणे'। 'आतो मनिन्०' (Pa. 3. 2. 74.) इति विच्प्रत्ययः। कृदुत्तरपदप्रकृतिस्वरत्वम् Sy.

६. ०तिप्रक्षणा M. यूपविषयां स्तुतिलक्षणां वाचम् Sy.

७. यूयं प्र० M. and P.

८. उच्चारयतीत्यर्थः। इयर्ति—'ऋ गतौ' जुहोत्यादिः। अभ्यासस्य 'अर्तिपिपर्त्योश्च' (Pa. 7. 4. 77.) इतीत्वे 'अभ्यासस्यासवर्णे' (Pa. 6. 4. 78.) इतीयङादेशः। निघातः Sy.

९. 'जातो जायते सुदिनत्वे अह्नामिति जातो ह्येष एतज्जायते समर्य आ विदथे वर्धमान इति वर्धयन्त्येवैनं तत्पुनन्ति धीरा अपसो मनीषेति पुनन्त्येवैनं तद्देवया विप्र उदियर्ति वाचमिति देवेभ्य एवैनं तन्निवेदयति' (AB. 2. 2.)

१०. कर्मणां नेतारोऽध्वर्य्वादयः Sy.

११. हे यूपाः! Sy.

१२. युष्मान् P. M. repeats युष्मान्.

१३. ०ज्ञार्थं० P.

१४ ०क्षिपन्तः P. प्रचिक्षिपुः। निमिम्युः—'डुमिञ् प्रक्षेपणे' इत्यस्य लिटघुसि 'असंयोगाल्लिट् कित्' (Pa. 1. 2. 5.) इति किद्भावाद् गुणाभावः। यद्वृत्तयोगादनिघातः। 'सति शिष्टः स्वरो बलीयान्' (PMBH. on Pa. 6. 1. 158.) इति वचनात्प्रत्ययस्वरः Sy.

१५. ०स्पतयो P.

१६. अपि च Sy.

१७. न्वेमा M.

१८. पशु M. परशु P. परशुस्त्ववीयान् यूपान् ॥ स्वधितिः—स्वशब्दोपपदात् 'धि धारणे' इत्यस्मात् क्तिन् Sy.

१९. छिच्छेद M. चिच्छेद P. ततक्ष—'तक्षू त्वक्षू तनूकरणे' इत्यस्माल्लिटि णलि रूपावनिघातः। 'लिति' (Pa. 6. 1. 193.) इति प्रत्ययात्पूर्वस्योदात्तत्वम् Sy.

२०. ने M. and P. तादृशा यूपाः Sy.

२१. दीप्यमानाः Sy.

२२. स्वरुशब्दः स्वशकलवाची। तद्वन्तः। लुप्तमत्वर्थीयः। स्वरवः—'स्वृ शब्दोपतापयोः' इत्यस्मात् 'नित्' इत्यनुवृत्तौ 'शृस्वृस्निहित्रपि०' इत्यादिना उप्रत्ययः। नित्त्वादाद्युदात्तः Sy.

तिष्ठन्तः । प्रजायुक्तम् । रत्नम् । अस्मभ्यम् । धारयन्तु ।

ये वृक्णासो अधि क्षमि निमितासो यतस्रुचः ।
ते नो व्यन्तु वार्यं देवत्रा क्षेत्रसाधसः ॥ ७ ॥

**ये वृक्णासः ।** ये । परशुना छिन्नाः । क्षमायाम् । अवटेषु प्रक्षिप्ताः । यज्ञाय यतस्रुचः । ते । गमयन्तु । देवेषु । अस्मदीयम् । हविः । क्षेत्राणां साधयितारो यजमानानामिति ।

---

१. तस्थिवांसः—'ष्ठा गतिनिवृत्तौ' इत्यस्मात् छन्दसि लिट् । तस्य क्वसुः । 'वस्वेकाजाद्घसाम्' (Pa. 7. 2. 67.) इतीडागमः । प्रत्ययस्वरः Sy.

२. प्रजावत्—'जनी प्रादुर्भावे' इत्यस्मात् 'उपसर्गे च संज्ञायाम्' (Pa. 3. 2. 99.) इति डः । ततष्टाप् । 'तदस्यास्तीति०' (Pa. 5. 2. 94.) मतुप् । तस्य पित्त्वादनुदात्तत्वम् । एकादेशस्वरः Sy.

३. उत्तमं धनम् Sy.

४. अस्मद्रूपम् P. अस्मै यजमानाय । अस्मे—अस्मच्छब्दस्य 'सुपां सुलुक्०' (Pa. 7. 1. 39.) इति शे आदेशः Sy.

५. प्रयच्छन्त्वित्यर्थः । दिधिषन्तु—'धिष धारणे' जुहोत्यादिः । निघातः Sy.

६. यूपाः Sy.

७. वृक्णासः—'ओव्रश्चू छेदने' इत्यस्य निष्ठायां कित्त्वात् 'ग्रहिज्यावयि०' (Pa. 6. 1. 16.) इत्यादिना सम्प्रसारणम् । 'ओदितश्च' (Pa. 8. 2. 45.) इति निष्ठानत्वम् Sy.

८. अधि क्षमि क्षमायां भूमौ । क्षमि—'आतो धातोः' (Pa. 6. 4. 140.) इत्यत्र 'आतः' इति योगविभागादाकारलोपः Sy.

९. तैर्ऋत्विग्भिरवटेषु नितरां प्रक्षिप्ताः । निमितासः—'डुमिञ् प्रक्षेपणे' इति कर्मणि क्तः । 'गतिरनन्तरः' (Pa. 6. 2. 49.) इति पूर्वपदप्रकृतिस्वरत्वम् Sy.

१०. यज्ञा P.

११. स्रुचः P. यतस्रुच इति ऋत्विग्वाची । 'यतस्रुचः, मरुतः, सबाधः' (Ngh. 3. 18.) इति ऋत्विङ्नामानि । यताः स्रुचो यैस्ते यतस्रुचः । यतस्रुचः—बहुव्रीहौ पूर्वपदप्रकृतिस्वरः Sy.

१२. ०यतु P. अस्मदीयं हविर्देवाधीनं कुर्वन्त्वित्यर्थः । व्यन्तु—'इण् गतौ' इत्यस्य लोटि रूपम् । इकारलोपश्छान्दसः । अयमन्तर्भावितण्यर्थः Sy.

१३. देवत्रा—'त्रा' इत्यनुवृत्तौ 'देवमनुष्यपुरुषपुरुमर्त्येभ्यः०' (Pa. 5. 4. 56.) इत्यादिनाधिकरणे त्राप्रत्ययः Sy.

१४. वरणीयं सम्भजनीयं हविः । वार्यम्—'वृङ् सम्भक्तौ' इत्यस्मात् 'ऋहलोर्ण्यत्' (Pa. 3. 1. 124.) इति कर्मणि ण्यत् । 'ईडवन्दवृशंसदुहां ण्यतः' (Pa. 6. 1. 214.) इत्यादिनाऽऽद्युदात्तत्वम् Sy.

१५. क्षेत्राणाः P. क्षेत्रस्य यज्ञस्य साधकाः । यथा क्षेत्रं सस्यादिद्वारा फलं प्रयच्छति तथा यज्ञोऽप्यपूर्वद्वारा स्वर्गादिफलं ददातीति क्षेत्रम् । एवंविधाः । क्षेत्रसाधसः—'राध साध संसिद्धौ' इत्यस्माद् औणादिकोऽसुन् । कृदुत्तरपदप्रकृतिस्वरः Sy.

आ॒दि॒त्या रु॒द्रा वस॑वः सुनी॒था द्यावा॒क्षामा॑ पृथि॒वी अ॒न्तरि॑क्षम् ।
स॒जोष॑सो य॒ज्ञम॑वन्तु दे॒वा ऊ॒र्ध्वं कृ॑ण्वन्त्वध्व॒रस्य॑ के॒तुम् ॥ ८ ॥

आदित्याः । आदित्यादयः । शोभननयनाः । द्यावाभूमी च । विस्तीर्णं । अन्तरिक्षं च । सङ्गताः । यज्ञमिमम् । रक्षन्तु । यज्ञस्य च । चिह्नभूतं यूपसङ्घम् । उच्छ्रयन्तु ।

---

१. आदि includes रुद्राः । वसवः and देवाः ॥ द्वादशादित्याः । आदित्याः—अदितेरपत्यानि 'दित्यदित्यादित्यपत्युत्तरपदात्०' (Pa. 4. 1. 85.) इति ण्यः । णित्त्वादादिवृद्धिः । प्रत्ययस्वरः ॥ रुद्रा एकादश रुद्राः । रुद्राः—रोदयन्ति सर्वानन्तकाले 'रोदेर्णिलुक् च' (Uṇādi. 2. 179.) इति रक्प्रत्ययः । तत्सन्नियोगेन णिलोपः । प्रत्ययस्वरः । जसः सुप्त्वादनुदात्तत्वे 'एकादेश उदात्तेनोदात्तः' (Pa. 8. 2. 5.) इत्येकादेशस्याप्युदात्तत्वम् ॥ अष्टौ वसवः । वसवः—'वस निवासे' 'नित्' इत्यनुवृत्तौ 'शस्वृस्निहित्रप्यसिवसि०' (Uṇādi. 1. 10.) इत्यादिना उप्रत्ययः । नित्त्वादाद्युदात्तः Sy.

२. यज्ञस्य सुष्ठु नेतारः । यद्वा सुष्ठुनीथाः सुष्टुतयः । 'स्तुतशस्त्राणि नीथानि चोक्थामदानि च' (AB. 2. 38.) इति हि श्रूयते । सुनीथाः—'णीञ् प्रापणे' । 'हनिकुषिनीरमिकाशिभ्यः०' (Uṇādi. 2. 159.) इति क्थन् । कित्त्वाद् गुणः । 'थाथघञ्क्त०' (Pa. 6. 2. 144.) इत्युत्तरपदान्तोदात्तत्वम् Sy.

३. द्यावापृथिव्यौ । द्यावाक्षामा—द्यौश्च क्षामा च । 'दिवो द्यावा' (Pa. 6. 3. 29.) इति द्यावादेशः । 'देवताद्वन्द्वे च' (Pa. 6. 2. 141.) इत्युभयपदप्रकृतिस्वरत्वम् Sy.

४. पृथिवी—सुव्यत्ययः—पृथु विस्तीर्णम् । पृथिवी—'प्रथ प्रख्याने' । 'प्रथे षिवन् सम्प्रसारणञ्च' (Uṇādi. 1. 148.) इति षिवन् सम्प्रसारणञ्च । 'षिद्गौरादिभ्यश्च' (Pa. 4. 1. 41.) इति ङीष् । प्रत्ययस्वरेणान्तोदात्तः Sy.

५. संगतः M. एते सर्वे ऐकमत्येन परस्परं सङ्गता भूत्वा Sy.

६. इममस्मदीयं यज्ञम् Sy.

७. अवन्तु—'अव रक्षणे' निघातः Sy.

८. ध्वजभूतं प्रज्ञापकं वा इमं यूपम् Sy.

९. ०सङ्घम् च P.
यूपम् Sy.

१०. M. adds च after उच्छ्रयन्तु ॥ उच्छ्रितं कुर्वन्तु । कृण्वन्तु—'कृवि हिंसाकरणयोः' इत्यस्माल्लोटि 'धिन्विकृण्व्योर च' (Pa. 3. 1. 80.) इत्युप्रत्ययः, अकारश्चान्तादेशः । निघातः Sy.

हंसाइव श्रेणिशो यतानाः शुक्रा वसानाः स्वरवो न आगुः ।
उन्नीयमानाः कविभिः पुरस्ताद्देवा देवानामपि यन्ति पाथः ॥ ९ ॥

हंसाइव । हंसाइव[1] । पङ्क्तिशः[2] । यतमानाः[3] । शुक्राणि[4] वासांसि । आच्छादयन्तः । यूपाः[5] । अस्मान् । आगताः[6] । यज्ञस्य पुरस्तात्[7] । उच्छ्रीयमाणाः । देवाः[8] । देवानाम् । प्राप्नुवन्ति[9] । स्थानम्[10] ।[11]

शृङ्गाणीवेच्छृङ्गिणां सं ददृश्रे चषालवन्तः स्वरवः पृथिव्याम् ।
वाघद्भिर्वा विहवे श्रोषमाणा अस्माँ अवन्तु पृतनाज्येषु ॥ १० ॥

शृङ्गाणीव[12] । शृङ्गाणीव[13] । महिषादीनाम्[14] । सन्दृश्यन्ते[15] । चषालवन्तः[16] । यूपाः[17] । अस्याः

---

१. Omitted in P. अत्र दृष्टान्तः । यथा नभसि पङ्क्तिशः पतन्तो हंसाः शोभन्ते तद्वत् शोभमानाः । हंसाइव—'इवेन विभक्त्यलोपः' (VPa. 2. 1. 4.) इति वचनात्पूर्वपदस्वरः Sy.

२. श्रेणिशः । 'बह्वल्पार्थाच्छस्०' इति शस् । प्रत्ययस्वरः Sy.

३. पत० M. and P. प्रवर्तमानाः Sy.

४. शुक्रा दीप्तानि रशनाख्यानि वासांसि । शुक्रा—'शुच दीप्तौ' इत्यस्मात् 'ऋज्रेन्द्राग्र०' (Uṇādi. 1. 186) इत्यादिना रन्प्रत्ययान्तत्वेन निपातनादन्तोदात्तः Sy. ५. स्वरुमन्तः Sy.

६. प्रापुः । आगुः—'इण् गतौ' इत्यस्माल्लुङि रूपम् । निघातः Sy.

७. आहवनीयस्य पूर्वभागे Sy.

८. दीप्यमानास्ते यूपाः Sy.

९. अध्वर्य्वादिभिरुच्छ्रीयमाणा यूपा अतिदैर्घ्यादन्तरिक्षं व्याप्य वर्तन्त इत्यर्थः Sy.

१०. अन्तरिक्षम् । 'पाथोनदीभ्यां ड्यण्' (Pa. 4. 4. 111.) इति सूत्रे पाथोऽन्तरिक्षमिति वृत्तिकारोऽप्यवादीत् । तादृशमन्तरिक्षम् Sy. पाथोऽन्तरिक्षम् । पथा व्याख्यातम् N. 6. 7.

११. VM. ignores कविभिः and अपि ॥ कविभिर्मेधाविभिरध्वर्य्वादिभिः Sy.

१२. Omitted in P.

१३. विषाणानीव । शृङ्गाणि—'शॄ हिंसायाम्' इत्यस्मात् 'शृणातेर्ह्रस्वश्च' (Uṇādi. 1. 123.) इति गन् नुडागमो धातोर्ह्रस्वश्च । नित्स्वरः Sy.

१४. शृङ्गिणां म० P.

१५. सम्यक् दृश्यन्त एव । ददृश्रे—'छन्दसि लुङ्लङ्लिटः' (Pa. 3. 4. 6.) इति लडर्थे लिट् । 'इरयो रे' (Pa. 6. 4. 74.) इतीरेचो रे इत्यादेशः । निघातः Sy.

१६. प्रतिमुक्तकण्टकाः Sy.

१७. स्वरुमन्तः । एवंविधा यूपाः Sy.

पृथिव्याः[1] । ऋत्विग्भिः[2] । इवास्माभिः[3] । विहवे[4] क्रियमाणे सति । स्तुति श्रोषमाणाः[5] । अस्मान्[6] । रक्षन्तु । सेनासङ्गमनेषु[7] ।[8]

**वनस्पते शतवल्शो वि रोह सहस्रवल्शा वि वयं रुहेम ।**
**यं त्वामयं स्वधितिस्तेजमानः प्रणिनाय महते सौभगाय ॥ ११ ॥**

वनस्पते । वनस्पते[9] ! त्वम् । शतशाखः । विरोह[10] । वयं[11] च । सहस्रशाखाः[12] । विरुहेम[13] । यम् । त्वाम्[14] । अयम् । परशुः । निशित[15]धारः । प्रणिनाय[16] यज्ञे[17] । महते[18] । सौभाग्याय[19]इति[20] ।

---

१. पृथिव्याम् Sy.

२. वाघतः । वृक्तबर्हिषः, इत्यृत्विङ्नामनी । Ngh. 3. 18.

३. एवा० P. वा अपि च Sy.

४. विहवे । विविधं हूयन्ते हवींष्यत्रेति विहवो यज्ञः । तस्मिन् यज्ञे Sy.

५. ०श्रोषणं P. स्तुतिम् is suggested for स्तुति ॥ तैः क्रियमाणं स्तुतिलक्षणं शब्दं शृण्वन्तः । तादृशा यूपाः Sy.

६. यजमानान् Sy.

७. पृतनाज्यशब्दः सङ्ग्रामवाची । पृतनाज्येषु सङ्ग्रामेषु । वधस्थलेष्विति यावत् Sy. आहवे । आजौ । पृतनाज्यम् । इति सङ्ग्रामनामानि Ngh. 2.17.

८. VM. ignores इत् ।

९. हे वनस्पते ! छिन्नमूल ! स्थाणो ! Sy.

१०. विशेषेण प्रादुर्भूतो भव Sy.

११. वयमपि Sy.

१२. पुत्रपौत्रादिसन्तानपरम्परया सहस्रशाखाः सन्तः । सहस्रवल्शाः—सहस्रशब्दः कर्मादित्वान्मध्योदात्तः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः Sy.

१३. विनहे P. विशेषेण प्रादुर्भूता भवेम Sy.

१४. यूपार्थं वृक्षम् BB.

१५. शित P. 'तिज निशातने' BB.

१६. ०णिय P. प्रकर्षेण प्रापयामास । प्रणिनाय—'णीञ् प्रापणे' इत्यस्माल्लिटि णलि रूपम् । पादादित्वादनिघातः । 'लिति' (Pa. 6. 1. 193.) इति प्रत्ययात् पूर्वस्योदात्तत्वम् Sy. प्रकर्षेण नयति शाखाः प्रसाध्य विशिष्टं रूपं प्रापयति BB.

१७. Omitted in P.

१८. महेते P.

१९. महते सौभगाय महत्सौभाग्यं बहुशाखत्वलक्षणम् Sy.
सुभगत्वाय, सुश्रीकत्वाय BB.

२०. स खलु त्वमसीति शेषः । स त्वमस्मद्यज्ञं साधयेति वा BB.
This stanza=TS. 1. 3. 5. 1; 6. 3. 3. 3.

## III. 9.

सखायस्त्वा ववृमहे देवं मर्तास ऊतये ।
अपां नपातं सुभगं सुदीदितिं सुप्रतूर्तिमनेहसम् ॥ १ ॥

सखायः[1] । अग्ने ! सखायः[2] । त्वाम् । वृणीमहे[3] । देवम्[4] । मनुष्याः[5] । रक्षणाय[6] । अपाम्[7] । पौत्रम्[8] । सुधनम्[9] । शोभनदीप्तिम् । शोभनप्रतरणम्[10] । अनुपद्रवम्[11] ।

---

१. 'सखायस्त्वा' इति नवर्चं नवमं सूक्तं वैश्वामित्रम् । अत्रेयमनुक्रमणिका—'सखायो नव बार्हतं त्रिष्टुबन्तम्' (KSA. 17. 9. p. 15.) इति । अन्त्या त्रिष्टुप् । शिष्टा अष्टौ बृहत्यः । प्रातरनुवाकाश्विनशस्त्रयोर्बार्हते छन्दस्यस्य सूक्तस्य विनियोगः । 'अथैतस्याः' इति खण्डे सूत्रितम्—'सखायस्त्वाय-मग्निरग्न आ याहि' (ASS. 4. 13.) इति. . . विश्वामित्रः स्तौति Sy.

२. सोमाज्यादिहविष्प्रदानेनोपकारकत्वान्मित्राणि । सखायः—'ख्या प्रकथने' । 'समाने ख्यश्चोदात्तः' (Uṇādi. 4. 576.) इति समान उपपदे 'डित्' इत्यनुवृत्तौ ख्यातेरिण् । तस्य डित्त्वाट्टिलोपः । तत्सन्नियोगेन यलोपः । 'समानस्य छन्दस्यमूर्ध॰' (Pa. 6. 3. 84.) इति सभावः । उपपदस्योदात्तत्वम् । 'णित्' इत्यनुवृत्तौ 'सख्युरसम्बुद्धौ' (Pa. 7. 1. 92.) इति णिद्वद्भावः । वृद्ध्यायादेशौ । आद्युदात्तः Sy.

३. ववृमहे—'वृङ् सम्भक्तौ' । 'छन्दसि लुङ्लङ्लिटः' (Pa. 3. 4. 6.) इति वर्तमाने लिट् । क्रादित्वादिडभावः । निघातः Sy.

४. देव P.

५. ऋत्विजो वयम् Sy.

६. ऊतये—'अव रक्षणे' इत्यस्य 'उदात्त' इत्यनुवृत्तौ 'ऊतियूति॰' (Pa. 3. 3. 97.) इत्यादिना क्तिन्नन्तत्वेन निपातनादन्तोदात्तः Sy.

७. अपाम्—'ऊडिदम्॰' (Pa.6.1.171.) इति विभक्तेरुदात्तत्वम् Sy.

८. पोतम् P.
नप्तारम् Sy.

९. शोभनधनयुक्तम् । सुभगम्—'आद्युदात्तं द्व्यच्छन्दसि' (Pa. 6. 2. 119.) इत्युत्तरपदाद्युदात्तत्वम् Sy.

१०. ॰प्रकरेण॰ P. कर्मानुष्ठातृभिः सुखेन गन्तव्यम् । सुप्रतूर्तिम्—'क्त्वादयश्च' (Pa. 6. 2. 118.) इत्युत्तरपदाद्युदात्तत्वम् M.

११. ॰द्रवत् M.
उपद्रवरहितम् Sy.

कार्यमानो <u>व</u>ना त्वं यन्मा<u>तृ</u>रजंगन्नुपः ।
न तत्ते अग्ने <u>प्र</u>मृषे नि<u>व</u>र्तनं॒ यद्दू॒रे स<u>न्नि</u>हाभवः ॥ २ ॥

कायमानः[1] । अरण्यानि[2] । रक्षितुं[3] कामयमानः[4] । यदा[5] । त्वम् । मातॄः[6] । अपः[7] । गच्छसि[8] । न[9] । तदानीम्[10] । तव । अग्ने[11] ! प्रमर्षणाय[12] भवति । आत्माभिमुखं[13]

---

१. Omitted in P. विश्वामित्रस्य SKN. विश्वामित्रस्येदमार्षम् Dur.

२. काननानि Sy. वनानि वृक्षान्, तद्धितेन तद्विकारभूतानि काष्ठान्युच्यन्ते, काष्ठानि SKN. किम् ? स्वां योनिम् । कतमाम् ?...वनानि दारूणि । दारुभ्योऽग्निर्जायते तदेतत्प्रसिद्धमेवोक्तम् । यदा चाग्निरनुगच्छति, अरणीवावगच्छति Dur. ३. भक्षिता M.

४. कायमानः—'कमु कान्तौ' । 'कर्मणिङ्' लटः शानच् । मकारलोपश्छान्दसः Sy. चायमानः, योनिद्वयं पश्यन्नित्यर्थः । कामयमानो वा SKN. पश्यन्नित्यर्थः । अथवा कामयमानः Dur. ५. यद्यस्मात्कारणात् तानि विहाय Sy. यदा च Dur.

६. मातृभूताः Sy. मातुर्वा सर्वभूतनिर्मात्रीः Dur. ७. सापि योनिरेवाग्नेः । 'आपो वाऽग्नेर्योनिः' इति ह विज्ञायते Dur.

८. अगमः । गतवानसि । अप्सु प्रविष्टत्वाच्छान्तो वर्तसे । अजगन्—'गम्लृ गतौ' इत्यस्य लङि 'बहुलं छन्दसि' इति शपः श्लुः । हल्ङ्यादिना सिलोपः । 'मो नो धातोः' इति नकारः । यच्छब्दयोगादनिघातः । अडागमस्वरः Sy. गच्छतिकर्मायम्, गच्छस्यपः । कदा पुनरग्निः काष्ठान्यपश्च गच्छति ? उच्यते यदोपशाम्यति । कथम् ? सर्वं हि कार्यं विनश्यत् स्वयोनिं गच्छति । अग्नेश्च पार्थिवस्य योनिः काष्ठानि, वैद्युतस्यापः । तेन पार्थिवोऽग्निरुपशाम्यन्काष्ठानि गच्छति, वैद्युतोऽपः । अत एतदुच्यते काष्ठान्यपश्च गच्छसीति SKN. अनयोर्योन्योरन्यतरां योनिम्...यदा...आगमस्त्वम् । कदा पुनरागमः ? उपशाम्यन् । इत्यध्याहृतं भाष्यकारेण, अनुगच्छन्नित्यर्थः Dur.

९. Omitted in P. १०. तस्मात् Sy.

११. हे अग्ने ! Sy. हे भगवन्नग्ने ! Dur.

१२. प्रकर्षेणा० P. स विनाशो न प्रमृषे, न प्रमृष्यते, न सह्यते । प्रमृषे—'मृष तितिक्षायाम्' व्यत्ययेन कर्मणि तप्रत्ययः 'लोपस्त आत्मनेपदेषु' (Pa. 7. 1. 41.) इति तलोपः । धातुस्वरः Sy. मृष तितिक्षाकर्मा । तितिक्षा क्षमा, प्रकर्षेण न क्षम्यते SKN. तस्य तवैवमनुगच्छतः किम् ? इत्युच्यते...न प्रमृष्यते न प्रमृज्यते Dur.

१३. नितरां तत्रैव वर्तनम् । तेन च विनाशो लक्ष्यते Sy. निवर्तनं विनाशः SKN. वर्त्म मार्गो न लुप्यत इत्यर्थः Dur.

गमनम्। यदा[१] त्वम्। दूरे[२]। जायमानः[३]। क्षणेन समीपे[४]। भवसि[५]।[६]

**अति॑ तृ॒ष्टं व॑वक्षि॒थाथै॒व सु॒मना॑ असि।**
**प्रप्रा॒न्ये यन्ति॒ पर्य॒न्य आ॑सते॒ येषां॑ स॒ख्ये असि॑ श्रि॒तः॥ ३॥**

अति तृष्टम्। स्तोतुस्तृष्णाम्[७]। अतिवहसि[८]। सुमनाश्च[९]। भवसि[१०]। तदनन्तरम्[११]। एव। तस्मै तं त्वां केचिदग्ने[१२]! स्तुतिभिः प्र[१३]गच्छन्ति[१४]। परितः। आसते[१५]। अन्ये[१६]। येषां[१७] त्वम्। सख्ये[१८]। श्रितः। भवसि[१९] सख्यमुपगच्छसीत्यर्थः[२०]।

---

१. कुतः ? इत्यत आह—यस्मात् कारणात् Sy. यस्मात् Dur.

२. दूरो M. यद् दूरे भवति, न स दृश्यते। तत्सम्बन्धाद् दूरे सत्तयाऽत्रादर्शनं लक्ष्यते SKN. कथं गम्यते न प्रमृज्यते मार्ग इति ? दूरेऽपि Dur.

३. अदृश्यतया वर्तमानस्त्वम् Sy. अदृश्यमानः सन्नित्यर्थः SKN. अदृश्योऽपि भूत्वा Dur.

४. इहास्मत्सम्बन्धिष्वरणिरूपेषु काष्ठेषु Sy. पुनः SKN., Dur.

५. मन्थनात् क्षणमात्रेणास्माकं समीपे भवसि। तस्मात्तव दूरतो वर्तनमस्मभ्यं न रोचते। अभवः—'छन्दसि लुङ्लङ्लिटः' (Pa. 3. 4. 6.) इति लडर्थे लङ्। यद्योगादनिघातः Sy. भवसि, तत एव काष्ठाद् वा पुनः SKN. भवस्येव, कदा ? जायमानः, यद् यदाऽद्भ्यो जायसे वैद्युतात्मना, यदा वाऽरणिभ्यां जायसे मथ्यमानस्तदा Dur.

६. कायमानश्चायमानः कामयमान इति वा। वनानि। त्वं यन्मातॄरपोऽगम उपशाम्यन्। न तत्ते अग्ने प्रमृष्यते निवर्तनम्। दूरे यत् सन्निह भवसि जायमानः N. 4.14., SKN. II. 228.

७. ०तु तृ० P. स्तोतुस्तृष्णाभिलाषं तदुचितफलप्रदानेन सफलं कर्तुम् Sy.

८. अतिशयेन वोढुमिच्छसि। ववक्षिथ—'वह प्रापणे' इत्यस्य सनि रूपम्। अभ्यासस्य 'सन्यतः' इतीत्वाभावश्छान्दसः। तदन्ताद् वर्तमाने लिट्। वलः 'आर्धधातुकस्येड्वलादेः' (Pa. 7. 2. 35.) इतीट्। 'कास्प्रत्ययादाम्०' (Pa. 3. 1. 35.) इत्याम् न भवति मन्त्रत्वात्। निघातः Sy.

९. नां च M. सन्तुष्टमनस्कः Sy.

१०. वर्तसे Sy. ११. अथापि त्वम् Sy.

१२. तेषां मध्ये अन्येऽध्वर्युप्रभृतयो द्वादशर्त्विजः Sy. १३. प्र प्र—'प्रसमुपोद०' (Pa. 8. 1. 6.) इति द्विर्वचनम् Sy.

१४. प्रकर्षेण होतुं गच्छन्ति। यन्ति—'इण् गतौ' इत्यस्य लटि रूपम्। 'एकान्याभ्यां समर्थाभ्याम्' (Pa. 8. 1. 65.) इत्यन्यशब्दयोगात्पूर्वस्य निघाताभावः Sy.

१५. आसीना वर्तन्ते। आसते–'आस उपवेशने' उत्तरत्वान्निघातः Sy.

१६. Omitted in P. उद्गातृप्रभृतयश्चत्वारः Sy.

१७. षोडशानामृत्विजाम् Sy.

१८. मित्रत्वे Sy.

१९. वर्तसे। असि—'अस भुवि'। 'तासस्त्योर्लोपः' (Pa. 7. 4. 50.) इति सकारलोपः। यद्वृत्तयोगान्न निहन्यते Sy.

२०. ०च्छतीत्य० M.

ई॒यि॒वांस॒मति॒ स्रिधः॒ शश्व॑ती॒रति॑ स॒श्चतः॑ ।
अन्वी॑मविन्दन्निचि॒रासो॑ अ॒द्रुहो॒ऽप्सु सिं॒हमि॑व श्रि॒तम् ॥ ४ ॥

ईयिवांसम् । अतिगच्छन्तम्[1] । उपक्षपयितॄन् शत्रूनेवम्[2] । बह्वीश्च सेनाः । सङ्गकारिणीः[3] । अतिगच्छन्तम्[4] । एनमग्नि[5] तिरोहितम् । अप्सु[6] । प्रविष्टम्[7] । सिंहमिव भीमम् । अन्वविन्दन्[8] 'पश्वा[9] न तायुम्' इति मन्त्रः[10] । नितरां चिरासो[11] विश्वे देवाः । अद्रोग्धारः[12] ।

स॒स्वांसं॑मिव॒ त्मना॒ग्निमि॒त्था ति॒रोहि॑तम् ।
ऐनं॑ नयन्मात॒रिश्वा॑ परा॒वतो॑ दे॒वेभ्यो॑ मथि॒तं परि॑ ॥ ५ ॥

ससृवांसमिव । यथा[13] कश्चित्, स्वयमेव[14], सरति[15] । एवम्[16] । अग्निम् । तिरोहितम्[17] ।

---

१. बलेनातिक्रम्य गच्छन्तम् । ईयिवांसम्—'इण् गतौ' इत्यस्य क्वसौ 'उपेयिवाननाश्वाननूचानश्च' (Pa. 3. 2. 109.) इति निपातितः । प्रत्ययस्वरः Sy.

२. जतूने॰ P. शोषकान् शत्रून् । स्रिधः—स्रिधेः क्षयार्थस्य शोषणार्थस्य वा 'क्विप् च' (Pa. 3. 2. 76.) इति क्विप् । धातुस्वरः Sy.

३. सङ्गतिकारिणीः सेनाश्च । सश्चतः—'षस्ज गतौ' जकारस्य व्यत्ययेन चकारः । लटः शत्रादेशः । प्रत्ययस्वरः Sy.

४. अतिक्रम्य गच्छन्तम् Sy.

५. नम॰ P. एनं त्वामग्निम् Sy.

६. अप्सु P.

७. तिरोहितं गुहाप्रविष्टम् । श्रितम्—'श्रिञ् सेवायाम्' इत्यस्य 'श्र्युकः किति' (Pa. 7. 2. 11.) इतीट्प्रतिषेधः । प्रत्ययस्वरः Sy.

८. ॰वत् P. अनुगम्यालभन्त । अविन्दन्—'विद्लृ लाभे' इत्यस्य लङि रूपम् Sy.

९. RV. 1. 65. 1.

१०. Omitted in P.

११. ॰रादो M. चिरासोपि P. चिरन्तनाः । निचिरासः—नितरां चिराः—'आज्जसेरसुक्' (Pa. 7. 1. 50.) इत्यसुक् । समासस्वरः Sy.

१२. अद्रोग्धा॰ P. अद्रुहः—'द्रुह जिघांसायाम्' सम्पदादित्वाद् भावे क्विप् । बहुव्रीहौ 'नञ्सुभ्याम्' (Pa. 6. 2. 172.) इत्युत्तरपदान्तोदात्तत्वम् Sy.

१३. VM. seems to explain ससृवांसमिव and त्मना as यथा कश्चित्, स्वयमेव, सरति ॥ तत्र दृष्टान्तः । ससृवांसमिव । यथा स्वाच्छन्द्येन ससृवांसं सरन्तं गच्छन्तं पुत्रं पिता बलादानयति तद्वत् । 'सृ गतौ' इत्यस्माल्लिट् । तस्य क्वसुः । 'इवेन (समासो) विभक्त्यलोपश्च' (VPa. 2. 1. 4.) इत्युक्तत्वात्प्रत्ययस्वरः Sy.

१४. स्वेच्छया । त्मना—आत्मन्शब्दस्य 'मन्त्रेष्वाङ्यादेरात्मनः' (Pa. 6. 4. 141.) इत्याकारलोपः Sy.

१५. तर॰ P. १६. इत्थेत्थम् । 'था हेतौ च छन्दसि' (Pa. 5. 3. 26.) इति व्यत्ययेन थाप्रत्ययः । प्रत्ययस्वरः Sy.

१७. अप्सु प्रवेशेन...निलीनम् Sy.

देवेभ्यः[1] । परि[2] । बलाद् आहृतम्[3] । एनम्[4] । भृगवः[5], मातरिश्वा[6] । आनयत्[7] । दूरादिति[8] ।

**तं त्वा मर्ता अगृभ्णत देवेभ्यो हव्यवाहन ।**
**विश्वान्यद्यज्ञाँ अभिपासि मानुष तव क्रत्वा यविष्ठ्य ॥ ६ ॥**

तं[9] त्वा मर्ताः[10] । अग्ने ! तम्[11] । त्वाम्[12] । मनुष्याः[13] । देवेभ्यः[14] । पर्यगृह्णत[15] । हविषां वोढः[16] ! यस्मात्[17] त्वम् । सर्वानेव[18] । यज्ञान्[19] । अभिरक्षसि[20] । मनुष्यहित[21] ! तव । कर्मणा[22] । युवतम[23] ! इति ।

---

१. तादर्थ्ये चतुर्थी । देवार्थम् Sy.
२. परितः Sy.
३. मन्थनेन निष्पादितम् Sy.
४. एनम्—अन्वादेशे 'द्वितीयाटौःस्वेनः' (Pa. 2. 4. 34.) इत्येनादेशः । अनुदात्तश्च Sy.
५. भृगवः seems to be redundant.
६. मातरिश्वा वायुः । मातर्यन्तरिक्षे श्वसितीति 'श्वन्नुक्षन्०' (Uṇādi. 1. 157.) इत्यादिना निपातितः Sy.
७. आनीतवान् । नयत्—'णीञ् प्रापणे' इत्यस्य लङि रूपम् । अडभावश्छान्दसः Sy.
८. P. omits दूराद् ॥ दूरदेशात् Sy.
९. वा P. १० . मत्ता M.
११. त P. तादृशमप्सु तिरोहितम् Sy.
१२. त्वा M., D. १३. अध्वर्युप्रभृतयः Sy.
१४. यष्टव्यदेवतार्थम् Sy.
१५. अगृभ्णत—'ग्रह उपादाने' क्र्यादित्वात् श्ना । 'ग्रहिज्यावयि०' (Pa.6. 1. 16.) इति सम्प्रसारणम् । 'हृग्रहोर्भश्छन्दसि' (PMBH. V. I on. Pa. 8. 2. 32.) इति हकारस्य भकारः । 'तिङ्ङतिङः' (Pa. 8. 1. 28.) इति निघातः Sy.
१६. हव्यानां वोढर्हे अग्ने ! 'वह प्रापणे' इति धातोः 'ञ्युट्' इत्यनुवृत्तौ 'हव्येऽनन्तःपादम्' (Pa. 3. 2.66.) इति ञ्युट् । उपधावृद्धिः । योरनादेशः । अपादादित्वादाष्टमिकमनुदात्तत्वम् Sy.
१७. ०स्मात्त्वं P. यस्मात् कारणात् Sy.
१८. विश्वान्—'विश प्रवेशने' इत्यस्मात् 'अशिप्रुषिलटिकणिखटिविशिभ्यः क्वन्' (Uṇādi. 1. 149.) इति क्वन् । कित्त्वाद् गुणाभावः । नित्त्वादाद्युदात्तत्वम् Sy.
१९. अस्माभिः क्रियमाणान् यज्ञान् Sy.
२०. सर्वतः पालयसि । तस्मात्त्वामगभृणतेति पूर्वत्रान्वयः । अभिपासि—'पा रक्षणे' अस्य धातो रक्षणार्थत्वान्न पिबादेशः । यच्छब्दयोगान्न निघातः । धातुस्वरः Sy.
२१. हे मनुष्याणां हितकारिन् ! Sy.
२२. माहात्म्येन । क्त्वा—टा 'जसादयश्छन्दसि विकल्प्यन्ते' (Cf. PMBH.V. I. on Pa. 7. 3. 109.)—'जसादिषु च्छन्दसि वावचनं प्राङ् णौ चङ्युपधायाः' इति नादेशाभावः । यणादेशः । प्रत्ययस्वरः Sy.
२३. M. Omits युवत ॥ हे अग्ने ! यविष्ठ्य—युवशब्दात् 'अतिशायने तमबिष्ठनौ' (Pa. 5. 3. 55.) इतीष्ठन् । 'स्थूलदूरयुव०' (Pa. 6. 4. 156.) इति 'यणादिपरं लुप्यते पूर्वस्य च गुणः' वस्वादित्वात् स्वार्थिको यप्रत्ययः Sy.

तद्भ॒द्रं तव॑ दं॒सना॒ पाका॑य चिच्छदयति ।
त्वां यद॑ग्ने प॒शव॑: स॒मास॑ते॒ समि॑द्धमपिशर्व॒रे ॥ ७ ॥

तद्भद्रम्[1] । तदिदम् । भद्रम्[2] । तव[3] । कर्म[4] । क्षुद्राय[5] । अपि[6] मनुष्याय । कामप्रदाने-नोपच्छन्दनम्[7] । त्वाम् । यस्मात् । अग्ने ! पशवः[8] । सङ्गच्छन्ते[9] । अग्निहोत्रेषु समिद्धम्[10] । शर्वरीमुखे[11] प्रयच्छसि[12] पशूनित्यर्थः[13] ।

आ जु॑होता स्वध्व॒रं शी॒रं पा॑व॒कशो॑चिषम् ।
आ॒शुं दू॒तम॑जि॒रं प्र॒त्नमीड्यं॑ श्रु॒ष्टी दे॒वं स॑पर्यत ॥ ८ ॥

आ जुहोता । आहुतिभिस्तर्पयत[14] । सुयज्ञम्[15] । शासितारम्[16] । शोधकदीप्तिम्[17] ।

---

१. हे अग्ने ! Sy. २. शोभनम् । भद्रम्—'भदि कल्याणे' इत्यस्माद् धातो रक्प्रत्ययेन निपातनादन्तोदात्तत्वम् Sy. ३. तव सम्बन्धि Sy. ४. अग्निहोत्रादिकं कर्म Sy. ५. पाकायेति कर्मणि चतुर्थी । पाकोऽर्भकः तद्वदज्ञमपि यजमानम् । (यद्वा) पाकशब्दः प्रशस्यं वक्ति । पाकाय—'पा रक्षणे' इत्यस्मात् 'इण्भीकापाशलि०' इत्यादिना कन् । पायते रक्ष्यते राजादिना इति पाकः । नित्त्वादाद्युदात्तः Sy. पाकः । वामः, इति प्रशस्यनामनी Ngh. 3. 8.

६. चिच्छब्दोऽप्यर्थे Sy.

७. छदयति । स्वफलप्रदानेन पूजयति । पशुपुत्रादिभिः परिवृतं करोतीत्यर्थः । छदयतिशब्दोऽर्चतिकर्मा । तद्भद्रं प्रशस्यं यजमानमभिमतफलप्रदानेन पूजयतीत्यर्थः । छदयति—'छद अपवारणे' स्वार्थे णिच् । अदन्तत्वात् वृद्ध्यभावः । निघातः Sy. छन्दति । छदयते—इत्यर्चतिकर्माणौ Ngh. 3. 14.

८. M. omits the passage from भद्रम् upto अग्ने ॥ पशवः द्विपदाश्चतुष्पदाश्चोभये Sy.

९. सम्यगासते । पर्युपासते इत्यर्थः । समासते—'आस उपवेशने' । अदादित्वाच्छपो लुक् । अनकारान्तत्वात् झस्यादादेशः । यद्योगादनिघातः । 'तिङि चोदात्तवति' इति गतेर्निघातः । धातुस्वरः Sy.

१०. दीप्यमानम् Sy. ११. अग्निविहरणकाल एव Sy. १२. तदिदं पश्वादिलक्षणं फलं यजमानाय प्रयच्छतीत्यर्थः Sy. १३. ०त्यर्थः P. १४. ऋत्विजो यजमानः प्रेरयति । हे ऋत्विजः ! . . . आहुतिभिरा समन्तात्तर्पयत । जुहोत—'हु दानादनयोः' अस्माद्धातोर्लोट् । 'जुहोत्यादिभ्यः श्लुः' इति शपः श्लुः । 'श्लौ' इति द्विर्वचनम् । 'लोटो लङ्वत्' इति लङ्वद्भावे "तस्थस्थमिपाम्०' इति थस्य तादेशः 'छन्दसि' इत्यनुवृत्तौ तस्य 'तप्तनप्तनथनाश्च' इति तबादेशः । पित्त्वाद्गुणः । निघातः Sy.

१५. M. omits र्पयत सुयज्ञम् ॥ शोभनयज्ञोपेतमिममग्निम् । स्वध्वरम्—बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् Sy. १६. काष्ठेष्वोषधीषु चानुशायिनम् । शीरम्—'शीङ् स्वप्ने' अस्माद्धातोः 'स्फायितञ्चिवञ्चि०' इत्यादिना रक्प्रत्यय. । कित्त्वाद् गुणाभावः । प्रत्ययस्वरः Sy. १७. ०धदी० P. पावकशोचिषमित्यत्र पवनं पावः शुद्धिः । तं कायतीति पावकः । 'आतोऽनुपसर्गे कः' प्रत्ययस्वरः । 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति पूर्वपदप्रकृतिस्वरत्वम् Sy.

शीघ्रगन्तारम्[1] । देवानां दूतम्[2] । गमनशीलम्[3] । पुराणम्[4] । स्तोतव्यम्[5] । क्षिप्रम्[6] । देवमिमम्[7][8] । सपर्यत[9] ।

त्रीणि॑ श॒ता त्री स॒हस्रा॑ण्य॒ग्निं त्रिं॒शच्च॑ दे॒वा नव॑ चासपर्यन् ।
औक्ष॑न्घृ॒तैरस्तृ॑णन्ब॒र्हिर॑स्मा॒ आदिद्धोता॑रं॒ न्य॑सादयन्त ॥ ९ ॥

त्रीणि शता[10] । त्रीणि । सहस्राणि[11] । त्रीणि[12] च । शतानि[13] । त्रिंशत्[14] । च[15] । नव[16] । देवाः[17] ।

---

१. क्षिप्रं गन्तारम् । अजिरम्—'अज गतिक्षेपणयोः' इत्यस्माद्धातोः 'अजिरशिशिरशिथिल०' इति किरचप्रत्ययान्तत्वेन निपातनादन्तोदात्तत्वम् Sy.

२. आह्वानकारित्वेन देवानां दूतम् Sy.

३. अपि च कर्मणि व्याप्तम् । आशुम्—'अशू व्याप्तौ' अस्माद्धातोः 'कृवापाजिमि०' इत्यादिना उण् । उपधावृद्धिः । प्रत्ययस्वरः Sy.

४. पुरातनम् । प्रत्नम्—'प्रगस्य छन्दसि गलोपश्च' (VPa. 4. 3. 23.) इति गलोपः । चकारात् त्नप्रत्ययः । प्रत्ययस्वरः Sy.

५. ईड्यम्—'ईड स्तुतौ' अस्माण्ण्यत् । 'ईडवन्द०' इत्यादिनाद्युदात्तत्वम् Sy.

६. श्रुष्टीति क्षिप्रनाम Ngh. 4. 3; N. 6. 12.

७. द्योतमानम् Sy.     ८. अग्निम् Sy.

९. ०र्यतत P. पूजयत । सपर्यत—सपरशब्दात् 'कण्ड्वादिभ्यो यक्' पूजायां वर्तते । लोण्मध्यमपुरुषबहुवचनम् । शप् । 'अतो गुणे' इति पररूपत्वम् । निघातः Sy.

१०. शतानि P.

११. सहस्राणि । कर्दमादित्वान्मध्योदात्तः Sy.

१२. Omitted in M. त्री—'सुपां सुलुक्०' इति पूर्वसवर्णदीर्घः । फिट्स्वरः Sy.

१३. तानि P. शता । दशानां दशतां शभावस्तश्च प्रत्ययः । दश दशतः परिमाणमेषां शतानि । 'सुपां सुलुक्०' इत्यादिना सुपो डादेशः । प्रत्ययस्वरः Sy.

१४. ति P. त्रिंशत् । त्रयाणां दशतां त्रिंभावः शच्च प्रत्ययः । त्रयो दशतः परिमाणमस्य त्रिंशत् । प्रत्ययस्वरः Sy.

१५. M. omits त्रिंशत् । च

१६. M. adds च after नव ॥ नव—'कनिन्' इत्यनुवृत्तौ 'णु स्तुतौ' इत्यस्माद्धातोः 'णुवंशोर्नुदश्च' इति कनिन् । गुणश्च । नित्त्वादाद्युदात्तः Sy.

१७. एकोनचत्वारिंशदधिकशतत्रयोपेतत्रिसहस्रसंख्याका देवाः Sy. एते वस्वादिगणा देवाः. . .यद्वागमोक्ता देवा 'नवैवाङ्कास्त्रिवृद्धाः स्युर्देवानां दशकैर्गणैः । ते ब्रह्मविष्णुरुद्राणां शक्तीनां वर्णभेदतः' इति ते च ३३३३३३३३३ एतावन्तो भवन्ति Mah.

अग्निम् । अपूजयन्[1] । घृतैश्च[2] । अग्निमनक्षन्त[3] । बर्हिश्च[4] । अस्मै[5] । अस्तृणन्[6] । अनन्तरम्[7] । एवं[8] । तस्मिन्[9]र्बर्हिषि होतारमग्निम्[10] । न्यषादयन्तेति[11] । अत्र[12] ब्राह्मणम्[13]—'महिमान एवैषामेते[14] त्रयस्त्रिंशत्त्वेव[15] देवा इति । कतमे[16] ते त्रयस्त्रिंशदिति ? अष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिंशदि[17]न्द्रश्चैव[18] प्रजापतिश्च त्रयस्त्रिंशौ इति । कतमे[16] वसव[19] इत्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं च[20]', इत्यादिकं वाजसनेयिभ्यः श्रोतव्यमिति[21] ।

---

१. असपर्यन्—लङि रूपम् । निघातः Sy. परिचरन्ति । सपर्यतिः परिचरणकर्मा Mah. परिचरितवन्तः U.

२. ०तैरोक्षं तथा P.

३. असिञ्चन् । औक्षन्—'उक्ष सेचने' । लङि 'आडजादीनाम्' इत्याडागमः । वृद्धिः । पादादित्वान्न निहन्यते । आगमस्वरः Sy. असिञ्चयन् । 'उक्ष सेचने' लुङ् Mah. असिञ्चन् U.

४. बर्हिः—'इसिः' इत्यनुवृत्तौ 'बृंहेर्नलोपश्च' इतीसिः । तत्सन्नियोगेन नलोपः । प्रत्ययस्वरः Sy.

५. अग्नये तदर्थम् Sy.

६. बर्हिषास्तरणं वेद्याच्छादनमकुर्वन् । अस्तृणन्—'स्तृञ् आच्छादने' लङि बहुवचने क्र्यादित्वाच्छ्ना । झेरन्तादेशः । 'नित्यं ङितः' इतीकारलोपः । संयोगान्तलोपः । 'श्नाभ्यस्तयोरातः' इत्याकारलोपः । 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्याडागमः । स चोदात्तः । आगमस्वरः । भिन्नवाक्यत्वान्निघाताभावः Sy. आच्छादयन् Mah.

७. ०न्ताम् M. and P. अथैव U.

८. ते देवाः Sy.

९. अस्मि० P. हौत्रे कर्मणि Mah.

१०. ०मग्नि P. होतारं वृत्वा Mah., U.

११. उपावेशयन् । देवैः पूज्यमिममग्निं सपर्यतेति पूर्वेणान्वयः । असादयन्त—'षद्लृ विशरणगत्यवसादनेषु' अस्मात् 'हेतुमति च' इति णिच् । उपधावृद्धिः । 'णिचश्च' इत्यात्मनेपदम् । लङि बहुवचने रूपम् । निघातः Sy. नियुक्तवन्तः । घृतसेचनबर्हिःस्तरणहोतृवरणमेवाग्निपरिचर्येति भावः Mah. नितरां विनियुक्तवन्तः U.

१२. अन P. देवसंख्या च बृहदारण्यकेऽभिहिता Sy.

१३. ०ह्मण P.

१४. वैषमते P.

१५. ०शत्वेप M. ०शत्वेव P.

१६. Omitted in P.

१७. एत त्रयस्त्रिंश० M. and P.

१८. ०विस्मश्चै० M.

१९. M. and P. read च before वसवः ।

२०. BU. III. 9.2—3.

२१. This stanza=YV. 33. 7.

III.10.

त्वाम॑ग्ने मनी॒षिण॑ः स॒म्राजं॑ चर्षणी॒नाम् । दे॒वं मर्ता॑स इन्धते॒ सम॑ध्व॒रे ॥ १ ॥

त्वामग्ने । त्वाम् । अग्ने ! मनस ईश्वराः । प्रजानाम् । अधिपतिम् । देवम् । मनुष्याः । यज्ञे । समिन्धते ।

निगदव्याख्यातोत्तरा—

त्वां य॒ज्ञेष्वृ॒त्विज॒मग्ने॒ होता॑रमीळते । गो॒पा ऋ॒तस्य॑ दीदिहि॒ स्वे दमे॑ ॥ २ ॥

[त्वां यज्ञेषु] इति ।

---

१. 'त्वामग्ने' इति नवर्चं दशमं सूक्तं वैश्वामित्रमौष्णिहमाग्नेयम् । 'त्वामग्न औष्णिहम्' इत्यनुक्रान्तत्वात् (KSA. 17. 10. p 15.) । प्रातरनुवाकाश्विनशस्त्रयोरौष्णिहे छन्दस्यस्य सूक्तस्य विनियोगः । 'अथैतस्याः' इति खण्डे सूत्रितम्—'पुरु त्वा त्वामग्ने' (ASS. 4. 13.) इति Sy.

२. धीमन्तोऽध्वर्युप्रभृतयः । मनीषिणः—मनीषैषामस्तीति 'व्रीह्यादिभ्यश्च' इतीनिः । 'यस्येति च' इत्यवर्णलोपः । प्रत्ययस्वरः Sy.

३. चर्षणीनाम्—'नामन्यतरस्याम्' इति विभक्तेरुदात्तत्वम् Sy.

४. सम्राजम्—'राजृ दीप्तौ' सम्पूर्वादस्माद्धातोः 'सत्सूद्विष०' इति क्विप् । क्विलोपः । समो मकारस्य 'मोऽनुस्वारः' इत्यनुस्वारे प्राप्ते 'मो राजि समः क्वौ' इति समो मकारः । कृदुत्तरपदप्रकृतिस्वरत्वम् Sy.

५. देव P. द्योतमानम् Sy.

६. इन्धते—'ञिइन्धी दीप्तौ' । अस्माद्धातोः 'हेतुमति च' इति णिच् । लटि झस्य 'आत्मनेपदेष्वनतः' इत्यदादेशः । 'छन्दस्युभयथा' इति झस्यार्धधातुकत्वात् 'णेरनिटि' इति णिलोपः । निघातः Sy.

७. The *pratīka* is supplied by the Editor.

८. Sy. explains the stanza in the following manner:—हे अग्ने ! अध्वर्य्वादयः यज्ञेषु अग्निष्टोमादिषु त्वां होतारमृत्विजं होतृनामकमृत्विजम् ईळते स्तुवन्ति । तादृशस्त्वम् ऋतस्य सत्यस्य यज्ञस्य गोपाः गोपायिता सन् स्वे दमे स्वकीये गृहे यज्ञशालायां दीदिहि दीप्यस्व ॥ दीदिहि—'दिवु क्रीडादौ' यङ्लुक् । लोट् । तुजादित्वादभ्यासदीर्घत्वम् । 'संज्ञापूर्वको विधिरनित्यः' (Paribhāṣāsūtra 93.) इत्यभ्यासस्य गुणाभावे 'लोपो व्योर्वलि' इति वलोपः ।

स घा॒ यस्ते॒ ददा॑शति स॒मिधा॑ जा॒तवे॑दसे ।
सो अ॑ग्ने धत्ते सु॒वीर्यं॒ स पु॑ष्यति ॥ ३ ॥

स घा यस्ते[1]। अग्ने ! यः[2]। तुभ्यम्। समिदाधानम्[3]। करोति[4]। जातप्रज्ञाय[5]। सः। खलु[6]। शोभनवीर्यं[7] पुत्रम्। धारयति। पुष्यति[8] च प्रजया पशुभिः[9]।

स के॒तुर॑ध्व॒राणा॑म॒ग्निर्दे॒वेभि॒रा ग॑मत् ।
अ॒ञ्जा॒नः स॒प्त होतृ॑भिर्ह॒विष्म॑ते ॥ ४ ॥

स केतुः। अग्निः। यज्ञानाम्। चिह्नभूतो[10] देवः। देवैः[11] सह। आगच्छतु[12]। सप्तभिः। वषट्कर्तृभिः। सोमेन यजमानार्थम्[13]। अयज्यमानः[14][15]।

---

१. P. omits ते.

२. यजमानः Sy.

३. समिन्धनकारीण्याज्यपुरोडाशादिहवींषि। समिधा—'ञिइन्धी दीप्तौ'। अस्मात् 'क्विप् च' उपधालोपः। 'सुपां सुलुक्०' इति शसो डादेशः। कृदुत्तरपदप्रकृतिस्वरत्वम् Sy.

४. ददाति। 'दाशृ दाने' इत्यस्माद्धातोः कर्तरि शप्। तिप्। द्विर्वचनं छान्दसम्। यद्वृत्तयोगादनिघातः। 'अभ्यस्तानामादिः' इत्युदात्तः Sy.

५. जातवेदसे—'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति प्रकृतिस्वरत्वम् Sy.

६. घ—'चादयोऽनुदात्ताः' इत्यनुदात्तः Sy.

७. शोभनसामर्थ्योपेतम्। सुवीर्यम्—'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् Sy.

८. पशुपुत्रादिभिः समृद्धो भवति। पुष्यति—'पुष पुष्टौ' अस्मात् श्यन्। ङित्त्वाद् गुणाभावः। निघातः Sy.

९. VM. explains सः once only.

१०. प्रज्ञापकः Sy. ११. यष्टव्यदेवैः Sy.

१२. ०च्छन्तु P. गमत्—लोडर्थे 'छन्दसि लुङ्लङ्लिटः' इति लुङ्। लृदित्वादङ् 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः। निघातः Sy.

१३. ०नार्थं P. हविष्मते—जुहोतेः 'अर्चिशुचि०' इत्यादिना इसिप्रत्ययान्तो हविःशब्दोऽन्तोदात्तः। 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति परिभाषानाश्रयणान् मतुप उदात्तत्वाभावः। इसिप्रत्ययस्वरः Sy.

१४. ०मान P. अज्यमानः or इज्यमानः is suggested for अयज्यमानः॥ सोमाज्याहुतिभिरज्यमानः सन्। अञ्जानः—'अञ्जू व्यक्तिम्रक्षणगतिषु'। व्यत्ययेन कर्मणि शानच्। चित्त्वादन्तोदात्तत्वम् Sy.

१५. VM. ignores सः

प्र होत्रे॑ पू॒र्व्यं वचो॒ऽग्नये॑ भरता बृ॒हत् । वि॒पां ज्योतीं॑षि॒ बिभ्र॑ते॒ न वे॒धसे॑ ॥ ५ ॥

प्र होत्रे[१][२]। पुराणम्[३]। स्तुतिलक्षणं महत्[४]। वचः[५]। प्रभरत[६][७]। अग्नये। होत्रे[८]। मेधाविनाम्[९]। तेजांसि[१०]। बिभ्रते[११]। विधात्रे[१२]। न[१३]—इति पूरण[१४] इति।

अ॒ग्निं व॑र्धन्तु नो॒ गिरो॒ यतो॒ जाय॑त उ॒क्थ्यः॑ । म॒हे वाजा॑य॒ द्रवि॑णाय दर्श॒तः ॥ ६ ॥

अग्निं वर्धन्तु। अग्निम्। वर्धन्तु[१५]। नः[१६]। स्तुतयः[१७]। यस्मात्[१८]। अयं[१९] भवति[२०]। स्तोतव्यः[२१]। अस्माकं[२२] महते। अन्नाय[२३]। धनाय च। दर्शनीयः[२४]।

---

१. होत्रा M. २. यजमानो होत्रादीन्प्रति ब्रूते—हे होत्रादयः ! Sy.

३. पूर्वम् P. पूर्वै: कृतं पुरातनम्। पूर्व्यम्—'पूर्वैः कृतमिनयौ च' इति यप्रत्ययः। भसंज्ञकत्वादवर्णलोपः। प्रत्ययस्वरः Sy. यादृशं पूर्वैः कृतं तादृशम् BB.

४. बृहत्—'वर्तमाने पृषद्बृहत्०' इति निपातनादन्तोदात्तः Sy. ५. स्तोत्रशस्त्रादिकं वाक्यम् Sy. ६. प्र—प्रशब्दस्य छन्दसि 'व्यवहिताश्च' इति भरतेत्यनेन सम्बन्धः Sy. ७. प्रहर P. सम्पादयत। भरत—'भृञ् भरणे' भौवादिकः। निघातः Sy. प्रकर्षेण कुरुत। 'अन्येषामपि दृश्यते' इति संहितायां दीर्घत्वम् BB.

८. ह्वात्रे P. देवानामाह्वात्रे Sy. होत्रे दैव्याय BB. ९. नान् P. विप्राणां मेधाविनामध्वर्य्वादीनाम् Sy. अग्निर्विशेष्यते—विपां विविधं रक्षितुं शीलवतामादित्यचन्द्रग्रहादीनाम् BB.

१०. सत्कर्मानुष्ठानसम्पाद्यानि तेजांसि Sy.

११. निमित्ततया कुर्वाणाय। बिभ्रते—'डुभृञ् धारणपोषणयोः'। 'जुहोत्यादिभ्यः श्लुः'। 'भृञामित्' इतीत्वम्। 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् Sy. महातेजसे BB. १२. ०धाने P. जगतो विधात्रे Sy. विधात्रे विश्वस्य BB.

१३. इव BB. १४. ०रणेन P. नेत्ययं पादपूरणोऽन्वयाभावात्। यद्वा वेधसे न। यथा वेधा जगद्विधाता परमेश्वर आदित्यादीनि ज्योतींषि करोति तद्वदिति Sy. This stanza=TS. 3. 2. 11. 1.

१५. वर्धयन्तु पूजयन्त्वित्यर्थः। वर्धन्तु—'वृधु वर्धने' अस्माण्णिच्। लघूपधगुणः। 'छन्दस्युभयथा' इत्यार्धधातुकत्वाण्णिलोपः। झेरन्तादेशः। 'एरुः' (Pa. 3. 4. 86.) इत्युकारः। निघातः Sy.

१६. अस्माकम् Sy. १७. स्तुतिरूपास्ता वाचः Sy. १८. स्मात् P. यतो याभिः स्तुतिरूपाभिर्गीर्भिः Sy.

१९. योऽयमग्निः Sy. २०. जायते Sy.

२१. उक्थ्यशब्दः प्रशस्यवाची अतिशयेन स्तुत्यो भवतीत्यर्थः। उक्थ्यः—'वच परिभाषणे' अस्मात् 'पातृतुदिवचिरिचि०' इत्यादिना थक्। कित्त्वात् 'वचिस्वपि०' इत्यादिना सम्प्रसारणम्। उक्थं शस्त्रम्। तेन स्तुत्यत्वेन तत्र भव उक्थ्यः 'भवे छन्दसि' इति यत्। 'यस्य०' इति लोपः। 'तित्स्वरितम्' इति स्वरितः Sy. अनभिशस्त्यः। उक्थ्यः। सुनीथः। इति प्रशस्यनामानि Ngh. 3. 8.

२२. यश्चायमग्निर्महते Sy. २३. धनाय M.

२४. ०नीयं M. दर्शनीयो भवति। दर्शतः—'भृमृदृशियजि०' इति अतच्प्रत्ययः चित्त्वादन्तोदात्तः Sy.

अग्ने यजिष्ठो अध्वरे देवान्देवयते यज।
होता मन्द्रो वि राजस्यति स्रिधः॥ ७॥

अग्ने यजिष्ठः। बाधकान्¹। अति विराजसि। अवशिष्टं स्पष्टमिति²।

स नः पावक दीदिहि द्युमदस्मे सुवीर्यम्।
भवा स्तोतृभ्यो अन्तमः स्वस्तये॥ ८॥

स नः³ पावक⁴। स⁵ त्वम्। अस्मदर्थम्⁶। दीप्यस्व⁷। दीप्तियुक्तम्⁸। शोभनवीर्ययुक्तं⁹

---

१. This is the explanation of स्रिधः।

२. VM. ignores अग्ने। यजिष्ठः। अध्वरे। देवान्। देवयते। यज। होता and मन्द्रः।

Sy. explains this stanza in the following manner:—

हे अग्ने! यजिष्ठः यष्टृतमस्त्वम् अध्वरे यज्ञे देवयते देवानात्मन इच्छते यजमानाय देवान् यज। तदर्थं यष्टव्यानग्न्यादीन्देवान्पूजय। किञ्च होता देवानामाह्वाता मन्द्रः यजमानस्य मादयिता स त्वं स्रिधः क्षपयितॄन् शत्रून् अति अतिक्रम्य वि राजसि विशेषेण शोभसे॥ यजिष्ठः—'तुश्छन्दसि' इतीष्ठन्। 'तुरिष्ठेमेयःसु' इति तृचो लोपः। नित्त्वादाद्युदात्तः॥ देवयते—क्यचश्चित्त्वादन्तोदात्तत्वम्। शपः पित्त्वादनुदात्तत्वं शतुश्च लसार्वधातुकस्वरेण। तयोः क्यचा सहैकादेशे 'एकादेश उदात्तेनोदात्तः' इत्यन्तोदात्तो देवयच्छब्दः। ततः 'शतुरनुमः' इति विभक्तेरुदात्तत्वम्। यज—'यज देवपूजासङ्गतिकरणदानेषु'। अस्माल्लोट्। सिप्। सिपो हिरादेशः। 'अतो हेः' इति हेर्लुक्। निघातः। राजसि—'राजृ दीप्तौ'। निघातः।

३. ना P.

४. ०वकः M. and P.

५. पूर्वमन्त्रे प्रतिपादितः Sy.

६. ०दर्थं P. अस्मभ्यम् Sy.

७. दीदिहि—'दिवु क्रीडादौ' अस्माद्यङ्—'तुजादीनाम्०' इत्यभ्यासदीर्घत्वम्। संज्ञापूर्वको विधिरनित्यः' इत्यभ्यासस्य गुणाभावः। 'बहुलं छन्दसि' इति यङो लुक्। लोटि सिप्। 'चर्करीतम् परस्मैपदमदादिवच्च' इति वचनाच्छपो लुक्। सिपो हिरादेशः। 'लोपो व्योर्वलि' इति वलोपः। हेरपित्त्वादगुणः। निघातः Sy.

८. कान्तियुक्तं यद्वा तेजोयुक्तम्। द्युमत्—'दिव उत्' इत्युकारः। 'ह्रस्वनुड्भ्याम्०' इति मतुप उदात्तत्वम् Sy.

९. Omitted in P. शोभनसामर्थ्योपेतदानभोगार्हं धनं शोभनवीर्योपेतञ्च यथा भवति तथा Sy.

च । अस्मे इति पूरणम् । भव च । स्तोतृभ्यः[1] । अन्तिकतमः[2] । अविनाशार्थम्[3] ।[4]

**तं त्वा विप्रा विपन्यवो जागृवांसः समिन्धते । हव्यवाहममर्त्यं सहोवृधम् ॥ ९ ॥**

तं त्वा विप्राः[5] । तम् । त्वा[6] । मेधाविनः[7] । स्तोतारः[8] । प्रबुद्धाः[9] । समिन्धते[10] । हव्यवाहम्[11] । अमर्त्यम्[12] । बलेन वर्धमानम्[13] ।

---

१. षष्ठ्यर्थे चतुर्थी । त्वद्विषयस्तुतिकारिणां होत्रादीनाम् Sy.

२. ०तमाक P. तेषामतिशयेन समीपवर्ती भव । अन्तोऽस्यास्तीत्यन्तिकः । 'अत इनिठनौ' इति ठन् । अतिशयेनान्तिक इति 'अतिशायने तमप्०' इति तमप् 'तमे तादेश्च' इति तादिलोपः । नित्त्वादाद्युदात्तः Sy.

३. विनाशात्वं P. अविनाशाय क्षेमाय । स्वस्तये–प्रातिपदिकस्वरः Sy.

४. VM. ignores पावक ॥ अस्मत्सम्बन्धिनः पापस्य शोधक ! हे अग्ने ! 'पूञ् पवने' । अस्माद् धातोर्ण्वुल् । णित्त्वाद्वृद्धिः । वोरकादेशः । आमन्त्रितत्वादाष्टमिकमनुदात्तत्वम् Sy.

५. हे अग्ने ! Sy.　६. त्वाम् Sy.

७. विपन्युशब्दो मेधाविनमाचष्टे । विपन्यवो मेधाविनः स्तोतारः । विपन्यवः -विविधं पनं स्तुतिं यातीति विपन्युः । 'मृगय्वादयश्च' इति कुः । अकारलोपश्छान्दसः । प्रत्ययस्वरः Sy. मनश्चित् । विपश्चित् । विपन्यवः । इति मेधाविनामानि Ngh. 3. 15.

८. स्तुतीनां प्रेरकाः । विप्राः–'टुवप् बीजसन्ताने' अस्माद् धातोः 'ऋज्रेन्द्राग्रवज्रविप्र०' इति रन्प्रत्यये इत्वम् । नित्त्वादाद्युदात्तत्वम् Sy.

९. अग्निहोत्रादिकर्मण्यप्रमत्ततया प्रबुद्धाः । जागृवांसः–'जागृ निद्राक्षये' । अस्माल्लिट् तस्य क्वसुः । 'उगिदचाम्०' इति नुम् । द्विर्वचनाभावश्छान्दसः । 'वस्वेकाजाद्घसाम्' इति नियमादिडभावः । 'जाग्रोऽविचिण्णल्ङित्सु' (Pa. 7. 3. 85.) इति गुणो न भवति तत्र विरित्यत्र क्वसोरपि गृहीतत्वात् । प्रत्ययस्वरः Sy.

१०. सोमाज्याद्याहुतिभिः सम्यग्दीपयन्ति । 'ञिइन्धी दीप्तौ' अन्तर्भावितण्यर्थोऽयम् । निघातः Sy.

११. ०हनम् P. हव्यानां वोढारम् । 'वह प्रापणे' । 'वहश्च' इति ण्विः । उपधावृद्धिः । कृदुत्तरपदप्रकृतिस्वरत्वम् Sy.

१२. मरणधर्मरहितम् Sy.

१३. सहोवृधम्–सहसा मथनरूपेण बलेन वर्धमानं तादृशम् । 'वृधु वर्धने' । 'क्विप् च' इति क्विप् Sy.

## III.11.

**अ॒ग्निर्होता॑ पु॒रोहि॑तोऽध्व॒रस्य॒ विच॑र्षणिः । स वे॑द य॒ज्ञमा॑नु॒षक् ॥ १ ॥**

अग्निर्होता[1] । अग्निः[2] । ह्वाता[3] । पुरोहितः[4] । यज्ञस्य । विद्रष्टा[5] । सः[7] । वेत्ति[8] । यज्ञम्[9] । आनुपूर्व्येण[10] ।

**स ह॑व्य॒वाळम॑र्त्य उ॒शिग्दू॒तश्चनो॑हितः । अ॒ग्निर्धि॒या समृ॑ण्वति ॥ २ ॥**

स हव्यवाळ्[11] । सः[1] । हविषां वोढा[12] । अमरणधर्मा[13] । हविः कामयमानः[14] । देवानां दूतः[15] ।

---

१. 'अग्निर्होता' इति नवर्चमेकादशं सूक्तं वैश्वामित्रं गायत्रमाग्नेयम् । 'अग्निर्होता गायत्रं (तु)' इत्यनुक्रान्तत्वात् (KSA. 17. 11. p. 15.)। प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रे छन्दसीदं सूक्तम् । सूत्रितं हि—'अग्निर्होताग्न इळेति चतस्रः' (ASS. 4. 13.) इति । आधाने प्रथमायां पवमानेष्टौ स्विष्टकृतो याज्या 'अग्निर्होता' इत्येषा 'स हव्यवाळमर्त्यः' इति पुरोऽनुवाक्या । द्वितीयपवमानेष्टौ स्विष्टकृतोऽनुवाक्या 'साह्वान्' इति । सूत्रितं च—'साह्वान् विश्वा अभियुजोऽग्निमीळे पुरोहितमिति संयाज्ये' (ASS. 2. 1.) इति। आभिप्लविकेषूक्थ्येषु तृतीयसवने मैत्रावरुणशास्त्रे 'अभि प्रयांसि' इति वैकल्पिकोऽनुरूपस्तृचः । अत्र सूत्रम्—'प्र वो वाजा अभिद्यवोऽभि प्रयांसि वाहसा' (ASS. 7. 8.) इति। ...विश्वामित्रः स्तौति Sy.

२. P. omits होता. ३. अः M.

४. घाता M. देवानामाह्वाता Sy.

५. परो॰ P. पुरत एवाभिमतफलसम्पादकत्वेन हितकारी । यद्वा पुरः पूर्वभाग आहवनीयरूपेण हितो निहित इति पुरोहितः Sy.

६. विशेषेण द्रष्टा Sy. वि चष्टे । विचर्षणिः । विश्वचर्षणिः । इति पश्यतिकर्माणः Ngh. 3. 11.

७. तथाविधोऽग्निः Sy.

८. वेत्ति M. जानाति । वेद—'विद ज्ञाने' । 'विदो लटो वा' इति तिपो णलादेशः । लघूपधगुणः । निघातः Sy.

९. अग्निष्टोमादिकम् Sy.

१०. सक्तम् । आनुषक्—आसमन्तात्—अनुषजतीत्यानुषक् । 'षस्ज सङ्गे' धातुषकारस्य सकारः । 'क्विप् च' इति क्विप् । 'अनिदिताम्॰' इत्युपधालोपः । 'उपसर्गात्सुनोति॰' इति षत्वम् Sy.

११. M. adds अमर्त्यः after हव्यवाट् ।

१२ हविषः वोढा । हव्यवाट्—'वह प्रापणे' । 'वहश्च' इति ण्विः । ढत्वजश्त्वचर्त्वानि । कृदुत्तरपदप्रकृतिस्वरत्वम् Sy. हव्यं वहतीति, हविषां वोढा Mah. पदोऽत्राध्याहारस्तच्छब्दश्रवणात् । यो हव्यवाड्ढविषो वोढा U.

१३. मरणधर्मरहितः Sy. मरणहीनः Mah.

१४. उशिक्—'वश कान्तौ' । 'इजिः' इत्यनुवृत्तौ 'वशेः किच्च' इतीजिप्रत्ययः । तस्य कित्त्वात् 'ग्रहिज्या॰' इति सम्प्रसारणम् । प्रत्ययस्वरः Sy. वष्टि, उश्यते वा सर्वैरित्युशिक् कमनीयो मेधावी वा Mah. मेधावी U. १५. देवानां दूत्यकर्ता Mah.

निहितान्नो[1]ऽन्नेन[2] वा निहितः । सोऽग्निः । प्रज्ञया[3] । सङ्गच्छते[4] ।

**अग्निर्धिया स चेतति केतुर्यज्ञस्य पूर्व्यः । अर्थं ह्यस्य तरणि ॥ ३ ॥**

अग्निर्धिया । अग्निः । प्रज्ञया । सर्वं[5] जानीते[6] । यज्ञस्य[7] । केतुः[8] । पूर्वकालभवः[9] । गमनस्वभावस्य[10] । अस्य[11] तमसः[12] । तारकं[13] तेजः[14] ।

**अग्निं सूनुं सनश्रुतं सहसो जातवेदसम् । वह्निं देवा अकृण्वत ॥ ४ ॥**

अग्नि सूनुम्[15] । सहसः[16] । सूनुम्[17] । अग्निम् । सनातनश्रवणम्[18] । जातप्रज्ञम् । वोढारम्[19] ।

---

१. चनोहितः–चनः 'चायतेरन्ने ह्रस्वश्च' इत्यसुन्नन्तः । चकारान्नुडागमः । तस्मिन्यलोपः । नित्त्वादाद्युदात्तः । 'पुनश्चनसोश्छन्दसि गतिसंज्ञा वक्तव्या' (VPa. 1. 4. 60.) इति गतिसंज्ञायां 'गतिरनन्तरः' इति प्रकृतिस्वरत्वम् । बहुव्रीहौ तु पूर्वपदप्रकृतिस्वरत्वम् Sy.

२. ०न्नोनेन P.

३. धिया—'सावेकाचः' इति विभक्तेरुदात्तत्वम् Sy. बुद्ध्या Mah.

४. कर्मविषयप्रज्ञान्वितोऽग्निरस्मानपि तादृक्प्रज्ञान्वितान्करोत्वित्याशास्ते । ऋण्वति–'ऋणु गतौ' । लोटि तनादित्वादुप्रत्ययः । 'लेटोऽडाटौ' इत्यडागमः Sy. सङ्गच्छते देवैः सह हविर्दानाय Mah. सङ्गच्छते देवैः सह हविषस्तर्पणाय U. This stanza=YV. 22. 16.

५. सर्वं P.

६. ज्ञानीते P. चेतति–'चिती संज्ञाने' । निघातः Sy.

७. अग्निष्टोमादेः Sy.

८. प्रज्ञापकः Sy.

९. पूर्वं भवश्चिरन्तनः Sy.

१०. ०वकथ्य M. गमनस्वभावस्य seems to be the explanation of अर्यम् ॥ गमनस्वभावं तेजः । अर्यम्—'ऋ गतौ' । 'उषिकुषिगार्तिभ्यस्थन्' इति थन् । गुणः । नित्त्वादाद्युदात्तः Sy.

११. स्य M. अस्य एतादृशस्याग्नेः Sy.

१२. अस्याकाशे दृश्यमानस्य तमसः Sy.

१३. निवर्तकमिति यावत् । तरणि—'तॄ प्लवनतरणयोः' । 'अर्तिसृभृधृधमि०' इत्यादिनाऽनिप्रत्ययः । गुणः । प्रत्ययस्वरः Sy.

१४. VM. ignores सः and हि ॥ स तथाविधः । हि खलु Sy.

१५. सूनु P.　　१६. बलस्य Sy.

१७. पुत्रं मथनरूपेण बलेन निष्पाद्यमानत्वात् Sy.

१८. सनातनत्वेन प्रसिद्धम् । सनश्रुतम्—'श्रु श्रवणे' । कर्मणि क्तः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् Sy.

१९. हविषां वोढारम् । वह्निम्—'वह प्रापणे' । 'नि' इत्यनुवृत्तौ 'वहिश्रि०' इत्यादिना निप्रत्ययः Sy.

मह्यमभ्युदयार्थं[1] देवाः[2] । कृण्वन्तु[3] ।

**अदाभ्यः पुरएता विशामग्निर्मानुषीणाम् । तूर्णी रथः सदा नवः ॥ ५ ॥**

अदाभ्यः[4] । अहिंस्यः[5] । अग्निः । मानुषीणाम्[6] । विशाम[7] । पुरतो[8] गन्ता । तरणशीलः[9] । रथो हव्यवहनात्[10] । सदैव[11] । नवः[12] ।

**साह्वान्विश्वा अभियुजः क्रतुर्देवानाममृक्तः । अग्निस्तुविश्रवस्तमः ॥ ६ ॥**

साह्वान् । सहमानः[13] । विश्वाः[14] । अभियोक्त्रीः[15] सेनाः । कर्ता[16] । देवानाम् ।

---

१. ०दयायार्थं M. ०यार्त्थं P.

२. हविर्भुजो देवाः Sy.

३. कृचन्तु P. अकुर्वत । अकृण्वत—'कृवि हिंसाकरणयोः' । इदित्त्वान्नुम् । 'धिन्वि-कृण्व्योर च' इत्युप्रत्ययः । अकारश्चा-न्तादेशः । लङि व्यत्ययेनात्मनेपदम् । निघातः Sy.

४. M. adds पुरः after अदाभ्यः ॥ अदाभ्यः P.

५. हविन्यः P. न केनापि तिरस्कार्य इत्यर्थः । अदाभ्यः–'दम्भु दम्भने' । 'दम्भेश्चेति वक्तव्यम्' इति कर्मणि ण्यत् । उपधा-वृद्धिः । न दाभ्योऽदाभ्यः । नञ्समासे 'तत्पुरुषे तुल्यार्थ०' इति पूर्वपदप्रकृति-स्वरत्वम् Sy.

६. मनोर्जातानाम् । 'मनोर्जातावञ्यतौ षुक् च' इत्यञ् । 'टिड्ढाणञ्०' इति ङीप् । ञित्त्वादाद्युदात्तः Sy.

७. प्रजानाम् Sy.

८. सन्मार्गप्रदर्शनेनाग्रतो गन्ता । पुरएता–'इण् गतौ' । 'ण्वुल्तृचौ' इति तृच् । गुणः । चित्त्वादन्तोदात्तः Sy.

९. रण० P. अत एव ताः प्रजा वैदिककर्मप्रवर्तकत्वेनानुग्रहीतुं त्वरायुक्त आलस्यरहितः । तूर्णिः–'ञित्वरा सम्भ्रमे' इति धातोः 'निः' इत्यनुवृत्तौ 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्' इति निप्रत्ययः । 'ज्वरत्वर०' इत्यादिना ऊठ् । तस्य नित्त्वादाद्युदात्तः । संहितायां 'ढ्रलोपे पूर्वस्य०' इति दीर्घः Sy.

१०. ०हनां P. हविषां वहनाद्रथसदृशः । रथः–'हनिकुषिनीरमिकाशिभ्यः०' इति क्थन्प्रत्ययः । कित्त्वात् 'अनुदात्तोपदेश०' इत्यादिनाऽनुनासिकलोपः । नित्त्वादाद्यु-दात्तः Sy.

११. सर्वदा । सदा–स्वरादिषु आद्युदात्तत्वेन पठितत्वादाद्युदात्तः Sy.

१२. तत्तत्कर्मणि नवः नूतनः पुनर्मथनादभिनवः Sy.

१३. स्वबलेन तिरस्कुर्वाणः । साह्वान्–'षह मर्षणे' इत्यस्य क्वसौ 'दाश्वान्सा-ह्वान्मीढ्वांश्च' इति निपातनाद् द्विर्वचन-मिडागमश्च न भवति परस्मैपदं च भवति । क्वसुस्वरः Sy.

१४. सर्वाः सेनाः Sy. १५. ०भिव्योक्तिः P.

१६. हविष्प्रदानेन पोषकः Sy.

शत्रुभिरपरिमृष्टः[1] । अग्निः[2] । अतिशयेन बहुशत्रुः[3] ।

**अभि प्रयांसि वाहसा दाश्वाँ अश्नोति मर्त्यः । क्षयं पावकशोचिषः ॥ ७ ॥**

अभि[4] । वाहकेनाग्निना[5] । अन्नानि[6] । अभ्यश्नोति[7] । दाश्वान्[8] । मनुष्यः[9] । निवासं[10] च ।

शोधकदीप्तेरग्नेः[11] । अभ्यश्नुते[12] ।

**परि विश्वानि सुधिताग्नेरश्याम मन्मभिः । विप्रासो जातवेदसः ॥ ८ ॥**

परि विश्वानि[13] । पर्यश्याम[14] । विश्वान्येव । सौहित्यानि[15] ।

१. ०भिः प० M. अत एव शत्रुभिरहिंसितः Sy.

२. एवम्भूतोऽग्निः । क्रतुः–'कृञः कतुः' । कित्वाद् गुणाभावः । प्रत्ययस्वरः Sy.

३. ०शत्रुभिः P. तुविशब्दो बहुवाची । श्रवःशब्दोऽन्नवाची । अतिशयेन बहुविधान्नोपेतो वर्तते । यस्मादेवं तस्मादस्मानपि बहुविधान्नोपेतान्करोत्विति भावः । तुविश्रवस्तमः—'तु वृत्तिहिंसापूर्तिषु' अस्मादौणादिकः किप्रत्ययः । कित्वाद् गुणाभावः । उवङादेशः । अन्तोदात्तः । श्रवः–'श्रु श्रवणे' । श्रूयतेऽन्नमिति कर्मण्यसुन्प्रत्ययः । अतिशयेन तुविश्रवा इति 'अतिशायने तमप्०' इति तमप् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् Sy. उरु । तुवि । पुरु । इति बहुनामानि Ngh. 3. 1. । श्रव इत्यन्ननाम । श्रूयत इति सतः N. 10. 3.

४. अभिः P. ५. हविषां वाहकेनाग्निना । वाहसा–'णित्' इत्यनुवृत्तौ 'वहिहाधाञ्भ्यश्छन्दसि' इत्यसुन् । णित्वादुपधावृद्धिः । नित्स्वरः Sy.

६. अन्नादि M. प्रयांसि–'प्रीञ् तर्पणे' अस्माद्धातोरन्तर्भावितण्यर्थादसुन्प्रत्ययः । प्रीणयन्ति भोक्तॄनिति प्रयांस्यन्नानि । नित्त्वादाद्युदात्तः Sy.

७. It is the explanation of अभि only ॥ अभितः सर्वतः प्राप्नोति Sy.

८. हविषां दाता । दाश्वान्— 'दाश्रृ दाने' इत्यस्य क्वसौ 'दाश्वान्साह्वान्०' इति निपातनादिडागमो द्विर्वचनञ्च न भवति । क्वसुप्रत्ययस्वरः Sy.

९. यजमानः Sy.

१०. गृहं च Sy.

११. ०रग्नेः P. अग्नेः सकाशात् Sy.

१२. अभ्यश्नोति । अश्नोति—'अशू व्याप्तौ' । व्यत्ययेन परस्मैपदम् । निघातः Sy.

१३. Omitted in P.

१४. ०श्यामि P. सर्वतः प्राप्नुयाम । अश्याम —'अशू व्याप्तौ' । 'बहुलं छन्दसि' इति श्नुप्रत्ययस्य लुक् । व्यत्ययेन परस्मैपदम् । 'यासुट् परस्मैपदेषूदात्तः०' इति यासुट् । 'लिङः सलोपः०' इति सलोपः । अदन्तत्वाभावादियादेशो न भवति । मसः सकारस्य 'नित्यं ङितः' इति लोपः । निघातः Sy.

१५. सर्वाणि Sy.

१६. सुहितानि सुष्ठु हितान्यभिलषितानि वसूनि । सुधिता—'डुधाञ् धारणपोषणयोः' इत्यस्माद्धातोर्निष्ठायां 'छन्दसि' इत्यनुवृत्तौ 'सुधितवसुधित०' इत्यादिना निपातितः । 'शेश्छन्दसि बहुलम्' इति शेर्लुक् । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् Sy.

अग्नेः । स्तोत्रैः । मेधाविनः । जातप्रज्ञान् ।

अग्ने विश्वानि वार्या वाजेषु सनिषामहे ।
त्वे देवास एरिरे ॥ ९ ॥

अग्ने । अग्ने ! विश्वानि । धनानि । युद्धेषु । सम्भजेमहि । तानि त्वयि । देवाः । अस्माकं प्रदानायागमयन्निति, 'तदग्निर्देवो देवेभ्यो वनते वयमग्नेर्मानुषाः' इति मन्त्रः ।

१. तव सम्बन्धिभिः Sy.

२. मननीयैः स्तोमैः । मन्मभिः—'मनु अवबोधने' । 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । नित्स्वरः Sy.

३. मेधाविनो होत्रादयो वयम् Sy.

४. Omitted in M. जातप्रज्ञाः ॥ जातवेदस इत्यग्नेर्वा विशेषणम् । जातानि सर्वाणि वेत्तीति जातवेदाः सर्वज्ञ इत्यर्थः । एतादृशं जातवेदस्त्वमग्नेरेवोचितमिति तद्विशेषणत्वं युक्तम् Sy.

५. अग्नेः P.

६. M. reads वयमग्नेर्मानुषा इति मन्त्रः । अग्ने विश्वानि इन्द्राग्नी for अग्ने । अग्ने । विश्वानि ॥ अग्ने विश्वानि has been inserted by a different hand. सर्वाणि धनानि Sy.

७. नानि M. वार्या वरणीयानि सम्भजनीयानि । 'वृङ् सम्भक्तौ' । 'ऋहलोर्ण्यत्' इति ण्यत् । 'शेश्छन्दसि बहुलम्' इति शेर्लुक् । 'ईडवन्द०' इत्यादिनाद्युदात्तः Sy.

८. वाजेषु । वृषादित्वादाद्युदात्तः Sy.

९. वयं सम्भजामहे । सनिषामहे—'षन षण सम्भक्तौ' । 'धात्वादेः षः सः' । लेटि 'सिब्बहुलम्०' इति सिप् । सिप आर्धधातुकत्वादिडागमः । 'लेटोऽडाटौ' इत्यडागमः । व्यत्ययेनात्मनेपदम् । निघातः Sy.

१०. त्वे—युष्मच्छब्दस्य सप्तम्यां त्वादेशः । 'सुपां सुलुक्०' इति शेआदेशः । 'शे' (Pa. 1. 1. 13.) इति प्रगृह्यसंज्ञा Sy.

११. पूर्वमस्माभिरिष्टाः Sy.

१२. अस्मदभिमतफलप्रदानाय Sy.

१३. ०नायन्नि० P. आ समन्तादगमन् त्वयि प्रविष्टा इत्यर्थः । सर्वथापि त्वत्सकाशात् फलं लभेमहीति भावः । ईरिरे—'ईर गतौ' इत्यस्मात्परस्य लिटो झस्य इरेजादेशः । 'इजादेश्च गुरुमतः०' इत्याम्न भवति मन्त्रत्वात् । निघातः Sy.

१४. M. omits अग्नेर्मानुषा इति ।

१५. TS. 2. 6. 9. 8.

III.12.

इन्द्राग्नी आ गतं सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषिता ॥ १ ॥

इन्द्राग्नी । इन्द्राग्नी । आगच्छतम् । सुतं सोमं प्रति । अस्मदीयाभिः । नभसः स्वर्गस्थानात् ।

१. 'इन्द्राग्नी' इति नवर्चं द्वादशं सूक्तं वैश्वामित्रमैन्द्राग्नम् । तथा चानुक्रम्यते— 'इन्द्राग्नी ऐन्द्राग्नम्' (KSA. 17.12. p.15.) इति । 'गायत्रं तु' (KSA. 17.11.p.15.) इति तुशब्दादिदमपि सूक्तं गायत्रम् । इन्द्राग्नी देवता । आभिप्लविकेष्वहःसु प्रातःसवनेऽच्छावाकशस्त्रे आवापार्थमिदं सूक्तम् । 'अभिप्लवपृष्ठ्याहानि' इति खण्डे सूत्रितम्— 'इन्द्राग्नी आ गतं ता हुवे ययोरिदम्' (ASS. 7. 5.) इति । अग्निष्टोमेऽच्छावाकशस्त्रे 'इन्द्राग्नी आ गतम्' इति स्तोत्रियस्तृचः । तस्यैवाच्छावाकस्याद्या शस्त्रयाज्या । 'इन्द्राग्नी आ गतं सुतमिति याज्या' (ASS. 5. 10.) इति सूत्रितत्वात् । चतुर्विंशेऽहनि प्रातःसवनेऽच्छावाकशस्त्रे 'इन्द्राग्नी आगतं सुतम्' इति षळहस्तोत्रियः । 'इन्द्राग्नी आ गतं सुतमिन्द्रे अग्ना नमो बृहत्' (ASS. 7. 2.) इति सूत्रितम् । अग्निष्टोमाच्छावाकशस्त्रे 'तोशा वृत्रहणा हुवे' इत्याद्यास्तिस्रः । सूत्रितञ्च–'तोशा वृत्रहणा हुव इति तिस्रः' (ASS. 5.10.) इति । अग्निष्टोमेऽच्छावाकशस्त्रे 'इन्द्राग्नी अपसस्परि' इत्यनुरूपः । सूत्रितञ्च– 'इन्द्राग्नी आ गतं सुतमिन्द्राग्नी अपसस्परि' (ASS.5.10.) इति Sy.

२. इन्द्रश्चाग्निश्चेन्द्राग्नी हे देवौ ! । इन्द्रश्चाग्निश्च 'द्वन्द्वे घि' (Pa. 2. 2. 32.) इत्यग्निशब्दस्य पूर्वनिपाते प्राप्ते 'अजाद्यदन्तम्' (Pa. 2. 2. 33.) इतीन्द्रशब्दस्य पूर्वनिपातः । पादादित्वान्निघातप्रतिषेधः । षाष्ठिकस्वरः Sy.

३. गतम्–'गम्लृ सृप्लृ गतौ' । 'बहुलं छन्दसि' इति शपो लुकि सति 'अनुदात्तोपदेश०' इत्यादिना मकारलोपः । निघातः Sy.

४. अभिषवादिसंस्कारैः संस्कृतम् Sy. अभिषुतम् Mah., U., BB.

५. It seems to be the explanation of गीर्भिः ॥ स्तुतिरूपाभिर्वाग्भिराहूतौ सन्तौ Sy. त्रयीलक्षणाभिर्वाग्भिः. . . यद्वा गीर्भिः स्तुतिरूपाभिर्वाग्भिर्युतमिति शेषः Mah., U. स्तुतिभिः BB.

६. स्वस्था० P. नभ इवादित्य इव. . . लुप्तोपमानम्. . . नभःस्थितैः स्वर्गस्थैर्देवैर्वरेण्यं प्रार्थनीयम् । नभःशब्देन लक्षणया नभःस्था देवा उच्यन्ते Mah., U. नभो नहनं बन्धकं रसवत्तया मनसाम् . . . यद्वा गीर्भिर्नहनीयं बन्धनीयं स्तुत्यमिति यावत् । यद्वा नभ इव नभ आदित्यः, स इव गीर्भिर्वरणीयः BB. नभ आदित्यो भवति । [नेता रसानाम्] नेता भासाम् । ज्योतिषां प्रणयः N. 2. 14.

वरणीयम् । प्रागत्य चास्य । पिबतम् । कर्मणा । प्रेरितौ ।*

**इन्द्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः । अया पातमिमं सुतम् ॥ २ ॥**

इन्द्राग्नी । हे इन्द्राग्नी ! स्तोतुः । सहकारी । सोमः । युवामभिगच्छति । चेतयितेन्द्रियाणाम् । अनया स्तुत्या च । पिबतम् । इमम् । सुतम् ।

---

१. वरणीयं सम्भजनीयमिमं सोमं प्रति । वरेण्यम्—'वृङ् सम्भक्तौ' । 'वृङ एण्यः' वृषादित्वादाद्युदात्तः Sy. वरेण्यो वरणीयः प्रार्थनीयस्तम् Mah. प्रार्थनीयं स्तुत्यं सोमम् BB.

२. इमं सोमम् Sy. युवामस्य सोमस्य सम्बन्धिनं स्वमंशम् Mah. सोमस्य U. कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी BB.

३. पातम्–'पा पाने' । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति न पिबादेशः Sy. पिबादेशाभावश्छान्दसः Mah.

४. कर्मा P. अस्माभिः क्रियमाणेन कर्मणा यद्वा अस्मदीयया बुद्धया Sy. यजमानबुद्धया Mah. यजमानस्य सम्बन्धिन्या बुद्धया U. बुद्धया अस्मदीयया BB.

५. प्रेरितौ युवाम् । यद्वा प्राप्तावस्मद्भक्त्या प्रेरितौ । इषिता—'इष गतौ' इत्यस्माद्धातोर्निष्ठायां 'तीषसह०' इतीडागमः । 'आगमा अनुदात्ताः' इतीटोऽनुदात्तत्वात् क्तस्वरः शिष्यते Sy. प्रेषितौ प्रार्थितौ Mah. प्रेषितौ सन्तौ U. अद्वेषितौ प्रार्थितौ. . . यद्वा 'इष गतौ' धिया, इषितौ प्राप्तौ BB.

*. M. omits the commentary on the whole of the stanza. This stanza=YV. 7. 31.= TS. 1. 4. 15. 1.

अथातो गृह्णात्येव । इन्द्राग्नीऽआगत ꣳ सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषिता । उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वैष ते योनिरिन्द्राग्निभ्यां त्वेति सादयतीन्द्राग्निभ्या ꣳ ह्येनं गृह्णाति । SB. 4. 3. 1. 24. p. 368.

अत्र 'उपयामगृहीतोऽसीन्द्राग्निभ्याम्०' इत्याद्यधिकमृचोऽपेक्षयायातम् ।

६. स्वर्गादिलक्षणफलप्राप्तौ सहायभूतः Sy.

७. यज्ञो ज्योतिष्टोमादियज्ञसाधनभूतः Sy.

८. जिगाति—'गा स्तुतौ' इत्ययं धातुरत्र गमने वर्तते । छन्दसि जुहोत्यादिः । 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम् । निघातः Sy.

९. ०तयते० P. आप्यायनकारी सन् असौ सोमः । चेतनः–'चिती संज्ञाने' । कर्तरि बहुलवचनाल्ल्युट् । 'लिति' इत्याद्युदात्तत्वम् Sy.

१०. ०नवा P. अस्मदीयस्तुतिलक्षणयानया वाचाऽऽहूतौ सन्तौ । अया–इदंशब्दस्य 'सुपां सुलुक्०' इति याजादेशः । अनादेशप्राप्तौ 'हलि लोपः' Sy.

११. Omitted in P.

१२. पातम्–'पा पाने' । निघातः Sy.

१३. इदम् M. and P. सोमम् Sy.

१४. अभिषवादिसंस्कारोपेतम् Sy.

इन्द्रम॒ग्निं क॑वि॒च्छदा॑ य॒ज्ञस्य॑ जू॒त्या वृ॑णे । ता सोम॑स्ये॒ह तृ॑म्पताम् ॥ ३ ॥

इन्द्रमग्निम् । स्तोतॄणां कामश्छन्दयितारौ । इन्द्राग्नी । हविषः । जवेन । वृणे । तौ । सोमेन । अस्मिन्कर्मणि । तृप्यताम् ।

तो॒शा वृ॑त्र॒हणा॑ हुवे स॒जित्वा॒नाप॑राजिता । इ॒न्द्रा॒ग्नी वा॑ज॒सात॑मा ॥ ४ ॥

तोशा । शत्रूणां हन्तारौ । उपद्रवाणां हन्तारौ । अहं हुवे । समानजेतारौ । अपराजितौ ।

---

१. ०मैश्छाद० P. उचितफलप्रदानेनोपच्छन्दकौ । कविच्छदा—'छदि अपवारणे' अस्मात् क्विप् । 'सुपां सुलुक्०' इति सुपो डादेशः । कृदुत्तरपदप्रकृतिस्वरत्वम् Sy.

२. VM. explains इन्द्रम् and अग्निम् together as इन्द्राग्नी ॥ इन्द्रमग्निं च युवाम् । इन्द्रम्—'इदि परमैश्वर्ये' इत्यस्माद्धातोः 'ऋज्रेन्द्राग्र०' इति रन्प्रत्ययान्तत्वेन निपातनादाद्युदात्तत्वम् Sy.

३. हेवि० P. यज्ञसाधनभूतस्य सोमस्य Sy.

४. जूत्या । जूतिः प्रेरणम् । सोमस्तावद्यजमानं प्रेरयति । साधनमुपलभ्य तत्साध्यक्रतौ यजमानः प्रवर्तत इति हि तस्य प्रेरकत्वम् । तया प्रेरणरूपया जूत्या प्रेरितोऽहम् । जूत्या—'जु' इति सौत्रो धातुः । अस्मात् 'उदात्तः' इत्यनुवृत्तौ 'ऊतियूतिजूति०' इत्यादिना निपातनादन्तोदात्तत्वम् । 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् Sy.

५. वृणो M. वृणो P. सोमपानार्थमिह कर्मण्यागच्छतमिति सम्भजे । 'वृङ् सम्भक्तौ' श्नाप्रत्ययः । 'टित आत्मनेपदानाम्०' इति टेरेत्वम् । निघातः Sy.

६. आगतौ च ताविन्द्राग्नी । ता—'सुपां सुलुक्०' इति डादेशः Sy.

७. सोमपानेन । सोमस्य—'षुञ् अभिषवे' अस्मात् 'अर्तिस्तुसुहुसृधृक्षि०' इत्यादिना मन्प्रत्ययः । नित्स्वरः Sy.

८. तृम्पताम्—'तृप प्रीणने' । लोटि मुचादित्वान्नुमागमः । निघातः Sy.

९. M. adds वृत्रहत्रा after तोशा ।

१०. शत्रूणां बाधकौ Sy.

११. P. adds च after उपद्रवाणाम् ॥ वृत्रस्य पापस्य हन्तारौ । वृत्रहणा—'हन् हिंसागत्योः' । 'ब्रह्मभ्रूणवृत्रेषु क्विप्' इति क्विप् । 'एकाजुत्तरपदे णः' (Pa. 8. 4. 12.) इति णत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् Sy.

१२. इह कर्मणि सोमपानार्थमहमाह्वयामि । हुवे—ह्वयतेः 'बहुलं छन्दसि' इति शपो लुकि सति 'ह्वः सम्प्रसारणम्' इत्यनुवृत्तौ 'बहुलं छन्दसि' इति सम्प्रसारणम् । उवङादेशः । व्यत्ययेनात्मनेपदम् । निघातः Sy.

१३. ०मानं जे० P. परस्परापेक्षया जयशीलौ । 'जि जये' । 'शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः०' (Uṇādi. 4. 553.) इति क्वनिप् । कित्त्वाद् गुणाभावः । पित्त्वात्तुगागमः । 'समानस्य छन्दस्यमूर्ध०' इति समानस्य सभावः । कृदुत्तरपदप्रकृतिस्वरत्वम् Sy.

१४. ०ताम् M. केनाप्यतिरस्कृतौ । अपराजिता—नञ्समासे 'तत्पुरुषे तुल्यार्थ०' इति पूर्वपदप्रकृतिस्वरत्वम् Sy.

इन्द्राग्नी । अतिशयेन सङ्ग्रामाणां सम्भक्तारौ ।

**प्र वा॑मर्चन्त्यु॒क्थिनो॑ नीथा॒विदो॑ जरि॒तारः॑ । इन्द्रा॑ग्नी॒ इष॒ आ वृ॑णे ॥ ५ ॥**

प्र वामर्चन्ति । प्रार्चन्ति । वाम् । शस्त्रिणः । स्तोत्रविदश्च । स्तोतारः । तथाऽहं चान्नानि । आवृणे ।

**इन्द्रा॑ग्नी नव॒तिं पुरो॑ दा॒सप॑त्नीरधूनुतम् । सा॒कमेके॑न॒ कर्म॑णा ॥ ६ ॥**

इन्द्राग्नी । हे इन्द्राग्नी ! दासाः पतयो यासां ताः । नवतिसंख्याः ।

---

१. युवाम् । इन्द्राग्नी—'देवताद्वन्द्वे च' इत्युभयपदप्रकृतिस्वरत्वे प्राप्ते 'नोत्तरपदेऽनुदात्तादौ०' इति प्रतिषेधात् समासस्वरः Sy. २. अन्नस्यातिशयेन दातारौ । वाजसातमा—'षणु दाने' । अस्मात् 'जनसनखनक्रमगमः०' इति विट् । 'विड्वनोरनुनासिकस्यात्' इत्याकारः । 'अतिशायने तमप्०' इति तमप् । कृदुत्तरपदप्रकृतिस्वरत्वम् Sy.

३. P. omits अर्चन्ति. ४. इह कर्मणि स्तुतिरूपाभिर्वाग्भिः पूजयन्ति । अर्चन्ति —'अर्च पूजायाम्'। निघातः Sy.

५. युवाम् । वाम्—युष्मच्छब्दस्य द्वितीयायां पदात्परत्वाद् 'युष्मदस्मदोः षष्ठीचतुर्थीद्वितीया०' इत्यादिना वामित्यादेशोऽनुदात्तश्च Sy. ६. उक्थं शस्त्रम् । तद्वन्तः शस्त्रिणो होत्रादयः । उक्थिनः —'वच परिभाषणे'। 'पातृतुदिवचिरिचि०' इति कर्मणि थक् 'वचिस्वपि०' इत्यादिना सम्प्रसारणम् । उक्थं शस्त्रं येषां ते 'अत इनिठनौ' इतीनिः। 'यस्य०' इति लोपः । प्रत्ययस्वरः Sy.

७. ०त्रविदश्च. M. स्तोत्राभिज्ञाः सामगानकुशलाः । नीथाविदः—'णीञ् प्रापणे' । 'हनिकुषिनीरमि०' इत्यादिना क्थन् । कित्त्वाद् गुणाभावः । 'विद ज्ञाने' । 'क्विप् च' इति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् Sy.

८. उद्गात्रादयोऽभिलषितफलावाप्तये युवामर्चन्ति Sy. ९. चार्चन्ना० M. ०हन्तान्ना० P. अहमपि अन्नस्य लाभार्थम् Sy. १०. सर्वतः सम्भजे । पूजयामीत्यर्थः । 'वृङ् सम्भक्तौ' । निघातः Sy.

११. VM. ignores इन्द्राग्नी ॥ हे इन्द्राग्नी ! आमन्त्रितत्वादाद्युदात्तत्वम् Sy. १२. इन्द्रा P.

१३. षाष्ठिकमाद्युदात्तत्वम् BB.

१४. दासयन्त्युपक्षपयन्तीति दासा उपक्षपयितारः शत्रवः । ते पतयः पालका यासां ता दासपत्नीः । 'दसु उपक्षये' । दासयतीति दासः पचाद्यजन्तः । चित्त्वादन्तोदात्तः । ते पतयो यासां 'नित्यं सपत्न्यादिषु दासाच्च' (Gaṇasūtra on Pa. 4.1.35.) इत्युक्तत्वात् 'विभाषा सपूर्वस्य' इति ङीप्, इकारस्य नकारः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् Sy. दासा उपक्षपयितारः प्रजानां तादृशाः पतयस्स्वामिनो यासां पुराम् । दंसिः सौत्रो धातुरुपक्षयवृत्तिः । 'दंसेष्टटनौ न आ च' इति टप्रत्ययः । बहुव्रीहौ 'विभाषा सपूर्वस्य' इति नकारः BB.

१५. नवतिसंख्याकाः । नवानां दशतां नवभावः तिश्च प्रत्ययः । प्रत्ययस्वरेणान्तोदात्तः Sy.

पुरः[1] । सह[2] । युवामेकेनैव[3] । उद्योगेन[4] । अकम्पयतम्[5] ।

**इन्द्राग्नी अपसस्पर्युप प्र यन्ति धीतयः । ऋतस्य पथ्या अनु ॥ ७ ॥**

इन्द्राग्नी । हे इन्द्राग्नी ! कर्मणः[6] । उपप्रगच्छन्ति[7] । स्तुतयः[8] । यज्ञस्य[9] । मार्गान्[10] । लक्षीकृत्य[11] ।

**इन्द्राग्नी तविषाणि वां सधस्थानि प्रयांसि च । युवोरप्तूर्यं हितम् ॥ ८ ॥**

इन्द्राग्नी । हे इन्द्राग्नी ! युवयोः[12] । सह स्थितानि[13] । बलानि[14] । अन्नानि । च । तथा[15] युवयोरेव । अपां प्रेरणम्[16] । हितम्[17] ।

---

१. पुनः M. वु P. एवंविधाः शत्रूणां पुरीः Sy. असुराणां पुरीः शत्रूणां वा BB.

२. युगपत् Sy. सहैव BB.

३. एकेन–'इण्भीकापाशल्यतिमर्चिभ्यः कन्' इति कन् । नित्त्वादाद्युदात्तः Sy.

४. उद्योगे P. कर्मणा प्रहरणलक्षणेन BB.

५. कामं पयतं P. अकम्पयतम् । ताविन्द्राग्नी आह्वयामीति शेषः । अधूनुतम्–'धूञ् कम्पने' । लङि 'स्वादिभ्यः श्नुः' । निघातः Sy. तादृशीः पुरोऽधूनुतमकम्पयतं नाशितवन्तौ । 'धूञ् कम्पने' स्वादिः, वर्णव्यत्ययेन दीर्घः । क्र्यादिकाद्वा धूञो विकरणव्यत्ययेन श्नुप्रत्ययः । तस्मादेवंमहानुभावौ युवामिमं यजमानं सङ्ग्रामे जितवन्तमनुगृह्णीतम् । अस्मिन्निन्द्रियादिकं धत्तम् । 'वि वा एष इन्द्रियेण वीर्येणर्ध्यते' इत्यादि ब्राह्मणम् BB. This stanza=TS. I. I. 14. I.

६. ०र्मणा P. अस्माभिः क्रियमाणस्य कर्मणः Sy.

७. ०प्रयच्छ० P. समीपे प्रकर्षेण वर्तन्ते । अतः सोमपानार्थं युवामागच्छतमिति भावः । यद्वा धीतयः स्तुतयः । ऋतस्य यज्ञस्य । मार्गान् । लक्षीकृत्य । कर्मणा परितः । प्रवर्तन्ते । अतः स्तोतव्यतया युवामागच्छतमिति । यन्ति–'इण् गतौ' । यणादेशः । निघातः Sy.

८. धीतयः सोमस्य धातारः पातारो होत्रादयः । धीतयः—'धेट् पाने' इत्यस्मात् कर्तरि 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् । 'घुमास्था०' इतीत्वम् । चित्त्वादन्तोदात्तः Sy.

९. कर्मफलस्य Sy.

१०. पथः Sy.

११. VM. ignores परि ॥ परि सर्वतः Sy.

१२. वाम्–षष्ठीद्विवचने वामित्यादेशः Sy.

१३. तानि M. परस्परमवियुज्य वर्तन्ते । सधस्थानि–'ष्ठा गतिनिवृत्तौ' । 'आतोऽनुपसर्गे कः' । 'सधमादस्थयोश्छन्दसि' इति सहस्य सधादेशः Sy.

१४. P. reads अन्नानि before बलानि.

१५. यथा M.

१६. रण० M. वृष्टिद्वारा प्रेरकत्वम् Sy.

१७. निहितं वर्तते । तस्मात्सोमपानप्रभृतिषु सर्वकर्मस्विन्द्राग्न्योः सहैव वर्तमानत्वमिति भावः Sy.

इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः । तद्वां चेति प्र वीर्यम् ॥ ९ ॥

इन्द्राग्नी । हे दिवः, प्रकाशकौ ! इन्द्राग्नी ! सङ्ग्रामेषु । युवां परितः । भवथः । तत् । युवयोः । वीर्यम् । प्रज्ञापयति ।

## III.13.

प्र वो देवायाग्नये बर्हिष्ठमर्चास्मै । गमद्देवेभिरा स नो यजिष्ठो बर्हिरा सदत् ॥ १ ॥

प्र वो देवाय ॥ ऋषभो वैश्वामित्रः ॥ अस्मै । देवाय । अग्नये ।

---

१. भिवः P. स्वर्गस्य Sy. दिवः सम्बन्धि SKN.

२. ०शकार M. रोचकौ युवाम् । रोचना—'रुच दीप्तौ' इत्यस्य 'अनुदात्तेतश्च हलादेः' इति युच् । चित्त्वादन्तोदात्तः Sy. रोचनौ दीपनौ हविषा चोदकेन च Dur.

३. बलनामैतत् । तृतीयार्थे चात्र सप्तमी । बलैः SKN. येनान्नेषु Dur.

४. सर्वतः Sy. पर्युपसर्गौ भूषथ इत्यनेन सम्बध्यते SKN. अस्मान्सर्वतः Dur.

५. ०वतः P. अलङ्कृतौ भवथः । शत्रून्पराजित्य सर्वतो विजयमानौ वर्तेथे । भूषथः—'भूष भूषणे' निघातः Sy. परिगृहीतविष्कम्भेण तेजसा चानुगृह्णीष इत्यर्थः, ग्रहनक्षत्रादीनि SKN. स्वामित्वेन भवेम हि तथा कुरुतम् Dur.

६. तादृशं सङ्ग्रामविजयम् Sy. वीर्यम् Dur. ७. युवयोः स्वभूतम् SKN. भवतोः Dur.

८. सामर्थ्यमेव Sy. जिज्ञासितवीर्यं सामर्थ्यं सर्वेण लोकेन SKN.

९. प्रकृष्टम् Dur.

१०. ०ज्ञाय P. प्रकर्षेण ज्ञापयति । यद्वा युवां वाजेषु सङ्ग्रामेषु परिभूषथः शत्रून् परिभवथः । शेषं पूर्ववत् । 'चिती संज्ञाने' अयमन्तर्भावितण्यर्थः । 'बहुलं छन्दसि' इति शपो लुक् । तकारलोपः छान्दसः Sy. चेततेश्छन्दसि वर्तमाने कर्मणि लुङि, अडभावः । प्रचेति प्रकर्षेण चेत्यते SKN. अहं चेति जाने । येन परिभावयथो यागेषु स्तोतॄन् पुरः, अत एवमाशास्महे Dur.
N. 7. 10.; SKN. III. 56.

११. द्वितीयेऽनुवाके सप्तदश सूक्तानि । तत्र 'प्र वो देवाय' इति सप्तर्चं प्रथमं सूक्तं वैश्वामित्रऋषभस्यार्षमग्निदेवताकमानुष्टुभम् । तथा चानुक्रान्तम्—'प्र वः सप्त ऋषभस्त्वानुष्टुभम्' (KSA. 17. 13. p. 15.) इति । विश्वामित्रपुत्र ऋषभ ऋषिः । मण्डलादिपरिभाषया (Cf. KSA. 12. 12. p. 5.) अग्निर्देवता । अग्निष्टोमे इदं सूक्तमाज्यशस्त्रम् । 'पराङ्घ्वर्यावावृत्ते' इति खण्डे सूत्रितम्—'प्र वो देवायेत्याज्यमुपसन्तनुयात्' (ASS. 5. 9.) इति । इदमेव सूक्तं प्रातरनुवाक आश्विनशस्त्रे च विनियुक्तम् । सूत्रञ्च—'प्र वो देवायाग्ने कदा त इति पञ्च' (ASS. 4. 13.) इति । अभ्युदयेष्टौ 'स यन्ता' इत्यग्नेः प्रदातुः याज्या । सूत्रितञ्च—'स यन्ता विप्र एषां दीर्घस्ते अस्त्वङ्कुशः' (ASS. 3. 13.) इति Sy.

१२. देवार्थं य ऋषस्त्विभो M.

१३. यजमानो होत्रादीन्प्रति ब्रूते—हे होत्रादयः ! Sy. १४. अस्मिन्कर्मणि स्तुत्याय Sy. १५. द्योतमानाय Sy.

यूयम् । वृद्धभवं स्तोत्रम् । प्रार्चयतोच्चारयत । आगच्छतु । सः । अस्मान् । देवैः सह । यष्टृतमः । बर्हिरच । आसीदतु ।

**ऋतावा यस्य रोदसी दक्षं सचन्त ऊतयः ।**
**हविष्मन्तस्तमीळते तं सनिष्यन्तोऽवसे ॥ २ ॥**

ऋतावा यस्य । सत्यकर्मा । यस्य । इमे द्यावापृथिवी वशे भवतः । तं दक्षम् । सेवन्ते । मरुतः । सम्भृतहविष्काः । तम् । स्तुवन्ति हविर्वहनार्थम् । तमेव । लाभं सम्भक्तुमिच्छन्तः ।

---

१. यूयम् seems to be the explanation of वः ॥ युष्मत्सम्बन्धिने Sy.

२. ०द्धमे P. वृद्धतमं प्रभूतमिदं स्तुतिरूपं स्तोत्रशस्त्रादि बोक्थ्यजातम् । बर्हिष्ठम्—बर्हितृशब्दात् 'तुश्छन्दसि' इत्यतिशायने इष्ठन् Sy.

३. अर्च-'अर्च पूजायाम्' भौवादिकः । बहुवचनस्यैकवचनम् । निघातः Sy.

४. गमत्—'गम्लृ गतौ' अस्य 'छन्दसि लुङ्लङ्लिटः' इति लोडर्थे लुङ् । लृदित्वाच्च्लेरङ् । 'नित्यं ङितः' इतीकारलोपः । पादादित्वान्न निघातः Sy.

५. एवंस्तुतः सोऽग्निः Sy.

६. अस्मान्प्रति Sy.

७. यष्टव्यदेवैः सहितः सन् Sy.

८. यष्टत० M. आगत्य च यष्टृतमः सोऽग्निः । यजिष्ठः-यष्टृशब्दात् 'तुश्छन्दसि' इतीष्ठन् । 'तुरिष्ठेमेयःसु' इति तृचो लोपः । नित्स्वरः Sy.

९. अस्माभिर्वेद्यां स्तीर्णे बर्हिषि Sy.

१०. M. omits इच । आसीद ॥ उपविशतु । सदत्-पूर्ववल्लोडर्थे लुङ् । 'षद्लृ विशरणगत्यवसादनेषु' इत्यस्य लृदित्वादङ् । निघातः Sy.

११. Omitted in P.

१२. ०कर्मणः M. एवम्भूतः सोऽग्निः सत्यकर्मा । सत्यसङ्कल्प इत्यर्थः । ऋतावा-ऋतशब्दात् 'तदस्यास्ति०' इति 'छन्दसीवनिपौ वक्तव्यौ' इति वनिप् 'अन्येषामपि दृश्यते' इति दीर्घः । वनिपः पित्त्वादनुदात्तत्वे प्रातिपदिकस्वरः Sy.

१३. पूर्वमन्त्रे प्रतिपादितस्याग्नेः Sy.

१४. द्यावापृथिव्यौ Sy.

१५. अग्नेः प्रकाशकत्वेन तदधीनप्रकाशके भवतः Sy. १६. यस्याग्नेर्बलम् Sy.

१७. ०वते P. अग्नेर्यजमानदत्तहविषां प्रदातृत्वेन तदधीना इत्यर्थः । 'षच् समवाये' । व्यत्ययेनात्मनेपदम् । यद्वृत्तयोगादनिघातः Sy. सचन्ते सेवन्ते N. 7. 23.

१८. मरुतः seems to be the explanation of ऊतयः ॥ यजमानस्य फलप्रदानेन रक्षितारो देवाः Sy.

१९. ०विष्कान् M. यजमानाः Sy.

२०. तमेवाग्निम् Sy.

२१. स्तुतिरूपाभिर्वाग्भिः पूजयन्ति Sy.

२२. ०नार्थं P.

२३. M. omits तम् ॥ अग्निम् Sy.

२४. धनादिलाभमिच्छन्तः । सनिष्यन्तः-सनिर्लाभः तमिच्छन्तः । 'सुप आत्मनः क्यच्' । 'सर्वप्रातिपदिकेभ्यो लालसायां सुग्वक्तव्यः' इति क्यचि परतः सुगागमः । क्यचः स्वरः Sy.

रक्षणायाश्रयन्ते[1]।

स यन्ता विप्रं एषां स यज्ञानामथा हि षः ।
अग्निं तं वो दुवस्यत दाता यो वनिता मघम् ॥ ३ ॥

स यन्ता[2]। एषां[3] हविष्मताम्[4]। सः[5]। मेधावी[6]। नियन्ता[7]। स एव। यज्ञानामपि[8] नियन्ता[9]। पुनः[10]। स इति पूरणम्। तम्[11]। अग्निम्। यूयम्[12]। परिचरत[13]। दाता[14]। योऽग्निः। धनम्[15]। प्रयच्छति[16], महनीयम्[17]।

स नः शर्माणि वीतयेऽग्निर्यच्छतु शंतमा ।
यतो नः प्रुष्णवद्वसु दिवि क्षितिभ्यो अप्स्वा ॥ ४ ॥

स नः शर्माणि। सः। अस्मभ्यम्[18]। सुखतमान्[19]। गृहान्[20]। कामाय[21]। प्रयच्छतु[22]।

---

१. ०णायश्च० P.
२. M. omits the *pratīka*.
३. टोषां P. कालोपरोधेन हविर्निर्वापं कृतवतां यजमानानाम् Sy. ४. हविस्मता P. ५. Omitted in P. अग्निः Sy.
६. Another hand adds स यन्ता over स मेधावी in M. ॥ कर्माभिज्ञः Sy. ७. यथोक्तकर्मप्रदर्शनेन तत्र प्रवर्तकः। यन्ता—'यम उपरमे' इत्यस्य तृचि रूपम्। 'ऋदुशनस्०' इत्यादिनानङ्डादेशः। चित्स्वरः Sy.
८. M. omits यज्ञानामपि ॥ ज्योतिष्टोमादीनाम् Sy. ९. फलप्रदानेन नियामकः Sy. १०. अथा–'निपातस्य०' इति दीर्घः Sy. ११. तादृशम् Sy.
१२. यूयम् seems to be the explanation of वः ॥ युष्मत्सम्बन्धिनम् Sy.
१३. हे ऋत्विजः ! यूयं दुवस्यत आहुतिप्रदानेन परिचरत। दुवस्यतिः परिचरणकर्मा। दुवः परिचरणम्। तदिच्छन्तः। सुपः क्यच्। तदन्तस्य धातोर्लोटि रूपम् Sy. सपर्यति। नमस्यति। दुवस्यति। इति परिचरणकर्माणः Ngh. 3. 5.
१४. ज्योतिष्टोमादिकर्मफलदाता। दाता—'डुदाञ् दाने' ताच्छीलिकस्तृन्। नित्त्वादाद्युदात्तः Sy. १५. मंहनीयं धनम् Sy. रेक्णः। रिक्थम्। मघम्। इति धननामानि Ngh. 2. 10.
१६. प्रयच्छंश्च भवति Sy.
१७. VM. ignores हि ॥ हिः प्रसिद्धौ, अत एव सर्वस्य नियन्ता खलु Sy.
१८. हविष्प्रदातृभ्योऽस्मभ्यम् Sy.
१९. पशुपुत्रादिसमृद्ध्यातिशयेन सुखकराणि Sy.
२०. शर्मशब्दो गृहवाची Sy. छाया। शर्म। वर्म। इति गृहनामानि Ngh. 3. 4.
२१. कामय P. सम्भजनायाग्निहोत्रादिकर्मप्राप्त्यर्थम्। वीतये—'वी गतिकान्त्यादिषु'। 'मन्त्रे वृषेषपच०' इत्यादिना क्तिन्। उदात्तत्वेन निपातनादुदात्तः Sy.
२२. ददातु। यच्छतु–'यम उपरमे'। 'इषुगमियमां छः' इति मकारस्य छकारः Sy.

यस्मादग्नेः[1] । अस्माकम् । पोषणयुक्तम्[2] । धनम्[3] । दिव्युत्पन्नं[4] भवति । एवं पृथिवीभ्यः[5] । अन्तरिक्षे चेति[6], यस्य प्रसादात् त्रिभ्योऽपि लोकेभ्यो धनमस्माकमवनमतीत्यर्थः[7], शत्रूणां वा शोषं कुर्वन्[8] प्रुष्णव[9]दिति[10] ।

दीदिवांसमपूर्व्यं वस्वीभिरस्य धीतिभिः ।
ऋक्वाणो अग्निमिन्धते होतारं विश्पतिं विशाम् ॥ ५ ॥

दीदिवांसम्[11] । सन्दीप्यमानम्[12] । अभूतपूर्वम्[13] । वसुमद्भिः[14] । अस्याग्नेः । कर्मभिर्हेतुभूतैः[15] । होतारम्[16] । विशाम्[17] । पतिम्[18] । मन्त्रवन्तः[19] । सन्दीपयन्ति[20] ।[21]

---

१. यस्मादग्नेः सकाशात् Sy.

२. ०युक्तान् P. समृद्धिमद्दानभोगादिना व्यये सत्यप्यतिशयेन वर्धमानम् । प्रुष्णवत्– 'प्रुष स्नेहनसेचनपूरणेषु' अस्मादौणादिको नक् प्रत्ययः । 'तदस्यास्ति०' इति मतुप् । तस्योदात्तताभावश्छान्दसः Sy.

३. तत्तल्लोके असाधारण्येन वर्तमानं धनम् Sy. ४. द्वित्वन्नं P. द्युलोके Sy.

५. भूलोकात् Sy.

६. चति P. अन्तरिक्षे च समुत्पन्नम् Sy.

७. उपनमति यतोऽग्नेः प्रसादात् त्रिषु लोकेषु विद्यमानं धनमस्मानागच्छति सोऽग्नि- रिति पूर्वेणान्वयः Sy. ८. कुर्वं P.

९. M. omits the passage between पृथिवीभ्यः and दिति.

१०. VM. ignores अग्निः and आ ॥ आ समन्तात् Sy.

११. विदिषा P. The *pratika* is added by another hand above the line in M.

१२. दीप्यमानम् । दीदिवांसम्–'दिवु क्रीडादौ' इत्यस्य क्वसौ रूपम् । 'तुजादीनाम्०' इत्यभ्यासस्य दीर्घः । 'लोपो व्योर्वलि' इति वलोपः Sy.

१३. M. omits मानम् । and अभूत ॥ तेजस्वितया प्रतिक्षणमभिनवम् Sy.

१४. वसुभिः P. प्रशस्ताभिः । यद्वा वसु- मद्भिः । वस्वीभिः—वसुशब्दाद् व्यत्य- येन ङीन् । नित्स्वरः Sy.

१५. अग्निविषयस्तुतिलक्षणाभिर्वाग्भिः । यद्वा एतदुद्देशेन क्रियमाणैः कर्मभिः । धीतिभिः —'धेट् पाने' । 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् । कित्वात् 'घुमास्था०' इतीत्वम् । चित्स्वरः Sy.

१६. देवानामाह्वातारम् Sy.

१७. प्रजानाम् । विशाम्—'सावेकाचः' इति विभक्तेरुदात्तत्वम् Sy.

१८. VM. ignores विश् a member of विश्पतिम् and explains पतिम् only ॥ अतिशयेन पालयितारं तम् । विश्पतिम्—'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् Sy.

१९. स्तुतिं कुर्वाणाः शस्त्रिणो होत्रादयः । ऋच्शब्दान्मतुबर्थे वनिप् । अयस्मया- दित्वाद्भसंज्ञत्वात् कुत्वम् । पदसंज्ञा- भावाज्जश्त्वाभावः Sy.

२०. दीपयन्ति । स्तोत्रकरणहविष्प्रदानादि- व्यापारेण समृद्धिं कुर्वन्ति । 'ञिइन्धी दीप्तौ' Sy.

२१. VM. ignores अग्निम् ।

उ॒त नो॒ ब्रह्म॑न्नविष उ॒क्थेषु॑ देव॒हूत॑मः ।
शं नः॑ शोचा म॒रुद्वृ॑धो॒ऽग्ने॑ सहस्र॒सात॑मः ॥ ६ ॥

उत नः । अपि च । अस्मान्[1] । रक्ष[2] । शस्त्रेषु[3] । स्तोत्रे[4] च । देवानामाह्वातृतमः[5] । सुखं[6] च । अस्माकम् । दीपय[7] । मरुद्भिर्वर्धमानः[8] । अग्ने ! सहस्राणां दातृतमः[9] ।

नू नो॑ रास्व स॒हस्र॑वत्तो॒कव॑त्पुष्टि॒मद्वसु॑ । द्यु॒मद॑ग्ने सु॒वीर्यं॒ वर्षि॑ष्ठ॒मनु॑पक्षितम् ॥ ७ ॥

नू[10] नो रास्व । क्षिप्रम्[11] । अस्मभ्यम् । देहि[12] । सहस्रसंख्यम्[13] । सपुत्रम्[14] । पोषणवर्धनम्[15] ।

---

१. ०स्मान P. यज्ञकारिणोऽस्मान् Sy.

२. क्ष P. स्तोत्रविषयन्यूनातिरेकदोषो यथा न भवति तथा पालय । गोपाय च । अविषः—'अव रक्षणादिषु' अस्माल्लेटि 'सिब्बहुलम्०' इति सिप् । अस्य आर्धधातुकत्वादिट् । 'इतश्च लोपः०' इति सिप इकारलोपः । 'लेटोऽडाटौ' इत्यडागमः । निघातः Sy.

३. शस्थे P. अस्माभिः क्रियमाणेष्वाज्यप्रउगादिशस्त्रेषु अविषः । गोपाय । उक्थेषु–'वच परिभाषणे' अस्मात्कर्मणि 'पातृतुदिवचिरिचि०' इत्यादिना थक् । कित्त्वात्सम्प्रसारणम् । प्रत्ययस्वरः Sy.

४. ब्रह्मण्यस्माभिः क्रियमाणे स्तोत्रे Sy.

५. ०तम M. देवहूतमः—ह्वयतेः क्विप् । 'बहुलं छन्दसि' इति सम्प्रसारणपर ? (पूर्व)रूपत्वे । 'हलः' इति दीर्घः । कृदुत्तरपदप्रकृतिस्वरत्वम् Sy.

६. ऐहिकमामुष्मिकं च सुखम् Sy.

७. वर्धयेत्यर्थः । शोच–'शुच दीप्तौ' । अयमन्तर्भावितण्यर्थः । निघातः Sy.

८. M. repeats मरुद्भिः ॥ मरुद्वृधः—'वृधु वर्धने' इगुपधलक्षणः कः । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् Sy.

९. ०तम M. ०तमं P. सहस्रसंख्याकस्य धनस्यातिशयेन दाता त्वम् । 'षणु दाने' अस्य 'जनसनखनक्रमगमो विट्' इति विट् । 'विड्वनोरनुनासिकस्य०' इत्याकारः । कृदुत्तरपदप्रकृतिस्वरः Sy.

१०. Omitted in P.

११. अविलम्बेन । नू नः–'ऋचितुनुघमक्षु०' इति दीर्घः Sy.

१२. धेहि P. दत्स्व । रास्व—'रा दाने' इत्यस्य लोटि रूपम् । व्यत्ययेनात्मनेपदम् । अदादित्वाच्छपो लुक् । निघातः Sy.

१३. सहस्रसंख्योपेतम् । 'मादुपधायाः०' इति मतुपो वत्वम् । कर्दमादित्वान्मध्योदात्तः सहस्रशब्दः Sy.

१४. स्वपु० P.
पुत्रपौत्रादिसहितम् Sy.

१५. पोषणवत् । धनम् is suggested for पोषणवर्धनम् ॥ पोषकृत् । अनेन शरीरस्य क्षीरादिद्वारा बलारोग्यप्रदं गवादिकमुपलक्ष्यते । 'पुष पुष्टौ' अस्मात् क्तिच् । प्रत्ययस्वरेणान्तोदात्तः । 'ह्रस्वनुड्भ्याम्०' इति मतुप उदात्तत्वम् Sy.

दीप्तिमत्[1] । अग्ने[2] ! शोभनवीर्यम्[3] । अतिशयेन वृद्धम्[4] । अनुपक्षीणमिति[5] ।[6]

III. 14.

आ होता॑ म॒न्द्रो वि॒दथा॑न्यस्थात्स॒त्यो यज्वा॑ क॒वित॑मः॒ स वे॒धाः ।
वि॒द्युद्र॑थः॒ सह॑सस्पु॒त्रो अ॒ग्निः शो॒चिष्के॑शः पृथि॒व्यां पाजो॑ अश्रेत् ॥ १ ॥

आ होता[7] । आह्वाता[8] । मोदनः[9] । यज्ञानाम्[10] । तिष्ठति[11] । सत्यकर्मा[12] । देवानां यष्टा[13] । अतिशयेन कविः[14] । सर्वस्य विधाता[15] । विद्योतमानरथः[16] । सहसः[17] । सूनुः । अग्निः ।

---

१. अनेन रत्नकनकादिकं गृह्यते Sy.

२. अग्ने M. अस्मिन्सूक्ते स्तूयमान ! हे अग्ने ! Sy.

३. शोर्यम् M. शोभनसामर्थ्योपेतं तत्तत्कार्येषु व्यवहारयोग्यम् Sy.

४. प्रभूतम् । वर्षिष्ठम्–'प्रियस्थिर॰' इत्यादिना वृद्धस्य वर्षिइत्यादेशः । नित्स्वरः Sy.

५. ॰क्षीण इ॰ P. अत एव व्यये क्रियमाणेऽप्यनुपक्षीणम् । अनुपक्षितम्—'क्षि क्षये' इत्यस्य दीर्घाभावान्निष्ठानत्वं न भवति । तत्पुरुषत्वादव्ययपूर्वपदप्रकृतिस्वरः Sy.

६. VM. ignores वसु ॥ एवम्भूतं वसु रत्नकनकपश्वादिलक्षणं धनम् Sy.

७. 'आ होता' इति सप्तर्चं द्वितीयं सूक्तम् । 'आ होता' इत्यनुक्रमणिका (KSA. 17.14. p. 15.)। 'ऋषभस्तु' इति तु–शब्दप्रयोगादस्यापि सूक्तस्य ऋषभ ऋषिः । अनुक्तत्वात्त्रिष्टुप् । अग्निर्देवता । एतदादीनि दश सूक्तानि तृतीयाष्टमवर्जितानि प्रातरनुवाके आश्विनशस्त्रे त्रैष्टुभे छन्दसि विनियुक्तानि । 'अथैतस्याः' इति खण्डे सूत्रितम्—'आ होतेति दशानां तृतीयाष्टमे उद्धरेदिति त्रैष्टुभम्' (ASS.4.13.) इति Sy.

८. ऋषभोऽग्निं स्तौति Sy.

९. देवानामाह्वाता Sy.

१०. स्तोतुर्मादयिता । मन्द्रः—'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु' अस्मात् 'स्फायितञ्चि॰' इत्यादिना रक् । इदित्वात् नुम् Sy. ११. ॰नामं P. अस्माभिः क्रियमाणान् यज्ञान् Sy.

१२. तिष्टति P. आतिष्ठति । प्राप्नोति । अस्थात्–'ष्ठा गतिनिवृत्तौ' । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लुङ् । 'गातिस्था॰' इति सिचो लोपः । निघातः Sy.

१३. यज्वा–'यज देवपूजासङ्गतिकरणदानेषु' 'सुयजोर्ङ्वनिप्' इति ङ्वनिप्, तस्य पित्त्वादनुदात्तत्वे धातुस्वरः Sy.

१४. अतिशयेन मेधावी । कवितमः—'कु शब्दे' । कौति कूयते वा । 'अच इः' इति कर्तरि भावे वा इप्रत्ययः । तमपः पित्त्वादनुदात्तत्वे प्रत्ययस्वरः Sy.

१५. सर्वस्य जगतो विधाता Sy.

१६. विद्योतमानयानोपेतः Sy.

१७. बलस्य Sy.

ज्वालाकेशः[१]। पृथिव्यां[२] वर्तमानः[३]। बलम्[४]। सेवते[५]।[६]

**अयामि ते नमउक्तिं जुषस्व ऋतावस्तुभ्यं चेतते सहस्वः ।**
**विद्वाँ आ वक्षि विदुषो नि षत्सि मध्य आ बर्हिरूतये यजत्र ॥ २ ॥**

अयामि ते। प्रेरयामि[७]। तुभ्यम्[८]। त्वां[९] नमउक्तिम्[१०]। त्वं सेवस्व[११]। यज्ञवन्[१२]! तुभ्यमेव[१३]। चेतते[१४], नमउक्तिः[१५] क्रियते। बलवन्[१६]! विद्वान्[१७]। त्वमावह[१८]। देवान् विदुषः[१९]। निषीद[२०] च।

---

१. शोचींषि ज्वालाः केशा यस्य सः। ज्वालामयकेशोपेतः। 'शुच दीप्तौ'। 'अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः' इति इसिः। प्रत्ययस्वरेणान्तोदात्तः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरः Sy.

२. विस्तीर्णेऽन्तरिक्षे। यद्वा पृथिव्यां भूमौ वर्तमानः Sy.

३. ०मान P.

४. तेजः स्वकीयां प्रभाम् Sy.

५. श्रयते। प्रापयति। अश्रेत्–'श्रिञ् सेवायाम्' इत्यस्य छन्दसि वर्तमाने लङ्। 'बहुलं छन्दसि' इति शपो लुक्। सार्वधातुकगुणः। निघातः Sy.

६. VM. ignores. सः ॥ एवंविधमहिमोपेतः सः अग्निः Sy.

७. अहं प्रेरयामि उच्चारयामि। अयामि–'इण् गतौ' भौवादिकः ? ('ई गतौ' इति प्रश्लिष्टः)। पादादित्वादनिघातः Sy.

८. M. repeats तुभ्यम् ॥ त्वद्विषयाम् Sy.

९. त्वा M.

१०. उक्तं P. नमस्कारवाक्यम् Sy.

११. अस्माभिः क्रियमाणां नमस्कारोक्तिं सेवस्व। 'जुषी प्रीतिसेवनयोः' तुदादिः। लोटि रूपम्। निघातः Sy.

१२. ०ज्ञवं M. ऋतं सत्यभूतो यज्ञः, तद्वन्! हे अग्ने! Sy.

१३. ०मेवा P.

१४. चेतिते M. and P. चेतयित्रे कर्मणः प्रज्ञापकाय। 'चिती संज्ञाने' शतुर्लसार्वधातुकस्वरेणानुदात्तत्वे ततोऽन्तोदात्तताभावात् 'शतुरनुमः' इति विभक्तेरुदात्तताभावः। धातुस्वरः Sy.

१५. नमे M. न P.

१६. हे सहस्वः! सहो बलम्, तद्वन्नग्ने! सहोऽस्त्यस्येति मतुप्। सकारस्य 'तसौ मत्वर्थे' भसंज्ञकत्वाद् रुत्वं भवति। 'मादुपधायाः०' इति मतुपो वत्वम्। 'उगिदचाम्०' इति नुम्। हल्ङ्यादिलोपे नकारस्य 'मतुवसो रुः०' इति रुत्वम्। आमन्त्रितनिघातः Sy.

१७. आनुपूर्व्येण देवाह्वानाभिज्ञः Sy.

१८. स्त्वमावह P.

१९. कर्माभिज्ञान्। 'विद ज्ञाने' इत्येतस्माद् उत्तरस्य शतुः 'विदेः शतुर्वसुः' इति वस्वादेशः। भसंज्ञायां 'वसोः सम्प्रसारणम्'। प्रत्ययस्वरः Sy.

२०. आ समन्तान्निषीद। 'षद्लृ विशरणादिषु'। लटि 'बहुलं छन्दसि' इति शपो लुक्। शित्प्रत्ययपरत्वाभावात् सीदादेशाभावः। 'सदिरप्रतेः' इति षत्वम् Sy.

बर्हिः । मध्ये[१] । रक्षितुमस्मान्[२] । यजनीय[३] ![४]

द्रवतां त उषसा वाजयन्ती अग्ने वातस्य पथ्याभिरच्छ ।
यत्सीमञ्जन्ति पूर्व्यं हविर्भिरा बन्धुरेव तस्थतुर्दुरोणे ॥ ३ ॥

द्रवतां[५] ते[६] । हे अग्ने ! अभिगच्छताम्[७] । उषासानक्ते[८] । तव[९] । अन्नं[१०] कुर्वाणे । वातस्य[११] । मार्गैः[१२] । शीघ्रं गच्छ[१३] । यदा[१४] । सर्वतः । हविर्भिः[१५] । पूर्व्यमग्निम्[१६] । ऋत्विजोऽञ्जन्ति[१७] । तदानीं त्वामुषासानक्ते[१८] आवृत्य[१९] तिष्ठतः, अहोरात्रयोर्हि यज्ञकरणम् । दुरवने[२०] । यथा बन्धुरावभिमुखौ[२१] भवतः फलकासंघाटौ[२२] ।

मित्रश्च तुभ्यं वरुणः सहस्वोऽग्ने विश्वे मरुतः सुम्नमर्चन् ।
यच्छोचिषा सहसस्पुत्र तिष्ठा अभि क्षितीः प्रथयन्त्सूर्यो नॄन् ॥ ४ ॥

मित्रश्च तुभ्यम् । बलवन् ! अग्ने ! तुभ्यम्[२३] । मित्रावरुणौ[२४] । विश्वे[२५] । च । मरुतः[२६] ।

---

१. स्तीर्णस्य बर्हिषो मध्ये Sy.
२. अस्माकं रक्षणाय Sy.
३. ०नीय. M. यष्टव्य ! हे अग्ने ! 'यज देवपूजादिषु' । 'अभिनक्षियजि०' इत्यादिना अत्रन्प्रत्ययः । आमन्त्रितनिघातः Sy. ४. VM. ignores आ (of the 4th verse)
५. देव० P. ६. Omitted in P.
७. ०गच्छेतां M. and P. 'द्रु गतौ' इत्यस्य लोटि रूपम् Sy.
८. ०क्तेव P. अहोरात्रौ Sy.
९. त्वाम् Sy.
१०. अन्नं P. ११. वायोः Sy.
१२. पथ्याभिः—पथिषु साधक इत्यर्थे 'तत्र साधुः' (Pa. 4. 4. 98.) इति यत् । 'नस्तद्धिते' इति टिलोपः । 'तित्स्वरितम्' इति स्वरितः Sy.
१३. अच्छ M. and P. तावहोरात्रौ शीघ्रमभिगच्छ Sy.
१४. यस्मात्कारणादहोरात्रयोः परस्परागमनेनान्योऽन्यसम्बन्धस्तस्मादहोरात्रयोः सायंप्रातःकालयोः Sy.
१५. आज्यादिभिः Sy.
१६. पूर्व० M. पुरातनं त्वाम् Sy.
१७. सिञ्चन्ति Sy. १८. त्वम् P.
१९. पुनः पुनरावर्तमानौ सन्तौ तिष्ठताम् । तिष्ठतेर्लिटधतुसि रूपम् । निघातः Sy.
२०. दूरव P. दुरोणे अस्माकं गृहेऽग्निहोत्रादिकर्मसिद्ध्यर्थम् Sy.
२१. बन्धु० D., M. यथा कूबरस्थानं परस्परसंसक्तेयाद्वयोपेतं तद्वत् संसक्तौ तावहोरात्रौ Sy.
२२. फलकाष्ठसंघाटौ is suggested for फलकासंघाटौ ।
२३. त्वदर्थम् Sy.
२४. मित्रश्च वरुणश्च मित्रावरुणौ Sy.
२५. सर्वे Sy.
२६. देवाश्च Sy.

सुखम्[१]। अर्चन्ति[२] कुर्वन्ति। यदा[३]। त्वं दीप्त्या[४]। हे[५] सहसः[६] पुत्र[७]! दीप्यमानस्[८]तिष्ठसि[९]। मनुष्यान्[१०]। अभि[११]। नेतॄन्[१२]नात्मनो रश्मीन्। प्रथयन्[१३]। शोभन[१४]वीर्यः।

**व॒यं ते॑ अ॒द्य र॑रि॒मा हि काम॑मुत्ता॒नह॑स्ता॒ नम॑सोप॒सद्य॑ ।**
**यजि॑ष्ठेन॒ मन॑सा यक्षि दे॒वानस्रे॑धता॒ मन्म॑ना॒ विप्रो॑ अग्ने ॥ ५ ॥**

वयं ते अद्य[१५]। वयम्। तुभ्यमग्ने! अद्य[१६]। कामं[१७] हविः[१८]। प्रयच्छामः[१९]। हि[२०]। हविष[२१]-

---

१. स्तोत्रम् Sy.

२. अर्त्यन्ति P. वहन्ति। यद्वा सर्वे देवास्तुभ्यं त्वां सुम्नं सुखेनार्चन् पूजयन्ति। 'अर्च पूजायाम्' इत्यस्य लङि रूपम्। अ-? (आ-) डभावश्छान्दसः Sy.

३. यस्मात्कारणात् Sy.

४. दीप्यत P. दीप्त्या (भा-) समानः सन् Sy.

५. ह P.

६. सस् M.

७. पुत्रः M. पुत्रं P.

८. M. omits दीप्यमानः।

९. तस्मादेते देवाः पूजयन्तीति। तिष्ठाः- 'ष्ठा गतिनिवृत्तौ' इत्यस्य लेटि रूपम्। यद्योगादनिघातः। 'पाघ्रा॰' इत्यादिना तिष्ठादेशस्याद्युदात्तत्वेन निपातनादाद्युदात्तः Sy.

१०. क्षितिशब्दो मनुष्यवाची Sy. विशः। क्षितयः। कृष्टयः। इति मनुष्यनामानि। Ngh. 2. 3.

११. अभिलक्ष्य Sy.

१२. मार्गप्रदर्शकत्वेन नेतॄन् Sy.

१३. प्रयच्च् M. सर्वतो विस्तारयंस्त्वम् Sy.

१४. शोभववी॰ P. सुष्ठु अर्यः स्वामी यद्वा सर्वान्तर्यामितया सुष्ठु प्रेरकः। सूर्यः-'राजसूयसूर्य॰' इति क्यबन्तत्वेन निपातनात्सर्वेऽर्थाः सिद्धा भवन्ति Sy.

१५. Omitted in P.

१६. इदानीमस्मिन्कर्मणि। अद्य-'सद्यःपरुत्परार्यैषमः॰' इत्यादिना निपातितः अन्तोदात्तश्च Sy. अस्मिन् दिने Mah.

१७. कमनीयम् Sy. काम्यत इष्यत इति कामम् Mah. कामं पुरस्कृत्य हविः, कामप्राप्त्यर्थं वा हविः कामशब्देनोच्यते U.

१८. पुरोडाशादि Sy.

१९. दद्मः। 'रा दाने' इत्यस्य वर्तमाने लिटि 'परस्मैपदानां णलतुस्॰' (Pa. 3. 4. 82.) इत्यादिना मसो मादेशः। कादिनियमादिडागमः। 'आतो लोप इटि च' इत्याकारलोपः। हियोगादनिघातः। 'आगमा अनुदात्ताः' इतीटोऽनुदात्तत्वात्प्रत्ययस्वरः Sy.
'रा दाने' लिट्...ररिमेत्यस्य संहितायां दीर्घः Mah. ददिम U.

२०. यस्मात् कारणात् Mah. यस्मात् U.

२१. विषा P.

आदानार्थ[1]मुत्तान[2]हस्ताः[3] । नमस्कारेण[4] सह । उपसद्य[5] । तथा सति त्वं यष्टृतमेन[6] । मनसा[7] । यज[8] । देवान्[9] । अक्षीयमाणेन[10] । स्तोत्रेण[11] । मेधावी[12] । त्वमग्ने[13] !

त्वद्धि पुत्र सहसो वि पूर्वीर्देवस्य यन्त्यूतयो वि वाजाः ।
त्वं देहि सहस्रिणं रयिं नोऽद्रोघेण वचसा सत्यमग्ने ॥ ६ ॥

त्वद्धि पुत्र[14] । सहसः[15], पुत्र ! अग्ने[16] ! त्वत्तः[17] । हि[18] । देवनशीलस्य[19] यजमानस्य ।

---

१. ०नार्थं० P. २. ०मुत्तरान० M. and P. ३. ०हस्तान् M. हविः-स्वीकरणायोत्तानपाणयः Sy. कीदृशा वयम् ? उत्तानहस्ता उत्ताना हस्ता येषां तेऽबद्धमुष्टिकाः । त्यक्तकार्पण्या इत्यर्थः Mah. त्यक्तकृपणभावाः । अबद्धमुष्टिका असंवृताङ्गुलय इति यावत् U.

४. प्रणिपातेन U.

५. प्रसन्नो भूत्वा । 'षद्लृ विशरणगत्यवसादनेषु' अस्य क्त्वा 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति ल्यप् । लित्स्वरः Sy. नमस्कृत्य निकटमागत्य हविर्दत्त्वा इत्यर्थः Mah. उपसङ्क्रम्य निषदनं कृत्वा U.

६. यागेच्छावता Sy. यजतीति यष्टृ, अतिशयेन यष्टृ यजिष्ठं तेन ।. . . यागतत्परेणेत्यर्थः Mah. यष्टृतमेन U.

७. सा M. and P. अन्तःकरणेन Sy. मनसोपलक्षिताः सावधाना इत्यर्थः Mah.

८. पूजय । यक्षि–'यज देवपूजासङ्गतिकरणदानेषु' । लोटि 'बहुलं छन्दसि' इति शपो लुक् । षत्वकत्वे । सिपो ह्यादेशाभावश्छान्दसः Sy. यत एतादृशेन मनसा वयं हवी ररिम, अतो हे अग्ने ! . . . त्वं देवान् यक्षि यज । मद्दत्तेन हविषा देवांस्तर्पयेत्यर्थः Mah.

९. यजनीयान् देवान् Sy.

१०. एक्षी० P. अक्षीणेन प्रभूतेन । अस्रेधता । स्रिधिः क्षयार्थः । 'तत्पुरुषे०' इति नञ्स्वरः Sy. 'स्रिध गतौ' स्रेधत्यन्यत्र गच्छति स्रेधत् । न स्रेधदस्रेधत् तेनानन्यगतेनेत्यर्थः Mah. देवताया याथात्म्यचिन्तनसन्तानैकरसेन U.

११. स्तुतिना M. and P. मन्तव्येन देवान् पूजय Sy. मन्यते देवमहिमानं जानातीति मन्म तेन । मन्यतेर्मन्प्रत्ययः । देवतायाथात्म्यज्ञेनेत्यर्थः Mah. मननेन U.

१२. ०धावि M. and P. कर्माभिज्ञस्त्वम् Sy. मेधावी सन् U. १३. ०मग्नेः M. अष्टर्चेनोपतिष्ठेतेत्यु हैकऽआहुः । वयं तेऽअद्य ररिमा हि काममिति द्वितीयया कामवत्या सप्त पूर्वास्तदष्टावष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तैवास्य तदाप्नोति यदस्य किं चानाप्तमथोऽएवꣳ समं देवते भजेतेऽइति न तथा कुर्यादिता वाव सप्ताष्टावनुष्टुभो भवन्ति स योऽष्टर्चे कामोऽत्रैव तमाप्नोति SB. 9. 5. 2. 9. p. 749. This stanza=YV. 18. 75.

१४. पुत्रः M. १५. बलस्य Sy.

१६. हे अग्ने ! पुत्र सहसः—'परमपि छन्दसि' इति पराङ्गवद्भावाद् द्वयोः सर्वानुदात्तत्वम् Sy.

१७. त्वत्तः सकाशात् । युष्मच्छब्दस्य पञ्चम्येकवचने त्वादेशः । ङसेः 'एकवचनस्य च' (Pa. 7. 1. 32.) इत्यदादेशः । एकादेशस्वरः Sy.

१८. वि P. खलु Sy. १९. देवनशीलस्य कर्मकरणप्रवृत्तस्य यजमानस्य Sy.

ऊ[१]तयः । विविधम् । गच्छ[२]न्ति । ब[३]हुधः । एवमन्नानि च । विगच्छ[४]न्ति । त्वम् । सहस्र-संख्यम् । धनम् । अस्मभ्यम् । देहि[४] । पराभि[५]द्रोहरहि[६]तेन । वाक्येन सह । स[७]त्यभूतं परि-गृहा[८]ण धनमिति ।

तुभ्यं॑ दक्ष कविक्रतो॒ यानी॒मा देव॒ मर्ता॑सो अध्व॒रे अक॑र्म ।
त्वं विश्व॑स्य सु॒रथ॑स्य बोधि॒ सर्वं॒ तद॑ग्ने अमृत स्वदे॒ह ॥ ७ ॥

तुभ्यं[९] दक्ष । तुभ्यम् । प्रवृ[१०]द्ध ! क्रान्तप्र[११]ज्ञ ! यानि । इमानि हवी[१२]षि । दे[१३]व ! मनुष्या[१४]: । यज्ञे । अ[१५]कर्म । त्वम् । विश्व[१६]म् । शोभन[१७]रथं यजमानम् । बुध्यस्व[१८] । सर्वं च । त[१९]त् । अग्ने ! हविः । अस्मिन्कर्मणि । स्वद[२०]ेति ।[२१]

---

१. विघ्नपरिहारेण कर्मपरिपालनादिरूपा रक्षाः Sy.

२. तमिमं यजमानं प्राप्नुवन्ति Sy.

३. बल्ये P. प्रभूताः Sy.

४. प्रयच्छ । देहि—'डुदाञ् दाने' इत्यस्य लोटि 'घ्वसोरेद्धौ०' धातोरेत्वम् अभ्यासलोपश्च । निघातः Sy.

५. भिदोह० P. पापशून्येन । अद्रोघेण—'द्रुह जिघांसायाम्' । घञ् । द्रोघः । घकारश्छान्दसः । 'नञ्सुभ्याम्' इत्युत्तर-पदान्तोदात्तत्वम् Sy.

६. ०हित M.

७. सत्यशीलं सन्मार्गे प्रवर्तमानं पुत्रं च Sy.

८. गृहाणं P.

९. त्वदर्थम् Sy.

१०. समृद्धतया सामर्थ्योपेत ! Sy.

११. ०ज्ञया M. प्रतीन्द्रियविषयप्रज्ञोपेत ! सर्वज्ञ ! Sy.

१२. हविंषि P.

१३. दीप्यमान ! Sy.

१४. यजमाना वयम् Sy.

१५. हविस्त्यागमकार्ष्म । 'डुकृञ् करणे' इत्यस्य लङि 'छन्दस्युभयथा' इति मस आर्ध-धातुकत्वेन ङित्त्वाभावाद् गुणः । यद्-वृत्तयोगादनिघातः Sy.

१६. यज्ञं वि० P. सर्वस्य यजमानस्य Sy.

१७. शोभनयानोपेतस्य Sy.

१८. गोपायिता भवामीति बुध्यस्व । 'बुध अवगमे' । 'छन्दसि लुङ्०' इति लोडर्थे लुङ् । 'तिङां तिङो भवन्ति' इति सिप-स्तादेशः । 'दीपजनबुध०' इत्यादिना कर्तरि चिण् । 'चिणो लुक्' इति तप्रत्य-यस्य लोपः । अडभावश्छान्दसः Sy.

१९. अस्माभिर्दत्तं तत्सर्वं हविः Sy.

२०. आस्वादय । 'स्वद आस्वादने' अन्त-र्भावितण्यर्थः । लोटि रूपम् । निघातः Sy.

२१. VM. ignores अमृत ॥ हे मरण-धर्मरहित ! Sy.

III. 15.

**वि पाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसो अमीवाः ।**
**सुशर्मणो बृहतः शर्मणि स्यामग्नेरहं सुहवस्य प्रणीतौ ॥ १ ॥**

वि[1] पाजसा[2] ॥ अत्किलः[3] कात्यः ॥ विस्तीर्णेन[4] । तेजसा[5] । दीप्यमानः[6] । विबाधस्व[7] । शत्रून्[8] । राक्षसान्[9] । अभ्यमनपराः[10] पिशाचिकाश्च । शोभन[11]सुखहेतोः[12] । महतस्तव[13] । सुखे[14] ।

---

१. 'वि पाजसा पृथुना' इति सप्तर्चं तृतीयं सूक्तं कतगोत्रोत्पन्नोत्कीलस्यार्षं त्रैष्टुभमाग्नेयम् । अत्रेयमनुक्रमणिका—'वि पाजसा कात्य उत्कीलस्तु' ( KSA. 17. 15. p. 15.) इति। कतगोत्रोत्पन्न उत्कीलो नाम ऋषिः । प्रातरनुवाकाश्विनशस्त्रयोः 'आ होता' इत्यादिसूक्तदशकं विनियुक्तं तत्रेदञ्च द्वितीयं सूक्तम् Sy. २. वाज० P.

३. उत्कीलः is suggested for अत्किलः॥ उत्कीलः स्तौति। हे अग्ने! Sy. ४. पृथुना—'प्रथ प्रख्याने'। 'उत्' इत्यनुवृत्तौ 'प्रथिम्रदिभ्रस्जां सम्प्रसारणम्' इत्युप्रत्ययः । तत्सन्नियोगेन सम्प्रसारणम् । प्रत्ययस्वरः Sy.

५. पाजसा—'पा रक्षणे' । 'असुन्' इत्यनुवृत्तौ 'पातेर्बले जुट् च' इत्यसुन् जुडागमः । नित्त्वादाद्युदात्तः Sy. बलेन Mah. ओजः । पाजः । शवः । इति बलनामानि Ngh. 2. 9.

६. अत्यर्थं दीप्यमानस्त्वम् । शोशुचानः—'शुच दीप्तौ' इत्यस्य यङ्लुकि 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणः । व्यत्ययेन शानच् । चर्करीतस्य अदादिवद्भावात् शपो लुक् । चित्त्वादन्तोदात्तत्वे प्राप्ते 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् Sy. अत्यन्तं दीप्यमानः Mah.

७. विशेषेण नाशय । बाधस्व—'बाधृ लोडने' इत्यस्य लोटि रूपम् । पादादित्वान्निघाताभावः Sy. वीत्युपसर्गो बाधस्वेत्यनेन सम्बध्यते । विशेषेण निवर्तय Mah. ८. कर्मानुष्ठानविघ्नकारिणः शत्रून् Sy. द्वेष्यात् U.

९. ०क्षसा P. रक्षसः। उभयत्र सुब्व्यत्ययः। तानि रक्षांसि । कर्मविघ्नकारीणि । तान्यपनुदस्व Sy.

१०. गभ्यमप० P. अमीवाः । रोगराहित्येन सामर्थ्योपेतानि । यद्वामीवाः आभिमुख्येनागमनपरागमनपराः पिशाचिकाश्च Sy. व्याधींश्च Mah., U.

११. ०भसु० P. स्वर्गादिलक्षणशोभनसुखहेतोः । 'शॄ हिंसायाम्' । दुःखं शृणातीत्यौणादिको मनिन् । 'सोर्मनसी०' इत्युत्तरपदाद्युदात्तत्वम् Sy. कीदृशस्याग्नेः ? सुशर्मणः साधुशरणस्य । शोभनं शर्म सुखं यस्मात् स सुशर्मा तस्य Mah. साधुशरणस्य U.

१२. ०हेतो P.

१३. शत्रुविजयेन प्राप्तमहिम्नः Sy. प्रौढस्य Mah.

१४. अस्माकं सुखहेतौ Sy. शरणे सुखे वा Mah. शर्मणि शरणे U.

स्याम्[1] । अग्नेः । अहम् । स्वाह्वानस्य[2] । प्रणयने[3] ।

त्वं नो॑ अ॒स्या उ॒षसो॒ व्यु॑ष्टौ॒ त्वं सूर॒ उदि॑ते बोधि गो॒पाः ।
जन्मे॑व॒ नित्यं॒ तन॑यं जुषस्व॒ स्तोमं॑ मे अग्ने त॒न्वा॑ सुजात ॥ २ ॥

त्वं नो अस्याः । त्वम्[4] । अस्माकम्[5] । अस्याः[6] । उषसः । व्युच्छने[7] । तथा त्वम् । सूर्ये च । उदिते[8] । बुध्यस्व[9] । गोपायिता[10] भवामीति । पितेव[11] । औरसम् । तनयम्[12] । अङ्गैः[13] । सेवस्व[14] । मदीयम् । स्तोमम्[15] । शोभनजनन[16] ![17]

---

१. स्याम M. स्यम् P. अग्निप्रणयनपूर्वके क्रत्वनुष्ठाने भवेयम् । स्याम्—'अस् भुवि' इत्यस्य लिङि 'यासुट् परस्मैपदेषु०' इत्यादिना यासुट् 'लिङः सलोपः०' इति सलोपः । यासुटो ङित्वात् 'श्नसोरल्लोपः' । निघातः Sy. सुखं प्राप्नुयामित्यर्थः Mah. भवेयम् U.

२. स्वाह्वान० M. and P. सुष्ठ्वाह्वानोपेतस्य Sy. सुखेनाह्वातुं शक्यस्य Mah.

३. उत्तरवेद्यादिस्थानेषु प्रणयने । प्रकर्षेण नयनं तत्र तत्रानीय प्रक्षेपः । एवम्भूते तव प्रणयने Sy. एवं प्रत्यक्षमुक्त्वा परोक्षमाह—अग्नेः प्रणीतौ प्रणयनेऽभ्यनुज्ञायां परिचर्यायां सत्याम् Mah. अभ्यनुज्ञायाम् U. वि पाजसा पृथुना शोशुचान इति । वि पाजसा पृथुना दीप्यमान इत्येतद्बाधस्व द्विषो रक्षसोऽअमीवा इति बाधस्व सर्वान् पाप्मन इत्येतत्सुशर्मणो बृहतः शर्मणि स्यामग्नेरहꣳ सुहवस्य प्रणीताविस्याशिषमाशास्ते SB. 6. 4. 4. 21. p. 536. This stanza=YV. 11. 49.

४. P. omits त्वम् ।

५. अग्निहोत्रादिकर्मणि प्रवृत्तानामस्माकम् Sy.

६. अस्य P. अद्य वर्तमानायाः Sy.

७. ०च्छने M., D. प्रकाशने । 'उछी विवासे' । तमो विवास्यते अनया इति करणे क्तिन् । 'व्रश्च' आदिना षत्वम् । 'तादौ च निति कृत्यतौ' इति गतेः प्रकृतिस्वरत्वम् Sy.

८. ०तेम P. उदिते च सति Sy.

९. केचित्सूर्योदयात्प्रागग्निहोत्रं जुह्वति केचिदुदिते तस्मिञ्जुह्वति । तेषामुभयेषां पालयिता भवेत्यर्थः Sy.

१०. गोपाः–'गुपू रक्षणे' । 'गुपूधूपविच्छिपणिपनिभ्य आयः' इत्यायप्रत्ययः । तदन्ताद्धातोः क्विप् । 'अतो लोपः' इत्यकारलोपः । 'लोपो व्यो०' इति यलोपः । धातुस्वरः Sy.

११. तत्र दृष्टान्तः–यथा जनकः Sy.

१२. पुत्रं परिष्वङ्गादिभिः सेवते तद्वदस्माभिः क्रियमाणमिमं सेवस्व Sy.

१३. ज्वालापरिवृतेन शरीरेण Sy.

१४. जुषस्व–'जुषी प्रीतिसेवनयोः' इत्यस्य लोटि रूपम् । निघातः Sy.

१५. त्रिवृत्पञ्चदशादिलक्षणं स्तोत्रम् Sy.

१६. ०भनन P. तन्वा सुजात ! सुष्ठु जात ! देदीप्यमान ! अथवा आत्मनैव सुजातः स्वयम्भूरित्यर्थः । तादृशस्त्वम् Sy.

१७. VM. ignores अग्ने ।

त्वं नृचक्षा वृषभानु पूर्वीः कृष्णास्वग्ने अरुषो वि भाहि ।
वसो नेषि च पर्षि चात्यंहः कृधी नो राय उशिजो यविष्ठ ॥ ३ ॥

त्वं नृचक्षाः । त्वम् । मनुष्याणां[1] द्रष्टा । वर्षितः[2] ! कामानाम् । अनुक्रमेण[3] । प्रकाशय । ज्वालाः[4] । रात्रिषु । अग्ने ! आरोचमानः । वासयितः ! अस्मान्[5] । प्रणय[6] । दारिद्र्यम्[7] । च । अतिपारय[8] । कुरु[9] । च[10] । अस्मान् । कामयमानान्[11] । धनाय[12] । युवतम[13] ![14]

---

१. ०ष्याम् P. नृणां मनुष्याणां शुभाशुभकर्मणोर्द्रष्टा । नृचक्षाः—'चक्षिङ् व्यक्तायां वाचि' अयमत्र दर्शने वर्तते । 'असुन्' इत्यनुवृत्तौ 'चक्षेर्बहुलं शिच्च' इत्यसुन् । शिद्वद्भावात् ख्याञादेशाभावः । कृदुत्तरपदप्रकृतिस्वरः Sy.

२. वृषभ–'वृषु सेचने' । 'अभच्' इत्यनुवृत्तौ 'ऋषिवृषिभ्यां कित्' इत्यभच् । कित्त्वाद् गुणाभावः अपादादित्वान्निघातः Sy.

३. विशेषेण प्रकाशय । भाहि–'भा दीप्तौ' अन्तर्भावितण्यर्थः । लोटि रूपम् Sy.

४. बह्वीर्ज्वालाः । पूर्वीः–पुरुशब्दस्य 'वोतो गुणवचनात्' इति ङीष् । आद्यस्योकारस्य दीर्घश्छान्दसः । प्रत्ययस्वरेणान्तोदात्तः Sy.

५. सर्वस्य प्रकाशप्रदानेन स्वस्वस्थानेषु वासयितः ! अग्ने ! त्वम् । वसो–'वस निवासे' । 'उः' इत्यनुवृत्तौ 'शृस्वृस्निहित्रप्यसिवसि०' इत्यादिना उप्रत्ययः । पादादित्वान्न निघातः, षाष्ठिकमाद्युदात्तत्वम् Sy.

६. कर्मानुरूपफलानि च प्रापय । नेषि–'णीञ् प्रापणे' । छन्दसि लोडर्थे लट् । 'बहुलं छन्दसि' इति शपो लुक् । 'आमन्त्रितं पूर्वमविद्यमानवत्' इत्यामन्त्रितस्याविद्यमानवत्त्वेन पादादित्वान्न निघातः Sy.

७. अस्माकं दारिद्र्यलक्षणं पापम् Sy.

८. निवारयेति यावत् । 'पृ पालनपूरणयोः' । 'चादिषु च' इति न निघातः Sy.

९. अभिलषितफलप्रदानेन प्राप्तकामान्कुर्वित्यर्थः । 'डुकृञ् करणे' इत्यस्य लोटि 'सेर्ह्यपिच्च' इति हिरादेशः । तस्य 'श्रुशृणुपॄकृवृभ्यश्छन्दसि' इति धिरादेशः । 'बहुलं छन्दसि' इति उप्रत्ययस्य लुक् । पादादित्वान्न निघातः Sy.

१०. वा M.

११. उशिजः—'वश कान्तौ' । 'वशेः किच्च' इतीजिप्रत्ययः । कित्त्वात्सम्प्रसारणम् । प्रत्ययस्वरः Sy.

१२. राये–'रा दाने' । 'रातेर्डैः' इति डैप्रत्ययः । 'ऊडिदम्०' इत्यादिना विभक्तेरुदात्तत्वम् Sy.

१३. ०तमः M. युवशब्दादतिशायने इष्ठन्प्रत्ययः । 'स्थूलदूरयुव०' इत्यादिना यणादेः परस्य लोपः पूर्वस्य च गुणः । आमन्त्रितत्वान्निघातः Sy.

१४. VM. ignores वि ॥ वि विशेषेण Sy.

अषा॑ळ्हो अग्ने वृष॒भो दि॑दीहि॒ पुरो॒ विश्वाः॒ सौभ॑गा संजिगी॒वान् ।
य॒ज्ञस्य॑ ने॒ता प्र॑थ॒मस्य॑ पा॒योर्जात॑वेदो बृह॒तः सु॑प्रणीते ॥ ४ ॥

अषाळ्हः । शत्रुभिरनभिभूतस्त्वम्[1] । अग्ने ! वृषभः[2] । दीप्यस्व[3] । शत्रुपुराणि[4] । सौभाग्यानि[5] च । विश्वानि[6] । सम्यग्जयन्[7] । यज्ञस्य । प्रणेता[8] । पुरातनस्य[9] । रक्षकस्य[10] । हे जातप्रज्ञ ! महतः[11] । शोभनप्रणयनम्[12] ।

---

१. शत्रुभिरसोढोऽपराजितः । स्वयं शत्रूञ्जयतीत्यर्थः । 'षह मर्षणे' अस्य निष्ठायां 'हो ढः' इति ढकारः । 'झषस्तथोर्धोऽधः' इति क्तस्य धकारः । ष्टुत्वेन ढः । ढलोपे कृते 'ढ्रलोपे पूर्वस्य दीर्घः०' इति दीर्घः । ओत्वाभावश्छान्दसः । 'सहेः साडः सः' इति सकारस्य मूर्धन्यादेशः । अव्ययपूर्वपदप्रकृतिस्वरे नञ्स्वरः Sy.

२. कामानां वर्षयिता । वृषभः—'वृष सेचने' । 'ऋषिवृषिभ्यां कित्' इत्यभच् । चित्स्वरः Sy.

३. सर्वतो ज्वालादिभिर्दीप्यस्व । दिदीहि—'दिवु क्रीडादौ' इत्यस्य यङ्लुकि लोटो मध्यमैकवचने 'संज्ञापूर्वको विधिरनित्यः' इत्यभ्यासस्य गुणाभावः । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति 'पूर्वत्रासिद्धम्' इत्यस्याप्रवृत्तौ परत्वात् 'हलि च' इति दीर्घत्वम् । पश्चाद् वलोपः Sy.

४. शत्रूणां पुरीः Sy.

५. तत्रत्यानि शोभनान्युत्तमानि धनानि च । 'सुभगान्मन्त्रे' इत्युद्गात्रादिषु पाठाद्भावार्येऽञ् । 'हृद्भगसिन्ध्वन्तेभ्यः०' इति पूर्वपदस्य वृद्धिः । उत्तरपदस्य वृद्धिर्न भवति सर्वविधीनां छन्दसि विकल्पितत्वात् । 'सुपां सुलुक्०' इति सुपो डादेशः । तेन च सौभाग्येन धनान्युपलक्ष्यन्ते । ञित्त्वादाद्युदात्तः Sy.

६. सर्वाः Sy.

७. समञ्ज० M. and P. संजिगीवान्—'जि जये' । छन्दसि लिट् । तस्य क्वसुः 'सन्लिटोर्जेः' इति कवर्गादेशः । प्रत्ययस्वरः । दीर्घश्छान्दसः Sy.

८. हविर्वहनदेवताह्वानादिक्रियाया निर्वाहको भव Sy.

९. मुख्यतया प्रथमं क्रियमाणस्य 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः' इति श्रुतेः । तादृशस्य ज्योतिष्टोमाख्यस्य Sy.

१०. तत्फलप्रदानेन रक्षकस्य । पायोः—'पा रक्षणे' । 'कृवापाजिमि०' (Uṇādi. I. I.) इत्यादिना उण्प्रत्ययः । 'आतो युक् चिण्कृतोः' इति युगागमः । प्रत्ययस्वरः Sy.

११. महृ P. उपदिष्टातिदिष्टहविर्येतिकर्तव्यताकलापेन महतः Sy.

१२. शोभनप्रणयने Sy.

अच्छिद्रा शर्म जरितः पुरूणि देवाँ अच्छा दीद्यानः सुमेधाः ।
रथो न सस्निरभि वक्षि वाजमग्ने त्वं रोदसी नः सुमेके ॥ ५ ॥

अच्छिद्रा[1] शर्म[2] । अच्छिद्राणि[3] । सुखानि[4] । देवानां[5] स्तोतः ! अग्ने ! त्वयि । बहूनि[6] सन्ति । तथा त्वं देवान्[7] । प्रति[8] । दीप्यमानो[9] भवसि । सुप्रज्ञः[10] । रथः । इव[11] । शुद्धः[12] । अभिप्रापय[13] । अन्नम्[14] । अस्मान् । अग्ने ! त्वम् । द्यावापृथिवी[15] च । अत्यन्तमेकचरे[16] शोभनमाने वेति, शिरोवाह्यमशुद्धम्[17] भवति, नैवं रथवाह्यमिति रथः सस्निरुच्यते[18] ।

प्र पीपय वृषभ जिन्व वाजानग्ने त्वं रोदसी नः सुदोघे ।
देवेभिर्देव सुरुचा रुचानो मा नो मर्तस्य दुर्मतिः परि ष्ठात् ॥ ६ ॥

प्र पीपय[19] । प्रपायय[20] । अस्मान्[21] । कामानां वर्षितः ! पूरय[22] च । अन्नानि ।

---

१. अच्छिद्राः P. २. Omitted in P.
३. कुरु । कर्तृकर्मसाधनवैकल्यराहित्येन सम्पूर्णानि कुरु Sy. ४. स्वर्गादिसुख-साधनभूतान्यग्निहोत्रादीनि कर्माणि Sy.
५. सर्वस्य जगतोऽन्तकाले जरयितर्हे अग्ने ! Sy. ६. तदुद्देशेन क्रियमाणानि पुरूणि Sy. ७. यष्टव्यान् देवान् Sy.
८. अभिलक्ष्य Sy.
९. स्वतेजसा प्रकाशमानः । दीदेतिर्दीप्ति-कर्मा । तस्मात् शानच् । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् Sy.
१०. शोभनप्रज्ञोपेतः । 'नित्यमसिच् प्रजामेधयोः' इत्यसिच्प्रत्ययः । बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् Sy.
११. P. adds व after इव ॥ तत्र दृष्टान्तः-यथा रथो धान्यादिकमूढ्वा तत्स्वामिनं प्रापयति तद्वत् Sy.
१२. M. adds अपि after शुद्धः ॥ सस्निरुद्धः स्वकीयं सततगमनं सन्निरुध्य हविष्प्रक्षेपपर्यन्तमत्र वर्तमानस्त्वम् । सस्निः—'षस स्वप्ने' अस्मादौणादिकोनिन् । नित्वादाद्युदात्तत्वम् Sy.
१३. अपिप्रा० P. प्रापय । वक्षि-'वह प्रापणे' अस्य लोटः सिपि 'बहुलं छन्दसि' इति शपो लुक् । ढत्वकत्वे । हिरादेशश्छान्दसत्वान्न भवति । निघातः Sy.
१४. अस्माभिर्दीयमानं हविर्लक्षणमन्नम् Sy.
१५. द्यावापृथिव्यौ Sy.
१६. त्यान्त० P. शोभनरूपोपेते स्वकीयप्रभाभिः प्रकाशयुक्ते कुरु Sy.
१७. ०वाप्यम० P. १८. सस्निरु० P. The passage शिरोवाह्यम...रुच्यते should immediately follow शुद्धः and precede अभिप्रापय ।
१९. ०पयः P.
२०. प्राप्यायय M. प्राप्यायय P. अभिलषितफलानि वर्धय । पीपय—'पा पाने' इत्येतस्य ण्यन्तस्य लुङि चङि द्विर्वचनाभ्यासदीर्घौ सिपो लोपश्छान्दसः Sy.
२१. अस्माकम् Sy. २२. प्रयच्छ । जिन्व—'इवि जिवि धिवि प्रीणनार्थाः' एतस्य लोटि इदित्वान्नुम् । शप् । 'अतो हेः' इति हेर्लुक् । आमन्त्रितस्याविद्यमानवत्त्वेन अतिङ उत्तरत्वाभावात् न निघातः Sy.

द्यावापृथिवी[1] च । सुदोहे[2] कुरु । देवेभिः[3] सह । अग्ने ! त्वम्[4] । यज्ञे[5] शोभनरुचा[6] तेजसा । रोच[7]मानः । मा । अस्मान् । शत्रोर्मनुष्यस्य[8] । दुर्मतिः[9] । परितः । तिष्ठतु[10] ।[11]

**इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध ।**
**स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ ७ ॥**

[ इळामग्ने । ][12]

III. 16.

**अयमग्निः सुवीर्यस्येशे महः सौभगस्य ।**
**राय ईशे स्वपत्यस्य गोमत ईशे वृत्रहथानाम् ॥ १ ॥**

अयमग्निः[13] । शोभनवीर्यस्य[14] । महतः । सौभाग्यस्य[15] । ईश्वरो भवति[16] । तथा

---

१. इमे द्यावापृथिव्यौ Sy.
२. वृष्टिद्वाराभिमतफलप्रदानेन सुष्ठु दोग्ध्र्यौ कुरु । दोहनं दोघः । भावे घञ् । कुत्वं छान्दसम् । 'आद्युदात्तं द्व्यच् छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् Sy.
३. देवैः is suggested for देवेभिः ॥ यजनीयैर्देवैः सहितः Sy. ४. त्व M.
५. येज्ञे M. ६. ०नरूपः P. शोभनदीप्त्या Sy. ७. शोभमानस्त्वम् Sy.
८. शतो० P. ९. दुष्टबुद्धिप्रयुक्तोऽभिभवः । 'मनु अवबोधने' । मन्यते इति मतिर्बुद्धिः । कर्तरि क्तिच् । दुष्टा बुद्धिः । अव्ययपूर्वपदप्रकृतिस्वरत्वे प्राप्ते कृदुत्तरपदप्रकृतिस्वरत्वम् Sy.
१०. ०ष्ठत P. गच्छतु Sy. ११. VM. ignores देव ॥ दीप्यमान ! Sy.
१२. The *pratīka* has been supplied by the Editor. The stanza has already been explained. See RV. 3. 1. 23.
१३. 'अयमग्निः' इति चतुर्थं षड्चं सूक्तमाग्नेयम् । अत्रानुक्रमणिका–'अयमग्निः षड् प्रागाथम्' (KSA. 17. 16. p. 15.) इति । 'उत्कीलस्तु' (KSA. 17. 15. p. 15.) इति तुशब्दप्रयोगादस्यापि सूक्तस्य स एव ऋषिः । अत्र विषमसंख्यानामृचां बृहतीछन्दस्तृतीयपादस्य द्वादशाक्षरत्वात्, समसंख्यानां सतोबृहती प्रथमतृतीयपादयोर्द्वादशाक्षरत्वात् । उक्तञ्च–'अयुजो जागतौ सतोबृहती' (KSA. 8. 4. p. 4.) इति ।. . .उत्कीलः स्तौति Sy.
१४. शोभनसामर्थ्योपेतस्य Sy.
१५. सौभगस्य सुभगस्य भावः सौभगम् । उद्गात्रादित्वादञ् । सर्वविधीनां छन्दसि विकल्पितत्वादत्र 'हृद्भग०' इत्यादिना प्राप्ताया उत्तरपदवृद्धेरभावः Sy.
१६. ०रो इव P. ईष्टे ईश्वरो भवति । सर्वस्य बलारोग्यहेतुतया सौभाग्यकारित्वात् । ईशे—'ईश ऐश्वर्ये' अदादित्वाच्छपो लुक् । 'लोपस्त आत्मनेपदेषु' इति तलोपः । पादादित्वादनिघातः Sy.

धनस्य[1] च। शोभनपुत्रस्य[2]। गोयुक्तस्य[3]। तथा[4] वृत्रहननानां[5] च। ईष्टे[6] इति[7]।

इमं नरो मरुतः सश्चता वृधं यस्मिन्नायः शेवृधासः।
अभि ये सन्ति पृतनासु दूढ्यो विश्वाहा शत्रुमादभुः ॥ २ ॥

इमं नरः। हे नेतारः[8]! मरुतः[9]! इममग्निम्[10]। वर्धमानम्[11]। सेवत[12]। यस्मिन्[13]। धनानि। सुखस्य[14] वर्धयितॄणि सन्ति। ये[15]। पृतनासु[16]। अभिभवन्ति[17]। दुर्बुद्धीन्[18] रायः[19]। ये च सर्वदा[20]।

---

१. रायः—'ऊडिदम्०' इत्यादिना विभक्तेरुदात्तत्वम् Sy.

२. शोभनापत्यस्य। स्वपत्यस्य—'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् Sy.

३. गवादिपशुयुक्तस्य Sy.

४. तथैवम्भूतोऽग्निः Sy.

५. ०हननानं M. ०हसनानां P. हननं हयः। शत्रुभूतपापविनाशनानामपि। वृत्रहयानाम्—'वृतु वर्तने' अस्मात् 'स्फायितञ्चिवञ्चि०' इत्यादिना रक्प्रत्ययः। कित्त्वाद् गुणः। 'हन हिंसागत्योः' इत्यस्मात् 'हनिकुशिनीरमिकाशिभ्यः०' इति क्थन्। कित्त्वादनुनासिकलोपः। कृदुत्तरपदप्रकृतिस्वरः Sy.

६. उष्ट M. त्वयि समर्पितकर्मणामस्माकं त्वत्प्रसादात् पापक्षयो भवतीति तस्यापि स्वामी Sy.

७. VM. ignores अयम्। अग्निः and ईशे॥ अयं यजनीयत्वेनाङ्गुल्या निर्दिश्यमानोऽग्निः। ईशे ईष्टे। पुत्रपश्वाद्युद्देशेन क्रियमाणकर्मफलसम्पादकत्वेन तत्स्वामित्वात्। निघातः Sy.

८. कर्मणां नेतारः! Sy.

९. हे देवाः! यूयम् Sy.

१०. अस्माभिः स्तूयमानमग्निम् Sy.

११. पशुपुत्रादिवर्धकम् Sy.

१२. सेवध्वम् is suggested for सेवत॥ हविरानयनार्थं सेवध्वम्। सश्चत—'षस्ज सङ्गे' इत्यस्माल्लोटि रूपम्। जकारस्य व्यत्ययेन चकारः। निघातः Sy.

१३. कीदृशोऽग्निः? इत्याकाङ्क्षायामाह—देवे Sy.

१४. दानभोगाद्युपयोगेन सुखस्य वर्धकानि। शेवृधासः—वर्णव्यत्ययः। शं सुखं वर्धयन्तीति 'असुन्' इत्यसुन्। गुणाभावश्छान्दसः। 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वञ्च' इत्यौणादिकसूत्रात्पूर्वपदप्रकृतिस्वरः Sy.

१५. देवाः Sy.

१६. सेनासु तदुपलक्षितेषु सङ्ग्रामेषु Sy.

१७. अभितः सन्ति। 'अस भुवि' Sy.

१८. दुध्यध्रीन् M. दुष्टध्यानोपेतानात्मनो हिंसकाञ्छत्रूनभिभवन्ति। दूढ्यः—'ध्यै चिन्तायाम्'। 'अन्येभ्योऽपि दृश्यते' इति क्विप्। दृशिग्रहणात्सम्प्रसारणम्। 'दुरो दाशनाशदभध्येषूत्वं वक्तव्यमुत्तरपदादेः ष्टुत्वञ्च' इति उत्वढत्वे। 'छन्दस्युभयथा' इति शसीयङुवादेशं बाधित्वा यणादेशः। कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः। शसः सुप्त्वादनुदात्तत्वे कृते 'उदात्तस्वरितयोर्यणः०' इति शसः स्वरितत्वम् Sy.

१९. नायः P.

२०. विश्वाहा विश्वान्यहानि यस्मिन्नखण्डे काले तस्मिन्सर्वदा Sy.

आदभ्नुवन्ति[1] । शत्रुम्[2] ।

स त्वं नो॑ रा॒यः शि॑शीहि॒ मीढ्वो॑ अग्ने सु॒वीर्य॑स्य ।
तुवि॑द्युम्न॒ वर्षि॑ष्ठस्य प्र॒जाव॑तोऽनमी॒वस्य॑ शु॒ष्मिणः॑ ॥ ३ ॥

स त्वं नः । सः[3] । त्वमग्ने ! अस्मान् । धनेन[4] । तीक्ष्णीकुरु[5] । सेक्तुः[6] । अग्ने ! शोभनवीर्येण[7] । बह्वन्न[8] ! वृद्धतमेन[9] । प्रजावता[10] । अभिभवितृवर्जितेन[11] । बलवता[12] ।

च॒क्रिर्यो॑ विश्वा॒ भुव॑ना॒भि सा॑स॒हिश्च॒क्रिर्दे॒वेष्वा दुवः॑ ।
आ दे॒वेषु॒ यत॑त॒ आ सु॒वीर्य॒ आ शंस॑ उ॒त नृ॒णाम् ॥ ४ ॥

चक्रिर्यः । शत्रूणां[13] सहनशीलः । योऽग्निः[14] । विश्वानि । भूतानि । करोति[15] ।

१. ०दम्नुव० M. हिंसन्ति । एवम्भूतास्ते सर्वे मरुतो यूयं तमिममग्निं सेवध्वमिति पूर्वेणान्वयः । आदभुः—'दम्भु दम्भे' अस्माल्लिटचुसि रूपम् । 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनामुपसंख्यानम्' इति किद्वद्भावादनुनासिकलोपः । 'द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम्' (VPa. 6. 1. 8.) इति द्विर्वचनाभावः । यद्वृत्तयोगादनिघातः । 'सतिशिष्टस्वरो बलीयान्' इति प्रत्ययस्वरः Sy. २. आत्मनो द्वेष्टारम् Sy. ३. तथाविधः Sy.

४. रायः—तृतीयार्थे षष्ठी Sy.

५. तीक्ष्णान् कुरु । अस्मान् धनसमृद्धान् कुरु । शिशीहि—'शिञ् निशाने' इत्यस्य लोटि 'बहुलं छन्दसि' इति विकरणस्य श्लुः । 'वा छन्दसि' इति विकल्पेन ङित्त्वात् 'अङितश्च' इति हेर्धिरादेशो न भवति । दीर्घश्छान्दसः । निघातः Sy.

६. सेक्तुः M. तेक्तः P. मीढ्वन् ! कामानां सेक्तः ! मीढ्वः—'मिह सेचने' इत्यस्य क्वसौ 'दाश्वान्साह्वान्मीढ्वांश्च' इति निपातनात् ढत्वम् । उपधादीर्घश्च । सम्बुद्धौ नुमि कृते हल्ङ्यादिलोपे संयोगान्तलोपे च कृते 'मतुवसो रु सम्बुद्धौ छन्दसि' इति रुः । पादादित्वादाद्युदात्तः Sy. ७. शोभनसामर्थ्ययुक्तस्य Sy. ८. बहुधनोपेत ! Sy.

९. वृद्धतमस्य प्रभूतस्य Sy.

१०. अपत्ययुक्तस्य Sy. ११. आरोग्यहेतोः Sy. १२. बलहेतोः । यद्वा । एतत्सर्वं रैविशेषणतया योजनीयम् । एताः षष्ठ्यस्तृतीयार्थे । एतदुक्तं भवति—धनेनापत्यारोग्यशरीरबलोपेतेनान्नेनास्मान् समृद्धान् कुर्विति Sy.

१३. पुरोडाशादिहविर्भारसहनशीलः सन् । सासहिः—'षह मर्षणे' इत्यस्माद् यङ्न्तात् 'सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ वक्तव्यौ' (PMBH. on Pa. 3. 2. 171.) [Cf. सासहिवावहिचाचलिपापतीनां निपातनम्' (V. 4. on Pa. 3. 2. 171.] इति किः । प्रत्ययस्वरः । (एतदादियोगे) विश्वेत्यादिषु 'न लोकाव्यय०' इति षष्ठीप्रतिषेधः Sy.

१४. प्रथमग्निः Sy. १५. चक्रिः सर्वस्य जगतः कर्ता । चक्रिः—'डुकृञ् करणे' 'आदृगमहनजनः किकिनौ लिट् च' इति किन्प्रत्ययः । लिड्वद्भावाद् द्विर्वचनम् । किस्त्वाद् गुणाभावः । नित्स्वरः Sy.

यस्त्वं । देवेषु । परिचर्याम् । करोति । सोऽयं देवानुद्दिश्य । आयतते, प्रयत्नं करोति । एवं सुवीर्ये । तथा । शंसने । च सर्वस्मिन् । मनुष्याणामिति ।

मा नो॑ अग्ने॒ऽमतये॒ मावीर॑तायै रीरधः ।
मागोता॑यै सहसस्पुत्र मा नि॒देऽप॒ द्वेषां॒स्या कृ॑धि ॥ ५ ॥

मा नो अग्ने । अर्थाभावाद् या दुर्गतिर्भवति तस्यै । मा । अस्मान् । अग्ने ! वशं नैषीः । मा च । अनपत्यतायै । मा च ।

१. आ आनयति ।. . .यद्वाऽऽकारश्चार्थे Sy. २. यजनीयदेवेषु Sy.
३. अस्माभिर्दत्तं हविः Sy.
४. स चाग्निः देवनशीलेषु स्तोतृषु Sy.
५. ०दिश्य M.
६. आभिमुख्येन गच्छति । यद्वा विश्वानि भुवनानि चक्रिरभिसासहिरभिभवनशीलः । आकारश्चार्थे देवेषु च दुवः परिचरणं चक्रिः कर्ता । य एवम्भूतः स आयतते इत्यादि पूर्ववत् । यतते—'यती प्रयत्ने' यद्वृत्तयोगादनिघातः Sy.
७. तथा नृणां मनुष्याणां शोभनवीर्योपेते युद्धे तद्रक्षणार्थमागच्छति Sy.
८. आ आगच्छति Sy.
९. शंसनं शंसः शस्त्रम् । तस्मिन् । शंसे । भावे घञ् । जित्स्वरः Sy.
१०. अपि च Sy.
११. यज्ञस्य नेतॄणां शस्त्रिणाम् । नृणाम्—'नृ च' इति विकल्पेन दीर्घाभावः । 'नामन्यतरस्याम्' इति विभक्तेरुदात्तत्वम् Sy.
१२. VM. ignores आ (before सुवीर्ये) and अभि ॥ अभि अभिविशति । 'तत्सृष्ट्वा तदेवानुप्राविशत्' (TU. 2.6.) इति श्रुतेः । आ आगच्छति । अनेनाग्नेः सर्वव्यापकता प्रतिपादिता भवति Sy.
१३. य P.
१४. तस्मै P. शत्रुभूताय दारिद्र्याय Sy.
१५. संसिद्धान्विषयभूतान् (मा) कुरु । रीरधः—'राध साध संसिद्धौ' अस्माण्ण्यन्ताच्छान्दसे लुङि 'णिश्रिद्रुस्रुभ्यः०' इति च्लेश्चङादेशः । 'णेरनिटि' इति णिलोपः 'णौ चङ्युपधायाः०' इत्युपधाह्रस्वः । 'चङि' इति द्विर्वचनम् 'सन्वल्लघुनि चङ्परे०' इति सन्वद्भावः । 'सन्यतः' इत्यभ्यासस्येत्वम् । तस्य 'दीर्घो लघोः' इति दीर्घः । 'न माङ्योगे' इत्यडभावः । निघातः Sy. १६. अपुत्रतायै ।. . . अस्मानपुत्रताया विषयभूतान् (मा) कुरु । अवीरतायै—वीरा अस्य सन्तीति वीरः, अर्शआदित्वादच् । वीरस्य भावो वीरता । 'तस्य भावस्त्वतलौ' इति तल् । न वीरता । अवीरता । तस्यै । नञः स्वरे प्राप्ते 'परादिश्छन्दसि बहुलम्' इति नञुत्तरस्यादेरुदात्तता Sy.

अपशुतायै । हे सहसः, पुत्र ! मा च । निन्दित्रे तदर्थम् । सर्वान् द्वेष्टृन् । अस्मत्तोऽपाकुरु ।

शग्धि वाजस्य सुभग प्रजावतोऽग्ने बृहतो अध्वरे ।
सं राया भूयसा सृज मयोभुना तुविद्युम्न यशस्वता ॥ ६ ॥

शग्धि वाजस्य । देहि । अन्नम् । सुधन ! प्रजायुक्तम् । अग्ने ! महत् । यज्ञे च । संसृज । भूयसा । धनेन । सुखस्य भावयित्रा । तुविद्युम्न ! यशोयुक्तेन ।

---

१. पशु P. गवादिपशुसम्पत्त्यभावस्य विषयभूतान् (मा) कुरु । अगोतायै—गोशब्देन गोमान् लक्ष्यते । न गौरगोः, अगोर्भावोऽगोता । 'तस्य भावः०' इति तल् । लित्स्वरः Sy.

२. बलस्य । सहसस्पुत्र—'सुबामन्त्रिते पराङ्गवत्स्वरे' इति पराङ्गवद्भावात् सहसस्पुत्र इत्येतयोः सर्वानुदात्तत्वम् Sy.

३. निन्दिते P., D. निन्दाया विषयभूतान् (मा) विधेहि । निदे—'णिदि कुत्सायाम्' अस्मात्सम्पदादित्वाद् भावे क्विप् । 'अनित्यमागमशासनम्' इति नुमभावः । 'सावेकाचः' इति विभक्तेरुदात्तता Sy.

४. ०दर्थं P.

५. कर्मापराधनिमित्तान् द्वेषांश्च Sy.

६. ०त्तोमाकु M. अपाकुरु । निवारय Sy.

७. ईशिषे । तादृशमन्नमस्मिन्नध्वरेऽस्मभ्यं देहि । शग्धि—'शक्लृ शक्तौ' इत्यस्य लोटि 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'हुझल्भ्यो हेर्धिः' इति धिरादेशः । हेरपित्त्वादुदात्तता Sy.

८. अन्नस्य Sy.

९. ०धनं P. शोभनधनोपेत ! Sy.

१०. अपत्योपेतस्य Sy.

११. महतः प्रभूतस्य Sy.

१२. Omitted in P. अस्माभिः क्रियमाणेऽस्मिन्नग्निष्टोमादिकर्मणि Sy.

१३. अस्मान् संयोजय । सृज—'सृज विसर्गे' तुदादिः । लोटि रूपम् । निघातः Sy.

१४. अतिप्रभूतेन । भूयसा—बहुशब्दाद् 'द्विवचनविभज्योपपदे०' इतीयसुन् । 'बहोर्लोपो भू च बहोः' इतीयसुनः सर्वस्य लोपे प्राप्ते 'आदेः परस्य' (Pa. 1. 1. 54.) इति प्रत्ययस्यादेर्लोपो बहोर्भूरादेशश्च । नित्स्वरः Sy.

१५. एवंविधेन धनेन । राया—'ऊडिदम्०' इति विभक्तेरुदात्तत्वम् Sy.

१६. मापयित्रा M. मय इति सुखनाम । तद्दानाद्युपयोगहेतुतया सुखस्य भावकेन । मयोभुना—'भू सत्तायाम्' इत्यस्माद् औणादिको डुप्रत्ययः Sy. शेवृधम् । मयः । इति सुखनामनी Ngh. 3. 6.

१७. बहुधनयुक्त ! हे अग्ने ! तुविद्युम्न ! पादादित्वादनिघातः Sy.

१८. कीर्तिमता Sy.

## III. 17.

**समिध्यमानः प्रथमानु धर्मा समक्तुभिरज्यते विश्ववारः ।**
**शोचिष्केशो घृतनिर्णिक्पावकः सुयज्ञो अग्निर्यजथाय देवान् ॥ १ ॥**

**समिध्यमानः**[1] ॥ कतो[2] वैश्वामित्रः ॥ प्रथमानि[3] । कर्माणि[4] । प्रति[5] । समिध्यमानः[6] । समज्यते[7] । अञ्जनसाधनैर्हविर्भिः[8] । विश्वैर्वरणीयः[9] । ज्वालाकेशः[10] । घृतरूपः[11] । शोधकः[12] । शोभनयज्ञः[13] । अग्निः । देवान्[14] । यष्टुम्[15] ।

---

१. 'समिध्यमानः' इति पञ्चर्चं पञ्चमं सूक्तमाग्नेयं त्रैष्टुभं वैश्वामित्रस्य कतस्यार्षम् । तदुक्तम्–'समिध्यमानः पञ्च कतो वैश्वामित्रस्तु' (KSA. 17. 17. p. 15.) इति । 'आ होता' इत्यादिसूक्तदशकस्य विनियोग उक्तः प्रातरनुवाकाश्विनशस्त्रयोरिति । तत्रेदं चतुर्थम् । वाजपेये बार्हस्पत्ये चरौ 'अग्निं सुदीतिम्' इति स्विष्टकृतो याज्या । 'वाजपेयेन' इत्यादिखण्डे सूत्रितम्—'अग्निं सुदीतिं सुदृशं गृणन्त इति संयाज्ये' (ASS. 9. 9.) इति Sy.

२. क्रतो P. कतः स्तौति Sy.

३. व्रतानि P. प्रथमं यज्ञोपक्रमे । प्रथमा—'सुपां सुलुक्०' इति सुपो डादेशः Sy.

४. धर्म–धारणाद्धर्म । अग्नेर्यज्ञनिर्वाहकतया तद्धारकत्वाद्धर्माग्निः । तथा च मन्त्रः–'धर्माणमग्निं विदथस्य साधनम्' (RV. 10. 92. 2.) इति तादृशोऽग्निः । धर्म–'धृञ् धारणे' इत्यस्माद् 'अन्येभ्योऽपि दृश्यते' इति मनिन् । ह्रस्वत्वं छान्दसम् । नित्स्वरः Sy.

५. अनु—अग्न्यायतनेष्वनुक्रमेण Sy.

६. ०माना० P. सम्यक् प्रज्वाल्यमानः । यद्वा अनुधर्मं धर्मसाधनभूतेषु यज्ञेषु प्रथमं समिध्यमानः Sy.

७. सम्यक् सिच्यते । अज्यते–स एव (अञ्जू–)धातुः । कर्मणि यक् । 'अनिदिताम्०' इत्युपधालोपः Sy.

८. अञ्जनसाधनैर्घृतादिभिः । अक्तुभिः–'अञ्जू व्यक्तिगतिम्रक्षणेषु' । अज्यत एभिरिति बाहुलकात् क्तुः करणे कित्त्वादुपधालोपः । प्रत्ययस्वरः Sy.

९. सर्वैर्यजमानैर्यष्टव्यतया वरणीयः । विश्ववारः—विश्वैर्यजमानैर्होतृद्वारा वारो वरणं यस्येत्यत्र 'वृञ् वरणे' इत्यस्य ण्यन्तस्य रूपं वारः । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् Sy.

१०. शोचींषि ज्वालाः केशा यस्य स तथोक्तः Sy.

११. ०रूपं P. घृतस्य तापनद्वारा विलापनेन शोधकः । घृतनिर्णिक्—'णिजिर् शौचपोषणयोः' । क्विप् । घृतं नेनेक्तीति द्वितीयातत्पुरुषत्वात् पूर्वपदस्वरः Sy.

१२. अस्मदीयपापशोधकः Sy.

१३. शोधन० M. शोभनयज्ञोपेतः Sy.

१४. अस्माभिर्यजनीयान् देवान् Sy.

१५. यजथाय—'यज देवपूजासङ्गतिकरणदानेषु' अस्मादौणादिकः अथप्रत्ययः । तादर्थ्ये चतुर्थी । प्रत्ययस्वरः Sy.

यथायंजो होत्रमंग्ने पृथिव्या यथा दिवो जांतवेदश्चिकित्वान् ।
एवानेनं हविषां यक्षि देवान्मंनुष्वद्यज्ञं प्र तिंरेममद्य ॥ २ ॥

यथायजः । यथा[1] । यजमानाया अस्याः[2] । पुरा[3] त्वं होत्रम्[4] । कृतवानसि[5] । यथा वा । दिवः[6] । जातधन[7] ! प्राज्ञः[8] । एवम्[9] । अनेन[10] । हविषा । यज[11] । देवान् । मनोरिव[12] । अस्माक[13]मिमम् । यज्ञम् । अद्य[14] । मर्धय[15][16]: ।

त्रीण्यायूंषि तवं जातवेदस्तिस्र आजानीरुषसंस्ते अग्ने ।
ताभिर्देवानामवों यक्षि विद्वानथां भव यजंमानाय शं योः ॥ ३ ॥

त्रीण्यायूंषि[17] । हे जातधन[18] ! तव[19] । त्रीणि[20] । अन्नानि आज्यौषधिसोमात्मकानि[21]

---

१. यथा–'प्रकारवचने थाल्' इति थाल् । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् Sy.
२. यजमानाया अस्याः refers to पृथिव्याः ॥ यजमानभूतायाः पृथिवीदेवतायाः Sy.
३. पूर्वं होता सन् Sy.
४. होतं P. होमसाधनं हविः । होत्रम्—'हु दानादनयोः' । 'हुयामाश्रुभसिभ्यस्त्रन्' इति त्रन्प्रत्ययेनान्तोदात्तः Sy.
५. अयाजीः । अयजः–यजेर्लङि रूपम् । यच्छब्दयोगादनिघातः Sy.
६. यजमानभूताया द्युदेवताया होता भूत्वा हविरयजः । दिवः—'ऊडिदम्०' इति विभक्तेरुदात्तत्वम् Sy.
७. जातप्रज्ञ ! हे अग्ने ! Sy.
८. प्रज्ञः P. कर्मविषयज्ञानवान् त्वम् । चिकित्वान्—'कित ज्ञाने' इत्यस्य क्वसौ रूपम् । प्रत्ययस्वरः Sy.
९. एवं त्वमस्मिन् कर्मणि होता सन् Sy.
१०. अस्माभिर्दीयमानेन । अनेन—इदंशब्दस्य तृतीयैकवचने 'अनाप्यकः' (Pa. 7. 2. 112.) इत्यनादेशः Sy.
११. यक्षि—यजेर्लेटि रूपम् Sy.
१२. Omitted in P. तत्र दृष्टान्तः–यथा मनोर्यज्ञमनुष्ठानसम्पूर्त्या पारमनैषीस्तद्वदिमं यज्ञं पारं नयेत्यर्थः । मनुष्वत्—'तत्र तस्येव' इति वतिः । 'नभोऽङ्गिरोमनुषां वत्युपसंख्यानम्' इति भसंज्ञत्वात् रुत्वाभावः । प्रत्ययस्वरः Sy.
१३. अस्माभिः क्रियमाणम् Sy.
१४. इदानीम् Sy.
१५. आनर्द्धय: P. वर्धय is suggested for मर्धय: ॥ प्रतिर अनुष्ठानसम्पूर्त्या पारं गमय । तिर—तरतेर्लोटि व्यत्ययेन शः । 'ऋत इद्धातोः' इतीत्वम् । निघातः Sy. Yāska explains प्र तारीः as प्रवर्धय in N. 4. 7. and प्र तिरते as प्रवर्धयते in N. 11. 6.
१६. VM. ignores अग्ने ।
१७. ण्यायुंषि० P.
१८. जातप्रज्ञ ! Sy. जातानां वा वेदितः ! BB.
१९. तव–'युष्मदस्मदोर्ङसि' इत्याद्युदात्तः Sy. २०. त्रिविधानि Sy.
२१. ०धयसो० P. आहारतया कल्पितानि Sy. त्रिषु स्थानेषु द्युवियदवनिष्वाहुतितोयकाष्ठानि BB.

'अभि द्विजन्मा त्रिवृदन्नम्[1]' इति मन्त्रः[2]। तया[3] त[4] एव। उषसः[5] सकाशात्। त्रीणि[6]। आजनानि[7] भवन्त्यनुसवनम्[8]। ताभिस्त्वम्[9]। देवानाम्[10]। अन्नम्[11]। यज[12]। जानन्[13]। अथा[14]। भव[15]। यजमानाय[16]। शं[17] च। यो[18]श्च[19]।

---

१. त्रिवृ० P.

२. RV. 1. 140. 2.

३. तव Sy.

४. व P.

५. एकाहाहीनसत्रगता उषस उषोऽभिमानिन्यस्तिस्रो देवताः Sy.

६. तिस्रः–त्रिशब्दस्य स्त्र्यर्थे 'त्रिचतुरोः स्त्रियाम्०' इति तिसृइत्यादेशः। 'अचि र ऋतः' इति रेफादेशः। 'तिसृभ्यो जसः' इति विभक्तेरुदात्तत्वम् Sy.

७. आजना० M. जनयित्र्यो मातरः। यद्वा उषोऽभिमानिन्यो देवतास्तवाजानीस्त्वामनुजातास्तिस्रः स्वसारः। तथा च स्वसॄः प्रकृत्य मन्त्रः–'प्रजामेका रक्षत्यूर्जमेका राष्ट्रमेका रक्षति' इति (AV. 8. 9. 13. AV. reads जीवत्यू० for रक्षत्यू० Cf. TS. 4. 3. 11. 1.) आजानीः—'जन जनने'। 'जनिघसिभ्यामिण्' इति कर्तरि इण्। णित्त्वादुपधावृद्धिः। 'वा छन्दसि' इति सवर्णदीर्घः। कृदुत्तरपदप्रकृतिस्वरः Sy. आजानीः आजानयः प्रादुर्भावाः सूर्यविद्युदग्निरूपेण।..किञ्च उषसश्च तव तिस्र इत्येव त्रिप्रकारा इत्यर्थः BB.

८. ०सवं M.

९. उषोऽभिमानिनीभिर्देवताभिः सहितस्त्वम् Sy. ताभिरनन्ताभिरद्योभिः सर्वैरनुक्रान्तैरायुरादिभिः BB.

१०. यष्टव्यदेवानाम् Sy. कर्मणः सम्प्रदानत्वाद्देवानामिति चतुर्थ्यर्थे षष्ठी BB.

११. अस्माभिर्दीयमानं हविर्लक्षणमन्नम्। अवः—'अव रक्षणे'। 'असुन्' इत्यसुन्। नित्स्वरः Sy. तृप्तिमन्नं वा हविर्लक्षणम् BB.

१२. यजा P. प्रयच्छ। यज—यजेर्दानार्थस्य लोटि रूपम् Sy. सङ्गमय BB.

१३. जानंस्त्वम् Sy. विद्वांस्तत्प्रकारज्ञः BB.

१४. The form used in classical language is अथ ॥ अनन्तरं च Sy., BB.

१५. भय P.

१६. 'पूङ्यजोः शानन्' (Pa. 3. 2. 128.) इति यजेः शानन्। नित्स्वरः Sy.

१७. सुखहेतुः Sy. शमयिता रोगाणामागतानाम् BB.

१८. सुखस्य मिश्रयिता। योः–'यु मिश्रणे' इत्यस्माद् 'अन्येभ्योऽपि दृश्यन्ते' इति विच्। आर्धधातुकलक्षणो गुणः। कृदुत्तरपदप्रकृतिस्वरः Sy. योः यावयिता पृथक्कर्ता च भयानाम् BB.

१९. VM. ignores अग्ने ॥ This stanza=TS. 3. 2. 11. 2.

अग्निं सुदीतिं सुदृशं गृणन्तो नमस्यामस्त्वेड्यं जातवेदः ।
त्वां दूतमरतिं हव्यवाहं देवा अकृण्वन्नमृतस्य नाभिम् ॥ ४ ॥

अग्निं सुदीतिम्[1] । अग्निम्[2] । शोभनदीप्तिम्[3] । शोभनदर्शनम्[4] । स्तुवन्तः[5] । नमस्यामः[6] । त्वाम् । स्तुत्यम् । हे[7] जातवेदः ! त्वाम् । देवानां दूतम्[8] । गन्तारम्[9] । हविषां वोढारम् । देवाः[10] । कृतवन्तः[11] । अन्नस्य[12] । धारकम्[13] ।[14]

---

१. उत्तमस्याग्नेर्दूतत्वायेयमृक् । कतो वैश्वामित्रः त्रिष्टुभाग्निं तुष्टाव । पशुपुरोडाशस्य स्विष्टकृतो याज्या नियुक्ता । '"अग्निं सुदीतिम्" इति याज्या' (SSS. 5. 19. 11.) इति DDN.

२. अञ्जनादिगुणोपेतम् Sy., DDN.

३. सुदीतिम्—'दीङ् क्षये' । दीयते विनाश्यते आभिस्तम इति करणे क्तिन् । दीतयो दीप्तयः । बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् Sy.

४. सर्वैः सुदर्शनम् । सुदृशम्—'दृशिर् प्रेक्षणे' । तस्माच्छक्यार्थे खल् । 'संज्ञापूर्वको विधिरनित्यः' इति गुणाभावः । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् Sy. अत एव सर्वैर्दर्शनीयम् DDN.

५. त्वद्विषयां स्तुतिं कुर्वाणा वयम् Sy. गृणातिरर्चतिकर्मा Ngh. 3. 14.

६. हविर्भिः पूजयामः । नमसः पूजायां 'नमोवरिवश्चित्रङः क्यच्' इति क्यच् तदन्ताल्लटि रूपम् । पादादित्वान्न निघातः Sy. स्तुत्यम् एवंविधं त्वां हविर्भिः पूजयामः DDN.

७. ज M. जातस्य सर्वस्य वेदितर्हे अग्ने ! Sy. हे जातवेदः ! जातं सर्वं वेत्तीति जातवेदाः । हे अग्ने ! त्वां गृणन्तः त्वद्विषयां स्तुतिं कुर्वाणाः वयम् DDN. जातानि वेद N. 7. 19.

८. दूतो हि द्विविधो वार्ताहारी कार्यकारी चेति । तत्र त्वां कार्यकारिणं दूतमकार्षुरिति भावः । दूतम्—'टुदु उपतापे' । 'दुतनिभ्यां दीर्घश्च' (Uṇādi. 3. 370.) इति क्तः । तत्सन्नियोगेन धातोर्दीर्घः । दूतः इतस्ततः सञ्चारीत्यर्थः । प्रत्ययस्वरः Sy.

९. अरतिम्—'रमु क्रीडायाम्' । भावे क्तिन् Sy. अरतिं न विद्यते रतिर्विषयेषु प्रीतिर्यस्यासावरतिः । 'नञ्सुभ्याम्' (Pa. 6. 2. 172.) इत्युत्तरपदान्तोदात्तत्वं दीतिमिति च । विषयेष्वप्यसक्तम् DDN.

१०. किञ्च अस्माभिर्यजनीया इन्द्रादयो देवाः Sy., DDN.

११. अकुर्वन् ॥ अकृण्वन्—'कृवि हिंसाकरणयोः' इत्यस्य लङि 'धिन्विकृण्व्योर च' इत्युप्रत्ययोऽकारश्चान्तादेशः । निघातः Sy.

१२. देवान्नभूतायाः सुधायाः Sy., DDN.

१३. आधारम् M. नाभिस्थानम् Sy., DDN.

१४. तथा निगमाः—'अग्निं दूतं वृणीमहे' (RV. 1. 12. 1.) 'अग्निं दूतं प्रति यदब्रवीतन' (RV. 1. 161 3.) 'अग्निं दूतं पुरो दधे' (RV. 8. 44. 3.) 'त्वं दूतो अमर्त्यः' (RV. 6. 16. 6.) 'दूतं वो विश्ववेदसं०' (RV. 4. 8. 1.) इत्यादयः DDN.

**यस्त्वद्धोता पूर्वो अग्ने यजीयान्द्विता च सत्ता स्वधया च शंभुः ।**
**तस्यानु धर्म प्र यजा चिकित्वोऽथा नो धा अध्वरं देववीतौ ॥ ५ ॥**

**यस्त्वद्धोता**[1]। यः[2]। त्वत्तः[3] प्रादुर्भूतः। होता[4]। पुरातनः[5]। अग्ने[6]! यष्टृतरः[7]। देवानां द्वैधम्[8]। तिष्ठन्[9]। यष्टृत्वेन[10] च। इज्यत्वेन[11] च। अन्नेन[12]। देवानां सुखं[13] भावयति।

---

१. वैश्वामित्रः कतो नाम तस्यार्षम् SKN. कतस्य वैश्वामित्रस्येदमार्षम् Dur.

२. यः कश्चित् Sy. ३. त्वत्तोऽपि Sy.

४. होमनिष्पादकः Sy. होता–'हु दानादनयोः' वृष्टिलक्षणानामपां दाता मध्यमोऽग्निः, आहोता वा SKN. मध्यमस्थानो वायुः। असावपि हि दूतो देवानामिति श्रूयते–'आ दूतो अग्निमभरद् विवस्वतः' (RV. 6. 8. 4c.) इति। वैद्युतोऽग्निरिति केचिन्मन्यन्ते Dur.

५. प्रथमभावी Sy.

६. हे अग्ने ! Sy. अग्निरुच्यते...हे अग्ने ! पार्थिव ! SKN. हे भगवन्नग्ने ! पृथिवीस्थान ! Dur.

७. अतिशयेन यष्टा । यजीयान्–यष्टृशब्दस्य 'तुश्छन्दसि' इतीयसुन् तस्मिन् 'तुरिष्ठेमेयःसु' इति तृचो लोपः । नित्त्वादाद्युदात्तः Sy. वृष्टिहेतुत्वादतिशयेन यष्टा SKN.

८. मध्यमे चोत्तमे च स्थाने । द्विता–द्विशब्दात् 'संख्याया विधार्थे धा' इति धाप्रत्ययः। धकारस्य तकारश्छान्दसः। प्रत्ययस्वरः Sy. द्विधा च यस्य सत्ता। मध्यमे च स्थाने वैद्युतात्मना, उत्तमे चादित्यात्मना SKN. द्वैधं च यस्य विद्यमानता। मध्यमे च स्थाने वैद्युतभावेन, उत्तमे च स्थाने सूर्यभावेन... एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च 'द्विता' इत्ययं 'द्वैधम्' इत्येवमुपपद्यते Dur.

९. निषण्णः सन्। 'षद्लृ विशरणगत्यवसादनेषु' अस्य ताच्छीलिकस्तृन्। नित्स्वरः Sy.

१०. ०त्वे न्ये M. ०त्वो न्ये P.

११. इज्यत्वेन M. इज्यचेन P. Both यष्टृत्वेन चेज्यत्वेन च refers to देवानां द्वैधम् ॥ याज्यत्वेन is a better reading than इज्यत्वेन.

१२. सोमाख्येनान्नेन स्वर्गं लोकं दधाति यजमानस्येति स्वधा। 'आतोऽनुपसर्गे कः' इति कप्रत्ययः। कृदुत्तरपदप्रकृतिस्वरत्वम् Sy. उदकेन च वृष्टिलक्षणेन SKN. अन्नेन सर्वभूतानां वर्षणद्वारेण Dur. स्वधेत्युदकनाम Ngh. 1. 12.

१३. यष्टॄणां सुखभूरभूत् । शम्भुः–शं सुखमस्माद् भवतीति 'भू सत्तायाम्'। 'विप्रसंभ्यो ड्वसंज्ञायाम्' इत्यत्र मितद्र्वादेरुपसंख्यानात् डुप्रत्ययः । डित्त्वाट्टिलोपः Sy. यः शम्भुर्भवति, तत्रान्तर्णीतण्यर्थः । सुखस्य भावयिता सर्वप्राणिनाम् SKN. यः शम्भुः सुखभूः सुखस्य भावयिता Dur.

तस्य । कर्मणा । देवान् प्रकर्षेण यज । हे चिकित्वः ! अथ । अस्माकम् । धारय । यज्ञम् । देवानां प्रीताविति ।

## III. 18.

भवा नो अग्ने सुमना उपेतौ सखेव सख्ये पितरेव साधुः ।
पुरुद्रुहो हि क्षितयो जनानां प्रति प्रतीचीर्दहतादरातीः ॥ १ ॥

भवा नः । भव । अस्मभ्यम् । अग्ने ! शोभनमनस्कः ।

---

१. यस्त्वत्तोऽपि पूर्वभावी होता निरूपितस्तस्य होतुः Sy. तस्य किम् ? इत्युच्यते...तस्य वायोः Dur.

२. कर्मणा seems to be the explanation of अनु धर्म ॥ तेनानुष्ठितधर्मानुपलक्ष्य Sy. धर्मशब्दः कर्मवचनः, अनु पश्चाद्भावे, तस्य सम्बन्धि यत् कर्मलक्षणं वृष्टिलक्षणं वा । तदनु तस्य ? (तस्मात्) पश्चात् तेन वृष्टौ वृत्तायां वा तेन वोपस्थापितं सन्नित्यर्थः SKN. वृत्तिलाभमनु आत्मनो दीप्तिलक्षणां वृत्तिं प्रति लाभमाप्नुवन् । 'वायुर्वा अग्नेस्तेजस्तस्माद् वायुरग्निमन्वेति' इति ह विज्ञायते Dur.

३. यजा P. पूजय । यज—यजेर्लोटि रूपम् Sy.

४. धर्मविषयचेतनावन् ! हे अग्ने ! चिकित्वः—'कित ज्ञाने' इत्यस्य क्वसौ रूपम् । 'मतुवसो रु सम्बुद्धौ छन्दसि' इति नकारस्य रुः Sy. हे प्रज्ञावन् ! SKN. चिकित्वन् ज्ञानवन् ! इत्यर्थः Dur.

५. अनन्तरम् । अथा नः—'निपातस्य०' इति दीर्घः Sy. अनन्तरं च SKN. एवम् Dur.

६. अस्माकं सम्बन्धिनम् Sy. अस्माकं स्वभूतम् SKN. अस्माकं यागं कुर्वंस्त्वं शृणु यत् कुरुष्व Dur.

७. विधेहि । धाः—'डुधाञ् धारणपोषणयोः' इत्यस्य छान्दसे लुङि रूपम् । अडभावश्छान्दसः Sy. छान्दसत्वाद् वर्तमाने लटि ? (लुङि) अडभावः । निधेहि स्थापय SKN.

८. यज्ञवाटम् SKN. ९. ०वानं P.

१०. ०तावति P. प्रीत्यर्थम् । देववीतौ—देवानां वीतिः अशनं यत्र प्रीतौ सा प्रीतिः देववीतिः । 'वी कान्त्यादिषु' इत्यस्माद् भावे क्तिन् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः Sy. क्व ?...देवानां कान्तौ काम्ये, देवानां काम्यं कुर्वित्यर्थः । SKN. देवतर्पणायेत्यर्थः Dur.
ईषं सता मध्यमे च स्थान उत्तमे च । शम्भुः सुखभूः N. 5. 3., SKN. II. 301.

११. 'भवा नो अग्ने' इति पञ्चर्चं षष्ठं सूक्तम् । 'भवा नः' इत्यनुक्रमणिका (KSA. 17. 18. p. 15.) । 'कतो वैश्वामित्रस्तु' (KSA. 17. 17. p. 15.) इति तुशब्दप्रयोगात् अस्यापि वैश्वामित्रः कत ऋषिः । अग्निर्देवता । प्रातरनुवाकाश्विनशस्त्रयोरुक्तः सूक्तविनियोगः । प्रवर्ग्येऽभिष्टवे 'भवा नो अग्ने' इति तृचो विनियुक्तः । सूत्रितञ्च—'भवा नो अग्ने सुमना उपेताविति तृचाः' (ASS. 4. 6.) इति Sy. १२. भवा नः—'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः Sy.

१३. ०नस्काः P. तत्कर्मसिद्धयर्थमनुकूलमनस्को भूत्वा Sy.

उपगमने[1]। यथा[2] सखा[3]। सख्ये[4]। साधुर्भवति[5]। पुत्राय वा पितरावेवं[6] साधुर्भव[7]। बहुद्रोहाणि[8]। हि[9]। भवन्ति मनुष्याः। जनानाम्[10]। तथा सति प्रतिदहतात्[11]। प्रतिमुखमागच्छन्तीः[12]। शत्रुसेनाः[13]।

**तपो ष्वंग्ने अन्तंराँ अमित्रान् तपा शंसमररुषः परंस्य ।**
**तपों वसो चिकितानो अचित्तान्वि ते तिष्ठन्तामजरा अयासः ॥ २ ॥**

तपो[14] ष्वग्ने[15]। तपैव[15]। अग्ने[16]! सुष्ठु[17]। छिद्रप्रवेशनपरान्[18]। अमित्रान्[19]।

---

१. अस्माभिः क्रियमाणस्य प्रवर्ग्याख्यकर्मण आभिमुख्येनागमने । उपेतौ—'इण् गतौ'। अयनमिति भावे क्तिन् । प्रादिसमासः । 'तादौ च निति कृत्यतौ' इति गतेः प्रकृतिस्वरत्वम् Sy.

२. तत्र दृष्टान्तद्वयम् Sy.

३. सुहृत् Sy.

४. मित्राय । सख्ये—'समाने ख्यश्चो-? (ख्यः स चो–)दात्तः' (Uṇādi. 4. 576.) इति इण् । डित्त्वाट्टिलोपः । तत्सन्नियोगेन यलोपः । 'समानस्य छन्दसि०' इत्यादिना सभावः । 'उदात्तः' इत्युक्तत्वाद् उपपदस्योदात्तता Sy.

५. ०धु भव० P. हितोपदेशेन साधुर्भवति । साधुः—'राध साध संसिद्धौ'। 'कृवापाजि०' इत्यादिना उण्प्रत्ययः । प्रत्ययस्वरः Sy.

६. यथा च मातापितरौ पुत्राय सन्मार्गोपदेशेन साधकौ भवतः तद्वत् अस्मत्सम्बन्धिकर्मसाधको भव Sy.

७. ०धु भ० P.

८. ०हानि P. बहुद्रोहाः is suggested for बहुद्रोहाणि ॥ नानाविधद्रोहयुक्ताः Sy.

९. हिशब्दः कारणपरः । यस्माल्लोके परस्परमात्सर्यादिनाऽन्योऽन्यमसहमाना जना वर्तन्ते तस्मात् Sy.

१०. मनुष्याणाम् Sy.

११. ०ह तान् P. त्वं प्रतिकूलः सन् भस्मसात्कुरु । दहतात्—'दह भस्मीकरणे' इत्यस्य लोण्मध्यमैकवचने हेः 'तुह्योस्तातङ्ङाशिषि०' इति तातङादेशः । निघातः Sy.

१२. प्रतमु० P. प्रतीचीः—प्रतीचः प्रतिकूलतयास्मदाभिमुख्येनागच्छतः लिङ्गव्यत्ययः । 'अञ्चु गतिपूजनयोः'। 'ऋत्विग्दधृक्०' इत्यादिना क्विन् । स्त्रियाम् 'उगितश्च' इति ङीपि प्राप्ते पुनः 'धातोरुगितः प्रतिषेधः' (VPa. 4. 1. 6. 1.) इति प्रतिषेधे 'अञ्चतेश्चोपसंख्यानम्' (VPa. 4. 1. 6. 2.) इति प्रतिप्रसवान् ङीप् । तस्मिन् भसंज्ञायाम् 'अचः' इत्यकारलोपः । 'चौ' इति दीर्घः Sy.

१३. अरातीन् शत्रून् । लिङ्गव्यत्ययः Sy.

१४. तवो षु P.

१५. तवैव M. तवैवा P. बाधस्व । तपो—तप उ । गुणः । उञमवलम्ब्य 'उञः' इति प्रगृह्यसंज्ञा (But the padapāṭha reads तपो as a single word) पादादित्वादनिघातः Sy.

१६. अग्ने P.

१७. सु सुष्ठु यथा भवति तथा Sy.

१८. अभिभावकान् Sy.

१९. शत्रून् Sy.

एवमस्मभ्यमप्रयच्छतः[1] । शत्रोः[2] । शंसनं[3] च । तपैव[4] । वासयितः[5] ! प्राज्ञस्त्वम्[6] । अस्मास्वप-रक्तचित्तान्[7] । तदर्थं[8] तव । जरावर्जिताः[9] । गमनशीला[10] रश्मयः । वितिष्ठन्तामिति[11][12] ।

इध्मेनाग्न इच्छमानो घृतेन जुहोमि हव्यं तरसे बलाय ।
यावदीशे ब्रह्मणा वन्दमान इमां धियं शतसेयाय देवीम् ॥ ३ ॥

इध्मेन । इध्मेन[13] । घृतेन[14] च सह[15] । हव्यम्[16] । तुभ्यमग्ने ! जुहोमि[17] । त्वत्तः

---

१. तुभ्यं हविरप्रयच्छतः । अररुषः—'रा दाने' इत्यस्य क्वसौ रूपम् । 'वस्वेकाच्०' इति प्राप्तस्य इटः 'सम्प्रसारणं सम्प्रसारणाश्रयं च बलीयः' इति सम्प्रसारणबलीयस्त्वान्निवृत्तिः 'वसोः सम्प्रसारणम्' इति सम्प्रसारणम् । समासे नञ्स्वरः Sy.

२. अत एव शत्रुभूतस्य Sy.

३. संस० P. अभिलाषम् Sy.

४. तवैव M. तवै P. सन्तप Sy.

५. ०यितं P. सर्वस्य वासयितः ! हे अग्ने ! Sy.

६. कर्माभिज्ञस्त्वम् । चिकितानः—'कित ज्ञाने' इत्यस्य छन्दसि लिट् । तस्य 'लिटः कानज्वा' इति कानजादेशः । द्विर्वचनम् । कित्त्वाद् गुणाभावः । चित्त्वादन्तोदात्तः Sy.

७. ०परं M. ०परात्त० P. सत्कर्मण्यनासक्तमनस्कान् पुरुषान् Sy.

८. ०दर्थं P. यस्मादेवं तस्मात् Sy.

९. प्रतिबन्धरहिताः Sy.

१०. सर्वत्र गमनस्वभावाः सन्तः । अयासः—'अय गतौ' । पचाद्यच् । चित्स्वरः Sy.

११. विष्ठन्ता P. विशेषेण तिष्ठन्तु । तिष्ठन्ताम्—'ष्ठा गतिनिवृत्तौ' । विपूर्वात्तिष्ठतेः 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । निघातः Sy.

१२. VM. ignores तपा ॥ तप क्षपय । तपा—'तप सन्तापे' इत्यस्य लोटि रूपम् । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः Sy.

१३. समिन्धनकारिसमित्समूहेन । इध्मेन—'ञिइन्धी दीप्तौ' । इध्यतेऽनेनाग्निरिति इध्मः काष्ठविशेषः । 'इषियुधीन्धिदसिश्याधूसूभ्यो मक्' इति करणे मक् । कित्त्वादनुनासिकलोपः । प्रत्ययस्वरः Sy.

१४. आज्येन Sy.

१५. स M.

१६. हवनयोग्यं हविः पुरोडाशादिकम् । हव्यम्—हवमर्हतीति 'छन्दसि च' इति यप्रत्ययः । भसंज्ञायां 'यस्य०' इति लोपः । प्रत्ययस्वरः Sy.

१७. 'हु दानादनयोः' इत्यस्य लटि रूपम् । पादादित्वादनिघातः Sy.

कामानिच्छमानः[1] । तारकम्[2] । बलं[3] तवास्त्विति । यावता[4] कालेन । ईश्वरो[5] भवामि । मन्त्रेण[6] । स्तुन्वन्[7] । एतत्[8] । देवनशीलम्[9] । शतलाभाय[10] कर्तुं तावज्जुहोमि[11] ।

उच्छो॒चिषा॑ सहसस्पुत्र स्तु॒तो बृ॒हद्वयः॑ शशमा॒नेषु॑ धेहि ।
रे॒वद॑ग्ने वि॒श्वामि॑त्रेषु॒ शं योर्म॑र्मृ॒ज्मा ते॑ त॒न्वं१॒॑ भूरि॒ कृत्वः॑ ॥ ४ ॥

उच्छोचिषा । हे सहसः[12], पुत्र ! स्तुतः[13] सन्[14] । महत्[15] । अन्नम्[16] । परिचरत्सु[17] । तेजसा[18] । उद्धेहि[19], उच्छ्रितं कुरु । धनवत्[20] । अग्ने ! विश्वामित्रेष्वस्मासु[21] । शं[22] च ।

---

१. इच्छन् is a better reading. धनं कामयमानोऽहं यजमानः । 'इषु इच्छायाम्' । व्यत्ययेन शानच् । 'इषुगमियमां छः' इति छकारः Sy. २. तरसे वेगाय Sy. ३. तव सततगमनसिद्ध्यर्थं बलाय सामर्थ्याय । पुरोडाशादिहविर्भारवहनसिद्ध्यर्थं त्वयि हविः प्रक्षिपामि Sy.

४. यावद्धनं बोढुं शक्नोमि तावद् देहि । यावत्—यच्छब्दाद् 'यत्तदेतेभ्यः परिमाणे वतुप्' इति वतुप् । 'आ सर्वनाम्नः' इत्याकारः । आद्युदात्तः Sy.

५. 'ईश ऐश्वर्ये' इत्यस्य लडुत्तमैकवचने इटष्टेरेत्वम् । अदादित्वाच्छपो लुक् Sy.

६. स्तोत्रेण Sy.

७. सुन्वन् or स्तुवन् is suggested for स्तुन्वन् ।

८. इमामस्माभिः क्रियमाणाम् Sy.

९. कर्मनशीलम् M. अदेवन० P. दीप्तामतिप्रभूतां कुरु Sy. १०. अपरिमितधनपर्यवसानाय । शतसेयाय—'षो अन्तकर्मणि' । 'आदेच उपदेशेऽशिति' इत्यात्वम् । 'अचो यत्' इति भावे यत् । 'ईद्यति' इतीत्वम् । आर्धधातुकलक्षणो गुणः । कृदुत्तरपदप्रकृतिस्वरः Sy.

११. VM. ignores धियम् ॥ त्वद्विषयां स्तुतिम् Sy. १२. सस् M.

१३. स्तोत्रशस्त्रसाधनभूतैर्मन्त्रैः स्तुतस्त्वम् Sy.

१४. स्म P. १५. Omitted in P. प्रभूतम् Sy.

१६. त्रं P. वयःशब्दोऽन्नवाची Sy.

१७. त्वद्विषयं शंसनं कुर्वाणेषु । शशमानेषु—'शश प्लुतगतौ' इत्ययं धातुरत्र स्तुत्यर्थः । 'ताच्छील्यवयोवचनशक्तिषु०' इति चानश् । 'चितः' इत्यन्तोदात्तत्वम् Sy. शशमानः शंसमानः N. 6. 8.

१८. स्वकीयया दीप्त्या Sy.

१९. उधेहि M. Sy. explains उत् and धेहि separately: उत् as उद्दीपयस्व and धेहि as विधेहि ॥ धेहि—'डुधाञ् धारणपोषणयोः' इत्यस्य लोटि रूपम् Sy.

२०. ०वन् P. धनयुक्तम् । रेवत्—रयिरस्यास्तीति मतुप् । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । 'छन्दसीरः' इति तस्य वत्वम् । 'रयेर्मतौ छन्दसि बहुलम्' इति सम्प्रसारणम् । परपूर्वत्वं गुणः Sy.

२१. विश्वामित्रगोत्रोत्पन्नेषु । विश्वामित्रेषु—विश्वं मित्रमस्येति विश्वामित्रः । एकस्मिन् बहुवचनं पूजार्थम् । तथाविधेष्वस्मासु । विश्वामित्रेषु—'मित्रे चर्षौ' (Pa. 6. 3. 130.) इति पूर्वपदस्य दीर्घत्वम् । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् Sy.

२२. शं रोगाणां शमनं चास्मासु धेहि Sy.

योश्च[1] कुरु, कृत्वः[2] कृत्वसुजन्तपर्यायः । तव[3] । शरीरं[4] हविर्बहार्थम्[5]त्यन्तम् । बहुकृत्वः[6] । वयं[7] स्पर्शेन[8] ममृज्मेति[9] ।

**कृधि रत्नं सुसनितर्धनानां स घेदग्ने भवसि यत्समिद्धः ।**
**स्तोतुर्दुरोणे सुभगस्य रेवत्सृप्रा करस्ना दधिषे वपूंषि ॥ ५ ॥**

कृधि रत्नम्[10] । धनानाम्[11] । सुष्ठु दातः[12] ! अस्मभ्यं रत्नम्[13] । प्रयच्छ[14] । स त्वम् । अग्ने ! भवसि । यदा । समिद्धः[15] । स्तोतुः[16] । गृहे । सुहविष्कस्य[17] । यथा पशुमान्[18] स्यादित्येवमर्थं[19]

---

१. योः भयानां यावनममिश्रणं च धेहि Sy. शमनं च रोगाणां यावनं च भयानाम् N. 4. 21.

२. P. adds शब्दः after कृत्वः। It should immediately follow बहुकृत्वः॥ अस्माभिः क्रियमाणस्य कर्मणः प्रयोजकत्वेन कर्तः ! हे अग्ने ! कृत्वः —'डुकृञ् करणे' सम्पदादित्वाद् भावे क्विप् । 'तदस्यास्ति०' इति मतुप् । 'झयः' इति तस्य वत्वम् । 'तसौ मत्वर्थे' इति भसंज्ञायां तकारस्य जश्त्वाभावः । 'मतुवसो रु०' इति तकारस्य रुत्वम् Sy.

३. ते D., M.

४. तनुम् Sy.

५. ०हार्त्थं० P. ०बहनार्थम् is suggested for ०बहार्थम्.

६. ०कृत्वा M. बहुवारम् : भूरि—'भू सत्तायाम्' । 'अदिशदिभूशुभिभ्यः क्रिन्' इति क्रिन् कित्त्वाद् गुणाभावः । निस्वरः Sy.

७. पयं M.

८. स्येन M.

९. पुनः पुनः सोमाज्यपयःप्रभृतिभिर्वयं सिञ्चामः । ममृज्म—'मृजूष् शुद्धौ' इत्यस्य वर्तमाने लिटि उत्तमबहुवचने मसो मादेशः । 'अनित्यमागमशासनम्' इतीडभावः । रेफश्छान्दसः । पादादित्वादनिघातः । प्रत्ययस्वरः Sy.

१०. Omitted in P.

११. कनकपश्वादीनां मध्ये Sy.

१२. अभिलषितधनानां सुष्ठु दातः ! सुसनितः —'षणु दाने' इत्यस्य तृचि रूपम् । आमन्त्रितनिघातः Sy.

१३. धनं P. उत्तमं धनम् Sy.

१४. विधेहि । मह्यं दत्स्व Sy.

१५. सोमाज्यादिभिः सम्यगिद्धो दीप्तो वर्तसे तदा स तादृशः त्वं धनस्य दाता खलु Sy.

१६. स्तोतृ M. यजमानस्य Sy.

१७. सहवि० M. त्वद्विषयस्तुत्या शोभनधनयुक्तस्य Sy.

१८. ०मा(न्)स्या० M. धनयुक्तं यथा भवति तथा Sy.

१९. ०दितत्येवमत्यं P.

हविरादाय। देवान् प्रति सर्पणशीलौ[1]। आत्मीयौ करौ[2]। करोषि[3]। ज्वाला[4]श्च[5]।

III.19.

अग्निं होतारं प्र वृणे मियेधे गृत्सं कविं विश्वविदममूरम्।
स नो यक्षद्देवताता यजीयान्राये वाजाय वनते मघानि॥ १॥

[6]अग्निं होता[7]रम्॥ गा[8]थी कौशिकः॥ अग्नि[9]म्। अ[10]हं य[11]ज्ञे। होता[12]रम्। प्रवृ[13]णोमि। मेधावि[14]नम्। क्रा[15]न्तकर्माणम्। सर्व[16]ज्ञम्। अ[17]मूढम्। स[18]ः। न[19]ः। य[20]जतु। दे[21]वान्। यष्टृ[22]तरः।

१. समर्पण० P. कर्मकरणार्थं प्रसृतौ। सृप्रा—'सृप्लृ गतौ' अस्मात् 'स्फायितञ्चिवञ्चि०' इत्यादिना रक्। किस्त्वाद्गुणः। प्रत्ययस्वरः Sy.

२. कर्मणां प्रस्नातारौ बाहू। करस्ना—करोति फलमिति करः कर्म। पचाद्यजन्तः। कर्मणि स्ना शोधनं ययोस्तौ यद्वा कर्मणां शोधनं याभ्यामिति बहुव्रीहौ पूर्वपदस्वरः Sy. करस्नौ बाहू। कर्मणां प्रस्नातारौ N. 6. 17.

३. धारयसि। दधिषे—'डुधाञ् धारणपोषणयोः' इत्यस्य लटि 'छन्दस्युभयथा' इति थास्। आर्धधातुकत्वादिट्। अतो लोपः। निघातः Sy.

४. वपूंषि रूपाणि। तादृशौ बाहू भास्वराणि ज्योतींषि च Sy. वर्पः। वपुः। इति रूपनामनी Ngh. 3. 7.

५. VM. ignores च and इत्॥ घ खलु। इत् एव Sy.

६. 'अग्निं होतारम्' इति पञ्चर्चं सप्तमं सूक्तं त्रैष्टुभमाग्नेयं गाथिन आर्षम्। तथा चानुक्रान्तम्—'अग्निं होतारं गाथी ह' (KSA. 17. 19. p. 15.) इति। प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः Sy. ७. Omitted in P.

८. गाथी स्तौति—हे अग्ने! Sy.

९. अङ्गनादिगुणोपेतं त्वम् Sy.

१०. अह M. ११. अस्माभिः क्रियमाणेऽस्मिन् यज्ञे। मियेधे—मकारैकारयोर्मध्ये इयागमश्छान्दसः Sy.

१२. होमनिष्पादकं देवानामाह्वातारम् Sy.

१३. प्रकर्षेण सम्भजे। 'वृङ् सम्भक्तौ'। निघातः Sy.

१४. गृत्सं गृणन्तं देवानां स्तुतिं कुर्वन्तम्। 'गृधु अभिकाङ्क्षायाम्'। 'गृधिपण्योर्दकौ च' (Uṇādi. 3. 349.) इति सप्रत्ययः। अन्त्यस्य दकारः। व्यत्ययेनाद्युदात्तत्वम् Sy.

१५. कान्त P. कविं मेधाविनम् Sy.

१६. सर्वविषयज्ञानोपेतम् Sy.

१७. अमूरम्—'मुह वैचित्त्ये' इत्यस्य निष्ठायां रूपम्। रेफश्छान्दसः। नञा समासे तस्य नञ्स्वरः Sy. १८. तथाविधोऽग्निः Sy. १९. अस्माकम् Sy.

२०. M. adds यज्ञे after यजतु। यक्षत्—यजेर्लेटि 'सिब्बहुलं लेटि' इति सिप्। 'लेटोऽडाटौ' इत्यडागमः। 'इतश्च लोपः०' इतीकारलोपः Sy.

२१. यष्टव्यतया सम्बन्धिनो देवान्। देवशब्दात्स्वार्थे 'सर्वदेवात्तातिल्' इति तातिल्। 'सुपां सुलुक्०' इति सुपो डादेशः। लित्स्वरः Sy. २२. यष्टृतमः सन् Sy.

स धनार्थम्[1] । अन्नार्थं[2] च । भजते[3] । हवींषि[4] ।

प्र तें अग्ने हविष्मंतीमियर्म्यच्छा सुद्युम्नां रातिनीं घृताचीम् ।
प्रदक्षिणिद्देवतातिमुराणः सं रातिभिर्वसुभिर्यज्ञमश्रेत् ॥ २ ॥

प्र ते अग्ने । प्रेरयामि[5] । तुभ्यम्[6] । अग्ने ! हविष्मतीं[7] जुहूम्[8] । तव सुयशसम्[9] । दानवतीम्[10] । घृतमञ्चन्तीं[11] ज्वालाम् । प्रति[12] । देवाः[13] स्तुता[14] यस्मिन्[15] तम् । यज्ञम् । प्रदक्षिणम्[16] ।

---

१. ०नार्त्थं P. धनाय Sy.

२. ०न्नार्त्थं P. अन्नाय Sy.

३. सम्भजताम् । 'वन षण सम्भक्तौ' । इत्यस्य लटि व्यत्ययेनात्मनेपदम् । निघातः Sy.

४. मंहनीयान्यस्माभिर्दीयमानानि हवींषि Sy.

५. इयर्मि—'ऋ गतौ' जुहोत्यादिः । 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्येत्वम् । 'अभ्यासस्यासवर्णे' इतीयङ्ङादेशः । मिपः पित्वाद् गुणः । निघातः Sy.

६. तव Sy.

७. ०ष्मन्तीम् M. पुरोडाशादिहविर्युक्ताम् । हविष्मतीम्—हविरस्यास्तीति मतुप् । 'तसौ मत्वर्थे' इति भसंज्ञायां सकारस्य रुत्वं भवति । 'उगितश्च' इति ङीप् । 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति परिभाषानाश्रयणान्मतुप उदात्तताभावः Sy.

८. जुहम् P.

९. सुशसान् P. सुतेजसम् Sy.

१०. हविर्दात्रीम् । रातिनीम्—'रा दाने' इत्यस्य 'नपुंसके भावे क्तः' । रातमस्यास्तीति 'अत इनिठनौ' इतीनिः । प्रत्ययस्वरः Sy.

११. घृतं मुञ्च० M. घृतान्वितां जुहूमुपभृतं वा । घृताचीम्—घृतपूर्वादञ्चतेः 'ऋत्विग्दधृक्०' इत्यादिना क्विन् । 'अञ्चतेश्चोपसंख्यानम्' इति ङीप् । भसंज्ञायाम् 'अचः' इत्यकारलोपः । 'चौ' इति दीर्घः । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वे प्राप्ते 'चौ' इति पूर्वपदान्तोदात्तः Sy.

१२. अच्छा—आभिमुख्येन । 'निपातस्य' इति संहितायां दीर्घः Sy.

१३. देवतातिं देवान् । देवशब्दात् 'सर्वदेवात्तातिल्' इति तातिल् । 'लिति' इति प्रत्ययात् पूर्वस्योदात्तत्वम् Sy.

१४. तदा M.

१५. यास्येन् P.

१६. ०ग्नतद० P. प्रादक्षिण्येन । प्रदक्षिणित्—प्रदक्षिणं करोतीति 'तत्करोति तदाचष्टे' इति णिजुत्पद्यमानो दक्षिणशब्दाद् भवति । सङ्ग्रामयतेरेव सोपसर्गाण्णिजुत्पत्तिर्नान्यस्मादिति तदन्तात्क्विप् । 'ह्रस्वस्य पिति०' (Pa. 6. 1. 71.) इति तुक् । णिचो लोपाभावश्छान्दसः । णिच्स्वरः Sy.

दीयमानैः[1] । वसुभिः[2] । अग्निः संयोजयति[3] । 'उराण उरु कुर्वाणः'[4] इति यास्कः, यज्ञं परितः पशून् समानयतीत्यर्थः[5] ।

**स तेजीयसा मनसा त्वोत उत शिक्ष स्वपत्यस्य शिक्षोः ।**
**अग्ने रायो नृतमस्य प्रभूतौ भूयाम ते सुष्टुतयश्च वस्वः ॥ ३ ॥**

स तेजीयसा[6] । सः[7] । तेजिष्ठेन[8] । मनसा[9] संयुक्तो भवति । यस्त्वया रक्षितः[10] । अपि च[11] । देहि[12] । शोभनापत्यम्[13] । धनं शिक्षोरिति[14] धनमाह[15] शिक्षतेर्दानकर्मणः । अग्ने ! धनस्य[16] ।

---

१. अस्मभ्यं देयतया प्राप्तैः Sy.

२. धनैः सह सन् Sy.

३. समश्येत् सम्यक् सेवताम् । 'श्रिञ् सेवायाम्' इत्यस्य छान्दसे लङि 'बहुलं छन्दसि' इति शपो लुक् । निघातः Sy.

४. N. 6. 17. बहुकुर्वाणस्तादृशो भवान् । उरु करोति 'तत्करोति०' इति णिच् । तदन्ताच्छन्दसि लिट् । मन्त्रत्वादाम् न भवति । तस्य कानच् । 'णेरनिटि' इति णिलोपः । वरादेशाभावश्छान्दसः । चित्त्वादन्तोदात्तः Sy. ५. ०नयती० M. ०नपती० P. ६. ०जीसा P.

७. यजमानः पूर्वोक्तगुणविशिष्टो यस्त्वया तेजस्वीति सः BB.

८. अतिशयेन तीक्ष्णेन । सत्कर्मविषयतीक्ष्णबुद्धियुक्तेन । तेजीयसा—तेजितृशब्दादतिशायन ईयसुन् । 'तुरिष्ठेमेयःसु' इति तृचो लोपः । नित्स्वरः Sy. तेजस्वितरेण...तेजनं तेजः, तद्वता निशिततरेण सावधानेनेत्यर्थः BB.

९. अन्तःकरणेन युक्तो भवति Sy.

१०. रक्ष्यमाणः । त्वोतः—'अव रक्षणादिषु' । निष्ठायां 'ज्वरत्वरस्रिव्यविमवामुपधायाः०' इत्यूठ् । पूर्वलोपः । त्वया ऊतः । 'तृतीया' इति योगविभागात्समासः । टेर्लोपश्छान्दसः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरः Sy. त्वया ऊतस्त्वयैव रक्षितोऽस्त्विति शेषः । ...तत्र त्वद्रूत इति वक्तव्ये पृषोदरादित्वाद् व्यञ्जनलोपः BB.

११. P. reads भवति for अपि च.

१२. प्रयच्छ । शिक्ष—शिक्षतिर्दानकर्मा । (Ngh. 3. 20.) दात्यादिषु दानकर्मसु पठितत्वात् । 'शिक्ष विद्योपादाने' इत्ययमत्र दानार्थः । अस्माल्लोटि व्यत्ययेन परस्मैपदम् Sy. यजमानकार्यसमर्थान् कर्तुं कृतसङ्कल्पो भव । सन्नन्ताल्लोट्...यजमानाय देहीति विवक्षितम् BB.

१३. द्वितीयार्थे षष्ठी शोभनापत्योपेतम् Sy. शोभनपुत्रपौत्रादेः BB.

१४. ०क्षुरिभि M. ०क्षुरिति P. शिक्षोः—अभिमतफलप्रदाने शक्तुमिच्छोः । 'शक्लृ शक्तौ' इत्यस्य सनि 'एकाच उपदेशे०' इतीट्प्रतिषेधः । 'सनि मीमाघुरभलभशकपतपदामच इस्' इति धातोरच इसादेशः । 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः । 'सनाशंसभिक्ष उः' इत्युप्रत्ययः । प्रत्ययस्वरः Sy. शिक्षोः शक्तुमिच्छतः BB.

१५. सनमा० M. धमाहनामा० P.

१६. धनानि BB.

नेतृतमस्य[1] । महत्त्वे[2] सति[3] । तव[4] । सुष्ठु स्तोतारः[5] । वासयितारः[6] । च । वयं भवेमेति[7] ।

भूरी॑णि॒ हि त्वे द॑धि॒रे अनी॑का॒ग्ने दे॒वस्य॒ यज्य॑वो॒ जना॑सः ।
स आ व॑ह दे॒वता॑तिं यविष्ठ॒ शर्धो॒ यद॒द्य दि॒व्यं यजा॑सि ॥ ४ ॥

भूरीणि हि[8] । बहूनि । तेजांसि[9] । त्वयि[10] । स्थापयन्ति[11] । हि[12] । अग्ने ! देवसङ्घस्य[13] । यष्टारः[14] । जनाः[15] । तथा सति स[16] त्वम् । इमं यज्ञं[17] प्रति । प्रापय[18] । दिवि भवम् ।

---

१. अतिशयेन नेतुर्दातुः Sy. मनुष्यतमस्य मनुष्योत्तमस्य यजमानस्य BB.

२. प्रभावे महिम्नि वयं स्याम । प्रभूतौ—'भू सत्तायाम्' इत्यस्य भावे क्तिन् । 'तादौ च निति कृत्यतौ' इति गतेः प्रकृतिस्वरत्वम् Sy. प्रभूतौ प्रभवार्थं यजमानस्य । यथाऽयं लोके तेजस्वी भवति तदर्थमित्यर्थः । 'निमित्तात् कर्मसंयोगे' (V. 6. on Pa. 2. 3. 36.) सप्तमी BB.

३. हि P.

४. तव प्रसादात् BB.

५. किञ्च त्वद्विषयशोभनस्तुतिमन्तो वयम् । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् Sy. शोभना स्तुतिर्येषां तादृशास्त्वद्विषयामेव शोभनां स्तुतिं सदा कुर्वन्तः BB.

६. वसुनो भाजनम् । वस्वः—आगमानुशासनस्यानित्यत्वान्नुमभावः । संज्ञापूर्वकस्य विधेरनित्यत्वाद् गुणाभावः । यणादेशः Sy. वसुमन्तः BB.

७. भूयाम—'भू सत्तायाम्' इत्यस्याशीर्लिङि 'किदाशिषि' इति यासुट् । 'छन्दस्युभयथा' इति तस्य सार्वधातुकत्वात्सलोपः । आगमस्वरः । यद्वा तस्मात्प्रार्थनायां लिङि यासुट् । 'बहुलं छन्दसि' इति शपो लुक् । अनदन्तत्वादियादेशो न भवति Sy. अमोघप्रयत्नास्स्यामेति भावः । भवतेर्विध्यादिलिङ् 'बहुलं छन्दसि' इति शपो लुक् । यद्वा तव प्रभूतौ प्रभावे वयं भूयाम, प्रभावानुगुणमस्मासु कुर्विति भावः । तदेवाह—सुष्टुतयस्त्वामेव स्तुवन्तो वयं वसुमन्तस्स्याम, यथा ते प्रभावो न हीयत इति BB.

This stanza=TS. 1. 3. 14. 6.

८. Omitted by P.

९. अनीकानि सेनारूपतया सर्वत्र प्रसृतानि ज्वालारूपाणि तेजांसि Sy.

१०. आहुतिप्रक्षेपेण त्वयि Sy.

११. विदधिरे । चक्रुरिति यावत् । दधिरे—दधातेर्लिटि रूपम् । हियोगादनिघातः । चित्त्वादन्तोदात्तः Sy.

१२. Omitted by P. खलु Sy.

१३. रेवंस० P. द्योतमानस्य तव सम्बन्धिनः Sy.

१४. अध्वर्युप्रभृतयः । यज्यवः—'यज देवपूजादिषु' । 'यजिमनिशुन्धिदसिजनिभ्यो युच्' (Uṇādi. 3. 300) इति युच् । व्यत्ययेनाद्युदात्तत्वम् Sy.

१५. जनं P.

१६. तादृशस्त्वम् Sy.

१७. It refers to देवतातिम् ॥ यष्टव्यदेवान् । देवशब्दात्स्वार्थे 'सर्वदेवात्तातिल्' इति तातिल् । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् Sy.

१८. आह्वय Sy.

यत्[1]। शर्धः[2]। त्वं यजसीति[3] देवाभिप्रायमिति[4]।

यत्त्वा होतारमनजन्मियेधे निषादयन्तो यजथाय देवाः।
स त्वं नो अग्नेऽवितेह बोध्यधि श्रवांसि धेहि नस्तनूषु ॥ ५ ॥

यत्त्वा होतारम्[6]। यदा[7]। त्वा[8]। होतारम्[9]। आज्येनाञ्जन्ति[10]। यज्ञे। यागार्थम्[11]। स्थापयन्तः[12]। देवाः[13]। सः[14]। त्वम्। अस्मान्[15]। अग्ने! अस्मिन्यज्ञे[16] सति। रक्षिता[17]। बुध्यस्व[18]। तथाऽस्माकम्। अङ्गेषु[19] हस्तयोः शिरसि च। विविधान्यन्नानि। अधिनिधेहि[20][21]।

---

१. यस्मात् कारणात् Sy.

२. देवसम्बन्धि तेजः Sy.

३. यजासि—यजतेर्लेटयाडागमः। यद्वो-गादनिघातः Sy.

४. तस्माद्देवानाह्वयेति शेषः Sy.

५. VM. ignores यविष्ठ and अद्य ॥ हे युवतम! अस्मिन् कर्मणि Sy.

६. य त्वा P.

७. यद्यस्मात् Sy.

८. त्वाम् Sy.

९. देवानामाह्वातारं यद्वा होमनिष्पादकम् Sy.

१०. घृताहुतिभिरोक्षन्, यद्वा घृतैरसिञ्चन्। अनजन्—'अञ्जू व्यक्तिगतिम्रक्षणेषु' अस्माल्लङि रुधादित्वात् श्नम्। छान्द-सत्वादल्लोपाभावः। 'अनिदिताम्०' इत्युपधालोपः Sy.

११. यजनार्थम् Sy.

१२. निवसन्तः। यद्वा बर्हिष्युपवेशयन्तः। निषादयन्तः—'षद्लृ विशरणगत्यवसाद-नेषु'। चुरादिः? 'सदिरप्रतेः' इति षत्वम्। यद्वा 'हेतुमति०' णिच्। शतुर्लसार्वधातुकस्वरेणानुदात्तत्वे कृते णिच्स्वरः Sy.

१३. दीप्यमाना ऋत्विजः Sy.

१४. तस्मात्तथाविधः Sy.

१५. अस्माकम् Sy.

१६. अस्मिन् कर्मणि Sy.

१७. पालयिता भवामीति Sy.

१८. बोधि—'बुध अवगमने'। लोटि 'बहुलं छन्दसि' इति शपो लुक्। 'सेर्ह्यपिच्च' इति सिपो हिरादेशः। 'वा छन्दसि' इति विकल्पेन पित्त्वाद् गुणः। 'हुझल्भ्यो हेर्धिः' इति हेर्धिरादेशः धकारलोप-श्छान्दसः। निघातः Sy.

१९. तनुजेष्वपत्येषु Sy.

२०. अधनि० M. अधिकम् Sy.

२१. P. omits the words between आज्येना० and धेहि ॥ धेहि—दधा-तेर्लोटि रूपम् Sy.

III. 20

अग्निमुषसमश्विना दधिक्रां व्युष्टिषु हवते वह्निरुक्थैः।
सुज्योतिषो नः शृण्वन्तु देवाः सजोषसो अध्वरं वावशानाः ॥ १ ॥

अग्निमुषसम्। अग्निप्रभृतीन्। उषसो व्युष्टिषु। होता। आह्वयते। स्तोत्रैः। शोभनदीप्तिकाः। देवाः। अस्मानाघातृन्। शृण्वन्तु। सङ्गताः। यज्ञम्। कामयमानाः।

---

१. 'अग्निमुषसम्' इति पञ्चर्चमष्टमं सूक्तं त्रैष्टुभम्। अत्रेयमनुक्रमणिका–'अग्निमुषसमाद्यान्त्ये वैश्वदेव्यौ' (KSA. 17. 20. p. 15.) इति। 'गाथी ह' (KSA. 17. 19. p. 15.) इति ह्यव्यप्रयोगादस्यापि सूक्तस्य गाथी ऋषिः प्रथमापञ्चम्यौ विश्वेदेवदेवताके शिष्टास्तिस्र आग्नेय्यः। अस्य सूक्तस्योक्तो विनियोगः। मरुत्वतीयशस्त्रे 'अग्निर्नेता' इत्येषा धाय्या। सूत्रितञ्च–'अग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यप इति धाय्याः' (ASS. 5. 14.) इति Sy.

२. P. omits the commentary on this stanza. गाथी ब्रूते Sy.

३. प्रभृति refers to उषसम् अश्विना and दधिक्रा इति ॥ अग्निं यजनीयं देवम्। उषसमुषोऽभिमानिनीं देवताम्। अश्विना अश्विनौ देवौ। दधिक्रां दधिक्रावा नाम कश्चिद्देवः तं दधिक्रावाणम्। एतान् देवान्।... दधिक्राम्–'क्रमु पादविक्षेपे'। दधीत्युपपदे 'जनसनखनक्रमगमः०' इति विट्। 'विड्वनोरनुनासिकस्यात्' इत्याकारः। कृदुत्तरपदप्रकृतिस्वरः Sy.

४. व्युष्टिषु उषसां व्युच्छनेषु। 'उछी विवासे'। भावे क्तिन्। 'व्रश्च०' इत्यादिना षत्वम्। 'तादौ च निति कृत्यतौ' इति गतेः प्रकृतिस्वरत्वम् Sy.

५. हविषां प्रापयिताग्निः Sy.

६. हवते—ह्वयतेः 'बहुलं छन्दसि' इति सम्प्रसारणम् Sy.

७. शस्त्रैः शंसनसाधनैरप्रगीतमन्त्रात्मकैः सूक्तैः Sy.

८. सुज्योतिषः—सुष्ठु द्योतमाना इति विग्रहे 'द्युत दीप्तौ' इत्यस्य 'द्युतेरिसिन्नादेश्च जः' (Uṇādi. 2. 262.) इतीसिन्प्रत्ययो दकारस्य जकारः। कृदुत्तरपदप्रकृतिस्वरत्वम्। बहुव्रीहिपक्षे तु 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तता स्यात्। यथा 'सुज्योतिषो अक्तवस्तां अभि ष्युः' (RV. 10. 89. 15.) इत्यन्तोदात्तता। तस्मादत्र नायं समासः किन्तु तत्पुरुष एव Sy.

९. सर्वे देवाः Sy.

१०. तदाह्वानं शृण्वन्तु। शृण्वन्तु–'श्रु श्रवणे' इत्यस्मात् 'श्रुवः शृ च' इति श्नुस्तत्सन्नियोगेन धातोः शृइत्यादेशः। निघातः Sy.

११. परस्परं सङ्गता भूत्वा Sy.

१२. अध्वरम्—अस्मत्सम्बन्धिनमिमं यज्ञम् Sy.

१३. M. adds सेयं वैश्वदेवी after कामयमानाः ॥ वावशानाः–'वश कान्तौ' इत्यस्य यङ्लुकि रूपम्। अभ्यासस्य 'दीर्घोऽकितः' इति दीर्घः। व्यत्ययेन शानच्। चित्स्वरः Sy.

**अग्ने॒ त्री ते॒ वाजि॑ना॒ त्री ष॒धस्था॒ ति॒स्रस्ते॑ जि॒ह्वा ऋ॑तजात पू॒र्वीः ।**
**ति॒स्र उ॑ ते त॒न्वो॑ दे॒ववा॑ता॒स्ताभि॑र्नः पाहि॒ गिरो॒ अप्र॑युच्छन् ॥ २ ॥**

**अग्ने त्री ते ।** अग्ने[1] ! त्रीणि[1] । तव[1] । अन्नान्याज्यौषधिसोमात्मकानि[2] । त्रीणि च[3] । तव[3] स्थानानि[4] पृथिव्यादीनि । तथा तिस्रः[5] । तव । जिह्वाः सन्ति गार्हपत्यादिकाः[6] । सत्यजनन ! यज्ञाद्वा[7] जात ! पुरातन्यः[8] । तिस्रः । एव । ते[9] । तनवः[10] । देवैः समाश्रिताः[11], पवमानः[12] पावकः[12] शुचिरिति[12] । ताभिः[13] । अस्माकम् । स्तुतिवाचः[14] । रक्ष[15] ।

---

१. P. omits अग्ने । त्रीणि । तव ।

२. अन्नाज्यौषसि सामकात्म० M. आज्यौषधसोमात्म० P. अन्नानि । अस्यामेवेष्टौ 'त्रयः पुरोडाशा भवन्ति' इत्युक्तत्वात् । यद्वा सोमौषधिसन्नायात्मना त्रित्वम् BB.

३. त...M. Omitted in P.

४. षधस्था त्रीणि—आग्नीध्रीयादीनि धिष्ण्यानि स्थानानि । यद्वैकाहाहीनसत्रात्स्थानि त्रीणि स्थानानि । यद्वा त्रयो लोकाः Sy. सधस्थानि पृथिव्यन्तरिक्षलोकाः BB.

५. तिस्रः—'तिसृभ्यो जसः' इति जस उदात्तत्वम् Sy.

६. गार्हपत्याद्याः । जिह्वाः—'लिह आस्वादने' लिहन्त्याभी रसानिति 'शेवयह्वजिह्वाग्रीवाप्वामीवाः' इति निपातनाद्वन् । लकारस्य जकारः । गुणाभावः । व्यत्ययेनान्तोदात्तत्वम् Sy. त्रिष्वपि स्थानेषु, भौर्ववैद्युतादित्यात्मिकाः BB.

७. ०ज्ञानाद्वा P. ऋतेषु सत्यभूतेषु यज्ञेषु समुत्पन्न ! हे अग्ने ! Sy. हे ऋतजात ! यज्ञार्थं जात ! BB.

८. देवानामुदरपूरयित्र्यः Sy. चिरन्तन्यः BB.

९. तव Sy.

१०. तनुवः M. तन्वः D. पवमानपावकशुच्यात्मकानि त्रीणि शरीराणि Sy. शरीराणि, अग्निविद्युदादित्यात्मिकास्तिस्रस्तनवोऽन्तस्थितस्य देवतात्मनः BB.

११. देवैरभिलषिताः । देववाताः—'वा गतिगन्धनयोः' । अस्मात्कर्मणि क्तः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् Sy. देवैः सर्वैरपि गता अनुप्रविष्टाः, सर्वदेवतामय ? (०मय्य) इत्यर्थः । . . . सम्भक्ता वा देवैः BB.

१२. पवमानः पावकः शुचिरिति should immediately follow तनवः and precede देवैः ।

१३. तनूभिः Sy. ताभिरनन्ताभिः BB.

१४. ०वचः P. स्तोत्रशस्त्रादीनि वाक्यानि Sy. गिरः स्तुतिलक्षणाः BB.

१५. पालय । पाहि—'पा रक्षणे' इत्यस्य लोटि रूपम् । निघातः Sy. फलवतीः कुरु BB.

अप्रमाद्यन्[1] ।

अग्ने॒ भूरी॑णि॒ तव॑ जातवेदो॒ देव॑ स्वधावो॒ऽमृत॑स्य॒ नाम॑ ।
याश्च॑ मा॒या मा॒यिनां॑ विश्वमिन्व॒ त्वे पू॒र्वीः सं॑द॒धुः पृ॑ष्टबन्धो ॥ ३ ॥

अग्ने भूरीणि । अग्ने ! बहूनि । तव[2] । जातवेदः[3] ! देव[4] ! अन्नवन्[5] ! अमृतस्य[6] । नामानि[7]—अग्निः, जातवेदाः, पावक[8] इत्यादीनि । मायावतां[9] देवानाम् । याः । च । प्रज्ञाः[10] । सर्वव्यापिन्[11] ! त्वयि । पुरातनीः[12] । देवाः संहितवन्तः[13] । तास्त्व[14] बह्वच[15] इति[16] संसृष्टबन्धुः[17][18]

---

१. ०द्यत् M. एवम्भूतस्त्वमप्रयुच्छन् अप्रमाद्यन् सावधानो भूत्वा। अप्रयुच्छन्—'युच्छ प्रमादे' । नञ्स्वरः Sy. अप्रमादयन् । अविच्छेदेनास्मान् यज्ञेषु प्रवर्तयन् । यद्वा ताभिरस्मान्पाहि गिरो वाऽस्मदीया अप्रयुच्छन्निति । 'युच्छ प्रमादे' । यद्वा ताभिः सर्वैर्वाजिनादिभिः । नपुंसकस्य शेषे प्राप्ते व्यत्ययेन स्त्रियाश्शेषः BB.
This stanza=TS. 2. 4. 11. 2; 3. 2. 11. 1.

२. तवजवो P. तव सम्बन्धिनो देवाः Sy.

३. ०वेद M. जातप्रज्ञ ! Sy.

४. Omitted in M.

५. स्वधावः—स्वधास्यास्तीति मतुप् । 'मतुवसो रुः' इति नकारस्य रुः Sy.

६. मरणधर्मरहितस्य । अमृतस्य—'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् Sy.

७. नाम नामानि तेजांसि । नाम—'णमु प्रह्वत्वे' । 'नामन्सीमन्व्योमन्०' इत्यादिना मनिन्प्रत्ययान्तत्वेन निपातनान्मकारलोपो दीर्घश्च । नमयन्ति सर्वानपि स्वाश्रयभूतान् पुरुषानिति नामानि तेजांसि । 'सुपां सुलुक्०' इति सुपो लुक् । नित्त्वादाद्युदात्तः Sy.

८. ०वकं M.

९. ०यव० P. मायाविनाम् is suggested for मायावताम् ॥ असुराणाम् । मायिनाम्—माया एषां सन्तीति व्रीह्यादित्वादिनिः । 'यस्य०' इति लोपः । प्रत्ययस्वरः Sy.

१०. मायाः Sy.

११. विश्वस्य सन्तर्पक ! विश्वमिन्वः—'इवि व्याप्तिप्रीणनयोः' इत्यस्माद्विश्वशब्दे उपपदे 'कर्मण्यण्' इत्यण्प्रत्ययः । धातूपदेशावस्थायाम् 'इदितो नुम्०' इति नुमि प्राप्ते लघूपधगुणो न भवति। विश्वमिन्वति प्रीणयतीति विश्वमिन्वः । 'तत्पुरुषे कृति बहुलम्' इति द्वितीयाया अलुक् । आमन्त्रितत्वान्निघातः Sy.

१२. भूयसीः Sy.

१३. संहितवः P. सम्प्रयुयुजिरे तास्त्वयि सन्ति । तस्माद्यज्ञविघ्नकारिणां मायिनां मायाः परिहृत्यास्मदीयं यज्ञं पालयेति भावः । सन्दधुः—'डुधाञ् धारणपोषणयोः' इत्यस्य लिटयुसि रूपम् । यद्वृत्तयोगादनिघातः । प्रत्ययस्वरः Sy.

१४. त्तनश्च P.

१५. बह्वय P.

१६. Omitted in P.

१७. सस्पृष्ट० P.

१८. ०बन्धु P.

पृष्टबन्धु[1]रिति ।

अग्निर्नेता भगइव क्षितीनां दैवीनां देव ऋतुपा ऋतावा ।
स वृत्रहा सनयो विश्ववेदाः पर्षद्विश्वाति दुरिता गृणन्तम् ॥ ४ ॥

अग्निर्नेता । अग्नि[2]ः । दैवीना[3]म् । प्रजाना[4]म् । प्रणे[5]ता भवति । यथा भग[6]स्ताः प्रण-यत्येवम्[7] । ऋतूनां[8] पालयिता । सत्यकर्मा[9] । सः[10] । उपद्रवाणां[11] हन्ता । सम्भजीयः[12] । सर्वज्ञः[13] । अतिनयतु[14] । विश्वानि[15] । दुरितानि[16] । स्तुवन्तम्[17][18] ।

---

१. ०बन्धुति M. P. omits पृष्टबन्धुरि. अपेक्षितफलप्रश्नविषयाणां स्तोतृणां बन्धो ! हे अग्ने ! पृष्टबन्धो—'प्रच्छ ज्ञीप्सायाम्' इत्यस्य कर्मणि निष्ठायां 'ग्रहिज्यावयि०' इत्यादिना सम्प्रसारणम् । 'व्रश्च०' आदिना षत्वम् । 'बन्ध बन्धने' इत्यस्मात् 'शृस्वृस्निहि०' इत्यादिना उप्रत्ययः । षष्ठीसमासः । आमन्त्रितत्वान्निघातः Sy.

२. योऽयमग्निः Sy.

३. देवानां M. देवीनां P. देवसम्बन्धिनीनां विशाम् । दैवीनाम्—देवशब्दात्सम्बन्धार्थे 'देवाद्यञञौ' इत्यञ् । अञि 'टिड्ढाणञ्०' इति ङीप् । ञित्त्वादाद्युदात्तः Sy.

४. मनुष्याणाम् । क्षितीनाम्—'क्षि निवासगत्योः' इत्यस्मात् 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् । 'नामन्यतरस्याम्' इत्यन्तोदात्तत्वम् Sy.

५. प्रणेति M. अन्तर्यामितया नियामकः । नेता—'णीञ् प्रापणे' इत्यस्य तृचि रूपम् । चित्स्वरः Sy.

६. तत्र दृष्टान्तः–सर्वस्य प्रकाशप्रदानेन प्रवर्तकः । तद्वत् Sy. ७. यन्त्येवं M.

८. वसन्ताद्यृतूनां पालकः । ऋतुपाः–'पा रक्षणे' इत्यस्मात् 'अन्येभ्योऽपि दृश्यन्ते' इति विच् । ऋतून् पातीति 'उपपदमतिङ्' (Pa. 2. 2. 19.) इति समासः कृदुत्तरपदप्रकृतिस्वरः Sy.

९. सत्यसत्य० M.

१०. तथाविधोऽग्निः Sy.

११. वृत्रस्य हन्ता । वृत्रहा—'हन हिंसागत्योः' । 'ब्रह्मभ्रूणवृत्रेषु क्विप्' इति क्विप् Sy.

१२. ०नीयम् P. सम्भजनीयः is suggested for सम्भजीयः ॥ सनातनः पुराणः Sy.

१३. ०वंज्ञ M. सर्वविषयज्ञानवान् सर्वज्ञः । विश्ववेदाः–'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् Sy.

१४. अतिक्रम्य पारं नयतु । पर्षत्—'पॄ पालनपूरणयोः' इत्यस्य लेटि 'सिब्बहुलम्०' इति सिप् । अडागमः । 'इतश्च लोपः०' इतीकारलोपः । पादादित्वादनिघातः Sy.

१५. विश्वानि M. सर्वाणि Sy.

१६. M. adds नि after दुरितानि ।

१७. त्वद्विषयां स्तुतिं कुर्वन्तं स्तोतारम् । गृणन्तम्—'गॄ शब्दे' । लटः शतृ । क्र्यादित्वात् श्ना । श्नन्तत्वात् 'श्नाभ्यस्तयोरातः' इत्याकारलोपः । शतृप्रत्ययस्वरः Sy.

१८. VM. ignores देवः ॥ द्योतमानः Sy.

उत्तरा निगदव्याख्यातेति—

दधिक्रामग्निमुषसं च देवीं बृहस्पतिं सवितारं च देवम्।
अश्विना मित्रावरुणा भगं च वसून् रुद्राँ आदित्याँ इह हुवे ॥ ५ ॥

[दधिक्रामग्निम्][1]

## III. 21

इमं नो यज्ञममृतेषु धेहीमा हव्या जातवेदो जुषस्व।
स्तोकानामग्ने मेदसो घृतस्य होतः प्राशान प्रथमो निषद्य ॥ १ ॥

इमं[2] नः। अग्ने!

---

१. The *pratika* is found in M. only, in a later hand. Sy. explains the stanza in the following manner:—हे दधिक्रावादयः! सर्वे देवाः! होताहं दधिक्रां दधिक्रावाणमग्निमुषसञ्च देवीमुषोऽभिमानिनीं देवतां च बृहस्पतिं देवं द्योतमानं सवितारं सर्वस्य जगतः प्रेरकं देवं च अश्विना अश्विनौ देवौ मित्रावरुणौ भगं सूर्यं च वसूनष्टौ वसून् रुद्रानेकादश रुद्रान् आदित्यान् द्वादशादित्यान् एतान् सर्वान् हविर्भुजो युष्मानिहास्मदीये कर्मणि हुवे हविःस्वीकरणार्थमाह्वयामि। दधिक्राम्—दधातीति दधिः। 'आदृगमहन०' इत्यादिना किप्रत्ययः। दधीत्युपपदे क्रमेः 'जनसन०' इत्यादिना विट्। 'विड्वनोः०' इत्यात्वम्। देवीम्—देवस्य पत्नी देवी। 'पुंयोगादाख्यायाम्' इति ङीष्। 'यस्य०' इति लोपः। प्रत्ययस्वरेणान्तोदात्तः। बृहस्पतिम्—'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च' इति पतिशब्दे परतो बृहच्छब्दस्य तलोपः सुडागमश्च। 'उभे वनस्पत्यादिषु युगपत्' इत्युभयपदाद्युदात्तत्वम्। सवितारम्—'षू प्रेरणे' इत्यस्य तृचि 'आर्धधातुकस्येड्वलादेः' इतीडागमः। चित्त्वादन्तोदात्तत्वम्। रुद्राँ आदित्याँ—इत्यत्र संहितायां शसो नकारस्य 'दीर्घादटि समानपादे' इति रुत्वम्। ततः पूर्वस्यावर्णस्य 'आतोऽटि नित्यम्' इत्यनुनासिकत्वम्। 'भोभगोअघोअपूर्वस्य योऽशि' इति रोयदेशः। 'लोपः शाकल्यस्य' इति तस्य लोपः। यलोपस्यासिद्धत्वात्स्वरसन्धिर्न भवति। अतः रुद्राँ आदित्याँ इति भवति। एवमेकस्मिन् पादे आकारादटि परतो नकारस्य रुत्वयत्वपूर्वसवर्णानुनासिकादेशा उन्नेयाः। हुवे—ह्वयतेर्लटि 'बहुलं छन्दसि' इति सम्प्रसारणम्। इटः 'टित आत्मनेपदानाम्०' इत्येत्वम्। उवङादेशः। निघातः।

२. 'इमं नः' इति पञ्चर्चं नवमं सूक्तम्। अत्रेयमनुक्रमणिका—'इमं न उपाद्ये अनुष्टुभौ विराड्रूपा सतोबृहती चान्त्या' (KSA. 17.21. p. 15.) इति। द्वितीयातृतीये अनुष्टुभौ पञ्चमी विराड्रूपा सतोबृहती च। अनुक्तत्वात् प्रथमाचतुर्थ्यौ त्रिष्टुभौ। अस्यापि गाथी ऋषिः। पशौ स्तोकानुवचने इदं सूक्तम्। सूत्रितञ्च—'जुषस्व सप्रथस्तममिमं नो यज्ञम्' (ASS. 3.4.) इति...गाथी प्रार्थयते Sy.

अस्माकम्[1] । इदम् । हविः[2] । देवेषु[3] । धेहि[4] । इमानि[5] । हवींषि[6] । जातधन[7] ! सेवस्व[8] । हे अग्ने[9] ! वपायाः[10] । घृतस्य[11] च । स्तोकान्[12] । प्रधानयागात् पूर्वमेव[13] । निषद्य[14] आसित्वा । प्राशान[15] भक्षय ।

घृतवन्तः पावक ते स्तोकाः श्चोतन्ति मेदसः ।
स्वधर्मन्देववीतये श्रेष्ठं नो धेहि वार्यम् ॥ २ ॥

घृतवन्तः । हे पावक[16] ! घृतयुक्ताः[17] । मेदसः[18] । स्तोकाः[19] । तुभ्यम्[20] । श्चोतन्ति[21] । स्वभूतकर्मन्[22] !

---

१. अस्माकं सम्बन्धिनम् Sy.

२. पशुयागम् Sy.

३. मरणधर्मरहितेषु यष्टव्यदेवेषु Sy.

४. तदधीनतया समर्पय । धेहि–दधाते-र्लोटि रूपम् Sy.

५. अस्माभिर्दीयमानानि Sy.

६. हव्यानि हवींषि Sy.

७. हे जातप्रज्ञ ! अग्ने ! Sy.

८. जुषस्व–'जुषी प्रीतिसेवनयोः' इत्यस्य लोटयात्मनेपदिनो रूपम् Sy.

९. VM. seems to explain होता as हे अग्ने ॥ देवानामाह्वातः ! 'अग्निर्वै देवानां होता' (AB. 3.1 4.) इत्याम्नानात् Sy.

१०. वपाख्यस्य हविषः Sy.

११. आज्यस्य Sy.

१२. स्तोकानाम्–द्वितीयार्थे षष्ठी । मेदोघृतयोर्ये स्तोका बिन्दवो विद्यन्ते तान् Sy.

१३. सर्वेषामृत्विजामादिमः सन् । प्रथमः–'प्रथ प्रख्याने' । प्रथमः प्रथन्तेऽस्माद् द्वितीयादय इति । 'प्रथेरमच्' (Uṇādi. 5.746.) इत्यमच् । चित्त्वा-दन्तोदात्तः Sy.

१४. वेद्यामुपविश्य । निषद्य—'षद्लृ विशरणगत्यवसादनेषु' इत्यस्य ल्यपि रूपम् । 'सदिरप्रतेः' इति षत्वम् । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् Sy.

१५. प्रकर्षेण अशान भक्षय पिबेत्यर्थः । अशान–'अश भोजने' इत्यस्य लोटि । 'हलः श्नः शानज्झौ' (Pa. 3. 1. 83.) इति शानजादेशः । पश्चात् 'अतो हेः' इति हेर्लुक् । निघातः Sy.

१६. पापशोधक ! हे अग्ने ! Sy.

१७. घृतोपेताः Sy.

१८. मेदोरूपस्य हविषः Sy.

१९. स्तोता M. बिन्दवः Sy.

२०. तव भक्षणार्थम् Sy.

२१. क्षरन्ति । श्चोतन्ति—'श्चुतिर् क्षरणे' इत्यस्य लटि रूपम् Sy.

२२. ०तसर्वकर्मान् P. स्वायत्तधर्मके साङ्गेऽस्मिन् यज्ञे । स्वधर्मन्— स्वेऽङ्गभूता धर्माणो ? (धर्माः) यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । 'सुपां सुलुक्०' इति सप्तम्या लुक् Sy.

यज्ञार्थम् । अस्मभ्यम् । प्रशस्यतमम् । धनम् । प्रयच्छ ।

तुभ्यं स्तोका घृतश्चुतोऽग्ने विप्राय सन्त्य ।
ऋषिः श्रेष्ठः समिध्यसे यज्ञस्य प्राविता भव ॥ ३ ॥

तुभ्यं स्तोकाः । अग्ने ! भजनीय ! तुभ्यम् । मेधाविने । घृतश्चुतः । मेदसः स्तोका भवन्ति । तैस्त्वं द्रष्टा । श्रेष्ठः । समिध्यसे । स त्वं प्रकर्षेण रक्षिता । भव । यज्ञस्य ।

---

१. ०ज्ञार्त्थम् P. यजनीयदेवानां भक्षणार्थम् । . . . अथवा देववीतये देवस्य तव वीतय इति योजनीयम् . . . देवानां वीतिः प्रीतिर्यस्यां भक्षणक्रियायां सा देववीतिः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः Sy.

२. ०स्यं P. उत्तमं धनम् । श्रेष्ठम्—प्रशस्यशब्दादतिशायने इष्ठन् । 'प्रशस्यस्य श्रः' इति श्रादेशः । गुणः । एकादेशस्वरः Sy.

३. वरणीयं सम्भजनीयम् । वार्यम्–'वृङ् सम्भक्तौ' । 'ऋहलोर्ण्यत्' इति ण्यत् । 'ईडवन्द०' इत्यादिनाद्युदात्तत्वम् । 'एतिस्तुशास०' इत्यादिना क्यप् वृणोतेरेव न वृङः Sy.

४. धेहि दधातेर्लोट् Sy.

५. षष्टृभिः सम्भजनीय ! यद्वा षष्टृभ्यः फलप्रद ! सन्त्य—'षणु सम्भक्तौ'; 'षणु दाने वा' । 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् । 'न क्तिचि दीर्घश्च' इति दीर्घनलोपाभावः । सन्तौ भवाः 'भवे छन्दसि' इति 'तत्र साधुः' इति वा यत्प्रत्ययः । 'यस्य०' इति लोपः । आमन्त्रितत्वान्निघातः Sy.

६. त्वदर्थम् । तुभ्यम्—युष्मच्छब्दस्य ङयि 'तुभ्यमह्यौ ङयि' (Pa. 7. 2. 95.) इति तुभ्यादेशः । 'ङेप्रथमयोरम्' इति ङेरमादेशः । 'ङयि च' इत्याद्युदात्तत्वम् Sy.

७. ०तच्युतः M. घृतक्षरणयुक्ताः Sy.

८. ०वति M. सन्ति Sy.

९. हे वासयितस्ता तैस्त्वं P.

१०. अतीन्द्रियार्थदर्शी Sy.

११. श्रेष्ठ P. सर्वातिशायी Sy.

१२. घृतयुक्तमेदोबिन्दुभिः सम्यक् प्रज्वाल्यसे । इध्यसे—'ञिइन्धी दीप्तौ' कर्मणि यक् । कित्त्वादनुनासिकलोपः । निघातः Sy.

१३. प्रकर्षेण पालकः । प्राविता—'अव रक्षणादिषु' तृचि रूपम् । समासस्वरः Sy.

१४. भव—निघातः Sy.

१५. अस्माभिः क्रियमाणस्य पशुयागस्य Sy.

**तुभ्यं श्चोतन्त्यध्रिगो शचीवः स्तोकासो अग्ने मेदसो घृतस्य ।**
**कविशस्तो बृहता भानुनागा हव्या जुषस्व मेधिर ॥ ४ ॥**

तुभ्यं[1] श्चोतन्ति । 'अध्रिगुर[2]धृतगमनः' इति यास्कः[3] । हे कर्मवन्[4] ! तुभ्यम्[5] । मेदसः[6] । घृतस्य च । स्तोकाः[7] । श्चोतन्ति[8] । कविभिः[9] स्तुतोऽग्निः । महता[10] । तेजसा[11] । आगच्छ[12] । हव्यानि[13]

---

१. Omitted in P. कुशिकपुत्रस्य गाथिनः SKN. गाथिनः कुशिकपुत्रस्यार्थम् Dur.

२. ०गु धृ P. सततगमनस्वभाव ! अध्रिगो—गमनं गौरिति 'गम्लृ सृप्लृ गतौ' इत्यस्य भावे । 'गमेर्डोः' इति डोः । अधृता गौर्येनेत्यत्र 'गोस्त्रियोरुपसर्जनस्य' इति गोशब्दस्य ह्रस्वत्वम् । धृतशब्दस्य पृषोदरादित्वाद् ध्रिभावः । सम्बोधने 'सम्बुद्धौ च' (Pa. 7. 3. 106.) इति गुणः । अपादादित्वान्निघातः Sy. एवमत्र—अध्रिगो, शचीवः, अग्ने, इति सामानाधिकरण्यादधृतगमन इत्युपपन्नमग्नेर्विशेषणमिति SKN. एवमत्र 'अध्रिगो' इत्यग्निरुक्तः । तस्मादग्नेरध्रिगुत्वमुपपद्यते Dur.

३. Cf. 'अग्निरप्यध्रिगुरुच्यते...अधृतगमन! कर्मवन् !' N. 5. 11.

४. शक्तिमन् ! शचीवः—मतुपो 'मतुवसो रु' इति रुत्वम् Sy. शचीति कर्मनाम Ngh. 2. 1.

५. त्वदर्थम् Sy. Dur.

६. मेदोरूपस्य हविषः Sy.

७. बिन्दवः Sy. के श्चोतन्ति ?... बिन्दवः SKN. एते...बिन्दवः Dur.

८. स्रवन्ति Sy. क्षरन्ति SKN. वपामतीत्य श्चोतन्ति क्षरन्ति Dur.

९. कविभिः कर्माभिज्ञैर्होत्रादिभिः स्तुतस्त्वम् । कविशस्तः—'शंसु स्तुतौ' इत्यस्य निष्ठायामनुनासिकलोपः । 'यस्य विभाषा' इतीट्प्रतिषेधः 'थाथघञ्क्ताजबित्रकाणाम्' इत्यन्तोदात्तत्वम् Sy. एतज्ज्ञात्वा...कविभिर्मेधाविभिः स्तुतः । समानाधिकरणो वा, कविश्चासौ शस्तश्चेति कविशस्तः SKN. यस्य तवैतद्वर्तते स त्वं कविशस्तः—प्रक्षरणे कविभिरभिष्टुतः Dur.

१०. प्रभूतेन Sy. महत्या SKN.

११. तेजसा सहितः सन् । भानुना–'भा दीप्तौ' । 'दाभाभ्यां नुः' इति कर्तरि नुः । प्रत्ययस्वरः Sy. दीप्त्या सुष्ठु दीप्यमान ! इत्यर्थः SKN. भासा Dur.

१२. अस्मदीयपशुयागमभ्यागच्छ । अगाः—'इण् गतौ' इत्यस्य छान्दसे लुङि 'इणो गा०' इति गादेशः । 'गातिस्था०' इति सिचो लोपः । निघातः Sy.

१३. अस्माभिर्दीयमानानि वपादीनि हवींषि Sy. आगत्य च...हवींषि SKN. आगत्य चेमानि...हवींषि यानि स्तोकाख्यानि त्वदर्थमेव क्षरन्ति तानि Dur.

च । सेवस्व[1] । यज्ञिय[2] ![3]

ओजिष्ठं ते मध्यतो मेद उद्भृतं प्र ते वयं ददामहे ।
श्चोतन्ति ते वसो स्तोका अधि त्वचि प्रति तान्देवशो विहि ॥ ५ ॥

ओजिष्ठम्[4] ।[5] वपाख्यमोजस्वितमम्[6] । मेदः[7] । पशोर्मध्यतः[8] । त्वदर्थम्[9] । उद्धृतम्[10] । तुभ्यमेव[11] च[12] । वयम्[13] । प्रयच्छामः[14] । क्षरन्ति[15] । तव[16] । त्वच[17] उपरि । मेदसः स्तोकाः[18] श्चोतन्ति । हे वासयितः[19] ! तान्[20] । देवंदेवम्[21] । प्रति । गमय[22] ।

---

१. संसेवस्व Dur.

२. ॰ज्ञियः M. and P. आगत्य च प्रज्ञावन्नग्ने ! मेधिर–'मेधारथाभ्यामिरन्निरचौ वक्तव्यौ' इतीरन् । आमन्त्रितत्वान्निघातः Sy. मेधो यज्ञः, रो मत्वर्थः । हे यज्ञवन् ! SKN. यज्ञवन्नित्यर्थः Dur. N.5.11; SKN. II. 333.

३. VM. explains अध्रिगो with an inexact quotation of the Nirukta and ignores अग्ने !

४. आजि॰ P. ५. हे अग्ने ! Sy.

६. अतिशयेन सारयुक्तम् Sy.

७. वपाख्यं हविः Sy.

८. ॰ध्यः P पशोर्मध्यभागात् । मध्यतः—मध्यशब्दात् 'पञ्चम्यास्तसिः' (Pa. 5.4.44.) इति तसिः । प्रत्ययस्वरः Sy. ९. तर्थुम॰ P.

१०. युद्धत॰ M. उद्धृतम्—'हृञ् हरणे' । कर्मणि क्तः । 'हृग्रहोर्भश्छन्दसि' इति हकारस्य भकारः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् Sy. ११. तुभ्यं मेऽप M. १२. Omitted in P.

१३. जयं M. अध्वर्य्वादयो वयमस्मिन् पशौ Sy.

१४. उद्धृतं तद्वपाख्यं हविः प्रयच्छामः । ददामहे—'दद दाने' इत्यस्य लटि ङित्त्वात् ? आत्मनेपदम् । 'अतो दीर्घो यञि' इति दीर्घः । निघातः Sy.

१५. स्रवन्ति । श्चोतन्ति—'श्चुतिर् क्षरणे' । पादादित्वादनिघातः । अन्तेर्लसार्वधातुकस्वरेणानुदात्तत्वे कृते धातुस्वरः Sy.

१६. नव P. त्वदर्थम् Sy.

१७. वपायामुपरि . . . यद्वा ते तव त्वच्यधि ज्वालाख्यशरीरस्योपरि . . . त्वचि—'तनु विस्तारे' । 'तनोतेरनश्च वः' (Uṇādi.2.221.) इति कर्तरि कर्मणि वा चिक् । अकारनकारयोर्वकारादेशः । तनोति तायते वा त्वक् 'सावेकाचः॰' इति विभक्तेरुदात्तत्वम् ।

१८. घृतमिश्रा बिन्दवः Sy.

१९. सर्वस्य जगतो वासयितः ! हे अग्ने ! Sy. २०. तां M. स्तोकान् Sy.

२१. देवेषु Sy.

२२. प्रत्येकं विभजस्व । विहि—'वी कान्तिगत्यादिषु' इत्यस्य लोटयदादित्वाच्छपो लुक् । ह्रस्वश्छान्दसः । निघातः Sy.

III. 22.

अयं सो अग्निर्यस्मिन्त्सोममिन्द्रः सुतं दधे जठरे वावशानः ।
सहस्रिणं वाजमत्यं न सप्तिं ससवान्त्सन्त्स्तूयसे जातवेदः ॥ १ ॥

अयं सः[1] । अयम्[2] । सः[3] । अग्निः[4] । यस्मिन्नग्नौ[5] । हुतं सोमम्[6] । ततः सुतम्[7] । इन्द्रः[8] । स्वजठरे[9] । स्थापयति[10] । कामयमानः[11] । अथ प्रत्यक्षः—स त्वं सहस्रसंख्याकम्[12] । अन्नम्[13] । अतनशीलम्[14] । अश्वम्[15] । इव[16] । सम्भजन्[17] । अधितिष्ठन् ।

१. 'अयं सः' इति पञ्चर्चं दशमं सूक्तम् । अत्रेयमनुक्रमणिका—'अयं स उपान्त्यानुष्टुप् पुरीष्येभ्योऽग्निभ्यः' (KSA. 17.22. p. 15.) इति । ऋषिः कौशिको गाथी । पञ्चचितिरूपा अग्नयो देवताः । चतुर्थ्यनुष्टुप् शिष्टास्त्रिष्टुभः । प्रातरनुवाकाश्विनशस्त्रयोरुक्तः सूक्तविनियोगः । अग्निचयन इष्टकाप्रणयने 'पुरीष्यासः' इत्येषानुवचनीया । 'प्रेषितः पुरीष्यचितयेऽन्वाह' इत्युपक्रम्य 'पुरीष्यासो अग्नय इति त्रिरुपांशु सप्रणवम्' (ASS.4.8.) इति सूत्रितम्. . . गाथी ब्रूते Sy.

२. उत्तरवेद्यामाहुत्यधिकरणभूताहवनीयरूपतया दृश्यमानः Sy. अयं गार्हपत्यः Mah.

३. तथाविधः खलु. . . तस्मात्तावृग्माहिमोपेतः सोऽग्निरिति पूर्वेणान्वयः Sy.

४. इष्टकाभिश्चीयत इति शेषः Mah. गार्हपत्योऽग्निश्चीयते U.

५. यस्मिन्नग्नौ चिते सति Mah. यस्मिश्चिते सति U.

६. स्तोतं M.

७. अभिषुतम् Mah., U.

८. इन्द्र P. इन्दुः ? (इन्द्रः) U.

९. स्वोदरे Sy., Mah. उदरे U.

१०. ०यन्ति P. दधार । दधे—दधातेर्लिटि 'लिटस्तझयोरेशिरेच्' इति तप्रत्ययस्य एशित्यादेशः । यद्वृत्तयोगादनिघातः । प्रत्ययस्वरः Sy. धारयति Mah., U.

११. वावशानः—'वश कान्तौ' इत्यस्य यङ्लुकि 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घः । व्यत्ययेन शानच् । चित्स्वरः Sy. वष्टीति वावशानः Mah.

१२. सहस्रं नानारूपतां युद्धे यो भजति स सहस्री । तम् Sy. सहस्रार्हम् Mah., U.

१३. आज्यौषधिसोमाद्यनेकप्रकारं हविर्लक्षणमन्नम् Sy. बहूनां तृप्तिकरमित्यर्थः Mah. अन्नभूतं सर्वस्य जगतः U.

१४. वेगवशादतनशीलम् Sy.

१५. सप्ति शरणं तृप्तिकरम् Mah., U.

१६. नकारः सम्प्रत्यर्थः । भक्षणादेव मदकरम् Mah. अनन्तरं भक्षणादेव मदकरम् U.

१७. भेजिवान् । ससवान्—'षण सम्भक्तौ' । क्वसाविडभावः । नलोपः । प्रत्ययस्वरः Sy. अग्नौ चिते न केवलमिन्द्र एव सोमं जठरे धत्ते किन्तु हे अग्ने ! त्वमपि हवींषि सम्भजमानः सन् Mah., U.

अस्माभिः[1] स्तूयसे[2] ।[3]

**अग्ने॒ यत्ते॑ दि॒वि वर्चः॑ पृथि॒व्यां यदोष॑धीष्व॒प्स्वा य॑जत्र ।**
**येना॒न्तरि॑क्षमु॒र्वा॑त॒तन्थ॑ त्वे॒षः स भा॒नुर॑र्ण॒वो नृ॒चक्षाः॑ ॥ २ ॥**

अग्ने यत्ते । हे यष्टव्य[4] ! अग्ने ! यत्[5] । तव[6] । पृथिव्यादिषु[7] स्थितम् ।

---

१. स्तोतृभिः Sy. ऋत्विग्यजमानैः Mah., U.

२. स्तूयमानो वर्तसे । स्तूयसे–'ष्टुञ् स्तुतौ' । कर्मणि यक् । 'अकृत्सार्वधातुकयोः०' इति दीर्घः । निघातः Sy.

३. VM. ignores जातवेदः ॥ हे जातवेदः ! जातं वेदो धनं यस्मात्, हे अग्ने ! Mah., U.

उत्तरार्धस्यायं वार्थः । हे जातवेदः ! सप्तिं शरणं गमनकुशलमत्यं न अश्वमिव सहस्रियं सहस्रसङ्ख्याकेन धनेन सम्मितं वाजमन्नं ससवान् दत्तवान् सन् यजमानैस्त्वं स्तूयसे...'षणु दाने' क्वसुः ससवान् Mah. अयं तावदस्य मन्त्रस्य प्रगुणोऽर्थः । श्रुतिस्तु, आहुतिपरिणामाभिप्रायेण व्याचष्टे–'अयं वै लोको गार्हपत्य आपः सोमः सुतोऽस्मिँल्लोकेऽप इन्द्रो धत्ते जठरे वावशान इति मध्यं वै जठरम्' इत्यादि । अयं स लोको गार्हपत्याग्निर्यस्मिँल्लोकेऽभियुजः सोमपरिणामभूता अप इन्द्रस्य जठरे मध्ये दधे स्थापयति । 'सहस्रियं वाजमत्यं न सप्तिमिति । आपो वै सहस्रियो वाजः' अपां विशेषणानि । 'ससवान् सन् स्तूयसे जातवेदः' इति व्याचष्टे । 'चितः संचीयसे जातवेदः' इति गार्हपत्यरूपेण चितः सञ् चीयसे । आहवनीयरूपेणेति वा । अर्थान्तरनिवृत्तित्वम् U.

This stanza=YV. 12. 47.

अयꣳसोऽअग्निः । यस्मिन्त्सोममिन्द्रः सुतं दधऽइत्ययं वै लोको गार्हपत्य आपः सोमः सुतोऽस्मिंस्तल्लोकेऽप इन्द्रोऽधत्त जठरे वावशान इति मध्यं वै जठरꣳ सहस्रियं वाजमत्यं न सप्तिमित्यापो वै सहस्रियो वाजः ससवान्त्सन्त्स्तूयसे जातवेद इति चितः संचीयसे जातवेद इत्येतत् SB. 7. 1. 1. 22. p. 517.

४. यजनीय ! Sy. हे आयजत्र ! मर्यादया यजनीय ! Mah. आयष्टव्यं मर्यादया यष्टव्यम् U.    ५. यष्टत् P.

६. तत्तवैवं ज्योतिः Sy.

७. आदि refers to दिवि । ओषधीषु and अप्सु ॥ पृथिव्यामाहवनीयादिरूपतया वर्तमानं यत्तेजस्तत्त्वदीयमेव । प्रसिद्धं तेजोऽभिधाय गूढं ज्योतिरभिधत्ते–यदोषधीष्वप्स्विति । ओषधीष्वरणिप्रभृतिषु काष्ठेषु...यद्वा ओषधीषु वनस्पत्यादिषु सोमाख्यं यत्तेजः । अप्सु जलेषु यदौर्वाख्यं तेजस्तत्सर्वम्...पृथिव्याम्–'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् । ओषधीषु–'ओषधेश्च विभक्तावप्रथमायाम्' इति दीर्घत्वम् । अप्सु—'सावेकाचः०' इति विभक्तेरुदात्तत्वम् Sy.

वर्चः । येन वर्चसा । विस्तीर्णम् । अन्तरिक्षम् । आतनोषि । दीप्तः । सः । रश्मिः । उदकवान् । मनुष्याणां द्रष्टा ॥

१. आदित्याख्यं यज्ज्योतिस्तत् Sy. दीप्तिरर्करूपं वर्तते । यच्च पृथिव्यामग्निरूपम्, यच्चौषधीष्वन्तःस्थितम्, यच्चाप्सु जलेष्वन्तःस्थितम् Mah. यच्च पृथिव्यामग्निलक्षणं वर्चः । यच्चौषधीष्वन्तर्व्यवस्थितम् । यच्चाप्स्वन्तर्व्यवस्थितम् ...एतान्यधस्तादुक्तानि वर्चांसि तव लघीयांसि U.

२. वायुरूपेण तेजसा Sy. यच्च वर्चसा Mah.

३. आकाशम् Sy.

४. आतेनिथ । विस्तीर्णं कृतवानसि । आततन्थ—'तनु विस्तारे' इत्यस्य लिटि थलि 'बभूथाततन्थजगृम्भववर्थ०' इति निपातनादिडेत्वाभ्यासलोपा न भवन्ति । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् । यद्वृत्तयोगादनिघातः Sy. विस्तारयसि Mah.

५. दीप्तिमान् Sy. त्वेषयति प्रकाशयति सकलं विश्वमिति त्वेषः । 'त्विष दीप्तौ' पचादित्वादच् Mah. महत् U.

६. तादृशस्त्वमन्तरिक्षमातेनिथेति पूर्वेणान्वयः Sy. तत् U.

७. अत एव भानुर्भासमानः Sy. दीप्तिः Mah. वर्चः U.

८. समुद्रवन्महान् । अर्णवः—अर्णांस्यस्मिन् सन्तीति मतुबर्थे वप्रकरणे 'अन्येभ्योऽपि दृश्यते' इति वप्रत्ययः । 'अर्णसः सलोपश्च' इति सलोपः प्रत्ययस्वरः Sy. अर्णांस्युदकानि सन्ति यत्रेत्यर्थः । ...यद्वा, अरणवान् गमनवान् प्रसरणशीलः Mah. अर्णस्वान्, उदकवान् । अथवा 'अरणवान् गमनवान् वायुः सः' इति श्रुतिः U.

९. नृणां साक्षितया द्रष्टा । नृचक्षाः—'चक्षिङ् व्यक्तायां वाचि' अभिव्यक्तवाग्वाच्ययं धातुरत्राभिव्यक्तिमात्रे वर्तते । 'चक्षेर्बहुलं शिच्च' इत्यसुन् । कृदुत्तरपदप्रकृतिस्वरः Sy. नॄन् चष्ट इति नृणां शुभाशुभकर्मद्रष्टा । ईदृशो यस्ते भानुस्तमेवेष्टकारूपमुपदधामीति शेषः । अनेन त्रिस्थानोऽग्निः स्तुतः Mah.
नृणां शुभाशुभकर्मद्रष्टा U.

१०. VM. explains यत् and आ once only. आ सर्वत्र वर्तमानं तेजस्तावकमेव Sy.
अग्ने यत्ते दिवि वर्च इति । आदित्यो वाऽअस्य दिवि वर्चः पृथिव्यामित्ययमग्निः पृथिव्यां यदोषधीष्वप्स्वा यजत्रेति य एवौषधिषु चाप्सु चाग्निस्तमेतदाह येनान्तरिक्षमुर्वा ततन्थेति वायुः स त्वेषः स भानुरर्णवो नृचक्षा इति महान्त्स भानुरर्णवो नृचक्षा इत्येतत् SB. 7. 1. 1. 23. p. 571.

अग्नें द्विवो अर्णमच्छा जिगास्यच्छा देवाँ ऊंचिषे धिष्ण्या ये ।
या रोचने परस्तात्सूर्यस्य याश्चावस्तादुपतिष्ठन्त आपः ॥ ३ ॥

अग्ने दिवः[1] । अग्ने ! द्युलोकस्य[2] । उदकम्[3] । आभिमुख्येन[4] । गच्छसि[5] । तथा स्तुत्यर्हाः[6] । ये[7] देवाः । तान्[8] । अच्छ[9] । स्तुतीर्ब्रवीषि[10] । याः । आपः[11] । सूर्यमण्डले[12] । परस्तात्[13] ।

---

१. Omitted in P.

२. द्युलोके वर्तमानम् Sy. द्युलोकस्य सम्बन्धि Mah., U.

३. अम्भः । अर्णम्—'ऋ गतौ' इत्यस्मात् 'उदके नुट् च' इत्यसुन् नुडागमश्च । अर्यते प्राप्यते तत्पिपासुभिरित्यर्णः । सकारलोपश्छान्दसः । नित्त्वादाद्युदात्तः Sy.

४. अच्छ अभिलक्ष्य Sy. 'आपो वाऽअस्य दिवोऽर्णस्ता एव धूमेनाच्छैति' (SB. 7. 1. 1. 24.) इति श्रुतिः Mah., U. अच्छाभेराप्तुमिति शाकपूणिः N. 5. 23.

५. धूमद्वारा प्राप्नोषि । जिगासि—'गा स्तुतौ च छन्दसि' इत्ययं धातुश्चकाराद् गमने वर्तमानो जुहोत्यादिः । 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम् । निघातः Sy.

६. धियं बुद्ध्युपहितं देहमुष्णन्त्युष्णीकुर्वन्तीति धिष्ण्याः प्राणाभिमानिनो देवाः । धिष्ण्याः—'उष प्लुष दाहे' । धिय उष्णन्तीति 'सानसिधर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः' इति निपातनात् यञुडागमधात्वादिलोपोपपदह्रस्वत्वादयः सर्वे सिद्धा भवन्ति । नित्त्वादाद्युदात्तः Sy. धियो बुद्धीरिन्द्रियाणीष्णन्ति प्रेरयन्ति धिष्ण्याः प्राणरूपा देवास्तान् । . . 'प्राणा वै देवा धिष्ण्यास्ते हि सर्वा धिय इष्णन्ति' (SB. 7. 1. 1. 24.) इति श्रुतेः Mah. ये धिष्ण्या अग्नयः U.

७. य M.

८. तान्प्राणाख्यान् देवान् Sy.

९. अनुक्रमेण Sy. अभिगच्छसि Mah.

१०. ०ती ब्र० M. शस्तती: ब्र P. ऊचिषे । समवेतान् करोषि । समवेता भवतेत्युक्तवानसि । ऊचिषे—'ब्रूञ् व्यक्तायां वाचि' इत्येतस्य लिट आर्धधातुकत्वाद् 'ब्रुवो वचिः' (Pa. 2. 4. 53.) इति वच्यादेशः । 'असंयोगाल्लिट् कित्' इति किद्वद्भावात् 'वचिस्वपि०' इत्यादिना सम्प्रसारणम् । अभ्यासस्य 'लिट्यभ्यासस्योभयेषाम्' इति सम्प्रसारणम् । आर्धधातुक इट् । निघातः Sy. ऊचिरे, उच्यन्ते । . . ऊचिषे—ब्रूञः कर्मणि लिट् । पुरुषवचनयोर्व्यत्ययः Mah. उच्यन्त इति लिङ्गवचनयोर्व्यत्ययः U.

११. आपो विद्यन्ते Sy.

१२. It is a joint explanation of सूर्यस्य and रोचने ॥ सूर्यस्य सूर्यलोकस्य . . . रोचने रोचनो नामायं लोको यत्राग्नेयं ज्योतिस्तपति । तस्मिन् भासमाने रोचनाख्ये लोके Sy. दीप्तिरूपे मण्डले वर्तमानस्य सूर्यस्य Mah. रोचने लोके स्थितस्य सूर्यस्य U.

१३. उपरि Sy. उपरिष्टात् Mah.

उपतिष्ठन्ते । याः । च । अवस्तात्, ता उभयीश्चापः पातयस्यभिगच्छसि ।

पुरीष्यासो अग्नयः प्रावणेभिः सजोषसः ।
जुषन्तां यज्ञमद्रुहोऽनमीवा इषो महीः ॥ ४ ॥

पुरीष्यासः । पुरीषभवाः । अग्नयः । प्रवणैरग्निचित्यायां खन्यमानैः ।

---

१. वर्तन्ते। उपतिष्ठन्ते—'ष्ठा गतिनिवृत्तौ' उपपूर्वात्तिष्ठतेः 'अकर्मकाच्च' (Pa. 1. 3. 26.) इत्यात्मनेपदम्। यद्वृत्तयोगादनिघातः Sy. २. च आपः Sy.

३. अपस्तात् M. घस्तात् P. सूर्यलोकादधस्तादन्तरिक्षलोके। अवस्तात्—अवरशब्दात् 'दिक्शब्देभ्यः सप्तमीपञ्चमी०'—इत्यादिना अस्तातिः । तस्मिन् 'विभाषावरस्य' (Pa. 5. 3. 41.) इत्यवादेशः । प्रत्ययस्वरः Sy. रवेरधस्ताच्च Mah., U.

४. ता उभयीरपस्त्वं प्रेरयसि Sy.

५. त्वमभिजिगासीत्यन्वयः । त्वमेवैतैः रूपैः परिणमसीति भावः Mah., U.
This stanza=YV. 12. 49.

६. अग्ने दिवोऽअर्णमच्छा जिगासीति । आपो वाऽअस्य दिवोऽर्णस्ता एष धूमेनाच्छैत्यच्छा देवाँ२॥ ऽऊचिषे धिष्ण्या यऽइति प्राणा वै देवा धिष्ण्यास्ते हि सर्वा धिय इच्छन्ति या रोचने परस्तात्सूर्यस्य याश्चावस्तादुपतिष्ठन्त आप इति रोचनो ह नामैष लोको यत्रैष एतत्तपति तद्याश्चैतं परेणापो याश्चावरेण ता एतदाह ।
SB. 7. 1. 1. 24. p. 571.

७. पुरिष० P. सिकतासम्मिश्राः । पुरीष्यासः—'पॄ पालनपूरणयोः' । ईषन्नित्यनुवृत्तौ 'शॄपॄभ्यां कित्' (Uṇādi. 4.467.) इतीषन्प्रत्ययः किच्च । कित्त्वाद् गुणे प्रतिषिद्धे 'उदोष्ठ्यपूर्वस्य' इत्युत्वम् । रपरः । पृणाति पूर्यते वेति पुरीषम् । तदर्हन्तीति पुरीष्याः । 'छन्दसि च' इति यप्रत्ययः । 'यचि भम्' इति भसंज्ञायां 'यस्येति०' लोपः । प्रत्ययस्वरः Sy. पुरीषेभ्यः पशुभ्यो हिताः पुरीष्याः Mah. पुरीष्यासः, बहुवचनमिष्टकापेक्षम् । ये पुरीष्याः पशव्याः पशुभ्यो हिताः U. पुरीषं पृणातेः। पूरयतेर्वा N. 2. 22.

८. चित्या अग्नयः Sy. एत इष्टकारूपाः Mah. अग्नय इष्टकाः U.

९. मृत्खननसाधनभूतैरभ्रयादिभिः सहिताः। प्रावणेभिः—'वन षण सम्भक्तौ' इत्यस्मात् 'पुंसि संज्ञायां घः प्रायेण' इति करणे घप्रत्ययः। प्रकर्षेण वन्यते सम्भज्यते संश्लिष्यते मृदेभिरिति प्रावणानि खनित्राणि। 'प्रनिरन्तः०' (Pa. 8. 4. 5.) इत्यादिना णत्वम् । 'वनं समासे' (Pa. 6. 2. 178.) इत्यन्तोदात्तत्वम्। कृदुत्तरपदप्रकृतिस्वरः । यद्वा 'प्रुङ् गतौ' प्रवन्ते गच्छन्ति मृत्खननं प्रतीति 'चलनशब्दार्थादकर्मकाद्युच्' (Pa. 3. 2. 148.) इति युच् । चित्स्वरः । पूर्वस्मिन् पक्षेऽवग्रहाभावश्छान्दस इति वक्तव्यम् Sy. प्रकर्षेण वनन्ति सम्भजन्ति विषयानिति प्रावणानि मनांसि तैः Mah. 'प्रुङ् गतौ' प्रावणैर्गमनैर्लोकव्याप्तिभिः U.

१०. अग्निचित्यात्या M. अग्निचित्यया P.

११. खन्य० M.

सङ्गताः । सेवन्ताम् । यज्ञम् । अद्रोग्घारः । अमीवारहितानि । महान्ति । अन्नानि चेति ।

इळामग्ने पुरुदंसं सुनिं गोः शश्वत्तमं हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ ५ ॥

[ इळामग्ने । ]

## III. 23.

निर्मथितः सुधित आ सधस्थे युवा कविरध्वरस्य प्रणेता ।
जूर्यत्स्वग्निरजरो वनेष्वत्रा दधे अमृतं जातवेदाः ॥ १ ॥

निर्मथितः ॥ देवश्रवा देववात इति द्वावृषी भारतौ ॥ अरणीभ्यां निर्मथितः ।

---

१. परस्परसङ्गताः सन्तः Sy. समानप्रीतयः । मनसा प्रीतियुक्ता इत्यर्थः Mah. समानसेविनो वा । समानं हि ते लोकं सेवन्ते । अर्थबृहत्यो हि तास्चतस्रः U.

२. सव० P. जुषन्ताम्—'जुषी प्रीतिसेवनयोः' इत्यस्य लोटि रूपम् । पादादित्वादनिघातः Sy.

३. अस्माभिः क्रियमाणमग्निचयनपूर्वकमिमं सोमयागम् Sy. अस्मदीयमिमं यागम् Mah.

४. किञ्च अद्रोग्घारो यूयम् Sy. द्रुह्यन्तीत्यद्रुहोऽहिंसितारः परस्परं प्रीतियुताः Mah. अहिंसितारः U.

५. रोगादिवर्जिताः Sy. नास्त्यमीवा व्याधिरशनायाबुभुक्षारूपो याभिस्ता अनमीवाः क्षुधातृष्णानिवर्तिकाः Mah. अशनायाबुभुक्षानिवृत्तिकरा इत्यर्थः U.

६. महत्यः । महीः—महच्छब्दात् 'उगितश्च' इति ङीप् । तकारलोपश्छान्दसः । प्रत्ययस्वरेणान्तोदात्तः Sy. महतीर्बहुलाः Mah. प्रभूताः U.

७. ऊर्जा रोगादिरहितान्यन्नान्यस्मभ्यं प्रयच्छताम् Sy. अन्नभक्तीश्च Mah., U. This stanza=YV. 12. 50. पुरीष्यासोऽग्नय इति । पशव्यासोऽग्नय इत्येतत्प्रावणेभिः सजोषस इति प्रायणरूपं प्रायण ॐ ह्येतदग्नेर्यद्गार्हपत्यो जुषन्तां यज्ञमद्रुहोऽनमीवा इषो महीरिति जुषन्तां यज्ञमद्रुहोऽनशनाया इषो महीरित्येतत् SB. 7. 11. p. 571.

८. The *pratika* is found in a later hand in M. only. For explanation see, RV. 3. 1. 23.; 7. 11.

९. 'निर्मथितः सुधितः' इति पञ्चर्चमेकादशं सूक्तम् । अत्रानुक्रमणिका—'निर्मथितो देवश्रवा देववातश्च भारतौ तृतीया सतोबृहती' (KSA. 17.23. p.15.) इति । भरतस्य पुत्रौ देवश्रवा देववातश्चेत्युभावस्य ऋषी । तृतीया सतोबृहती । शिष्टास्त्रिष्टुभः । अग्निर्देवता 'आ होता' इत्यादिसूक्तदशकस्योक्तो विनियोगः प्रातरनुवाकाश्विनशस्त्रयोः । 'इळामग्ने' इत्यस्या विनियोगोऽसकृदुपदिष्टः Sy.    १०. ०थितं M.

११. भारतावृषी स्तोत्रं कुर्वाते Sy.

१२. ०णीभ्य P. अग्निष्टोमादिकर्मस्वरण्योर्नितरां मथितः सन् Sy.

सुष्ठु निहितश्च[1]। स्थाने[2]। युवा[3]। कविः[4]। यज्ञस्य[5]। प्रणेता[6]। जरत्सु[7]। काष्ठेष्वरण्यस्थेषु[8]। जरावर्जितः[9]। अग्निः। जातधनः[10]। अस्मिन् वने[11]। अन्नम्[12]। स्थापयति[13], दग्धे ह्यरण्य ओषधयः प्रादुर्भवन्ति[14]।

**अमन्थिष्टां भारता रेवदग्निं देवश्रवा देववातः सुदक्षम् ।**
**अग्ने वि पश्य बृहताभि रायेषां नो नेता भवतादनु द्यून् ॥ २ ॥**

अमन्थिष्टाम्[15]। मथितवन्तावरणीभ्याम्[16]। भरतपुत्रौ[17]। धनयुक्तम्[18]। अग्निम्[19]।

---

१. गार्हपत्यादिषु त्रिषु कुण्डेषु सुष्ठु निहितः। सुधितः—दधातेः कर्मणि निष्ठायां 'सुधितवसुधितनेमधित०' इत्यादिना निपातनाद् धि इत्यादेशः। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् Sy.

२. स्वस्था० P.
यजमानगृहे Sy.

३. निधाय च काष्ठप्रक्षेपेण प्रज्वाल्यमानः प्रवृद्धः Sy.

४. धीः M. नेतृत्वादेव क्रान्तदर्शी Sy.

५. यस्य य० P. ज्योतिष्टोमादेः Sy.

६. प्रवणे० P. प्रकर्षेण नेता निर्वाहकः Sy.

७. दावाग्निसम्बन्धाज्जूर्यमाणेषु जरां नाशं प्राप्नुवत्सु सत्स्वपि। जूर्यत्सु—'जूरी घूरी हिंसावयोहान्योः' व्यत्ययेन शतृप्रत्ययः। दिवादित्वाच्छ्यन्। नित्त्वादाद्युदात्तः Sy.

८. महारण्येषु Sy.

९. स्वयं जरारहितः प्रत्युत दीप्यमानः सन्। अजरः—'जॄ वयोहानौ' इत्यस्माद्भावे 'ॠदोरप्' इत्यप्प्रत्ययः। गुणः। 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् Sy.

१०. सर्वविषयाभिज्ञानवान्। जातवेदाः—'जनी प्रादुर्भावे' इत्यस्य क्ते 'जनसनखनां सञ्झलोः' इत्याकारः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् Sy.

११. वन्नः P. अत्र एवं स्तुतिं कुर्वाणेषु यजमानेषु Sy.

१२. क्षयरहितं प्रभूतमन्नम् Sy.

१३. निदधाति। दधे—दधातेर्वर्तमाने लिटि रूपम् Sy.

१४. VM. ignores आ।

१५. अग्निष्टोमादिकर्मप्राप्त्यर्थमलूलुडताम्। मथनेन त्वामुत्पादितवन्तावित्यर्थः। अमन्थिष्टाम्—'मन्थ विलोडने' इत्यस्माल्लुङि सिच् 'वदव्रजहलन्तस्याचः' (Pa. 7. 2. 3.) इति वृद्धौ प्राप्तायां 'नेटि' इति प्रतिषेधः। 'तस्थस्थमिपाम्०' इत्यादिना तसस्तामादेशः। पादादित्वादनिघातः। अट्स्वरः Sy.

१६. ०णीयभ्यां P.

१७. ०पुत्रो M. भरतस्य पुत्रौ देवश्रवा देववातश्चेत्युभौ। भारता—भरतस्यापत्यमित्यर्थे उत्सादित्वादञ्। 'तद्धितेष्वचामादेः' इत्यादिवृद्धिः। ञित्स्वरः Sy.

१८. रयिमन्तम्। रेवत्—रयिशब्दान्मतुप्। वत्वोदात्तत्वसम्प्रसारणपूर्वरूपगुणसुल्लोपाः Sy.

१९. अङ्गनादिगुणोपेतं त्वाम् Sy.

देवश्रवा[१]: । देववातश्च[२] । शोभनबलम्[३] । अग्ने ! त्वम् । महता[४] । धनेन[५] । अस्मान् अभि-मुख्येन[६] । विविधम्[७] । पश्य[८] । अस्नानाम्[९] । अस्माकम्[१०] । नेता[११] । भव । दिवसेषु[१२] ।

**दश क्षिपः पूर्व्यं सीमजीजनन्त्सुजातं मातृषु प्रियम् ।**
**अग्निं स्तुहि दैववातं देवश्रवो यो जनानामसद्वशी ॥ ३ ॥**

दश क्षिपः । दश[१३] । अङ्गुलयः[१४] । पूर्वकालभवमग्निम्[१५] । सर्वतः[१६] परिगृह्य । अजनयन्[१७] ।

---

१. देवश्रवाः—'श्रु श्रवणे' । 'असुन्' इति कर्मण्यसुन् । देवैः श्रूयते प्रख्याप्यतेऽसाविति देवश्रवा ऋषिः । कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते 'गतिकारकयोरपि ? (गतिकारकोपपदयोः) पूर्वपदप्रकृतिस्वरत्वञ्च' (Uṇādi. 4. 666.) इत्यौणादिकसूत्रात् पूर्वपदस्वरः Sy.

२. ०वपात० P. देववातः—'वा गतिगन्धनयोः' अस्मात् कर्मणि क्तः । देवैरिष्यमाणतया प्राप्तो देववात ऋषिः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरः Sy.

३. शोभनसामर्थ्योपेतम् Sy.

४. प्रभूतेन Sy.

५. धनेन सहितः सन् Sy.

६. अभिमुखो भूत्वा Sy.

७. विशेषेण Sy.

८. वश्य P. अनुग्रहदृष्ट्या वीक्षस्व Sy.

९. स्ना० M. अस्नान् P.

१०. P. adds च after अस्माकम्.

११. आनेता Sy.

१२. VM. seems to explain अनु and द्यून् together as दिवसेषु ॥ किञ्च द्यूननु सर्वेषु दिवसेषु । द्यून्—'द्यु अभिगमने', 'द्युत दीप्तौ' वा । 'डिच्च' इत्यनुवृत्तौ 'द्युयुभ्यां च' इति भोजसूत्रेण डुप्रत्ययो डिच्च । द्युतेः 'अभ्रुवादयश्च' (Uṇādi. 5.707.) इति डुन्प्रत्ययः । अभिगच्छन्त्यस्मिन् स्वं स्वमभिमतं देशं प्राणिनः इति । द्योतते किरणसम्बन्धादिति वा द्युर्दिवसः । 'प्रथमयोः०' इति पूर्वसवर्णदीर्घः । 'तस्माच्छसो नः पुंसि' (Pa. 6. 1. 103) इति सकारस्य नकारः । एकादेशस्वरः Sy.
वस्तोः, द्युरित्यहर्नामनी Ngh. 1. 9.

१३. बाहुद्वयस्य मथनसाधनत्वेन तत्रत्या अङ्गुलयो दशसंख्याकाः ॥ दश—'दंश दशने' । कनिन्नित्यनुवृत्तौ 'नुदशोर्गुणश्च' इति कनिन् । नित्स्वरः Sy.

१४. हे अग्ने ! देववातस्याङ्गुलयः । क्षिपः—क्षिप्यन्ते कर्मकरणार्थमिति क्षिपोऽङ्गुलयः । 'क्षिप प्रेरणे' औणादिकः । कर्मणि क्विप् क्षिप्यन्ते प्रेर्यन्ते कर्मस्विति क्षिपोऽङ्गुलयः । धातुस्वरः Sy.

१५. ०लतव M. ०ले भ० P. पुरातनं त्वाम् Sy.

१६. सीम् एनं त्वाम् Sy.

१७. जन० M. उदपीपदन् । अजीजनन्—'जनी प्रादुर्भावे' । हेतुमण्ण्यन्तस्य लुङि चङ्द्विर्वचनसन्वद्भावाभ्यासेत्वदीर्घाः । निघातः Sy.

शोभनजननम्[1] । अरणीषु[2] । सर्वेषां प्रियम्[3] । तमिमं देववातपुत्रम्[4] । अग्निम् । हे देवश्रवः ! त्वं स्तुहि[5] । योऽग्निः[6] । जनानाम्[7] । भवति[8] । नेता[9] ।

नि त्वा दधे वर आ पृथिव्या इळायास्पदे सुदिनत्वे अह्नाम् ।
दृषद्वत्यां मानुष आपयायां सरस्वत्यां रेवदग्ने दिदीहि ॥ ४ ॥

नि त्वा दधे । त्वाम्[10] । निदधे स्थापयामि[11] । पृथिव्याः[12] । उत्कृष्टे देशे[13] देवयजने । इळायाः[14] । पदे, उत्तरवेद्याम्[15] । अह्नाम्[16] । सुदिनत्वे, नभत्वादह्नां[17] सुदिनत्वम्[18] । स त्वं दृषद्वत्याम्[19] । सरस्वत्यां[20] च । धनयुक्तम्[21] । यजमानार्थम्[22] । दीप्यस्व[23] । आपयेत्यापगामाह[24], परोक्षम्[25],

---

१. सुष्ठूत्पन्नम् Sy.
२. मातृभूतारण्योः Sy.
३. प्रीणयन् P. अत एव कमनीयम् Sy.
४. ०वपात० P. देववातेन मथितमेनम् । देववातम्—देववातेन निर्वृत्तमित्यर्थे 'तेन निर्वृत्तम्०' (Pa. 4. 2. 68.) इत्यण् । प्रत्ययस्वरः Sy.
५. स्तुहि—'ष्टुञ् स्तुतौ' त्यस्य लोटि रूपम् । अदादित्वाच्छपो लुक् । निघातः Sy.
६. योनिः P.
७. स्तोतॄणां यजमानानाम् Sy.
८. असत्–'अस भुवि' अस्य लेटयडागमः । यद्वृत्तयोगादनिघातः Sy.
९. वशवर्ती कर्मणां स्वातन्त्र्येण प्रवर्तको भवति तं स्तुहीति पूर्वेणान्वयः Sy.
१०. हे अग्ने ! . . .त्वाम् Sy.
११. आ समन्तान्निदधामि । दधे दधातेर्लिटयुत्तमैकवचने रूपम् Sy.
१२. भूमेः Sy.
१३. वरिष्ठे । वरे—'वृञ् वरणे' । 'ग्रहवृदृनिश्चिगमश्च' इत्यप् । पित्त्वादनुदात्तत्वे धातुस्वरः Sy.
१४. गोरूपधारिण्याः Sy.
१५. ०वेदिं M. ०वेदि P.
१६. नाभावह्नां M. ह्नां P.
१७. नभृत्वादह्नां M. यजनीयदिवसानाम् Sy.
१८. सुदिन P. शोभनदिनत्वार्थम् । येषु दिनेष्विन्द्रादयो वरीयांसो देवा इज्यन्ते तानि सुदिनानि । तदर्थम् Sy.
१९. ०द्वत्या M. दृष्टन्द्व० P. उत्तमानि स्थानानि दर्शयति–दृषद्वती नाम काचिन्नदी तस्याम् । दृषद्वत्याम्—'दॄ विदारणे' 'दृणातेः षुग्घ्रस्वश्च' (Uṇādi.1.128) इत्यादिना षुगागमो धातोर्ह्रस्वश्च । दृषद उपला यस्यां सन्तीति मतुप् । 'झयः' इति तस्य वत्वम् । 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इत्यस्याः परिभाषाया अत्राश्रयणाभावान्मतुप उदात्तताभावः । आदिप्रत्ययस्वरः Sy.
२०. नद्याम् । एतेषु स्थानेषु । सरस्वत्याम्—सरःशब्दोऽसुन्नन्तत्वादाद्युदात्तः । तदस्यास्तीति मतुप् । अवुपधत्वान्मस्य वत्वम् । उगित्त्वात् ङीप् Sy.
२१. धने यु P. धनयुक्तं यथा भवति तथा Sy.
२२. ०नात्यं P. मनुष्यसञ्चारविषये तीरे Sy.
२३. दिदीहि—'दिवु क्रीडादौ' इत्यस्य यङ्लुकि रूपम् Sy.
२४. आय पये० M. आपया नाम काचिन्नदी तस्याम् Sy.
२५. Omitted in P.

देवश्रवसः स्थानं[1] दृषद्वतीतीरे[2], देववातस्य[3] सरस्वत्यामिति, अथवा तयोः कुलेषु[4] सत्रकरणमिति तत्र दीपनमिति[5]।

इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ ५ ॥

[ इळामग्ने । ][6]

III. 24.

अग्ने सहस्व पृतना अभिमातीरपास्य। दुष्टरस्तरन्नरातीर्वर्चो धा यज्ञवाहसे ॥ १ ॥

अग्ने सहस्व[7] ॥ विश्वामित्रः[8] ॥ अग्ने[9] ! अभिभव[10] । सेनाः[11] शत्रूणाम् । अभिमातीश्च[12] ।

---

१. ०वसस्था० P.
२. ०तीतेरे P.
३. ०वपात० P.
४. ०योर्दुष्क० M., D. कूलेषु is suggested for कुलेषु ॥ महर्षयः सरस्वतीतीरे खलु यज्ञादिकर्माण्यकार्षुः । तथा च ब्राह्मणम्—'ऋषयो वै सरस्वत्यां सत्रमासत' इति (AB. 2. 19.) Sy.
५. VM. ignores आ and अग्ने.
६. The *pratīka*, written in a later hand, is found in M. only. This stanza has already been explained. See RV. 3. 1. 23; 7. 11.
७. 'अग्ने सहस्व' इति पञ्चर्चं द्वादशं सूक्तम् । अत्रानुक्रमणिका—'अग्ने सहस्व गायत्रमाद्यानुष्टुप्' (KSA. 17. 24. p. 15.) इति । ऋषिर्गाथिनो विश्वामित्रः । अग्निर्देवता । आद्यानुष्टुप् शिष्टा गायत्र्यः । सूक्तविनियोगो लैङ्गिकः । प्रातरनुवाक आश्विनशस्त्रे च प्रथमावर्जितस्य सूक्तस्य विनियोगः । 'अथैतस्याः' इति खण्डे सूत्रितम्—'अग्न इळेति चतस्रः' (ASS. 4. 13.) इति । अभ्युदयेष्टावग्नेर्दातुरनुवाक्या 'अग्ने दा दाशुषे' इत्येषा । 'अथाग्नेय्यः' इति खण्डे सूत्रितम्—'अग्ने दा दाशुषे रयिं स यन्ता विप्र एषाम्' (ASS. 3. 13.) इति Sy.
८. ०मित्र M. विश्वामित्रः स्तौति Sy.
९. हे भगवन्नग्ने ! U.
१०. सहस्व—'षह मर्षणे' इत्यस्य लोटि रूपम् । आमन्त्रितस्याविद्यमानत्वेन पादादित्वादनिघातः Sy.
११. सेना M. P. omits. सेनाः ॥ अभियोक्त्रीः सेनाः Sy. शत्रुसेनाः Mah. सङ्ग्रामान् U.
१२. अभिलाससितिश्च P. अभिमानिनः कर्मविघ्नकारिणः शत्रून् । अभिमातीः—'माङ् माने' । मानं मतिः । भावे क्तिन् । अस्य लुग्विकरणादीत्वेत्वे न भवतः । अभिमतो मानं येषां त इति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् Sy. सपत्नोऽभिमातिरुच्यते । स्त्रीत्वमार्षम् । अभिमातीञ्छत्रून् Mah. सपत्नांश्च U.

निरस्य[1] पृथक्कुरु। केनचिदपि तरितुमशक्यः[2]। स्वयमेव तरन्[3]। शत्रून्[4]। बलम्[5]। धेहि[6]। यज्ञस्य[7] वोढे[8] यजमानायेति।

**अग्न॒ इळा॒ समि॑ध्यसे वी॒तिहो॑त्रो॒ अम॑र्त्यः। जु॒षस्व॒ सू नो॑ अध्व॒रम् ॥ २ ॥**

अग्न इळा। अग्ने! त्वम्। पृथिव्याम्[9]। समिध्यसे[10]। प्रिययज्ञः[11]। अमर्त्यः[12]। सेवस्व[13]। सुष्ठु[14]। अस्माकम्। यज्ञम्।

---

१. अपनुद। अस्य—'असु क्षेपणे' दिवादिः। लोटि रूपम् Sy. अपक्षिप, निवर्तय Mah. 'असु क्षेपणे' इत्यस्यतद्रूपम् U.

२. चिरितुमशक्य P. न केनापि तरितुं शक्यः। दुष्टरः—'तॄ प्लवनतरणयोः'। अस्मात्कृच्छ्रार्थे खल्। सुषामादित्वाद्विसर्जनीयस्य सकारस्य षत्वम्। लित्स्वरः Sy. किम्भूतस्त्वम्? . . .दुस्तरः केनापि तर्तुमशक्यः, अशक्यप्रतिक्रियो दुर्निवार इत्यर्थः Mah. तरतेस्तृणातेर्वा दुष्टरः U.

३. तान् P. स्वतेजसा तिरस्कुर्वंस्त्वम्। तरन्—तरतेः शतरि रूपम्। अदुपदेशाल्लसार्वधातुकस्वरेण शतुरनुदात्तत्वे कृते धातुस्वरः Sy. तिरस्कुर्वन् विनाशयन्नित्यर्थः Mah. विनाशयन् U.

४. अत एव अरातीन् शत्रून् Sy. शत्रुसेनाः U.

५. अन्नम् Sy. वर्चोऽन्नम् Mah. अन्नस्य U. वर्च इत्यन्ननाम Ngh. 2. 7.

६. कुरु। धाः—दधातेश्छन्दसि लुङि रूपम्। निघातः Sy. दधातेर्लुङि रूपम् Mah. धाता दाता वा, वर्चस ओजसो वा धारयितासि U.

७. यज्ञ P. ८. वोढृ M. यज्ञनिर्वाहकाय Sy. YV. reads यज्ञवाहसि for यज्ञवाहसे। यज्ञं वहतीति यज्ञवाहास्तस्मिन् यज्ञवाहसि यज्ञनिर्वाहके यजमाने Mah. यज्ञवाहसि यजमाने U. This stanza=YV. 9. 37. स उ॒ल्मुक॒मादत्ते। अग्ने॒ स॒हस्व पृ॒तना इ॒ति यु॒धो वै पृ॒तना यु॒धः सह॒स्वेत्ये॒वैत॒दाहा॒भि॒माती॒रपास्ये॒ति सप॒त्नो वा॒ऽअभि॒मातिः सप॒त्नम॒पजही॒त्ये॒वैत॒दाह दु॒ष्टरस्त॒रन्न॒राती॒रि॒ति दु॒स्त॒रो॒ ह्येष र॒क्षोभिर्नाष्ट्रा॒भिस्त॒रन्न॒राती॒रि॒ति स॒र्वं॒ ह्ये॒ष॒ पाप्मा॒नं त॒रति त॒स्मादाह॒ त॒रन्न॒राती॒रि॒ति व॒र्चो धा यज्ञ॒वाह॒सी॒ति साधु य॒जमाने दध॒दि॒त्ये॒वैत॒दाह SB. 5. 2. 4. 16. p. 442.

९. इळायामीडयायामुत्तरवेद्याम् Sy.

१०. आज्याहुतिप्रक्षेपेण सम्यक् प्रज्वाल्यसे Sy.

११. वीतिः प्रीतिविषयं होत्रमग्निहोत्रादिकं यस्यासौ वीतिहोत्रः। यज्ञेषु प्रीतिमानित्यर्थः। 'वी कान्त्यादिषु' अस्मात् कर्मणि 'मन्त्रे वृषेषपच॰' इत्यादिना क्तिन्नुदात्तः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरः Sy.

१२. अमत्य P. मरणधर्मरहितस्त्वम् Sy.

१३. सव॰ M. सेव P. आहुतिस्वीकरणेन सेवस्व। जुषतेर्लोटि रूपम्। शस्वरः Sy.

१४. सू—'निपातस्य च' इति संहितायां दीर्घः Sy.

अग्ने॑ द्यु॒म्नेन॑ जागृवे॒ सह॑सः सूनवाहुत ।
एदं ब॒र्हिः स॑दो॒ मम॑ ॥ ३ ॥

अग्ने द्युम्नेन । अग्ने ! जागरणशील[1] ! सहसः, पुत्र[2] ! अन्नेन[3] । आहुत[4] ! मम[5] ।
इदम् । बर्हिः[6] । आसीदेति[7] ।

अग्ने॒ विश्वे॑भिर॒ग्निभि॑र्दे॒वेभि॑र्महया॒ गिरः॑ ।
य॒ज्ञेषु॒ य उ॑ चा॒यवः॑ ॥ ४ ॥

अग्ने विश्वेभिः । अग्ने ! सर्वैः । अग्निभिः[8] । सर्वैश्च[9] देवैः सह । मदीयाः स्तुतीः[10] ।
पूजय[11] । ये[12] । चान्ये[13] । यज्ञेषु[14] । मनुष्यैश्चायनीयाः[15] पूजनीयास्तैश्च सहेति ।

---

१. जागर्तीति जागृविः । तस्य सम्बुद्धिः । लोकरक्षार्थं सर्वदा जागरणोपेत ! जागृवे—'जागृ निद्राक्षये' । 'जॄशॄस्तृजागृभ्यः क्विन्' इति क्विन् । किंत्वाद् गुणः 'सम्बुद्धौ च' इति गुणः । 'एङ्ह्रस्वात्॰' (Pa. 6. 1. 69.) इति सोर्लोपः । निघातः Sy. जागृविर्जागरणात् N. 9. 8.

२. बलस्य । सहसः सूनो—सुप आमन्त्रिते पराङ्गवद्भावावनुदात्तत्वे पादादित्वादनिघातः Sy.

३. अग्नेना॰ P.
स्वतेजसा सह Sy.

४. देवताह्वानार्थमस्माभिराहुत ! Sy.

५. मत्सम्बन्धिन्यस्मिन्यज्ञे । मम—अस्मच्छब्दस्य षष्ठ्येकवचने ममादेशः । 'युष्मदस्मदोर्ङसि' इत्याद्युदात्तत्वम् Sy.

६. बर्हि M. यद् वेद्यामास्तीर्णमिदं बर्हिस्तत्र Sy.

७. सा सदेति M. सदः—'षद्लृ विशरणगत्यवसादनेषु' इत्यस्य छान्दसे लुङि लृदित्वादङ् । निघातः Sy.

८. यष्टव्यतया स्थितैरग्निभिः सहितस्त्वम् Sy.

९. P. omits च ॥ देवैः द्योतमानैः Sy.

१०. स्तोत्रशस्त्रादिलक्षणानि वाक्यानि Sy.

११. महया—'मह पूजायाम्' । चुरादिः । अदन्तत्वादुपधावृद्ध्यभावः । निघातः Sy.

१२. Omitted in M.

१३. चामन्ये P.

१४. ज्योतिष्टोमादिषु Sy.

१५. उक्तविषयस्तुतिरूपाभिर्वाग्भिरनन्यमनस्कतया पूजका ये विद्यन्ते तेषाम् । चायवः—'चायृ पूजानिशामनयोः' । 'मृगय्वादयश्च' इति कुप्रत्ययः । प्रत्ययस्वरः Sy.

अग्ने दा दाशुषे रयिं वीरवन्तं परीणसम् ।
शिशीहि नः सूनुमतः ॥ ५ ॥

अग्ने दाः । अग्ने ! प्रयच्छ[1] । यजमानाय[2] । धनम्[3] । पुत्रवत्[4] । बहु[5] । तीक्ष्णीकुरु[6] च । अस्मान्[7] । पुत्रयुक्तानिति[8] ।

III. 25.

अग्ने दिवः सूनुरसि प्रचेतास्तना पृथिव्या उत विश्ववेदाः ।
ऋधग्देवाँ इह यजा चिकित्वः ॥ १ ॥

[9] अग्ने[10] दिवः । 'दिवस्परि[11] प्रथमं जज्ञे अग्निः'[12] इति मन्त्रः, अग्ने[13] ! त्वम् । दिवः[14] । पुत्रः ।

---

१. देहि । दाः–'डुदाञ् दाने' । इत्यस्य छान्दसे लुङि रूपम् । आमन्त्रितस्याविद्यमानवत्त्वेन पादादित्वादनिघातः Sy. देहि । दाः–लेटि शपो लुक् BB.

२. तुभ्यं हविर्दत्तवते यजमानाय । दाशुषे—'दाशृ दाने' इत्यस्य क्वसौ 'दाश्वान्साह्वान्मीढ्वांश्च' इति निपातनाद् द्विर्वचनाभाव इडभावश्च । भसंज्ञायां सम्प्रसारणम् । प्रत्ययस्वरः Sy. हवींषि दत्तवते यजमानाय BB.

३. धनलक्षणम् BB.

४. पुत्रयुक्तम् Sy. रयिर्विशेष्यते—वीरवन्तं पुत्रपौत्रादिमन्तं तेषां भोगपर्याप्तम् BB.

५. प्रभूतम् । परीणसम्—परिपूर्वाण्णसतेर्व्याप्त्यर्थात् क्विप् । 'अन्येषामपि दृश्यते' इति दीर्घः Sy. नासिकया सर्वेऽवयवा लक्ष्यन्ते, परिगतसर्वावयवम् BB.

६. धनप्रदानेन तीक्ष्णीकुरु । शिशीहि–'शिञ् निशाने' । व्यत्ययेन श्लुः । दीर्घश्छान्दसः । हेरपित्त्वादन्तोदात्तत्वम् Sy. उज्ज्वलितं कुरु । यद्वा, नोऽस्माञ् शिशीहि उज्ज्वलीकुरु । सूनुमतः सूनुस्तोता सोमस्याभिषोता यजमानस्तत्सहितानस्मान् पुत्रादिसमृद्धान् कृत्वा अस्मानृत्विग्यजमानान्सर्वानपि शिशीहि । श्यतेर्लोटि . . . शपश्श्लुः BB.

७. नोऽस्माकम् BB.

८. पुत्रपौत्रादिसहितान् Sy. अस्य यजमानस्य सूनुमतः, त्वया दीयमानपुत्रपौत्रादिकस्य रयिम् BB.
This stanza=TS. 2. 2. 12. 6.

९. 'अग्ने दिवः' इति पञ्चर्चं त्रयोदशं सूक्तं वैश्वामित्रम् । अत्रेयमनुक्रमणिका—'अग्ने दिवा वैराजमुपान्त्याग्नेन्द्री' (KSA. 17. 25. p. 15.) इति । विराट् छन्दः । 'अग्न इन्द्रश्च' इत्येषेन्द्राग्नीदेवताका । शिष्टा आग्नेय्यः । अग्निष्टोम आज्यशस्त्रे 'अग्न इन्द्रश्च' इति याज्या । 'अग्न इन्द्रश्च दाशुषो दुरोण इति याज्या' (ASS. 5. 9.) इति सूत्रितत्वात् Sy.

१०. आग्ने P. ११. ०स्परिः P.

१२. RV. X. 45. 1.

१३. विश्वामित्रः स्तौति–हे अग्ने ! Sy.

१४. द्युलोकाभिमानिदेवतायाः Sy.

असि[१] । प्रवृद्धज्ञानः[२] । तनयः । पृथिव्याः[३] । अपि च । विश्ववेदाः[४] । स त्वं पृथक्[५] । देवान्[६] । अस्मिन् यज्ञे[७] । यज[८] । ज्ञातः[९] !

अग्निः सनोति वीर्याणि विद्वान्त्सनोति वाजममृताय भूषन् ।
स नो देवाँ एह वहा पुरुक्षो ॥ २ ॥

अग्निः । अग्निः । प्रयच्छति[१०] । वीर्याणि[११] । जानन्[१२] । प्रयच्छति च । अन्नम्[१३] । अमृतत्वाय[१४] । भवन्[१५] । स त्वम् । अस्माकम्[१६] । देवान्[१७] । इह[१८] । आवह[१९] । बहुस्तुते[२०] !

अग्निर्द्यावापृथिवी विश्वजन्ये आ भाति देवी अमृते अमूरः ।
क्षयन्वाजैः पुरुश्चन्द्रो नमोभिः ॥ ३ ॥

अग्निर्द्यावापृथिवी । अग्निः । द्यावापृथिवी[२१] । विश्वजनहिते[२२] । भासयति[२३] ।

---

१. भवसि । असि— 'अस भुवि' इत्यस्य लटि 'तासस्त्योर्लोपः' इति सलोपः । निघातः Sy.

२. कर्मविषयज्ञानवांस्त्वम् Sy.

३. पृथिव्यभिमानिदेवतायाः Sy.

४. ०धनाः M. सर्वविषयज्ञानवान् । विश्ववेदाः—'बहुव्रीहौ विश्वं संज्ञायाम्' इति विश्वस्यान्तोदात्तत्वम् Sy.

५. पृथक्—क्रमेण Sy.

६. एवान् M. यजनीयानिन्द्रादिदेवान् Sy.

७. अस्माभिः क्रियमाणेऽस्मिन् कर्मणि Sy.

८. हविष्प्रदानेन पूजय Sy.

९. ज्ञात P., D. चेतनावन् ! हे अग्ने ! Sy.

१०. यजमानाय ददाति । सनोति—'षणु दाने' । तनादित्वादुप्रत्ययः । प्रत्ययस्वरः । पादादित्वादनिघातः Sy.

११. पशुपुत्रादिसम्पद्रूपाणि सामर्थ्यानि Sy.

१२. कर्माभिज्ञः Sy.

१३. हविर्लक्षणमन्नम् Sy.

१४. अम्यत० M. मरणधर्मरहितायेन्द्रादिदेवाय Sy.

१५. भूषन्—स्वतेजसा सर्वं जगद्भूषयन् अलङ्कुर्वन् । 'भूष अलङ्कारे' अन्तर्भावितण्यर्थः । शतुर्लसार्वधातुकस्वरेणानुदात्तत्वे धातुस्वरः शिष्यते Sy.

१६. अस्माकं सम्बन्धिनि Sy.

१७. यजनीयान् देवान् Sy.

१८. अस्मिन् यज्ञे Sy.

१९. आह्वय । वहेर्लोटि रूपम् Sy.

२०. ०हुते P. पुरोडाशादिबहुविधान्नोपेत ! हे अग्ने ! पुरवः क्षुधोऽन्नानि यस्येति पुरुक्षुः । अन्त्यलोपश्छान्दसः । 'सम्बुद्धौ च' इति गुणः Sy.

२१. द्यावापृथिव्यौ । द्यावापृथिवी—दिवःशब्दस्य 'दिवो द्यावा' इति द्यावादेश आद्युदात्तः । पृथिवीशब्दो ङीषन्तत्वेनान्तोदात्तः । 'देवताद्वन्द्वे च' इत्युभयोः प्रकृतिस्वरत्वम् Sy.

२२. विश्वस्य जनयित्र्यौ । यद्वा विश्वं जन्यमुत्पाद्यं याभ्यां ते । विश्वजन्ये—'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तः । तत्पुरुषे तु स्वरश्चिन्तनीयः Sy.

२३. आ समन्तात्प्रकाशयति । 'भा दीप्तौ' अन्तर्भावितण्यर्थः Sy.

देवी[1] । अमर्त्यो[2] । अमूढः[3] । निवसन्[4] । अन्नैः[5] । नमस्कारैश्च[6] । बह्लाह्लादः[7] ।[8]

**अग्न॒ इन्द्र॑श्च दा॒शुषो॑ दुरो॒णे सु॒ताव॑तो य॒ज्ञमि॒होप॑ यातम् ।**
**अम॑र्धन्ता सोम॒पेया॑य देवा ॥ ४ ॥**

अग्न इन्द्रश्च[9] । अग्ने[10] ! त्वम् । इन्द्रः । च[11] । सुतवतः[12] । प्रयच्छतो[13] यजमानस्य । गृहे[14] । यज्ञं[15] प्रति । इह[16] । उपागच्छतम्[17] । अक्रुध्यन्तौ[18] । सोमपानार्थम्[19] । हे देवौ[20] !

---

१. देव्यौ is suggested for देवी ॥ द्योतमाने Sy.
२. मरणधर्मरहिते Sy.
३. ग्रामू० M.
सर्वज्ञः Sy.
४. ईशानः सर्वस्य जगतः । क्षयन्—'क्षि ऐश्वर्ये' । शतुर्लसार्वधातुकस्वरेणानुदात्तत्वे धातुस्वरः Sy.
५. ए M. एः P. बलैः Sy.
६. अन्नैश्च सहितः Sy.
७. बह्लह्ला० M. बहुहिरण्योपेतः । यद्वा बहुदीप्तिस्वरूपः । पुरुश्चन्द्रः—'ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे' इति सुडागमः । श्चुत्वेन शकारः । उत्तरपदान्तोदात्तप्रकरणे 'त्रिचक्रादीनां छन्दस्युपसंख्यानम्' इत्युत्तरपदान्तोदात्तत्वम् । यद्वा 'समासस्य' इत्यन्तोदात्तत्वम् Sy.
८. VM. ignores आ.
९. M. adds देवता after इन्द्रश्च । P. omits the *pratīka*.
१०. हे भगवन्नग्ने ! Dur.
११. उभौ Sy. कर्मोपसङ्ग्रहार्थाय चश्रुतेस्त्वं चेति शेषः SKN.
१२. सोमाभिषवं कुर्वतः Sy.
सुतावतः—छान्दसं दीर्घत्वम् । सुतवतः सोमात् SKN.
अभिषुतवतः Dur.
१३. हविर्दत्तवतः Sy. दत्तवतो हवींषि यजमानस्य स्वभूते SKN. अस्य ...दत्तवतो हवींषि यजमानस्य Dur.
१४. हविर्धानलक्षणे यज्ञगृहे SKN., Dur.
१५. क्रियमाणमिमं यज्ञमभिलक्ष्य Sy. सोमम् Dur.
१६. अस्मिन् काले SKN.
१७. समीपमागच्छतम् । यातम्—'या प्रापणे' इत्यस्य लोटि रूपम् । निघातः Sy. उपगच्छतम् SKN. उपयातमित्येतदाशास्महे Dur.
१८. प्रकुध्य P. अनागमनेन यज्ञहिंसामकुर्वन्तौ सन्तौ । अमर्धन्ता—'मृधु हिंसायाम्' इत्यस्य शतरि रूपम् । नञा समासः सुपो डादेशः । तत्पुरुषे नञ्स्वरः Sy. मृधेर्हिंसार्थस्येदं रूपम् । आकारो द्विवचनस्य स्थाने । अनुपहिंसितौ परस्परम् । सङ्ग्रामनाम वा मृध इति, ततो णिच् । अमृधयन्तौ, अन्तरा सङ्ग्राममकुर्वन्तौ केनचिदित्यर्थः SKN. मृधं सङ्ग्राममकुर्वाणौ, अन्तरा केनचित्सह Dur.
१९. ०नार्थं P. सोमपेयाय—'पा पाने' । 'अचो यत्' इति यत् 'ईद्यति' इतीकारादेशः । आर्धधातुकलक्षणो गुणः । कृदुत्तरपदप्रकृतिस्वरः Sy.
२०. देवौ युवाम् Sy. ॥ N. 7.8.; SKN. III. 50.

अग्ने॑ अ॒पां समि॑ध्यसे दुरो॒णे नित्यः॑ सूनो सहसो जातवेदः ।
स॒धस्था॑नि म॒हय॑मान ऊ॒ती ॥ ५ ॥

अग्ने । अग्ने ! अपाम् । स्थानेऽन्तरिक्षे । समिध्यसे । अनवरतः । हे सहसः, पुत्र ! जातवेदः ! पूजयन् । त्रींल्लोकान् । रक्षणेन ।

III. 26.

वै॒श्वा॒न॒रं मन॑सा॒ग्निं नि॒चाय्या॑ ह॒विष्म॑न्तो अनुष॒त्यं स्व॒र्विद॑म् ।
सु॒दानुं॑ दे॒वं र॑थि॒रं व॑सू॒यवो॑ गी॒र्भी र॒ण्वं कु॑शि॒कासो॑ हवामहे ॥ १ ॥

वैश्वानरं मनसा ।

---

१. M. repeats अपाम् ।
२. दुरोणे—'अव रक्षणे' इत्यस्मादौणादिको नक्प्रत्ययः । 'ज्वरत्वर०' इत्यादिना ऊठ् । गुणः । प्रत्ययस्वरः Sy. दुरोण इति गृहनाम । दुरवा भवन्ति दुस्तर्पाः N. 4. 5.
३. सम्यग्दीप्यसे Sy.
४. ०नपर० P. अविनाशी Sy.
५. बलस्य Sy. ६. जातप्रज्ञ ! Sy.
७. परिचरंस्त्वम् । महयमानः—'मह पूजायाम्' । व्यत्ययेन शानच् । शानचो लसार्वधातुकस्वरेणानुदात्तत्वे णिच्स्वरः Sy.
८. त्रीं ल्लो० M. प्राणिनां निवासभूतांल्लोकान् Sy.
९. ऊत्या रक्षणेन । ऊती—'अव रक्षणादिषु' । 'ऊतियूतिजूति०' इत्यादिना निपातनादन्तोदात्तः । 'सुपां सुलुक्०' इति तृतीयायाः सवर्णदीर्घः Sy.
१०. 'वैश्वानरं मनसा' इति नवर्चं चतुर्दशं सूक्तम् । तत्रानुक्रमणिका–'वैश्वानरं नव तृचौ वैश्वानरीयमारुतौ जागतौ तृच आत्मस्तुतिर्वा पूर्वात्मगीतान्त्योपाध्यायस्तुतिः' (KSA. 17. 26. p. 15.) इति । 'वैश्वानरं मनसा' इत्याद्यौ तृचौ जागतौ । प्रथमस्य वैश्वानरोऽग्निर्देवता द्वितीयस्य मरुतः । सप्तम्यास्तिस्रस्त्रिष्टुभः । 'अग्निरस्मि' इति तृचस्याग्निः परं ब्रह्म वा देवता । नवम्यास्तु विश्वामित्रोपाध्यायस्य स्तुत्यत्वात्स एव देवता । सप्तमीवर्जितस्य सूक्तस्य विश्वामित्र ऋषिः । सप्तम्या ब्रह्मवाक्यत्वाद् 'यस्य वाक्यं स ऋषिः' इति न्यायेन ब्रह्म ऋषिः । 'वैश्वानरं मनसा' इत्याद्यस्तृच आभिप्लविके चतुर्थेऽहनि आग्निमारुते वैश्वानरीयनिविद्धाने विनियुक्तः । 'तृतीयस्य' इति खण्डे सूत्रितम्—'वैश्वानरं मनसेति तिस्रः' (ASS. 7. 7.) इति । अयमेव तृचो बृहस्पतिसवेऽप्याग्निमारुते वैश्वानरीयनिविद्धानीयः । 'प्र यन्तु वाजाः' इति द्वितीयतृचो बृहस्पतिसवे मारुतनिविद्धानीयः । उभयमपि 'उशनसः स्तोमेन' इति खण्डे सूत्रितम्—'वैश्वानरं मनसाग्निं निचाय्य प्र यन्तु वाजास्तविषीभिरग्नयः' (ASS. 9. 5.) इति । अग्निचयने सञ्चिताग्न्यनुशंसने 'अग्निरस्मि' इत्येषा । 'अथाग्निं सञ्चितमनुगीतमनुशंसेत्' इत्युपक्रम्य सूत्रितम्—'अग्निरस्मि जन्मना जातवेदा इति त्रिर्मध्यमया वाचा' (ASS. 4. 8.) इति... विश्वामित्रः स्तौति—हे अग्ने ! Sy.
११. Omitted in P.

वैश्वानरम्[1] । मनसा[2] । अग्निम् । पूजयित्वा[3] । हविष्मन्तः[4] । सत्यानुगतम्[5] । सर्वविदम्[6] । शोभनदानम्[7] । देवम्[8] । रथवन्तम्[9] । धनकामाः[10] । स्तुतिभिः[11] । रमणीयम्[12] । कुशिकवंशजाता[13] वयम् । हवामहे[14] ।

तं शुभ्रमग्निमवसे हवामहे वैश्वानरं मातरिश्वानमुक्थ्यम् ।
बृहस्पतिं मनुषो देवतातये विप्रं श्रोतारमतिथिं रघुष्यदम् ॥ २ ॥

तं शुभ्रम्[15] । तम्[16] । शोभमानम्[17] । अग्निम् । रक्षणाय[18] । आह्वयामः[19] । वैश्वानरम्[20] ।

---

१. Omitted in M. विश्वे नरा अग्निप्रणयनादिक्रियाया नेतारो यस्येति विश्वानरोऽग्निः । तस्य सम्बन्धी वैश्वानरः । अपत्यमिति यावत् । यद्वा विश्वानर एव वैश्वानरः । तद्धितोऽनन्यार्थो राक्षसवायसादिवत् । तम् । वैश्वानरम्—'नरे संज्ञायाम्' इति पूर्वपदस्य दीर्घत्वम् । विश्वानरस्येदमित्यर्थे 'तस्येदम्' इत्यण् । प्रत्ययस्वरः Sy.

२. अन्तःकरणेन Sy.

३. ०यित्वा P. एवंविधगुणविशिष्टस्त्वमिति ज्ञात्वा । निचाय्य—'चायृ पूजानिशामनयोः' इत्यस्य ल्यपि रूपम् । लित्स्वरः Sy.

४. ०ष्मः P. सम्भृतहविष्काः Sy.

५. ०त्यागतं P. सत्येनानुगतं कर्मानुरूपफलप्रदाने सत्यप्रतिज्ञम् । अनुषत्यम्—अनुगतं सत्येन 'अवादयः क्रुष्टाद्यर्थे तृतीयया' इति समासः । सुषामादित्वात् षत्वम् । निरुदकादित्वादन्तोदात्तत्वम् Sy. ६. ०र्वमिच्छ P. स्वर्गादिलक्षणफलस्य ज्ञातारम् Sy.

७. अत एव सुष्ठु फलस्य दातारम् । सुदानुम्—'डुदाञ् दाने' । 'दाभाभ्यां नुः' इति कर्तरि नुप्रत्ययः । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् Sy.

८. द्योतमानम् Sy. ९. रथिरम्—रथशब्दान्मतुबर्थे 'मेधारथाभ्यामिरन्निरचौ वक्तव्यौ' इतीरच् । चित्स्वरः Sy.

१०. धनमात्मन इच्छन्तः । वसूयवः—वस्वात्मन इच्छन्त इति 'सुप आत्मनः क्यच्' । 'अकृत्सार्वधातुकयोः०' इति दीर्घः । 'क्याच्छन्दसि' इत्युप्रत्ययः । 'अतो लोपः' । प्रत्ययस्वरः Sy.

११. स्तुतिलक्षणाभिर्वाग्भिः Sy.

१२. ०णीय P. यज्ञान् गच्छन्तम् । रण्वम्—रविर्गत्यर्थः । रण्वति यज्ञान् गच्छतीति रण्वः । पचाद्यजन्तः । चित्स्वरः Sy.

१३. कुशिकगोत्रोत्पन्ना वयम् । कुशिकशब्दाद् गोत्रमित्यर्थे विदादित्वादञ् । तस्य बहुषु 'यञञोश्च' (Pa. 2. 4. 64.) इति लुक् Sy.

१४. इह कर्मणि त्वामाह्वयामः । हवामहे—ह्वयतेः 'बहुलं छन्दसि' इति सम्प्रसारणम् । निघातः Sy. १५. शुभं P.

१६. Omitted in P. योऽग्निः पूर्वमन्त्रे प्रतिपादितस्तम् Sy.

१७. द्योतमानम् । शुभ्रम्—'शुभ दीप्तौ' अस्मात् 'स्फायितञ्चि०' इत्यादिना कर्तरि रक् । कित्त्वाद् गुणाभावः । प्रत्ययस्वरः Sy. १८. अस्माकं रक्षणाय Sy.

१९. ०याम P. कुशिकगोत्रजा वयमाह्वयामः Sy.

२०. विश्वानरसम्बन्धिनम् Sy.

अन्तरिक्षे[1] श्वसन्तमादित्यरूपम् । स्तुत्यम्[2] । बृहतः[3] पतिम् । मनुष्यस्य । यज्ञाय[4] । मेधाविनम् । स्तुतीनां श्रोतारम्[5] । यजमानानामतिथिम्[6] । शीघ्रं[7] स्यन्दमानं लघुजवं वा ।

**अश्वो॒ न क्रन्द॒ञ्जनि॑भिः॒ समि॑ध्यते वैश्वान॒रः कु॑शि॒केभि॑र्यु॒गेयु॑गे ।**
**स नो॑ अ॒ग्निः सु॒वीर्यं॒ स्वश्व्यं॒ दधा॑तु॒ रत्न॑म॒मृते॑षु॒ जागृ॑विः ॥ ३ ॥**

अश्वो न । अश्वः । इव[8] । शब्दायमानो[9] धासैः । अग्निरत्नैः[10] । समिध्यते[11] । जातैः[12] कुशिकैः[13] । वैश्वानरः[14] । युगेयुगे[15] पोष्यते,[16] पुत्रः[17] पिता तत्पिता[18] च सर्व एव यजमाना एनं

---

१. मातर्यन्तरिक्षे श्वसिति विद्युदादिरूपतया चेष्टत इति मातरिश्वाग्निः । तम् । निर्माणहेतुत्वान्मातान्तरिक्षम् । तत्र श्वसिति प्राणितीति मातरिश्वाग्निः । 'श्वन्नुक्षन्०' इत्यादिना मातरिश्वञ्छब्दस्य कनूप्रत्ययान्तत्वेन निपातनात्पूर्वपदान्तोदात्तत्वम् Sy.

२. उक्थैः शस्त्रैः शंसनीयम् । उक्थेन स्तोत्रेण स्तुत्यः । 'तत्र भवः' इत्यर्थे 'भवे छन्दसि' इति यत् । 'तित्स्वरितम्' इति स्वरितः Sy.

३. ०हन्तः M. ०हता P. यज्ञस्य पालकतया स्वामिनम् Sy.

४. यज्ञार्थं त्वामाह्वयामः । देव एव देवतातिः । स्वार्थिकस्तातिल् । देवतातिशब्देन यज्ञो लक्ष्यते । तत्सम्प्रदानकत्वाद्यज्ञस्य । लित्स्वरः Sy.

५. स्तोत्रशस्त्रादिमन्त्रवाक्यं शृण्वन्तम् Sy.

६. आतिथेयपूजार्हतया यदृच्छया प्राप्तम् Sy.

७. रघुष्यदम् । रघुर्लघुः स्यदो वेगो यस्येति क्षिप्रगन्तारम् । यद्वा स्यदशब्देनाश्वा लक्ष्यते । रघुस्यदः क्षिप्रगन्तेत्यर्थः । तमेवंविधगुणयुक्तमग्निम् । 'स्यन्दू प्रस्रवणे' इत्यस्माद् घञन्तः स्यदशब्दः । 'स्यदो जवे' इति निपातनादनुनासिकलोपः । कृदुत्तरपदप्रकृतिस्वरत्वम् Sy.

८. तत्र दृष्टान्तः । यथा जातोऽश्वः Sy.

९. हेषारवं कुर्वन् Sy.

१०. जनयित्रीभिर्वडवाभिः Sy.

११. आज्याहुतिप्रक्षेपेण सम्यक् दीप्यते । स्तन्यप्रदानेन सम्यक् पोष्यते तद्वत् Sy.

१२. जतैः P.

१३. स्तोत्रं कुर्वाणैः होत्रादिभिः Sy.

१४. यः वैश्वानरः अग्निः Sy.

१५. प्रतिदिनम् । 'नित्यवीप्सयोः' इति द्विर्वचनम् । परस्याम्रेडितत्वादनुदात्तत्वे पूर्वपदप्रकृतिस्वरः Sy.

१६. Omitted in P.

१७. M. reads पुष्यस्यत्रः for पोष्यते पुत्रः ।

१८. त्पिता P.

प्रज्वलयन्ति । सः[1] । अस्मभ्यम्[2] । शोभनवीर्यम्[3] । शोभनाश्वयुक्तं[4] च । रत्नम्[5] । प्रयच्छतु[6] । देवेषु[7] । जागरणशीलः[8] ।[9]

प्र य॑न्तु॒ वाजा॒स्तवि॑षीभिर॒ग्नयः॑ शु॒भे संमि॑श्लाः॒ पृष॑तीरयुक्षत ।
बृ॒हदु॑क्षो म॒रुतो॑ वि॒श्ववे॑दसः॒ प्र वे॑पयन्ति॒ पर्व॑ताँ॒ अदा॑भ्याः ॥ ४ ॥

प्र यन्तु ॥ मारुतस्तृचः ॥ प्रगच्छन्तु[10] । बलिनः[11] । वैद्युता[12] अग्नयः । मरुद्भिः[13] । उदकार्थम्[14] । सङ्गताः[15] । आत्मीया अश्वाः[16] । योजयन्तु[17] । प्रभूतं सिञ्चन्तः[18] । सर्वस्य[19] वेदितारः ।

---

१. सोऽग्निः Sy. २. अस्माकम् Sy.
३. शोभनापत्ययुक्तम् Sy.
४. शोभनाश्वादिपशुयुक्तम् । स्वश्व्यम्—अश्वशब्दः क्वन्प्रत्ययान्त आद्युदात्तः । बहुव्रीहौ 'आद्युदात्तं द्व्यच् छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । यकारोपजनश्छान्दसः । यद्वा अश्वेषु साधवोऽश्व्याः 'तत्र साधुः' इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । बहुव्रीहौ पूर्वोक्तस्वरः Sy.
५. उत्तमं धनम् । रत्नम्—'रमु क्रीडायाम्' । 'रमेस्त च' इत्यधिकरणे नप्रत्ययस्तकारश्चान्तादेशः । रमन्तेऽस्मिन्निति रत्नम् । 'नित्' इत्यनुवृत्तावाद्युदात्तः Sy.
६. ०च्छत M. विदधातु प्रयच्छतु । दधातेर्लोटि रूपम् Sy.
७. मरणधर्मरहितेषु देवेषु मध्ये Sy.
८. ज्वालया जाग्रत् दीप्यमानः । जागृविः—क्विन्प्रत्ययान्तः । नित्त्वादाद्युदात्तः Sy.
९. VM. ignores अग्निः ।
१०. प्रयच्छ० P. जलमभिलक्ष्य अनुलक्ष्य वा गच्छन्तु Sy.
११. वेगवन्तः Sy. १२. ०द्युतो M.
१३. तविषीभिर्बलयुक्तैः । 'तव गतौ' इति सौत्रो धातुः । अस्मात् 'तवेर्णिद्वा' इति टिषच् णिच्च । तवन्ति सञ्चरन्त्याकाश इति तविषा वायवः । 'टिड्ढाणञ्०' इति ङीप् । लिङ्गव्यत्ययः । नित्त्वादाद्युदात्तः Sy.
१४. ०कार्यं P. जले Sy. शुभमित्युदकनाम Ngh. 1. 12.
१५. परस्परं सङ्गताः सन्तः Sy.
१६. बिन्दून् । पृषतीः—'पृषु सेचने' । 'पृ पालनपूरणयोः' इति वा । अस्माद् 'वर्तमाने पृषद्बृहन्महत्०' इति निपातनादतिप्रत्ययः शतृवद्भवति । 'उगितश्च' इति ङीप् । पृषन्तीति पृषत्यः शीकराः । पृणन्ति पालयन्तीति पृषत्यो वडवाः Sy.
१७. ०जन्तु P. अयुञ्जन् । जले बिन्दून् कुर्वन् । यद्वा वाजा वेगवन्तोऽग्नयस्तविषीभिर्बलयुक्तैर्मरुद्भिर्जलमनुलक्ष्य यन्तु गच्छन्तु । ते च मरुतः शुभे जले सम्मिश्ला अग्निभिः सङ्गताः सन्तः पृषतीश्चित्रवर्णा वाहनरूपा वडवा अयुक्षत । रथे मेघभेदनार्थं ता अयौक्षुः । अयुक्षत—'युजिर् योगे' इत्यस्य लुङि सिचि रूपम् । निघातः Sy.
१८. प्रभूतसेक्तॄन् । बृहदुक्षः—'उक्ष सेचने' इत्यस्मात् क्विप् । कृदुत्तरपदप्रकृतिस्वरः Sy. १९. रथारूढास्ते प्राणिकृतकर्माभिज्ञानयुक्ताः Sy.

केनचिदप्यहिंसिताः[1] । प्रकम्पयन्ति[2] । मेघान्[3] ।[4]

**अ॒ग्नि॒श्रियो॑ म॒रुतो॑ वि॒श्वकृ॑ष्टय॒ आ त्वे॒षमु॒ग्रमव॑ ईमहे व॒यम् ।**
**ते स्वा॒निनो॑ रु॒द्रिया॑ व॒र्षनि॑र्णिजः सिं॒हा न हे॒षक्र॑तवः सु॒दान॑वः ॥ ५ ॥**

अग्निश्रियः[5] । वैद्युतमग्निं[6] श्रयन्तः । विश्वस्याक्रष्टारः[7] । मरुतः[8] । तेषां[9] दीप्तम् । उद्गूर्णम्[10] । गमनम्[11] । वयम्[12] । आयाचामहे[13] । ते[14] । शब्दवन्तः[15] । रुद्रपुत्राः[16] । वर्षरूपाः[17] । सिंहाः । इव । शब्दायमाना[18] गमनकर्माणः । शोभनदानाः[19] ।

---

१. केनाप्यतिरस्कार्याः Sy.

२. यथा प्रभूता वृष्टिर्भवति तथा मेघान् चालयन्ति । वेपयन्ति—'वेपृ कम्पने' निघातः Sy.

३. पर्वतान्—'पर्व पूरणे' इत्यस्मात् 'भृमृदृशि०' इत्यादिना अतच् । पर्वति पूरयति भूमिमुदकेनेति पर्वतो मेघः व्यत्ययेनाद्युदात्तः Sy.

४. VM. ignores मरुतः ॥ एवंविधा वायवः Sy.

५. अश्रि० P.

६. अग्निश्रियः–'श्रिञ् सेवायाम्' । 'क्विब्वचिप्रच्छि०' इत्यादिना क्विप् सम्प्रसारणाभावो धातोर्दीर्घश्च । जसि इयङादेशः । कृत्स्वरः Sy.

७. ०स्याकृष्टा० D. विश्वस्य वृक्षादेः कृष्टिराकर्षणं नमनोन्नमनादिलक्षणं कर्म येभ्यो भवति ते विश्वकृष्टयः Sy.

८. एवंविधा ये मरुतो विद्यन्ते Sy.

९. तेषां च मरुतां दीप्तम् Sy.

१०. उग्रम्—'गम्लृ गतौ' उत्पूर्वः । 'ऋज्रेन्द्राग्र०' इति निपातनाद्रप्रत्ययो मकारलोप उपसर्गस्यान्तलोपश्च । उद्गच्छतीत्युग्रः । प्रत्ययस्वरः Sy.

११. अवो रक्षणम् Sy.

१२. ०यव् P. कुशिकाः Sy.

१३. आ समन्ताद्याचामहे । ईमहे—'ई कान्तिगत्यादिषु' । व्यत्ययेनात्मनेपदम् । अदादित्वाच्छपो लुक् । निघातः Sy.

१४. मरुतः Sy.

१५. स्वानो घञन्तः । तद्वन्तः । स्वानिनः—'अत इनिठनौ' इतीनिः । प्रत्ययस्वरः Sy.

१६. रुद्र P. रुद्रियाः— रुद्रशब्दाच्छान्दसो घः । तस्येयादेशः । प्रत्ययस्वरः Sy.

१७. वर्षनिर्णिजः निर्णिक्शब्दो रूपवाची । वर्षणं रूपं स्वभावो येषां ते वर्षनिर्णिजो वर्षकाः Sy. निर्णिक्, वव्रिः, इति रूपनामनी Ngh. 3. 7.

१८. हेषारवस्य क्रतुः करणं येषां ते कृतहेषारवाः Sy.

१९. सुष्ठु जलस्य दातारो भवन्ति Sy.

व्रातंव्रातं गणंगणं सुशस्तिभिरग्नेर्भामं मरुतामोज ईमहे ।
पृषदश्वासो अनवभ्रराधसो गन्तारो यज्ञं विदथेषु धीराः ॥ ६ ॥

व्रातंव्रातम्[1]। नानाजातीयानां धनानां संघातो व्रातः[2], समानजातीयानां गणः[3], अग्नेः। भानहेतुम्[4]। मरुताम्। ओजः[5]। वयं[6] स्तुतिभिः[7]। धनानि व्रातंव्रातम्[8]। गणंगणं[9] च। याचामहे[10]। पृषद्वर्णाश्वाः[11]। अनपभ्रंशितधनाः[12]। गन्तारः[13]। यज्ञम्[14]। यजमानगृहेषु[15]। धृष्टाः[16]।

---

१. व्रातं P.

२. The passage : नानाजातीयानां . . . व्रातः should immediately follow व्रातंव्रातम् in the second line.

३. The passage : समानजातीयानां गणः should immediately follow गणंगणम् in the second line

४. ०हेतुः P. भासकम् । भामम्—'भा दीप्तौ' । 'अर्तिस्तुसु०' इत्यादिना मन् । नित्स्वरः Sy.

५. तेजः। ओजः—'उब्ज आर्जवे'। 'उब्जेर्बले बलोपश्च' (Uṇādi. 4. 631.) इत्यसुन् । तत्संनियोगेन बकारलोपः । आर्धधातुकलक्षणो गुणः । नित्स्वरः Sy.

६. कुशिका वयम् Sy.

७. क्रियमाणाभिः सुशस्तिभिः । शोभनाः शस्तयः स्तुतयो यैर्मन्त्रैः क्रियन्ते ते सुशस्तयः । तैर्मन्त्रैः 'बहुव्रीहौ नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् Sy.

८. Omitted in M. व्रातेव्राते प्रतिसमूहम् Sy.

९. गणेगणे महति समूहे । 'गण संख्याने' पचाद्यच् । 'नित्यवीप्सयोः' द्विर्वचनम् । परस्याम्रेडितत्वादनुदात्तत्वे पूर्वपदस्वरः Sy.

१०. तादृशं मारुतं तेजो याचामहे । ईमहे—'ई कान्त्यादिषु' । निघातः Sy.

११. ०र्णाश्च M. पृषत्यश्चित्रवर्णा अश्वा येषां ते तादृशाः Sy.

१२. न विद्यतेऽवभ्रंशो यस्य तदनवभ्रम् । अनवभ्रं राधो धनं येषां तेऽनवभ्रष्टधनाः । सम्पूर्णधना इति यावत् । अनवभ्रम्—'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । बहुव्रीहौ पूर्वपदस्वरः Sy.

१३. गमनशीलाः । गन्तारः—ताच्छीलिकस्तृन् Sy.

१४. यजनीयं हविरभिलक्ष्य Sy.

१५. यज्ञेषु । विदथेषु—'विद ज्ञाने' । 'रुविदिभ्यां कित्' इत्यथप्रत्ययः । कित्त्वादगुणः । विदन्त्यस्मिन्कर्मजातमध्वर्य्वादय इति विदथो यज्ञः । प्रत्ययस्वरः Sy.

१६. धीराः कर्माभिज्ञास्ते मरुतः Sy.

अ॒ग्निर॑स्मि॒ जन्म॑ना जा॒तवे॑दा घृ॒तं मे॒ चक्षु॑र॒मृतं॑ म आ॒सन् ।
अ॒र्कस्त्रि॒धातू॒ रज॑सो वि॒मानोऽज॑स्रो घ॒र्मो ह॒विर॑स्मि॒ नाम॑ ॥ ७ ॥

अग्निरस्मि ॥ आत्मानं ब्रह्मावगच्छन्[1]वदति ॥ अग्निः[2] । अहमस्मि । जन्मनैव[3] तत्त्वतः[4] । तस्य मम । चक्षुः[5] । घृतं भवति, यच्चक्षुषा पश्यामि तेनाऽऽज्येनाग्निरिव प्रीतो भवामि[6] । हविः-स्थानीयमन्नम्[7] । मम । आस्ये[8]ऽन्वहं[9] प्रक्षिप्यते । तथा स्तोतव्यः[10] । त्रिगुणः[11] प्राणापानव्यानात्मकः ।

१. P. adds ऋषिः after अवगच्छन् ॥ साक्षात्कृतपरतत्त्वरूपोऽग्निर्द्वचेन स्वात्मनः सर्वात्मकत्वानुभवमाविष्करोति । हे कुशिकाः ! Sy. अग्निप्रकरणत्वाद् यजमान आत्मानमग्नित्वेन ध्यायति Mah. अविनियुक्तत्वादग्निप्रकरणाच्च यजमानदर्शनमेतत् U.

२. भोक्तृभोग्यभावेन द्विविधं ह्येदं सर्वं जगत् । 'एतावद्वा इदमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः' (BU. 1. 4. 6.) इति श्रुतिः । तत्र सकलभोक्तृवर्गरूपेणान्नादोऽग्निः । स चाग्निवाय्वादित्यभेदेन त्रेधा भूत्वा पृथिव्यन्तरिक्षद्युलोकानधितिष्ठति । तदुक्तं वाजसनेयके 'स त्रेधात्मानं व्यभजत । आदित्यं तृतीयं वायुं तृतीयम्' (BU. 1. 2. 3.) इति । तत्र सोऽग्निरहम् Sy. अग्निरूपः Mah.

३. मन्म० P. उत्पत्त्यैव Mah., U.

४. तत्वतः P.

५. घृतं मे चक्षुः । यदेतद्विश्वस्य विभासकं मम स्वभावभूतप्रकाशात्मकं चक्षुः । इदानीमत्यन्तं दीप्तम् । 'चक्षिङ् व्यक्तायां वाचि' । उसन्नित्यनुवृत्तौ 'चक्षेः शिच्च' इत्युसन् । शिद्वद्भावात् ख्याञादेशाभावः । नित्स्वरः Sy. एतादृशोऽग्निरहं यतस्ततो घृतं मे मम चक्षुर्नेत्रम् Mah.

६. घृतहोमिनं पश्यामीति भावः Mah. 'घृतहोमिनमहं पश्यामि' इत्येतदभिप्रायम् U.

७. यदेतदमृतं कर्मफलं दिव्यादिव्यविविधविषयोपभोगात्मकं तत् । अमृतं हविः Mah.

८. अन्यस्य P. आसन्—आस्यशब्दस्य 'पद्दन्नोमास्०' इत्यादिनासन्नादेशः । 'सुपां सुलुक्०' इति सप्तम्या लुक् Sy.

९. ह्वं P. मन्मुखे हविर्जुह्वन्तममृतं करोमीति भावः Mah. यो हि मम मुखे हविर्जुहोति तमहममृतं करोमीति U.

१०. ०तव्यं P. एवं स्वात्मनः पृथिव्यधिष्ठातृरूपतामभिधाय वाय्वात्मनान्तरिक्षाधिष्ठातृतामाह—अर्को जगत्स्रष्टा प्राणः । 'सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्तार्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वम्' (SB. 10. 6. 5. 1.) इति श्रुतेः । स प्राणोऽहम् Sy. अर्चनीयो यज्ञोऽप्यहमेव Mah. अर्चनीयो यज्ञोऽस्मि U.

११. त्रिधातुः । त्रेधात्मानं विभज्य तत्र वाय्वात्मना Sy. त्रयो धातव ऋग्यजुःसामलक्षणा यस्य Mah. त्रिधातुः ऋग्यजुःसामभिः U.

अन्तरिक्षलोकस्य[१] । निर्माता[२] वायुश्चास्मि । तथाऽनवरतो[३]ऽक्षरदीप्तिः[४] । आदित्य[५]श्चाहमस्मि, तिस्र एवेह देवता[६]स्ता अहमिति । तथाऽग्न्यादिनामकम्[७] । हविश्च[८] । अहमेवास्मि ।[९]

---

१. रजसोऽन्तरिक्षस्य Sy. रज उदकं तस्य Mah. उदकस्य U.

२. विमानो विमाताधिष्ठातास्मि । 'माङ् माने' । 'कृत्यल्युटो बहुलम्' इति कर्तरि ल्युट् । लित्स्वरः Sy. विमिमीत इति- विमानः । नन्द्यादित्वात् कर्तरि ल्युः Mah.

३. तदानुपदस्तान॰ M. तथानवरत P. तथादित्यरूपेण द्युलोकाधिष्ठातृतामाह– अजस्रोऽनुपक्षीणः । अजस्रः–'जसु मोक्षणे' । नञ्पूर्वः । 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' (Pa. 3. 2. 167.) इति ताच्छीलिको रप्रत्ययः । नञ्पूर्वको जसिर्नैरन्तर्ये वर्तते । नञ्स्वरः । 'जसु उपक्षये' वा Sy. न जसति क्षीयत इत्यजस्रः । अनुपक्षीणः । 'जसु उपक्षये' Mah. अनुपक्षीणः U.

४. क्षर॰ M.
क्षद्दीप्तिः P.

५. M. adds इति after अस्मि ॥ घर्मः प्रकाशात्मा द्युलोकाधिष्ठातादित्योऽहमस्मि Sy. 'घृ क्षरणदीप्त्योः' । जिघर्ति घर्म औणादिको मप्रत्ययः । दीप्त आदित्यरूपः क्षरणो मेघरूपो वा Mah. घर्मो दीप्त उदकरक्षणो ? (॰क्षरणो) वाऽऽदित्योऽहमस्मि U.

६. Cf. N. 7. 5.

७. ॰दीनां नाम॰ M. ॰दिननाम P. नाम विभक्तिलोपः । नाम्ना Mah. नामशब्दस्य कृतविभक्तिव्यत्ययस्य, अस्मिशब्दस्य च सर्वत्र सम्बन्धः U.

८. एवं भोक्तृरूपमात्मनोऽनुसन्धाय भोग्यरूपतामप्यनुसन्धत्ते—यद्धविर्भोग्यं प्रसिद्धमस्ति तदप्यहमेवास्मि । यद्वाहमग्निरस्मि । देवानां हविष्प्रापणादङ्गनादिगुणयुक्तोऽस्मि । किञ्च जन्मनोत्पत्त्या जातवेदा जातप्रज्ञोऽस्मि । उत्पत्तिक्षण एव सर्वज्ञोऽहमस्मि । अथवा जातं सर्वं स्वात्मरूपतया वेत्तीति जातवेदाः । सर्वात्मक इत्यर्थः । तत्कथम् ? इत्युच्यते । घृतं मे चक्षुः । यदेतद् घृतं प्रसिद्धमस्ति तन्मे चक्षुःस्थानीयम् । यथा लोके चक्षुर्भासकम् एवं घृतं मयि प्रक्षिप्तं ज्वालामुत्पादयन् मम भासकम् । अमृतं प्रभारूपं यदमृतमविनाशि ज्योतिर्मे ममासन् आस्ये वर्तते । त्रिधातुः प्राणापानव्यानात्मना त्रिधा वर्तमानोऽर्कोऽर्चनीयो यः प्राणोऽस्ति सोऽप्यहमेवास्मि । तथा च रजसोऽन्तरिक्षस्य विमानो विशेषेण माता परिच्छेत्ता वायुश्चाहमस्मि । किञ्च अजस्रो घर्मो नैरन्तर्येण सन्तापकारी सूर्यश्चाहमस्मि । किं बहुना ? आज्यपुरोडाशादि यदेतद्धविरस्ति तदुपलक्षितं सर्वमप्यहमस्मि । 'सर्वं खल्विदं ब्रह्म' इति श्रुतेः । नामशब्दः प्रसिद्धौ । तदनेनाग्नेः सर्वात्मकत्वप्रतिपादनेन परब्रह्मत्वमुक्तं भवति Sy. हविःपुरोडाशादिकमपि Mah. किञ्च हविरपि U.

९. VM. ignores जातवेदाः ॥ जातवेदाः —साक्षात्कृतपरतत्त्वस्वरूपोऽस्मि Sy. जातं जातं विन्दत इति जातवेदाः । उत्पन्नस्य सर्वस्य स्वामीत्यर्थः Mah. 'अथ ह वै रेतः सिक्तं प्राणोऽन्ववरोहति । तद्विन्दते तद्यज्जातं–जातं विन्दते तस्माज्जातवेदाः' (SB. 9. 5. 1. 68.) इत्येतदभिप्रायम् U.
This stanza=YV. 18. 66.

त्रिभिः पवित्रैरपुपोद्ध्य१र्कं हृदा मतिं ज्योतिरनु प्रजानन् ।
वर्षिष्ठं रत्नमकृत स्वधाभिरादिद्द्यावापृथिवी पर्यपश्यत् ॥ ८ ॥

त्रिभिः[1] । हृदयेन[2] । पूज्यम्[3] । आत्माख्यं ज्योतिः[4] । अनुप्रजानन्[5] मनुष्यः । त्रिभिः । पवित्रै[6]रग्निवायुसूर्यैः । दशापवित्रेण सोममिवार्चनीय[7]मात्माख्यं ज्योतिः । शोधयति[8] । हि, त्रिभिरेतैः परिवृतः[9] परमात्मेत्यव[10]गच्छत्येक एव महानात्मा भवत्यग्निवायुसूर्यशरीर इति । तथा[11] च[12] जानन् वृद्धतरम्[13] । गवादिकं[14] रत्नम् । अन्नैः[15] सह । आत्मनि करोति[16] । तथैकत्रैवा[17]वस्थितो-ऽनन्तरम्[18] । एव । द्यावापृथिवी[19] । परितः[20] । पश्यति[21] ।

---

१. सर्वात्मकोऽग्निः Sy.

२. अन्तःकरणवृत्त्या । हृदा—हृदयशब्दस्य 'पदन्नोमास्' इत्यादिना हृदादेशः Sy.

३. मननीयम् । मतिम्—'मन ज्ञाने' । 'मन्त्रे वृषेषपच' इत्यादिना कर्मणि क्तिन् उदात्तः Sy.

४. ज्योति P. स्वप्रकाशरूपं परब्रह्माख्यं तेजः Sy.

५. नुप्र० P. श्रवणमननादिक्रमेण प्रकर्षेण संशयविपर्यासभावनाबुद्धिनिरासेन स्वात्मरूपतया जानानः सन् Sy.

६. पावनैः । पवित्रैः—'पूञ् पवने' । अस्मात् 'कर्तरि चर्षिदेवतयोः' (Pa.3.2.186.) इति देवतायामभिधेयायां कर्तरि इत्रप्रत्ययः । पुनन्तीति पवित्रा अग्निवायुसूर्याः । प्रत्ययस्वरः Sy.

७. स्वात्मानम् । अर्कम्—'अर्च पूजायाम्' । 'कृदाधारार्चिकलिभ्यः कः' इति कप्रत्ययः Sy.

८. तेभ्योऽपि निर्मलतया पावनं परिचिच्छेद खलु । यथा दशापवित्रेण सोमं पावयति तद्वत् । अपुपोत्—'पूञ् पवने' इत्यस्य यङ्लुगन्तस्य रूपम् । संज्ञापूर्वकस्य विधेरनित्यत्वादभ्यासस्य गुणाभावः । 'यद्धितुपरं छन्दसि' (Pa.8.1.56.) इति न निघातः Sy.

९. ०वृवृतं P.

१०. ०गत्य एक P.

११. Omitted in P.

१२. जान P.
जानानोऽग्निः Sy.

१३. ०द्धत्तं M.
उत्तमम् Sy.

१४. रमणीयम् Sy.

१५. स्वेन लोकान्दधातीति स्वधा । तैरग्निवायुसूर्यैः Sy.

१६. अकार्षीत् । अकृत—करोतेर्लुङि सिच् । तस्य 'ह्रस्वादङ्गात्' इति लोपः Sy.

१७. ०त्रैवचस्मिन्स्थि० P.

१८. अनन्तरमेवमात्मनि ज्ञाते सति Sy.

१९. तत्र परिकल्पिते द्यावापृथिव्यौ तदुपलक्षितं सर्वं जगच्च । द्यावापृथिवी—'देवताद्वन्द्वे च' इत्युभयपदप्रकृतिस्वरः Sy.

२०. सर्वतः Sy.

२१. स्वात्मतयादर्शत् । 'आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति' इति श्रुतेः Sy. Cf. आत्मनि वाऽरे दृष्टे श्रुते मते विज्ञात इद ꣳ सर्वं विदितम् SB. 14.7.3.6.

शुतधारमुत्समक्षीयमाणं विपश्चितं पितरं वक्त्वानाम् ।
मेळिं मदन्तं पित्रोरुपस्थे तं रोदसी पिपृतं सत्यवाचम् ॥ ९ ॥

शतधारम् ॥ इयं ब्रह्मविद्याप्रदातुरुपाध्यायस्य स्तुतिः । बहूनामर्थानामुपदेशे-ऽप्यक्षीयमाणः । अनेकज्ञानोदकधारः । उत्स इव भवत्युपाध्यायः, तम् । प्राज्ञम् । वक्तव्यानाम् । पितरमुत्पत्तिस्थानम् । वाचो मिश्रयितारं शिष्यस्य । द्यावापृथिव्यो-रुभयोरपि । उत्सङ्गे । मादयन्तम् । तमिमम् । पारयतं नयतम् । हे द्यावापृथिवी ! यः सत्यमेव वक्तीति ।

---

१. द्याव्रतादा P.

२. यस्मादुपाध्यायाद्विश्वामित्रो वैश्वानराख्यं परं ब्रह्माज्ञासीत्तमिममुपाध्यायमनयर्चा स्तौति Sy.

३. ०मर्त्या० P.

४. न कदापि विच्छिन्नप्रवाहम् Sy.

५. येनज्ञानोदकधाराः P. अपरिमितजल-धारायुक्तम् Sy.

६. शतप्रवाहोपेतं स्रोत इवाविच्छिन्नप्रवाक्-सरणीसमेतम् । उत्सम्—'उन्दी क्लेदने' । अस्मात् 'उन्धमिगुधिकुषिभ्यः कित्' (Uṇādi 3. 348.) इति सप्रत्ययः । कित्त्वान्नकारलोपः । उनत्तीत्युत्सः । व्यत्ययेनाद्युदात्तः Sy.

७. ०ध्यायं P.

८. मेधाविनं सकलशास्त्राभिज्ञम् । विपश्चि-तम्—विशेषेण पातीति विपा वाक् । विपो वाचश्चिनोतीति क्विप् । 'ह्रस्वस्य पिति—' इति तुक् । 'तत्पुरुषे कृति बहुलम्' इति बहुलवचनाद् द्वितीयाया अप्यलुक् । कृदुत्तरपदस्वरः Sy.

९. वक्तव्यानां वेदवाक्यानाम् । वक्त्वा-नाम्—'वच परिभाषणे', अस्मात्कृत्यार्थे 'तवैकेन्केन्यत्वनः' इति त्वन्प्रत्ययः । 'चोः कुः' इति कुत्वम् । नित्स्वरः Sy.

१०. शिष्याणां विद्योपदेशेन पालकम् Sy.

११. ०मुनं M.

१२. ०यिता P. तमिममुपाध्यायम् । मेलकं नानाशाखागतानां वाक्यानामेकस्मिन्नर्थे सङ्कुलय्य वक्तारम् । मिलिः सम्पर्कार्थो धातुः । अस्मादौणादिक इप्रत्ययः Sy.

१३. समीपे Sy.

१४. ज्ञानातिशयेन हृष्यन्तम् Sy.

१५. नतं P. अपेक्षितफलप्रदानेन सम्पूर्णं कुरुतम् । यद्वा पालयतम् । पिपृतम्—'पॄ पालनपूरणयोः' । छान्दसो जुहोत्यादिः । 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्येत्वम् । निघातः Sy.

१६. हे द्यावापृथिव्यौ ! आमन्त्रितत्वान्नि-घातः Sy.

१७. अज्ञातार्थाभावात्परप्रतारणे च कारणा-भावात्सत्यवादिनम् Sy.

## III. 27.

प्र वो॒ वाजा॑ अ॒भिद्य॑वो ह॒विष्म॑न्तो घृ॒ताच्या॑ । दे॒वाञ्जि॑गाति सुम्न॒युः ॥ १ ॥

प्र वो वाजाः। 'सैषाऽऽग्नेयी सत्यनिरुक्ता' इति वाजसनेयकम्। 'आद्या ऋतुदेवता वा' इत्युक्तमिति, 'मासा वै वाजाः। अर्धमासा अभिद्यवः। देवा हविष्मन्तो गौर्घृताची' इति

१. 'प्र वो वाजाः' इति पञ्चदशर्चं पञ्चदशं सूक्तम् । अत्रानुक्रमणिका 'प्र वः पञ्चोना गायत्रं त्वृतव्या वाद्या'(KSA. 17.27. p. 15.) इति । विश्वामित्र ऋषिः । गायत्री छन्दः । अग्निर्देवता । आद्या ऋतुदेवत्या वा । प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रे छन्दस्यस्य सूक्तस्य विनियोगः । 'प्र वो वाजा उपसद्याय' (ASS. 4.13.) इति । आभिप्लविकेषूक्थ्येषु 'प्र वो वाजाः' इति वैकल्पिकः स्तोत्रियस्तृचः । सूत्रितं च 'प्र वो वाजा अभिद्यवोऽभि प्रयांसि वाहसा' (ASS. 7.8.) इति । सूक्तस्याद्या सामिधेनी । सूत्रितं च 'प्र वो वाजा अभिद्यवोऽग्न आ याहि वीतये' (ASS. 1.2.)इति । सामिधेनीषु 'समिध्यमानः' इत्येका । सूत्रितं च 'समिध्यमानो अध्वरे समिद्धो अग्न आहुतेति द्वे (ASS. 1.2.) इति । आधाने तृतीयायामिष्टौ सामिधेनीष्विध्यमानेद्धवत्योर्मध्ये 'पृथुपाजाः' इति द्वे धाय्ये । सूत्रितं च 'प्रागुपोत्तमायाः पृथुपाजा अमर्त्य इति द्वे' (ASS. 2.1.) इति । एवमन्यत्रापि यत्र यत्र सप्तदश सामिधेन्यस्तत्र तत्रैते धाय्ये इति द्रष्टव्यम् । विषुवत्येकविंशतिः सामिधेन्यः । तत्र 'पृथुपाजा अमर्त्यः' इति षड्चो धाय्याः । 'पृथुपाजा अमर्त्य इति षड् धाय्याः सामिधेनीनाम्' (ASS. 8.6.) इति सूत्रितम् । महाव्रतेऽपि पञ्चविंशतिसंख्याकाः सामिधेन्यः । तत्राप्येताः षड्चो द्रष्टव्याः । अग्नीषोमप्रणयने 'होता देवो अमर्त्यः' इति तृचः । सूत्रितञ्च "होता देवो अमर्त्यः पुरस्तादुप त्वाग्ने दिवेदिवे' (ASS. 4.10.) इति । 'ईळेन्यो नमस्यस्तिरः' इति तिस्रः सामिधेन्यः । सूत्रितञ्च 'ईळेन्यो नमस्यस्तिरोऽग्निं दूतं वृणीमहे' (ASS. 1. 2.) इति Sy.

२. हे ऋतवः ! Sy.

३. त्यनिरुक्तेन P.

४. वाजसने व्यक्तं M. SB. 1.4.1.26.

५. Cf. KSA. 17.27. p. 15.

६. वाजा P. वजन्ति गच्छन्तीति वाजा मासाः Sy.

७. अभितो द्यवो दिवसा येष्वित्यभिद्यवः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः Sy.

८. हविर्भाजो देवाः Sy.

९. Omitted in P. TS. 2.5.7.4.

ब्राह्मणम्। घृताच्या[१] सह। युष्माकम्[२]। एते यज्ञकारणभूता वाजादयः प्रभवन्ति देवाश्च। यज्ञेन[३] सुम्नमिच्छन् यजमानः। गच्छति[४]। 'यजमानो वै सुम्नयुः[५], स देवान् जिजीषति[६], स देवान् जिगांसति' इति[७] ब्राह्मणमिति। 'पशवो हविष्मन्तः, स्रुग्[८]घृताची' इति वाजसनेयकमित्युत्तरत्र सम्बन्धः[९]।

**ईळे अग्निं विपश्चितं गिरा यज्ञस्य साधनम्। श्रुष्टीवानं धितावानम्॥ २॥**

ईळे। स्तौमि[१०]। अग्निम्। प्राज्ञम्[११]। स्तोत्रेण[१२]। यज्ञस्य। साधयितारम्[१३]। क्षिप्रकर्म[१४]-युक्तम्। निहितहविष्कं[१५] यजमानैः।

---

१. घृतमञ्चतीति घृताची गौः। यद्वा हविष्मन्तो हविषः क्षीरादेः प्रदातारः पशवः। घृताच्या घृतमञ्चति प्राप्नोतीति घृताची स्रुक्।. . .तया घृताच्या सहिता हविष्मन्तो देवाः पशवश्च मासाश्चार्धमासाश्चेति सर्वे। घृताच्या—'घृ क्षरणदीप्त्योः' अस्माद् 'अञ्जिघृषिभ्यः क्तः' (Uṇādi 3.369.) इति कर्मणि क्तः। घृतमाज्यमञ्चतीति। "ऋत्विग्दधृक्—' इत्यादिना क्विन्। 'अनिदिताम्' इत्युपधालोपः। 'अञ्चतेश्चोपसंख्यानम्' इति ङीप्। 'चौ' इति पूर्वपदान्तोदात्तत्वम् Sy.

२. युष्माकं यजनार्थं प्रभवन्ति Sy.

३. यजेन M. तेषु वाजादिषु प्रभवत्सु सत्सु सुखमात्मन इच्छन्। सुम्नयुः—सुम्नं सुखमात्मन इच्छन्निति। 'सुप आत्मनः क्यच्', 'क्याच्छन्दसि' इत्युः। प्रत्ययस्वरः Sy.

४. यज्ञद्वारा देवान् प्राप्नोति। जिगाति—गातिर्गत्यर्थः। छान्दसो जुहोत्यादिः। निघातः Sy.

५. °म्नयु P.

६. जयति P.

७. TS. 2.5.7.4.

८. स्रुघृ° M. स्रुर्घृ° P. Cf. पशवो वै हविष्मन्तः SB. 1.4.1.9.

९. उक्तार्थं तैत्तिरीयब्राह्मणम्। 'प्र वो वाजा इत्यन्वाह मासा वै वाजा अर्धमासा अभिद्यवो देवा हविष्मन्तो गौर्घृताची यज्ञो देवान् जिगाति यजमानः सुम्नयुः' (TS. 2.5.7.4.) इति Sy.

१०. विश्वामित्रोऽहं स्तौमि। 'ईड स्तुतौ' Sy.

११. मेधाविनम् Sy.

१२. स्तोत्रे P. स्तुतिलक्षणया वाचा Sy.

१३. निर्वाहकम् Sy.

१४. सुखवन्तं यद्वा वेगवन्तम्। श्रुष्टीवानम्—'वन षण सम्भक्तौ' इत्यस्माद्विच्। श्रुष्टी वनतीति श्रुष्टीवा। कृदुत्तरपदस्वरः Sy.

१५. वानं वननीयं धनं धितं निहितं यस्य तं निहितधनम्। धितावानम्—दधातेर्निष्ठायां धिरादेशश्छान्दसः। 'वन सम्भक्तौ' कर्मणि घञ्। बहुव्रीहौ 'निष्ठा' (Pa. 2.2.36.) इति धितशब्दस्य पूर्वनिपातः। पूर्वपदप्रकृतिस्वरः Sy.

अग्नें शकेमं ते वयं यमं देवस्यं वाजिनंः । अति द्वेषांसि तरेम ॥ ३ ॥

अग्ने शकेम । अग्ने ! कर्तुं समर्था[1] भवाम । सङ्ग्रहणम्[2] । तव । देवस्य[3] । बलवतः[4] । अति शत्रून्[5] । चरेम[6] तव प्रसादात्[7] ।

उत्तरा निगदव्याख्याता ।

समिध्यमानो अध्वरे३ऽग्निः पावक ईड्यः । शोचिष्केशस्तमीमहे ॥ ४ ॥

[ समिध्यमानः ][8]

पृथुपाजा अमंर्त्यो घृतनिर्णिक्स्वाहुतः । अग्निर्यज्ञस्यं हव्यवाट् ॥ ५ ॥

पृथुपाजाः[9] । पृथुतेजाः[10] । अमर्त्यः[11] । क्षरद्रूपः[12] । सुष्ठ्वाहुतः[13] । अग्निः ।

---

१. ०मर्त्था P. कर्तुं . . . शक्यास्म । शकेम—'शक्लृ शक्तौ' इत्यस्याशीर्लिङि 'लिङ्याशिष्यङ्' इत्यङ्प्रत्ययः । 'किदाशिषि' इति यासुट्, सलोपेयादेशयलोपगुणसलोपाः । आमन्त्रितस्याविद्यमानत्वेन पादादित्वादनिघातः । उदात्तनिवृत्तिस्वरः Sy.

२. यमनम् । आ यज्ञसमाप्तेरत्रावस्थानम् । यमम्—'यम उपरमे' इत्यस्माद् भावे घञ् । 'यम उपरमे' इति निपातनाद् वृद्ध्यभावः । ञित्स्वरः Sy.

३. P. adds प्रणीयमानस्य पुरस्तात् after देवस्य ॥ द्योतमानस्य Sy.

४. सम्भृतहविष्काः . . . वेगवतो देवस्येति वा योजनीयम् Sy.

५. ०शत्रुः P. ततः कारणात् अस्मदीयानि पापानि Sy.

६. पापेभ्य उत्तीर्णा भवेम । 'तॄ प्लवनतरणयोः' । प्रार्थने लिङि रूपम् । निघातः Sy.

७. VM. ignores वयम् ।

८. The *pratika* written in a later hand is found in M. only. Sy. explains this stanza in the following manner :—

योऽग्निरध्वरे यज्ञे समिध्यमानो घृताज्याहुतिभिः सम्यक् प्रज्वाल्यमानोऽत एव शोचिष्केशो ज्वालाकेशः पावकः शोधक ईड्यः स्तोतृभिः प्रशस्यो भवति तमिममभिमतफलार्थमीमहे । वयं याचामहे । ईड्यः—'ईड स्तुतौ' इत्यस्माण्ण्यत् । तस्य 'तित्स्वरितम्' इति स्वरितत्वे प्राप्ते 'ईडवन्द'—इत्यादिनाऽऽद्युदात्तत्वम् । ईमहे—'ई कान्त्यादिषु' । अयं धातुरत्र याच्ञार्थः । निघातः ।

९. पृथुवाजाः P.

१०. प्रभूततेजोरूपः । कृदुत्तरपदस्वरः Sy.

११. मरणधर्मरहितः Sy.

१२. घृतनिर्णिक् । घृतस्य विलयनद्वारा शोधनं येनेति घृतनिर्णिक् Sy.

१३. सुष्ठु होत्रादिभिः सम्यगिष्टः । स्वाहुतः—जुहोतेः कर्मणि क्तः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् Sy.

यज्ञस्य[1]। हविषो[2] वोढा, उत्तरत्र सम्बन्धः[3]।

**तं सुबाधो यतस्रुच इत्था धिया यज्ञवन्तः । आ चक्रुरग्निमूतये ॥ ६ ॥**

तं सबाधः[4]। तम्[5]। अग्निम्। बाधासहिताः[6] शत्रुभिः पीड्यमानाः[7]। गृहीतस्रुचः[8]। इत्थम्[9]। कर्मणा[10]। यज्ञवन्तः[11]। आभिमुख्येन[12]। चक्रुः[13]। रक्षणाय[14]।

**होता देवो अमर्त्यः पुरस्तादेति मायया । विदथानि प्रचोदयन् ॥ ७ ॥**

होता। होता[15]। देवः[16]। अमर्त्यः[17]। अस्य प्रणीयमानस्य पुरस्तात्[18]। गच्छति[19]। माययाऽपि[20],

---

१. ज्योतिष्टोमादेः Sy.

२. हव्यानां वोढा भवति । हव्यवाट्—'वहश्च' इति ण्विः Sy.

३. ०रसं० P.

४. P. omits the *pratika*.

५. एवम्भूतम् Sy.

६. ०धास्स० P. रक्षोघ्नमन्त्रोच्चारणेन तद्विषयबाधा सह वर्तन्त इति सबाधः। सबाधः—'बाधृ विलोडने' इत्यस्मात् क्विप् । कृदुत्तरपदस्वरः Sy.

७. ०भिर्दीप्यमा० P.

८. यताः संयताः स्रुचो जुह्वाद्या यैस्ते यतस्रुचः । ऋत्विजः Sy.

९. अनेन प्रकारेण । इत्था—इदंशब्दात्प्रकारार्थे 'इदमस्थमुः'। तस्य 'सुपां सुलुक्' इति डादेशः। उदात्तनिवृत्तिस्वरेणान्तोदात्तः Sy.

१०. क्रियमाणया धिया स्तुत्या Sy.

११. यजनीयहविर्युक्ताः Sy.

१२. अभिमुखम् Sy.

१३. कुर्वन्ति । चक्रुः—'डुकृञ् करणे' इत्यस्य लिट्युसि यणादेशे कृते 'द्विर्वचनेऽचि' इति स्थानिवद्भावाद् द्विर्वचनम्। निघातः Sy.

१४. राक्षसबाधाद् रक्षणाय Sy.

१५. होमनिष्पादकः Sy. अग्निषोमीयप्रणयनेऽग्निरुच्यते SKN. आह्वाता Dur.

१६. द्योतमानः Sy. अग्निः Dur.

१७. मरणधर्मरहितः Sy. अमरणधर्माग्निः SKN., Dur.

१८. कर्मप्रारम्भकाल एव Sy. पुरस्तात् सोमस्य प्रणीयमानस्य SKN. पुरस्तादस्य यज्ञकर्मणः सोमस्य वा प्रणीयमानस्य Dur.

१९. अस्मानागच्छति Sy.

२०. माया० M. मायया—'माङ् माने शब्दे च' इत्यस्मात् 'माच्छाससिसूभ्यो यः' इति कर्तरि कर्मणि वा यप्रत्ययः । मिमीते जानीते कर्म, मीयतेऽनयेति वा माया कर्मविषयज्ञानम् । प्रत्ययस्वरः Sy.

असुरराक्षसानां वधार्थं मायायोगः । प्रज्ञानान्यृत्विजाम् । प्रचोदयन् ।

**वाजी वाजेषु धीयतेऽध्वरेषु प्र णीयते । विप्रो यज्ञस्य साधनः ॥ ८ ॥**

वाजी वाजेषु । बलवान् । सङ्ग्रामेषु । पुरो धीयते । यज्ञेषु च । प्राच्यां दिशि नीयते । मेधावी । यज्ञस्य । साधयिता ।

**धिया चक्रे वरेण्यो भूतानां गर्भमा दधे । दक्षस्य पितरं तना ॥ ९ ॥**

धिया चक्रे । प्रज्ञया । कृतः । वरणीयोऽग्निः । इत्येतद्विशदमाह—भूतानामिति । दक्षस्य

---

१. ०धार्त्थं P.

२. मयायोगा P.

३. वेदितव्यानि कर्माणि । विदथानि–'विद ज्ञाने' इत्यस्मात् 'रुदिविदिभ्यां कित्' इति कर्मण्यथप्रत्ययः । कित्त्वादगुणः । प्रत्ययस्वरः Sy. विज्ञानानि स्वकर्मविशेषणानि SKN. एषामृत्विजां विदथानि विज्ञानानि ।. . .एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च विदथानि वेदनानि, इत्युपपद्यते Dur.

४. ०यत् P. प्रकर्षेण प्रेरयन् सोऽग्निः Sy.

ऋत्विजः प्रचोदयन्, इदमिदानीं कर्तव्यमिति प्रेरयन्निव SKN. प्रकर्षेण . . . अनुगृह्णन्नित्यर्थः Dur. N. 6. 7.; SKN. II. 415.

५. बलवानग्निः Sy.

६. युद्धेषु Sy.

७. देवैः शत्रुहननार्थं निधीयते । धीयते— दधातेः कर्मणि यक् । 'घुमास्थागापा—' इत्यादिना ईत्वम् । निघातः Sy.

८. Omitted in P. अग्निहोत्रादिषु Sy.

९. निधीय० P. अध्वर्य्वादिभिः प्रकर्षेणाहवनीयादिस्थानेषु प्रक्षिप्यते । नीयते— 'णीञ् प्रापणे' इत्यस्य कर्मणि यकि रूपम् । 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम् Sy.

१०. अत एव मेधावी सन्नग्निः Sy.

११. अग्निहोत्रादेः Sy.

१२. साधको भवति । साधनः—'साध संसिद्धौ' । नन्द्यादित्वात्कर्तरि ल्युः । लित्स्वरः Sy.

१३. योऽग्निराधानपवमानेष्टिरूपेण कर्मणा Sy.

१४. आहवनीयरूपतया कृतोऽभूत् । करोतेः कर्मणि लिटि रूपम् Sy.

१५. ०रणायो० M. अत एव सर्वैर्यजमानैः कर्माङ्गत्वेन वरणीयः Sy.

१६. यश्चाग्निर्भूतानां स्थावरजङ्गमात्मकानां भूतजातानामन्तः Sy.

१७. दक्षप्रजापतेः Sy.

मनोः । तनयेळा नाम । अग्निं सर्वेषां भूतानां गर्भम् । पातारम् । यज्ञ आदध इति । अस्योत्तरा भूयसे निर्वचनाय ।

नि त्वा॑ द॒धे॒ वरे॑ण्यं॒ दक्ष॑स्ये॒ळा स॑हस्कृत । अग्ने॑ सु॒दीति॑मु॒शिज॑म् ॥ १० ॥

नि त्वा दध इति । निदधे । त्वाम् । वरणीयम् । दक्षस्य मनोः । इळा नाम दुहिता । बलेनोत्पादित ! अग्ने ! शोभनदीप्तिम् । कामयमानं हवींषि ।

अ॒ग्निं य॒न्तुर॑म॒प्तुर॑मृ॒तस्य॒ योगे॑ व॒नुषः॑ । विप्रा॒ वाजैः॒ समि॑न्धते ॥ ११ ॥

अग्निं यन्तुरम् । अग्निम् । यन्तारम् । व्यापनशीलम् । यज्ञस्य । प्रारम्भे ।

---

१. तनया वेदिरूपा भूमिर्दर्शपूर्णमासाग्निहोत्रादिकर्मसिद्धयर्थं धारयति । भूमेर्दक्षदुहितृत्वे मन्त्रवर्णः—'अदि॑ति॒र्ह्यज॑निष्ट॒ दक्ष॒ या दु॑हि॒ता तव॑' (RV. 10.72.5.) इति । तना—यलोपश्छान्दसः Sy.

२. स्वात्मानमेव गर्भरूपतया । गर्भम्—'गॄ निगरणे' । 'अर्तिगॄभ्यां भन्' इति भन् । गिरति गीर्यते वा गर्भः । नित्स्वादाद्युदात्तः Sy.

३. P. repeats पातारं ॥ सर्वस्य जगतः पालकम् । तमिममग्निम् । पितरम्—'पा रक्षणे ।' 'नप्तृनेष्टृ' इत्यादिना तृजन्तत्वेन निपातनादित्वम् । पाति पालयतीति पिता पालकः । चित्स्वरः Sy.

४. सर्वत्र दधार । दधातेर्लिटि रूपम् Sy.

५. स्योत्त॰ P.

६. उक्तार्थोऽन्यर्चा विव्रियते Sy.

७. अग्निहोत्रादिकर्मसिद्धयर्थं नितरां दधार Sy.

८. एवंविधं त्वाम् Sy.

९. ॰णीय P.

१०. वेद्यादिलक्षणा भूमिः । इळा—'ईड स्तुतौ' । 'पुंसि संज्ञायाम्' इत्यत्र प्रायिकवचनात्स्त्र्यर्थेऽपि घप्रत्ययः । ह्रस्वश्छान्दसः । संज्ञापूर्वकस्य विधेरनित्यत्वाद् गुणः । ईडयन्ते स्तूयन्तेऽस्यां यजमानैर्देवा इतीळा भूमिः । उदात्तनिवृत्तिस्वरेणान्तोदात्तः । प्रत्ययस्वरः Sy.

११. ॰दिता M. मथनाख्येन बलेन निष्पन्न ! Sy.

१२. शोभनदीप्तियुक्तम् Sy.

१३. पुरोडाशादिहविः. . .यद्वा कर्मार्थिभिः काम्यमानम् । उशिजम्—'वश कान्तौ' इत्यस्माद् 'वशः किच्च' इतीजिप्रत्ययः । कित्त्वात्सम्प्रसारणम् । वष्टि हविः कामयते, उश्यते काम्यते कर्मार्थिभिरिति वा उशिक् अग्निः । प्रत्ययस्वरः Sy.

१४. सर्वस्य नियन्तारम् । यद्वा क्षिप्रं गन्तारम् । यन्तुरम्—वर्णव्यत्ययः । यन्तारमित्यर्थः Sy.

१५. अपां प्रेरकम् । अप्तुरम्—'तुर त्वरणे' । अपस्तुतोति त्वरयतीति क्विप् । कृदुत्तरपदप्रकृतिस्वरः Sy.

१६. सत्यभूतस्य ज्योतिष्टोमादेः Sy.

१७. प्रयोगार्थम् । योगे—'युजिर् योगे' । भावे घञ् । 'चजोः कु घिण्ण्यतोः' इति कुत्वम् । ञित्स्वरः Sy.

वननीयस्य[1] । मेधाविनः[2] । अग्नेः[3] । समिन्धते[4] ।

**ऊर्जो नपातमध्वरे दीदिवांसमुप द्यवि । अग्निमीळे कविक्रतुम् ॥ १२ ॥**

ऊर्जः । ऊर्जः[5] । पुत्रम्[6] । यज्ञे[7] । दीप्यमानम्[8] । द्युस्थान[9] उत्तरवेद्याः । समीपे । अग्निम् । स्तौमि[10] । क्रान्तप्रज्ञम्[11] ।

**ईळेन्यो नमस्यस्तिरस्तमांसि दर्शतः । समग्निरिध्यते वृषा ॥ १३ ॥**

ईळेन्यः[12] । ईडयश्च[13] । नमस्कार्यश्च[14] । तमांसि[15] । तिरः[16] । दर्शयिता[17], 'तिरो ह्येष तमांसि[18]

---

१. वनिनी० P. कर्मसिद्ध्यर्थं सम्भजमानाः । वनुषः—'वन षण सम्भक्तौ' । 'जनेरुसिः' इत्यधिकारे बहुलवचनादस्माद्युसिः । प्रत्ययस्वरः Sy.

२. मेधाविनोऽध्वर्य्वादयः Sy.

३. हविर्लक्षणैः Sy.

४. सम्यग्दीपयन्ति । 'त्रिइन्धी दीप्तौ' । निघातः Sy.

५. हविर्लक्षणैरन्नैः समिध्यमानत्वेनान्नस्य पुत्रम् । यद्वान्नस्य चतुर्थम् । यथान्नादाहुतिराहुतेरादित्य आदित्यादग्निरिति । ऊर्जः—'ऊर्ज बले' इत्यस्मात् 'भ्राजभास—' इत्यादिना ताच्छीलिकः क्विप् । ऊर्जयति शरीरमित्यूर्क् अन्नम् । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् Sy.

६. पुत्र P.

७. अस्मिन् यज्ञे Sy.

८. ०माना P.
अतिशयेन दीप्यमानम् Sy.

९. स्युस्था० P. अन्तरिक्षस्य समीपे । द्यवि—'द्युत दीप्तौ' इत्यस्मादौणादिको डुन्प्रत्ययः । द्योतते किरणसम्बन्धादिति द्युरन्तरिक्षम् । नित्स्वरः Sy.

१०. स्तुतिलक्षणाभिर्गीर्भिरहं स्तौमि । लटि रूपम् Sy.

११. कवयो मेधाविनोऽध्वर्य्वादयो मथनेन क्रतवः कर्तारो यस्येति । अध्वर्य्वादिभिर्निष्पाद्यमानं तमिमम् Sy.

१२. ईळेऽन्यः M.

१३. स्तोतृभिरीडयः । ईडेन्यः—'ईड स्तुतौ' । कृत्यार्थे 'तवैकेन्केन्यत्वनः' इति केन्यः । प्रत्ययस्वरः Sy.

१४. अत एव सर्वैर्नमस्कार्यः । नमस्यः—नमस्यतेः 'अचो यत्' इति यत् । अतोलोपयलोपौ 'तित्स्वरितम्' इति स्वरितः Sy.

१५. M. adds इति after तमांसि ॥
ध्वान्तानि Sy.

१६. स्वप्रभाभिस्तिरस्कुर्वन् Sy.

१७. कमनीयतया सर्वैर्दर्शनीयः । दर्शतः—'दृशिर् प्रेक्षणे' । अस्मात् 'भृमृदृशि—' इत्यादिना कर्मण्यतच्प्रत्ययः । चित्स्वरः Sy.

१८. ०मां स P.

ददृशे समिद्धः' इति वाजसनेयकम् । सोऽयमग्निः । समिध्यते । यज्ञे कामानां वर्षिता ।

**वृषो अग्निः समिध्यतेऽश्वो न देववाहनः । तं हविष्मन्त ईळते ॥ १४ ॥**

वृषो अग्निः । 'अश्वो ह वा एष भूतो देवेभ्यो हव्यं वहति' इति वाजसनेयकम् । वृषा । अयमग्निः । समिध्यते । अश्वः । इव । हविषां वोढा । तमिमम् । हविष्मन्तो मनुष्याः । स्तुवन्ति ।

**वृषणं त्वा वयं वृषन्वृषणः समिधीमहि । अग्ने दीद्यतं बृहत् ॥ १५ ॥**

वृषणम् । कामानां वर्षितारम् । त्वाम् । वयम् । हविषां वर्षितारः । समिधीमहि ।

---

१. मिध्यत इ० P.
२. Cf. तिर इव ह्येव तमांसि समिद्धो ददृशे समग्निः । SB. 1.4.1.29.
३. सोमम० P.
४. आहुतिप्रक्षेपेण प्रज्वाल्यते Sy.
५. यजमानस्य कामानां वर्षिता । वृषा—'वृषु सेचने' इत्यस्मात् 'कनिन्युवृषि—' इत्यादिना कनिन् । कित्त्वादगुणः । नित्त्वादाद्युदात्तः Sy.
६. उक्तार्थे वाजसनेयकम्—'ईडेन्यो ह्येव नमस्यो ह्येव तिरस्तमांसि ददृशे समिद्धः' इति Sy. Cf. ईडेन्यो नमस्य इतीडेन्यो ह्येव नमस्यो ह्येव तिरस्तमा ꣳसि दर्शत इति SB. 1.4.1.29.
७. Cf. अश्वो ह वाऽएष भूत्वा देवेभ्यो यज्ञं वहति । SB. 1.4.1.30. The passage, 'अश्वो...वहति' इति...कम् should immediately follow अश्वः and precede इव हविषां ।
८. वृषैव कामानां वर्षिता । 'वृषा उ' गुणः । उञमवलम्ब्य प्रगृह्यसंज्ञा Sy.
९. ०मग्नि M. वाहनभूतोऽग्निः Sy.
१०. आहुतिप्रदानेन सम्यग्दीप्यते Sy.
११. तत्र दृष्टान्तः । यथाश्वो राजानं वाहयति स्वपुरं प्रापयतीति । वाहनमश्वः । तद्वद् वाहनभूतो योऽग्निः Sy.
१२. देवान् हवींषि वाहयति प्रापयतीति देववाहनः । 'वह प्रापणे' इत्यस्माण्ण्यन्तात् कर्तरि ल्युप्रत्ययः । लित्स्वरः । समासे कृदुत्तरपदस्वरः Sy.
१३. ०मिदं P. तादृशमग्निम् Sy.
१४. सम्भृतहविष्का यजमानाः Sy.
१५. कर्मसिद्ध्यर्थं स्तुवन्ति Sy.
१६. VM. ignores देव of देववाहनः। As the *padapāṭha* reads वृषो as one word and does not analyse it as वृषा ऊँ इति an independent and separate उ does not seem to be present.
१७. आहुतिद्वारोदकस्य सेक्तारम् । तथा च स्मृतिः—'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' । (Manu. 3.76.) इति Sy. १८. वर्षयिता P. वृषाणो घृताज्याहुतीनां सेक्तारः Sy.
१९. सम्यग्दीपयामः । इधीमहि—'जिइन्धी दीप्तौ' इत्यस्य प्रार्थने लिङि नकारलोपश्छान्दसः Sy.

अग्ने ! दीप्यमा॑नम् । बृ॒हन्त॑म् ।

## III. 28.

अग्ने॒ जु॒षस्व॑ नो ह॒विः पु॒रो॒ळाशं॑ जातवेदः । प्रा॒त॒ःसा॒वे धि॑यावसो ॥ १ ॥

अ॒ग्ने । अग्ने ! सेव॒स्व॑ । नः॑ । ह॒विः । पुरोडाशाख्यम् । जातवे॑दः ! प्रातः सोम-स्याभिष॒वे प्रातःसवने । कर्म॑वसो॒ !

---

१. दीद्यतम्—दीदेतिर्दीप्तिकर्मा । तस्य शतरि रूपम् । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् Sy.

२. अत एव महान्तं तमिममग्निम् Sy.

३. VM. ignores वृषन् ॥ वृषन्—कामानां वर्षितर्हे अग्ने ! Sy.

४. 'अग्ने जुषस्व' इति षडृचं षोडशं सूक्तं वैश्वामित्रमाग्नेयम् । अत्रानुक्रमणिका—'अग्ने जुषस्व षट् तृतीयाद्युष्णिक्त्रिष्टुब्जगत्यः' (KSA. 17. 28. p. 15.) इति । पूर्वसूक्ते 'गायत्रन्तु' (KSA. 17. 27. p. 15.) इत्युक्तत्वादेतदपि गायत्रम् । तृतीया तूष्णिक् चतुर्थी त्रिष्टुप् पञ्चमी जगती । 'अग्ने जुषस्व' इति सवनीयपुरोडाशे स्विष्टकृतः प्रातःसवनीयानुवाक्या । सूत्रितञ्च—'अथ स्विष्टकृतोऽग्ने जुषस्व नो हविः' (ASS. 5.4.) इति । अतिरात्र आश्विनशस्त्रे परिहिते सति चमसगणैः सहाश्विनोर्द्विकपालः पुरोडाशः सर्वहुतो होतव्यः । यदि पुरोडाशमवशेष्य स्विष्टकृतं कुर्युस्तस्य स्विष्टकृतः 'पुरोळा अग्ने' इत्येषा याज्या । 'यद्येतस्य पुरोडाशस्य स्विष्टकृता चरेयुः पुरोळा अग्ने पचतः' (ASS. 6. 5.) इति सूत्रितम् । माध्यन्दिने सवने सवनीयपुरोडाशे स्विष्टकृतोऽनुवाक्या 'माध्यन्दिने सवने' इत्येषा । सूत्रितञ्च—'अग्ने जुषस्व नो हविर्माध्यन्दिने सवने जातवेदः' (ASS. 5. 4.) इति । तृतीयसवने सवनीयपुरोडाशस्य स्विष्टकृतोऽनुवाक्या 'अग्ने तृतीये सवने' इत्येषा । सूत्रितञ्च—'अग्ने तृतीये सवने हि कानिष इत्यनुसवनमनुवाक्याः' (ASS. 5. 4.) इति । आश्विनपुरोडाशस्य स्विष्टकृतो याज्या 'अग्ने वृधानः' इत्येषा । सूत्रितञ्च 'अग्ने वृधान आहुतिमिति संयाज्ये' (ASS. 6. 5.) इति ।. . .विश्वामित्रः स्तौति Sy.

५. जुषस्व—'जुषी प्रीतिसेवनयोः' इत्यस्माल्लोटि रूपम् । आमन्त्रितस्याविद्यमानवत्त्वेन पादादित्वादनिघातः Sy.

६. अस्मत्सम्बन्धि Sy.

७. ०वेदाः M. and P.
जातप्रज्ञ ! Sy.

८. अग्निष्टोमे प्रातःसवने । प्रातःसावे—'षुञ् अभिषवे' । सवनं सावः । भावे घञ् । 'थाथघञ्क्ताजबित्रकाणाम्' इत्यन्तोदात्तत्वम् Sy.

९. धिया स्तोत्रेण वसु धनं यस्माद्भवति सोऽयं धियावसुः । तस्य सम्बुद्धिः । कर्मानुरूपधनप्रद ! विभक्त्यलोपश्छान्दसः । आमन्त्रितत्वान्निघातः Sy.

पुरो॒ळा अ॑ग्ने पच॒तस्तुभ्यं॑ वा घा॒ परि॑ष्कृतः । तं जु॑षस्व यविष्ठ्य ॥ २ ॥

पुरोळाः[1] । पुरोडाशः[2] । अग्नये[3] । पक्वः[4] । तुभ्यम्[5] । एव[6] । आज्येन[7] संस्कृतः । तम्[8] । सेवस्व । युवतम[9] ! आश्विनशस्त्रान्ते[10] सपुरोडाशेन ग्रहेण[11] चरन्ति[12] । तत्र सूत्रम्—'पुरोळा अग्ने पचतोऽग्ने वृधान आहुतमिति[13] संयाज्ये' इति[14] ।

---

१. ०रोडा M.

२. ०रोळाशः P. पुरो डाशन्तेऽध्वर्य्वादय एनमिति पुरोडाः । पुरोडाशः—'दाशृ दाने' इत्यस्मात् पुरस्पूर्वात् 'मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्' (Pa. 3.2. 71.) इति कर्मणि ण्विनि कृते 'श्वेतवहादीनां डस्पदस्य' (VPa. 3.2. 71.1.) इति डस्प्रत्यये च कृते 'अवयाः श्वेतवाः पुरोडाश्च' (Pa 8.2.67.) इति निपातनाद्दकारस्य डत्वम् । पुरो डाशन्त एनमिति पुरोडाः । पुरोडाशः—डकारस्य ळकारो बह्वृचसाम्प्रदायिकः । कृदुत्तरपदस्वरः Sy.

३. अग्ने ये P.
भगवन्नग्ने ! Dur.

४. कपालयोः पक्वोऽस्ति । पचतः—'डुपचष् पाके' इत्यस्मात् 'भृमृदृशि—' इत्यादिना कर्मण्यतच्प्रत्ययः । पच्यतेऽसाविति पचतः पक्वः । चित्स्वरः Sy. पक्व इत्यर्थः ।. . .एवमत्र 'परिष्कृतः' इत्येतस्मादेकवचनसम्बन्धात् 'पचतः' इत्येकवचनमेव सिध्यति Dur.

५. स च त्वदर्थम् Sy., Dur. तवार्थाय वा SKN.

६. वा घ खलु । घा—'ऋचि तुनुघ—' इत्यादिना संहितायां दीर्घः Sy. घेति पादपूरणः SKN. वा घा इत्यनर्थकौ Dur.

७. पर्यग्निकरणादिभिरलङ्कृतः । परिष्कृतः—'सम्पर्युपेभ्यः करोतौ भूषणे' इति करोतेः सुडागमः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् Sy. संस्कृतश्च SKN. न केवलं पक्वः, किं तर्हि ? परिष्कृतः सुसंस्कृत इत्यर्थः Dur.

८. इमं पुरोडाशम् Sy.

९. हे अग्ने ! यविष्ठ एव यविष्ठ्यः । 'पादार्घाभ्यां च' (Pa. 5.4.25.) इत्यत्र चकारेण वस्वादीनां स्वार्थे यत्प्रत्ययस्योपादानाद्यविष्ठ्येत्यत्र स्वार्थिको यत्प्रत्ययः । आमन्त्रितत्वान्निघातः Sy. स्वार्थिकस्तद्धितः । अतिशयेन युवन् ! SKN. युवतम ! अथवा मिश्रयितृतम ! Dur.

१०. ०श्विनाद्यशस्त्रान्ते P.

११. ०हृणेन P.

१२. पर M.

१३. ०याज्यम् P. ASS.6.5. reads आहुतिं for आहुतम् ॥ N. 6. 16.; SKN. II. 445.

१४. VM. ignores वा ।

अग्ने॑ वी॒हि पु॑रो॒ळाश॒माहु॑तं ति॒रोअ॑ह्न्यम् । सह॑सः सू॒नुर॑स्यध्व॒रे हि॒तः ॥ ३ ॥

अग्ने ॥ इयं तत्र[1] वैकल्पिकी भवति ॥ अग्ने ! भक्षय[2] । पुरोडाशम्[3] । आहुतम्[4] । प्राप्तेऽहनि भवम्[5] । सहसः[6] । पुत्रः[7] । त्वं निहितः[8] । असि[9] । यज्ञे[10] ।

माध्यं॑दिने॒ सव॑ने जातवेदः पुरो॒ळाश॑मि॒ह क॑वे जुषस्व ।
अग्ने॑ य॒ह्वस्य॒ तव॑ भाग॒धेयं॒ न प्र मि॑नन्ति वि॒दथे॑षु॒ धीराः॑ ॥ ४ ॥

माध्यन्दिने । माध्यन्दिने[11] । सवने । जातवेदः ! पुरोडाशम्[12] । अस्मिन् यज्ञे[13] । सेवस्व[14] । अग्ने ! महतः[15] । तव । भागधेयम्[16] । न । प्रहिंसन्ति[17] । यज्ञेषु[18] । प्राज्ञाः[19] ।[20]

---

१. तेत्र P.

२. वीहि—'वी कान्तिगत्यादिषु' । लोटि रूपम् । हेरपित्त्वादन्तोदात्तत्वम् Sy.

३. पुरोडाशाख्यं हविः Sy.

४. समन्ताद्धुतम् । आहुतम्—जुहोतेः कर्मणि क्ते 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् Sy.

५. ०प्तेहवभ० P. अह्नि तिरोहिते सति । तिरोअह्न्यम्—अह्नि भवमह्न्यम् 'भवे छन्दसि' इति यत् । तिरोभूतमह्न्यं यस्मिन् काले स तिरोअह्न्यः, रात्रिकाल इत्यर्थः । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । 'प्रकृत्यान्तःपादम्—' इत्येङः प्रकृतिभावः । बहुव्रीहौ पूर्वपदस्वरः Sy.

६. बलस्य Sy.

७. पुत्र P.

८. आहवनीयादिस्थानेष्वस्माभिर्निहितोऽसि। तस्माद्वीहीति शेषः Sy.

९. अयम् P.

१०. अग्ने P. अस्मिन् यज्ञे

११. तत्र च माध्यन्दिनसम्बन्धिनि । मध्यन्दिनस्येदमित्यर्थे उत्सादित्वादञ् । ञित्त्वादादिवृद्धिः । ञित्त्वादेवाद्युदात्तत्वम् Sy.

१२. माध्यन्दिनसवनीयपुरोडाशम् Sy.

१३. अग्निष्टोमाख्ये कर्मणि Sy.

१४. M. and P. add आसेवस्व after सेवस्व ।

१५. यान्ति प्राप्नुवन्ति देवा हवींष्यनेनेति यह्वो महानग्निः । यह्वस्य—'या प्रापणे' इत्यस्मात् 'शेवयह्वजिह्व—' (Uṇādi 1. 152.) इति निपातनात्करणे वन्प्रत्ययः । हुगागमधातुह्रस्वौ । यान्त्यनेनेति यह्वोऽग्निः । व्यत्ययेनान्तोदात्तः Sy.

१६. ०धेय P. भागतया परिकल्पितं पुरोडाशम् । भागशब्दात्स्वार्थे 'भागरूपनामभ्यो धेयः' (VPa. 5. 4. 36. 2.) इति धेयः । प्रत्ययस्वरः Sy.

१७. हिंसन्ति किन्तु तुभ्यं प्रयच्छन्ति, तं जुषस्वेति शेषः । मिनन्ति—'मीञ् हिंसायाम्' इत्यस्य क्र्यादित्वात् श्ना । तस्मिन् 'मीनातेर्निगमे' इति ह्रस्वत्वम् । 'हिनु मीना' (Pa. 8. 4. 15.) इति णत्वं न भवति सर्वविधीनां छन्दसि विकल्पितत्वादिति Sy.

१८. येषु P.

१९. कर्मकुशला अध्वर्य्वादयः Sy.

२०. VM. ignores कवे ॥ मेधाविन् ! Sy.

**अग्ने॑ तृ॒तीये॒ सव॑ने॒ हि कानि॑षः पु॒रो॒ळाशं॑ सहसः सू॒नवाहु॑तम् ।**
**अथा॑ दे॒वेष्व॑ध्व॒रं विप॒न्यया॒ धा रत्न॑वन्तम॒मृते॑षु॒ जागृ॑विम् ॥ ५ ॥**

अग्ने । अग्ने ! तृतीये[1] । हि । सवने । कामयसे[2] । पुरोडाशम् । हे सहसः[3], पुत्र ! आहुतम्[4] । अथ[5] । देवेषु[6] । यज्ञम्[7] । त्वदीयया स्तुत्या[8] । धेहि[9] । रत्नयुक्तम्[10] । देवेषु[11] । रक्षणाय जागरणशीलमिति[12] ।

**अग्ने॑ वृधा॒न आहु॑तिं पु॒रो॒ळाशं॑ जातवेदः । जु॒षस्व॑ ति॒रोअ॑ह्न्यम् ॥ ६ ॥**

अग्ने । अग्ने[13] ! वर्धयन्[14] । आहुतिम्[15] । पुरोडाशम्[16] । जातवेदः[17] ! सेवस्व[18] । तिरोअह्न्यं[19] सोममिति ।

---

१. तृतीये—त्रिशब्दात्पूरणार्थे 'त्रेः संप्रसारणम्—' (Pa. 5.2.55.) इति तीयप्रत्ययः । तत्सन्नियोगेन सम्प्रसारणम् । 'हलः' इति दीर्घो न भवति । प्रत्ययस्वरः Sy.

२. कानिषः—'कनी कान्त्यादिषु' । लेटि 'सिब्बहुलं लेटि' इति सिप् । तस्यार्धधातुकत्वादिडागमः । कान्तिरभिलाषः अकारस्य आकारो व्यत्ययेन । हियोगादनिघातः । धातुस्वरः Sy.

३. बलस्य Sy. ४. हूयमानम् Sy.

५. आथ P. अनन्तरम् Sy.

६. इन्द्रादिषु Sy.

७. अविनाशिनम् Sy.

८. स्तव्भ्या M. स्तुतिलक्षणया वाचा स्तुतस्त्वम् । विपन्यया—'पन स्तुतौ' । भावे क्विप् । विपनं यातीति कप्रत्ययः । प्रत्ययस्वरः Sy.

९. सेहि M. धाः दधातेर्धातोश्छान्दसे लुङि रूपम् । पादादित्वादनिघातः Sy.

१०. रत्नशब्देन स्वर्गादिलक्षणमुत्तमं फलमभिधीयते तद्वन्तं फलप्रदम् Sy.

११. मरणधर्मरहितेषु Sy.

१२. ०लमि P. जागरणकारिणम् । प्रातःसोमो जागृविर्भवति स्वप्ननिवारक इति तमिमं सोमम् । क्विन्प्रत्ययान्तो जागृविशब्दः । नित्स्वरः Sy.

१३. Omitted in P.

१४. आहुतिभिर्वर्धमानस्त्वम् Sy.

१५. ०हुति P. हविः । आहुतिम्—जुहोतेः कर्मणि क्तिन् । 'तादौ च निति कृत्यतौ' इति गतेः प्रकृतिस्वरत्वम् Sy.

१६. पुरोडाशाख्यम् Sy.

१७. जातप्रज्ञ ! Sy.

१८. ०वस्वे M.

१९. अह्नां M. अह्नि भवमह्न्यं दिवसकृत्यम् । तिरोभूतमह्न्यं यस्मिन् काले स तिरोअह्न्यो रात्रिकालः । तस्मिन्काले Sy.

## III. 29.

अस्तीदमधिमन्थनमस्ति प्रजननं कृतम् ।
एतां विश्पत्नीमा भराग्निं मन्थाम पूर्वथा ॥ १ ॥

अस्तीदम्[1][2][3]। अस्ति[4]। इदम्[5]। अधिमन्थनं[6] शकलम्। अस्ति च। प्रजननं[7] मथनसाधनम्[8]। कृतम्[9]। एताम्। विशां[10] पालयित्रीमरणिम्[11]। आहर[12]। अग्निम्[13]। मन्थाम[14]। यथा पूर्वेऽमथ्नन्निति[15]।

---

१. 'अस्तीदम्' इति षोडशर्चं सप्तदशं सूक्तं वैश्वामित्रम् । अत्रानुक्रमणिका 'अस्तीदं षोडशाद्याचतुर्थीदशमीद्वादश्योऽनुष्टुभः षष्ठ्येकादश्युपान्त्ये च जगत्यः पञ्चम्यृत्विग्भ्यो वा' ( KSA. 1729. p. 15.) इति । आद्याचतुर्थीदशमीद्वादश्योऽनुष्टुभः, षष्ठ्येकादश्युपान्त्ये च जगत्यः षष्ठ्येकादशी चतुर्दशी पञ्चदशी च जगत्यः, शिष्टा अष्टौ त्रिष्टुभः । पञ्चमी 'मन्थता नरः' इत्येषा ऋत्विग्देवताकाग्निदेवताका वा। शिष्टा अग्निदेवताकाः । सूक्तविनियोगो लैङ्गिकः । वरुणप्रघासेष्वग्निप्रणयने 'इळायास्त्वा पदे' इत्येषा। सूत्रितञ्च—'इळायास्त्वा पदे वयमग्ने विश्वेभिः स्वनीकदेवैरित्यर्धर्चं आरभेत्' (ASS. 2. 17) इति। तत्रैवाग्निप्रणयन उत्तरवेद्यामग्नौ स्थापिते सति 'सीद होतः' इत्येषा । 'निहितेऽग्नौ सीद होतः स्व उ लोके चिकित्वान्' (ASS. 2. 17.) इति सूत्रितम् । अरण्यामग्निसमारोपणे 'अयं ते योनिः' इत्येषा । सूत्रितञ्च—'अयं ते योनिर्ऋत्विय इत्यरणी गार्हपत्ये प्रतितपेत्पाणी वा' (ASS. 3. 10.) इति Sy.

२. P. omits इदम् ।

३. यजमानोऽध्वर्य्वादीन्प्रति ब्रूते Sy.

४. अस्तीति पदद्वयस्य पादादित्वादनिघातः Sy.

५. अग्न्यर्थं यूपशकलम् Sy.

६. अग्निम० M. अरण्या उपरि निधेयं मन्थनसाधनभूतं दण्डरज्ज्वादिकम् Sy.

७. ०जनं M. अग्निजननसाधनभूतं दर्भपिञ्जूलम् । यद्वा प्रजननं मन्थनदण्डस्य विन्यासविशेषः। यस्मादेतानि यूपशकलादीन्यग्निमन्थनसाधनान्याहृतानि सन्ति तस्मात् Sy.

८. मन० P.

९. सम्पादितम् Sy.

१०. प्रजानामग्निसाध्याग्निहोत्रद्वारा स्वर्गादिफलसम्पादनेन पालयित्रीम् । विश्पत्नीम्—पतिशब्दस्य 'विभाषा सपूर्वस्य' इति ङीप् नकारश्चान्तादेशः । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् Sy.

११. ०त्रीरमणिमम् M. ०त्रीमरणीम् P.

१२. हे अध्वर्यो ! आहर । भर—'हृञ् हरणे' इत्यस्य लोटि 'हृग्रहोर्भश्छन्दसि' इति भकारः Sy.　　१३. अग्नि P.

१४. मन्थनेन निष्पन्नं करवाम । मन्थाम—'मन्थ विलोडने' लोटि रूपम् । निघातः Sy.

१५. तस्यामाहृतायां पूर्वथा यथा वयमाधानकालेऽग्निममथ्नीम यथा वा पूर्वे महर्षयोऽग्निममन्थिषुस्तद्वद्वयमेनमग्निमस्मिन् कर्मणि । प्रत्नथा—पूर्वशब्दादिवार्थे 'प्रत्नपूर्वविश्वेमात्थाल् छन्दसि' इति थाल्प्रत्ययः । 'लिति' इति प्रत्ययात् पूर्वस्योदात्तत्वम् Sy.

अरण्योर्निहितो जातवेदा गर्भइव सुधितो गर्भिणीषु ।
दिवेदिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥ २ ॥

अरण्योः[1] । अरण्योः[2] । अन्तर्निहितः[3] । अग्निः[4] । गर्भं इव[5] । निहितः[6] । गर्भिणीषु[7] । दिवसेदिवसे[8] । स्तुत्यः[9] । प्रमाद्यद्भिः[10] । हविष्मद्भिः[11] । मनुष्यैः[12] । अग्निः[13] ।

उत्तानायामव भरा चिकित्वान्त्सद्यः प्रवीता वृषणं जजान ।
अरुषस्तूपो रुशदस्य पाज इळायास्पुत्रो वयुनेऽजनिष्ट ॥ ३ ॥

उत्तानायाम् । अधरारण्याम्[14] । उत्तरारणिमवभर[15] । जानन्[16] । निहित[17]गर्भारणिः[18] ।

---

१. Omitted in P.

२. अरण्योः—'ऋ गतौ' 'अर्तिसृधृधमि—' इत्यादिना अनिः । प्रत्ययस्वरः Sy.

३. देवैर्यजनार्थं नितरां स्थापितोऽस्ति । निहितः—दधातेः कर्मणि निष्ठायां 'दधातेर्हिः' इति हिरादेशः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् Sy.

४. सर्वविषयज्ञानवानयम् Sy.

५. अत्र दृष्टान्तः । यथा Sy.

६. सुष्ठु निहितो वर्तते तद्वत् । सुधितः—दधातेः कर्मणि निष्ठा । तस्मिन् 'सुधितवसुधित'—इत्यादिना निपातनाद्धिरादेशः Sy.

७. स्त्रीषु Sy.

८. प्रत्यहमुत्पत्त्यर्थम् । दिवेदिवे—'दिवु क्रीडादौ' । इगुपधलक्षणः कः । 'नित्यवीप्सयोः' इति द्विर्वचनम् । तस्याम्रेडितत्वादनुदात्तत्वे पूर्वपदस्वरः Sy.

९. स्तुतिरूपाभिर्गीर्भिः स्तोतव्यः Sy.

१०. ०द्यमि P. अप्रमाद्यद्भिः is suggested for प्रमाद्यद्भिः ॥ कर्मणि जागरूकैः । जागृवद्भिः—'जागृ निद्राक्षये' इत्यस्य क्वसौ रूपम् । द्विर्वचनप्रकरणे 'छन्दसि वेति वक्तव्यम्' इति विकल्पितत्वात् द्विर्वचनाभावः । 'वसुस्रंसुध्वंस्वनडुहां दः' (Pa. 8.2.72.) इति वसोः सकारस्य दत्वम् । प्रत्ययस्वरः Sy.

११. सम्भृतहविष्कैः Sy.

१२. मनुष्यैरस्माभिः Sy.

१३. स तादृशोऽग्निः Sy.

१४. ०अधरारण्यामुत्तानशयायाम् Sy. उत्तानायामरण्याम् Mah.

१५. उत्तरारणिमधोमुखां धारय Sy. अवाचीनं हर Mah., U.

१६. जाह P. ज्ञानवानध्वर्युस्त्वम् Sy. अरणिबलं जानन् Mah. जानानः । अरण्या वीर्यमिति शेषः U.

१७. ०हिप्रात० M. निषिक्तरेतस्का सती Sy. याऽरणिः प्रवीता कामिता सती Mah. कामिता सती U.

१८. ०रणि M.

तदानीमेव[1] । अग्निम्[2] । जनयति[3], 'तस्मात्पराचीः प्रजाः प्रवीयन्ते[4] प्रतीचीर्जायन्ते'[5] इति[6] ब्राह्मणम् । आरोचमानतेजःसङ्घातः[7] ।[8] अस्य[9] । तेजः[10] । सोऽयमिळायाः[11] । पुत्र[12] ऊर्जःपुत्रः । मार्गे[13] प्रादुर्भवतु, यज्ञे जायत[14] इत्येकमिति[15] ।

इळायास्त्वा पदे वयं नाभा पृथिव्या अधि ।
जातवेदो नि धीमह्यग्ने हव्याय वोळ्हवे ॥ ४ ॥

इळायास्त्वा । मनोर्दुहितु[16]रिळायाः[17] । पदे[18] । वयम्[19] । पृथिव्यास्त्व[20] । नाभावुत्तरवद्या

१. तत्कालम् Mah. सद्य एव U.

२. कामानां वर्षकम् Sy. सेक्तारमग्निम् Mah. वर्षितारं सेक्तारं युवानं सर्वकर्मक्षमम् U.

३. जनयतु । जजान—'जन जनने' । लोडर्थे लिटि 'बहुलमन्यत्रापि संज्ञाछन्दसोः' इति णिलोपः । प्रत्ययान्तत्वाभावादाम्न भवति। निघातः Sy. सोऽग्निर्जात इत्यर्थः Mah.　　४. प्रचीय० P.

५. The quotation is untraced.

६. P. adds हि after इति.

७. ०घात M. सङ्घोपेतः । अरुषस्तूपः—न विद्यते रुषः क्रोधो यस्येत्यरुषः, क्रोधराहित्येन रोचमान इत्यर्थः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । 'ष्टुञ् स्तुतौ' । 'स्तौतेर्दीर्घश्च' (Uṇādi 3. 305.) इति पप्रत्ययः, किच्च, धातोर्दीर्घश्च । स्तूयत इति स्तूपस्तेजःसङ्घः । अरुष आरोचमानस्तेजःसङ्घो यस्येति बहुव्रीहौ पूर्वपदस्वरः Sy. 'रुष वधे'—रोषति रुषः । अरुषोऽहिंसकः स्तूपो ज्वालोच्छ्रायो यस्य स तथा । 'ष्टु उच्छ्राये' Mah. योऽयमरुषस्तूपो ज्वालासङ्घातमूर्तिः U.

८. P. adds चेतम् after सङ्घातः ।

९. Omitted in M. अग्नेः Sy., Mah. यस्य चास्य U.　१०. तेजसा P. तेजोमात्रं तत्राभूत् Sy. बलम् Mah., U.

११. सोम इळायाः P. उत्तरवेद्याः Sy. पृथिव्याः Mah., U.

१२. उत्पन्नोऽग्निः Sy. पुत्रोऽग्निः Mah.

१३. अरण्यां योनिस्थाने 'अज गतिक्षेपणयोः' 'अजियमिशीङ्भ्यश्च' इत्युनन् चित्संज्ञकः । अजति वीयते वा, वयुनमङ्गम् । प्रत्ययस्य व्यत्ययेनाद्युदात्तत्वम् Sy.

१४. अजनि । अजनिष्ट—'जनी प्रादुर्भावे', लुङि सिचि रूपम् । निघातः Sy. जातः Mah. जातस्तमग्निम् U.

१५. VM. ignores रुशत् ॥ तमो विनाशयत् । रुशत्—'रुश हिंसायाम्' । शतरि रूपम् Sy. दीप्तम् Mah. रुशदिति वर्णनाम, रोचतेर्ज्वलतिकर्मणः। N. 2. 20; 6. 13.
This stanza=YV. 34. 14.

१६. P. omits words between इळाया and दुहितुः ।

१७. मानव्या इडाया गोः Sy. पृथिव्याः Mah., U. पृथिव्या अवयवे BB.

१८. तदेव स्थानं विशेष्यते—इडापदरूप उत्तरवेद्यात्मके स्थाने Sy. स्थाने देवयजनाख्ये Mah. अस्मिन्स्थाने BB.

१९. अध्वर्य्वादयो वयम् Sy.

२०. भूमेरुपरि Sy. पृथिव्याः प्रथिताया उत्तरवेद्या अधि उपरिष्टात् BB.

नाभौ[1] । हे जातवेदः[2] ! निधीमहि[3] । अग्ने ! हविषः[4] । वहनायेति[5], 'एतद्वा इळायास्पदं यदुत्तरवेदी[6] नाभिः[7]' इत्यादि ब्राह्मणमिति[8] ।

मन्थता नरः कविमद्वयन्तं प्रचेतसममृतं सुप्रतीकम् ।
यज्ञस्य केतुं प्रथमं पुरस्तादग्निं नरो जनयता सुशेवम् ॥ ५ ॥

मन्थता[9] । मन्थत[10] । हे नरः[11] ! कविम्[12] । अद्वयन्तम्[13], सत्यमनृतं[14] चोभयमकुर्वन्तं सत्यम् ।

---

१. तस्या नाभिस्थाने मध्यप्रदेशे । नाभा—'णह बन्धने' । इञित्यनुवृत्तौ 'नहो भश्च' इतीञ् । भकारश्चान्तादेशः । ञित्वादुपधावृद्धिः । नह्यतीति नाभिर्मध्यस्थानम् । 'सुपां सुलुक्' इति सप्तम्या डादेशः । ञित्स्वरः Sy. उत्तरवेद्या मध्ये Mah. उत्तरवेद्यां नाभिका भवति तद्विषयमेतत् U. उत्तरनाभौ 'सुपां सुलुक्' इति सप्तम्या डादेशः BB.

२. जातप्रज्ञ ! Sy. जातप्रज्ञान ! हे अग्ने ! Mah. जातप्रज्ञान ! U.

३. निदधीमहि । धीमहि—दधातेर्लिङि रूपम् । 'लिङः सीयुट्' (Pa. 3.4. 10.) इति सीयुट् । द्विर्वचनाभावश्छान्दसः । निघातः Sy. स्थापयामः Mah., U. स्थापयामः । 'धीङ् आधारे' BB.

४. हविषा M. पुरोडाशादिलक्षणं हविः Sy. हव्यम्. . विभक्तिव्यत्ययः Mah. हविः. . .हवमर्हतीति हव्यः । दण्डादित्वाद्यः । 'क्रियाग्रहणं कर्तव्यम्' इति सम्प्रदानत्वम् BB.

५. वोढुम् । वोळ्हवे—'वह् प्रापणे' । तुमर्थे तवेन् । 'सहिवहोरोदवर्णस्य' इति धात्वकारस्यौत्वम् । ढत्वधत्वष्टुत्वढलोपाः । नित्त्वादाद्युदात्तः Sy. वोढुम् Mah. वोढुं देवेभ्यः BB.

६. ०वेदि P.

७. AB. 1.28.

८. VM. ignores त्वा and अधि ॥ त्वाम् । उक्तार्थे ब्राह्मणम्—'इळायास्त्वा पदे वयं नाभा पृथिव्या अधीत्येतद्वा इळायास्पदं यदुत्तरवेदी नाभिर्जातवेदो नि धीमहीति निधास्यन्तो ह्येनं भवन्त्यग्ने हव्याय वोळ्हव इति हव्यं हि वक्ष्यन्भवति' (AB. 1.28.) इति Sy. This stanza=YV. 34.15=TS. 3.5.11.1.

९. न्थत P.

१०. मन्थ P. मन्थनेन निष्पादयत । मन्थत—'मन्थ विलोडने' । लोटि रूपम् । पादादित्वादनिघातः Sy.

११. कर्मणां नेतारो हे अध्वर्य्वादयः ! 'णीञ् प्रापणे' । 'नयतेर्डिच्च' (Uṇādi. 2. 257.) इति ऋप्रत्ययः । डित्वाट्टिलोपः । नयन्ति कर्माणि नीयन्ते कर्मफलैर्भिरिति वा नरः । आमन्त्रितत्वान्निघातः Sy.

१२. कवि P. क्रान्तदर्शिनम् Sy.

१३. द्वयं० P. द्वयमनाचरन्तमद्वैतं कुर्वाणम् । मनसा वाचा चैकविधमेव कर्म कुर्वाणम् । द्वयमिवाचरतीत्यर्थे 'सर्वप्रातिपदिकेभ्यः क्विब्वक्तव्यः' इत्याचारार्थे क्विप् । द्वयति तस्य शतरि रूपं द्वयन्निति । न द्वयन्नद्वयन् । तम् । तत्पुरुषे नञ्स्वरः Sy.

१४. ०मकृतं M.

प्रकृष्टज्ञानम्[1] । अमृतम्[2] । शोभनावयवम्[3] । यज्ञस्य[4] । चिह्नम्[5] । पुरातनम्[6] । प्रथमम्[7] । जनयत[8] । अग्निम् । हे नरः[9] ! सुसुखम्[10] ।

**यदी॒ मन्थ॑न्ति बा॒हुभि॒र्वि रो॑चते॒ऽश्वो॒ न वा॒ज्य॑रु॒षो वने॒ष्वा ।**
**चि॒त्रो न याम॑न्न॒श्विनो॒रनि॑वृत॒ः परि॑ वृण॒क्त्यश्म॑न॒स्तृणा॒ दह॑न् ॥ ६ ॥**

यदी मन्थन्ति[11] । यदि[12] । अग्निं मथ्नन्ति[13] । बाहुभिः[14] । यथायं[15] विरोचते[16] । अश्वः । इव[17] । वेगवान्[18] । आरोचमानः[19] । काष्ठेषु[20] । चित्रः[21] । इव । गमने[22] । अश्विनोः[23] । अप्रतिहतगतिः[24], 'अयो

---

१. अत एव प्रकृष्टज्ञानोपेतम् Sy.

२. ०मृत M. मरणधर्मरहितम् Sy.

३. शोभनैरङ्गैर्ज्वालाभिः समेतम् । सुप्रतीकम्—'बहुव्रीहौ ऋत्वादयश्च' इत्युत्तरपदाद्युदात्तत्वम्. Sy.

४. ज्योतिष्टोमादेः Sy. ५. प्रज्ञापकम् Sy.

६. प्रथमम्; मुख्याङ्गभूतम् । अग्निपूर्वकत्वात् सर्वेषामुत्तरक्रतूनाम् Sy.

७. पुरस्तात् कर्मणः प्रारम्भे Sy.

८. ०नय P. तमिममग्निमेवंविधगुणयुक्तं कुरुतेति भावः । जनयत—'जनी प्रादुर्भावे'। णिच् । 'अत उपधायाः' इति वृद्धौ प्राप्तायां 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च' इति मित्त्वाद्भावात् 'मितां ह्रस्वः' इति ह्रस्वः । निघातः Sy.

९. नः P. किञ्च हे कर्मणां नेतारोऽध्वर्य्वादयः ! यूयम् Sy.

१०. सुखं P. शोभनसुखोपेतम् । शेवशब्दो वन्प्रत्ययान्त आद्युदात्तः । बहुव्रीहौ 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् Sy. ११. यदि P.

१२. यद्यध्वर्य्वादयः Sy.

१३. मन्थन्ति P. 'मन्थ विलोडने' । लटि रूपम् । यदियोगादनिघातः Sy.

१४. बहुः P. स्वकीयैर्हस्तैः Sy.

१५. अयायो P. अयायं is suggested for यथायं ॥ ततः स जातोऽग्निः Sy.

१६. आ समन्ताद्विशेषेण दीप्यते । 'रुच दीप्तौ' । भौवादिकः । लटि रूपम् । निघातः Sy.

१७. तत्र दृष्टान्तः । यथा Sy.

१८. शीघ्रगमनवान् Sy.

१९. आरोचवान M. सर्वेषां प्रीतिकरः सन् Sy.

२०. वननीयेषु बाह्यालीस्थानेषु Sy.

२१. तत्रैव दृष्टान्तान्तरम् । यथा नानाविधवर्णो रथ आरोचमानो वर्तते तद्वत् Sy.

२२. यामनि वेगगमने । यामन् 'या प्रापणे' । 'आतो मनिन्क्वनिब्वनिपश्च' इति मनिन् । 'सुपां सुलुक्—' इत्यादिना सप्तम्या लुक् । नित्स्वरः Sy.

२३. देवभिषजोः Sy.

२४. ०गतीः M. and P. केनाप्यप्रतिबद्धगमनः । अनिवृतः–'वृञ् वरणे' । निष्ठायां 'यस्य विभाषा' इतीट्प्रतिषेधः । निपूर्वो वृणोतिर्निवारणे वर्तते । न निवृतोऽनिवृतः । नञ्स्वरः Sy.

अग्निरप्रतिहतगतिर्भवति[1] । सो[2]ऽयमश्मनः[3] । वर्जयति[4] । तृणानि[5] । भस्मीकुर्वन्[6]निति[7] ।

**जातो अग्नी रोचते चेकितानो वाजी विप्रः कविशस्तः सुदानुः ।**
**यं देवास ईड्यं विश्वविदं हव्यवाहमदधुरध्वरेषु ॥ ७ ॥**

जातः । अरण्यो[8]र्जातमात्रः । अग्नि[9]ः । दीप्यते । अत्यन्तं जानन्[10] । बलवान्[11] । मेधावी[12] । कविभिः[13] स्तुतः । शोभनदानः[14] । य[15]मग्निम्[16] । देवाः[17] । स्तुत्यम्[18] । सर्वस्य[19] वेदितारम् । हविषां[20] वोढारम् । यज्ञेषु[21] । स्थापितवन्तः[22] ।

**सीद होतः स्व उ लोके चिकित्वान्सादया यज्ञं सुकृतस्य योनौ ।**
**देवावीर्देवान्हविषा यजास्यग्ने बृहद्यजमाने वयो धाः ॥ ८ ॥**

सीद होतः ।[23] सीद[24] । हे होतः[25] ! स्वस्मिन्[26] । स्थान उत्तरवेदि[27]नाभौ ।

---

१. M. omits हतगति. २. साय० M. अयमग्निः Sy. ३. उपलान् Sy.
४. दग्धस्थानानि परितो वर्जयति तादृशोऽग्निरारोचत इति पूर्वेणान्वयः । वृणक्ति—'वृजी वर्जने' । रुधादिः । 'चोः कुः' इति कुत्वम् । निघातः Sy.
५. तृणा—'तृह हिंसायाम्' । 'तृहेः क्नो हलोपश्च' (Uṇādi 5.686.) इति क्नः । कित्त्वादगुणः । हलोपश्च । तृह्यते तद्गवादिभिरिति तृणम् । नित्स्वरः Sy.
६. भस्मसात्कुर्वन् Sy.
७. VM. ignores आ and परि ॥ आ समन्तात्, परि परितः Sy.
८. अरण्योर्जातः अर० M. मन्थनानन्तरमुत्पन्नः Sy. ९. एवंविधोऽग्निः Sy.
१०. जनयन् P. सर्वं जानानः सन् । चेकितानः—'कित ज्ञाने' इत्यस्य यङ्लुकि 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् Sy.
११. सततगमनस्वभावः Sy.
१२. कर्माभिज्ञः Sy.
१३. मेधाविभिर्होतृभिः । 'थाथघञ्क्ताजबित्रकाणाम्' इत्यन्तोदात्तत्वम् Sy.
१४. सुष्ठु कर्मफलस्य दाता Sy.
१५. अ० M. १६. ०मग्निः P.
१७. देवा इन्द्रादयः Sy.
१८. स्तुभ्यं M. होत्रादिभिः स्तुत्यम् Sy.
१९. सर्वस्य जगतो वेदितारम् Sy.
२०. हव्यानां वोढारम् Sy.
२१. ज्योतिष्टोमादियज्ञेषु Sy.
२२. व्यदधुः । सोऽग्निर्दीप्यत इति पूर्वेणान्वयः । अदधुः—दधातेर्लङि झेः 'सिजभ्यस्तविदिभ्यश्च' इति जुस् । यद्वृत्तयोगादनिघातः । अडागमस्वरः Sy.
२३. यजमानो ब्रूते Sy.
२४. सीदो त्वं होमनिमित्तमुपविशेव । सीद—सदेर्लोटि रूपम् Sy. उपविश Mah., U. आस्स्व BB.
२५. होता P. होमनिष्पादक ! हे अग्ने ! Sy. देवानामाह्वातः ! Mah. आह्वातः ! BB. २६. स्वकीये Sy.
२७. उत्तरवेद्या नाभौ Sy. स्थाने कृष्णाजिनाख्ये Mah. कृष्णाजिने U. स्थान उत्तरवेद्याम् BB.

जानन्। सादय च। यज्ञम्। शोभनस्य कर्मणः। स्थान उत्तरवेद्याम्, 'यजमानो वै यज्ञः' इति ब्राह्मणम्। देवान् प्रतिगन्ता त्वम्। देवान्। हविषा। यज। अग्ने! बृहच्च। अन्नम्। यजमाने। स्थापय, 'प्राणो वै पयः' इति ब्राह्मणमिति।

---

१. ज्ञानवांस्त्वम् Sy. चेतनावान्, स्वाधिकारं जानन् Mah. परिदृष्टाधिकारः, स्वमधिकारं जानानः U. स्वव्यापारं जानानः 'कित ज्ञाने' BB.

२. स्थापय! सादय—सदेर्ण्यन्तस्य लोटि रूपम्। णिच्स्वरः Sy. स्थापय Mah. U. सादया-सांहितिकं दीर्घत्वम् BB.

३. यज्ञस्य कर्तारं यजमानम् Sy.

४. कर्म P. सुकृतजन्योपभोगस्य Sy. साधुकृतस्य कर्मणो यज्ञस्य Mah., U. सुकृतस्य कर्मणः BB.

५. उत्तमलोके Sy. स्थाने कृष्णाजिने... यज्ञे क्रियमाणे। अवघातपेषणसोमनिधानादीनि कृष्णाजिन एव भवन्तीति कृष्णाजिनं सुकृतस्य योनिः। 'कृष्णाजिनं वै सुकृतस्य योनिः' (SB. 6.4.2.6.) इति श्रुतेः Mah. यज्ञे हि तन्यमानेऽवघातः पेषणं सोमनिधानं च कृष्णाजिन एव भवतीत्येतदभिप्रायमेवमुच्यते U. ६. AB. 1.28.

७. देवान् हविष्प्रदानेनावतीति देवावीः। तादृशस्त्वम्। 'अव रक्षणादिषु' 'अवितृस्तृतन्त्रिभ्य ईः' इतीप्रत्ययः। कृदुत्तरपदस्वरः Sy. यतो देवावीर्देवानवति प्रीणातीति देवावीस्त्वम् Mah. देवानामवनशीलस्तर्पणशीलः U. तदर्थमित्थं कर्तव्यमित्याह... देवानामविता रक्षिता तर्पयिता वा BB.

८. P. omits प्रतिगन्ता।

९. पुरोडाशादिलक्षणेन हव्येन Sy. हव्येन कृत्वा Mah. यस्मादेवं तस्माद् देवान् हविषा BB.

१०. यजासि यजेर्लेटचाडागमः Sy. पूजयसि Mah. यजसि तं त्वां पुनः प्रार्थयामि U. यज, लेटचाडागमः BB.

११. प्रभूतं पशुपुत्रादिसमेतम् Sy. महत् Mah., U. इदं च कर्तव्यमित्याह... महत् BB. १२. आयुरन्नं वा Mah., U. १३. अथ यागं कुर्वाणे मयि Sy.

१४. विधेहि। धाः—दधातेश्छान्दसे लुङि रूपम् Sy. धेहि Mah., U., BB.

१५. Cf. यज्ञस्य प्राणः पयः SB. 6.5.4.15.;9.2.3.31. The word वयः occurs in the original whereas पयः is used in the Brāhmaṇa passage. This means two things:—(1)either VM. reads पयः for वयः in the original, (2) or the reading of Brāhmaṇa was वयः instead of पयः।

१६. VM. ignores उ॥ उ एवार्थे स्वकीय एव Mah. उकारो विनिश्चयार्थीयः। स्वकीय एव U. स्व एव BB. अन्वेते त्रिष्टुभाऽउत्तरे भवतः। आत्मा वै त्रिष्टुबात्मानमेवास्यैताभ्या ꣳ संस्करोति सीद होतः स्वऽउलोके चिकित्वानित्यग्निर्वै होता तस्यैष स्वो लोको यत्कृष्णाजिनं चिकित्वानिति विद्वानित्येतत्सादया यज्ञ ꣳ सुकृतस्य योनाविति कृष्णाजिनं वै सुकृतस्य योनिर्देवावीर्देवान् हविषा यजासीति देवः सन् देवानन्हविषा यजासीत्येतदग्ने बृहद्यजमाने वयो धा इति यजमानायाशिषमाशास्ते SB. 6.4.2.6. p. 531.

This stanza=YV. 11.35.=TS. 3.5.11.2.

कृणोत धूमं वृषणं सखायोऽस्रेधन्त इतन वाजमच्छ ।
अयमग्निः पृतनाषाट् सुवीरो येन देवासो असहन्त दस्यून् ॥ ९ ॥

कृणोत[1]। कुरुत[2]। अग्नेर्धूममग्निं[3] च । वर्षितारम्[4]। हे सखायः[5]! अनुपक्षीणा[6] भवन्तो यूयम्[7]। हविः[8]। प्रति[9]। गच्छ[10]। सोऽयम्। अग्निः। सेनानामभिभविता[11]। सुवीरः[12]। येना[13]। देवाः। शत्रून्[14]। असहन्त[15]।

अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आ सीदाथा नो वर्धया गिरः ॥ १० ॥

अयं ते। ऋतौ[16] जातः। तव[17]। अयम्[18]। योनिरुत्पत्तिस्थानम्[19]। यतो[20]

---

१. यजमानोऽध्वर्य्वादीन्प्रति ब्रूते Sy.
२. मन्थनेनोत्पादयत। कृणोत—'कृवि हिंसाकरणयोः'। लोटि तप्रत्ययस्य 'तप्तनप्तनथनाश्च' इति तबादेशः। पित्त्वाद्गुणः। उप्रत्ययस्वरः Sy.
३. ०ग्ने धूममग्निं P. धुनोति कम्पयतीति धूमोऽग्निः। एवंविधमग्निम् Sy.
४. कामानां वर्षितारम् Sy.
५. कर्मसहकारिणो यूयम् Sy.
६. यद्यग्निर्न जायते तदानीमाह—अनुपरतसामर्थ्याः Sy. ७. सन्तः Sy.
८. मन्थनलक्षणं युद्धम् Sy.
९. अग्न्याभिमुख्येन Sy.
१०. गच्छत is suggested for गच्छ—प्राप्नुत। इतन—'इण गतौ' इत्यस्य लोटि तप्रत्ययस्य तनादेशः। निघातः Sy.
११. सेनाभिमभिवहिता P. पृतनोपलक्षितं युद्धं सहमानो भवति। पृतनाषाट्—'षह मर्षणे'। 'छन्दसि सहः' इति ण्विः। णित्त्वादुपधावृद्धिः 'सहेः साडः सः' इति षत्वम्। कृदुत्तरपदप्रकृतिस्वरः Sy.
१२. शोभनसामर्थ्योपेतोऽयम् Sy.
१३. येन is suggested for येना ॥ युद्धं सहमानेनाग्निना Sy.
१४. उपक्षपयितॄनसुरान्। दस्यून्—'दसु उपक्षये'। 'यजिमनिशुन्धिदसिजनिभ्यो युच्' इति युच्। दस्यन्तीति दस्यवः शत्रवः। व्यत्ययेनाद्युदात्तत्वम् Sy.
१५. अभ्यभवन्। तस्मादक्षीणबला यूयं मन्थनं कुरुतेति भावः। 'षह मर्षणे' इत्यस्य लङि रूपम्। यद्योगादनिघातः Sy.
१६. ऋतो P. वसन्ताद्यृतौ भवः ऋत्वियः—'छन्दसि घस्' इत्यृतुशब्दात् प्राप्तार्थे घस्प्रत्ययः। घस्य इयादेशः। 'सिति' इति पदसंज्ञायाम् 'ओर्गुणः' (Pa.6.4.146.) इति भसंज्ञाधीनो गुणो न भवति। प्रत्ययस्वरः Sy. उत्पादनयोग्यः काल ऋतुरुच्यते। ऋतुः प्राप्तोऽस्येति ऋत्वियः। सायं प्रातःकाल उत्पादनयोग्यः Mah. ऋतावृतौ प्राप्तः काले काले भवति U. ऋतुः प्राप्तोऽस्येति 'छन्दसि घस्' इति घस्। ऋतावृताविज्यत इत्यर्थः BB.
१७. तम P.
१८. अङ्गुल्या निर्दिश्यमानः पलाशादवत्थादिमयः काष्ठविशेषोऽरणिः Sy. गार्हपत्यः Mah. गार्हपत्योऽग्निः U.
१९. योनिः—'यु मिश्रणे', 'वहिश्रि' इत्यादिना निप्रत्ययः। निदित्युक्तत्वादाद्युदात्तः Sy. कारणं गार्हपत्य उच्यते नात्रारणिः BB.
२०. य P.

योनेः[1]। जातस्त्वम्[2]। अरोचयथाः[3]। तम्[4]। इदानीं योनिरिति जानन्[6]। कर्मणः संस्थान आसीद[7]। अथ[8]। अस्माकम्[9]। गिरश्च[10]। कामप्रदानेन वर्धयेति[11][12]।

**तनूनपादुच्यते गर्भ आसुरो नराशंसो भवति यद्विजायते।**
**मातरिश्वा यदमिमीत मातरि वातस्य सर्गो अभवत्सरीमणि ॥ ११ ॥**

तनूनपात्। असुरशब्दः काष्ठवचनः, अग्नेरसनादासुरः[13]। गर्भोऽयम्[14]।

---

१. योनः P. अरणेः Sy. यस्मादृतुकालोपेताद् गार्हपत्यात् Mah. यस्मात् U.

२. उत्पन्नस्त्वम् Mah. पूर्वमस्याधानेष्टिपशुचातुर्मास्यसोमेष्वङ्गभावमुपगतः सन् U.

३. अशोभथाः। अरोचथाः—'रुच दीप्तौ' इत्यस्य लङि रूपम्। यद्वृत्तयोगादनिघातः Sy. कर्मकाले दीप्तोऽभूःMah. दीप्तवानसि U. दीप्यसे। छान्दसो लङ् BB.

४. तत् M. अरणिरूपं काष्ठविशेषम् Sy. हे अग्ने! तं गार्हपत्यम् Mah. तं तथाभूतं योनिं गार्हपत्याख्यम् U. योनिम् BB.

५. ०नीमयो० M.

६. स्वजनकमवगच्छन् Mah. विद्वान् U. ममायं योनिरित्यवगच्छन् BB.

७. तस्यामरण्यामारोपितः सन् नैरन्तर्येण तिष्ठ। सीद-सदेर्लोटि 'पाघ्रा' इत्यादिना सीदादेशः। निघातः Sy. आरोह पुनरुद्धरणाय कर्मान्ते प्रविश Mah. आरोह पुनरुद्धरणाय U. आश्रय, मा कदाचिदपि मुचः BB.

८. च M. and P. अनन्तरम्। अथा—'निपातस्य च' इति सांहितिको दीर्घः Sy. अथानन्तरम् Mah. अथानन्तरमेव U.

९. अस्मदर्थम् Mah.

१०. गिर० M. गिरिश्च P. स्तुतिलक्षणा वाचः। यद्वा गीःशब्देन तद्वन्तो लक्ष्यन्ते। तथा स्तोतॄनस्मान् Sy. रयिं धनम् Mah., U., BB.

११. पशुपुत्रादिभिः समृद्धान् कुरु। वर्धय 'वृधु वर्धने'। 'हेतुमति—' णिच्। निघातः Sy. वर्धय पुनर्यागाय समृद्धं कुरु Mah. स्फीतं कुरु। ...येन पुनरपि त्वां यक्ष्याम इत्यभिप्रायः U.

१२. VM. ignores अग्ने।
अयं ते योनिरृत्वियः। यतो जातोऽअरोचथाः। तं जानन्नग्नऽआरोहाथा नो वर्धया रयिमिति पुष्टं वै रयिर्भूयो भूय एव न इदं पुष्टं कुर्वित्येवैतदाह। SB. 2. 3. 4. 13. p. 163.
This stanza=YV. 3. 14.= TS. 1.5.5.2.

१३. ०नादसु० P. कर्मविघ्नकारिणामसुराणां हन्ता। असुरस्यायमासुरः। अहितकारित्वेन सम्बन्धी। 'तस्येदम्' इत्यण्। प्रत्ययस्वरः Sy.

१४. गर्भोयः M. अरणीषु गर्भरूपतया वर्तते Sy.

तनूनपात्[1] । उच्यते । अथ नराशंसः[2] । भवति । यदा । अरण्योर्विजायते[3], यस्मादेनं जातं[4] नराः शंसन्ति । यदा । अन्तरिक्षे । स्वं तेजः करोति[5] । तदानीं[6] मातरिश्वोच्यते, अन्तरिक्षे श्वसितीति[7][8] । वातस्य[9] । सरणे[10] सति । सर्गो[11] नाम । भवतीति[12] ।

सुनिर्मथा निर्मथितः सुनिधा निहितः कविः ।
अग्ने स्वध्वरा कृणु देवान्देवयते यज ॥ १२ ॥

सुनिर्मथा । सुनिर्मथनेन[13] । निर्मथितः[14] । सुनिधानेन[15] । निहितः[16] । क्रान्तदर्शनः[17]

---

१. यष्टॄणां तनूः शरीराणि न पातयति न वहतीति व्युत्पत्तेः । यद्वा तनूशब्देनापोऽभिधीयन्ते । नपाच्छब्देनैकान्तरिताः प्रजाः । तथा चापां नप्ता । कथमेतत् ? आपस्तता अन्तरिक्षे । ताभ्य ओषधिवनस्पतयो जायन्ते । तेभ्यो ह्येष इति । तनूनपात्—'तनु विस्तारे' 'कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः' इत्यूप्रत्ययः । व्यत्ययेनाद्युदात्तः । नपात्—'पा रक्षणे' । 'पत्लृ गतौ वा' । ण्यन्तः । क्विप् । न पाति न पातयतीति वा नपात् 'नभ्राण्नपान्नवेदा'—इत्यादिना निपातनान्नञः प्रकृतिभावः । नञ्स्वरः । तनूनं पातीति तनूनपात् । कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते 'उभे वनस्पत्यादिषु युगपत्' इत्युभयपदप्रकृतिस्वरत्वम् Sy.

२. नरैः कर्मणां नेतृभिरध्वर्य्वादिभिः शंसनीयो भवति । 'नॄ नये' । 'ऋदोरप्' इत्यप् । प्रत्ययस्य पित्त्वान्नरशब्द आद्युदात्तः । 'शंस स्तुतौ' इत्यस्माद् घञन्त आद्युदात्तः । नरशब्दस्य 'अन्येषामपि दृश्यते' इति दीर्घः । वनस्पत्यादित्वादुभयोः प्रकृतिस्वरत्वम् Sy.

३. विशेषेण प्रत्यक्षतया जायते । विजायते —'जनी प्रादुर्भावे' । दिवादित्वात् श्यन् । धातुस्वरः Sy. ४. जानन् P.

५. निर्मिमीते । अमिमीत—'माङ् माने शब्दे च' । जुहोत्यादिः । 'भृञामित्' इत्यभ्यासस्येत्वम् । यद्योगादनिघातः Sy.

६. तदा Sy.

७. श्वसि P. ०चेष्टत इति व्युत्पत्तेः Sy.

८. एवंविधस्याग्नेः Sy.

९. वायोः Sy.

१०. रणे P. एवंविधस्याग्नेः शीघ्रगमने । सरीमणि—'सृ गतौ' 'हृभृधृसृस्तृशृभ्यः' (Uṇādi 4.587.) इतीमनिन्प्रत्ययः । नित्स्वरः Sy. ११. सृष्टिः Sy.

१२. यदाग्निररणीषु गर्भरूपतया वर्तते तदा तनूनपान्नामको भवति । यदा जायते तदा नराशंसनामको भवति । यदान्तरिक्षे विद्योतते तदा मातरिश्वनामको भवतीति Sy.

१३. शोभनेन मन्थनेन । सुनिर्मथा—'मथे विलोडने' अस्मात्सम्पदादिलक्षणो भावे क्विप् । प्रादिसमासः । कृदुत्तरपदस्वरः Sy.

१४. ०थित P. नितरां मथितोऽसि । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् Sy.

१५. शोभनेन निधानेन । सुनिधा—निपूर्वस्य दधातेर्भावे 'आतश्चोपसर्गे' इत्यङ् । 'सुपां सुलुक्' इति तृतीयाया लुक् । कृदुत्तरपदस्वरः Sy.

१६. उत्तरवेद्यादिस्थानेषु नितरां प्रक्षिप्तोऽसि Sy. १७. मेधावी Sy.

स[1] त्वम् । अग्ने ! सुयज्ञान्[2] । कुरु[3] । देवान्[4] । तथा[5] यज[6] च । देवानिच्छते[7] यजमानाय तानिति[8] ।

**अजीजनन्नमृतं मर्त्यासोऽस्रेमाणं तरणिं वीळुजम्भम् ।**
**दश स्वसारो अग्रुवः समीचीः पुमांसं जातमभि सं रभन्ते ॥ १३ ॥**

अजीजनन् । जनयन्ति स्म । अमरणधर्माणम्[10] । मर्त्याः[11] । अपापम्[12] । क्षिप्रम्[13] । दृढदंष्ट्रं[14] तम् । दश[15] । पाणेरेकस्मादुत्पत्तेः स्वसारः[16] । दशाङ्गुलयः[17] । समञ्जनाः[18] संश्लिष्टाः ।

---

१. सन् M.

२. अस्माभिः क्रियमाणानि कर्माणि सुष्ठु हिंसारहितानि Sy.

३. कृणु—'कृवि हिंसाकरणयोः' इत्यस्य लोटि 'धिन्विकृण्व्योर च' इत्युप्रत्ययः। 'उतश्च प्रत्ययात्' इति हेर्लुक्। निघातः Sy.

४. यजनीयानिन्द्रादीन् Sy.

५. अयथा M.    ६. पूजय Sy.

७. देवान्कामयमानाय Sy.

८. तानीति P.

९. मन्थनेनोदपीपदन् । अजीजनन्—'जनी प्रादुर्भावे' इत्यस्य ण्यन्तस्य लुङि चङि रूपम् Sy.    १०. मरणधर्मरहितम् Sy.

११. ऋत्विजः Sy.

१२. अत एव क्षयरहितम्। अस्रेमाणम्—'स्रिवु गतिशोषणयोः'। 'भावे मनिन्' इति मनिन्प्रत्ययः। लघूपधगुणः। 'लोपो व्यो-र्वलि' इति वलोपः। 'बहुव्रीहौ नञ्सु-भ्याम्' इत्युत्तरपदान्तोदात्तत्वम् Sy.

१३. तरणिम् । तरन्ति यजमानाः पापमनेनेति तरणिरग्निः । तम् । 'तॄ प्लवन-तरणयोः'। 'अर्तिसृधृधम्यम्यश्यवितृभ्यो-ऽनिः' इत्यनिप्रत्ययः। गुणः प्रत्ययस्वरः Sy.

१४. दष्ठं P. हविर्भक्षणार्थं दृढदन्तम् Sy.

१५. दशसंख्याकाः Sy.

१६. सरन्त्यः। स्वसारः—'असु क्षेपणे' इत्य-स्मात् 'सुञ्यसेर्ऋन्' इति ऋन्प्रत्ययः। सुष्ठु अस्यन्ति कर्मसु पदार्थानिति स्व-सारः। 'न षट्स्वस्रादिभ्यः' इति ङीप्-प्रतिषेधः। नित्त्वादाद्युदात्तः Sy.

१७. कर्मकरणार्थमग्रमञ्चन्तीत्यग्रुवोऽङ्गुलयः। तादृशा अङ्गुलयः। अग्रुवः—'अगि गतौ' 'जम्वादयश्च' (Uṇādi 4.542.) इति रुप्रत्ययः निपातनान्नलोपः। जसि तन्वादित्वादुवङादेशः। प्रत्ययस्वरः Sy.

१८. ०मंजनाः M. समञ्चनाः is suggested for समञ्जनाः। परस्परं सङ्गताः सत्यः। समीचीः—'इण् गतौ' इत्यस्मात् 'समीणः' (Uṇādi. 4.532.) इति चट्प्रत्ययो धातोर्दीर्घश्च। टित्वात् 'टिड्ढाणञ्' इत्यादिना ङीप्। संयन्तीति समीच्यः। यद्वा संपूर्वस्याञ्चतेः क्विप् 'समः समि' इति समि इत्यादेशः। 'अञ्चतेश्चोपसंख्यानम्' इति ङीप्। 'अचः' इत्यकारलोपः। 'चौ' इति दीर्घः। 'वा छन्दसि' इति पूर्वसवर्णदीर्घः। एकादेशस्वरः Sy.

पुमांसम्[1] । जातम्[2] । अभिमुखाः[3] । सम्भूय[4] गृह्णन्ति समिन्धनायेति ।

**प्र स॒प्तहो॑ता सन॒काद॑रोचत मा॒तुरु॒पस्थे॒ यदशो॑च॒दूध॑नि ।**
**न नि मि॑षति सु॒रणो॑ दि॒वेदि॑वे॒ यदसु॑रस्य ज॒ठरा॒दजा॑यत ॥ १४ ॥**

प्र सप्तहोता[5] । चिरादेवारभ्य[6] । प्ररोचते[7] । यस्याग्नेः सप्त[8] वषट्कर्तारो भवन्ति । यदा । पृथिव्याः । उत्सङ्गे । उत्तरवेद्याम्[9] । दीप्यते[10] । न । निमिषति[11], सर्वदा ज्वलति । दिवे-दिवे[12] । शोभनमरणः[13] । यदा[14] । काष्ठस्य[15] । जठरात्[16] । जायते[17] ।

---

१. पुमांसम्—'पा रक्षणे' इत्यस्मात् 'पातेर्डुम्सुन्' (Uṇādi. 4.617.) इति डुम्सुन् प्रत्ययः । पुंसोऽसुङ्' (Pa. 7.1.89.) इत्यसुङादेशः । पाति कुलमिति पुमान् । नित्स्वरः Sy.

२. अथ जातं तमग्निम् । तत्र दृष्टान्तः—यथा जातं पुत्रमुपलभ्य तत्रत्याः पित्रादयो हर्षादुद्घोषन्ति तद्वत् Sy.

३. अभिलक्ष्य Sy.

४. शब्दं कुर्वते । जातमग्निं दृष्ट्वाध्वर्य्वादयो हर्षाद्धस्तद्वयसम्पुटेन शब्दं कुर्वन्तीत्यर्थः । रभन्ते—'रभ शब्दे' इत्यस्य लटि रूपम् । निघातः Sy.

५. होता is omitted in M. and P.

६. सनकात्सनातनोऽग्निः Sy.

७. गार्हपत्यस्थानेऽदीप्यत । अरोचत—'रुच दीप्तौ' इत्यस्य लङि रूपम् । निघातः Sy.

८. सप्त होतारो होत्रका यस्यासौ सप्तहोता सन् Sy.

९. ऊधःस्थाने उत्तरवेद्याम् । ऊधनि, सकारस्य नकारश्छान्दसः Sy.

१०. अशोभत । अशोचत्—'शुच दीप्तौ' Sy.

११. न निद्राति किन्तु सर्वदा यज्ञार्थं जागर्त्येव । मिषति—'मिषु सेचने इत्यस्य लटि रूपम् Sy.

१२. प्रतिदिनम् Sy.

१३. रमणः may be suggested for मरणः ॥ सुष्ठु रणयति शब्दयतीति सुरणः । सर्वैः कमनीयतया दृश्यमानः सन् । 'रण शब्दे' । तत्करोतीति णिच् । तस्मादकृच्छ्रार्थे खल् । लित्स्वरः Sy.

१४. यस्मात् Sy.

१५. अग्नेः प्रेरकस्यारणीरूपस्य काष्ठस्य । असुरः—'असु क्षेपणे' इत्यस्मात् 'असेरुरन्' इत्युरन्प्रत्ययः । अस्यतीत्यसुरः । नित्स्वरः Sy.

१६. उदरात् । जठरात्—'जनी प्रादुर्भावे' इत्यस्मात् 'जनेररष्ठ च' (Uṇādi. 5. 716) इत्यरप्रत्ययः ठकारश्चान्तादेशः । प्रत्ययस्वरः Sy.

१७. कर्मार्थमुदपद्यत । तस्मान्न निमिषतीति पूर्वेणान्वयः । अजायत—'जनी प्रादुर्भावे' इत्यस्य लङि श्यनि 'ज्ञाजनोर्जा' इति धातोजदिशः । यद्योगादनिघातः Sy.

अमित्रायुधो मरुतामिव प्रयाः प्रथमजा ब्रह्मणो विश्वमिद्विदुः ।
द्युम्नवद्ब्रह्म कुशिकास एरिर एकएको दमे अग्निं समीधिरे ॥ १५ ॥

अमित्रायुधः । अमित्राणां योद्धारः । मरुतामिव । वेगः यथा मारुतं शर्धो वृक्षादीनु-
त्क्षिपति । प्रजापतेः । प्रथममेव जाताः । सर्वम् । एवाग्निगणम् । जानन्ति । तथा हविष्मत् ।
स्तोत्रम् । कुशिकपुत्राः । अग्नये प्रेरयन्ति । तथैक एकः सर्व एव । स्वगृहे । अग्निम् । समे-
धितवन्तः ।

यदद्य त्वा प्रयति यज्ञे अस्मिन्होतश्चिकित्वोऽवृणीमहीह ।
ध्रुवमया ध्रुवमुताशमिष्ठाः प्रजानन्विद्वाँ उप याहि सोमम् ॥ १६ ॥

यदद्य त्वा । यत् । अद्य । त्वा । वर्तमाने । यज्ञे । अस्मिन् । अग्ने ! होतः !

---

१. ०मित्रो P. अमित्रैः कर्मविघ्नकारिभिर-सुरैः सह योद्धारः । यद्वा अमित्राणि पापानि तैः सह योद्धारः । अमित्रायुधः —'युध सम्प्रहारे' । क्विप् । कृदुत्तरपद-स्वरः । संहितायां पूर्वपदस्य दीर्घश्छा-न्दसः Sy.

२. तत्र दृष्टान्तः । यथा मरुतां देवानां प्रयाः प्रकर्षेण शत्रूनभियान्तीति प्रया बलानि शत्रूणां हन्तॄणि तद्वत् कर्मविघ्न-कारिणां पापानां च हन्तारः Sy.

३. प्रयाः—'या प्रापणे' । 'अन्येभ्योऽपि दृश्यन्ते' इति विच् Sy. ४. शर्द्धं P.

५. पक्षादीनुत्पतति P.

६. सर्वस्य जगतः स्रष्टुः Sy.

७. ०थमेव P. and M.

८. जातः P. प्रथममुत्पन्नाः । प्रथमजाः—'जनी प्रादुर्भावे' । 'जनसन' इत्यादिना विट् । 'विड्वनोः' इत्यात्वम् Sy.

९. स्थावरजङ्गमात्मकं सर्वं जगत् Sy.

१०. ०वाग्नि गुणं M.

११. जानाति P. विदुः—विदेर्लटि 'विदो लटो वा' इति झेरुसादेशः Sy.

१२. तेऽमी कुशिका. . .हविर्युक्तम् Sy.

१३. कुशिकगोत्रोत्पन्ना ऋषयः Sy.

१४. अग्नय आ समन्तात्प्रेरयन्ति । 'ईर गतौ' इत्यस्य लिटि रूपम् । मन्त्रत्वादाम्न भवति Sy. १५. एकैको भूत्वा Sy.

१६. ते च स्वे स्वे गृहे । दमे—'दमु उप-शमने' । करणे घञ् । 'नोदात्तोपदेश-स्य' इति वृद्धिप्रतिषेधः । ञित्स्वरः Sy.

१७. आज्याद्याहुतिभिः सम्यग्दीपयन्ति । 'ञिइन्धी दीप्तौ' इत्यस्य लिटि 'इन्धि-भवतिभ्यां च' इति किद्वद्भावान्नकार-लोपः । निघातः Sy.

१८. यद्यस्मात्कारणात् Sy. यदर्थम् BB.

१९. इदानीम् Sy. अस्मिन्नहनि BB.

२०. त्वाम् Sy., BB.

२१. ०मानो P. प्रवर्तमाने । प्रयति—'इण् गतौ' इत्यस्य शतरि रूपम् । 'शतुर-नुमः' इति विभक्तेरुदात्तत्वम् Sy. अविच्छेदेन वितायमाने BB.

२२. अस्मिन्यज्ञे BB.

२३. ज्योतिष्टोमादौ Sy.

२४. होमनिष्पादक ! Sy.

प्रज्ञावन्[1] ! होतारमवृणीमहि[2]। ततस्त्वं[3] ध्रुवम्[4]। अयाक्षीर्देवान्[5]। ध्रुवम्। एवं[7]। अशमिष्ठाः[8], शमनं संस्कारः। पशोरध्रिगुप्रैषेणारभ्योः[9] प्रजायमानस्त्वम्[10]। विद्वान्[11]। उपगच्छ[12]। अस्मदीयमिमं सोममिति[13]।

तृतीयस्याष्टकस्याद्यमध्यायं व्याकरोदिति।

जाता वसिष्ठस्य कुले सुन्दरी यमजीजनत्[15]॥

# अथ तृतीयेऽष्टके द्वितीयोऽध्यायः[16]।

अयेच्छन्ति[17] त्वा सोम्यासः[18] व्याचिख्यासति माधवः।

सङ्कतेषु निपातेषु वक्तव्यं सम्प्रदर्शयन् ॥ १॥

---

१. ०ज्ञाप(य)न् M. कर्मविषयज्ञानवन् ! Sy.

२. ०तारं वृणी० P. त्वद्विषयं वरणमकुर्म। अवृणीमहि—'वृञ् वरणे'। क्र्यादित्वात् श्ना। लङ्युत्तमबहुवचने 'ई हल्यघोः' इतीत्वम्। आमन्त्रितस्याविद्यमानवत्त्वेन पादादित्वादनिघातः Sy. त्वां होतारम् ...वृतवन्तो वयमिहास्मिन्प्रयोजन एतदनुरूपमेव त्वया कृतमिति प्रदर्शयति BB.

३. तस्मात्तादृशस्त्वम् Sy.

४. धवम् P. ध्रुवं यथा भवति तथा Sy.

५. ०याक्षीन्दे० P. अस्माभिर्दत्तानि हवींषि प्रापय। अयाः—'या प्रापणे' इत्यस्य लङि सिपि रूपम्। निघातः Sy.

६. ०क्षीः देवाः M.

७. उत अपि च Sy.

८. शमि० P. हविःस्वीकरणात्तृप्तैर्देवैः शान्तस्त्वमकारिष्ठाः। अशमिष्ठाः—'शमु उपशमने' इत्यस्य ण्यन्तस्य कर्मणि लुङि 'स्यसिच्सीयुट्' (Pa. 6.4.62.) इति विकल्पेनेडागमः। तस्यासिद्धत्वात् 'णेरनिटि' इति णिलोपः। निघातः Sy.

९. ०प्रैषणा० M.

१०. इमं यज्ञं सम्यक् जानन्। 'ज्ञा अवबोधने'। शतरि रूपम् Sy.

११. अवि M. यत् किञ्चित्सर्वं जानानस्त्वम्। यत एवमतस्त्वमेव प्रजानन्नात्मीयमधिकारं जानन्ननुसन्दधान इत्थमित्थं कृतवानसि विद्वान् सर्वार्थसाधनोपायज्ञस्त्वम् BB.

१२. समीप आगच्छ। यातेर्लोटि रूपम् Sy. पुनः पुनरुपयाहि, आगच्छ BB.

१३. अस्माभिः क्रियमाणमिममभिषुतं सोममभिलक्ष्य Sy. तस्माद् भूयोऽप्यस्मदीयं यज्ञम् BB.

१४. VM. ignores इह। This stanza=TS. 1.4.44.2.

१५. सुन्दरी मम M. and D.

१६. The line *in toto* is omitted in P.

१७. ०च्छति M.

१८. RV. III. 30.1.[a]

पृथगर्थान्निपातेषु सङ्गतेषु प्रदर्शयेत् ।
'आदहं स्वधामन्विति तत्राहुश्च निदर्शनम् ॥२॥
स्विदित्येको निपातोऽयम् 'अधः स्विदासीदुपरि' ।
चन चेन्नन्वमी च स्युरभिन्ना इति निश्चयः ॥३॥
समुदाया निपातानां नामी नो मो अथो इति ।
ओदन्तस्य प्रगृह्यत्वं पृथक्शास्ति हि पाणिनिः ॥४॥
'मो अहं द्विषते रधम्' मैवाहं द्विषते रधम् ।
एवं 'नो वयं मराम' नैव वयं मरामेति ॥५॥
समुदायत्वमनयोरित्थमर्थप्रतीतितः ।
इच्छन्ति कवयः केचिद्द्वयोरेकः स्वरस्तया ॥६॥

---

१. ०र्था नि० M.
२. ०धामास्विति M. ०धामन्निति P. RV. I. 6.4.
३. स्विवत्ये० M.
४. ०यघस्वि० M. ०मधस्वि० P.
५. RV. X. 129.5.[b]
६. ०याभ्नि० M. and P.
७. नामी is not clear. I therefore propose the emendation नामी=न अमी, meaning—नो मो etc. are not compound, but single words.
८. Omitted in M.
९. ०थक्चास्ति M. ०थक्स्ति P.
१०. वावाणिः P. Cf. Pa. I. 1.15. 'ओत्'
११. मोहन् M.
१२. RV. I. 50.13.[d]
१३. M. omits words मैवाहं... रधम् ।
१४. एव P.
१५. यं P.
१६. RV. I. 191.10—12.
१७. P. omits नैव वयं ।
१८. हेति P. (for मरामेति).
१९ ०मर्त्यं० P.
२०. M. omits द्वयोरेकः । ननुरेक P.

नहीत्येको निपातोऽयं पृथगा[१]र्थ्व्यर्य[२]वस्तु तम् ।
[३]अधीयते [४]ह्युदात्तं च 'न॒ह्यस्या अ॒परं च॒न' [५] ॥७॥

नहीत्यनेन योगे च स्मर्त[६]व्यस्तिङुदात्तवान् ।
केवलेन हिना योगे शाब्दि[७]कैः स्मर्यते यथा [८] ॥८॥

बह्वृचा हिकमित्ये[९]कं किमिति द्वावधीयते ।
अयं च युज्यते [१०]ह्येक एकोदात्तस्य दर्शनात् ॥९॥

'राजा॒ हि[११]कं॒ भुवना[१२]नां' 'तिष्ठा॒ सु[१३]कं॑ मघव॒न्मा[१४] ।'
'येना॒[१५] नु[१६]कं॒ मानु॑षी[१७]' च त्रयोऽमी नि[१८]हताः क्र[१९]मः ॥१०॥

सूक्ष्मेक्षिकापरा विप्राः कथ[२०]यन्त्यत्र बह्वृचाः ।
यथा समासे पदयो[२१]रैकार्थ्यमुपजायते ॥११॥

नञो हेश्च तथैका[२२]र्थ्यं नहीत्यत्रोप[२३]जायते ।
[२४]ह्यर्थस्य च प्रधानत्वादन्तोदात्तमभूत्पदम् ॥१२॥

---

१. ०गथ्वार्य० P.
२. ०वस्त P.
३. अभिनय० P.
४. ह्युदा० P.
५. RV. X. 86.11ᶜ
६. स्वर्त्यंतस्ति० P.
७. शाब्दी M.
८. M. omits स्मर्यते यथा । Cf. 'हि च' Pa. 8.1.34.
९. ०त्येक P.
१०. ह्येकः P.
११. दि M.
१२. ०वनां P. RV. I. 98.1.
१३. क P.
१४. मंघम्म P. RV. III. 53.2.
१५. ननु P.
१६. क P.
१७. RV. I. 72.8.
१८. निग्रहताः M. निहिताः P.
१९. क्रमः M.
२०. ०यत्य० M.
२१. ०योरेकार्थ्यं० P.
२२. तथेकार्थ्यं P.
२३. नहित्यतोपजा० P.
२४. ह्यर्थ० P.

हिना योगे[1] नु-सुभ्यां[2] च कमित्येत[3]न्निहन्यते[4] ।
'राजा हि कं भुवनानां[5]' 'येना नु कं मानुषीति[6]' ॥ १३ ॥
पदेनान्येन[7] संयोगा[8]द्व्याख्यातं निहन्यते ।
हिनुयोगे[9] कमित्येत[10]देवमेवेति[11] बह्वृचाः ॥ १४ ॥
अध्वर्यवस्तु नेच्छन्त्याशिषे[12] वै कं यजमानाः[13] ।
इत्युदात्तमधीयानाः[14] पृथक्चार्थे[15] कमो[16] विदुः[17] ॥ १५ ॥ इति ।

III. 30.

इच्छन्ति त्वा सोम्यासः सखायः सुन्वन्ति सोमं दधति प्रयांसि ।
तितिक्षन्ते अभिशस्तिं जनानामिन्द्र त्वदा कश्चन हि प्रकेतः ॥ १ ॥

इच्छन्ति[18] ।

१. ॰योग्ने M.
२. ॰नु॰ M. ॰सुह्यां P.
३. कमित्ये॰ P. ४. ॰न्निते P.
५. RV. I. 98.1.
६. RV. I. 72.8.
७. ॰देन्याने P.
८. ॰गाद्य॰ P. ९. ॰नुयो P.
१०. तमि॰ M.
११. ॰मेवेति P.
१२. ॰शिषं P. १३. ॰मानः M.
१४. ॰याना P.
१५. ॰क्चार्त्थं P.
१६. कर्मो M. १७. विविदुः M.
१८. तृतीयेऽनुवाके नव सूक्तानि । तत्र 'इच्छन्ति त्वा' इति द्वाविंशत्यृचं प्रथमं सूक्तम् । तत्रेयमनुक्रमणिका 'इच्छन्ति द्व्यधिकैन्द्रम्' (KSA. 18. 30. p. 15.) इति । मण्डलद्रष्टा विश्वामित्र ऋषिः । इन्द्रो देवता । अनुक्तत्वात्त्रिष्टुप् छन्दः । आभिप्लविके प्रथमेऽहनि दशरात्रे प्रथमेऽहनि च माध्यन्दिने सवनेऽच्छावाकशस्त्रेऽहीनसूक्तस्थाने द्वितीयमिदं सम्पातसूक्तम् । 'अभिप्लवपृष्ठ्याहानि' इति खण्डे सूत्रितम्—'इमामूष्विच्छन्ति त्वा शासद्वह्निरिति सम्पाताः' (ASS. 7. 5.) इति । इन्द्रस्य वृत्रघ्नः सम्बन्धिनि पशौ 'सहदानुम्' इति वपाया याज्या । 'सहदानुं पुरुहूत क्षियन्तं स्तुत इन्द्रो मघवा यद्ध वृत्रा' (ASS. 3. 8.) इति सूत्रितम् । 'स्वस्तये वाजिभिश्च' इत्यैन्द्रे पशौ हविषो याज्या । सूत्रितञ्च—'स्वस्तये वाजिभिश्च प्रणेतः शुची वो हव्या मरुतः शुचीनाम्' (ASS. 3. 7.) इति । शुनासीरीये वैकल्पिकस्येन्द्रस्य शुनस्य 'शुनं हुवेम' इत्यनुवाक्या । सूत्रितञ्च 'शुनं हुवेम मघवानमिन्द्रमश्वायन्तो गव्यन्तो वाजयन्तः' (ASS. 2. 20.) इति Sy.

विश्वामित्रः[1] ॥ इच्छन्ति । त्वाम्[2] । सोमपानार्हाः[3] । समानख्याना यजमानाः[4] । तुभ्यं सोमम्[5] । सुन्वन्ति[6] । निदधति च[7] । अन्नानि[8] । तथा तव[9] बलाच्छत्रुजनानाम्[10] । अभिशंसनं च[11] । सहन्ते[12] । इन्द्र[13] ! त्वत्तोऽन्यः[14] । कः[15] । खल्वस्ति[16] । हि[17] । प्रकर्षेण ज्ञायमान[18] इति[19] ।

---

१. विश्वामित्रः स्तौति Sy.

२. त्वा P.
त्वां शंसितुम् Sy.

३. ०नार्हा P. सोमार्हा ब्राह्मणाः । सोम्यासः—सोममर्हतीत्यर्थे 'सोममर्हति यः' इति यः । प्रत्ययस्वरः Sy. किंभूताः सखायः ? सोम्यासः सोमसम्पादिनः Mah., U.

४. ते ब्राह्मणाः Sy. सखायो विप्राः, . . . 'अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवाः' (SB. 2. 2. 2. 6; 4. 3. 4. 4.) इत्युक्तेर्देवानां विप्राणां च सखित्वम् Mah. सखायः समानख्यानाः । कथं समानख्यानाः ? श्रुतौ 'द्वया वै देवाः, अहैव देवा अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवाः' (SB. 2.2.2. 6.; 4.3.4.4.) इति U.

५. त्वदर्थम् Sy.

६. सुन्वति D. अभिषुण्वन्ति । सुन्वन्ति—'षुञ् अभिषवे' स्वादित्वात् श्नुः । 'सतिशिष्टः स्वरो बलीयान्' (Cf. PMBH. on pa. 6. 1. 158.) इति झिप्रत्ययस्वरः Sy. अभिषुण्वन्ति Mah., U.

७. ०दधाति वा P. त्वदर्थं धारयन्ति । दधति—दधातेर्लटि रूपम् । 'समानवाक्ये निघातयुष्मदस्मदादेशाः' (VPa. 8. 1. 18. 5.) इति सोमपदस्येतरवाक्येनान्वयान्न निघातः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् Sy. धारयन्ति Mah., U.

८. इतराण्यपि हवींषि Sy. प्रय इत्यन्ननाम । हवींषि Mah. हविर्लक्षणान्यन्नानि U.

९. त्वया प्रेरिताः सन्तो जनानां सपत्नानाम् Sy.

१०. बळं शत्रुबळानाम् P.

११. तत्कृतां हिंसाम् । अभिशस्तिम्—'शसु हिंसायाम्' इत्यस्माद्भावे क्तिन् । 'तादौ च निति कृत्यतौ' इति गतेः प्रकृतिस्वरत्वम् Sy. दुर्वचनम् Mah., U.

१२. ०हृते M. ०हसे P. तितिक्षन्ते—'तिज निशाने' इत्यस्य क्षमायां 'गुप्तिज्किद्भ्यः सन्' इति सन् । अभ्यस्तस्वरः Sy. सहन्ते मनोवाक्कायसंयताः क्षान्तिपरा इत्यर्थः Mah., U.

१३. अथैवं त्वामिच्छतां हे इन्द्र ! U.

१४. एवमनुग्राहकस्त्वत्तोऽन्यः Sy. त्वत्तः सकाशात् Mah., U.

१५. Omitted in P. को नाम पुरुषः Sy. कोऽपि लोकोत्तरः Mah. कोऽपि U.

१६. बलस्ति P. चनशब्दोऽप्यर्थे Mah. चनो निपातोऽप्यर्थे U.

१७. खलु Sy. हि यतो भवति Mah. हिरनर्थकः U.

१८. जायमा ज्ञायमा P. प्रकेत्यते ज्ञाप्यत इति प्रकेतः । प्रज्ञापितो विद्यते । प्रकेतः—'कित ज्ञाने' कर्मणि घञन्तः । 'थाथघञ्क्त' इत्यन्तोदात्तत्वम् Sy. प्रकृष्टो ज्ञानविशेषः Mah. प्रज्ञानविशेषोऽस्यास्ति भवति, यजमानानामिति शेषः U.

१९. VM. ignores आ ॥ आ सर्वतो जगति Sy. आ समन्ताद्भावेन U. This stanza=YV. 34. 18.

न ते दूरे पर॒मा चि॒द्रजां॒स्या तु प्र या॑हि हरिवो॒ हरि॑भ्याम् ।
स्थि॒राय॒ वृष्णे॒ सव॑ना कृ॒तेमा यु॒क्ता ग्रावा॑णः समिधा॒ने अ॒ग्नौ ॥ २ ॥

न ते दूरे । न । तव । दूरे भवन्ति[1] । दूरस्थानि[2] । अवस्थानानि[3] । शीघ्रम्[4] । आप्रयाहि[5] । हे[6] हरिवः[7] ! हरिभ्याम्[8] । स्थिराय[9] । वर्षित्रे[10] । सवनानि[11] । इमानि । अस्माभिः कृतानि । युक्तानि[12] अभिषवार्थम्[13] । ग्रावाणः[14] । होमार्थं[15] समिधाने[16] । अग्नावागच्छ[17][18] इति, दूराभावः[19] शीघ्रं[20] तत्र गन्तुमसौ शक्त इति[21] ।

---

१. दूरे (न) सन्ति । चिच्छब्दोऽप्यर्थे । अतिदूरमपि ते निकटमत आयाहीत्यर्थः Mah. दूरेऽपि U.

२. दूरे वर्तमानान्यपि Sy. ननु स्वर्गात्कथमिति दूरे मया गन्तव्यमित्यत आह । परमाणि दूरदेशस्थानि Mah. परमाणि विप्रकृष्टदेशानि U.

३. स्थानानि Sy., Mah., U.

४. क्षिप्रम् Sy. तुशब्दो हेत्वर्थे । अतो हेतोः Mah. तु तूर्णम् U.

५. अस्मदीयं यज्ञमभिलक्ष्यागच्छ । याहि—'या प्रापणे' इत्यस्य लोटि रूपम् Sy. आगच्छ Mah. आयाहि U.

६. Omitted in P.

७. हरिवर्णावश्वौ यस्य सोऽयं हरिवानिन्द्रः । हरिवः—हरी अस्य स्त इति मतुप् । 'छन्दसीरः' इति तस्य वत्वम् । आमन्त्रितत्वान्निघातः Sy. हरी अश्वौ विद्येते यस्य स हरिवांस्तस्य सम्बोधनम् Mah.

८. तस्माद् हरिभ्याम् उपेतस्त्वम् Sy. अश्वाभ्याम् Mah., U.

९. फलप्रदाने दृढचित्ताय । स्थिराय—'ष्ठा गतिनिवृत्तौ' इत्यस्मात् 'अजिरशिशिर' इत्यादिना किरच्प्रत्ययान्तत्वेन निपातनादाकारलोपः । चित्स्वरः Sy. दृढसौहृदाय Mah., U.

१०. ०र्षिते P. अत एव कामानां वर्षित्रे तुभ्यम् Sy. वृष्णे सेक्त्रे Mah., U.

११. प्रातरादीनि । सवना—'षुञ् अभिषवे' इत्यस्मादधिकरणे 'ल्युट् च' इति ल्युट् । सूयते सोमो यत्रेति सवनानि प्रातरादीनि । लित्स्वरः Sy. प्रातःसवनादीनि Mah.

१२. योजिताः Mah.

१३. ०श्वभिवार्त्यं P. सोमाभिषवार्थमुद्युक्ताः Sy. अभिषवकर्मणि Mah., U.

१४. उपलाः Sy.

१५. ०मार्त्थं P.

१६. आहुत्यधिकरणतया सम्यग्दीप्यमाने सति । समिधाने—'ञिइन्धी दीप्तौ' इत्यस्य कानचि रूपम् । कित्त्वान्नकारलोपः । चित्स्वरः Sy. समिध्यमाने सति । छान्दसो यको लुक् Mah. समिध्यमाने U.

१७. आहवनीये Sy. अग्ना आहवनीयाख्य आहुतयो होष्यन्ते । अतश्चायाहि U.

१८. ०वाच्छे० P. अतस्त्वं क्षिप्रमागच्छेति भावः Sy.

१९. ०भवः P. दूराभावे is suggested for दूराभावः ।

२०. शीघ्र P.

२१. VM. ignores चित् ॥ चित् अपि Sy. This stanza=YV. 34. 19.

इन्द्रः॑ सुशि॒प्रो म॒घवा॒ तरु॑त्रो म॒हाव्रा॑तस्तुविकू॒र्मिर्ऋघा॑वान् ।
यदु॒ग्रो धा बा॑धि॒तो मर्त्ये॑षु॒ क्व१॒॑त्या ते॑ वृषभ वी॒र्या॑णि ॥ ३ ॥

इन्द्रः सुशिप्रः । इन्द्रः । सुहनुः । धनवान् । तारयिता । महता व्रातेन मरुता संयुक्तः । बहूनामवदानकर्मणां कर्ता वा । हिंसावान् । यानि । उद्गूर्णः । धारयसि । शत्रुभिर्बध्यमानः । शत्रुषु मनुष्येषु जयार्थं कृतानि । क्व । तानि । तव । वृषभ ! वीर्याणीति, न तानि सम्प्रति दृश्यन्त इत्यनागमनादिन्द्रमधिक्षिपति ।

---

१. यस्त्वं परमैश्वर्यसम्पन्नः Sy.

२. शिप्रशब्देन शिरस्त्राणमभिधीयते । शोभनशिरस्त्राणोपेतः, यद्वा शोभनहनुमान् । सुशिप्रः—'सृप्लृ गतौ' औणादिको रन्प्रत्ययः । बाहुलकात् 'सृ' इत्यस्य 'शि' इत्यादेशः । बहुव्रीहौ 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् Sy. 'शिप्रे हनूनासिके वा' (N.6.17.)

३. तरन्त्यनेन शत्रून् देवा इति तरुत्र इन्द्रः । तरुत्रः—तरतेः 'अशित्रादिभ्य इत्रोत्रौ' इत्युत्रप्रत्ययः । व्यत्ययेनाद्युदात्तत्वम् Sy.

४. मरुद्भिर्महान् व्रातः समूहो यस्येति स तथोक्तः । महाव्रातः—'आन्महतः' इत्याकारादेशो महतस्तकारस्य Sy.

५. ०मपादा० M. सङ्ग्रामे नानाविधकर्मणां कर्ता । तुविकूर्मिः—करोतेरौणादिको मिप्रत्ययः । गुणे कृतेऽकारस्योत्वं छान्दसम् । 'हलि च' इति दीर्घः Sy.

६. ०वाद् P. शत्रुविषयहिंसावान् । ऋघावान्—ऋन् नून् हन्तीत्यृघाः । 'अन्येभ्योऽपि दृश्यन्ते' इति विच्, वृशिप्रहणान्नलोपो हकारस्य घत्वम् । तदस्यास्तीति मतुबर्थे 'छन्दसीवनिपौ' इति वनिप् । व्यत्ययेनाद्युदात्तः Sy.

७. या M. and P. यानि वीर्याणि Sy.

८. अत एव शत्रूणां भयङ्करः Sy.

९. व्यधाः Sy.

१०. शत्रुबध्यमानः P. बाध्यमानः is suggested for बध्यमानः ॥ स तादृशस्त्वमसुरैः सङ्ग्रामे बाधितः सन् Sy.

११. मारयितृष्वसुरेषु Sy.

१२. ०ज्यार्थं P.

१३. Omitted in M.

१४. क्वासते वद ? क्व—किंशब्दस्य सप्तम्यर्थे 'किमोऽत्' इत्यत्प्रत्ययः । तस्मिन् 'क्वाति' इति क्वादेशः । तित्स्वरः Sy.

१५. Omitted in P. वीर्याणि Sy.

१६. इदानीं तव Sy.

१७. प्रभ P. कामानां वर्षक ! हे इन्द्र ! Sy.

१८. सम्प्र P.

त्वं हि ष्मा॑ च्या॒वय॒न्नच्यु॑ता॒न्येको॑ वृ॒त्रा चर॑सि॒ जिघ्न॑मानः ।
तव॒ द्यावा॑पृथि॒वी पर्व॑ता॒सोऽनु॑ व्र॒ताय॒ निमि॑तेव तस्थुः ॥ ४ ॥

त्वं हि ष्मा[1] । अच्युतान्यपि[2] । त्वम् । शत्रुबलानि[3] च्यावयन्[4] । असहायः[5] । उपद्रवान्[6] । नाशयन्[7] । चरसि[8] । हि[9] । ततश्च[10] द्यावापृथिवी[11] । पर्वताश्च । तव[12] । कर्मणे[13] । भीताः सञ्चरणकुशला[14] अपि निमिता[15] इव । अनुतस्थुः[16], यथा पृथिव्यामुप्ताः स्थावरा अचला[17]स्तिष्ठन्त्येवमिति[18] ।

---

१. हे इन्द्र ! Sy.

२. च्युतिरहितानि दृढमूलान्यपि Sy.

३. ०त्रुबं० M. तव प्रतिपक्षभूतानि रक्षांसि Sy.

४. स्वस्वस्थानात्पातयन् । च्यावयन्—'च्युङ् गतौ' इत्यस्य ण्यन्तस्य शतरि रूपम् । णिच्स्वरः Sy.

५. असहाय एव Sy.

६. तथा पापानि Sy.

७. हिंसन् । जिघ्नमानः—'हन हिंसागत्योः' इत्यस्य 'घञर्थे कविधानम्' इति कः, तस्य 'छन्दस्युभयथा' इति सार्वधातुकत्वाच्छप् । तस्य श्लुः । 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम् । हन्तीति जिघ्नः, आचारार्थे क्विप्, अस्मात्ताच्छील्यार्थे चानश् । शप्, व्यत्ययेनाद्युदात्तत्वम् Sy.

८. वर्तसे । चरसि—'चर गतिभक्षणयोः' हियोगादनिघातः Sy.

९. Omitted in M. P. adds द्रूरं after खलु ॥ खलु Sy.

१०. पातश्च P.

११. द्यावापृथिव्यौ । द्यावापृथिवी—'देवताद्वन्द्वे च' इत्युभयपदप्रकृतिस्वरत्वम् Sy.

१२. किञ्च–एवंविधसामर्थ्योपेतस्य तव Sy.

१३. व्रताय कर्मणे आज्ञायै Sy.

१४. ०रकु० P.

१५. ०तानीव M. ०तानिव P. निखाता निश्चला इव । निमितेव—'डुमिञ् प्रक्षेपणे' इत्यस्य कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । 'सुपां सुलुक्' इति सुपो डादेशः 'इवेन (समासः) विभक्त्यलोपः—' इत्युक्तत्वात्पूर्वपदस्वरः Sy.

१६. अभित० P. अनुकूलास्तिष्ठन्ति । तस्थुः—'ष्ठा गतिनिवृत्तौ' इत्यस्य लिट्युस्यातो लोपे कृते तस्य 'द्विर्वचनेऽचि' इति स्थानिवद्भावाद् द्विर्वचनम् । निघातः Sy.

१७. अला P.

१८. VM. ignores स्म ॥ स्म—चादित्वादनुदात्तः Sy.

उताभंये पुरुहूत श्रवोभिरेको दृळ्हमंवदो वृत्रहा सन् ।
इमे चिंदिन्द्र रोदंसी अपारे यत्संगृभ्णा मंघवन्काशिरित्ते ॥ ५ ॥

उत । अपि च । हे बहुभिराहूत ! अभयार्थम् । अन्नैर्हविर्भिः । एकस्त्वम् । धृष्टम् । वदसि । युद्धे यजमानशत्रूणां हन्ता । सन् । किं च । यत् । इमे । द्यावापृथिव्यौ । दूरपारे । सङ्गृह्णासि ।

---

१. उतेत्यामन्त्रणे Sy. उताप्यर्थे SKN. अपि Dur.

२. हो P.

३. पुरुभिर्बहुभिर्यज्वभिराहूत ! यद्वा देवैरसुरेभ्यो रक्षार्थं बहुवारमाहूत ! Sy.

४. ०यार्त्यं P. असुरेभ्यः सकाशान्मा बिभीतेति देवान्प्रति यद्वाक्यम् । अभये—'ञिभी भये' इत्यस्माद्भावे 'एरच्' इत्यच्प्रत्ययः । नञा समासे तस्य स्वरः Sy. अपिसामर्थ्याल्लुप्तोपमं द्रष्टव्यम् । अभयमिव भवतीत्यर्थः । कस्मिन् ? सङ्ग्रामे SKN. भयवति सङ्ग्रामे. . .अभये इव Dur.

५. वीर्यैरुपेतः Sy. श्रवणीयैश्शब्दैः SKN. श्रवणीयैः शब्दैरन्नैर्वा हविर्भिर्वा तृप्तः सन् Dur.

६. एकं त्वं M. and P. असहायस्त्वम् Sy. असहायः Dur.

७. तद् वाक्यं दृढं सत्यमेव Sy. सुष्ठु, उच्चैरित्यर्थः SKN. दृढं समर्थम् Dur.

८. अवोचः । अवदः—'वद व्यक्तायां वाचि' । लङि रूपम् । निघातः Sy. सिंहनादं नदसीत्यर्थः SKN.

९. यद्धे P.

१०. वृत्रशत्रोर्हन्ता सन् Sy. वृत्राणां शत्रूणां हन्ता सन् शत्रुवधवेलायामित्यर्थः SKN. शत्रुहेत्यर्थः Dur.

११. चिद् अपि Sy. चिदिति चार्थे SKN. किमेतावदेव महाभाग्यम् ? नेत्युच्यते, इदं चान्यद् अपि Dur.

१२. यस्मात्कारणात् Sy. यस्मात् SKN.

१३. इमे वा SKN.

१४. शत्रून् जरे P. अपारे—बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् Sy. किंविशिष्टे ? अपारे सती अपि द्यावापृथिवीनामगुणत्वे गुणनिमित्तत्वमस्य द्रष्टव्यम् । अविद्यमानं पारमन्तं ? (०मन्तो) ययोस्ते अपारे इत्यर्थः SKN. दूरपारे सती Dur.

१५. गृह्णाति P. परस्परमधरोत्तरभावेन संयोजिते करोषीति यावत् । सङ्गृभ्णाः—'ग्रह उपादाने' । क्र्यादित्वात् श्ना । ग्रहिज्यावयि—'इत्यादिना सम्प्रसारणम् । 'हृग्रहोर्भश्छन्दसि' इति हकारस्य भकारः । 'इतश्च' इति सिप इकारलोपः । 'बहुलं छन्दसि' इत्यडभावः । समासस्वरः Sy.

मघवन्[१]! अतः[२]। तव। मुष्टिः[३]। महानिति[४] शेषः, तथैव यास्केनोक्तमिति[५][६][७]।

प्र सू त॑ इन्द्र प्र॒वता॒ हरि॑भ्यां॒ प्र ते॒ वज्रः॑ प्रमृ॒णन्ने॑तु॒ शत्रू॑न्।
ज॒हि प्रती॒चो अ॑नू॒चः परा॑चो॒ विश्वं॑ स॒त्यं कृ॑णुहि वि॒ष्टम॑स्तु ॥ ६ ॥

प्र सू ते[८]। प्रगच्छतु[९]। सुष्ठु। तव रथ इति शेषः। प्रवणेन[१०] मार्गेण। अश्वाभ्याम्[११]। प्रैतु च। तव। वज्रः[१२]। शत्रून्[१३] प्रकर्षेण हिंसन्[१४]। स त्वमग्रतः प्रतिमुखमागच्छतः[१५]। पृष्ठतश्चानु-[१६]मुखमागच्छतः। अग्रत एव पराङ्मुखं[१७] गच्छतः, सर्वानेव[१८] शत्रून्। जहि[१९]। तदीयं च[२०] विश्वम्[२१]। सत्यम्[२२]। अस्मिन्युद्धे कृणुहि[२३]। निविष्टम्[२४]। अस्त्वस्मदीयं[२५] बलमिति[२६][२७]।

---

१. ०घन् P.
२. यस्मादिति श्रुतेस्तस्मादित्यध्याहारः। तस्मात् SKN.
३. एव तव महिमा...प्रकाशो लोके प्रसिद्ध एव। काशिः—'काशृ दीप्तौ'। औणादिक इप्रत्ययः। प्रत्ययस्वरः Sy. अहो मुष्टिः SKN. एवमत्र सङ्ग्रहणसम्बन्धात् काशिशब्दो मुष्ट्यभिधायक इत्युपपद्यते Dur.
४. इच्छब्दोऽत्र महत्त्वे।...महान् SKN.
५. यस्के० P.
६. काशिर्मुष्टिः प्रकाशनात्।...इमे चिदिन्द्र रोदसी रोधसी द्यावापृथिव्यौ विरोधनात्। रोधः कूलम्। निरुणद्धि स्रोतः। ...अपारे दूरपारे। यत्सङ्गृभ्णासि मघवन्। काशिस्ते महान् N. 6. 1; SKN. II. 388.
७. VM. ignores इन्द्र!
८. हे इन्द्र! Sy.
९. शीघ्रं गच्छतु Sy.
१०. शत्रूनभिलक्ष्य प्रवणेन मार्गेण। प्रवतां —प्रशब्दात् 'उपसर्गाच्छन्दसि धात्वर्थे' इति वतिः। प्रत्ययस्वरः Sy.
११. अश्वाभ्यां युक्तो रथः Sy.
१२. Omitted by M. अशनिः Sy.
१३. असुरान् Sy.
१४. प्रमृणन्—'मृण हिंसायाम्' Sy.
१५. त्वदाभिमुख्येनागच्छतः शत्रून्। प्रतीचः—'अञ्चु गतिपूजनयोः'। 'अञ्चतेश्छन्दस्यसर्वनामस्थानम्' इति विभक्तेरुदात्तत्वम् Sy. १६. पृत० P. अनुगच्छतः पार्ष्णिग्राहानसुरान् Sy.
१७. पालयनपरांश्च। पराचः—'अनिगन्तोऽञ्चतौ वप्रत्यये' इति गतेः प्रकृतिस्वरत्वम् Sy.
१८. ०नेनाम्नासुरे P.
१९. णहि P. मारय। जहि—'हन हिंसागत्योः' इत्यस्य लोटि सिपो हिरादेशः। तस्मिन् 'हन्तेर्जः' इति जादेशः। 'अतो हेः' इति लुकि प्राप्ते, आभाच्छास्त्रस्यासिद्धत्वान्निवृत्तिः। हेर्ङित्वादन्तोदात्तः Sy.
२०. Omitted in P.
२१. एवं शत्रुषु बाधितेषु सत्सु जगत् Sy.
२२. सत्यभूताग्निहोत्रादिकर्मपरम् Sy.
२३. कुरु। कृणुहि—'कृवि हिंसाकरणयोः' Sy.
२४. विष्टम् P.
२५. ०स्त्वदी० P. अस्तु—'अस भुवि' Sy.
२६. एवंविधं सामर्थ्यं त्वयि अस्तु Sy.
२७. VM. ignores इन्द्र॥

यस्मै धायुरदधा मर्त्यायाभक्तं चिद्भजते गेह्यं१ सः ।
भद्रा त इन्द्र सुमतिर्घृताची सहस्रदाना पुरुहूत रातिः ॥ ७ ॥

यस्मै । यस्मै । मनुष्याय[1] । धारणम्[2] । त्वं प्रयच्छसि[3] । स मर्त्यः[4] । अलब्धम्[5] । अपि[6] । शत्रुभ्यो[7] गृहयोग्यं[8] धनम् । लभते[9] । किंच कल्याणी[10] । तव[11] । सुमतिः[12] । योदकं वृष्टिलक्षणमञ्चति[13] । तथाऽनेकदानम[14]नेकधनसम्बन्धादिति[15] ।

सहदानुं पुरुहूत क्षियन्तमहस्तमिन्द्र सं पिणक्कुणारुम् ।
अभि वृत्रं वर्धमानं पियारुमपादमिन्द्र तवसा जघन्थ ॥ ८ ॥

सहदानुम्[16] । दानुनाम्नाऽसुरेण सहितम् ।

---

१. मर्त एव मर्त्यः, दस्त्वादिषु पाठात्स्वार्थिको यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् Sy.
२. धायुर्निरन्तरमैश्वर्यं दधानस्त्वम् । धायुः —दधातेरौणादिक उण्प्रत्ययः Sy.
३. ०यच्छ M. यद्वीर्यं दधासि । अदधाः—दधातेर्लङि रूपम् । यद्वृत्तयोगादनिघातः Sy. ४. मत्तः M. मर्त्यः P.
५. पूर्वमप्राप्तम् Sy.
६. इति P. ७. ०त्रुभ्या P.
८. ग्रह० P. गृहेषु भवं कनकपश्वादिकम् । गेह्यम्—गेहशब्दात् 'तत्र भवः' इत्यर्थे 'भवे छन्दसि' इति यत् । तित्स्वरितः Sy.
९. प्राप्नोति Sy. १०. कल्याणकरी Sy.
११. व M. १२. शोभना बुद्धिः । सुमतिः— 'मन्त्रे वृष—' इत्यादिना मतिशब्दोऽन्तोदात्तः । समासे कृदुत्तरपदस्वरः Sy.
१३. ०ञ्चती P. घृतशब्दो हविर्मात्रमुपलक्षयति । तथा च सोमाज्यपुरोडाशादिलक्षणं हविरञ्चति प्राप्नोतीति घृताची Sy.
१४. ०दानाऽने० is suggested for ०दानमने० ॥ अपरिमितधनदानसमेता । इन्द्रस्य बहुदातृत्वे मन्त्रवर्णः—'भूरिदा भूरि देहि नो मा दभ्रं भूर्या भर' (RV. 4. 32. 20.) इति Sy.
१५. VM. ignores इन्द्र । पुरुहूत and रातिः ॥ हे इन्द्र ! हे बहुभिराहूतेन्द्र ! दानशक्तिः । रातिः—रा दाने । 'मन्त्रे वृष—' इत्यादिना क्तिन्नुदात्तः Sy.
१६. दानुर्दानवी वृत्रमाता तया सह वर्तमानम् । तथा च मन्त्रवर्णः—'दानुः शये सहवत्सा' (RV. 1. 32. 9.) । यद्वा सहदानुं दानुभिर्दानवैः सह वर्तत इति सहदानुः तम् । सहदानुम्— 'दोऽवखण्डने' । 'दाभाभ्यां नुः' इति नुप्रत्ययः । द्यतीति दानुर्दानवः । यद्वा दानुर्दानम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः Sy. सह इति बलनाम । सहो बलं ददातीति सहदानुः । पृषोदरादित्वात्सहःशब्दान्त्यलोपः । नुप्रत्ययो ददातेः । अयमसमर्थोऽस्ति त्वं तु समर्थ इति यः शत्रुं प्रेर्यं बलं ददाति स सहदानुः । यद्वा सह एकीभूय योद्धुमन्त्यं ददाति स सहदानुः शत्रुः Mah. बलस्य दातारं, युध्यस्वानेन सह त्वं सम्पूर्णबलः, अयञ्च तुच्छबल इत्येवं यः शत्रुमुपस्तोभयते स सहदानुस्तं सहदानुं शत्रुम् U. सहस इत्युदकनाम्नश्छान्दसत्वादन्त्यलोपः । सहस उदकस्य दातारम् SKN. सह इत्युदकनाम (Ngh. 1. 12.) उदकदातारं मेघम् Dur.

पुरुहूत ! निवसन्तम् । अत्र यास्कः—'अहस्तमिन्द्र ! कृत्वा संपिण्ड्ढि परिक्वणनं मेघम्' तथाऽभिजघन्थ । वृत्रम् । वर्धमानम् । उदकस्य पातारम् ।

---

१. हे...इन्द्र ! त्वम् Sy. पुरुभिर्बहुभिर्हूतोऽभिहूतः पुरुहूतः । हे बहुभिराहूत ! Mah. हे पुरुहूत ! बहुभिराहूत ! U., SKN.

२. बाधमानम् । क्षियन्तम्—'क्षि निवासगत्योः' । तुदादित्वाच्छः । प्रत्ययस्वरः Sy. क्षियति वसतीति क्षियंतम् । 'क्षि निवासगत्योः' । तुदादिः । शतृप्रत्ययः । निकटे वसन्तम् Mah. निवसन्तम् U. अन्तरिक्षे निवसन्तम् SKN. अन्तरिक्षलोके निवसन्तं गच्छन्तं वा Dur.

३. ०स्तमिन्द्र P. हस्तहीनम् Sy. हस्तहीनं कृत्वा Mah. इहैव, अहस्तं कृत्वा युद्धेन निर्जित्य U. अप्रत्यवस्थानसमर्थं कृत्वेति शेषः SKN. अप्रतीकारसमर्थं कृत्वा Dur.

४. ०पिण्ड्ढि M. सपिण्ड्ढि P. सं पिणक्—सम्यक् चूर्णीकुरु । पिणक्—'पिष्लृ सञ्चूर्णने' । रुधादित्वात् श्नम् । हेर्लुक् । षकारस्य ककारश्छान्दसः Sy. चूर्णय 'पिष्लृ सञ्चूर्णने' Mah. सम्पिण्डीकुरु U. 'पिष्लृ सञ्चूर्णने' सम्पिण्ड्ढि सञ्चूर्णय SKN., Dur.

५. क्वणनशीलं कञ्चिदसुरम् । कुणारुम्—'कुण शब्दने' । बाहुलकाद्रूपसिद्धिः । आद्युदात्तः Sy. क्वणति दुर्वचो वदति कुणारुस्तम् । 'क्वण शब्दे' । औणादिक आरुप्रत्ययः Mah. क्वणन्तं दुर्वचोऽभिधायिनम् । एवं तावदेनं कुरु U. क्वणनं शब्दशीलं सामर्थ्यान्मेघम्, इमं चापरम् SKN. शब्दकारिणमित्यर्थः । एवं तावदेनं कुरु, एवमत्र वधाधिकारान्मेघाधिकाराच्च कुणारं क्वणनशीलमित्युपपद्यते Dur.

६. N. 6. 1.

७. ताभि० P. अभीत्ययं वर्धमानमित्येतेन सम्बध्यते SKN.

८. ०जघन्थ M. ०जगन्थ P. हतवानसि । यद्वा...उदकदानोपेतं क्षियन्तमाकाशे निवसन्तं कुणारुं गर्जन्तं वृत्रम् । वृणोत्याच्छादयति नभ इति वृत्रो मेघः । तमिमं वर्धमानं मेघं हस्तपादशून्यं कृत्वा... सम्पिण्ड्ढि । जघन्थ—'हन हिंसागत्योः' इत्यस्य लिटि थलि रूपम् । 'अभ्यासाच्च' इति धातुहकारस्य घत्वम् । निघातः । 'उपदेशेऽत्वतः' इतीट्प्रतिषेधः Sy. जहि सम्यङ् मारय Mah. जहि U. जहि मारयेत्यर्थः SKN. जहीत्यर्थः Dur.

९. वृत्रासुरम् Sy. वृत्रं दैत्यम् Mah. अथ पुनर्योऽयमपरो वृत्रस्तमभिभूय U. वर्तितारं नष्टारमित्यर्थः SKN. अथ पुनर्योऽयमपरो वृत्रो वर्तिता मेघः Dur.

१०. किञ्च हे इन्द्र !...सर्वत इषुमात्रं वर्धमानम् । 'स इषुमात्रमिषुमात्रं विष्वङ्ङवर्धत' (TS. 2. 4. 12. 2.) इति श्रुतेः Sy. कीदृशं वृत्रम् ? वर्धमानं जगद् व्याप्नुवन्तम् Mah. सर्वतः पृथुभवन्तम् SKN. एनमप्युपरि वर्धमानम् Dur.

११. ०स्यापा० P. हिंस्रम् Sy. सुराणां हन्तारम् । पियतिर्हिंसाकर्मा Mah. देवानां हिंसितारम् U. पियतिर्हिंसाकर्मा । तत आरुः, ताच्छील्येऽर्हार्थे वा । हिंसाशीलं बहूदकत्वाद्वा हिंसार्हम् SKN. हिंसनशीलम् Dur.

अपादं[१] कृत्वा । इन्द्र ! बलेन[२] ।[३]

नि सा॒म॒नामि॑षि॒रामि॑न्द्र॒ भूमिं॑ म॒हीम॑पा॒रां सद॑ने ससत्थ ।
अस्त॑भ्ना॒द्द्यां वृ॑ष॒भो अ॒न्तरि॑क्ष॒मर्ष॒न्त्वाप॒स्त्वये॒ह प्रसू॑ताः ॥ ९ ॥

नि सामनाम् । समस्थलवतीम्[४], समानदीर्घश्छान्दसः[५], विषमां समां कृत्वा । गमन[६]-स्वभावाम् । इन्द्र ! भूमिम्[७] । महतीम् । अपर्यन्ताम् । त्वं सदने[८] । निषसत्थ[९] । स्वस्थाने स्थापि[१०]-तवान् । अथ[११] परोक्षः—धारयति । दिवम्[१२] । अन्तरिक्षं च । कामानां[१३] वर्षिता । त्वया[१४] । प्रेरिताः[१५] ।

---

१. पादहीनम् Sy. पादहीनं कृत्वा Mah. गमनासमर्थं कृत्वा U. अपयानासमर्थं कृत्वेति शेषः SKN. गमनहीनं कृत्वा Dur.

२. तव इति बलनाम (Ngh. 2.9.) बलेन SKN. तत एनं तवसा बलेन Dur. N. 6. 1.; SKN. II. 389.

३. VM. explains second verse by the quotation of N. only. वा॒र्त्रंह॒त्याय॒ श॒वसे । स॒ह॒दा॒नुं पु॑रुहूत क्षि॒यन्त॑मि॒ति वा॒र्त्रघ्नी॒भ्यां प्र॒थ॒मा॒भ्या॒मु॒पति॑ष्ठत॒ऽएतद्वै दे॒वा॒ वृ॒त्रं पा॒प्मा॒न॑ᳫ्ँ ह॒त्वा॒पह॒तपा॒प्मा॒न एतत्क॒र्मा॑कुर्वत त॒थै॒वैतद्य॒ज॒मानो वृ॒त्रं पा॒प्मा॒न॑ᳫ्ँ ह॒त्वा॒पह॒तपा॒प्मै॒तत्क॒र्म॑ कुरुते । SB. 9.5.2.4. p. 748.
This stanza=YV. 18. 69.

४. ०स्थलवती M. ०स्थली P. समानाम् । तथा च मन्त्रवर्णः 'गावौ॑ ते सा॒म॒नावि॑ता' (RV. 10.85.11.) इति । यद्वा सम एव साम । शतपथे श्रूयते—'प्लु॒षि॒णा॒ स॒मो॑ म॒श॒केन॒ स॒मो॑ ना॒गे॒न॒ स॒म॒ ए॒भि॒स्त्रि॒भि॒र्लो॒कैः . . . त॒स्मा॒दे॒व सा॒म' (SB. 14. 4. 1. 24.) इति तदस्यास्तीति सामनः । तां साम्यवतीं कृत्वा । सामनाम्—सम एव साम । तदस्यास्तीति मतुबर्थे पामादित्वान्नप्रत्ययः । प्रत्ययस्वरः Sy.

५. सामानं दीर्घश्छा० P.

६. स्थानाभावेन चलन्तीम् । इषिराम्—'इष गतौ' 'इषिमदि—' (Uṇādi 1. 52.,)इत्यादिना किरच्प्रत्ययः । कित्त्वादगुणः । चित्स्वरः Sy.

७. भूमीम् P.

८. स्वे स्थाने Sy.

९. ०समर्त्थं P. निवेशयामासिथ । ससत्थ—'षद्लृ विशरणगत्यवसादनेषु' इत्यस्यान्तर्भावितण्यर्थस्य लिटि थलि 'उपदेशेऽत्वतः' इतीट्प्रतिषेधः । निघातः Sy.

१०. यथा न पतति तथा धारयत् । अस्तभ्नात्—'स्तम्भु स्तम्भने' इति सौत्रो धातुः । 'स्तम्भुस्तुम्भु—'इत्यादिना श्ना-प्रत्ययः । 'श्नान्नलोपः' इति धातुनकारलोपः । अडागमस्वरः Sy.

११. ०थाप० P.

१२. द्युलोकम् Sy.

१३. अभिमतफलानां वर्षक इन्द्रः Sy.

१४. एवं द्यावापृथिव्योरवस्थितौ सत्यां त्वया Sy.

१५. मेघभेदनेन प्रेरिताः । प्रसूताः—'षू प्रेरणे' इत्यस्य कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् Sy.

आपः[1] । अस्मिन्[2] लोके । गच्छन्तु[3] ।

**अलातृणो वल इन्द्र व्रजो गोः पुरा हन्तोर्भयमानो व्यार ।**
**सुगान्पथो अकृणोन्निरजे गाः प्रावन्वाणीः पुरुहूतं धमन्तीः ॥ १० ॥**

अलातृणः । अलमातर्दनः[4] । बलो नामासुरः[5] । देव[6] ! गोसङ्घस्य[7] । व्रजस्यानीयः[8] । पुरा[9] । हननात्[10] । भीतः[11] सन् । व्यार[12]=तिरोबभूव । अथ परोक्षः[13]—

१. अपः M. आपः—'आप्लृ व्याप्तौ' । क्विप्, धातोर्ह्रस्वश्च, जसि 'अप्तृन्तृच्' इत्यादिना दीर्घः । जसः सुप्त्वादनुदात्तत्वे धातुस्वरः Sy.

२. भूमौ Sy.

३. आगच्छन्तु । तथा च मन्त्रवर्णः–'यः पृथिवीं व्यथमानामदृंहत्' (RV. 2. 12.2.) इति । अर्षन्तु—'ऋषि गतौ' व्यत्ययेन शप्प्रत्ययः । गुणः । पादादित्वादनिघातः Sy.

४. बहूदकतयालमत्यर्थमातृद्यते हिंस्यत इत्यलातृणः । अलातृणः—'तृदि हिंसायाम्' अलंपूर्वात्तृंहेः 'घञर्थे कविधानम्' इति कर्मणि कप्रत्ययः । अलमो मकारस्याकारः समासस्वरः Sy. अलं पर्याप्तमातर्दनं हिंसा यस्य बहूदकत्वात् SKN. पर्याप्त आतर्दयितुमुदकपूर्णः Dur.

५. वृणोत्याकाशमिति वलो मेघः । वलः—'वल संवरणे', वल्यत आच्छाद्यते नभोऽनेनेति वलो मेघः । 'पुंसि संज्ञायाम्'—इति घः । प्रत्ययस्वरः Sy. मेघः SKN. मेघः, स ह्यावृणोत्युदकम् . . . एवमत्र 'पुरा हननाद् भयमानो व्यार' इत्यनेन सम्बन्धादलातृणो मेघ इत्युपपद्यते Dur.

६. हे इन्द्र ! Sy. हे इन्द्र ! योऽयम् Dur.

७. माध्यमिकाया वाचः Sy. पञ्चम्यन्तमित्येतद् भयमान इत्येतेन सम्बध्यते । एतस्यास्तदीयाया माध्यमिकाया गोर्वाचः SKN. आह, किं तस्येति ? एष गोरेतस्या माध्यमिकाया वाचो भावत्कायाः शब्दमुपश्रुत्य Dur.

८. गोष्ठभूतः । व्रजः—'व्रज गतौ' 'गोचरसञ्चर'—(Pa. 3. 3. 19.) इत्यादिना घप्रत्ययान्तत्वेन निपातनात् कुत्वाभावः । व्रजत्यन्तरिक्ष इति । प्रत्ययस्वरः Sy. व्रजिताऽन्तरिक्षे SKN. स एव अन्तरिक्षे व्रजति, इति गुणान्तरत्वादजामि Dur. ९. पुरां P. प्राक् Sy. प्रागेव SKN. पुरैव Dur.

१०. P. adds प्रयो कृणो after हननात् । M. omits पुरा हननात् ॥ तव वज्रप्रहारात् Sy. हननात्, यावत् त्वया नैव हन्यते तावदेवेत्यर्थः SKN. भवतो वधात् Dur.

११. भित० P. बिभ्यत् । भयमानः—'ञिभी भये' व्यत्ययेन शप् Sy. गोरेव बिभ्यत् SKN. असह्योऽयमस्य वध इति मन्यमानः Dur.

१२. व्या M. विश्लिष्टो बभूव । आर—ऋ गतौ' इत्यस्य लिटि णलि रूपम् । निघातः Sy. 'ऋ गतौ' इत्यस्य लिटि रूपम् । व्यगच्छद् विविधं गतः ॥ विश्लिष्टसन्धिबन्धनो भूत इत्यर्थः SKN. विश्लथीभवतीत्यर्थः Dur.

१३. ०रोक्ष P.

सुगमान्[1] । मार्गान्[2] । अकरोत्[3] । पशून्[4] । निर्गमयितुम्[5] । अथवा वाण्यो[6] वहनाद्गाव[7] उच्यन्ते, ताः[8] । इन्द्रं निर्गच्छन्त्यः[9] । पुरुहूतम्[10] । प्रत्यगच्छन्निति[11], यास्कस्त्वाह—[ अलातृणो[12] ] अलमातर्दनो[13] [ मेघः ] । बलो[14] वृणोतेः[15] । व्रजो[16] व्रजत्यन्तरिक्षे[17] । गोरेतस्या माध्यमिकाया[18] वाचः । पुरा हननाद्ध्रुव[19]-

---

१. सुगान्—'गम्लृ गतौ' इत्यस्मादधिकरणे 'सुदुरोरधिकरणे' इति डप्रत्ययः । डित्वाट्टिलोपः । कृत्स्वरः Sy. विश्लिष्टस्य च सुगान् सुगमनान् SKN. स त्वमनेनैव प्रकारेणैनं मेघं विदारयन् सुगान् सुगमनान् Dur.

२. मार्गान् निर्गमनलक्षणान् SKN.

३. करोषि कृतवान्वा Dur.

४. अनन्तरं स इन्द्रो गा अपः Sy. द्वितीयैषा षष्ठ्यर्थे, गवामन्तर्गतानामपाकृतेषु च पथिषु SKN. एतासां मेघोदरान्तर्गतानां गवामपाम्, विदीर्णे हि तस्मिन् मेघे सुखं तास्तस्मान्मेघोदरान्निर्गच्छन्ति Dur.

५. निरजे—'अज गतिक्षेपणयोः' इत्यस्मात् सम्पदादिलक्षणो भावे क्विप् । कृदुत्तरस्वरः Sy. निरजनाय निष्क्रमणाय SKN. निर्गमनाय Dur.

६. पाण्या P.

७. पानान्गा० P.

८. अतो वाणीर्वननीयाः Sy. अपो वृष्टिलक्षणाः ।. . .अथवा वाणीरिति वाचो नाम 'अहो शोभनं वर्षमहो शोभनम्' इत्यादिका वाचः प्रागच्छन् बहुभिराहूतं वृष्टिलक्षणमुदकम् SKN. निर्गताः सत्यस्ताः. . . .आपः ।. . . एवमापो वाणीशब्देनोक्ताः । ता हि 'वहनाद्' वाणीरित्युच्यन्ते । वाचो वा 'वदनाद्' वाणीरित्युच्यन्ते । यदा विदीर्णान्मेघान्निर्गतमुदकं पुरुहूतं भवति वर्षभावेन, अथ तदा तेषामेव प्राणिनाम् । 'अहो दृष्टम्' इत्येवमाद्या वाणीर्वाचो धमन्तीः, मुखेभ्यो निर्गच्छमानाः? (निर्गच्छन्तीः) तदेवोदकं प्रावन् । प्रागच्छन्नित्यर्थः Dur.

९. निनच्छ० P. शब्दायमानास्ता आपः । धमन्तीः—'ध्मा शब्दे', शपि 'पाघ्राध्मा–' इत्यादिना धमादेशः । 'वा छन्दसि' इति जसः सवर्णदीर्घः । शतुर्लसार्वधातुकस्वरे कृते धातुस्वरः Sy. धमतिर्गतिकर्मा, छान्दसत्वात्पूर्वसवर्णः । धमन्त्यो गच्छन्त्यः क्रमेण SKN. गच्छन्त्यो यथानिम्नमभिसरमाणाः? (०रन्तीः) Dur.

१०. M. repeats पुरुहूतम् ॥ बहुभिराहूतं पार्थिवमुदकम् । पुरुहूतम्—ह्वयतेर्निष्ठायां यजादित्वात्सम्प्रसारणम् । 'हलः' इति दीर्घः । थाथादिस्वरः Sy. उदकं पार्थिवं प्रतीति शेषः SKN. यदेतदुदकस्थानं तडागनद्यादि, तत्प्रति धमन्तीस्तदेव रक्षन्ति । तद्धि, उपदस्येद् यदि न पतेरन्? (पतेयुः) ता आपः Dur.

११. ०च्छन्नि P. अभ्यागच्छन् Sy. अयतिर्गतिकर्मा । आगच्छन् SKN. प्रकर्षेणावन् रक्षन्ति Dur.

१२. The text of the N. within brackets has been omitted by VM.

१३. M. omits यास्कस्त्वाह [अलातृणो] अ०

१४. बल्हो M.

१५. वृत्तेः M.

१६. व्राजो P.

१७. व्राजन्त्यन्त० P.

१८. ०कायाः P.

१९. नना० P.

मानो व्यार [सुगान्पथो अकृणोन्निरजे गाः।] सुगमनान् पथोऽकृणोन्निरजनाय गवाम्' इति।

**एको द्वे वसुमती समीची इन्द्र आ पप्रौ पृथिवीमुत द्याम्।**
**उतान्तरिक्षादभि नः समीक इषो रथीः सयुजः शूर वाजान् ॥ ११ ॥**

एको द्वे। एक एव। द्वे। धनवत्यौ। समीची परस्परमभिमुखे! इन्द्रः। तेजसाऽऽपूरयति। द्यावापृथिव्यौ। अपि च। अन्तरिक्षादागत्य। अभिगच्छ। अस्माकम्। सङ्ग्रामे। रथवांस्त्वम्। अस्माभिः सङ्गतानि। बलानि कर्तुमिति।

---

१. ०मारो P.

२. प्यार M. प्यर P.

३. सुरग० M. ग० P.

४. VM. reads अकृणोत् for अकरोत् of the N. P. wrongly reads अकृणो.

५. ०नाये M.

६. The rest of the quotation of the N. runs thus:—"प्रावन् वाणीः पुरुहूतं धमन्तीः"। आपो वा वहनात्। वाचो वा वदनात्। बहुभिराहूतमुदकं भवति। धमतिर्गतिकर्मा N. 6.2.; SKN. II. 390.

७. P. omits ए of एव। M. omits एक॥ असहाय एव सन् Sy.

८. रे M. पृथिवीमुत अपि च द्याम्... एते द्यावापृथिव्यौ Sy.

९. धनयुक्ते सत्यौ। वसुमती—'वा छन्दसि' इति पूर्वसवर्णदीर्घः Sy.

१०. परस्परं सङ्गते Sy.

११. योऽयमिन्द्रः Sy.

१२. समन्तात्पूरयामास। पप्रौ—'प्रा पूरणे' इत्यस्य लिटि णलि 'आत औ णलः' इत्यौकारः। निघातः Sy.

१३. ०थिवी P.

१४. Omitted in P.

१५. अन्तरिक्षसकाशात् Sy.

१६. रथारूढस्त्वमस्मत्समीपं शीघ्रमागच्छेति भावः Sy.

१७. समीके समीपे Sy.

१८. रथीः—रथोऽस्यास्तीति मतुबर्थे 'छन्दसीवनिपौ' इति ईप्रत्ययः। प्रत्ययस्वरः Sy.

१९. सङ्गतान् Sy.

२०. वजन्ति गच्छन्तीति वाजा अश्वाः। तानश्वान् Sy.

२१. VM. ignores उत। इषः and शूर॥ इषः स्यातुमिच्छन्। 'इषु इच्छायाम्'। अस्मादिगुपधलक्षणः कः। कित्त्वादगुणः। प्रत्ययस्वरः॥ हे सामर्थ्योपेत! तादृशस्त्वम् Sy.

दिशः सूर्यो न मिनाति प्रदिष्टा दिवेदिवे हर्यश्वप्रसूताः ।
सं यदानळध्वन आदिदश्वैर्विमोचनं कृणुते तत्त्वस्य ॥ १२ ॥

दिशः[1] सूर्यः । इन्द्रेण[2] हरिहयेन[3] प्रवर्तिताः । दिशः[4] । सूर्यः[5] । न, मिनाति न हिनस्ति[6] । अन्वहम्[7], उदयेन दिग्विभागं करोति । प्रदिष्टा[8] इन्द्रेण—'अनेन मार्गेण त्वया गन्तव्यम्' इति । यदा[9] च । गन्तव्यान् मार्गान्[10] । असौ समश्नुते[11] । अनन्तरम् । एव । अश्वानाम्[12] । रथाद्विमोचनम् । करोति । तदिदं सर्वं[13] कर्म । इन्द्रस्य[14] प्रभावकृतमिति[15] ।

दिदृक्षन्त उषसो यामन्नक्तोर्विवस्वत्या महि चित्रमनीकम् ।
विश्वे जानन्ति महिना यदागादिन्द्रस्य कर्म सुकृता पुरूणि ॥ १३ ॥

दिदृक्षन्ते । रात्रेः[16] । आगमने[17] सति । विवासनवत्याः[18] । उषसः[19] । महत् । चित्रम्[20] ।

---

१. Omitted in M.

२. ण M. इणेन P.

३. हरी अश्वौ यस्यासाविति हर्यश्व इन्द्रः, तेन प्रेरिताः । हर्यश्वप्रसूताः—'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् Sy.

४. प्रागादयः Sy.

५. सूर्यः—'षू प्रेरणे' इत्यस्मात् 'सुसूधागृधिभ्यः क्रन्' इति क्रन्प्रत्ययः । सुवति प्रेरयतीति सूर आदित्यः, सूर एव सूर्यः । वस्वादित्वात्स्वार्थिको यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् Sy.

६. न हिनस्ति किन्तु ताभिरेव व्रजति । मिनाति—'मीञ् हिंसायाम्' । 'मीनातेर्निगमे' इति ह्रस्वः Sy.

७. अन्वयम् M. प्रतिदिवसम् Sy.

८. सूर्यस्य गमनार्थं दत्ता या दिशो विद्यन्ते ताः Sy.

९. यदा सूर्यः Sy.

१०. प्रदेशान् Sy.

११. सम्यगश्नुते । आनट्—'अशू व्याप्तौ' इत्यस्य 'बहुलं छन्दसि' इति लङः श्लुः । 'अश्नोतेश्च' इति नुडागमः । 'व्रश्च—' इत्यादिना षत्वम् । यद्योगादनिघातः Sy.

१२. अद्भुयः M. अभ्यः P.

१३. सर्व P. तदेतत्सर्वं कर्म Sy.

१४. अस्य तवैव खलु Sy.

१५. VM. ignores तु ॥ तु प्रसिद्धौ Sy.

१६. रात्रेः सम्बन्धिनः Sy.

१७. यामनि निर्गमने सति Sy.

१८. विवासनवत्या निर्गमनपरायाः । विवस्वत्याः—विवासतेः सम्पदादिलक्षणः क्विप् । व्यत्ययेनोपधाह्रस्वत्वम् । तस्मात् 'तदस्यास्ति' इति मतुप् । 'मादुपधायाः' इति तस्य वत्वम् । मतुपः पित्त्वादनुदात्तत्वे धातुस्वरः Sy.

१९. ०षसोप्य M.

२०. चायनीयम् Sy.

रश्मिसङ्घम्[1]। जना द्रष्टुमिच्छन्ति[2]। विश्वे[3] च। प्रातस्तामागतां[4] जानन्ति[5]। सा महिम्ना[6] सह। यत्[7]। आगच्छति[8], तच्चैतदिन्द्रकृतम्[9]। तस्मादिन्द्रस्य[10][11]। सुकृतानि[12]। कर्माणि। बहूनीति[13]।

**महि ज्योतिर्निहितं वक्षणास्वामा पक्वं चरति बिभ्रती गौः।**
**विश्वं स्वाद्म संभृतमुस्रियायां यत्सीमिन्द्रो अदधाद्भोजनाय ॥ १४ ॥**

महि ज्योतिः। महत्[14]। ज्योतिः[15]। निहितम्[16]। देवानां[17] वहनशीलासु। एतद्विशदमाह[18]—आमा[19]। गौः। पक्वम्[20] पयः। बिभ्रती[21]। सञ्चरतीति[22] पयोदधिघृतमिति। विश्वम्[23]। अन्नम्[24]। गवि[25]। सम्भृतम्[26]। यत्[27]। इन्द्रः। मनुष्याणां भोजनार्थम्[28]। गवि स्थापितवानेतदिति[29]। सीमिति

१. सौरं तेजः Sy.
२. दिदृक्षन्ते—'दृशिर् प्रेक्षणे' इत्यस्य सनि 'ज्ञाश्रुस्मृदृशां सनः' (Pa. 1.3.57.) इत्यात्मनेपदम्। अभ्यस्तस्वरः Sy.
३. विश्व P. सर्वे जनाः Sy.
४. ०तस्तागतान् P.
५. कर्तव्यतयावबुध्यन्ते। जानन्ति—'ज्ञा अवबोधने'। 'ज्ञाजनोर्जा' इति जादेशः। निघातः Sy.
६. महनीयान्यग्निहोत्रादीनि कर्माणि Sy.
७. यदा Sy.
८. आगात् उषःकालः समन्तादागतो व्यपैति तदा तेजो दिदृक्षमाणाः सर्वे जनाः। अगात्—'इण् गतौ' इत्यस्य लुङि रूपम्। यद्योगादनिघातः Sy.
९. ०कृत P.
१०. अस्मदि० P.
११. हे इन्द्र! तवैव Sy.
१२. सुष्ठु कृतानि। सुकृता—'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् Sy.
१३. ०नि मित P.
१४. मह M. महि P.
१५. ज्योतिष्मदुदकम् Sy.
१६. ०हित M. निहितमिन्द्रेण Sy.
१७. वक्ष्यन्ते यासूदकानीति वक्षणा नद्यः, तासु। वक्षणासु—'वक्ष रोषे'। अस्मात् 'करणाधिकरणयोश्च' इति करणे ल्युट्। लित्स्वरः Sy.
१८. ०द्विद० P.
१९. नवसूतिका Sy.
२०. पत्वं M. क्षीरादिकम्। पक्वम्—पचतेर्निष्ठातकारस्य 'पचो वः' इति वत्वम्। प्रत्ययस्वरः Sy.
२१. ०भ्रति P. दधाना सती। बिभ्रती—'डुभृञ् धारणपोषणयोः'। जुहोत्यादिः। शतुरुगित्त्वात् 'उगितश्च' इति ङीप्। 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् Sy.
२२. सर्वत्र वर्तते। चरति—चरतिर्गत्यर्थः Sy. २३. सर्वम् Sy.
२४. स्वादुतरम् Sy.
२५. उस्रियायाम्—'वस निवासे'। 'स्फायितञ्चि—'इत्यादिनाधिकरणे रक्प्रत्ययः। यजादित्वात्सम्प्रसारणम्। 'शासिवसिघसीनाञ्च' इति षत्वाभावश्छान्दसः। स्वार्थिको घप्रत्ययः। प्रत्ययस्वरः Sy.
२६. स्वेन सम्पादितं दधिघृतक्षीरादिकम् Sy.
२७. यस्मादुदकात् Sy.
२८. ०नार्थं P. भोजनाय Sy.
२९. अदधात्। तस्मात्क्षीरादिकं बिभ्रती गौश्चरतीति पूर्वेणान्वयः Sy.

पूरणः, परिग्रहा[1]र्थीयो वा, परिगृह्य निहितवानिति ।

इन्द्र दृह्य यामकोशा अभूवन्यज्ञाय शिक्ष गृणते सखिभ्यः ।
दुर्मायवो दुरेवा मर्त्यासो निषङ्गिणो रिपवो हन्त्वासः ॥ १५ ॥

इन्द्र[2] । हे इन्द्र ! अर्थि[3]भ्यो धनानां दृंहणे[4] साधो ! तव प्रादुर्भवन्ति[5] । यामकोशाः[6]= यजमानेष्वागमने देयानि धनानि । तत आदाय त्वां स्तुवते[7] । यजमानाय[8] । पुत्रपौत्रार्थे[9]—देहि[10], यज्ञशब्दो यजमानवचनश्च दर्शनात् । गृणते सखिभ्यो यज्ञार्थे[11] च देही[12]त्यपरमिति । दुर्मनना:[13] । दुष्टागमना:[14] । मनुष्याः[15] । आयुधिनः[16] । शत्रवश्च[17] । हन्तव्यास्त्वया[18] ।

---

१. ०हार्त्थी० P.
२. इन्द्रः P.
३. अर्त्थिभ्यो P.
४. न्दृणे P. वृद्धो भव । दृह्य—'दृह दृहि बृह बृहि वृद्धौ' । व्यत्ययेन श्यन् । लोटि रूपम् । निस्स्वरः Sy.
५. अभूवन्—'भू सत्तायाम्' । अस्य लुङि रूपम् । 'गातिस्था—' इति सिचो लुक् । 'भूसुवोस्तिङि' इति गुणे प्रतिषिद्धे 'भुवो वुग्लुङ्लिटोः' इति वुगागमः । निघातः Sy.
६. यामाकाशाः M. यामे कोशाः P. यतो यान्त्यस्मिन्निति यामो मार्गः । तस्य कोशाः कोशवदाच्छादका मार्गप्रतिबन्धका राक्षसा अभूवन् Sy.
७. स्तोत्रं कुर्वते Sy.
८. यज्ञकर्त्रे Sy.
९. ०त्रार्त्थे P. पुत्रादिभ्यश्च Sy.
१०. अपेक्षितं फलं दत्स्व । शिक्ष—'शिक्ष विद्योपादाने' । अयं धातुरत्र दाने वर्तते । व्यत्ययेन परस्मैपदम् । निघातः Sy.
११. ०ज्ञात्थ P.
१२. देहोत्य० P.
१३. दुष्टमायुधानि मिन्वन्ति प्रक्षिपन्तीति दुर्मायवः । दुर्मायवः—मिनोतेः 'कृवापाजिमि—' इत्यादिना उण्प्रत्ययः । कृदुत्तरपदस्वरः Sy.
१४. दुष्टं गच्छन्तः । दुरेवाः—'इण् गतौ' । 'इण्शीङ्भ्यां वन्' इति कर्तरि वन्प्रत्ययः Sy.
१५. मारयितारः Sy.
१६. निषङ्गशब्देनेषुधिरभिधीयते । तद्वन्तः Sy.
१७. एवंविधसामर्थ्योपेताः . . . राक्षसाः । रिपवः—'रपेरिच्चोपधायाः' इत्युप्रत्ययः । उपधाया इत्वम् । प्रत्ययस्वरः Sy.
१८. हननीयाः । हन्त्वासः—'हन हिंसागत्योः' । 'कृत्यार्थे तवैकेन्केन्यत्वनः' इति त्वन्, नित्त्वादाद्युदात्तः Sy.

सं घोषः शृण्वेऽवमैरमित्रैर्जही न्येष्वशनिं तपिष्ठाम् ।
वृश्चेमधस्ताद्वि रुजा सहस्व जहि रक्षो मघवन्रन्धयस्व ॥ १६ ॥

सं घोषः[1] । अन्तिकागतैः[2] । शत्रुभिः क्रियमाणः[3] । शब्दः[4] । संश्रूयते[5] । निजहि[6] । एषु[7] । तापयितृतमाम्[8] । अशनिम्[9] । किच वृश्च[10] । एनान्[11] । मूलतः । विरुज[12] । अभिभव[13] च । तथा नाशय[14] । रक्षः[15] । मघवन्[16] ! वशं च नय[17] हतशेषमिति ।

उद्वृह रक्षः सहमूलमिन्द्र वृश्चा मध्यं प्रत्यग्रं शृणीहि ।
आ कीवतः सललूकं चकर्थ ब्रह्मद्विषे तपुषिं हेतिमस्य ॥ १७ ॥

उद्वृह । उद्धर[18] । रक्षः[19] । सहमूलम्[20] । इन्द्र ! छिन्धि[21] च[22] । तस्य मध्यम्[23] । प्रतिशृणीहि[24]

---

१. हे इन्द्र ! Sy.

२. समीपे वर्तमानैः Sy.

३. असुरैरुत्सृष्टो योऽशनिः Sy.

४. घोषो घुष्यमाणः Sy.

५. सम्यगस्माभिः श्रयते । शृण्वे—निघातः Sy.

६. मारय । तैः प्रयुक्तामशनिं तानेव प्रापयेति भावः । जहि—'हन हिंसागत्योः' अस्य लोटि रूपम् Sy.

७. शत्रुष्वेव निधाय Sy.

८. अतिशयेन तापिकाम् । तपिष्ठाम्—तप्तृशब्दादिष्ठन्प्रत्ययः । नित्स्वरः Sy.

९. अशनिम्—'अशू व्याप्तौ' । 'अशयवितृभ्योऽनिः' इत्यनिप्रत्ययः । प्रत्ययस्वरः Sy.

१०. छिन्धि । वृश्च—'ओव्रश्चू छेदने' । तुदादिः । 'ग्रहिज्या' इत्यादिना सम्प्रसारणम् Sy.

११. एनम् P. शत्रून् Sy.

१२. तान्विशेषेण बाधस्व Sy.

१३. सहस्व—वाक्यभेदादनिघातः Sy.

१४. मारय Sy.

१५. कर्मविघ्नकारीणि रक्षांसि Sy.

१६. हे मघवन् ! इन्द्र ! Sy.

१७. अनन्तरमिमं यज्ञं पारं नय । रन्धयस्व—'रध हिंसासंराद्धयोः' । इत्यस्य ण्यन्तस्य लोटि 'रधिजभोरचि' इति नुमागमः । वाक्यभेदादनिघातः Sy.

१८. वृह, 'वृहू उद्यमने' इत्यस्य लोटि रूपम् Sy. उद्यज उत्खन SKN.

१९. कर्मविघ्नकारि रक्षःकुलम् Sy.

२०. मूलसहितं यथा भवति तथा Sy. किम् ? रक्षः. . .सानुबन्धमित्यर्थः SKN.

२१. उद्वृह्य च. . .छिन्धि. . .पाटयेत्यर्थः SKN.

२२. Omitted in P.

२३. मध्यभागम् Sy. उदरप्रदेशम् SKN.

२४. ०तिगृणी० M. ०तिश्रिणी० P. जहि । शृणीहि—'शॄ हिंसायाम्' अस्य लोटि हौ 'ई हल्यघोः' इतीत्वम् । निघातः Sy. प्रतिशातय च SKN. प्रतिजहीत्यर्थः Dur.

च। अग्रम्, शृणातिर्हिंसाकर्मा, शिरस उपरि वज्रं पातयेत्यर्थः। कीवतः—कियतो दूरस्थितमपि। सरणशीलं रक्षः। त्वमाचकर्थ—अग्रतः कुरु तस्माद्देशात्। अथ कर्मद्विषे तस्मै। तापयितु।

---

१. अत्यग्रं प्रत्यागतं तत् Sy.
अस्याग्रं कर्णनासिकादेः। एवं चोद्धृतपाटितशातितमूलमध्याग्रमपि सत् SKN.

२. ०रस्युप० M.

३. ०त्यस्त्वं: P.

४. Omitted in P. आ कीवतः। 'आङ् मर्यादायाम्', कियतोऽनिर्ज्ञायमानपरिमाणादतिदूराद्देशात्। कीवतः—किंशब्दात् किंपरिमाणमस्येत्यर्थे 'किमिदंभ्यां वो घः' इति किंशब्दाद्वतुबस्तीति ज्ञापितत्वाद् वतुप्। घादेशाभावश्छान्दसः। 'इदंकिमोरीश्की' इति की इत्यादेशः Sy. आदेर्मध्यादग्राच्च कियत इति। किमोऽत्र घाभावश्छान्दसः। आ कियतोप्यनिर्ज्ञायमानपरिमाणाद् दूरादित्यर्थः SKN. आ कस्माद् देशादेतदुद्धर। यस्माद्वितर्कयमाणा अपि न शक्नुयुर्वितर्कयितुं कियतोऽपि प्रदेशादेतदुद्धृतमिति। यथा न किञ्चिदप्यस्यावशिष्यते तथैतदुद्धरेत्यभिप्रायः Dur.

५. तस्य रक्षःकुलस्य मध्ये सरणशीलं रक्षः। सललूकम्—'सृ गतौ'। छान्दसी रूपसिद्धिः Sy. संलुभितमत्यन्तमूढं मूर्च्छायुक्तमित्यर्थः। सरणशीलं वाऽत्यन्तं दूरं नष्टमित्यर्थः SKN. तथा चैतदुद्धृत्य ...सम्मूढमप्रतिपक्षं कुरु, अथवा... पापतरमस्मत्तः कुर्वित्येतत्। 'नैरुक्ताः' नैरुक्तपक्षेण। अथवा 'सरुकम्'—सरणशीलं वाऽशनशीलं प्रच्युतं स्वदेशादेतत्...कुरु। एवमत्र सललूकमिति लुभेर्मोहनार्थस्य शब्दसारूप्यात् संलुब्धमित्युपपद्यते। सर्तेरप्यत्र सारूप्यमस्तीति सरुकं वा स्यादित्युक्तं भाष्यकारेण। रक्षोविशेषणं चैतत्, तस्य हि सम्मोहो वा नाशनं वाऽभीष्टमिति Dur.

६. ०कर्त्थ P. चकर्थ—'डुकृञ् करणे' इत्यस्य लिटि थलि रूपम्। क्रादित्वादिडभावः। निघातः Sy.

७. कृत्वा च Sy., SKN. उन्मूलं कृत्वा Dur.

८. तादर्थ्ये चैषा चतुर्थी। निवृत्तिश्चात्र तादर्थ्यं विवक्षितम्। 'मशकेभ्यो धूमः' इति यथा। अस्य ब्रह्मद्विषो निवृत्त्यर्थम् SKN. स्थानप्रच्युतायास्मै रक्षसे... ब्राह्मणद्वेष्ट्रे Dur.

९. Omitted in P.
रक्षसे Sy.

१०. तापकम्। तपुषिम्—'तप सन्तापे' इत्यस्माद् 'अर्तिपृवपियजितनिधनितपिभ्यो नित्' इत्युसिप्रत्ययो नित्त्वं च। अकारस्य इकारश्छान्दसः। नित्स्वरः Sy. ताडयितारम् SKN. तापयित्रीम् Dur.

आयुधम् । प्रेरयेति । अथवा । समुच्चयार्थ आकारः । अत्र यास्कः—'आ कियतो देशात् । सललूकं संलुब्धं भवति, पापकमिति नैरुक्ताः, सररुकं वा स्यात्, सरतेरभ्यासात् । तपुषिस्तपतेः । 'हेतिर्हन्तेः' इति ।

---

१. घातकमायुधम् । हेतिम्—'हन हिंसागत्योः' । 'ऊतियूतिजूतिसाति—'इत्यादिना निपातनादन्तोदात्तः Sy. कम् ? हेति वज्रनामेदम् । वज्रम् SKN. हन्त्रीमायुधजातिम् Dur.

२. क्षिप । अस्य—'असु क्षेपणे' । लोटि रूपम् Sy. क्षिप, उक्तेन प्रकारेण दूरमुत्कृष्य मारयेत्यर्थः SKN. मूलमध्याग्रच्छेदनाय पुनःपुनरस्य क्षिपेत्यर्थः Dur.

३. ०यार्त्थ P. समुच्चयार्थीय आकारः refers to आ of चकर्थ ।

४. उद्वृह इत्यादेर्मूलतो मध्यतः शिरस्तश्चैवं तावत् प्रत्यक्षमीक्ष (प्रत्यक्षं रक्षः) शृणीहि जहि मारणं कुर्वित्यर्थः । एवमयं प्रथमोऽर्धर्चः प्रत्यक्षरक्षोविषयः । आ कीवत आ कियतोऽपि देशाद् यदपि दूरदेशस्थं तदपि सललूकं संलुभितं मूढमस्मिन् प्रत्यागमनासमर्थम । सररुकं वा दूरतरमपि नष्टं कुरु । ब्रह्मद्विषे ब्रह्मद्विड् नास्तिको भिन्नदृष्टिरसाधुरित्यर्थः । तस्मै तपुषि हेतिमस्येति समानम् । एवमनेकार्थविषया प्रार्थनैषा नैकवाक्यतां विरुणद्धि । 'नूनं सा ते' इति यथा । यदापि नैरुक्तपक्षः—तदापि, उद्वृह रक्ष इति रक्षो रक्षितव्यं यस्मादिति पापकमुच्यते । तत् सहमूलं सानुबन्धमुद्धर, अस्मत्तोऽपनयेत्यर्थः । कथं च तत्सानुबन्धमपनीतं भवति ? यदि खण्डशः शात्यते, अत उच्यते वृश्च मध्यं प्रतिशृणीह्यग्रमिति । एवमनेनार्धर्चेन कृतस्य पापस्यापनयः प्रार्थ्यते, परेण करिष्यमाणस्य । आ कीवतः कालादिति द्रष्टव्यम् । अनिर्ज्ञायमानपरिमाणात् कियतोऽपि कालस्य ? (कियतोऽपि कालात्) । यावज्जीवभावादित्यर्थः । तदपि सललूकं संमूढमस्मत्प्राप्ति प्रत्यसमर्थं कुरु नष्टं वा यथा तच्चिकीर्षा न जातुचिन्मनागपि मनसि समुल्लसति, असमर्थं कुर्वित्यर्थः । किञ्च ब्रह्मद्विषे ब्रह्म तृतीयलक्षणं तत्पुरुषनिःश्रेयसं सुखसाधनं तत्प्रतिद्वन्द्वभावात् पापकद्विट् तस्मै हेतिमस्य, तद्विषयकचित्तः. . .कदाचिन्मा भवित्यर्थः SKN.

५. क्रिय M.

६. संरुद्धं M. संलुद्धं P.

७. पावक० M. and P.

८. ०रुक्तराः P.

९. सरुकं P.

१०. सत्येरर्तभ्यस्तात् P. N. reads सर्तेरभ्यस्तात् for सरतेरभ्यासात् ।

११. P. omits हेति.

१२. उक्तमर्थं यास्कोऽब्रवीत्—उद्धर रक्षः सहमूलमिन्द्र ! मूलं मोचनाद् वा मोषणाद् वा मोहनाद् वा । वृश्च मध्यं प्रतिशृणीहि । अग्रमग्रमागतं भवति । (शिष्टं मूले एवावलोक्यम्) N. 6. 3.; SKN. II. 392.

स्व॒स्तये॑ वा॒जिभि॑श्च प्रणेत॒: सं यन्म॒हीरिष॑ आ॒सत्सि॒ पूर्वीः॑ ।
रा॒यो व॒न्तारो॑ बृह॒तः स्या॑मा॒स्मे अ॑स्तु॒ भग॑ इन्द्र प्र॒जावा॑न् ॥ १८ ॥

स्वस्तये । हे प्रकर्षेण नेतः[1] ! इन्द्र[2] ! अस्माकं[3] स्वस्तये[4] । अश्वैः[5] । च । यत्[6] । महतीः[7] ।
इषो हवींषि[8] । पुरातनानि[9] । समासत्सि[10] । धनस्य[11] । महतः[12] । सम्भक्तारः[13] । वयं स्याम[14] ।
अस्माकम्[15] । अस्तु[16] । प्रजायुक्तः[17] । भग[18] इति ।

आ नो॑ भर॒ भग॑मिन्द्र द्यु॒मन्तं॒ नि ते॑ दे॒ष्णस्य॑ धीमहि प्ररे॒के ।
ऊ॒र्वइ॑व पप्रथे॒ कामो॑ अ॒स्मे तमा पृ॑ण वसुपते॒ वसू॑नाम् ॥ १९ ॥

आ नः[19] । आभर[20] । अस्माकम्[21] । धनम्[22] । दीप्तिमत्[23] । निधीमहि[24] पदं वयम् ।

---

१. के (निर्वाहक) M. प्रकर्षेण जगतो निर्वाहक ! Sy.

२. न्द्र M. ३. अस्मान् Sy.

४. अविनाशाय कुरु Sy.

५. अश्वैः सहितान् कुरु Sy.

६. इत् M. and P. यदा त्वम् Sy.

७. तदा वयं महान्ति Sy.

८. अन्नानि । इषः रायः, इति च द्वे षष्ठ्यर्थे द्वितीये Sy. ९. प्रभूतानि Sy.

१०. अस्माकं समीपे यज्ञनिर्वाहार्थमासीदसि । आसत्सि—'षद्लृ विशरणादिषु' । 'बहुलं छन्दसि' इति शपो लुक्, यद्योगादनिघातः Sy. ११. वन० M. धनानि Sy.

१२. महान्तः Sy.

१३. तेषां सम्भक्तारः सन्तः । वन्तारः—'वन षण सम्भक्तौ' इत्यस्य तृचि आगमानुशासनस्यानित्यत्वादिडभावः । चित्स्वरः Sy.

१४. स्यामम M. भवेम । स्याम—'अस भुवि' इत्यस्य लिङि रूपम् Sy.

१५. अस्मासु । अस्मे—अस्मच्छब्दस्य सप्तम्याः 'सुपां सुलुक्—' इति शे इत्यादेशः Sy.

१६. भवतु Sy.

१७. किञ्च अपत्योपेतम् Sy.

१८. धनम् Sy.

१९. 'उद्वृह रक्षः' इत्यस्या एवेयमनन्तरा । ...हे इन्द्र ! Dur.

२०. आचर M. आहर P. आ समन्तात्सम्भर । भर—'भृञ् भरणे' इत्यस्य लोटि रूपम् Sy. अस्मभ्यं देहीत्यर्थः SKN. आहर । ...आहृत्य चास्मभ्यं देहि Dur.

२१. अस्मदर्थम् Sy. अस्मभ्यम् Dur.

२२. भगशब्दः पुंल्लिङ्गो धनवचनः । धनम् SKN. भजनीयं धनराशिम् Dur.

२३. ०प्तिम P. दीप्तियुक्तम् Sy. कीदृशं भगम् ?...दीप्तिमन्तम् SKN., Dur.

२४. निधी० P. धनदानस्य वयं पात्रभूताः स्म इत्यर्थः । धीमहि—दधातेर्लिङि 'बहुलं छन्दसि' इति शपो लुक् । 'छन्दस्युभयथा' इति महिङः सार्वधातुकत्वात् सीयुटः सलोपः । आर्धधातुकत्वादातो लोपः । निघातः Sy. निशब्दो धीमहीत्यनेन सम्बध्यते । ...निधीमहि निखनेमेत्यर्थः SKN. निदधीमहि Dur.

दानशीलस्य[1] धनस्य[2] । प्ररेचने[3]=त्यागे । वाडव[4] इव[5] । पप्रथे[6] । कामः[7] । अस्माकम्[8] । तम्[9] । आपूरय[10] । वसूनाम्[11] । वसुपते[12] ![13]

इमं कामं मन्दया गोभिरश्वैश्चन्द्रवता राधसा पप्रथश्च ।
स्वर्यवो मतिभिस्तुभ्यं विप्रा इन्द्राय वाहः कुशिकासो अक्रन् ॥ २० ॥

इमं कामम्[14] । इमम्[15] । कामम्[16] । पूरय[17] । गोभिः[18] । अश्वैश्च[19] । सुखवता[20] । धनेन[21] ।

---

१. देष्णस्य—'डुदाञ् दाने' । 'गादाभ्यामिष्णुच्' इतीष्णुच्प्रत्ययः । अत्यर्थं ददातीति देष्णः । चित्स्वरः Sy. तव स्वभूतदेष्णस्य देयस्य भागस्य । षष्ठीश्रुतेरेकदेशमिति शेषः SKN. तव स्वभूतस्य देष्णस्य दानस्येत्यर्थः Dur.

२. Omitted in P.

३. ०रेचने M. प्ररे P. दाने Sy. यागदानभोगातिरेके सतीत्यर्थः SKN. तथा प्रभूतं देहि, यथा भुक्तशेषस्य प्ररेके, अतिरेके सति Dur.

४. ऊर्व इव, पूर्वपदस्वरः Sy. कस्मात् पुनरेवं बहु याच्यते ?...ऊर्वो वडवाग्निः स इव SKN. कस्मात् पुनरेवं ब्रवीमि प्रभूतं देहीति ? इतो यस्मात्...वडवामुखेऽवस्थित ऊर्वोऽग्निरपः पिबन् Dur.

५. M. reads बाडवनाव for वाडव इव ॥ वध इव P. अनवाप्तकामो वडवानल इव Sy. यथा Dur.

६. पप्रथमम M. प्रपथे P. प्रभूतो वर्तते । पप्रथे—'प्रथ प्रख्याने' इत्यस्य लिटि रूपम् Sy. विस्तीर्यते SKN. प्रथते, एवमयम्...कामः प्रथते विस्तीर्यते Dur.

७. अभिलाषः Sy. धनविषयः कामः SKN.

८. एवमत्र 'कामः पप्रथे' इत्यनेन सम्बन्धादात्मविषयत्वादाशिषः, 'अस्मे' इत्यस्य 'अस्माकम्' इत्येवं षष्ठ्या विपरिणाम उपपद्यते Dur.

९. महान्तं कामम् Sy.

१०. बहुधनप्रदानेनापूरय । पृण—'पृण प्रीणने' इत्यस्य लोटि सेर्हिः । तुदादिः । 'अतो हेः' इति हेर्लुक् Sy. आभिमुख्येन...पूरय Dur.

११. धनानाम्मध्ये । वसूनाम्—नित्त्वादाद्युदात्तः Sy. धनानाम् SKN.

१२. M. adds ते before वसुपते । उत्तमधनानामधिपते ! हे इन्द्र ! Sy. धनस्याधिपते ! SKN. N. 6. 7.; SKN. II. 413.

१३. VM. ignores इन्द्र and ते ॥ हे इन्द्र ! ते=तव सम्बन्धिनः Sy.

१४. हे इन्द्र ! Sy.

१५. धनादिविषयम् Sy.

१६. अस्मदीयमभिलाषम् Sy.

१७. एरय P. एतानि दत्त्वेममभिलाषं पूरय । मन्दय—'मदि स्तुत्यादिषु' इत्यस्य लोटि रूपम् Sy.

१८. नोभिः P. अग्निहोत्रादिकर्मसाधनभूतैर्गवादिभिः । गोभिः—'सावेकाचः' इति विभक्तेरुदात्तत्वे प्राप्ते 'न गोश्वन्साववर्ण—'इत्यादिना प्रतिषेधः । प्रकृतिस्वरः Sy.

१९. वाहनसाधनभूतैरश्वैश्च Sy.

२०. सुवव M. दीप्तियुक्तेन Sy.

२१. धने P.

विस्तीर्णं,[1] च,[2] कुरु । स्वस्यागमनसुखं[3] स्वर्गं वाऽऽत्मन इच्छन्तः[4] । तुभ्यम् । इन्द्राय । पूजाभिः[5] सह । विप्राः[6] । वहनसाधनं स्तोत्रम् । कुशिकवंशजाः[7] । कृतवन्तः[8] ।

**आ नो॑ गो॒त्रा द॑र्दृहि गोपते॒ गाः सम॒स्मभ्यं॑ स॒नयो॑ यन्तु॒ वाजाः॑ ।**
**दि॒व॒क्षा अ॑सि वृषभ स॒त्यशु॑ष्मो॒ऽस्मभ्यं॒ सु म॑घवन्बोधि गो॒दाः ॥ २१ ॥**

आ नः । हे गोपते[9] ! अस्माकम्[10] । उदकानि[11] । मेघाः[12] । दर्दृहि[13] रश्मिभिः, इति द्विकर्मकः[14] । संयन्तु[15] । अस्मभ्यम्[16] । धनानि[17] । अन्नानि । दिवं व्याप्नुवंस्त्वम्[18] । असि । सत्यबलः[19] । स[20] त्वमस्मभ्यम् । सुष्ठु । बुध्यस्व[21] । गोदा[22] भवामीति । हे धनवन्[23] ! इति[24] ।

---

१. प्रथितांश्च । पप्रथः—'प्रथ प्रख्याने' । क्विप् 'छन्दस्युभयथा' इति तस्य सार्वधातुकत्वात् शप् । तस्य 'बहुलं छन्दसि' इति श्लुः । धातुस्वरः Sy.

२. किञ्च एतैरस्मान् Sy.

३. ०मनं सु० P. पश्चात्स्वर्गादिसुखमात्मन इच्छन्तः Sy.

४. ०च्छन् P.

५. पूजयाभिः P. मननीयैर्मन्त्रैः Sy.

६. कर्मकुशलाः Sy.

७. कुशिकाः Sy.

८. अकार्षुः । अक्रन्—करोतेर्लुङि 'मन्त्रे घसह्वर—'इत्यादिना (च्लेः) लुक् । निघातः Sy.

९. गवां पते ! स्वर्गाधिपते ! हे इन्द्र ! Sy.

१०. अस्मदर्थम् Sy.

११. अपः प्रति । गाः—'औतोऽम्शसोः' (Pa. 6. 1. 93.) इत्योकारस्याकारः । एकादेशस्वरः Sy.

१२. ०धाना M. and P. गोत्राण्यभ्राणि Sy.

१३. दर्दुहि M. द P. आद्रियस्व । अभ्राणि विदार्य जलानि प्रापयेत्यर्थः । दर्दृहि—'दृङ् आदरे' । यङ्लुकि लोटि रूपम् । 'ऋतश्च' (Pa. 7. 4. 92.) इत्यभ्यासस्य रुगागमः । निघातः Sy.

१४. ०र्मकं P.

१५. ०यन्ति P. समागच्छन्तु । यन्तु—'इण् गतौ' । लोटि रूपम् Sy.

१६. अस्मदर्थम् । अस्मभ्यम्—'भ्यसो भ्यम्' इति चतुर्थीबहुवचनस्य भ्यमादेशः Sy.

१७. सम्भजनीयानि Sy.

१८. दिवं व्याप्य वर्तमानत्वेन महान् । दिवक्षाः—'अक्षू व्याप्तौ' असुन् । दिवं व्याप्नोतीति दिवक्षाः । कृदुत्तरपदस्वरः Sy.

१९. अत एव सत्यसामर्थ्यः Sy.

२०. त P.

२१. ध्यस्व P.

२२. गवां प्रदाता । गोदाः—'डुदाञ् दाने' इत्यस्माद्विच् । कृदुत्तरपदस्वरः Sy.

२३. सनवनिति P. धनवन् ! हे इन्द्र ! Sy.

२४. VM. ignores वृषभ ॥ कामानां वर्षितर्हे इन्द्र ! त्वम् Sy.

शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ २२ ॥

शुनं हुवेम[1] । सुखतरम्[2] । हुवेम[3] । धनवन्तम् । इन्द्रम्[4] । अस्मिन्[5] । सङ्ग्रामे[6] । नेतृतमम्[7] । अन्नलाभनिमित्ते[8] । शृण्वन्तम्[9] आह्वानानि[10] । उद्गूर्णम्[11] । रक्षणाय[12] । युद्धेषु[13] । घ्नन्तम्[14] ।

---

१. विश्वामित्रस्य वैश्वामित्रस्य प्रजापतेर्वा वाच्यस्य SKN. हे इन्द्र ! Sy.

२. Omitted by P. शुनमुत्साहेन प्रवृद्धम् । यद्वा शुनमिति सुखनाम । सुखकरम् । शुनम्—'टुओश्वि गतिवृद्धयोः' इत्यस्य निष्ठायां 'यस्य विभाषा' इतीट्प्रतिषेधः । यजादित्वात्सम्प्रसारणम् । दीर्घाभावश्छान्दसः । प्रत्ययस्वरः Sy. शुनमिति सुखनाम । सुखकरत्वात्कर्तृणामृत्विग्यजमानानाम् SKN. शुनमुत्साहेन प्रवृद्धम् Dur.

३. कुशिका वयं यज्ञार्थमाह्वयेम । हुवेम—ह्वयतेः 'बहुलं छन्दसि' इति सम्प्रसारणे कृते शपो लुकि कृते च लिङि रूपम् । निघातः Sy. तं शुनं हुवेम, आह्वयाम SKN. वयमाह्वयामहे. . .आत्मनो विजयायेति Dur.

४. अत एव निरतिशयैश्वर्यसम्पन्नम् Sy. कम् ? इन्द्रम् SKN. इन्द्रमेवमादिगुणयुक्तम् Dur. ५. उपस्थिते SKN.

६. भरे । बिभ्रति जयलक्ष्मीमनेन योद्धार इति भरः सङ्ग्रामः । तस्मिन् । भरे—'भृञ् भरणे' । करणे घः । वृषादित्वादाद्युदात्तः Sy.

७. सर्वस्य जगतोऽतिशयेन नेतारं त्वाम् Sy. प्रकृष्टपुरुषमत्यन्तशूरमित्यर्थः SKN. जगतोऽतिशयेन नेतारम् Dur.

८. वाजस्यान्नस्य सातिर्लाभो यस्मिन् सोऽयं वाजसातिः तस्मिन् । वाजसातौ—'षणु दाने' । भावे क्तिन् । 'जनसन—'इत्यादिनानुनासिकस्यात्वम् । बहुव्रीहौ पूर्वपदस्वरः Sy. अस्यापि सङ्ग्रामनामत्वात् क्रियाशब्दत्वं द्रष्टव्यम् । कीदृशे भरे ? शत्रून् हत्वा तदीयं वाजमन्नं सम्भज्यते यत्र तस्मिन् SKN. यस्मिञ्छत्रून् जित्वाऽन्नानि सम्भज्यन्ते तस्मिन् Dur.

९. तथा अस्माभिः क्रियमाणां स्तुतिं शृण्वन्तम् Sy. १०. ॰ह्वानानि P. शृण्वन्तम्—किम् ? सामर्थ्याद्यज्ञेष्वाह्वानम् SKN. ११. शत्रूणां भयङ्करम् Sy. अप्रसह्यं शूरं वा SKN.

१२. रक्षणाय वयमाह्वयेम किमर्थं ह्वयाम ? (आह्वयेम) उच्यते, ऊतये पालनायात्मनः SKN.

१३. सङ्ग्रामेषु । समत्सु—'अद भक्षणे' । सम्पूर्वात् क्विप् । सम्भक्षयन्ति योद्धृणामायूंषीति समदः सङ्ग्रामाः । कृदुत्तरपदस्वरः Sy. किं कुर्वन्तम् ? . . . सङ्ग्रामेषु SKN. विजयाय . . . सङ्ग्रामेषु Dur.

१४. हिंसन्तम् । घ्नन्तम्—'हन हिंसागत्योः' इत्यस्य शतरि 'गमहन–' इत्यादिनोपधालोपः । 'हो हन्तेः' इति कुत्वम् Sy. नित्यं घ्नन्तम् Dur.

शत्रुम्[1] । धनानाम्[2] । सम्यग्जेतारम्[3]इति[4] ।

## III. 31.

**शासद्वह्निर्दुहितुर्नप्त्यं गाद्विद्वाँ ऋतस्य दीधितिं सपर्यन् ।**
**पिता यत्र दुहितुः सेकमृञ्जन्त्सं शग्म्येन मनसा दधन्वे ॥ १ ॥**

शासत्[5] ॥ कुशिको[6] वैश्वामित्रः ॥ तृतीयस्यामृचि पुत्रप्रसङ्गादिदमुक्तम्[7]—

'अस्यां[8] यो जायते पुत्रः स मे पुत्रो भवेदिति ॥'

विट्पतेरनुशासनं कुर्वन्[9] । वह्निः[10], दुहितरमन्यं प्रतिनयन् । दुहितुः[11] पुत्रम्[12] । गच्छति[13] ।

---

१. वृत्रोपलक्षितानि सर्वाणि रक्षांसि Sy. शत्रुवृन्दानि SKN. वृत्राणि वारकाणि शत्रुजात्यानि Dur. २. धनानां शत्रुसम्बन्धिनाम् Sy. शत्रुधनानामितिSKN.
३. ०रं मि० P. सञ्जितम्—'जि जये' । क्विप् Sy. समस्तानां वीराणां धनानां च जेतारम् Dur.
४. N. 12. 40., SKN. III. 140.
५. 'शासद्वह्निः' इति द्वाविंशत्यृचं द्वितीयं सूक्तम् । अत्रानुक्रमणिका 'शासत् कुशिको विश्वामित्र एव वा श्रुतेः' (KSA. 18. 31. p. 15) इति । इषीरथस्य पुत्रः कुशिको विश्वामित्र एव वा ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः ॥ चातुर्विंशिकेऽहनि माध्यन्दिने सवनेऽच्छावाकशस्त्र आरम्भणीयाया ऊर्ध्वमहीनसूक्तसंज्ञकमेतत् सूक्तं शंसनीयम् । सूत्रितं च—'अस्मा इदु प्रतवसे शासद्वह्निरितीतरावहीनसूक्ते' (ASS. 7. 4.) इति । पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि माध्यन्दिनसवनेऽच्छावाकशस्त्रेऽहीनसूक्तस्य स्थाने त्रीणि सम्पातसूक्तानि । तत्रेदं तृतीयं सम्पातसूक्तम् । 'इमामू ष्विच्छन्ति त्वां शासद्वह्निरिति सम्पाताः' (ASS. 7. 5.) इति Sy.
६. कुशिकःप्रसङ्गात् कञ्चित् शास्त्रार्थं ब्रूते,—
अपुत्रस्य पितुः पुत्री दायादा पुत्रिका सती ।
यतः सन्तानकृत्तस्याः पुत्र इत्यनयोच्यते ॥
इति Sy. ७. मुक्त P.
८. स्यां P. ९. कुर्व P.
अभ्रातृकां प्रदास्यामि
तुभ्यं कन्यामलङ्कृताम् ।
अस्यां यो जायते पुत्रः
स मे पुत्रो भवेदिति ॥
(VDS. 17. 17.) इति स्मृत्युक्तमनुशासनं कुर्वन् । शासत्—शासेः शतर्यभ्यस्तत्वान्नुमभावः Sy.
१०. अपुत्रो यः पिता कन्यामन्यकुलं प्रापयति स वह्निरित्युच्यते । स पिता Sy.
११. पुत्रिकायाः । दुहितुः—'दुह प्रपूरणे' । 'नप्तृनेष्टृ—' इत्यादिना तृचि निपातनादिडागमः । चित्स्वरः Sy.
१२. नप्तृभवं पिण्डदानादिकम् । नप्त्यम्—नप्तरि भवम् । 'भवे छन्दसि' इति यत् । 'रीङृतः' इति रीङादेशः । 'यस्य' इति लोपः । रेफलोपश्छान्दसः Sy.
१३. (दुहितुः पुत्रत्वेन स्वीकाराद्दौहित्रं नप्तुभवं पिण्डदानादिकम्) कर्तव्यतया. . . गच्छति । गात्—'इण् गतौ' इत्यस्य छान्दसे लुङि रूपम् Sy.

रेतसः[१] । धारकम्[२] । पूजयन्[३], दौहित्रिस्तस्य[४] पुत्रो भवति । विट्पतिः[५] । यत्र । अनपत्यस्य दुहितुः[६] पुत्रिकायाः । रेतःसेकम्[७] । ऋञ्जन्[८] । केवलसुखनिमित्तेन[९] । मनसा । सन्दधात्यात्मानम्[१०][११], न पुत्रनिमित्तेनेति[१२] ॥ 'प्रशास्ति वोळ्हा[१३] सन्तानकर्मणे[१४]' इत्यादिकं निरुक्तं[१५] द्रष्टव्यम् ।

'करोति पुत्रिकां नाम[१६] यथा दुहितरं[१७] तथा ।
तस्यां[१८] सिञ्चति[१९] रेतो[२०] वा तच्छासदिति कीर्तितम्[२१] ॥'

इति शौनकः ।

'रिक्थस्य दुहितुर्दानं नेत्यृचि[२२] प्रतिषिध्यते ।
तस्याश्चाह[२३] यवीयांसं भ्रातरं ज्येष्ठवत्सुतम् ॥[२४]' इति च[२५] ॥

---

१. सत्यस्य पुत्रोत्पादनसमर्थस्य रेतसः Sy.
२. धर्तारं जामातरं तत्पतिम् Sy.
३. वस्त्रालङ्कारादिना पूजयन् पिता Sy.
४. ०हित्रं त० P.
५. पिता नप्तृभवं गच्छति । पिता पालकः पतिर्जामाता Sy.
६. ०हितः M. यस्या दुहितुः Sy.
७. ०तस्सकम् P. तस्यां रेतःसेकम् Sy.
८. ऋञ्ज M. उञ्जन् P. प्रसाधयन् । ऋञ्जन्–ऋञ्जतिः प्रसाधनकर्मा (N. 6. 21.) Sy.
९. केवलं सुखनिमित्तेन, न तु पुत्रनिमित्तेन । शग्म्येन—शं सुखं गच्छन्तीति गमेरौणादिकः कप्रत्ययः । कित्त्वाद् 'गमहन—' इत्यादिनोपधालोपः । शग्मे साधुरिति 'तत्र साधुः' इति यत्प्रत्ययः । 'वीरवीर्यौ च' इत्यत्र 'यतोऽनावः' इत्यस्यानित्यत्व-(स्य) ज्ञापितत्वादत्र तित्स्वरः Sy.
१०. तया स्वशरीरं संधत्ते । दधन्वे–धवि सौत्रो धातुः । लिटि रूपम् । प्रत्ययस्वरः । यद्योगादनिघातः Sy.
११. ०त्यात्मना P.
१२. VM. ignores विद्वान् ॥ अस्यां दुहितरि जातः पुत्रो मम स्वधाकरो भविष्यतीति जानन् Sy.
१३. बो P. १४. कर्म P.
१५. 'प्रशास्ति वोढा सन्तानकर्मणे दुहितुः पुत्रभावम्' । दुहिता दुर्हिता दूरे हिता, दोग्धेर्वा । नप्तारमुपागमत् । दौहित्रं पौत्रमिति । विद्वान् प्रजननयज्ञस्य । रेतसो वा । अङ्गादङ्गात् सम्भूतस्य हृदयादधिजातस्य मातरि प्रत्यृतस्य विधानं पूजयन् । अविशेषेण मिथुना पुत्रा दायादा इति' N. 3. 4.
१६. न M. नारीं D. P.
१७. दुहितस्तदानीं तयोः पुत्रश्च दुहितुश्च न्यस्य पुत्रः शोभनस्य कर्मणः कर्ता भवति रं P. This additional passage in P. has a striking resemblance with the commentary on RV. 3. 31. 2.
१८. तस्मां M.
१९. सि M. २०. तो० M.
२१. BD. IV. 110$^{c-d}$, 111$^{a-b}$.
२२. नेत्यचि P.
२३. तस्यां च व P. तस्यां चैव D. M.
२४. BD. IV. 111, 112.
२५. Omitted in P.

न जामये तान्वो रिक्थमारैक्चकार गर्भं सनितुर्निधानम् ।
यदी मातरो जनयन्त वह्निमन्यः कर्ता सुकृतोरन्य ऋन्धन् ॥ २ ॥

न जामये[1] । न । भगिन्यै[2] । तान्वः[3]=आत्मजः पुत्रः । रिक्थम्[4] । प्रारिचत्[5] प्रादात्[6] । चकारैनाम्[7] । गर्भम्[8] । सम्भक्तुर्[9]हस्तग्राभस्य[10] । गर्भनिधानीम्[11] । यदि[12] ।

---

१. अभ्रातृकाया दुहितुः पुत्रिकाकरणात् सा रिक्थभागित्युक्तम् । भ्रातृमत्यास्तस्या रिक्थभाक्त्वं नास्तीति ब्रूते Sy.

२. M. omits गिन्यै । जामिः कस्मात् ? अन्येऽसगोत्रा अस्यां जनयन्तीति जामिः । जीनं क्षीणं पुत्रकापेक्षयाऽत्यन्तं जामिः । जमतेर्वा स्याद् गत्यर्थस्य । निर्गमनप्राया हि सा भवति । प्रायोवचनं पुत्रिकाभिप्रायम् । सा हि न निर्गच्छति पितृकुल एवावतिष्ठत इति SKN. जाम्याख्यो भगिन्याख्यः प्रदीयते परस्मै, न कस्याञ्चिदप्यवस्थायामसावात्मीयो भवतीत्यभिप्रायः Dur.

३. तनूजः, औरसः पुत्रः । तान्वः, तन्वाः प्राणाधिष्ठितत्वात्तनूः प्राणवती । तद्विकार इत्यर्थे 'प्राणिरजतादिभ्योऽञ्' इत्यञ् । संज्ञापूर्वकस्य विधेरनित्यत्वाद् गुणाभावः Sy. तनुभव औरसः पुत्र इत्यर्थः SKN. आत्मनो धियो जातः स आत्मजः Dur.

४. पित्र्यं धनम् । रिक्थम्—'रिचिर् विरेचने' 'पातृतुदिवचिरिचिभ्यस्थक्' । प्रत्ययस्वरः Sy. पित्र्यं धनम् SKN. स च किं करोतीति ?...रिक्थं पैतृकं धनम् Dur.

५. ०रिच M. and P. न अरेचयति । न प्रददाति । अरैक्—'रिचिर् विरेचने' इत्यस्य लुङि सिचि 'वदव्रज' इत्यादिना वृद्धिः । 'बहुलं छन्दसि' इतीडभावः । हल्ङ्यादिसंयोगान्तलोपौ । निघातः Sy.

६. प्रादां M. ददातीत्यर्थः SKN. न प्रददाविति Dur.

७. पाणिग्रहणेन संस्कृतामेनां करोति । न तु तस्यै रिक्थं ददातीत्यभिप्रायः ।
असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।
भगिन्यश्च निजादंशाद्दत्वांशं तु तुरीयकम् ॥
(YS. 2.124.) इति । किं तर्हि ?... करोत्येनाम् SKN. किं तर्हि ? तस्याः करोतीति ? उच्यते...करोति पुष्णातीत्यर्थः Dur.

८. गर्भं षष्ठ्यर्थे द्वितीया । गर्भस्य Sy. SKN.

९. एनां सम्भजमानस्य भर्तुः । सनितुः 'षण सम्भक्तौ' इत्यस्य तृचि रूपम् Sy. तस्या एव स्वभूतस्य भर्तुरित्यर्थः SKN. भगिनीभर्तुः Dur.

१०. हस्तग्राहस्य is suggested for हस्तग्राभस्य ।

११. रेतःसेकनिधानीम् । निधानम्—दधातेर्ल्युटि रूपम् । लित्स्वरः Sy. स्थानम् SKN. प्रसवसमर्थाम् Dur.

१२. स्त्रीपुंसलक्षणस्यापत्यस्यैकोत्पाद्यत्वाविशेषात्पुमपत्यस्य को विशेषः ? इत्याशङ्क्य विशेषं दर्शयति यद्यपि Sy. कुतः ? उच्यते, यदि । शुद्धोऽप्ययमपिशब्दसहितस्यार्थे द्रष्टव्यः । यद्यपि SKN. यत् पुत्रद्वयमिह Dur.

मातरः[1]। जनयन्ति[2]। पुत्रकस्य[3] भार्याः ? तदानीं तयोः पुत्रस्य[4] दुहितुश्चान्यस्य ? (०श्चान्यः) पुत्रः[5]। शोभनस्य[6] कर्मणः। कर्ता भवति[7] स्वतन्त्रः[8]। यथान्यो[9] दुहितेत्यर्थः। सा कस्मै[10] वशमात्मना[11] भवति ? यास्कस्त्वाह[12]—यवी[13] मातरो जनयन्त[14]। वह्निं पुत्रम्। अवह्निं च स्त्रियम्। अन्यतरः सन्तानकर्ता[15] भवति पुमान् दायादः। अन्यतरोऽर्धयित्वा[16] जामिः[17] प्रदीयते परस्मै[18] इति।

---

१. मातापितरौ Sy. मातरः—'पिता मात्रा' इति पितुः शेषे प्राप्ते मातुः शेषश्छान्दसः। द्विवंचनस्य बहुवचनं पूजार्थम्। 'पिता मात्रा' (Pa. 1. 2. 70.) इति पितुः शेषे प्राप्ते छान्दसो मातुः शेषः। द्विवचनस्य स्थाने बहुवचनम्। मातापितरौ SKN. मातरौ Dur.

२. जनयन्त—जनेर्णिचि रूपम् Sy. जनितवन्तौ SKN.

३. अवह्निः स्त्री वह्निः पुमान् स्वभार्याया वोढृत्वात्। अवह्निश्च वह्निश्च। तादृशं स्त्रीपुंसलक्षणमपत्यम्। वह्निम्—'पुमान् स्त्रिया' (Pa. 1. 2. 67.) इति वह्नेः शेषः Sy. वोढारं स्वभार्यायाः पुमांसं स्त्रियञ्चेति शेषः। तथा चाह भाष्यकारः—'वह्निं पुत्रमवह्निं च स्त्रियमिति' (N. 3.6.) बध्वा वोढारं पुत्रम् Dur.

४. पुत्र P. तथापि तयोर्मध्ये Sy.

५. अन्यः पुंलक्षणः Sy. तथाप्यन्य एकः SKN. तयोर्द्वयोरपि पुत्रयोरन्यतर एकतरः Dur.

६. शोभनस्य पिण्डदानादेः कर्मणः। सुक्रतोः—करोतेरौणादिकः क्तुप्रत्ययः Sy. शोभनस्य कर्मणः कर्त्रोः SKN. सुकृतयोः सुतरामेकेनापि प्रयत्नेन कृतयोरुत्पादितयोः Dur.

७. भव M. कर्ता सन्तानकर्मणः... कतरः ? पुमान्, ततश्च स दायार्हः SKN. सन्तानकर्ता भवति। कतमः ? यः पुमान् स एव च...दायाद्यार्हः, नेतरः कन्याख्यः Dur.

८. तन्त्रः M.

९. तथा is suggested for यथा॥ स्त्रीलक्षणः Sy. परस्तु SKN.

१०. यक० P.

११. ०मात्मानं नयनं M. 'ऋध्यतिर्वशगमने' (N. 6. 32; 10. 40.) ऋन्धन् वस्त्रालङ्कारादिना ऋध्यमान एव भवति। पिण्डदानादिकर्तृत्वात्पुत्रो दायार्हः दुहितुस्तथात्वं नेति न दायार्हा सा तु केवलं परस्मै दीयते। ऋन्धन्—'ऋधु वृद्धौ'। व्यत्ययेन श्नम् Sy. वस्त्रालङ्कारादिदानेनाऽऽराध्यते च, न च केवलं दीयते परस्मै। कतरः ? स्त्री, ततश्च सा न दायार्हा। अतोऽस्या अनर्हत्वान्न ददाति SKN. सुकृतोऽपि सुपुष्टोऽपि सन् Dur.

१२. 'न जामये भगिन्यै जामिरन्येऽस्यां जनयन्ति। जामपत्यम्। जमतेर्वा स्याद् गतिकर्मणः। निर्गमनप्राया भवति। तान्व आत्मजः पुत्रः। रिक्थं प्रारिचत् प्रादात् चकारैनां गर्भनिधानीम्। सनितुर्हस्तग्राहस्य' N. 3. 6. See rest of the quotation of N. in VM's. commentary.

१३. यदि ह मातरः P. D. यदि हि मातरः M.

१४. यजन्त P. १५. सन् सं० M.

१६. यजन्त P.

१७. जामि M.

१८. परा इ० P. N. 3. 6.; SKN. II. 134.

**अ॒ग्निर्ज॑ज्ञे जु॒ह्वा॒३॑ रेज॑मानो म॒हस्पु॒त्राँ अ॑रु॒षस्य॑ प्र॒यक्षे॑ ।**
**म॒हान्गर्भो॒ मह्या जा॒तमे॑षां म॒ही प्र॒वृद्धर्य॑श्वस्य य॒ज्ञैः ॥ ३ ॥**

अग्निर्जज्ञे[1][2]। अग्निः[3]। जजान[4]। होमेन[5]। चलन्[6]। महतः[7]। पुत्रस्थानीयान्[8] रश्मीन्। आरोचमानस्येन्द्रस्य। प्रकर्षेण यागाय[9]। महत्[10]। एषां रश्मीनाम्। उत्पत्तिस्थानम्[11]। महच्च[12]। जननम्[13]। महती च[14]। प्रवृत्तिः[15]। हर्यश्वस्य[16]। यज्ञार्थमिति[17][18]।

**अ॒भि जैत्री॑रसचन्त स्पृधा॒नं महि॒ ज्योति॒स्तम॑सो॒ निर॑जानन् ।**
**तं जा॑न॒तीः प्रत्युदा॑यन्नु॒षासः॒ पति॒र्गवा॑मभव॒देक॒ इन्द्रः॑ ॥ ४ ॥**

अभि जैत्रीः[19]। पणिभिः[20] स्पर्धमानमिन्द्रम्[21]। जयहेतव[22] उषसः। अभ्यसचन्त[23]। महच्च[24]।

---

१. अग्निः P. २. हे इन्द्र ! Sy.
३. अ॰ P. Omitted in M.
४. उत्पादयामास। जज्ञे—'जनी प्रादुर्भावे' इत्यस्य लिटि रूपम्। अन्तर्भावितण्यर्थः Sy.
५. ज्वालाभिः। जुह्वा—'जुहोतेर्दीर्घश्च' इति क्विप्। द्विर्वचनं दीर्घश्च धातोः। 'उदात्तस्वरितयोः' इति स्वरितत्वम् Sy.
६. कम्पमानोऽग्निः Sy.
७. प्रभूतान् Sy.
८. ॰नीयं M. पुत्रान् Sy.
९. यज्ञार्थम् Sy.
१०. महानासीत् Sy.
११. जलात्मना कोडीकारः Sy.
१२. ॰हतश्च P. महद्भूत् Sy.
१३. किञ्च एषां रश्मीनां मेलनं. . .सर्वत ओषध्यात्मना जातम् Sy.
१४. महती भवति Sy.
१५. किं च एषां रश्मीनामनेन प्रकारेण प्रवृत्तिः Sy.
१६. इन्द्रस्य। हर्यश्वस्य—हरी अश्वौ यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरः Sy.
१७. ॰ज्ञार्थ्य॰ P. यजनार्हैः सोमाज्याहुतिभिः Sy.
१८. VM. ignores आ ॥ आ=सर्वतः Sy. १९. Omitted in P.
२०. वृत्रेण सह Sy.
२१. ॰मि P. स्पर्धमानम्—'स्पर्ध सङ्घर्षे'। छन्दसि कानजादेशः। छन्दसि द्विर्वचनस्य विकल्पितत्वाद् द्विर्वचनाभावः। चित्स्वरः Sy.
२२. अय॰ P. जित्वर्यो विशो मरुतः। जैत्रीः—जयतेस्तृनि रूपम्। गुणस्य स्थाने व्यत्ययेन वृद्धिः। नित्स्वरः Sy.
२३. ॰चंत M. सर्वतः समगच्छन्। असचन्त—'षच समवाये' इत्यस्य लङि रूपम् Sy.
२४. ॰हतञ्च P. ते च मरुतः Sy.

ज्योतिः[१] । पणिभिस्त्वादितां[२]दन्धकारात् । निरजानन्[३], इत्येतदेवाह[४]—तमिति । तं [५]स्पर्धमानम् । जानत्यः[६] । उषसः । प्रत्युदायन्[७] । अथेन्द्रः । असहायः[८] । गा जित्वा, पतिः । तासाम्[९] । अभवदिति ।

**वी॒ळौ स॒तीर॒भि धीरा॑ अतृ॒न्दन्प्रा॒चाहि॑न्व॒न्मन॑सा स॒प्त विप्राः॑ ।**
**विश्वा॑मविन्दन्प॒थ्या॑मृ॒तस्य॑ प्रजा॒नन्नित्ता नम॒सा वि॑वेश ॥ ५ ॥**

[१०]वीळौ [११]सतीः । दृढे शिलोच्चये[१२] । वर्तमानाः[१३] । धृष्टाः[१४] । सप्त[१५] । विप्रा[१६] ऋषयः । अभ्य[१७]तृन्दन् शिलोच्चयस्य द्वाराण्यकुर्वन्नित्यर्थः[१८] । अथ[१९] प्राचीनेन[२०] धृष्टेनापराङ्मुखेन[२१] । मनसा[२२] युक्ता

१. सूर्याख्यं तेजः Sy.
२. तमोरूपाद्वृत्रात् Sy.
३. ०जनयन् M. निर्गतमज्ञासिषुः । अजानन्—'ज्ञा अवबोधने' इत्यस्य लङि रूपम् । निघातः Sy.
४. ०हमि० D. M.
५. सस्पर्धमान् P. वृत्रेण सह स्पर्धमानम् Sy.
६. जानाति P. उदितं सूर्यं जानानाः Sy.
७. ०दयान् P. अभिलक्ष्यैव प्राप्नुवन् । आयन्—'अय गतौ' इत्यस्य लङि रूपम् Sy.
८. अद्वितीय एव Sy.
९. तत्रोद्भूतानां गवां रश्मीनाम् Sy.
१०. पुरा किलाङ्गिरसां गावः पणिनामकैरसुरैरपहृत्य निगूढे कस्मिंश्चित् पर्वते स्थापिताः । ते चाङ्गिरसस्तत्प्राप्त्यर्थमिन्द्रं तुष्टुवुः । स्तुतश्च स इन्द्रो गवामन्वेषणाय देवशुनीं प्राहिणोत् । सा च गवां गवेषणपरा सती तत्स्थानमलभत । तया विज्ञापित इन्द्रस्ता गा आनीयाङ्गिरोभ्यः प्रादादित्यैतिहासिकी कथा । तया चास्या ऋचोऽयमर्थः Sy.
११. Omitted in P.
१२. पर्वते Sy.
१३. वर्धमा० M. P. adds गाः after वर्तमानाः ॥ निगूढाः सतीर्गाः Sy.
१४. धीमन्तः Sy.
१५. सप्तसंख्याका अङ्गिरसः Sy.
१६. मेधाविनः Sy.
१७. ह्यतृदन् M. ह्यरुदन् P. अभिलक्ष्यातृन्दन् उपेक्षामकुर्वन् । अतृन्दन्—'उतृदिर् हिंसानादरयोः' इत्यस्य लङि रुधादित्वात् श्नम् । तस्य 'श्नसोरल्लोपः' इत्यल्लोपः । निघातः Sy.
१८. ०त्यर्थः P.
१९. ततस्तेऽङ्गिरसः पर्वतबिले गावः सन्तीति मनसा निश्चित्य Sy.
२०. येन मार्गेण प्रविष्टास्तेनैव प्राचीनेन मार्गेण । यद्वा प्राचा । प्रकर्षेणेन्द्रमञ्चति प्राप्नोतीति प्राक् तेनेन्द्रविषयेण । प्राचा—'अञ्चेश्छन्दस्यसर्वनामस्थानम्' इति विभक्तेरुदात्तत्वम् Sy.
२१. P. adds रमा ज्ञातवती मदन्नं पूर्वकालभयमस्मदी after अपराङ्मुखेन ॥
२२. मन्यत इति मनः स्तोत्रम् । तेन स्तोत्रेण Sy.

ऋषयः[1] । ताः[2] स्वर्गं प्रत्यहिन्वन् प्रेरयन्[3] । सर्वमिव[4] । यज्ञस्य[5] । भेषजभूतां गाम्[6] । अविन्दन्[7] । अथ[8] ताः[9] । प्रकर्षेण जानन्[10] । एव[11] सर्वो जनः[12] । अन्नार्थम्[13] । गृहेषु निवेशयति[13] स्मेति, अस्मदीया एवैता इति प्रज्ञानमिति[14] ।

विदद्यदी सरमा रुग्णमद्रेर्महि पाथः पूर्व्यं सध्र्यक्कः ।
अग्रं नयत्सुपद्यक्षराणामच्छा रवं प्रथमा जानती गात् ॥ ६ ॥

विदद्यदी[15][16] । पणिभिरपहृता गा ज्ञात्वा देवेषु सरमा प्रत्याजगाम, अथ देवा वन्दन्ति यदि[17] ।

---

१. P. omits ऋषयः ।

२. गाः Sy.

३. प्रेर० M. निरगमयन्, यद्वा अवर्धयन् । इन्द्रं तुष्टमकुर्वन् । अहिन्वन्—'हि गतिवर्धनयोः' इत्यस्य लङि रूपम् Sy.

४. पूर्वमेव P.
अपहृताम् Sy.

५. स्तुत्वा च यज्ञस्य Sy.

६. पथ्यां मार्गे साधुभूताम् । पथ्याम्—पथि साधुरित्यर्थे 'तत्र साधुः' इति यत् प्रत्ययः । 'यचि भम्' इति भसंज्ञायां 'नस्तद्धिते' इति टिलोपः । 'यतोऽनावः' इत्यस्यानित्यत्वात् 'तित्स्वरितम्' इति स्वरितः Sy.

७. अलभन्त । अविन्दन्—'विद्लृ लाभे' इत्यस्य लङि मुचादित्वान्नुम् । निघातः Sy.

८. ततः Sy.

९. गाः, यद्वा तान्यङ्गिरसां कर्माणि Sy.

१०. P. omits words between भेषज and एव ।

११. स इन्द्रः Sy.

१२. ०नार्थं P. नमस्कारेणाङ्गिरसः सम्भावयन् Sy.

१३. तैरधिष्ठितं पर्वतमाविवेश । विवेश—'विश प्रवेशने' इत्यस्य लिटि रूपम् Sy.

१४. The passage: 'अस्मदीया एवैता इति प्रज्ञानम्', should immediately precede एव सर्वो जनः ।

१५. पुरा किलाङ्गिरसां गावः पणिनामकैरसुरैरपहृत्य निगूढे कस्मिंश्चित्पर्वते स्थापिताः । ते चाङ्गिरसस्तत्प्राप्त्यर्थमिन्द्रं तुष्टुवुः । तुष्टः स इन्द्रो गवामन्वेषणाय देवशुनीं सरमां प्राहिणोत् । सा च गवामन्वेषणपरा सती तत्स्थानमलभत । तया विज्ञापित इन्द्रस्ता गा आनीयाङ्गिरोभ्यः प्रादादिति Sy. 'सरमा देवशुनीन्द्रेण प्रहिता पणिभिरसुरैः समूदे' इति यास्कः (N. 11. 25.) DDN. इह वाक् प्रकटीभवति सोच्यते U.

१६. विदद्यदि D. विददद्यदि M. विदर्यदि P.

१७. वदन्ति is suggested for वन्दन्ति ॥ यदा Sy. चेत् Mah. यदी सरमा= 'यदीति क्रुधो मनसः कवीनां०' (RPR. 8. 8.) इति दीर्घः DDN.

शिलोच्चयस्य । बिलम् । सरमा । ज्ञातवती । महत् । अन्नम् । पूर्वकालभवमस्मदीयं गवात्मकम् । अस्माभिः सहितम् । करोतु । शत्रुष्वपि न हन्यन्त इति गावोऽक्षराण्युच्यन्ते, यत्र गावो

१. विभक्तिव्यत्ययः । अद्रिणा सोमाभिषवग्राव्णा Mah. अद्रेः सोमाभिषवस्य कर्तुः, अद्रिभिश्च सोमोऽभिषूयते U. पर्वतस्य DDN.

२. भग्नं द्वारम् । रुग्णम्—'रुजो भङ्गे' इत्यस्य निष्ठायाम् 'ओदितश्च' इति नत्वम् । प्रत्ययस्वरः Sy. रुग्णमभिषुतम्–'रुजो भङ्गे' Mah. रुग्णं चूर्णीकृतम् U.

३. इन्द्रेण गवान्वेषणार्थं प्रेषिता सरमा नाम देवशुनी । सरमा—'सृ गतौ' औणादिकोऽमप्रत्ययः । सरतीति सरमा । 'सरमा सरणात्' इति यास्कः । प्रत्ययस्वरः Sy. "सरमा सरणात् (N. 11. 24.) सह रमन्ते देवा विप्रा वा यस्यां सा सरमा वाक् । सरमा त्रयीलक्षणा वाक्. . . सरमा सरणिः" ? (सरणात्) इति यास्कः Mah. सरमा वाक् त्रयीलक्षणा । सा ह्यभिषवे समानं रमते U. सरणशीला DDN.

४. अलभत । विदत्—'विद्लृ लाभे' इत्यस्य लुङि लृदित्वात् च्लेरङादेशः । तस्य स्वरः Sy. जानीयादध्वर्युस्तर्हि. . . 'विद्लृ लाभे' Mah. जानीयाद्यदि U. विदत्—अलभत । विद्लृ लाभे । 'बहुलं छन्दस्यमाङ्योगेऽपि' (Pa. 6. 4. 75.) इत्यडभावः DDN.

५. तदानीमिन्द्रो महत् Sy., DDN.

६. गव्यादिलक्षणमन्नम् । पाथः—'पा रक्षणे' । 'अन्ने च' (Uṇādi 4. 644.) इत्यसुन्प्रत्ययः । थुडागमः । पातीति पाथोऽन्नम् । नित्स्वरः Sy. पाथः सोमलक्षणमन्नम्. . . पातीति 'पा रक्षणे' Mah., U. गव्यादिलक्षणमन्नम् । 'अन्नमपि पाथ उच्यते पानादेव' इति यास्कः (N. 6. 7.) गव्यादिलक्षणमन्नमकार्षीरिति भावः । तस्यै दत्तवानित्यर्थः DDN.

७. ०काळे भ० P. पूर्वं प्रेषणकालेऽस्मादिन्द्रं ते प्रजां करिष्यामीति प्रतिज्ञातम् Sy. पूर्वगृहीतमुपांश्वन्तर्यामैन्द्रवायवादिपात्रेषु Mah. उपांश्वन्तर्यामैन्द्रवायवादिषु गृहीतम् U.

८. इतरैरपि भोज्यैः सध्रीचीनम् । सध्र्यक्—'अञ्चु गतिपूजनयोः' । 'ऋत्विक्'—इत्यादिना क्विन् । सहाञ्चतीति, 'सहस्य सध्रिः' (Pa. 6. 3. 15.) इति सध्र्यादेशः । क्विन्प्रत्ययस्य कुत्वम् । 'अद्रिसध्र्योरन्तोदात्तत्वनिपातनं कृत्स्वरनिवृत्त्यर्थम्' इति 'सध्रि' इत्यादेशोऽन्तोदात्तः । यणादेशे कृते 'उदात्तस्वरितयोर्यणः स्वरितः' इति यणः स्वरितत्वम् Sy. सहाञ्चति, सहस्य सध्रिः । सहैव हवनाय गच्छत् Mah. समानाञ्चनम् । सहस्य सध्रिरञ्चतेश्चत्तरम् U. इतरैरपि भोज्यैः सह । 'सहस्य सध्रिः, इति सध्र्यादेशः DDN.

९. अकार्षीत् । तस्यै दत्तवान् । कः—करोतेर्लुङि सिपि च्लेः 'मन्त्रे घसह्वर'—इत्यादिना लुक् । गुणे कृते हल्ङ्यादिना सिपो लोपः । विसर्जनीयः । निघातः Sy. कः कुर्याद् वेदानभिज्ञस्य सोमकण्डनानधिकारात् Mah. कः—'करनुदात्तम्' (RPR. 1. 84.) इति रेफः DDN.

१०. ०वो करा० P. The passage शत्रुष्वपि न हन्यन्त इति गावोऽक्षराण्युच्यन्ते, should immediately follow गवाम् and precede स्वच्छम् ।

गत्वाऽतिष्ठन्[1] सोऽग्रमुच्यते,[2] तत्। अस्मान्नयतु[3]। शोभनपदी[4]। तदर्थमस्माकमग्रतः[5][6]। गवाम्[7]।
स्वच्छम्[8]। देशम्[9]। अवगच्छन्ती[10]। गच्छतु[11][12]।

---

१. गता P. २. प्रान्तम् Sy. अग्रं मुख्यत्वम् Mah. यज्ञाग्रम् U.

३. प्राप्नोत्। नयत्—नयतेर्लङि रूपम् Sy. यजमानं प्रापयत्। यज्ञेन यजमानो मुख्यो भवति Mah. नयति सा पाथः U.

४. शोभनपादयुक्ता। सुपदी—'पादोऽन्यतरस्याम्' (Pa. 4. 1. 8.) इति ङीप् Sy. कीदृशी सरमा? सुपदी शोभनानि पदानि सुप्तिङन्तानि यस्यां सा Mah. शोभनानि पदानि यस्या वाचः सा तथोक्ता। नहि पदानि प्रत्याख्याय वाक्यं स्यात् U. ततः शोभनपादयुक्ता सा सरमा DDN.

५. दर्थं० P. ६. प्रथमा प्रथमम् Sy. प्रथमा आद्या Mah.

७. अक्षराणां क्षयरहितानां गवाम् Sy. अक्षराणामकारादीनाम् Mah., U.

८. स्वच्छतं सच्छतं M. व (or प) रमगच्छन् P. यज्ञाभिमुखम् Mah. आभिमुख्येन U. अच्छा रवम्—'सुताग्राहीत्यन्यत्वादच्छेति प्लुतिः (RPR. 6. 7.) DDN.

९. देश P. कुतः? इत्यत आह, यतस्तेषां हम्भारवम् Sy. रवं शब्दम् Mah., U. कुतः? इत्यत आह—यतः DDN.

१०. वगच्छन्ती P. जानती सती Sy. ज्ञापयन्ती। अन्तर्भूतणिजर्थः Mah.

११. जगाम। गात्—इणो लुङि रूपम् Sy. आगच्छति। यज्ञं प्रतिपादयतीत्यर्थः Mah. गच्छति U. 'अच्छाभेराप्तुमिति शाकपूणिः' इति यास्कः (N. 5. 28.) DDN.

१२. एवमधियज्ञं मन्त्रो व्याख्यातः। बह्वृचानां तु संवादसूक्तमिदम्। तत्र च पणिभिरसुरैर्देवगोधनेऽपहृते इन्द्रेण देवशुनी तद्वृत्त्यै प्रेरिता, तदभिप्रायेण व्याख्यायते। सरमा देवशुनी। इन्द्रेण वाऽन्वेषणाय प्रहिता सती। यदि यदा। अद्रेर्गिरेः। रुग्णं भग्नं द्वारम्। विदद् अविदद् अलभत। तदेन्द्रः पाथो हविरन्नम्। कः—अकार्षीत् तस्यै दत्तवान्। ततः सुपदी शोभनपादयुक्ता सा सरमा। अक्षराणां क्षरणेन नाशेन रहितानामनुपद्रुतानां गवाम्। अग्रं प्रान्तम्। नयदनयत् प्राप्नोत्। प्रथमा प्रथमम्। रवं गवां हम्भारवम्। जानती सती, अच्छ गवामभिमुखम्। गादगाज् जगाम। कीदृशं पाथः? महि महत्। पूर्व्यं पूर्वं प्रेषणकालेऽस्मादिन्नीं ते प्रजां करिष्यामीति प्रतिज्ञातम्। सध्र्यक् सध्रीचीनमितरैरपि सह भोज्यम् Mah. एवमधियज्ञं मन्त्रो व्याख्यायते। बह्वृचां तु संवादसूक्तम्। तत्र सरमा देवशुनी, इन्द्रेण प्रेषिताऽन्वेषणार्थं गोधने पणिभिरसुरैर्हृते, तदभिप्रायेण व्याख्यायते। तत्रासुराणां पर्यालोचनवाक्यम्। विददविदद् अलभत? (त य)दा सरमा देवशुनी। रुग्णं भग्नं गवां सम्बन्धिभिः खुरैः। अद्रेः पर्वतस्य। द्वारम्। अथानन्तरं महि महद् गोलक्षणं पाथोऽन्नम्। पूर्व्यं पूर्वेषु कालेष्वपहृतं, सध्र्यग् देवान् प्रति सहाञ्चनं, कः करोते रूपम्। करिष्यति। अग्रं गवाग्रमवस्थाय नयद् नेष्यति। सुपदी शोभनपादयुक्ता पदेन याऽन्वेषयति नष्टं सैवमुच्यते। अक्षराणामस्मदीयवाक्यसम्बन्धिनामच्छ अभि रवमुच्चारणं प्रथमा जानती। अगाद् आगमिष्यति U.

This stanza=YV. 33. 59. तथा निगमाः—'ऋतं यती सरमा गा अविन्दद्विश्वानि०' (RV. 5. 45. 7.) 'ऋतस्य पथा सरमा विदद्गाः' (RV. 5. 45. 8.) इत्यादयः DDN.

अग॑च्छदु विप्र॑तमः सखीयन्नसू॑दयत्सुकृते गर्भ॑मद्रिः॑ ।
ससान मर्यो॑ युव॑भिर्मखस्यन्नथा॑भवदङ्गि॑राः सद्यो अर्च॑न् ॥ ७ ॥

अगच्छत् । अग॑च्छत्[1] । मेधावि॑तमः[2] । सखित्वमङ्गिरोभि॑रिच्छन्[3], तेषां गोप्रदानार्थ॑म्[4] । अथ सुकृते॑[5]—इन्द्राय । शिलोच्च॑यः[6] । गर्भ॑भूतं[7] गोसङ्घम् । असू॑दयत्[8], सूदयतिः[9] क्षरणकर्मा, निरगमयत् । अथ॑[10] । भेजे[11] गाः[12] । मरुद्भिः[13] सह । इन्द्रः[14] । यज्ञमि॑च्छन्[15] । तथाभवत् । ऋषिरङ्गि॑राः[16] । सद्य॑[17] एवेन्द्रम् । स्तुतिभिरर्च॑न्[18][19], आहृता[20] गा दृष्ट्वेति[21] ।

---

१. गोभिरधिष्ठितं पर्वतमगमत् । अगच्छत्—गमेर्लङि रूपम् Sy.

२. ०धावीतम P. अतिशयेन मेधावी Sy.

३. सखीमङ्गिर इच्छन् M. स्वखीमगच्छन् P. अङ्गिरोभिः साकमात्मनः सखित्वमिच्छन्, इन्द्रः । सखीयन्—'सुप आत्मनः क्यच्' Sy.

४. ०नार्थं P.

५. सुष्ठु युद्धकर्त्रे इन्द्राय Sy.

६. सोऽद्रिः सखित्वमिच्छन् Sy.

७. गवात्मकं गर्भम् Sy.

८. ०सूय० P. 'षूद निरासे' इत्यस्य ण्यन्तस्य लङि रूपम् Sy.

९. ०दतिः P.

१०. अनन्तरम् Sy.

११. ससान—'षण सम्भक्तौ', इत्यस्य लिटि णलि रूपम् । लित्स्वरः Sy.

१२. असुरैरपहृतास्ताः Sy.

१३. मरुजिः P. नित्यतरुणैर्मरुद्भिः Sy.

१४. इन्द्रः substitutes मर्यः ॥ असुराणां मारयितेन्द्रः Sy.

१५. गोधनमङ्गिरसामिच्छन् । मखस्यन्—'छन्दसि परेच्छायाम्' इति परेच्छायामपि क्यच् । 'सर्वप्रातिपदिकेभ्यो लालसायां सुग्वक्तव्यः' इति सुगागमः । एकादेशस्वरः Sy.

१६. सप्तानामङ्गिरसां मध्ये वरिष्ठोऽङ्गिरा ऋषिः । अङ्गिराः—'सृ गतौ' । अङ्गारशब्दे उपपदे सर्तेर्धातोरसुन् प्रत्ययः । उपपदे गकारात् परस्येत्वम्, अन्त्यलोपश्च धातोर्लोपश्च 'अङ्गिराः' (Uṇādi 4. 235.) इति सूत्रेण निपात्यते । भूतकालेऽङ्गारेभ्यः सृत इति अङ्गिरा ऋषिः । अङ्गारेष्वङ्गिरा (N. 3. 17.) इति यास्कः । नित्स्वरः Sy.

१७. इन्द्रस्ता गा लब्ध्वा तदानीमेव Sy.

१८. कृति० P.

१९. इन्द्रं पूजयन् Sy.

२०. आगृह्य ० P.

२१. VM. ignores उ ॥ उ एव Sy.

सुतःसंतः प्रतिमानं पुरोभूर्विश्वा वेद जनिमा हन्ति शुष्णम् ।
प्र णो दिवः पदवीर्गव्युरर्चन्त्सखा सखीँरमुञ्चन्निरवद्यात् ॥ ८ ॥

सतःसतः[1][2]। सर्वस्य[3] बलवतः। प्रतिमानम्[4]। अग्रतो भवन्निन्द्रः[5]। सर्वाणि। वेत्ति[6]। जातानि[7] भूतानि। हन्ति[8] च। शुष्णमसुरम्[9]। सोऽस्मान्[10]। दिवः[11]। प्रधानभूतः[12]। अस्माकं गा[13] इच्छन्। गोभिश्चास्मानर्चन्[14]। सखा सः[15]। सखीनस्मान्[16]। महदुपद्रवात्[17]। निर्मुञ्चतु[18][19]।

---

१. सतः P. २. योऽयमिन्द्रः Sy.

३. उत्तमस्य वस्तुनः। यद्वा जातस्य सर्वस्य Sy.

४. प्रतिमीयत उपमीयतेऽनेन सर्वमिति प्रतिमानं प्रतिनिधिः। यद्वा सतःसतो जातस्य सर्वस्य प्रतिमानं स्वस्य महत्त्वेन प्रतिमातीयत्तया सर्वं परिच्छिनत्तीत्यर्थः। प्रतिमानम्—मातीति मानम्। औणादिको नन्प्रत्ययः। यद्वा करणे ल्युट् Sy.

५. युद्धे पुरतः शत्रूनवाप्नोतीति पुरोभूः। पुरोभूः—'भू प्राप्तौ'। क्विप् Sy.

६. जानाति। वेद—वेत्तेर्लटि रूपम् Sy.

७. जनिम—'जनी प्रादुर्भावे'। 'जनिहृभ्यामिमनिन्' इतीमनिन्प्रत्ययः। भूतकाले जातानीति जनिम। 'सुपां सुलुक्' इति सुपो लुक्। नित्स्वरः Sy.

८. हन्ति—हन्तेर्लटि रूपम्। वाक्यभेदादनिघातः Sy.

९. शुष्णनामानमसुरम्। शुष्णम्—शोषयतीति शुष्णः Sy.

१०. प्र णः, 'उपसर्गाद्बहुलम्' इति संहितायां णत्वम् Sy.

११. द्युलोकादागत्य Sy.

१२. कवितमः। पदवीः—'वी कान्त्यादिषु'। क्विप्। पदानि वेत्ति परस्परसङ्गतानि करोतीति पदवीः कविः Sy.

१३. गोधनमङ्गिरसामिच्छन्। गव्युः—गोशब्दात् 'परेच्छायां छन्दसि' इति क्यच्। 'वान्तो यि प्रत्यये' इति वान्तादेशः। 'क्याच्छन्दसि' इत्युप्रत्ययः। प्रत्ययस्वरः Sy. १४. पूजयन्। अर्चन्—अर्चतेः शतरि रूपम् Sy.

१५. Omitted in P. सखा इन्द्रः Sy.

१६. सखीन्—संहितायां नकारस्य 'दीर्घादटि' इति रुः। पूर्वस्य वर्णस्य 'अत्रानुनासिकः' इत्यनुनासिकादेशः Sy.

१७. गहदुपद्रवत् M. उपद्रवा P. महोप० is suggested for महदुप० ॥ वृत्रबाधाख्याद्दोषात्। अवद्यात्—'वद व्यक्तायां वाचि' इत्यस्य नञ्पूर्वस्य गर्ह्यार्थे 'अवद्यपण्यवर्याः'—(Pa. 3. 1. 101.) इति निपातनाद् यत्प्रत्ययः Sy.

१८. निर्मञ्चतुः M. निमुञ्चतु P. नितरां मुञ्चतु। अमुञ्चत्—'मुच्लृ मोक्षणे' इत्यस्य लङि 'शे मुचादीनाम्' इति नुमागमः। निघातः Sy.

१९. VM. ignores प्र ॥ प्रकर्षेण (It goes with अर्चन्) Sy.

नि गव्यता मनसा सेदुरर्कैः कृण्वानासो अमृतत्वाय गातुम् ।
इदं चिन्नु सदनं भूर्येषां येन मासाँ असिषासन्नृतेन ॥ ९ ॥

नि गव्यता[1] । निषेदुः[2] सत्रमङ्गिरसः । गा इच्छता[3] । मनसा[4] । स्तोत्रैः[5] सह । कुर्वन्तश्च[6] । अमृतप्राप्त्यर्थम्[7] । मार्गम्[8] । इदम् । चित्[9] । नु[10] । सत्रासनम्[11] । बहु[12] भवति । एषाम्[13] । येनासनेन[14] । मासान्[15] । सम्भक्तुमैच्छन्[16] । यज्ञेनाङ्गिरसो[17] बहून् ।

संपश्यमाना अमदन्नभि स्वं पयः प्रत्नस्य रेतसो दुघानाः ।
वि रोदसी अतपद्घोष एषां जाते निःष्ठामदधुर्गोषु वीरान् ॥ १० ॥

सम्पश्यमानाः[18] । सह पश्यन्तः[19] । स्वभूतं[20] गोसङ्घम् । अङ्गिरसो[21]ऽभ्यमदन्[22] । पुराणस्य[23] ।

---

१. निगदव्याख्याता M. नि गव्यातान् P.

२. सत्राख्ये कर्मण्यासीदन् । सेदुः—सदेर्लिटि 'अत एकहल्मध्येऽनादेशादेर्लिटि' इत्येत्वाभ्यासलोपौ । निघातः Sy.

३. ०च्छत P. गव्यता—गोशब्दात् क्यचि रूपम् । 'वान्तो यि प्रत्यये' इति वान्तादेशः । एकादेशस्वरः Sy.

४. मान० P. मनसा युक्ताः Sy.

५. अर्चनीयैः स्तोत्रैः Sy.

६. कुर्वाणास्तेऽङ्गिरसः । कृण्वानासः—'कृवि हिंसाकरणयोः' इत्यस्य ताच्छीलिकश्चानश् । 'धिन्विकृण्व्योर च' इत्युप्रत्ययः । चित्स्वरः Sy.

७. अमृतत्व० is suggested for अमृत० ॥ ०प्त्यर्त्थं P. देवत्वप्राप्त्यर्थम् Sy.

८. गच्छन्त्यनेनेति गातुर्मार्गः । अमृतत्वप्राप्त्युपायभूतं मार्गम् । गातुम्—'गाङ् गतौ' । 'कमिमनिजनिगाभापायाहिभ्यः' इति करणे तुप्रत्ययः । प्रत्ययस्वरः Sy.

९. चि P. एव Sy.

१०. खलु Sy.

११. सत्राख्ये कर्मण्यासदनम् Sy.

१२. प्रभूतम् । अमृतत्वप्राप्त्यर्थं महानुपायः Sy. १३. अङ्गिरसाम् Sy.

१४. सत्रकर्मणा Sy.

१५. अभिप्लवपृष्ठ्यषडहैः कल्पितान् Sy.

१६. ०च्छत् M. असिषासन्—'षण सम्भक्तौ' इत्यस्य सनि 'जनसनखनां सञ्झलोः' इत्यात्वम् । अभ्यासस्य 'सन्यतः' इतीत्वम् । 'सनोतेरनः' इति संहितायां षत्वम्, तदन्ताल्लङि रूपम् । यद्वृत्तयोगादनिघातः Sy.

१७. आंगि० P. कुतः ? इत्यत आह—सत्यभूतेन येन Sy.

१८. ०माना M.

१९. ०श्यन्त P. मदीया एता गाव इत्यात्मीयतया जानानास्तेऽङ्गिरसः । सम्पश्यमानाः—सम्पूर्वस्य दृशेः 'दृशेश्चेति वक्तव्यम्' इत्यात्मनेपदम् । शानचो लसार्वधातुकस्वरेणानुदात्तत्वे कृते धातुस्वरः Sy. २०. स्वकीयं गोधनम् Sy.

२१. अभि अभिलक्ष्य Sy.

२२. ०दत् P. अहृष्यन् । अमदन्—'मदी हर्षे' इत्यस्य लुङि सिच्यङि रूपम् । निघातः Sy. २३. पुरा जातस्य Sy.

रेतसः[1] पुत्रस्य[2]। पयः। दुहानाः[3], कुमारार्थं[4] पयो यथापूर्वं दुहाना इत्यर्थोऽपि[5]। अतपत्[6]। अङ्गिरसां तपोवेगादिन्द्रं स्तुवताम्। शब्दः[7]। द्यां च[8] पृथिवीं च। अथ ते[9] तपसा जाते[10] भूते। प्रज्ञानम्[11]। अदधुः[12]। गोषु[13] च। वीरानिति[14], जातेषु मरणं[15] निहितवन्त इत्यपरमिति।[16]

**स जातेभिर्वृत्रहा सेदु हव्यैरुदुस्रिया असृजदिन्द्रो अर्कैः।**
**उरूच्यस्मै घृतवद्भरन्ती मधु स्वाद्म दुदुहे जेन्या गौः॥ ११॥**

स जातेभिः। सः। मनुष्यार्थम्[17]। शत्रुहा[18]। सः। एव[19]। देवार्थम्[20]। पणिभिरपहृता[21] गाः[22]।

---

१. ०तस P.
२. तदुपलक्षितस्य पुत्रस्य धारणार्थम् Sy.
३. हाताः M. ता गाः पयो. . दुहन्तः सन्तः। दुघानाः—'दुह प्रपूरणे' इत्यस्मात् शानच्, अदादित्वाच्छपो लुक्, घत्वं छान्दसम्। वृषादित्वादाद्युदात्तः Sy.
४. ०रात्थं P.
५. ०त्यर्त्थो० P.
६. अदवत् P. अतपिष्ट। अतपत्—विपूर्वस्य तपतेरत्र सकर्मकत्वादात्मनेपदाभावः, लङि रूपम् Sy.
७. हर्षादुत्पन्नो महाध्वनिः स्तुतिजातो वा। घोषः—'घुष संशब्दने', घञन्तः। ञित्स्वरः Sy.
८. द्यावापृथिव्यौ Sy.
९. अङ्गिरसः Sy.
१०. आत्मीयतया सम्पन्ने चराचरात्मके वस्तुनि Sy.
११. प्रज्ञान् P. पूर्वं यथा स्थितिमकार्षुः। निःष्ठाम्—'ष्ठा गतिनिवृत्तौ'। 'स्थः क च' (Pa. 3. 2. 77.) इति क्विप्। कृदुत्तरपदस्वरः Sy.
१२. स्थापयामासुः। अदधुः—दधातेर्लङि झेः 'सिजभ्यस्त'—इति जुसादेशः। वाक्यभेदान्निघाताभावः Sy.
१३. तथा गोषु आहृतासु। गोषु—'सावेकाचः' इति विभक्तेरुदात्तत्वे प्राप्ते 'न गोश्वन्'—इति प्रतिषिद्धत्वात् प्रातिपदिकस्वरः Sy.
१४. रक्षाकर्मण्यतिशूरान् पुरुषान् Sy.
१५. रमणं P.
१६. VM. ignores वि॥ व्याप्य Sy.
१७. ०ष्यार्त्थम् P. जातेभिः सहायतया सम्पन्नैर्मरुद्भिः सहितः सन् Sy.
१८. वृत्रस्यासुरस्य हन्ता भवति Sy.
१९. This explains both इत् and उ।
२०. ०वार्त्थम् P. अत एव होतव्यैर्मरुद्भिः सहितः सन् Sy.
२१. पाणिभिः P.
२२. उस्रियाः। ऊर्ध्वं वसत्यासु क्षीरादिरूपं हविरित्युस्रिया गावः। यद्वा ऊर्ध्वं क्षीरदधिनवनीतादिक्रमेणासु वसतीति। उस्रियाः—'वस निवासे' इत्यस्मात् 'स्फायितञ्चि' इत्यादिना रक् प्रत्ययः, उस्रशब्दात् स्वार्थे घप्रत्ययः। प्रत्ययस्वरः। यद्वा 'सृ गतौ', उत्पूर्वस्य सरतेः कप्रत्ययः। पूर्वपदस्यान्त्यलोपश्छान्दसः। अत्रापि स्वार्थिको घप्रत्ययः। 'उस्रियेति गोनाम। उस्राविणोऽस्यां भोगाः'(N. 4. 19.) इति Sy.

पर्वतादुदसृजत्[1]। इन्द्रः[2]। सप्तभिर्विप्रैः[3] प्रयुक्तैः स्तोत्रैः[4]। उरुत्वम्[5] अञ्चती[6] बह्वीः। पणिभ्यो[7] जिता[8]। गौः[9]। इन्द्राय[10]। घृतयुक्तम्[11]। स्वदनीयम्[12]। पयः[13]। दुदुह[14] इति[15]।

**पित्रे चिच्चक्रुः सदनं समस्मै महि त्विषीमत्सुकृतो वि हि ख्यन्।**
**विष्कभ्नन्तः स्कम्भनेना जनित्री आसीना ऊर्ध्वं रभसं वि मिन्वन् ॥१२॥**

पित्रे चित्[16]। जगतां[17] पालयित्रे[18]। इन्द्राय। सदनं[19] स्थानमन्तरिक्षम्। सञ्चक्रुः[20]। मह-[21]दिदमन्तरिक्षम्। दीप्तिमत्। सुकृतः[22]। हि[23]। व्यख्यन्[24] दृष्टवन्तः। प्रजनयित्र्यौ[25] द्यावापृथिव्यौ।

---

१. उदसृजत् P. यज्ञार्थं सम्यक् ससर्ज, यस्मादेवं तस्मात्। असृजत्—'सृज विसर्गे' इत्यस्य लङि रूपम् Sy.

२. इन्द्राः P.

३. सप्त वि० P. सप्तभिर्विप्रैः is suggested for सप्तभिर्विप्रैः।

४. अर्चनीयैः Sy.

५. रुरुत्व० P. उरु प्रभूतमग्निहोत्रादिकर्माञ्चति हविः प्रदातुं प्राप्नोतीत्युरूची। उरूची—उर्वञ्चतीति क्विन्। 'अञ्चतेश्चोपसंख्यानम्' इति ङीप्। उदात्तनिवृत्तिस्वरेणान्तोदात्तः Sy.

६. ०मञ्चति P. अञ्चन्ती बह्वी is suggested for अञ्चती बह्वीः।

७. पण्यवणिभ्यो P.

८. जित P. जेतव्या प्रशस्ता। जेन्या—जयतेः कृत्यार्थे केन्यप्रत्ययः। इकारलोपश्छान्दसः। प्रत्ययस्वरः Sy.

९. ग्नो P. १०. यजमानाय Sy.

११. घृतोपेतं क्षीरादिकं हविः Sy.

१२. स्वादुतरम् Sy. १३. क्षीरादि Sy.

१४. दुह्यते स्म। दुदुहे—'दुह प्रपूरणे' इत्यस्य लिटि रूपम् Sy.

१५. VM. ignores उ and भरन्ती॥ भरन्ती बिभ्राणा Sy.

१६. Omitted by P.

१७. सत्रमनुतिष्ठन्तोऽङ्गिरसः Sy.

१८. ०यिता P. पालकाय Sy.

१९. उत्तमं स्थानम् Sy.

२०. सञ्चकुर् P. चक्रुः—करोतेर्लिटि उसि रूपम्। निघातः Sy.

२१. वह० P.

२२. समुपार्जितकर्माणस्तेऽङ्गिरसः Sy.

२३. खलु Sy.

२४. व्यख्यं M. तादृशमिन्द्रस्योचितं स्थानं विशेषेणादर्शयन्, कुत इत्यत आह। ख्यन्—'ख्या प्रकथने', अस्य लुङि च्लेः 'अस्यतिवक्तिख्यातिभ्योऽङ्' इत्यङादेशः। 'आतो लोप इटि' इत्याकारलोपः। हियोगादनिघातः Sy.

२५. सर्वस्य जगतो जनयित्र्यौ। जनित्री—'ऋन्नेभ्यो ङीप्'। 'जनिता मन्त्रे' इति निपातनाण्णिलोपः। 'वा छन्दसि' इति सवर्णदीर्घः Sy.

स्कम्भनेनेन्द्रेण[१] । विष्कभ्नन्तः[२] । सत्रमासीना[३] अङ्गिरसः[४] । वेगवन्तमिन्द्रम्[५] । अन्तरिक्षे[६] ऊर्ध्वम् । अस्थापयन्[७][८] ।

**म॒ही यदि॑ धि॒षणा॑ शि॒श्नथे॒ धात्स॑द्यो॒वृधं॑ वि॒भ्वं॑१॒ रोद॑स्योः ।**
**गिरो॒ यस्मि॑न्ननव॒द्याः स॑मी॒चीर्विश्वा॒ इन्द्रा॑य॒ तवि॑षी॒रनु॑त्ताः ॥ १३ ॥**

मही यदि । महती । यदि । वाक्[९] । सद्यो[१०] वर्धमानम्[११] । द्यावापृथिव्योः । व्याप्तमिन्द्रम्[१२] । अशिश्नथत्[१३] . . . । अथ स धारयत्[१४]यस्मानिन्द्रः । स्तुतयः[१५] । यस्मिन्निन्द्रे[१६] । अवद्यरहिताः[१७] । समीच्यो[१८] भवन्ति गच्छन्ति[१९] । अस्मा एवेन्द्राय[२०] । सर्वाण्येव । बलानि । शत्रुभि[२१]रनुत्तानि[२२] विद्यन्त इति[२३] ।

---

१. स्तम्भ० P. स्तम्भनसाधनेनान्तरिक्षेण Sy.

२. ०भ्नन्त M. and P. यथा ते रोदस्यावयो न पततस्तथा विष्टब्धीकुर्वन्तः सन्तः । विष्कभ्नन्तः—'स्कम्भु रोधने' सौत्रो धातुः । तस्माच्छतरि रूपम् । 'वेः स्कभ्नातेर्नित्यम्' (Pa. 8. 3. 77.) इति षत्वम् । शतृप्रत्ययस्वरः Sy.

३. सत्रमुपतिष्ठन्तस्तेऽङ्गिरसः । आसीनाः —'आस उपवेशने' इत्यस्माच्छानच् । 'ईदासः' (Pa. 7. 2. 83.) इतीकारः । शानचो लसार्वधातुकस्वरे कृते धातुस्वरः Sy. ४. ०सिनां गिर० P.

५. गव० M. ६. द्युलोके Sy.

७. ०यत् P. हविःस्वीकरणार्थं विशेषेणास्थापयन् । मिन्वन्—'डुमिञ् प्रक्षेपणे' इत्यस्य लङि रूपम् । निघातः Sy.

८. VM. ignores चित् ।

९. अस्माभिः क्रियमाणेन्द्रविषया स्तुतिः । धिषणा—'ञिधृषा प्रागल्भ्ये' । धृषेः 'धिष च संज्ञायाम्' इति क्युप्रत्ययः । धातोर्धिषादेशः । धृष्णोत्यनयेति धिषणा स्तुतिः । प्रत्ययस्वरः Sy.

१०. तदानीमेव वर्धमानम् Sy.

११. Omitted by P.

१२. व्याप्ति० P. विभुं तयोर्धारणसमर्थं साधनम् । विभ्वम्—भवतेः क्विप् । 'छन्दस्युभयथा' इति यणादेशः । 'उदात्तस्वरितयोर्यणः' इति स्वरितत्वम् Sy.

१३. अशिश्नयत् निपीडनम् M. अशिश्लथत् अथनत्रपीसनम् P. शिश्नथे अन्योऽन्यविश्लेषाय । शिश्नथे—'श्नथ हिंसार्थः ।' अस्मात् क्विप् । 'छन्दस्युभयथा' इति तस्य सार्वधातुकत्वाच्छप् । तस्य 'बहुलं छन्दसि' इति श्लुः । 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम् । धातुस्वरः Sy.

१४. अकरोत् । धात्—दधातेश्छान्दसे लुङि रूपम् । यद्योगादनिघातः Sy.

१५. स्तुतिलक्षणा वाचः Sy.

१६. ततस्तत्र वर्तमाने इन्द्रे Sy.

१७. दोषरहिताः Sy. १८. सङ्गता भवन्ति Sy. १९. ०च्छन्ते M. and. P.

२०. इन्द्रायेति विभक्तिव्यत्ययः । तादृशस्येन्द्रस्य Sy. २१. ०त्रुर० P.

२२. ०नुक्ताः M. अपरप्रेरितानि स्वभावसिद्धान्येव । अनुत्ताः—'णुद प्रेरणे' इत्यस्य नञ्पूर्वस्य निष्ठायां 'नसत्तनिषत्तानुत्त—'इत्यादिना निपातनान्निष्ठातकारस्य नत्वाभावः । नञःस्वरः Sy.

२३. Omitted by M.

महा तें सुख्यं वंश्मि शुक्तीरा वृत्रघ्ने नियुतों यन्ति पूर्वीः ।
महिं स्तोत्रमव आगंन्म सूरेरुस्माकं सु मंघवन्बोधि गोपाः ॥ १४ ॥

महि[1]।[2] महत्[3]। तव। सख्यम्[4]। आकामये[5]। बलानि[6] च[7]। आयान्ति[8], अस्मान् प्रति गमनाय। इन्द्राय[9]। अश्वाः[10]। पुरातनाः[11]। महत्। स्तोत्रम्। हविश्च[12]। गमयामः[13]। सूरेरिन्द्रस्य[14] तव[15] वा। अस्माकम्। धनवन्[16]! सुष्ठु। बुध्यस्व[17]। गोपायिता[18] भवामीति।[19]

महि क्षेत्रं पुरु श्चन्द्रं विविद्वानादित्सखिभ्यश्चरथं समैरत् ।
इन्द्रो नृभिरजनद्दीद्यानः साकं सूर्यमुषसं गातुमग्निम् ॥ १५ ॥

महि क्षेत्रम्[20]। महत्[21]। क्षेत्रम्[22]। बहु[23] च। सुवर्णं[24] च। लम्भयन्। अनन्तरम्। एव।

---

१. M. omits the *pratika*. A later hand adds महा ते सख्यम् over the line in M.

२. हे इन्द्र ! Sy.

३. वृत् P.

४. सख्याम् P. सख्यम्—'सख्युर्यः' इति भवार्थे यप्रत्ययः। प्रत्ययस्वरः Sy.

५. वश्मि—'वश कान्तौ'। लटि रूपम् Sy.

६. त्वत्सम्बन्धीनि दानानि चाकामये Sy.

७. वा P.

८. आन्ति M. बहनार्थमागच्छन्ति Sy.

९. वृत्रासुरस्य हन्त्रे तुभ्यम् Sy.

१०. अश्वा P. वडवाः। नियुतः—'यु मिश्रणे'। क्विप्। नितरां युवन्ति मिश्रयन्त्यात्मानं रथेष्विति नियुतो वडवाः Sy.

११. बह्वयः Sy.

१२. हविः P. हविर्लक्षणमन्नम् Sy.

१३. ०याम P. प्रापयामः। आगन्म—गमेर्लं- ड्युत्तमबहुवचने। 'बहुलं छन्दसि' इति शपो लुक्। 'म्वोश्च' इति मकारस्य नकारः। निघातः Sy.

१४. सुरं रि० M. विदुषः Sy.

१५. त P.

१६. हे इन्द्र ! तादृशस्त्वम् Sy.

१७. बोधि—बुधेर्लोटि हेर्धौ रूपम्। निघातःSy.

१८. पालयिता भवामीति। गोपाः—'गुपू रक्षणे'। 'गुपूधूप—' इत्यादिना आय- प्रत्ययः। तदन्तात् क्विप्। अतोलोपय- लोपौ। प्रत्ययस्वरः Sy.

१९. VM. ignores आ once.

२०. Omitted in P.

२१. Omitted in M.

२२. केदारादि Sy.

२३. प्रभूतम्। पुरु श्चन्द्रम्=पुरु चन्द्रम्— संहितायां 'ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे' इति सुडागमः। तस्य श्चुत्वेन शकारः। पदकाले नास्ति सुडागमः॥ पुरु— कुप्रत्ययस्वरः Sy.

२४. हिरण्यं च। चन्द्रम्—रक्। प्रत्ययस्वरः Sy.

स्तो॒तृभ्यः । चरणशीलं गवादिकं च । सम्प्रैरयत् । इन्द्रः । मनुष्यानुद्दिश्य । अजनयत् । दीप्यमानः । सह । सूर्यम् । उषसम् । गमनशीलं वायुम् । अग्निं चेति ।

**अ॒प॒श्चि॒देष वि॒भ्वो३॒॑ दमू॑ना॒: प्र स॒ध्रीची॑रसृजद्वि॒श्वश्च॑न्द्राः ।**
**मध्वः॑ पुना॒नाः क॒विभि॑: प॒वित्रै॒र्द्युभि॑र्हिन्वन्त्य॒क्तुभि॒र्धनु॑त्रीः ॥ १६ ॥**

अपश्चिदेषः । एषः । दममनाः । व्याप्ताः । अपः । च । प्रासृजत् । सहाञ्चतीः । सर्वस्य कमनीयाः । सोमान् । पुनानाः । ऋत्विग्भिः । दशापवित्रैश्च सह । अहस्सु । रात्रिषु च । अनवरतं गच्छन्ति । प्रीणयित्र्यः ।

---

१. अर्थिभ्योऽस्मभ्यम् Sy.
२. चरात्मकं गवादिकञ्च । चरथम्—'चर गत्यर्थः' । अस्मादौणादिकोऽथप्रत्ययः । प्रत्ययस्वरः Sy.
३. संप्रेर० P. सम्यक् प्रैरयत् । दत्तवानित्यर्थः । ऐरत्—'ईर गतौ' इत्यस्य लङि 'आडजादीनाम्' इत्याडागमः । निघातः Sy. ४. योऽयमिन्द्रः Sy.
५. नृभिर्नेतृभिः कर्मसहायभूतैर्मरुद्भिः Sy.
६. ०यन् P. अजनत—जनेर्ण्यन्तस्य लङि रूपम् । 'बहुलमन्यत्रापि संज्ञाच्छन्दसोः' इति णिलुक् Sy. ७. ०मानाः P.
८. सहः M. सहितः सन् Sy.
९. कालस्य निर्वाहकमादित्यम् Sy.
१०. उषःकालम् Sy.
११. गायन्ति स्तुवन्त्यस्यामिन्द्रादिदेवानिति गातुः पृथिवी ताम् । गातुम्—'गै शब्दे' । 'गापायाहिभ्यः' इति तुप्रत्ययः । प्रत्ययस्वरः Sy.
१२. अग्निहोत्रादिकर्मसाधनभूतमाहवनीयादिलक्षणमग्निम् Sy.
१३. P. adds दानमानाः after एषः ।
१४. एष एवेन्द्रः Sy.
१५. दानमानाः P. दान्तं मनो यस्यासौ दमूनाः । दान्तमनाः । यद्वा दाम्यतीति दमूनाः । उपरत इत्यर्थः । दमनाः—'दमु उपशमे' 'दमेरूनसिः' इत्यूनसिप्रत्ययः । दाम्यतीति दमूनाः । यद्वा दान्तशब्दस्य दभावो मनसो मकारात्परस्याकारस्य ऊकारश्छान्दसः Sy.
१६. व्याप्त P. १७. अपि Sy.
१८. सृष्टवान् । असृजत्—'सृज विसर्गे' Sy.
१९. परस्परसङ्गताः Sy.
२०. विश्वस्याह्लादयित्रीः । विश्वस्याह्लादो याभ्यस्ता इति वा । एवम्भूताः Sy.
२१. सोमम् P. सृष्टाश्च ता आपो माधुर्यापेतान् सोमान् Sy.
२२. पुनः पुनः P. शोधयित्र्यः Sy.
२३. रित्विभिः P. कविभिः Sy.
२४. अग्निवायुसूर्यैः Sy.
२५. दिवसैः Sy.
२६. रात्रीषु P. रात्रिभिः Sy.
२७. वा M.
२८. ०च्छन्तीः P. रात्रिन्दिवं सर्वं जगत्स्वस्वव्यापारप्रवणं कुर्वन्तीत्यर्थः । हिन्वन्ति—'हि गतौ' । निघातः Sy.
२९. सर्वस्य जगतः प्रीणयित्र्यः सत्यः । धनुत्रीः—'धन धान्ये' इत्यस्मादशित्रादित्वादुत्रप्रत्ययः । शार्ङ्गरवादिषु ङीन् द्रष्टव्यः । नित्स्वरः Sy.

**अनु कृष्णे वसुधिती जिहाते उभे सूर्यस्य मंहना यजत्रे ।**
**परि यत्ते महिमानं वृजध्यै सखाय इन्द्र काम्या ऋजिप्याः ॥ १७ ॥**

**अनु कृष्णे** । सुवीर्यस्येन्द्रस्य[1] । तेजांसि[2] मंहनानि । लोकस्यानुगच्छतः[3] । कृष्णा रात्रि[4]-रहश्च । निहितधने[5] । उभे । यजनीये[6] । परिगन्तुम्[7] । तव । महिमानम्[8] । यस्मात्[9] । समानख्यानाः[10] । इन्द्र ! सञ्जातकामाः[11] । ऋजुगमना[12] देवा इति ।

**पतिर्भव वृत्रहन्त्सूनृतानां गिरां विश्वायुर्वृषभो वयोधाः ।**
**आ नो गहि सख्येभिः शिवेभिर्महान्महीभिरूतिभिः सरण्यन् ॥ १८ ॥**

**पतिर्भव**[13] । स्वामी । भव । शत्रुहन्[14] ! सत्यानाम्[15] । स्तुतीनाम्[16] । सर्वंगमनः[17] । कामानां वर्षिता[18] । अन्नस्य दाता च[19] । आगच्छ[20] । अस्मान्[21] । कल्याणैः । सख्यैः[22] । महान् । महद्भिः[23] ।

---

१. सुष्ठु जगतः प्रेरकस्य तव Sy.
२. महत्त्वेन सामर्थ्येन । मंहना—'महि वृद्धौ' । ल्युट् । लित्स्वरः Sy.
३. पुनः पुनरावृत्य वर्तेते । जिहाते—'ओहाङ् गतौ' । जुहोत्यादिः । 'भृञामित्' इत्यभ्यासस्येत्वम् । निघातः Sy.
४. रात्रीर० P. अहोरात्रे Sy.
५. ०हिता ध० P. वस्तव्यपदार्थधारणोपेते Sy. ६. जनी० P. यजनार्हे Sy.
७. परि ग० P. वृजध्यै, कर्मविघ्नकारिणामसुराणां वर्जनाय परिभवाय । परि परितः प्रभवन्ति । वृजध्यै—'वृजी वर्जने' । तुमर्थे कध्यैप्रत्ययः । क्त्वादृगुणाभावः । प्रत्ययस्वरः Sy.
८. ०मान M. सामर्थ्यमनुसृत्य Sy.
९. मेस्मात् M. यस्मा P. यस्य Sy.
१०. ते मित्रभूताः Sy. ११. कमनीया मरुतः । काम्याः—कमेर्ण्यन्तस्य 'अचो यत्' इति यत्प्रत्ययः । 'यतोऽनावः' इत्याद्युदात्तत्वम् Sy.
१२. ऋजुगतयः । ऋजिप्याः—'ओप्यायी वृद्धौ' । क्विप् । 'लोपो व्योर्वलि' इति यलोपः । पूर्वपदस्योकारस्येकारो व्यत्ययेन । बहुवचनस्यैकवचनं छान्दसम् । कृदुत्तरपदप्रकृतिस्वरः Sy. १३. पति P.
१४. शत्रून् M. हे वृत्रहन् ! इन्द्र ! Sy.
१५. प्रियतमानाम् । सूनृतानाम्—'ऊन परिहाणे' । सुतरामूनयत्यप्रियमिति सूनिति प्रियमुच्यते । तच्च तदृतं सत्यञ्चेति सूनृतम् ।' 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् Sy.
१६. Omitted in P. अस्माभिः क्रियमाणानां वाचाम् Sy. १७. विश्वायुः—विश्वं सम्पूर्णमायुर्यस्यासौ विश्वायुः । अविनाशी Sy. १८. P. adds च after वर्षिता ।
१९. वयोधाः—वयस्युपपदे दधातेर्विच् Sy.
२०. यज्ञार्थमागच्छ । गहि—गमेर्लोटि 'बहुलं छन्दसि' इति शपो लुक् । सेर्हिरादेशः, अपिच्च । तस्य ङित्त्वात् 'अनुदात्तोपदेश—'इत्यादिना मलोपः । तस्यासिद्धत्वात् 'अतो हेः' इति हेर्लुक् न भवति । निघातः Sy. २१. अस्मान् प्रति Sy.
२२. फलप्रदानरूपोपकारलक्षणैः सख्यैश्च सहितस्त्वम् Sy. २३. महतीभिः Sy.

मरुद्भिः[1] सह। सरणमिच्छन्[2]।

**तमङ्गिरस्वन्नमसा सपर्यन्नव्यं कृणोमि सन्यसे पुराजाम्।**
**द्रुहो वि याहि बहुला अदेवीः स्वश्च नो मघवन्त्सातये धाः ॥ १९ ॥**

तम्[3] अङ्गिरस्वत्[4]। अङ्गिरस इव[5]। ते[6] त्वाम्। अन्नेन[7]। पूजयन्[8]। नवम्[9]। कृणोमि[10]। स्तोतॄणां धनसर्गार्थम्[11]। पुराजातम्[12]। यातिर्वधकर्मसु[13] पठितः[14], द्रोग्ध्रीः[15]। विजहि[16]। बहुलाः[17]। आसुरीः[18] सेनाः। स्वर्गम्[19]। च। अस्माकम्[20]। धनवन्[21]। असुरविनाशेन भजनाय[22]। कुर्विति[23]।

---

१. ऊतिभी रक्षाभिः Sy.

२. स्सर॰ M. सरणं यज्ञार्थं गमनमिच्छन्। सरण्यन्—सरणशब्दात्क्यच्। एकादेशस्वरः Sy.

३. कं P.

४. हे इन्द्र! Sy.

५. अङ्गिरस्वत् अङ्गिरस इव। 'तेन तुल्यम्'—इति वतिप्रत्ययः। 'नभोऽङ्गिरोमनुषां वत्युपसंख्यानम्' इति भसंज्ञायां सकारस्य रुत्वाभावः Sy.

६. तादृशमहिमोपेतम् Sy.

७. अनेन P. स्तोत्रेण Sy.

८. पू P. पूजयन् विश्वामित्रोऽहम्। सपर्यन्—सपरशब्दः कण्ड्वादिः Sy.

९. नव M. अभिनवम्। नव्यम्—'णु स्तुतौ' इत्यस्मात् 'अचो यत्' इति यत् प्रत्ययः। 'धातोस्तन्निमित्तस्य' इति वान्तादेशः। 'यतोऽनावः' इत्याद्युदात्तत्वम् Sy.

१०. स्तोतव्यतयाभिनवं करोमि। कृणोमि—कृवेर्लटि रूपम् Sy.

११. ॰संगात्यं P. सम्भजनाय। सन्यसे—सनतेर्भावे क्विप्। 'यसु प्रयत्ने'। अस्मात् क्विप्, सनः सम्भजनस्य यसे यत्नाय, सम्भजनार्थमित्यर्थः Sy.

१२. पुरातनं त्वाम्। पुराजाम्—जनेर्विटचात्वे रूपम् Sy.

१३. ॰कर्मा P.

१४. परित्रः P. Cf. Ngh. 2. 19. The passage याति...पठितः should immediately follow विजहि and precede बहुलाः।

१५. द्रोग्धॄन् शत्रुभूतान् राक्षसान् Sy.

१६. विशेषेण मृतिं प्रापय। याहि—यातेर्लोटि रूपम् Sy.

१७. Omitted in P. बहून् Sy.

१८. तमोरूपत्वेनाद्योतमानान् Sy.

१९. स्वं धनम्। स्वः—'स्वरादिनिपातमव्ययम्' इत्यव्ययसंज्ञायाम्। 'अव्ययादाप्सुपः' इति सुपो लुक् Sy.

२०. अस्मान् P. अस्मभ्यम् Sy.

२१. हे मघवन्! इन्द्र! Sy.

२२. सम्भजनार्थम्। सातये—'षण सम्भक्तौ'। भावे क्तिन्। 'जनसन—'इत्यादिना आत्वम्। 'ऊतियूति—'इत्यादिना निपातनादुदात्तः Sy.

२३. कुर्वति P. धेहि Sy.

मिहः पावकाः प्रतता अभूवन्त्स्वस्ति नः पिपृहि पारमासाम् ।
इन्द्र त्वं रथिरः पाहि नो रिषो मक्षूमक्षू कृणुहि गोजितो नः ॥ २० ॥

मिहः[१] पावकः[२] । नद्यः[३] । शोधयित्र्यः[४] । प्रतताः[५] । भवन्ति[६] । स्वस्ति[७] । अस्मान्[८] । पारय[९] । तीरम्[१०] । आसामिति[११], नदीरुत्तितीर्षुर्वदति, संवादश्च भविष्यति 'प्र पर्वतानाम्'[१२] इति । त्वम् । इन्द्र ! रथवान्[१३] । रक्ष[१४] । अस्मान्[१५] । विनाशात्[१६] । क्षिप्रं[१७] च । अस्मान् । गवां[१८] जेतॄन् । कुरु[१९] ।

अदेदिष्ट वृत्रहा गोपतिर्गा अन्तः कृष्णाँ अरुषैर्धामभिर्गात् ।
प्र सूनृता दिशमान ऋतेन दुरश्च विश्वा अवृणोदप स्वाः ॥ २१ ॥

अवेविष्ट । प्रायच्छत्[२०] । वृत्रहा[२१] । गवां पतिः[२२] । पशून् । तदर्थं[२३] कृष्णवर्णानसुरान्[२४] ।

---

१. मिह P.
२. Omitted in P.
३. सेचनसाधनान्यापः Sy.
४. पापानां शोधयित्र्यः Sy.
५. लोके प्रकर्षेण विस्तृताः Sy.
६. अभूवन्—'भू सत्तायाम्' इत्यस्य लुङि रूपम् । निघातः Sy.
७. विनाशरहितम् Sy.
८. अस्मात् M.
अस्मदर्थम् Sy.
९. जलैः सम्पूर्णं कुरु । जलमवारपारीणं कुर्वित्यर्थः । पिपृहि—'पॄ पालनपूरणयोः' । जुहोत्यादिः । 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्येत्वम् । हेर्ङित्त्वादगुणः । निघातः Sy.
१०. तीम् M. and P.
११. अपाम् Sy.
१२. RV. 3. 33. 1.
१३. रथिरः—मत्वर्थे 'मेधारथाभ्यामिरन्निरचौ' इतीरच्प्रत्ययः Sy.
१४. पालय Sy.
१५. अन् P.
अनन्तरमस्मान् Sy.
१६. हिंसकाच्छत्रोः सकाशात् । रिषः—'रिष हिंसायाम्' । क्विप् । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् Sy.
१७. अतिशीघ्रम् । मक्षूमक्षू—'नित्यवीप्सयोः' इति द्विर्वचनम् । संहितायाम् 'ऋचि तुनुघमक्षुतङ्—' इति दीर्घः Sy.
१८. गवादिपशूनाम् Sy.
१९. वृष्टिप्रदानेन तटाकादिजलाशयान् सम्पूर्णान् कृत्वा गवादिधनयुक्तान् कुर्विति भावः Sy.
२०. अस्मभ्यं दिशतु । अवेविष्ट—'दिश अतिसर्जने' इत्यस्माद्यङ्लुकि, लङि व्यत्ययेनात्मनेपदम् । अडागमस्वरः Sy.
२१. ऋतहा P.
वृत्रस्य हन्ता Sy.
२२. पति M. पततः P. स्वामी सन्निन्द्रः । गोपतिः—'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरः Sy.
२३. स्तवर्त्थं P.
२४. ०र्णानासु० P. कर्मविघ्नकारिणोऽसुरान् Sy.

आरोचमानैः । तेजोभिः । अन्तम्[१] । जगाम[२] । प्रदिशन्[३] । धनप्रदानाभिमुखीः[४] सत्या वाचः । यज्ञेन[५] । सर्वाणि[६] । स्वानि[७] । द्वाराणि[८] । अपावृणोतु[९] धनप्रदानार्थमिति[१०] ।[११]

शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ २२ ॥

(शुनं हुवेम ।)[१२]

III.32.

इन्द्र सोमं सोमपते पिबेमं माध्यंदिनं सवनं चारु यत्ते ।
प्रप्रुथ्या शिप्रे मघवन्नृजीषिन्विमुच्या हरी इह मादयस्व ॥ १ ॥

इन्द्र सोमम्[१३] ॥ विश्वामित्रः[१४] ॥ यत्[१५] । त्वदीयम्[१६] । माध्यन्दिनम्[१७] । सवनम्[१८], तत्र[१९] ।

---

१. अन्तर्धानं विनाशम् Sy.
२. गमयतु । गात्—'इण् गतौ' । अन्तर्भावितण्यर्थः Sy.
३. अङ्गिरोभ्यः प्रदिशन्निन्द्रः । दिशमानः—दिशेर्व्यत्ययेन शानच् । तस्य लसार्वधातुकस्वरेणानुदात्तत्वे शस्वरः Sy.
४. ०नामुखाः M. प्रियतमा गाः Sy.
५. प्रतारणवर्जितेन सत्येन वाक्येन Sy.
६. स्वस० P.
७. स्वकीया गाश्च Sy.
८. गवां स्वेच्छया निर्गमनद्वाराणि Sy.
९. व्रजे गाः स्थापयित्वा तानि द्वाराण्याच्छादितवानित्यर्थः । अवृणोत्—'वृञ् वरणे' इत्यस्य लङि रूपम् Sy.
१०. ०नार्थमि० P.
११. VM. ignores च ।
१२. The *pratika* has been supplied by the Editor. The *mantra* has already been explained. See III. 30. 22.
१३. 'इन्द्र सोमं सोमपते' इति सप्तदशर्चं तृतीयं सूक्तं वैश्वामित्रं त्रैष्टुभमैन्द्रम् । अनुक्रान्तञ्च 'इन्द्र सोमं त्र्यूना' (KSA. 18. 32. p. 15.) इति । पृष्ठ्याभिप्लवषडहयोर्द्वितीयेऽहनि मरुत्वतीये 'इन्द्र सोमम्' इतीदं सूक्तं निविद्धानीयम् । 'द्वितीयस्य' इति खण्डे सूत्रितम्—'इन्द्र सोमं या त ऊतिरवमेति मध्यन्दिनः' (ĀSS. 7. 6.) इति । गोसवविवधयोरपि मरुत्वतीयशस्त्र एतत्सूक्तम् । सूत्रितञ्च—'इन्द्र सोममेतायामेति मध्यन्दिनः' (ĀSS. 9. 8.) इति । उद्भिद्वलभिदोरपि मरुत्वतीय एतत्सूक्तम् । सूत्रितञ्च—'इन्द्र सोममिन्द्रः पूर्भिदिति मध्यन्दिनः' (ĀSS. 9. 8.) इति Sy. १४. विश्वामित्रो ब्रूते Sy. १५. य P. यस्मात् Sy.
१६. त्वदर्थं क्रियमाणम् Sy.
१७. मध्यन्दिनसम्बन्धि Sy.
१८. साव० M. निष्केवल्याख्यं शस्त्रम् Sy.
१९. अस्माभिर्माध्यन्दिने सवने क्रियमाणम् Sy.

सोमम्[1]। इमम्। पिब। प्रसार्य[2]। हनू[3]। मघवन्[4]! तृतीयसवनेऽप्यन्वयाद् ऋजीषवन्[5]! अश्वौ[6]।
विमुच्य[7]। अत्र[8]। सोमेन तृप्यस्व[9]।[10]

गवाशिरं मन्थिनमिन्द्र शुक्रं पिबा सोमं ररिमा ते मदाय।
ब्रह्मकृता मारुतेना गणेन सजोषा रुद्रैस्तृपदा वृषस्व॥ २॥

गवाशिरम्। मन्था[11] करम्भः, पयोमिश्रणम्[12]। करम्भिणम्[13]। इन्द्र[14]! दीप्तम्[15]। पिब[16]
सोमम्[17]। दद्मः[18]। तुभ्यम्[19]। मदाय[20]। ब्रह्मकृताम्[21]। मरुताम्[22]। गणेन। सहितः[23]। रुद्रैश्च[24] सह।
तृप्यन्[25]। आसिञ्च[26] स्वजठरे[27] सोममिति।

---

१. सोमरसम् Sy.

२. ०साय P. अत्रत्येन ग्रासेन पूरयित्वा। प्रप्रुष्य—'प्रोथ् पर्याप्तौ' इत्यस्य ल्यपि रूपम्। ह्रस्वश्छान्दसः। लित्स्वरः Sy. ३. हनु P.

४. नवम् M. and P. धनवन् Sy.

५. ऋजीषशब्देन गतसारं सोमद्रव्यमुच्यते। तद्वन्! हे इन्द्र! ऋजीषिन्, 'अर्ज षर्ज अर्जने' इत्यस्मात् 'अर्जेश्च ऋजि च' (Uṇādi 4. 468.) इतीषन्प्रत्ययः 'ऋजि' इत्यादेशश्च धातोः। अर्ज्यत इत्यृजीषम्। तदस्यास्तीतीनिप्रत्ययः। आमन्त्रितत्वान्निघातः Sy.

६. रथे योजितावश्वौ Sy. ७. रथाद् विमुच्य Sy. ८. देवयजनदेशे Sy.

९. तावश्वौ हर्यंव। मादयस्व—'मदि स्तुत्यादिषु' हेतुमण्णिच्। निघातः Sy.

१०. VM. ignores इन्द्र! सोमपते! and चारु॥ सोमस्याधिपते! चारु रमणीयं वर्तते Sy.

११. मन्था M. मन्था करम्भः should immediately follow करम्भिणम् and precede इन्द्र।

१२. ०श्रण P. गव्यस्य पयस आशीर्मिश्रणं यस्मिन् तम्। गवाशिरम्—श्रीणातेराङ्पूर्वात् क्विपि 'अपस्पृधेथामानृचुः—' इत्यादिना निपातनादाशिरादेशः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरः Sy.

१३. मन्थसंयुक्तम् Sy.

१४. इन्द्रं M. and P. १५. अभिनवं यद्वा शुक्रामन्थिग्रहे वर्तमानम् Sy.

१६. पिबा—'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः Sy. १७. सोम P. एवं त्रिषु सवनेषु वर्तमानमिमं सोमम् Sy.

१८. दन् P. वयं प्रयच्छामः। ररिम—रातेश्छान्दसे वर्तमाने लिटि रूपम्। असमानवाक्यत्वान्निघाताभावः। 'आगमा अनुदात्ताः' इतीटोऽनुदात्तत्वात् प्रत्ययस्वरः Sy. १९. तव Sy.

२०. हर्षाय Sy.

२१. नकृ० P. ब्रह्म स्तोत्रं करोतीति ब्रह्मकृत्। इन्द्रस्तोत्रं कुर्वाणेन Sy.

२२. मरुतां गणो मारुतः। मारुतेन Sy.

२३. सङ्गतस्त्वम् Sy.

२४. एकादशसंख्याकैः Sy.

२५. सोमपानेन तृप्यन्। तृपत्—'तृप प्रीणने' —तुदादिः। आगमानुशासनस्यानित्यत्वान्नुमभावः Sy.

२६. सर्वतो धारय। वृषस्व—'वृषु सेचने' व्यत्ययेन शः Sy. २७. सजेमरे P.

ये ते शुष्मं ये तविषीमवर्धन्नर्चन्त इन्द्र मरुतस्त ओजः ।
माध्यंदिने सवने वज्रहस्त पिबा रुद्रेभिः सगणः सुशिप्र ॥ ३ ॥

ये ते शुष्मम्[1] । ये[2] । तव । शोषकं[3] तेजः । वर्धयन्ति[4] । ये[2] च । वृद्धिम्[5] । पूजयन्तः[6] । इन्द्र ! तव । बलम्[7] । मरुतः[8] । माध्यन्दिने[9] । सवने । हे वज्रहस्त[10] ! पिब । रुद्रपुत्रैस्तैः[11] । सहितः सोमम् । सुहनो[12] !

त इन्वस्य मधुमद्विविप्र इन्द्रस्य शर्धो मरुतो य आसन् ।
येभिर्वृत्रस्येषितो विवेदामर्मणो मन्यमानस्य मर्म ॥ ४ ॥

त इन्वस्य[13] । ते[14] । एव । क्षिप्रम्[15] । अस्य[16] । मधुमदुदकम्[17] । प्रावेपयन्[18] । ये[19] । मरुतः[20] । अस्य[21] वृत्रेण स्पर्धमानस्य । बलम्[22] । अभवन्[23] । येभिर्यैर्मरुद्भिः[24] । प्रेषितः[25] । अमर्माहमस्मीति[26] ।

---

१. Omitted in P.
२. मरुतः Sy.
३. शत्रूणां शोषकं तेजः Sy.
४. युद्धसहकारितयाऽवर्धयन् । अवृधन्—'वृधु वर्धने', अन्तर्भावितण्यर्थः । यद्वृत्तयोगादनिघातः Sy.
५. तविषीं बलं च Sy.
६. त्वां स्तुवन्तः सन्तः Sy.
७. युद्धसामर्थ्यम् Sy.
८. ते मरुतः Sy.
९. मध्यं P. उत्सादित्वादञ् । ञित्वादाद्युदात्तः Sy.
१०. वज्रयुक्तौ हस्तौ यस्येति तादृश ! Sy.
११. रोदयन्ति शत्रूनिति रुद्रा मरुतः । तैः Sy.
१२. शोभनहनो ! Sy. 'शिप्रे हनू नासिके वा' इति यास्कः । (N. 6. 17.)
१३. Both M. and P. omit the *pratīka*.
१४. मरुतः Sy.
१५. क्षिप्रमोम् P.
१६. द्वितीयार्थे षष्ठी, इममिन्द्रम् Sy.
१७. ०धुमुदकं P. तव सहाया वयमास्महे, त्वं युद्धमभिगच्छेति माधुर्योपेतं वाक्यं यथा भवति तथा Sy.
१८. प्रवेपयन् M. प्रवेपयन्त P. प्रैरयन् । विविप्रे—'विप क्षेपणे' इत्यस्य लिटि व्यत्ययेनात्मनेपदम् । इरेचः 'इरयो रे' इति रे इत्यादेशः । निघातः Sy.
१९. येव P.
२०. मरुत P.
२१. इन्द्रस्य Sy.
२२. बळ P. बलभूताः Sy.
२३. भवन् P. आसन् । आसन्—'अस भुवि' इत्यस्य लङि रूपम् । यद्वृत्तयोगान्निघाताभावः Sy.
२४. ०भिर्वा म० M. ०भिर्व म० P. यैर्युद्धसहायैः Sy.
२५. प्रेरित इन्द्रः Sy.
२६. परैरविदितमर्मस्थानस्य Sy.

मन्यमानस्य । वृत्रस्य । मर्मस्थानम् । ज्ञातवानिति ।

मनुष्वदिन्द्र सवनं जुषाणः पिबा सोमं शश्वते वीर्याय ।
स आ ववृत्स्व हर्यश्व यज्ञैः सरण्युभिरपो अर्णा सिसर्षि ॥ ५ ॥

मनुष्वत् । मनोरिव । अस्माकमपि सवनम् । इन्द्र ! सेवमानः । पिब । सोमम् । समग्राय । वीर्याय । स त्वम् । आवर्तस्व । हे हर्यश्व ! यजनीयैर्मरुद्भिः । तव सरणमिच्छद्भिः । वृत्रस्था अपः । गमनशीलाः । निस्सारय ।

---

१. अत एव न कोऽपि मम हन्तेत्यभिमन्यमानस्य Sy.

२. पुत्र० M.
असुरस्य Sy.

३. यस्मिन् स्थाने प्रहृतौ सत्यां स मरिष्यति तादृशं स्थानम् । मर्म—'मृङ् प्राणत्यागे' इत्यस्मादौणादिको मनिन् । नित्स्वरः Sy.

४. अज्ञासीत् । विवेद—'विद ज्ञाने' इत्यस्य लिटि रूपम् । लित्स्वरः Sy.

५. मनोर्यज्ञमिव Sy.

६. ममेदं सवनं यज्ञम् Sy.

७. त्वमिमं सोमम् Sy.

८. सह्या० P.
शाश्वताय Sy.

९. परपरिभवलक्षणाय सामर्थ्याय Sy.

१०. आगच्छ । ववृत्स्व—'वृतु वर्तने' । व्यत्ययेन शपः श्लुः । लोटि रूपम् Sy.

११. D. and P. omit हे ।

१२. साकम् Sy.

१३. शरणमिच्छति P. एकश्रुतिमन्मन्त्रानात्मन इच्छद्भिः । यद्वा सरण्युभिः सरणशीलैर्मरुद्भिः सहितस्त्वम् । सरण्युभिः-'रण शब्दार्थः' । क्विप् । समानो रणो ध्वनिर्येषां ते सरणा मन्त्राः । तानिच्छन्तः । सुपः क्यच् । 'क्यात्' इत्युप्रत्ययः । यद्वा 'सृ गतौ' । 'सृयुवचिभ्योऽन्युजागूजक्नुचः' (Uṇādi 3.361.) इत्यन्युच्प्रत्ययः । 'रषाभ्याम्' (Pa. 8. 4. 1.) इति णत्वम् । चित्त्वादन्तोदात्तः Sy.

१४. आपः P. अन्तरिक्षस्थितान्युदकानि । यद्वा अपः पञ्चम्यन्तमेतत् पदम् । अपो व्याप्तादन्तरिक्षात्सकाशादर्णांसि प्रापय । अपः—'आप्लृ व्याप्तौ' । 'आप्नोतेः क्विप् ह्रस्वश्च' इति क्विप्, धातोर्ह्रस्वश्च । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् Sy.

१५. पार्थिवान्युदकानि Sy.

१६. प्रापय । सिसर्षि—'सृ गतौ' । छान्दसो जुहोत्यादिः । 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम् Sy.

त्वम॒पो यद्ध॑ वृ॒त्रं ज॑घ॒न्वाँ अत्याँ॑इव॒ प्रासृ॑जः॒ सर्त॒वाजौ॑ ।
शया॑नमिन्द्र॒ चर॑ता व॒धेन॑ वव्रि॒वांसं॒ परि॑ दे॒वीरदे॑वम् ॥ ६ ॥

त्वमपः । त्वम् । उदकानि[1] । यदा । वृत्रम्[2] । हतवानसि[3] । तदानीमश्वानिव[4] । सङ्ग्रामे[5] । सरणार्थम्[6] । पृथ्वीं[7] प्रति प्रासृजः[8] । शयानं[9] वृत्रम्[10] । देवनशीला अपः[11] । परितः । वव्रिवांसम्[12] । प्रदेवनशीलं[13] तं प्रति । गच्छ[14] तावत् । वज्रेण[15] जघ्निवानित्यन्वय इति[16] ।[17]

१. अपः Sy. २. मेघम् Sy.

३. जघन्वान्—'हन हिंसागत्योः' इत्यस्य क्वसौ 'विभाषा गमहनविदविशाम्' इतीटो विकल्पितत्वादत्रेडभावः । 'अभ्यासाच्च' इति हकारस्य घत्वम् । प्रत्ययस्वरः Sy.

४. P. adds सवरणार्थं after इव । It is a corruption of सरणार्थं and has been misplaced ॥ यथाऽश्वान् प्रेरयति तथा त्वम् Sy.

५. युद्धे । आजौ—'अज गतिक्षेपणयोः' 'अज्यतिभ्याञ्च' (Uṇādi. 4. 570.) इति इण्प्रत्ययः । णित्त्वादुपधावृद्धिः । अजन्ति गच्छन्त्यस्मिन्नित्याजिर्युद्धम् । प्रत्ययस्वरः । 'सर्तवाजौ' इत्यत्र संहितायामायादेशे कृते तस्य 'लोपः शाकल्यस्य' इति यकारलोपः । सर्वविधीनां छन्दसि विकल्पितत्वात्सवर्णदीर्घत्वे कर्तव्ये यलोपो नासिद्धो भवति । सवर्णदीर्घः Sy.

६. Omitted in P. अतिवेगगमनाय । सर्तवै—'सृ गतौ' । तुमर्थे तवैप्रत्ययः । 'अन्तश्च तवै युगपत्' इति धातोः प्रत्ययस्य चोदात्तत्वम् Sy.

७. पृथिवीं P.

८. प्रसृ० P. अन्तरिक्षादाकाशात् प्रकर्षेण मेघभेदनं कृत्वासृजः । असृजः—'सृज विसर्गे' । शविकरणी (णः) । यद्योगादनिघातः Sy.

९. शयायं M. एकत्र निश्चलतया वर्तमानम् । शयानम्—'शीङ् स्वप्ने' । शानच् । अदादित्वाच्छपो लुक् । ङित्त्वाल्लसार्वधातुकस्वरेण शानचोऽनुदात्तत्वे धातुस्वरः Sy.

१०. वृतं P. मेघम् Sy.

११. उदकानि Sy.

१२. आवृत्य वर्तमानम् । वव्रिवांसम्—'वृञ् वरणे' इत्यस्य क्वसाविडागमश्छान्दसः । प्रत्ययस्वरः Sy.

१३. अदेवांसमदेव शी० P. अतएव बहूदकतया स्वच्छत्वेनाप्रतिभासमानम् Sy.

१४. गच्छता, as paraphrasing चरता of the original, is suggested for गच्छ तावत् ॥ चरता तमुद्दिश्य वर्तमानेन Sy.

१५. वधेन युद्धेन । हन्तेर्भावे—'हनश्च वधः' इत्यप्प्रत्ययो वधादेशश्च धातोरन्तोदात्तश्च Sy.

१६. M. omits words between प्रति गच्छ and इति ॥ तं यजाम इत्युत्तरेणान्वयः Sy.

१७. VM. ignores ह and इन्द्र ॥ ह खलु Sy.

यजाम इन्नमसा वृद्धमिन्द्रं बृहन्तमृष्वमजरं युवानम् ।
यस्य प्रिये ममतुर्यज्ञियस्य न रोदसी महिमानं ममाते ॥ ७ ॥

यजामः[१] । यजामः[२] । एव । अन्नेन[३] । प्रवृद्धम । इन्द्रम् । महान्तम्[४] । दर्शनीयम्[५] । जरावर्जितम्[६] । युवानम्[७] । यस्य[८] । प्रियतमे[९] । अत्यन्तं परिगच्छन्तु[१०] । यज्ञार्हस्य[११] । न । द्यावा-पृथिवी[१२] । महिमानम्[१३] । परिच्छेत्तुं शक्नुतः[१४] 'परि द्यावापृथिवी जभ्र उर्वी नास्य ते महिमानम्' इत्युक्तमिति[१५] ।

इन्द्रस्य कर्म सुकृता पुरूणि व्रतानि देवा न मिनन्ति विश्वे ।
दाधार यः पृथिवीं द्यामुतेमां जजान सूर्यमुषसं सुदंसाः ॥ ८ ॥

इन्द्रस्य कर्म । इन्द्रस्य[१६] । कर्माणि । सुकृतानि[१७] । बहूनि । व्रतानि[१८]

---

१. M. contains the *pratika*, added by a different hand over the line.

२. यजाम् P. कुशिका वयं यज्ञसिद्धयर्थं स्तुतिवाक्यैः पूजयामः । यजामः—यजे-र्लेटि रूपम् Sy.

३. हविर्लक्षणेनान्नेन Sy.

४. अत एव महान्तम् Sy.

५. ऋष्यते गम्यते स्तुतिलक्षणैर्मन्त्रैरिति ऋष्वं स्तोतव्यम् । ऋष्वम्—'ऋषी गतौ' । 'सर्वनिघृष्वऋष्व—' इत्यादिना वप्रत्ययान्तो निपातितः । प्रत्ययस्वरः ।

६. जरारहितम् Sy.

७. अत एव नित्यतरुणम Sy.

८. इन्द्रस्य तव Sy.

९. अपरिमिते । प्रिये—'ईदूदेत्—' इति प्रगृह्यसंज्ञा Sy.

१०. M. omits words between एव and परिगच्छन्तु । ममतुः is dual and goes with रोदसी । VM's. explanation is evidently wrong. परिच्छेत्तुं शक्नुतः । ममतुः—'माङ् माने' इत्यस्य लिटचतुसि रूपम् । यद्वृत्तयोगादनिघातः । प्रत्ययस्वरः Sy.

११. ०ज्ञार्थस्य P.

१२. द्यावापृथिव्यौ Sy.

१३. वैभवम् । महिमानम्—'महि' (=महत्) शब्दात् 'तस्य भावः' इत्यर्थे पृथ्वादित्वादिमनिच् । चित्स्वरः Sy.

१४. न ममाते इति द्वितीयं क्रियापदमावरार्थम् । ममाते—'माङ् माने शब्दे च' इत्यस्य लिटचातामि रूपम् Sy.

१५. परित्यु० P. RV. 1. 61. 8.; AV. 20. 35. 8.

१६. तव Sy.

१७. सुष्ठु निर्मितानि पृथिव्यादीनि Sy.

१८. यज्ञादीनि च Sy.

चास्य[1] । सर्वे । देवाः । न[1] । हिंसन्ति[2] । दधार[3] । यः[4] । अन्तरिक्षम्[5] । दिवम्[6] । भूमिम्[7] । च । पृथिवीत्यन्तरिक्षनाम[8] । जनयामास[9] च । सूर्यम्[10] । उषसं[11] च । शोभनकर्मा[12] ।[13]

**अद्रो॑घ स॒त्यं तव॒ तन्म॑हि॒त्वं स॒द्यो यज्जा॒तो अपि॑बो ह॒ सोम॑म् ।**
**न द्याव॑ इन्द्र त॒वस॑स्त॒ ओजो॒ नाहा॒ न मासाः॑ श॒रदो॑ वरन्त ॥ ९ ॥**

अद्रोघ सत्यम्[14] । अद्रोह[15] ! हिंसारहित[16] ! सत्यम्[17] । तव । तत्[18] । महत्त्वम्[19] । सद्यः[20] ।

---

१. नां P.

२. सिहन्ति P. एतानि सर्वाणि तव कर्माणि न हिंसन्ति, किन्त्वाद्रियन्ते । मिनन्ति—'मीञ् हिंसायाम्' इत्यस्य लटि रूपम् । निघातः Sy.

३. दाधार D. दाधार—'धृञ् धरणे' इत्यस्य लिटि रूपम् । तुजादित्वादभ्यासस्य दीर्घः । लित्स्वरः Sy.

४. अयमिन्द्रः Sy.

५. भूलोकम् Sy.

६. द्युलोकम् Sy.

७. भूमिं च is the explanation of इमाम् । उत ॥ अपि च Sy.

८. Ngh. 1.3. The passage पृथिवीत्यन्तरिक्षनाम should immediately follow अन्तरिक्षम् and precede दिवम् ।

९. स नया० M. उत्पादयामास । जजान—'जन जनने' इत्यस्यान्तर्भावितण्यर्थस्य लिटि रूपम् । लित्स्वरः Sy.

१०. लोकप्रकाशकमादित्यम् Sy.

११. अग्निहोत्रादिकर्मनिर्वाहकमुषःकालम् Sy.

१२. सुकर्मा शोभनकर्मा सन्निन्द्रः । सुदंसाः—'सोमनसी—'इत्युत्तरपदाद्युदात्तत्वम् Sy.

१३. इममन्तरिक्षलोकं च । एतांस्त्रीन् लोकान् । 'इन्द्र॑स्य॒ कर्म॒ सुकृ॑ता पु॒रूणि॑' इत्येतत्पदकदम्बकम् 'एको॒ द्वे वसु॑मती' इत्यस्मिन् वर्गे (RV. 3. 30. 11., 13.) पठितम् । अत्रापि तदेव पठ्यते । किमिति पदकाले नोत्सृज्यते ? इति चेन्न । वाक्यभेदात् । तत्र 'इन्द्र॑स्य॒ कर्म॒ सुकृ॑ता पु॒रूणि॑' इत्येकं वाक्यम् । अत्र तु 'कर्म सुकृता' इत्येकं वाक्यं 'पुरूणि व्रतानि' इत्यपरम् । किं च तत्रत्यं पदकदम्बकं प्रथमान्तमत्रत्यं द्वितीयान्तम् । अतो वाक्यभेदाद्विभक्तिभेदाच्च पदकाले नोत्सृज्यते Sy.

१४. Omitted in P.

१५. द्रोहवर्जित ! हे इन्द्र ! अद्रोघ—'आमन्त्रितस्य च' इति षाष्ठिकमाद्युदात्तत्वम् Sy.

१६. सत्यर० P.

१७. यथार्थम् Sy.

१८. तादृशम् Sy.

१९. माहात्म्यम् Sy.

२०. तदानीमेव Sy.

एव[1]। यत्[2]। जातस्त्वम्[3]। सोमम्[4]। अपिबः[5]। न। द्युलोकात्[6]। वृद्धस्य[7]। तव। बलम्[8]। निवारयन्ति[9]। तथाऽहःप्रभृतयश्[10]चेति[11]।

**त्वं स॒द्यो अ॑पिबो जा॒त इ॑न्द्र॒ मदा॑य॒ सोमं॑ पर॒मे व्यो॑मन् ।**
**यद्ध॒ द्यावा॑पृथि॒वी आवि॑वेशी॒रथा॑भवः पू॒र्व्यः का॒रुधा॑याः ॥ १० ॥**

त्वं[12] सद्यः। त्वम्। तदानीमेव। अपिबः। जातः[13]। इन्द्र ! मदाय[14]। सोमम्। परमे[15]। व्योम्नि[16]। स्वस्थाने स्थितः[17]। यदा त्वं प्रादुर्भूत उदितः। द्यावापृथिव्यौ। आविशसि[18]। अथ[19]।

---

१. ह प्रसिद्धौ Sy.   २. यस्मात् Sy.

३. उत्पन्नः Sy.

४. अस्माभिर्दीयमानं सोमरसम् Sy.

५. अपिबः—यद्योगादनिघातः Sy.

६. दिवोपलक्षिताः सर्वे लोकाः Sy.

७. तवसः बलवतः Sy.

८. सामर्थ्यम् Sy.

९. वारयन्ति। किन्तु तव सामर्थ्यमनुसृत्य सर्वे वर्तन्त इति भावः। वरन्त—'वृञ् वरणे' अन्तर्भावितण्यर्थोऽत्र निवारणे वर्तते। भौवादिकः। छान्दसे लङि रूपम्। निघातः Sy.

१०. प्रभृति refers to मासाः and शरदः ॥ अहा प्रतिपदादीन्यहानि न वारयन्ति। तथा मासाश्चैत्राद्याः। शरदः—संवत्सराश्च। मासाः—'मसी परिमाणे'। मस्यते परिमीयते त्रिंशता दिनैरिति मासः। कर्मणि घञ्। ञित्वादाद्युदात्तः। शरदः—'शॄ हिंसायाम्' इत्यस्मात् 'शॄदॄभसोऽदिः' इत्यधिकरणेऽदिप्रत्ययः। शीर्यन्तेऽस्यां तृणगुल्मवनस्पतीनां तेजांसीति शरत्। प्रत्ययस्वरः Sy.

११. VM. ignores इन्द्र and explains न once.

१२. सद्यस्क्रीनाम्न्येकाहे निष्केवल्यशस्त्रे 'त्वं सद्यो अपिबः' इति सूक्तमुखीया। सूत्रितञ्च 'त्वं सद्यो अपिबो जात इन्द्रानु त्वाहिघ्ने अध देव देवाः' (ASS. 9. 5.) इति Sy.

१३. जातम् M.

१४. हर्षाय Sy.

१५. Omitted in P. उत्तमे Sy.

१६. स्थाने स्थितः। व्योमन्—'अव रक्षणगत्यादिषु'। विपूर्वस्यावतेः 'नामन् सीमन्—'इत्यादिना मनिन्। 'ज्वरत्वर—' इत्यादिना ऊठ्। विशेषेणोम व्याप्तिर्यस्य तत्। 'सुपां सुलुक्—'इत्यादिना सुपो लुक्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरः Sy.

१७. संस्थाने स्थिते P.

१८. अपिशसि M. आ शसि P. आ समन्ताद्भृशं प्रविष्टोऽसि। आविवेशीः—'विश प्रवेशने' इत्यस्य यङ्लुकि लङि सिपि 'यङो वा' इतीडागमः। 'इतश्च' इति सिप इकारलोपः। यद्योगादनिघातः Sy.

१९. अनन्तरम् Sy.

भवसि[1] । पुरातनः । कारूणां[2] वर्त्ता[3] ।

**अहन्नहिं परिशयानमर्ण ओजायमानं तुविजात तव्यान् ।**
**न ते महित्वमनु भूदध द्यौर्यदन्यया स्फिग्या३ क्षामवस्थाः ॥ ११ ॥**

अहन्नहिम्[4] । उदकम् । परिवृत्य[5] शयानम् । अहिम्[6] । हतवानसि[7] । बलमाचरन्तम्[8] । बहुजनन[9] ! तवीयान्[10] प्रवृद्धतरः[11] । न । तव । महत्त्वम्[12] । अथ । अनुभवति[13] । द्यौरपि । यदा[14] त्वम् । अन्यतरया[15] । कट्या[16] । पृथिवीम्[17] । अवतिष्ठसि[18] अधः[19]स्थितामवितिष्ठसीति ।

---

१. अभवः खलु Sy.

२. कारुणां धर्ता P. कारूणां धत्ता M. कर्मणां विधाता । कारुधायाः—कारुः करोतेः 'कृवापाजिमिस्वदिसाध्यशूभ्यः उण्' इत्युण् प्रत्ययः । णित्त्वाद् वृद्धिः । दधातेः 'बहिहाधाञ्भ्यश्छन्दसि' इत्यसुन् । 'णित्' इत्यनुवृत्तेः 'आतो युक् चिण्कृतोः' इति युगागमः । समासे 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इति सूत्रात् पूर्वपदप्रकृतिस्वरः Sy.

३. VM. ignores ह ॥ ह खलु Sy.

४. ०हनहि P.

५. परितः शयानम्, उदकमन्तः कृत्वा परितो वर्तमानम् Sy.

६. आ समन्ताद्धन्त्यपहरत्युदकमित्यहिर्मेघः । तमिमं मेघम् । अहिम्—'हन हिंसागत्योः' । आङि 'आङि श्रिहनिभ्यां ह्रस्वश्च' इतीण्प्रत्ययः । डिच्च पूर्वपदस्य ह्रस्वश्च । वृषादित्वादाद्युदात्तत्वम् Sy.

७. उदकप्रेरणाय हतवानसि । अहन्—हन्तेर्लङि सिब्लोपे रूपम् Sy.

८. ०मावर० P. अत एव बलमाचरन्तम् । ओजायमानम्—ओजःशब्दादाचारार्थे 'कर्तुः क्यङ् सलोपश्च' इति क्यङ्प्रत्ययः सलोपश्च । ङित्त्वादात्मनेपदम् । प्रत्ययस्वरः Sy.

९. बहूनि जातानि पृथिव्यादीनि यस्मात् सोऽयं तुविजातः । हे तुविजात ! इन्द्र ! Sy.

१०. तवपवीयान् P.

११. अतिशयेन प्रवृद्धस्त्वम् । तव्यान्—'तु' इति सौत्रो धातुः । अस्मात्तृजन्तात् 'तुश्छन्दसि' इतीयसुन् । 'तुरिष्ठेमेयःसु' इति तृचो लोपः । भसंज्ञायामोर्गुणः । इकारलोपश्छान्दसः । नित्स्वरः Sy.

१२. महिमानम् Sy.

१३. जानाति । भूत्—भवतेर्लुङि रूपम् Sy.

१४. यस्मात्त्वम् Sy.

१५. अन्य अया P. एकतरया Sy.

१६. कथ्यावा P. कट्या । स्फिग्या—'यचि भम्' इति भसंज्ञाया बाधितत्वात् 'स्वादिष्वसर्वनामस्थाने' इति पदसंज्ञायां जश्त्वम् । तृतीयायाः पूर्वसवर्णः Sy.

१७. भूमिम् । क्षाम्—'क्षि निवासगत्योः' । 'अन्येभ्योऽपि दृश्यते' इति निरुपपदादपि डप्रत्ययः । ततष्टाप् । क्षियन्ति निवसन्त्यस्यां प्राणिन इति क्षा भूमिः । उदात्तनिवृत्तिस्वरेणान्तोदात्तः Sy.

१८. अवच्छाद्य तिष्ठसि । अवस्थाः—'वस आच्छादने' इत्यस्य लङि अनुदात्तत्वादात्मनेपदम् । थासि अदादित्वाच्छपो लुक् । यद्योगादनिघातः । अडागमस्वरः Sy.

१९. असंस्थि० P.

यज्ञो हि त इन्द्र वर्धनो भूदुत प्रियः सुतसोमो मियेधः ।
यज्ञेन यज्ञमव यज्ञियः सन्यज्ञस्ते वज्रमहिहत्य आवत् ॥ १२ ॥

यज्ञो हि[1]। यज्ञः[2]। हि[3]। तव। इन्द्र! वर्धनः[4]। भवति[5]। अपि च। प्रियः। सुतसोमः[6]। मेधार्हो[7] यजमानः। ततस्त्वं[8] यज्ञेन[9]। यजमानम्[10]। रक्ष[11]। यज्ञार्हः सन्[12]। यज्ञः[13]। तव। वज्रम्। अहिहनने[14] अरक्षत्[15] बलानुप्रदानादिति।

यज्ञेनेन्द्रमवसा चक्रे अर्वागैनं सुम्नाय नव्यसे ववृत्याम् ।
यः स्तोमेभिर्वावृधे पूर्व्येभिर्यो मध्यमेभिरुत नूतनेभिः ॥ १३ ॥

यज्ञेनेन्द्रम्[16]। [17]रक्षकेण[18]। यज्ञेन। इन्द्रम्[19]। आकरोमि[20]। अभिमुखम्। आवर्तयेयमहम्[21][22]। एनमिन्द्रम्[23]। सुखाय[24]। नवतराय[25]। यः[26]। स्तोमैभिः[27]। ववृधे[28]। पूर्वेषु[29] भवैः[30]। यो[31] वा[32]।

---

१. Omitted in P.
२. अस्मदीयोऽयं यज्ञः Sy.
३. खलु Sy.
४. हविष्प्रदानेन वर्धयिता। वर्धनः—'वृधु वर्धने' इत्यस्य ण्यन्तस्य नन्द्यादित्वात् ल्युप्रत्ययः। लित्स्वरः Sy.
५. भूत्—हियोगादनिघातः Sy.
६. अभिषुतसोमवान् Sy.
७. सारभूतोऽयं यज्ञः Sy
८. तत P.
९. अनुष्ठीयमानेनानेन यज्ञेन Sy.
१०. यज्ञस्य कर्तारं यजमानम् Sy.
११. फलप्रदानेन रक्ष। अव—अवतेर्लोटि रूपम्। निघातः Sy.
१२. सन्—अस्तेः शतरि रूपम्। प्रत्ययस्वरः Sy. १३. किञ्चायं यज्ञः Sy.
१४. ०ननेन P. वृत्रहनने कर्मणि। अहिहत्ये—'हन हिंसागत्योः' इत्यस्य भावे 'हनस्त च' इति क्यप् तकारश्चान्तादेशः। कृदुत्तरपदस्वरः Sy.
१५. रक्षन् P. रक्षतु। आवत्—अवतेश्छान्दसे लङि रूपम्। निघातः Sy.
१६. यज्ञेन P.
१७. हे इन्द्र! सर्वो यजमानः Sy.
१८. ०केन P. स्वरक्षकेण Sy.
१९. त्वाम् Sy.
२०. ०रोषि P. हविष्प्रदानेनाभिमुखं.... करोति। चक्रे—करोतेर्लिटि रूपम् Sy.
२१. M. omits खमावर्त ॥ यज्ञेनावृत्तं मदभिमुखं कुर्याम्। ववृत्याम्—'वृतु वर्तने'। लिङि 'बहुलं छन्दसि' इति शपः श्लुः। व्यत्ययेन परस्मैपदम्। निघातः Sy. २२. ०येयाहम् M. and P.
२३. त्वाम् Sy. २४. धनाय Sy.
२५. नव्यसे—नवशब्दादीयसुनि भसंज्ञायामकारलोपे ईकारलोपश्छान्दसः। नित्त्वादाद्युदात्तः Sy. २६. कीदृशस्त्वम्? यः Sy. २७. स्तोत्रैः Sy.
२८. ववृधे—'वृधु वर्धने' इत्यस्य लिटि रूपम्। प्रत्ययस्वरः Sy.
२९. पृष्ठभ० P. ३०. पुरातनैः Sy.
३१. इन्द्रः Sy. ३२. च P.

मध्यमभवैः[1] । अपि च । सम्प्रतितनैः[2] ।

विवेष यन्मा धिषणा जजान स्तवै पुरा पार्यादिन्द्रमह्नः ।
अंहसो यत्र पीपरद्यथा नो नावेव यान्तमुभये हवन्ते ॥ १४ ॥

विवेष । उपस्थिता[3] । यस्मात्[4] । माम्[5] । स्तुतिवाक्[6] । अतस्त्वां[7] जनयामि[8] । स्तवानि[9] । पुरैव[10] । पारे भवात्[11] । मरणदिवसात्[12] । इन्द्रम् । यस्मिन्[13] स्तोत्रे सति[14] । येन प्रकारेण । अस्मान् । अंहसः[15] । पीपरदिन्द्रः[16] । तेनैव प्रकारेण बहुधनानस्मान्[17]

---

१. ०ध्यभ० P. मध्ये भवैः स्तोत्रैः । मध्यमेभिः—मध्यशब्दात् शैषिकार्थे 'मध्यान्मः' (Pa. 4. 3. 8.) इति मप्रत्ययः । प्रत्ययस्वरः Sy.

२. अस्माभिः क्रियमाणैरधुनातनैः स्तोत्रैर्वर्धते । नूतनेभिः—नवशब्दस्य 'त्नप्तनन्खाश्च प्रत्यया वक्तव्या नू इत्यादेशश्च' (PMBH. 5. 4. 30. 6.) इति तनन्प्रत्ययो नू इत्यादेशश्च Sy.

३. ०पास्थि P. व्याप्नोत् । विवेष—'विष्लृ व्याप्तौ' इत्यस्य लिटि णलि रूपम् । लित्स्वरः Sy. व्याप्तवती BB.

४. यस्मां P. यदा Sy.

५. Omitted by P.

६. इन्द्रं स्तवानीति मदीया बुद्धिः Sy. तादृशी बुद्धिः BB.

७. ०तस्मां P. तस्मादहम् BB.

८. तदाहं स्तोत्रं करोमि । जजान—'जन जनने' इत्यस्य लिट्युत्तमे णलि रूपम् । वाक्यभेदादनिघातः Sy. जातवानस्मि, नो चेदहमजातसम एव स्याम् BB.

९. ०वानी M. स्तुत्या तोषयामीतीयं धिषणा जजान, ममोदपादि । अतो जातवानस्मि BB.

१०. Omitted in M. पूर्वम् Sy. पूर्वं यावन्मरणदिवसम् BB.

११. वारभ० M. पराम० P. पारे भवाद् अतिदूरवर्तिनो विघ्नकारिणः Sy. पारे भवादत्यन्तात् BB. १२. ०रणं दि० M. ०रणनिहितान् P. दिवसात् BB.

१३. यस्मिस्तो० P. यस्यां धिषणायामेव जातायां सत्यां स इन्द्रः Sy. पुनश्च धिषणा विशेष्यते —यत्र यस्यां धिषणायां सत्याम् BB.

१४. सती M. and P.

१५. अवर्तेर M. अवस्तेतीधि P. पापरूपाद्दारिद्र्यात् । अंहसः—'अम गत्यादिषु' 'अमेर्हुक् च' (Uṇādi 4. 652.) इत्यसुन्प्रत्ययो हुगागमश्च । नित्स्वरः Sy. पापात् BB.

१६. पीवर० M. वीवर० P. यथा पारं नयेत् तथास्मदुभयपार्श्ववर्तिधनार्थिनो जनाः । पीपरत्—'पॄ पालनपूरणयोः' इत्यस्य लुङि चङि ह्रस्वाभ्यासेत्व-दीर्घगुणाः । यथायोगादनिघातः । लित्स्वरः Sy. उत्तारयति पुरुषम् । 'पार तीर कर्मसमाप्तौ' . . .यद्वा, यत्राह्नि अस्मानिन्द्रोऽंहसः पारयत्युत्तारयति तत्पार्यमहरिति निर्वचनं क्रियते । आ तत इन्द्रं स्तवै, यावदंहोविमोचनमित्यर्थः BB. १७. अथ पारतरणं विशेष्यते । यथांऽहस उत्तारितानस्मान् BB.

नावा[1] । यान्तमिव[2] । उभयकूलस्था उभयपार्श्वस्थाः[3] । आह्वयन्ति लिप्सन्त इति[4] ।

**आपूर्णो अस्य कलशः स्वाहा सेक्तेव कोशं सिसिचे पिबध्यै ।**
**समु प्रिया आववृत्रन्मदाय प्रदक्षिणिदभि सोमास इन्द्रम् ॥ १५ ॥**

आपूर्णः[5] । इन्द्रार्थं[6] सोमेन[7] द्रोणकलश आपूर्णः[8] । स हूयते[9] । पृथिव्यादिकं सिञ्चन् यथा कोशं[10] सिञ्चति । उत्सेक्ता, एवमहम्[11] । इन्द्रस्य[12] । सोमपानार्थम्[13] । द्रोणकलशम् । उत्तरवेद्यां[14]

१. तत्र दृष्टान्तः । यथा नद्यादिषु नौकया । नावेव—'नुद प्रेरणे' इत्यस्मात् 'ग्लानुदिभ्यां डौः' (Uṇādi 2. 222.) इति डौप्रत्ययः । नुद्यत इति नौः प्लवः । 'सावेकाचः—'इति तृतीयाया उदात्तत्वम् । 'इवेन नित्यसमासो विभक्त्यलोपः—' इत्यादि Sy. यथा नदीमध्ये नावा BB.

२. गच्छन्तं पुरुषम् Sy. यान्तमुभयतःस्थिता आह्वयन्ति भो मामुत्तारय मामुत्तारयेति, तथांऽहस उत्तारिणी धिषणा बुद्धिर्मां विवेष व्याप्ता भवतु, अतो जजानाहमिति । तस्मात्तादृशधिषणं मामिन्द्रोंऽहसो मुञ्चत्विति BB.

३. वहन्तः P. उभयकूलवर्तिनो जनास्तद्वत् । उभये—उभशब्दात् परस्य तयपः 'उभादुदात्तो नित्यम्' (Pa. 5. 2. 44.) इत्ययजादेशः । वचनसामर्थ्यादादेरुदात्तत्वम् Sy. उभयकूलप्रभवा अपि BB.

४. M. omits आह्व ॥ हवन्ते—ह्वयतेर्लटि रूपम् Sy. आह्वयन्त्यात्मरक्षार्थं मां रक्ष मां रक्षेति । यथेति निपातो यद्वृत्तप्रतिरूपकः । यथा गणकाराः—'मात्रायां वेळायां यथा पुरा हो अहो अयो मनो' इति । तेनाख्यातं (न) निहन्यते BB. ॥ This stanza=TS. 1. 6. 12. 3.

५. माध्यंन्दिने सवन आग्नीध्रीयस्य 'आपूर्णो अस्य' इति प्रस्थितयाज्या । सूत्रितञ्च —'आपूर्णो अस्य कलशः स्वाहेति माध्यन्दिन्यः' (ASS. 5. 5.) इति Sy.

६. हे इन्द्र ! Sy.

७. ०न्द्रार्थं P. अस्य तव पानार्थम् Sy.

८. आपूर्णः—'पॄ पालनपूरणयोः' इत्यस्य कर्मणि निष्ठा । 'रदाभ्याम्—' इति तस्य नत्वम् । 'गतिरनन्तरः' इति गतिस्वरः Sy.

९. स्वाहाकृतो दत्तश्च सोमसहितः कलशः । स्वाहा—निपातत्वादाद्युदात्तः Sy.

१०. शेकारं P. जलपूर्णात् कोशात् दृतेः सकाशाज्जलं पात्रान्तरे सिञ्चति तद्वत् Sy.

११. ०त्युः सिञ्चति M. ०त्युत्सिञ्चति P. तत्र दृष्टान्तः । यथा सेक्ता सेचकः । सेक्तेव कोशम्—'न लोकाव्ययनिष्ठा—'इति षष्ठीप्रतिषेधः Sy.

१२. तव Sy.

१३. ०नार्त्थम् P. तव पानार्थम् । पिबध्यै —'पा पाने' इत्यस्य तुमर्थे शध्यैन्प्रत्ययः । शित्त्वात्पिबादेशः । नित्त्वादाद्युदात्तः Sy.

१४. उत्वे० P. तं सोमं चोदिताधारे सिञ्चामि Sy.

सिञ्चामि[1] । समभ्याववृत्रन्[2] इन्द्रम्[3] । प्रदक्षिणम्[4] । प्रियाः[5] । सोमाः[6] । मदार्थम्[7] । इन्द्रमिति[8] ।

**न त्वा॑ गभी॒रः पु॑रुहूत॒ सिन्धु॒र्नाद्र॑यः॒ परि॒ षन्तो॑ वरन्त ।**
**इ॒त्था सखि॑भ्य इषि॒तो यदि॒न्द्रा दृ॒ळ्हं चि॒दरु॑जो॒ गव्यं॑मू॒र्वम् ॥ १६ ॥**

न त्वा गभीरः[10] । हे पुरुभिराहूतेन्द्र ! न[11] । त्वाम् । गम्भीराः[12] । नद्यः[13] । परि[14]वारयन्ति[15] । न च । शिलोच्चयाः[16] । विद्यमानाः[17] । इत्थम्[18]=सूक्ते[19] उक्तेन प्रकारेण । सखिभ्यः[20]=देवेभ्योऽङ्गिरोभ्यश्च । तैः प्रेषितः[21] सन् । यदा[22] । त्वमिन्द्र ! आरुजः[23] । दृढम्[24] । गवाम्[25]आवरणम्[26] । ऊरुम्[27] =महान्तं शिलोच्चयमिति ।[28]

---

१. सिसिचे—'षिच क्षरणे' इत्यस्य लिटि रूपम् Sy.
२. समभ्यव P. अभिलक्ष्यैव सम्यगावृत्य वर्तन्ताम् । आववृत्रन्—'वृतु वर्तने' इत्यस्य लङि शप् । 'बहुलं छन्दसि' इति तस्य शपः श्लुः । व्यत्ययेन परस्मैपदम् । 'बहुलं छन्दसि' इति रुडागमः Sy. ३. त्वाम् Sy.
४. प्रादक्षिण्येन Sy.
५. स्वादुतमाः Sy.
६. दत्तास्ते सोमाः Sy.
७. तव हर्षार्थम् Sy.
८. P. omits words between प्रदक्षिणं and इन्द्रम् ॥ इन्द्रमिति seems to be redundant.
९. VM. ignores उ
१०. Omitted in P.
११. Omitted in P.
१२. गम्भीरः । गभीरः—'गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च' । अस्मादीरच्प्रत्ययः । धकारस्य भकारः, आकारस्य ह्रस्वश्च 'गभीरगम्भीरौ' (Uṇādi 4. 475.) इत्यनेन निपात्यते । चित्स्वरः Sy.
१३. समुद्रः । सिन्धुः—'स्यन्दू प्रस्रवणे' । 'स्यन्देः सम्प्रसारणं धश्च' इत्युप्रत्ययः । सम्प्रसारणं दकारस्य धकारः । 'नित्' इत्यनुवृत्तेराद्युदात्तः Sy.
१४. परितो वर्तमानाः सन्तः Sy.
१५. वारयन्ति । वरन्त—'वृञ् वरणे' । भौवादिकः । लङि रूपम् । निघातः Sy.
१६. शैला न वारयन्ति, किन्तु त्वामनुसृत्य वर्तन्ते Sy.
१७. परिषन्तः । सन्तः—अस्तेः शतरि रूपम् । 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' इति षत्वम् । केचित् परेः क्रियान्वयमिच्छन्ति । तदा षत्वमनुपपन्नम् । परि—निपातस्वरः । सन्तः—प्रत्ययस्वरः Sy.
१८. अनेन प्रकारेण Sy.
१९. सूक्तम् P. २०. सखिभिर्देवैः Sy.
२१. प्रार्थितस्त्वम् Sy.
२२. यस्मात् Sy.
२३. सम्यगभाङ्क्षीः । अरुजः—'रुजो भङ्गे' इत्यस्य लङि रूपम् Sy.
२४. अतिप्रबलम् Sy.
२५. गवि भवमवटे वर्तमानम् । गव्यम्—गोर्विकार इत्यर्थे 'गोपयसोर्यत्' इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् Sy.
२६. ०माचर० M.
२७. ऊरम् P. ऊर्वानलम् Sy.
२८. VM. ignores चित् ॥ चिद्–अपि Sy.

शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ १७ ॥

[ शुनं हुवेम ।[१] ]

III.33.

प्र पर्वतानामुशती उपस्थादश्वेइव विषिते हासमाने ।
गावेव शुभ्रे मातरा रिहाणे विपाट्छुतुद्री पयसा जवेते ॥ १ ॥

[२]प्र पर्वतानाम् । यास्कः—'विश्वामित्रः . . . स [३]वित्तं गृहीत्वा [४]विपाट्छुतुद्र्योः सम्[५]भेदमाययौ'[६]।

१. The *pratīka* has been supplied in a different hand in M. only. For explanation, see III. 30. 22.

२. 'प्र पर्वतानाम्' इति त्रयोदशर्चं चतुर्थं सूक्तम् । अत्रेयमनुक्रमणिका—'प्र पर्वतानां सप्तोना संवादो नदीभिर्विश्वामित्रस्योत्तितीर्षोस्तत्र नदीवाक्यं चतुर्थीषष्ठ्यष्टमीदशम्यः षष्ठीसप्तम्योस्त्विन्द्रस्तुतिरन्त्यानुष्टुप्' (KSA. 18. 33. p. 15.) इति । अत्र चतुर्थीषष्ठ्यष्टमीदशमीनां नदीवाक्यत्वान्नद्य एव ऋषयः, शिष्टानां विश्वामित्रवाक्यत्वात् स एव ऋषिः । अन्त्यानुष्टुप्, शिष्टास्त्रिष्टुभः, इन्द्रो देवता । यद्यपि षष्ठ्यां सप्तम्यां च विश्वामित्रो नद्यश्च स्तूयन्ते तथापीन्द्र एव देवता । सूक्तविनियोगो लैङ्गिकः । पुरा किल विश्वामित्रः पैजवनस्य सुदासो राज्ञः पुरोहितो बभूव । स च पौरोहित्येन लब्धधनः सर्वं धनमादाय विपाट्छुतुद्र्योः सम्भेदमाययौ । अनुययुरितरे । अथोत्तितीर्षुर्विश्वामित्रोऽगाधजले ते नद्यौ दृष्ट्वा उत्तरणार्थमाद्याभिस्तिसृभिस्तुष्टाव Sy. तथाऽऽह यास्कः—"विश्वामित्र ऋषिः सुदासः पैजवनस्य पुरोहितो बभूव । विश्वामित्रः सर्वमित्रः । सर्वं संसृतम् । सुदाः कल्याणदानः । पैजवनः पिजवनस्य पुत्रः । पिजवनः पुनः स्पर्धनीयजवो वा अमिश्रीभावगतिर्वा । स वित्तं गृहीत्वा विपाट्छुतुद्र्योः सम्भेदमाययौ (N. 2. 24.) । तथानुक्रमणी—'प्र पर्वतानां सप्तोना संवादो नदीभिर्विश्वामित्रस्योत्तितीर्षोः' (KSA. 18. 33. p. 15.) इति । तथा बृहद्देवता—

सूक्ते प्रेति तु नद्यश्च
विश्वामित्रः समूदिरे ॥१०५॥
पुरोहितस्सन्निर्व्यार्थं
सुदासः सोऽहरद्धनम् ॥
(4. 105, 106.) इति ।

BD. reads (सुदासा सह यन्नृषिः) विश्वामित्रस्त्रिष्टुभा नद्यौ तुष्टाव । "विश्वामित्रस्य संवादं नद्यतिक्रमणे जपेत्" इति विनियुक्तमृग्विधाने (Ṛg-vidh. 2. 4.) DDN.

३. वृत्रं P. व्रतं D.

४. विप्राट्शतद्र्योः M.
विपाच्छुतुद्र्योः P.

५. ०भेयय० P.

६. N. 2.24.

'अनुययुरितरे[1]। स विश्वामित्रो नदीस्तुष्टाव गाधा भवतेति[2][3]। अपि[4] द्विवत्[5], अपि[6] बहुवत्[7]' इति। तदेतद् द्विवत्[8] "प्र पर्वतानाम्" इति। पर्वतानाम्[9]। उपस्थानान्निर्गत्य[10]। कामयमाने[11]। वडवे[12] इव[13]। विमुक्ते[14]। हासतिः[15] स्पर्धाकर्मा—परस्परं[16] स्पर्धमाने; हर्षकर्मा वा[17]—हर्षमाणे[18]। गावाविव[19]।

---

१. अनय P.

२. भव P.

३. ति P.

४. एपि P.

५. द्विपद P.

६. रि P.

७. ०हुपत् M. बहु० P. N. 2. 24.

८. ततैविद्वन् M. द्विद्वत् P. 'तद्यद् द्विवत्' इति यदवोचं तस्यायं प्राप्तोऽवसरः। विश्वामित्रस्तुष्टाव SKN. विश्वामित्रो ब्रवीति Dur.

९. गिरीणां शैलानाम् Sy. DDN.

१०. उत्सङ्गात् Sy., DDN. समीपात् SKN. निर्भराद् मेघानां वा Dur.

११. समुद्रगमनं कामयमाने। उशती—'वश कान्तौ' अस्य शतुङिन्त्वाद् 'ग्रहिज्यावयि—'इत्यादिना सम्प्रसारणम् Sy. उशती—षष्ठ्यादयश्च 'द्विवचोन्त' (RPR. 1. 71.) इति प्रकृतिभावः DDN. कामयमाने। किम्? सामर्थ्यात् समुद्रगमनम् SKN. कामयमाने परस्परं समागमं समुद्रं वा Dur.

१२. वडवे M. and P. अश्वे वडवे SKN.

१३. यथा SKN.

१४. मन्दुरातो विमुक्ते। विषिते—'षिञ् बन्धने' इत्यस्य कर्मणि निष्ठा। 'संहितायां 'परिनिविभ्यः सेवसितसयसिवुसह—' इत्यादिना षत्वम्। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरः Sy. बन्धाद्विमुक्ते। 'षिञ् बन्धने'। विषिते—'अन्यपूर्वे' (RPR..5.21.) इति षत्वम् DDN. विमुक्ते मन्दुरातः। अथवा विविधवहनकर्मविषण्णे रथे नियुक्ते इत्यर्थः SKN. विमुक्ते मन्दुरातः सादिभ्यो वा...विभागेनैकस्मिन् मुक्ते, कस्मिंश्चिद् युक्ते युगादौ वा Dur.

१५. हसतिः M. हेसाति P. हासमाने, 'हासतिः स्पर्धाकर्मा, हसे हसने वा' शानच्। तस्य लसार्वधातुकस्वरे कृते धातुस्वरः Sy.

१६. अन्योन्यं जवेन स्पर्धमाने Sy. स्पर्धमाने SKN. स्पर्द्धमाने Dur.

१७. Cf. हासतिः स्पर्द्धायां हर्षमाणे वा। N. 9. 39.

१८. त्वरया गच्छन्त्यौ परस्परं हृष्यन्त्यौ वा Sy. परस्परं हृष्यन्त्यौ वा SKN. परस्परेण हर्षमाणे वा हृष्यमाणे वा Dur.

१९. गवामिव P. यथा द्वौ गावौ Sy.

शोभमाने श्वेतवर्णे । मातृस्थानीये । इतरेतरं संलिहाने । विपाट्छुतुद्र्यौ । पयसा । प्रजवेते ।

इन्द्रेषिते प्रसवं भिक्षमाणे अच्छा समुद्रं रथ्येव याथः ।
समाराणे ऊर्मिभिः पिन्वमाने अन्या वामन्यामप्येति शुभ्रे ॥ २ ॥

इन्द्रेषिते । इन्द्रेण प्रेषिते । तस्मादनुज्ञाम् । भिक्षमाणे । समुद्रम् । प्रति । रथमार्गेण

---

१. शोभमानौ वर्तेते तद्वत् शुभ्रे शोभमाने Sy. शोभने SKN. कल्याण्यौ Dur.

२. यथा मातरौ धेनू Sy. किञ्च मातरौ धेनू DDN. मातरौ SKN., Dur.

३. संहिता० M. सति० P. अन्तर्णीतसन्नर्थो लिहिः । वत्सं जिह्वया लेढुमिच्छन्त्यौ शीघ्रं गच्छतस्तद्वत् समुद्रं गन्तुं जवाद् गच्छन्त्यौ । रिहाणे—'लिह आस्वादने' । स्वरितेत्त्वादुभयपदी । शानच् । अदादित्वाच्छपो लुक् । लकारस्य रेफश्छान्दसः । रेफमवलम्ब्य णत्वम् । चित्त्वादन्तोदात्तः Sy. 'लिह आस्वादने' । शानच् । तस्य रेफश्छान्दसः DDN. एकस्य वत्सस्य पुत्रस्य स्नेहात् तं रिहाणे । अन्तर्णीतसन्नर्थो लिहिः । जिह्वया लेढुमिच्छन्त्यौ SKN. वत्समेकं प्रलेढुमिच्छन्त्यौ Dur.

४. कूलविपाटनात् विपाशनाद्वा विमोचनाद्वा विपाट् । विपाट्—'पट गतौ, पश बाधनस्पर्शनयोः' इति वा ण्यन्तावेतौ विपूर्वौ । शकारस्य व्रश्चादिना षत्वम् Sy.

५. ०पाद् शु० M. and P. शु क्षिप्रं तु तुन्ना तुन्नेव द्रवति गच्छतीति शुतुद्री । एतन्नामके नद्यौ । शुतुद्री—छान्दसी रूपसिद्धिः Sy. द्विवचनस्य पूर्वसवर्णो । विपाट्छुतुद्र्यौ SKN. ये चैते विपाट्छुतुद्र्यौ Dur.

६. पयसा संयुक्ते उदकेन SKN. उदकेन पूर्णे Dur.

७. जते P. समुद्रं प्रति शीघ्रं गच्छतः । जवेते—'जुङ् गतौ' । भौवादिः । ङित्त्वादात्मनेपदम् । 'आतो ङितः' इतीयादेशः । निघातः Sy. जवेते 'तिङ्ङतिङः' (Pa. 8.1.28.) इति निघातः DDN. प्रशब्दो 'जवेते' इत्यनेन सम्बध्यते ।...प्रकृष्टेन जवेन गच्छतः SKN. ये एवमेते प्रजवेते ते अस्माकं गाधे भवतमित्येतदाशास्महे Dur. 'पर्वतानामुपस्थादुपस्थानात् । उशत्यौ कामयमाने अश्वे इव । विमुक्ते इति वा । विषण्णे इति वा । हासमाने, हासतिः स्पर्द्धायाम्, हर्षमाणे वा । गावाविव शुभ्रे शोभने मातरौ संरिहाणे विपाट्छुतुद्र्यौ पयसा प्रजवेते' N. 9. 39.; SKN. III. 173. ८. हे नद्यौ ! Sy.

९. इन्द्रेषिते—'इष गतौ' इत्यस्य कर्मणि निष्ठायाः 'तीषसह—'इत्यादिना इडागमः । 'तृतीया कर्मणि' इति पूर्वपदस्वरः Sy.

१०. तस्येन्द्रस्यानुज्ञाम् । प्रसवम्—'षू प्रेरणे' इत्यस्य अप् । धाथादिस्वरः Sy.

११. प्रार्थयमाने युवाम् । भिक्षमाणे—'भिक्ष याच्ञायाम्' । आत्मनेपदी । शानचो लसार्वधातुकस्वरेणानुदात्तत्वे धातुस्वरः Sy. १२. आभिमुख्येन Sy.

१३. तत्र दृष्टान्तः—यथा रथिनौ लक्ष्यं देशमभिगच्छतस्तद्वत् । रथ्येव—रथस्येमौ 'तस्येदम्' इत्यर्थे 'रथाद्यत्' इति यत्प्रत्ययः । तित्स्वरितः । इवेन विभक्त्यलोप इत्यादि Sy.

रथ इव । युवां गच्छथः[1] । सङ्गच्छमाने[2] परस्परम् । ऊर्मिभिः[3] । उदकं पिन्वमाने[4] । युवयोः[5] । अन्या[6] । अन्याम्[7] । अपि । एति[8] । हे शुभ्रे[9] !

अच्छा सिन्धुं मातृतमामयासं विपाशमुर्वीं सुभगामगन्म ।
वत्समिव मातरा संरिहाणे समानं योनिमनु संचरन्ती ॥ ३ ॥

अच्छा सिन्धुम्[10] । अतिशयेन मातृस्थानीयम्[11] । सिन्धुम्[12] । आभिमुख्येन । यामि[13] । शुतुद्रीं[14] विपाशं च । विस्तीर्णाम्[15] । कल्याणीम्[16] । अभिगतवन्तः[17] । वत्समिव । मातरौ[18] । समुद्रं[19] संलिहाने । समानम्[20] । स्थानम्—समुद्रम् । लक्ष्यीकृत्य[21] । सञ्चरन्त्याविति[22] ।

---

१. ०च्छथ P. याथः—यातेर्लटि रूपम् Sy.
२. ०मा P. किं कुर्वत्यौ ? सङ्गच्छन्त्यौ । समाराणे—'ऋ गतौ' इत्यस्य लिट् । सम्पूर्वस्यार्तेः 'समो गमि—'इत्यादिनाऽत्मनेपदत्वात्तस्य कानजादेशः । 'ऋच्छत्यृताम्' इति गुणः Sy.
३. तरङ्गैः Sy.
४. पिबमा० M. पिन्वयो P. परिसरप्रदेशं सन्तर्पयन्त्यौ । पिन्वमाने—'पिवि सेचने' । भूवादिः । लसार्वधातुकस्वरेण शानचोऽनुदात्तत्वे धातुस्वरः Sy.
५. युवयोर्मध्ये Sy.
६. अन्यः M. अण्य P. एका Sy.
७. न्याम् P. अपरां नदीम् Sy.
८. गच्छति । परस्परमैक्यमापद्यत इत्यर्थः Sy.
९. शोभमाने युवां समुद्रं गच्छथ इति पूर्वेणान्वयः Sy.
१०. हे नद्यौ ! Sy.
११. सिमा स्था० P. मातृस्थानीयाम् is suggested for मातृस्थानीयम् ॥ अतिशयेन मातरम् Sy.
१२. स्रवन्तीं शुतुद्रीं त्वाम् Sy.
१३. विश्वामित्रोऽहं प्राप्तोऽभूवम् । अयासम्—'या प्रापणे' इत्यस्य रूपम् । इडभावश्छान्दसः Sy.
१४. ०तुद्रि M.
१५. ०स्तीर्णम् M. महतीम् Sy.
१६. सौभाग्यवतीम् Sy.
१७. वयं प्राप्ताः स्मः । अगन्म—गमेर्लङि 'बहुलं छन्दसि' इति शपो लुक् । 'म्वोश्च' इति मकारस्य नकारः । निघातः Sy.
१८. मातरौ द्वे धेनू Sy.
१९. अन्तर्णीतसन्नर्थो लिहिः । जिह्वया लेढुमिच्छन्त्यौ यथा वत्समनुगच्छतस्तद्वत् Sy.
२०. एकम् Sy.
२१. अभिलक्ष्य Sy.
२२. सच० M. सम्यक् चरन्त्यौ । युवामयासिषमिति पूर्वेणान्वयः । सञ्चरन्ती—चरतिर्गत्यर्थः । तृतीयायुक्तत्वाभावादात्मनेपदाभावः । शतुर्लसार्वधातुकस्वरेणानुदात्तत्वे कृते धातुस्वरः Sy.

एना वयं पयसा पिन्वमाना अनु योनिं देवकृतं चरन्तीः ।
न वर्तवे प्रसवः सर्गतक्तः किंयुर्विप्रो नद्यो जोहवीति ॥ ४ ॥

एना[1] वयम् । नद्यौ[2] वदन्ति—अनेन[3] । उदकेन[4] वयम् । क्षरन्त्यः[5] । देवेन कृतम्[6] । स्थानम्= समुद्रम् । अनुचरन्त्यो[7][8] भवामः[9] । न । निवर्तयितुं[10] शक्यः । अस्माकमिन्द्रकृतः प्रसवः[11] । प्रसक्त[12]-गमनः 'अत्यो नाज्मन्[13]त्सर्गप्रतक्तः[14]' इति मन्त्रः[15] । एवं सति किमिच्छिन्[16] । अयं[17] ब्राह्मणः । नदी[18]-रस्मान् । आह्वयति[19] ।

रमध्वं मे वचसे सोम्याय ऋतावरीरुप मुहूर्तमेवैः ।
प्र सिन्धुमच्छा बृहती मनीषावस्युरह्वे कुशिकस्य सूनुः ॥ ५ ॥

रमध्वम्[20] । यज्ञार्थ[21]मसौ गच्छति, तदर्थं[22] च नदीरनुधावति, यास्कः—

---

१. Omitted in P.
२. एवं स्तुते नद्यौ विश्वामित्रं प्रत्यूचतुः Sy.
३. एनेन । एना—एतच्छब्दस्य तृतीयाया एनादेशः । 'सुपां सुलुक्—' इति तृतीयाया आजादेशः । 'ऊडिदम्—' इति विभक्तेरुदात्तत्वम् Sy.
४. उकन P. पयसा Sy.
५. रक्षन्त्यः P. सन्तर्पयन्त्यः । पिन्वमानाः —'पिवि सेचने' Sy.
६. देवेनेन्द्रेण कृतं सन्दिष्टम् । देवकृतम्— 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरः Sy. ७. लक्षीकृत्य Sy.
८. सञ्च० M. गच्छन्त्यः Sy.
९. देवाम P. आस्महे—द्वयोर्बहुवचनं पूजार्थम् Sy.
१०. निवर्तनाय भवति। वर्तवे—'वृतु वर्तने' तुमर्थे तवेन्प्रत्ययः । नित्स्वरः Sy.
११. उद्योगः Sy.
१२. तासामस्माकं सर्गे गमने प्रवृत्तः । सर्गतक्तः—'क्ते च' इति पूर्वपदप्रकृतिस्वरः Sy. १३. जन् P. नाजमन् M.
१४. ०प्रसक्तः P.
१५. तन् P. RV. 1. 65. 3.
१६. किमिच्छन् is suggested for किमिच्छिन् ॥ किंयुः—किमिच्छन् । 'क्यचि मान्ताव्ययप्रतिषेधः' (Pa. 3. 1. 8.1.) इति छान्दसत्वादत्र प्रतिषेधो न भवतीति क्यच् । 'क्याच्छन्दसि' इत्युप्रत्ययः । प्रत्ययस्वरः Sy.
१७. असौ Sy.
१८. नद्यः—छान्दसो यणादेशः Sy.
१९. ०यन्ति M. and P. भृशमाह्वयति । जोहवीति—ह्वेञः यङ्लुकि 'अभ्यस्तस्य च' इति सम्प्रसारणे कृते 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणः । 'यङो वा' इतीडागमः । गुणः । निघातः Sy.
२०. रमर्थम् P. विश्वामित्रो नदीः प्रति ब्रूते Sy. विश्वामित्रस्त्रिष्टुभा नदीस्तुष्टाव । अर्थैतद्बहुवदिति बह्वीर्नदीः । 'पूर्णां तितीर्षुः सरितं रमध्वमिति संस्मरेत्' इति । (Ṛgvidh 2.7.) विनियुक्ता DDN.
२१. ०ज्ञार्थ० P. २२. ०दर्थं P.

'उपरमध्वम्[1]। मे[2]। वचसे[3]। सोम्याय सोमसम्पादिने[4]। ऋतावरीर्ऋतवत्यः[5], ऋतमित्युदकनाम[6], प्रत्यृतं[7] भवति। मुहूर्तम्[8]। एवैरयनैरवनैर्वा[9]। मुहूर्तः—मुहुर्ऋतुः[10], ऋतुरर्तेर्गतिकर्मणः[11],

१. ०परंमद्ध P. उपपूर्वो रमिरुपसंहारे वर्तते। क्षणमात्रं शीघ्रगमनादुपरता भवत। रमध्वम्—'रमु उपरमे'। उपपूर्वाद्रमतेः 'विभाषाऽकर्मकात्' (Pa. 1. 3. 85.) इत्यात्मनेपदम् Sy. शीघ्रगमनेभ्यो मुहूर्तमात्रमुपरमध्वम्। क्षणमात्रं शीघ्रगमनादुपरता भवत। उपरमध्वम्—'छन्दसि परोऽपि' (Pa. 1. 4. 81.) इत्युपसर्गसंज्ञा। 'विभाषाऽकर्मकात्' इत्यात्मनेपदम् DDN. उपोपसर्गो रमिणा सम्बध्यते। तत्पूर्वकश्च रमिरुपसंहारे वर्तते। उपरमध्वं महतो वेगादगाधोदकत्वाच्च SKN. उपेत्ययमुपसर्गो मन्त्रस्य मध्यादाकृष्य भाष्यकारेण 'रमध्वम्' इत्यनेन क्रियापदेन योजितः Dur.

२. मे M. विश्वामित्रस्य मम Sy. मम SKN., Dur.

३. तदर्थम् Sy. वचसः SKN.

४. ०संवादि० M. उत्तीर्याहं सोमं सम्पादयामीत्येवं सोमसम्पादिने Sy. सोम्याय—'ऋकार उदये कण्ठ्यावकारम्' (RPR. 2. 32.) इत्यकारः DDN. सोमसम्पादिनोऽर्थाय। उत्तीर्य यजतो मम सोमसम्पदि(नो)वचनं यथा स्यादित्येवमर्थमित्यर्थः SKN. सोमा हि अनेनास्मद्वचसा देवतानामन्नभूता बहवः सम्पादिताः, तान् यूयमस्मै प्रतिविशिष्टाय वचसे सत्यतार्थम्, 'कथं नाम सत्यमिदं स्यात्' इत्येवमर्थमुपरमध्वम्। मन्दवेगा गाधाश्च भवतेत्यभिप्रायः Dur.

५. ०वरी M. and P. ऋतमुदकं तद्वत्यो हे नद्यः! यूयम्। ऋतावरीः—ऋतशब्दान्मत्वर्थे 'छन्दसीवनिपौ' इति वनिप्। 'वनो र च' इति ङीप्, रेफश्चान्तादेशः। 'वा छन्दसि' इति सवर्णदीर्घः। आमन्त्रितस्य पादादित्वात् षाष्ठिकमाद्युदात्तत्वम् Sy. ऋतावरीः 'सुम्नतीरातीत्युदये वकारे' (RPR. 9. 11.) इति दीर्घः DDN.

६. आमन्त्रितविभक्तेः स्थाने द्वितीया। ऋतमुदकं तेन तद्वत्यः। भूम्नि मतुप्। हे बहूदकाः! इत्यर्थः SKN. उदकवत्यः Dur. ७. Ngh. I. 12.

८. प्रत्युतं M. प्रत्यु P.

९. मुहूर्तमात्रम् Sy. कियन्तं कालम्? मुहूर्तम् SKN. कियन्तं पुनः कालमुपरमध्वम्? मुहूर्तम्। न च नित्यमेव मन्दवेगतां गाधोदकतां वा प्रार्थये। किं तर्हि? यावदुत्तरेयमहं तावदेवेत्यभिप्रायः Dur.

१०. एवमं P.
पञ्चम्यर्थे तृतीया। शीघ्रगमनेभ्यः। एवैः—'इण् गतौ'। 'इण्शीङ्भ्यां वन्'। आर्धधातुकलक्षणो गुणः। नित्स्वरः Sy.

११. षय P. अवतेर्गत्यर्थस्य रक्षणार्थस्य वेदं रूपम्। एवैर्मदीयगमनै रक्षणैर्वा निमित्तभूतैः, मम गमनार्थं वेत्यर्थः SKN. एभिरुदकैरतिप्रवृद्धैरुपरमध्वम्। अवनैर्वा कामैरेतैरस्मत्प्रार्थनाविशेषैरुत्तरेम गृहान् गच्छेम। वित्तं प्रापयेमेत्येवमादिभिर्निमित्तैः प्रार्थ्यमाना अस्माभिरुपरमध्वम्। अथवा—अयनैश्चित्रैर्गमनैर्वेगवद्भिर्यैर्यूयमभिप्रवृत्तास्तैरुपरमध्वं मुहूर्तम् Dur.

१२. ०वनैवा M.

१३. ०र्ऋतुम् M. and P.

१४. P. omits ऋतुः।

१५. गच्छति M.

मुहुर्मूळ्ह इव कालो यावदभीक्ष्णं चेति । प्राभिह्वयामि । सिन्धुम् । बृहत्या महत्या । मनीषया मनस इष्टया स्तुत्या प्रज्ञया वा । अवनाय । कुशिकस्य । सूनुः' इति ।

---

१. ०र्मूह्ळह् M. मूहळ्ह P.

२. M. reads काल इत्युक्षाह् P. reads काल इत्यूक्षाह् for कालो यावदभीक्ष्णं चेति ॥ Yāska here adds etymologies of अभीक्ष्णम्, क्षण and काल as well, which have been wisely omitted in the extract by VM. N. reads here:—अभीक्ष्णमभिक्षणं भवति । क्षणः क्षणोतेः, प्रक्ष्णुतः कालः । कालः कालयतेर्गतिकर्मणः ।

३. प्रभि० P. अह्वे—ह्वयतेर्लुङि सिचः 'आत्मनेपदेष्वन्यतरस्याम्' इत्यङादेशः । गुणः । निघातः Sy. आभिमुख्येन प्रकर्षेणाह्वयामि DDN. सामान्येन नदीषूच्यमानासु समीहितं प्रयोजनमकुर्वतीषु प्राधान्याद् विशेषेण सिन्धुमाह—प्राह्वे, अच्छ अभेः स्थाने । 'अह्वे' इत्येतत्पदमाकृष्य 'प्र अभिह्वयामि' इत्येवं योजितं भाष्यकारेण Dur.

४. शुतुद्रीं त्वाम् Sy. किं प्राभिह्वयामि ? सिन्धुम् Dur.

५. बृहती—तृतीयायाः पूर्वसवर्णदीर्घः Sy.

६. मनीषा—तृतीयायाः पूर्वसवर्णदीर्घः Sy.

७. The extant text of N. reads ईषया for इष्टया ॥ मनस ईश्वरस्तुतिः, प्रज्ञा वा । ततस्तृतीयायाः पूर्वसवर्णः । बृहत्या मनीषया मनस ईषया मनःपूर्विकया महत्या स्तुत्या वा SKN. मनःपूर्विकया स्तुत्येत्यर्थः Dur. मनीषा—'वस्यूरणया इह' (RPR. 2. 74.) इति । श्रद्धादेः प्रकृतिभावो न । 'श्रद्धा सम्राज्ञी' (RPR. 2. 59.) इत्यस्यापवादः DDN.

८. Omitted in P.

९. पाळना० P. आत्मनो रक्षणमिच्छन् सन् । अवस्युः—अवो रक्षणमिच्छन् 'सुप आत्मनः क्यच्' (Pa. 3. 1. 8.)। 'नः क्ये' इति नकारान्तस्य पदसंज्ञाया नियमितत्वादत्र सकारस्य रुत्वं भवति । 'क्याच्छन्दसि' (Pa. 3. 2. 70.) इत्युप्रत्ययः Sy., DDN. अवः पालनं, तदात्मन इच्छतीति क्यच् । 'क्याच्छन्दसि' इति उः । पालनकामः SKN. कमर्थमिच्छन् प्राभिह्वयामि ? अवनमिच्छन् गमनमित्यर्थः Dur.

१०. सामान्येन नदीषूच्यमानासु समीहितं प्रयोजनमकुर्वतीषु पुरोवर्तिनीं शुतुद्रीं प्रति ब्रूते—कुशिकस्य राजर्षेः Sy. कुशिकस्य राजर्षेः सूनुर्विश्वामित्रोऽहम् DDN. N. adds here:—'कुशिको राजा बभूव । क्रोशतेः शब्दकर्मणः । क्रंशतेर्वा स्यात् प्रकाशयतिकर्मणः । साधु विक्रोशयितार्थानामिति वा' ॥

११. सूः P. विश्वामित्रोऽहम् Sy. पितुरपि गौरवान्मम गौरवमेताः कुर्युरिति समस्तार्थः Dur.

N. 2. 25.; SKN. II. 111.

इन्द्रो॑ अ॒स्माँ अ॑रद॒द्वज्र॑बाहु॒रपा॑ह॒न्वृ॒त्रं प॑रि॒धिं न॒दीना॑म् ।
दे॒वो॑ऽनयत्सवि॒ता सु॑पा॒णिस्तस्य॑ व॒यं प्र॑स॒वे या॑म उ॒र्वीः ॥ ६ ॥

इन्द्रो[1] अस्मां[2] । 'नद्यः प्रत्यूचुः[3] ... इन्द्रः[4] । अस्मान्[5] । अरदत्[6] । वज्रबाहुः[7], रदतिः[8] खनति-कर्मा[9]' । अपहृतवान्[10] । वृत्रासुरम्[11] । परिधानम्[12] । नदीनाम्[13] । अथास्मान्[14] देवः[15] । अनयत्[16] ।

---

१. इन्द्रः P.

२. अस्मा M.

३. Omitted in P. N. II. 25.

४. इन्द्रो P. हे विश्वामित्र ! Sy.

५. नस्मान् P.

६. अवत् P. अखनत् । कथमखनत् ? उच्यते । अरदत्—रदतेर्लङि रूपम् Sy. अखनत् SKN. अखनदित्यर्थः Dur.

७. ०बाहो P. वज्रयुक्तो बाहुर्यस्यासौ वज्रबाहुः । तादृशो बलवान् । वज्र-बाहुः—बहुव्रीहौ पूर्वपदस्वरः Sy. बाहु-नाऽत्र हस्तो लक्ष्यते । वज्रहस्तः SKN. वज्रयुक्तो बाहुर्यस्यासौ, बाहुनाऽत्र हस्तो लक्ष्यते वज्रहस्त इत्यर्थः Dur.

८. ०दति P. Cf. 'रद विलेखने and विलेखनं भेदनम् Bhaṭṭoji

९. N. 2. 26.

१०. वाहृ० M. अपहृत० is suggested for अपहृत० ॥ जघान । तस्मिन्हत आपः पतिताः । ताभिर्गच्छन्तीभिर्वयं खाताः । एवं मेघहननद्वारेणाखनत् । न केवलमखनत् किन्तर्हि ? अहन्—हन्तेर्लङि रूपम् । निघातः Sy. कथमखनत् ? उच्यते... हतवान् SKN. कथं पुन-रखनत् ? ... अपघ्नन् Dur.

११. वृणोत्याकाशमिति वृत्रो मेघः । तं मेघम् Sy. मेघम् SKN., Dur.

१२. परितो निहितमुदकमन्तः कृत्वा परितो वर्तमानमित्यर्थः । परिधिम्—'डुधाञ् धारणपोषणयोः' इत्यस्मात् कर्मणि 'उपसर्गे घोः किः' इति किप्रत्ययः । आतो लोपः । कृदुत्तरपदस्वरः Sy. सर्वतो नि-हितम् SKN. परिधारयितारम् Dur.

१३. शब्दकारिणीनामपाम् Sy. शब्दकारिणी-नामपाम् । तस्मिन्हते, आपः पतिताः, ताभिर्गच्छन्तीभिर्वयं खाताः । एवं मेघहननद्वारेणास्मानखनत् SKN. नदनानामपाम् । स हि निपतन्तीरपो निरुणद्धि, तमिन्द्रो वज्रेण हन्ति । तस्मिन् हते पृथिवीं प्राप्यापो यथा निम्नानुसारिण्यः खातानि कुर्वत्यो वहन्ति तैः खातैर्वयं गच्छामः । एवं कृत्वाऽस्मानिन्द्रोऽरदत् Dur.

१४. अथ स्म P.

१५. द्योतमान इन्द्रः Sy. एवं च कृत्वा स एव चेन्द्रो देवः Dur.

१६. मेघभेदनं कृत्वोदकप्रेरणेन समुद्रमपूर-यत् । अनयत्—नयतेर्लङि रूपम् Sy. नचाखनदेव केवलम् । किं तर्हि ? ... मेघहननद्वारेणानयदपि SKN. वर्ष-द्वारेणास्माननयत् समुद्रम् Dur.

सविता । कल्याणपाणिः । तस्य । वयम् । सवितुः प्रसवे । यामः । आच्छादयित्र्यौ महत्यो वेति ।

---

१. ०वित P.
सर्वस्य जगतः प्रेरकः Sy.
सर्वस्याभ्यनुज्ञाता SKN.
सर्वार्थप्रसविता Dur.

२. ०णवाणिः P. शोभनहस्तः । उत्पत्तिस्थितिकर्तृत्वात् । सुपाणिः—'पण व्यवहारे स्तुतौ च' । 'अशिपणाय्यो रुडायलुकौ च' (Uṇādi 4. 572) इतीण् । आयलुक् । बहुव्रीहौ 'नञ्सुभ्याम्' इति स्वरः Sy.
सुहस्तः SKN.
प्रशस्तपाणिरित्यर्थः Dur.

३. तादृशसामर्थ्योपेतस्येन्द्रस्य Sy. यत एवमस्माकं खनिता समुद्रं नेता च, अत उत्पत्तेः स्थितेश्च कर्तृत्वात् तस्य SKN.
यत एव सोऽस्माकं खनिता नेता च, अतस्तस्येन्द्रस्य Dur.

४. वर्तमाना वयम् Dur.

५. अभ्यनुज्ञायां वर्तमानाः । प्रसवे—'षू प्रेरणे' । 'ऋदोरप्' इति भावेऽप्प्रत्ययः । 'थाथघञ्क्ता–' इत्युत्तरपदान्तोदात्तत्वम् Sy. अभ्यनुज्ञायां वर्तमाना इति शेषः । तेनानुज्ञाता इत्यर्थः SKN. अनुज्ञायामादेशे Dur.

६. याम् M. and P. गच्छामः । न तव वचनादुपरमामहे । यामः—'या प्रापणे' इत्यस्य लटि रूपम् । निघातः Sy.
गच्छामः SKN., Dur.

७. ०यित्र्यौ M. and P. The interpretation is in keeping with Yāska (N. 2. 26). उदकैः प्रभूताः Sy.
उर्व्यौ विस्तीर्णाः । न तव वचनादुपरमामहे । उर्व्यौ विभक्तिविपरिणामात् SKN. ऊर्णुवत्यः सम्भजमाना वा तानि तानि देशान्तराण्यम्भोभिः । सोऽस्माकमीश्वरः । स एवास्मानाज्ञापयितुमर्हति न त्वमित्यभिप्रायः । इति समस्तार्थः Dur.

८. ०हत्यौ M. and P. This interpretation is possible if उर्वी is construed as a feminine of 'उरु' ॥ उर्वीः—उरुशब्दाद् 'वोतो गुणवचनात्' इति ङीष् । 'वा छन्दसि' इति सवर्णदीर्घः । प्रत्ययस्वरः Sy.

९. 'इन्द्रोऽस्मानरदद्वज्रबाहुः । रदतिः खनतिकर्मा । 'अपाहन्वृत्रं परिधिं नदीनाम्'– इति व्याख्यातम् । देवोऽनयत्सविता सुपाणिः कल्याणपाणिः । पाणिः—पणायतेः पूजाकर्मणः । प्रगृह्य पाणी देवान् पूजयन्ति । तस्य वयं प्रसवे याम उर्वीरुर्व्यं ऊर्णोतिर्वृणोतेरित्यौर्णवाभः' N. 2. 26.; SKN. II. 113.

प्रवाच्यं॑ शश्वधा वी॒र्यं१॒॑ तदिन्द्र॑स्य॒ कर्म॒ यदहिं॑ विवृ॒श्चत् ।
वि वज्रे॑ण परि॒षदो॑ जघा॒नायु॒न्नापोऽय॑नमि॒च्छमा॑नाः ॥ ७ ॥

प्रवाच्यम् । ऋषिवचनम्[१][२], छान्दसो घाप्रत्ययः[३], प्रकर्षेण वाच्यम्[४] । सर्वथा[५] । वीर्यम्[६] । तत्[७] । किं तत् ? इत्याह—इन्द्रस्य । कर्म[८] । यत् । अहिम्[९] । विवृश्चत्[१०] । विजघान[११] च । वज्रेण । परितः[१२] सीदतोऽनुचरानहेः । अयागच्छन्[१३] । आपः । स्थानम्=समुद्रम् । इच्छमानाः[१४] ।

ए॒तद्वचो॑ जरित॒र्मापि॑ मृष्ठा॒ आ यत्ते॒ घोषा॒नुत्त॑रा यु॒गानि॑ ।
उ॒क्थेषु॑ कारो॒ प्रति॑ नो जुषस्व॒ मा नो॒ नि कः॑ पुरुष॒त्रा नम॑स्ते ॥ ८ ॥

एतद्वचः[१५] । संवादात्मकमेतत्[१६] । वचः । हे स्तोतः[१७] ! मा । अपिमृष्ठाः[१८], अपिमार्जनं[१९]

---

१. ऋषीव० M.　२. ०वनम् P.

३. 'छान्दसो घाप्रत्ययः' refers to शश्वधा, paraphrased by सर्वथा। It should therefore immediately follow सर्वथा।

४. प्रकर्षेण वचनीयम् । प्रवाच्यम्—'वच परिभाषणे' इत्यस्मात् 'ऋहलोर्ण्यत्' इति ण्यत् । णित्वादुपधावृद्धिः । 'वचोऽशब्दसंज्ञायाम्' (Pa. 7. 3. 67.) इति कुत्वाभावः । व्यत्ययेनाद्युदात्तत्वम् । यद्वा वाचयतेः 'अचो यत्' । 'यतोऽनावः' इति स्वरः Sy.

५. सर्वां M. सर्वदा । शश्वधा—शश्वच्छब्दात्स्वार्थे धाप्रत्ययस्तकारलोपश्च द्रष्टव्यः Sy.　६. सामर्थ्यम् Sy.

७. त P.　८. छेदनरूपम् Sy.

९. योऽयमिन्द्रो मेघम् Sy.

१०. ०वृञ्चत् M. ०वृश्च P. उदकप्रेरणार्थं जघानेति । विवृश्चत्—'ओव्रश्चू छेदने' तुदादिः । लङि 'ग्रहिज्यावयि—' इत्यादिना सम्प्रसारणम् । 'सह सुपा' इत्यत्र सहेति योगविभागात्समासः । समासस्वरः Sy.

११. जघान—हन्तेर्लिटि णलि रूपम् । निघातः Sy.

१२. तथा स इन्द्रः, आसीनान् प्रतिबन्धकारिणोऽसुरान् । परिषदः—क्विप् । संहितायां 'सविरप्रतेः' इति षत्वम् Sy.

१३. यान्ति । आयन्—'अय ? (इण्) गतौ' इत्यस्य लङि रूपम् । पादादित्वादनिघातः Sy.

१४. ०मानाम् M. इच्छन्त्यः । इच्छमानाः—'इषु इच्छायाम्' इत्यस्मात् व्यत्ययेन शानच् । तस्य लसार्वधातुकस्वरे कृते प्रत्ययस्वरः Sy.

१५. ०तद्वाचः P.

१६. संवानात्म० P. नद्यः प्रसङ्गादिन्द्रस्तोत्रं कृत्वा विश्वामित्रं प्रत्यूचुः Sy.

१७. हे विश्वामित्र ! Sy.

१८. अवीमृष्ठाः M. (अ) विमृष्ठाः P. मा विस्मार्षीः । किङ्कारणम् ? मृष्ठाः—'मृजूष् शुद्धौ' इत्यस्य लङि व्यत्ययेनात्मनेपदम् । अदादित्वाच्छपो लुक् । 'व्रश्च—' आदिना षत्वम् । निघातः Sy.

१९. अविमार्जन P.

निराकरणम्। आघोपयन्ति[1]। यत्[2]। त्वदीयमिदं वचो मनुष्याः। उत्तराण्यपि[3]। युगानि[4]=आगच्छति काल इत्यर्थः[5]। तथापि[6] स्मरणादस्मानपि। उक्थेषु। कारो[7]! प्रतिजुषस्व[8]=प्रतिसेवस्व, भाजयेत्यर्थः[5]। मा। नः[9]। निकार्षीः[10] स्तुत्या[11] कुरु। पुरुषेषु[12]। नमः। तं[13] इति।

**ओ षु स्वसारः कारवे शृणोत ययौ वो दूरादनसा रथेन।**
**नि षू नमध्वं भवता सुपारा अधोअक्षाः सिन्धवः स्रोत्याभिः ॥ ९ ॥**

ओ षु स्वसारः[14]। अपेक्षितमधुना विश्वामित्रो वदति[15],—हे भगिन्यः! अस्मदीयं[16] वचनम्। सुष्ठु[17]। आ शृणुत[18]। यातवानहम्[19]। युष्मान्[20]। दूरात्[21]। अनोभिश्च[22]। रथैश्च[23]। आगतं

---

१. अभीत्या उद्घोषयन् वर्तसे। घोषान्—'घुषिर् संशब्दने' इत्यस्य शतरि सर्वविधीनां छन्दसि विकल्पितत्वात् 'अतो गुणे' इति पररूपत्वाभावः। सवर्णदीर्घः। शतुर्लसार्वधातुकस्वरे कृते धातुस्वरः Sy. २. य P.
३. उत्तरेषु Sy.
४. याज्ञिकेषु युगेष्वहःसु। युगानि—'युजिर् योगे'। उञ्छादिषु घञन्तत्वेन निपातनादगुणत्वम्। विशिष्टविषयञ्च निपातनमिष्यते। 'कालविशेषे रथाद्युपकरणे च' इति तत्र पाठादेवान्तोदात्तत्वम्। 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया Sy. ५. त्यर्थः P.
६. ०थावि P.
७. शस्त्राणां कर्तः! त्वम्। कारो—करोतेः 'कृवापाजिमि—'इत्यादिना उण् प्रत्ययः। आमन्त्रितत्वान्निघातः Sy.
८. संवादात्मकेन तेन वाक्येन प्रतिसेवस्व Sy.
९. अस्मान् Sy. १०. उक्तिप्रत्युक्तिरूपसंवादवाक्याध्यापनेन नितरां पुंवत् प्रागल्भ्यं मा कार्षीः। कः—करोतेर्लुङि च्लेः 'मन्त्रे घसह्वर—' इत्यादिना लुक्, हल्ङ्याबिना सिचो लोपः। 'न माङ्योगे' इत्यडभावः Sy.
११. ०त्याः M. and P.
१२. पुरुषत्रा — 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' इति सप्तम्यर्थे त्राप्रत्ययः। प्रत्ययस्वरः Sy.
१३. तुभ्यम् Sy.
१४. Omitted in P.
१५. नदीः प्रत्युवाच Sy.
१६. स्तोत्रं कुर्वाणस्य मम वचनम् Sy. स्तोत्रे SKN.
१७. ओ सु इति पदपूरणौ SKN.
१८. ओ शृणोत=शृणुतैव। शृणोत—'श्रु श्रवणे' इत्यस्य लोटि तप्रत्ययस्य 'तप्तनप्तनथनाश्च' इति तबादेशः। पित्त्वादगुणः। निघातः Sy. शृणुत SKN.
१९. यत० P. प्राप्तोऽस्मि। ययौ—'या प्रापणे' इत्यस्य भूतमात्रे लिटघुत्तमे णलि 'आत औ णलः' इत्यौकारः। एकादेशस्वरः Sy.
२०. वः—युष्मच्छब्दस्य द्वितीयायाः 'बहुवचनस्य वस्नसौ' इति वसादेशः Sy.
२१. विप्रकृष्टाद्देशात् Sy. विप्रकृष्टात् SKN.
२२. अन्नोभि० P. शकटेन Sy.; SKN.
२३. रथेन च सह Sy. रथेन चात्मना SKN.

मां दृष्ट्वा सुष्ठु[1] । निनमध्वम्[2]=स्वल्पा भवत । भवत । मम[3] सुखेन पारयितव्याः[4] । तदर्थं[5] गमनानुगुणं हे सिन्धवः[6] ! स्रोतोभिः[7] । अक्षस्याधोभूता[8] भवतेति[9] ।[10]

आ तै कारो शृणवामा वचांसि ययाथ दूरादनसा रथेन ।
नि तै नंसै पीप्यानेव योषा मर्यायेव कन्या शश्वचै तै ॥ १० ॥

आ[11] ते[12] कारः । यास्क आह—'आशृणवाम[13] । ते[14] । कारो[15] !

१. सू—'निपातस्य' इति संहितायां दीर्घः Sy. सुः पादपूरणः SKN.

२. नमध्वम्–'णमु प्रह्वत्वे शब्दे च' इत्यस्य कर्मकर्तरि 'न दुहस्नुनमां यक्चिणौ' इति प्रतिषेधाद् यगभावः । आत्मना स्वयं प्रह्वा भवत Sy. ३. म M.

४. वार० M. शोभनपाराः SKN.

५. ०वर्त्यं P.

६. हे नद्यः ! सिन्धवः—आमन्त्रितत्वान्नि-घातः Sy. हे सिन्धवो नद्यः ! SKN.

७. स्रवणशीलाभिरद्भिः । स्रोतश्शब्दात्—'स्रोतसो विभाषाड्यड्ड्यौ' (Pa. 4. 4. 113.) इति ड्यप्रत्ययः । डित्वाट्टिलोपः । प्रत्ययस्वरः Sy.

८. रथाङ्गस्याक्षस्याधस्ताद्भवत । यदापो-ऽक्षस्याधस्ताद्भवन्ति तदा रथादीनि नेतुं शक्यन्ते । तस्मात्तत्परिमाणोदका भव-तेत्यर्थाभिप्रायः । अधोअक्षाः—अधर-शब्दस्य 'पूर्वाधरावराणामसि पुरधव-श्चैषाम्' इत्यसिप्रत्ययोऽधादेशश्च । अक्ष-शब्दः 'अशू व्याप्तौ' इत्यस्मात् 'अशेर्दे-वने' (Uṇādi 3. 345.) इति सप्रत्य-यान्तः । कृदुत्तरपदप्रकृतिस्वरः Sy.

९. सूक्तस्यान्तत आशुश्रुवुः । तथेति प्रति-ज्ञातवत्यः SKN.

N. 2. 26.; SKN. 2. 114.

१०. Both PP. and S. take ओ as a प्रगृह्य; VM. on the other hand seems to construe it as a compound of आ and उ. He explains आ and ignores उ.

११. Omitted in P. कारो is suggested for कारः ॥ नद्यो विश्वामित्रं प्रत्यब्रुवंस्त्रिष्टुभा । तत आशुश्रुवुः DDN.

१२. नद्यः पूर्वं विश्वामित्रं प्रत्याख्यायानयर्चा तस्य वाक्यमाशुश्रुवुः Sy. एवं तमृषि तत्सूक्तस्य . . . अन्तेऽनयर्चा . . . ता नद्यः श्रुतवत्य इत्यर्थः । . . . तदा च श्रुतं भवति यदा तद्वचः क्रियते, श्रूयमाणमपि हि तत्रैव श्रुतं भवति यत्र क्रियते Dur.

१३. ०शृणुवा० P. शृणुमः । तव समीहितं प्रयोजनं कुर्म इत्यर्थः । शृणवाम—'श्रु श्रवणे' इत्यस्य लोटि, 'आडुत्तमस्य पिच्च' इत्याडागमः । पित्त्वाद्गुणः । निघातः Sy. कात्स्न्येन शृणुमः । 'श्रु श्रवणे' । लोटि 'आडुत्तमस्य पिच्च' (Pa. 3. 4. 92.) इत्याडागमः । पित्त्वाद् गुणः । तिङ्त्वान्निघातः (Pa. 8. 1. 28.) । तव समीहितं प्रयोजनं कुर्म इत्यर्थः DDN. आभिमुख्येन शृणुमः कुर्म इत्यर्थः SKN. आभिमुख्येनावस्थिताः सत्यः शृणवाम Dur. १४. तव Sy. तावकानि Dur.

१५. स्तोत्रं कुर्वाण ! हे विश्वामित्र ! कारो—'सम्बुद्धौ शाकल्यस्येता—' (Pa. 1. 1. 16.) इति प्रगृह्यसंज्ञा Sy. स्तुति-कर्तः ! विश्वामित्र ! इति कारुत्वं नदीभिरुक्तम् । DDN. हे कारो ! स्तोतः ! SKN. स्तोमानां कर्तः Dur.

वचनानि। याहि। दूरात्। अनसा च। रथेन च। निनमाम। ते। पाययमानेव। योषा

१. इमानि वाक्यानि Sy. किमाशृणवाम ? ...वचनानि श्रुतानि चैतानि Dur.

२. यत आगतोऽसि। ययाथ—'या प्रापणे' इत्यस्य भूतमात्रे लिटि थलि 'एकाच उपदेशेऽनुदात्तात्' इतीट्प्रतिषेधः। लित्स्वरः Sy. अतो ब्रूमः...याहि त्वम् Dur.

३. दूरत आगतोऽसि, इतो दूरं वा यावद् गृहमित्यर्थः। यद्वा दूरं निनमतेति सम्बन्धात् सुनमध्वम्। कुत एतत् ? पूर्वस्यामृचि "नि षू नमध्वं भवता सुपारा अधोअक्षाः" (RV. III. 33. 9.) इति तद्विशेषणश्रुतेः SKN. कस्मात् पुनरेवमादरवत्यो ब्रूमो याहीति ? इतो यस्माद् दूरादायातस्त्वं परिश्रान्तः। तस्मात्कारुण्यं नस्त्वयि Dur.

४. शकटेन। अनसा—सहार्थे तृतीया Sy. शकटेन रथेन च सह DDN. अवियुक्तेनैवानसा शकटेन लब्धस्य घनस्य SKN. शकटेन च सह Dur.

५. रथेन च यानेनात्मनः SKN.

६. ०माव P. नीचैर्नमाम। प्रत्येकविवक्षयात्रैकवचनम्। रथेन गन्तुं गाधोदका भवाम इत्यर्थः। नंसै—'णमु प्रह्वत्वे' इत्यस्य लेट्युत्तमे 'सिब्बहुलं लेटि' इति सिप्। 'वैतोऽन्यत्र' इत्यैकारादेशः। निघातः Sy. यतस्त्वं दूरादागतोऽसि वयं च ते त्वदर्थं नीचैर्नमाम। 'णमु प्रह्वत्वे शब्दे च'। प्रत्येकत्वविवक्षयैकवचनम्। रथेन गन्तुं गाधोदका भवामेत्यर्थः। तत्र दृष्टान्तः DDN. नमेरिदं लोटि रूपम्। लोटि नास्ति सिः। बाहुलकत्वादतो भाष्यकार आह 'निनमाम' इति। एकवचनञ्चात्र बहुवचनस्य स्थाने SKN. तेन वयमेताः ...नीचैर्नमाम गाधोदका भवामेत्यर्थः Dur.

७. त्वदर्थम् Sy. तवार्थाय नीचैर्नमाम। अवियुक्तेन वाऽनसा यातुं प्रह्वीभवाम, मन्दवेगा गाधोदकाश्च भवामेत्यर्थः SKN.

८. ०नेव P. तत्र दृष्टान्तः। पाययन्ती। पीप्यानेव—'पीङ् पाने' इत्यस्यान्तर्भावितण्यर्थस्य लिटि कानचि रूपम्। चित्स्वरः Sy. पीप्यानेव योषा॥ 'पीङ् पाने'। पुत्रं स्तनं पाययन्ती माता यथा प्रह्वीभवति तद्वत्। 'वृषादीनाञ्च' (Pa. 6.1.203.) इति योषाद्युदात्तः DDN. यथा स्तनं पाययन्ती SKN. कथं पुनर्निनमाम ? . . . पाययमानेव Dur.

९. पुत्रं स्तनं पाययन्ती माता यथा प्रह्वीभवति। योषा—'यु मिश्रणे' 'वृतृवदिहनि—' (Uṇādi 3. 342.) इत्यादिना सप्रत्ययः। यौतीति योषा। वृषादित्वादाद्युदात्तः Sy. स्त्री पुत्रं तस्यार्थाय प्रह्वीभवति SKN. यथा निनमेदेवं वयं तव निनमाम Dur.

पुत्रम् । मर्यायेव[1] । कन्या[2] । परिष्वजनाय[3] इति । कन्या युवतिर्मैथुनाय[4] निनमति[5], पुत्राय माता स्तनं प्रदातुमिति[6] ।

**यदङ्ग त्वा भरताः संतरेयुर्गव्यन्ग्राम इषित इन्द्रजूतः ।**
**अर्षादह प्रसवः सर्गतक्त आ वो वृणे सुमतिं यज्ञियानाम् ॥ ११ ॥**

यदङ्ग[7] त्वा[8] । यदा[9] क्षिप्रम्[10] । भरतकुलजाता[11] विश्वामित्रस्तत्सहायाश्च । हे[12] नदि !

---

१. वृष्टान्तान्तरम् । मनुष्याय पित्रे भ्रात्रे वा Sy. यथा वा. . .मनुष्यस्य पितुर्वाऽर्थाय SKN. एवमुक्त्वा पुत्रोपमया कदाचिदयं क्रोधमियादिति मन्वानाः सत्यः पतिकन्यासम्बद्धामन्यामुपमामुपाददिरे. . .मनुष्याय Dur.

२. यथा युवतिः. . .नम्रा भवति तद्वत् Sy. कुमारी कन्या SKN. नवोढा Dur.

३. ०रिष्वज्जानय P. N. adds निनमा इति वा after परिष्वजनाय (2. 27.) शश्वचै—'ष्वञ्ज परिष्वङ्गे' इत्यस्मात्सम्पदादिलक्षणो भावे क्विप्, पृषोदरादित्वादिष्टरूपसिद्धिरन्तोदात्तश्च Sy. स्वजेरेतद्रूपम् । परिष्वजनार्थं प्रह्वीभवेत् । तथा वयमपीति ते तवार्थायेत्युक्तार्थम् SKN. कथं नाम 'परिष्वजेत मामयम्' इत्यभिप्रायेण यथा सा निनमेदेवं वयं तव निनमाम ।. . . यदि वा निनमामेत्येवं परिणामः 'निनंसै' इत्येतस्य पदस्य । अथवा निनमा इति Dur.

४. ०ति मैं० P. पुनर्वृष्टान्तान्तरम् । यथा युवतिर्मनुष्याय भर्त्रे परिष्वजनाय नम्रीभवति तद्वत् ते त्वदर्थं प्रह्वीभवामः । शश्वचै ष्वञ्ज परिष्वङ्गे । इत्यस्मात् सम्पदादिलक्षणो भावे क्विप् (VPa. 3. 3. 94.) पृषोदरादित्वादिष्टरूपसिद्धिः । शृणवाम—'शृणवामएकादशिद्वादशिनोः—' (RPR. 8. 36.) इत्यष्टमत्वाद्दीर्घः DDN.

५. ०थुनेन P.

६. VM. explains ते twice only ॥ ते इति पुनरुक्तिरादरार्था Sy.

७. Omitted in P.

८. विश्वामित्रो नदीः प्रत्युवाच Sy.

९. यद्यस्मात् युष्माभिरुत्तितीर्षोर्ममोत्तरणमभ्यनुज्ञातं तस्मात् Sy.

१०. क्षिप्र M.

११. कुल० M. भरतकुलजा मदीयाः सर्वे । भरताः—भरतशब्दादुत्सादित्वादञ् । तस्य 'यञञोश्च' इति लुक् । प्रत्ययस्वरः Sy.

१२. ते M. अङ्ग इत्यामन्त्रणे हे नद्यः ! Sy.

त्वा[1] । सन्तरेयुः[2] । इत्येतदेवाह्[3]—गा इच्छन्[4] । भरतानां संघातः[5] । इन्द्रप्रेषितः[6] । इन्द्रेण काम-देनाऽऽकृष्टः[7] । अनन्तरमेव[8] गच्छतु[9] । यथापूर्वम्[10] । प्रसक्तगमनः[11] । तवोदकप्रसवः[12] । अथ[13] बहु-वदाह्[14]—आवृणे[15] । वः[16] । सुमतिमहम्[17] । यज्ञार्हाणामिति[18] ।

**अतारिषुर्भरता गव्यवः समभक्त विप्रः सुमतिं नदीनाम् ।**
**प्र पिन्वध्वमिषयन्तीः सुराधा आ वक्षणाः पृणध्वं यात शीभम् ॥ १२ ॥**

अतारिषुः । समतारिषुः[19] । भरतवंशजाः[20] सर्वे । यज्ञेन गा इच्छन्तः[21] । अथ विश्वामित्रश्च[22] ।

---

१. परस्परमेकतामापन्नां नदीं त्वाम् Sy.

२. न्तेरयुः M. सम्यगुत्तीर्णा भवेयुः । सन्तरेयुः—तरतेर्लिङि जुसि रूपम् । भेर्लसार्वधातुकस्वरे धातुस्वरः । 'तिङि चोदात्तवति' इति गतेर्निघातः Sy.

३. इत्यतवाह् P. तदेव विशिनष्टि Sy.

४. हा P. गा उदकानि तरीतुमिच्छन् । गव्यन्—गा आत्मन इच्छन् । सुपः क्यच् । एकादेशस्वरः Sy.

५. सङ्घः P. सङ्घः । ग्रामः—'ग्रसतेरा च' (Uṇādi 1. 140) इति मन्-प्रत्यय आकारादेशश्च । नित्स्वरः Sy.

६. त्वयाभ्यनुज्ञातः Sy.

७. युष्माकं प्रवर्तकेनेन्द्रेण च प्रेरितः । इन्द्रजूतः—'जू' इति सौत्रो धातुर्गत्यर्थः । 'श्र्युकः किति' इति निष्ठायामिट्प्रति-षेधः । 'तृतीया कर्मणि' इति पूर्वपद-प्रकृतिस्वरः Sy.

८. ०न्तमे P.

९. सन्तरेत् । अर्षात्—'ऋ गतौ' इत्यस्य लेटि तिपि 'सिब्बहुलं लेटि' इति सिप् । 'लेटोऽडाटौ' इत्याडागमः । 'एकाचः' इतीट्प्रतिषेधः । गुणः । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः Sy.

१०. अहं पूर्वं युष्माभिरनुज्ञातः Sy.

११. सक्तं ग० P. गमनाय प्रवृत्तः Sy.

१२. ०दक M. तेषामुद्योगः Sy.

१३. थ बहु० M.

१४. हुपदा० M. Cf. N. 2. 24.

१५. सर्वतः सम्भजे । वृणे—'वृङ् सम्भक्तौ' इत्यस्य लटि रूपम् Sy.

१६. पः P. युष्माकम् Sy.

१७. शोभनां स्तुतिम् Sy.

१८. यज्ञियानाम्='यज्ञर्त्विग्भ्यां घखञौ' इति घप्रत्ययः । प्रत्ययस्वरः Sy.

१९. ०रिष्म M. तां नदीं समतरन् । अता-रिषुः—'तॄ प्लवनतरणयोः' इत्यस्य लुङि 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धिः । अडागमस्वरः Sy.

२०. ०जाताः P. भरतकुलजाः Sy.

२१. गा आत्मन इच्छन्तः । गव्यवः—सुपः क्यच् । 'क्याच्छन्दसि' इत्युप्रत्ययः । तस्य स्वरः Sy.

२२. मेधावी Sy.

नदीनाम् । सुमतिम्[1] । अभक्त[2] । अथ यूयं[3] मनुष्याणामन्नमुत्पादयितुमिच्छन्त्यः[4] । शोभन[5]-घनाः । आपः[6] । प्रपिन्वध्वम्[7]=प्रक्षरत । कूलानि[8] चापूरयत[9] । यथापूर्वं शीभम्[10] । यात[11], इत्युत्तीर्णस्य वचनमिति ।

उद्व ऊर्मिः शम्या हन्त्वापो योक्त्राणि मुञ्चत ।
माद्दुंष्कृतौ व्यैनसाघ्न्यौ शूनमारंताम् ॥ १३ ॥

उद्वः[12] । हे आपः[13] ! युष्माकम् । ऊर्मिः[14] । शकटेषु युक्तानां गवां श्वाः[15] (?)[16] शम्यास्ताः[17][18] । उद्घन्तु[19]=शम्यानां[19] मूलमाहन्तु[19], न तत ऊर्ध्वं गच्छतु । यथा[20] यूयं गवां[21] योक्त्राणि[22] च । विसृजत[23] ।

---

१. शोभनां स्तुतिम् Sy.

२. समभजत । अभक्त—'भज सेवायाम्' इत्यस्य लुङि सिचः 'झलो झलि' इति लोपः । पादादित्वादनिघातः Sy.

३. यूयं तु यथापूर्वम् Sy.

४. कुल्याविद्वाराद्म कुर्वाणाः । इषयन्तीः—इषं कुर्वत्यः 'तत्करोति०' इति णिच्, 'णाविष्ठवत्प्रातिपदिकस्य' इतीष्ठवद्भावात् 'टेः' इति टिलोपः । 'वा छन्दसि' इति सवर्णदीर्घः । प्रत्ययस्वरः Sy.

५. अतएव शोभनधनोपेताः Sy.

६. अपः is suggested for आपः ॥ कृत्रिमसरितः कुल्याः Sy.

७. ०पिबध्वम् M. and P. प्रकर्षेण तर्पयत । पिन्वध्वम्—'पिवि सेचने' इत्यस्य लोटि रूपम् । निघातः Sy.

८. कुला० P.

९. ताः सर्वतः पूरयत च । पृणध्वम्—'पृण प्रीणने' । लोटि रूपम् । व्यत्ययेनात्मनेपदम् । वाक्यभेदादनिघातः Sy.

१०. ०अतरं P. शीभम्—'शीभृ कत्थने' श्लाघ्यतेऽनेन तद्वानिति करणे घञ् । ञित्स्वरः Sy. ११. याचत M. and P. गच्छत । यात—'या प्रापणे' इत्यस्य लोटि रूपम् । अत्रापि न निघातः Sy.

१२. पूर्वमुत्तितीर्षुर्विश्वामित्रो नदीरुक्त्वाऽधुनोत्तीर्णः पुनराह Sy.

१३. अपः P. हे नद्यः ! Sy.

१४. ऊर्मीः M. उर्मिः P. तरङ्गः । ऊर्मिः—'ऋ गतौ' । 'अर्तेरूच्च' इति मिप्रत्ययः, ऊरित्ययमादेशो धातोः । ऋच्छतीत्यूर्मिः । प्रत्ययस्वरः Sy.

१५. Omitted in P.

१६. Omitted in P.

१७. युगकीला युग्यकण्ठपार्श्वादिसंलग्ना रज्जवः । शम्याः—'शमु उपशमे' । 'पोरदुपधात्' इति यत्प्रत्ययः । 'यतोऽनावः' इत्याद्युदात्तत्वम् Sy. १८. ०स्त P.

१९. उच्छन्तु M. ऊर्ध्वं यथा भवन्ति तथा गच्छतु । स तरङ्गो रज्जूनामधो गच्छत्वित्यभिप्रायः । हन्तु—'हन हिंसागत्योः' इत्यस्य लोटि रूपम् । निघातः Sy.

२०. तथा is suggested for यथा.

२१. गवा M.

२२. ता रज्जूः । योक्त्राणि—'युजिर् योगे' । करणे 'दाम्नीशसयुयुज—' इत्यादिना ष्ट्रन्प्रत्ययः । नित्स्वरः Sy.

२३. Omitted in P. यथा न स्पृशन्ति तथा यान्त्वित्यभिप्रायः । मुञ्चत—'मुच्लृ मोक्षणे' । निघातः Sy.

अदुष्टकारिण्यौ[1] । विगतपापे[2] विपाट्छुतुद्र्यौ । अहन्तव्ये[3] । वृद्धिम्[4] । मा । आगच्छतामिति[5] ।

## III.34.

इन्द्रः॑ पू॒र्भिदाति॑र॒द्दास॑म॒र्कैर्वि॒दद्व॑सु॒र्दय॑मानो॒ वि शत्रू॑न् ।
ब्रह्म॑जूतस्त॒न्वा॑ वावृधा॒नो भूरि॑दात्र॒ आपृ॑ण॒द्रोद॑सी उ॒भे ॥ १ ॥

इन्द्रः[6] । इन्द्रः[7] । पुरां[8] भेत्ता । वृत्रमसुरम्[9] । स्तुतिभिः[10] प्रवृद्धः[11] । आजघान[12] । लभ्य-

---

१. अवृष्ट॰ P. अत एव कल्याणकर्मकारिण्यौ । अवुष्कृतौ—'इसुसोः सामर्थ्ये' इति विसर्जनीयस्य षत्वम् Sy.

२. व्येनसा—बहुव्रीहौ पूर्वपदस्वरः । सुपो डादेशः Sy. ३. बहन्तवे P. न केनापि तिरस्करणीये । अघ्न्यौ—'हन हिंसागत्योः' इत्यस्य नञ्पूर्वस्य 'अघ्न्यादयश्च' इति निपातनाद् यक् । किस्त्वावुपधालोपः । 'हो हन्तेः'—इति घत्वम् । सर्वविधीनां छन्दसि विकल्पितत्वादत्र औङः शीभावाभावः । एकादेशस्वरः Sy.

४. समृद्धिम् । शूनम्—श्वयतेः 'नपुंसके भावे क्तः' इति क्तः । यजादित्वात्सम्प्रसारणम् । 'हलः' इति दीर्घत्वम् । 'ओदितश्च' इति निष्ठानत्वम् । 'निष्ठा च द्व्यजनात्' इत्याद्युदात्तः Sy.

५. ॰च्छतमि॰ P. एवं विश्वामित्रो नदीः स्तुत्वा ताभिरनुज्ञातोऽतरदिति । अरताम्—'ऋ गतौ' इत्यस्य लुङि च्लेः 'सर्तिशास्त्यर्तिभ्यश्च' इत्यङादेशः । 'ऋदृशोऽङि गुणः' । 'न माङ्योगे' इत्यडभावः । निघातः Sy. ६. 'इन्द्रः पूर्भित्' इत्येकादशर्चं पञ्चमं सूक्तं वैश्वामित्रं त्रैष्टुभमैन्द्रम् । अत्रानुक्रमणिका—'इन्द्रः पूर्भिदेकादश' (KSA. 18.34. p. 16.) इति । अग्निष्टोमे माध्यन्दिनसवने ब्राह्मणाच्छंसिशस्त्रे 'इन्द्रः पूर्भित्' इति सूक्तम् । 'होत्रकाणाम्' इति खण्डे सूत्रितम्—'इन्द्रः पूर्भिदुदु ब्रह्माणि' (ASS. 5. 16.) इति । पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि माध्यन्दिनसवने ब्राह्मणाच्छंसिशस्त्रे चातुर्विंशिकातिदिष्टस्य अहीनसूक्तस्य स्थाने त्रीणि सम्पातसूक्तानि । तत्रेदं प्रथमम् । 'इन्द्रः पूर्भिद्य एक इद्यस्तिग्मश्शृङ्गः' (ASS. 7. 5.) इति । उद्भिद्वलभिदोर्निष्केवल्ये एतत्सूक्तं निविद्धानीयम् । सूत्रितञ्च—'इन्द्र सोममिन्द्रः पूर्भिदिति मध्यन्दिनः' (ASS. 9. 8.) इति Sy.

७. विश्वामित्रः स्तौति Sy. विश्वामित्रस्य SKN. ८. पुरा P. असुरपुरां भेत्ता । पूर्भित्—'भिदिर् विदारणे' । क्विप् Sy.

९. दस्यतेऽनेन तम इति दासो वासरस्तम् । दासम्—करणे घञ् । ञित्स्वरः Sy. कम् ? दासमुपक्षपयितव्यं मेघम् SKN.

१०. स्तुतिः P. अर्चनीयैः स्वतेजोभिः Sy. कैः? . . . वज्रोऽत्रार्क उच्यते, तैः । पातनसाधनत्वादेव वा मरुतः । वज्रैर्देवैर्वा मरुद्भिः सह SKN. ११. ॰वृद्धं P.

१२. आतिरत् । समन्तादवर्धयत्, इन्द्रस्य सूर्यात्मकत्वात् । तथा च स्मृतिः—'चैत्रमासे तपेदिन्द्रः' इति । अतिरत्—तरतेर्व्यत्ययेन शः । 'ऋत इद्धातोः' इतीत्वम् । निघातः Sy. तरतिर्वधकर्मा, अतिरदिति (Ngh. 2. 19.) वधकर्मसु पाठात् । आभिमुख्येन हन्ति SKN.

मानधनः । विहिंसन् । शत्रुम् । स्तुतिभिराकृष्टः । शरीरेण । वर्धमानः । बहुदानः । द्यावापृथिवी । उभे अपि । तेजसाऽऽपूरयति ।

**मखस्यं ते तविषस्य प्र जूतिमियर्मि वाचममृताय भूषन् ।**
**इन्द्र क्षितीनामसि मानुषीणां विशां दैवीनामुत पूर्वयावा ॥ २ ॥**

मखस्य । मखो मंहतेर्दानकर्मणः, दातुः । प्रवृद्धस्य । तव । आकर्षणसाधनभूताम् ।

---

१. ०मानः P. स्वमहिमप्रख्यापकैर्वसुभिर्युक्तः । विवद्वसुः—विदेरन्तर्भावितण्यर्थस्य शतरि । अदादित्वाच्छपो लुकि सति प्रत्ययस्वरेण शतुरुदात्तत्वम् । बहुव्रीहौ पूर्वपदस्वरः Sy.

२. अपिहिं० M. ०हिंसिसञ्ज P. विशेषेण हिंसन् । तथा च यास्कः—'विवद्वसुर्दयमानो वि शत्रून्' इति हिंसाकर्मा' (N. 4. 17.) इति । दयमानः—'दय दानगतिरक्षणहिंसादानेषु' । आत्मनेपदी । लटः शानच् । 'न लोकाव्ययनिष्ठा—' इति षष्ठीप्रतिषेधः Sy. विविधं हिंसञ्छत्रून् SKN.

३. असुरान् Sy.

४. ०कृष्टं M. ०कृष्टा P. ब्रह्मणा जूतः स्तोत्रेणाकृष्टः । यद्वा ब्रह्मणा जगत्स्रष्ट्रा प्रेरितः Sy.
ब्रह्मणा स्तुत्याख्येन अभिगतः SKN.

५. शरेण P.
स्वशरीरेण Sy.

६. वावृधानः—'वृधु वर्धने' । कानचि रूपम् । संहितायामभ्यासस्य तुजादित्वाद्दीर्घः Sy.

७. Omitted in M. दायते लूयतेऽनेन शत्रुशिर इति दात्रमायुधम् । बहुविधायुधोपेतः । तादृश इन्द्रः । भूरिदात्रः—'दाप् लवने' । करणे 'दाम्नी—' इत्यादिना ष्ट्रन्प्रत्ययः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः Sy.

८. द्यावापृथिव्यौ । रोदसी—रुदेरसुनि रूपम् । नित्स्वरः Sy. द्यावापृथिव्यौ SKN.

९. P. adds च after अपि ।

१०. ०यन्ति P. सर्वतोऽतर्पयत् । अपृणत्—'पृण प्रीणने' इत्यस्य लङि तुदादित्वाच्छः । निघातः Sy. आपृणत्, आभिमुख्येन SKN. N. 4. 17.; SKN. II. 242.

११. महः M. मखस्य—'मह पूजायाम्' 'महेर्हलोपश्च' (Uṇādi. 5. 701.) इति हलोप इत्यनुवृत्तौ 'महेश्च' इति खप्रत्ययो हलोपश्च । मह्यते पूज्यते सर्वैरिति मखः । 'खान्तस्याश्मादेः' इत्यन्तोदात्तत्वम् Sy.

१२. हेते० P. (Ngh. 3. 20.)

१३. महनीयस्य स्तुत्यस्य Sy.

१४. ०वृत्रस्य P. बलवतः । तविषस्य—तवतेः टिषच्प्रत्ययः । चित्स्वरः Sy.

१५. वा M. and P.

१६. मनसा प्रेरिताम् । जूतिम्—'ऊतियूति—' इत्यादिना क्तिन उदात्तत्वम् Sy.

स्तुतिम्[1] । अहं प्रेरयामि[2] । अमृतत्वाय[3] । भवितुमिच्छन्[4] । इन्द्र ! त्वमसि[5] । मानुषीणाम्[6] । प्रजानाम्[7] । अपिच । दैवीनाम्[8] । विशाम्[9] । अग्रे गन्ता[10] ।

इन्द्रो वृत्रमवृणोच्छर्धनीतिः प्र मायिनाममिनाद्वर्पणीतिः ।
अहन्व्यंसमुशधग्वनेष्वाविर्धेना अकृणोद्राम्याणाम् ॥ ३ ॥

इन्द्रो वृत्रम्[11] । इन्द्रः । वृत्रम्[12] । अवृणोत्[13] । उद्युक्तनयनः[14] । तथा मायायुक्तानामसुराणाम्[15] । प्रकर्षेण । कृतवान्[16] हिंसाम्[17] । शत्रूणामावारकनयनः[18] । तथा व्यंसनामासुरम्[19] । अहन्[20] ।

१. वाचं स्तुतिलक्षणाम् Sy.
२. प्रकर्षेणोच्चारयामि । इयर्मि—'अर्तिर्जुहोत्यादिः' । 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्येत्वम् । 'अभ्यासस्य—' इतीयङादेशः । पादादित्वान्न निघातः । अभ्यस्तस्वरः Sy.
३. अन्नार्थम् Sy.
४. भूषन्—त्वामलङ्कुर्वन्नहम् । भूषन्—'भूष अलङ्कारे' इत्यस्य शतरि रूपम् । शतुर्लसार्वधातुकस्वरे धातुस्वरः Sy.
५. असि—अस्तेर्लटि रूपम् । निघातः Sy.
६. मनोर्जातानाम् । मानुषीणाम्—'मनोर्जातौ' इत्यञ् । षुगागमः । 'टिड्ढाणञ्—' इति ङीप् । ञित्स्वरः Sy.
७. मनुष्याणाम् Sy.
८. देवी° P. देवसम्बन्धिनीनाम् । दैवीनाम्—'देवाद्यञञौ' इत्यञ् । अत्रापि पूर्ववन्ङीप् । ञित्स्वरः Sy.
९. प्रजानाम् Sy.
१०. अग्रतो गन्ता त्वम् । पूर्वयावा—'या प्रापणे' इत्यस्मात् 'आतो मनिन्क्वनिब्वनिपश्च' इति वनिप् । कृदुत्तरपदस्वरः Sy.
११. Omitted in P.
१२. असुरम् Sy. वृत्रं दैत्यम् Mah.
१३. बलेनाग्रसत् । अवृणोत्—'वृञ् वरणे' इत्यस्य लङि रूपम् । निघातः Sy. युद्धाय वृणोति स्म Mah. युद्धायावृणोत् U.
१४. नयनं नीतिः कर्म । शर्धं प्रवृद्धं नीतिः कर्म यस्य स तथोक्तः । शर्धनीतिः—शर्धतिरुत्साहार्थः । अस्मात् कर्मणि घञ् । बहुव्रीहौ पूर्वपदस्वरः Sy. शर्ध इति बलनाम (Ngh. 2. 9.) । शर्धे चतुरङ्गे बले नीतिर्यस्य सः Mah., U.
१५. मायिनाम्—द्वितीयार्थे षष्ठी । मायिनोऽसुरान् Sy. मायिनो दैत्यान् Mah. यश्च मायिनां मायाविनाम् U.
१६. अवधीत् । अमिनात्—'मीञ् हिंसायाम्' इत्यस्य लङि 'मीनातेर्निगमे' इति ह्रस्वः । निघातः Sy. १७. हिंसन् P. हिनस्ति । अमिनात्—'मीञ् हिंसायाम्' क्र्यादिः . . . कर्मणि षष्ठी Mah. हिनस्ति U.
१८. °मावर° D. and P. वर्पणीतिः । युद्धे परप्रहाराणां निवारककर्मा इन्द्रः Sy. वर्प इति रूपनाम (Ngh. 3. 7.) । वर्पं नानारूपं नयति प्राप्नोति वर्पणीतिर्नानारूपधारी Mah. रूपसन्नद्धः स्वेच्छारूपविजृम्भकः U.
१९. व्यं सन्ना° M. व्यंसन्ना° P. विगतांसं यथा भवति तथा Sy. 'अंस विभागे' चुरादिरदन्तः । अंसयति विभजति स्वान्परानिति व्यंसो दुष्टस्तम् Mah. व्यंसं निरंसं सन्धिसम्बन्धिनं मायिनम U.
२०. जघान । अहन्—हन्तेर्लङि रूपम् Sy. हन्ति Mah., U.

अभिलषित[1]दहनः । तस्यावासभूतेष्व[2]रण्येषु, दग्धवांश्च तस्या[3]रण्यमित्यर्थ[4]ः, क्रियापदं वोशघगिति, हवींषि कामये[5]मास दे[6]वयजनभूतेष्वरण्येष्विति । रमणकु[7]शलानां कवी[8]नाम् । स्तुतीश्[9]च । आवि[10]र-कृणोदिति ।

**इन्द्रः स्वर्षा जनयन्नहानि जिगायोशिग्भिः पृतना अभिष्टिः ।**
**प्रारोचयन्मनवे केतुमह्नामविन्दज्ज्योतिर्बृहते रणाय ॥ ४ ॥**

इन्द्रः । इन्द्रः । स्वर्[11]गस्य सम्भक्ता । दि[12]वसांश्च । ज[13]नयन् । जय[14]ति । कामयमानै-

---

१. शत्रुवधं कामयमानः । उशधक्—'वश कान्तौ' । पृषोदरादित्वाद् रूपसिद्धिः Sy. उशन्ति कामयन्ते परस्वं त उशाश्चौरास्तान् दहत्युशधक् Mah. 'वश कान्तौ' । अस्य कृतसम्प्रसारणस्यैतद्रूपम्. . .अथ कोऽर्थः । शत्रुत्वं कामयमानान् । दहति U.

२. ०ष्वन्येषु P. वनेषु गूढचारिणमसुरम् Sy. वनस्थान् हन्तीत्यर्थः Mah. वनेष्वपि वर्तमानान् U.

३. ०स्याण्य० P.

४. ०त्यर्त्थः P.

५. ०मयंमा० P. शत्रुवधं कामयमानः Sy.

६. येव० P.

७. अथ तस्मिन् रात्रिचरे गवामपहर्तरि हते सति, रमणं स्त्रीभिः सह क्रीडा रामः । तमर्हन्तीति राम्या रात्रयः । तासां रात्रीणामन्तःस्थिताः । राम्याणाम्—'रमु क्रीडायाम्' । राममर्हन्तीत्यर्थे 'छन्दसि च' इति यप्रत्ययः । तस्य स्वरः । यद्वा रमेरन्तर्णीतण्यर्थात् 'अघ्न्यादयश्च' इति यक् प्रत्ययः । 'अरमयति भूतानि नक्तञ्चारीण्युपरमयतीतराणि' (N. 2. 19.) इति यास्कः । वर्णव्यत्ययः Sy. रमयन्ति देवानृते राम्या यायजूकास्तेषाम् Mah. अवश्यं च रमयितव्यानां यायजूकानाम् U.

८. स्तुतीनां P.

९. स्तुतिश्च P. गाः । धेनाः—'धेट् पाने' 'धेट इच्च' (Uṇādi 3. 291.) इति नप्रत्यय ईकारश्चान्तादेशः । गुणः । धयन्ति तामिति धेना वाक् । 'धेना जिगाति' (RV. 1. 2. 3.) इत्यत्र प्रत्ययस्वरेणान्तोदात्तः । अत्र व्यत्ययेनाद्युदात्तत्वम् Sy. धेनाः स्तुतिरूपा वाचः Mah. स्तुतीः U.

१०. प्रकटा अकरोत् । रात्रीणामसुराक्रान्तत्वे तैत्तिरीयकम्—'अहर्देवानामासीद्रात्रिरसुराणां तेऽसुरा यद्देवानां वित्तं वेद्यमासीत्तेन सह रात्रिं प्राविशन्निति ये दिवा स्तोतारो राम्यास्तेषां वाचो धेनाः' इति । आविः, स्वरादिष्वन्तोदात्तत्वेन पठितत्वादन्तोदात्तः । अकृणोत्—'कृवि हिंसाकरणयोः' । निघातः Sy. आविष्करोति । यजमानाः स्तुवन्तीति देवेषु प्रकटयतीत्यर्थः Mah. स इन्द्र आविः प्रकटम्. . .इत्थं शत्रून् हन्ति, इत्यमपरिमितं धनं ददातीति U. This stanza=YV. 33. 26.

११. स्वर्गप्रदः । स्वर्षाः—'षणु दाने' । क्विप् । 'जनसनखनां सञ्झलोः' इत्यात्वम् । 'सनोतेरनः' इति षत्वम् । 'अहरादीनां पत्यादिषूपसंख्यानम्' इति विसर्जनीयस्य रुत्वम् Sy.

१२. दितिवसाश्वे P. अहानि Sy.

१३. जनं P. स्वतेजोभिः Sy.

१४. शत्रूनजैषीत् । जिगाय— 'जि जये' इत्यस्य लिटि 'सन्लिटोर्जेः' इत्यभ्यासादुत्तरस्य कवर्गादेशः । लित्स्वरः Sy.

मरुद्भिः[1] सह । शत्रुसेनाः[2] । अभ्येषणशीलः[3] । प्रदीपयति[4] च । मनुष्येभ्यः[5] । अह्नाम् । केतुं[6] सूर्यम् । अन्धकारविनाशे, महते । युद्धाय[7] । प्रकाशम् । लम्भयति[8] ।

**इन्द्रस्तुजो बर्हणा आ विवेश नृवद्दधानो नर्या पुरूणि ।**
**अचेतयद्धिय इमा जरित्रे प्रेमं वर्णमतिरच्छुक्रमासाम् ॥ ५ ॥**

इन्द्रः[9] । इन्द्रः । शत्रूणां हिंसाः[10] । परिवर्हणाश्च[11] । अभित[12] आविशति[13] । मनुष्येषु[14] । निदधानः[15] । धनानि[16] । बहूनि । ज्ञापयत्येव[17] कर्तव्यम् । इतीमानि[18] ।

---

१. युद्धं कामयमानैरङ्गिरोभिः Sy.

२. ०त्रुषेण P. परकीयाः सेनाः । पृतनाः—'पृङ् व्यायामे' । 'कृपृभ्यां कित्' इति तनन् प्रत्ययः । व्याप्रियन्तेऽत्र योद्धार इति पृतनाः सेनाः । नित्त्वादाद्युदात्तः Sy.

३. ०शीळ M. अभिभावुकः सन् । अभिष्टिः—अभिगन्ता । 'इष गतौ' । 'मन्त्रे वृष—' इत्यादिना क्तिन्नुदात्तः, स हि भावपरोऽपि भवितारं लक्षयति । 'तितुत्रतथ—' इत्यादिना इट्-प्रतिषेधः । शकन्ध्वादित्वात्पररूपत्वम् । कृदुत्तरपदस्वरः Sy.

४. प्रादी० P. तमोरूपासुरवधात् प्रकर्षेणादीपयत् । अरोचयत्—'रुच दीप्तौ' इत्यस्य लङि रूपम् Sy.

५. शत्रुवधानन्तरं मनुष्याय कर्मकर्त्रे यजमानाय । मनवे—'मन ज्ञाने' । 'शृस्वृस्निहि—' इत्यादिना उप्रत्ययः । निदनुवृत्तेराद्युदात्तः Sy.

६. प्रज्ञापकं सूर्यम् Sy.

७. युद्धप्रकाशनाय । रणाय—'क्रियाग्रहणं कर्तव्यम्' इति संप्रदानसंज्ञा । रणतिः शब्दार्थः । 'वशिरण्योरुपसंख्यानम्' (V Pa. 3. 3. 58. 3.) इत्यप्प्रत्ययः । रणन्ति शब्दं कुर्वन्ति परस्परं योद्धारोऽत्रेति रणः सङ्ग्रामः । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः Sy.

८. लभयति P. अलभत । अविन्दत्—'विद्लृ लाभे' इत्यस्य 'शे मुचादीनाम्' इति नुम् । पादादित्वादनिघातः Sy.

९. स तादृश इन्द्रः Sy.

१०. हिंसां P. बाधिकाः । तुजः—'तुज हिंसायाम्' । क्विप्, धातुस्वरः Sy.

११. युद्धोत्साहेन वर्धमानाः परकीयाः सेनाः । बर्हणाः—'बृहि वृद्धौ' । अस्मात् 'युज् बहुलम्' इति कर्तरि युच् । व्यत्ययेनाद्युदात्तत्वम् Sy.

१२. अभीत P. M.

१३. प्रकाशं लब्ध्वा प्राविशत् । किं कुर्वन् ? विवेश—विशतेर्लिटि रूपम् । निघातः Sy.

१४. मनुष्यवत् । नृवत्—नृशब्दात् 'तेन तुल्यम्' इति वतिप्रत्ययः । तस्य स्वरः Sy.

१५. प्रयच्छन् आविवेश । दधानः—दधातेः शानचि रूपम् । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् Sy.

१६. युद्धनयनकारिणां योग्यानि धनानि Sy.

१७. प्रज्ञापयत् । अचेतयत्—'चिती संज्ञाने' इत्यस्य ण्यन्तस्य लङि रूपम् । अडागमस्वरः Sy.

१८. ०व्यतृतीं० M. इमा दृश्यमानाः । इमाः, 'दश्च' (Pa. 7. 2. 109.) इति दकारस्य मकारः । एकादेशस्वरः Sy.

कर्माणि[1]। स्तोत्रे। वर्धयति[2] च। एषां[3] कर्मणा[4]। शुक्लम्[5]। वर्णम्[6], अमलान्युपद्रवरहितानि कर्माणि करोतीत्यर्थः[7]।[8]

महो महानि पनयन्त्यस्येन्द्रस्य कर्म सुकृता पुरूणि ।
वृजनेन वृजिनान्त्सं पिपेष मायाभिर्दस्यूँरभिभूत्योजाः ॥ ६ ॥

महो महानि[9]। महतः। महानि[10]। अस्य[11]। स्तुवन्ति[12]। इन्द्रकर्माणि[13]। सुकृतानि[14]। बहूनि। बलेनायम्[15]। स्तोतॄणामुपद्रवान्[16]। सम्पिनष्टि[17]। मायाभिश्च[18]। दस्यून्[19]। अभिभवनशीलबलः[20]।

---

१. उषसः। ध्यायन्त्यासु मनुष्या इति। ता धियः। धीशब्दस्योषःपरत्वे मन्त्रवर्णः—'शुक्रवर्णामुदु नो यंसते धियम्' (RV. 1. 143. 7.) इति। धियः—'ध्यै चिन्तायाम्'। 'अन्येभ्योऽपि दृश्यते' इति क्विप्। दृशिग्रहणात्सम्प्रसारणम्। धातुस्वरः Sy. २. अतिरत्। तरतेर्व्यत्ययेन शः। निघातः Sy.

३. आसामुषसाम्। आसाम्—'इदमोऽन्वादेशेऽश्' इत्यशादेशोऽनुदात्तश्च। प्रत्ययः सुप्त्वादनुदात्तः। अतः सर्वानुदात्तः Sy. ४. कर्मणम् P. कर्मणाम् is suggested for कर्मणा।

५. शुक्ल M. Omitted in P.

६. Omitted in P. प्रकाशेन युक्तम् Sy. ७. ०त्यर्थः P. स्वतेजसा प्रकर्षेण वर्धयति Sy.

८. VM. ignores इमम्।

९. Omitted in P. १०. महनीयानि Sy. ११. एतादृशसामर्थ्यस्य Sy.

१२. पनयन्ति—पनतेः स्तुत्यर्थस्य 'गुपूधूपविच्छिपणिपनिभ्यः' इत्यायप्रत्ययः। ह्रस्वश्छान्दसः। निघातः Sy.

१३. It is a combined explanation of two words इन्द्रस्य and कर्म। इन्द्रस्य वृत्रहननादीनि कर्माणि Sy.

१४. सुता० P. सुष्ठु कृतानि। 'इन्द्रस्य कर्म सुकृता पुरूणि' इत्येतत्पदकदम्बकमत्रार्थभेदात् पदकाले नोत्सृज्यते Sy.

१५. तादृश इन्द्रः। वर्ज्यन्ते शत्रवोऽनेनेति वृजनं बलम्। तेन। वृजनेन—वृजी वर्जने 'कृपृवृजिमन्दिनिधाञ्भ्यः क्युः' इति क्युप्रत्ययः। कित्त्वादगुणः। प्रत्ययस्वरः Sy. १६. ०वाम M. पापरूपानसुरान्। वृजिनान्—'वृजी वर्जने'। 'वृजेः किच्च' (Uṇādi 2. 205.) इतीनच् प्रत्ययः। वृजिनं पापम्। तद्वतः। अर्शआदित्वादच्। एकादेशस्वरः Sy.

१७. सम्यक् चूर्णीचकार। पिपेष—'पिष्लृ सञ्चूर्णने' इत्यस्य लिटि णलि रूपम्। निघातः Sy. १८. कपटैः Sy.

१९. उपक्षपयितॄनसुरान् Sy.

२०. ०बलम् M. अभिभूतिः शत्रुविषयोऽभिभवः। तत्रौजो बलमस्येत्यभिभूत्योजाः-शत्रूणां पराभवे समर्थः। अभिभूत्योजाः-भूतिर्भवनम्। भावे क्तिन्। 'तादौ च निति' इत्यभेः प्रकृतिस्वरत्वम्। अभिभूतावोजो यस्येति 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिः—' इति समासः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरः Sy.

युधेन्द्रो॑ म॒ह्ना वरि॑वश्चकार दे॒वेभ्यः॒ सत्प॑तिश्चर्षणि॒प्राः ।
वि॒वस्व॑तः॒ सद॑ने अ॒स्य॒ तानि॒ विप्रा॑ उ॒क्थेभिः॑ क॒वयो॑ गृणन्ति ॥ ७ ॥

युधेन्द्रः[1] । युद्धेन[2] । इन्द्रः । महता । धनम्[3] । करोति[4] । देवेभ्यः[5] । सतां[6] पतिः । मनुष्याणां कामैः[7] पूरयिता । यजमानस्य[8] । गृहे । अस्य[9] । तानि[10] कर्माणि । क्रान्तदर्शनाः[11] । मेधाविनः । शस्त्रैः[12] । गृणन्ति[13] प्रकाशयन्ति ।

स॒त्रा॒साहं॒ वरे॑ण्यं सहो॒दां स॑स॒वांसं॒ स्व॑र॒पश्च॑ दे॒वीः ।
स॒सान॒ यः पृ॑थि॒वीं द्यामु॒तेमामिन्द्रं॑ मद॒न्त्यनु॒ धीर॑णासः ॥ ८ ॥

सत्रासाहम् । सत्रमेव शत्रूणामभिभवितारम्[14][15] । वरणीयम्[16] । बलस्य[17] दातारम् । स्तोतृणां प्रयच्छन्तं[18] च । स्वर्गम्[19] । देवनशीलाः । अपश्च । इन्द्रम् । स्तुतिभिः ।

---

१. युधाः P.

२. M. adds युधा before युद्धेन in red ink. युधा—'युध सम्प्रहारे' । भावे सम्पदादिलक्षणः क्विप् । 'सावेकाचः' इति विभक्तेरुदात्तता Sy.

३. भृशं व्रियतेऽर्थिभिरिति वरिवो धनम् । तादृशं धनं युद्धेन लब्ध्वा । वरिवः—'वृञ् वरणे' इत्यस्य यङ्लुकि 'ऋतश्च'—इत्यभ्यासस्य रिगागमः । तदन्तादसुन् । बाहुलकाट् टिलोपः । नित्स्वरः Sy.

४. दत्तवान् । चकार—करोतेर्लिटि रूपम् । निघातः Sy.

५. देवनशीलेभ्यः स्तोतृभ्यः Sy.

६. देवानाम् । सत्पतिः—अस्तेः शतरि रूपं सदिति । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् Sy.

७. अपेक्षितफलप्रदानेन कामपूरकः । चर्षणिप्राः—'प्रा पूरणे' । विच् Sy.

८. विशेषेणाग्निहोत्रादिकर्मार्थं वसतो यजमानस्य । विवस्वतः—'विपूर्वात् वस निवासे' इत्यस्मात् सम्पदादिलक्षणो भावे क्विप् । 'तदस्यास्त्यस्मिन्' इति मतुप् । 'मादुपधायाः' इति तस्य वत्वम् । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः Sy.

९. इन्द्रस्य Sy.

१०. वृत्रहननबहुप्रदानादीनि Sy.

११. स्तोतारः Sy.

१२. स्तोत्रैः Sy.

१३. गृह्णन्ति P. स्तुवन्ति । गृणन्ति—'गृ शब्दे' इत्यस्य लटि रूपम् । निघातः Sy.

१४. महतो वृत्रादेरभिभवितारम् । सत्रासाहम्—'षह मर्षणे' 'छन्दसि सहः' इति ण्विः । णित्त्वादुपधावृद्धिः Sy.

१५. ०विता M.

१६. सर्ववरणीयम् Sy.

१७. दुर्बलस्यार्थिनो बलप्रदम् Sy.

१८. ०यतः P. सम्भजमानम् । ससवांसम्—'षण सम्भक्तौ' इत्यस्य क्वसाविडभावे नकारलोपे रूपम् । प्रत्ययस्वरः Sy.

१९. स्वर्लोकम् Sy.

अनुमदन्ति[१] । कर्मसु[२] ये रमन्ते यजमानाः । यं[३] इन्द्रः । अन्तरिक्षम्[४] । द्याम्[५] । इमां[६] भूमिम् । च[७] । मनुष्येभ्यः[८] प्रायच्छत्[९], पृथिवीत्यन्तरिक्षनामेति[१०] ।

ससानात्याँ उत सूर्यं ससानेन्द्रः ससान पुरुभोजसं गाम् ।
हिरण्ययमुत भोगं ससान हत्वी दस्यून्प्रार्यं वर्णमावत् ॥ ९ ॥

ससान[११] । जगत इन्द्रः[१२] । प्रायच्छत्[१३] । अश्वान् । अपिच । सूर्यम्[१४] । तथा बहुप्रकारभोज्यम्[१५] । गां[१६] च । तथा[१७] । हिरण्ययुक्तम्[१८] । भोगं[१९] च । प्रयच्छति[२०] । सोऽयमिन्द्रो दस्यून्[२१] । हत्वा[२२] । त्रैवर्णिकान्[२३] । प्रावद्[२४]इति[२५] ।

---

१. हृष्यन्ति । हर्षमनु स्वयं हृष्यन्तीत्यर्थः । मदन्ति—'मदि स्तुत्यादिषु' । इत्यस्य व्यत्ययेन परस्मैपदम् । निघातः Sy.

२. धिया स्तुत्या रणयन्तः (रमयन्तः) स्तोतारः। धीरणासः—रणतीति रणा वाक्। धिया स्तुत्या रणा येषां ते धीरणाः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः Sy.

३. येन्द्रः M. ४. ०रिक्षा M. क्षं P. पृथिवीम् Sy. ५. द्युलोकम् Sy.

६. इममन्तरिक्षलोकञ्चैतान् त्रीन् लोकान् Sy. ७. अपिच Sy.

८. तत्तल्लोकवासिभ्यः Sy.

९. ददौ । तमनु मदन्तीत्यन्वयः । ससान —'षणु दाने' इत्यस्य लिटि रूपम् । लित्स्वरः Sy.

१०. Ngh. I. 3. The passage पृथिवीत्यन्तरिक्षनाम should immediately follow अन्तरिक्षम् and precede द्याम्.

११. सधान P.

१२. पूर्वमन्त्रे प्रतिपादितः स इन्द्रः Sy.

१३. युद्धार्थं मरुद्भ्यो ददौ । ससान—'षणु दाने' इत्यस्य लिटि णलि रूपम् । लित्स्वरः Sy.

१४. जगत्प्रकाशकमादित्यम् Sy.

१५. पुरुभिः सर्वैर्जनैः क्षीरादिद्वारेणोपभुज्यत इति पुरुभोजाः । क्षीरादिरूपबहुविधान्नोपेताम् Sy.

१६. अग्निहोत्रादिसिद्ध्यर्थं तेभ्यो ददौ Sy.

१७. अपिच Sy.

१८. सुवर्णमयम् । हिरण्ययम्—हिरण्यशब्दात् विकारार्थे 'मयड्वैतयोः—'(Pa. 4. 3. 143.) इति विहितस्य छन्दसि विषये 'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि' इति निपातनात् मयटो मकारलोपः । प्रत्ययस्वरः Sy.

१९. धनम् । भुज्यतेऽस्मिन्निति भोगो गृहं वा Sy. २०. अर्थिभ्यो ददौ Sy.

२१. बाधकानसुरान् Sy. २२. बद्ध्वा P. हत्वी—हन्तेः क्त्वार्थे 'स्नात्व्यादयश्च' इति निपातितः । प्रत्ययस्वरः Sy.

२३. It is a combined explanation of two words आर्यम् and वर्णम् ॥ उत्तमं वर्णं त्रैवर्णिकम् Sy.

२४. प्रापदिति M. प्रावदति P. यथा कर्मविघ्नो न भवेत्तथाऽपालयत् । आवत्—अवतेर्लङि रूपम् Sy.

२५. VM. ignores ससान twice. ससान—प्राणिनां व्यवहारनिर्वाहाय तेभ्यो ददौ Sy.

इन्द्र ओषधीरसनोदहानि वनस्पतीँरसनोदन्तरिक्षम् ।
बिभेद वलं नुनुदे विवाचोऽथाभवद्दमिताभिक्रतूनाम् ॥ १० ॥

इन्द्र ओषधीः[1] । इन्द्रः[2] । ओषधीः[3] । अहानि[4] प्रति । प्रेरयति[5] । तथा वनस्पतीन्[6] । अन्तरिक्षं[7] प्रति । वलं[8] चासुरम् । बिभेद[9] । वाचश्चाव्याकृताः[10] । विनुनुदे[11]=व्याचकार । अथ[12] । अभवत्[13] । दमिता[14] । अभिकर्मणां[15] शत्रूणामिति ।[16]

शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ ११ ॥

[शुनं हुवेम[17] ।]

---

१. P. omits the *pratīka*.

२. तादृश इन्द्रः Sy.

३. ओषधीः पक्वफलसंयुक्तास्तृणगुल्मादिकाः Sy.

४. दिवसांश्च आयुष्परिक्लृप्त्यर्थं प्रायच्छत् Sy.

५. प्राणिनामुपभोगार्थं प्रादात् । असनोत्—'षणु दाने' इत्यस्य लङि रूपम् Sy.

६. ०स्पतीः P. यज्ञार्थं खदिरपलाशादिलक्षणान् वृक्षान् असनोत् । वनस्पतीन्—पारस्करप्रभृतित्वात् सुडागमः । वनशब्दः 'नब्विषयस्य' इत्याद्युदात्तः । पतिशब्दः प्रत्ययस्वरेणाद्युदात्तः । 'उभे वनस्पत्यादिषु युगपत्' इत्युभयपदप्रकृतिस्वरत्वम् Sy.

७. अन्तरिक्षं सञ्चारार्थं प्रादात् Sy.

८. संव्रियतेऽनेनाकाशमिति वलो मेघः । तं मेघम् Sy.

९. उदकप्रेरणार्थमभिदत् । बिभेद—'भिदिर् विदारणे' इत्यस्य लिटि रूपम् । लित्स्वरः Sy.

१०. विरुद्धवाचः प्रतिकूलानसुरान् Sy.

११. प्राणिनां रक्षार्थं तान् बबाधे । नुनुदे—'नुद प्रेरणे' इत्यस्य लिटि रूपम् । वाक्यभेदादनिघातः, प्रत्ययस्वरः Sy.

१२. अनन्तरम् Sy.

१३. अभ P. अभूत् Sy.

१४. द्रमिता P. उपशमयिता । एवं हितकरणाहितपरिहाराभ्यां सर्वाः प्रजाः पालयति स्मेति भावः । दमिता—'दमु उपशमे' इत्यस्य तृचि रूपम् । चित्स्वरः Sy.

१५. क्रतुः कर्म । अभि आभिमुख्येन युद्धार्थं कर्म येषां तेऽभिक्रतवः बलीयांसः शत्रवः । तेषामपि । अभिक्रतूनाम्—बहुव्रीहौ पूर्वपदस्वरः Sy.

१६. VM. ignores one असनोत्.

१७. Only M. adds this *pratīka* in a different hand. For commentary, see III. 30.22.

III.35.

तिष्ठा हरी रथ आ युज्यमाना याहि वायुर्न नियुतो नो अच्छ ।
पिबास्यन्धो अभिसृष्टो अस्मे इन्द्र स्वाहा ररिमा ते मदाय ॥ १ ॥

[1]तिष्ठा[2] हरी[3]।[4] इन्द्र ! [5]आतिष्ठ। [6]रथमिमम्, तस्मिन्। [7]इमावश्वौ। [8]युज्यमानौ भवतः। [9]अथास्मान्। [10]अभि। [11]आयाहि। [12]यथा। [13]वायुः। [14]नियुतोऽच्छ याति। पिब [15]चाऽऽगत्य। सोम-[16]लक्षणमन्नम्। [17]अस्माभिः। तस्मिन्नभि[18]विसृष्टः। [19]इन्द्र ! [20]स्वाहुतमस्तु। [21]सोमं [22]दद्मः। [23]तुभ्यम्।

१. 'तिष्ठा हरी' इत्येकादशर्चं षष्ठं सूक्तं वैश्वामित्रं त्रैष्टुभमैन्द्रम्। 'तिष्ठा हरी' इत्यनुक्रमणिका (KSA. 18. 35. p. 16.)। अग्निष्टुति मरुत्वतीयशस्त्रे निविद्धानं सूक्तम्। सूत्रितञ्च—'तिष्ठा हरी यो जात एवेति मध्यन्दिनः' (ASS. 9.7.) इति। इन्द्राग्न्योः कुलायनाम्न्येकाहेऽप्येतन्मरुत्वतीयनिविद्धानम्। सूत्रितञ्च—'तिष्ठा हरी तमु ष्टुहीति मध्यन्दिनः (ASS. 9. 7.) इति। समूढे दशरात्रे तृतीये छन्दोमे मरुत्वतीयशस्त्रे एतत्सूक्तम्। सूत्रितञ्च—'तिष्ठा हरी प्रमन्दिन इमा उ त्वेति मरुत्वतीयम्' (ASS. 8. 7.) इति। अतिरात्रे तृतीये पर्याये होतुः शस्त्रे परिहिते सति आद्या 'तिष्ठा हरी' इत्येषा शस्त्रयाज्या। सूत्रितञ्च—'विश्वजिते तिष्ठा हरी रथ आ युज्यमानेति याज्या' (ASS. 6. 4.) इति Sy.

२. तिष्ठ P. ३. Omitted in P.

४. विश्वामित्रः स्तौति Sy.

५. कञ्चित् कालमातिष्ठ। तिष्ठ—तिष्ठतेर्लोटि रूपम्। तिष्ठादेशस्याद्युदात्तत्वम् Sy. ६. स्यन्दने Sy.

७. अश्वौ अभिलक्ष्य Sy.

८. संयुज्यमानौ Sy.

९. अथ रथारूढस्त्वम् अस्मान् Sy.

१०. अच्छ अभिलक्ष्य Sy.

११. शीघ्रमागच्छ। याहि—यातेर्लोटि रूपम्। हेर्ङित्त्वादन्तोदात्तः Sy.

१२. तत्र दृष्टान्तः यथा वायुः Sy.

१३. वायु M. वायुः—'वा गतिगन्धनयोः' इत्यस्मात् 'कृवापा—'इत्यादिना उण् आतो युक्। प्रत्ययस्वरः Sy.

१४. रथे नियुज्यमाना नियुतः वडवा अभिलक्ष्य कञ्चित्कालं तिष्ठति तद्वत् Sy.

१५. पिबासि—पातेर्लेटचाडागमः। आगमस्यानुदात्तत्वाद् धातुस्वरः Sy.

१६. अन्धः—'अद भक्षणे' 'अदेर्नुम् धश्च' इत्यसुन्नुमागमो धकारश्चान्तादेशः। अद्यते प्राणिभिः, तद्वा स्वयमत्तीति। तथाच श्रुतिः—'अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते' (TU. 2. 2.) इति नित्स्वरः Sy.

१७. अस्मे—'सुपां सुलुक्—'इति तृतीयायाः शे इत्यादेशः Sy.

१८. अनुज्ञातस्त्वम् Sy.

१९. इन्द्रः M.

२०. ०तस्तु M. दत्तश्चायं सोमः Sy. Cf. N. 8. 20.

२१. स्वाहाकृतमिमं सोमम् Sy.

२२. ददाम। ररिम—रातेर्लिटि रूपम्। वाक्यभेदादनिघातः। प्रत्ययस्वरः Sy.

२३. वयं तव Sy.

मदार्थम्, इति वाक्यद्वयम्, ततो 'ररिम' इत्युदात्तमिति ।

**उपा॑जि॒रा पु॑रुहू॒ताय॒ सप्ती॒ हरी॒ रथ॑स्य धू॒र्ष्वा यु॑नज्मि ।**
**द्र॒वद्य॑था॒ संभृ॑तं वि॒श्वत॑श्चि॒दुपे॒मं य॒ज्ञमा व॑हात॒ इन्द्र॑म् ॥ २ ॥**

उपाजिरा । उपायुनज्मि ब्रह्मणा । वेगवन्तौ । बहुभिराहूताय । सर्पणशीलौ । रथस्य । धूर्षु । द्रवत् । इदं सम्भृतमृत्विग्जातं भवति । यथा । सर्वतोदिशम् । एवमिदम् । यज्ञं प्रति । इन्द्रम् । अश्वौ । आवहेताम् ।

**उपो॒ नय॑स्व॒ वृष॑णा तपु॒ष्पोतेम॑व॒ त्वं वृ॑षभ स्वधावः ।**
**ग्रसे॑ता॒मश्वा॒ वि मु॑चे॒ह शोणा॑ दि॒वेदि॑वे स॒दृशी॑रद्धि धा॒नाः ॥ ३ ॥**

उपो नयस्व । उपनयस्व । पुमांसौ । बलस्य रक्षकौ । त्वम्, अश्वौ । अथ । एनम् ।

---

१. हर्षाय Sy.　　२. ०क्यद्वम् P.
३. अत्र 'याहि वायुर्न नियुतो नो अच्छ'- इत्यत्र रथेनायाहीत्यर्थः । 'आपश्चित्पिप्युः स्तर्यो३न गावः (RV. 7. 23. 4.) इत्यत्र तन्न तथेति पदकाले नोत्सृज्यते Sy.　　४. उपा P.
५. हे इन्द्र ! Sy.
६. ०पायुनः M. अहं तथा योजयामि । युनज्मि—'युजिर् योगे'। रुधादिः । लटि रूपम् । निघातः Sy.
७. ०गयन्तौ P. शीघ्रगमनशीलौ Sy.
८. पुरुभिर्बहुभिर्यजमानैर्यज्ञार्थमाहूताय तुभ्यम् Sy.　　९. ०शीळौ M. and P.
१०. युगप्रान्तेषु । धूर्षु—'धुर्वी हिंसार्थः'। क्विप् । 'राल्लोपः' इति वकारलोपः । 'र्वोरुपधायाः—'इति दीर्घः । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् Sy.
११. द्रवम M. दममानम् P. यथा गच्छेत्तथेति शेषः । 'द्रु गतौ' इत्यस्य छान्दसे लङि रूपम् । व्यत्ययेनान्तोदात्तत्वम् Sy.
१२. Omitted in M.
१३. अग्निर्यजुर्भिः सविता स्तोमैरित्यादियज्ञसम्भारैः सम्पूर्णम् Sy.
१४. ०दिकम् M. ०दिक्कम् P. सर्वतः Sy.
१५. ०मिमम् is suggested for ०मिदम्.　　१६. इन्द्रं त्वाम् Sy.
१७. हरिनामकावश्वौ Sy.
१८. ०वहताम् P. सम्यग् वहताम् । वहातः—वहेर्लेटयाडागमे रूपम् Sy.
१९. VM. ignores चित् and उप ॥
२०. Omitted in P.
२१. अस्मत्समीपं प्रापय । नयस्व–नयतेर्लोटि रूपम् Sy.
२२. सेचनसमर्थौ Sy.
२३. रक्षितौ D. and M. तापकेभ्यः शत्रुभ्यो रक्षकौ । तपुष्पा—'पा रक्षणे'। 'आतोऽनुपसर्गे कः । 'सुपां सुलुक्—' इति डादेशः 'इसुसोः सामर्थ्ये' इति संहितायां विसर्जनीयस्य षत्वम् । कृदुत्तरपदप्रकृतिस्वरः Sy.
२४. अपिच Sy.
२५. यजमानम् Sy.

रक्ष[1] । कामानां[2] वर्षितः[3] ! अन्नवन्[4] ! तवाश्वाविमौ[5] । घासं[6] ग्रसेताम्[7] । तदर्थं[8] शोणवर्णावश्वौ[9] ।
अस्मिन्यज्ञे[10][11] । विमुञ्च[12] । दिवसेदिवसे[13] । हारियोजनस्थिताः[14] । धानाः[15] । खाद[16] ।

ब्रह्म॑णा ते ब्रह्म॒युजा॑ युनज्मि॒ हरी॒ सखा॑या सध॒माद॑ आ॒शू ।
स्थि॒रं रथं॑ सु॒खमि॑न्द्राधि॒तिष्ठ॑न्प्रजा॒नन्वि॒द्वाँ उप॑ याहि॒ सोम॑म् ॥ ४ ॥

ब्रह्मणा[17][18] ते[19] । तव । मन्त्रेण योजनीयौ[20] । सखायौ[21] । अश्वौ ।

---

१. पालय । अव—अवतेर्लोटि रूपम् Sy.

२. मानां P.

३. ०र्षिता M. वर्षक ! Sy.

४. Missing in M. अन्नवन् ! हे इन्द्र ! स्वधावः—'मतुवसोः—' इति नकारस्य रुत्वम् । निघातः Sy.

५. M. omits तवा ॥ विमुक्तौ तावश्वौ Sy.

६. सं P. विघसं भक्षयताम् Sy.

७. प्रसेन् P. भक्षयताम् । प्रसेताम्—'प्रसु प्रदने' इत्यस्य लोटि आतामि रूपम् । पादादित्वादनिघातः । आतामो लसार्व-धातुकस्वरे धातुस्वरः Sy.

८. तादर्त्थं P.

९. अश्वा P.

१०. बस्मि० P.

११. देवयजने Sy.

१२. मुच—मुञ्चतेर्लोटि रूपम् । आगमानु-शासनस्यानित्यत्वान्नुमभावः Sy.

१३. Omitted in M. प्रतिदिवसम् Sy.

१४. हारी योजनस्थि० M. VM. explains सदृशीः as हारियोजनस्थिताः। (हारियोजनस्थिताः=हरी योजने यस्य स एव हारियोजनः। तस्मै स्थिताः)। This is an epithet of धानाः। But सदृशीः should mean like or worthy of Indra. एकरूपान् । सदृशीः—समान-शब्द उपपदे 'दृशिर् प्रेक्षणे' इत्यस्मात् 'समानान्ययोश्च' इति कञ्प्रत्ययः । समानस्य 'दृग्दृशवतुषु' इति सभावः । 'टिड्ढाणञ्—'इत्यादिना ङीप् । तस्य पित्त्वादनुदात्तत्वे धातुस्वरः Sy.

१५. भृष्टयवान् । धानाः—'डुधाञ् धारण-पोषणयोः' । 'धापॄवस्यज्यतिभ्यो नः' इति नप्रत्ययः । प्रत्ययस्वरः Sy.

१६. खादम् P. भक्षय । अद्धि—'अद भक्षणे' इत्यस्य लोटि अदादित्वाच्छपो लुक् । 'हुझल्भ्यो हेर्धिः' इति ध्यादेशः। निघातः Sy.

१७. 'चातुर्विंशिकेऽहनि माध्यन्दिने सवने ब्राह्मणाच्छंसिशस्त्रे 'ब्रह्मणा ते' इत्या-रम्भणीया । सूत्रितञ्च—'ब्रह्मणा ते ब्रह्मयुजा युनज्म्युरुं नो लोकमनुनेषि विद्वान्' (ASS. 7. 4.) इति Sy.

१८. ब्राह्मणा P.

१९. Omitted in P.

२०. ०नीयो M. योक्तव्यौ । ब्रह्मयुजा—युजेरौणादिकः कर्मणि क्विप् Sy.

२१. समानप्रसिद्धौ Sy.

सङ्ग्रामे[१] । क्षिप्रगमनौ[२] । अहं ब्रह्मणा[३] । युनज्मि[४] । तं स्थिरम्[५] । रथम्[६] । शोभनाक्षादिद्वारम्[७] । इन्द्र ! अधितिष्ठन्[८] । प्रकर्षेण जानन् । विद्वान् । उपगच्छ[९] । इमं सोमम् ।

मा ते हरी वृषणा वीतपृष्ठा नि रीरमन्यजमानासो अन्ये ।
अत्यायाहि शश्वतो वयं तेऽरं सुतेभिः कृणवाम सोमैः ॥ ५ ॥

मा ते[१०] हरी[११] । मा । तव । अश्वौ । वर्षितारौ[१२] । कान्तपृष्ठौ[१३] । यजमानाः । अस्मद्व्यतिरिक्ताः[१४] । निरीरमन्[१५]=आत्मनि[१६] रमयन्तु । तानतीत्यास्मानागच्छ[१७] । पुरातनाः[१८] । वयम् । सुतैः[१९] । सोमैः । तव । पर्याप्तिम्[२०] । कुर्मः[२१] ।

---

१. मे P. माद्यन्ति योद्धारोऽत्रेति मादो युद्धम् । सहमादः सधमादः । तस्मिन् युद्धे । सधमादे—'मदी हर्षे' । अधिकरणे घञ् । 'सधमादस्थयोश्छन्दसि' इति सहस्य सधादेशः । कृदुत्तरपदप्रकृतिस्वरः Sy.

२. अतएव क्षिप्रगमनावेतौ Sy.

३. स्तोत्रेण Sy.

४. रथे संयोजयामि । युनज्मि—युजेर्लटि रूपम् । निघातः Sy.

५. सुदृढम् Sy.

६. 'अधिशीङ्स्थासां कर्म' इति कर्मसंज्ञा Sy.

७. शोना० P. सुष्ठु द्वारं तादृशम् । सुखम्—'खनु विदारणे' । 'अन्येभ्योऽपि दृश्यते' इति डः । कृदुत्तरपदप्रकृतिस्वरः Sy.

८. अति० P.
आरूढस्त्वम् Sy.

९. सोमपानार्थमायाहि Sy.

१०. Omitted in P.

११. हे इन्द्र ! Sy.

१२. कामानां सेचकौ Sy.

१३. कमनीयपृष्ठभागौ । वीतपृष्ठा—'वी कान्त्यादिषु' । अस्मात् क्तप्रत्ययः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः Sy.

१४. अस्मदन्ये Sy.

१५. Omitted in M. मा हर्षयन् । रीरमन्—'रमु क्रीडायाम्' इत्यस्य ण्यन्तस्य लुङि चङि रूपम् । 'न माङ्योगे' इत्यडभावः । निघातः Sy.

१६. त्मनि M.

१७. अतिक्रम्य सोमपानार्थं शीघ्रमागच्छ । अत्यायाहि—यातेर्लोटि रूपम् । 'गतिर्गतौ' इति पूर्वस्य निघातः Sy.

१८. बहूनन्यान् Sy.

१९. अभिषुतैः Sy.

२०. Omitted in P.
पर्याप्तम् Sy.

२१. Omitted in P. यथा तव तृप्तिर्भवति तथा कुर्म इत्यर्थः । कृणोतेर्लोटि रूपम् । निघातः Sy.

तवा॒यं सोम॒स्त्वमेह्य॒र्वाङ् श॑श्वत्त॒मं सु॒मना॑ अ॒स्य पा॑हि ।
अ॒स्मिन्य॒ज्ञे ब॒र्हिष्या नि॒षद्या॑ दधि॒ष्वेमं ज॒ठर॒ इन्दु॑मिन्द्र ॥ ६ ॥

तवायं[1][2] सोमः ।[3] तव[4] । अयम्[5] । सोमः[6] । त्वम् । अस्मदभिमुखम्[7] । आगच्छ[8] । शश्वत्तमशब्दः[9] 'सदा' इत्यनेन समानार्थः[10], सर्वदा । शोभनमनाः[11] । इमं[12] सोमम्[13] । पिब[14] । अवशिष्टः[15] स्पष्ट इति[16] ।

---

१. 'तवायं सोमः' इति माध्यन्दिने सवने नेष्टुः प्रस्थितयाज्या । सूत्रितञ्च—'तवायं सोमस्त्वमेह्यर्वाङिन्द्राय सोमाः प्रदिवः' (ASS. 5. 5.) इति Sy.

२. वयान्त P.

३. हे इन्द्र ! Sy.

४. त्वदर्थमभिषुतः Sy. यतस्तव U.

५. अयं माध्यन्दिनीयः U.

६. सोमोऽस्ति Mah.

७. सोमाभिमुख्येन Sy. अतोऽर्वाङ् अस्मदभिमुखस्त्वम् Mah. कथम्भूतः ? अर्वागञ्चनोऽवरेणाञ्चितः U.

८. आयाहि । इहि—'इण् गतौ' । अस्य लोटि रूपम् । निघातः Sy. अतोऽस्माभिः प्रार्थ्यमानस्त्वमेहि U.

९. P. omits words between तव and शश्वत् ॥ बहुतमम् । शश्वत्तमम्—उञ्छादित्वादन्तोदात्तत्वम् Sy. सर्वकालम् Mah. एत्य च . . . शाश्वतिकतमम् U. १०. ०मार्त्यः P.

११. ०नम M. आगत्य च शोभनमनस्को भूत्वा Sy. शोभनं मनो यस्य स प्रसन्नचित्तः Mah. सङ्गृह्य च सुमना भूत्वा U.

१२. Missing in M. अस्य कर्मणि षष्ठी । इमं सोमम् Mah. अस्य सोमस्य U.

१३. सोमभागं गृहाण U.

१४. पाहि—'पा पाने' इत्यस्य लोटि रूपम् । 'बहुलं छन्दसि' इति शपो लुक् । निघातः Sy. रक्ष । पाहि—'पा रक्षणे' लोट् Mah.

१५. ०शिष्ट P. अवशिष्ट refers to अस्मिन् । यज्ञे । बर्हिषि । आ । निषद्य । दधिष्व । इमम् । जठरे । इन्दुम् । and इन्द्र ॥ बर्हिषि प्रवृद्धेऽस्मिन् यज्ञे निषद्य उपविश्य इन्दुं क्लेदनशीलमिमं सोमं जठरे आदधिष्व धारय । यथा नाभेरधस्तान्न गच्छति तथा धारय । निषद्य—सदेर्ल्यपि 'सदिरप्रतेः' इति षत्वम् । लित्स्वरः । दधिष्व—दधातेर्लोटि 'छन्दस्युभयथा' इति थास आर्धधातुकत्वादिडागमः । प्रत्ययस्वरः । इन्दुम्—'उन्दी क्लेदने' 'उन्देरिच्चादेः' इत्युप्रत्ययः । धातोरादेरिकारादेशः । 'नित्' इत्यनुवृत्तेराद्युदात्तः Sy. किञ्चास्मिन् यज्ञे बर्हिषि, आस्तृतदर्भेषु निषद्योपविश्येममिन्दुं सोमं जठर उदरे दधिष्व धारय । 'धि धारणे' तुदादिः Mah. पीत्वा चास्मिन् यज्ञे बर्हिषि निषद्यावस्थानं कृत्वा दधिष्व धारयस्व इमं जठर इन्दुं सोमम् U.

१६. This stanza=YV. 26. 33.

स्तीर्णं ते बर्हिः सुत इन्द्र सोमः कृता धाना अत्तवे ते हरिभ्याम् ।
तदोकसे पुरुशाकाय वृष्णे मरुत्वते तुभ्यं राता हवींषि ॥ ७ ॥

स्तीर्णं ते[1] । आसनाय[2] स्तीर्णम्[3] । तव । बर्हिः[4] । सुतश्च[5] । इन्द्र ! सोमः । कृताः[6] । धानाः[7] । अश्वयोः[8] । भक्षणार्थम्[9] । बर्हिर्निवासस्थानं यस्य तस्मै[10] । बहुसहायाय[11] । वृष्णे[12] । मरुद्भिर्युक्ताय[13] । तुभ्यम्[14] । दत्तानि[15] । हवींषि[16] ।[17]

इमं नरः पर्वतास्तुभ्यमापः समिन्द्र गोभिर्मधुमन्तमक्रन् ।
तस्यागत्या सुमना ऋष्व पाहि प्रजानन्विद्वान्पथ्या३ अनु स्वाः ॥ ८ ॥

इमं नरः । इमम्[18] । मधुमन्तं सोमम् । ऋत्विजः[19] । ग्रावाणश्च[20] । तुभ्यम्[21] ।

---

१. Omitted in P.

२. उपवेशनार्थम् Sy.

३. P. adds पिबन् after स्तीर्णम् ॥ विस्तृतम् । स्तीर्णम्—'स्तृञ् आच्छादने' इत्यस्य 'ऋत इद्धातोः' इतीत्वम् । 'रदाभ्याम्' इति निष्ठानत्वम् । प्रत्ययस्वरः Sy.

४. बर्हि P.

५. त्वदर्थमभिषुतः Sy.

६. M. adds च before कृताः ॥ सम्पादिताः Sy.

७. पानाः P.
भृष्टयवाः Sy.

८. हरिभ्याम् Sy.

९. ०णार्थम् P. अत्तवे—'अद भक्षणे' इत्यस्मात्तुमर्थे तवेन्प्रत्ययः । नित्स्वरः Sy.

१०. P. omits बर्हिः ॥ तद् बर्हिः ओको निलयो यस्य तस्मै । तदोकसे । बहुव्रीहौ पूर्वपदस्वरः Sy.

११. ०हुसाहा० M. बहुभिः स्तुत्याय । यद्वा बहुसहायाय । पुरुशाकाय—'शच व्यक्तायां वाचि' इत्यस्मात् कर्मणि घञ् । 'चजोः कुघिण्ण्यतोः' इति कुत्वम् । कृदुत्तरपदस्वरः Sy.

१२. पृष्णे P.
कामानां वर्षित्रे Sy.

१३. M. omits मरुद्भिर्यु० ॥ मरुतो देवविशः । तद्वते । मरुत्वते—'तसौ मत्वर्थे' इति भसंज्ञायां तकारस्य जश्त्वाभावः । प्रत्ययस्य पित्त्वादनुदात्तत्वे प्रातिपदिकस्वरः Sy.

१४. ताभ्यां P.
एवम्भूताय तुभ्यम् Sy.

१५. अस्माभिर्दत्तानि । तानि सेवस्वेति भावः । राता—'रा दाने' इत्यस्मात्कर्मणि क्तः । प्रत्ययस्वरः Sy.

१६. सोमाज्यादीनि Sy.

१७. VM. ignores ते (after अत्तवे) ॥ ते तव Sy.

१८. P. reads त एवं सोमं कामयमानोग्ने for इमं नरः । इमम् । मधुमन्तम् ॥ माधुर्योपेतम् Sy.

१९. कर्मणां नेतारोऽध्वर्य्वादयः Sy.

२०. वाश्च P.

२१. त्वदर्थम् Sy.

वसतीवर्यश्च[1] । समक्रन्[2] ! इन्द्र[3] ! अविषवणचर्मप्रदैर्गोभिः[4] सह । तम् । आगत्य[5] । शोभनमनाः[6] । दर्शनीय[7] ! पाहि[8] । स्वान्[9] । मार्गान्[10] । प्रजानन्[11] । तानन्वागत्य पाहीति[12][13] ।

**याँ आभ॑जो म॒रुत॑ इन्द्र॒ सोमे॒ ये त्वामव॑र्ध॒न्नभ॑वन्ग॒णस्ते॑ ।**
**तेभि॑रे॒तं स॒जोषा॑ वाव॒शा॒नो॒३॒॑ऽग्नेः पिब॑ जि॒ह्वया॒ सोम॑मिन्द्र ॥ ९ ॥**

यां आभजः[14] । त्वमिन्द्र ! सोमे[15] । यान् । मरुतो नः । कृतवानसि[16] । ये च[17] । त्वाम् । अवर्धयन्[18] । ये[19] च ते । गणः[20] । अभवन्[21] । तेभिः[22] । सहितः[23] । एतं[24] सोमम् । कामयमानः[25] । अग्नेः[26] । जिह्वया[27] । पिब[28] । सोमम् । इन्द्र[29] !

---

१. वतिवप्यश्च P. आपश्च एते सर्वे सम्भूय Sy.
२. सम्यगकार्षुः । अक्रन्—करोतेर्लुङि रूपम् । निघातः Sy.
३. द P.
४. पयोभिः Sy.
५. गमेर्ल्यपि रूपम् । लित्स्वरः Sy.
६. ०भन M. ०नमहे P. शोभनमनस्कः Sy. ७. हे इन्द्र ! Sy.
८. अभिषुतं सोमं पिब Sy.
९. स्वकीयाः Sy.
१०. वैदिके पथि कर्मणि साधुभूताः स्तुतीः Sy. ११. ०जानां M.
१२. इममभिषुतं सोमं पिब। पाते ? (पिबते)र्लोटि रूपम् Sy.
१३. VM. ignores विद्वान् ॥ कर्माभिज्ञः Sy.
१४. यामाभजः M. याज्ञ भज P.
१५. सोमपानविषये Sy.
१६. The text between त्वमिन्द्र and कृतवानसि is more or less conjectural. M. misses this portion completely and P. reads वस्त्वमि सोमे म मरुतो पति नः कृतवानसि ॥ समभावयः । अभजः—'भज सेवायाम्' इत्यस्य लङि रूपम् । यद्वृत्तयोगादनिघातः Sy.
१७. मरुतः Sy.
१८. युद्धे प्रोत्साहोत्पादनेनावर्धयन् । अवर्धन्—'वृधु वर्धने' इत्यस्य ण्यन्तस्य लङि रूपम् । 'छन्दस्युभयथा' इति भेरार्धधातुकत्वात् 'णेरनिटि' इति णिलोपः । अत्रापि यद्योगादनिघातः Sy.
१९. मरुतः । तव Sy.
२०. M. reads इन्द्रः इन्द्र पिब बलेनाभिषुतं सोमम् । अथवा हुतं सोममग्नेर्जिह्वया for त्वमिन्द्र . . . गण ॥ सहायाः Sy. २१. भवन् M. अभूवन्नित्यर्थः । अभवन्—वाक्यभेदादनिघातः Sy.
२२. तैः is suggested for तेभिः ॥ एवंविधैस्तैर्मरुद्भिः Sy.
२३. सङ्गतः सन् Sy.
२४. अभिषुतम् Sy.
२५. कामयमानस्त्वम् । वावशानः—'वश कान्तौ' इत्यस्य यङ्लुकि चानशि रूपम् । चित्स्वरः Sy.
२६. आहुत्यधिकरणभूतस्याहवनीयस्य Sy.
२७. ज्वालारूपया जिह्वया Sy.
२८. पिब—'पा पाने' । निघातः Sy.
२९. इन्द्रः M.

इन्द्र पिब स्वधया चित्सुतस्याग्नेर्वा पाहि जिह्वया यजत्र ।
अध्वर्योर्वा प्रयतं शक्र हस्ताद्धोतुर्वा यज्ञं हविषो जुषस्व ॥ १० ॥

इन्द्र[1] । इन्द्र ! पिब[2] । बलेन[3] । अभिषुतं सोमम्, अथवा हुतं सोमम् । अग्नेः । जिह्वया[4] । हे यष्टव्ये[5] ! अथवा[6] । होमार्थमात्तम्[7] । अध्वर्योः[8] । हस्तादेव[9] पिब । अथवा । हविषः । दानं[10] याज्यम्[11] । ते होतुर्वा[12] । सेवस्व[13] ।[14]

शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ ११ ॥

[ शुनं हुवेम[15] ।]

---

१. M. omits the *Pratīka*. इन्द्रः P.

२. पिब—आमन्त्रितस्याविद्यमानत्वेन पादादित्वादनिघातः Sy.

३. स्वमात्मानं दधाति पोषयतीति स्वधा बलम् । तेन; बलादपहृत्य Sy.

४. ज्वालारूपया जिह्वया Sy.

५. ०ष्टव्या M.

६. अर्त्यं वा P.

७. P. omits आत्तम् ॥ दातुमुपक्रान्तं सोमं पिब । प्रयतम्—'यम उपरमे' इत्यस्य कर्मणि निष्ठा Sy.

८. अध्वर्युः—अध्वरं कामयतीति क्यच् । 'कव्यध्वर—' इत्याकारलोपः । प्रत्ययस्वरः । तत एकादेशस्वरः Sy.

९. हस्तात्—'अतिहसि—'इत्यादिना तन् । नित्स्वरः Sy.

१०. भागम् Sy.

११. यजनीयं वषट्कारोपेतम् Sy.

१२. होतुः—जुहोतेस्ताच्छीलिकस्तृन् । नित्स्वरः Sy.

१३. सर्वथापि त्वमत्रागत्यास्माभिर्दीयमानं सोमं पिबेति भावः । जुषस्व—'जुषी प्रीतिसेवनयोः' इत्यस्य लोटि रूपम् । निघातः Sy.

१४. VM. ignores one वा and शक्र ॥ समर्थ ! इन्द्र ! शक्र—'शक्लृ शक्तौ' । 'स्फायितञ्चि—' इत्यादिना रक् Sy.

१५. Only M. adds this *Pratīka* in a different hand, but this addition is also struck off later on. For commentary, see III. 30. 22.

## III.36.

**इमाम् षु प्रभृतिं सातये धाः शश्वच्छश्वदूतिभिर्यादमानः ।**
**सुतेसुते वावृधे वर्धनेभिर्यः कर्मभिर्महद्भिः सुश्रुतो भूत् ॥ १ ॥**

इमामू[1] षु[2][3]। इमां त्वदीयाम्[4]। धनस्य[5] प्रभृतिम्[6]। अस्मासु[7], सुष्ठु। निर्वहि[8]। भजनाय[9]। नित्यम्[10]। मरुद्भिः[11] सह। अस्मान्प्रत्यागच्छन्[12]। अथ परोक्षः[13], सुतेसुते[14]। ववृधे[15]। इन्द्र[16]वर्धयितृभिः[17]। य इन्द्रः[18]। कर्मभिः[19]। महद्भिः। जगति विश्रुतः[20]। अभवत्[21]दिति[22]।

---

१. 'इमामू षु' इत्येकादशर्चं सप्तमं सूक्तं त्रैष्टुभमैन्द्रम्। अत्रानुक्रमणिका—'इमामू षूपान्त्यां घोरोऽपश्यत् सा निर्वहेच्छस्यमानेति श्रूयते' (KSA. 18. 36. p. 16.) इति। दशम्या आङ्गिरसो घोर ऋषिः शिष्टानां विश्वामित्रः। अग्निष्टोमे माध्यंदिनसवनेऽच्छावाकशस्त्रे दशमीवर्जितम् 'इमामू षु' इति सूक्तम्। सूत्रितञ्च 'इमामू ष्वित्युपोत्तमामुद्धरेत् सर्वत्र' (ASS. 5. 16.) इति। पृष्ठ्याभिप्लवषडहयोर्माध्यन्दिनसवनेऽच्छावाकशस्त्रे चातुर्विंशिकातिदिष्टस्याहीनसूक्तस्य स्थाने त्रीणि सम्पातसूक्तानि। तत्रोपोत्तमावर्जमेतत्प्रथमं सूक्तम्। सूत्रितञ्च—'इमामू ष्विच्छन्ति त्वा' (ASS. 7. 5.) इति Sy.

२. इमाम् P.

३. विश्वामित्र इन्द्रं स्तौति—हे इन्द्र! Sy.

४. इमं सोममिमां स्तुतिं वा Sy.

५. धस्य P.

६. P. adds प्रदानम् after प्रभृतिम्॥ प्रकर्षेण भ्रियते धार्यते यज्ञार्थमिति प्रभृतिः सोमः स्तुतिर्वा। प्रभृतिम्—'तादौ च निति कृत्यतौ' इति गतेः प्रकृतिस्वरत्वम् Sy.

७. अस्य P.

८. सम्पादय। धाः—दधातेश्छान्दसे लुङि रूपम्। निघातः Sy.

९. अस्माकं धनलाभार्थम् Sy.

१०. Omitted in P. सर्वदा। शश्वच्छश्वत्—'नित्यवीप्सयोः' इति द्विर्वचनम् Sy.

११. अवन्ति रक्षन्ति सर्वमित्यूतयो मरुतः। तैः Sy.

१२. सङ्गतिं याचमानस्त्वम्। यादमानः—'टुयाचृ याच्ञायाम्'। शानचि रूपम्। चकारस्य दकारश्छान्दसः Sy.

१३. ०रोक्ष P.

१४. सोमेऽभिषुते सति Sy.

१५. वर्धते। वावृधे—'वृधु वर्धने' इत्यस्मात् लिटि रूपम्। तुजादित्वादभ्यासस्य दीर्घः संहितायाम्। निघातः Sy.

१६. इन्द्रो वर्ध० P.

१७. वर्धनकारिभिः सोमाज्यादिभिर्हविर्भिः। वर्धनेभिः—वर्धतेर्ण्यन्तस्य नन्द्यादित्वात् ल्युः। लित्स्वरः Sy.

१८. इन्द्र P.

१९. असुरवधमेघभेदनादिलक्षणैर्व्यापारैः Sy.

२०. Omitted in M. लोके प्रसिद्धः। सुश्रुतः—'श्रु श्रवणे' इत्यस्मात् कर्मणि क्तः। 'गतिरनन्तरः' इति गतिस्वरः Sy.

२१. भव० M. स इन्द्र इति पूर्वेणान्वयः। भूत्—भवतेर्लुङि रूपम् Sy.

२२. VM. ignores उ।

इन्द्राय सोमाः प्रदिवो विदाना ऋभुर्येभिर्वृषपर्वा विहायाः ।
प्रयम्यमानान्प्रति षू गृभायेन्द्र पिब वृषधूतस्य वृष्णः ॥ २ ॥

[1]इन्द्राय [2]सोमाः । [3]इन्द्राय । सोमाः । [4]पूर्वेष्वप्यहस्सु । [5]ज्ञायमाना भवन्ति । [6]मेधावी । [7]यैः [8]पीतैः । [9]वृषपर्वेन्द्रः । [10]महान् [11]भवति । [12]प्रदीयमानान् [13]तान् । इन्द्र ! सुष्ठु । [14]प्रतिगृहाण । इन्द्र ! पिब । [15]अध्वर्युणाऽग्नौ प्रक्षिप्तम् । [16]वृषणं सोममिति ।

पिबा वर्धस्व तव घा सुतास इन्द्र सोमासः प्रथमा उतेमे ।
यथापिबः पूर्व्याँ इन्द्र सोमाँ एवा पाहि पन्यो अद्या नवीयान् ॥ ३ ॥

[17]पिबा [18]वर्धस्व । [19]पिब [20]सोमान् । [21]वर्धस्व च तैः । [22]तवैव । खलु । [23]सुताः । [24]इन्द्र ! सोमाः ।

---

१. माध्यन्दिने सवनेऽच्छावाकस्य प्रस्थितयाज्या 'इन्द्राय सोमाः प्रदिवः' इत्येषा । सूत्रितञ्च—'इन्द्राय सोमाः प्रदिवो विदाना अपूर्णो अस्य' (ASS. 5. 5.) इति Sy. २. Omitted in P.

३. तुभ्यम् Sy.

४. प्रगतेषु पूर्वेष्वहस्सु । प्रदिवः—'दिवु क्रीडादौ' । क्विप् । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । दिव्शब्दो दिवसवाची । कृदुत्तरपदस्वरः Sy.

५. अस्माभिर्लम्भिताः । विदानाः—'विद्लृ लाभे' इत्यस्य व्यत्ययेन शानच् । 'बहुलं छन्दसि' इति विकरणस्य लुक् Sy.

६. दीप्तो वर्तते Sy. ७. यैं P. दत्तैः सोमैः Sy. ८. प्रीतैःM.

९. ०पर्वेन्द्रः P. वृषाणः फलस्य वर्षकाः पर्वाणि कालावयवा वर्षाद्या यस्य स तथोक्तः । कालात्मक इत्यर्थः Sy.

१०. महा P. विजहात्युत्सृजत्यर्थानर्थिभ्य इति विहाया महान् । तादृश इन्द्रः, विहायाः—'ओहाक् त्यागे' । 'वहिहाधाञ्भ्यश्छन्दसि' इत्यसुन् । 'णित्' इत्यनुवृत्तेः 'आतो युक् चिण्कृतोः' इति युगागमः । 'गतिकारकयोः—' इति पूर्वपदप्रकृतिस्वरत्वम् Sy. ११. जव० P.

१२. प्रकर्षेण मन्त्रैरुपयम्यमानानिमान् सोमान् Sy. १३. तानि M.

१४. P. omits सुष्ठु and प्रति ॥ गृभाय—'ग्रह उपादाने' इत्यस्य लोटि ह्रौ श्नाप्रत्ययस्य 'छन्दसि शायजपि' इति शायजादेशः । 'हृग्रहोर्भः—' इति भत्वम् । 'अतो हेः' इति हेर्लुक् । निघातः Sy.

१५. गृहीत्वा च, वृषभिर्ग्रावभिरभिषुतम् Sy.

१६. पूर्णं P. स्वर्गादिफलवर्षकमिमम् Sy.

१७. माध्यन्दिने सवनेऽच्छावाकशस्त्रे याज्या 'पिबा वर्धस्व' इत्येषा । सूत्रितञ्च—'पिबा वर्धस्व तव घा सुतास इति याज्या' (ASS. 5. 16.) इति Sy.

१८. Omitted in P. १९. Omitted in M. पिब—पातेः (पिबतेः) लोटि रूपम् Sy. २०. इमं सोमम् Sy.

२१. शरीरेण पुष्टो भव । वर्धस्व—तिङ उत्तरत्वान्निघाताभावः Sy.

२२. तवं P. त्वदर्थम् Sy. २३. ग्रावभिरभिषुताः Sy.

२४. इन्द्रं M.

पूर्वे[1] भवन्ति[2]। अपिच। अमी सम्प्रतितनाः[3]। ततः, त्वं यथा। अपिबः[4]। पुरातनान्। इन्द्र! सोमान्। एवम्[5]। पिब[6]। स्तोतव्यः[7]। अद्यतनानपि[8]। नवतरः[9]।

**महाँ अमंत्रो वृजने विरप्श्यु१ग्रं शवः पत्यते धृष्ण्वोजः ।**
**नाह विव्याच पृथिवी चनैनं यत्सोमासो हर्यश्वममन्दन् ॥ ४ ॥**

महान्। मंहनीयो[10] महानिति यास्कः[11]। अमत्रो[12]ऽमत्रि[13] इति[14]। स्तुतिः[15] विरप्शम्[16], तद्वान् विरप्शी[17]। युद्धे[18], स्तोतव्यः[19]। उद्गूर्णम्[20]। धर्षणशीलम्[21]। अस्यौजः[22]। शत्रूणां

---

१. पुरातनाः Sy. २. ०वति P.
३. इमे अभिनवाः, उभयविधाः सोमाः Sy.
४. ०पिब P. यथायोगादनिघातः Sy.
५. एमम् P.
६. पिब P. पाहि—पाते(पिबते)र्लोटि 'बहुलं छन्दसि' इति शपो लुक्। निघातः Sy.
७. ०तव्य P. स्तुत्यः। पन्यः—पनतेः स्तुत्यर्थस्य अघ्न्यादित्वाद् यत्। 'यतोऽनावः' इत्याद्युदात्तत्वम् Sy.
८. अधुना Sy.
९. अतिशयेनाभिनवस्त्वम् इमानभिनवान् सोमान्। नवीयान्—नवशब्दादीयसुनि रूपम्। नित्स्वरः Sy.
१०. योऽयमिन्द्रो महान्, अतिशयितसामर्थ्यवान् Sy. विश्वामित्रस्य। इन्द्र उच्यते। महाञ् शरीरेण SKN. विश्वामित्रस्येदमार्षम्। महान् प्रभावतः Dur.
११. Cf. N. 3. 13. 'महान् कस्मात्? मानेनान्याञ्जहातीति शाकपूणिः। मंहनीयो भवतीति वा'।
१२. शत्रूणामभिभविता। अमत्रः—'अम गत्यादिषु'। 'अमिनक्षियजि—'इत्यादिना अत्रन् प्रत्ययः। नित्स्वरः Sy. अमत्रोऽपरिमाणबलेनाहिंसितपूर्वो वा केनचित् SKN. अपरिमाणमात्र इन्द्रः Dur. १३. ०मत्र इ० P. ०ऽमात्र is suggested for ०ऽमत्रि।
१४. N. 6. 23.
१५. स्तुति P. १६. विरप् M. वीर P.
१७. विरप्शी M. वीरश्च P. विरपणशीलो भुजास्फालनेन युद्धार्थं शत्रूणामाह्वानकारी। यद्वा विविधं रपणं स्तुतिलक्षणं यस्येति सर्वैः स्तुत्य इत्यर्थः। विरप्शी 'रप लप व्यक्तायां वाचि'। औणादिकः शप्रत्ययः। विविधं रपन्तीति विरप्शाः स्तोतारः। तेऽस्य सन्तीत्यत इनिः। यद्वा विविधं रपणं विरप्शम्, तदस्यास्तीति। प्रत्ययस्वरः Sy. विरपणशील आह्वानकृत् SKN. विरावणशीलः Dur.
१८. बलोपलक्षिते युद्धे Sy. वृजनशब्दः क्रियानिमित्तको बलनिमित्तो वाऽन्तर्णीतमत्वर्थः सङ्ग्रामे द्रष्टव्यः। वर्ज्यन्ते यत्र बाणैर्योद्धारस्तस्मिन्, व्रज? (वर्ज)नवति बलवति वा सङ्ग्रामे SKN. सङ्ग्रामे Dur.
१९. It is the interpretation of विरप्शी। It should therefore immediately follow विरप्शी।
२०. तादृशस्येन्द्रस्य Sy. अभ्युद्यतम् Dur.
२१. धृष्णु—'ञिधृषा प्रागल्भ्ये'। 'त्रसिगृधिधृषिक्षिपेः (क्नुः इति) क्नुप्रत्ययः। 'रषाभ्याम्–'इति णत्वम्। प्रत्ययस्वरः Sy. शत्रूणामभिभवितृ SKN. धर्षयितृ Dur. २२. अस्योन्व P. पराक्रमलक्षणं तेजः Sy. यस्य बलम् Dur.

बलस्य[1] । इष्टे[2] । न । एव[3] । पृथिवी[4] । अपि[5] । एनम्[6] । व्याप्तवती[7] । यदा[8] । पीताः सोमाः[9] । हर्यश्वम्[10] । अमन्दन्[11], तदा भूम्या[12] अपि महानासीदिति[13] ।[14]

**महाँ उग्रो वावृधे वीर्याय समाचक्रे वृषभः काव्येन ।**
**इन्द्रो भगो वाजदा अस्य गावः प्र जायन्ते दक्षिणा अस्य पूर्वीः ॥ ५ ॥**

महान् । महान्[15] । उद्गूर्णः[16] । वृद्ध[17] आसीत् । वीर्यकरणाय[18] । सोऽयम्[19] । स्तोतृणां

---

१. शवः बलम् Sy. शत्रुबलम् Dur.

२. ईष्टे is suggested for इष्टे ॥ सर्वत्र प्रसरति । पत्यते—व्यत्ययेन कर्तरि यक् । निघातः Sy. पातयते Dur.

३. इव P.
अहशब्द एवार्थे Sy. अहशब्दो विनिग्रहार्थीयत्वादेवार्थे SKN.

४. विस्तीर्णा भूमिः Sy. तच्छ्रुतेर्द्यौश्चेत्युपसङ्ग्रहः, पृथिवी च द्यौश्च माहात्म्येन द्यावापृथिव्यावप्यनेनैव व्याप्नुत इत्यर्थः SKN. पृथिवी नापि द्यौः, उपमानत्वेन Dur.

५. आनि P. चन इत्यप्यर्थे । चनेति निपातसमुदायश्चार्थे वर्तते । एवमादित्वादन्तोदात्तः Sy. चनेति निपातः स्वार्थे SKN. नापि Dur.

६. एतावृशमहिमोपेतमिन्द्रम् Sy.

७. Omitted in M. न व्याप्नोति । द्यौरपि न . . . इत्यर्थः, विव्याच—व्यचेर्लिटि णलि 'लिट्यभ्यासस्योभयेषाम्' इत्यभ्यासस्य सम्प्रसारणम् । निघातः Sy. व्यचिर्व्याप्त्यर्थः। व्याप्नोति SKN.

८. यता P. यच्छब्दो यदेत्येतस्यार्थे व्यत्ययेन वा नपुंसकम् । यदा यं वेन्द्रम् SKN. कदा पुनरेवं भवति ? . . . यदा Dur.

९. स्वाहाकृताः सोमाः Sy.

१०. हस्त्वम् P.
इन्द्रम् Sy; Dur. हरी अश्वौ यस्य तम् SKN.

११. ०मदन्त M. अमादयन् । तदा तमेनं द्यावापृथिव्यौ व्याप्तुं न शक्नुत इत्यर्थः । अमन्दन्—'मदि स्तुत्यादिषु' इत्यस्य लङि रूपम् । यद्योगादनिघातः Sy. मोदयन्ति तर्पयन्ति चेत्यर्थः SKN. अतर्पयन्नित्यर्थः Dur.

१२. भूम्याम P.

१३. विम० M. माहा० P.

१४. 'अमत्रोऽमात्रो महान् भवति । अभ्यमितो वा' N. 6. 23.; SKN. 2. 472.

१५. युद्धकर्मणि बलवान् Sy.

१६. शत्रूणां भयङ्करः Sy.

१७. वर्धते । वावृधे—वर्धतेर्लिटि रूपम् । निघातः Sy.

१८. ०कर्षणा० P. वीर्याय—वीरे भवं वीर्यम्, 'भवे छन्दसि' इति यत् । 'वीरवीर्यौ च' इत्यत्र 'यतोऽनावः' इत्यस्यानित्यत्वस्य ज्ञापितत्वात् तित्स्वरितः Sy.

१९. It is the substitute of वृषभः ॥ वृषभः फलस्याभिवर्षकः Sy.

स्तोत्रेण[१]। समभिमुखीक्रियते[२]। सोम[३]मिन्द्रः। भजनीयः[४]। अन्नस्य दाता[५]। अस्य[६]। स्वभूता[७] गावो विचरन्ते[८]। तथाऽस्य। मनुष्येभ्यः स्तोतृभ्यो दत्ता दक्षिणाः[९]। प्रजाभिः प्रजायन्ते[१०]। बह्वयः[११]।

प्र यत्सिन्धवः प्रसवं यथायन्नापः समुद्रं रथ्येव जग्मुः ।
अतश्चिदिन्द्रः सदसो वरीयान्यदीं सोमः पृणति दुग्धो अंशुः ॥ ६ ॥

प्र यत्[१२]। यस्मिन्[१३] काले। येन[१४] प्रकारेण। नद्यः। इन्द्रस्यानुज्ञाम्[१५]। प्रायन्[१६]। तस्मिन्[१७] काले तेन प्रकारेण, आपः[१८]। समुद्रम्[१९]। विस्तीर्णा रथमार्गा[२०] इव। गच्छन्ति[२१]। अस्मात् कारणात्।

---

१. त्रेण M. कवयः स्तोतारः। तत्कर्म स्तोत्रम्। तेन। काव्येन—कवेः कर्म काव्यम्। ब्राह्मणादित्वात् ष्यञ्। ञित्त्वादुपधावृद्धिः ? (आद्यचो वृद्धिः) ञित्स्वरः Sy.

२. सङ्गच्छते। समाचक्रे—करोतेर्लिटि रूपम्। 'गतिर्गतौ' इति पूर्वपदस्य गतेर्निघातः Sy.

३. M. reads इति इयं सोमम्॥ सोऽप्य० is suggested for सोम०.

४. सर्वैर्भजनीयः Sy.

५. क्षीरादिलक्षणान्नप्रदाः। वाजदाः—ददातेः 'आतोऽनुपसर्गे कः' Sy.

६. तादृशस्य अस्य इन्द्रस्य Sy.

७. स्वभा P.

८. प्रजायन्ते Sy.

९. ०क्षिणा M. and P. दक्षिणाः—'दक्ष वृद्धौ' इत्यस्मात् 'द्रुदक्षिभ्यामिनन्' इतीनन्प्रत्ययः। नित्त्वादाद्युदात्तः Sy.

१०. प्रजायन्ते—'जनी प्रादुर्भावे' इत्यस्य लटि रूपम् Sy.

११. ह्वयः M. Sy. adds ता गावः।

१२. प्रयः M. प्र यत्सिन्धवः is an addition in M. over the line.

१३. यदा Sy.

१४. यथा Sy.

१५. प्रकर्षेण सूयते इति प्रसवः कामः। तमनुसृत्य। प्रसवम्—सवतेः कर्मण्यप्। थाथादिस्वरः Sy.

१६. प्रकृष्टमतिदूरं समुद्रं गच्छन्ति। आयन्—अयतेर्लङि रूपम्। यद्योगादनिघातः Sy.

१७. तदा Sy.

१८. आः P.

१९. ०मुन्द्राः P. महान्तं समुद्रम् Sy.

२०. रथिन इव। रथ्येव—रथस्येमे रथ्याः। 'रथाद्यत्' इति यत्। 'सुपां सुलुक्—' इति सुपो डादेशः। तित्स्वरितः। इवेन विभक्त्यलोपः, पूर्वपदप्रकृतिस्वरः Sy.

२१. प्रीणनार्थं गच्छन्ति। जग्मुः—गमेर्लिटि रूपम्। 'गमहन—' इत्यादिनोपधालोपः। निघातः Sy.

इन्द्रः[1] । स्वस्थानादन्तरिक्षात्[2] । अपि । उरुतरः[3] । यत् । एनम्[4] । सोमः[5] । पूरयति[6] । दुग्धः[7] । अंशुः, अत्र यास्कः—'अंशुः शमष्टमात्रो[8] भवति[9]' इति ।

समुद्रेण सिन्धवो यादमाना इन्द्राय सोमं सुषुतं भरन्तः ।
अंशुं दुहन्ति हस्तिनो भरित्रैर्मध्वः पुनन्ति धारया पवित्रैः ॥ ७ ॥

समुद्रेण । द्रोणकलशेन[10] । आपः[11] । सङ्गच्छमानाः[12] । इन्द्राय[13] । सोमम् । सुष्ठ्वभिषुतम्[14] । सम्भरन्[15] । तथा, अंशुम्[16] । दुहन्ति[17] । हस्तयुक्ता[18] अध्वर्यवः । सोमसम्भरणसाधनैः[19] । मधूनि[20] ।

---

१. इन्व M. इन्त्र P.

२. M. omits स्वस्था० P. reads स्यस्या० ॥ अतश्चित्सदसः—अस्माद-प्यन्तरिक्षात् Sy.

३. वरीयान्—उरुशब्दादीयसुनि 'प्रिय-स्थिर—' इत्यादिना वरादेशः । नित्त्वा-दाद्युदात्तः Sy. ४. इन्द्रम् Sy.

५. सोमम् M. and P.

६. प्रीणयति । यथाल्पा नद्योऽल्पीयांसि च जलानि महान्तं समुद्रं प्रीणयन्ति तद्व-दल्पतरोंऽशुभूतः सोमः वरीयांसमिन्द्रं प्रीणयति । पृणति—'पृण प्रीणने' । तुदादिः । यद्योगादनिघातः Sy.

७. दुग्ध P. अभिषुतः । दुग्धः—दुहेः क्तः, 'एकाचः—' इतीट्प्रतिषेधः । 'दादेर्धा-तोर्घः' इति हकारस्य घत्वम् । 'झषस्त-थोर्धोऽधः' । प्रत्ययस्वरः Sy.

८. लताखण्डरूपोऽल्पः सोमः Sy.

९. N. 2. 5.

१०. सहिता नद्यादिरूपेणापोऽभिद्रवन्त्यनेनमिति समुद्रस्तेन । समुद्रेण—समुत्पूर्वात् द्रव-तेः 'अन्येभ्योऽपि दृश्यते' इति डः, डित्त्वा-ट्टिलोपः । यद्वा 'उन्दी क्लेदने' । सम्पूर्वस्य 'स्फायितञ्चि—' इत्यादिना रक् । किंत्वादुपधालोपः । उभयत्र प्रत्ययस्वरः । सुपा सहैकादेशे कृत एकादेश उदात्त एव Sy. ११. सिन्धवः—नद्यो यथा तं पूरयन्ति तद्वत् Sy.

१२. तेन सह सङ्गति याचमानाः । याद-मानाः—'टुयाचृ याच्ञायाम्' । शानच् । व्यत्ययेन चकारस्य दकारः । शानचो लसार्वधातुकस्वरे धातुस्वरः Sy.

१३. तुभ्यम् Sy. १४. M. omits ष्ठ्वभिषु । P. omits तम् ।

१५. सम्भरन्तः, or समभरन् is suggest-ed for सम्भरन् ॥ सम्पादयन्तः Sy.

१६. लताखण्डम् Sy.

१७. अभिषुण्वन्ति । दुहन्ति—'दुह प्रपूरणे' इत्यस्य लटि रूपम् Sy.

१८. हस्तवन्तः Sy.

१९. ०धनै P. कर्मकरणार्थं पदार्थान् बिभ्र-तीति भरित्रा हस्ताः । भरित्रैः—'डुभृञ् धारणपोषणयोः' इत्यस्मात् 'अर्तिलूधूसूखनसहचर इत्रः' इतीत्रप्रत्ययः । प्रत्ययस्वरः Sy.

२०. माधुर्योपेतान् सोमान् Sy.

पुनन्ति[1]। धारया[2]। दशापवित्रैरुत्वेति[3]।

हृदाइव कुक्षयः सोमधानाः समीं विव्याच सवना पुरूणि।
अन्ना यदिन्द्रः प्रथमा व्याश वृत्रं जघन्वाँ अवृणीत सोमम् ॥ ८ ॥

हृदा इव[4]। हृदा इव[5]। इन्द्रस्य जठरावकाशाः[6]। सोमाधाराः[7]। संव्याप्नोति[8]। बहूनि[9]। सवनानि। ईमिति[10] पूरणम्। अन्त्यलोपश्छान्दसः, अन्नानि[11] विविधानि। पुरातनानि[12], वृत्रवधात् पूर्वम्। यस्मात्। विविधमश्नात्[13]। अथ वृत्रम्[14]। जघन्वान्[15]। देवेभ्यः[16] सोममेव[17]। वृतवानिति[18] [19]।

---

१. शोधयन्ति । पुनन्ति—'पूञ् पवने' इत्यस्य लटि रूपम् Sy.

२. सार० M. तथा तेऽध्वर्य्वादयः स्रवतो रसस्य धारया Sy.

३. दशापवित्तोत्रै० P. पावनैः Sy.

४. Omitted in P.

५. तत्र दृष्टान्तः । यथा हृदा जलाधारा भवन्ति तद्वत् Sy.

६. जरा P. उदराणि । कुक्षयः—'कुष निष्कर्षे' 'प्लुषिकुषिशुषिभ्यः क्सिः' (Uṇādi 3. 435.) कुष्यत इति कुक्षिः । प्रत्ययस्वरः Sy.

७. सोमा M. सोमो निधीयते येष्विति सोमधानाः । सोमधानाः—दधातेरधिकरणे ल्युट् । लित्स्वरः Sy.

८. यं संव्या० M. सम्यक् व्याप्नोति। विव्याच—व्यचेर्लिटि रूपम् Sy.

९. पुरूणि त्रीणि Sy.

१०. सोऽयमिन्द्रः Sy.

११. भक्षणीयानि सोमादीन्यन्नानि । अन्ना—'अद भक्षणे' । अद्यत इत्यन्नम् Sy.

१२. प्रथमानि Sy.

१३. ०घश्ना० P. विशेषेण जघास । आश—'अश भोजने' इत्यस्य लिटि णलि रूपम् । 'अत आदेः' इत्यभ्यासस्य दीर्घः । यद्योगादनिघातः । लित्स्वरः Sy.

१४. वृत्रस्य Sy. वृत्रम्—'न लोकाव्यय-निष्ठा—' इति षष्ठीप्रतिषेधः Sy.

१५. जन्वान् M. हन्तेन्द्रः । जघन्वान्—हन्तेः क्वसाविडभावे रूपम् । प्रत्ययस्वरः Sy.

१६. ०वेभ्य M.

१७. भव M.

१८. वृतावा० P. माध्यन्दिने सवने देवेभ्यः समभजत । अवृणीत—'वृङ् सम्भक्तौ' इत्यस्य लङि रूपम् Sy.

१९. VM. ignores इन्द्रः ।

आ तू भ॑र॒ माकि॑रे॒तत्परि॑ ष्ठाद्वि॒द्मा हि त्वा॒ वसु॑पतिं॒ वसू॑नाम् ।
इन्द्र॒ यत्ते॒ माहि॑नं॒ दत्र॒मस्त्य॒स्मभ्यं॒ तद्ध॑र्यश्व॒ प्र य॑न्धि ॥ ९ ॥

आ तू[1] भर[2]। आभर[3] धनम्[4] । क्षिप्रमस्मभ्यं[5] दातुम्[6] । मा[7] कश्चित् । त्वया दीयमानमेतत्[8] । निरुणद्धु[9] । जानीमः[10] । हि[11] । त्वाम् । वसुपतिम्[12] । तथा सति, न्द्र ! यत्[13] । तव । पूजनीयम्[14] । देयधनम्[15] । अस्ति । हे[16] हर्यश्व[17] ! तत्[18] । अस्मभ्यम् । प्रयच्छेति[19] ।[20]

---

१. तु P.
२. Omitted in P.
३. भर—भरतेर्लोटि रूपम् Sy.
४. 'वि॒द्मा हि त्वा॒ वसु॑पति॒म्' इति वक्ष्यमाणत्वाद् वस्विति गम्यते। एतद्वसु BB.
५. तू–'ऋचि तुनुघ–' इत्यादिना संहितायां दीर्घः Sy. तू इति पादपूरणार्थम् BB.
६. दधु P.
७. को वा । माकिः निपातः Sy. माकिरिति माशब्दपर्यायो निपातः BB.
८. ०मेकं M. ०मेत् P. धनम् Sy.
९. परिष्ठात् प्रतिबध्य तिष्ठेत् । स्यात्—तिष्ठतेश्छान्दसे लुङि रूपम् । 'उपसर्गात् सुनोति—' इत्यादिना संहितायां षत्वम् । निघातः Sy. परत्र मा स्यात्, अस्मास्वेव तिष्ठतु । यद्वा, अस्मभ्यमाहृतं वसु त्वय्येतत्परिष्ठितं समाप्तं मा भूद्, अनुपक्षीणमस्तु BB.
१०. विद्म—वेत्तेर्लटि 'विदो लटो वा' इति मसो मादेशः । प्रत्ययस्वरः । संहितायां 'द्व्यचोऽतस्तिङः' इति दीर्घः Sy. विजानीमः BB.
११. खलु Sy. यस्मात् BB.
१२. उत्तमस्य धनस्य स्वामिनम् । वसुपतिम्—'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरः Sy. सर्वेषां वसूनां सम्बन्धिनं वसुपतिं धनपतिम् । . . . 'इन्द्रो॑ दि॒व इन्द्र॑ ईशे पृथि॒व्याः' इत्यादिषु त्वामेव सर्ववसुपतिं शृणुमः । तस्मादुच्यते 'आ तू भर' इति BB.
१३. यत् P.
१४. ०जयन्ति P. मंहनीयम् । माहिनम्—'महेरिनण् च' इतीनण् प्रत्ययः । णित्त्वादुपधावृद्धिः, ग्रामादित्वादाद्युदात्तः Sy. महद् महनीयं वा हिरण्यादिकम् । महेरिन् वृद्धिश्च । यद्वा माहिनं महाप्रमाणम् । 'माहृ माने' स एव प्रत्ययः BB.
१५. देवध० M. एवं ध० P. धनम् Sy. दत्रं दातव्यम् । औणादिकस्त्रन्प्रत्ययः । ईदृशं यत्तव धनमस्ति दानायैव कल्पितम् BB.
१६. Omitted in M.
१७. Omitted in P. हे हर्यश्व ! हरिवाहन ! BB.
१८. धनम् Sy.
१९. यन्धि—'यमु उपरमे' । लोटि 'बहुलं छन्दसि' इति शपो लुक् । 'सेर्हिः' । तस्य 'वा छन्दसि' इति पित्त्वस्य विकल्पितत्वादत्राङित्त्वात् 'अङितश्च' इति हेर्धिरादेशः । निघातः Sy.
२०. VM. ignores वसूनाम् ॥ धनानाम् Sy.
सर्ववसुपतित्वप्रतिपादनार्थं वसूनामित्युक्तम् । समासे संख्याविशेषाप्रतीतेः BB.
This stanza=TS. 1. 7. 13. 3.

अस्मे प्र यन्धि मघवन्नृजीषिन्निन्द्र रायो विश्ववारस्य भूरेः ।
अस्मे शतं शरदो जीवसे धा अस्मे वीराञ्छश्वत इन्द्र शिप्रिन् ॥ १० ॥

अस्मे[1] प्र[2]।[3] अङ्गिरसो[4] घोर[5] एतां[6] दर्श[7], अस्मभ्यम्[8]। प्रयच्छ[9]। धनवन्[10]! तृतीयसवना-न्वयात् ऋजीषवन्[11]! इन्द्र! सर्ववरणीयम्[12]। भूरि[13]। धनम्[14]। तथाऽस्मभ्यम्[15]। जीवनार्थम्[16]। शतम्[17]। शरदः[18]। प्रयच्छ। अस्मभ्यम्[19]। वीरांश्च[20]। बहून्[21]। इन्द्र! शिप्रिन्[22]!

---

१. जातकर्मण्यंसाभिमर्शने 'अस्मे प्र यन्धि' (AGS. 1. 15.) इत्येषा। यद्यपि 'सा निर्वहेत्' इति वचनेन शंसने निषिद्धा तथाप्यभिमर्शनस्य शंसने चोदितत्वात् नोक्तदोषः Sy.

२. अस्मै P.

३. Omitted in P.

४. आङ्गिरसो is suggested for अङ्गिरसो.

५. P. adds एव after घोर।

६. एता D. and M.

७. दर्शन P. ददर्श is suggested for दर्श ॥ घोरस्याङ्गिरस्येदमार्षम् Dur.

८. ०स्मभ्य P. एवमत्र 'अस्मे प्रयन्धि' इत्यनेन याच्ञार्थेन सम्बन्धात् 'अस्मे' इत्यस्य 'अस्मभ्यम्' इति चतुर्थ्या विपरिणाम उपपद्यते Dur.

९. देहि Dur.

१०. ०नाय यात् M.

११. गतसारसोमवन्! हे इन्द्र! Sy.

१२. विश्वैः सर्वैः सम्भजनीयतया वरणं यस्य तत् Sy. सर्वा आपदो यद् धनं वारयति तस्य Dur.

१३. बहु Sy. भूरेर्बहुनः, षष्ठीश्रुतेरेकदेश-मिति शेषः। द्वितीयार्थे वा षष्ठी।... भूरि SKN. बहुनः, यस्याधिपतिस्त्वं तस्याभिलषितां मात्रां देहि Dur.

१४. द्वितीयार्थे षष्ठी Sy. धनस्य Dur.

१५. अस्माकम् Sy. अस्मभ्यमेव SKN.

१६. ०वधना० M. ०वधनार्त्थं P. जीवनाय। जीवसे—'जीव प्राणधारणे' इत्यस्य तुमर्थेऽसेप्रत्ययः। प्रत्ययस्वरः Sy. जीवनाय SKN.; Dur.

१७. Omitted in M. संवत्सरान् Sy. शतं वर्षाणि SKN.; Dur.

१८. Omitted in M. देहि Sy.; SKN.; Dur.

१९. स्मभ्यं M. अस्माकम् Sy. अस्मभ्यमेव च SKN.

२०. पुत्रान् देहि Sy. पुत्रान् SKN.; Dur.

२१. शश्वदिति बहुनाम (Ngh. 3. 1.) शश्वतः—'टुओश्वि गतिवृद्ध्योः'। अस्मात् 'संश्चद्वेहत्—'इत्यादिनाति-प्रत्ययान्तत्वेन निपातनादिष्टरूपसिद्धिः Sy. बहुनामेदम्, बहून् SKN. दीर्घायुषो देहि Dur.

२२. शिप्रीन् M. याचन्ते P. शोभनहनो! Sy. हनुर्नासिके वा ताभ्यां तद्वन्। SKN. 2. 412.

शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ ११ ॥

[शुनं हुवेम ।][1]

III.37.

वार्त्रहत्याय शवसे पृतनाषाह्याय च । इन्द्र त्वा वर्तयामसि ॥ १ ॥

[2]वार्त्रहत्याय[3]=शत्रु[4]हनननिमित्ताय[5] । सेनाभिभवनिमित्ताय[6] । च[7] । बलाय[8], तदस्माकं[9] यथा स्यादित्येवम्[10] । इन्द्र ! त्वाम् । आवर्तयामः[11] ।[12]

---

१. The *pratīka* is supplied by the Editor. M. has शुनं हुवे added by a different hand over the line. For commentary, see RV. III. 30. 22.

२. 'वार्त्रहत्याय' इत्येकादशर्चमष्टमं सूक्तम् । एकादश्यनुष्टुप्, शिष्टाः गायत्र्यः । तथा चानुक्रान्तम्—'वार्त्रहत्याय गायत्रमन्त्यानुष्टुप्' (KSA. 18. 37. p. 16.) इति । अतिरात्रे प्रथमे पर्याये ब्राह्मणाच्छंसिशस्त्रे 'वार्त्रहत्याय' इत्युत्तमावर्जं सूक्तं शंसनीयम् । तथा च सूत्रितम्—वार्त्रहत्यायेत्युत्तमामुद्धरेत्' (ASS. 6. 4.) इति । महाव्रते गायत्रीतृचाशीतावुत्तमावर्जमिदं सूक्तम् । पञ्चमारण्यके सूत्रितम्—'वार्त्रहत्याय शवस इत्युत्तमामुद्धरति' (AĀ. 5. 2.5.) इति Sy.

३. पितहिनामा P. विश्वामित्रः स्तौति Sy.

४. ग्युह० P. वृत्रहनननिमित्ताय । वार्त्रहत्याय—वृत्रघ्नः कर्मेत्यर्थे ब्राह्मणादित्वात् ष्यञ् । 'हनस्तोऽचिण्णलोः' (Pa. 7.3.32.) इति तकारः । ञित्वादाद्युदात्तः Sy. वृत्रस्य दैत्यस्य हत्यायां हनने कुशलं वार्त्रहत्यं, वृत्रघातसमर्थमित्यर्थः Mah. वृत्रो येन शवसा बलेन हन्यते तद् वार्त्रहत्यं शवस्तस्मै U.

५. ०नित्ता P.

६. परकीयसेनाभिभवाय । पृतनाषाह्याय—'षह मर्षणे' इत्यस्माद्भावे 'शकिसहोश्च' इति यत् । संहितायां 'सहेः पृतनर्ताभ्यां च' (Pa. 8. 3. 109.) इति षत्वम् । दीर्घश्छान्दसः Sy. पृतना शत्रुसेना सह्यतेऽभिभूयते येन तत्पृतनासाह्यं तस्मै शत्रुसेनापराभवसमर्थायेत्यर्थः Mah. पृतनाः संग्रामा येन शवसाऽभिभूयन्ते तत्पृतनासहं बलं तस्मै पृतनासहाय । सहतिरभिभवार्थः U.

७. Omitted in M. अपिच Sy. च पुनः Mah.

८. त्वद्बलवृद्धय इत्यर्थः Mah.

९. तथा स्मा० M.

१०. ०वर्तम् P.

११. सर्वतः प्रवर्तयामः । वर्तयामसि—'वृतु वर्तने' इत्यस्य ण्यन्तस्य मसः 'इदन्तो मसिः' इति मसि इत्यादेशः । निघातः Sy. उपतिष्ठामहे Mah.

१२. This stanza=YV. 18. 68. For SB. see RV. 3. 30. 8.=SB. 9. 5. 2. 4. p. 748.

**अर्वाचीनं सु ते मन उत चक्षुः शतक्रतो । इन्द्र कृण्वन्तु वाघतः ॥ २ ॥**

अर्वाचीनम् । अभि[1]मुखम् । सुष्ठु[2] । कृण्व[3]न्तु । तव । मन[4]ः । चक्षु[5]ः । च । बहुप्रज्ञ[6] ! इन्द्र ! वा[7]घतः—ऋत्विजः ।

**नामानि ते शतक्रतो विश्वाभिर्गीर्भिरीमहे । इन्द्राभिमातिषाह्ये ॥ ३ ॥**

नामा[8]नि ते । इन्द्र ! शक्रपुरुहूतेत्यादीनि तव । नामा[9]नि । सर्वाभिः । स्तुति[10]भिः । अभि[11]मातीनां सहननिमित्तम् । या[12]चामहे[13] ।

**पुरुष्टुतस्य धामभिः शतेन महयामसि । इन्द्रस्य चर्षणीधृतः ॥ ४ ॥**

पुरुष्टुतस्य[14] । बहुस्तुतस्य[15] । पृथक्संज्ञासंज्ञितैः शते[16]न । तनू[17]भिः । पू[18]जां कुर्मो वयम् ।

---

१. M. omits अभि ॥ अस्मदभिमुखम् । अर्वाचीनम्—'विभाषाञ्चेरदिक्स्त्रियाम्' इति खप्रत्ययः । खस्येनादेशः Sy.

२. अस्मदभिमतफलसम्पादनेन शोभनम् Sy.

३. कुर्वन्तु । कृण्वन्तु—'कृवि हिंसाकरणयोः' इत्यस्य लोटि रूपम् । आमन्त्रितस्याविद्यमानवत्त्वेन पादादित्वादनिघातः । प्रत्ययस्वरः Sy.

४. मदनः M.

५. त्वदीयं दर्शनम्, अस्मास्वनुग्रहदृष्टिं कुर्वन्तु । चक्षुः—'चक्षेः शिच्च' इत्युसिप्रत्ययः । शिद्वद्भावात् ख्याञादेशाभावः । 'नित्' इत्यनुवृत्तेः आद्युदात्तः Sy.

६. ०प्रज्ञेन P. हे शतक्रतो ! शतं क्रतवो यस्यासौ शतक्रतुः Sy.

७. वहन्ति यज्ञियां धुरमिति वाघतः स्तोतारः । वाघतः—'वह प्रापणे' 'संश्चद्वेहत्—' इत्यादिना अतिप्रत्ययान्तत्वेन निपातनादुपधावृद्धिः । हकारस्य घत्वम् । प्रत्ययस्वरः Sy.

८. Omitted in P.

९. शक्रवज्रहस्तादीनि नामधेयानि । यद्वा तदुपलक्षितानि बलानि Sy.

१०. स्तुतिलक्षणाभिर्वाग्भिः Sy.

११. P. omits अभि ॥ मातिर्मानो गर्वः । अभितो मानो येषां तेऽभिमातयः शत्रवः । तेषां (सह्यं) सहनमेव स(सा)ह्यम् । तस्मिन् युद्धेऽस्माकमुपस्थिते सति Sy.

१२. M. adds नेन्द्रं. . .न्तेऽपि तर्हि नामान्युच्चरन्त इतीत्यमुक्तमिति । P. adds नेन्द्रृष्ट्वा वा आहत्याय शत्रुचरन्त इतीत्यर्थमुक्तमिति ॥ वयं याचामहे । ईमहे—'ई कान्त्यादिषु' । व्यत्ययेनात्मनेपदम् । अदादित्वाच्छपो लुक् । निघातः Sy.

१३. VM. ignores शतक्रतो !

१४. हे इन्द्र ! Sy.

१५. पुरुभिः बहुभिः स्तोतृभिः स्तुतस्य । पुरुष्टुतस्य—'ष्टुञ् स्तुतौ', कर्मणि क्तः । थाथादिस्वरः । संहितायां 'स्तुतस्तोमयोश्छन्दसि' इति षत्वम् Sy.

१६. अपरिमितसंख्याकैः Sy.

१७. तनुभिः M. तेजोभिर्युक्तस्य Sy.

१८. महयामः स्तोत्रं कुर्मः । महयामसि—'मह पूजायाम्' इत्यस्य लटि इदन्तो मसिः । निघातः Sy.

कीर्तितैरिन्द्रस्य । मनुष्यस्य धृतः[1] ।

**इन्द्रं वृत्राय हन्तवे पुरुहूतमुप ब्रुवे । भरेषु वाजसातये ॥ ५ ॥**

इन्द्रं वृत्राय[2] । [3]इन्द्रम्[4] । उपद्रवस्य[5] । हननाय[6] । बहुभि[7]राहूतम्[8] । उपस्तौमि[9] । सङ्ग्रामेषु[10] । अन्नभजनाय[11] ।

**वाजेषु सासहिर्भव त्वामीमहे शतक्रतो । इन्द्रं वृत्राय हन्तवे ॥ ६ ॥**

वाजेषु । सङ्ग्रामेषु । अभिभविता[12] । भव । त्वाम् । याचामहे[13] । शतकर्मन्[14] ! इन्द्र ! शत्रुम्[15] । हन्तुम्[16] ।

---

१. वृतः P. चर्षणीनां मनुष्याणां कर्मानुष्ठातॄणामभिमतफलसम्पादनेन धारकस्य इन्द्रस्य । यद्वा आकृषन्ति सर्वमनेनेति चर्षणि बलम् । तद्धारकस्य तव । चर्षणीधृतः—'कृष आकर्षणे' 'कृषेरादेश्च चः' (Uṇādi 2. 261.) इत्यनिप्रत्ययः । ककारस्य चकारादेशः । यद्वा 'कृष विलेखने' । कर्षन्तीति चर्षणयो मनुष्याः । 'धृ धारणे' । क्विप् । कृदुत्तरपदस्वरः Sy.

२. Omitted in P.

३. हे इन्द्र ! Sy.

४. बलवन्तं त्वाम् Sy.

५. उप M. वृत्रनामकमसुरम् । वृत्राय—'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानम् Sy.

६. राय M. हन्तुम् । हन्तवे—हन्तेस्तुमर्थे तवेन्प्रत्ययः । नित्स्वरः Sy.

७. पुरुभिः Sy.

८. ०राभूत P.

९. सोमपानार्थं विश्वामित्रोऽहमाह्वयामि । उपब्रुवे—'ब्रूञ् व्यक्तायां वाचि' इत्यस्य लट्युत्तम इटि रूपम् । निघातः Sy.

१०. युद्धेषु Sy.

११. अन्नोपलक्षितधनलाभाय । वाजसातये—सननं सातिः, वाजस्य सातिर्वाजसातिः । दासीभारादित्वात्पूर्वपदप्रकृतिस्वरः Sy.

१२. शत्रूणामभिभविता । सासहिः—'सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ वक्तव्यौ' इति किप्रत्ययः । तस्य स्वरः Sy.

१३. य याचा० M. प्रार्थयामहे Sy.

१४. शतक्रतो ! Sy.

१५. वृत्रम् । वृत्राय कर्मणः सम्प्रदान(त्व)म् Sy.

१६. हन्तवे—तुमर्थे तवेन्प्रत्ययः Sy.

**द्युम्नेषु पृतनाज्ये पृत्सुतूर्षु श्रवःसु च । इन्द्र साक्ष्वाभिमातिषु ॥ ७ ॥**

द्युम्नेषु । अन्नेषु[1] । 'पृतनाज्यम्'[2] इति सङ्ग्राम[3]नाम । सेनाविषयेषु[4] तरणेषु । कीर्तिषु[5] । सक्तो[6] भव । इन्द्र ! ये च त्वामभि[7]मन्यन्ते तेषु । चेति ।

**शुष्मिन्तमं न ऊतये द्युम्निनं पाहि जागृविम् । इन्द्र सोमं शतक्रतो ॥ ८ ॥**

[8]शुष्मिन्तमम् । बलवत्तमम्[9] । अस्माकम् । रक्षणाय । धनाद्यन्न[10]युक्तम् । पिब[11] । जागरण[12]शीळम्=उद्भूतरसम् । इन्द्र ! सोमम्[13] । शतकर्मन्[14] ।

---

१. Omitted in P. P. adds here चेरन्त इति रथंमुत्तरमिति पुरुष्टुतस्य ॥ द्योतमानेषु धनेषु प्राप्तव्येष्वभिमानिनो ये सपत्नाः Sy.

२. M. omits पृतनाज्य ॥ पृतनानामजनं गमनं यस्मिन्निति पृतनाज्यं संग्रामः । तस्मिन् संग्रामे । पृतनाज्ये—'अज गतिक्षेपणयोः' इत्यस्य ण्यन्तस्य 'अचो यत्' । पृतनानामाज्यं पृतनाज्यम् । एकादेशस्वरः Sy.

३. Ngh. II. 17, N. 9. 24.

४. तरणशीलेषु शूरेषु । पृत्सुतूर्षु—पृतनाशब्दस्य सौ परतः 'मांस्पृत्स्नूनामुपसंख्यानम्' इति पृदादेशः । 'ञित्वरा सम्भ्रमे' । ताच्छीलिकः क्विप् । 'ज्वरत्वर—' इत्यादिना ऊठ् । 'तत्पुरुषे कृति बहुलम्' इति पूर्वपदस्य सप्तम्या अलुक् । कृदुत्तरपदस्वरः Sy.

५. बलेषु च येऽभिमानिनः सपत्नाः सन्ति तान् Sy.

६. सत्तो P. अभिभव । साक्ष्व—'षह मर्षणे' इत्यस्य लोटि 'बहुलं छन्दसि' इति शपो लुक् । ढत्वकत्वे । दीर्घश्छान्दसः Sy.

७. तथाभिमातिषु सर्वतो गर्वयुक्तेषु शत्रुषु पुरुषेषु ये सपत्नाः तांश्चाभिभव Sy.

८. चातुर्विंशिकेऽहनि माध्यन्दिने सवने ब्राह्मणाच्छंसिशस्त्रे 'शुष्मिन्तमं न ऊतये' इति तृचो वैकल्पिकोऽनुरूपः । सूत्रितञ्च—"शुष्मिन्तमं न ऊतये श्रायन्त इव सूर्यम्" (ASS. 7. 4.) इति Sy.

९. यद ब० M. बलवतां मध्येऽतिशयेन बलवन्तम् । यद्वा शुष्मिन्तमं शत्रूणां शोषकतमम् Sy.

१०. M. omits द्य ॥ दीप्तिमन्तम् । यद्वा द्युम्निनं यशस्विनम् Sy.

११. अत्रागत्य पिब । पाहि—पाते (पिबते) र्लोटि 'बहुलं छन्दसि' इति शपो लुक् । निघातः Sy.

१२. पीतः सोमो जागृविः स्वप्ननिवारक इति तादृशम् । जागृविः—क्विन्प्रत्ययान्तः । नित्त्वादाद्युदात्तः Sy.

१३. अस्माकं सम्बन्धिनं सोमम् Sy.

१४. शतक्रतो ! Sy.

**इन्द्रि॒याणि॑ शतक्रतो॒ या ते॒ जने॑षु प॒ञ्चसु॑ । इन्द्र॒ तानि॑ त॒ आ वृ॑णे ॥ ९ ॥**

इन्द्रियाणि । निषाद[1]पञ्चमेषु । चतुर्षु वर्णेषु[2] । यानि । त्वया[3] दीयन्ते । बलानि, स्तोतृष्वथवा[4], तत्रास्य[5] बलानि व्यासक्तानि[6] तिष्ठन्ति । इन्द्र[7] ! त्वदीयानि[8] । सर्वाण्येव तानि[9] । अहमावृण[10] इति[11] ।

**अग॑न्निन्द्र॒ श्रवो॑ बृ॒हद्द्यु॒म्नं द॑धिष्व दु॒ष्टर॑म् । उत्ते॒ शुष्मं॑ तिरामसि ॥ १० ॥**

अगन्निन्द्र । आगतम्[12] । इन्द्र[13] ! बृहत्[14] । अन्नम्[15] । द्योतनसाधनम्[16] । तज्जठरे धारय[17] । शत्रुभिर्[18]दुष्टरम्[19] । वर्धयामः[20] । तव[21] । बलं[22] सोमेन[23] ।

---

१. पञ्चसु जनेषु गन्धर्वाः पितरो देवा असुरा रक्षांसि इत्येषु Sy.

२. वर्णं P.

३. तव सम्बन्धिषु Sy.

४. M. omits षवा ॥ रूपग्रहणादिसामर्थ्यानि स्थितानि । इन्द्रियाणि 'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा' इति घच्प्रत्ययान्तत्वेन निपातनादन्तोदात्तः Sy.

५. M. omits स्य ।

६. आस० P.

७. शतक्रतो ! हे इन्द्र ! Sy.

८. त्वया नि P.

९. इन्द्रियाणि Sy.

१०. सम्भजे । यद्वा पञ्चजनेषु निषादपञ्चमेषु चतुर्षु जनेषु यानीन्द्रियाणि सामर्थ्यानि तानि त्वदीयान्यहमावृणे । 'वृङ् सम्भक्तौ' इत्यस्य लटि रूपम् । निघातः Sy.

११. VM. ignores शतक्रतो.

१२. अगत् P. त्वां गच्छतु । अगन्—गमेर्लङि 'बहुलं छन्दसि' इति शपो लुक् । हल्ङ्यादिना तिलोपः । 'मो नो धातोः' । अडागमस्वरः Sy.

१३. हे वृत्रहन् ! Sy.

१४. महत् Sy.

१५. सोमलक्षणमस्माभिर्दीयमानमन्नम् Sy.

१६. द्योतनं द्यो० P. धनम् Sy.

१७. साधय M. अस्मभ्यं प्रयच्छ । दधिष्व—दधातेर्लोटि 'छन्दस्युभयथा' इति थास आर्धधातुकत्वादिडागमः । निघातः Sy.

१८. ०भि दु० P.

१९. M. omits रम् ॥ दुस्तरं शत्रुभिस्तरितुमशक्यम् । दुष्टरम्—तरतेः कृच्छ्रार्थे खल् । सुषामादित्वात्संहितायां षत्वम् । लित्स्वरः Sy.

२०. M. omits व ॥ सोमाज्यादिभिर्वर्धयामः । तिरामसि—इदन्तो मसिः । निघातः Sy.

२१. त्वदीयम् Sy.

२२. बलमुत्कृष्टम् Sy.

२३. VM. ignores उत् ॥ उत्कृष्टम् Sy.

अर्वावतो न आ गह्यथो शक्र परावतः ।
उ लोको यस्ते अद्रिव इन्द्रेह तत आ गहि ॥ ११ ॥

अर्वावतः । आसन्नात्[१] देशात् । अस्मान्[२] । आगच्छ । अपिच[३] । शक्र[४] ! दूरात्[५] । किं[६] बहुना । यत्[७] । तव । स्थानम्[८] । इन्द्र ! इह[९] । ततः[१०] । आगच्छ[११] ।[१२]

## III. 38.

अभि तष्टेव दीधया मनीषामत्यो न वाजी सुधुरो जिहानः ।
अभि प्रियाणि मर्मृशत्पराणि कवीँरिच्छामि संदृशे सुमेधाः ॥ १ ॥

अभि[१३] तष्टेव[१४] ॥[१५] प्रजा[१६]पतिर्वै[१७]श्वामित्रो वाच्यो[१८] वा ॥ यथा तष्टा[१९] काष्ठं संस्करोति । एवं त्वं[२०]

---

१. ०न्नान् M. अर्वाचीनात् समीपाद्देशात् Sy. २. अस्मानभिलक्ष्य Sy.

३. तिपि P.

४. शक्रं M. बलवन् ! Sy.

५. अतिदूराद्देशात् । परावतः—'उपसर्गाच्छन्दसि धात्वर्थे' इति वतिः । प्रत्ययस्वरः Sy.

६. VM. seems to explain उ by किं बहुना or he ignores it. S. explains उ by उत्तमः ।

७. यः Sy. ८. उत्तमो लोकोऽस्ति Sy.

९. अस्मिन् देवयजने देशे Sy.

१०. तस्मादपि लोकात् । ततः—'पञ्चम्यास्तसिल्' इति तसिल् । लित्स्वरः Sy.

११. सोमपानार्थमागच्छ । गहि—'गमेर्लोटि रूपम् Sy.

१२. VM. ignores अद्रिवः ॥ अत्ति भक्षयति शत्रूनिति अद्रिर्वज्रः तद्वन् ! हे इन्द्र ! 'मतुवसो रुः' इति रुः Sy.

१३. 'अभि तष्टेव' इति दशर्चं नवमं सूक्तम् । अत्रानुक्रमणिका 'अभि तष्टेव दश प्रजापतिः स वैश्वामित्रो वाच्यो वा द्वौ वा तौ न वैकोऽपि (KSA. 18. 38. p. 16.) इति । विश्वामित्रगोत्रः प्रजापतिर्वाचः पुत्रः प्रजापतिर्वा ऋषिः । तावुभावपि समुच्चितावस्य सूक्तस्य ऋषी इति द्वितीयः पक्षः । अथवा नोभावपि किन्तु विश्वामित्र एवेति तृतीयः पक्षः । त्रिष्टुप् छन्दः । इन्द्रो देवता । चातुर्विंशिकेऽहनि माध्यन्दिने सवनेऽच्छावाकशस्त्रे 'अभि तष्टेव' इत्यहरहःशस्यनामकं सूक्तम् । सूत्रितञ्च—'उदु ब्रह्माण्यभि तष्टेवेतीतरावहरहःशस्ये' (ASS. 7. 4.) इति । एवं सर्वत्राहर्गणेषु द्वितीयादिष्वहस्सु माध्यन्दिने सवनेऽच्छावाकशस्त्र एतत् सूक्तम् Sy.

१४. Omitted in P.

१५. यजमानः स्तोतारं प्रति ब्रूते—हे स्तोतः ! Sy. १६. M. omits प्रजा ।

१७. ०र्वो श्वा० P. १८. वाप्यो P.

१९. तेक्षा P. तत्र दृष्टान्तः, यथा तष्टा तक्षणेन काष्ठं संस्करोति तद्वत् । तष्टेव—'तक्षू त्वक्षू तनूकरणे' इत्यस्य तृनि रूपम् । नित्स्वरः Sy.

स्तोतुस्तव[1] बुद्धिम्[2] । इन्द्रस्तवार्थं[3]मभिदीपय—तीक्ष्णां[4] कुरु । अतनशीलः[5] । अश्वः[6] । इव । सुष्ठु धूर्व[7]हनक्षमः[8] । पन्थानं[9] गच्छन्, सोऽपि तीक्ष्णबुद्धि[10]र्भवति गमनाय । अथ तया करोमीति वदति[11] अभि[12] प्रियाणीति[13] इन्द्रस्य प्रियतमानि । उत्तमानि[14] कर्माणि स्तोतुम् । बुद्ध्या[15] विमृशन्[16] । कवीन्[17] । अभिगच्छामि । सन्दर्शनाय[18] । प्राज्ञः[19], 'ये[20] वै ते न ऋषयः पूर्वे प्रेतास्ते[21] वै[22] कवयः[23]' इत्युक्तमिति[24] ।

---

१. स्तोतस्त० D. M.

२. बुद्धम् M. इन्द्रविषयां स्तुतिम् Sy.

३. ०वार्त्थं० P.

४. सर्वतो दीप्तां कुरु । दीपय—'दीधीङ् दीप्तिदेवनयोः' इत्यस्यान्तर्भावितण्यर्थस्य लोटि शपो 'बहुलं छन्दसि' इति लुगभावः । व्यत्ययेन परस्मैपदम् Sy.

५. अश्वः Sy. ६. वेगवान् Sy.

७. पूर्व० M. शोभनया धुरान्वितः । सुधुरः—'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् Sy.

८. M. omits क्षमः ।

९. जिहानः कर्मणि प्रवर्तमानः । जिहानः 'ओहाङ् गतौ' इत्यस्य शानचि 'भृञामित्' इत्यभ्यासस्येत्वम् । चित्त्वादन्तोदात्तत्वे प्राप्ते 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् Sy. १०. ०क्ष्णा बु० M.

११. वेद० M. १२. अ M. अः P.

१३. प्रीणि P. १४. उ P. उत्तमानि यद्वा उत्तरेष्वहःसु क्रियमाणानि कर्माणि Sy. १५. बुध्य P.

१६. अत्यर्थमभिमृशन् । मर्मृशत्—'मृश आमर्शने' यङ्लुकि 'रुग्रिकौ च लुकि' इत्यभ्यासस्य रुगागमः । तदन्ताच्छतरि रूपम् । 'नाभ्यस्ताच्छतुः' इति नुमभावः । अभ्यस्तस्वरः Sy.

१७. ये पूर्वमनुष्ठितयज्ञा देवभूयमगमन् ते कवयः । तान् Sy.

१८. संद्रष्टुम् । संदृशे—'दृशिर् प्रेक्षणे' इत्यस्मात्तुमर्थे 'दृशे विख्ये च' इति केन्प्रत्ययान्तत्वेन निपातनादाद्युदात्तः । समासे कृदुत्तरपदस्वरः Sy.

१९. प्रज्ञः P. शोभनमेधावानहम् । सुमेधाः—'नित्यमसिच् प्रजामेधयोः' इत्यसिच् प्रत्ययः । चित्स्वरः Sy.

२०. यो M. २१. ०तस्ते P.

२२. Omitted in P.

२३. AB. VI. 20.

२४. उक्तार्थे ब्राह्मणम्—'अभि तष्टेव दीधया मनीषामित्यच्छावाकोऽहरहः शंसत्यभिवत्तत्यं रूपमभि प्रियाणि मर्मृशत्पराणीति यान्येव पराण्यहानि तानि प्रियाणि तान्येव तदभिमर्मृशतो यन्त्यभ्यारभमाणाः परो वा अस्माल्लोकात्स्वर्गो लोकस्तमेव तदभिवदति कवीँरिच्छामि संदृशे सुमेधा इति ये वै ते न ऋषयः पूर्वे प्रेतास्ते वै कवयस्तानेव तदभ्यतिवदति' । (AB. 6. 20.) Sy.

इनोत पृच्छ जनिमा कवीनां मनोधृतः सुकृतस्तक्षत द्याम् ।
इमा उ ते प्रण्यो३ वर्धमाना मनोवाता अध नु धर्मणि ग्मन् ॥ २ ॥

इनोत[1] । अपिच[2] । देवानीश्वरान्[3] । पृच्छ[4] । पूर्वेषां प्रेतानां कवीनाम्[5] । जन्मानि[6] । मनसो धारयितारः[7] । शोभनकर्मणः[8] कर्तारो देवाः । द्युलोकम्[9] । कृतवन्तः[10], कवयश्च प्रेतास्तत्र[11] वर्तन्ते । इमाः स्तुतयः[12] । त्वदीयाः[13] । इन्द्रं प्रति प्रणीयमानाः[14] । वर्धमाना[15] भवन्ति[16] । अथ[17] । अवणार्थं[18] मनसः[19] सदृशगतयः[20] । त्वां धारयितुम्[21] । क्षिप्रम् । आगताः[22], तान्[23] पृच्छ[24]ेति[25] ।

नि षीमिदत्र गुह्या दधाना उत क्षत्राय रोदसी समञ्जन् ।
सं मात्राभिर्ममिरे येमुरुर्वी अन्तर्मही समृते धायसे धुः ॥ ३ ॥

नि धीमिवत्र[26] । अस्मिन्[27] लोके । सर्वतः[28] । एव[29] । दुर्निरूपकारणानि[30] नानाजातीयकानि[31]

---

१. ०नोत् P.
२. उत इत्यामन्त्रणे—हे इन्द्र ! Sy.
३. ईश्वरान् गुरून् Sy.
४. पृच्छ । 'प्रच्छ ज्ञीप्सायाम्' इत्यस्य लोटि तुदादित्वात् शः । तस्य ङित्त्वाद् ग्रहिज्यादिना सम्प्रसारणम् । निघातः Sy.
५. सुकृतकर्मणां देवभूयं गतानाम् Sy.
६. जन्म । केन कर्मणा दिवं गताः कुतो वा तेषामुत्पत्तिः इत्येतमर्थम् Sy.
७. संयतमनस्काः Sy.
८. ०कर्माणः M. and D. शोभनकर्माणः सन्तः Sy. ९. दिवम् Sy.
१०. अकुर्वन् Sy.
११. ०स्तोत्र P.
१२. अस्माभिः क्रियमाणाः स्तुतयः Sy.
१३. वदी० P. त्वदर्थम् Sy.
१४. प्रण्यः । 'णीञ् प्रापणे' इत्यस्मादौणादिकः कर्मणि क्विप् । सर्वविधीनां छन्दसि विकल्पितत्वादियङादेशं बाधित्वा यणादेशः । 'उदात्तस्वरितयोः—' इति स्वरितत्वम् Sy.
१५. त्वां वर्धयन्त्यः Sy.
१६. ०वत्यः P.
१७. उत M. तत् P. अथेदानीम् Sy.
१८. ०णार्त्थं P.
१९. मनः P. मनोवेगाः Sy.
२०. ०शमयं P.
२१. ०यितुः P. धर्मणि अस्मिन् यज्ञे Sy.
२२. त्वां गच्छन्तु । ग्मन्—गमेर्लङि 'बहुलं छन्दसि' इति शपो लुक् । ऋेर्ङित्त्वात् 'गमहन—'इत्यादिना उपधालोपः । निघातः Sy.
२३. P. adds प्रति after तान् ।
२४. पृच्छति M.
२५. VM. ignores उ ॥ उ सर्वत्र प्रसिद्धयर्थः Sy. २६. धीं P.
२७. भूलोके Sy. २८. ०र्वकः M.
२९. इदवधारणार्थे Sy.
३०. गुह्यानि । गुह्या—गुहायां भवानि । भवार्थे यत् । 'यतोऽनावः' इत्याद्युदात्तः Sy.
३१. Omitted in P.

कर्माणि । कुर्वन्तः[१] । अपिच । प्राणिनां धनार्थम्[२] । द्यावापृथिवी[३] । निसमञ्जन्[४], इतरेतराश्लिष्टे[५] अकुर्वन्, भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः, इति[६], तथा कृतवन्त इत्यर्थः[७] । दृश्यमानाभिर्मा-त्राभिः[८] प्रमाणैः[९] । द्यां च पृथिवीं च निर्मितवन्तः[१०] । तथा[११]ऽयच्छंश्च[१२], यमनं[१३] धारणं[१४] च । विस्तीर्णयोः[१५] । तथा[१६] महती । सङ्गते[१७], द्यावा[१८]पृथिव्यौ[१९], अन्तरिक्षेण[२०] । अन्तः । दधुः[२१] । सर्वेषां[२२] धारणार्थमिति[२३] ।

**आतिष्ठन्तं परि विश्वे अभूषञ्छ्रियो वसानश्चरति स्वरोचिः ।**
**महत्तद्वृष्णो असुरस्य नामा विश्वरूपो अमृतानि तस्थौ ॥ ४ ॥**

आ तिष्ठन्तम्[२४] । हवींषि प्रत्यागच्छन्तमिन्द्रम्[२५] । विश्वे देवाः[२६] । परितः । भवन्ति[२७] ।

---

१. कुर्वाणा एते कवयः । दधानाः—दधातेः शानचि रूपम् । अभ्यस्तस्वरः Sy.
२. ०नार्थम् P. बलाय धनाय वा Sy.
३. द्यावापृथिव्यौ Sy.
४. ०मञ्ज M. ओषधीभिः पृथिवीं देवैश्च दिवं सङ्गतामकार्षुः । अञ्जन्—'अञ्जू व्यक्तिम्रक्षण(कान्ति)गतिषु' इत्यस्य लङि 'श्नसोरल्लोपः' । निघातः Sy.
५. ०तरं श्लि M. ०तरासंश्लि० P.
६. इति is missing in M. RV. I. 164. 51.
७. ०त्यर्थः P.
८. मीयन्ते मान्तीति वा मात्राः शिलोच्चयाः । ताभिः । मात्राभिः—'मा माने', 'माङ् माने' वा । 'हुयाम—' इत्यादिना त्रन्-प्रत्ययः । नित्स्वरः Sy.
९. ०माणे P.
१०. ०वन्तस् M. ते रोदस्यावियत्तया परिच्छिन्ने चक्रुश्च । ममिरे—'माङ् माने' इत्यस्य लिटि रूपम् । 'चादिलोपे विभाषा' इति न निघातः Sy.
११. मया० M.
१२. नियमितवन्तः । विष्टम्भकेनान्तरिक्षे-णान्तः उदयच्छन् । येमुः—'यम उप-रमे' इत्यस्य लिटयुसि रूपम् । तिङ्ङत्तर-त्वादनिघातः Sy.
१३. ०मनं P. १४. धकार P.
१५. विस्तीर्णे is suggested for विस्तीर्णयोः ।
१६. ०थान्म० P. महत्यौ is suggested for महती ।
१७. परस्परं सङ्गते Sy.
१८. M. omits द्यावा ।
१९. ०थिव्यां M.
२०. तेरि० M.
२१. व्यधुः । धुः—दधातेर्लुङि रूपम् Sy.
२२. सर्वे P.
२३. ०णार्थं० P. तयोर्धारणार्थमन्तरिक्षम् । धायसे—'वहिहाधाञ्भ्यश्छन्दसि' इत्य-सुन् । नित्स्वरः Sy.
२४. इन्द्रस्य वृष्टिकर्मोच्यते Mah., U.
२५. रथमातिष्ठन्तमिन्द्रम् Sy. समन्तात् स्थितमिन्द्रम् Mah. ग्रीष्मान्ते मध्यम-स्थान आतिष्ठन्तम् U.
२६. सर्वे कवयः । विश्वे—जसः शी Sy. सर्वे देवा मध्यम(माध्यमि)का देव-गणाः U.
२७. अलमकुर्वन् । अभूषन्—'भूष अलङ्कारे' इत्यस्य लङि रूपम् Sy. परिरक्षितवन्तः Mah., U.

अथायं शोभाः[1] । वसानः[2] । यज्ञं प्रति गच्छति[3] । स्वदीप्तिः[4] । महत्[5] । तदिदम्[6] । इन्द्रस्य[7] । मनुष्यान्[8] प्रति गमनमागमनम्[9] । बलवतः[10] । सोऽयं[11] यज्ञे । सोमान्[12] । आतिष्ठति[13] ।

असू॑त॒ पूर्वो॑ वृष॒भो ज्याया॑नि॒मा अ॑स्य शु॒रुधः॑ सन्ति पू॒र्वीः ।
दिवो॑ नपाता वि॒दथ॑स्य धी॒भिः क्ष॒त्रं रा॑जाना प्र॒दिवो॑ दधाथे ॥ ५ ॥

असूत । असूत[14] । पूर्वः[15] । कामानां वर्षिता[16] । वृद्धतरः[17] । उदकानी[18]मानि[19] । अस्य ।

---

१. दीप्तीः Sy. देवानां दीप्तीः Mah. स तु मध्यमस्थानः सर्वेषां देवगणानां श्रियः U.

२. आच्छादयन्सोऽयमिन्द्रः । वसानः—'वस आच्छादने' इत्यस्य शानचि रूपम् । तस्य लसार्वधातुकस्वरे धातुस्वरः Sy. आच्छादयन् Mah., U.

३. गच्छ M. P. adds रि after गच्छति ॥ सर्वत्र वर्तते Sy. स इन्द्रश्चरति सर्वत्र गच्छति Mah. स्वेच्छया चरति U.

४. दीप्तिः M. स्वं दीप्ति P. स्वमेव रोचिर्यस्यासौ स्वरोचिः । स्वप्रभयैव दीप्यमान इत्यर्थः Sy. स्वं रोचिर्यस्य सोऽनन्याधीनदीप्तिः Mah. अपराधीनदीप्तिः U.

५. महद् आश्चर्योपेतं वर्तते Sy.

६. तादृशमननुभूतपूर्वम् Sy. प्रसिद्धम् Mah.

७. कामानां वर्षितुः Sy. वर्षितुः U.

८. प्र P.

९. ०गमनमागमनम् seems to be the explanation of नाम ॥ नमयति सर्वानिनेन शत्रूनिति नाम कर्म । यद्वा नम्यते सर्वैर्नमस्क्रियत इति नाम इन्द्रस्य शरीरं कर्म वा । नाम—'णमु प्रह्वत्वे' इत्यस्मात् 'नामन्सीमन्—' इत्यादिना मनिन्प्रत्ययान्तत्वेन निपातनादाद्युदात्तः Sy. नाम वासवो वृत्रहेत्यादि Mah. नमनं प्रह्वीभावः U.

१०. असुरस्य । अस्यति प्रेरयति सर्वानन्तर्यामितयेत्यसुरः । तस्य Sy. असवो विद्यन्ते यस्य सोऽसुरस्तस्य प्राणवतः सावधानस्य प्रज्ञावत इत्यर्थः Mah. असुरस्य प्रज्ञानवतः U.

११. It seems to be a substitute of विश्वरूपः ॥ नानाविधरूपतां भजमानः स इन्द्रः । विश्वरूप इति तस्य संज्ञा । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् Sy. विश्वं रूपयति निरूपयति विश्वरूप इन्द्रः Mah., U.

१२. वरुणात्मना जलानि । Sy. यतः जलानि Mah. उदकानि उदकेषु पातयितव्येषु U.

१३. अनाति० M. अधितिष्ठति । तस्थौ—तिष्ठतेर्लिटि णलि रूपम् Sy. वृष्टये आस्थितवान् Mah. This stanza =YV. 33. 22.

१४. अपः ससर्ज । असूत—'षूङ् प्राणिगर्भविमोचने' इत्यस्य लङि रूपम् । अडागमस्वरः Sy. १५. चिरन्तनः Sy.

१६. कामानां वर्धकः Sy.

१७. अत एव ज्यायान् इन्द्रः । ज्यायान्—प्रशस्यशब्दाद् ईयसुनि 'ज्य च' (Pa. 5. 3. 61.) इति ज्यादेशः । 'ज्यादादीयसः (Pa. 6. 4. 160.) इतीयस आदेरीकारस्य आकारादेशः । नित्त्वादाद्युदात्तः Sy. १८. ०दकानि० M. ०कानि मा० P. इमाः अनेन सृष्टा आपः Sy.

१९. ०माहि M.

शुचो[१] रोधयित्र्यः[२]। पूर्व्यं[३] आपः[४]। सन्ति[५]। दिवः। उदितौ[६]! इन्द्रावरुणौ[७]! यज्ञस्य[८]। कर्मभि-[९]राप्यायितौ। पुराणम्[१०]। बलम्[११]। धारयेथे[१२]।

त्रीणि॑ राजाना वि॒दथे॑ पु॒रूणि॒ परि॒ विश्वा॑नि भूषथ॒ः सदां॑सि ।
अप॑श्य॒मत्र॒ मन॑सा जग॒न्वान्व्र॒ते ग॑न्ध॒र्वाँ अपि॑ वा॒युके॑शान् ॥ ६ ॥

त्रीणि राजाना[१३]। हे[१४] राजानौ! यज्ञे[१५]। त्रीणि। बहुयज्ञविषयत्वाद्[१६] बहुसंख्यानि[१७] सवनानि। परिभवथः[१८]। तथा विश्वानि[१९] च। सदांसि[२०]। किंच[२१], अपश्यम्[२२]। एषु सदःसु। मनसा[२३], जगन्वान्[२४]=मनस्तत्र प्रवेशयन्[२५]। यज्ञे[२६]। गन्धर्वान्[२७] स्तोतॄन्। अपि[२८]। वायुकेशान्[२९] नामेति।

---

१. Omitted in M. सुचो P. पिपासायाः Sy.
२. ०यित्र्या P. शुरुधः—पृषोदरादिः Sy.
३. पूर्वः P. बह्वयः Sy.
४. आ P. ५. सवन्ति P. भवन्ति Sy.
६. उदितौ seems to be the explanation of नपाता ॥ न पातयितारौ! नपाता—'नभ्राण्नपात्' इति निपातनान्नञः प्रकृतिभावः । आमन्त्रितत्वात् निघातः Sy.
७. इन्द्र व० P. हे राजानौ ! राजाना—आमन्त्रितत्वान्निघातः Sy.
८. यज्ञकारिणः स्तोतुः Sy.
९. स्तुतिभिः । धीभिः—'सावेकाचः' इति विभक्तेरुदात्तत्वम् Sy.
१०. प्रकर्षेण द्योतमानस्य Sy. प्रदिवः पुराणनाम Ngh. 3. 27.
११. धनम् Sy. १२. अस्मभ्यं दातुम् । दधाथे—दधातेर्लटि रूपम् । निघातः Sy. १३. Omitted in P.
१४. हो P. इन्द्रावरुणौ ! Sy.
१५. अस्मिन् यज्ञे Sy.
१६. M. omits विष । बहुसंख्यावि० P.
१७. यजनीयैः सोमादिभिः पूर्णानि Sy.
१८. सर्वतोऽलङ्कुरुथः । भूषथः—'भूष अलङ्कारे' इत्यस्य लटि रूपम् Sy.
१९. व्याप्तानि Sy.
२०. सवनानि Sy. २१. इति P.
२२. अवश्यम् P. अपश्यम्—'दृशिर् प्रेक्षणे' इत्यस्य लङि रूपम् । पादादित्वादनिघातः Sy. २३. मना M. मनस P.
२४. जगपान् M. जहन्वान् P. इन्द्र ! त्वं यज्ञं प्रति गतवानसि । जगन्वान्—गमेः क्वसौ 'विभाषा गमहनविदविशाम्' इतीटो विकल्पितत्वादत्रेडभावः । 'मो नो धातोः' । 'म्वोश्च' इति मकारस्य नकारः । प्रत्ययस्वरः Sy.
२५. शन् P. २६. यतोऽहं यज्ञे Sy.
२७. सोमरक्षकान् स्वानभ्राजादीन् । . . . ते च स्वानभ्राजादयः तैत्तिरीयके स्पष्टमभिहिताः—'स्वान॒भ्राजाङ्घारे॒ बम्भारे॒ हस्त॒ सुह॑स्त॒ कृशा॑नवे॒ते वः सोम॒क्रय॑णा-स्तान् रक्षध्वं मा वो दभन्' (TS. 1. 2. 7.) इति । गन्धर्वान्—'धृञ् धारणे' इत्यस्य गोशब्दे उपपदे 'गवि गन् धृञो वः' इति वप्रत्ययः । तत्सन्नियोगेन गोशब्दस्य गनादेशः । प्रत्ययस्वरः Sy.
२८. अपिः सम्भावनायाम् Sy.
२९. M. omits केशा ॥ वायुवच्चञ्चलरश्मीन् Sy.

**तदिन्न्वस्य वृषभस्य धेनोरा नामभिर्ममिरे सक्म्यं गोः ।**
**अन्यदन्यदसुर्यं१ वसाना नि मायिनो ममिरे रूपमस्मिन् ॥ ७ ॥**

तदिन्नु । तत् । अस्य[1] । वर्षितुः[2] । प्रीणयितुः । गमनशीलस्य[3] । युद्धनिमित्तमिन्द्रियम्[4] । स्तोतारः, उच्चरितैर्[5]नामभिः । अभिमुखम् । कुर्वन्ति[6] । तथाऽन्यदन्यत्[7] नानाविधम् । असुराणां स्वभूतम्[8] । रूपं[9] भीषणम् । आच्छादयन्तः । मायायुक्ता[10] असुराः[11] । अस्मिन्[12] इन्द्रनिमित्तम्[13] । कुर्वन्ति[14], विनाशयन्ति ।[15]

**तदिन्न्वस्य सवितुर्नकिर्मे हिरण्ययीममतिं यामशिश्रेत् ।**
**आ सुष्टुती रोदसी विश्वमिन्वे अपीव योषा जनिमानि वव्रे ॥ ८ ॥**

तदित् । तत्[16] । अस्य[17] । प्रेरयितु[18] रूपम् । न[19] मीयते, केनचिदपि । हिरण्यवर्णम्[20] । यत्[21] ।

---

१. इन्द्रस्यार्थम् Sy.
२. ये यजमानाः अभिमतफलप्रदस्य Sy.
३. विश्वायुर्विश्वव्यचा इत्यादिभिरुपलक्षितां गाम् । गोः—एकादेशस्वरः Sy.
४. युद्धमिति स्तमिन्द्र यं P. सक्म्यं सम्भजनार्हं तत्क्षीरादिकं हविः । सक्म्यम्—'युजिरुचितिजां कुश्च' (Uṇādi. 1. 143.) इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् सचतेर्मक्प्रत्ययः कुत्वं च । सचनं सक्मः । तत्र भव इत्यर्थे 'भवे छन्दसि' इति यत् । 'यतोऽनावः' इत्याद्युदात्तः Sy.
५. उद्वरि० P.
६. आदुहन्ति । धातूनामनेकार्थत्वात् । तेन च हविषा यज्ञमनुष्ठाय देवभूयं प्राप्तास्ते कवयः । ममिरे—'माङ् माने' । लिटि रूपम् । निघातः Sy.
७. नूतनम् Sy.
८. Omitted in M. असुर्यम्—असुरस्य स्वमित्यर्थे 'असुरस्य स्वम्' (Pa. 4. 4. 123.) इति यत् । तित्स्वरितः Sy.
९. स्वं स्वं रूपम् । 'रूपम्—'रूप रूपक्रियायाम्' । ण्यन्तः । 'खष्पशिल्पशष्पवाष्परूपपर्पतल्पाः' (Uṇādi. 3. 308.) इति यप्रत्ययान्तत्वेन निपातनात्पकारलोपोऽगुणत्वं च । रूपयति रूप्यते वेति रूपम् । प्रत्ययस्वरः Sy.
१०. ०युक्तो P. मायया स्वीकृतकामरूपाः । यद्वा मायिनः प्रज्ञावन्तः सन्तः Sy.
११. अस्मा रा P. १२. इन्द्रे Sy.
१३. इ P. १४. Omitted in P. इयत्तया परिच्छिद्य निदधुः Sy.
१५. VM. ignores इत् and नु ॥ इत्नूरणः । नु क्षिप्रम् Sy.
१६. तस्मात् Sy. १७. इन्द्रस्य Sy.
१८. ०यितुः रू० P. सर्वस्य जगतोऽन्तर्यामितया प्रेरयितुः Sy. १९. नि P. को वा परिच्छिनत्ति खलु । नकिः—निपातः Sy.
२०. सुवर्णमयीम् । हिरण्ययीम्—हिरण्यस्य विकारार्थे 'मयड्वैतयोः (Pa. 4. 3. 143.) इति मयट् । 'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि' इति निपातनात् मयटो मकारलोपः । टित्त्वात् 'टिड्ढाणञ्—' इति ङीप् । प्रत्ययस्वरः Sy.
२१. यां मदीयां दीप्तिम् Sy.

रूपम्[1] । असावाश्रयति[2] । किच यः[3] सुष्टुत्या[4] । विश्वव्यापिन्यौ[5] । द्यावापृथिव्यौ । अपि । वृणोति[6] ।
यथा[7] । जनयित्री स्त्री[8] । जातान्यपत्यानि[9] ।[10]

युवं प्रत्नस्यं साधथो महो यद्दैवी स्वस्तिः परिं णः स्यातम् ।
गोपाजिंह्वस्य तस्थुषो विरूंपा विश्वें पश्यन्ति मायिनः कृतानि ॥ ९ ॥

युवम्[11] । युवामिन्द्रावरुणौ[12] ! पुराणस्य[13] मम । तद्धनं[14] साधयतम्[15] ।
यत्[16] । महतः[17], भवत्याढ्यस्य[18][19] । अस्मानपि[20] । परितः । भवतम्[21] । गोप्तिः[22]

१. दीप्तिम् । अमतिम्—'अम गत्यादिषु' । 'अमेरतिः' इत्यतिप्रत्ययः । प्रत्ययस्वरः Sy.

२. ०सावाश्रय P. य आश्रयति सः । अशिश्रेत्—श्रयतेर्लङि 'बहुलं छन्दसि' इति शपः श्लुः । यद्वृत्तयोगादनिघातः Sy. ३. M. omits किच यः ।

४. सुष्टुत्या M. सुष्ठुत्य P. शोभनया स्तुत्या स्तुतः सन् । सुष्टुती—'सुपां सुलुक्' इति तृतीयायाः सवर्णदीर्घः Sy.

५. व्याविन्यौ P. सर्वस्य सन्तर्पयित्र्यौ । विश्वमिन्वे—'इवि व्याप्तिप्रीणनयोः' इत्यस्मात् 'कर्मण्यण्' । इदित्वान्नुम् । 'तत्पुरुषे कृति बहुलम्' इति द्वितीयाया अलुक् । कृदुत्तरपदस्वरः Sy.

६. वृणेति M. स्वकीयतया सर्वतो वृणुते । वव्रे—'वृञ् वरणे' इत्यस्य लिटि रूपम् Sy. ७. तत्र दृष्टान्तः Sy.

८. योषा—यौतेर्मिश्रीभावकर्मणः 'वृतॄवदिहनिकमिकषियुमुचिभ्यः सः' इति सप्रत्ययः । ग्रामादित्वादाद्युदात्तः Sy.

९. अपत्यानि वृणोति तद्वत् । जनिमानि—'जनी प्रादुर्भावे' 'हृजनिभ्यामिमनिन्' इतीमनिन्प्रत्ययो भूतकाले । नित्त्वादाद्युदात्तः Sy. १०. VM. ignores इत् । नु and मे ॥ नुः पूरणः, मे मम Sy. ११. Omitted in P.

१२. हे इन्द्रावरुणौ ! युवाम् । युवम्—युष्मच्छब्दस्य द्विवचने 'युवावौ द्विवचने' (Pa. 7. 2. 92.) इति युवादेशः । 'ङेप्रथमयोरम्' (Pa. 7. 1. 28.) इति सुपोऽमादेशः Sy.

१३. प्रत्नस्य स्तोतुः Sy. १४. धनं P.

१५. साधयथ! । साधथः—'साध संसिद्धौ' इत्यस्य ण्यन्तस्य लटि रूपम् । 'बहुलमन्यत्रापि' इति णेर्लुक् । निघातः Sy.

१६. कीदृशं तत् ? इत्यत आह यत् Sy.

१७. महतो P. महः तादृशं श्रेयः Sy.

१८. स्वस्तिः is fem. nom. s. and is qualified by दैवी. It means blessing and seems to be ignored by VM. or is explained as तद्धनम् ॥ श्रेयः स्वराज्यलक्षणम् Sy.

१९. VM. seems to ignore दैवी ॥ यदिदं देवसम्बन्धि । दैवी—'देवाद्यञञौ' इत्यञ्प्रत्ययः । ञित्स्वरः Sy.

२०. M. omits अ.

२१. रक्षकौ भवेतम् । स्यातम्—अस्तेर्लिङि रूपम् Sy. २२. गुप्तिः or गोप्त्री is suggested for गोप्तिः ॥ गोप्त्री जिह्वा मा बिभीतेत्येतादृशी वाग्यस्य स तथोक्तः । गोपाजिह्वस्य—'गुपू रक्षणे' इत्यस्य आयप्रत्ययान्तस्य क्विपि अतोलोपयलोपयोः कृतयो रूपं गोपा इति । बहुव्रीहौ पूर्वपदस्वरः Sy.

स्तोतृणां यस्य वाग्भवति । धनप्रदानात् स्थिरस्य । नानाविधानि । कर्माणि । सर्वे । पश्यन्ति । प्रज्ञावन्तः, सूक्तमिदमनिरुक्तं वृद्धैः ।

शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ १० ॥

[ शुनं हुवेम । ]

III.39.

इन्द्रं मतिर्हृद आ वच्यमानाच्छा पतिं स्तोमतष्टा जिगाति ।
या जागृविर्विदथे शस्यमानेन्द्र यत्ते जायते विद्धि तस्य ॥ १ ॥

इन्द्रं मतिः ॥ विश्वामित्रः ॥ इन्द्रम् । स्तुतिः । मदीयाद्धृदयात् । मयोच्यमाना ।

---

१. स्तोतृणां M. P. omits words between भवत्याढघस्य and स्तोतृणाम् २. यस्या P. ३. P. omits वाक् ४. ०प्रधाना० M.

५. स्थिरतरस्येन्द्रस्य । तस्थुषः—'ष्ठा गतिनिवृत्तौ' इत्यस्य क्वसौ 'वस्वेकाजाद्घसाम्' इति प्राप्तस्येटः सम्प्रसारणम् । 'सम्प्रसारणाश्रयं च बलीयः' इति सम्प्रसारणस्य बलीयस्त्वान्निवृत्तिः । 'वसोः सम्प्रसारणम् ।' प्रत्ययस्वरः Sy.

६. वृत्रहननादीनि Sy.

७. एवमिन्द्रस्य विश्वरूपत्वमुक्तम् । पश्यन्ति—'दृशिर् प्रेक्षणे' । निघातः Sy.

८. मायिनो देवाः Sy.

९. सूक्तमनि० P.

१०. M. adds विश्वामित्र । Cf. note 14. on III. 39. 1; P. adds सह चिन्त्यमिति ।

११. M. only has the *pratika* written in a different hand. The stanza has already been explained. See RV. III. 30. 22.

१२. अथ चतुर्थेऽनुवाके पञ्चदश सूक्तानि । तत्र 'इन्द्रं मतिः' इति नवर्चं प्रथमं सूक्तं वैश्वामित्रं त्रैष्टुभमैन्द्रम् । 'इन्द्रं मतिर्नव' (KSA. 18. 39. p. 16.) इत्यनुक्रान्तम् । सूक्तविनियोगो लिङ्गादवगन्तव्यः Sy.

१३. Omitted in P.

१४. Omitted in M. विश्वामित्रः स्तौति । हे इन्द्र ! Sy.

१५. मतिः—'मन्त्रे वृष—' इत्यादिना क्तिन्नुदात्तः Sy.

१६. हृदः—हृदयशब्दस्य 'पद्दन्नोमास्' (Pa. 6.1.63.) इत्यादिना हृदादेशः । 'ऊडिदम्—' इति विभक्तेरुदात्तत्वम् Sy.

१७. वच्यमाना—'वच परिभाषणे' इत्यस्य कर्मणि यक् । सम्प्रसारणाभावश्छान्दसः । प्रत्ययस्वरः Sy.

स्तोत्रिया[1] संख्याभिः[2] ? संस्कृता[3] । स्वामिन्[4] ! अभि[5] । गच्छति[6] । या स्तुतिः[7] । इन्द्रोद्बोधनाय जागर्ति[8] । यज्ञे । शस्यमाना[9] । तथा सति यत्[10] । त्वदर्थं[11] वचः[12] । मत्तो[13] जायते[14] । तत्[15] । विद्धि[16] ।[17]

**दिवश्चिदा पूर्व्या जायमाना वि जागृविर्विदथे शस्यमाना ।**
**भद्रा वस्त्राण्यर्जुना वसाना सेयमस्मे सनजा पित्र्या धीः ॥ २ ॥**

दिवश्चित्[18] । द्युलोकात्[19] । उदीयमाना[20] । पुरातनी[21] । जागरणशीला[22] । यज्ञे । शस्यमाना । कल्याणानि[23] । शुक्लानि[24] । वस्त्राणि । वसाना[25] । विभवति[26] । सा । इयम्[27] । अस्माकम्[28] ।

---

१. स्तोमैः is suggested for स्तोत्रिया। For स्तोमतष्टा please see VM's commentary on 3. 43. 2. Nos. 24, 25. स्तोमकारिभिः कृता। स्तोमतष्टा—'तक्षू त्वक्षू तनूकरणे' इत्यस्य कर्मणि निष्ठा । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् Sy.
२. सख्यभि P.
३. संस्तुता P.
४. स्वामिनं is suggested for स्वामिन् ॥ पतिं सर्वस्य जगतः स्वामिनं त्वाम् Sy.
५. अभिलक्ष्य Sy.
६. गच्छतु । जिगाति—'गा स्तुतौ छन्दसि' इति जुहोत्यादिः । 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम् । निघातः Sy.
७. मदीया स्तुतिः Sy.
८. स्तुत्यस्य तव जागरणं कुर्वाणा Sy.
९. शस्यमाना भवति Sy.
१०. य P. M. omits सति यत् ॥ स्तोत्रम् Sy.
११. दर्थ M. त्वर्त्थं P. हे इन्द्र ! ते त्वदर्थम् Sy.
१२. Omitted in M.
१३. मत्वतः P. M. repeats मत्तः ।
१४. जायते—'जनी प्रादुर्भावे' इत्यस्य लटि रूपम् । यद्वृत्तयोगादनिघातः Sy.
१५. त् P. तस्येति द्वितीयार्थे षष्ठी Sy.
१६. जानीहि । विद्धि—'विद ज्ञाने' इत्यस्य लोटि हेः' 'हुझल्भ्यो हेर्धिः' इति ध्यादेशः । वाक्यभेदादनिघातः Sy.
१७. VM. ignores आ and इन्द्र ॥ आ समन्तात् Sy.
१८. हे इन्द्र ! Sy.
१९. द्योतमानात् सूर्यात् । दिवः—दिवेः क्विप् । 'ऊडिदम्—'इति विभक्तेरुदात्तत्वम् Sy.
२०. जायमाना या स्तुतिलक्षणा वाक् Sy.
२१. पूर्वकाले भवा—उषःकालसम्बन्धिनी Sy.
२२. स्तुत्यस्य तव जागरणं कुर्वाणा Sy.
२३. शुक्लवर्णानि । अर्जुना—'अर्जेर्णिलुक् च (Uṇādi. 3. 338.) इत्युनन् । नित्स्वरः Sy.
२४. योग्यतया तेजांसि Sy.
२५. वसना P.
२६. विभ० P.
२७. वाक् Sy.
२८. अस्मा M.

क्रमादागतत्वात्[1] । पुरातनी[2] । भवति धीरिति[3] वाचमाह[4]—'यद्धि मनसा ध्यायति तद्वाचा वदति'[5] इति ब्राह्मणम्, इति[6] ।

**यमा चिदत्र यमसूरसूत जिह्वाया अग्रं पतदा ह्यस्थात् ।**
**वपूंषि जाता मिथुना सचेते तमोहना तपुषो बुध्न एता ॥ ३ ॥**

**यमा चित्[7]अत्र[8]** ॥ इन्द्रस्य विवस्वतश्च स्तुतिमेनां मन्यते । दितेर्द्वौ[9] पुत्रावजायेताम्[10] । तत्रैक इन्द्रो विवस्वानिति ॥ अपरं मतम्[11]—यमसू[12]र्बुद्धिः[13] । यमौ[14] । अजायत[15], वाचं च मनश्च । तत्र[16] । जिह्वायाः[17] । अग्रम् । चलनस्वभावम्[18] । वाग्—आतिष्ठति[19] । हि[20] । ताविमौ[21] मनुष्याणां[22]

---

१. M. omits क्रमादा० । मादगमत्वा P. VM. seems to explain पित्र्या as क्रमादागतत्वात् which is incomplete ॥ पितृक्रमागता । पित्र्या–पितृशब्दात्तत्र आगत इत्यर्थे 'पितुर्यच्च' इति यत्प्रत्ययः । 'रीङृतः' (Pa. 7. 4. 27) इति रीङादेशः । 'यस्य' इति लोपः । 'यतोऽनावः' इत्याद्युदात्तत्वम् Sy.

२. पुरातनी सती । सनजा —जनेः 'अन्येभ्योऽपि दृश्यते' इति डः । प्रत्ययस्वरः Sy.

३. सीरि० M. तव स्तुतिः Sy.

४. वाचामा० M.

५. Cf. मनसा हि सर्वान् कामान् ध्यायति . . . वाचा हि सर्वान् कामान् वदति । AA. 1. 3. 2.

६. VM. ignores चित् and आ ॥ चित् अपि Sy.

७. चित् P.

८. प्रसङ्गादुषःकालं प्रशंसति Sy.

९. दिते द्वौ द्वौ M. द्वौ द्वौ P.

१०. पुत्रायन्तन् M. पुत्रावजान् P.

११. मता P.

१२. यमस्त M. यमौ यमलौ सूत इति यमसूस्तयोऽभिमानिनी देवता सा । 'षूङ् प्राणिगर्भविमोचने' इत्यस्य क्विप् । कृदुत्तरपदस्वरः Sy.

१३. बुद्धिः P.

१४. यमलावश्विनौ Sy.

१५. आजयत P. अजनयत् is suggested for अजायत ॥ असूत—तस्यैव (षूङ्) धातोर्लङि अदादित्वाच्छपो लुक् । निघातः Sy.

१६. उषःकाले Sy.

१७. अश्विनोस्तत्र शस्यमानत्वात्तावश्विनौ स्तोतुं मम Sy.

१८. चबल० M. चञ्चलम् । पतत्—'पत्लृ गतौ' । शतुर्लसार्वधातुकस्वरे धातुस्वरः Sy.

१९. अताति० P. तिष्ठति । अस्थात्—'ष्ठा गतिनिवृत्तौ' । लुङि रूपम् । हियोगादनिघातः Sy.

२०. खलु Sy.

२१. अश्विनौ Sy.

२२. ०नुष्य M.

शरीराणि[1] । जातौ[2] । मिथुनौ[3] । सेवेते[4] । ज्योतीरूपौ तमसो हन्तारौ[5], 'मनोज्योतिः, वाग्ज्योतिः'[6] इति ब्राह्मणम् । बलस्य[7] । मूलम्[8] । आगताविति[9], केचिदिन्द्रावरुणयोः[10] स्तुतिमेतां मन्यन्त इति[11] ।

**नकिंरेषां निन्दिता मर्त्येषु ये अस्माकं पितरो गोषु योधाः ।**
**इन्द्रं एषां दंहिता माहिनावानुद्गोत्राणि ससृजे दंसनावान् ॥ ४ ॥**

नकिरेषाम्[12] ।[13] न कश्चिदस्ति । एषाम् । निन्दकः[14] । मनुष्येषु[15] सुकर्मणाम्[16] । ये । सर्वेषामस्माकम्[17] । पितृभूता अङ्गिरसः । पणिभिरपहृतेषु गोषु[18] । तदर्थं[19] योद्धारः[20] । इन्द्रः । एषामङ्गिरसाम् । उपोद्बलकः[21] । पूजावान्[22] । गवामावारणान्मेघान्[23] । वज्रेणोत्ससृजे[24] । कर्मवान्[25] ।

---

१. वपूंषि । उप्यन्ते निधीयन्ते इति वपूंषि, उषःकाले क्रियमाणानि शस्त्रादीनि कर्माणि । वपूंषि—'डुवप् बीजसन्ताने' 'अर्तिपृवपियजितनिधनितपिभ्यो नित्' इत्युसिप्रत्ययः । 'नित्त्व' इत्युक्तत्वादाद्युदात्तः Sy. २. उत्पन्नानि Sy.

३. परस्परं सङ्गतौ तावश्विनौ Sy.

४. सङ्गच्छतः । सचेते—'षच समवाये' इत्यस्य लटि रूपम् Sy. ५. मह० P.

६. The quotation is untraced.

७. तपत्यस्मिन् सूर्य इति तपुर्दिवसस्तस्य । तपुषः—'तप सन्तापे' । 'अर्तिपृवपि—' इत्यादिना उसिः Sy.

८. मूले । बुध्ने—'बन्ध बन्धने' 'बन्धेर्ब्रधिबुधी च' (Uṇādi 3. 285.) इति नक् प्रत्ययः । ब्रधिबुधी एतावादेशौ धातोः । प्रत्ययस्वरः Sy.

९. एतावागतौ । एता—'इण् गतौ' इत्यस्य कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः स्वरः Sy.

१०. M. omits न्द्र व ।

११. VM. ignores चित् ।

१२. नकिः P. १३. हे इन्द्र ! Sy.

१४. दूषकः । निन्दिता—'णिदि कुत्सायाम्' इत्यस्य तृचि रूपम् Sy.

१५. मर्त्येषु । मर्त्येषु—वस्वादित्वात्स्वार्थिको यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् Sy.

१६. सक० M.

१७. सत्रे प्रवृत्तानामस्माकम् Sy.

१८. M. omits गोषु ।

१९. ०वस्त्थं P. तन्निमित्तम् Sy.

२०. योद्धारो वर्तन्ते तेषाम् । योधाः—'युध सम्प्रहारे' इत्यस्य पचाद्यचि रूपम् Sy. २१. ०पोद्बलः P. दृंहितानि समृद्धानि । 'दृह दृहि वृद्धौ' इत्यस्य निष्ठायां रूपम् Sy.

२२. कुत इत्यत आह—महिमोपेतः । माहिनावान्—'महेरिनण् च' (Uṇādi. 2.214.) इतीनण्प्रत्ययः । 'तदस्यास्ति' इति मतुप् । माहिनावानिति तस्य संज्ञा । 'मतौ बह्वचोऽनजिरादीनाम्' (Pa. 6. 3. 119.) इति संहितायां दीर्घः Sy.

२३. गवां वृन्दानि । गोत्राणि—गवां समूह इत्यर्थे 'खलगोरथात्' इत्यनुवृत्तौ 'इनित्रकट्यचश्च' (Pa. 4. 2. 51.) इति गोशब्दात् त्रप्रत्ययः । प्रत्ययस्वरः Sy.

२४. ०ज्रेणाससृज P. तेभ्योऽङ्गिरोभ्यो ददौ । ससृजे—'सृज विसर्गे' इत्यस्य लिटि रूपम् Sy.

२५. वृत्रहननादिकर्मवान् Sy.

सखा ह यत्र सखिभिर्नवग्वैरभिज्ञ्वा सत्वभिर्गा अनुग्मन् ।
सत्यं तदिन्द्रो दशभिर्दशग्वैः सूर्यं विवेद तमसि क्षियन्तम् ॥ ५ ॥

सखा ह[1] । सखा[2] । खलु[3] । यत्र[4] । समानख्यानैः । अङ्गिरोभिः[5] । युद्धार्थमभिगत-जानुकैः[6] । अन्यैश्च[7] सत्वभिर्भटैः[8] । गाः[9] । आभिमुख्येनागच्छत्[10] । सत्यम्[11] । तदानीम्[12] । इन्द्रः । दशसंख्यैः[13] । अङ्गिरोभिः सह[14] । असुरान् हत्वा तमोहननेन तमसि[15] । निवसन्तम्[16] । विवेद[17] । सूर्यमिति[18] ।

---

१. दशपेये निष्केवल्ये निविद्धानीयस्य पुरस्तात् । 'सखा ह यत्र' इत्येषा । सूत्रितञ्च—'सखा ह यत्र सखिभिर्नवग्वैरिति निविद्धानीययोराद्ये' (ASS. 9. 3.) इति Sy.

२. समानख्यान इन्द्रः । सखिभिः—'ख्या प्रकथने'। 'समाने ख्यश्चोदात्तः' इतीण्प्रत्ययः । डिच्च । 'समानस्य छन्दसि'—इति समानस्य सभावः । 'उदात्तः'—इत्युक्तत्वेन सामर्थ्यादुपपदस्येति गम्यते । आद्युदात्तः Sy. ३. आहो पूरणो Sy.

४. यस्मिन् बिले पणिभिर्निरुद्धाः Sy.

५. मेधातिथिप्रभृतयोऽङ्गिरसः केचिन्नव मासान् सत्रमनुष्ठाय फलं लेभिरे । केचिद्दश मासाननुष्ठायेति । तत्र ये नव मासान् सत्रमनुष्ठाय लब्धफला उदतिष्ठन् ते नवग्वास्तैः । नवग्वैः—गमेरौणादिको ड्वप्रत्ययः । बहुव्रीहौ पूर्वपदस्वरः Sy.

६. ०द्धात्र्थम० P. अभिगतजानुकं यथा भवति तथा । अभिज्ञुः—'प्रसंभ्यां जानुनोर्ज्ञुः' इति विधीयमानो ज्ञुरभेरत्तमस्य व्यत्ययेन भवति Sy.

७. ०न्यैसश्च P.

८. ०त्वमभि० P. इन्द्रमभितः सीदद्भिः । सत्वभिः—'षद्लृ विशरणगत्यवसादनेषु' इत्यस्मात् 'प्र ईरसद्योस्तुट् च' इति क्वनिप्प्रत्ययः । तुडागमः । नित्त्वादाद्युदात्तः Sy. ९. गा अभिलक्ष्य Sy.

१०. ०नान्वगच्छन् M. अनुगच्छन् । अनुग्मन्—गमेः शतरि 'बहुलं छन्दसि' इति शपो लुकि कृते 'गमहन' इत्यादिना उपधालोपः । प्रादिसमासः । शतृस्वरः Sy. ११. यथार्थप्रकाशम् Sy.

१२. तत्र बिले Sy.

१३. ०संख्योः M.
दशां ख्यैः P. दशसंख्याकैः Sy.

१४. M. omits अं ॥ ये दश मासान् सत्रमनुष्ठाय लब्धफला उदतिष्ठन् ते दशग्वाः । (तैः) सहितः सन् Sy.

१५. बिलवर्तिन्यन्धकारे Sy.

१६. क्षियन्तम्—'क्षि निवासगत्योः' इत्यस्य शतरि रूपम् Sy.

१७. पदः M. लेभे । ततो लब्धप्रकाशः स इन्द्रस्ता गा आनीयाङ्गिरोभ्यः प्रादादिति भावः । विवेद—'विद ज्ञाने' इत्यस्मात् लिटि णलि रूपम् Sy.

१८. P. omits विवेद सूर्यमिति ।

इन्द्रो मधु संभृतमुस्रियायां पद्वद्विवेद शफवन्नमे गोः ।
गुहा हितं गुह्यं गूळ्हमप्सु हस्ते दधे दक्षिणे दक्षिणावान् ॥ ६ ॥

इन्द्रो मधु । इन्द्रः । मधुरसम् । गवि । सम्भृतं पयः । विवेद । तत्कारणभूतं पदयुक्तम् । शफयुक्तं च धनं लेभे । गवार्थम् । कृतवान् नमनमित्यर्थः । गुहायाम् । निहितम् । अत एव गुह्यम् । उदकेषु । स्थितमन्नम् । स्तोतुर्दक्षिणे । हस्ते । प्रयच्छति । देव धनवानिति ।

ज्योतिर्वृणीत तमसो विजानन्नारे स्याम दुरितादभीके ।
इमा गिरः सोमपाः सोमवृद्ध जुषस्वेन्द्र पुरुतमस्य कारोः ॥ ७ ॥

ज्योतिः । ज्योतिः । समभक्त । नैशस्य तमसः । विजायमानः । ततो वयं

---

१. क्षीरादि Sy.
२. क्षीरदध्यादिक्रमेणोत्स्राविण्यां भोगवत्यां गवि । उस्रियायाम्—प्रक्रिया सम्यक् पूर्वमेवावादि Sy. ३. सम्पादितम् Sy.
४. अज्ञासीत् । विवेद—'विद ज्ञाने' । 'विद्लृ लाभे' । एतयोर्लिटि रूपम् Sy.
५. ततस्तदर्थम् Sy. ६. पादयुक्तम् Sy.
७. खुरोपेतं गोधनम् । शफवत्, शफोऽस्यास्तीति मतुप् । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् Sy.
८. गोरिति द्वितीयार्थे षष्ठी । पणिनामकैरसुरैरपहृतां गाम् Sy.
९. कथं लब्धवान् ? इति तदुच्यते । आनीतामकरोत् । नमे—'णमु प्रह्वत्वे' इत्यस्य लिटि रूपम् । द्विर्वचनस्य छन्दसि विकल्पितत्वादत्र द्विर्वचनाभावः । वाक्यभेदादनिघातः Sy.
१०. प्रच्छन्नम् । गुह्यम्—'गुहू संवरणे' इत्यस्मात् 'शंसिगुहिदुहिभ्यो वेति वक्तव्यम्' इति क्यप् । कित्त्वादगुणः । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः Sy.
११. अन्तरिक्षे Sy.
१२. गूढचारिणं मायिनमसुरम् Sy.
१३. दधार अग्रहीदित्यर्थः । द्वितीयाष्टके 'श्रुधी हवम्' इत्यस्मिन् वर्गे 'गुहा हितम्' इत्येतत् सम्यगभ्यधायि (RV. 2. 11. 5.) । दधे—दधातेर्लिटि रूपम् Sy.
१४. देयध० is suggested for देवध० ॥ औदार्यवान् समर्थः स इन्द्रः । दक्षिणावान्—'दक्ष वृद्धौ' । 'द्रुदक्षिभ्यामिनन्' इतीनन्प्रत्ययः । तदस्यास्तीति मतुप् । संहितायाम् 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घः । नित्स्वरः Sy.
१५. P. omits the commentary on the whole of this stanza.
१६. जगद्व्यवहारनिर्वाहकं प्रकाशम् Sy.
१७. संभक्त M. वृणीत—'वृङ् सम्भक्तौ' इत्यस्य लङि रूपम् Sy.
१८. आं नैशाः M. रात्रेः सकाशात् । यद्वा ...तमोरूपाद् वृत्रादेः Sy.
१९. P. omits words between ज्योतिः and विजायमानः ॥ विशेषेण जानन् प्रादुर्भवन् सूर्यात्मक इन्द्रः । विजानन्—'ज्ञा अवबोधने' । विशेषेण ज्ञानं प्रकाशः । प्रत्ययस्वरः Sy.
२०. ०पिता P.

दूरे[१] । स्याम[२] । दूरस्य[३] । सङ्ग्रामे[४] । इमाः[५] । स्तुतीः[६] । हे सोमस्य[७] पातः ! सोमेन[८] वृद्ध ! सेवस्व । इन्द्र ! बहूनां ग्लपयितुः[९] । स्तोतुः ।[१०]

**ज्योतिर्यज्ञाय रोदसी अनु ष्यादारे स्याम दुरितस्य भूरेः ।**
**भूरि चिद्धि तुजतो मर्त्यस्य सुपारासो वसवो बर्हणावत् ॥ ८ ॥**

ज्योतिर्यज्ञाय[११] । हे[१२] वसवः[१३] ! अस्माकं यज्ञकरणार्थम्[१४] । नैशस्य तमसो बाधकं ज्योतिः[१५] । द्यावापृथिवी[१६] । अनभवतु[१७] । आरे[१८] । स्याम[१९] । तमसा कृतस्य[२०] दुरितस्य[२१] । भूरेः[२२] । इन्द्रमित्थं[२३] स्तुवतो बहु[२४] । अपि धनम् । देवार्थं[२५] प्रयच्छतः[२६] । मर्त्यस्य । शोभनपारणा[२७] यूयम् । हे वसवः[२८] ! धनं प्रयच्छथ[२९] । वृद्धिमदिति[३०] ।[३१]

---

१. ०पापवर्जिताः सन्तः Sy.
२. भवेम Sy.
३. दुरितस्य is suggested for दूरस्य ॥ दुरितात् पापात् Sy.
४. भयरहिते स्थाने । अभीके—न विद्यते भीर्यस्मिन् । ततः 'शेषाद्विभाषा' (Pa. 5. 4. 154.) इति कप्प्रत्ययः । 'नञ्सुभ्याम्' इत्यन्तोदात्तत्वे प्राप्ते 'कपि पूर्वम्' (Pa. 6. 2. 173.) इति पूर्वस्यान्तोदात्तत्वम् Sy.
५. स्तुतिलक्षणाः Sy.
६. वाचः Sy. ७. ०स्यापा० P.
८. सोमपानेषु वृद्ध ! Sy.
९. पुरून् बहून् शत्रून् तामयति ग्लापयतीति पुरुतमः । तादृशस्य तव । पुरुतमस्य—'तमु ग्लाने ? (काङ्क्षायाम्) इत्यस्माण्ण्यन्तात् पचाद्यचि 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् Sy.
१०. स्तोत्रं कुर्वाणस्य ऋत्विजः Sy.
११. P. omits यज्ञाय ।
१२. हे इन्द्र ! Sy. १३. वास्त० P.
१४. ०रणं P. अग्निहोत्रादिकर्मकरणाय Sy.
१५. जगत्प्रकाशकः सूर्यः Sy.
१६. द्यावापृथिव्यौ Sy.
१७. प्रकाशयतु । स्यात्—अस्तेर्लिङि रूपम्, संहितायामनोरुत्तरस्यास्तेः 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' (Pa. 8. 3. 87.) इति षत्वम् । निघातः Sy.
१८. दूरे Sy. १९. भवेम Sy.
२०. Omitted by P.
२१. पापस्य Sy. २२. वयं प्रभूतस्य Sy.
२३. इन्द्रियमि० M.
२४. अतिप्रभूतम् Sy.
२५. दवा० M. ०वार्त्थं P.
२६. य प्र० P. भूरिप्रदस्य । तुजतः—'तुजि पिजि लजि हिंसादाननिकेतनेषु' । 'शतुरनुमः—'इति विभक्तेरुदात्तत्वम् Sy.
२७. वारणाः P. सुपाराः शोभनपाराः स्तुत्याभिमुखीकर्तुं शक्या यूयम् Sy.
२८. हे सर्वस्य वासयितारः इन्द्रादयः ! Sy.
२९. ०च्छं तथा M. प्रयच्छथ । अत्र योग्यक्रियाध्याहारः Sy.
३०. समृद्धियुक्तं धनम् । बर्हणावत्—'बृहि वृद्धौ' । इत्यस्य भावे औणादिको युप्रत्ययः । प्रत्ययस्वरः Sy.
३१. VM. ignores हि ।

शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ ९ ॥

(शुनं हुवेम ।)[1]

व्याख्यद्[2] द्वितीयमध्यायं तृतीयस्याष्टकस्य सः ।
मित्रावरुणयोर्वंशे मातुर्यस्य समुद्भवः ॥

# [3]अथ तृतीयेऽष्टके तृतीयोऽध्यायः ।[4]

'इन्द्रं त्वा वृषभं वयं'[5] व्याचिख्यासति माधवः ।
निपातेष्वेव केषांचि[6]द्वृत्तिभेदं प्रदर्शयन् ॥ १ ॥

निपाता ये विकल्पार्था[7] ये समुच्चयवाचिनः ।
ये वा विनिग्रहार्थीया[8] उपमा[9]र्थाश्च ये तथा ॥ २ ॥

सर्वे ते न प्रयुज्यन्त ऋक्पादा[10]दिष्विति स्थितिः ।
'इव देवदत्त' इति न हि लोके प्रयुज्यते ॥ ३ ॥

'वा देवदत्त' इति वा तथा वेदे च दृश्यताम् ।
[11]नन्वेवकारसदृश उकारो दर्शनात्तथा ॥ ४ ॥

---

१. The *pratika* is supplied in M. only by a different hand but struck out later on. This stanza has already been explained. See RV. 3. 30. 22.

२. व्याख्य P.

३. श्रीगणपतये नमः P.

४. P. omits the line

५. RV. III. 40. 1.

६. ०चित् त्ति० P.

७. M. omits ये विकल्पार्था ॥ ०ल्पात्र्था P.

८. विग्रहार्त्थी० P.

९. ०मार्त्था० P.

१०. ऋक्पदा० P.

११. नका० P.

स दृश्यते च पादादाव् 'उ लोकमग्ने कृणवः[1] ।

'उ लोककृत्नुमी[2]महे' 'उ लोककृत्नु[3]मद्रिवः' ॥५॥

'उ लोको यस्ते' अद्रिवस्[4]' ते चत्वार उदाहृताः ।

नामी विनिग्रहार्थी[5]या न ह्येष्वस्ति विनिग्रहः ॥६॥

पूरणत्वं च नैतेषां न[6] ह्यादौ[7] सन्ति[8] पूरणाः ।

'उ लोक उत्तमो[9] लोकः' इति वक्तुं न[10] युज्यते ॥७॥

शाक्ल्यो ह्यवगृह्णीयात् तदा नो इति[11] दर्शयेत् ।

अथाप्युत्तमपर्यायं[12] लोकात्प्रा[13]क्पर्यवस्थितम् ॥८॥

मन्यामहे कान्दिशीका[14]स्तत्र वृद्धेषु निर्णयः ।

उपमार्थे[15]श्च नन्वादौ यथाशब्दः प्रयुज्यते ॥९॥

'तया तदस्तु सोमपाः[16]' 'यथां त उश्मसी[17]ष्टये'[18] ।

प्रकारवचनः सोऽयं लौकिका[19]श्च प्रयुज्जते ॥१०॥

---

१. RV. V. 4. 11. P. omits उ लोकमग्ने कृणवः ।

२. ०लोके कृत्तमीमहे' P.
RV. IX. 2. 8.

३. ०कृत्तमद्रिवः P.
RV. VIII. 15. 4.

४. RV. III. 37. 11.

५. निग्रहात्र्थी० P.

६. ह्य P. ७. ष्यादौ P.

८. सति M. and P.

९. त्तमो P.

१०. P. reads ह्य for वक्तुं न ।

११. M. reads श्रोन्दिति for तदा नो इति ।

१२. ०र्यायां P. १३. ०कान्प्रा० P.

१४. ०काः त० P.

१५. ०मार्त्ये० P.

१६. सोमापाः P.
RV. I. 30. 12.

१७. उन्मसी० P.

१८. RV. I. 30. 12.

१९. लौकि० P.

येन प्रकारेण कृतं तेनास्माकं[१] करोत्विति[२] ।
इव[३] देवदत्ते[४] कृतं न तु[५] दृष्टं तया क्वचित् ॥११॥
तस्माद् यथैवौ[६] भिन्नार्थाविति[७] सूक्ष्मेक्षिकापराः ।
प्रयुज्यते यथाशब्दे क्रियापदमपेक्षितम्[८] ॥ १२ ॥
उरमसीत्यादिकं[९] नैवमिव[१०]योगे प्रयुज्यते[११] ।
बहुष्वर्थेषु[१२] दृष्टो नञ्[१३] निषेधेऽथ[१४] समुच्चये ॥ १३ ॥
सम्प्रत्यर्थे[१५] इवार्थे[१६] च पूरणोऽपि च दृश्यते ।
प्रयुज्यते न[१७] वाक्यादावुपमार्थ[१८] इति स्थितिः ॥ १४ ॥
उपमायां निषेधे च दृश्यन्ते बहवो नञः ।
तथा समुच्चयार्थीया[१९]: 'अग्निमुषां न जरते[२०] ॥' १५ ॥
'तस्मिन्त्साकं[२१] त्रिशता[२२] न[२३]' 'होता मनुष्यो[२४] ३न[२५] दक्षः[२६]' ।
'अश्वे न चित्रे[२७] अरुषि[२८]' सम्प्रत्यर्थे[२९] नञं विदुः ॥ १६ ॥

---

१. तेनायस्माक M.
२. Omitted in M. P. reads पि च दृश्यते प्रयुज्यते वाक्यादावुवा for तेनास्माकं करो० । Cf. Śl. 14.
३. Omitted in M.
४. ०दत्तेन M.
५. P. omits न तु ।
६. ०थैव M. ०थैवेन P.
७. ०न्नार्त्थौविदिति P.
८. ०पम० P. ९. उन्भ० P.
१०. M. omits मिव ।
११. ०युज्य M. ०युते P.
१२. ०ष्वर्त्थे० P.
१३. M. omits words between बहुष्व and नञ् ।
१४. ०धेत P. १५. ०त्यर्त्थे P.
१६. ०वार्त्थे P. १७. ना M.
१८. ०मार्त्थ P.
१९. ०यार्त्थी० P.
२०. RV. I. 181. 9.
२१. ०स्मिन् सा० M. ०स्मत्साक P.
२२. ०शतां P. २३. RV. I. 164. 48.
२४. ०नुष्यः M. २५. Omitted in P.
२६. RV. I. 59. 4. २७. पित्रे M.
२८. RV. I. 30. 21.
२९. ०त्यर्त्थे P.

'अस्मै भीमाय'[१] च तथा सन्ति चान्येऽपि तादृशाः ।
'विपां[२] ज्योतींषि[३] विभ्रते'[४] नकारस्तत्र[५] पूरणः ॥ १७

पादादौ[६] न प्रयुज्यन्ते हि-स्म-चेत्-स्विद्-ह[७]-वै[८]-तव[९]ः ।
कारणं[१०] तत्र वाक्यादावर्थ[११]स्यैषामनन्वयः ॥१८॥

पादादावपि सद्भाव[१२]ः पूरणानाम[१३]पीच्छति ।
यास्को[१४] यदाह 'नूनं सा'[१५] 'नूनमित्येष पूरणः[१६] ॥१९॥

यथा 'न नूनमस्तीति'[१७] सम्प्रत्यर्थ[१८]स्य वाचकः ।
तथैव सम्प्रत्यर्थ[१९]त्वमत्रापीच्छन्ति केचन ॥२०॥

तुशब्दः[२०] क्षिप्रवचनो[२१] वाक्यादावपि[२२] दृश्यते ।
'नू मर्ता[२३]' दयते[२४]' इति मध्ये प्रश्नस्य[२५] वाचकः ॥२१॥

निपातानां प्रयोगस्य[२६] स्थानं[२७] न मुह्यति ।
अतो लोकानुसारेण निपातार्थं[२८] प्रदर्शयेत् ॥२२॥ इति ॥

---

१. RV. I. 57. 3.
२. पविवान् P.
३. ज्योतिंषि P.
४. M. omits विपां . . विभ्रते RV. III. 10. 5.
५. ०स्तता P.
६. पदा० P.
७. Omitted in M. घ P.
८. वे P.
९. तपः M.
१०. कारं P.
११. ०वर्त्यसंवा० P.
१२. यद्भा० P.
१३. रणनिनाम० ।
१४. Cf. अथापि पदपूरणः । ननं सा and Cf. N. I. 6 and 7.
१५. RV. II. 11. 21.
१६. ०रणं P.
१७. RV. I. 170. 1.
१८. ०म्प्रतित्वस्य M. ०म्प्रत्यर्त्य० P.
१९. ०त्यर्त्यं० P.
२०. नू D.
२१. ननु पश्यन्तः क्षिप्रवचो नात्यं P.
२२. ०वचि P.
२३. मर्त्योर्त्तो P.
२४. RV. VII. 100. 1.
२५. प्रशस्य D. and M.
२६. M. omits स्य ।
२७. The addition of ज्ञात्वा or जानन् after स्थानं is suggested.
२८. ०तार्त्यं P.

## III. 40.

इन्द्र॑ त्वा वृष॒भं व॒यं सु॒ते सोमे॑ हवामहे । स पा॑हि॒ मध्वो॒ अन्ध॑सः ॥ १ ॥

इन्द्र[1] त्वा ॥ विश्वामित्रः ॥ आद्या निगदसिद्धा ।[2]

---

१. 'इन्द्र त्वा' इति नवर्चं द्वितीयं सूक्तं वैश्वामित्रं गायत्रमैन्द्रम् । तथा चानुक्रान्तम् 'इन्द्र त्वा गायत्रं हि' (KSA. 19. 40. p. 16.) इति । अग्निष्टोमे प्रातःसवने ब्राह्मणाच्छंसिशस्त्रे इदं सूक्तम् । सूत्रितञ्च 'इन्द्र त्वा वृषभमुदृघेदभीति तिस्रः' (ASS. 5. 10.) इति । आद्या प्रातःसवने ब्राह्मणाच्छंसिनः प्रस्थितयाज्या । सूत्रितञ्च—'इन्द्र त्वा वृषभं मरुतो यस्य' (ASS. 5. 5.) इति Sy.

२. VM. does not explain this stanza as it is very easy. Sy. explains it in the following manner:—
इन्दौ स्रवति सोमरसे रमते क्रीडतीति इन्द्रः । यद्वा इदं सर्वं जगत्साक्षाद्दर्शयतीतीन्द्रः । तस्य सम्बुद्धिः । हे इन्द्र ! वृषभं कामानां वर्षकं त्वा त्वां सुते ग्रावभिरभिषुते सोमे वयं हवामहे सोमपानार्थमाह्वयामः । सः त्वं मध्वः मदकरम् अन्धसः अन्नलक्षणं सोमं पाहि पिब । तथा चारण्यके श्रूयते—'स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमितीऽ३ । तस्मादिन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण, परोक्षप्रिया इव हि देवाः' (AĀ.2.4. 3.)इति । इन्द्र, 'इदि परमैश्वर्ये' इति धातुः । स्वमायया जगद्रूपत्वं परमैश्वर्यम् । अनेनाभिप्रायेण श्रूयते—'इन्द्रो मायाभिः पुरुरूप ईयते' (RV. VI. 47. 18.) इति । इन्दुशब्दे उपपदे रमतेः 'अन्येभ्योऽपि दृश्यते' इति डः । पूर्वपदस्योकारलोपः । 'इदि परमैश्वर्ये' इत्यस्मात् 'ऋज्रेन्द्राग्र०' इत्यादिना रन्प्रत्ययान्तत्वेन निपातितः । एवमेतानि निर्वचनानि द्रष्टव्यानि । आमन्त्रितत्वादाद्युदात्तत्वम् ॥ हवामहे —ह्वयतेः 'बहुलं छन्दसि' इति सम्प्रसारणे लटि रूपम् । मध्वः—मधुशब्दः, 'फलिपाटि—'इत्यादिना उन्प्रत्ययान्तः । आगमानुशासनस्यानित्यत्वान्नुमभावः । संज्ञापूर्वकस्य विधेरनित्यत्वाद् गुणाभावः । यणादेशः । अन्धसः—'अदेर्नुम् धश्च' इत्यसुन् । नित्स्वरः Sy.
'इन्द्र इरां दृणातीति वा । इरां ददातीति वा । इरां दधातीति वा । इरां दारयत इति वा । इरां धारयत इति वा । इन्दवे द्रवतीति वा । इन्दौ रमत इति वा । इन्धे भूतानीति वा । 'तद्यदेनं प्राणैः समैन्धंस्तदिन्द्रस्येन्द्रत्वम्' इति विज्ञायते । इदं करणादित्याग्रायणः । इदं दर्शनादित्यौपमन्यवः । इन्दतेर्वैश्वर्यकर्मणः । इन्दञ्छत्रूणां दारयिता वा, द्रावयिता वा । आदरयिता च यज्वनाम् N. 10. 8.

इन्द्र॑ क्रतु॒विदं॑ सु॒तं सोमं॑ हर्य पुरुष्टुत । पिबा वृ॑षस्व॒ ता॒तृ॑पिम् ॥ २ ॥

इन्द्र ! इन्द्र ! प्रज्ञाया लम्भकम् । सुतम् । सोमम् । इच्छ । अथ पिब । जठरे च सिञ्च । स्वर्पणसमर्थम् ।

इन्द्र॒ प्र णो॑ धि॒तावा॑नं य॒ज्ञं विश्वे॑भिर्दे॒वेभिः॑ । ति॒रः स्त॑वान विश्पते ॥ ३ ॥

इन्द्र प्र णः । इन्द्र ! वर्धय । अस्माकम् । यज्ञम् । विश्वैः । देवैः सह । निहितसोमम् । स्तूयमान ! विशां पते !

---

१. ब्राह्मणाच्छंसिनः प्रातःसवने 'इन्द्र क्रतुविदम्' इति शस्त्रयाज्या। सूत्रितञ्च—'इन्द्र क्रतुविदं सुतमिति याज्या' (ASS. 5. 10.) इति Sy.

२. Omitted in P.

३. क्रतोः प्रज्ञाया लम्भकम् Sy.

४. अभिषुतमिमम् Sy.

५. पातुं कामयस्व । हर्य—'हर्य गतिकान्त्योः' इत्यस्य लोटि रूपम् । निघातः Sy.

६. पीतमिमं सोमं जठरे सिञ्च । यथा नाभेरधो न पतति तथा धारयेति भावः । वृषस्व—'वृष सेचने' इत्यस्य लोटि रूपम् । आङ उत्तरत्वान्निघातः Sy.

७. चः M.

८. पिञ्च P.

९. ०मर्त्यं P. तर्पकमाप्यायनकारिणमिमं सोमम् । तातृपिम्—'तृप प्रीणने' इत्यस्मात् 'छन्दसि सदादिभ्यो दर्शनात्' (VPa. 3. 2. 171. 2.) इति किन् । तस्य लिड्वद्भावाद् द्विर्वचनादि । संहितायाम्—'अन्येषामपि—' इत्यभ्यासस्य दीर्घः । नित्त्वादाद्युदात्तः Sy.

१०. VM. ignores पुरुष्टुत and आ ॥ हे पुरुष्टुत ! पुरुभिर्बहुभिः स्तुतेन्द्र ! 'स्तुतस्तोमयोश्छन्दसि' इति संहितायां षत्वम् Sy.

११. वृद्धाय P. हविः स्वीकरणेन सम्पूर्णं कुरु इति भावः । तिर—तरतेर्व्यत्ययेन शः । प्रत्ययस्वरः Sy.

१२. अस्मदीयम् । नः—'उपसर्गाद्बहुलम्' इति संहितायां णत्वम् Sy.

१३. इमं यज्ञम् Sy.

१४. सर्वैः Sy.

१५. यजनीयैर्देवैः सहितस्त्वम् Sy.

१६. वन्यते सम्भज्यते इति वानं हविः । धितं निहितं हविर्यस्य तम् । सम्भृतहविष्कमित्यर्थः । धितावानम्—'डुधाञ् धारणपोषणयोः' इत्यस्मान्निष्ठा । बहुव्रीहौ पूर्वपदस्वरः Sy.

१७. स्तोतृभिः स्तूयमान ! स्तवान—'ष्टुञ् स्तुतौ' 'सम्यानच् स्तुवः' इत्युपपदाभावेऽपि कर्मण्यानच्प्रत्ययः । आमन्त्रितत्वान्निघातः Sy.

१८. मरुताम् Sy.

१९. VM. ignores प्र ॥ प्र प्रकर्षेण Sy.

इन्द्र सोमाः सुता इमे तव प्र यन्ति सत्पते । क्षयं चन्द्रास इन्दवः ॥ ४ ॥

इन्द्र । सोमाः[1] । तव । जठरं प्रति । गच्छन्ति[2] । सोमा हर्षकराः[3] । दीप्ताः[4] ।[5]

दधिष्वा जठरे सुतं सोममिन्द्र वरेण्यम् । तव द्युक्षास इन्दवः ॥ ५ ॥

दधिष्व[6] । स्थापय । जठरे । सोमम् । वरणीयम्[7] । तव भवन्ति[8] । दीप्ताः । सोमा[9] इति[10] ।

गिर्वणः पाहि नः सुतं मधोर्धाराभिरज्यसे । इन्द्र त्वादातमिद्यशः ॥ ६ ॥

गिर्वणः । हे गीर्भिः[11] वननीय[12] ! पिब[13] । नः[14] । सुतं[15] सोमम् । मधुसदृशस्य[16] सोमस्य ।

---

१. क्षियन्ति निवसन्त्यन्नादीनि अत्रेति क्षयो जठरम् । क्षयम्—'क्षि निवासगत्योः' इत्यस्मादधिकरणे घप्रत्ययः । प्रत्ययस्वरेण अन्तोदात्तत्वे प्राप्ते 'क्षयो निवासे' इत्याद्युदात्तत्वम् Sy. २. ०च्छति M. गच्छन्ति । तान् धारयेति भावः Sy.

३. ०करः M. आह्लादयितारः । चन्द्रासः—'चदि आह्लादने दीप्तौ च' । अस्मात् 'स्फायितञ्चि—'इत्यादिना रक्प्रत्ययः । 'आज्जसेरसुक्' इत्यसुक् । प्रत्ययस्वरः Sy.

४. इन्दवः—'उन्देरिच्चादेः' (Uṇādi. I. 12.) इत्युप्रत्ययः । 'नित्' इत्यनुवृत्तेराद्युदात्तः Sy.

५. VM. ignores इन्द्र । सुताः । प्र । इमे and सत्पते ॥ सुता अभिषुताः । प्र प्रकर्षेण । इमे अस्माभिर्दत्ताः । हे सत्पते ! इन्द्र Sy.

६. अवस्था० M. धारय । दधिष्व—दधातेर्लोटि रूपम् । 'आगमा अनुदात्ताः' इतीटोऽनुदात्तत्वात्प्रत्ययस्वरः Sy.

७. सर्वैर्वरणीयम् । वरेण्यम्—'वृङ् सम्भक्तौ' । 'वृङ एण्यः' इत्येण्यप्रत्ययः । वृषादित्वादाद्युदात्तः Sy.

८. तपन्ति M.

९. द्युक्षासः—दिवि क्षियन्ति निवसन्तीति द्युक्षासः । अतस्त्वं स्वभूतान् तान् धारयेति भावः । क्षियतेः 'अन्येभ्योऽपि दृश्यते' इति डप्रत्ययः । कृदुत्तरपदस्वरः Sy.

१०. VM. ignores सुतम् and इन्द्र ॥ सुतम् अभिषुतम् Sy.

११. M. omits हे गीर्भिः ।

१२. वरणीय D. P. गिर्वणः—'वन सम्भक्तौ' इत्यस्मादसुन् । गिर उपधाया दीर्घाभावश्छान्दसः । 'आमन्त्रितस्य' इति षाष्ठिकमाद्युदात्तत्वम् Sy. गिर्वणा देवो भवति । गीर्भिरेनं वनयन्ति N.6. 14.

१३. पाहि—'पा पाने' इत्यस्माल्लोटि रूपम् । आमन्त्रितस्याविद्यमानत्वेन पादादित्वादनिघातः । प्रत्ययस्वरः Sy.

१४. अस्मदीयम् Sy.

१५. अभिषुतमिमम् Sy.

१६. मदकरस्य सोमस्य Sy.

धाराभिः । त्वमज्यसे[१] । इन्द्र । त्वयैव[२] दीयते । यजमानानां[३] कीर्तिः, तत्र, ततस्तां च देहीति ।

## अभि द्युम्नानि वनिन इन्द्रं सचन्ते अक्षिता । पीत्वी सोमस्य वावृधे ॥ ७ ॥

अभि द्युम्नानि[४] । 'द्योततेः[५] । यशो[६] वान्नं वा[७]' 'इत्युक्तम्' सोमलक्षणान्यन्नानि । भजन-वतो[८] यजमानात्[९][१०] । इन्द्रम् । अभिसचन्ते[११] । अक्षीणानि[१२] । ततोऽयं पीत्वा[१३] । सोमम्[१४] । वर्धते[१५] ।

## अर्वावतो न आ गहि परावतश्च वृत्रहन् । इमा जुषस्व नो गिरः ॥ ८ ॥

अर्वावतः । इन्द्र[१६] ! समीपात्[१७] । अस्मान्[१८] । आगच्छ । दूरस्थः[१९] । च[२०], इतः[२१] । अथास्माकम्[२२] ।

---

१. ०मज्जस P. सिच्यसे Sy.

२. VM. explains इत् by एव and त्वादातं as त्वया दीयते ॥ त्वया शोधितं विशदीकृतमेव । त्वादातम्—'दैप् शोधने' । सत्यपि पकारे 'नानुबन्धकृतमनेजन्तत्वम्' (Paribhāṣā 7.) इत्येजन्त एवायम् । ततः 'आदेचः' इत्यात्वम् । अस्मात्कर्मणि क्तः । 'दाधाघ्वदाप्' इत्यत्र 'अदाप्' इति प्रतिषेधेन घुसंज्ञाया अभावात् 'दो दद्घोः' इति ददादेशो न भवति । त्वेति युष्मच्छब्दस्य तृतीया । 'कर्तृकरणे कृता बहुलम्' इति समासः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरः Sy.

३. यशोऽन्नमस्मासु भवति । यशः—'अशू व्याप्तौ' । 'अशेर्युट् च' इत्यसुन् । तत्सन्नियोगेन धातोर्युडागमः । नित्त्वादाद्युदात्तः Sy.  ४. द्युम्नां P.

५. The addition of द्युम्नम् before द्योततेः is suggested. द्योतमानानि Sy.  ६. Omitted by M.

७. N. 5. 5.  ८. ०जव० P. वनं देवताविषयं सम्भजनमस्यास्तीति वनी । तस्य देवान् सम्भजमानस्य यजमानस्य । वनिनः—'अत इनिठनौ' इतीनिप्रत्ययः । तस्य स्वरः Sy.  ९. जमा० P.

१०. ०मानम् M.

११. अभितः सचन्ते समवयन्ति । सचन्ते—'षच समवाये' इत्यस्य लटि रूपम् Sy.

१२. क्षयरहितानि सम्पूर्णानि सोमादीनि हवींषि । अक्षिता—'क्षि क्षये' इत्यस्य निष्ठा । अत्र ण्यदर्थ इति दीर्घाभावः । तस्मादेव 'क्षियो दीर्घात्' इति निष्ठानत्वाभावः । नञा समासे तस्य स्वरः Sy.

१३. पीत्वी—'पा पाने' इत्यस्मात् क्त्वाप्रत्ययस्य 'स्नात्व्यादयश्च' इति निपातनात् त्वी इत्यादेशः । प्रत्ययस्वरः । 'घुमास्थागापा०' इत्यादिना ईत्वम् Sy.

१४. तेषु मध्ये सोमम् Sy.  १५. स इन्द्रो वर्धते Sy.  १६. हे वृत्रहन् ! Sy.

१७. P. adds पा मधुसवृशस्य सोमस्य धाराभिस्त्वामज्यस इन्द्र त्वयैव दीयते तृ (Cf. III. 40. 6.) ॥ अर्वाचीनात्समीपाद्देशात् Sy.

१८. अस्मानभिलक्ष्य Sy.

१९. अतिदूराद्देशात् । परावतः—'उपसर्गाच्छन्दसि धात्वर्थे' इति वतिः । प्रत्ययस्वरः Sy. Ngh. 3. 26.

२०. चेत् P. आगत्य च Sy.

२१. ततः P.  २२. अस्मदीयाः Sy.

इमाः[1] । स्तुतीः[2] । सेवस्व ।

यदन्तरा परावतमर्वावतं च हूयसे । इन्द्रेह तत आ गहि ॥ ९ ॥

यदन्तरा । दूरान्तिकयोः[3] । मध्ये[4] वर्तमानस्त्वम् । यस्मात्[5] । अस्माभिराहूयसे,[6] सः[7] । ततः[8] । इन्द्र ! अत्र[9] । आगच्छ[10] ।

III. 41.

आ तू न इन्द्र मद्र्यग्घुवानः सोमपीतये । हरिभ्यां याह्यद्रिवः ॥ १ ॥

आ तू नः[11] । आयाहि । क्षिप्रम्[12] । अस्मान्[13] । अस्मदभिमुखम्[14] । होतृभिर्हूयमानः[15] । सोमपानार्थम्[16] । अश्वाभ्याम्[17] । वज्रिन्[18] ![19]

---

१. स्तुतिलक्षणाः Sy.

२. वाचः Sy.

३. दूरान्तिकयोः is the explanation of three words परावतम्, अर्वावतम् and च ॥ परावतम्—'अतिविप्रकृष्टस्य देशस्य । अर्वावतमतिसन्निकृष्टस्य देशस्य । परावतम्, अर्वावतम्—'अन्तरान्तरेण युक्ते' (Pa. 2. 3. 4.) इति द्वितीया Sy.

४. तयोर्मध्यदेशे Sy.

५. यस्मिन् Sy.

६. ०यते M. and P. सम्यगिज्यसे Sy.

७. सं P.

८. तस्माद्देशात् । ततः—'पञ्चम्यास्तसिल्' । लित्स्वरः Sy.

९. अस्मिन् यज्ञे Sy.

१०. P. adds इति after आगच्छ ॥ सोमपानार्थमागच्छ Sy.

११. 'आ तू न इन्द्र' इति नवर्चं तृतीयं सूक्तं वैश्वामित्रं गायत्रमैन्द्रम् । 'आ तू नः' (KSA. 19. 41. p. 16.) इत्यनुक्रान्तम् । अतिरात्रे द्वितीये पर्याये ब्राह्मणाच्छंसिशस्त्रे एतवादिके द्वे सूक्ते । सूत्रितञ्च—'आ तू न इन्द्र मद्र्यगिति सूक्ते' (ASS. 6. 4.) इति Sy.

१२. तू—'ऋचि तुनुघ०—' इत्यादिना संहितायां दीर्घः Sy.

१३. अस्मदीये यज्ञे Sy.

१४. मदभिमुखः सन् । मद्र्यक्—मामञ्चतीति 'ऋत्विग्दधृक्—'इत्यादिना क्विन् । 'प्रत्ययोत्तरपदयोश्च' इत्यस्मच्छब्दस्यैकवचने मपर्यन्तस्य मादेशः । 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' इति टेः अद्रि इत्यादेशः । 'अद्रिसध्र्योरन्तोदात्तत्वनिपातनं कृत्स्वरनिवृत्त्यर्थम्' इति वचनादद्र्यादेशोऽन्तोदात्तः । यणादेशे कृते 'उदात्तस्वरितयोर्यणः' इति यणः स्वरितत्वम् । 'क्विन्प्रत्ययस्य कुः' इति कुत्वम् Sy.

१५. ०भिस्तूय० P.

१६. नार्थम् P. सोमपीतये—दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् Sy.

१७. अश्वाभ्यां सह Sy.

१८. अद्रिवः—'मतुवसोः—'इति रुत्वम् । आमन्त्रितत्वान्निघातः Sy.

१९. VM. ignores इन्द्र ।

**स॒त्तो होता॑ न ऋ॒त्विय॑स्तिस्ति॒रे ब॒र्हिरा॑नु॒षक् । अयु॑ज्रन्प्रा॒तरद्र॑यः ॥ २ ॥**

सत्तः[1] । निषण्णः[2] । होता[3] । अस्माकम्[4] । यागकालः[5] प्राप्तो यस्य स[6] ऋत्वियः[7] । तथा स्तीर्णं[8] च । बर्हिः । अनुषक्तम्[9] । युक्ताश्चासन्[10] । प्रातरेव[11], अभिषवार्थम्[12] । ग्रावाणः ।

**इ॒मा ब्रह्म॑ ब्रह्मवाहः क्रि॒यन्त॒ आ ब॒र्हिः सी॑द । वी॒हि शू॑र पुरो॒ळाश॑म् ॥ ३ ॥**

इमा[13] । स्तुतिभिर्य उह्यते तस्य सम्बोधनं ब्रह्मवाह[14] इति । इमानि । ब्रह्माणि स्तुतयः[15] ।

---

१. हे इन्द्र ! Sy.

२. निषण्णो वर्तते। सत्तः—'षद्लृ विशरणादिषु' इत्यस्मात् 'गत्यर्थाकर्मकश्लिष—' (Pa. 3. 4. 72.) इत्यादिना कर्तरि क्तः । सर्वविधीनां छन्दसि विकल्पितत्वादत्र निष्ठातकारस्य नत्वाभावः Sy.

३. ऋत्विक् तवाह्वानार्थम् Sy.

४. अस्मदीये यज्ञे Sy.

५. ०काला P.

६. Omitted in P.

७. ०त्वियं P. प्राप्तकालः सन्। ऋत्वियः—ऋतुशब्दात् 'छन्दसि घस्' इति घस्प्रत्ययः । घस्येयादेशः । 'सिति' इति पदसंज्ञायाम् 'ओर्गुणः' इति भसंज्ञाधीनो गुणो न भवति । यणादेशः । प्रत्ययस्वरः Sy.

८. हविःध्वासत्रेषु स्तीर्णमभूत् । तिस्तिरे—'स्तृञ् आच्छादने !' इत्यस्य कर्मणि लिटि 'ऋत इद्धातोः' इतीत्वम् । द्विर्वचने 'शर्पूर्वाः खयः' इति तकारस्य शेषः । 'लिटस्तझयोरेशिरेच्' इति तप्रत्ययस्य एश् इत्यादेशः । पादादित्वादनिघातः । प्रत्ययस्वरः Sy.

९. ०षक्तम् P. परस्परसम्बद्धं यथा भवति तथा । आनुषक्—'षञ्ज सङ्गे' । क्विप् । 'अनिदिताम्—' इति नलोपः । आङन्वोरुपसर्गयोः प्राक् प्रयोगः । गतिसमासः । कृदुत्तरपदस्वरः Sy.

१०. परस्परं सङ्गता अभूवन् । तस्मात्सोमपानार्थं त्वमागच्छेति भावः । अयुज्रन् —'युजिर् योगे' इत्यस्य लुङि च्लेः 'इरितो वा' इत्यङादेशः । 'बहुलं छन्दसि' इति रुडागमः । पादादित्वादनिघातः । अडागमस्वरः Sy.

११. प्रातःसवने Sy.

१२. ०वार्थं ग्रावार्थं P.

१३. इमाः M. and P. विश्वामित्रस्य SKN. विश्वामित्रस्येदमार्षम् Dur.

१४. ब्रह्माणि स्तोत्राणि स्तुत्यतया वहतीति ब्रह्मवाहाः, ब्रह्मणा स्तोत्रेण प्राप्यते इति वा । हे स्तुत्य ! इन्द्र ! तुभ्यम् । 'वह प्रापणे' इत्यस्मात् 'वहिहाधाञ्भ्यश्छन्दसि' इत्यसुन् । 'णित्' इत्यनुवृत्तेरुपधावृद्धिः । आमन्त्रितत्वान्निघातः Sy. ब्रह्म स्तुतिलक्षणमुच्य ? (ह्य) ते प्राप्यते यत्र स्तोतृभिः स ब्रह्मवाहाः । स्तुत्यर्थं तस्य सम्बोधनम् SKN. ब्रह्मणोऽस्य हविषो वहनसमर्थानि Dur.

१५. स्तोत्राणि Sy. स्तुतिरूपाणि SKN. ऋग्यजुःसामाख्यानि स्वरसौष्ठवादियुक्तानि Dur.

क्रियन्ते[1] त्वदर्थम्[2]। ततः स्तीर्णं बर्हिः[3]। आसीद[4]। भक्षय[5] च। शूर[6]! पुरोडाशम्[7]।

**रा॒र॒न्धि सव॑नेषु ण ए॒षु स्तोमे॑षु वृत्रहन्। उ॒क्थेष्वि॑न्द्र गिर्वणः ॥ ४ ॥**

रारन्धि[8]। रमस्व[9]। सवनेषु[10]। अस्माकम्[11]। एषु[12]। स्तोमेषु[13]। वृत्रहन्[14]! शस्त्रेषु[15] च[16]। इन्द्र! गीर्भिर्वननीय[17]!

---

१. अस्माभिः। क्रियन्ते—करोतेः कर्मणि यक्। 'रिङ्शयग्लिङ्क्षु' इति रिङादेशः। प्रत्ययस्वरः। पादादित्वादनिघातः Sy. क्रियन्तेऽस्माभिः SKN. अस्माभिः क्रियन्त उच्यन्त इत्यर्थः Dur.

२. ०दर्थं P. त्वां प्रति Dur.

३. स्तुत्यतया बर्हिषि यज्ञे। बर्हिः—कालाध्वनोरत्यन्तसंयोगे द्वितीया Sy.

४. उपविश Sy. एतज्ज्ञात्वा आसीदेदं बर्हिः SKN. यतो ब्रवीमि, हे इन्द्र...आसीदेदं बर्हिः प्रति Dur.

५. वीहि—'वी कान्त्यादिषु', लोटि रूपम्। हेर्ङित्त्वादुदात्तः Sy. 'वी॒हि शूर॑ पु॒रो॒ळाश॑म्' इति खादत्यर्थः।...आसद्य च वीहि खाद पुरोडाशकर्मत्वाच्च वीतेः खादतिकर्मत्वाध्यवसानम्। खादतेर्द्रव्यकर्मत्वात् SKN. आसीनश्चैतस्मिन् बर्हिषि...भक्षयैतदस्मत्प्रत्तम्।...एवमेतस्मिन् मन्त्रे "वी॒हि शूर॑ पु॒रो॒ळाश॑म्" (RV. III.41.3.)इत्येतस्मादेकवाक्यसंयोगात् 'वीहि' इत्येष शब्दः खादनार्थः प्रतीयते। किमयं बर्हिष्यासीन इन्द्रः पुरोडाशस्यान्यत्र भक्षणात् कुर्यात्? प्रसिद्धं च लोके कठिनद्रव्यस्य भक्षणम्। भक्षयति मोदकानि। तस्मात्सामर्थ्याद्भक्षणार्थोऽयमित्युपपद्यते Dur.

६. हे...समर्थेन्द्र! अस्माभिर्दीयमानमिमम् Sy.

७. पुरोडाशाख्यं हविः। पुरोळाशम्—'दाशृ दाने' इत्यस्मात् पुरस्पूर्वात् 'मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्' (Pa. 3. 2. 71.) पुरो दाशन्त एनमिति निपातनाड्डकारस्य ळकारः। कृदुत्तरपदस्वरः Sy. 'वी॒हि शूर॑ पु॒रो॒ळाश॑म्। इति खादतिकर्मा' N. 4. 19.; SKN. II. 253.

८. ररन्धि M. and P.

९. रंस्व P. रारन्धि—'रमतेर्लोटि बहुलं छन्दसि' इति शपः श्लुः। 'छन्दस्युभयथा' इति हेरार्धधातुकत्वेनाङित्त्वात् 'अङितश्च' इति हेर्धिः Sy.

१०. सूयते सोमो येष्विति अधिकरणे सुनोतेर्ल्युट्। लित्स्वरः Sy.

११. अस्माकं सम्बन्धिषु त्रिषु। नः नसो नकारस्य 'नश्च धातुस्थोरुषुभ्यः' इति संहितायां णत्वम् Sy.

१२. M. adds च after एषु॥ क्रियमाणेषु Sy. १३. स्तोत्रेषु Sy.

१४. ०व्रहंस M. वृत्रस्य हन्तः! Sy.

१५. जल्पेषु P.

१६. वा P.

१७. स्तुतिभिर्वननीय! Sy.

**म॒तयः॑ सोम॒पामु॒रुं रि॒हन्ति॒ शव॑स॒स्पति॑म् । इन्द्रं॑ व॒त्सं न मा॒तरः॑ ॥ ५ ॥**

मतयः[1] ।[2] स्तुतयः[3] । सोमपातारम्[4] । महान्तम्[5] । लिहन्ति[6] । बलस्य[7] । पतिम् । इन्द्रम्[8] । वत्सम्[9] । इव[10] । मातरः[11] ।

**स मं॑न्दस्वा॒ ह्यन्ध॑सो॒ राध॑से त॒न्वा॑ म॒हे । न स्तो॒तारं॑ नि॒दे क॑रः ॥ ६ ॥**

स मन्दस्व ।[12] स त्वम्[13] । मन्दस्व[14] । अन्नेन[15] । महते[16] । धनाय । शरीरभूतेन[17] सोमेन मन्दस्व । हि[18] । स्तोतारं[19] च । निन्दायै[20] शत्रूणाम् । मा । कार्षीः[21], चलोपस्यात्र सद्भावाद् 'यद्धि-तु-परं[22] छन्दसि'[23] इत्येवं[24] न प्रवर्तते[25], एवं चात्र 'हि' इति पूरणमिति[26] ।

---

१. Omitted in P.

२. हे इन्द्र ! Sy.

३. अस्माभिः क्रियमाणाः स्तुतयः । मतयः—'मन ज्ञाने' इत्यस्मात् कर्मणि 'मन्त्रे वृष—' इत्यादिना क्तिन्नुदात्तः Sy.

४. सेवपा० P. सोमस्य पातारम् Sy.

५. उरुम्—'ऊर्णुञ् आच्छादने' इत्यस्मान्महत्यर्थे गम्यमाने 'महति ह्रस्वश्च' (Uṇādi. 1. 32.) इति कुप्रत्ययो (नुलोपो) धातोर्ह्रस्वश्च । प्रत्ययस्वरः Sy.

६. लिन्ति P. त्वाम् । रिहन्ति, 'लिह आस्वादने' इत्यस्य लटि रूपम् । रलयोरभेदः । प्रत्ययस्वरः Sy.

७. शवसस्पतिम् इति संहितायां 'षष्ठ्याः पतिपुत्रपृष्ठ—' इत्यादिना विसर्जनीयस्य सत्वम् Sy. ८. इन्नम् P.

९. P. reads सविम् for वत्सम् ॥ वत्सम्—'वद व्यक्तायां वाचि' । अस्मात् वृतृवविहनि—' इत्यादिना सप्रत्ययः । वदत्यभीक्ष्णं मातरमिति वत्सो गोबालः । प्रत्ययस्वरः Sy.

१०. तत्र दृष्टान्तः । यथा Sy.

११. धेनवो लिहन्ति तद्वत् Sy. १२. हे इन्द्र ! Sy. १३. तथाविधस्त्वम् Sy.

१४. हृष्टो भव । मन्दस्व—'मदि स्तुत्यादिषु' इत्यस्य लोटि रूपम् । 'हि च' इति निघातप्रतिषेधेन भवितव्यमिति चेन्न । तत्र 'अप्रातिलोम्ये' इति वर्तते । अत्र हेः समुच्चयार्थत्वान्निघातः Sy.

१५. अस्माभिर्दीयमानस्य सोमस्य पानेन Sy.

१६. महे—तकारलोपश्छान्दसः । 'बृहन्महतोरुपसंख्यानम्' इति विभक्तेरुदात्तत्वम् Sy. १७. शरीरेण सह । तन्वा—'उदात्तस्वरितयोः' इति स्वरितत्वम् Sy.

१८. हिः अत्र समुच्चयार्थः Sy.

१९. किञ्च त्वं . . . माम् Sy.

२०. ०न्दायैः P. निन्दायै विषयभूतम् । निदे—'णिदि कुत्सायाम्' इत्यस्मात् सम्पदादिलक्षणो भावे क्विप् । आगमानुशासनस्यानित्यत्वान्नुमभावः । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् Sy.

२१. करः—करोतेर्लुङि च्लेः 'कृमृदृरुहिभ्यश्छन्दसि' इत्यङादेशः । निघातः Sy.

२२. परमं P.

२३. जन्मसि P. (Pa. 8. 1. 56.)

२४. इत्येतन्न is suggested for इत्येवं न ।

२५. ०वर्तं P. २६. पुर इ० P. ['चलोपस्यात्र . . . पूरणमिति'] Cf. note no. 14 on this page.

**वयमिन्द्र त्वायवो हविष्मन्तो जरामहे । उत त्वमस्मयुर्वसो ॥ ७ ॥**

वयमिन्द्र[1] । वयम् । इन्द्र ! त्वत्कामाः[2] । हविष्मन्तः[3] । स्तुमः[4] । अपिच । त्वमपि[5] । अस्मत्कामो[6] भव । वासयितः[7] !

**मारे अस्मद्वि मुमुचो हरिप्रियार्वाङ् याहि । इन्द्र स्वधावो मत्स्वेह ॥ ८ ॥**

मारे । अस्मत्तः[8] । दूरे[9]ऽन्यस्मिन् यजमाने । अश्वौ, मा । विमुचः[10] । हे हरिप्रिय[11] ! अस्मदभिमुखम्[12] । आगच्छ[13] । इन्द्र ! अन्नवन्[14] ! इह[15] । सोमेन मत्स्व[16] ।

**अर्वाञ्चं त्वा सुखे रथे वहतामिन्द्र केशिना । घृतस्नू बर्हिरासदे ॥ ९ ॥**

अर्वाञ्चम् । अस्मदभिमुखम्[17] । त्वाम् । सुखे[18] । रथे स्थापयित्वा[19] । वहताम्[20] । अश्वौ

---

१. Omitted in P.

२. यज्ञार्थं त्वामात्मन इच्छन्तस्त्वत्कामाः सन्तः। त्वायवः—'त्वामिच्छन्तीत्यर्थे सुप आत्मनः क्यच्' । 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तस्य त्वादेशः । 'क्याच्छन्दसि' इत्युप्रत्ययः । 'त्वद्यवः' इति प्राप्तौ 'युष्मदस्मदोरनादेशे' इत्यविभक्तावपि हलादौ व्यत्ययेनात्वम् । प्रत्ययस्वरः Sy.

३. सम्भृतहविष्काः । हविष्मन्तः—'तसौ मत्वर्थे' इति भसंज्ञायां सकारस्य रुत्वाभावः । 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति परिभाषानाश्रयणात् मतुप उदात्तताभावः । इसिप्रत्ययस्वरः Sy.

४. स्तमः M. Cf. (जरामहे) 'जरतेः स्तुतिकर्मणः' N. 10. 8. ५. त्वम् P.

६. हविःस्वीकरणार्थमस्मानात्मन इच्छन् । अस्मयुः—अस्मानिच्छतीत्यर्थे सुपः क्यच् । तस्मादुप्रत्ययः । पूर्वपदान्तलोपश्छान्दसः । प्रत्ययस्वरः Sy.

७. हे सर्वस्य वासकेन्द्र ! Sy.

८. अस्मत्—अस्मच्छब्दस्य पञ्चमीबहुवचनस्य 'पञ्चम्या अत्' (Pa. 7. 1. 13.) इत्यदादेशः Sy.

९. रथे योजितावश्वौ Sy.

१०. विमुमोचः M. विमोचय । ताभ्यामुपेत एव । मुमुचः—'मुच्लृ मोक्षणे' इत्यस्य ण्यन्तस्य छान्दसे लुङि चङि रूपम् । अभ्यासस्य दीर्घाभावश्छान्दसः । 'न माङ्योगे' इत्यडभावः । निघातः Sy.

११. हरी अश्वौ प्रियौ यस्य तादृश ! हे इन्द्र ! आमन्त्रितस्य पादादित्वात् षाष्ठिकमाद्युदात्तत्वम् Sy.

१२. अदस्म० P. अस्मदाभिमुख्येन Sy.

१३. ०मुख P. १४. हे सोमलक्षणान्नवन् ! Sy. १५. अस्मिन् देवयजने Sy.

१६. सोमं पीत्वा हृष्टो भव ! मत्स्व—'मदि स्तुत्यादिषु' इत्यस्य लोटि 'बहुलं छन्दसि' इति विकरणस्य लुक् । आमन्त्रितस्याविद्यमानत्वेन पादादित्वादनिघातः Sy.

१७. अर्वाञ्चम्—अञ्चतेः क्विनि 'उगिदचाम्—' इति नुम् Sy. १८. नु द्वारे M. सुखे P. सुखकरे Sy. १९. त्वाम् Sy.

२०. वहेर्लोटि रूपम् । तसो लसार्वधातुकस्वरे कृते धातुस्वरः Sy.

केशवन्तौ[1] । घृतमित्युदकनाम,[2] उदकस्राविणौ[3] । बर्हिरिदम्[4] । अधिष्ठातुम्[5] ।

## III. 42.

**उप॑ नः सु॒तमा ग॑हि॒ सोम॑मिन्द्र॒ गवा॑शिरम् । हरि॑भ्यां॒ यस्ते॑ अस्म॒युः ॥ १ ॥**

उप[7] नः । उपागच्छ[8] । अस्माकम्[9] । सुतम्[10] । सोमम्[11] । इन्द्र[12] ! पयोमिश्रणम्[13] । अश्वाभ्याम् । यः । ते[14] । अस्मत्कामो[15] रथः, तेन चेति ।

**तमि॑न्द्र॒ मद॒मा ग॑हि ब॒र्हिः॒ष्ठां ग्राव॑भिः सु॒तम् । कु॒विन्न्व॑स्य तृ॒प्णव॑ः ॥ २ ॥**

तमिन्द्र[16] । तमिम् । सोमम्[17] । इन्द्र ! आगच्छ । बर्हिषि[18] स्थितम् । ग्रावभिः । अभिषुतम्[19] । बहु[20] च । अनेन[21] । तृप्यस्व[22][23] ।

---

१. केशिनौ स्कन्धप्रदेशे लम्बमानकेशयुक्तौ हरी Sy.

२. Omitted in P. Ngh. I. 12.; N. 7. 27.

३. श्रमजनितजलप्रस्रवणयुक्तौ Sy.

४. बर्हिरभिलक्ष्य Sy.

५. आसदनीयम् । आसदे—सदेः कृत्यार्थे केन्प्रत्ययः । नित्स्वरः । कृदुत्तरपदप्रकृतिस्वरः Sy.

६. VM. ignores इन्द्र ॥

७. 'उप नः सुतम्' इति नवर्चं चतुर्थं सूक्तं वैश्वामित्रं गायत्रमैन्द्रम् । 'उप नः' इत्यनुक्रमणिका (KSA. 19. 42. p. 16.) । पूर्वसूक्तेन सहोक्तो विनियोगः Sy.

८. समीप आगच्छ Sy.

९. अस्मदीयम् Sy.

१०. सोमम् P. अभिषुतम् Sy.

११. सुतम् P. सोमं प्रति Sy.

१२. इन्द M.

१३. ०श्रम् P. पयसा मिश्रितम् । गवाशिरम्—आङ्पूर्वस्य श्रीणातेः क्विपि 'अपस्पृधेथामानृचुः—' (Pa. 6. 1. 36.) इत्यादिनाऽऽशिर इत्यादेशः । बहुव्रीहौ पूर्वपदस्वरः Sy. १४. तव रथः Sy.

१५. अस्मान्कामयमानो वर्तते Sy.

१६. मतिन्द्रः P.

१७. माद्यतेऽनेनेति मदः सोमः । मदम्—'मदी हर्षे' । 'मदोऽनुपसर्गे' इत्यप्प्रत्ययः । तस्य पित्त्वादनुदात्तत्वे धातुस्वरः Sy.

१८. बर्हिःष्ठाम्—'ष्ठा गतिनिवृत्तौ' । क्विप्संहितायां पूर्वपदसकारस्य 'आदेशप्रत्यययोः' इति षत्वम् । ष्टुत्वम् । कृदुत्तरपदस्वरः Sy.

१९. ष्टुतम् M. सुतम् D.

२०. प्रभूतं यथा भवति तथा Sy.

२१. अन्नेन M. अस्य सोमस्य पानेन Sy.

२२. तृप्तो भव । तृप्णवः—'तृप प्रीणने' इत्यस्य लेटचडागमः । कुविद्योगादनिघातः । क्षुभ्नादिषु 'नृनमन तृप्नोति' इति पठितम् । तथापि सर्वविधीनां छन्दसि विकल्पितत्वादत्र णत्वप्रतिषेधो न भवति । प्रत्ययस्वरः Sy.

२३. VM. ignores नु ॥ नु क्षिप्रम् Sy.

इन्द्रमित्था गिरो ममाच्छागुरिषिता इतः । आवृते सोमपीतये ॥ ३ ॥

इन्द्रम्[1] । इन्द्रम्[2] । प्रति[3] । गच्छन्ति[4] । इत्थं[5] प्रयुज्यमानाः । मम । स्तुतयः[6] । मया प्रेषिताः[7] । मत्सकाशात्[8] । मां[9] प्रत्यागन्तुम्[10] । सोमं च[11] पातुम् ।

इन्द्रं सोमस्य पीतये स्तोमैरिह हवामहे । उक्थेभिः कुविदागमत् ॥ ४ ॥

इन्द्रम्[12] । इन्द्रम् । सोमपानार्थम्[13] । स्तोत्रैः[14] । अस्मिन्[15] यज्ञे । हवामहे[16] । स चास्मदीयानि शस्त्राण्युदिश्य[17] । बह्विह[18] । आगच्छतु[19] ।

इन्द्र सोमाः सुता इमे तान्दधिष्व शतक्रतो । जठरे वाजिनीवसो ॥ ५ ॥

इन्द्र सोमाः । इन्द्र ! सुतान्[20] । सोमान्[21] । जठरे । कुरु[22] । हे अन्नेन वासयितः[23] ! [24]

---

१. हे इन्द्र ! Sy.
२. त्वाम् Sy.
३. आभिमुख्येन । अच्छ—'अच्छ गत्यर्थवदेषु' इति गतिसंज्ञा Sy.
४. च्छन्ती P. गच्छन्तु । अगुः—'इण् गतौ' इत्यस्य लुङि रूपम् । निघातः Sy.
५. त्वं P. अनेन प्रकारेणोच्यमानाः । इत्था—इदंशब्दात् 'था हेतौ च छन्दसि' इति व्यत्ययेन थाप्रत्ययः । इदमः 'एतेतौ रथोः' इति इदित्यादेशः । प्रत्ययस्वरः Sy.
६. स्तुतिलक्षणा वाचः Sy.
७. त्वदर्थं प्रेरिताः Sy.
८. मृत्स० P. अस्माद्देवयजनदेशात् Sy.
९. माम P. त्वाम् Sy.
१०. आवर्तयितुम् Sy.
११. किमर्थम् ? सोमपानार्थम् Sy.
१२. Omitted in P.
१३. ०नार्त्थम् P.
१४. Omitted in P. त्रिवृत्पञ्चदशादिस्तोमसाध्यैः Sy.
१५. अन्यस्मि० M. कर्मणि Sy.
१६. वयमाह्वयामः Sy.
१७. उक्थैः शस्त्रैश्च Sy.
१८. बहुवारमाहूतः स इन्द्रः Sy.
१९. यज्ञं प्रत्यागच्छतु । आगमत्—गमेर्लेटचडागमः । 'आगमा अनुदात्ताः' इत्यटोऽनुदात्तत्वाद् धातुस्वरः । 'तिङि चोदात्तवति' इति गतेर्निघातः । कुविद्योगादनिघातः Sy.
२०. ग्रावभिस्त्वदर्थमभिषुताः Sy.
२१. सोमाः Sy.
२२. धारय Sy.
२३. अन्नधन ! यद्वा वाजोऽन्नमासु फलत्वेनास्तीति वाजिन्यः क्रियाः । तासां वासक ! हे इन्द्र ! वाजिनीवसो—वाजशब्दान्मत्वर्थे 'अत इनिठनौ' इतीनिप्रत्ययः । 'ऋन्नेभ्यो ङीप्' इति ङीप् । तासां वसो । 'सम्बुद्धौ च' इति गुणः । आमन्त्रितत्वादाष्टमिकमनुदात्तत्वम् Sy.
२४. VM. ignores इमे । तान् and शतक्रतो ॥ हे शतक्रतो ! तान् सोमरसान् Sy.

**वि॒द्मा हि त्वा॑ धनंज॒यं वाजे॑षु द॒धृषं॑ कवे । अधा॑ ते सु॒म्नमी॑महे ॥ ६ ॥**

विद्मा हि[1] । जानीमः[2] । हि वयम्[3] । त्वाम्[4] । धनानां जेतारम्[5] । सङ्ग्रामेषु[6] । धर्षितारम्[7] । प्राज्ञ[8] ! ततो[9] वयम्[10] । त्वत्तः[11] । सुखम्[12] । याचामहे ।

**इ॒ममि॑न्द्र॒ गवा॑शिरं॒ यवा॑शिरं च नः पिब । आ॒गत्या॒ वृष॑भिः सु॒तम् ॥ ७ ॥**

इममिन्द्र । इमम्[13] । इन्द्र ! पयोमिश्रणम्[14] । यवसक्तुमिश्रणम्[15] । च । अस्मदीयम्[16] । पिब सोमम्[17] । आगत्य[18] । अध्वर्युभिर्ग्रावभिर्वा । सुतम्[19] ।

**तुभ्येदि॑न्द्र॒ स्व ओ॒क्ये॒३॒॑ सोमं॑ चोदामि पी॒तये॑ । ए॒ष रा॑रन्तु ते हृ॒दि ॥ ८ ॥**

तुभ्येत् । तुभ्यम्[20] । एव । इन्द्र ! स्वे[21] । उदकस्याहवनीये[22] । सोमम्[23] ।

---

१. M. previously omitted the *pratika*. In the space left blank another hand has put in विद्म ।

२. विद्मः—विदेर्लटि 'विदो लटो वा' इति मसो मादेशः । पादादित्वादनिघातः Sy.

३. खलु Sy.

४. त्वं M. Omitted in P.

५. अत एव धनं जयतीति धनञ्जयः । धनञ्जयम्—'जि जये' इत्यस्माद्धने उपपदे 'संज्ञायां भृतृवृजिधारिसहितपिदमः' इति खच्प्रत्ययः । 'अरुर्द्विषदजन्तस्य मुम्' इति पूर्वपदस्य मुमागमः । चित्त्वादन्तोदात्तः Sy.　　६. युद्धेषु Sy.

७. अधिता॰ P. शत्रूणामभिभवितारम् । दधृषम्—'ञिधृषा प्रागल्भ्ये' इत्यस्य यङ्लुकि अभ्यासस्य रीगभावश्छान्दसः । तदन्तात्पचाद्यचि 'यङोऽचि च' इति यङो लुक् । लघूपधगुणे प्राप्ते 'न धातुलोप' —इति तस्य प्रतिषेधः । चित्त्वादन्तोदात्तः Sy.

८. प्रज्ञा P. हे कवे ! क्रान्तदर्शिन्निन्द्र ! Sy.

९. अथ अनन्तरम् Sy.

१०. वय P.　　११. त्त्व P. ते तव Sy.

१२. धनम् Sy.

१३. इन्द्रम् P. सोमं देवयजनम् Sy.

१४. गव्यमिश्रणोपेतम् । गवाशिरं यवाशिरमित्यत्र आङ्पूर्वस्य श्रीणातेः क्विपि 'अपस्पृधेथामानृचुः—'इत्यादिनाशिर इत्यादेशः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः Sy.

१५. ०श्रणां P. यवमिश्रणोपेतम् Sy.

१६. अस्तदी० M.

१७. यो मम P.

१८. आगच्छति M. आगच्छत्य P.

१९. अभिषुतम् Sy.

२०. तुभ्य—युष्मच्छब्दस्य चतुर्थ्येकवचने तुभ्यमह्यौ—' इति तुभ्यादेशः । 'सुपां सुलुक्—' इति सुपो लुक् । 'ङयि च' इत्याद्युदात्तः Sy.

२१. स्व P. स्वकीये Sy.

२२. ळक० P. स्थाने जठरेऽभिषुतमिमम् । ओक्ये—वस्यादित्वात्स्वार्थिको यत्प्रत्ययः । तित्स्वरितः Sy.

२३. ०नीय P.　　२४. सोमाः P.

प्रेरयामि[1] । पानाय[2] । एषः[3] । तव[4] । हृदये[5] । रमताम्[6] ।

**त्वां सुतस्य पीतये प्रत्नमिन्द्र हवामहे । कुशिकासो अवस्यवः ॥ ९ ॥**

[त्वां सुतस्य ।][7] उत्तरा[8] निगदव्याख्यातेति[9] ।

III. 43.

**आ याह्यर्वाङुप वन्धुरेष्ठास्तवेदनु प्रदिवः सोमपेयम् ।**
**प्रिया सखाया वि मुचोप बर्हिस्त्वामिमे हव्यवाहो हवन्ते ॥ १ ॥**

आ याहि[10][11] । उपागच्छ[12] । अभिमुखः[13] । रथवन्धुरे[14] तिष्ठन्[15], वन्धुरशब्दः फलकासङ्घा-

---

१. प्रेरय M. चोदामि—'चुद प्रेरणे' ण्यन्तस्य लटि रूपम् । 'बहुलमन्यत्रापि' इति णेर्लुक् । निघातः Sy.

२. Omitted in M. पानार्थम् Sy.

३. स्त एषः P. पीतः सोमः Sy. ४. व P.

५. हृम M. ह्य P. हृदि—हृदयशब्दस्य 'पद्दन्नोमास्हृत्—' इत्यादिना हृदादेशः । 'ऊडिदम्—' इति विभक्तेरुदात्तत्वम् Sy.

६. ०मता P. अत्यर्थं रमताम् । रारन्तु—'रमु क्रीडायाम्' इत्यस्य यङ्लुकि लोटि सर्वविधीनां छन्दसि विकल्पितत्वात् अत्राभ्यासस्य नुमभावः । संहितायाम् 'अन्येषामपि—' इत्यभ्यासस्य दीर्घः । निघातः Sy. ७. Only M. contains this *pratika*, but it is an addition over the line in another hand.

८. Omitted in P.

९. Sy. explains this stanza in the following manner:— हे इन्द्र ! त्वत्तो रक्षणमिच्छन्तः । कुशिकगोत्रोत्पन्ना वयम् । ग्रावभिरभिषुतस्य सोमस्य । पानार्थम् । पुरातनम् । त्वाम् । स्तुतिलक्षणाभिर्गीर्भिराह्वयामः । पीतये—'स्थागापापचो भावे' इति क्तिन् । 'हिष्ठवत्सरतिशत्थान्तानाम्' (Phitsūtra. 7) इत्यन्तोदात्तत्वम् । हवामहे—ह्वयतेर्लटि 'बहुलं छन्दसि' इति सम्प्रसारणे रूपम् । अवस्यवः—अव इच्छन्तीत्यर्थे सुपः क्यच् । 'क्याच्छन्दसि' इत्युप्रत्ययः । 'कुशिकासो अवस्यवः' इत्यत्र संहितायाम् 'अव्यादवद्यात्—' (Pa. 6. 1.116. इत्यादिना एङः प्रकृतिभावः ।

१०. 'आ याह्यर्वाङ्' इत्यष्टर्चं पञ्चमं सूक्तं वैश्वामित्रं त्रैष्टुभमैन्द्रम् । 'आ याह्यष्टौ' इत्यनुक्रमणिका (KSA. 19. 43. p. 16.) । दशरात्रे चतुर्थेऽहनि स्तोमवृद्धौ माध्यन्दिने सवनेऽच्छावाकशस्त्रे स्तोमाभिशंसनार्थमिदं सूक्तम् । सूत्रितञ्च—'आ याह्यर्वाङित्यष्टर्चान्यावपेरन्' (ASS. 7. 12.) इति । महाव्रतेऽपि आवपनीयम् Sy. ११. हे इन्द्र ! Sy.

१२. अभिलक्ष्य समीपं आगच्छ Sy.

१३. अस्मदभिमुखः सन् Sy.

१४. वन्धुरशब्देन ईषाद्युसम्बन्धस्थानमभिधीयते । तेन तद्विशिष्टो रथो लक्ष्यते । तस्मिन् रथे तिष्ठंस्त्वम् । वन्धुरेष्ठाः—तिष्ठतेर्विच् । 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक् Sy. १५. तिष्ठ P.

टवचनः । तव[1] । एव । स्वभूतं पुराणम्[2] । सोमपानम्[3] । लक्षीकृत्य[4] । प्रियौ[5] । सखायावश्वौ[6] । विमुञ्च[7] । उपेत्य । बर्हिः[8] । त्वाम्[9] । इमे[10] । हविषां[11] वोढारः कुशिकाः । हवन्ते[12] ।

**आ याहि पूर्वीरति चर्षणीराँ अर्य आशिष उप नो हरिभ्याम् ।**
**इमा हि त्वा मतयः स्तोमतष्टा इन्द्र हवन्ते सख्यं जुषाणाः ॥ २ ॥**

आ याहि[13] । पूर्वान्[14] । यजमानान्[15] । अतिक्रम्य । अस्मान् प्रति आयाहि[16] । एक आकारः[17] पूरणः । स्वामी[18] त्वम् । अस्माकम् । आशासनानि[19] प्रति । उपागच्छ[20] । अश्वाभ्याम्[21] । इमाः । हि[22] । त्वाम् । स्तुतयः[23] । त्रिवृदादिभिः[24] संस्कृताः[25] । इन्द्र[26] ! हवन्ते[27] । त्वया सख्यम् । सेवमानाः[28] ।

---

१. तवैव सम्बन्धि Sy.
२. प्रत्नं पूर्वक्रमागतम् । प्रदिवः—सकारान्तमव्ययम् Sy.
३. ०पातनं P. सोमपानम् । सोमपेयम्—'पा पाने' इत्यस्य भावे 'अचो यत्' इति यत्प्रत्ययः । 'ईद्यति' इतीत्वम् । आर्धधातुकलक्षणो गुणः । 'यतोऽनाव' इत्याद्युदात्तत्वम् । समासे कृदुत्तरपदस्वरः Sy.
४. Omitted in M. त्वाम् उद्दिश्य Sy.
५. यौ M. तव प्रियतमौ Sy.
६. समानख्यानावश्वौ Sy.
७. विमुञ्च । मुच—मुञ्चतेर्लोटि आगमानुशासनस्यानित्यत्वान्नुमभावः Sy.
८. बर्हिः उप बर्हिषः समीपे ।
९. त्वम् P.
१०. ऋत्विजः Sy.
११. हव्यं वहन्तीति हव्यवाहः Sy.
१२. भव० M. and P. सोमपानार्थमाह्वयन्ति । तस्मादागच्छेति भावः Sy.
१३. हे इन्द्र ! Sy.
१४. सर्वाः Sy.   १५. प्रजाः Sy.
१६. आगच्छ Sy.
१७. द्वितीय आङ् पूरणः । आ संहितायाम् 'आङोऽनुनासिकश्छन्दसि' इत्यनुनासिकः Sy.
१८. स्वामि M. त्वामि P. अस्माकं स्वामी । अर्यः—'ऋ गतौ' । 'अर्यः स्वामिवैश्ययोः' इति निपातनाद् यत्प्रत्ययः । 'यतोऽनाव' इत्याद्युदात्तत्वे प्राप्ते 'अर्यस्य स्वाम्याख्या चेत्' इत्यन्तोदात्तत्वम् Sy.
१९. त्वमत्रागत्य सोमं पिबेत्येवमादिका अस्माकं प्रार्थनाः । आशिषः—क्विपि 'शास इदङ्हलोः' इत्युपधाया इत्वम् । 'शासिवसिघसीनाञ्च' इति षत्वम् Sy.
२०. M. adds आगच्छ after उपागच्छ ।
२१. अश्वाभ्यां युक्तः सन् Sy.
२२. हि प्रसिद्धौ Sy.
२३. करणे कर्तृव्यापारः, काष्ठानि पचन्तीतिवत् Sy.
२४. ०दादिः P. स्तोमकारिभिः स्तोतृभिः Sy.
२५. संस्तुताः P. कृताः । स्तोमतष्टाः, । 'तक्षू त्वक्षू तनूकरणे' इत्यस्मात् कर्मणि क्तः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरः Sy.
२६. इन्द्रं M. D.
२७. सोमपानार्थम्. . .आह्वयन्ति Sy.
२८. सोमपानाः P.

आ नो यज्ञं नमोवृधं सजोषा इन्द्र देव हरिभिर्याहि तूयम् ।
अहं हि त्वा मतिभिर्जोहवीमि घृतप्रयाः सधमादे मधूनाम् ॥ ३ ॥

आ नो यज्ञम्[१]। आयाहि। अस्माकम्। यज्ञम्। अन्नेन वर्धमानम्[२]। मरुद्भिः सहितः[३]। इन्द्र! देव[४]! अश्वैः। तूर्णम्[५]। अहम्। हि[६]। त्वा[७]। स्तुतिभिः। अत्यन्तमाह्वयामि[८]। क्षरदन्नः[९]। सोमानाम्[१०]। सह मदनस्थाने[११] यज्ञे।

आ च त्वामेता वृषणा वहातो हरी सखाया सुधुरा स्वङ्गा ।
धानावदिन्द्रः सवनं जुषाणः सखा सख्युः शृणवद्वन्दनानि ॥ ४ ॥

आ च त्वाम्[१२]। आवहतः[१३]। च[१४]। त्वाम्। एतौ। वर्षितारौ[१५]। अश्वौ[१६]। तव सखायौ[१७]। शोभनधुरौ[१८]। शोभनाङ्गौ[१९]। उत्तरोऽर्द्धः[२०] परोक्षः, धानायुक्तम्[२१]। सवनम्। इन्द्रः[२२]। सेवमानः[२३]। सखा[२४]। सख्युर्यजमानस्य[२५]। शृणुयात्[२६]। स्तोत्राणि[२७]।

---

१. Both M. and P. omit the *pratika*. Only M. has it added later over the line by another hand.
२. नमसोऽन्नस्य वर्धकमिमम् Sy.
३. सहप्रीतिस्त्वम् Sy.
४. द्योतमान! Sy.
५. क्षिप्रम् Sy. ६. ए P. खलु Sy.
७. त्वाम् Sy.
८. भृशमाह्वयामि जोहवीमि—यङ्लुकि 'अभ्यस्तस्य च' इति सम्प्रसारणम्। 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणः। 'यङो वा' इतीडागमः। हियोगादनिघातः। 'अभ्यस्तानामादिः' इत्याद्युदात्तः Sy.
९. ०दन्न P. घृतसहितानि प्रयांस्यन्नरूपाणि हवींषि यस्य सत थोक्तः। तादृशोऽहम्। घृतप्रयाः—'घृ क्षरणदीप्त्योः' इत्यस्मात् 'अञ्जिघृसिभ्यः क्तः इति क्तप्रत्ययः। बहुव्रीहौ पूर्वपदस्वरः Sy.
१०. ०मपानाम् M. सह सो० P.
११. सह माद्यन्ति यत्र सोमे इति सधमादस्तस्मिन् स्थाने Sy.
१२. हे इन्द्र! Sy.
१३. यज्ञं प्रत्यागमनाय रथे...आवहतः। वहातः—वहेर्लेटधाडागमे रूपम्। 'चवायोगे प्रथमा' इति न निघातः Sy.
१४. चे P. १५. सेचनसमर्थौ Sy.
१६. हरी Sy.
१७. शोभनस्थानौ Sy.
१८. शोभनया धुरान्वितौ Sy.
१९. शोभनावयवोपेतौ Sy.
२०. ०त्तरार्धः M. and D.
२१. धना P. अथ भृष्टयवोपेतम् Sy.
२२. इन्द्रः P.
२३. ०माना P.
२४. सखिभूतः सः Sy.
२५. स्तोतुर्मम Sy.
२६. ०णुयां P. शृणवत्—'शु श्रवणे' इत्यस्य लेटधडागमे रूपम्। निघातः Sy.
२७. स्तोत्रमिति P.

कुविन्मा गोपां करसे जनस्य कुविद्राजानं मघवन्नृजीषिन् ।
कुविन्म ऋषिं पपिवांसं सुतस्य कुविन्मे वस्वो अमृतस्य शिक्षाः ॥ ५ ॥

कुवित्[1] । बहु[2] । मा[3] । त्वं पुत्रादेः[4] । गोपायितारम्[5] । करोषि[6] । कुविच्च । धनस्यैश्वरम्[7] । धनवन्[8] ! ऋजीषवन्[9] ! तृतीयसवनेऽन्वयात् । तथा बहु । माम्[10] । द्रष्टारं[11] करोषि । सोमम्[12] । पपिवांसम्[13] । तथाऽमृतसदृशम्[14] । वासयितारं[15] गवादिकम् । बहु । प्रयच्छ[16], शिक्षतिर्दानकर्मेति[17] ।[18]

आ त्वा बृहन्तो हरयो युजाना अर्वागिन्द्र सधमादो वहन्तु ।
प्र ये द्विता दिव ऋञ्जन्त्याताः सुसंमृष्टासो वृषभस्य मूराः ॥ ६ ॥

आ त्वा । आवहन्तु । त्वाम् । महान्तः । अश्वाः । रथे नियुज्यमानाः[19] । अस्मदभिमुखम् । सह मादयन्तः[20] । ये[21] । द्युलोकस्य[22] । आता[23] इति दिङ्नाम[24], दिशः । अन्धकारेण परिवृतत्वात्[25]

---

१. हे इन्द्र ! Sy.
२. कुवित् अपिच Sy.
३. माम् Sy. ४. नं M. जनस्य Sy.
५. गोप्तारम् Sy.
६. कुरु । करसे—'डुकृञ् करणे' । लेटघडागमे रूपम् । कुविद्योगादनिघातः Sy.
७. ०स्यैश्वं M. सर्वस्य स्वामिनम् Sy.
८. धेननवन् M.
९. दृ(or ऋ)जी० P. सोमवन् ! हे इन्द्र ! Sy. १०. मान् M. मन् P.
११. अतीन्द्रियार्थस्य द्रष्टारं कुरु । म ऋषिम्—इत्यत्र संहितायाम् 'ऋत्यकः' इति प्रकृतिभावो ह्रस्वश्च Sy.
'ऋषिर्दर्शनात्' N. 2. 11.
१२. अभिषुतस्य सोमस्य Sy.
१३. पविवांसन् M. पवितांसन् P. पातारं कुरु। पपिवांसम्—'पा पाने' इत्यस्य क्वसौ 'वस्वेकाजाद्घसाम्' इतीडागमः । प्रत्ययस्वरः Sy.
१४. क्षयरहितम् Sy. १५. वसु Sy.
१६. लयच्च M. शिक्षाः—शिक्षतिर्दानकर्मा । अस्मात् लेटघाडागमे रूपम् । कुविद्योगादनिघातः । 'आगमा अनुदात्ताः' इत्याटोऽनुदात्तत्वे धातुस्वरः Sy.
१७. Ngh. 3. 20; also Cf. N. 1.7.
१८. VM. ignores मे ॥ मे मह्यम् Sy.
१९. युज्य० P. युज्यमानाः । युजानाः—'युजिर् योगे' 'युजिबुधिदृशः किच्च' (Uṇādi. 2. 247.) इत्यानच् । चित्त्वादन्तोदात्तः Sy.
२०. सह मादयन्तः सन्तः । सधमादः—'मदी हर्षे' इत्यस्माण्ण्यन्तात्क्विप् । कृदुत्तरपदस्वरः Sy. २१. अश्वाः Sy.
२२. नभसः सकाशादागच्छन्तः । दिवः—'ऊडिदम्—'इति विभक्तेरुदात्तत्वम् Sy.
२३. अन्ताः P. आभिमुख्येन गम्यन्ते प्राणिभिस्तत्तत्कार्यं प्रतीत्याता दिशः । सर्वा दिशः । 'अत सातत्यगमने' इत्यस्मात्कर्मणि घञ् । व्यत्ययेनाद्युदात्तः Sy.
२४. Ngh. I. 6. २५. ०तत्वा M.

मूढाः । प्रकर्षेण । ऋञ्जन्ति । द्वैधम्, मध्येन गच्छन्तः प्रकाशनेनालङ्कुर्वन्तीत्यर्थः । सुसम्मृष्टाङ्गाः । कामानां वर्षितुरिन्द्रस्य स्वभूताः ।

इन्द्र पिब वृषधूतस्य वृष्ण आ यं ते श्येन उशते जभार ।
यस्य मदे च्यावयसि प्र कृष्टीर्यस्य मदे अप गोत्रा ववर्थ ॥ ७ ॥

इन्द्र । इन्द्र ! पिब । ग्रावभिरंशुभ्योऽवधूतम् । वृषाणं सोमम् । यम् । त्वदर्थम् । दिवः, गायत्री । आजहार । कामयमानाय । यस्य पीतस्य । मदे । शत्रून् । प्रच्यावयसि । यस्य । मदे । मेघान् । अपववर्थ ।

१. ढाः M. शत्रूणां मारकाः Sy.
२. साधयन्ति Sy.
३. द्वैसं M. द्विधा यथा भवति तथा । द्विता—द्विशब्दात् 'संख्याया विधार्थे धा' इति धाप्रत्ययः । धकारस्य तकारश्छान्दसः । प्रत्ययस्वरः Sy.
४. समिष्टा० P. इन्द्रस्य हस्ताभ्यां पृष्ठभागे सुष्ठु संस्पृष्टाः Sy.
५. VM. ignores इन्द्र ॥
६. ०वधूतं M. अभिषुतम् । वृषधूतस्य—'धूञ् कम्पने' इत्यस्य निष्ठायां 'यस्य विभाषा' इतीट्प्रतिषेधः । 'तृतीया कर्मणि' इति पूर्वपदस्वरः Sy.
७. अभिमतफलसेचकम् Sy.
८. सोमम् Sy.
९. दत्त्वं P. तुभ्यम् Sy.
१०. ०यती P. शंसनीयगतिः छन्दोरूपः सुपर्णः । श्येनः—'श्यैङ् गतौ' 'शास्त्याहृञविभ्य इनच्' (Uṇādi. 2. 204.) इतीनच्प्रत्ययः । श्यायते इति श्येनः । चित्त्वादन्तोदात्तः Sy.
११. जभार—हरतेर्लिटि णलि रूपम् । 'हृग्रहोर्भश्छन्दसि' इति भकारः । यद्वृत्तयोगादनिघातः । लित्स्वरः Sy.
१२. सोमं कामयमानाय Sy.
१३. सोमस्य Sy.
१४. मते M. हर्षे सञ्जाते सति । मदे—'मदी हर्षे'। 'मदोऽनुपसर्गे' इत्यप्प्रत्ययः । तस्य पित्त्वादनुदात्तत्वे धातुस्वरः Sy.
१५. आकर्षन्ति वशीकुर्वन्ति कर्मणा सर्वानिति कृष्टयो मनुष्याः । तान् सपत्नभूतान् मनुष्यान् Sy.
१६. प्रत्यप्यपवीय P. प्रकर्षेण पातयसि Sy.
१७. सोमस्य Sy.
१८. सञ्जाते सति Sy.
१९. मेघोन् P. गामुदकं रश्मिभिरावृतं वर्षास्वृतुषु त्रायन्ते पालयन्तीति गोत्रा मेघाः । तान् । गोत्रा—'त्रैङ् पालने' इत्यस्य 'आतोऽनुपसर्गे कः' इति कः । सुपो डादेशः । एकादेशस्वरः Sy.
२०. अववर्य M. अववर्त्यः P. अपावृणोषि । ववर्थ—'वृञ् वरणे' इत्यस्य लिटि थलि 'ऋतो भारद्वाजस्य' इतीट्प्रतिषेधः । गुणः । लित्स्वरः Sy.

शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ ८ ॥

[ शुनं हुवेम[१] । ]

## III.44.

अयं ते अस्तु हर्यतः सोम आ हरिभिः सुतः ।
जुषाण इन्द्र हरिभिर्न आ गह्या तिष्ठ हरितं रथम् ॥ १ ॥

[२]अयम् । अयम्[३] । तव[४] । अस्तु पानाय[५] । प्रेप्सतः[६] । सोमः । आकारः[७] पूरणः । ग्रावभिः[८] । सुतः[९] । तमिमं सेवमानस्त्वम्[१०] । अस्मान्[११] । अश्वैः[१२] । आगच्छ । तदर्थं[१३] हरितवर्णम्[१४] । रथम्[१५] । आतिष्ठेति[१६] ।[१७]

१. Only M. has this *pratīka,* added in a different handwriting. For explanation see RV. III. 30. 22.

२. 'अयं ते अस्तु' इति पञ्चर्चं षष्ठं सूक्तं वैश्वामित्रं बार्हतमैन्द्रम् । अत्रानुक्रमणिका—'अयं ते पञ्च बार्हतं तु' (KSA. 19. 44. p. 16.) इति । महाव्रते बार्हत्यां तृचाशीताविदं सूक्तम् (AA. 5.2.4.)। षोडशिशस्त्रे 'अयं ते अस्तु हर्यतः' इत्याद्यस्तृचो विनियुक्तः । सूत्रितञ्च—'अयं ते अस्तु हर्यत इत्यौष्णिहबार्हतौ तृचौ' (ASS. 6. 2.) इति Sy.

३. Omitted in M.

४. तुभ्यम् Sy. ५. अपालनाय M.

६. प्रेप्सत P. कमनीयः । हर्यतः—'हर्य गतिकान्त्योः' इत्यस्मात् 'भृमृदृशि—' इत्यादिनाऽतच्प्रत्ययः । चित्त्वादन्तोदात्तः Sy. ७. सर्वतः Sy.

८. हरन्ति सोमरसानेभिरिति हरयो ग्रावाणः । तैः Sy.

९. अभिषुतः Sy.

१०. सेव रश्मीनां दिशवामबाधमानम् P. Cf. Note 15 on P. 612. ॥ प्रीतिविषयः Sy.

११. ततः अस्मानभिलक्ष्य Sy.

१२. अश्वैर्युक्तम् Sy. १३. तदर्थं P.

१४. हरिद्वर्णम् । हरितम्—'हृञ् हरणे' 'हृश्याभ्यामितन्' (Uṇādi. 3. 373.) इतीतन्प्रत्ययः । नित्त्वादाद्युदात्तः Sy.

१५. रथम्—'रमु क्रीडायाम्' । 'हनिकुषिनी—'इत्यादिना क्थन् प्रत्ययः । कित्त्वादनुनासिकलोपः । नित्स्वरः Sy.

१६. अधितिष्ठ Sy.

१७. VM. ignores इन्द्र !

हर्यन्नुषसमर्चयः　　सूर्यं　　हर्यन्नरोचयः ।
विद्वांश्चिकित्वान्हर्यश्व वर्धस इन्द्र विश्वा अभि श्रियः ॥ २ ॥

हर्यन् । इत्थं करोमीति कामयमानः[1] । उषसम्[2] । प्रकाशितवानसि[3] । सूर्यम्[4] । अरोचयः[5] । केतन[6]वेदन[7]योरल्पो भेदः । स त्वं यजमानानां सर्वा[8] । श्रीः[9] । लक्षीकृत्य । वर्धसे[10] । हे हरित[11]वर्णाश्व[12] !

द्यामिन्द्रो　हरिधायसं　पृथिवीं　हरिवर्पसम् ।
अधारयद्धरितोर्भूरि　भोजनं　ययोरन्तर्हरिश्चरत् ॥ ३ ॥

द्यामिन्द्रः[13] । द्युलोकम् । इन्द्रः[14] । रश्मीनां दिशां वा धारकं[15] कृतवान् । भूमिं[16] च ।

---

१. ०माना P. सोमं कामयमानस्त्वम् Sy.

२. उषःकालम् Sy.

३. पूजयसि Sy.

४. P. adds अपि after सूर्यम् ।

५. दीपयसि Sy.

६. VM. seems to explain विद्वान् and चिकित्वान् together as केतनवेदनयोरल्पो भेदः ॥ चिकित्वान्—अस्मदभिलषितफलविषयज्ञानवांस्त्वम् । चिकित्वान्—'कित ज्ञाने' इत्यस्य क्वसौ रूपम् । प्रत्ययस्वरः Sy.

७. वेतन० M. चेदन० P. ॥ विद्वान् एतत् सर्वं जानानः Sy.

८. सर्वाः is suggested for सर्वा ।

९. श्रियः is suggested for श्रीः ॥ नः सम्पदः Sy.

१०. अभिमतफलप्रदानेनाभितो वर्धयसि । वर्धसे—'वृधु वर्धने' इत्यस्यान्तर्भावितण्यर्थस्य लटि रूपम् । निघातः Sy.

११. ०वर्णश्च M. ०वर्णाश्वं P.

१२. VM. explains हर्यन् (once only) and ignores इन्द्र ॥ हर्यन्—उदिते सूर्ये सोमं कामयमानस्त्वम् Sy.

१३. ०मिन्द्र M.

१४. सोऽयमिन्द्रः Sy.

१५. P. omits रश्मीनां दिशां वा धा before रकं of धारकम् । Cf. note 10 on P. 611. हरितो हरितवर्णा धारका रश्मयो यस्याः सा, ताम् । हरिधायसम्—'डुधाञ् धारणपोषणयोः' इत्यस्मात्, 'वहिहाधाञ्भ्यश्छन्दसि' इत्यसुन् । 'णित्' इत्यनुवृत्तेः आतो युक् । बहुव्रीहौ पूर्वपदस्वरः Sy.

१६. पृथिवीम्—'प्रथेः षिवन् सम्प्रसारणं च' इति षिवन् प्रत्ययः । 'षिद्गौरादिभ्यश्च' इति ङीष् । प्रत्ययस्वरेणान्तोदात्तः Sy.

ओषधीभिर्हरितरूपाम् । तथा दिवि च पृथिव्यां च । देवमनुष्याणां भूरि । भोजनम् । अधार-
यत् । ययोः । मध्ये । हरिः । चरति ।

**जज्ञानो हरितो वृषा विश्वमा भाति रोचनम् ।**
**हर्यश्वो हरितं धत्त आयुधमा वज्रं बाह्वोर्हरिम् ॥ ४ ॥**

जज्ञानः । जायमानः । हरितवर्णः । इन्द्रः । सर्वम् । लोकम् । प्रकाशयति । हरित-
वर्णाश्वः । हरितवर्णम् । आयुधम् । धारयति । बाह्वोः । वज्रसंज्ञम् । शत्रूणां हरणशीलम् ।
आकारः पूरणः ।

---

१. हरितवर्णाम् । हरिवर्पसम्—'वृङ् सम्भक्तौ' 'वृङ्शीङ्भ्यां रूपस्वाङ्गयोः' इत्यसुन्प्रत्ययः । पुगागमश्च । सम्भज्यते तदिति वर्पो रूपम् । बहुव्रीहौ पूर्वपदस्वरः Sy.

२. हरिद्वर्णयोः । हरितोः—'हृञ् हरणे' इत्यस्मात् 'हृसृरुहियुषिभ्य इतिः' (Uṇādi. 1. 97.) इतीतिप्रत्ययः । प्रत्ययस्वरः Sy.

३. स्वकीययोरश्वयोः प्रभूतम् Sy.

४. भुज्यत इति भोजनं यवसादि । भोजनम्—'भुज पालनाभ्यवहारयोः' इत्यस्मात् 'कृत्यल्युटो बहुलम्' इति कर्मणि ल्युट् । लित्स्वरः Sy.

५. द्यावापृथिव्योः Sy.

६. अन्तः—स्वरादिष्वन्तोदात्तत्वेन पठितत्वादन्तोदात्तः Sy.

७. ०रितः P. इन्द्रः Sy.

८. ते द्यावापृथिव्याविन्द्रोऽधारयदित्यर्थः । चरत्—चरतिर्गत्यर्थः । लेटि रूपम् । यद्वृत्तयोगादनिघातः Sy.

९. जात इन्द्रः । जज्ञानः—'जनी प्रादुर्भावे' इत्यस्य लिटः कानच् । 'गमहन—' इत्यादिना उपधालोपः । चित्त्वादन्तोदात्तः Sy.

१०. हरिद्वर्णोपेतः Sy.

११. कामानां वर्षकः Sy.

१२. वं P.

१३. दीप्यमानं लोकम् । रोचनम्—'रुच दीप्तौ' इत्यस्मात् 'अनुदात्तेतश्च हलादेः' इति युच् । चित्त्वादन्तोदात्तः Sy.

१४. प्रकाशयति । भाति—'भा दीप्तौ' इत्यस्यान्तर्भावितण्यर्थस्य लटि रूपम् Sy.

१५. इन्द्रः Sy.

१६. हरिद्वर्णोपेतम् Sy.

१७. P. adds धनम् after आयुधम् ।

१८. ०यन्ति M. आधत्ते Sy.

१९. बाह्वाः P. बाह्वोः—'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् Sy.

२०. ०संज्ञ M.

२१. प्राणापहारकम् Sy.

२२. सर्वतः Sy.

२३. VM. ignores आ before भाति॥ सर्वतः Sy.

इन्द्रो हर्यन्तमर्जुनं वज्रं शुक्रैरभीवृतम्।
अपावृणोद्धरिभिरद्रिभिः सुतमुद्गा हरिभिराजत ॥ ५ ॥

इन्द्रः। इन्द्रः[1]। शत्रून् प्रेप्सन्तम्[2]। अर्जुनवर्णम्[3]। वज्रम्[4]। शुक्लैस्तेजोभिः[5]। परिवृतम्[6]। आदाय रसाहरणशीलैः[7]। ग्रावभिः। सुतं[8] सोमं पात्रस्थं[9] पिहितद्वारम्। पानायापावृणोत्[10]। अथ पीत्वा सोमं पणीन्[11] अश्वैर्जित्वा[12]। तैरपहृता[13] गाः[14]। उदाजतेति[15]।

III.45.

आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः।
मा त्वा के चिन्नि यमन्विं न पाशिनोऽति धन्वेव ताँ इहि ॥ १ ॥

आ[16] मन्द्रैः। आयाहि[17]। मदनशीलैः[18]। इन्द्र! अश्वैः[19]।

---

१. इन्द्र M. and P. सोऽयमिन्द्रः Sy.
२. प्रेप्समन्तम् P. कमनीयम् Sy.
३. शुभ्रम्। शुभ्रत्वमुपपादयति शुक्रैः। अर्जुनम्—'अर्ज षर्ज अर्जने' इत्यस्मात् 'अर्जेर्णिलुक् च' इत्युनन्। नित्स्वरः Sy.
४. वेगवन्तम् Sy.
५. शुक्रै० P. शुभ्रैः क्षीरादिभिः Sy.
६. व्याप्तम्। अभीवृतम्—'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् Sy.
७. रसाहृ रसाहृर० P. हरन्त्येभिः सोमरसानिति हरयः। तैः Sy.
८. अभिषुतम् Sy.
९. पत्रस्थ P.
१०. आवरणरहितमकरोत्। तथाच मन्त्रवर्णः—'पूषा राजानमाघृणिरपगूळ्हं गुहा हितम्। अविन्दत्' (RV. 1. 23. 14.) इति Sy.
११. पाणीन् M.
१२. अश्वैरुपेतः स इन्द्रः Sy.
१३. P. reads जितैः for जित्वा तैः॥ तैः पणिभिः Sy.
१४. ०रहृ० P.
१५. बिलान्निरगमयत्। आजत—'अज गतिक्षेपणयोः'। लङि व्यत्ययेनात्मनेपदम्। निघातः Sy.
१६. 'आ मन्द्रैः' इति पञ्चर्चं सप्तमं सूक्तं वैश्वामित्रं बार्हतमैन्द्रम्। 'आ मन्द्रैः' इत्यनुक्रमणिका (KSA. 19. 45. p. 16.)। पूर्वसूक्ते 'बार्हतन्तु' (KSA. 19. 44. P. 16.) इत्युक्तत्वादस्यापि बार्हतत्वम्।
'विशेषविनियोगस्तु यत्र श्रुत्या न सूत्रितः।
स्मार्तं तत्र विजानीयादृग्विधानादिशास्त्रतः'॥ Sy.
१७. यत्नं प्रत्यागच्छ Sy.
१८. मादयितृभिः। मन्द्रैः—'मदि स्तुत्याविषु' इत्यस्य 'स्फायितञ्चि—'इत्यादिना रक्प्रत्ययः। इदित्त्वान्नुम्। प्रत्ययस्वरः Sy. गम्भीरनादैः Mah. मन्दनीयैः U.
१९. अश्वैरुपेतस्त्वम् Sy. हरिद्वर्णैरश्वैः U.

मयूररोमसदृशरोमभिः[1] । मा । त्वा[2] । केचित्[3] । आगच्छन्तम्, नियच्छन्तु[4] । पक्षिणम्[5] । इव[6] । पाशिनः[7], पाशैर्बध्नन्तु[8] । तान्[9] सर्वान् । अतिगच्छ[10] शीघ्रम् । निरुदकमिव[11] देशमिति ।

वृत्रखादो वलंरुजः पुरां दर्मो अपामजः ।
स्थाता रथस्य हर्योरभिस्वर इन्द्रो दृळ्हा चिदारुजः ॥ २ ॥

वृत्रखादः । वृत्रासुरस्य[12] खादिता हन्ता । तथा[13] बलस्य भङ्क्ता[14] । असुरपुराणाम्[15] ।

---

१. मयूररोमसदृशरोमयुक्तैः । मयूररोमभिः—मयूररोमवद्रोमाणि येषामिति 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्च' (VPa. 2. 2. 24. 12.) इति समास उत्तरपदलोपश्च । मयूरशब्दः 'मीनातेरूरन्' (Uṇādi. 1. 67.) इत्यूरन् प्रत्ययान्तः । मीनाति सर्पानिति मयूरो बर्हो । नित्त्वादाद्युदात्ते प्राप्ते—'मादीनाम्' (Phitsūtra. 53.) इति सूत्रेण मध्योदात्तः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः Sy. मयूरस्येव रोमाणि येषां ते मयूररोमाणस्तैर्मयूरसमवर्णैः Mah. मयूररोमभिर्बभ्रवो ह्यश्वाः U.

२. त्वाम् Sy., Mah., U.

३. केचिदपि जनाः Sy. केचिद् दुष्टाः Mah.

४. गमनप्रतिबन्धं मा कुर्वन्तु इत्यभिप्रायः । यमन्—'यम उपरमे' इत्यस्य लेटयडागमे रूपम् Sy. मा निबध्नन्तु Mah. U.

५. गच्छन्तं पक्षिणम् Sy. शकुनिमिव U. विरिति शकुनिनाम N. 2. 6.

६. प्रतिबन्धे दृष्टान्तः । यथा नियच्छन्ति तद्वत् Sy. यथा Mah.

७. पाशहस्ता व्याधाः Sy. पाशप्रतिबन्धकाः Mah. आखेटकिनः U.

८. यथा पाशिनः पक्षिणं बध्नन्ति तथा त्वां मा बध्नन्तु Mah.

९. गमनप्रतिबन्धकान् Sy. अथ ये परिपन्थिनो भवेयुस्तान् Mah. अथ केचित् परिपन्थिनो भवेयुः U.

१०. अतीत्य शीघ्रमागच्छ । इहि—'इण गतौ' इत्यस्य लोटि रूपम् Sy. अतिक्रम्यागच्छ Mah. अतीत्य तान् इहि आगच्छ U.

११. ०कमपि P. यथा पान्था धन्व मरुदेशं शीघ्रमतिगच्छन्ति तद्वत् Sy. कमिव ? धन्व इव । धन्व निरुदकदेशः । यथा पान्थो मरुदेशमतिक्रम्य गच्छति तथा गच्छ Mah. यथा धन्व निरुदकदेशं परित्यज्यान्यतममागच्छेयुरेवमागच्छेति U. This stanza=YV. 20. 53.

१२. वृत्रं खादति हिनस्तीति वृत्रखादः—'खादृ भक्षणे' इत्यस्मात् कर्मण्यण् । कृदुत्तरपदस्वरः Sy.

१३. अथ P.

१४. भक्ता P. वृणोत्याकाशमिति वलो मेघः । तस्य भञ्जकः । तथा च मन्त्रवर्णः—'बिभेद वलम्' (RV. III. 34. 10.) इति । वलंरुजः—'रुजो भङ्गे' कर्मण्युपपदे मूलविभुजादित्वात् कप्रत्ययः । 'तत्पुरुषे कृति बहुलम्' इति द्वितीयाया अलुक् । थाथादिस्वरः Sy.

१५. शत्रुसम्बन्धिनां पुराणाम् Sy.

दारयिता[1] । मेघस्थानामपाम्[2] । प्रेरकः । अधिष्ठाता । रथस्य[3] गमनार्थम्[4] । अश्वयोः । अभि-स्वरणे[5] सति । इन्द्रः[6] । दृढानि[7] । अप्यसुरपुराणि । आरुजः[8] ।

गम्भीराँ उदधीँरिव क्रतुं पुष्यसि गा इव ।
प्र सुगोपा यवसं धेनवो यथा ह्रदं कुल्याइवाशत ॥ ३ ॥

गम्भीरान्[9] । महावकाशानि[10] । उदधानानीवाद्भिः[11] । गा[12] इव च यवसेन । यज्ञम्[13] । फलेन पुष्यसि[14] । यथा । तृणम्[15] । धेनवः । प्राश्नुवते[16] । यथा[17] वा । ह्रदम्[18] । कुल्याः[19] । एवमिन्द्रं सुष्ठु गोपायितारः[20] सोमाः[21] प्राश्नुवन्त[22] इति ।

---

१. दारकः Sy.
२. मेघभेदनद्वारा अपाम् Sy.
३. थास्य P. रथम् Sy.
४. ०नार्त्थम् P. अधिष्ठाता Sy.
५. अपिस्व० P. अस्मदाभिमुख्येन प्रेरणे निमित्तभूते सति Sy.
६. सोऽयमिन्द्रः Sy.
७. दृढानामतिबलवतां शत्रूणाम् Sy.
८. समन्ताद्रुजको भवति । आरुजः—'रुजो भङ्गे' इत्यस्मादिगुपधलक्षणः कः । समासे थाथादिस्वरः Sy.
९. हे इन्द्र ! त्वम् Sy.
१०. महावकाशान् । गम्भीरान्—'गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च' इत्यस्मात् 'गभीरगम्भीरौ' (Uṇādi. 4. 475.) इत्यनेन सूत्रेण इरच्प्रत्ययः । नुमागमोपधाह्रस्वभकाराः सर्वे निपात्यन्ते । चित्त्वादन्तोदात्तः Sy.
११. ०धानीवातभिः M. समुद्रान् उदकैर्यथा पोषयसि तद्वत् । उदधीनिव—उदकशब्दे उपपदे दधातेरधिकरणेऽर्थे 'कर्मण्यधिकरणे च' इति किप्रत्ययः । उदकशब्दस्य 'पेषंवासवाहनधिषु च' (Pa. 6. 3. 58.) इत्युदभावः । कृत्स्वरः । इवेन विभक्त्यलोपः Sy.
१२. गाव P.
१३. यज्ञस्य कर्तारमिमं यजमानम् Sy.
१४. ०ष्यति P. अभिमतफलप्रदानेन पोषयसि तद्वत् । पुष्यसि—'पुष पुष्टौ' इत्यस्यान्तर्णीतण्यर्थस्य लटि रूपम् । निघातः Sy.
१५. तृणादिकम् Sy.
१६. प्राप्नुवन्ति तद्वत्त्वं सोमान् प्राप्नोषि । आशत—'अशू व्याप्तौ' इत्यस्माल्लङि 'बहुलं छन्दसि' इति विकरणस्य लुक् । निघातः Sy.
१७. यथा—'यथेति पादान्ते' (Phitsūtra. 85.) इति निघातः Sy.
१८. महाजलाशयं यथा प्राप्नुवन्ति तद्वत् त्वाम् Sy.
१९. ते च सोमाः कुल्याइव कृत्रिमसरितः Sy.
२०. समीचीनो गोपालः यवसेन गाः पोषयति तद्वत् । सुगोपाः—'गोपायतेः क्विपि रूपम् Sy.
२१. Omitted in P.
२२. ०श्नुव P. व्याप्नुवन्ति Sy.

आ नस्तुजं रयिं भराशं न प्रतिजानते ।
वृक्षं पक्वं फलमङ्कीव धूनुहीन्द्र संपारणं वसु ॥ ४ ॥

आ नः । आभर[1] । अस्मभ्यम्[2] । क्षिप्रम्[3] । धनम् । अंशम्[4] । इव[5] । पुत्राय जानन्तं[6] पितरं प्रतिजानते[7], 'प्रति हिस्व स्वं जानीते[8]' इति ब्राह्मणम् । यथा वृक्षम् । पक्वम्[9] । फलम्[10] । अङ्क्षी[11] चलयन् अवधुनोति, एवमस्माकम् । सम्पारयितृ[12] । धनम् । त्वं धू[13]नुहि[14] ।

स्वयुरिन्द्र स्वराळसि स्मद्दिष्टिः स्वयंशस्तरः ।
स वावृधान ओजसा पुरुष्टुत भवा नः सुश्रवस्तमः ॥ ५ ॥

स्वयुः । धनेच्छ[15] ! स्वयमेव[16] राजसे । सर्वस्य शोभनदेशनः[17] । अतिशयेन स्वायत्तकीर्तिः[18] ।

---

१. आपर M.
सम्पादय Sy.
२. अस्माकम् Sy.
३. शत्रूणां बाधकम् Sy.
४. धनेनोपलक्षितं पुत्रम् Sy.
५. तत्र दृष्टान्तः—यथा पिता Sy.
६. यजमान॰ P.
७. व्यवहारज्ञाय पुत्राय स्वकीयस्य धनस्य भागं ददाति तद्वत् । प्रतिजानते—'ज्ञा अवबोधने' इत्यस्य शतरि रूपम् । प्रादिसमासः । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् Sy.
८. The quotation is untraced.
९. पक्व P.
१०. फलं प्रति Sy.
११. अङ्कुशी यथा धूनोति तथा त्वम् Sy.
१२. संवादयितृ M. अस्मदिच्छायाः सम्यक् पूरकम् । सम्पारणम्—'पृ पालनपूरणयोः' इत्यस्य ण्यन्तस्य करणे ल्युट् । समासे कृत्स्वरः Sy.
१३. धुनुहि M. and P.
चालय । प्रयच्छेत्यर्थः । धूनुहि—'धूञ् कम्पने' इत्यस्य लोटि रूपम् Sy.
१४. VM. ignores इन्द्र ।
१५. आनच्छ P. धनेच्छुः is suggested for धनेच्छ ॥ धनवानसि । स्वयुः—स्वशब्दान्मत्वर्थीयो युः Sy.
१६. स्वर्गस्य राजा । स्वराट्—'राजृ दीप्तौ' । क्विप् । व्रश्चादिना षत्वम् Sy.
१७. भद्रवाक्यः । स्मद्दिष्टिः—स्मत् सुमदित्यर्थे । उकारलोपश्छान्दसः । बहुव्रीहौ पूर्वपदस्वरः Sy.
१८. अतिशयेन प्रभूतकीर्तिरसि Sy.

स त्वम्। बलेन। वर्धमानः। बहुभिः स्तुत[१]! भव[२]। अस्माकम्[३]। अतिशयेन शोभनान्नः[४][५]।

## III.46.

**युध्मस्य ते वृषभस्य स्वराज उग्रस्य यूनः स्थविरस्य घृष्वेः।**
**अजूर्यतो वज्रिणो वीर्या३णीन्द्र श्रुतस्य महतो महानि ॥ १ ॥**

युध्मस्य[६]। योधनशीलस्य[७]। वर्षितुः[८] कामानाम्। सर्वेश्वरस्य[९]। उद्गूर्णस्य[१०]। तरुणस्य[११]। पुरातनस्य[१२]। शत्रूणां[१३] घर्षणशीलस्य[१४]। जरारहितस्य। वज्रिणः। विश्रुतस्य[१५]। महतः[१६]। महान्ति[१७]। वीर्याणि भवन्तीति[१८]।

---

१. स्तुतिभिः P. हे बहुभिराहूतेन्द्र! पुरुष्टुत—संहितायां 'स्तुतस्तोमयोश्छन्दसि' इति षत्वम् Sy.

२. व M. भव—भवतेर्लोटि रूपम्, 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः Sy.

३. अस्मदर्थम् Sy.

४. ०नान्नम् M. शोभनान्नोपेतः। श्रवःशब्दोऽसुन्नन्तः। बहुव्रीहौ 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम्। तदन्तादतिशायने तमप्। तस्य पित्त्वादनुदात्तत्वे बहुव्रीहिस्वरः Sy.

५. VM. ignores इन्द्र and असि ॥

६. 'युध्मस्य ते' इति पञ्चचंमष्टमं सूक्तं वैश्वामित्रमैन्द्रम्। 'युध्मस्य' इत्यनुक्रमणिका(KSA. 19. 46. p. 16.)। दशरात्रे चतुर्थेऽहनि निष्केवल्ये 'युध्मस्य ते' इति सूक्तं निविद्धानम्। सूत्रितञ्च—'कुह श्रुत इन्द्रो युध्मस्य त इति निष्केवल्यम्' (ASS. 7. 11.) इति। ऋषभनाम्नि एकाहेऽपि निष्केवल्य इदं सूक्तं निविद्धानम्। सूत्रितञ्च—'युध्मस्य त इति मध्यन्दिनः' (ASS. 9. 7.) इति

७. युध्मस्य—'युध सम्प्रहारे' 'इषियुधीन्धिदसि—'इत्यादिना मक्प्रत्ययः Sy.

८. ०र्षितः M. अभिमतफलसेचकस्य Sy.

९. धनाधिपतेः Sy.

१०. समर्थस्य Sy.

११. नित्यतरुणस्य। यूनः—यौतेः 'कनिन्युवृषि—'इत्यादिना कनिन्, 'श्वयुवमघोनामतद्धिते' इति सम्प्रसारणम्। नित्स्वरः Sy.

१२. चिरन्तनस्य। स्थविरस्य—'अजिरशिशिरशिथिल—'इत्यादिना किरन्प्रत्ययान्तो निपातितः Sy.

१३. शत्रुणा M.

१४. सङ्घर्षकस्य। घृष्वेः—'घृषु सङ्घर्षे'। क्रुविघृष्विच्छवि—'इत्यादिना क्विन्प्रत्ययान्तो निपात्यते। नित्त्वादाद्युदात्तः Sy.

१५. त्रिषु लोकेषु प्रसिद्धस्य Sy.

१६. M. omits words between घर्षण and महतः॥ अत एव महतः Sy.

१७. महान्ति खलु Sy.

१८. VM. ignores ते and इन्द्र ॥ ते तव हे इन्द्र! Sy.

म॒हाँ अ॑सि महिष वृष्ण्ये॑भिर्धन॒स्पृदु॑ग्र सह॑मानो अ॒न्यान् ।
एको॒ विश्व॑स्य॒ भुव॑नस्य॒ राजा॒ स यो॒धया॑ च क्ष॒यया॑ च॒ जना॑न् ॥ २ ॥

महान् । 'महान्[1] महिषः[2]' इति द्वे महन्नामनी[3], तत्रैकं नैघण्टुकम्[4], महिषे[5] ! पौंस्यैः[6] । त्वं पूजनीयः[7] । भवसि । शत्रुधनानामभिकाङ्क्षितः[8] ! उद्गूर्णे[9] ! शत्रून् । अभिभवन्[10] । एकः[11] । सर्वस्य । लोकस्य । ईश्वरो[12] भवसि । स त्वम् । शत्रून्[13] । योधय[14] । विनाशनं[15] च नयन्[16], तानिति[17] ।

---

१. P. adds before महान्०—सोमः पुराणेष्वप्यहस्सु सुता समुद्रमिव नद्यो ह्यावि विशन्ति यं यं सोममिन्द्रस्य द्यावापृथिवी वर्षणादुत्पन्नाच्च गर्भमिव माता विभ्रतस्त्वत्कामनया तमध्वर्यवस्तुभ्यमंशुभ्यः प्रेरयन्त्यभिषुण्वन्ति महान् । The additional passage in P. has a striking resemblance with the commentary on RV. III. 46. 4. and 5. Also compare it with the commentary on RV. III. 47. 1.

२. मघः P.

३. मनन्ना० P. महान् । महिष इति महन्नामनी Ngh. 3. 3. (महिषाः) महान्तः N. 7. 26.

४. नैकर्मघणं P.

५. महिषः इति M. D. हे महनीय ! महिष—'मह पूजायाम्' 'अविमह्योष्टिषच्' (Uṇādi. 1. 45.) इति टिषच् प्रत्ययः । आमन्त्रितत्वान्निघातः Sy.

६. M. omits पौंस्यैः ॥ वीर्यैः । वृष्ण्येभिः—वृष्णि भवानि, 'भवे छन्दसि' इति यत् । 'यतोऽनावः' इत्याद्युदात्तः Sy.

७. महान् Sy.

८. ०मधिका० P. धनानि दानभोगत्यागैः पारं नयंस्त्वम् Sy.

९. उद्गीर्ण गूर्ण P.
इन्द्र ! त्वम् Sy.

१०. अभिभवन् वर्तसे Sy.

११. P. adds एव after एकः ॥ असहायः Sy.

१२. राजा Sy. १३. सपत्नान् Sy.

१४. प्रहर । योधय—'युध सम्प्रहारे' इत्यस्य ण्यन्तस्य लोटि रूपम् । 'चादिषु च' इति न निघातः । णित्स्वरः Sy.

१५. क्षयय निवासय । बाधकान् हत्वा साधुजनान् स्वस्थाने स्थापयेत्यभिप्रायः । क्षयय—'क्षि निवासगत्योः' इत्यस्य ण्यन्तस्य लोटि रूपम् । अत्रापि पूर्ववदनिघातः Sy.

१६. ०नय० is suggested for नयन् ।

१७. VM. ignores च ।

प्र मात्राभी रिरिचे रोचमानः प्र देवेभिर्विश्वतो अप्रतीतः ।
प्र मज्मना दिव इन्द्रः पृथिव्याः प्रोरोर्महो अन्तरिक्षादृजीषी ॥ ३ ॥

प्र मात्राभिः । मात्रावतां[1] मात्राः[2] । इन्द्रः । प्ररिरिचे[3], मात्राभिरतिरिक्तपरिमाणो[4] भवति । दीप्यमानः[5] । एवं सर्वेभ्यो देवेभ्यः[6] । सर्वत[7] एव । शत्रुभिरप्रतिगतः[8] । तथा बलवतां बलाच्च[9] । प्ररिरिचे । किं बहुना ? दिवः[10] । पृथिव्याः । महतः । अन्तरिक्षाच्च[11] । प्ररिरिचे । तृतीयसवनान्वयाद् ऋजीषी[12] ।[13]

उरुं गंभीरं जनुषाभ्युग्रं विश्वव्यचसमवतं मतीनाम् ।
इन्द्रं सोमासः प्रदिवि सुतासः समुद्रं न स्रवत आ विशन्ति ॥ ४ ॥

उरुम् । विस्तीर्णम्[14] । गम्भीरम्[15] । जन्मप्रभृति[16] । उद्गूर्णम्[17] । सर्वव्यापिनम्[18] ।

---

१. ०वता P.

२. मुत्रा P. मात्राभ्यः is suggested for मात्राः ।

३. प्रकर्षेण महत्तयातिरिक्तोऽभूत् Sy.

४. मात्राभिः—मीयन्ते परिच्छिद्यन्त इति मात्राः शिलोच्चयास्तेभ्योऽपि । 'माङ् माने शब्दे च' इत्यस्मात् 'हुयामाश्रुभसिभ्यस्त्रन्' इति त्रन्प्रत्ययः । नित्त्वादाद्युदात्तः ॥ 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति संहितायां दीर्घः Sy.

५. ०माना P. रोचमानः—'रुच दीप्तौ' इत्यस्मात् शानचि रूपम् । तस्य लसार्वधातुकस्वरे धातुस्वरः Sy.

६. तथा देवेभ्योऽपि Sy.

७. सर्वैः Sy.

८. ०त्रूनभिगच्छति प्र० P. एतावदस्य सामर्थ्यमित्यपरिच्छिद्यमानः । अप्रतीतः—'इण् गतौ' । कर्मणि क्तः । प्रादिसमासः, नञा समासे तस्य स्वरः Sy.

९. मज्मना—मज्जयति शत्रून् दुःखसागरे इति मज्म बलम् । तेन बलेन । मज्मना—'टुमस्जो शुद्धौ' औणादिको मनिच्प्रत्ययः । 'झलां जश् झशि' इति जश्त्वम् । चित्त्वादन्तोदात्तः Sy.

१०. द्यावापृथिवीभ्यां च । पृथिव्याः—'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् Sy.

११. अन्तरिक्षादपि Sy.

१२. ०जीषि M. and P. ॥ सोमवान् Sy.

१३. VM. ignores प्र (once) and उरोः ॥ उरोः विस्तीर्णात् Sy.

१४. महान्तम् Sy.

१५. अत एव महावकाशम् Sy.

१६. जन्मना स्वभावत एव । जनुषा—'जनी प्रादुर्भावे' इत्यस्मात् 'जनेरुसिः' इत्युसिप्रत्ययः Sy.

१७. शत्रूणां भयङ्करम् Sy.

१८. गभीरत्वमेवोच्यते विश्वव्याप्तम् । विश्वव्यचसम्—'व्यच व्याजीकरणे' इत्यस्मादसुन् । 'व्यचेः कुटादित्वमनसीति वक्तव्यम्' इत्यत्र 'अनसि' इति पर्युदासात् ङित्त्वाभावः । विश्वव्यचा इतीन्द्रस्य नाम । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदस्यान्तोदात्तत्वम् Sy.

स्तुतीनाम्[1] । कूपम्[2] । इन्द्रम् । सोमाः । पुराणेष्वप्यहःसु[3] । सुताः[4] । समुद्रम् । इव[5] । नद्यः[6] । अभ्याविशन्ति[7] ।

**यं सोमंमिन्द्र पृथिवीद्यावा गर्भं न माता विंभृतस्त्वाया ।**
**तं ते हिन्वन्ति तमुं ते मृजन्त्यध्वर्यवों वृषभ पातवा उं ॥ ५ ॥**

यं सोमम् । यम् । सोमम् । इन्द्र ! द्यावापृथिवी[8] । वर्षणादुत्पन्नात्[9]च्च गर्भम् । इव[10] । माता । बिभ्रतः[11] । त्वत्कामनया[12] । तम्[13] । अध्वर्यवः[14] । तुभ्यम्[15] । अंशुभ्यः प्रेरयन्त्यभिषुण्वन्ति[16] । तथा[17] । ग्रहेषु गृहीतम्[13] । पवित्रेण मृजन्ति[18] । हे वर्षितः[19] ! तव । पानाय[20] ।[21]

---

१. ०स्तोतॄणां वा Sy.
२. रक्षकं तादृशम् । अवतम्—'अव रक्षणादिषु' । औणादिकोऽतच्प्रत्ययः । चित्त्वादन्तोदात्तः Sy. ३. पूर्वेष्वहःसु Sy.
४. ताः M. ग्रावभिरभिषुताः Sy.
५. तत्र दृष्टान्तः । यथा Sy.
६. स्रवन्त्यो नद्यः Sy.
७. P. omits words between सोमाः and विशन्ति । Cf. note no. 1. on RV. III. 46. 2. and note no. 1. on P. 624. आभिमुख्येन आविशन्ति तद्वत् Sy.
८. द्यावापृथिव्यौ । पृथिवीद्यावा—'दिवो द्यावा' इति द्यावादेशः । आद्युदात्तः । 'नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु' इत्यत्र पर्युदासात् 'देवताद्वन्द्वे च' इत्युभयपदप्रकृतिस्वरः । कृतसमासस्य विपर्यासश्छान्दसः Sy.
९. उत्पादनात् is suggested for उत्पन्नात् ।
१०. अत्र दृष्टान्तः । यथा माता गर्भं बिभर्ति तद्वत् Sy.
११. बिभृतः is suggested for बिभ्रतः ॥ अन्तर्धारयतः । बिभृतः—'डुभृञ् धारणपोषणयोः' इत्यस्माल्लिटि 'भृञामित्' इत्यभ्यासस्येत्वम् । यद्वृत्तयोगादनिघातः । अजादिप्रत्ययपरत्वाभावादत्र 'अभ्यस्तानामादिः' इति स्वरो न भवति । प्रत्ययस्वरः Sy.
१२. त्वं का० M. त्वाया—'त्वामिच्छतीत्यर्थे 'सुप आत्मनः क्यच्' । पूर्वपददकारस्याकारश्छान्दसः । 'अ प्रत्ययात्' इति भावे अप्रत्ययः । 'सुपां सुलुक्—' इति तृतीयायाः (पूर्व)सवर्णदीर्घः । एकादेशस्वरः Sy. १३. सोमम् Sy.
१४. अध्वरं यजमानायेच्छन्तः । अध्वरमिच्छन्तः—सुपः क्यच् । 'कव्यध्वरपृतनस्यर्चिलोपः' इत्यकारलोपः । 'क्याच्छन्दसि' इत्युप्रत्ययः । प्रत्ययस्वरः Sy.
१५. त्वदर्थम् Sy.
१६. P. omits words between यम् and षुण्वन्ति । Cf. note no. 1 on P. 619 and note no. 1 on P. 624.
१७. किञ्च Sy. १८. शोधयन्ति Sy.
१९. कामानां वर्षक ! हे इन्द्र ! Sy.
२०. पातवै—'पा पाने' तुमर्थे तवैप्रत्ययः । 'अन्तश्च तवै युगपत्' इति धात्वन्तस्य प्रत्ययस्य चोदात्तत्वम् Sy. २१. VM. ignores उ once ॥ उ प्रसिद्धौ Sy.

III.47.

मरुत्वाँ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय ।
आ सिञ्चस्व जठरे मध्व ऊर्मिं त्वं राजासि प्रदिवः सुतानाम् ॥ १ ॥

मरुत्वान् । हे इन्द्र ! मरुद्भिः सहितस्त्वम् । कामानां वर्षिता । असुरैः सङ्ग्रामं कर्तुम् । पिब । सोमम् । अनुगतपुरोडाशम् । मदाय ।

१. 'मरुत्वान्' इति पञ्चर्चं नवमं सूक्तं वैश्वामित्रं त्रैष्टुभमैन्द्रम् । 'मरुत्वान्' इत्यनुक्रमणिका (KSA. 19. 47. p. 16) दशरात्रे चतुर्थेऽहनि मरुत्वतीयशस्त्रे एतत्सूक्तं निविद्धानीयम् । सूत्रितञ्च—'श्रुधी हवमिन्द्र मरुत्वाँ इन्द्रेति मरुत्वतीयम्'(ASS. 7. 11.) इति । ऋषभनाम्न्येकाहेऽपि मरुत्वतीयशस्त्रे एतन्निविद्धानम् । सूत्रितञ्च 'मरुत्वाँ इन्द्र युष्मस्य त इति मध्यन्दिनः' (ASS. 9. 7.) इति Sy.

२. मरुतो देवविशस्तद्वान् स त्वम् Sy. मरुतोऽस्य सन्ति–इति मरुद्गणसंयुक्तः Mah. मरुद्गणयुक्तश्च U. मरुद्भिस्तद्वान् सहित इत्यर्थः SKN. मरुत्संयुक्तो भूत्वा Dur.

३. यः अपाम् Sy. वर्षिता जलानाम् Mah. वर्षिताऽपामन्तरिक्षेऽवस्थितः U. प्रत्यक्षकृतोऽयं मन्त्रः । न चेदमामन्त्रितम् । अतो यत्तच्छब्दावध्याहृत्य, एकवाक्यत्वं नेयम् । यस्त्वं वर्षिता, अपां वृष्टिलक्षणानाम् SKN. 'अपाम्' इत्यध्याहृतं भाष्यकारेण वृषभसम्बन्धात् । यस्त्वमेवं कर्मकारी तं त्वां ब्रवीमि Dur.

४. रमणीयसङ्ग्रामार्थम् Sy. सङ्ग्रामाय च Mah. तं त्वां ब्रवीमि . . . रणं सङ्ग्रामं करिष्यामीति पिब सोमम् U. सङ्ग्रामाय BB. सङ्ग्रामार्थो यो मदः सङ्ग्रामे जयकरो न सम्मोहकरस्तदर्थमित्यर्थः SKN. रमणीयं सङ्ग्रामं करिष्यामीत्येतमर्थमुद्दिश्य Dur.

५. सम्पिब SKN. पिब, एवं सोममस्मत्प्रदत्तम् Dur.

६. स्वधया सवनीयपुरोडाशादिरूपेणान्नेनानुगतम् । अनुष्वधम्—स्वधामनुगम्य वर्तमानम् । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः । संहितायां 'पूर्वपदात्' (Pa. 8. 3. 106.) इति षत्वम् । निरुदकादित्वादन्तोदात्तत्वम् Sy. अनु पश्चात् स्वधान्नानि पुरोडाशधानामन्थदधिपयस्यालक्षणानि यस्य सोऽनुष्वधस्तम् Mah. अनु पश्चात् स्वधान्नं पुरोडाशधानामन्थदधिपयस्यालक्षणं यस्य स तथोक्तः U. स्वधामन्नमनुस्वदनीयं पुरोडाशात्मकमन्नं सोमम् BB. अनुगतं स्वधयाऽन्नेन सवनीयपुरोडाशादिना, सवनीयपुरोडाशादिसंयुक्तमित्यर्थः SKN. सवनीयपुरोडाशाद्यभिप्रायेण Dur. स्वधेत्यन्ननाम Ngh. 2. 7.

७. तृप्तये . . . मदे सतीन्द्रो योद्धा भवति Mah. मदे हि सति योद्धा भवतीन्द्रः U. माद्यत्यनेनेति मदः . . . ईदृशाय रणाय, जयकरायेत्यर्थः BB. मदनीयाय पानाय युष्मदर्थमस्माभिः संस्कृतम् । 'जैत्राय' इत्यध्याहृतं भाष्यकारेण । द्विविधो हि मदः–सम्मोहकरो जैत्रश्च तयोर्जैत्र इष्टः सङ्ग्रामे Dur.

आसिञ्चस्व । जठरे । मधुनः, ऊर्मिमिति सोमाभिप्रायम् । त्वम् । ईश्वरः । असि । पूर्वेष्वप्यहःसु ।

---

१. सिञ्च M. आसिस्व P. सर्वतः क्षारय Sy. अकृपणमासिञ्च U. किं बिन्दुमात्रमपि पीतं मदाय भवतीत्याशङ्क्य नेति प्रतिपाद्यते । ...आभिमुख्येन क्षारय...यथा ते मदो भवति तथा प्रभूतं पिबेत्यर्थः BB. मा चाल्पं किं तर्हि ? आसिञ्चस्व क्षारय SKN. कथं च पुनः पिब ? किमीषत् ? नेत्युच्यते, आसिञ्च Dur.

२. स्वजारे P. जग्धमन्नमस्मिंस्तिष्ठतीति जठरमुदरम् । तस्मिन्नुदरे Sy. उदरे Mah., U., BB., Dur.

३. मधुन M. माद P. मदकरस्य सोमस्य Sy. मधुनो मधुस्वादोपेतस्य Mah. मधु सोममित्यौपमिकं माद्यतेः । मधुस्वादस्य सोमस्य U. मधुसदृशस्यास्य सोमस्य BB. मधुसदृशस्य स्वादोः सोमस्य SKN. 'मधु सोममिति, औपमिकम्' इत्येतदुक्तं सोमस्य मधुत्वं माद्यतेर्धातोः । तृप्तिर्हि समाना, सोमेन मध्वा च, इत्यौपमिकत्वम् । इदमपीतरद् मधु माक्षिकम् एतस्मादेव माद्यतेः । यत्तु सोमस्योपचारत्वेन तन्माध्वीकम् Dur.

४. लौर्मिम् M. सङ्घातं बहुरसम् । ऊर्मिम् 'अर्तेरूच्च' इति मिप्रत्ययः । धातोः ऊ- इत्यादेशो रपरः । प्रत्ययस्वरः Sy. कल्लोलम् Mah. महासङ्घातम् U. सङ्घातम् BB. सङ्घातं, बहु सोमं पिबेत्यर्थः SKN. सङ्घातम् । तावन्तं सोममासिञ्च स्वजठरे यावता जैत्रो मद उपजायते Dur.

५. यतस्त्वमेव U. यतस्त्वम् SKN. कस्मात् पुनरेवं ब्रवीमि ? इतो यस्मात् त्वम् Dur.

६. ईशिता । न केवलमधुनातनानामिति भावः Sy. सोमपाने हेतुमाह ।... ईश्वरोऽसि Mah. विशिष्टस्य सोमपानस्य मन्त्रदृग् हेतुमाह...ईश्वरोऽसि U. अतिक्रान्तेष्वप्यहस्सु त्वमेव सोमानां राजेति । यद्वा त्वमेव ह्यतिक्रान्तेष्वहस्सु सुतानां राजाऽभूस्तस्मादिदानीमपि पिबेति प्रार्थ्यसे BB.
ईशितासि SKN.
त्वमेव राजा, ईश्वरः Dur.

७. P. omits words between ऊर्मिम् and असि ।

८. पूरर्णेष्व० P. पूर्वेष्वहःसु Sy. YV. reads प्रतिपत् for प्रदिवः ॥ प्रतिपत्प्रभृतिषु तिथिषु...छन्दोगानां सवने प्रतिपद्विद्यत इति प्रतिपद्ग्रहणम् Mah. प्रतिपत्प्रमुखास्वपि तिथिषु... छन्दोगानामपि प्रतिपद्विद्यते तदभिप्रायं चैतत् U. प्रदिवः पुराणो नेदानीमेव... प्रगता दिवसा अस्येति प्रदिवः BB. ये पूर्वेष्वप्यहस्सु सुतास्ते पुराणास्तेषामपि SKN. पूर्वेष्वप्यहस्सु Dur. पुराणनामैतत् Ngh. 3. 27.

सुतानाम्[1] ।[2]

सुजोषा इन्द्र सगंणो मुरुद्भिः सोमं पिब वृत्रहा शूर विद्वान् ।
जुहि शत्रूँरप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः ॥ २ ॥

[3]सजोषाः । इन्द्र[4] ! मरुद्भिः । सहितः सङ्गतः[5] । मरुद्भिः सह[6]गणस्त्वम्, कार्ये[7]षु यः साहाय्यं करोति तं गणमाहुः । सोमम् । पिब । वृत्रस्य[8] हन्ता । हे[9] शूर[10] ! प्राज्ञः ।

---

१. सुतास्समुद्रमिव नद्यो भ्यां विश्वन्ति य ए सामं यं सोममिन्द्रं द्यावापृथिवी वरेणा दुत्पादनाच्च गर्भमिव माता विभ्रतस्त्वं करमयामध्वर्यवस्तुभ्यमं-शुभ्यः प्रे र भिषुण्वन्ति तथा ग्रहेषु ग्रहीतं पवित्रेण मृजन्ति P. अभि—षुतानां सोमानाम् Sy. अभिषुतानां सोमानां राजासि.. किमुत चतुर्द-श्यन्तेऽभिषुतानाम् । त्वदर्थमेव सर्वासु तिथिषु सोमोऽभिषूयत इत्यभिप्रायः Mah., U. मदस्योत्पाद्यत्वे हेतुमाह—त्वं राजा सुतानां सोमानां तव मदाय सोमा अभिषूयन्त इति भावः BB. सुतानां सोमानां न केवलमिदानीन्तनाना-मेवेति SKN. अभिषुतानां, न केवल-माधुनिकानाम् । एवं ते समुचितं सोम-पानमित्यभिप्रायः Dur.

२. 'मरुत्वानिन्द्र (मरुद्भिः) तद्वान् । वृषभो वर्षिताऽपाम् । रणाय रमणीयाय सङ्ग्रा-माय । पिब सोमम् । अनुष्वधमन्व-न्नम् । मदाय मदनीयाय जैत्राय । आसिञ्चस्व जठरे मधुन ऊर्मिम् । मधु सोममित्यौपमिकं माद्यतेः । इद-मपीतरन्मध्वेतस्मादेव । त्वं राजासि । पूर्वेष्वप्यहस्सु सुतानाम्' N. 4. 8.; SKN. II. 217. This stanza= YV. 7. 38.=TS. 1. 4. 19. 1.

३. 'सजोषा इन्द्र' इति मरुत्वतीयग्रहस्य याज्या । सूत्रितञ्च—'सजोषा इन्द्र सगणो मरुद्भिरिति भक्षयित्वैतत्पात्रम्' (ĀSS. 5. 14.) इति Sy.

४. P. omits सजोषाः and इन्द्र ।

५. त्वं ग० M. Omitted in P. सङ्गतो देवैः Sy. 'जुषी प्रीतिसेवनयोः' । जोषणं जोषः प्रीतिः । असुन् प्रत्ययः । तेन सह वर्तमानः सन्तुष्टः Mah. यस्त्वं समानजोषणः समानपात्रभोजनः, तं त्वां ब्रवीमि U.
समानप्रीतिः BB.

६. सगणं P. मरुद्भिः कृत्वा सगणः सपरि-वारः । मरुद्गणसहित इत्यर्थः Mah. समानगणो मरुद्भिर्भूत्वा U. सर्वैर्गणै-स्सहितो मरुद्भिः BB.

७. कायेषु P.

८. वृत्रहा—हन्तेः 'ब्रह्मभ्रूणवृत्रेषु क्विप्' Sy. वृत्रहा वृत्रं दैत्यं हन्तीति । अनेन सोमपानेन वृत्रं हनिष्यसीत्यर्थः Mah. वृत्रस्य हन्ता भविष्यामीति शेषः U. वृत्रहन्तः BB.

९. शूरः P. बलवन् ! Sy. हे शूर ! वीर ! Mah. हे शूर ! विक्रान्त ! U. महाबल ! BB.

१०. कर्मविषयाभिज्ञस्त्वम् Sy. एतमर्थं जा-नानः Mah. एतमर्थं सञ्जानानः U. स्वमधिकारं जानन्, सर्वविशेषज्ञानदक्षो वा, ईदृशस्त्वम् BB.

जहि[1]। प्रतिवेश्य राज्ञः[2]। मृधः[3]। शत्रुनाशाय मृधश्चापनुदस्व[4]। अथ[5]। अभयम्[6]। कुरु[7]। सर्वतः[8]। अस्माकमिति[9]।

उत ऋतुभिर्ऋतुपाः पाहि सोममिन्द्र देवेभिः सखिभिः सुतं नः।
याँ आभजो मरुतो ये त्वान्वहन्वृत्रमदधुस्तुभ्यमोजः ॥ ३ ॥

उत ऋतुभिः[10]। अपिच। मधुमाधवादिभिः[11] सह। पिब। सोमम्[12]। हे ऋतुभिः सह पातः[13]! इन्द्र! देवैश्च सह[14]। सखिभिर्मरुद्भिः[15]। सुतम्[16]। अस्माकम्[17]। यान्, त्वम्। मरुतः।

---

१. Omitted in P. ततः सोमं पीत्वा ...जहि मारय Mah. ततः पीत्वा सोमं मरुद्भिः सह जहि U. पीत्वा च...जहि नाशय BB.

२. ०राजानः P. ततो नः शत्रून् Sy. वृत्रादीन् Mah. वृत्रप्रमुखान् U. अस्मदीयाञ्छत्रून् BB.

३. मृधः P. हिंसकाञ्छत्रून्। यद्वा मृधः। हिंस्यन्तेऽत्र प्राणिन इति मृधः सङ्ग्रामाः। तत्र वर्तमानान् शत्रून् Sy. सङ्ग्रामान् ...यद्वा मृध इति पञ्चम्येकवचनं मृधः सङ्ग्रामादपनुदस्व शत्रूनित्यस्यानुषङ्गः Mah. मृधः सङ्ग्रामात् U. सङ्ग्रामान् कर्तुकामान् BB.

४. ०नुन साय P. 'नुद प्रेरणे'। युद्धं निवर्तयेत्यर्थः...ये हतावशिष्टाः शत्रवस्तान् सङ्ग्रामात् पलायनार्थं प्रेरयस्व। प्राणदानं कुर्वित्यर्थः Mah. हत्वा शत्रून् हे ?(ये) हतावशिष्टाः शत्रवस्तान् सङ्ग्रामात् प्रेरयस्व U.

५. अनन्तरम् Sy. एवं रिपुनाशं कृत्वा, अथानन्तरम् Mah. अथानन्तरम् U., BB.

६. सर्वतो भयरहितानस्मान्। अभयम्—'ञिभी भये' इत्यस्मात् एरच्। नञा समासे तस्य स्वरः Sy.

७. कुरु। 'डुकृञ् करणे' स्वादिः Mah.

८. विश्वतः—'पञ्चम्यास्तसिल्'। लित्स्वरः Sy.

९. M. omits words between पिब and अस्माकमिति॥ अस्मभ्यम् BB. This stanza=YV. 7. 37.=TS. 1. 4. 42. 1.

१०. Omitted in P. ११. मरुद्भिः Sy.

१२. M. omits words between अपि and सोमम्।

१३. पातितः M. कालनिर्वाहकतया ऋतूनां पातः! ऋतुषु सोमं पिबतीति वा ऋतुपाः। यद्वा ऋतुभिः मरुद्भिः सह सोमं पिबतीति ऋतुपाः, तादृश! Sy.

१४. सहितस्त्वम् Sy.

१५. समानख्यानैः Sy.

१६. सह तम् P. अभिषुतम् Sy.

१७. सम्बन्धिनम् Sy.

साहाय्यार्थमात्मना संयोजितवानसि । ये । त्वाम् । अनुभवन्ति । तैः सह हतवानसि । वृत्रम् । ते च तुभ्यम् । अदधुः । ओजः ।

**ये त्वाहिहत्ये मघवन्नवर्धन्ये शाम्बरे हरिवो ये गविष्टौ ।**
**ये त्वा नूनमनुमदन्ति विप्राः पिबेन्द्र सोमं सगणो मरुद्भिः ॥ ४ ॥**

ये त्वाम् । ये । त्वाम् । इन्द्र ! धनवन् ! अहिहनने । अवर्धयन् । ये वा । शाम्बरेण

---

१. ०ब्यार्त्थम् P. युद्धसहायार्थम् Sy.

२. ०योजयत वा० P. असेवथाः Sy.

३. मरुतः Sy.

४. युद्धे स्वामिनम् Sy.

५. ०भजन्ति is suggested for ०भवन्ति ॥ अन्वभजन्त । अभजः—'भज सेवायाम्' इत्यस्य लङि रूपम् । यद्वृत्तयोगादनिघातः Sy.

६. अहन्—'हन हिंसागत्योः' इत्यस्य लङि सिपो हल्ङ्यादिना लोपः । पादादित्वादनिघातः Sy.

७. मरुतः Sy. ८. त्वदर्थम् Sy.

९. अकुर्वन् । अदधुः—दधातेर्लङि झेः 'सिजभ्यस्तविदिभ्यश्च' इति जुस् । वाक्यभेदादनिघातः Sy.

१०. ओजा P. युद्धे शत्रुहननादिरूपं पराक्रमम् Sy.

११. मरुत्वतीयशस्त्रे याज्या 'ये त्वाहिहत्ये' इत्येषा । सूत्रितञ्च—'ये त्वाहिहत्ये मघवन्नवर्धन्निति याज्या' (ASS. 5. 14.) इति Sy.

१२. मरुतः Sy. ये मरुतो गणदेवाः Mah. ये मरुतः U.

१३. M. omits ये and त्वाम् ।

१४. वृत्रहननरूपे कर्मणि । अहिहत्ये—हन्तेर्भावे 'हनस्त च' इति क्यप् । कृदुत्तरपदस्वरः Sy. वृत्रहननरूपे कर्मणि Mah. अहिरसुरः, अहिवधे कर्तव्ये U.

१५. 'प्रहर भगवो जहि वीरयस्व' (AB. 3. 20.) इति बलदानेनावीवृधन् । अवर्धन्—'वृधु वृद्धौ' इत्यस्य ण्यन्तस्य लङि रूपम् । 'छन्दस्युभयथा' इति झेरार्धधातुकत्वात् णेर्लोपः । यद्वृत्तयोगादनिघातः Sy. जहि वीरयस्वेत्यादिवचोभिस्ते वृद्धिमकुर्वन् Mah. वर्धितवन्तः U.

१६. ए P.

१७. शाम्बरवधसम्बन्धिनि युद्धे त्वामवीवृधन् । इन्द्रः शम्बरमवधीदित्यस्मिन्नर्थे मन्त्रवर्णः—'यः शम्बरं पर्वतेषु क्षियन्तं चत्वारिंश्यां शरद्यन्वविन्दत् । ओजायमानं यो अहिं जघान—' (RV. 2. 12. 11.) इति । शाम्बरे—शम्बरस्येदमित्यर्थे 'तस्येदम्' इत्यण्प्रत्ययः Sy. शम्बरसम्बन्धिनि युद्धे ये त्वामवर्धयन् Mah. ये च शाम्बरे वधे कर्तव्ये U.

सह युद्धे । हे अश्ववन् ! ये वा । पणिभिरपहृतानां गवामन्वेषणे । ये वा । सम्प्रति । त्वाम् । अनुमदन्ति । मेधाविनः, मदतिः सकर्मकश्च भवति । तैर्मरुद्भिः । सहितस्त्वम् । इन्द्र ! पिब । सोमम् ।

मुरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यं शासमिन्द्रम् ।
विश्वासाहमवसे नूतनायोग्रं सहोदामिह तं हुवेम ॥ ५ ॥

मरुत्वन्तम् । मरुद्भिः सहितम् । वृषभम् । वीर्येण वर्धमानम् । कुत्सितशत्रुम्, प्रबला

---

१. हरिनामकाश्वयुक्त! Mah. हे हरिवन्! U. २. मरुतः Sy. ३. पाणि० M.

४. पणिनामकैरसुरैः सह गवार्थे युद्धे च त्वाममवीवृधन् । गविष्टौ—'इषु इच्छायाम्' । भावे क्तिन् । बहुव्रीहौ पूर्वपदस्वरः Sy. ये च मरुतो गविष्टौ गवां पण्यसुरहृतानामिष्टौ प्रत्याहरणेच्छायां ये त्वामवर्धयन् . . . गवामिष्टिर्यस्मिन् रणे Mah. गवामपामेषणायोपस्थितं सन्तं त्वामवर्धयन् U. ५. Omitted by M. न्ये P. मरुतः Sy. ६. चे त्वा M. and P.

७. इदानीम् Sy. नूनं निश्चितम् Mah. नूनं निश्चयेन U.

८. मादयन्ति तादृशैस्तैः । अनुमदन्ति—'मदि स्तुत्यादिषु' इत्यस्य लटि व्यत्ययेन परस्मैपदम् । आगमानुशासनस्यानित्यत्वान्नुमभावः । झेर्लसार्वधातुकस्वरे कृते धातुस्वरः । 'तिङि चोदात्तवति' इति गतेर्निघातः Sy. उत्कर्षयन्ति तर्पयन्ति वा Mah., U.

९. ०विन्नः P. मेधाविनो मरुतः Mah.

१०. मतिः P. The Passage मदतिः सकर्मकश्च भवति should follow अनुमदन्ति and precede मेधाविनः ।

११. सगणः सन् Sy. गणसहितः सन् Mah. समानगणः U.

१२. मरुत्वतीयादिग्रहं पिबाऽऽतृप्तेः Mah. This stanza=YV. 33. 63.

१३. मरुद्भिस्तद्वन्तम् Sy. मरुद्गणोपेतम् Mah. मरुद्भिस्तद्वन्तमिन्द्रम् U. मरुतो देवविशेषास्तैस्तद्वन्तम् BB.

१४. मेघभेदनद्वारा अपां वर्षकम् Sy. जलस्य वर्षितारम् Mah. वर्षितारम् U. वर्षितारं कामानामपां वा BB.

१५. वृत्रहननादिकर्मसूत्साहेन वर्धमानम् Sy.

१६. ०मान M. वर्धते कामान्वर्धयति वा वावृधानस्तम् Mah. वर्धमानम् U. वावृधानमैश्वर्येण । वृधेस्ताच्छीलिकश्चानश् BB.

१७. अकुत्सित० is suggested for कुत्सित० ॥ प्रभूतशत्रुकं यद्वा अकुत्सितारिम् । तथा च मन्त्रः—'स्वरिरमत्रो ववक्षे रणाय' (RV. 1. 61. 9.) इति Sy. कुत्सिता अरयो यस्य स कवारिः, न कवारिरकवारिस्तम् । यस्य शत्रवोऽप्यकुत्सिता वृत्रादयः । यद्वा—अकुत्सितमियर्ति, ऐश्वर्यं प्राप्नोतीत्यकवारिस्तमुत्कृष्टैश्वर्यम् Mah. अकुत्सितारिम् । शत्रवोऽपि यस्याकुत्सिता वृत्रादयः । अथवाऽकुत्सितदानमकुत्सितैश्वर्यम् U. योऽल्पाञ् शत्रुत्वेन विषयीकरोति सोऽकवारिः । यद्वा कविः प्रज्ञातोऽरिर्यस्य स कवारिः । कविशब्दस्यावङादेशश्छान्दसः । ततोऽन्योऽकवारिरप्रज्ञातशत्रुरित्यर्थः BB.

एवास्यारातयो भवन्ति । दिवि भवम्[1] । शासितारम्[2] । इन्द्रम् । सर्वस्याभिभवितारम्[3] । रक्षणाय[4] । नवतराय[5] । उद्गूर्णम्[6] । बलस्य[7] दातारम् । अस्मिन्[8] यज्ञे । तम्[9] । आह्वयेम[10][11] ।

---

१. स्वर्गलोके वर्तमानम् Sy. दिवि भवं द्युलोकस्थम् Mah. द्युलोकजम् U. दिवमर्हतीति दिव्यः BB.

२. हितोपदेशाहितपरिहाराभ्यां शासितारम् Sy. शास्तीति शासः । पचाद्यच् । शासितारं दुष्टानाम् । यद्वा शासनं शासस्तद्वन्तम् । अर्शआदित्वादच् । प्रशासनवन्तम् Mah. प्रशासनवन्तं, शासितारं वा U. शासकं शत्रूणाम् । पचाद्यच् BB

३. ०स्याभ० M. विश्वस्य प्रतिपक्षस्य सर्वस्याभिभवितारम् Sy. विश्वं पालयितुं सहते स विश्वाषाट् तम् । अनलसमित्यर्थः. . .यद्वा सहतिरभिभवार्थः । स्वधर्मच्युतस्य विश्वस्य सर्वस्याभिभवितारम् Mah. स्वधर्मच्युतस्य सर्वस्याभिभवितारम् U. विश्वेषां शत्रूणामभिभवितारम् BB.

४. पालनाय । इदानीन्तनयजमानरक्षणाय Mah. अवनाय U. रक्षणाय । अवतेरसुन् BB.

५. नूतनाय—नवशब्दस्य नू इत्यादेशः । 'त्नप्तनखाश्च प्रत्यया वक्तव्याः' इति तनप्रत्ययः Sy. नवीनाय Mah. अचिरन्तनाय U. अभिनवाय । अद्यप्रभृति विशिष्टं रक्षणं कर्तुम् BB.

६. शत्रुवूद्गूर्णम् Sy. उद्गूर्णवज्रम् Mah. U. उद्गूर्णमायुधैः BB.

७. युद्धसहकारिणां मरुतां बलप्रदम् Sy. सहो बलं ददाति सहोदास्तम् । क्विप् । बलप्रदम् Mah. बलस्य दातारम् U. सहसो बलस्य दातारम् BB.

८. कर्मणि Sy. इहास्मिन्नस्मदीये यज्ञे Mah. इह यज्ञगृहे U. इहास्मिन् कर्मणि BB.

९. तादृशसामर्थ्योपेतम् Sy. तमिन्द्रम् Mah. यमित्थम्भूतमिन्द्रमाहुस्तम् U. ईदृशं मरुत्वन्तमिन्द्रम् BB.

१०. त्वामाह्वयेम Sy. आह्वयामः Mah., U. and BB.

मरुत्वन्तं वृषभम् । वावृधानमकवारिं दिव्यꣳ शासमिन्द्रम् । विश्वासाहमवसे नूतनायोग्रꣳ सहोदामिह तꣳ हुवेम । *उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वतऽएष ते योनिरिन्द्राय त्वा मरुत्वते । उपयामगृहीतोऽसि मरुतां त्वौजसऽइति तृतीयं ग्रहं गृह्णाति ।

११. This stanza=YV. 7. 36.=TS. 1. 4. 17. 1.

---

* अत्रोपयामेत्यादिकमधिकं दृश्यते । SB. 4. 3. 3. 14, p. 372

## III.48.

**स॒द्यो ह॑ जा॒तो वृ॑ष॒भः क॒नीनः॒ प्रभ॑र्तु॒माव॒दन्ध॑सः सु॒तस्य॑ ।**
**सा॒धोः पि॑ब प्रतिका॒मं यथा॑ ते॒ रसा॑शिरः प्रथ॒मं सो॒म्यस्य॑ ॥ १ ॥**

सद्यः[1] । तदहः[2] । एव[3] । जात[4] इन्द्रः । कामानां[5] वर्षिता । कान्तः[6] कामयिता वा[7] दीप्तो वा । सुतस्य[8] । सोमस्य[9] । प्रभर्तारं[10] यजमानम् । अभिगच्छति[11] । अथ[12] प्रत्यक्षः, साधयितारम्[13] । पिब । कामं कामं[14] प्रतिकामम् । यथा[15] । ते[16] कामो भवति । गो[17]रसमिश्रणम्[18] । यज्ञमुख[19] एव । सोमम्[20], यकार उपजनः, सोमार्हस्य वा तव सम्बन्धिनं सोममिति ।

---

१. 'सद्यो ह' इति पञ्चर्चं दशमं सूक्तं वैश्वामित्रं त्रैष्टुभमैन्द्रम् । 'सद्यो ह' इत्यनुक्रमणिका (KSA. 19. 48. p. 16.) । अग्निष्टोमे माध्यन्दिनसवने मैत्रावरुणशस्त्रे 'सद्यो ह जात' इत्येतत्सूक्तम् । सूत्रितञ्च—'सद्यो ह जात एवा त्वामिन्द्रः' (ASS. 5. 16.) इति । चातुर्विंशिकेऽप्यहनि मैत्रावरुणशस्त्रेऽहरहःशस्यसंज्ञकमेतत्सूक्तम् । सूत्रितञ्च —'सद्यो ह जात इत्यहरहःशस्यं मैत्रावरुणः' (ASS. 7. 4.) इति । अहर्गणे द्वितीयादिष्वहःसु माध्यन्दिनसवनेऽस्मिन् शस्त्रे एतत्सूक्तम् । 'अहरहःशस्यानीति होत्रका द्वितीयादिष्वेव' (ASS. 7. 1.) इति सूत्रितम् । साद्यस्क्रे एकाहे मरुत्वतीये शस्त्रे 'सद्यो ह जातः' इत्याद्या सूक्तमुखीया । सूत्रितञ्च 'सद्यो ह जातो वृषभः कनीनस्त्वं सद्यो अपिबो जात इन्द्रः' (ASS. 9. 5.) इति Sy.
२. तदानीम् Sy.
३. ह प्रसिद्धो Sy.
४. उत्पन्नः Sy.
५. वृष्टिद्वारा अपां वर्षिता Sy.
६. कर्तुः P. कमनीयः Sy.
७. Omitted in M.
८. अभिषुतस्य Sy.
९. हविर्लक्षणस्यान्नस्य Sy.
१०. भर्ता० P. प्रकर्षेण भर्तारं सङ्ग्रहीतारं यजमानम् Sy.
११. ०च्छन्ति P. रक्षतु Sy.
१२. अथा प्र० P.
किञ्च तादृशस्त्वम् Sy.
१३. ०तार P.
रसात्मना संसिद्धम् Sy.
१४. M. and P. read कामम् once only ॥ कामे कामे सोमपानेच्छायां सत्याम् । कामं कामं प्रति । वीप्सायामव्ययीभावः । समासस्वरः Sy.
१५. कामस्य पूर्तिर्भवति तथा । अपादान्तत्वादेव लित्स्वरः Sy.
१६. तो P. तव Sy.
१७. गोस० M. गोपयोमिश्रणोपेतम् । रसाशिरः—आङ्पूर्वात् श्रीणातेः क्विपि 'अपस्पृधेथाम्'—इत्यादिना आशिर इत्यादेशः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः Sy.
१८. ०श्रवणम् P.
१९. सर्वेभ्यो देवेभ्यः पुरस्तात् Sy.
२०. सो P. सोममयं रसम् । सोम्यस्य—सोमशब्दान्मयडर्थे 'मये च' इति यप्रत्ययः Sy.

यज्जायथास्तदहरस्य कामेंऽशोः पीयूषमपिबो गिरिष्ठाम् ।
तं ते माता परि योषा जनित्री महः पितुर्दम आसिञ्चदग्रे ॥ २ ॥

यज्जायथाः[1] [2]। यस्मिन्नहनि प्रातः[3] । जायथाः[4] । तत्[5] । अहरेव । अस्य[6] । अंशोः[7] । पातव्यम्[8] अभिषुतम् । अभिषवात्प्राक्[9] पर्वतेषु लतासु स्थितम् । कामानुगुणम्[10] । अपिबः[11] । तं[12] रसम् । तव[13] । आमिश्रयित्री[14] । जनयित्री[15] । पृथिवी । महतः । द्युलोकादाकृष्य[16] । यज्ञे[17] । मुखतः[18] । परितः । आसिञ्चदिति[19] ।

उपस्थायं मातरमन्नमैट्ट तिग्ममपश्यदभि सोममूधः ।
प्रयावयन्नचरद्गृत्सो अन्यान्महानि चक्रे पुरुधप्रतीकः ॥ ३ ॥

उपस्थाय[20] । प्रातर्जात इन्द्र[21] उपगम्य[22] । पृथिवीम् । आत्मनोऽन्नम्[23] । ऐट्ट[24] इति इच्छते रूपम् । अथ तीव्रम्[25] । सोमम् । तस्य ऊधः[26] । लक्षीकृत्य[27] स्थितम् । अपश्यत्[28] । अथ तं पीत्वा

१. यज्ञाजाय० P.
२. हे इन्द्र ! त्वम् Sy.　३. वृतस्त्वं P.
४. अजायथाः । जायथाः—'जनी प्रादुर्भावे' इत्यस्य लङि, 'बहुलं छन्दसि' इत्यडभावः । यद्वृत्तयोगादनिघातः Sy.
५. तस्मिन्नेवाहनि Sy.
६. सोमस्य Sy.
७. सोमलताखण्डविशिष्टस्य ऋजीषस्य Sy.
८. अभिनवं रसम् Sy.
९. P. omits प्राक् ॥ पर्वतस्योच्चस्थाने वर्तमानम् Sy.
१०. पिपासायां सत्याम् Sy.
११. पीतवानसि Sy.
१२. तादृशं सोमम् Sy.
१३. उत्पत्तिक्षणे एव सोमपाने कारणं दर्शयति—तव Sy.
१४. युवतिरदितिः Sy.
१५. जनित्री—'जनिता मन्त्रे'—इति निपातनात् णेर्लोपः Sy.
१६. जनकस्य कश्यपस्य Sy.
१७. ०ज्ञेषु P. सूतिकागृहे Sy.
१८. स्तन्यदानात्प्राक् Sy.
१९. तवास्ये परितोऽक्षारयत् Sy.
२०. उप P.
२१. स इन्द्रः Sy.
२२. प्रार्थयित्वा ? (प्राप्य) । उपस्थाय—'तिष्ठतेर्ल्यपि घुमास्था—' इतीत्वे प्राप्ते 'न ल्यपि' इति प्रतिषेधः । लित्स्वरः Sy.
२३. ०न्नम् P.
२४. अट्ट M. ऐड्ड P. तामन्नमयाचत । अयाचत—ईळिर्याच्ञार्थः, तस्माल्लङि रूपम् । 'आडजादीनाम्' इत्याडागमः । ष्टुत्वम् । निघातः । 'ईळिरध्येषणाकर्मा' (N. 7. 15.) इति Sy.
२५. दीप्तम् । तिग्मम्—'तिज निशाने' इत्यस्मात् 'युजिरुचितिजां कुश्च' इति मक्प्रत्ययः, कवर्गादेशश्च Sy.
२६. ऊधसि क्षीररूपेण स्थितम् Sy.
२७. सर्वतः Sy.
२८. अदर्शत् Sy.

प्रकर्षेण[1] पृथक् कुर्वन् । अचरत्[2] । मेधावी[3] । अन्यान्[4] शत्रून्[5] । युद्धानि[6] च । चक्रे । बहुप्रकारा-वयवः[7] ।

उग्रस्तु॑राषाळ॒भिभू॑त्योजा यथाव॒शं त॒न्वं॑ चक्र ए॒षः ।
त्वष्टा॑र॒मिन्द्रो॒ ज॒नुषा॑भि॒भूया॒मुष्या॒ सोम॑मपिबच्च॒मूषु॑ ॥ ४ ॥

उग्रस्तुराषाट्[8] । उद्गूर्णः[9] । तूर्णम्[10]भिभविता । अभिभवनशीलबलः[11] । अयाकामम्[12] । शरीरम्[13] । करोति[14] कामरूपो भवति[15] । अयम्[16] । सोऽयम्[17] । पुत्रस्य[18] वधादनिन्द्रियं सोममाहरन्तम्[19] । प्रादुर्भावात्[20] । अभिभूय । चमूषु[21] स्थितम् । सोमम् । परिमुष्य[22] । अपिबत्, 'स यज्ञवेशसं प्रासहा

---

१. ०कर्षं P. स्वस्वस्थानात्प्रकर्षेणोच्चालयन् । प्रयवयन्—'यु मिश्रणामिश्रणयोः' इत्यस्य ण्यन्तस्य शतरि रूपम् । लित्स्वरः Sy.

२. सर्वत्र चरति Sy.

३. गृत्सः—'अभिकाङ्क्ष्यते सर्वैर्देवैः शत्रुहननार्थमिति गृत्स इन्द्रः । 'गृधु अभिकाङ्क्षायाम्' । 'गृधिपण्योर्दकौ च' इति सप्रत्ययो दकारश्चान्तादेशः । वृषादित्वादाद्युदात्तः Sy.

४. अन्नान् P. ५. सपत्नान् Sy.

६. महान्ति वृत्रहननादीनि कर्माणि Sy.

७. ०यव M. तेजोयोगाद् बहुधा विक्षिप्ताङ्गः सन् । पुरुधप्रतीकः—पुरुशब्द इह संख्यावाची । 'संख्याया विधार्थे धा' इति धाप्रत्ययः । ह्रस्वश्छान्दसः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः Sy.

८. M. only contains the *pratīka* over the line in a different handwriting.

९. ०द्गूर्ण P. शत्रूणां भयङ्करः Sy.

१०. मभि० P. त्वरया शत्रूणामभिभविता । तुराषाट्—'जित्वरा सम्भ्रमे' । क्विप् । 'ज्वरत्वर' इत्यादिना ऊठ् । सहेः 'छन्दसि सहः' इति ण्विः । 'कर्तृकरणे कृता बहुलम्' इति समासः । 'तत्पुरुषे कृति बहुलम्' इति तृतीयाया अलुक् । 'सहेः साडः सः' इति षत्वम् । कृदुत्तरपदस्वरः Sy.

११. भवन० P. अत एव शत्रूणामभिभवनपराक्रमोपेतः सन् Sy.

१२. ०याकम् P. यथा० is suggested for अया० ॥ नानाविधरूपोपेतम् । यथावशम्—वशं काममनतिक्रम्य इत्यव्ययीभावसमासः । समासस्वरः Sy.

१३. आत्मीयं शरीरम् Sy.

१४. चक्रे । तथा च मन्त्रवर्णः—'रूपंरूपं मघवा बोभवीति' (RV. 3. 53. 8.) इति Sy.

१५. Cf. RV. III. 53. 8.

१६. य एषः Sy.

१७. सोमम् P. सोऽयम् stands for इन्द्रः ।

१८. वृत्र० P.

१९. ०रन्त M. त्वष्टृनामकमसुरम् Sy.

२०. ०दुर्भवा० P. जन्मना सामर्थ्येन Sy.

२१. चमसेषु स्थितम् । 'चमु अदने' । 'कृषिचमितनिधनिसर्जिखर्जिभ्यः ऊः' इत्यूप्रत्ययः । प्रत्ययस्वरः Sy.

२२. ०रिमुष्य P. चोरयित्वा । आमुष्य—'मुष स्तेये' । ल्यप् Sy.

सोमम[1]पिबत्, इति ब्राह्मणम् इति[2]।

शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ ५ ॥

[ शुनं हुवेम[3] ]

III.49.

शंसा महामिन्द्रं यस्मिन्विश्वा आ कृष्टयः सोमपाः काममव्यन् ।
यं सुक्रतुं धिषणे विभ्वतष्टं घनं वृत्राणां जनयन्त देवाः ॥ १ ॥

[4]शंस[5][6]। स्तुहि[7]। महान्तम्। इन्द्रम्। यस्मिन्[8]। विश्वाः[9]। सोमपायि[10]-न्यः[11]। प्रजाः[12]। स्वाभिलषितम्[13]। आभिमुख्येन[14] गच्छन्ति[15]। यम्[16]। सुकर्माणम्[17]।

---

१. 'इन्द्रो यज्ञवेशसं कृत्वा प्राासहा सोममपिबत्।' SB. 12 7. 1. 1., 8. 3. 1.॥ 'त्वष्टा हतपुत्रो वीन्द्रम्' इत्यादि 'प्रासहा सोममपिबत्।' (TS. 2. 4. 12. 1.) इति तैत्तिरीयकम् Sy.

२. M. omits words between अभिभूय and इति।

३. M. only has this *pratīka* added over the line in a different handwriting. For explanation see RV. III. 30. 22.

४. 'शंसा महाम्' इति पञ्चर्चमेकादशं सूक्तं वैश्वामित्रं त्रैष्टुभमैन्द्रम्। 'शंसा महाम्' इत्यनुक्रमणिका (19. 49. p. 16.)। समूळ्हे दशरात्रेऽष्टमेऽहनि मरुत्वतीयशस्त्रे एतत्सूक्तम्। सूत्रितञ्च—'शंसा महां महश्चित्वमिन्द्र' (ASS. 8. 7.) इति Sy.

५. A different hand adds शंस महाम् in M. over the line. शंसं P.

६. हे होतः! Sy.

७. स्तुतिहि P. शस्त्रैः स्तुहि। शंस—'शंसु स्तुतौ' इत्यस्य लोटि रूपम्। पादादित्वादनिघातः। द्वयचोऽतस्तिङः' इति संहितायां दीर्घः Sy.

८. इन्द्रे रक्षितरि सति Sy.

९. विश्वा P. सर्वे Sy.

१०. मपा० P. यज्ञमनुष्ठाय सोमपाः सन्तः Sy.

११. M. omits words between शंस and पायिन्यः।

१२. प्रजा जा P. मनुष्याः Sy.

१३. ०षितां P. काम्यत इति कामः स्वर्गादिः। तम् Sy.

१४. सर्वतः Sy.

१५. प्राप्नुवन्ति। अव्यन्—'वी कान्तिगत्यादिषु'। लङि रूपम्। यद्वृत्तयोगादनिघातः। अट्स्वरः Sy.

१६. इन्द्रम् Sy.

१७. क्रतुः कर्म जगत्पालनादि। शोभनः क्रतुर्यस्यासौ सुक्रतुः। तादृशम्। सुक्रतुम्—'क्त्वादयश्च' इत्युत्तरपदाद्युदात्तः Sy.

द्यावापृथिवी[1] । शत्रूणाम्[2] । हन्तारम्[3] । देवाः[4] । अजनयन्[5] । 'विभ्वम्'[6] इति महन्नाम, पृथुतष्टम्[7]—यथा महाशरीरो भवति तथा कृतमिति ।

यं नु नकिः पृतनासु स्वराजं द्विता तरति नृतमं हरिष्ठाम् ।
इनतमः सत्वभिर्यो ह शूषैः पृथुज्रया अमिनादायुर्दस्योः ॥ २ ॥

यं नु । यम्[8] । नु[9] । न कश्चित्[10] । सङ्ग्रामेषु[11] । स्वराजम्[12] । नेतृतमम्[13] । अश्वस्थितम्[14] । द्वैधम्[15] । तरति[16], सबलमेनमाक्रम्य मध्येन न गच्छन्तीत्यर्थः[17][18] । ईश्वरतमः[19] ।

---

१. देवमनुष्यादीनां धारयित्र्यौ । यद्वा प्रगल्भे समर्थे स्वाश्रितान् रक्षितुमिति धिषणे द्यावापृथिव्यौ । धिषणे—'ञिधृषा प्रागल्भ्ये' इत्यस्मात् 'धृषेर्धिष च संज्ञायाम्' इति क्युप्रत्ययः । धिष इत्यादेशः । प्रत्ययस्वरः Sy.

२. पापरूपाणाम् Sy.

३. ०न्तार P.

४. देवाश्च M. वोश्च P.

५. जनयन्त—जनेर्ण्यन्तस्य लङि रूपम् । यद्वृत्तयोगादनिघातः Sy.

६. विह्वम् M. and P. विभुना ब्रह्मणा तष्टं जगदाधिपत्ये स्थापितं महान्तम् Sy.

७. ०थुकष्टम् P.

८. इन्द्रम् Sy. विश्वामित्रस्यार्षम् । इन्द्र उच्यते । यन्नुशब्दः पदपूरणः SKN. यमिन्द्रम् Dur.

९. M. omits यम् and नु ॥ नु प्रसिद्धौ Sy.

१०. न कश्चिदपि Sy., Dur. न कश्चिदित्यर्थः SKN.

११. व्याप्रियन्तेऽत्र योद्धार इति पृतनाः सङ्ग्रामाः । तेषु Sy.

१२. सराजं M. स्वयं राजितारमात्मना दीप्यमानमित्यर्थः SKN. अपराधीनराज्यम् Dur.

१३. ०तमः M. बलस्य युद्धे नेतृतमम् Sy. प्रकृष्टमनुष्याकारमत्यन्तशूरमित्यर्थः SKN. मनुष्यतमम् Dur.

१४. चास्मितं M. हरियुक्ते रथे वर्तमानम् Sy. हर्योरास्थानम् SKN. हर्योरास्थातारम् Dur.

१५. युद्धमासाद्य सेनां द्विधा कृत्वा वर्तमानम् Sy. द्वेधा शरीरेण सेनालक्षणेन बलेन च SKN. द्विविधेनापि बलेन सांयोगिकेन, औरसेन च Dur.

१६. उत्तीर्य गच्छति । न कोऽप्यस्तीत्यर्थः । तरति—'तॄ प्लवनतरणयोः' इत्यस्य लटि रूपम् । यद्वृत्तयोगादनिघातः । शपः पित्त्वादनुदात्तत्वे धातुस्वरः Sy. शक्नोत्यर्थेऽयं तरतिर्द्रष्टव्यः । शक्नोति जेतुमिति शेषः SKN. जयति, सर्वथा यो जेतुं न शक्यत इत्यर्थः । अथवा द्विता तरति द्विधा, एकधा वा बहुधा वा वर्तमानं पृतनासु. . .यं न कश्चिद् हन्तुं शक्नोति Dur.

१७. गच्छति is suggested for गच्छन्ति ।

१८. ०त्यत्र्थः P.

१९. स इन्द्रः, अतिशयेन सेनास्वामी Sy. अतिशयेनेश्वरः SKN. ईश्वरतमश्च यः सर्वेभ्य ईश्वरेभ्यः Dur.

भर्टैः। बलिष्ठैः। पृथुवेगः। यः। असुरस्य। जीवितम्। हतवान्, तं शंसेति सम्बन्धः।

सहावा पृत्सु तरणिर्नार्वा व्यानशी रोदसी मेहनावान्।
भगो न कारे हव्यो मतीनां पितेव चारुः सुहवो वयोधाः॥ ३॥

सहावा। सहनवान्। सङ्ग्रामेषु। शत्रूणां तरिता। न च। अन्यमाश्रितः।

---

१. परितः सीदद्भिर्मरुद्भिः सह Sy. सत्वभिः 'षणु दाने' इत्यस्य। सत्वानो दातारो मरुत इहाभिप्रेतास्तैः सहायैः SKN. अनेकसत्वसंयुक्तैर्हस्त्यश्वरथपदातिलक्षणैः सांयोगिकैर्बलैः Dur.

२. लिष्ठैः M. शोषयन्ति परबलानीति शूषाणि बलानि। तैः Sy. बलैश्च सेनाख्यैः कर्मभूतैः SKN. शूषैश्च बलविशेषैरेव। अथवा सत्वशब्दविशेषणमेव शूषशब्दः स्यात्, सत्त्वयुक्तैश्शूषैर्बलैरिति Dur.

३. युद्धं प्रति तीव्रवेगः सन् Sy. पृथुजवः SKN. विस्तीर्णजवः। एवमत्र शब्दसारूप्यात् वधाधिकाराच्च पृथुज्रयाः पृथुजव इत्युपपद्यते Dur.

४. Omitted in P. यान् गच्छन्। यः—'या प्रापणे'। औणादिकः कप्रत्ययः। आतो लोपः। प्रत्ययस्वरः Sy.

५. शत्रोः Sy. कस्य? दस्योः। उपलक्षयितुं तच्छ्रुतेः साकाङ्क्षत्वाद् वयं स्तुम इति वाक्यशेषः SKN. कस्य?... मेघस्यासुरस्य, तमहं स्तौमि। स इदं नाम करोत्वित्यभिप्रायः Dur.

६. ०वित M. अन्नं प्राणं वा Sy.

७. हेत० M. हतवन् P. सङ्ग्रामेषु मिनाति हिनस्ति Sy. मिनातिर्वधकर्मा। हिंसितवान्, हिनस्ति वा SKN.

८. शंसन्ति M.

९. VM. ignores ह॥ ह प्रसिद्धौ Sy. 'पृथुज्रयाः पृथुजवः॥ पृथुज्रयां अमिनादायुर्दस्योः॥ प्रामापयदायुदस्योः' N. 5. 9.; SKN. II. 327.

१०. य इन्द्रः Sy.

११. सहोवा० P. बलवान्। सहावा—सहोऽस्यास्तीति मतुबर्थे 'छन्दसीवनिपौ' इति वनिप्। 'अन्येषामपि दृश्यते' इति संहितायां दीर्घः Sy.

१२. पृत्सु—पृतनाशब्दस्य सौ परतः 'मांस्पृत्स्नूनामुपसङ्ख्यानम्' इति पृदादेशः। 'सावेकाचः' इति विभक्तेरुदात्तत्वम् Sy.

१३. शत्रूनुत्तीर्य वर्तत इति तरणिः Sy.

१४. तत्र दृष्टान्तः यथा Sy.

१५. अन्यन्यमा० M.॥ यथा बलवानश्वः शत्रुबलं तरति तथा Sy.

द्यावापृथिव्योः[१]। व्याप्ता[२]। सेचनवान्[३]। भगः[४]। इव देवः[५]। कर्तव्येऽवस्थिते[६]। स्तोत्रैः[७]। आह्वातव्यः[८]। पितेव[९]। कल्याणः[१०]। स्वाह्वानः[११]। अन्नस्य[१२] दाता, अयमिन्द्रः[१३]।

धर्ता दिवो रजसस्पृष्ट ऊर्ध्वो रथो न वायुर्वसुभिर्नियुत्वान् ।
क्षपां वस्ता जनिता सूर्यस्य विभक्ता भागं धिषणेव वाजम् ॥ ४ ॥

धर्ता दिवः[१४]। धर्ता[१५]। दिवः[१६]। लोकस्य[१७]। द्युलोकं[१८] मूर्ध्ना[१९] स्पर्शन्[२०]। अन्तरिक्ष ऊर्ध्वं स्थितः। रथः[२१]। इव। गन्ता[२२]। अथ तैः सह[२३], मरुत्सु। नियुत्वान्[२४]। रात्रीणाम्[२५]। आच्छादयिता[२६]।

---

१. द्यावापृथिव्यौ Sy.

२. अप्ता P. व्याप्नुवन् । व्यानशिः—'अशू व्याप्तौ' इत्यस्मात् छन्दसि सवादित्वात् किप्रत्ययः । तस्य लिड्वद्भावः । 'अत आदेः' इत्यभ्यासस्य दीर्घे कृते 'अश्नोतेश्च' इति नुडागमः । प्रादिसमासः Sy.

३. मिह्यते सिच्यते दीयतेऽर्थिभ्य इति मेहनं धनम् । तद्वान् भवति । तादृश इन्द्रः Sy.

४. पूषा Sy. ५. देवा P.

६. ०व्यो समुपस्थि० P. क्रियत इति कारो यज्ञादिः । तस्मिन् यज्ञे । कारे—करोतेः कर्मणि घञ् । 'कर्षात्वतो घञोऽन्त उदात्तः' । इत्यन्तोदात्तत्वम् Sy.

७. स्तोतॄणां स्तुतीनां वा Sy.

८. ह्वनीयः । हव्यः—जुहोतेः 'अचो यत्' 'यतोऽनावः' इत्याद्युदात्तत्वम् Sy.

९. पितेव पालयिता Sy.

१०. ०ल्याण M. कमनीयः Sy.

११. सुष्ठ्वाह्वानोपेतः । सुहवः—ह्वयतेः 'भावेऽनुपसर्गस्य (Pa. 3. 3. 75) इत्यप्प्रत्ययः । सम्प्रसारणम् । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः । 'आद्युदात्तं द्व्यच्छन्दसि' इति बहुव्रीहौ उत्तरपदाद्युदात्तत्वम् Sy.

१२. अन्नस्य दाता भवति

१३. M. omits words between स्वाह्वानः and ०मिन्द्रः .

१४. M. only contains this *pratika* added in a different handwriting.

१५. धारकः Sy. १६. स इन्द्रः द्युलोकस्य Sy. १७. अन्तरिक्षस्य च । रजसः—'रञ्ज रागे' इत्यस्मात् 'भूरञ्जिभ्यां कित्' (Uṇādi. 4. 656) इत्यसुन् । कित्त्वान्नलोपः । रज्यते प्रकाशेनेति रजोऽन्तरिक्षम् । नित्त्वादाद्युदात्तः Sy.

१८. M. omits the commentary of this stanza upto द्यु ॥

१९. मूर्वा M. ऊर्ध्व P.

२०. स्पर्शनम् P. स्पृशन् is suggested for स्पर्शन् ॥ सर्वत्र वर्तमानः Sy.

२१. तदीयो रथ इव Sy.

२२. Sy. explains ऊर्ध्वः and वायुः together as ऊर्ध्वगन्ता ।

२३. सहायतया निवसद्भिर्मरुद्भिः Sy.

२४. नियच्छन्वो M. and P. सहायवान् । यद्वा नेत्ययमुत्तरेणापि सम्बध्यते । यथा वायुर्नियुत्वान् । नियुन्नामकवडवाभिः, तद्वानेवमिन्द्रो वसुभिर्मरुद्भिः सहायवान् Sy. २५. रात्रिम् Sy.

२६. च माद० P. आच्छादयन् । वस्ता—'वस आच्छादने' इत्यस्य तृचि रूपम् Sy.

जनयिता[1] । सूर्यस्य[2] । विभक्ता[3] । यज्ञे[4] स्वीयं[5] भागम्[6] । धिषणेति वाङ्नाम[7], यथा[8] वागिन्द्रियम् । अन्नम्[9], विविधं भजत्येवमिति[10] ।

**शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।**
**शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ ५ ॥**

[शुनं हुवेम[11] ।]

## III.50.

**इन्द्रः स्वाहा पिबतु यस्य सोम आगत्या तुम्रो वृषभो मरुत्वान् ।**
**ओरुव्यचाः पृणतामेभिरन्नैरास्य हविस्तन्वः काममृध्याः ॥ १ ॥**

इन्द्रः[12] । इन्द्रः[13] । स्वाहुतं[14] सोमम् । पिबतु । यस्य[15] स्वभूतः[16] । सोमो भवति । तुम्रिः[17] शब्दकर्मा, आगत्य[18] । सिंहनादकृत्[19] । कामानां वर्षिता[20] । मरुत्वान्[21] । आपूरयतु[22], आत्मानम् ।

---

१. ०यितुः P. जनिता—जनयतेस्तृचि 'जनिता मन्त्रे' इति निपातनाण्णिलोपः । चित्त्वादन्तोदात्तः Sy.
२. जगत्प्रकाशकस्यादित्यस्य Sy.
३. साधु विभागकर्ता भवति । विभक्ता—'भज सेवायाम्' इत्यस्य साधुकारिण्यर्थे तृन् । 'एकाच उपदेशे—' इतीट्प्रतिषेधः 'तादौ च निति कृत्यतौ' इति गतेः प्रकृतिस्वरत्वम् Sy.
४. M. omits **विभक्ता ।** and **यज्ञे ।**
५. स्वीयं P.
६. भजनीयम् Sy.
७. Ngh. 1. 12.; N. 8. 3.
८. तत्र दृष्टान्तः । यथाऽऽड्यानां वागस्येदमिति विभागं करोति तद्वत् Sy.
९. कर्मफलरूपमन्नम् Sy.
१०. भवत्ये० M.
११. M. only contains this *pratīka*, added in a different handwriting. For explanation see RV. III. 30. 22.
१२. 'इन्द्रः स्वाहा' इति पञ्चर्चं द्वादशं सूक्तं वैश्वामित्रं त्रैष्टुभमैन्द्रम् । दशरात्रे नवमेऽहनि मरुत्वतीयशस्त्रे इदं सूक्तम् । सूत्रितञ्च—'तृतीयस्येन्द्रः स्वाहा गायत्साम' (ĀSS. 8. 7) इति Sy. १३. इन्द्र M. अयमिन्द्रः Sy.
१४. स्वाहाकृतमिमम् Sy.
१५. इन्द्रस्यायम् Sy.
१६. ०भूत P.
१७. तुमिः M. D. The passage **तुम्रिः शब्दकर्मा** should immediately follow **सिंहनादकृत्** and precede **कामानां वर्षिता ॥** तुम्रः—तुमिराहननार्थः Sy.
१८. ०गत्यं P. स इन्द्रो यज्ञं प्रत्यागत्य Sy.
१९. कर्मविघ्नकारिणां हिंसकः Sy.
२०. यष्टॄणामभिमतफलवर्षकः Sy.
२१. मरुद्भिस्तद्वान् Sy.
२२. समन्तात् पूरयतु Sy.

एभिः[1] । अन्नैः[2] । बहुव्याप्तिः[3] । किञ्च, अस्य[4] हविः[5] । शरीराणि[6] । कामम्[7] । संवर्धयत्विति[8] ।

**आ ते॑ सप॒र्यू ज॒वसे॑ युन॒ज्मि॒ ययो॒रनु॑ प्र॒दिवः॑ श्रु॒ष्टिमाव॑ः ।**
**इ॒ह त्वा॑ धेयु॒र्हर॑यः सुशिप्र॒ पिबा॒ त्व१॒॑स्य सुषु॑तस्य॒ चारोः॑ ॥ २ ॥**

आ ते ।[10] आयुनज्मि[11] । ते[12] । परिचरणशीलौ[13] । गमनाय[14], अश्वौ । ययोः[15] । आशुगमनम्[16] । पुराणस्त्वम्[17] । अनुगच्छसीति[18] । द्विपादुक्त्वा य इव द् आह ? 'इह त्वा' इति[19], अस्मिन् यज्ञे[20] । त्वाम् । निदध्युः[21] । अश्वाः[22] । सुशिप्र[23] ! पिब[24] । शीघ्रम्[25] । सुष्ठु सुतम्[26] । कल्याणं सोमम्[27] । इममिति ।

---

१. अस्माभिर्दत्तैः Sy.
२. सोमादिलक्षणैर्हविर्भिः Sy.
३. प्रभूतव्याप्तिः सन् । उरुव्यचाः—व्यचेरसुन्, 'व्यचेः कुटादित्वमनसीति वक्तव्यम्' इत्यत्र 'अनसि' इति पर्युदासात् ङित्त्वाभावः । कृदुत्तरपदस्वरः Sy.
४. इन्द्रस्य सम्बन्धिनः Sy.
५. अस्माभिर्दत्तम् Sy.
६. शरीरस्य Sy.
७. पुष्ट्यादिलक्षणविषयमभिलाषम् Sy.
८. सम्बन्धयतु P. पूरयतु । ऋध्याः—ऋध्नोतेराशीर्लिङि रूपम् Sy.
९. VM. ignores आ ॥ आ सर्वतः Sy.
१०. हे इन्द्र ! Sy.
११. रथे योजयामि Sy.
१२. तव Sy.
१३. परिचारकौ हरी । सपर्यू—सपरशब्दः कण्ड्वादिः । तदन्ताद् औणादिकः कुप्रत्ययः Sy.
१४. यज्ञं प्रत्यागमनाय Sy.
१५. अश्वयोः Sy.
१६. वेगम् Sy. श्रुष्टीति क्षिप्रनाम' (Ngh. 4. 3. N. 6. 12.)
१७. पुरातनस्त्वम् Sy.
१८. ०च्छसीति M. आवः—'अव रक्षणादिषु' । छान्दसे लङि रूपम् । यद्वृत्तयोगादनिघातः Sy.
१९. M. reads द्विपः वुक्त्वा य इव दाहे हत्वेति and P. reads द्वि ददुक्त्वा बहु ह वा हे हत्वेति for द्विपादुक्त्वा य इव द् आह 'इह त्वा' इति ॥ द्विवदुक्त्वा बहुवदाह—'इह त्वा' इति is suggested.
२०. इह कर्मणि Sy.
२१. यज्ञं प्रति धारयन्तु । धेयुः—दधातेराशीर्लिङि 'किदाशिषि' इति यासुट् । 'एर्लिङि' (Pa. 6. 4. 67.) इत्येकारादेशः । निघातः Sy.
२२. अश्वा M. रथे योजितास्तेऽश्वाः Sy.
२३. स्वशि० M. हे शोभनहनो ! इन्द्र ! Sy.
२४. पादादित्वादनिघातः Sy.
२५. क्षिप्रम् Sy.
२६. तत आगतस्त्वं सुष्ठ्वभिषुतम् । सुषुतस्य—'षुञ् अभिषवे' । कर्मणि क्तः । गतिरनन्तरः' इति गतिस्वरः । 'उपसर्गात्सुनोति—'इत्यादिना संहितायां षत्वम् Sy.
२७. कमनीयम् Sy.

गोभिर्मिमिक्षुं दधिरे सुपारमिन्द्रं ज्यैष्ठ्याय धायसे गृणानाः ।
मन्दानः सोमं पपिवाँ ऋजीषिन्त्समस्मभ्यं पुरुधा गा इषण्य ॥ ३ ॥

गोभिः[1] । स्तुतिभिः । वर्षेण सेक्तुमिच्छन्तम्[2] । धारयन्ति[3] । सुष्ठु पारयितारम्[4] । इन्द्रम् । आत्मनो ज्यैष्ठ्याय[5] । धारणाय च[6] । स्तुवन्तः[7] ।[8] मोदमानः[9] । सोमम्[10] । पपिवान्[11] । ऋजीषवन्[12] ! इन्द्र ! सम्प्रेरय[13] । अस्मभ्यम्[14] । बहुप्रकारम्[15] । पशूनिति[16] ।

इमं कामं मन्दया गोभिरश्वैश्चन्द्रवता राधसा पप्रथश्च ।
स्वर्यवो मतिभिस्तुभ्यं विप्रा इन्द्राय वाहः कुशिकासो अक्रन् ॥ ४ ॥

[इमं कामं मन्दया[17] ।]

---

१. गोमिश्रितः सोमः । गोभिः—'सावेकाचः' इति विभक्तेरुदात्तत्वे प्राप्ते 'न गोश्वन्साववर्ण—' इति प्रतिषेधः Sy.

२. सक्तु॰ M. स्तोतॄणामभिमतफलं वर्षितुमिच्छन्तम् । मिमिक्षुम्—'मिह सेचने' इत्यस्य सनि 'एकाच' (Pa. 7. 2. 10.) इतीट्प्रतिषेधे 'हलन्ताच्च' इति किद्वद्भावः । 'सनाशंसभिक्ष उः' । प्रत्ययस्वरः Sy.

३. ॰यति M.

४. शोभनपारम् । स्तुतिभिरभिमुखीकर्तुं शक्यमित्यर्थः । तादृशम् Sy.

५. ज्येष्ठ्याय M. ज्येष्ठाय P. धनादिसम्पत्त्या श्रेष्ठत्वाय । ज्यैष्ठ्याय—ज्येष्ठस्य भाव इत्यर्थे ब्राह्मणादित्वात् ष्यञ् । ञित्त्वादाद्युदात्तः Sy.

६. चिरकालमायुर्धारणाय च Sy.

७. स्तोत्रं कुर्वाणा ऋत्विजः । गृणानाः—'गॄ शब्दे' । क्र्यादित्वात् श्ना । चित्त्वादन्तोदात्तः Sy.

८. शेवः प्रत्यक्षः Sy.

९. मन्दानः—'मदि स्तुत्यादिषु' इत्यस्य शानचि 'बहुलं छन्दसि' इति शपो लुक् Sy.

१०. सोमस्य Sy.

११. च पिवान् M. पाता सन् Sy.

१२. हे सोमवन्निन्द्र ! स त्वम् Sy.

१३. सम्यक् प्रेरय । इषण्य—'इष गतौ' इषणमिच्छतीति छन्दसि परेच्छायां क्यच् । तदन्तादन्तर्भावितण्यर्थाल्लोटि रूपम् Sy.

१४. स्तोतृभ्यः अस्मभ्यम् Sy.

१५. बहुधा । पुरुधा—पुरुशब्द इह सङ्ख्यावाची । 'सङ्ख्याया विधार्थे धा' इति धाप्रत्ययः Sy.

१६. अग्निहोत्रादिकर्मसिद्ध्यर्थं धेनूः Sy.

१७. The *pratīka* has been added by the Editor. For explanation see RV. III. 30. 20.

शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ ५ ॥

[शुनं हुवेम ।][1]

उत्तरे गते[2] ।

III.51.

चर्षणीधृतं मघवानमुक्थ्य१मिन्द्रं गिरो बृहतीरभ्यनूषत ।
वावृधानं पुरुहूतं सुवृक्तिभिरमर्त्यं जरमाणं दिवेदिवे ॥ १ ॥

[3]चर्षणीधृतम्[4] । मनुष्याणां वर्तारम्[5] । धनवन्तम्[6] । प्रशस्यम्[7] । इन्द्रम्[8] । स्तुतयः[9] ।

---

१. The *pratika* has been added by the Editor. For explanation see RV. III. 30. 22.

२. A different hand added the *pratika* after गते in M.

३. 'चर्षणीधृतम्' इति द्वादशर्चं त्रयोदशं सूक्तं वैश्वामित्रमैन्द्रम् । अत्रानुक्रमणिका—'चर्षणीधृतं द्वादशाद्यान्त्यौ तृचौ जागतगायत्रौ' (KSA. 19. 51. p. 16.) इति । आद्यस्तृचो जागतोऽन्त्यस्तृचो गायत्रः । शिष्टा ऋचस्त्रिष्टुभः । सूक्तविनियोगो लैङ्गिकः । उक्थ्ये क्रतौ मैत्रावरुणशस्त्रेऽनुरूपतृचानन्तरमाद्यस्तृचः शंसनीयः । सूत्रितञ्च 'चर्षणीधृतमस्तभ्नाद् द्यामसुर इति तृचौ' (ASS. 6.1.) इति । विषुवति निष्केवल्ये 'नृणामु त्वा' इति तृचः । 'विषुवान्' इति खण्डे सूत्रितम् । 'नृणामु त्वा नृतमं गीर्भिरुक्थैरिति तिस्रः' (ASS. 8. 6.) इति । बृहस्पतिसवे अप्ययं तृचो निष्केवल्ये निविद्धानीयः । सूत्रितञ्च—'नृणामु त्वेति मध्यन्दिनः' (ASS. 9. 5.) इति महाव्रतेऽपि निष्केवल्येऽयं तृचः । दशरात्रे चतुर्थेऽहनि मरुत्वतीये 'इन्द्र मरुत्वः' इति तिस्रः । षष्ठेऽहनि 'षष्ठस्य' इति खण्डे सूत्रितम्—'इन्द्र मरुत्व इति तिस्र इति मरुत्वतीयम्' (ASS. 8. 1.) इति । बृहस्पतिसवेऽपि मरुत्वतीयशस्त्रेऽयं तृचो निविद्धानीयः । सूत्रितञ्च—'इन्द्र मरुत्व इह नृणामु त्वेति मध्यन्दिनः' (ASS. 9. 5.) इति । आद्या मरुत्वतीयग्रहस्यानुवाक्या । सूत्रितञ्च—'मरुत्वतीयेन ग्रहेण चरन्तीन्द्र मरुत्व इह पाहि सोमम्' (ASS. 5. 14.) इति । तृतीये पर्याये होतुः शस्त्रे 'इदं ह्यन्वोजसा' इति स्तोत्रियस्तृचः । सूत्रितञ्च 'इदं ह्यन्वोजसा महाँ इन्द्रो य ओजसा' (ASS. 6. 4.) इति Sy.

४. वर्षणी वृत्रम् M.

५. धारणं P. चर्षणीनां मनुष्याणामभिमतफलप्रदानेन धारकं पोषकम् । यद्वा । आकृषन्त्यनेन सर्वमिति चर्षणि बलं तद्धारकम् Sy.

६. ०नमन्तं P.

७. उक्थैः शस्त्रैः शंसनीयम् Sy.

८. तमिममिन्द्रम् Sy.

९. अस्मदीयाः स्तुतिलक्षणा वाचः Sy.

महत्यः[1] । अभ्यस्तुवन्[2] । स्तुतिभिः[3] । वर्धमानम्[4] । बहुभिराहूतम्[5] । अमर्त्यम्[6] । स्तूयमानम् । अन्वहम्[7] ।

**शतक्रतुमर्णवं शाकिनं नरं गिरो म इन्द्रमुप यन्ति विश्वतः ।**
**वाजसनिं पूर्भिदं तूर्णिमप्तुरं धामसाचमभिषाचं स्वर्विदम् ॥ २ ॥**

शतक्रतुम् । बहुप्रज्ञम्[8] । उदकवन्तम्[9] । सहायम्[10] । नेतारम्[11] । स्तुतयः[12] । मम[13] । इन्द्रम्[14] । सर्वतः । उपगच्छन्ति[15] । वाजस्य[16] दातारम् । पुरां[17] भेत्तारम् । क्षिप्रकारिणम्[18] । कर्मसु त्वरमाणम्[19] । तेजांसि[20] भजमानम् । अभिसम्भक्तारं[21] शत्रूणाम् । सर्वज्ञम्[22] ।

---

१. प्रभूताः । बृहतीः—'वा छन्दसि' इति सवर्णदीर्घः Sy.

२. अभितः सर्वतः स्तुवन्तु । अनूषत—'णू स्तवने'। अस्माल्लुङि सिच्। धातोः कुटादित्वात् सिचो ङित्त्वेन गुणाभावः Sy.

३. शोभनस्तुतिवाक्यैः। सुवृक्तिभिः—'नञ्सुभ्याम्—'इत्युत्तरपदान्तोदात्तत्वम् । यद्वा सुवृक्तय इति स्तुतिकरणभूता ऋचो वृक्तिशब्देनोच्यन्ते । 'क्तिच् क्तौ च—' इति क्तिच्। कृत्स्वरेणान्तोदात्तः Sy.

४. बलधनादिसम्पत्त्या प्रतिक्षणं वर्धमानम् Sy.

५. स्तोतृभिर्बहुवारमाहूतम् Sy.

६. मरणधर्मरहितम् Sy.

७. ०हम P. प्रत्यहम् । दिवेदिवे—'नित्यवीप्सयोः' इति द्विर्वचनम् । परस्याम्रेडितत्वादनुदात्तत्वे पूर्वपदस्वरः Sy.

८. प्रयज्ञम् P. शतक्रतुम्—शतं क्रतवो यज्ञा यस्य तम् Sy.

९. पर्जन्यात्मना उदकवन्तम् । अर्णवम्—अर्णोऽस्यास्तीति मत्वर्थे 'अर्णसः सलोपश्च' इति वप्रत्ययः सकारलोपश्च । प्रत्ययस्वरः Sy.

१०. शाकिनम्—शक्नोत्येभिरिन्द्र इति शाकाः सहायभूता मरुतः। तद्वन्तम् Sy.

११. सर्वस्य जगतो नेतारम्। नरम्—'नयतेर्डिच्च' इति ऋप्रत्ययः। अमः सुप्त्वादनुदात्तत्वे प्रत्ययस्वरः Sy.

१२. स्तुतिलक्षणा वाचः Sy.

१३. मदीयाः Sy.

१४. तमिममिन्द्रम् Sy.

१५. उपगच्छन्तु। यन्ति—'इण् गतौ' इत्यस्य लटि 'इणो यण्' इति यण्। निघातः Sy.

१६. वाजस्यान्नस्य दातारम् । वाजसनिम्—'षणु दाने' 'खनिकष्यज्यसिवसि—' इत्यादिना इप्रत्ययः । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् Sy.

१७. पुर वां M. शत्रुपुरां भेत्तारम् Sy.

१८. युद्धं प्रति शीघ्रं गन्तारम् । तूर्णिम्—'ञित्वरा सम्भ्रमे'। 'वहिश्रि—' इत्यादिना निप्रत्ययः। 'ज्वरत्वर–' इत्यादिना ऊठ्। 'नित्' इत्यतिदेशादाद्युदात्तः Sy.

१९. कर० P. मेघभेदनद्वारा अपां प्रेरकम्। अप्तुरम्—'तुर त्वरणे' । क्विप् । कृदुत्तरपदस्वरः Sy.

२०. तेजो भजमानम् । यद्वा धनं धाम । तदर्थिभिः सह योजयितारम् Sy.

२१. शत्रूणामभिभवितारम् । अभिषाचम्—'षच समवाये'। ण्यन्तात् क्विप् Sy.

२२. स्वर्गस्य लम्भकम् Sy.

**आकरे वसोर्जरिता पनस्यतेऽनेहसः स्तुभ इन्द्रो दुवस्यति ।**
**विवस्वतः सदन आ हि पिप्रिये सत्रासाहमभिमातिहनं स्तुहि ॥ ३ ॥**

आकरे । अभिमुखीकरणार्थम्[१] । धनस्य[२] । इन्द्रम्[३], स्तोता[४] । स्तौति[५] । निरवद्याः[६] । स्तुतीः[७] । इन्द्रः । पूरयति[८] । यजमानस्य[९] । गृहे । हि[१०] । इन्द्रः, आप्रीतो[११] भवति । बहूनां सोढारम्[१२] । अभिमातीनां[१३] हन्तारमिन्द्रम् । स्तुहि[१४] ।

**नृणामु त्वा नृतमं गीर्भिरुक्थैरभि प्र वीरमर्चता सबाधः ।**
**सं सहसे पुरुमायो जिहीते नमो अस्य प्रदिव एक ईशे ॥ ४ ॥**

नृणामु त्वा[१५] । उत्तमं[१६] नेतारम् । स्तोत्रशस्त्रैः[१७] । त्वाम् । एव । बाधसहिता[१८] मनुष्याः ।

---

१. ०नार्थं P. आकीर्यंते युद्धार्थं धनमत्रेत्याकरो युद्धम् । तस्मिन् । आकरे—'कॄ विक्षेपे' । अधिकरणे 'ॠदोरप्' इत्यप् । थाथादिस्वरेणान्तोदात्तः Sy.

२. धनस्य स्थानभूते युद्धे । यद्वा वसोः । वसत्याभिमुख्येन तिष्ठतीति वसुः शत्रुः तस्य जरयितेति योजनीयम् Sy.

३. इ P.

४. शत्रूणां जरयिता । जरिता—'जॄष् वयोहानौ' इत्यस्यान्तर्भावितण्यर्थस्य तृचि रूपम् । चित्त्वादन्तोदात्तः Sy.

५. सर्वैः स्तूयते । पनस्यते—पनस्यतिः स्तुतिकर्मा (Ngh. 3. 14.) तस्य कर्मणि लटि रूपम् । निघातः Sy.

६. अपापाः । अनेहसः—हन्तेर्नञि उपपदे 'नञि हन एह च' (Uṇādi. 4. 663.) इत्यसिप्रत्यय एह इत्ययं चादेशो धातोः । 'नञ्सुभ्याम्—'इति स्वरेणान्तोदात्तः Sy. ७. स्तुभः । 'स्तोभतिरर्चतिकर्मा' । (Ngh. 3. 14.) क्विप् Sy.

८. पूजय० P. परिचरति । तासां फलं प्रयच्छन् पूजयतीत्यर्थः । दुवस्यति—दुवः परिचरणमात्मन इच्छतीत्यर्थे क्यच् । निघातः Sy.

९. किञ्च स इन्द्रो विशेषेणाग्निहोत्रार्थं वसतो हविष्मतो वा यजमानस्य Sy.

१०. खलु Sy. ११. सोमपानादिनात्यन्तं प्रीतो भवति । पिप्रिये—'प्रीङ् तर्पणे' । लिटि रूपम् । हियोगादनिघातः Sy.

१२. शत्रूणामेव हन्तारम् । यद्वा मरुद्भिः सह शत्रूणामभिभवितारम् Sy.

१३. आभि० M. अत एव शत्रूणां हन्तारमिन्द्रम् Sy.

१४. स्तुहि हे विश्वामित्रेति Sy.

१५. हे इन्द्र ! Sy. १६. मनुष्याणामतिशयेन स्वस्वकर्मणि नेतारम् Sy.

१७. VM. seems to explain गीर्भिः and उक्थैः together as स्तोत्रशस्त्रैः ॥ स्तुतिसाधनभूतैर्वाक्यैः शस्त्रैश्च Sy. १८. ०हितां M. बाधासहिताः is suggested for बाधसहिताः ॥ रक्षोघ्नमन्त्रोच्चारणेन तद्विषयबाधया सह वर्तन्त इति सबाध ऋत्विजः । सबाधः—'बाधृ विलोडने' । क्विप् । 'वोपसर्जनस्य' इति सहस्य सत्वम् । कुदुत्तरपदस्वरः Sy.

आर्चन्[1] । सोऽयमिन्द्रः, बहुप्रज्ञः[2] । बलाय । स्तोतृभिः[3] सङ्गच्छते[4] । तस्यास्य[5] । नमोऽस्तु[6][7] । सोऽयं[8] पुराणः[9] । एकः[10] एव । सर्वस्येश्वरो[11] भवति[12] ।

पूर्वीरस्य निष्षिधो मर्त्येषु पुरू वसूनि पृथिवी बिभर्ति ।
इन्द्राय द्याव ओषधीरुतापो रयिं रक्षन्ति जीरयो वनानि ॥ ५ ॥

पूर्वीः । पुरस्सराणि[13] । अस्य[14] । दमनानि[15] भवन्ति । शत्रुमनुष्येषु[16] । बहूनि[17] च । धनान्यन्नोत्पादितानि[18] । पृथिवी । बिभर्ति[19] । इन्द्रप्रीत्यर्थम्[20] । द्युलोकाः । आपः[21] । ओषधयः । च[22] । मनुष्याणामुपकारकं[23] धनम् । रक्षन्ति । क्षिप्रगमना[24] मरुतः । अरण्यानि[25] च ।

---

१. अर्चन्ति । अर्चत—अर्चतेर्लटि झेस्तादेशः । 'तिङां तिङो भवन्ति' इति वचनात् Sy.

२. वृत्रहननादिबहुकर्मा । पुरुमायः—'अन्तोदात्तप्रकरणे त्रिचक्रादीनामुपसङ्ख्यानम्' इत्यन्तोदात्तत्वम् Sy.

३. स्तोकभिः M.

४. सङ्गते P. गमनोद्यमं करोति Sy.

५. हविर्लक्षणस्य Sy.

६. नमसः अन्नस्य Sy.

७. M. adds ते after अस्तु ।

८. सोमम् M.

९. पुरातनः Sy.

१०. असहायः स इन्द्रः Sy.

११. ईष्टे । यद्वास्य सर्वस्य जगत ईष्टे । तस्मा इन्द्राय नमः । ईशे—'ईश ऐश्वर्ये' इत्यस्य लटि 'लोपस्त आत्मनेपदेषु' ति तलोपः । निघातः Sy.

१२. VM. ignores नृणाम् । अभि । प्र and वीरम् ॥ मनुष्याणाम् । नृणाम्—'नामन्यतरस्याम्' इति विभक्तेरुदात्तत्वम् ॥ अभि आभिमुख्येन । प्र प्रकर्षेण वीरं सामर्थ्योपेतम् Sy.

१३. पूर्वीः हितोपदेशादिभिः प्रभूतानि नानाप्रकाराणि भवन्ति Sy.

१४. अ M. इन्द्रस्य Sy.

१५. अनुशासनानि । इन्द्रस्य शासितृत्वे मन्त्रः—'उक्थमिन्द्राय शंस्यं वर्धनं पुरुनिष्षिधे' (RV. 1. 10. 5.) इति । निष्षिधः—'षिधु गत्याम्' । क्विप् । संहितायां निसः सकारेण इणो व्यवधानं छान्दसत्वादनादृत्य 'उपसर्गात्सुनोति—' इत्यादिना षत्वम् । निसः सकारस्य 'ष्टुना ष्टुः' इति षत्वम् Sy.

१६. ०ष्ये स्म M. मनुष्येषु Sy.

१७. पुरूणि बहूनि Sy.

१८. ०न्यनोत्पा० P.

१९. अन्तर्धारयति Sy.

२०. तथा शासकाय तस्मै इन्द्राय Sy.

२१. जलानि Sy.

२२. अपिच Sy.

२३. ०कारण P. एते सर्वे इन्द्रस्याज्ञया तदुपभोगयोग्यम् Sy.

२४. प्रग० P. जीर्यन्त इति जीरयो मनुष्याः Sy.

२५. वृक्षाश्च Sy.

तुभ्यं ब्रह्माणि गिर इन्द्र तुभ्यं सत्रा दधिरे हरिवो जुषस्व ।
बोध्या३पिरवसो नूतनस्य सखे वसो जरितृभ्यो वयो धाः ॥ ६ ॥

तुभ्यम् । हरिवः ! स्तोतारस्तुभ्यमेव । स्तोत्रशस्त्राणि । धारयन्ति । पृथूनि तानि । त्वं सेवस्व । बुध्यस्व । बन्धुः सन् । रक्षणस्य । नवतरस्य । सखे ! वासयितः ! स्तोतृभ्यः । अन्नम् । धेहि ।

इन्द्र मरुत्व इह पाहि सोमं यथा शार्याते अपिबः सुतस्य ।
तव प्रणीती तव शूर शर्मन्ना विवासन्ति कवयः सुयज्ञाः ॥ ७ ॥

इन्द्र मरुत्वः । इन्द्र ! मरुत्वः ! अस्मिन् यज्ञे । पिब । सोमम् । यथा । शर्यातस्यानिन्द्र

१. हे अश्ववन् ! Sy.
२. त्वदर्थम् । तुभ्यम्—'ङयि च' इत्याद्युदात्तत्वम् Sy.
३. VM. explains ब्रह्माणि and गिरः together as स्तोत्रशस्त्राणि। स्तोत्राणि तथा शस्त्राणि च Sy.
४. ऋत्विजो धारयन्ति Sy.
५. सत्रा सत्यमेव Sy.
६. जुषस्व—'जुषी प्रीतिसेवनयोः' इत्यस्य लोटि रूपम् । वाक्यभेदादनिघातः Sy.
७. त्वदर्थं दीयमानं जानीहि । बोधि—'बुध अवगमने' इत्यस्य लोटि 'वा छन्दसि' इति हेर्विकल्पेन ङित्त्वादत्र पित्त्वाद् गुणः । 'हुझल्भ्यो हेर्धिः' इति ध्यादेशः । ङित्त्वादन्तोदात्तः Sy.
८. आपिः व्याप्तस्त्वम् Sy.
९. अन्नलक्षणं हविः Sy.
१०. Omitted in P.
नवतरम् Sy.
११. सखिभूत ! हे इन्द्र ! Sy.
१२. ०यिता P. हे सर्वस्य वासयितः ! Sy.
१३. स्तोतृभ्योऽस्मभ्यम् Sy.
१४. VM. ignores इन्द्र and explains तुभ्यम् once only.
१५. हे मरुद्भिस्तद्वन् ! Sy. मरुतो देवा विद्यन्ते यस्य स मरुत्वांस्तस्य सम्बोधनं हे मरुत्वः ! . . . मरुद्भिः सहित ! हे इन्द्र ! Mah. हे मरुत्वन् ! मरुद्भिः सहित ! U.
हे इन्द्र ! मरुत्वः BB.
१६. अस्मदीये यज्ञ आगत्य Sy. अस्मदीये यज्ञे Mah., U.
अस्मिन् कर्मणि BB.
१७. यथा त्वम् Sy.
येन प्रकारेण U.
१८. शार्या० is suggested for शर्या०॥ शर्यातिः पुत्रे तस्मिन् राजनि यज्ञं कुर्वाणे । शार्याते—शर्यातिरर्यामित्यर्थे 'तस्येदम्' इत्यण् प्रत्ययः Sy. शर्यातिर्नाम कश्चिद्राजा, तस्य सम्बन्धिनि यज्ञे Mah. शर्यातो मानवः । तस्यापत्यं शार्यातः । 'शर्यातो ह वाऽइदं मानवो ग्रामेण चचार' (ŚB. 4. 1. 5. 2.) इति श्रुतिः . . . शार्याते राजनि U. शर्यातिर्नाम राजा, तस्येदं शार्यातम् । यथा शर्यातिर्यागे BB.

सोममाहरतो यज्ञे । बलात्[1], पुरा सुतं[2] सोमम् । अपिबः[3] । हे शूर[4] ! तव[5] । प्रणयनेन[6] ।
तव । सुखे त्वद्दत्ते सुखे[7] । वर्तन्ते[8] । कवयः[9] । शोभनयज्ञाः[10][11] ।

---

१. बळा M.

२. अभिषुतम् Sy. अभिषुतस्य सोमस्यांशम् Mah. अभिषुतस्य सोमस्य स्वमंशम् U.

३. अपिभः M. अत्रापि पिबेत्यर्थः । इन्द्रः शार्यातस्य यज्ञे सोमरसानपिबदित्येषोऽर्थः कौषीतके स्पष्टमुक्तः । तथा मन्त्रवर्णश्च—'आं स्मा रथं वृषपाणेषु तिष्ठसि शार्यातस्य प्रभृता येषु मन्दसे' इति । अपिबः—यथायोगादनिघातः । अडागमस्वरः Sy. पीतवानसि । तद्वदिह पिब Mah. पीतवानसि U.

४. इन्द्र ! Sy. हे शूर! वीर ! Mah. कस्मात्पुनरेवमभ्यर्थ्यत इत्याह—हे शूर ! इन्द्र ! BB.

५. तव सम्बन्धिनि Sy.

६. तव हविषां प्रणयनेन प्रापणेन । प्रणीती—नयतेर्भावे क्तिन् । 'तादौ च निति कृति—'इति गतेः प्रकृतिस्वरत्वम्, 'सुपां सुलुक्—'इति तृतीयायाः सवर्णदीर्घः । 'उपसर्गादसमासेऽपि' इति णत्वम् Sy. प्रणयनेनानुज्ञया Mah. प्रणीत्या प्रणयनेन U. त्वद्विषयेण प्रणयनेन BB.

७. शर्मणि निर्बाधस्थाने स्थिताः Sy. सुखनिमित्ते शर्मणि यज्ञगृहे वा Mah. शर्मणि शरणे यज्ञगृहे U. तवैव शर्मन् शर्मणि शरणभावे । निमित्तसप्तमी । भावे सुखे वा निमित्ते सप्तमी । त्वमेव शरणं मे यथा भवसि तदर्थम् BB.

८. विवासतिः परिचरणकर्मा (Ngh. 3. 5.) । त्वां परिचरन्ति । विवासतिः परिचर्यार्थः Mah. विवासतिः परिचर्यायाम् । आभिमुख्येनावस्थितास्त्वां परिचरन्ति U. परिचरन्ति । तस्मात्वामेव प्रार्थयामहे BB.

९. कव M. मेधाविनो यजमानाः Sy. क्रान्तदर्शनाः Mah., U. मेधाविनः BB.

१०. यज्ञोः M. ०यज्ञः P. सुष्ठुकृतयज्ञाः Sy. कल्याणयज्ञाः Mah., U. शोभनयज्ञाः BB.

११. VM. ignores आ ॥ Sy. explains आ with विवासन्ति as आ समन्तात् त्वामेव परिचरन्ति । अयातो गृह्णात्येव । इन्द्र मरुत्व इह पाहि सोमं यथा शार्यातेऽअपिबः सुतस्य । तव प्रणीती तव शूर शर्मन्नाविवासन्ति कवयः सुयज्ञाः । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वतऽएष ते योनिरिन्द्राय त्वा मरुत्वते । SB. 4. 3. 3.13. p.372. अत्राधिकम् 'उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वंत एष ते योनिरिन्द्राय त्वा मरुत्वंते' ।

This stanza=YV. 7. 35.= TS. 1. 4. 18. 1.

स वावशान इह पाहि सोमं मरुद्भिरिन्द्र सखिभिः सुतं नः ।
जातं यत्त्वा परि देवा अभूषन्महे भराय पुरुहूत विश्वे ॥ ८ ॥

स वावशानः । स[1]: । कामयमान[2]: । अस्मिन् यज्ञे । पिब । सोमम् । मरुद्भिः सह । इन्द्र ! समानख्यानैः । सुतम्[3] । अस्माकम्[4] । जातम्[5] । यस्मात्[6] । त्वाम् । परितः[7] । अभूवन्[8] । विश्वे[9] । देवा मरुतः । महते । सङ्ग्रामाय[10], तस्मात् तैः सह पिबेति[11] ।[12]

अप्तूर्ये मरुत आपिरेषोऽमन्दन्निन्द्रमनु दातिवाराः ।
तेभिः साकं पिबतु वृत्रखादः सुतं सोमं दाशुषः स्वे सधस्थे ॥ ९ ॥

अप्तूर्ये[13] । हे मरुतः ! उदकार्थं[14] वृत्रेण सह युद्धे[15] युष्माकम् । अयमिन्द्रः । सहायो[16] भवति ।

---

१. तावृशस्त्वम् Sy.

२. ०मयानः P. सोमं कामयमानः । वावशानः—वशेर्यङ्लुकि चानशि रूपम् । चित्त्वादन्तोदात्तः Sy.

३. अभिषुतम् Sy.

४. अस्मत्सम्बन्धिनि Sy.

५. सोमपानेन प्रबलं सम्पन्नम् Sy. जातमात्रमेव SKN. जातमात्रम् Dur.

६. यस्मा P. यम् Sy. व्यत्ययेनेवं नपुंसकम् । यम् SKN.

७. सर्वतः Sy. परीत्ययमभूषन्नित्येतेन सम्बध्यते SKN.

८. भव P. अलमकुर्वन् । अभूषन्—'भूष अलङ्कारे' । भ्वादिः । लङि रूपम् । यद्योगादनिघातः Sy. परिगृहीतवन्तः SKN., Dur.

९. सर्वे Sy. कतमे देवाः ? विश्वे सर्वे SKN. विश्वे देवाः Dur.

१०. ह्रियन्ते योधानामायूंष्यत्रेति भरः सङ्ग्रामः । तस्मै । भराय—'हृञ् हरणे' अधिकरणे घः । 'हृग्रहोर्भश्छन्दसि' इति हकारस्य भकारः । वृषादित्वादाद्युदात्तः Sy. भराय सङ्ग्रामाय SKN. भरणाय । महान्तमसुरैः सह सङ्ग्रामं करिष्यतीत्यनेनाभिप्रायेण Dur.

११. प्रियेति M.

१२. VM. ignores पुरुहूत ॥ हे पुरुभिः बहुभिराहूतेन्द्र ! Sy. स्तोतृभिः पुरुहूत ! N. 5. 15.; SKN. II. 351.

१३. अप्पूर्ये M. and P.

१४. ०कार्ये P. अपां प्रेरणे । अप्तूर्ये—'तूरी त्वराहिंसयोः' इत्यस्मात् 'अघ्न्यादयश्च' इति यत्प्रत्ययः । 'यतोऽनावः' इत्याद्युदात्तः । समासे कृदुत्तरपदस्वरः Sy.

१५. ०द्धेषु M.

१६. युष्माकं सखा सन् वर्तते Sy.

शेष[1] इन्द्रविषयः परोक्षः[2], इन्द्रम् । वृत्रतूर्येऽन्वमन्दन्[3] । यजमानानां दत्तवरणीयधना[4] मरुतः । तैः[5] । सह[6] । पिबतु[7] । वृत्रहन्ता[8] । सुतम्[9] । सोमम्[10] । यजमानस्य[11] । स्वे[12] । गृहे[13] ।

**इदं ह्यन्वोजसा सुतं राधानां पते । पिबा त्वस्य गिर्वणः ॥ १० ॥**

इदं हि । इदम् । हि सोमलक्षणमन्नम् । धनानाम् । पते[14] ! त्वां लक्षीकृत्य[15] । सुतम्[16] । तथा सति पिब । एतत्[17] । हे गीर्भिर्वननीय[18] ![19]

**यस्ते अनु स्वधामसत्सुते नि यच्छ तन्वम् । स त्वा ममत्तु सोम्यम् ॥ ११ ॥**

यस्ते अनु[20] । यः[21] । तव[22] । बलम्[23] । अनु भवति[24] । तस्मिन् सुते सोमे । नियच्छ[25] । शरीरं[26] पावनाय । सः[21] । त्वा[27] । ममत्तु[28] । सोमार्हम्[29] ।

---

१. शेषम् P.
२. ०रोक्षम् P.
३. अहृष्यन् । अमन्दन्—'मदि स्तुत्यादिषु' । परस्मैपदी । पादादित्वादनिघातः Sy.
४. धर्त्तावर० P. वारो वरणीयं बलं धनं वा । दत्तबला दत्तधना वा ते Sy.
५. मरुद्भिः Sy.
६. साकम् Sy.
७. ०बतु P.
८. वृत्रस्य हिंसकः स इन्द्रः । वृत्रखादः—'खादृ भक्षणे' । कर्मण्यण् Sy.
९. अभिषुतम् Sy.
१०. सोम M.
११. हविर्दत्तवतो यजमानस्य । दाशुषः—'दाशृ दाने' इत्यस्य क्वसौ 'दाश्वान्साह्वान्मीढ्वांश्च' इति द्विर्वचनाद्यभावः । वसोः सम्प्रसारणम् । प्रत्ययस्वरः Sy.
१२. स्व P. स्वकीये Sy.
१३. सह तिष्ठन्त्यस्मिन्निति सधस्थं गृहम् । तस्मिन् । सधस्थे—'सध मादस्थयोश्छन्दसि' इति सहस्य सधादेशः Sy.
१४. स्वामिन् ! Sy.
१५. अनेनानुक्रमेण । उद्देशानुक्रमेणेत्यर्थः Sy.
१६. सुतत् P. ग्रावभिः अभिषुतम् Sy.
१७. इमं सोमम् Sy.
१८. गीर्भिः स्तुतिभिर्वननीय ! हे इन्द्र ! Sy.
१९. VM. ignores ओजसा and तु ॥ ओजसा बलेन । तु क्षिप्रम् Sy.
२०. हे इन्द्र ! Sy.
२१. सोमः Sy.
२२. त्वदर्थम् Sy.
२३. म् P. अन्नम् Sy.
२४. अनुसृत्य ग्रावभिरभिषुतः । असत्—अस्तेर्लेटयडागमे रूपम् । यद्वृत्तयोगादनिघातः । आगमस्यानुदात्तत्वे धातुस्वरः Sy.
२५. प्रेरय Sy.
२६. स्वकीयं शरीरम् Sy.
२७. त्वाम् Sy.
२८. ममर्तु M. मादयतु Sy.
२९. ०माहम् M.

प्र ते अश्नोतु कुक्ष्योः प्रेन्द्र ब्रह्मणा शिरः । प्र बाहू शूर राधसे ॥ १२ ॥

प्र ते । इन्द्र ! सोमः[1] । तव । कुक्ष्योः[2] । प्रकर्षेण व्याप्नोतु । शिरश्च[3] । हविषा[4] पुरोडाशादिना[5] सह । बाहू[6] च[7] । हे शूर[8] ! अस्माकं धनाय । प्राश्नोत्विति[9] ।[10]

III.52.

धानावन्तं करम्भिणमपूपवन्तमुक्थिनम् । इन्द्र प्रातर्जुषस्व नः ॥ १ ॥

धानावन्तम्[11][12] । धानादिभिर्युक्तम्[13] । शस्त्रवन्तं[14] सोमम्[15] । प्रातःसवने[16] । सेवस्वेति[17] ।

---

१. स सोमः Sy.

२. कुक्षौ P. कुक्षेरुभयोः पार्श्वयोरुभौ पार्श्वौ । कुक्ष्योः—'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् Sy.

३. शरीरम् । अवयवादिनावयवी लक्ष्यते । त्वच्छरीरम् Sy.

४. स्तोत्रेण सहितः स सोमः Sy.

५. ०शादीनां M.

६. बाश्र M. तव बाहू Sy.

७. व M. अपि Sy.

८. इन्द्र ! Sy.

९. प्रश्नो० P. अश्नोतु—'अशू व्याप्तौ' इत्यस्य लोटि व्यत्ययेन परस्मैपदम् । निघातः Sy.

१०. VM. explains प्र in both places as च प्राश्नोतु ।

११. 'धानावन्तम्' इत्यष्टर्चं चतुर्दशं सूक्तं वैश्वामित्रमैन्द्रम् । अत्रेयमनुक्रमणिका—'धानावन्तमष्टौ पूर्वार्धं गायत्रं षष्ठी जगती' (KSA. 19. 52. p. 16.) इति । आदितश्चतस्रो गायत्र्यः 'तृतीये धानाः' इति षष्ठी जगती । शिष्टास्त्रिष्टुभः । सूक्तविनियोगो लिङ्गादवगन्तव्यः । प्रातःसवनीयपुरोडाशस्यानुवाक्या 'धानावन्तम्' इत्याद्या । सूत्रितञ्च—'धानावन्तं करम्भिणमिति प्रातःसवनेऽनुवाक्या' (ASS. 5. 4.) इति Sy.

१२. धना० P.

१३. By आदि VM. includes करम्भ and अपूप ॥ धाना भृष्टयवाः, तद्वन्तम् । करम्भो दधिमिश्राः सक्तवः, तद्वन्तम् । अपूपवन्तं सवनीयपुरोडाशोपेतम् Sy. धाना विद्यन्ते यत्र तम् । करम्भिणं करम्भोऽस्यास्तीति । अपूपवन्तमपूपाः सन्ति यत्र Mah. धानाभिः संयुक्तम् । करम्भिणं करम्भेण संयुक्तम् । अपूपवन्तमपूपेन संयुक्तम् U.

१४. शस्त्रिणम् Sy. उक्थं शस्त्रं यत्र, स्तुतियुक्तम् Mah. वचनवन्तं स्तुतिमन्तं भागम् U.

१५. सोमः M. इमं सोमम् Sy. पुरोडाशम् Mah.

१६. प्रातः—स्वरादिषु अन्तोदात्तत्वेन पठितत्वादन्तोदात्तः Sy. प्रातःकाले Mah.

१७. VM. ignores इन्द्र and नः ॥ हे इन्द्र ! Sy., Mah., U. नः अस्मदीयम् Sy. अस्माकम् Mah.

**पु॒रो॒ळाशं॑ पच॒त्यं॑ जु॒षस्वे॑न्द्रा गु॑रस्व च । तुभ्यं॑ ह॒व्यानि॑ सिस्रते ॥ २ ॥**

पुरोळाशम् । पुरोडाशम्[1] । अन्यच्च[2] पचनीयम्[3] । सेवस्व[4] । इन्द्र ! उद्युक्तश्च[5] भव, आगमनाय[5] । तुभ्यम्[6] । हवींषि[7] । सरन्ति,[8] आहवनीयं[9] प्रति ।

**पु॒रो॒ळाशं॑ च नो॒ घसो॑ जो॒षया॑से॒ गिर॑श्च नः । व॒धू॒युरि॑व॒ योष॑णाम् ॥ ३ ॥**

पुरोळाशं च नः ।[10] पुरोडाशम् । च । अस्माकम्[11] । भक्षय[12] । सेवस्व[13] । स्तुतीः[14] । अस्माकम्[15] । वधूयुर्वरो[16] भवति । स यथा[17] । कन्यां[18] स्त्रियं सेवते ।[19]

---

१. पुरो दाशन्त एनमिति पुरोडाशो हविः Sy.

२. अन्यं च P.

३. पच० P. पचने साधुम् । पचत्यम्—पचतशब्दात् 'तत्र साधुः' इति यत्प्रत्ययान्तस्य पदस्य द्व्यच्त्वाभावादत्र 'यतोऽनावः' इत्यस्य प्राप्तिर्नास्ति । तित्स्वरितः Sy.

४. जुषस्व Sy.

५. उद्युक्तो भव seems to be the explanation of गुरस्व and आगमनाय of आ ॥ पुरोडाशभक्षणार्थमुद्यमं कुरु । गुरस्व—'गुरी उद्यमने' शविकरणी । निघातः Sy.

६. त्वदर्थम् Sy.

७. हवनयोग्यानि पुरोडाशादीनि हवींषि Sy.

८. रस्वन्ति P. आहवनीयं गच्छन्ति । तानि सेवस्वेति भावः । सिस्रते—'सृ गतौ' । छन्दसि जुहोत्यादिः । व्यत्ययेनात्मनेपदम् Sy.

९. ०नीय P.

१०. हे इन्द्र ! Sy.

११. अस्मत्सम्बन्धिनम् Sy.

१२. घसः—'घस्लृ अदने' इत्यस्य लेटघडागमे रूपम् । 'चवायोगे प्रथमा' इति न निघातः Sy.

१३. जोषयासे—'जुषी प्रीतिसेवनयोः' इत्यस्य ण्यन्तस्य लेटघडागमे रूपम् । आगमस्यानुदात्तत्वे णिच्स्वरः । पादादित्वादनिघातः Sy.

१४. स्तुतिः P.
स्तुतिलक्षणा गिरश्च Sy.

१५. अस्मदीयाः Sy.

१६. ०धूर्यु व० M. स्त्रीकामः । वधूयुः—'सुप आत्मनः क्यच्' । 'क्याच्छन्दसि' इत्युप्रत्ययः । प्रत्ययस्वरः Sy.

१७. तत्र दृष्टान्तः यथा Sy.

१८. भजनीयां युवतिं सेवते तद्वत् । योषणाम्—'युष भजने' इति सौत्रो धातुः । 'कृत्यल्युटो बहुलम्' इति ल्युट् । लित्स्वरः Sy.

१९. VM. ignores second च ।

पुरोळाशं सनश्रुत प्रातःसावे जुषस्व नः । इन्द्र क्रतुर्हि ते बृहन् ॥ ४ ॥

पुरोळाशम् । पुरोडाशम्[1] । हे पुराणश्रुत[2] ! प्रातःसवने[3] । सेवस्व[4] । अस्माकम्[5] । इन्द्र ! प्रज्ञा[6] । हि । तव । महती[7] ।

माध्यंदिनस्य सवनस्य धानाः पुरोळाशमिन्द्र कृष्वेह चारुम् ।
प्र यत्स्तोता जरिता तूर्ण्यर्थो वृषायमाण उप गीर्भिरीट्टे ॥ ५ ॥

[8]माध्यन्दिनस्य[9] । माध्यन्दिनस्य[10] । पुरोडाशस्य[11] । धानानां[12] च । चारुत्वकारणं[13] भक्षणेन[14] । यदा । स्तोता । शंसिता[15] च होता । प्रेरितहविष्कः[16] । वृषेवाऽऽचरन्[17] ।

---

१. हे पु० P.

२. हे पुराणतया प्रसिद्ध ! Sy.

३. सूयतेऽत्र सोम इति सावः । तस्मिन् प्रातःसवने । प्रातःसावे—'षुञ् अभिषवे' । कर्मणि घञ् । प्रादिसमासः । थाथादिस्वरेणान्तोदात्तः Sy.

४. जुषस्व Sy.

५. अस्मत्सम्बन्धिनमिमम् Sy.

६. कर्म Sy.

७. महत् Sy.

८. माध्यन्दिनसवने सवनीयपुरोडाशस्य 'माध्यन्दिनस्य सवनस्य धानाः' इत्यनुवाक्या। सूत्रितञ्च—'माध्यन्दिनस्य सवनस्य धाना इति माध्यन्दिने' (ASS. 5. 4.) इति Sy.

९. Both M. and P. omit the *pratika*.

१०. मध्यन्दिने भवस्य । मध्यन्दिनशब्दात्तत्र भवार्थे उत्सादित्वादञ् । ञित्वादाद्युदात्तः Sy.

११. पुराडा० M. पुरोडाशञ्च Sy.

१२. धनानां M. and P. भृष्टयवान् Sy.

१३. कमनीयम् । चारुम्—'चर गतिभक्षणयोः' । 'दृसनिजनिचरिचटिरहिभ्यो ञुण्' इति ञुण् । णित्वादुपधावृद्धिः । ञित्वादाद्युदात्तः Sy.

१४. भव should be taken as understood, after भक्षणेन ।

१५. भवत्परिचरणं कुर्वाणः Sy.

१६. त्वां स्तोतुमितस्ततस्त्वरितगमनः । तूर्ण्यर्थः । तूर्णिः—'ञित्वरा सम्भ्रमे' इत्यस्मात् 'वहिश्रि—'इत्यादिना निप्रत्ययो निच्च । अर्थः—'ऋ गतौ' 'उषिकुषिगार्तिभ्यस्थन्' इति थन् । बहुव्रीहौ पर्वपदस्वरः Sy.

१७. वृषायमाणः—वृषेवाचरतीत्यर्थे 'कर्तुः क्यङ् सलोपश्च' इति क्यङ् । 'अकृत्सार्वधातुकयोर्दीर्घः' । ङित्वात् 'अनुदात्तङितः—'इत्यात्मनेपदम् । लट् । शानच् । तस्य लसार्वधातुकस्वरे धातुस्वरः Sy.

गीर्भिः[1] । प्रकर्षेण । उपेत्य[2] । त्वां स्तौतीति[3] ।[4]

**तृतीये धानाः सवने पुरुष्टुत पुरोळाशमाहुतं मामहस्व नः ।**
**ऋभुमन्तं वाजवन्तं त्वा कवे प्रयस्वन्त उप शिक्षेम धीतिभिः ॥ ६ ॥**

तृतीये[5] । हे पुरुष्टुत[6] ! तृतीयसवने । धानाः[7] । पुरोडाशं च । आहुतम्[8] । श्रद्धत्स्व[9] । अस्माकम्[10] । ऋभुः[11], विभ्वा, वाज इति त्रय ऋभवः, [ ऋभुभिर्युक्तम्[12] ] । वाजेन[13] च युक्तम् । त्वा[14] । कवे[15] ! अन्नवन्तो[16] वयम् । कर्मभिः[17] । विधेयं[18] कुर्मः ।[19]

---

१. M. omits words between शंसिता and गीर्भिः ॥ स्तुतिलक्षणाभिर्वाग्भिः Sy.

२. समीपे Sy.

३. स्तौति तदा पुरोडाशादिहवींषि भक्षयेति भावः । ईट्टे—'ईड स्तुतौ' इत्यस्य लटि रूपम् । यद्योगादनिघातः Sy.

४. VM. ignores सवनस्य । इन्द्र and इह ॥ सवनस्य सम्बन्धिनीः । हे इन्द्र ! इह कर्मणि आगत्य Sy.

५. तृतीयसवने सवनीयपुरोडाशस्य 'तृतीये धानाः' इत्यनुवाक्या । सूत्रितञ्च—'तृतीये धानाः सवने पुरुष्टुतेति तृतीयसवने' (ASS. 5. 4.) इति Sy.

६. हे पुरुभिर्बहुभिः स्तोतृभिः स्तुत ! हे इन्द्र ! Sy.

७. हुतान् भृष्टयवान् Sy.

८. आहुतम्—जुहोतेः कर्मणि क्तः । 'गतिरनन्तरः' इति गतेः स्वरः Sy.

९. भक्षणेन महय सम्भावय । मामहस्व—'मह पूजायाम्' इत्यस्य यङ्लुगन्तस्य लोटि व्यत्ययेनात्मनेपदम् । शपो लुगभावश्छान्दसः Sy.

१०. अस्मदीयान् Sy.

११. ऋतु M.

१२. ऋभू P. M. omits ऋभवः । ऋभुभिर्युक्तम् ॥ The phrase ऋभुभिर्युक्तम् is suggested by the Editor. ऋभवो ये केचन देवास्तद्वन्तम् Sy.

१३. वाजो नाम सुधन्वनः पुत्रस्तद्वन्तम् Sy.

१४. त्वाम् Sy.

१५. कवे M. हे कवे ! इन्द्र ! Sy.

१६. सम्भृतहविष्काः Sy.

१७. स्तुतिभिः । धीतिभिः—'ह्रिष्ठवत्सरतिशत्यान्तानाम्' इत्यन्तोदात्तत्वम् Sy.

१८. P. omits words between वाजेन and कुर्मः ॥ परिचरेम । शिक्षेम—शिक्षतेराशीर्लिङि 'लिङ्याशिष्यङ्' इत्यङ्प्रत्ययः । निघातः Sy.

१९. VM. ignores उप ॥ उप समीपे Sy.

पूषण्वते ते चकृमा करम्भं हरिवते हर्यश्वाय धानाः ।
अपूपमद्धि सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान् ॥ ७ ॥

पूषण्वते[1] । पूष्णा[2] तद्वते । तुभ्यम् । कुर्मः । करम्भम्[4] । हरिभिस्तद्वते[5] । हर्यश्वाय[6] । धानानां[7] कुर्मः[8] । पुरोडाशम् । भक्षय । मरुद्भिः । सहितः[9] । सोमं च । पिब[10] ।

प्रति धाना भरत तूयमस्मै पुरोळाशं वीरतमाय नृणाम् ।
दिवेदिवे सदृशीरिन्द्र तुभ्यं वर्धन्तु त्वा सोमपेयाय धृष्णो ॥ ८ ॥

[[11]प्रति धानाः[12]] नृणां[13] मध्ये । अतिशयेन वीराय[14] ।[15] अन्वहम्[16] । एकरूपाः[17] स्तुतयः ।

---

१. हे इन्द्र ! Sy.

२. पूषा नाम कश्चिद्देवोऽदन्तकः । तद्वते । तथाच श्रुतिः—'पूषा प्रपिष्टभागोऽदन्तको हि' (TS. 2. 6. 8. 5.) इति पूषण्वते—पूषशब्दान्मतुप्, 'अनो नुट्' इति नुडागमः । 'रषाभ्यां—' इति णत्वम् Sy.

३. भक्षणार्थं कुर्मः Sy.

४. दधिमिश्रं सक्तुम् Sy.

५. हरिनामकावश्वौ तद्वते । हरिवते—'छन्दसीरः' इति मतुपो वत्वम् Sy.

६. हरितवर्णाश्वयुक्तायेन्द्राय तुभ्यं धानाः (चकृम) भक्षणार्थं कुर्मः । तथाच मन्त्रवर्णः—'प्रसेतामश्वा वि मुचेह शोणा दिवेदिवे सदृशीरद्धि धानाः' (RV. 3. 35. 3.) इति Sy.

७. वना० M. धानाः is suggested for धानानाम् ।

८. चकृम—करोतेश्छान्दसे वर्तमाने लिटि कादित्वादिडभावः । निघातः Sy.

९. सगणस्त्वम् Sy.

१०. P. omits whole of the commentary on this stanza. VM. ignores वृत्रहा । शूर and विद्वान् ॥ वृत्रहा—वृत्रस्य हन्ता । हे शूर ! असहाय ! हे इन्द्र ! विद्वान् सर्वं जानानस्त्वम् Sy.

११. यजमानोऽध्वर्य्वादीन् प्रति ब्रूते । हे अध्वर्य्वादयः ! Sy.

१२. The *pratika* has been supplied by the Editor.

१३. णां P.

१४. ०रायं P. वीरतमाय अस्मै इन्द्राय Sy.

१५. अथ प्रत्यक्षकृतः Sy. १६. वह मे न्व० P. प्रतिदिवसमस्माभिः क्रियन्ते Sy.

१७. एकविधाः । सदृशीः—'समानान्ययोश्च' इति कञ्प्रत्ययः । 'टिड्ढाणञ्—'इत्यादिना ङीप् ।'—दृग्दृशवतुषु' इति समासस्य सभावः Sy.

त्वदर्थं क्रियमाणाः। त्वाम्। वर्धयन्तु। हे वर्षणशील ! तव सोमपानाय।

III.53.

इन्द्रापर्वता बृहता रथेन वामीरिष आ वहतं सुवीराः।
वीतं हव्यान्यध्वरेषु देवा वर्धेथां गीर्भिरिळया मदन्ता ॥ १ ॥

इन्द्रापर्वता। हे इन्द्रापर्वतौ ! वननीयानि। अन्नानि। महता। रथेन। आवहतम्।

---

१. ०वर्त्थं P.

२. उत्साहेन प्रवृद्धं कुर्वन्तु Sy.

३. M. omits the text upto हे ॥

४. वर्ष० M. हे शत्रूणामभिभवनशील ! Sy.

५. ताः स्तुतयः सोमपानार्थम् Sy.

६. M. contains प्रति धाना भरत in *pratika* of the *mantra* in a different handwriting after ०पानाय॥ VM. ignores प्रति। धानाः। भरत। तूयम्। अस्मै। पुरोळाशम् and इन्द्र ॥ Sy. explains these words in the following manner:—अस्मै इन्द्राय। धानाः। तूयं क्षिप्रम्। प्रतिभरत सम्पादयत। पुरोडाशञ्च सम्पादयत। हे इन्द्र ॥

७. 'इन्द्रापर्वता' इति चतुर्विंशत्यृचं पञ्चदशं सूक्तम्। अत्रेयमनुक्रमणिका, 'इन्द्रापर्वता चतुर्विंशतिराद्यैन्द्रापार्वती पञ्चदश्याद्वि वाचे ससर्पर्यं चतस्रो रथाङ्गस्तुतयोऽन्त्या अभिशापास्ता वसिष्ठद्वेषिण्यो न वसिष्ठाः शृण्वन्ति। दशमी षोडश्यौ जगत्यौ त्रयोदशी गायत्री द्वादशीविंशीद्वाविंश्योऽनुष्टुभोऽष्टादशी बृहती' (KSA. 19. 53. p. 16.) इति। विश्वामित्र ऋषिः। दशमी षोडशी च द्वे जगत्यौ त्रयोदशी गायत्री द्वादशीविंशीद्वाविंश्यस्तिस्रोऽनुष्टुभोऽष्टादशी बृहती शिष्टास्त्रिष्टुभः। आद्येन्द्रापर्वतदेवताका पञ्चमीषोडश्यौ वाग्देवत्ये तदुत्तराश्चतस्रो रथाङ्गदेवताकाः शिष्टा ऐन्द्र्यः Sy.

८. इन्द्रश्च पर्वतश्च हे इन्द्रापर्वतौ ! इन्द्रापर्वता—आमन्त्रितस्य पादादित्वात् षाष्ठिकमाद्युदात्तत्वम् Sy.

९. वननीयाः Sy.; Dur. वननीयाः प्रशस्याः SKN.

१०. बृहता Sy.

११. रथेन आगत्य Sy. उदकरंहणेनोदकदानेन Dur.

१२. आवह० M. वहं P.
अस्मदर्थं धारयतम्। प्रयच्छतमित्यर्थः Sy. अस्मान् प्रत्यानयतम् SKN. आवहन्तमीरयन्तं व्रीह्यादीनि प्रेरयन्तम् Dur.

शोभनापत्यसहितानि । भक्षयतं च । हवींषि । यज्ञेषु । देवनशीलौ ! वर्धेतां च । स्तुतिभिः अन्नेन । माद्यन्तौ युवामिति ।

**तिष्ठा॒ सु कं॑ मघव॒न्मा परा॑ गाः॒ सोम॑स्य॒ नु त्वा॒ सुषु॑तस्य यक्षि ।**
**पि॒तुर्न पु॒त्रः सिच॒मा र॑भे त॒ इन्द्र॒ स्वादि॑ष्ठया गि॒रा श॑चीवः ॥ २ ॥**

तिष्ठ । मघवन् ! सुष्ठु । सुखं च । अस्मत्पार्श्वे तिष्ठ । मा । अस्मत्तः परागम ।

---

१. शोभनपुत्रोपेताः । सुवीराः—बहुव्रीहौ 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् Sy. किंविशिष्टाः ? उच्यते—सुवीराः शोभनैर्वीरैः पुत्रैः पौत्रैश्च सहिताः SKN. शोभनवीराः Dur.

२. वीतम्—'वी कान्त्यादिषु' इत्यस्य लोटि अदादित्वाच्छपो लुक् । प्रत्ययस्वरः Sy. ततः स्वे काल ईजानानामस्माकं वीतं भक्षयतम् Dur.

३. हवनयोग्यानि पुरोडाशादीनि हवींषि Sy. हवींषि पुरोडाशादीनि SKN. पुरोडाशादीनि Dur.

४. अस्मत्सम्बन्धिषु यज्ञेषु Sy.

५. ०वशी० P.
किञ्च हे देवौ ! द्योतमानौ! Sy. हे देवौ ! SKN. देवौ ! युवामुच्येथे Dur.

६. वर्द्धेतां P. वर्धेथां is suggested for वर्धेतां । समृद्धौ भवतम् । वर्धेथाम्—'वृधु वृद्धौ' इत्यस्य लोटि आथामो लसार्वधातुकस्वरे धातुस्वरः Sy.

७. स्तुतिलक्षणाभिरस्मदीयाभिर्वाग्भिः Sy. स्तुतिभिः पुनः पुनः प्रतिकर्म Dur.

८. अस्माभिर्दत्तेन हविषा Sy. अन्नेन च हविराख्येन SKN.

९. ०द्यन्तो M. हृष्यन्तौ Sy. तृप्यन्तावित्यर्थः SKN. मदन्तौ तृप्यन्तौ । इत्येतदाशास्महे Dur. N. 7. 10.; SKN. III. 58.

१०. अहर्गणेष्वन्त्यवर्जितेष्वहःसु हारियोजनस्य 'तिष्ठा सु कम्' इत्यनुवाक्या । सूत्रितञ्च 'तिष्ठा सु कं मघवन्मा परागा अयं यज्ञो देवया अयं मियेधः' (ASS. 6. 11.) इति Sy.

११. हे धनवन्निन्द्र ! Sy.

१२. सु कमिति निपातद्वयम् । प्रथमस्य 'निपाता आद्युदात्ताः' इत्याद्युदात्तत्वम् । द्वितीयस्य 'चादयोऽनुदात्ताः' इत्यनुदात्तत्वम् Sy.

१३. सुखेन Sy.

१४. अस्मिन् यज्ञे Sy.

१५. कञ्चित्कालमत्र तिष्ठ Sy.

१६. परागमः is suggested for परागम ॥ अस्मदीयाद्यज्ञात् (मा) गच्छ Sy.

सोमेन। सुष्ठु सुतेन[1]। शीघ्रम्[2]। अहं त्वा[3]। यजे[4]। पितुः[5]। इव[6]। पुत्रः। तव। वाससोऽन्तम्[7]। अहं हस्तेन गृह्णामि[8]। स्वादुतमया[9]। स्तुतिवाचा[10] संयुक्तोऽहम्। प्रज्ञावन्[11] ![12]

**शंसावाध्वर्यो प्रति मे गृणीहीन्द्राय वाहः कृणवाव जुष्टम्।**
**एदं बर्हिर्यजमानस्य सीदाथा च भूदुक्थमिन्द्राय शस्तम्॥ ३॥**

शंसाव[13]। अध्वर्यो! शंसावाऽऽवाम्[14]। तत्र[15] त्वं मे[16]। प्रतिगरं[17] कुरु—'ओथामो[18] दैव[19]' इति[20]।

---

१. तत्र कारणमाह—सुष्ठ्वभिषुतेन Sy.

२. क्षिप्रम् Sy.

३. त्वाम् Sy.

४. यक्षि—'यज देवपूजासङ्गतिकरणदानेषु' 'स्वरितञितः—'इत्यात्मनेपदम्। तस्य लुङि सिचि 'एकाचः—'इतीट्प्रतिषेधः। व्रश्चादिना षत्वम्। 'षढोः कः सि' इति कत्वम्। सिचः सकारस्य षत्वम्। निघातः Sy.

५. जनकस्य Sy.

६. तत्र दृष्टान्तः—यथा पुत्रो मधुरया वाचा जनकस्य चेलाञ्चलं गृह्णाति तद्वत् Sy.

७. वस्त्रप्रान्तम् Sy.

८. आलभे। गृह्णामीत्यर्थः। रभे—'डुलभष् प्राप्तौ' लिटचुत्तमे इटि रूपम्। रलयोरभेदः। निघातः Sy.

९. स्वादुतरया। स्वादिष्ठया—स्वादुशब्दादिष्ठनि रूपम्। नित्त्वादाद्युदात्तः Sy.

१०. स्तुति० M. स्तुतिलक्षणया गिरा Sy.

११. ०ज्ञावान् P. D. शक्तिमन्! Sy.

१२. VM. ignores इन्द्र।

१३. शंसिष्यन् होताध्वर्युं ब्रूते Sy. विश्वामित्रस्य। होताऽध्वर्युमाह SKN. विश्वामित्रस्येदमार्षम्। होता ब्रवीति Dur.

१४. शंसाव—'शंसु स्तुतौ' इत्यस्य लोटचुत्तमद्विवचने रूपम्। 'आडुत्तमस्य'—इत्याडागमः। उत्तमस्य पिद्भावादनुदात्तत्वे धातुस्वरः Sy. अहं च त्वं च समीभूय शंसावहै SKN. शंसाव—आवामुभावपि। न ह्यप्रतिगीर्यमाणं शस्यते। नाप्यशस्यमानं प्रतिगीर्यते। एवमितरेतरोपकारकत्वमभिप्रेत्योक्तं द्विवचनं शंसावेति Dur.

१५. होतः! त्वमेव शंससि। कथमहं शंसानि? अत आह Sy.

१६. मे—'अनुप्रतिगृणश्च'(Pa. 1. 4. 41.) इति सम्प्रदानसंज्ञा Sy.

१७. ०तिगिरं D. ०तिगतं P. प्रतिगृणीहि Sy. अहं शंसामि त्वम्...प्रतिगिरं मे देहि। एतत् कुर्वन्तौ SKN.

१८. आ था० M.

१९. ASS. 7. 11.

२०. 'ओथामोदैव' इत्यादिको होतुरुत्साहजननः प्रतिगरः। तं वत्स्व Sy.

इन्द्राय[1] । शस्त्रम्[2] । पर्याप्तम्[3] । कृणवाव[4] । तदर्थमासीद[5] । इदम्[6] । बर्हिः[7] । अस्य यजमानस्य[8] । अथ[9] । भवतु[10] । इन्द्राय । शस्तम्[11] । उक्थमिति[12] ।[13]

---

१. इन्द्रार्थम् Sy., Dur.

२. स्तोत्रम् Sy. यदेतत्...इत्थं वाहो देवताः प्रत्यूह्यमानत्वाद् वाहःशब्देनात्र स्तुतिरुच्यते । अथवा एतत्कूपसमीपे तदुदकस्योद्धृतस्य स्थानमावाह इति लोके प्रसिद्धम् । तत्सादृश्यात्सोमरसस्य पूर्णमधिषवणचर्म वाह इत्युच्यते । तत् ।...भाष्ये अभिवहनस्तुतिमिति अभिवहनशब्देन स्तुतिरुच्यते । अधिषवणशब्देनाधिषवणचर्म । असत्यपि वा शब्दे विकल्पवचनमेतद् द्रष्टव्यम् । अभिवहनस्तुतिमधिषवणप्रवादं वा प्रवदन्तीत्यनेन स्तुतिरुच्यते । ततस्तज्जुष्टवचनेनोच्यते । देवताप्रतीतिवहनसम्बन्धेयं स्तुतिः । अथवा—अधिषवणचर्म ततोऽधिषवणप्रवादः । प्रोद्यतेऽसाविति प्रवादः । अधिषवणं प्रवादो यस्यामधिषवणं वा प्रवदन्तीत्यर्थः । साधिषवणप्रवादा, ऐन्द्री त्वेषा । पक्षद्वये अधिशब्दस्य ते वाह इत्यस्य गुणत्वात् । गुणत्वं चास्य इन्द्राय, इतीत्याद्यर्थवचनात् SKN. एवमितरेतरगुणसम्पन्नमेतद् वाहः स्तोत्रम् ।...स्तोम एव हि देवानां वोढा भवति । "वाहिष्ठो वां हवानां स्तोमः" (RV. VIII. 26. 16.) इति, 'वोढृतमो ह्वानानां स्तोमः' इति हि वक्ष्यति । एवमियमभिवहनस्तुतिः । एवमेतच्छस्त्रमभिवोढृ, आभिमुख्यगामि ...अन्ये त्वेनामधिषवणप्रवादां सोमाभिषवप्रवादिनीं स्तुतिं मन्यन्ते । वाहःशब्दो ह्युदकवाहाभिधानसारूप्यात् तत्र युक्तरूपतर इति कृत्वा यदा पुनरेवं तदैवमर्थो योज्यः इन्द्रायेदं वाहः सोमोदकपूर्णमधिषवणफलकाख्यं वाहो जुष्टं प्रियं यथा स्यात्तथा कुर्वः । तद्धि सुशस्तं सुप्रतिगीर्णं चेन्द्रस्य प्रीतिजनकं भवति Dur.

३. प्रीतियुक्तम् । जुष्टम्—'नित्यं मन्त्रे' इत्याद्युदात्तत्वम् Sy. प्रियमिन्द्रस्य SKN. प्रियं तस्य यथा स्यात् तथा Dur.

४. गुणयाप M. करवाव Sy., SKN. कुर्वः Dur.

५. ०दर्त्थमा० P. उपविश Sy. आकारः सीदेत्यनेन सम्बध्यते SKN. एतदेव कर्तव्यमावाभ्यां यतः, अतो ब्रवीमि... यजमानस्याभिप्रेतकामावाप्तये आसीद । माऽवमंस्थाः, चिरेणैतच्छस्यत इति । उपविष्टश्चेत् त्वं ममाग्रतः Dur.

६. अस्मिन् Sy.

७. बर्हिषि Sy. तदर्थमिदं बर्हिः SKN. एतद् बर्हिः, यदेतदग्रतः स्तीर्णमग्रेण होतारम् Dur.

८. यजमानस्य स्वभूतम् SKN.

९. अनन्तरम् Sy. अथ अनन्तरमेव SKN. Dur.

१०. भूत्—वर्तमाने लुङ् । अडभावश्च भवति SKN.

११. प्रशस्तम् Sy. शस्तम्—न कश्चिद् व्याक्षेप इत्युच्यत इत्यभिप्रायः SKN. नात्र मम वाङ् मृषेत्यभिप्रायः Dur.

१२. उक्तामि० P. अस्माभिः क्रियमाणं शस्त्रम् Sy. उक्थमिदं शस्त्रम् SKN. शस्त्रमेतत् Dur.

१३. VM. ignores च ॥ "अभिवहनस्तुतिमभिषवणप्रवादां स्तुतिं मन्यन्ते । ऐन्द्री त्वेव शस्यते" N. 4. 16.; SKN. II. 238.

जा॒येदस्तं॑ मघव॒न्त्सेदु॒ योनि॒स्तदित्त्वा॑ यु॒क्ता हर॑यो वहन्तु ।
य॒दा क॒दा च॑ सु॒नवा॑म॒ सोम॑म॒ग्निष्ट्वा॑ दू॒तो ध॑न्वा॒त्यच्छ॑ ॥ ४ ॥

[1]जायेत् । मघवन्[2] ! पुरुषाणां जाया । एव । गृहं[3] भवति । सा[4] । एव । वासस्थानम्[5] । तत्र[6] । एव । त्वामपि पीतसोमम्[7] । युक्ताः[8] । अश्वाः । वहन्तु[9] । पुनश्च वयं यदा । कदा । चात[10] ऊर्ध्वम् । सोमम् । सुनवाम[11] । तदानीमयमग्निः[12] । दूतः[13] । त्वाम्[14] । प्रति[15] । धन्वाति[16]= अभिगच्छति, तदा पुनरागन्तव्यम्, अस्योत्तरा भूयसे निर्वचनाय[17] ।

---

१. अहर्गणे वैकल्पिकी मैत्रावरुणस्य हारियोजने पुरोनुवाक्या 'परा याहि मघवन्' (RV. 3. 52. 5.) इत्यनूच्य— 'जायेदस्तं मघवन्' इति सूक्ते विश्वामित्रस्त्रिष्टुभा इन्द्रं तुष्टाव । सूक्तविनियोग ऋग्विधाने—'इन्द्रापर्वतेति सूक्तमायुष्यं द्राविणं स्मृतम्' (ṚVidh. 2. 10³.) DDN.

२. ०घवं P. हे धनवन्निन्द्र ! Sy. DDN.

३. गृहम P. अस्यन्ते क्षिप्यन्ते पदार्था अत्रेत्यस्तं गृहम् ।...। 'न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते' Mbh., Śānti-parva, Adhyāya 144, verse 6. अस्तम्—'असु क्षेपणे' 'असिहसिमृग्रिण्वामि—'इत्यादिना तन्प्रत्ययः । नित्त्वादाद्युदात्तः Sy.

४. जाया Sy.

५. आवा० P. पुरुषस्य मिश्रणस्थानम् Sy. योनिर्गृहं तथोक्तम्—

न गृहं गृहमित्याहु-
र्गृहिणी गृहमुच्यते ।
वृक्षमूलेऽपि दयिता
यत्र तिष्ठति तद्गृहम् ॥
प्रासादोऽपि तया हीनः
कान्तारादतिरिच्यते ॥ DDN.

कृत्तिः, योनिः, सद्म इति गृहनामानि Ngh. 3. 4.

६. गृहे Sy.

७. वीत० M.

८. रथे योजिताः Sy. तस्मात् तदित् तत्र जायारूपे गृहे एव युक्ता योजिताः DDN.

९. जायां प्रापयन्तु DDN.

१०. च त P.

११. त्वदर्थमभिषुतं करवाम । सुनवाम— 'षुञ् अभिषवे' इत्यस्य लोटि रूपम् । यद्वृत्तयोगादनिघातः Sy.
सोमाभिषवं करवाम । 'षुञ् अभिषवे' लोट् । यद्वृत्तान्निघाताभावः DDN.

१२. ०मग्नित् P.

१३. तवास्माभिः प्रहितो दूतः Sy.

१४. त्वम् P.
त्वा—'युष्मत्तत्ततक्षुष्वन्तःपादम्' इति संहितायां षत्वम् Sy.
अग्निष्ट्वेति विग्रहे तु 'त्वा त इत्यनुदात्तयोः' (ṚPR. 5. 32.) इति षत्वम् DDN.

१५. आभिमुख्येन Sy.

१६. धावति P. गच्छेत् । धन्वाति—धवि गत्यर्थः । लेटयाडागमे रूपम् । निघातः Sy.

१७. VM. ignores उ ॥ उ प्रसिद्धचर्यः Sy., DDN.

परा याहि मघवन्ना च याहीन्द्र भ्रातरुभयत्रा ते अर्थम् ।
यत्रा रथस्य बृहतो निधानं विमोचनं वाजिनो रासभस्य ॥ ५ ॥

[1]परा याहि । पीते सोमे[2] परागच्छ[3] । आयाहि[4] श्वः[5] प्रभाते सोमपानाय[6] । हे इन्द्र[7] ! भ्रातृस्थानीय[8] ! भर्तः[9] ! वा । उभयत्र[10] । च । तव । प्रयोजनमस्ति[11], सोमपानमत्र प्रयोजनम्, तत्र जाया । यत्र[12] यज्ञे । महतः । रथस्य[13] विमुक्ताश्वस्य । निधानं[14] भवति । विमोचनं[15] च । अश्वस्य । वेगवतः[16], तत्रायाचति[17], सेयमनन्त्येष्वहस्सु हारियोजनस्य पुरोऽनुवाक्यान्त्येषु पूर्वेति ।[18]

---

१. अहंगणेऽन्त्यवर्जितेष्वहःसु हारियोजनस्य वैकल्पिकी 'परा याहि' इत्यनुवाक्या । 'परा याहि मघवन्ना च याहीति वानुवाक्या' (ASS. 6. 11.) इति सूत्रितम् Sy. विश्वामित्र इन्द्रमाह SKN.

२. अस्मिन् यज्ञे सोमस्य तृप्तः सन् SKN.

३. अस्माद्देवयजनात् पराङ्मुखो गृहं प्रति गच्छ Sy. परा पराचीनं रन्तुं स्वगृहमेव याहि SKN.

४. अथवा देवयजनं प्रत्यायाहि Sy. अर्वाक् सन्निकृष्टमस्मद्यज्ञमुत्तरवेदिदेशं याहि SKN.

५. पुनश्च श्वो यागकाले SKN.

६. सोमं पातुम् SKN.

७. हे इन्द्र ! त्वम् Sy.

८. हे भ्रातः ! पोषक ! Sy. कस्मात्पुनरेवमुच्यते 'आ च परा च याहि' इति ? उच्यते, यस्माद् हे इन्द्र ! भ्रातः ! SKN.

९. भर्ता वा P. सोमपयश्चरुपुरोडाशादिना भर्तव्यः SKN.

१०. स्वगृहेऽस्मदीये यज्ञे च SKN.

११. अर्यते प्राप्यत इत्यर्थः । अस्ति तत्र जाया, अत्र सोमः । अर्थम्—'ऋ गतौ' 'उषिकुषिगार्तिभ्यस्थन्' इति थन् । नित्स्वरः Sy. व्यत्ययेन प्रथमार्थे द्वितीया । अर्थः प्रयोजनमित्यर्थः । एकत्र सोमः, अन्यत्र शच्यादिपरिभोगः SKN.

१२. P. omits जाया यत्र ॥ प्रयोजनान्तरमाह—यत्र गृहं प्रति गमने Sy. कीदृशं स्वगृहम् ? यत्र SKN.

१३. रथस्योपरि Sy.

१४. अवस्थानं प्रयोजनम् । निधानम्—दधातेर्भावे ल्युट् । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् Sy. स्थानं यजनशालाख्यम् SKN.

१५. रथाद् विमोचनं प्रयोजनम् Sy. विमोचनस्थानं च मन्दुराख्यम् SKN.

१६. हेषारवं कुर्वतः । रासभस्य—'रासृ शब्दे' 'रासिवल्लिभ्याञ्च' (Uṇādi. 3. 405.) इति कर्तरि अभच्प्रत्ययः । ग्रामादित्वादाद्युदात्तः Sy. कीदृशस्य ? रासभस्य, जात्यन्तरत्वाद् विशेषणं यथाश्रुतं न सम्भवति, इति सकारभकारयोर्व्यत्ययेन रभसशब्दात् वेगवचनात् 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति मत्वर्थीयो णो द्रष्टव्यः । रासभस्य वेगवत इत्यर्थः SKN. N. 1. 3., SKN. I. 37.

१७. तत्रायाहीति is suggested for तत्रायाचति ।

१८. VM. ignores मघवन् ॥ हे धनवन् ! Sy., SKN.

अपाः सोममस्तमिन्द्र प्र याहि कल्याणीर्जाया सुरणं गृहे ते ।
यत्रा रथस्य बृहतो निधानं विमोचनं वाजिनो दक्षिणावत् ॥ ६ ॥

अपाः[1] सोमम्। पीतवानसि[2]। सोमम्। गृहम्[3]। इन्द्र[4]! प्रतिगच्छ[5]। कल्याणीः[6]। जाया[7]। सुष्ठु रमणसाधनं[8] विद्यते। गृहे। तव। यत्रेति[9][10] गतम्[11]। सायं[12] कार्यान्ते रथाद्[13] विमुक्तानां[14] दक्षिणा विद्यते, न प्रातरिति[15], दक्षिणा खादः पानं[16] चेति[17]।

---

१. अन्त्येष्वहःसु हारियोजनस्य 'अपाः सोमम्' इत्यनुवाक्या। सूत्रितं च—'हारियोजनोऽपाः सोममस्तमिन्द्र प्र याहि' (ASS. 6. 11.) इति Sy.

२. अत्रैव स्थित्वा सोमं पिब। अपाः—'पा पाने' लुङि—'गातिस्था—'इति सिचो लुक्। अडागमस्वरः Sy. पीतवानसि सोममेतस्मिन् कर्मणि Dur.

३. पीत्वा गृहम् Sy.

४. हे इन्द्र! Sy. हे भगवन्निन्द्र! Dur.

५. प्रकर्षेण गच्छ Sy.

६. ०ल्याणी P. मङ्गलकारिणी। कल्याणीः—कल्याणमस्यास्तीति मत्वर्थे 'छन्दसीवनिपौ' इतीप्रत्ययः, प्रत्ययस्वरः Sy. कस्मादेवमुच्यते ? यस्मात् कल्याणीः, छान्दसत्वाद् हल्ङ्याादिलोपाभावः।. . . प्रशस्तरूपा SKN. यस्मात् तव कल्याणीः Dur.

७. शची विद्यते Sy.

८. शोभनगीतादिध्वनिदश्चास्ति। यद्वा सुरणं सुरमणीयं यथा भवति तथा गृहे जाया तिष्ठति। सुरणम्—'रण शब्दार्थः'। अस्मादकृच्छ्रार्थे खल्। लित्स्वरः। प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः। समासे कृदुत्तरपदस्वरः Sy. सुष्ठु रमणीयं यत् परिभोगयोग्यपर्यङ्कास्तरणादि SKN. अन्यदपि सुरणं यद्यद् रमणीयं तत्सर्वम् Dur.

९. By 'यत्र' इति VM. means the second hemistich of the stanza ॥ यत्र च रथस्य बृहतो महतो निधानं स्थानं यजनशालाख्यम्। विमोचनं विमोचनस्थानं च मन्दुराख्यम्। वाजिनोऽश्वस्य SKN. निधानं रथशाला, विमोचनं च वाजिनो जित्वा सङ्ग्राममागतस्य Dur.

१०. इत्यादि Sy.

११. For VM.'s explanation see previous stanza.

१२. साय P.

१३. रथ P.

१४. ०क्तानं P.

१५. प्रतारि० P.

१६. पानां P. दक्षिणावत्। अत्र स्थितौ सत्यां रथे योजितानां वाजिनां विमोचनं खादनपानादिना दक्षिणावत् प्रयोजनवद्भवति। विमुक्तेभ्यो वाजिभ्यः खादनं पानं चोपहरन्ति Sy. दक्षिणा दानं वासयोग्यमशनादि तेन तद्वत् SKN.

१७. एवमेतयोर्मन्त्रयोर्हरिगृहजायारथाभिसम्बन्धात् पौरुषविध्यमिन्द्रस्य। न ह्यपौरुषविध्ये सति सम्बन्धो जायादिभिरस्ति Dur. N. 7. 6., SKN. III. 42.

इमे भोजा अङ्गिरसो विरूपा दिवस्पुत्रासो असुरस्य वीराः ।
विश्वामित्राय ददतो मघानि सहस्रसावे प्र तिरन्त आयुः ॥ ७ ॥

इमे भोजाः[1] । इन्द्रानुचरा इमे[2] । राजानः[3] । विविधरूपाः[4] । अङ्गिरसश्च । दिवः[5] । पुत्राश्च मरुतः । असुरस्य बलवतो रुद्रस्य[6] । वीराः[7] । विश्वामित्राय मह्यम् । धनानि[8] । प्रयच्छन्तः[9] । अनेकस्मिन्[10] सोमाभिषवे । आयुः[11] । वर्धयन्तीति[12] [13] ।

रूपंरूपं मघवा बोभवीति मायाः कृण्वानस्तन्वं१ परि स्वाम् ।
त्रिर्यद्दिवः परि मुहूर्तमागात्स्वैर्मन्त्रैरनृतुपा ऋतावा ॥ ८ ॥

रूपंरूपम् । नानाविधं[14] रूपम् । भावयति[15] । मघवा[16] । स्वाम्[17] । तनुम्[18] । परितः[19] ।

---

१. हे इन्द्र ! Sy.

२. यागं कुर्वाणाः Sy.

३. सौदासाः क्षत्रियास्तेषां याजकाः Sy.

४. नानारूपा मेधातिथिप्रभृतयः Sy.

५. दिवस्पुत्रास इति संहितायां 'षष्ठ्याः पतिपुत्र—'इति विसर्जनीयस्य सत्वम् Sy.

६. Sy. construes दिवः with असुरस्य and explains these two words together as देवेभ्योऽपि बलवतो रुद्रस्य ॥

७. बलवन्तो मरुतस्ते सर्वे Sy.

८. मंहनीयानि धनानि Sy.

९. प्रयच्छन्तः सन्तः । ददतः—'डुदाञ् दाने' इत्यस्य शतरि रूपम् । 'अभ्यस्ताना-मादिः' इत्याद्युदात्तत्वम् Sy.

१०. सहस्रं सूयतेऽत्रेति सहस्रसावोऽश्वमेधः । तस्मिन्नश्वमेधे Sy.

११. आयु P. जीवनमन्नं वा Sy.

१२. र्धय० P. वर्धयन्ति । तिरन्ते—तिर-तेर्व्यत्ययेन शः Sy.

१३. VM. ignores प्र ॥ प्र प्रकर्षेण Sy.

१४. विधे P. यद्यद्रूपं कामयते तत्तद्रूपम् Sy. यत् किञ्चित् प्राणिनो वा सर्वम् SKN. यावन्ति कानिचिद्रूपाणि Dur.

१५. भव० P. भृशं प्राप्नोति । तत्तद्रूपात्मको भवति । तत्र कारणमुच्यते । बोभ-वीति—भवतेर्यङ्लुकि तिपि 'यङो वा' इतीडागमः । निघातः Sy. पुनः पुन-र्भवति प्रतिपद्यत इत्यर्थः SKN. तानि सर्वाण्यप्रतिबन्धेन बोभवीति पुनः पुन-र्भवतीति Dur.

१६. धनवानिन्द्रः Sy. इन्द्रः SKN. इन्द्रो भवितुमिच्छति Dur.

१७. स्वकीयाम् Sy. स्वामात्मीयां स्वां स्वां तनुमित्यर्थः Dur.

१८. तनूम् Sy. तन्वं शरीरलक्षणम् SKN. इदं भवामि, इदं भवामीत्येवं . . . तनुं तत्तदाकृत्याऽनेकविधाम् Dur.

१९. परि पञ्चम्यर्थे । स्वस्माच्छरीरान्नाना-विधानि शरीराणि निर्मिमीते । यद्वा स्वां तनूं नानाविधरूपोपेतां करोति । तथाच मन्त्रवर्णः—'इन्द्रो मायाभिः पुरुरूपः' (RV. 6.47.18.) इति Sy. परिः प्रतिना समानार्थः । प्रति SKN.

मायाः[१]। कुर्वन्[२] याभिर्जनान्[३] मोहयति[४] ता[५] माया उच्यन्ते। बहुधा[६] ह्येकमेव[७] जना बुध्यन्ते[८]। मुहूर्तम्[९] मुहुः ऋतं भवतीति सवनमुच्यते। दिवः[१०]। परि। यदा[११]। सवनान्या[१२]गच्छति[१३]। स्वैः[१४]। स्तोत्रैर्हेतुभिः[१५]। अन्ये देवा ऋतौ कस्मिंश्चित् काले पिबन्ति, अयं त्वनृतुपाः[१६] सर्वेषु सवनेषु पिबति। यज्ञवानिति[१७], यास्कः—'यद्यद्रूपं कामयते तत्तदेव[१८] भवति' इति।

---

१. मायां P. अनेकरूपग्रहणसामर्थ्योपेताः Sy. प्रजास्तास्ताः SKN.

२. कुर्वाणः Sy. कुर्वन्। यद्वा कृण्वन्ति। कृन्तन्तीति कृतेर्हिंसार्थस्य रूपम् SKN. विकुर्वाणः Dur.

३. ०भिर्ज्ञानान् M.

४. मोह्यह P.

५. का M.

६. तत्रापि त्रिषु सवनेषु Sy.

७. हे क P.

८. बुध्यते P.

९. मुहुर्तं P.
एकस्मिन्नेव मुहूर्ते नानादेशवर्तिषु यज्ञेषु Sy. प्रत्येकेन मुहूर्तेनेत्यर्थः SKN. मुहूर्तकालं प्रति Dur.

१०. स्वर्गलोकात् Sy. द्युलोकात् SKN. दिवः, अधि द्युलोकात् Dur.

११. यदि M. यस्मात् Sy.
व्यत्ययेन नपुंसकम्। यः SKN.
यः Dur.

१२. सवनानि should immediately follow मुहूर्तं..सवनमुच्यते and precede दिवः।

१३. अगात्—इणो लुङि रूपम्। यद्वृत्तयोगादनिघातः Sy. स्वभूतानां यजमानानां यागसिद्ध्यर्थमागात्। आगच्छति SKN.

१४. स्वकीयैः Sy.

१५. स्तुतिलक्षणैर्वाक्यैराहूतः Sy. मन्त्रैराहूयमानः स्तूयमानो वेति शेषः SKN. मन्त्रैराहूयमानः स्तूयमानो वा युगपद्यजमानानां यज्ञेषु Dur.

१६. त्वनृतु० P. न केवलमृतुष्वेव पिबति किन्तु अनृतुष्वपि। बहुशः सोमं पिबन्नित्यर्थः Sy. ऋतुकालो वसन्तादिः। अनृतावकालेऽपि 'यदहरेनं श्रद् वोपनमति' इत्येवं यदैव दीयते तदैव पाता सोमस्य SKN. अनियतसोमपानकालः, सर्वदा यागोत्पत्तेः Dur.

१७. सत्यवान् तादृश इन्द्रः Sy. ऋतं सत्यमुदकं यज्ञो वा तैस्तद्वानिति SKN. ऋतावान् यज्ञवान्, येनासावेवात्मानं विकरोत्येवं च दिवो मुहूर्तं त्रिरागच्छति तेनासावचिन्त्यप्रभावत्वाच्छक्नोति तत्तद्रूपमावेष्टुम् Dur.

१८. Cf. 'यद्यद्रूपं कामयते तत्तद्देवता भवति' N. 10. 17., SKN. IV. 20.

**म॒हाँ ऋषि॑र्देव॒जा दे॒वजू॑तो॒ऽस्त॑भ्ना॒त्सिन्धु॑मर्ण॒वं नृ॒चक्षाः॑ ।**
**वि॒श्वामि॑त्रो॒ यदव॑ह॒त्सु॒दास॒मप्रि॑यायत कुशि॒केभि॒रिन्द्रः॑ ॥ ९ ॥**

महान्[1] । महान् । अयमृषिः[2] । देवार्थं[3] जातः । देवैराकृष्टः[4] । स्तम्भितवान्[5], इन्द्रप्रसादात्[6] । उदकवन्तम्[7] । सिन्धुम्[8] । मनुष्याणां पुत्रपौत्रादीनां द्रष्टा[9] । किं च[10] यदा । अयम्[11] अश्वमेधेन[12] याजयन्[13] । सुदासं[14] राजानम् । पुरोधाः सन् अवहत्[15]=प्रणिनाय[16] तदानीं प्रीत आसीत्[17] । कुशिकै-रस्माभिः[18] । इन्द्रः[19] ।

**हं॒साइ॑व कृणुथ॒ श्लोक॒मद्रि॑भि॒र्मद॑न्तो गी॒र्भिर॑ध्व॒रे सु॒ते सचा॑ ।**
**दे॒वेभि॑र्विप्रा ऋषयो नृचक्षसो॒ वि पि॑बध्वं कुशिकाः सो॒म्यं मधु॑ ॥ १० ॥**

हंसा इव । हे कुशिकाः[20] ! हंसा[21] इव मृदुवाचः । कृणुथ[22] । स्तोत्रम्[23] । अभिषवग्रावभिः सह । देवान् मादयन्तः[24] । स्तुतिभिः । यज्ञे । सुते[25] सोमे । सह भूताः[26] । देवेभिः[27] सह । हे ब्राह्मणाः[28] !

---

१. तपसातिशयितसामर्थ्यवान् Sy.
२. अतीन्द्रियार्थद्रष्टा Sy.
३. द्योतमानानां तेजसां जनयिता Sy.
४. तैस्तेजोभिराकृष्टः Sy.
५. निरुद्धवेगमकरोत् Sy.
६. ०दादिति P.
७. सिन्धुमुद० P.
८. विपाट्छुतुद्र्योः सम्भेदम् Sy.
९. नृणां कर्मनेतृणामध्वर्य्वादीनामुपद्रष्टा सः Sy. १०. चि. P.
११. अय P. अयम् stands for विश्वामित्रः ।
१२. स्तमे० P.
१३. ०जय M.
१४. किञ्च स विश्वामित्रः पैजवनं राजानम् Sy.
१५. ०वहं M. अयाजयत् । 'वह प्रापणे' इत्यस्य लङि रूपम् । यद्योगादनिघातः Sy. १६. ०णिन्नाय P.
१७. सीत् P. प्रिय इवाचरत् । अप्रियायत— प्रिय इवाचरतीत्यर्थे 'कर्तुः क्यङ् सलोपश्च' इति क्यङ् । तदन्ताल्लङि रूपम् । पादादित्वादनिघातः Sy.
१८. ०रस्मद्भिः P. कुशिकगोत्रोत्पन्नैर्ऋषिभिः सह Sy.
१९. इन्द्र P.
२०. कुशिकगोत्रोत्पन्ना हे पुत्राः ! Sy.
२१. तत्र दृष्टान्तः । यथा हंसाः सम्यक् शब्दं कुर्वन्ति तद्वत् Sy.
२२. ०णुत P. सम्यगुच्चारयत Sy.
२३. श्लोक्यते शस्यतेऽनेनेति श्लोकः शस्त्रम् । 'श्लोकृ शब्दे' । करणे घञ् । ञित्त्वादाद्युदात्तः Sy.
२४. देवान् मादयन्तो यूयम् । मदन्तः— 'मदी हर्षे' इत्यस्यान्तर्भावितण्यर्थस्य व्यत्ययेन शप् Sy.
२५. अभिषुते सति Sy.
२६. सहिता यूयम् Sy.
२७. देवमेवभिः P. यष्टव्यदेवैः Sy.
२८. हे मेधाविनः ! Sy.

हे ऋषयश्च[1] । मनुष्याणां[2] द्रष्टारः[3] । विविधम्[4] । पिबध्वम्[5] । सोममयम्[6] । मधु[7] ।

उप॒ प्रेतं॑ कुशिकाश्चे॒तय॑ध्व॒मश्वं॑ रा॒ये प्र मु॑ञ्चता सु॒दासः॑ ।
राजा॑ वृ॒त्रं जं॑घन॒त्प्रागपा॒गुद॒गथा॑ यजाते॒ वर॒ आ पृ॑थि॒व्याः ॥ ११ ॥

उप प्रेत । शौनकः[8]—

सौदासस्य महायज्ञे शक्तिना गाधिसूनवे[9] ।
निगृहीतं बलादोजः[10] सोपासीदद् विचेतनः ॥१॥
तस्य[11] ब्राह्मीं तु सौरीं वा नाम्ना वाचं ससर्परीम्[12] ।
सूर्य[13]क्षयादिहाहृत्य ददुस्ते जमदग्नयः[14] ॥२॥
कुशिकानां[15] ततः सा[16] ह गतिमान्[17] तानपाहनत्[18] ।
उपेति[19] च स्यात्[20] कुशिकान् विश्वामित्रोऽन्वबोधयत्[21] ॥३॥
लब्ध्वा[22] वाचं[23] च हृष्टात्मा तानृषीन् प्रत्यपूजयत् ।
'ससर्परीरिति[24] द्वाभ्यां मृश्यान्[25] ? वाचं स्तुवन् स्वयम्[26] ॥४॥

---

१. अतीन्द्रियार्थस्य द्रष्टारः Sy.
२. ०नुष्यान् P. नृणां कर्मनेतृणाम् Sy.
३. ०ष्टारा M.
 विशेषेण द्रष्टारः ! Sy.
४. परस्परव्यतिहारेण Sy.
५. पिबत । पिबध्वम्—'पा पाने' 'कर्तरि कर्मव्यतिहारे' इत्यात्मनेपदम् Sy.
६. सोम्यम्—सोमशब्दात् 'मये च' इति यप्रत्ययः Sy.
७. मधुकरं रसम् Sy.
८. BD. IV. 112-120.
९. गाधीसू० P. BD. reads सुदासश्च . . .गाधिसूनवे ।
१०. च्चेतः सोऽवसीदद् BD.
११. तस्मै BD.
१२. RV. III. 53. 15 and 16.
१३. ०र्यक्षराविहाकृत्य M. ०र्यं क्षयाविहाकृत्य P.
१४. ०मग्न० P.
१५. ०कान् P.
१६. सा वाक् BD.
१७. गतिं P. अमतिं BD.
१८. तानुपाहनं P.
 तामपाहनत् BD.
१९. RV. III. 53. 11.
२०. चास्या P. चास्यां BD.
२१. न्वयोधयत् P. ऽनुबोधयत् BD.
२२. लध्वा P.
२३. चं P.
२४. RV. III. 53. 15 and 16.
२५. Omitted in P. ऋग्भ्यां BD.
२६. स्वयम P.

स्थिरा[1]वित्यनसो[2]ऽङ्गान्यनडुहं[3] च गृहं[4] व्रजन् ।

तन्वं च स्वशरीरं[5] च[6] गृहान् गच्छन् परी[7]ददे ॥५॥

[8]पराश्चतस्रो [9]यास्त्वत्र वशिष्ठ[10]द्वेषिण्य[11]: स्मृताः ।[12]

[13]द्विष द्वेष स्मृता ? वि[14]द्यादभिचारेषु शस्यते ॥६॥

विश्वामित्रेण ताः प्रो[15]क्ता अभिशा[16]पा इति स्मृताः ।

वशिष्ठास्तु[17] न श्रृण्वन्ति तदाचार्यकसम्मतम् ॥७॥

[18]शतधा भिद्यते मूर्धा[19] कीर्तितेन श्रुतेन वा[20] ।

तेषां[20] बाला[21]: प्रमीयन्ते तस्मात् तास्तु न कीर्तयेत् ॥८॥ इति ॥

हे कुशिकाः[22] ! आगच्छत[23] । मयोच्यमानं[24] जानीत[25] । सुदासो[26] राज्ञः[27] । अश्वमेधाय[28] । अस्माकं

---

१. RV. III. 53. 17.
२. स्थिविमनासो० P.
३. ०न्यनाळुहं P. न्यनडुहश्च BD.
४. गृहां P. गृहान् BD.
५. स्वरश० P. ततश्च स्वशरीरेण BD.
६. M. omits words between वित्यनसो and च।
७. P. repeats it.
८. The stanzas referred to here are III. 53. 21-24.
९. परारच तं स्ता या० P.
१०. ०सिष्ठं द्वे० M.   ११. विष्य P.
१२. BD. reads 'विश्वामित्रेण ताः प्रोक्ता अभिशापा इति स्मृताः ।'
१३. द्विषे P. द्विषद्द्वेषास्तु ताः प्रोक्ताः BD.
१४. विद० P. विद्याश्चैवाभिचारिकाः BD.
१५. प्रोत्ता P.   १६. भिचारा P.
१७. स्ताः BD.
१८. BD. reads here 'कीर्तनाच्छ्रवणाद्वापि महादोषश्च जायते' ।
१९. मूर्ध्ना P.   २०. Omitted in P.
२१. P. adds पव तेषां।
२२. कुशिकगोत्रोत्पन्नाः ! हे पुत्राः ! Sy. पुत्रान् पौत्रांश्चाह ।...कुशिकाः ! मम पितामहस्य कुशिकस्यापत्यभूता यदीयाः पुत्राः पौत्राश्च । अथवा क्रोशतेः शब्दकर्मणः । कुशिका ऋत्विजः SKN. हे कुशिकाः ! स्तुतिक्रोष्टारः ! ऋत्विजः ! Dur.
२३. इव ग० P. अश्वस्य समीपे प्रकर्षेण गच्छत Sy. उपस्थाय प्रकर्षेण इत गच्छत SKN. यूयमेतद् विज्ञाय, उप प्रगच्छत Dur.   २४. मशोच्यमानां P.
२५. जनी० P. तत्र गत्वा सावधाना भवत । यद्वा । अश्वरक्षिणः सावधानान् कुरुत । चेतयध्वम्—'चिती संज्ञाने' इत्यस्य ण्यन्तस्य लोटि रूपम् । आमन्त्रितस्याविद्यमानवत्त्वेन तिङ उत्तरत्वान्न निघातः Sy. मा विक्षिप्तचेतसो भवत SKN. विजानीध्वमेतत् Dur.
२६. ०दसो P. पैजवनस्य Sy. सुदा इत्येवं नामकस्य कल्याणदानस्य वा SKN. योऽयमेतस्मिन् सुदासे कल्याणदाने यजमाने वर्तते Dur.
२७. रक्षि P. राज्ञः स्वभूतम् SKN.
२८. श्वमे० P.

धनाय[1] च । प्रमुञ्चत[2] । सोऽयं राजा[3] । प्राक्[4] । प्रत्यक्[5] । उदक् च[6] । शत्रून्[7] । भृशं हतवान्[8], अनार्यावासाद्[9] दक्षिणाया[10] अकीर्तनम्[11] । एवं सति[12] सार्वभौमोऽयम्[13][14] । पृथिव्याः । वरिष्ठेऽ[15]स्मिन्देशे । अश्वमेधेन यजत[16] इति[17] ।

**य इमे रोदसी उभे अहमिन्द्रमतुष्टवम् ।**
**विश्वामित्रस्य रक्षति ब्रह्मेदं भारतं जनम् ॥ १२ ॥**

य इमे[18] । यः । अहम्[19] । इमे । द्यावापृथिवी[20] । इन्द्रम् । मन्त्रकरणात् स्तावयामि[21],

---

१. तस्य दिग्विजयेन धनलाभाय Sy. उपप्रगम्य चाश्वं राये अश्वमेधफललक्षणाय धनाय SKN. उपप्रगत्य चैतमाश्वमेधिकमश्वम् Dur.

२. उत्सृजतेत्यर्थः । 'संवत्सरायोत्सृजन्ति' (TMB. 5. 10. 1. reads 'आ वा एते संवत्सरं प्याययन्ति य उत्सृजन्ति') इति श्रुतेः SKN. उत्सृजत विधानतः प्रोक्ष्याश्वमेधयागाय Dur.

३. रराज M. देवानां स्वामीन्द्रः Sy. राजा ह्ययम् SKN. यथैष राजा Dur.

४. प्रत्यक् । प्राक्—अञ्चतेः क्विनि रूपम् । 'अनिगन्तोऽञ्चतौ वप्रत्यये' इति गतेः स्वरः Sy. प्राच्यां दिशि SKN.

५. पूर्वपश्चिमोत्तरेषु देशेषु Sy. प्रतीच्यां दिशि SKN.

६. उदीच्यां च सर्वासु दिक्षु SKN. सर्वासु दिक्षु Dur.

७. कर्मविघ्नकारिणमसुरम् Sy. यस्मात् शत्रून् SKN. शत्रुम् Dur.

८. तस्मादश्वं विमुञ्चतेति भावः । जङ्घनत्—'हन हिंसागत्योः' इत्यस्य यङ्लुकि 'नुगतोऽनुनासिकान्तस्य' इत्यभ्यासस्य नुगागमः । तदन्ताल्लेटघडागमः Sy. अत्यर्थं हतवान् । शत्रुनिकायं हतवानित्यर्थः SKN.

९. अनार्य वसत्व P.

१०. ण्णा P.

११. कीर्तन P.

१२. अथ अनन्तरम् Sy. अथेति हेतौ । एतस्मात् कारणात् SKN. एवं सर्वहन्ताऽमित्रो भूत्वा Dur.

१३. सर्व० P.

१४. यः P.

१५. उत्तमे देवयजनदेशे । वरे—'वृञ् वरणे' इत्यस्मात् 'ग्रहवृदृनिश्चिगमश्च' इत्यप्प्रत्ययः । तस्य पित्वादनुदात्तत्वे धातुस्वरः Sy. श्रेष्ठे स्थाने SKN. श्रेष्ठे प्रदेशे Dur.

१६. स राजा यजेत । यजाते—यजतेर्लेटघाडागमः । निघातः Sy. अश्वमेधेन यजते ।. . . आ यजिना सम्बध्यते पदपूरणो वा SKN.

१७. VM. ignores आ ॥ N. 7. 2., SKN. III. 12-13.

१८. हे कुशिकाः ! कुशिकपुत्राः ! Sy.

१९. अहं विश्वामित्रः Sy.

२०. द्यावापृथिव्यौ Sy.

२१. द्यावापृथिवीभ्यामिन्द्रस्य स्तोत्रं मया कारितमित्यर्थः । यद्वा । उभयो रोदस्योरन्तरवस्थितमिन्द्रं स्तौमि । अतुष्टवम्—'ष्टुञ् स्तुतौ' । ण्यन्तस्य लुङि चङि रूपम् । यद्वृत्तयोगादनिघातः Sy.

मद्दृष्टैर्मन्त्रैरुभये देवमनुष्याः स्तुवन्तीत्यर्थः । तस्य मम विश्वामित्रस्य । मन्त्रः । इयम् । भरतकुलजातम् । जनम् । रक्षतीति ।

**वि॒श्वामि॑त्रा अरासत॒ ब्रह्मेन्द्रा॑य व॒ज्रिणे॑ । कर॒दिन्नः॑ सु॒राध॑सः ॥ १३ ॥**

विश्वामित्राः । विश्वामित्राः । प्रायच्छन् । स्तुतिम् । वज्रिणे । इन्द्राय । सः । अस्मान् । करोतु । शोभनधनान् ।

**किं ते॑ कृण्वन्ति॒ कीक॑टेषु॒ गावो॒ नाशिरं॑ दु॒ह्रे न त॑पन्ति घ॒र्मम् ।**
**आ नो॑ भर॒ प्रम॑गन्दस्य॒ वेदो॑ नैचाशा॒खं म॑घवन्रन्धया नः ॥ १४ ॥**

किं ते । 'किं क्रियाभिः' इति ये मन्यन्ते ते कीकटा नास्तिकाः,

---

१. मदुष्टै० P.
२. ०त्यर्थं P.
३. स्य P. स्तोत्रं कुर्वाणस्य मम Sy.
४. स्तोत्रम् Sy.
५. इन्द्रविषयम् Sy.
६. भरतकुलं जनम् । भारतम्—भरतशब्द उत्सादिः । ञित्वादाद्युदात्तः Sy.
७. जनक P.
८. अक्षत्र० P. पालयति Sy.
९. अकुर्वन् । अरासत—'रासृ शब्दे' इत्यस्य लङि 'बहुलम् छन्दसि' इति शपो लुक् । निघातः Sy.
१०. स्तोत्रम् Sy.
११. वज्रहस्ताय Sy.
१२. स्तुतः स इन्द्रः Sy.
१३. करत् । करोतेर्लुङि च्लेः 'कृमृदृरुहिभ्यश्छन्दसि' इत्यङादेशः Sy.
१४. ०भनान् P. शोभनधनोपेतान् । सुराधसः—'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् Sy.
१५. VM. ignores इत् ॥ इद् एव Sy.
१६. यस्मान्नराद् धनापेक्षा तत्समीपे जपेदिमाम् ।
किं ते कृण्वन्त्यृचं मन्त्री शतोत्तरसहस्रकम् ॥१॥
स्वयमेव स सन्तुष्टस्तस्मै सर्वं ददाति च ।
तद्धनं सहसा लब्ध्वा सुखी भवति निश्चयम् ॥२॥
विश्वामित्रस्त्रिष्टुभा इन्द्रं तुष्टाव ।
'प्रदातारं सुपुष्टार्थं सर्वदाविष्टचेतनम् ।
हत्वा तद्धनमन्विच्छेत् किं ते कृण्वन्तीति स्मरन् ॥
इति ऋग्विधाने (R̥Vidh. 2. 11.) DDN.

तेषु स्थिताः । गावः । तव, इन्द्र ! किम् । कृण्वन्ति । नहि कीकटाः । आशिरम् । दुहृन्ति । नच । तपन्ति । घर्मम् । तथा सति,

---

१. अनार्यनिवासेषु जनपदेषु । यद्वा क्रियाभिर्यागदानहोमलक्षणाभिः किं फलिष्यतीत्यश्रद्दधानाः प्रत्युत पिबतखादततायमेव लोको न पर इति वदन्तो नास्तिकाः कीकटाः । तेषु Sy. कीकटनाम्नि, अनार्यनिवासे देशे कृपणा वा कीकटाः कृपणेषु वा ।. . .किं कृताः ? किमर्थमुत्पादिताः ? . . .किमा करोतेश्चेत्यर्थः । अथवा यागदानादिभिः किंकृताभिः किम् ? पिबतखादतेत्येवंप्रायैव प्रेप्सा प्रेक्षा येषां तेऽश्रद्दधाना नास्तिकाः किंक्रियाः सन्तः कीकटाः SKN. अनार्यदेशनिवासिषु मनुष्येषु ।. . .एवमत्र कीकटाः किंकृताः, किमेते कृताः ? इत्येवमभिव्याहारमर्हन्ति । न तैः कश्चिदर्थोऽस्ति । न ते देवपितृमनुष्याणामुपकारं कुर्वन्तीत्यर्थः । अथवा किं क्रियाभिरिति एवंप्रेप्सास्ते नास्तिका एवमभिप्राया इत्यर्थः । एतस्माच्छब्दसारूप्यादर्थोपपत्तेश्च कीकटा अनार्यदेशवासिन इत्युपपद्यते Dur.

२. स्थाता P.

३. क्वचिन्नोपयोगं कुर्वन्तीत्यर्थः । अनुपयोगं दर्शयति DDN. कमुपकारं Dur.

४. कुर्वन्ति । न क्वचित्तवोपयोगं कुर्वन्तीत्यर्थः Sy., DDN. कुर्वन्ति, न क्वचिदुपयुज्यन्त इत्यर्थः SKN. न कञ्चिदपीत्यभिप्रायः Dur.

५. किं पुनः कारणं न कुर्वन्तीति ? न, Dur.

६. आशीरं M. सोममिश्रणयोग्यं पयः । आशिरम्—आङ्पूर्वात् श्रीणातेः क्विपि 'अपस्पृधेथाम्–' इत्यादिनाशिर इत्यादेशः Sy. आशिरशब्देन सोमस्य श्रपणार्थं दध्युच्यते । तेन चात्र तत्प्रकृतिभूतमाशिरार्थं पयो लक्ष्यते । तेनाशिरार्थं पयो न दुह्यत इत्यर्थः SKN. नाप्याशिरार्थं दुह्यन्ते Dur.

७. दुह्रे—दुहेर्लटि 'इरयो रे' इति रे–आदेशः । द्विर्वचनस्य विकल्पितत्वात् द्विर्वचनाभावः । 'चादिलोपे विभाषा' इति न निघातः Sy.

दुह्रे—दुहन्ति । 'चादिलोपे विभाषा' (Pa. 8. 1. 63.) इति निघाताभावः । गावस्ता या इन्द्रायाशिरं दुहन्ति DDN.

८. स्क न M.

नापि SKN., Dur.

९. तवन्ति M. दीपयन्ति Sy. स्वपयः–प्रदानद्वारेण तपन्ति . . . दीपयन्ति प्रवर्ग्येऽपि नोपयोगं गच्छन्तीत्यर्थः । एतेन सान्नाय्यादिष्वपि प्रदर्शितं द्रष्टव्यम् SKN. घर्मे तप्यमानेऽङ्गभावं गच्छन्ति । नाप्यग्निहोत्रादिषु कर्मसु, अन्यास्वपि क्रियास्वित्यभिप्रायः Dur.

१०. घर्मम् M. प्रवर्ग्याख्यकर्मोपयुक्तं महावीरपात्रं स्वपयःप्रदानद्वारेण । एतेन सान्नाय्याद्यर्थमपि नोपयुज्यन्त इत्यपि सूचितं भवति Sy.

घर्मं महावीरपात्रम् । देवान् प्रति हरणाद् हर्म्यः सन् घर्मः । महावीरोऽप्यर्थः SKN.

११. एवं क्वचिदपि वैदिके कर्मण्यनुपयुक्तास्ता गाः Sy., DDN. एतज्ज्ञात्वा तास्तावत् SKN.

आ॒भ॑र । अ॒स्माक॑म् । कीक॑टेषु॒ वर्तमानस्य प्रमग॑न्दस्य । धन॑म् इति । एतदे॒वाह—

१. आहर न केवलं ता एव किं तर्हि ? Sy. आभर आहर 'हृग्रहोर्भश्छन्दसि' (P-MBHV. 1. on Pa. 8. 2. 32.) इति भत्वम् । न केवलं ता एव किन्तर्हि ? DDN. आकारो भरेत्यनेन सम्बध्यते । ...आहर देहीत्यर्थः SKN. यत एवमतो ब्रूमः, 'आभर हर नः' ता गाः । वयं तव ताभिराशिरादिविनियोगेनोपकारं करिष्याम इत्यभिप्रायः Dur.

२. अस्मभ्यम् Sy., SKN.

३. ०कटे तु P. अनार्यनिवासेषु जनपदेषु DDN.

४. प्रगमनद० P. द्वैगुण्यादिलक्षणपरिमाणं गतोऽर्थो मामेव गमिष्यतीति बुद्ध्या परेषां ददातीति मगन्दो वार्धुषिकः । तस्यापत्यं पुत्रादिः प्रमगन्दः । प्रस्कण्वादिवदपत्यार्थः प्रशब्देन द्योत्यते Sy. एतद् द्रव्यं द्विगुणीभूय मां गमिष्यतीति बुद्ध्या ददातीति मगन्दो वार्धुषिकः । तस्यापत्यं पुत्रादिः प्रमगन्दः । प्रेत्यपत्यार्थः प्रस्कण्वादिवत् । पिबतखादतायमेव लोको न पर इति वदन् नास्तिकः प्रमगन्दः DDN. नच केवलास्ता एव, किं तर्हि ? प्रमगन्दस्यात्यन्तकुशीदकुलजस्य प्रमादकस्य नित्यप्रमुदितस्य वाप्रष्टुरित्यभिप्रायः । पण्डकस्य वा षण्डस्येत्यर्थः । असावप्यनधिकृत इत्यर्थः । द्वैगुण्यं प्राप्तो मामागमिष्यतीत्युपचयं प्रत्याकर्ण्य ददाति प्रयुङ्क्त इत्यर्थः । अस्मदो गमेर्ददातेश्च मगन्दः । अपत्यार्थे प्रस्कण्ववत् प्रमगन्दः । पितृक्रमागतं कौषीद्यं पश्येत्यर्थः । यत्त्वं तस्य प्रमदको वा प्रमगन्द ऐहलौकिक एव । पण्डको वा तृतीया प्रकृतिः । स्त्रीरूपत्वाल्लज्जया वा स्त्रीवन्निभृतं यो गच्छति सः । प्रार्दको वा पुंसोऽण्डौ प्रकर्षेणार्दयति मृद्नातीत्यर्थः SKN. किञ्च यदप्येतत् प्रमगन्दस्य वृद्धिजीविनो धनम्, एतच्च तथाऽस्मभ्यमाहर । तदपि न क्रियासु तत्स्थं विनियुज्यते । वयं तावद् विनियोक्ष्याम इत्यभिप्रायः ।...नित्यप्रमुदितोऽपि विषयपरः प्रमगन्दः स्यात् ।...नपुंसकः प्रमगन्दः स्यात् । तयोर्वा धनानि क्रियासु न विनियुज्यन्ते । शब्दसारूप्यं च प्रमगन्दशब्दे उभयोरस्ति । तस्मात्तावप्युपपद्येते...मगन्दः कुसीदी, इत्युच्यते, स हि मामियादद्यतन इत्यर्थः । अयं चागमिष्यतीत्येवमनुचिन्त्य परेभ्यो धनानि ददाति । तदपत्यं प्रमगन्दः । अत्यन्तकुसीदकुलीनः । तद्धितार्थे प्रः प्रमगन्दः । प्रमदकः प्रमादशीलः । अयमेवैको लोकोऽस्ति न पर इत्येवं प्रेप्सुर्नास्तिकः । पण्डकः तृतीया प्रकृतिः । स हि पण्डगः पण्डं गच्छति स्त्रीरूपत्वात् । प्रार्दक इति वा स्यात्, प्रकर्षेण ह्यसौ अज्ञातैः सह स्त्रीत्वेन गच्छति Dur.

५. तस्यात्यन्तकुसीदिकुलस्य वेदो धनम् आहर Sy.

६. ०तदाह P.

परित्यक्तवेद[१]शाखस्य धनम्[२] । अस्माकम्[३] । वशं नयेति[४] । यास्कः—'कीकटा[५] नाम देशोऽनार्यनिवासः । कीकटाः[६] किङ्कृताः । किं क्रियाभिरिति प्रेप्सा[७] इति; तयोत्तरत्रोक्तम्[८]— 'मगन्दः[९] कुसीदी । माङ्गदो[१०] मां गमिष्यतीति[११] च ददाति । तदपत्यं[१२] प्रमगन्दः[१३] । अत्यन्तकुसीदि[१४]कुलीनः । प्रमदको वा योऽयमेवास्ति[१५] लोको न परं[१६] इति प्रेप्सुः[१७] । पण्डको वा[१८] इत्यादि[१९] ।

---

१. वरित्यस्यवे० M. नैचाशाखम् । नीचासु शूद्रयोनिषु उत्पादिता शाखा पुत्रपौत्रादिपरम्परा येन स नीचशाखः । 'शूद्रापत्यैश्च केवलैः' । 'शूद्रावेदी पतत्यधः' इति च पातकहेतुत्वेन स्मरणाद् । पतितस्य सम्बन्धि धनं नैचाशाखम् । तद्धनम् । 'तस्येदम्' इत्यण् । प्रत्ययस्वरः Sy. हीनजातीयापत्यमाह । शूद्राऽपत्यानां केवलानां . . . पातकहेतुत्वात् । तस्य च यत्स्वं नैचाशाखं त्वयि । . . . नीचैः पुत्रपौत्रादिरूपाः शाखाः सन्तानरूपा वा यस्य स नीचैःशाखः शूद्रायामेवोत्पादित इत्यर्थः । स नीचैःशाखः । तस्य स्वं नैचाशाखम्, तस्य वा स्वभूतं वेदो धनम् SKN. यदेतेषामन्यतमस्य नीचशाखाप्रसूतस्य नीचवंशप्रसूतस्य हीनकुलस्य दीनतुल्यस्य धनं तत् Dur.

२. धमम् M. नीचशाखाः शूद्रास्तत्सम्बन्धि, यद्वा नीचतया निष्प्रयोजनतया निष्प्रयोजनबुद्ध्या परित्यक्तऋगादिशाखा येन तत्सम्बन्धि धनम् DDN.

३. अस्मभ्यम् Sy., SKN.

४. साधय । एतेषां तद्धनं तव नोपयुज्यते अस्मदायत्तं तु तद्धनं यागादिद्वारा तवोपयुज्यते । तस्मात्तदस्मभ्यं प्रयच्छेति भावः । रन्धय—रधेर्ण्यन्तस्य 'रधिजभोरचि' इति नुमागमः Sy. रधेर्ण्यन्तस्य 'रधिजभोः–' (Pa. 7. 1. 61.) इति नुमागमः । रन्धया नः—'द्वशमं चैतयोः' (RPR. 8. 38.)इति दीर्घः DDN. हे मघवन् ! रन्धय साधय देहि । . . . एतेषां हि यत् स्वं तत्तव नोपयोज्यं यत्त्वस्मदीयं तत् सततप्रवृत्तयोगत्वात् त्वदुपयोगायैव । अतोऽस्मभ्यं तद्देहीत्यर्थः । आहर च धनं यदयज्ञशीलानामिति SKN. शीघ्रं राधय संसाधय, अस्मद्वशं कुर्वित्यर्थः Dur.

५. कटां M. ६. कृतां M.

७. प्रेप्सन्ति प्रेप्सति M. प्रेस्पा P.

८. ०त्रोक्त P. N. 6. 32.

९. महग० M. गमन्दः P.

१०. Omitted in P.

११. N. reads मामागमिष्यतीति for मां गमिष्यतीति ।

१२. तदाप० P. १३. प्रगमंद्यः M. प्रगमंद P.

१४. ०सीति कु० M. अत्यकु० P. १५. योमेवंस्ति P. १६. वरः M. १७. प्रेषुः P.

१८. किं ते कुर्वन्ति कीकटेषु गावः । कीकटो नाम देशोऽनार्यनिवासः । कीकटाः किंकृताः । किं क्रियाभिरिति प्रेप्सा वा । नैव चाशिरं दुह्रे । न तपन्ति घर्मं हर्म्यम् । आहर नः प्रमगन्दस्य धनानि । मगन्दः कुसीदी । माङ्गदो मामागमिष्यतीति च ददाति । तदपत्यं प्रमगन्दः । अत्यन्तकुसीदिकुलीनः । प्रमदको वा योऽयमेवास्ति लोको न पर इति प्रेप्सुः । पण्डको वा । पण्डकः पण्डगः प्रार्दको वा । प्रार्दयत्याण्डौ आण्डावाणी इव व्रीडयति । तत्स्थम् । नैचाशाखं नीचाशाखो नीचैःशाखः । शाखाः शक्नोतेः । आणिररणात् । तन्नो मघवन् रन्धयेति । रध्यतिर्वशगमने N. 6. 32.; SKN. II. 501.

१९. VM. ignores मघवन् ॥ हे मघवन् ! धनवान् ! इन्द्र ! Sy.

सस॒र्परी॒रम॑ति॒ बाध॑माना बृ॒हन्मि॑माय ज॒मद॑ग्निदत्ता ।
आ सूर्य॑स्य दुहि॒ता त॑तान॒ श्रवो॑ दे॒वेष्व॒मृत॑मजु॒र्यम् ॥ १५ ॥

ससर्परीः[1][2] । ससर्परीनाम्ना[3] शक्तिना । कुशिकानामुत्पादितं[4] मोहम्[5] । बाधमाना । जमदग्निभिः[6] सूर्यक्षयादाहृत्य दत्ता[7] । अत्यन्तम्[8] । शब्दायते[9] । सेयं[10] सर्यस्य । दुहिता[11] । देवेषु[12] । अमृतत्वसाधनं[13] च । अजरणसाधनं[14] च । अन्नम्[15] । मन्त्रात्मिका[16]ऽऽतनोति[17], वागपि[18] देवेभ्यो[19] हव्यं वहतीति ।

सस॒र्परी॑रभर॒त्तूय॑मे॒भ्योऽधि॒ श्रव॒ः पाञ्च॑जन्यासु कृ॒ष्टिषु॑ ।
सा प॒क्ष्या॒३॒॑ नव्य॒मायु॒र्दधा॑ना॒ यां मे॑ पलस्तिजमद॒ग्नयो॑ द॒दुः ॥ १६ ॥

ससर्परीः[20] । रथकार[21]पञ्चमाश्चत्वारो वर्णाः पञ्चजनाः[22], तत्प्रभवासु । प्रजासु[23] । अधि[24] ।

---

१. 'ससर्परीवृचे' प्राहुरितिहासं पुराविदः । सौदासनृपयज्ञे वै वसिष्ठात्मजशक्तिना । विश्वामित्रस्याभिभूतं बलं वाक् च समन्ततः । वासिष्ठेनाभिभूतः स ह्यवासीदथ गाधिजः ॥ तस्मै ब्राह्मीं तु सौरीं वा नाम्ना वाचं ससर्परीम् । सूर्यवेश्मन आहृत्य ददुर्वै जमदग्नयः ॥ कुशिकानां मतिः सा वागमतिं तामपानुदत् । (VD. 3. 52. p. 107.) Sy.

२. ०र्परी P.

३. सर्परिर्नाम्ना P. ०नाम्नी is suggested for ०नाम्ना । ससर्परीः—सर्वत्र शब्दरूपतया सर्पणशीला वाक् Sy.

४. ०नाापपातदि० P.

५. अज्ञानम् Sy.

६. प्रज्वलिताग्निभिर्ऋषिभिरस्मभ्यम् । जमदग्निदत्ता—'दाण् दाने' इत्यस्य निष्ठायां 'दो दद्घोः' इति ददादेशः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरः Sy.

७. दत्त P. ८. त्यन्त P. प्रभूतं यथा भवति तथा Sy.

९. ०यन्ते M. नभसि शब्दं करोति Sy.

१०. सैषा Sy.

११. वाग्देवता Sy.

१२. इन्द्रादिषु Sy.

१३. अमृतलक्षणम् Sy.

१४. क्षयरहितम् । अजुर्यम्—'जृ वयोहानौ' । 'ऋहलोर्ण्यत्' । 'बहुलं छन्दसि' इत्युत्वम् । 'नञ्सुभ्याम्' इत्यन्तोदात्तत्वम् Sy.

१५. अन्न P.

१६. मन्त्रान्मिका P. मन्त्रात्मिका is an epithet of वाक् ।

१७. Omitted in M. समन्तात् स्वाहाकारवाचा तनोति Sy.

१८. वाग्वि M.

१९. देव्यः P.

२०. Omitted in P.

२१. ०कारं प० M.

२२. निषादपञ्चमाश्चत्वारो वर्णाः पञ्चजनाः । तत्सम्बन्धिनीषु Sy.

२३. प्रजायसु M. प्रजयासु P.

२४. अधिकं यथा भवति तथा Sy.

यत्, अन्नम्, अस्ति[1] तत् । इयम्[2] । एभ्यो[3] देवेभ्यः । क्षिप्रम्[4] । भरति[5] । पक्षः[6] सूर्यः पतनात्, तत्प्रभवा[7] । नवतरम्[8] । अन्नम्[9] । दधाना[10] भवति । पलस्तिशब्दः[11] पलितवचनः[12], मृत्युरहिता[13] अपलिता[14] आसन् जमदग्नयः, ते । याम्[15] । मह्यम् । दत्तवन्तः[16], इति[17] ।[18]

स्थिरौ गावौ भवतां वी॒ळुरक्षो॒ मेषा वि व॑र्हि॒ मा यु॒गं वि शा॑रि ।
इन्द्रः॑ पातु॒ल्ये॑ ददतां॒ शरी॑तो॒ररि॑ष्टनेमे अ॒भि नः॑ सचस्व ॥ १७ ॥

स्थिरौ[19] । अनसि युक्तौ गावौ[20] । स्थिरौ । भवताम्[21] । अक्षश्च । दृढः[22] । तथेयम्, ईषा[23] च । विभ्रष्टा[24] । मा[25] भूत्[26] । युगं[27] च । मा । भूद् विशीर्णम्[28] । पातल्यशब्दो[29] नूनमावितथाणि-[30]

---

१. विद्यते Sy.

२. सतर्परीः सर्वत्र गद्यपद्यात्मकत्वेन सर्पणशीला वाग्देवता । पाञ्चजन्यासु—'बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यम्' इति ञ्यप्रत्ययः । ञित्त्वादाद्युदात्तः Sy.

३. एभ्य P.    ४. क्षिप्र P.

५. भरतु सम्पादयतु Sy.

६. पक्ष P. पक्षस्य पक्षादिनिर्वाहकस्य सूर्यस्य दुहिता । पक्ष्या—पक्षे भवा । दिगादित्वाद्यत् । तित्स्वरितः Sy.

७. ०त्प्रभा वा P.

८. नव्यम्—नवशब्दाद् वस्यादित्वात् स्वार्थिको यत् Sy.

९. जीवनं वा Sy.

१०. मम कुर्वाणा भवतु Sy.

११. वलास्ति० M. पलास्ति P. पलस्तयः पलिता दीर्घायुषो जमदग्नयो मुनयः । पलस्तयो जमदग्नयः । कर्मधारयसमासः । समासस्वरः Sy.

१२. वलिकुव० M.    १३. ०हित्तता M.

१४. अवलि० M. ०लिताः P. अपलिताः is not clear and seems to be quite unnecessary.

१५. यत् P. वाचं सूर्यादाहृत्य Sy.

१६. अवदुः Sy.

१७. Omitted in P.

१८. VM. ignores सा ।

१९. राज्ञः सुदासो यज्ञेऽवभृथं कृत्वा यज्ञशालातो निर्गन्तुमिच्छन् रथेऽश्वादिकं युञ्जानो विश्वामित्रो रथाङ्गानि स्तौति Sy.    २०. शफली P. गच्छत इति गावावश्वौ Sy.    २१. ०वतम् P.

२२. दृढो भवतु Sy.    २३. दण्डश्च Sy.

२४. विनष्टः । वि बर्हि—'वृहि वृद्धौ' विपूर्वो बृहिर्विनाशे वर्तते । अस्मात् कर्मकर्तरि लुङि 'चिण् भावकर्मणोः' इति चिण् । 'चिणो लुक्' इति तप्रत्ययस्य लुक् । निघातः Sy.

२५. चा P.    २६. भवतु Sy.

२७. युगम्—युग शब्दे उञ्छादिषु रथाद्युपकरणेऽर्थे घञन्तत्वेन निपातनादगुणत्वम् । तत्र पाठादन्तोदात्तत्वम् Sy.

२८. शारि—'शॄ हिंसायाम्' इत्यस्य लुङि रूपम् Sy.

२९. वातुल्य M. पाल्यत० P. The passage पातल्यशब्दो नूनमावितथाणिवचनः should immediately follow पातल्ये and precede ददताम्

३०. ०नमणि० P.

वचनः, शरणं[1] दण्डा[2] नाम वरोप[3] आततः ? इन्द्रः । पातल्ये[4] । ददताम्[5], 'ददतिर्धारणकर्मा'[6] इति यास्कः । त्वं च, हे गरुड[7] ! अस्मान् । अभिसचस्व[8] ।[9] शीघ्रगमनायेति ।

बलं धेहि तनूषु नो बलमिन्द्रानळुत्सु नः ।
बलं तोकाय तनयाय जीवसे त्वं हि बलदा असि ॥ १८ ॥

निगदव्याख्याता[10] ['बलं धेहि' इति][11] उत्तरा, इति ।

अभि व्ययस्व खदिरस्य सारमोजो धेहि स्पन्दने शिंशपायाम् ।
अक्ष वीळो वीळित वीळयस्व मा यामादस्मादव जीहिपो नः ॥ १९ ॥

अभि व्ययस्व । खदिरस्य[12] सारेणाऽक्ष्योः करणं भवति, शिंशपया[13] चक्रयोः, तत इदमाह[14]—

---

१. शरीतोः विशरणात्प्राक् ।
२. भण्ड P.
३. परो च P.
४. पात्ल्ये P. पतनशीले कीलके Sy.
५. ददाताम् P. धारयतु Sy.
६. Cf. N. 2. 2. ददतेर्धारयतिकर्मणः'
७. अहिंसितप्रधिविशिष्ट ! हे रथ ! अरिष्टनेमे—पादादित्वात् षाष्ठिकमाद्युदात्तत्वम् Sy.
८. आभिमुख्येन Sy.
९. सङ्गतो भव Sy.
१०. A different hand adds बलं धेहि over निगदव्या० ।
११. The matter within the brackets has been supplied by the Editor. VM. does not explain this stanza because it is very easy. Sy. explains it in the following manner:—
हे इन्द्र ! नः अस्माकं तनूषु शरीरेषु बलं धेहि । नः अस्मत्सम्बन्धिरथवाहेषु । अनळुत्सु अनडुत्सु । बलं धेहि । तोकाय पुत्राय । तनयाय पौत्राय च । जीवसे चिरं जीवनाय । बलम् आयुर्विधेहि । एतादृशं दातृत्वं कुत इत्यत आह—त्वं बलदाः । बलं ददातीति बलदाः । असि । हि सर्वेषु लोकेषु प्रसिद्धोऽसि खलु । अनळुत्सु । 'वह प्रापणे' । 'अनसि वहेः क्विबनसो डश्च' इति क्विप् । अनसः सकारस्य डत्वम् । वहेर्यजादित्वात्सम्प्रसारणम् । 'वसुस्रंसुध्वंस्वनडुहां दः' इति हकारस्य दत्वम् । कृदुत्तरस्वरः । असि । हियोगादनिघातः । सिपः पित्त्वादनुदात्तत्वे धातुस्वरः ।
१२. खतिर० P.
१३. ०पयो P.
१४. हे इन्द्र ! Sy.

अक्षपार्श्वयोः, खदिरस्य[1]। सारम्[2] आणिम्[3]। आच्छादय[4]। तथा त्वं च बलम्[5]। स्पन्दनवेलायाम्[6]। शिंशपायाम्[7]। निधेहि[8]। हे अक्ष ! दृढ ! पुरुषैश्च[9] दृढीकृत[10] ! अत्यन्तं[11] दृढो[12] भव गमने। मा। अस्मान्[13]। अस्मात्। प्रयाणात्[14]। अवजीहिपः[15], वहापनं[16] भवत्युपरिस्थितस्याक्षभङ्ग[17] इति।

अ॒यम॒स्मान्व॒न॒स्पति॒र्मा च॒ हा मा च॑ रीरिषत् ।
स्व॒स्त्या गृ॒हेभ्य॒ आव॒सा आ वि॒मोच॑नात् ॥ २० ॥

अयमस्मान्[18]। शकटभूतोऽयम्[19]। अस्मान्[20]। वनस्पतिः[21]। मा। च। अत्याक्षीः[22]। मा। च। हिंसितान्[23] कार्षीत्। किञ्च, अविनाशहेतुर्भवतु[24]। आ। गृहप्राप्तेः[25]। आ च।

---

१. खदिरस्य 'अजिरशिशिर–' इत्यादिना किरच्प्रत्ययान्तत्वेन निपातनादन्तोदात्तः Sy.

२. सारेण हि आणिः क्रियते। तं खदिरस्य सारभूतमाणिम् Sy.

३. आणम् P.

४. अभितस्ततत्स्थानेषु दार्ढ्यार्थं निधेहि Sy.    ५. दार्ढ्यम् Sy.

६. रथस्य गमने सति Sy.

७. शिंशपाख्यदारुनिर्मिते रथस्य फलके Sy.

८. कुरु Sy.

९. अस्माभिः Sy.

१०. ०कृत्य P. वीळित—वीळयतेर्ण्यन्तस्य निष्ठायामिडागमः। 'निष्ठायां सेटि" (Pa. 6. 4. 52.) इति णेर्लुक् Sy.

११. अन्यतं M.

१२. यद्वास्मान् दृढीकुरु। वीळयस्व—आमन्त्रितस्याविद्यमानत्वेन पादादित्वादनिघातः Sy.

१३. अस्मान् M. and P. गच्छतोऽस्माद्रथाद् Sy.

१४. प्रयणा P. यामात्—'या प्रापणे' इत्यस्मात् 'अर्तिस्तुसुहुसृ–' इत्यादिना मन्प्रत्ययः। नित्त्वादाद्युदात्तः Sy.

१५. ०वजि हिषः M. भवजि हि वः P. मा पीपतः। जीहिपः—'ओहाक् त्यागे'। ण्यन्तस्य लुङि चङि रूपम्। अकारस्येकारश्छान्दसः Sy.

१६. वहावन M.

१७. न्तपत्यु० P.

१८. यजमान आत्मनः श्रेय आशास्ते Sy.

१९. ०टहूयोय० P. रथः Sy.

२०. रथारूढान् Sy.

२१. ०स्पतिः M. वनस्पतिनिर्मितः Sy.

२२. अन्त्या० P. त्याक्षीत् is suggested for अत्याक्षीः॥ त्याक्षीत्। हाः—'ओहाक् त्यागे'। लुङि 'मन्त्रे घस—' 'इत्यादिना सिचो लुक्। पुरुषव्यत्ययः। 'चवायोगे प्रथमा' इति न निघातः Sy.

२३. ०सितवान् P. अस्मान् विनाशयतु। रीरिषत्—'रिष हिंसायाम्' इत्यस्य ण्यन्तस्य लुङि चङि रूपम्। द्वितीयत्वान्निघातः Sy.

२४. ०वति M. and P. स्वस्ति भवतु Sy.

२५. यावद्गृहान् प्राप्नुयाम तावदस्मभ्यम्। गृहेभ्यः—ग्रहेः 'गेहे कः' इति कः। 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी Sy.

अवसानात्[1] । आ च[2] । अनडुहोर्विमोचनात्[3] ।

इन्द्रोतिभिर्बहुलाभिर्नो अद्य याच्छ्रेष्ठाभिर्मघवञ्छूर जिन्व ।
यो नो द्वेष्ट्यधरः सस्पदीष्ट यमु द्विष्मस्तमु प्राणो जहातु ॥ २१ ॥

[4]इन्द्रोतिभिः । इन्द्र[5] ! मार्गैः[6] । बहुभिः[7] । अस्मान्[8] । अद्य[9] । गच्छतां[10], प्रशस्यतमैः[11] । मघवन्[12] ! शूर[13] ! प्रीणय[14] । यः[15] । अस्मान् । द्वेष्टि[16] । अधरः[17] सः[18] । विपद्यताम्[19] । यम् । वयं[20] द्विष्मः[21] । तम्[22] । एव । प्राणः[23] । जहातु[24], शोभनैर्मार्गैरस्मान् प्रणयेति[25] ।[26]

परशुं चिद्वि तपति शिम्बलं चिद्वि वृश्चति ।
उखा चिदिन्द्र येषन्ती प्रयस्ता फेनमस्यति ॥ २२ ॥

परशुम् । भारतो[27] जनस्त्वामाश्रित्येन्द्र![28] युद्धार्थं[29] परशुम् । तीक्ष्णीकरोति[30] ।

---

१. अवसे—पञ्चम्यर्थे चतुर्थी । यावद्रथवेगावसानं तावत् । 'षोऽन्तकर्मणि' । क्विप् । चतुर्थ्येकवचने आतो लोपाभावश्छान्दसः । वृद्धिः । एकादेशस्वरः Sy.

२. व P. ३. यावद्रथयोजिताश्वविमोचनं तावत् स्वस्ति भवतु Sy.

४. 'इन्द्रोतिभिः' इत्याद्याश्चतस्रो वसिष्ठद्वेषिण्यः । पुरा खलु विश्वामित्रशिष्यः सुदा नाम राजर्षिरासीत् । स च केनचित् कारणेन वसिष्ठद्वेष्योऽभूत् । विश्वामित्रस्तु शिष्यस्य रक्षार्थमाभिर्ऋग्भिः वसिष्ठमशपत् । इमा अभिशापरूपाः । ता ऋचो वसिष्ठा न शृण्वन्ति Sy.

५. परस्य शापं करिष्यन्नादावात्मनो रक्षां कुरुते प्रथमेनार्धर्चेन Sy.

६. त्वदीयाभी रक्षाभिः Sy.

७. बह्वीभिः Sy. ८. Omitted in P.

९. अस्मिन् काले Sy.

१०. आग P. यातयतिर्वधकर्मा । यातयतीति यात् । 'सुपां सुलुक्—' इति शसो लुक् । यातः शत्रून् हिंसतः Sy. Both PP. and VM. construe it as one compound word. Sy. on the other hand takes it as two independent words and explains them accordingly. Sy. is evidently wrong.

११. प्रशस्यतराभिः Sy. १२. ०घव M. हे धनवन् ! Sy. १३. आर M. हे शौर्यवन् ! पराभिभवशक्त ! Sy.

१४. ०णयय M. १५. अध शपति—शत्रुर्द्वेष्यः Sy. १६. अस्मद्विषयामप्रीतिं करोति Sy. १७. ०धर P. निकृष्टः सन् Sy.

१८. स्य P. १९. पततु Sy. २०. वं P.

२१. चिस्मः P. २२. द्वेष्यम् Sy.

२३. देहमध्ये वर्तमानः पञ्चवृत्तिर्वायुः Sy.

२४. परित्यजतु Sy. २५. प्रीण० M.

२६. VM. ignores उ after यम् ॥ उशब्दौ पूरकौ Sy. २७. भर० M.

२८. M. adds च । ०द्धार्थं P.

२९. P. adds च after परशुम् ॥ यथा कुठारं प्राप्य वृक्षः Sy.

३०. वितपति । विशिष्टतापयुक्तो भवति । एवं मदीयो द्वेष्टा वितपतु Sy.

शिम्बलशब्दः[1] शिरोवचनः[2], यथा[3] कर्मः[4] कम्बलः[5], एवं शिमेर्वधकर्मणः शिम्बलः[6], वसिष्ठानां भेद्यं[7] शिरश्च । विवृश्चति[8] । येषतिः[9] स्रवणकर्मा[10], उखाशब्दः[11] शिरोवचनः, वसिष्ठा[12]. . .नां[13] च इन्द्र ! रुधिरस्रवम् । भरतं क्षिप्ता[14] । आस्यैः फेनम्[15] । विसृजति[16][17] ।

**न सायकस्य चिकिते जनासो लोधं नयन्ति पशु मन्यमानाः ।**
**नावाजिनं वाजिना हासयन्ति न गर्दभं पुरो अश्वान्नयन्ति ॥ २३ ॥**

न सायकस्य[18] । हे जनाः ! वासिष्ठो यो[19] जनो भरतानामिन्द्राश्रयसाधितसायकम्[20][21] । न[22] । जानामि[23] । ततश्च तपसि[24] स्तोत्रे वा लुब्धमृषिमिमं[25] विश्वामित्रम् । बलान्नयन्ति[26] ।

---

१. शम्बरशः० M. शब्दरं शब्दा P. शल्मलीकुसुमं यथानायासेन वृन्ताद् विच्छिद्यते एवं मद्द्वेष्टा Sy.
२. श्मीरो० P.
३. Omitted in P.
४. कमे P.
५. ०म्बलम् P.
६. शम्बरः M. शिबरः P.
७. वेद्यं M. वैद्यं P.
८. ति P. विच्छिन्नावयवो भवतु Sy.
९. Omitted in P.
१०. ०णरवर्मा P. स्रवन्ती Sy.
११. स्थालीव, स द्वेष्टा मदीयमन्त्रसामर्थ्येन प्रहृतः सन् Sy.
१२. Here M. shows omission by some dots.
१३. नाः M.
१४. प्रहृता Sy.
१५. फेनं मुखात् Sy.
१६. P. omits the commentary after वसिष्ठा ॥ उद्गिरतु Sy.
१७. VM. ignores the three चित् of this stanza. Sy. explains चित् in the sense of comparison.
१८. पुरा खलु तपसः क्षयो मा प्रापदिति शापान्निवृत्तं मौनिनं विश्वामित्रं वसिष्ठपुत्रा बद्ध्वाऽऽनीतवन्तः । तान् प्रति विश्वामित्रो ब्रूते Sy. विश्वामित्रस्य SKN.
१९. यत् M.
२०. सासित M.
२१. सोय० M. अवसानकारिणो विश्वामित्रस्य मन्त्रगणसामर्थ्यम् Sy. सायकस्येति षष्ठीश्रुतेः सामर्थ्यमिति शेषः । द्वितीयार्थे वा षष्ठी SKN.
२२. नेति प्रतिषेधश्चिकित इत्याख्यातेन सम्बध्यते SKN.
२३. भवद्भिर्न ज्ञायते Sy. न जानन्ति सामर्थ्यं वज्रस्य वज्रं वा SKN.
२४. नवसिः M.
२५. तपसः क्षयो मा भूदिति लोभेन तूष्णीं स्थितमृषिम् Sy. येनेन्द्रस्य स्तोतारं सन्तमृषिं लोधं लुब्धं मां स्वधर्मे तपसि वा SKN.
२६. बद्ध्वा स्वकीयं देशं प्रापयन्ति । एवं स्वसामर्थ्यं प्रदर्श्य विसदृशो वसिष्ठो मया सह स्पर्धितुं नार्हतीति धिक्करोति Sy. परिभूय प्रेरयन्ति यष्टिहस्ताः SKN. लुब्धमृषिं नयन्ति पशुं मन्यमानाः N. 4. 14.

पशुम्[1] एनम् । मन्यमानाः[2] । तच्चायुक्तं[3]...[4] वसिष्ठानामित्याह 'नावाजिनम्'[5] इति, अनश्वम्[6], अजादिकम्[7] । अश्वेन[8] सह प्रतिमुखमवस्थाप्य । न । हासयन्ति[9], किं चाश्वमेवाश्वेन[10] हेषयन्ति[11] । नच । गर्दभं[12] पापीयांसम्[13] । अश्वस्य[14] । पुरतः[15] । नयन्ति[16], पश्चादेव नयन्ति[17], इति[18] ।

**इम इन्द्र भरतस्य पुत्रा अपपित्वं चिकितुर्न प्रपित्वम् ।**
**हिन्वन्त्यश्वमरणं न नित्यं ज्यावाजं परि णयन्त्याजौ ॥ २४ ॥**

इम इन्द्र[19] । विरहितारित्वं प्राप्तुं[20] त्वदाश्रयबलात् इमे[21] । भरतस्य[22] । पुत्राः कुशिकाः ।

---

१. द्वितीयैकवचनस्य लुक् । पशुम् । लुप्तोपमं चैतत् । पशुमिवाजम् SKN.

२. पशु इति निपातः पशुशब्दसमानार्थः । पशुवन्मन्यमानाः Sy. मन्यमाना वसिष्ठा विदितैतद्वृत्तान्तेनेन्द्रेण नियमेनैते वज्रेण हनिष्यन्त इत्यभिप्रायः । तत्र तपस्यास्थित एव मयि इन्द्र एतान् पुरस्करिष्यतीति । ततश्चैते मया सह स्पर्धयिष्यन्त इतीति । तच्च न, यतो लोकेऽपि SKN.

३. ०युक्त M.

४. M. denotes omission here with certain dots.

५. ०जितम् M.

६. ०नश्चम् P. अवाजिनम् । वाचामिनो वाजिनः सर्वज्ञः । तद्विलक्षणं मूर्खजनम् Sy. नानश्वम् SKN.

७. P. omits words between न सायकस्य and अजादिकम् ।

८. रश्वे० P. वाजिना वागीशाः Sy.

९. हास्यास्पदं न कुर्वन्ति । तेन सह न स्पर्धन्त इत्यर्थः Sy. हसतिः स्पर्धायाम् । अश्वेन सह स्पर्धयन्ति SKN.

१०. त्वश्व० M. चश्वमोवा० P.

११. ०षन्ति P.

१२. रासभम् Sy. १३. वापी० M.

१४. अश्वात् Sy.

१५. पुरस्तात् Sy. अग्रतः SKN.

१६. एवमेव विसदृशो वसिष्ठो न मया स्पर्धितुमीष्ट इत्यर्थः Sy. अश्वे सति गर्दभं न दधतीत्यर्थः । एवं चेदिन्द्रोऽपि मयि स्थिते तानपरान् गर्दभकल्पान् वसिष्ठान् न कथञ्चित् पुरो धास्यतीति SKN.

१७. नयति P.

१८. M. omits नयन्ति पश्चादेव नयन्ति इति ॥ अथवा—स सायको वा वज्रः शापरूपोऽत्राभिप्रेतः । तं वा मदीयास्तव सायकं न जानन्ति नूनं यतो लोधं नयन्तीत्यादि समानव्याख्यातम् । तत्रैतत् स्याद् यत् सायकेन शापेनैनान् हिंसानीति । तच्च न, यतो मम त्यक्तशेषेणास्य, एषां च बहुवाजिनां कामात्मनां कः सङ्घर्षः । लोकेऽपि च नैव विप्रकृष्टान्तरालानां स्पर्धा भवति । नह्येकनिष्कधनः शतनिष्कधनेन सह स्पर्धते । तथाहि नावाजिनमित्यादि समानं पूर्वेण SKN. N. 4. 14.; SKN. II. 228.

१९. M. omits the *pratīka*. A different hand adds इमे इन्द्र.

२०. M. omits विरहितारित्वं प्राप्तुं ॥ P. reads वि त्वमप्राप्तुस् ।

२१. विश्वामित्राः Sy.

२२. भरतवंश्याः Sy.

वसिष्ठैरप[1]पित्वमेव । कर्तव्यतया जानन्ति । नतु । प्रपित्वम्[2] । ततश्च युद्धार्थ[3]मश्वम् । प्रेरयन्ति[4] । शत्रूणामरणीयम्[5] । स्वामिनि[6] स्थिरभक्ति[7] भटम् । इव । तथा ज्याबलं[8] धनुश्च । सङ्ग्रामे । मण्डली[9]कुर्वन्ति ।[10]

## III.54.

**इमं महे विदथ्याय शूषं शश्वत्कृत्व ईड्याय प्र जभ्रुः ।**
**शृणोतु नो दम्येभिरनीकैः शृणोत्वग्निर्दिव्यैरजस्रः ॥ १ ॥**

इमम्[11] ॥ उक्तगोत्रः प्रजापतिः, वैश्वदेवीयानि[12] सूक्तानि चत्वारि ॥ इमं स्तोमम् । महते । यज्ञियाय[13] । सुखकरम् । बहुकृत्वः[14] । स्तुत्याय[15] । वैश्वामित्राः[16] प्रभरन्ति[17] । स[18] चास्माकं[19]

---

१. पवित्व P. अपगमनं वसिष्ठेभ्यः Sy.

२. प्रवित्वम् P. प्रगमनं न जानन्ति । शिष्टैः सह तेषां सङ्गतिर्नास्ति । बाह्या एव त इत्यर्थः Sy.

३. ०द्धार्त्यम्० P. ४. ०यति M.

५. अरिमिव वसिष्ठान् प्रति Sy.

६. आग्रत्मनि P. M. omits शत्रूणामरणीयम् । स्वामिनि ।

७. सहजम् Sy. ८. ०वलयन् P.

९. वसिष्ठान् हन्तुं शरसन्धानेन चरन्ति Sy.

१०. VM. ignores इन्द्र ।

११. पञ्चमेऽनुवाके नव सूक्तानि । तत्र 'इमं महे' इति द्वाविंशत्यृचं प्रथमं सूक्तं त्रैष्टुभं वैश्वदेवं विश्वामित्रपुत्रस्य वाक्पुत्रस्य वा प्रजापतेरार्षम् । अत्रेयमनुक्रमणिका —'इमं महे द्व्यधिकोक्तगोत्रः प्रजापतिर्हि वैश्वदेवं ह' (KSA. 19. 54. p.16.) इति । अस्मिन् सूक्ते आद्याग्नेयी ततः पराः सप्तर्चो द्यावापृथिव्यास्ततः परा द्युदेवताका । दशमी द्यावापृथिव्यैकादशी सावित्री ततः परं 'सुकृत्' इति त्वाष्ट्री आर्भवी च, 'विद्युद्रथाः' इति मारुती सारस्वती च । ततः परं तिस्रो विश्वेन्द्राग्निदेवताकाः । 'स्वदस्व' इत्याग्नेयीति । एवं वैश्वदेवं सूक्तम् । सूक्तविनियोगो लैङ्गिकः । अग्निप्रणयने राजन्यस्य 'इमं महे' इति प्रतिपत् । 'पञ्चम्यां पौर्णमास्याम्' इत्यत्र सूत्रितम्—'इमं महे विदथ्याय शूषम्' (ASS. 2. 17.) इति Sy. १२. वश्वदेवानि P.

१३. विदथे यज्ञे मन्थनेन निष्पाद्यमानाय । विदथ्याय—'तत्र भवः' इत्यर्थे 'भवे छन्दसि' इति यत् । तित्स्वरितः Sy.

१४. ०कृत्यः M. भूयो भूयः Sy.

१५. ०त्यायं P. सर्वैः स्तुत्यायाग्नये । ईड्याय —'ईडवन्द—' इत्यादिनोदात्तत्वम् Sy.

१६. वैमि० P.

१७. प्रकर्षेण धारयन्ति । उच्चारयन्तीत्यर्थः । 'शश्वत्कृत्व ईड्याय प्र जभ्रुरिति स्वानामेवैनं तच्छ्रैष्ठ्यं गमयति' (AB. 1. 18.) इति ब्राह्मणानुसारेण महदादिगुणविशिष्टाय यजमानायेममग्निं प्रजभ्रुः प्रहरन्त्यृत्विज इति वा व्याख्येयम् । उत्तरोऽर्धर्चः समान एव Sy.

१८. Omitted in P.

१९. अस्मदीयमिमं स्तोमम् Sy.

स्तोमम् । रक्षसां[१] दमनकुशलैः । अनीकैर्[२]ज्वालालक्षणैः । अन्तरिक्षभवैः[३] । नित्यं समिद्धः[४] । अग्निः । श्रृणोत्विति[५] ।[६]

**महिं मुहे दिवे अंर्चा पृथिव्यै कामों म इच्छञ्चरति प्रजानन् ।**
**ययोर्ह स्तोमें विदथेषु देवाः संपर्यवो मादयन्ते सचायोः ॥ २ ॥**

महि महे[७] । महान्तं[८] स्तोमम् । द्यावापृथिवीभ्याम्[९] । उच्चारय[१०] । मदीयः[११] । कामः[१२] स्वाभिलषितम् । इच्छन्[१३] । द्यावापृथिवी[१४] प्रति चरति गच्छति । तयोर्महिमानम्[१५] । प्रकर्षेण जानन् । ययोः[१६] । खलु । स्तोमे[१७] क्रियमाणे । यज्ञेषु । देवाः[१८] । सपर्या[१९] मनुष्यैः[२०] क्रियमाणामिच्छन्तः । सह । सर्वे माद्यन्ति प्रतिगृह्णन्ति ज्यामि[२१]त्यर्थः[२२] ।[२३]

---

१. परेषां दमनकुशलैः, दमे गृहे विद्यमानैर्वा । दम्येभिः—'तत्र साधुः' इति यत् । 'यतो नावः' इत्याद्युदात्तत्वम् Sy.

२. अनेकैः P. तेजोभिर्युक्तः सन् Sy.

३. दिवि भवैस्तेजोभिः (युक्तः) । दिव्यैः—दिवमर्हतीत्यर्थे 'छन्दसि च' इति यप्रत्ययः Sy.

४. निरन्तरम् । अजस्रः—'जसु मोक्षणे' नञ्पूर्वः । 'नमिकम्पि—'इत्यादिना ताच्छीलिको रप्रत्ययः । नञा समासे तस्य स्वरः Sy.

५. ०णोतीति P.
इमं स्तोमं श्रृणोतु Sy.

६. VM. explains श्रृणोतु once only.

७. हे स्तोतः ! Sy.

८. महत्वै Sy.

९. दिवे द्युलोकदेवतायै महत्यै पृथिव्यै च । पृथिव्यै—'उदात्तयणः—' इति विभक्तेरुदात्तत्वम् Sy.

१०. त्वं स्तोत्रं कुरु Sy.

११. मम Sy.

१२. काम P. मनोरथः Sy.

१३. सर्वान् भोगानिच्छन् Sy.

१४. द्यावापृथिव्यौ ॥ is suggested for द्यावापृथिवी ॥ सर्वत्र वर्तते Sy.

१५. महि महत् Sy.

१६. यायोः M. द्यावापृथिव्योः Sy.

१७. स्तोत्रे Sy.

१८. देवाः स्तोतारो वा Sy.

१९. पूजाकामाः । सपर्यवः—सपर्यामिच्छतीत्यर्थे सुपः क्यच् Sy.

२०. आयोर्मनुष्यस्य Sy.

२१. ज्योमि० P. ताम् is suggested for ज्याम् ॥

२२. ०त्यर्त्यः P.

२३. VM. ignores महे and आयोः ॥ महत्यै । मनुष्यस्य Sy.

युवोर्ऋतं रोदसी सत्यमस्तु महे षु णः सुविताय प्र भूतम् ।
इदं दिवे नमो अग्ने पृथिव्यै सपर्यामि प्रयसा यामि रत्नम् ॥ ३ ॥

युवोः । हे द्यावापृथिवी ! युवयोराश्रितविषयम् । ऋतम् आनृशंस्यम् । सत्यम् । अस्तु । महते । अभ्युदयाय । अस्माकम् । सुष्ठु । प्रभवतम् । इदम् । नमः । हे अग्ने ! द्यावापृथिवीभ्याम् । किच, एने अन्नेन । पूजयामि । रत्नं च । याचे ।

उतो हि वां पूर्व्या आविविद्र ऋतावरी रोदसी सत्यवाचः ।
नरश्चिद्वां समिथे शूरसातौ ववन्दिरे पृथिवि वेविदानाः ॥ ४ ॥

उतो हि वाम् । अपिच । हे सत्ययुक्ते ! द्यावापृथिवी ! वाम् । एव । पर्वकालभवाः । सत्यवाच ऋषयः । अभिलषितं ज्ञापितवन्तः । नूतना मनुष्याः । अपि ।

१. युवो P.
२. द्यावापृथिव्यौ is suggested for द्यावापृथिवी ॥ हे द्यावापृथिव्यौ ! Sy.
३. ०षयाम् P.
४. यथार्थम् Sy.
५. यज्ञसमाप्त्यर्थम् । सुविताय—'इण् गतौ' अधिकरणे क्तः । शोभनं गम्यतेऽस्मिन्निति तत् सुवितम् । उवङादेशश्छान्दसः Sy.
६. नः—संहितायां 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम् Sy.
७. सु—संहितायां 'सुञः' (Pa.8.3.107.) इति षत्वम् Sy.
८. भूतम्—भवतेर्लोटि 'बहुलं छन्दसि' इति शपो लुकि रूपम् । यद्वा छान्दसे लुङि सिचः'गातिस्था—' इति लुक् । निघातः Sy.
९. नमः अस्तु Sy.
१०. दिवे पृथिव्यै—'नमःस्वस्ति—' (Pa. 2.3.16.) इत्यादिना चतुर्थी Sy.
११. एन P.
१२. अन्नेन P. हविर्लक्षणेनान्नेन Sy.
१३. परिचरामि । सपर्यामि—कण्ड्वादिः परिचरणे वर्तते । प्रत्ययस्वरः Sy.
१४. उत्तमं धनम् Sy.
१५. यातिर्याच्ञाकर्मा । ईमहे इत्यादिषु (Ngh.3.19) पठितत्वात् । यातेर्लटि रूपम् । वाक्यभेदादनिघातः Sy.
१६. त्वाम् M. and P.
१७. ऋतं सत्यम्, तद्वत्यौ ! Sy.
१८. हे द्यावापृथिव्यौ ! Sy.
१९. युवाभ्याम् Sy.
२०. खलु Sy.
२१. ०भवः P. पूर्व भवाः पुरातनाः Sy.
२२. महर्षयः Sy.
२३. तं तमपेक्षितमर्थं लेभिरे । आविविद्रे—'विद्लृ लाभे' इत्ययमुभयपदी । लिटि 'इरयो रे' इति रे इत्यादेशः । 'सह सुपा' इत्यत्र 'सह' इति योगविभागादाङा सह समासः Sy.
२४. ०तनं P. अद्यतना मनुष्याः Sy.
२५. च Sy.

वाम्[१] । सङ्ग्रामे[२] । शूरसम्भजनस्थाने[३] । स्तुवन्ति[४] । हे[५] पृथिवि[६] ! विद्वांसः[७] ।

**को अद्धा वैद् क इह प्र वौचद्देवाँ अच्छा पथ्याः का समैति ।**
**ददृश्र एषामवमा सदांसि परेषु या गुह्येषु व्रतेषु ॥ ५ ॥**

को अद्धा[८] । को मनुष्यः । सत्यम्[९] । वेत्ति । को वा । मनुष्येभ्यः एतत्[१०] । प्रवोचति[११] । को वा । मार्गः[१२] । देवान् । अभि[१३] । समेति[१४], येन गत्वा याथात्म्यं जानीमः । एषां देवानां दिवि स्थितानाम्[१५] । अवमान्यधोमुखानि[१६] । स्थानानि । दृश्यन्ते, **'देवगृहा वै नक्षत्राणि'**[१७] इति[१८] ब्राह्मणम् । परमेषु[१९] दिवि स्थितेषु । मनुष्याणां परोक्षेषु[२०] । कर्मसु[२१] सत्सु । यानि[२२] दृश्यन्ते देवगृहा[२३] दृश्यन्ते, तत्रत्यानां देवानां कर्माणि परोक्षाणि भवन्तीत्यर्थः[२४] ।

---

१. वा M. युवयोर्माहात्म्यम् Sy.
२. सङ्गमननिमित्ते युद्धे । समिथे—'इण् गतौ' । 'समीणः' (Uṇādi 2. 168.) इति थक् प्रत्ययः । प्रत्ययस्वरः Sy.
३. शूराणां सातिर्लाभो यस्मिन् तस्मिन् Sy.
४. अतो द्यावापृथिव्यौ स्तुवन्ति Sy.
५. Omitted in P.
६. ०थिवी M. and P.
७. जानन्तः Sy.
८. अद्धां P.
९. सत्यभूतं तादृशमर्थम् । अद्धा—स्वरादिष्वन्तोदात्तत्वेन पठितत्वादन्तोदात्तः Sy.
१०. इह अस्मिन् प्रज्ञातमर्थम् Sy.
११. प्रावो० M. प्रावोचत् is suggested for प्रवोचति । From the analogy of वेद paraphrased as वेत्ति by VM., a reading in the present tense is desirable. So it would be better to read प्रवक्ति ॥ प्र ब्रवीति । वोचत्—'ब्रूञ् व्यक्तायां वाचि' । लुङि 'ब्रुवो वचिः' इति वच्यादेशः । 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङादेशः । 'वच उम्' इत्युमागमः । निघातः Sy.
१२. का पथ्या पथि साधुः समीचीनः को वा मार्गः Sy.
१३. आभि P.
अभिलक्ष्य Sy.
१४. समरेति P. सम्यक् प्राप्नोतीति । इममर्थं न कश्चिज्जानाति, न कोऽपि ब्रवीति Sy.
१५. किं ते देवा विद्यन्ते ? बाढमित्याह—एषां दिवि स्थितानां नक्षत्ररूपाणां देवानाम् Sy.
१६. अवोमु० P.
१७. ०क्षत्रा P.
१८. ति P. T.B. 1.5.2.6.
१९. तथाप्युत्तमेषु Sy.
२०. पक्षे० P.
दुर्ज्ञानेषु Sy.
२१. कर्मसु अनुष्ठितेषु Sy.
२२. यानि दिवि देवस्थानानि लभ्यन्ते तत्रागन्तुं को मार्ग इति वेदमन्तरेण न कश्चिज्जानातीत्यभिप्रायः Sy.
२३. ०वग्रहा P.
२४. ०त्यर्त्थः P.

कविर्नृचक्षा अभि षीमचष्ट ऋतस्य योना विघृते मदन्ती ।
नाना चक्राते सदनं यथा वेः समानेन क्रतुना संविदाने ॥ ६ ॥

कविर्नृचक्षाः । कविः[1] । मनुष्याणां[2] द्रष्टा भगवानिन्द्रः । द्यावापृथिवी[3] । सर्वतोऽभि-[4]पश्यति । ऋतस्य[5] । योनिरि[6]त्युदकनाम[7], तस्मिन् प्रादुर्भूते सति । मदन्ती[8], मदप्रकारे[9] उक्तः । विघृते[10] परस्परक्षरणे, 'समानमेतदु[11]दकमुच्चैत्य[12]व चाहभिः[13]' इत्येतदभिप्रायम् । 'एतद्देवानयोः[14] समानं[15] कर्म यदेव[16] प्रीणनं द्यौः[17] पृथिव्यै करोति, तदेव[18] पृथिव्यपि[19] दिवः, एतदेव संवेदनम्[20]' इति[21] ते एते द्यावापृथिवी । यथा[22] । शकुन्तस्य[23] कुलायान्यावासाय[24] दृश्यन्ते, एवं देवमनुष्याणामावासाय । नानाविधम्[25] । सदनम्[26] । कुरुत[27] इति ।

---

१. कान्तदर्शी Sy.

२. नृणां द्रष्टा सूर्यः Sy.

३. द्यावापृथिव्यौ Sy.

४. ०भिविप० M. अचष्ट—"चक्षिङ् व्यक्तायां वाचि' इत्यस्य लङि 'स्कोः संयोगाद्योरन्ते च' इति ककारलोपः । निघातः Sy.

५. जलस्य Sy.

६. स्थानेऽन्तरिक्षे Sy.

७. Ngh. I.12.

८. ०दन्ति P. मदन्त्यौ is suggested for मदन्ती ॥ हृष्यन्त्यौ Sy.

९. ०कारा P.

१०. ०घृतेव P. घृतमस्या ओषधयो जलममुष्या इति । एवंविधरसोपेते Sy.

११. ०दुक्तमु० M.

१२. ०मुच्चेत्यप P.

१३. वहाभिः P. Sy. adds the rest part of the stanza भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः' । RV. 1.164.51.

१४. ०तवदेवानयो P.

१५. ०मायं P. १६. ०देवा P.

१७. द्यौ P. १८. तदे P.

१९. व्यपि P.

२०. By the matter within the commas VM. explains समानेन। क्रतुना and संविदाने॥ परस्परप्रीणनाख्येनैकेन क्रतुना कर्मणा संविदाने परस्परमैकमत्यं प्राप्ते ते द्यावापृथिव्यौ। संविदाने—'विद ज्ञाने' इत्यस्य 'समो गमि–' इत्यादिनात्मनेपदे शानच् । चित्त्वादन्तोदात्तः Sy.

२१. अपि P.

२२. तत्र दृष्टान्तः Sy.

२३. यथा वेः कुलायं नाना भवति तद्वत् Sy.

२४. ०न्यावसा० P.

२५. पृथग्भूतम् Sy.

२६. स्थानम् Sy.

२७. ०रुते D. चक्राते । तथाच श्रुतिः—'इमौ वै लोकौ सहास्तां तौ व्यैताम्' (AB. 4.27.) इति Sy.

**सुमान्या वियुते दूरेअन्ते ध्रुवे पुदे तस्थतुर्जागुरूके ।**
**उुत स्वसारा युवुती भवन्ती आदु ब्रुवाते मिथुनानि नाम ॥ ७ ॥**

समान्या । समानपरिणामे[1] वा[2], समानप्रयोजने वा, एकीभूते[3] वा[4] । वियुते[5] पृथग्भूते[6] च । दूरे ययोः पर्यन्तौ[7] विस्तृत[8]योस्तादृशे[9] । अपिच[10] । स्वसृस्थानीये[11] । तरुण्यौ[12] । भवन्त्यौ[13] ।

---

१. समाने परस्परप्रीणनाख्येन कर्मणैकमत्यं गते । समान्या—'सुपां सुलुक्—'इति विभक्तेर्डादेशः Sy.
आकारो द्विवचनस्थानिकः । परिमाणतः हसमाने इत्यर्थः SKN.
सामान्यावेते द्यावापृथिव्यौ समानपरिमाणे Dur.

२. ०णामेव P.

३. वेकी० P.

४. ०तेव P.

५. ०युतः M. वियुज्य वर्तमाने Sy. एवमेतस्मिन् मन्त्रे 'वियुते' इत्यस्य पदस्य द्यावापृथिवीविशेषणत्वम् । द्यावापृथिवीशब्दश्चात्राध्याहार्यः 'दूरे अन्ते' इत्येवमादीनां तथोपपत्तिदर्शनात् Dur.

६. ०थमते P. सह सत्यौ विमिश्रिते पृथग्भूते इत्यर्थः SKN.
विमिश्रीभूते Dur.

७. दूरेऽन्तोऽवसानं ययोस्ते दूरेअन्ते अविनाशिन्यौ ते द्यावापृथिव्यौ । दूरेअन्ते—'इण् गतौ' 'दुरीणो लोपश्च' (Uṇādi 2.177.) इति रक्प्रत्ययो धातोर्लोपश्च । 'रो रि' (Pa.8.3.14.) इति रेफलोपः । 'ढ्लोपे—'इति दीर्घः । अन्तशब्दः अमेः 'असिहसि—' इत्यादिना तन्प्रत्ययान्तः 'सप्तम्युपमान—' इति बहुव्रीहिः । 'हलदन्तात्—'इति सप्तम्या अलुक् । पूर्वपदस्वरः Sy. दूरेअन्ते द्यावापृथिवीनामधेयमेतत् (Ngh. 3.30.)। तयोर्ह्यतिमहत्त्वाद् दूरतस्तेन तयोच्यते SKN. महत्वाद् दूरे अन्ते च । न हि द्यावापृथिव्योरन्तोपलब्धिरस्ति Dur.

८. विसृजत० P.

९. ०दृचे M.
०स्तन्दृ० P.

१०. अवि M.
अपिचैते Dur.

११. भगिन्यौ, एकस्मादात्मनो जाते इति । स्वसारा—'न षट्स्वस्रादिभ्यः' इति ङीपः प्रतिषेधः Sy. स्वसारौ भगिन्यौ । एकस्मात् कारणात्मनो जातत्वात् SKN. भगिन्यौ । सहोत्पत्तित्वात् Dur.

१२. ०रुण्यो P. नित्यतरुणे Sy. सर्वदैव परस्परोपकारकरणेन मिश्रीभवन्त्यौ SKN. सम्मिश्रीभवन्त्यौ परस्परसम्भोगेन Dur.

१३. तस्थतुरित्यन्वयः Sy.

ध्रुवे[1]। स्थाने[2]। तिष्ठतः[3], यत्र स्थिते न निपततस्तद् ध्रुवम्[4]। जागरणशीले[5] भूत्वा नवतरं तिष्ठत[6] इत्यर्थः[7]। अन्यानि[8]। अपि। एवंजातीयकानि मिथुनानि[9]। नामधेयानि[10] 'उर्वी' 'पृथ्वी' 'बहुले' 'दूरे'[11] इत्यादीनि। ब्रुवाते[12], दृश्यमाने, तथाच[13], द्यावापृथिव्योर्दर्शन[14] एवंजातीयकानि नामानि

---

१. अविनाशिनि Sy.
ध्रुवं नित्यं, तत्स्थानं शाश्वतं यत्स्थानमन्तरिक्षाख्यं तस्मिन् SKN.
सप्तम्येकवचनमन्तरिक्षविषयम्। ध्रुवं शाश्वतम्, एतस्मिन् पदे आधारभूते (अन्तरक्षय्ये) अन्तरिक्षस्य क्षयो नास्ति प्रतिद्वन्द्वयभावात्। तच्चैतयोर्द्यावापृथिव्योः प्रतिष्ठा। तस्मिन् Dur.

२. अन्तरिक्षे Sy.

३. तिष्ठतः। तथाच—'सर्वमिदमाकाशं प्रोतं च'। Cf. 'आकाशएव तदोतं प्रोतं चेति' SB. 14. 6. 8. 7. इति श्रुतिः SKN. एते तस्थतुः। स्थितवत्यौ Dur.

४. रूपम् P. The passage यत्र स्थिते न पततस्तद् ध्रुवम् should immediately follow ध्रुवे and precede स्थाने।

५. जागरणशीले सत्यौ। जागरूके—'जागृ निद्राक्षये' इत्यस्मात् ताच्छील्यार्थे 'जागुरूकः' (Pa.3.2.165.) इत्यूकप्रत्ययः। प्रत्ययस्वरः Sy. जागरणशीले धृतिद्योतनादौ स्वव्यापारे प्रमादवर्जिते इत्यर्थः SKN.
सर्गादारभ्य जागरणशीले स्वं स्वमधिकारम्प्रति Dur.

६. ०ष्ठन्त P.

७. ०त्यर्थः P.

८. अनन्तरम् Sy. आदिति पदपूरण इवार्थे वा SKN.

९. द्वन्द्वानि Sy.
द्विवचनसंयुक्तानि SKN.
आत्मनो मिथुनानि द्विवचनसम्बद्धानि Dur.

१०. दूरेअन्ते, रोदसी, पुरोहिते इत्यादीनि नामानि Sy. बहुवचनस्यात्र लुक्। नामानि स्वानि 'स्वद्मे पुरन्ध्री' इत्यादीनि SKN.
स्तोतॄणां नाम नामानि...स्तुतिनामभिः 'स्वद्मे पुरन्धी' इत्येवमादिभिरिति Dur.

११. Omitted in M.

१२. ते परस्परं ब्रूतः। उर्व्यादिभिर्द्वन्द्वनामभिर्द्यावापृथिव्यावुच्येते इत्यर्थः Sy. कथयत इव स्तोतृभ्यः SKN. अर्थवमेते वियुते च सम्मिश्रीभूते च सत्यौ द्यावापृथिव्यौ ब्रुवाते इव प्रकथयत इव Dur.

१३. M. has कथयत् P. has तथा य० for तथाच।

१४. ०थिवी द्यौ० P.

नि[1]पतन्तीत्यर्थः[2] ।[3]

**विश्वेदेते जनिमा सं विविक्तो महो देवान्बिभ्रती न व्यथेते ।**
**एजद्ध्रुवं पत्यते विश्वमेकं चरत्पतत्रि विषुणं वि जातम् ॥ ८ ॥**

**विश्वेदेते**[4] । विश्वानि[5] । एव[6] । एते[7] । जातानि[8] भूतानि । विस्तीर्णतया संविविक्तः[9] पृथक्पृथक्, असङ्कीर्णं[10] धारयतः । किञ्च महतः । देवान्[11] अग्निवाय्वादीन् । बिभ्राणे[12] । न । चलतः[13] । तथाऽनयोः[14], एजत्[15] चलं मनुष्यादिकम्[16] । ध्रुवं[17] पर्वतादिकं च । सर्वम्[18] । एकीभूतम्[19] । पतति वर्तते[20], यथा नानादिग्भ्यः समागता[21] नगरद्वारि । तदेवाऽऽह—चरत्[22] पश्वादिकम् । पतनशीलं[23] च शकुन्यादिकम् । एवं[24] विष्वग्गमनम्[25] । भूतजातम्[26] । अनयोर्विविधं पततीति[27] ।

---

१. निष्प० P.
२. ०त्यर्थ: P. 'समानं सम्मानमात्रं भवति । मात्रा मानात् । दूरं व्याख्यातम् । अन्तोऽन्तते:' N. 4.25.; SKN. II. 272.
३. If VM. interprets आत् as अन्यानि and उ as अपि, he ignores no word.
४. वविदेते P.
५. सर्वाणि Sy. ६. अपि Sy.
७. द्यावापृथिव्यौ Sy.
८. भूतजातानि Sy.
९. ०विवक्तः P. अवकाशप्रदानेन संविभज्य कुरुतः । 'विचिर् पृथग्भावे' । जुहोत्यादि: । निघातः Sy.
१०. संकी० P.
११. इन्द्रसूर्यादीन् सरित्समुद्रपर्वतादींश्च Sy.
१२. बिभ्राणे अपि ते । बिभ्रती—'डुभृञ् धारणपोषणयोः' इत्यस्य शतरि 'नाभ्यस्ताच्छतुः' इति नुमभावः । अभ्यस्तस्वरः Sy.
१३. बल० M. चलताः P. खिद्येते Sy.
१४. था० P.
१५. जङ्गमात्मकम् । एजत्—'एजृ कम्पने ।' शतरि रूपम् Sy.
१६. P. adds च after मनुष्यादिकम् ।
१७. स्थावरात्मकम् Sy.
१८. जगत् Sy.
१९. एकं स्थानं पृथिवीमेव Sy.
२०. बत्तते P. अभिगच्छति Sy.
२१. ०गम P.
२२. चरं P. चञ्चलं पशुजातम् Sy.
२३. पक्षिजातं च Sy.
२४. एव P.
२५. विष्वक् नानारूपमनयोर्मध्ये वि तिष्ठते । योग्यक्रियाध्याहारः Sy.
२६. जाताम् P.
२७. अभिगच्छति । पत्यते—'पद गतौ' दिवादिरात्मनेपदी । दकारस्य तकारो व्यत्ययेन । निघातः Sy.

सना॑ पु॒रा॒णमध्ये॑म्या॒रान्म॒हः पि॒तुर्ज॑नि॒तुर्जा॒मि तन्नः॑ ।
दे॒वासो॒ यत्र॑ पनि॒तार॒ एवै॑रु॒रौ प॒थि व्यु॑ते त॒स्थुर॒न्तः ॥ ९ ॥

सना पुराणम्[1] । अस्माकम्[2] । पितुर्दिवः[3] । जनयितुर्भूमेश्च[4] । तत्[5] । सनातनम् । पुराणम्[6] । जामित्वम्[7] । अध्येमि[8] पठामि, उच्चारयामि । सम्प्रति[9], आराच्छब्दोऽन्तिकवचनः[10]' सम्प्रतीत्यर्थः[11] । देवाः । यस्मिन्[12] जामित्वे मया[13] कथ्यमाने[14] । गमनैरागत्य[15] । मां[16] स्तुवन्तः, सुष्ठु त्वया स्तुतम्[17]' इति वननम् । विस्तीर्णे । पथि[18] । अन्तरिक्षे[19] । द्यावापृथिव्योरन्तः[20] । स्तोत्रश्रवणार्थं[21] स्थिताः[22], स्तुतिभिः[23] परस्येवान्तरिक्षस्य[24] देवैर्बहुभिर्व्युतत्वमिति[25], अस्योत्तरा भूयसे निर्वचनाय[26] ।

---

१. हे द्यौः ! Sy.

२. ०कम P.

३. दिवु० P. सर्वस्य पालयित्र्याः Sy.

४. ०र्भूमेश्च P. जनयित्र्यास्तव Sy.

५. Omitted in M.

६. पुरा P. पूर्वक्रमागतम् । पुराणम्—पुराशब्दात् शैषिकार्थे 'सायंचिरम्—' इति ट्युप्रत्ययः । 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' (Pa. 4.3.105.) इति निपातनात्तुडभावः । निपातनादेवान्तोदात्तत्वम् Sy.

७. सर्वमेकस्माज्जातमिति द्यौर्भगिनी भवति । तादृशं भगिनीत्वम् Sy.

८. ०मित्वमध्यमि P. स्मरामि । दिवः पितृत्वे जनयितृत्वे च मन्त्रवर्णः—'द्यौर्मे पि॒ता ज॑नि॒ता नाभि॒रत्र॑' (RV.1.164.33.) एमि—'इक् स्मरणे' । अदादिः । लटि रूपम् । निघातः Sy.

९. अधुना Sy.

१०. अरा० P.

११. ०म्प्रत्यर्त्थः P.

१२. यस्यां दिवि Sy.

१३. वयं P.

१४. कत्थ्य० P.

१५. गमने राग M. गमनसाधनैः स्वैः स्वैर्वाहनैः सहिताः सन्तः Sy.

१६. त्वाम् Sy.

१७. सुष्ठु त्वम् P.

१८. वति P. नभसि Sy.

१९. विविक्ते । व्युते—'वेञ् तन्तुसन्ताने' । कर्मणि क्तः । यजादित्वात्सम्प्रसारणम् । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरः Sy.

२०. मध्ये Sy.

२१. ०णार्त्थं P.

२२. स्तितः P. तस्थुः । तत्र स्थिता देवा मदीयं स्तोत्रं शृण्वन्त्विति भावः । तिष्ठतेर्लिटि रूपम् । यत्रयोगादनिघातः Sy. २३. तन्तुभिः P.

२४. पदं स्वेवा० M.

२५. ०भिर्वृत्त० P. व्युते विविक्ते Sy.

२६. VM. ignores महः ॥ महः महत्याः Sy.

**इमं स्तोमं रोदसी प्र ब्रवीम्यृदूदराः शृण्वन्नग्निजिह्वाः ।**
**मित्रः सम्राजो वरुणो युवान आदित्यासः कवयः पप्रथानाः ॥ १० ॥**

इमं स्तोमम्[१]। हे द्यावापृथिवी[२] ! युवयोरिमम्[३]। स्तोमम्[४]। अहं प्रब्रवीमि[५]। मृदु-शब्दपर्याय ऋदु[६]शब्द इति यास्कः[७], मृदुः[८] सोम उदरे येषाम्। अग्निजिह्वानां[९] देवानां ते। तं[१०] शृण्वन्तु[११]। मित्रश्च। वरुणश्च। अन्ये च सम्राजः[१२]। युवानः[१३]। अदितेः पुत्राः[१४]। क्रान्तदर्शनाः[१५]। विस्तीर्णा[१६] भवन्तः।

**हिरण्यपाणिः सविता सुजिह्वस्त्रिरा दिवो विदथे पत्यमानः ।**
**देवेषु च सवितः श्लोकमश्रेरादस्मभ्यमा सुव सर्वतातिम् ॥ ११ ॥**

[हिरण्यपाणिः[१७]।] हिरण्यपाणिः[१८]। सविता। सुवाक्[१९]। दिवश्च[२०]। यज्ञे। अह्नस्त्रिः[२१]।

---

१. Omitted in M. previously and the omission shown by dots added later in different handwriting. इति P.
२. हे द्यावापृथिव्यौ ! Sy. ३. ०वयोः M. युष्मदीयम् Sy. ४. स्तोत्रम् Sy.
५. प्रकर्षेण वदामि Sy. ६. ऋभुश० M. इव P. ७. Cf. N. 6. 4.
८. ऋदूदराः—ऋदु मृदु उदरं येषां ते ऋदूदराः। यद्वा मृदुरुदरे सोमो येषां ते ऋदूदराः Sy. ९. ०मग्निर्जिह्वा P. अग्निर्जिह्वास्थानीयो येषां ते तथोक्ताः। त्रिचक्रादित्वादन्तोदात्तत्वम् Sy.
१०. ताः P.
११. तदिदं स्तोत्रं शृण्वन्तु । शृणवन्–'श्रु श्रवणे' इत्यस्य लेटयडागमः Sy.
१२. M. omits words between शृण्वन्तु and सम्राजः ॥ सम्यग्दीप्यमानाः Sy. १३. नित्यतरुणाः। यद्वा। यजमानानभिमतफलैर्मिश्रीकुर्वन्तः Sy.
१४. पुत्राः M. P. omits it.
१५. ०र्शनं P. १६. स्वानि स्वानि कर्माणि प्रथयन्तो मित्रादयो देवाः। पप्रथानाः—'प्रथ प्रख्याने' इत्यस्य कानचि रूपम्। चित्त्वादन्तोदात्तः Sy.
१७. The *pratika* has been supplied by the Editor.
१८. दानार्थं हिरण्यं पाणौ हस्ते यस्य स तथोक्तः । यद्वा देवकर्तृकयागे सवितुर्ऋत्विग्भूतस्य हस्ते प्राशित्रं भक्षणार्थमध्वर्यवो ददुः । तत्प्राशित्रं तस्य हस्तौ चिच्छेद । ततोऽध्वर्यवो हिरण्मयौ हस्तौ कृत्वा सन्दधुः । ततोऽयं हिरण्यपाणिः । तथाच कौषीतकम्—'सवित्रे प्राशित्रं प्रतिजह्रुस्तत्तस्य पाणी प्रचिच्छेद तस्मै हिरण्मयौ प्रतिदधुस्तस्माद्धिरण्यपाणिः' (Kau. Br.6.13.) इति 'हर्य कान्तिगत्योः' 'हर्यतेः कन्यन् हिर च' इति कन्यन्, हिर इत्ययमादेशो धातोः। नित्त्वादाद्युदात्तः। बहुव्रीहौ पूर्वपदस्वरः । हिरण्यं कस्मात् ? ह्रियत आयम्यमानमिति वा ह्रियते जनाज्जनम् (N. 2. 26.) 'पाणिः पणायतेः पूजाकर्मणः' (N. 2. 26.) इति Sy. १९. सुपा P. शोभनवाक् Sy.
२०. दिवं च P. नभसः सकाशात् Sy.
२१. अरजस्त्रीः M. त्रिषु सवनेषु Sy.

आगच्छन्[1] । अथ प्रत्यक्षः[2]—स त्वं हे सवितः[3] ! मदीयां वाचं स्तुतिरूपाम्[4] । देवेषु[5] स्तुत्येषु । प्रापय[6] । अनन्तरमेव । प्रेरय[7] च । अस्मभ्यम् । सर्वैर्देवैः[8] स्तायमानं धनम् ।

**सुकृत्सुपाणिः स्ववाँ ऋतावा देवस्त्वष्टावसे तानि नो धात् ।**
**पूषण्वन्त ऋभवो मादयध्वमूर्ध्वग्रावाणो अध्वरमतष्ट ॥ १२ ॥**

सुकृत्सुपाणिः । शोभनकारी[9] । शोभनपाणिः[10] । धनवान् । सत्यकर्मा[11] । देवः । त्वष्टा । तानि[12] स्वकीयानि धनानि । रक्षणार्थम्[13] । अस्मभ्यम् । प्रयच्छतु[14] । हे ऋभवः[15] ! यूयं च । पूष्णा सहिताः । अस्मद्यज्ञे मादयध्वम्[16] । उच्छ्रितग्रावाणो[17]ऽभिषवार्थम्[18] अध्वर्यवः । यज्ञम्[19] । सोमाभिषवेण संस्कृतवन्त[20] इति ।

**विद्युद्रथा मरुत ऋष्टिमन्तो दिवो मर्या ऋतजाता अयासः ।**
**सरस्वती शृणवन्यज्ञियासो धाता रयिं सहवीरं तुरासः ॥ १३ ॥**

विद्युद्रथाः । विद्युद्युक्तरथाः[21] ‘आ[22] विद्युन्मद्भिः[23]’ इत्युक्तम्[24] । मरुतः । ऋष्टिभिरायुधैः[25]

---

१. आगच्छन् भवतीति शेषः । पत्यमानः—‘पद गतौ’ । दिवादिरात्मनेपदी । दकारस्य तकारश्छान्दसः Sy.
२. ०त्यक्षः P. परोऽर्धर्चः प्रत्यक्षः Sy.
३. पितः P.
४. M. omits दीयां वाचं स्तुतिरूपाम् ॥ श्लोक्यतेऽनेनेति श्लोकः स्तोत्रम् Sy.
५. स्तोतृषु विद्यमानं च Sy.
६. प्राप्नुहि । श्रयेः—‘श्रिञ् सेवायाम्’ इत्यस्य लङि ‘बहुलं छन्दसि’ इति शपो लुक् । ‘चवायोगे प्रथमा’ इति न निघातः Sy. ७. सुव—‘षू प्रेरणे’ । तुदादिः Sy. ८. सर्वै दे० P. सर्वमपेक्षितं फलम् । सर्वतातिम्—सर्वदेवात्तातिल् स्वार्थिकः । लित्स्वरः Sy.
९. Omitted in M. सुष्ठु जगतः कर्ता Sy. १०. कल्याणपाणिः Sy.
११. सत्यसङ्कल्पः Sy.
१२. पाणि P. यान्यस्माकमपेक्षितानि Sy.
१३. ०णार्त्थम् P. रक्षणाय Sy.
१४. ददातु Sy. १५. उरु भान्तीत्यृभवः Sy.
१६. अस्मान् धनप्रदानेन हृष्टान् कुरुत Sy.
१७. सोमाभिषवार्थमुद्यतग्रावाणः सन्त ऋत्विजः Sy. १८. ०वार्त्थ० P.
१९. इममस्मदीयमध्वरम् Sy.
२०. संस्तुत० M. and D. अकुर्वन् । अतष्ट—‘तक्षू त्वक्षू तनूकरणे’ । ऊदित्वादत्रेडभावः । ‘झलो झलि’ इति सलोपः । ‘स्कोः संयोगाद्योः—’इति ककारलोपः । बहुवचनस्यैकवचनं छान्दसम् Sy.
२१. विद्योतमानरथोपेताः Sy.
२२. अ P.
२३. ०न्मभिः M. ०द्युतमद्भिः P. RV. I. 88.1. २४. ०त्युक्त M.
२५. यष्टि० P. दीप्तिमन्तः । ऋष्टिरायुधविशेषस्तद्वन्तो वा Sy.

सहिताः । दिवः[1] सम्बन्धिनः । मर्याः[2], दिवः सूनवः । उदकार्थं[3] जाताः[4] । गन्तारः[5] । तैः सह भूता माध्यमिका वाक्[6] । शृण्वन्तु, अस्मत्स्तोत्रम्[7] । यज्ञार्हाः । अथ प्रत्यक्षः—दत्त[8] । धनम् । पुत्रसहितम् । क्षिप्रकारिणः[9] ।

**विष्णुं स्तोमासः पुरुदस्ममर्का भगस्येव कारिणो यामनि ग्मन् ।**
**उरुक्रमः ककुहो यस्य पूर्वीर्न मर्धन्ति युवतयो जनित्रीः ॥ १४ ॥**

विष्णुम् । विष्णुम्[10] । स्तोत्रशस्त्राणि[11] । बहूनां दर्शनीयम्[12] । गमने[13] । गच्छन्त्यभिगच्छन्ति[14] । यथा भजनीयस्याढ्यस्य[15] । कर्मकराः[16], आगमन उद्युक्ता[17] भवन्ति । विस्तीर्णक्रमः[18] स देवः । दिशः[19] । पूर्व्यः[20] । यस्य प्रसादाद्[21] विविक्ता भवन्ति, तत्प्रभावादेव । जनयित्र्यः[22] । युव-

---

१. द्योतमानाः Sy.

२. मत्याः M. मर्यः P. शत्रूणां मारयितारः Sy.

३. ०कार्थं P. उदकाद्यज्ञाद्वा प्रादुर्भूताः । यद्वा ऋतमुदकं जातं येभ्यस्ते ऋतजाताः Sy. ४. जात P.

५. सततगमनशीलाः Sy.

६. वाक्यं M. वाक् क्य P. गद्यपद्यरूपेण प्रसरणमस्या अस्तीति सरस्वती । वाग्देवता च । एते सर्वे देवाः Sy.

७. अस्मिन्स्तो० M. मदीयमिमं स्तोमम् Sy.

८. अस्मभ्यं धत्त । धात—दधातेर्लोटि 'बहुलं छन्दसि' इति शपो लुक् । 'तप्तनप्तनथनाश्च' इति तबादेशः । पादादित्वादनिघातः । तपः पित्त्वादनुदात्तत्वे धातुस्वरः Sy.

९. अस्माकं फलप्रदाने त्वरणयुक्ता हे मरुतः ! तुरासः—'तुर त्वरणे' । इगुपधलक्षणः कः । आमन्त्रितत्वान्निघातः Sy.

१०. देवम् Sy.

११. VM. explains स्तोमासः and अर्काः together as स्तोत्रशस्त्राणि । स्तूयन्त एभिरिति स्तोमाः स्तोत्राणि । अर्काः—अर्चनीयानि शस्त्राणि च Sy.

१२. बहुकर्माणम् । यद्वा बहून् दस्यत्युपक्षपयतीति पुरुदस्मः । तम् Sy.

१३. सततं प्रतायमानेऽस्मिन् यज्ञे Sy.

१४. ०च्छ सन्त्य० P. गच्छन्तु । ग्मन्—गमेर्लुङि 'मन्त्रे घस—'इत्यादिना च्लेर्लुक् Sy.

१५. धनस्य Sy.

१६. ०करः P. कर्तृणीव स्थितानि तानि Sy. १७. उद्युक्ता P.

१८. उरुर्महान् क्रमः पादविक्षेपो यस्य सः त्रिविक्रमावतारे एकेनैव पादेन सर्वं जगदाक्रम्यातिष्ठत Sy.

१९. ककुहः—कं स्कुभ्नन्ति विस्तारयन्तीति ककुभो दिशः । यद्वा ककुबुच्छ्रयार्थः । उच्छ्रिता इव हि दिशो वृक्षाग्रेषूपलभ्यमानास्तिष्ठन्ति । एता दिशः । ककुभः—पृषोदरादित्वाद्रूपस्वरसिद्धिः Sy.

२०. पूर्वः M. बह्वयः P.

२१. प्रदाता सदा P.

२२. ०यित्र्यौ P. सर्वस्य जनयित्र्यः Sy.

२३. परस्परमसङ्कीर्णाः Sy.

तयो दिशः । न । मर्षन्ति[1], न[2] परस्परं बाधन्ते, यथास्थानं तिष्ठन्तीति ।

**इन्द्रो विश्वैर्वीर्यैः पत्यमान उभे आ पप्रौ रोदसी महित्वा ।**
**पुरंदरो वृत्रहा धृष्णुषेणः संगृभ्या न आ भरा भूरि पश्वः ॥ १५ ॥**

इन्द्रो विश्वैः । इन्द्रः । सर्वैः । वीर्यैः सह[3] । आगच्छन्[4] । उभे । द्यावापृथिवी[5] । महत्त्वेन[6] । आपूरयति[7] । शिष्टः[8] प्रत्यक्षः—पुरां दारयिता[9] । शत्रूणां[10] हन्ता । प्रसहनसेनस्त्वम्[11] । पशोः[12] । भूरि[13] । हस्तेन सङ्गृह्य[14] । अस्मभ्यम् । आभर[15], बहून् देहि पशूनित्यर्थः[16] ।

**नासत्या मे पितरा बन्धुपृच्छा सजात्यमश्विनोश्चारु नाम ।**
**युवं हि स्थो रयिदौ नो रयीणां दात्रं रक्षेथे अकवैरदब्धा ॥ १६ ॥**

नासत्या । 'इमे अश्विने' इति[17] ब्राह्मणाद् अश्विनौ द्यावापृथिव्यौ, अत उक्तम्—अश्वि-

---

१. मर्द्धन्ति P.
विष्णोराज्ञां न हिंसन्ति Sy.
२. Omitted in P.
३. स्ह् P. सामर्थ्यैः Sy.
४. गच्छ सुभे P.
प्राप्यमाणः सः Sy.
५. द्यावापृथिव्यौ Sy.
६. स्वकीयेन महिम्ना Sy.
७. पूर० P.
पूरयामास Sy.
८. P. reads परोक्षः शिष्टः for शिष्टः प्रत्यक्षः ॥ शेषः प्रत्यक्षकृतः Sy.
९. शत्रुपुरां दारयिता । पुरन्दरः—'दॄ विदारणे' इत्यस्य पुरशब्द उपपदे 'पूःसर्वयोर्दारिसहोः' इति खच्प्रत्ययः । 'वाचंयमपुरन्दरौ च' इति निपातनात् पूर्वपदस्यामागमः । चित्त्वादन्तोदात्तः Sy.
१०. वृत्रस्य हन्ता Sy.
११. ०सहसे० P. पराभिभवनशीलसेनोपेतः स त्वम् । धृष्णुषेणः—'पूर्वपदात्—' इति संहितायां षत्वम् । यदा षत्वं तदा 'रषाभ्याम्—' इति णत्वम् Sy.
१२. पशून् । पश्वः—पशुशब्दात् शसः 'जसादिषु छन्दसि वावचनम्' इति सवर्णदीर्घाभावः Sy.
१३. प्रभूतं यथा भवति तथा Sy.
१४. सङ्गृभ्य—ग्रहेर्ल्यपि स्थानिवद्भावात् सम्प्रसारणम् । 'हृग्रहोर्भश्छन्दसि' इति भत्वम् । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् Sy.
१५. देहि । यद्वा पश्वः पशोर्भूरि बहुत्वं पशूंश्च यच्छेति Sy.
१६. ०त्यत्वं: P.
१७. ति M. Cf. इमे ह वै द्यावापृथिवी प्रत्यक्षमश्विनौ SB. 4. 1. 5. 16.

नावेव[1]। मम। मातापितरौ[2]—इति। बन्धनं[3] यौ पृच्छतः 'किं त्वं बुद्धोऽसि' इति, तौ बन्धुपृच्छौ[4], तत्र[5] शाटयायनकम्—**'अश्विनौ वै देवानां बन्धु[6]मुचौ[7]'** इति। समाने[8] जन्मनि भवम्[9]। अश्विनोः[10]। कल्याणम्[11]। नासत्येत्यादिकं नाम[12]। शेषः प्रत्यक्षः—युवाम्। हि[12]। अस्माकम्[13]। धनानाम्[14]। दातारौ[15]। भवथः[16]। दत्त[17] च धनम्। रक्षथ[18]। कुत्सितैः[19] रपायैः। शत्रुभिः, अहिंसितौ[20] इति[21]।

**महत्तद्वः कवयश्चारु नाम यद्ध देवा भवथ विश्व इन्द्रे।**
**सख ऋभुभिः पुरुहूत प्रियेभिरिमां धियं सातये तक्षता नः ॥ १७ ॥**

महत्तत्। हे क्रान्तदर्शनाः[22]! ऋभवः[23]! महत्[24]। तत्[25]। वः[26]। नमनम्[27]। अभ्युदयावहम्[28]। यत्[29]। खलु। यूयं सर्व एव। इन्द्रे[30]। सङ्गता[31] भवथ[32]। त्वं च पुरुहूत[33]! समानख्यानो[34] भवसि।

---

१. नासत्या—'नभ्राण्नपात्—' इत्यादिना निपातनान्नञः प्रकृतिभावः Sy.
२. युवां मे पालयितारौ भवतम् Sy.
३. न्धन P.
४. ०न्धुच्छौ P. हविष्प्रदातृत्वेन बन्धून् अस्मान् अपेक्षितमर्थं पृच्छत इति बन्धूनां प्रष्टारौ। बन्धुपृच्छा—पृच्छेः क्विप्। 'सुपां सुलुक्—' इति सुपो डादेशः Sy.
५. रत्र P. ६. बुद्धमु० M.
७. Sāṭ. reads अश्विनौ हि देवानां बद्धमुचौ. 12.13. O.M.p. 25. Collection of the Fragments of Lost Brāhmaṇas. B. Ghosh. Fragments XII-XIII.p. 37.
८. सजाते भवं सङ्गतम्। सजात्यम्—सजाते भवम्—'भवे छन्दसि' इति यत्। तित्स्वरितः Sy.
९. न्वनम् P.
१०. ०श्विनौ P. युवयोरश्विनोः Sy.
११. ०ल्याणाम् P. कमनीयम् Sy.
१२. खलु Sy. १३. अस्मभ्यम् Sy.
१४. धनानां मध्ये Sy.
१५. उत्तमस्य धनस्य दातारौ Sy.
१६. स्थः—अस्तेर्लटि रूपम्। हियोगादनिघातः Sy.
१७. दत्तं च or दात्रं च is suggested for दत्त च। VM. explains दात्रं by धनम्॥ हविषां दातारं माम् Sy.
१८. पालयतम् Sy. १९. अकुत्सि० is suggested for कुत्सि०॥ अकुत्सितैः शोभनैः कर्मभिः Sy.
२०. ०रसि० P. केनाप्यतिरस्कृतौ युवाम् Sy.
२१. VM. ignores रयि of रयिदौ॥
२२. हे मेधाविनः! Sy.
२३. हे देवाः! Sy.
२४. प्रभूतम् Sy. २५. तादृशम् Sy.
२६. युष्माकम् Sy. २७. कर्म नमनं वा Sy.
२८. मनोहरं खलु Sy.
२९. येन कर्मणा। 'सुपां सुलुक्—' इत्यादिना सुपो लुक् Sy. ३०. इन्द्रोपलक्षिते लोके Sy. ३१. ग सङ्गता P.
३२. वथ M. देवत्वं प्राप्नुथ। भवतेर्लटि रूपम्। यद्वृत्तयोगादनिघातः Sy.
३३. बहुभिराहूत! हे इन्द्र! Sy.
३४. सख ऋभुभिरित्यत्र संहितायाम् 'ऋत्यकः' इति प्रकृतिभावो ह्रस्वत्वं च Sy.

प्रियैः[1] । ऋभुभिः[2] । इत्थमिन्द्रेण सङ्गता[3] यूयम् इदम्[4] । कर्म[5] । अस्माकम् । लाभाय[6] । कुरुत[7] ।

**अर्य॒मा णो॒ अदि॑तिर्य॒ज्ञिया॒सोऽद॑ब्धानि॒ वरु॑णस्य व्र॒तानि॑ ।**
**यु॒योत॑ नो अनप॒त्यानि॒ गन्तोः॑ प्र॒जावा॑न्नः पशु॒माँ अ॑स्तु गा॒तुः ॥ १८ ॥**

अर्यमा । अर्यमा[8] च । अस्माकमस्तु[9] । अदितिश्च[10] । देवाश्च[11] । असुरैरनुपहिंसितानि[12] । वरुणस्य[13] । व्रतानि[14] भवन्ति, स[15] चास्माकमस्तु[16] । ते यूयं हे अर्यमप्रभृतयः ! अभिगन्तव्याद्[17] गृहात् । अनपत्यानि[18]—पुत्राणामयोग्यानि[19] ज्वरादीनि । पृथक् कुरुत[20] । ततोऽस्माकम्[21] । गातुः[22] । प्रजावान्[23] । अस्तु । पशुमांश्चेति[24] ।

---

१. प्रियतमैः Sy.

२. ऋतुभिः M. and P.
ऋतेन भवन्त्यृतेन भान्तीति वा । देवैः Sy.

३. इन्द्रसहिता ऋभवो यूयम् Sy.

४. इमामस्मदीयाम् Sy.

५. स्तुतिम् Sy.

६. धनादिलाभार्थम् Sy.

७. स्वीकुरुत Sy.

८. ऋच्छति सर्वदा गच्छतीत्यर्यमा सूर्यः । अर्यमा—'ऋ गतौ' 'श्वन्नुक्षन्प्लीहन्क्लेदन्—'इत्यादिना निपातनाद्रूपसिद्धिः Sy.

९. ०मसु M. ०मस्ति P. अस्मान् रक्षन्त्विति शेषः Sy.

१०. दिति० P. देवमाता । अदितिः—'दीङ् क्षये' इत्यस्य कर्तरि क्तिच् । नञा समासः । छान्दसं ह्रस्वत्वम् । नञःस्वरः Sy.
अदितिरदीना N.4.22.

११. यज्ञार्हा देवाः Sy.

१२. अहिंसितानि भवन्ति Sy.

१३. यस्य वरुणस्य Sy.

१४. कर्माणि Sy.

१५. स वरुणस्ते चार्यमादयो देवाः Sy.

१६. चास्मा P.

१७. ०न्तव्याः P. सन्मार्गात् । गन्तोः—'गम्लृ गतौ' 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यः—'इति तुन्प्रत्ययः । नित्वादाद्युदात्तः Sy.

१८. ०पत्या P. अपत्यानां पुत्राणामहितानि कर्माणि । यद्वा पतनकारणं न भवतीत्यपत्यम् । तदन्यान्यनपत्यानि पतनकारणानि कर्माणि Sy.

१९. वृणाम ० P.

२०. कुरु P.
यथा तान्यहितानि कर्माणि न स्पृशन्ति तथा कुरुतेत्यर्थः । यौतेरमिश्रीभावकर्मणो लोटि 'बहुलं छन्दसि' इति शपः श्लुः । 'तप्तनप्तनथनाश्च' इति तप्रत्ययस्य तबादेशः Sy.

२१. अस्मदीयं गृहम् Sy.

२२. गातु P. गायन्ति स्तुवन्तीन्द्रादीनत्रेति गातुर्गृहम् । गातुः—'गायाहिभ्यश्च (Uṇādi. 1.72.) इति तुप्रत्ययः Sy.

२३. जावन् P.
अपत्योपेतम् Sy.

२४. ०शुमाश्चति P.
पश्वादियुक्तम् Sy.

दे॒वानां॑ दू॒तः पु॑रु॒ध प्रसू॒तोऽना॑गान्नो वोचतु स॒र्वता॑ता ।
शृ॒णोतु॑ नः पृथि॒वी द्यौरु॒ताप॒ः सूर्यो॒ नक्ष॑त्रैरु॒र्व१॒॑न्तरि॑क्षम् ॥ १९ ॥

देवानां दूतः । देवानाम् । दूतोऽग्निः[1] । बहुप्रकारम्[2] । यजमानैः[3] प्रसूतः । अपापा[4] भवन्त्वमी[5] इति । वदतु[6] । सर्वस्य[7] विस्तारयिता, सर्वस्य कर्ता वा । शृणोतु[8] । अस्मान्[9] । पृथिवी । द्यौः । आपः । सूर्यः[10] । च[11] । नक्षत्रैः[12] सह । विस्तीर्णम् । अन्तरिक्षं च[13] ।

शृ॒ण्वन्तु॑ नो॒ वृष॑णः॒ पर्व॑तासो ध्रु॒वक्षे॑मास॒ इळ॑या॒ मद॑न्तः ।
आ॒दि॒त्यैर्नो॒ अदि॑तिः शृणोतु॒ यच्छ॑न्तु नो म॒रुत॑ः शर्म॑ भ॒द्रम् ॥ २० ॥

शृण्वन्तु । शृण्वन्तु[14] । अस्मान्[15] । सोमस्य[16] वर्षितारः[17] । ग्रावाणः[18] । ध्रुवरक्षाः[19] । अन्नेन[20] । मदन्तः[21] । तथाऽऽदित्यैः[22] सह । अस्मान् । अदितिश्च । शृणोतु । मरुतश्च । अस्मभ्यम् ।

---

१. तथाच तैत्तिरीयकम्[1] 'अग्निर्देवानां दूत आसीत्' Sy.

२. पुरुधु बहुषु देशेषु Sy.

३. ०मानै P. अग्निहोत्रार्थं विहितः । यद्वा पुरुभिर्यजमानैः यष्टव्यदेवाह्वानार्थं प्रेरितः । प्रसूतः—'षू प्रेरणे' । कर्मणि क्तः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरः Sy.

४. अवाप M. अवा P. अनागसः । अनागान्—शसि सकारलोपश्छान्दसः । सवर्णदीर्घे कृते 'तस्माच्छसो नः' इति नत्वम् Sy.

५. ०न्त्वमि P. ६. ब्रवीतु । वोचतु—'वच परिभाषणे' । 'व्यत्ययो बहुलम्' इति शपोऽङादेशः । 'वच उम्' गुणः । निघातः Sy. ७. सर्वत्र Sy.

८. अस्मदीयां स्तुतिं शृण्वन्तु । प्रत्येकविवक्षया एकवचनम् Sy.

९. तादृशोऽग्निः कर्मकर्तृसाधनवैगुण्येन सापराधानस्मान् Sy.

१०. सूर्यस्य P. ११. इव P.

१२. नक्षत्रैः—'नक्ष गतौ' 'अमिनक्षियजिबन्धिपतिभ्योऽत्रन्' इत्यत्रन् प्रत्ययः । नित्त्वादाद्युदात्तः । यद्वा न क्षरति न क्षीयते इति वा नक्षत्रम् । 'नभ्राण्नपात्—'इति नञः प्रकृतिभावः । नञः स्वरः Sy.

१३. VM. explains नः once only.

१४. M. repeats शृण्वन्तु । शृणु P.

१५. अस्मदीयां स्तुतिम् Sy.

१६. सेवस्य P. १७. अभिमतफलसेचका मरुतः Sy. १८. पृणन्ति पूरयन्त्यर्थिनां कामानिति पर्वता ग्रावाभिमानिनो देवाः Sy. १९. निश्चलस्थानाः Sy.

२०. Omitted in P. हविर्लक्षणेनान्नेन Sy.

२१. मेद० P. माद्यन्तः सन्तः Sy.

२२. अपत्यभूतैरादित्यैरुपेता । आदित्यैः—अदितेरपत्यानीत्यर्थे 'दित्यदिति—'इति ण्यः । प्रत्ययस्वरेणान्तोदात्तः । सुपा सहैकादेशे कृते एकादेश उदात्तः Sy.

---

[1]. Cf. स (अग्निः) हि देवानां दूत आसीत् SB. 1.4.1.34 and अग्निरेव देवानां दूत आस SB. 3.5.1.21; 1.4.1.34.

भजनीयम्[1]। सुखम्। प्रयच्छन्तु[2]।

सदा सुगः पितुमाँ अस्तु पन्था मध्वा देवा ओषधीः संपिपृक्त ।
भगो मे अग्ने सख्ये न मृध्या उद्रायो अश्यां सदनं पुरुक्षोः ॥ २१ ॥

[3]सदा सुगः[4]। सदा[5]। शोभनगमनः[6]। अन्नवान्। अस्तु। मार्गोऽस्माकम्[7]। तथा हे[8] देवाः! ओषधीः। मधुना[9]। सम्पृक्ताः[10] कुरुत, मधु[11] इत्युदकनाम[12]। हे अग्ने! त्वया सख्ये[13] सति। अस्माकम्[14]। भगः[15]। न। हिंस्येत्[16]। धनस्य। सदनम्[17]। अहमुदश्याम्[18]। बहुभिः शब्दनीयस्येति[19]।

स्वदस्व हव्या समिषो दिदीह्यस्मद्र्यक्सं मिमीहि श्रवांसि ।
विश्वाँ अग्ने पृत्सु ताञ्जेषि शत्रूनहा विश्वा सुमना दीदिही नः ॥ २२ ॥

[स्वदस्व[20]।][21] स्वदस्वाग्ने[22]! स्वहवींषि[23]। सन्दीपय[24] च। अन्नान्यस्माकम्[25]। तथाऽस्म-[26]

---

१. कल्याणकरम् Sy. २. ददतु Sy.
३. प्रवत्स्यन् यजमानः 'सदा सुगः' इत्यृचं जपन् गच्छेत्। सूत्रितञ्च—'सदा सुगः पितुमाँ अस्तु पन्था इति पन्थानमवरुह्य' (ASS. 2. 5.) इति Sy.
४. हे अग्ने! अस्माकम् Sy.
५. सर्वदा। सदा स्वरादिष्वाद्युदात्तत्वेन पाठादाद्युदात्तः Sy. ६. सुखेन गन्तुं शक्यः Sy. ७. ०स्मात्कम् M.
८. न M. ९. माधुर्योपेतेनोदकेन Sy.
१०. सम्पर्चयत। सेचयतेत्यर्थः। पिपृक्त—'पृची सम्पर्के'। लोटि 'बहुलं छन्दसि' इति शपः श्लुः। 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम् Sy.
११. The passage मधु इत्युदकनाम should immediately follow मधुना and precede सम्पृक्ताः कुरुत।
१२. Ngh. I.12.; also cf. N. 10.31.
१३. सख्ये सञ्जाते सति Sy.
१४. मे मम Sy. १५. धनम् Sy.
१६. विनश्यतु। मृध्याः—'मृधिर्हिंसार्थः'। लिङि 'तिङां तिङो भवन्ति' इति तिपः सिप् Sy. १७. स्थानम् Sy.
१८. अभिमुद्यास् P. प्राप्नुयाम् Sy.
१९. बह्वन्नस्य च Sy.
२०. पशौ पुरोडाशस्विष्टकृतः 'स्वदस्व हव्या' इति याज्या। सूत्रितञ्च—'स्वदस्व हव्या समिषो दिदीहीति पुरोडाशस्विष्टकृतः' (ASS. 3.5.) इति Sy.
२१. The *pratīka* has been supplied by the Editor.
२२. स्वादय। स्वदस्व—'स्वद आस्वादने' लोटि रूपम्। थासो लसार्वधातुकस्वरे धातुस्वरः Sy.
२३. हवनयोग्यानि हवींषि Sy.
२४. सम्यक् प्रकाशय। दिदीहि—'दिवु क्रीडादौ' इत्यस्य लोटि 'बहुलं छन्दसि' इति विकरणस्य श्लुः। । परत्वात् 'हलि च' इति दीर्घत्वे कृते पश्चाद् वलि लोपः। निघातः Sy.
२५. दीपितानि तानि श्रवांसि अन्नानि Sy.
२६. ०श्मा सूद० M.

दभिमुखमेव[1]। सम्मिमीहि[2]। अन्नानि, सम्मानं कुरु[3]। तथा[4] सर्वान्। अग्ने! सङ्ग्रामेषु। तान्। शत्रून्, अस्मदीयान्। जय। किं बहुना, सर्वेष्वपि[5]। अहःसु[6]। शोभनमतिः[7] सन्। दीप्यस्व[8]। अस्माकं गृह इति।

## III.55.

**उषसः पूर्वा अध यद्व्यूषुर्महद्वि जज्ञे अक्षरं पदे गोः।**
**व्रता देवानामुप नु प्रभूषन्महद्देवानामसुरत्वमेकम्॥ १॥**

उषसः[9]। रात्रेरनन्तरमुषसः[10]। पूर्वभाविन्यः[11]। यदा[12]। व्युच्छन्ति[13]। ततः[14]। महत्[15]।

---

१. अस्मदभिमुखानि। अस्मद्र्यक्—अस्मानञ्चतीत्यञ्चतेः क्विप्। 'विष्वग्देवयोश्च टेः' इति टेरद्र्यादेशः। 'सुपां सुलुक्—'इति सुपो लुक्। अद्र्यादेशस्यान्तोदात्तत्वेन निपातनाद् यणादेशे कृते 'उदात्तस्वरितयोः' इति यणः स्वरितत्वम् Sy.

२. सम्मानय। कुर्वित्यर्थः। मिमीहि—'माङ् माने शब्दे च'। जुहोत्यादिः। तस्य लोटि व्यत्ययेन परस्मैपदम्। निघातः Sy.

३. संमानकं M. समानं कं P. The passage सम्मानं कुरु seems to be the explanation of सम्मिमीहि। Therefore it should immediately follow सम्मिमीहि॥

४. बाधकान् Sy.

५. सर्वाणि Sy.

६. अहानि Sy.

७. ०मति P. शोभनमनस्कः सन्। सुमनाः—'सोर्मनसि' इत्युत्तरपदाद्युदात्तत्वम् Sy.

८. अग्निहोत्रादिकर्मयोग्यानि प्रकाशय। दीदिहि—दिवेर्यङ्लुकि लोटि तुजादित्वादभ्यासस्य दीर्घः। वलि लोपः Sy.

९. 'उषसः पूर्वाः' इति द्वाविंशत्यृचं द्वितीयं सूक्तं त्रैष्टुभम्। 'उषसः' इत्यनुक्रमणिका। (KSA. 19. 55. p. 16.) प्रजापतेरार्षं वैश्वदेवं 'प्रजापतिर्हि वैश्वदेवं ह' (KSA. 19. 54. p. 16.) इति पूर्वसूक्ते हिहशब्दप्रयोगात्। सूक्तविनियोगो लैङ्गिकः। अत्राद्योषस्या ततः परं नवर्चोऽग्न्यादिदेवतास्ततः परा अहोरात्रदेवताका ततश्चतस्रो रोदस्योः पञ्चदशी द्युनिशोर्वा षोडशी दिग्देवताका ततः षडृचो वर्षत इन्द्रस्य केचिदग्नेस्त्वष्टुश्चेति मन्यन्ते Sy.

१०. ०षसा P.

११. उदयकालात् प्राचीनाः Sy.

१२. The scribe denotes some omission by black dots after यदा। The blank space has been filled in different ink by the word 'ह्य'।

१३. व्यूषुः—'उष प्लुष दाहे' इत्यस्य विपूर्वस्य लिट्युसि रूपम्। 'सह' इति योगविभागात्समासः। यद्वृत्तयोगादनिघातः Sy.

१४. तदानीम् Sy.

१५. प्रभूतम् Sy.

अक्षरं[1] तेज[2] आदित्याख्यम् । विजायते[3] । तेजसः[4] । स्थाने दिवि[5] । तत उदित आदित्ये[6] देवानाम् । व्रतानि कर्माणि । प्रकर्षेण भवितुमिच्छन्[7] यजमानः । उपभवति[8], अनुतिष्ठति कर्माणीत्यर्थः[9] । तदिदं देवानाम् । महत् । एकम्[10] । प्राबल्यमिति[11] ।[12]

**मो षू णो अत्र जुहुरन्त देवा मा पूर्वे अग्ने पितरः पदज्ञाः ।**
**पुराण्योः सद्मनोः केतुरन्तर्महद्देवानामसुरत्वमेकम् ॥ २ ॥**

**मो षू णः ।** हे अग्ने ! अस्माकम्[13] । अस्मिन् लोके[14] । देवाः । मा । जुहुरन्त[15] कुटिला मा भूवन्, भागधेयग्रहणार्थ[16]मिहागच्छन्तु । मा च[17] । पितरोऽस्माकम् । पूर्वे[18] मृताः पिण्डपितृयज्ञदेवताः[19] । स्थानज्ञाः[20] स्वकुलजातानामावासज्ञाः[21] । स्विति[22] पूरणम्[23] । पुरातन्योः[24] । द्यावापृथिव्योः सर्वेषामावासभूतयोः । मध्ये[25] । प्रज्ञापकः[26]स्त्वं दूतो भूत्वा[27] चरति[28], तस्मात्[29] ते तथा कुर्वन्ति । तच्चैतद्[30]

---

१. न क्षरतीत्यक्षरम् । अविनाश्यादित्याख्यम् Sy.
२. ज्योतिः Sy. ३. उत्पद्यते Sy.
४. उदकस्य Sy.
५. समुद्रे नभसि वा Sy.
६. अथोदिते सूर्ये Sy.
७. P. omits भवितुमिच्छन् ॥ अग्निहोत्रादिकर्मसु प्रभवितुमिच्छन् । प्रभूषन्—भवतेः सनि द्विर्वचनस्य छन्दसि विकल्पितत्वात् अत्र द्विर्वचनाभावः । तदन्ताच्छतरि रूपम् । प्रादिसमासः । शतुर्लसार्वधातुकस्वरे धातुस्वरः Sy.
८. समीपं नेष्यति । योग्यक्रियाध्याहारः Sy.
९. त्यर्थः० P.
१०. मुख्यम् Sy.
११. अस्यति क्षिपति सर्वानित्यसुरः प्रबलः । तस्य भावोऽसुरत्वम् । महदैश्वर्यम् Sy.
१२. VM. ignores नु ॥ नु क्षिप्रम् Sy.
१३. अस्मान् Sy.
१४. काले Sy.
१५. हिंस्युः । जुहुरन्त—'हृ प्रसह्यकरणे' लुङि जुहोत्यादित्वात् श्लुः । व्यत्ययेनात्मनेपदम् । 'बहुलं छन्दसि' इत्युत्वम् । संज्ञापूर्वकस्य विधेरनित्यत्वादवादेशाभावेऽन्तादेशः Sy.
१६. ०णार्थं० P.
१७. M. omits words between ग्रह and च ॥ मा हिंसिषुः Sy.
१८. पुरातनाः Sy.
१९. ०ज्ञमेव० P.
२०. कर्माण्यनुष्ठाय देवपदमनुभवन्तः Sy.
२१. ०सज्ञा M. and P.
२२. स्विति P. सुष्ठु Sy.
२३. पुरातन्यो० M. पुरानो० P. पुरातनयोः Sy.
२४. ०थिव्योः P. सीदन्त्यनयोर्देवमनुष्या इति सद्मनी रोदसी । तयोः Sy.
२५. मध्ये उदेति । तस्मादत्र मा हिंसन्त्वित्यर्थः Sy.
२६. यज्ञानां प्रज्ञापकः सूर्यः Sy.
२७. M. omits words between षामावा and भूत्वा.
२८. चरसि is suggested for चरति ॥
२९. तस्मत् P. ३०. ०च्चैत P.

देवानाम् । एकम् । असुरत्वमिति[1] ।

वि मे पुरुत्रा पतयन्ति कामाः शम्यच्छा दीद्ये पूर्व्याणि ।
समिद्धे अग्नावृतमिद्वदेम महद्देवानामसुरत्वमेकम् ॥ ३ ॥

वि मे पुरुत्रा[2] । मम । बहुविषयेषु[3] प्रजापश्वादिषु । कामाः[4] । विविधम् । पतन्ति[5] । ततोऽहं पुरातनानि[6] वैदिकानि । कर्माणि[7] । अभिलक्ष्य[8] तानि कर्तुमित्यर्थः[9] । तदर्थमग्निं[10] दीपयामि[11] । अथ वयं समिद्धे[12] सति । अग्नौ । तस्मै प्राप्तमासादितं[13] हविः । वदेम[14] । यच्चैतदेवं[15] वयं कुर्मस्तदपि देवानाम् । प्राबल्यकृतमिति[16] ।

समानो राजा विभृतः पुरुत्रा शये शयासु प्रयुतो वनानु ।
अन्या वत्सं भरति क्षेति माता महद्देवानामसुरत्वमेकम् ॥ ४ ॥

समानः । एक[17] एव । अयं[18] दीप्यमानोऽग्निः[19] । बहुषु देशेषु[20] । विभृतो[21] भवति धिष्ण्येषु[22] ।

---

१. VM. ignores महत् ॥ महद्देवानामित्यादि पूर्ववत् Sy.
२. हे अग्ने ! Sy.
३. बहवः । पुरुत्रा—'देवमनुष्यपुरुष' इत्यादिना त्राप्रत्ययः Sy.
४. अभिलाषाः Sy.
५. गच्छन्ति । पतयन्ति—'पत्लृ गतौ' । स्वार्थिको णिच् Sy.
६. पुरातनानि स्तोत्राणि तदर्थम् Sy.
७. अग्निष्टोमादिलक्षणं कर्म Sy.
८. M. omits तनानि वैदिकानि कर्माणि । अभिलक्ष्य ॥
९. ०त्यर्त्थं P.
१०. ०दर्त्थम् P.
११. ०यानि P.
१२. पश्चाद्यज्ञार्थमग्नौ दीप्यमाने सति Sy.
१३. ऋतमित् सत्यमेव Sy.
१४. ०देव P. अनृतवचने हि यज्ञे वैगुण्यं स्यादिति Sy.
१५. ०च्चैदे० P.
१६. VM. ignores महत् and एकम् ।
१७. साधारणः सर्वेषाम्, यद्वा एक एव Sy.
१८. M. omits एक एव अयं ।
१९. अभिषुतः सोमो वा Sy.
२०. प्रजापश्वादिषु P. सर्वेषु देशेषु वा । पुरुत्रा—अधिकरणे त्राप्रत्ययः Sy.
२१. बिभ्रतो P. अग्निहोत्रार्थं विहृतो भवति, यद्वा यज्ञार्थं विहृतो भवति । 'हृञ् हरणे' । कर्मणि क्तः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् Sy.
२२. धिष्णियेo M. धियेषु P.

स[1] तत्र[2] शेते[3]। शयनयोग्यासु भूमिषु[4]। प्रश्लिष्टः[5]। काष्ठानि। अनु[6]। वत्समग्निम्[7]। एका[8] माता पृथिवी। हविर्भिर्धारयति[9]। अथान्या माता द्यौः[10]। निवासयति[11] सुखमेवाग्निदत्तं भुञ्जानेति[12]।

आ॒क्षित्पूर्वा॒स्वप॑रा अनू॒रुत्स॒द्यो जा॒तासु॒ तरु॑णीष्व॒न्तः।
अ॒न्तर्व॑तीः सुवते॒ अप्र॑वीता म॒हद्दे॒वाना॑मसुर॒त्वमेक॑म् ॥ ५ ॥

आक्षित्। जरतीष्वप्योषधीषु[13]। आक्षेता[14]ऽग्निर्भवति। तथाऽपराश्च[15] जनिष्यमाणाः। अनुरुध्यते[16]। तथेदानीम्[17]। जातासु[18]। तरुणीष्वपि[19]। अन्तर्भवति[20]। तत्र वर्तमानश्च गर्भवती-[21]रोषधीः। प्रेरयति[22] प्रसूताः करोति। पुरुषैरनिषिक्तगर्भा[23] अपि, 'तस्मादोषधयोऽनभ्यक्तारो[24]

---

१. अग्निः, अभिषुतः सोमो वा Sy.
२. तुतू M.
३. निवसति। शये—'शीङ् स्वप्ने'। 'लोपस्तः—'इति लकारलोपः। 'शीङः सार्वधातुके गुणः' Sy.
४. वेदिषु। शेरते हविरादयः पदार्था अत्रेति शया वेद्यस्तासु। शयासु—'शीङ् स्वप्ने'। 'एरच्' इत्यधिकरणेऽच् Sy.
५. वृश्चिष्टः P. विभक्तोऽग्निर्वर्तते। सोमश्चेत् वनेषु चमसेषु विभक्तो वर्तते Sy.
६. अनुवनं वनेष्वरणिरूपेषु काष्ठेषु Sy.
७. पवस० P. वत्सभूतमग्निं सोमं वा Sy.
८. तस्य द्वे मातरौ द्यावापृथिव्यौ। तयोः द्यौरस्या भूतैर्जायमानतया Sy.
९. वृष्ट्यादिरूपेण पोषयति। भरति—'भृञ् भरणे'। भ्वादिः। 'एकान्याभ्यां समर्थाभ्याम्' इति पूर्वस्य न निघातः Sy.
१०. वसुधा Sy.
११. निवसति P. केवलं निवासयति। क्षेति—क्षि निवासगत्योः' इत्यस्य लटि 'बहुलं छन्दसि' इति विकरणस्य लुक् Sy.
१२. VM. ignores महत्। देवानाम्। असुरत्वम्। एकम् ॥ For explanation see RV.III.55.1. and 2.
१३. जीर्णासु Sy.
१४. आवर्तमानः। आक्षित्—'क्षि निवासगत्योः'। क्विप् Sy.
१५. तथा नव्या ओषधीः Sy.
१६. अनुरुन्धन्। उत्पत्त्यानुगुण्येनानुतिष्ठन्नग्निः सूर्यो वा। अनूरुत्—'अनो रुध कामे'। अस्मात्क्विप्। 'अन्येषामपि दृश्यते' इति दीर्घः। कृत्स्वरः Sy.
१७. तथा तदा० M. तदानीम् Sy.
१८. उत्पन्नासु Sy.
१९. पल्लवितास्वोषधीषु। तरुणीषु—'नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम्' (PMBH.4.1.15.6.) इति ङीप्।
२०. वर्तते Sy.
२१. अग्निना गर्भवत्यो भूत्वा। अन्तर्वतीः—'झयः' इति मतुपो वत्वम् Sy.
२२. फलं पुष्पं चोत्पादयन्ति। सुवते—'षूङ् प्राणिगर्भविमोचने' इत्यस्य रूपम्। निघातः Sy.
२३. ०रुषेर० P. ता ओषधयः केनापि पुरुषेणानिषिक्तरेतस्का अनभ्यक्ता वा Sy.
२४. ०क्तारे P.

भवन्ति'[1] इति[1] ब्राह्मणम्, 'तस्मात्पराचीः प्रजाः प्रवीयन्ते[2] प्रतीचीर्जायन्ते' इति[1] चेति[3]।

**शयुः पुरस्तादध नु द्विमाताबन्धनश्चरति वत्स एकः।**
**मित्रस्य ता वरुणस्य व्रतानि महद्देवानामसुरत्वमेकम् ॥ ६ ॥**

शयुः[4] परस्तात्। अपरस्यां[5] दिशि गार्हपत्ये। सर्वदा शयनशीलः[6]। द्वयोश्च लोकयोर्निर्माता[7]। कश्चित्[8]। वत्सः[9]। बन्धनरहितः[10]। इतस्ततश्चरतीति[11]। तादृशानि[12]। एतानि कर्माणि। मित्रावरुणकृतानि[13], शयनं वरुणकृतम्, चरणं मित्रकृतमिति[14]।

**द्विमाता होता विदथेषु सम्राळन्वग्रं चरति क्षेति बुध्नः।**
**प्र रण्यानि रण्यवाचो भरन्ते महद्देवानामसुरत्वमेकम् ॥ ७ ॥**

द्विमाता। द्विमाता[15]। ह्वाता[16]। यज्ञेषु। सम्राडाहवनीयो[17] भूत्वा। अग्रमुत्तरवेदिम्[18]। प्रति। गच्छति[19]। तथा बुध्नो[20] भूत्वा परस्ताच्च। अनवरतं निवसति[21]। तस्मा अग्नये प्रभरन्ते[22]।

---

१. The quotation is untraced.
२. प्रचीय० P.
३. VM. ignores महत्। देवानाम्। असुरत्वम्। एकम् ॥ For explanation see RV.III.55.1 and 2. ॥ तदिदं देवानामैश्वर्यम् Sy.
४. शयु P.
५. पश्चिमायां दिश्यस्तमयवेलायाम् Sy.
६. शयानोऽव्याप्रियमाणो भवति। शयुः—'शीङ् स्वप्ने'। 'भृमृशीतृचरि–'इत्यादिना उप्रत्ययः Sy.
७. द्वे द्यावापृथिव्यौ मातरौ यस्य स द्विमाता। यद्वा द्वयोर्लोकयोर्निर्माता सूर्यः। द्विमाता—'नद्यृतश्च' इति प्राप्तस्य कपः 'ऋतश्छन्दसि' इति प्रतिषेधः Sy.
८. द्यावापृथिव्योः साधारणः Sy.
९. वसः P. तयो रसादानात् पुत्रः Sy.
१०. ०नमेतः P. अप्रतिबद्धगतिरनालम्बन एकः सन् Sy.
११. नभसि गच्छति Sy.
१२. तानीमानि Sy.
१३. मित्रावरुणयोः Sy.
१४. VM. ignores अध। नु। महत्। देवानाम्। असुरत्वम्। and एकम् ॥ अध नु अथोदयवेलायाम् Sy.
१५. द्वयोर्लोकयोर्निर्माता Sy.
१६. देवानामाह्वाता Sy.
१७. यज्ञेषु सम्यग् राजमानोऽग्निः Sy.
१८. गृह मु० P. अग्रे दिवि Sy.
१९. सूर्यभूतस्तत्र वर्तते। चरति—'चादिलोपे' इति न निघातः Sy.
२०. सर्वस्य कर्मणो मूलभूतः सन् Sy.
२१. भूमौ वसति। यद्वा, अग्रं मुख्यं भागं चरति भक्षयति। क्षेति—यज्वनां गृहेषु निवसति। यद्वा। बुध्नः प्रतिष्ठा अन्तेभागी स्विष्टकृद्रूपेण 'प्रतिष्ठा वै स्विष्टकृत्' (AB. 2. 10.; Kau. Br. 3. 8.) इति श्रुतेः Sy.
२२. प्रकर्षेण कुर्वन्ति, तदिदं देवानामैश्वर्यम्। Sy.

रमणीयानि हवींषि[1]। रमणीयाः[2] स्तुतीश्च यजमाना इति[3]।

शूरस्येव युध्यंतो अन्तमस्यं प्रतीचीनं ददृशे विश्वमायत् ।
अन्तर्मतिश्चरति निष्षिधं गोर्महद्देवानामसुरत्वमेकम् ॥ ८ ॥

शूरस्य । शूरस्येव[4] । युध्यतः[5] । अन्तिकतमस्य[6] । यथा तमागच्छन्तं दृष्ट्वाऽन्ये पराङ्मुखा भवन्ति, एवम् एनं दृष्ट्वा पराङ्मुखं[7] भवति । हविः परिमोषणार्थमागच्छत्[8] । सर्वं[9] रक्षः । सोऽयं[10], द्यावापृथिव्योर्मध्ये[11] । देवानां स्तोता हविरादाय । रक्षांसि[12] निषिध्यति[13] । चरति[14] । पृथिव्या[15] दिवं प्रति[16] ।

---

१. स्तोत्राणि Sy.

२. रमणीयवाचः स्तोतारः Sy. Sy. construes रण्यवाचः as a बहुव्रीहि compound but the accent shows that it is not a बहुव्रीहि compound. VM.'s explanation of it is better.

३. VM. ignores महत् । देवानाम् । असुरत्वम् । एकम्. For explanation see RV. III. 55. 1 and 2.

४. तत्र दृष्टान्तः। यथा. . .समर्थस्य राज्ञोऽभिमुखमागच्छत् परबलं पराङ्मुखं दृश्यते तद्वत् Sy.

५. युद्धं कुर्वाणस्य । 'युध सम्प्रहारे' । दिवादिः । तस्य शतरि रूपम् Sy.

६. ०कतम० M. कतम० P. समीपे वर्तमानस्य वाऽग्नेः । अन्तमस्य । अन्तशब्दात् 'अत इनिठनौ' इति ठन् । अतिशयेनान्तिक इत्यर्थे तमप् । 'तमे तादेश्च' इति तादिलोपः । नित्त्वादाद्युदात्तः Sy.

७. प्रतीचीनम्—प्रतिपूर्वस्याञ्चतेः क्विन् । तस्मात् 'विभाषाञ्चेरदिक् स्त्रियाम्' इति खः । ईनादेशः । प्रत्ययस्वरः Sy.

८. णार्थं० P. अभिमुखमागच्छत् । आयत्—'या प्रापणे' इत्यस्याङ्पूर्वस्य शतरि रूपम् । आङ्पूर्वस्य 'अय पय गतौ' इत्यस्य शतरि रूपं वेति व्युत्पत्त्यनवधारणादनवग्रहः Sy. PP. analyses आयत् into आऽयत् whereas Sy. says that there is no analysis in this case (अनवग्रहः)।

९. भूतजातम् Sy.

१०. मतिः सर्वैर्ज्ञायमानः सोऽग्निः Sy.

११. अन्तः Sy.

१२. क्षांसि P.

१३. निषिध्यनि० P. हिंसिकां दीप्तिम् Sy.

१४. धारयति Sy.

१५. उदकस्य Sy.

१६. VM. ignores महत् । देवानाम् । असुरत्वम् । and एकम् ॥ For explanation see RV. III. 55. 1 and 2.

नि वे॑वेति पलि॒तो दू॒त आ॑स्व॒न्तर्म॒हाँश्च॑रति रोच॒नेन॑ ।
वपूं॑षि॒ बिभ्र॑द॒भि नो॒ वि च॑ष्टे म॒हद्दे॒वाना॑मसुर॒त्वमेक॑म् ॥ ९ ॥

**निवेवेति** । पालयिता श्वेतो[1] वा[2]ऽग्निः[3] । दूतः[4] सन् । दिक्षु[5] । निवेवेति[6] गच्छत्या[7]भिमुख्येन तांस्तान् देवान् प्रति । द्यावापृथिव्योर्मध्ये[8] । महान्[9] । चरति । तेजसा[10] सह । रूपाणि[11] । धारयन्[12] । यजमानांश्च[13] । अभिविपश्यति[14] ।[15]

विष्णु॑र्गो॒पाः प॑र॒मं पा॑ति॒ पाथः॑ प्रि॒या धामा॑न्य॒मृता॒ दधा॑नः ।
अ॒ग्निष्टा विश्वा॒ भुव॑नानि वेद म॒हद्दे॒वाना॑मसुर॒त्वमेक॑म् ॥ १० ॥

**विष्णुर्गोपाः**[16] । विष्णुः[17] । गोपायिता[18] । उत्तमम् । रक्षति । स्थानम्[19] । प्रियाणि[20] । अमृतानि[21] । पृथिव्यादीनि[22] बहूनि । धारयन् । अयमग्निः[23] । तानि । सर्वाण्येव । जानाति[24] ।

---

१. श्वेतो M. पूर्णो वा Sy.
२. वा M.
३. ०ग्नि P.
४. देवानां दूतः अग्निः Sy.
५. द्रिक्षु P. ओषधीषु Sy.
६. नितरां व्याप्य वर्तते । वेवेति—'वी गत्यादिषु' । यङ्लुकि ईडभावे रूपम् Sy.
७. च्छन्त्या० P.
८. रोदस्योर्मध्ये Sy.
९. महान् सोऽग्निः Sy.
१०. सूर्येण सह । रोचनेन सहार्थे तृतीया Sy.
११. नानाविधानि रूपाणि Sy.
१२. बिभ्रत् सोऽग्निः । बिभ्रत्—'डुभृञ् धारणपोषणयोः' इत्यस्य शतरि रूपम् । अभ्यस्तस्वरः Sy.
१३. अस्मान्यष्टॄन् Sy.
१४. ०भिप० P. विशेषेणानुग्रहदृष्ट्या पश्यति Sy.
१५. VM. ignores महत् । देवानाम् । असुरत्वम् । and एकम् ॥ For explanation see RV. III. 55. 1 and 2.
१६. Omitted in P.
१७. व्याप्तः Sy.
१८. सर्वस्य गोपायिता । गोपाः—'गोपायतेः क्विपि अतोलोपयलोपौ Sy.
१९. पाथ उदकस्य स्थानमन्तरिक्षम् Sy.
२०. प्रियतमानि Sy.
२१. क्षयरहितानि, उदकानि Sy.
२२. It is the explanation of धामानि ॥ तेजांसि । यद्वा धामानि लोकधारकाणि Sy.
२३. अमग्निः P. अग्निष्टा—इत्यत्र संहितायां 'युष्मत्तत्ततक्षुःष्वन्तःपादम्' इति षत्वम् Sy.
२४. ०नामि M.

पार्थिवानि[1] दिव्यानि च[2]।

**नाना चक्राते यम्या३वपूंषि तयोरन्यद्रोचते कृष्णमन्यत् ।**
**श्यावी च यदरुषी च स्वसारौ महद्देवानामसुरत्वमेकम् ॥ ११ ॥**

नाना । यम्ये[3]ति रात्रि[4]नामसाहचर्या[5]दहोरात्रयोः प्रयुज्यते[6] । भिन्नानि[7] । रूपाणि[8] । कुरुतः । तदेवाऽऽह—तयोः[9] । अन्यत्[10] । रोचते[11], ततश्च[12] तच्छुक्लं भवत्यहः[13] । अथ[14] रात्रिः कृष्णा[15] भवति । 'श्यावी[16]ति रात्रिनाम[17]' । 'अरुषी[18]त्यहर्नाम[19]' । यत्[20] अहोरात्रौ[21] । एकस्मादादित्या[22]-दुत्पत्तेः स्वसारावित्थं भवतः । एतच्च देवकृतमित्यस्यामप्यृच्यादित्य एव स्तूयते, अहोरात्रयो[23]ः कर्तृत्वात्, तस्यैवोत्तरत्रापि स्तुतिः, स[24] एवेन्द्रस्योक्तो 'निःषिध्वरीः[25]' इत्यस्यामृचीति प्रतिभाति[26]।

---

१. ०थिवा M. पर्त्थि० P. भूतजातानि Sy.
२. VM. ignores महत् । देवानाम् । असुरत्वम् । and एकम् । For explanation see RV. III. 55. 1 and 2.
३. यमरूपे मिथुनभूते अहश्च रात्रिश्चेत्येते । यम्या—सुपो डादेशः Sy.
४. Ngh. I.7.
५. ०मच० P.
६. पूज्यते P. M adds हि ।
७. नानाविधानि Sy.
८. शुक्लकृष्णादीनि रूपाणि Sy.
९. तयोर्मध्ये Sy.
१०. अर्जुनमहः Sy.
११. रोहवते P.
किरणसम्बन्धाद्दीप्यते । रोचते—'एकान्याभ्यां समर्थाभ्याम्' इति न निघातः Sy. १२. तश्च P.
१३. ०त्यह M. and P. त्वथ M.
१४. च M. and P. ह M. अन्यद्रात्रिलक्षणम् Sy.
१५. कृष्णो P. तमःसम्बन्धात्कृष्णवर्णमाभाति Sy.
१६. कृष्णवर्णा Sy.
१७. Ngh. I.7.
१८. ०रुव P.
शुक्लतया रोचमाना Sy.
१९. Ngh. I.8. (Here it is a synonym of उषस्)
२०. ये परस्परम् Sy.
२१. ०रात्रामवे M.
२२. तस्मा० M.
२३. आहो० M.
२४. च P.
२५. निष्विष्वरीम् M. निषिध्वरीम् P. RV. III. 55.22., also cf. RV. VIII. 59.2.
२६. VM. ignores च (twice) महत् । देवानाम् । असुरत्वम् । and एकम् ॥ For explanation vide ibid III.55.1 and 2.

**मा॒ता च॒ यत्र॑ दुहि॒ता च॑ धे॒नू स॑ब॒र्दुघे॑ धा॒पये॑ते समी॒ची ।**
**ऋ॒तस्य॒ ते सद॒सीळे अ॒न्तर्म॒हद्दे॒वाना॑मसुर॒त्वमेक॑म् ॥ १२ ॥**

माता च[१]। तिसृष्वपि[२] ऋक्षु[३] ऋतशब्देनाऽऽदित्य[४] उच्यते[५], माता पृथिवी, द्यौर्दुहिता, यस्मात्[६] तत्रात्याहः[७] ? प्रश्नेन जीवति[८], माता[९]। दुहिता[१०]। च[११]। यस्मिन्नाकाशे[१२] वर्तमाने। कामानां दोग्ध्र्यौ[१३]। सबर्[१४] शब्दोऽमृतनाम[१५], अमृतस्य[१६] दोग्ध्र्यौ[१७], तत्र दिवस्तूदकममृतम्[१८], अन्नं पृथिव्याः। ते सङ्गते[१९] भूत्वा। अमृतं[२०] तत्परः पाययतः[२१]। ते च। अहं[२२] स्तौमि[२३]। आदित्यस्य[२४]। स्वभूते[२५] सदसि, आकाशे वर्तमाने इति। यदिदमाकाशे द्यावापृथिवी तिष्ठतस्तदपि देवकृतमिति[२६]।[२७]

१. व P.
२. ०सृष्ट्वपि P.
३. Omitted in P.
४. तच्छब्देना० M. ऋत शब्दोना० P.
५. ०च्यन्ते P.
६. ०स्मत् P.
७. ०त्या इतः M.
८. ०वन्ति P.
९. सर्वेषां निर्मातृत्वान्माता पृथिवी Sy.
१०. दूरे निहिता द्यौश्च Sy. दुहिता दुर्हिता दूरे हिता दोग्धेर्वा N. 3. 4.
११. वा P.
१२. ०न्नाकाश आकाशे M. and P. अन्तरिक्षे Sy.
१३. जगतः प्रीणयित्र्यौ Sy.
१४. सब M. सबः शब्दः क्षीरवाचीति सम्प्रदायविद आहुः। तस्मिन्नुपपदे 'दुह प्रपूरणे' इत्यस्माद्धातोः 'दुहः कब्घश्च' इति कप्रत्ययो घश्चान्तादेशः। प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः Sy.
१५. ०नामि M. ०नाम्नि P. 'धेनुं सबर्दुघां चक्रुरमृतं सबरुच्यते' BD. III. 84.
१६. ऋत० M. सबरः स्वीयस्य क्षीररूपरसस्य दोग्ध्र्यौ Sy.
१७. देग्ध्ये P.
१८. ०व उ० M.
१९. परस्परं सङ्गते सत्यौ Sy.
२०. तम्० P.
२१. स्वकीयं रसमन्योऽन्यं पाययेते। धापयेते—'धेट् पाने' इत्यस्य ण्यन्तस्य लटि 'निगरणचलनार्थेभ्यश्च' इति परस्मैपदे प्राप्ते 'पादिषु धेट उपसंख्यानम्' इत्यात्मनेपदम्। यद्वृत्तयोगादनिघातः Sy.
२२. अह P.
२३. स्तोमि P. यद्वा। वृष्टिलक्षणं रसं द्यौः पृथिवीं धापयते। आहुतिलक्षणं रसं द्यां पृथिवीति एवमन्योन्यं माता च दुहिता च भवतः। ऋतस्य सदसि स्थाने यज्ञसदने स्थितोऽहं ते उभे स्तौमि Sy.
२४. उदकस्य Sy.
२५. ०तस० M. स्थानभूते तस्मिन्नन्तरिक्षे Sy.
२६. ०वकत० P.
२७. VM. ignores अन्तः। महत्। देवानाम्। असुरत्वम्। and एकम् but gives the idea in the last sentence. For explanation see the commentary on RV. III. 55. 12.

अन्यस्यां वत्सं रिहती मिमाय कया भुवा नि दधे धेनुरूधः ।
ऋतस्य सा पयसापिन्वतेळा महद्देवानामसुरत्वमेकम् ॥ १३ ॥

अन्यस्याः । पृथिव्याः । वत्स[१]भूतम्, स्थावरं[२] जङ्गमं च । वर्षजिह्वया[३] लिहन्ती[४] द्यौः[५] । शब्दं[६] करोति । सा धेनुर्द्यौर्यदा[७] । वचनजलरहितया[८] । भूम्या[९] । आत्मीयमूधः[१०] । सन्दधाति[११] । इळेति[१२][१३] गोनाम[१४], सेयम्[१५] । गोसदृशीर्द्यौः । इन्द्रोत्पादितेनैव पयसा[१६] पृथिवीं[१७] प्रतिरक्षति[१८] ।[१९]

पद्या वस्ते पुरुरूपा वपूंष्यूर्ध्वा तस्थौ त्र्यविं रेरिहाणा ।
ऋतस्य सद्म वि चरामि विद्वान्महद्देवानामसुरत्वमेकम् ॥ १४ ॥

पद्या[२०] वस्ते[२१] । पदनिधानयोग्या[२२] पृथिवी[२३] । बहुरूपाणि[२४] । स्थावरजङ्गमशरीराणि[२५] ।

---

१. अग्निम् Sy.
२. ०वर M.
३. उदकधाराख्पया जिह्वया Sy.
४. ०हन्ति P. लिहती । रिहती—'लिह आस्वादने' इत्यस्य शतरि रूपम् । 'शतुरनुमः' इति ङीप उदात्तत्वम् Sy.
५. द्यौ P.
६. मेघद्वारा ध्वनिं करोति Sy.
७. प्रीणयित्री सा Sy.
८. M. omits words between शब्दं and जल ॥ जलवर्जितया Sy.
९. भुवा तत्रत्यं जलमादाय Sy.
१०. स्वकीयमूधः मेघरूपम् Sy.
११. उदकेन निहितमकरोत् Sy.
१२. पृथिवी Sy.
१३. इ P.
१४. Ngh. II. 11.
१५. सा जलवर्जिता Sy.
१६. उदकेन Sy.
१७. ०थिवी P.
१८. क्षरति is suggested for रक्षति ॥ वर्षकाले सिक्ता भवति । 'आदित्याज्जायते वृष्टिः' (Manu. 3.76.) इति स्मृतेः । अपिन्वत—'पिवि सेचने' मुचादिरात्मनेपदी । निघातः Sy.
१९. VM. ignores ऋतस्य । महत् । देवानाम् । असुरत्वम् । and एकम् । For explanation see RV. III. 55. 1, 2, 12. सत्यभूतस्यादित्यस्य Sy.
२०. वद्या P.
२१. Another hand supplies the *pratīka* in M. in the space left blank to denote omission.
२२. Omitted in M. लयनि० P.
२३. जगत्स्रष्टुः परमेश्वरस्य पद्भ्यां जातत्वात् पद्या भूमिः । तथाच मन्त्रवर्णः 'पद्भ्यां भूमिः' (RV.10.90.14.) इति । यद्वा पादसञ्चारे साधुः पद्या भूमिः । पद्या—पादशब्दात् 'भवे छन्दसि' इति यत् । 'पद्यत्यतदर्थे' (Pa.6.3.53.) इति पादस्य पद्भावः । यद्वा, 'तत्र साधुः' इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् Sy.
२४. नानाविधस्वरूपाणि Sy.
२५. स्थावरजङ्गमात्मकानि रूपाणि Sy.

आच्छादयति । अथोर्ध्वा[1] द्यौः[2] । तिष्ठति[3] । त्र्यविप्रमाणमादित्यं[4] वत्सभूतम्[5] । लिहन्ती[6] । तदिन्द्रस्य[7] । स्थानं[8] धाम् । अहं जानन्[9] । इह विचरामि[10] ।[11]

**पदेइव निहिते दस्मे अन्तस्तयोरन्यद्गुह्यमाविरन्यत् ।**
**सध्रीचीना पथ्या३ सा विषूची महद्देवानामसुरत्वमेकम् ॥ १५ ॥**

पदे इव[12] ।[13] महत आकाशस्य पदे[14] इव । निहिते[15] । दर्शनीये[16] द्यावापृथिवी । आकाशस्य[17] मध्ये । तयोः[18] । अन्यत्[19] । गुह्यं[20] पदं भवति स्वर्गः । आविर्भवति[21] । अन्यत्[22], पृथिवी । सोऽयम् ।

---

१. ०थ्योर्ध्वौ P. उत्तरवेद्यात्मनोन्नता सती स्वसारभूतेन हविषा Sy.

२. द्यौ P.

३. तस्थौ Sy.

४. प्रमा० M. त्रिविप्रमाणदावित्या P. सार्धसंवत्सरवयस्को वत्सस्त्र्यविरित्युच्यते । तत्प्रमाणमादित्यम् । त्रीन् लोकानवति स्वतेजसा व्याप्नोतीति त्र्यविरिति वा । 'अव रक्षणादिषु' '—इन्' (Uṇādi. 4.557.) इतीन्प्रत्ययः । कृत्स्वरः Sy.

५. वासभू० P.

६. लिहती । रेरिहाणा—'लिह आस्वादने' इत्यस्य यङ्लुकि शानचि रूपम् । अभ्यस्तस्वरः Sy.

७. तवन्द्र P. तदादित्यस्य is suggested for तदिन्द्रस्य according to VM's. remark on the commentary on RV. 3.55.12 ॥ सत्यभूतस्यादित्यस्य Sy.

८. ध्यान M.

९. जानानोऽहम् Sy.

१०. M. omits words between धाम् and विचरामि । The omission has been shown by dots put in blank space. हविर्भिस्तमादित्यं परिचरामि Sy.

११. VM. ignores महत् । देवानाम् । असुरत्वम् । एकम् ॥ For explanation vide ibid III.55.1. and 2.

१२. Omitted in M.

१३. मह P.

१४. पद्येते ज्ञायेते तत्तदसाधारणलिङ्गेनेति पदे । अहश्च रात्रिश्चेत्येते Sy.

१५. स्थापिते इव वर्तेते Sy.

१६. सर्वैर्दर्शनीये ते उभे Sy.

१७. नभसि मध्ये Sy.

१८. अहोरात्रयोः Sy.

१९. रात्रिलक्षणम् Sy.

२०. अप्रकाशमानतया गूढमिवास्ते Sy.

२१. सूर्यप्रकाशेन प्रकटं भवति Sy.

२२. अहः Sy.

द्यावापृथिव्यात्मको मार्गः[1]। सध्रीचीनश्च[2] भवति[3]। विषूचीनश्च[4], पृथिव्यां नानाकर्माणो मनुष्याः सह वर्तन्ते, परलोके तु न कश्चित् कञ्चन पश्यति, बहुविधैः[5] कर्मभिर्बहुदेहान् शात् न ? इत्यर्थः[6]।[7]

**आ धेनवो धुनयन्तामशिश्वीः सबर्दुघाः शशया अप्रदुग्धाः ।**
**नव्यानव्या युवतयो भवन्तीर्महद्देवानामसुरत्वमेकम् ॥ १६ ॥**

**आ धेनवः**[8]। वत्सवर्जिताः[9]। शयनशीलाः[10]। मनुष्यैश्चाप्रदुग्धाः[11]। सदा नवतराः[12]। तरुण्यश्च[13]। भवन्त्यः[14]। अमृतस्य दोग्ध्र्यः[15]। धेनव[16] इति दिगभिप्रायम्, ताः। पय आधुनयन्ताम्[17]= रक्षन्तु, इन्द्र ! तव प्रसादेनेति[18], मन्त्रैः साहचर्याद् बोद्धव्यमिति[19]।

---

१. M. omits words between आविर्भवति and मार्गः॥ काल इत्यर्थः Sy.

२. अहोरात्रयोः परस्परमेलनरूपा। सध्रीचीना—सहपूर्वादञ्चतेः क्विन्। 'सहस्य सध्रिः' इति सध्र्यादेशः। 'विभाषाञ्चेरदिक् स्त्रियाम्' इति खः Sy.

३. ०वनि M.

४. ०चीश्च P. पुण्यकृतोऽपुण्यकृतश्च प्राप्नोतीति विषूची भवति। सर्वे जना अहोरात्रयोर्वर्तन्ते। यद्वा पदेइव देवमनुष्यादीनां स्थानभूते द्यावापृथिव्यावन्तरन्तरिक्षे निहिते वर्तेते। तयोरन्यत् अन्या द्यौः गुह्यमस्माभिरदृश्यमानतया गूढा वर्तते। अन्या पृथिवी आविः सर्वैर्दृश्यमानत्वेन प्रकटा भवति Sy.

५. ०विध M.

६. ०त्यर्त्थः P. M. omits the matter between कर्मभिः and इत्यर्थः।

७. VM. ignores महत्। देवानाम्। असुरत्वम्। and एकम्॥ For explanation see RV. III.55.1 and 2.

८. In M. the *pratīka* has been added by different hand in space left blank.

९. शिशुरहिताः। यद्वा शिशवो न भवन्तीत्यशिश्वीः। अशिश्वीः—'सख्यशिश्वीति भाषायाम्' इति व्यत्ययेन छन्दसि भवति Sy.

१०. शयशन० P. नभसि शयाना वर्तमानाः Sy. ११. ०श्चाप्रादु० M. केनापि अक्षीणरसाः Sy.

१२. ०वरताः M. अतिशयेन नूतनाः Sy.

१३. परस्परमिश्रणोपेताः Sy.

१४. ०वन्ति P. दिशो मेघा वा Sy.

१५. उदकलक्षणस्य क्षीरस्य दोग्ध्र्यः Sy.

१६. वृष्टिद्वारा सर्वस्य जगतः प्रीणयित्र्यः Sy.

१७. ०यन्तः M. आदुहन्तु, मेघपक्षे—अशिश्वीर्भवन्तीरित्यत्र लिङ्गव्यत्ययः। 'धूञ् कम्पने' णिचि 'धूञ्प्रीणोर्नुग्वक्तव्यः' (VPa. 7.3.73.1.) इति नुक्। ह्रस्वश्छान्दसः Sy.

१८. M. omits words between रक्षन्तु and प्रसादेनेति।

१९. VM. ignores महत् देवानाम्। असुरत्वम्। and एकम्। For explanation see RV. III. 55.1 and 2.

यद॒न्यासु॑ वृ॒ष॒भो रोर॑वीति॒ सो अ॒न्यस्मि॑न्यू॒थे नि द॑धाति॒ रेतः॑ ।
स हि क्षपा॑वा॒न्त्स भगः॒ स राजा॑ म॒हद्दे॒वाना॑मसुर॒त्वमेक॑म् ॥ १७ ॥

यदन्यासु । यत्[1] । अन्यासु गोषु स्थितः[2][3] । वृषभः[4] । शब्दं करोति[5] । तदानीमेव स[6] वृषभः । अन्यस्मिन् । गोयूथे[7] । रेतः[8] । निदधाति[9] । स[10] वृषभः कः ? इत्यपेक्षायामुक्तम्—स[11] हीति सः । शत्रूणां क्षपणात् क्षपावान्[12] भवति । भजनीयश्च[13] स्तोतॄणाम् । ईष्टे च सर्वस्य[14] । एवं चायं दिक्षु स्थित्वा पृथिव्यामुदकं वर्षन्निन्द्रो भवति[15] ।

वी॒रस्य॒ नु स्वश्व्यं॑ जनासः॒ प्र नु वो॑चाम वि॒दुर॑स्य दे॒वाः ।
षो॒ळ्हा यु॒क्ताः पञ्च॑प॒ञ्चा व॑हन्ति म॒हद्दे॒वाना॑मसुर॒त्वमेक॑म् ॥ १८ ॥

वीरस्य । एको नुः पुराणार्थः[16] । हे जनाः ! वयमिन्द्रस्य[17] । शोभनाश्वत्वम्[18] । क्षिप्रम् ।

---

१. यः पर्जन्यात्मेन्द्रः Sy.

२. दिक्षु Sy. ३. स्थित्वा P.

४. अपां वर्षकः Sy.

५. मेघद्वारा भृशं शब्दं करोति । रोरवीति —'रु शब्दे' इत्यस्य यङ्लुगन्तस्य लटि रूपम् । 'एकान्याभ्यां समर्थाभ्याम्' इति प्रथमस्य न निघातः Sy.

६. पर्जन्य इन्द्रः Sy.

७. दिशां वृन्दे । यूथे—'यु मिश्रणे' 'तिथपृष्ठगूथयूथप्रोथाः' (Uṇādi. 2. 169.) इति थक्प्रत्ययान्तत्वेन निपातनाद्दीर्घः Sy.

८. रेते M. उदकम् । रेतः—'रीङ् क्षरणे' इत्यस्मात् 'स्रुरीभ्यां तुट् च' इत्यसुन्प्रत्ययस्तुडागमश्च । नित्त्वादाद्युदात्तः Sy.

९. तत्र वर्षति । लोके हि वृषभः कासुचिद् गोषु रेतःसेकार्थं रवं करोत्यन्यस्मिन् गोयूथे रेतः सिञ्चति तद्वत् Sy.

१०. M. omits निदधाति । सः ।

११. इन्द्रः Sy.

१२. क्षिपति शत्रूनुदकं वेति क्षेपणवान् । यद्वा क्षपा रात्रिः । तथा रात्रिपर्यायागानां स्तोत्राणां भागभूता या रात्रिः सोच्यते । तद्वान् Sy.

१३. सर्वैर्भजनीयः Sy.

१४. तत्तत्कर्मानुरूपफलप्रदानेन सर्वेषां राजा खलु Sy.

१५. VM. explains सः twice by च and ignores महत् । देवानाम् । असुरत्वम् । एकम् । For explanation see RV. III.55. 1 and 2.

१६. पुराणः M. रणः P.

१७. शूरस्येन्द्रस्य Sy.

१८. ०भनश्वत्वं P. शोभनाश्वोपेतत्वम् Sy.

ब्रूमः[1] । तदिदं[2] मयोच्यमानम् । देवा एव[3] । जानन्ति[4] । षोढा[5] । युक्ता[6] अश्वाः । तं वीरं पञ्च पञ्च भूत्वा[7] । मनुष्यान् प्रत्यावहन्ति[8], तत्त्वतः[9] षड् ऋतवो[10] भवन्ति, तान् मनुष्या हेमन्तशिशिरयोर्धर्मभेदस्य[11] सूक्ष्मत्वात्[12] पञ्च बुध्यन्ते, बहुसंवत्सरापेक्षया[13] वीप्सेति[14] ।[15]

**दे॒वस्त्वष्टा॑ सवि॒ता वि॒श्वरू॑पः पु॒पोष॑ प्र॒जाः पु॑रु॒धा ज॑जान ।**
**इ॒मा च॒ विश्वा॒ भुव॑नान्यस्य म॒हद्दे॒वाना॑मसु॒र॒त्वमेक॑म् ॥ १९ ॥**

देवः[16] । यास्कः[17] —[18]'देवः[19] । त्वष्टा[20] । सविता[21] । सर्वरूपः[22] । पोषयति[23] । प्रजा रसानु-

---

१. प्रकर्षेण वदाम Sy.

२. अस्येन्द्रस्य स्वश्वत्वम् Sy.

३. देवा अपि Sy.

४. किं तत्स्वश्वत्वम् ? तदुच्यते Sy.

५. मासानां द्वन्द्वयोगकाले षोढा दृश्यमाना ऋतवोऽश्वा निरूप्यन्ते । षोळहा—षष्शब्दात् 'संख्याया विधार्थे धा' इति धाप्रत्ययः । 'षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च' (VPa. 6.3.109.3,4.) इत्युत्वं ष्टुत्वं च । प्रत्ययस्वरः Sy.

६. युक्ताः सन्तः Sy.

७. ते च षट्संख्याका ऋतवो हेमन्तशिशिरयोः समासेन Sy.

८. कालात्मकमिन्द्रम् । तदिदमिन्द्रस्य स्वश्वत्वं यदृतुभिरूढत्वम् Sy.

९. तत्व० M. and P.

१०. रत० P.　११. ०योरर्द्धमभे० P.

१२. क्षुत्वात् P.　१३. ०रादिवक्ष. P.

१४. वीस्पन्ति P.

१५. VM. ignores प्र । महत् देवानाम् । असुरत्वम् । एकम् ॥ For explanation see RV. III.55.1 and 2.

१६. त्वाष्ट्रे पशौ हविषोऽनुवाक्या 'देवस्त्वष्टा' इत्येषा । सूत्रितञ्च—'देवस्त्वष्टा सविता विश्वरूपो देव त्वष्टर्यद्ध चारुत्वमानट्' (ASS.3.8.) इति Sy.

१७. विश्वामित्रस्य प्रजापतेरार्षम् SKN. Dur.　१८. N. 10. 34.

१९. देवो दानादिगुणयुक्तः SKN.

२०. त्वष्टृनामकः Sy. मध्यमस्थानः SKN. मध्यमः Dur.

२१. अन्तर्यामितया सर्वस्य प्रेरकः Sy. वृष्टिप्रदानद्वारेण सर्वस्य प्रसविता SKN. सर्वस्य भूतग्रामस्य प्रसवितोत्पादयिता । उदकसम्प्रदानद्वारेण Dur.

२२. रूपः P. नानाविधरूपः । विश्वरूपः—'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् Sy. तथाच 'रूपंरूपं मघवा बोभवीति' (RV.III.53.8.) इति मन्त्रः SKN.

२३. Present editions of N. read पोषति । वृष्टिप्रदानद्वारेण पुष्णाति SKN. किमुत्पादयितैव ? नेत्युच्यते . . . पुष्णाति चासावुत्पाद्य Dur.

प्रदानेन। बहुधा[1]। जनयति[2]। इमानि[3]। च। सर्वाणि[4]। भुवनान्युदकानि[5]। अस्य[6]। महच्चास्मै। देवानाम्। असुरत्वम्[7]। एकम्[8], प्रज्ञावत्त्वं[9] वा[10], प्राणवत्त्वं[11] वा इति[12]।

मही समैरच्चम्वा समीची उभे ते अस्य वसुना न्यृष्टे।
शृण्वे वीरो विन्दमानो वसूनि महद्देवानामसुरत्वमेकम् ॥ २० ॥

मही[13]। महती[14]। द्यावापृथिवी[15]। परस्परं सङ्क्रमयति[16] मनसा धनेन[17] समभिमुखे[18]।

---

१. Present editions of N. add चेमाः after बहुधा। न केवलं पुष्णाति, किं तर्हि ? बहुधा Dur.
२. जनेयय P. वर्द्धयति Dur.
३. मानि P. केन पुनरसौ जनयति, पुष्णाति, वर्द्धयति च ? यत आह . . . इमानि Dur.
४. विश्वा विश्वानि सर्वाणि Sy.
५. N. reads भूतानि ॥ भूतजातानि Sy. उदकनामैतत्। (Ngh. 1.12.) उदकानि SKN. भुवनान्युदकानि, अस्य यतः स्वतायां वर्तन्ते तस्माज्जनयति पुष्णाति वर्धयति च। अतश्च सर्वमिदं शक्तः कर्तुम् Dur.
६. त्वष्टुः सम्बन्धीनि Sy. अस्य स्वभूतानि नान्यस्य कस्यचित् SKN.
७. महच्चास्य देवानां मध्येऽसुरत्वम्। 'असुरिति प्रज्ञानाम', रो मत्वर्थीयः, प्रज्ञावत्त्वम्। अनवत्त्वं वा, अनः पुनः प्राणस्तेन तद्वन्तं ? (तद्वत्त्वं) बलवन्त ? (वत्त्व) मित्यर्थः। अन्नवत्त्वमित्यपपाठः, असुशब्देनान्नस्य वक्तुमशक्यत्वात्। अथवा वसुरत्त्वमादिलुप्तं वसुवत्त्वं धनवत्त्वमित्यर्थः। धनमसाधारणं नान्यस्य कस्यचिदीदृशमित्यर्थः अपिवेत्यपपाठः। असुरिति पठ्यमानस्यैव प्रदर्शनार्थं उपन्यासः। अस्यति क्षिपति, अनर्थम्। अस्ताः क्षिप्ता अस्यामर्थाः इत्यर्थप्राप्त्यनर्थपरिहारात्मकमुभयम् . . . ज्ञातिबन्धनं, तदभावेऽप्युभयं न स्यात्, आदिलुप्तं वा SKN. 'असुरिति प्रज्ञानाम' तया तद्वत्त्वम्। तया महत्या प्रज्ञया उदकेन साधनेन सर्वमिदं जनयति पुष्णाति वर्द्धयति च। अप्रज्ञो हि साधनसम्पत्तावपि किं कुर्यात्। अथवा . . . असुः प्राणः तेन तद्वत्त्वम्। एवमपि सति प्राणेनैव शक्यत एतत् सर्वं कर्तुम्, अप्राणो हि किं कुर्यात्। अन्नवत्त्वम्, इति केचित्। तेषामन्नहेतुनोदकेन तद्वत्त्वम् Dur.
८. एकः M. and P.
९. ०वत्वं M. and P.
१०. Omitted in P.
११. ०वत्वं M. N. reads अनवत्त्वं.
१२. P. reads प्रति. for वा इति। 'अपिवासुरिति प्रज्ञानाम। अस्यत्यनर्थान्। अस्ताश्चास्यामर्थाः। असुरत्वमादिलुप्तम्' N.10.34.; SKN. IV.40.
१३. महि P.
१४. ०हन्ती M. महत्यौ Sy.
१५. चमन्त्यदन्त्यनयोः देवमनुष्या इति चम्वौ। यद्वा चम्येते अद्येते भूतजातैरिति चम्वौ। द्यावापृथिव्यौ Sy.
१६. P. adds च after सङ्क्रमयति ॥ इन्द्रः प्रजापश्वादिभिः सम्यगयोजयत्। ऐरत्—'ईर गतौ' इत्यस्य लङि रूपम् Sy.
१७. धने P.
१८. मभि P. परस्परं सङ्गते Sy.

ततश्चोभे। ते द्यावापृथिवी[1]। इन्द्रोत्पादितेन[2]। धनेन[3] । ह्रद इवोर्मिभिर्न्यृष्टे[4] भवतः । सोऽयं वीरः[5]। शत्रुभ्यो धनानि[6]। लभमानः[7]। श्रूयत[8] इति[9]।

**इमां च॑ नः पृथि॒वीं वि॒श्वधा॑या॒ उप॑ क्षेति हि॒तमि॑त्रो॒ न राजा॑ ।**
**पु॒रः॒सदः॑ शर्म॒सदो॒ न वी॒रा म॒हद्दे॒वाना॑मसुर॒त्वमेक॑म् ॥ २१ ॥**

इमां च नः । स वीरः[10] । इमाम् । च । अस्मदीयाम्[11] । वेदिलक्षणां पृथिवीम्[12] । विश्वस्य धर्ता[13]। उपेत्य[14]। निवसति[15] परितः। हितमित्रः[16]। यथा गच्छत्येवमागच्छन्[17]। तस्य पुरोगन्तारो[18]ऽनुचरा अप्रधृष्यो[19] भवन्ति।. यथा[20]। गृहसदः[21]। वीराः[22], शर्मेति गृहनाम[23], दुर्गस्था वीरा यथाऽनभिभवनीया एवमिन्द्राश्रयात्[24]...[25]न्तीति[26]।[27]

---

१. द्यावापृथिव्यौ Sy. २. अस्येन्द्रस्य Sy.
३. तेजसा धनेन वा Sy.
४. ०भिन्यंष्टे M. ०भिसृष्टो P. नितरां व्याप्ते भवतः। न्यृष्टे—'ऋषी गतौ'। कर्मणि क्तः। 'गतिरनन्तरः' इति गतेः स्वरः Sy. ५. समर्थः स इन्द्रः Sy.
६. शत्रूनभिभूय तदीयानि धनानि Sy.
७. ०मान P. लभमानः सन्। विन्दमानः—'विद्लृ लाभे' इत्यस्य लटि शानचि रूपम्। तस्य लसार्वधातुकस्वरे धातुस्वरः Sy.
८. यत P. सर्वैः श्रूयते। 'तवेदि॒दम॒भितश्चे॒कि॒ते वसु॑' (RV.1.53.3.) इत्यादिषु दृष्टत्वात्। शृण्वे—'श्रु श्रवणे' इत्यस्य व्यत्ययेन कर्मणि श्नुः 'लोपस्त आत्मनेपदेषु' इति तलोपः Sy.
९. VM. ignores महत्। देवानाम्। असुरत्वम्। and एकम्। For explanation see RV.III.1 and 2.
१०. इन्द्रः Sy. ११. अस्माकम् Sy.
१२. अन्तरिक्षं च Sy.
१३. धत्ता M. विश्वस्य धाता सर्वाश्रो वा Sy.
१४. तयोः समीपे Sy.
१५. क्षेति—'क्षि निवासगत्योः' इत्यस्य लटि 'बहुलं छन्दसि' इति विकरणस्य लुक्। निघातः Sy.
१६. तत्र दृष्टान्तः। यथा कस्यचिद्धितोपदेष्टा सुहृत् समीपे निवसति तद्वत् Sy.
१७. ०च्छत्स्येव० M.
१८. युद्धार्थं पुरतो निश्चयेन गन्तारः Sy.
१९. ०धृष्यात् P. अप्रधृष्याः is suggested for अप्रधृष्यो।
२०. नरचार्थे Sy.
२१. इन्द्रस्य शर्मणि गृहे सीदन्तश्च भवन्ति। यत्र यत्रासौ तत्र सन्निधिं कुर्वाणा इत्यर्थः Sy.
२२. धीराः P. समर्था युद्धसहायाः मरुतः Sy.
२३. Ngh. III. 4. The passage शर्मेति गृहनाम should immediately follow गृहसदः and precede वीराः।
२४. ०द्रात्ष्यत् P. २५. M. denotes omission by dots.
२६. न्तिति P. २७. VM. ignores महत्। देवानाम्। असुरत्वम्। and एकम्। For explanation see RV. III. 55.1. and 2

**निष्षिध्वरीस्त ओषधीरुतापो रयिं त इन्द्र पृथिवी बिभर्ति ।**
**सखायस्ते वामभाजः स्याम महद्देवानामसुरत्वमेकम् ॥ २२ ॥**

निःषीध्वरीः[1] । हे इन्द्र[2] ! तुभ्यम् । ओषधयः[3] । आपः[4] । च[5] स्वसारस्य हविषः । निष्षिध्वर्यो[6] भवन्ति, स्वसारं[7] निर्गमयन्तीत्यर्थः[8] । तथा पृथिव्यपि[9] । त्वद्दत्तमेव[10] । गवात्मकमोषध्यात्मकं च धनम् । बिभर्ति[11] । तस्य[12] तव । सखायो[13] वयम् । धनभाजः[14] । स्यामेति[15][16] ।

व्याख्यत् तृतीयमध्यायं तृतीयस्याष्टकस्य सः ।
कुण्डिनस्य कुले जाता माताऽभूद् यस्य सुन्दरी ॥
इति तृतीयेऽष्टके तृतीयोऽध्यायः[17] ।

---

१. निषि० P.

२. हे पर्जन्यात्मक ! इन्द्र ! Sy.

३. ०धय P.

४. अप० P.
आपः त्वत्तो निस्सृताः Sy.

५. अपिच Sy.

६. निषिध्ययोः M. निषिध्वर्यः. P. निष्षिध्वर्यो नितरां त्वत्कर्तृकसिद्धिमत्यः । निष्षिध्वरीः—'षिधु संराद्धौ' । सम्पदादिलक्षणो भावे क्विप् । तदस्यास्तीत्यर्थे 'छन्दसीवनिपौ—' इति वनिप् । 'वनो र च' इति ङीप् रेफश्च । निसा सह समासः । निसः सकारं छान्दसत्वादनावृत्य 'उपसर्गात्सुनोति—' इत्यादिना षत्वम् । ङीप् पित्त्वादनुदात्तत्वे धातुस्वरः Sy.

७. ०सार P.

८. ०त्यर्थः P.

९. ०थिवीं P.

१०. ते तव भोगयोग्यम् Sy.

११. 'पुरु वसूनि पृथिवी बिभर्ति' (RV. 3. 51. 5.) इति हि निगमः । बिभर्ति—'डुभृञ् धारणपोषणयोः' इत्यस्य लटि 'भृञामित्' इत्यभ्यासस्येत्वम् । निघातः Sy.

१२. ततः ते तव Sy.

१३. हविष्प्रदानेनोपकारकाः स्तोतारो वयम् Sy.

१४. वननीयधनभागिनः । वामभाजः—'भज सेवायाम्', 'भजो ण्विः' (Pa. 3.2.62.) इति ण्विः । कृदुत्तरपदस्वरः Sy.

१५. भवेम । तदेतद्देवानां महदैश्वर्यम् Sy.

१६. VM. ignores महत् । देवानाम् । असुरत्वम् । and एकम् ॥ For explanation see ṚV. III. 55. 1 and 2.

१७. P. omits words between इति and अध्यायः ॥

# अथ तृतीयेऽष्टके चतुर्थोऽध्यायः ।[1]

‘न ता मिनन्ति मायिनो[2] व्याचिख्यासति माधवः ॥

चाहाङ्गानां[3] निपातानामर्थ[4]मादौ प्रदर्शयन् ॥ १ ॥

चकारः[5] समुच्चयार्थ[6]श्चेदर्थे[7] चापि[8] प्रवर्तते[9] ॥

काकुः समुच्चये कश्चित् तं चेदर्थं[10] विदुर्बुधाः ॥ २ ॥

यद्योगे[11] तिङुदात्तः[12] स्यात् स चेदर्थः[13] प्रकीर्तितः ॥

समुच्चयार्थं[14] तं विद्याद् यद्योगे[15] तिङ् निहन्यते ॥ ३ ॥

‘आ च त्वामेता वृषणा’[16] ‘त्वं[17] च सोम[18] नो वशः[19] ।’[20]

‘इन्द्रश्च[21] मृळयाति[22] नः’[23] चेदर्था[24]श्चा[25] इमे मताः ॥ ४ ॥

एवकारेण सदृशौ हाहौ[26] यास्केन भाषितौ[27] ।

‘यद्ध यान्ति मरुतो’[28]ऽत्र[29] हकारः खलुना समः ॥ ५ ॥

---

१. P. omits अथ . . . ध्यायः ।
२. RV. III. 56. 1.
३. चाहादीनां is suggested for चाहाङ्गानाम् ।
४. ०मर्त्यं० P. ५. चकाः P.
६. ०यार्त्यं० P.
७. ०दर्त्ये P. ८. चवि P.
९. प्रावर्त P.
१०. ०दर्त्यं P. ११. टाद्यो० P.
१२. तिवुदात्तं P.
१३. ०दर्त्यः P. १४. ०यार्त्यं P.
१५. योगे P.
१६. RV. III. 43.4.
१७. र त्वं P. १८. सो P.
१९. वशम् M. and P.
२०. RV. I. 91.6.
२१. इतीन्द्र० P.
२२. M. adds न ।
२३. RV. II. 41.11.
२४. ०दर्त्या P.
२५. ०श्च M.
२६. येहो M. एहो P.
हाहौ is a conjectured text.
२७. This possibly refers to ‘अह’ इति च, ‘ह’ इति च विनिग्रहार्थीयौ N. 1. 5.
२८. RV. I. 37. 13.
२९. ऽत्र has been added by the Editor to complete the verse.

'कद्ध[१] नूनं कधप्रियः[२]' 'को हु[३] कस्मिन्[४]नसि श्रितः[५]' [६]।
'कथा[७] हु तद्वरुणाय[८]' नैतेष्वस्ति विनिग्रहः[९] ॥६॥
'त्वं हु त्य[१०]दिन्द्र विश्वे[११]' वर्तते हो विनिग्रहे[१२] ।
स्फुटत्वोद्ग्रहणार्थी[१३]या हकारा[१४] बहवः[१५] श्रुताः ॥ ७ ॥
'अत्राह तत्कृणवं एषाम्[१६]' 'अत्राह दानुमातिरः ।'[१७]
'अत्राह तदुरुगायस्य[१८]' 'दिप्सन्त[१९] इद्रिपवो[२०] नाहं[२१] ॥'[२२] ८ ॥
अहा विनिग्रहार्थी[२३]याश्चत्वारः समुदाहृताः ।
दृश्यन्ते बहवोऽन्ये च सर्वेषु[२४] निहता[२५]स्तिङः[२६] ॥ ९ ॥
पूजायां गम्यमानायामाख्यातं न निहन्यते ।
'आदहं स्वधामन्व्[२७]' इति[२८] तत्रोदाहरणं विदुः ॥ १० ॥

---

१. तद्ध M.
२. RV. I. 38.1.
३. Omitted by P.
४. ०स्मिन्निति M.
५. श्रुतः M. and P.
६. RV. I. 75. 3.
७. तथा M.
८. RV.IV.3.5.
९. P. adds वि स्ति वि।
१०. त्यादि० P.
११. RV.VI.20.13.
१२. ०हेषु P.
१३. ०णार्त्थी P.
१४. ०काहा M.
    ०कारं P.
१५. वहव P.
१६. RV.I.48.4.
१७. RV. IV. 30. 7.
१८. RV.I.154.6.
१९. दिस्पन्दन्त M.
    दित्सन्त P.
२०. इन्द्रिपवः M.
    इन्द्रीववः P.
२१. Omitted in M. and P. both. We have added it as the omitted portion is real portion exemplified.
२२. RV. I. 147. 3.
२३. ०हार्त्थी० P.
२४. ०र्वेष्वि P.
२५. निहिता० M. and P.
२६. ०स्तिङम् M.
२७. ०मस्व् M.
२८. RV.I.6.4.

अनन्तरमेव पुनर्गर्भत्वं प्राप्स्यन्त्यमी[1] ।
न चासते[2] क्षणं[3] तूष्णीमिति पूजा प्रतीयते ॥ ११ ॥
अङ्गेति[4] क्षिप्रवचनं सम्बोधयति चापरम् ।
'सो अङ्ग वेद यदि वा न'[5] 'त्वमङ्ग प्र शंसिषः'[6] ॥ १२ ॥
एते सम्बोधने प्राहुर्[7] 'इन्द्रो'[8] अङ्ग महद्भयम्'[9] ।
अत्राहुः क्षिप्रवचनं यदा सम्बोधनं भवेत् ॥ १३ ॥
तदानीं प्रातिलोम्यं[10] चेदाख्यातं[11] न निहन्यते ।
प्रातिलोम्योदाहरणं न दृष्टमधुना मया ॥ १४ ॥ इति ॥

III.56.

न ता मिनन्ति मायिनो न धीरा व्रता देवानां प्रथमा ध्रुवाणि ।
न रोदसी अद्रुहा वेद्याभिर्न पर्वता निनमे तस्थिवांसः ॥ १ ॥

न[12] ता मिनन्ति ॥ प्रजापतिः ॥ न । तानि[13] । अन्यथा[14] कुर्वन्ति । मायाविनोऽसुराः[15] ।

---

१. ०प्सन्त्य० P. By reading प्राप्स्यन्त्य० one syllable is short in B. The reading प्राप्नुवन्त्य० is suggested.
२. M. omits words between मेव and न्त्यमी
३. क्षण्वस् M. ४. ०चनः M.
५. RV. X.129.7.
६. RV.I.84.19. ७. प्राहर् P.
८. M. omits words between सम्बोधने and अङ्ग ।
९. RV. II.41.10.
१०. प्रति० M. ११. ०लोमं P.
१२. 'न ता मिनन्ति' इत्यष्टर्चं तृतीयं सूक्तं विश्वामित्रस्य वाचः पुत्रस्य वा प्रजापतेरार्षं त्रैष्टुभं वैश्वदेवम् । तथा चानुक्रमणिका—'न ताष्टौ' (KSA. 20.56.p.16.) इति। सूक्तविनियोगो लिङ्गादवगन्तव्यः । अस्मिन् सूक्ते प्रायेणादित्यैः सह संवत्सरः स्तूयते Sy.
१३. लोके प्रसिद्धानि Sy.
१४. M. omits प्रजापतिः । न । तानि । and अन्यथा ॥ हिंसन्ति । मिनन्ति —'मीङ् हिंसायाम्' इत्यस्य लटि 'मिनातेर्निगमे' इति ह्रस्वः । निघातः Sy.
१५. कपटबुद्ध्युपेताः Sy.

नापि[1] । प्राज्ञाः[2] । ततश्च देवैर्दृष्टानि[3] । पुराणानि[4] । व्रतानि[5] । तथैव स्थिराणि भवन्ति[6] । तत्रोदाहरणम्[7]—न[8] । द्यावापृथिवी[9] । ये[10] च यावत्यो[11] वेद्या[12] अवगन्तव्या[13] देवमनुष्यादिकाः[14] प्रजा विद्यन्ते ताभिः सर्वाभिः । द्रोहवर्जिते[15], निनमनाय भवतः, सह प्रजाभिर्धार्यमाणाभिस्तिष्ठतः[16] । तथा पर्वताश्च[17] । न । निनमनाय[18] भवन्ति । तिष्ठन्तः[19] ।

**षड्भाराँ एको अचरन्बिभर्त्यृतं वर्षिष्ठमुप गाव आगुः ।**
**तिस्रो महीरुपरास्तस्थुरत्या गुहा द्वे निहिते दर्श्येका ॥ २ ॥**

षड्भारान्[19] । इदं च दैव्यमेकं पदम्[20], स्वयमचलः[21] । एकः[22] संवत्सरः । षट्[23] । भारान्[24] ।

---

१. नपि M.
न हिंसन्ति Sy.
२. विद्वांसः Sy.
३. ०वैर्दृष्टा० P.
देवानामिन्द्रादीनाम् Sy.
४. प्रथमानि सृष्टयनन्तरभावीनि Sy.
५. प्रानि M. लोकपालनादीनि । कर्माणि Sy.
६. केनापि चालयितुमशक्यानि Sy.
७. ०हरम् P.
८. न मिनीतः Sy.
९. द्यावापृथिव्यौ Sy.
१०. या P.
११. ०वति P. याश्च is suggested for ये च ।
१२. स्वाश्रयतया सर्वैर्वेदनीयाभिः प्रजाभिः सहितानि कर्माणि । वेद्याभिः—वेदनमर्हन्ति । 'छन्दसि च' इति यत्प्रत्ययः Sy.
१३. वग० P.
१४. M.omits words between तत्रोदाहरणं and देवमनुष्यादिकाः ॥ It instead misplaces here तिष्ठन्तः षड्भारान् । Cf. notes 19 and 20 on this page.
१५. दाह M. देवमनुष्यादिषु प्रजासु द्रोहवर्जिते Sy.
१६. ०माणातिष्ठयः P. तदेतदुपपादयति—पृथिव्यामूर्ध्वतया स्थितः Sy.
१७. वक्ता० P.
१८. निमना० M. निमाना० P.
निनमनीया भवन्ति । एतदुक्तं भवति । यद्देवमनुष्यादीनां द्यावापृथिव्याधारकतयावस्थापनं यच्च पर्वतादीनामुन्नततयावस्थापनं तदिदं देवानां कर्म । तन्न कोप्यन्यथयितुमर्हति । निनमे—'णमु प्रह्वत्वे' इत्यस्य कृत्यार्थे केन्प्रत्ययः । कृत्स्वरः Sy.
१९. Omitted here in M. Cf. no. 14 on this page.
२०. M. omits words between इदं and पदम् ।
२१. ०चलं P. स्थायी Sy.
२२. के P.
२३. षट्सङ्ख्याकान् Sy.
२४. भ्रियन्ते पुष्पविकासादि येष्विति भारा ऋतवः । वसन्तादीन् । 'डुभृञ् धारणपोषणयोः' इत्यस्मादधिकरणे घञ् । 'कर्षात्वतो घञः' इत्यन्तोदात्तत्वम् Sy.

बिभर्ति[१]। तद् गच्छद्[२]भूतम्। वृद्धतमम्[३]। गावः[४]। उपगच्छन्ति[५]—इति ऋतूनाह[६]। तथा[७] त्रयो लोकाः। महान्तः[८]। स्वे स्वे स्थाने[९] उपतिष्ठन्ति[१०]। गमनस्वभावाः[११]। अपि तेषां[१२] द्वौ लोकौ[१३]। गुहायाम्[१४]। निहितौ[१५]। सर्वैर्मनुष्यैर्[१६]दर्शनीयो भवति। अयं लोकः[१७]।

**त्रिपाजस्यो वृषभो विश्वरूप उत त्र्युधा पुरुध प्रजावान् ।**
**त्र्यनीकः पत्यते माहिनावान्त्स रेतोधा वृषभः शश्वतीनाम् ॥ ३ ॥**

त्रिपाजस्यः[१८]। तेजसे[१९] हितं पाजस्यानि[२०] भवन्ति, संवत्सरस्य, वसन्ते[२१] प्रातः, ग्रीष्मे मध्यन्दिनः[२२], शरद्यपराह्णः। कामानां वर्षिता[२३]। नानालिङ्गत्वाद्[२४] ऋतूनां विश्वरूपः[२५]। अपिच[२६]।

---

१. ०भर्त P. अवयवत्वेन धारयति Sy.

२. गच्छ P. ऋतं सत्यभूतम् Sy.

३. वृद्धतरमादित्यात्मकं तमेव संवत्सरम् Sy.

४. रश्मयः Sy.

५. प्राप्नुवन्ति Sy.

६. तस्मिन्नेव संवत्सरे Sy.

७. तयात P. त्रयः Sy.

८. ०न्त P. लोकाः Sy.

९. उपस्थाः D. पस्थः P. उपर्युपरि वर्तमानाः Sy.

१०. तिष्ठ M. लोकत्रयमेव दर्शयति Sy.

११. अतनशीला आगमापायिधर्मोपेताः Sy.

१२. M. omits words between गमन and तेषाम्।

१३. तोकौ P. द्यौश्चान्तरिक्षं चेत्येते Sy.

१४. स्वात्मनि Sy.

१५. निहिते न दृश्येते। निहिते—दधातेः कर्मणि निष्ठा। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् Sy.

१६. ०र्महत्यैं० P. सर्वभूताधारतया दृश्यते। दर्शि—'दृशिर् प्रेक्षणे' कर्मणि लुङि चिणि 'चिणो लुक्' इति प्रत्ययस्य लुक्। वाक्यभेदादनिघातः Sy.

१७. लोकम् P. एका भूमिः सर्वभूताधारतया दृश्यते Sy.

१८. त्रिवाजस्य P.

१९. त्रिपाजस्यः—ग्रीष्मवर्षाहेमन्ताख्यैस्त्रिभिर्ऋतुभिः पाजस्यमुरो यस्य स त्रिपाजस्यः। त्र्युरस्क इत्यर्थः। उरोवचनश्च पाजस्यशब्दः 'इन्द्रस्य क्रोडोऽदित्यै पाजस्यम्' (VS. 25.8.) इति अश्वमेधमन्त्रे उरःपरतयाम्नानात्। पाजसि बले साधुरिति व्युत्पत्तेश्च सर्वेषामङ्गानां मध्ये उरसो बलवत्त्वात् Sy.

२०. वाज P.

२१. ०सन्त P.

२२. M. omits words between वसन्ते and न्दिनः।

२३. स्वावयवभूते वर्षर्तावपां वर्षकः Sy.

२४. नामलि० P.

२५. ०रूपो M. and P. तत्तदृत्वसाधारणकार्यैः पुष्पविकासादिभिर्लिङ्गैर्नानारूपः Sy.

२६. M. reads प्रीहि P. reads प्रवि for अपि च।

श्यामाकयवा[1]नामुत्पादनात्[2] त्र्यूधस्क[3]ः। बहुप्रकारम्[4]। प्रजननं कुर्वन्। अनीकशब्दो मुखवचनः[5], तेजोयुक्ताश्[6]चत्वारो मासा[7] भवन्ति, वर्षयुक्ताश्चत्वारः, [8]ततस्त्रिमुख उक्तः। सोऽयम्। अभिगच्छति[9]। पूजावान्[10], **'पूजयन् प्रजाः स [11]संवत्सरः'** इत्याह। स रेतोधाः, सर्वासामेव दिशाम्[12]। वर्षणाद्[13], रेतो दधाती[14]ति।

**अभीकं आसां पदवीरंबोध्यादित्यानामह्वे चारु नामं।**
**आपश्चिदस्मा अरमन्त देवीः पृथग्व्रजंन्तीः परिं षीमवृञ्जन् ॥ ४ ॥**

अभीके[15]। वर्षन्[16] दिक्षु[17] यः पदं[18] निधत्ते=अभिगच्छति। दिशाम्[19]। समीपे। बुध्यते[20],

---

१. श्यामाकयवया० P. VM. should have mentioned a third kind of grain.

२. ०दना M. and P.

३. न्यूधस्तः P. वसन्तशरद्धेमन्ताख्यैस्त्रिभिर्ऋतुभिरूधो यस्य स त्र्युधा। बहुव्रीहौ 'ऊधसोऽनङ्' इत्यनङ् सर्वविधीनां छन्दसि विकल्पितत्वात् पुंस्यपि भवति। ऊकारस्य ह्रस्वश्छान्दसः। 'उत्तरपदान्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दस्युपसंख्यानम्' इत्युत्तरपदान्तोदात्तत्वम् Sy.

४. प्रकर्षेण जायन्त इति व्रीह्यादयः प्रजाः। पृथक् नानाप्रकारेण विद्यमानव्रीहियवादिरूपप्रजावान् Sy.

५. ०चन M.

६. श्च P.

७. भासा P.

८. शीतयुक्ताश्चत्वारः is suggested as an additional phrase before ततस्त्रिमुख उक्तः। तत्र त्रि० M. तत्र स्ति P. त्रिभिरुष्णवर्षशीताख्यैर नीकैर्गणैरुपेतः Sy.

९. आगच्छति Sy.

१०. महत्त्ववान् संवत्सराभिमानी देवः Sy.

११. Omitted in P.

१२. बह्वीनामोषधीनां पुष्पफलादिसम्पत्तये Sy.

१३. सेचनसमर्थः Sy.

१४. रेतस उदकस्य धर्ता भवति Sy.

१५. अभिके P.

१६. वर्षार्थ P.

१७. दिषु M.

१८. पदवीः। पदानि तत्तद्वनविशिष्टपुष्पफलादीनि वेति प्रजनयतीति पदवीः सन्। पदवीः—'वी गत्यादिषु'। क्विप् Sy.

१९. संवत्सर आसामोषधीनाम् Sy.

२०. सावधानो वर्तते। अबोधि—'बुध अवगमने' इत्यस्य लुङि 'दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्' इति कर्तरि चिण्। 'चिणो लुक्'। निघातः Sy.

सङ्गच्छते[1] दिग्भिरित्यर्थः[2] । यदाहं वर्षमिच्छन् वर्षस्येश्वराणामादित्यानाम्[3] । आह्वयामि[4] । चारूणि । नामानि[5] । तस्मा[6] अस्मै[7] संवत्सराय । आपः । रमयन्ते[8] । देव्यः[9] । वर्षासु[10] पृथग्[11] । गच्छन्त्यः । परिवर्जयन्ति[12] च । एनम्[13], सर्वतोऽष्टसु मासेषु[14] ।

त्री ष॒धस्था॒ सिन्ध॑व॒स्त्रिः क॒वी॒नामु॒त त्रि॒मा॒ता वि॒दथे॑षु स॒म्राट् ।
ऋ॒ताव॑री॒र्योष॑णास्ति॒स्रो अप्या॒स्त्रिरा दि॒वो वि॒दथे॒ पत्य॑मानाः ॥ ५ ॥

त्री[15] षधस्था[16] । अपामिममर्थं बोधयति[17], त्रीणि । सवनानि[18] । हे सिन्धवः[19] ! देवानां क्रान्तदर्शनानां स्थानानि[20] । त्रिश्च[21] तेषां तेष्वागमनम्[22] । अपिच । त्रयाणां[23] लोकानां[24] निर्माता । तेषु

---

१. गच्छ Sy.

२. द्भिरित्यर्थः P.

३. आदित्या मासाः संख्यासाम्यात् । यद्वादित्यसङ्क्रमणनिमित्तत्वादादित्या मासाः 'मेषादिस्थे सवितरि यो यो मासः प्रपूर्यते चान्द्रः ॥ चैत्राद्यः स ज्ञेयः' इति स्मृतेः । तेषां चैत्रादीनां मासानाम् । आदित्यसम्बन्धिन इत्यर्थे 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति ण्यः । अतोलोपयलोपौ । प्रत्ययस्वरः Sy.

४. उच्चारयामीत्यर्थः । अह्वे—ह्वयतेर्लुङि सिचः 'आत्मनेपदेष्वन्यतरस्याम्' इत्यङादेशः । गुणः । निघातः Sy.

५. मधुश्च माधवश्चेत्यादि नामधेयम् Sy.

६. तस्मात् P.

७. तस्मै P.

८. दमन्ते P. संवत्सरसम्बन्धिमासचतुष्टये वृष्टिद्वारा रमन्ते Sy.

९. द्योतनशीलाः Sy.

१०. वर्षासु P.

११. इतस्ततः Sy.

१२. अवृञ्जन्—'वृजी वर्जने' इत्यस्य लङि इनमि रूपम् । निघातः Sy.

१३. संवत्सरम् Sy.

१४. VM. ignores चित् ॥ अपि Sy.

१५. त्रि P.

१६. प्रजापतिः स्वविज्ञानं सिन्धूनां निवेदयति Sy.

१७. ०मिमात्यं बाध० P.

१८. त्रयो लोकाः। सधस्था—'पूर्वपदस्थात्'—इति संहितायां षत्वम् Sy.

१९. हे आपः ! सर्वसाक्षिण्यः ! यूयम् Sy.

२०. निवासस्थानानि भवन्ति Sy.

२१. त्रीश्च P. ते च प्रत्येकं त्रिर्भवन्ति । तथा 'त्रयो वा इमे त्रिवृतो लोकाः' इति श्रुतिः। न द्याव॒ इन्द्र॒मोज॑सा॒ नान्त॑रिक्षाणि॒ व॒ज्रिण॑म् । न वि व्य॑चन्त॒ भूम॑यः (RV. VIII. 6. 15.) इति प्रत्येकं बहुवचनश्रवणात् । बहुवचनं च कपिञ्जलन्यायेन त्रित्वे पर्यवसितम् Sy.

२२. तेषां ग P.

२३. त्रिधातूनि गुणान्य P. त्रयाणाममीषां लोकानां निर्माता संवत्सरः सूर्यो वा Sy.

२४. कान् P.

यज्ञेषु । सम्राट्[1] भवतीन्द्रः । तथा सत्यवत्यः[2] । स्त्रियश्च[3] । तिस्रः[4] । अन्तरिक्षभवाः—इडा[5], सरस्वती, भारती चेति, अद्रुघो हिता[6] इत्यपरम्, ताश्च । स्वर्गात्[7] । यज्ञे । निर्गच्छन्त्यो[8] भवन्ति । अनुसवनमागमनादि[9], इति बहुशः त्रिशब्दोच्चारणमपेक्षितमिति[10] ।

**त्रिरा दि॒वः स॑वित॒र्वार्या॑णि दि॒वेदि॑व॒ आ सु॑व॒ त्रिर्नो॒ अह्नः॑ ।**
**त्रि॒धातु॑ रा॒य आ सु॑वा॒ वसू॑नि॒ भग॑ त्रातर्धिषणे सा॒तये॑ धाः ॥ ६ ॥**

त्रिरा दिवः । सवितः[11] ! वरणीयानि[12] धनानि । दिवः[13] । त्रिः[14] । आगत्य । अस्मभ्यम्[15] । अन्वहम्[16] । एकस्याह्नः[17] । त्रिः । प्रेरय[18] । गोधनानि[19] च । त्रिधातूनि[20] त्रिगुणानि[21] । आसुव[22] सवितः[23] ! किं च, हे भग[24] ! रक्षितः[25] ! अस्मान् धनाय[26] । धेहि[27] । तथा त्वमपि हे धिषणे ! वाक् ! इति[28] ।

---

१. यजनीयतया सम्यग् दीप्यमानो वर्तते Sy.
२. ॰त्यपत्यः M. ॰त्यपत्यवस्यः P. उदकवत्यः Sy.
३. इळा सरस्वती भारती इत्येवंरूपाः परस्परमिश्रणोपेता देवताः । योषणाः—'युष' इति सौत्रो धातुः । ल्युटि रूपम् । लित्स्वरः Sy.
४. त्रिसङ्ख्याकाः । तिस्रः—'तिसृभ्यो जसः' इत्याद्युदात्तत्वम् Sy.
५. इळा P.
६. ओ M. नभस्या आप्तव्या वा । अप्याः—अप् इत्यन्तरिक्षनाम (Ngh. 1.3.) । तत्र भवाः । 'भवे छन्दसि' इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् Sy.
७. दिवसस्य Sy.
८. आगच्छन्त्यः Sy.
९. ॰नुतपन॰ M. त्रिषु सवनेषु Sy.
१०. स्त्री श॰ M.
११. सर्वस्य प्रेरक ! हे आदित्य ! Sy.
१२. सर्वैः सम्भजनीयानि Sy.
१३. द्युलोकात् त्वम् Sy.
१४. त्रिवारम् । त्रिः—'द्वित्रिचतुर्भ्यः सुच्' (Pa. 5.4.18.) इति सुच् । चित्स्वरः Sy.
१५. प्रतिदिनम् Sy.
१६. अह्नः सम्बन्धिषु Sy.
१७. त्रिषु सवनेषु Sy.
१८. प्रयच्छेत्यर्थः । सुव—'षू प्रेरणे' तुदादिः । लोटि रूपम् Sy.
१९. रान्ति क्षीरादीनीति रायो गोधनानि तानि च Sy.
२०. त्रिधातूनि पशुकनकरत्नभेदेन त्रिप्रकाराणि । त्रिधातु—'डुधाञ् धारणपोषणयोः' इत्यस्मात् 'सितनिगमिमसि—' इत्यादिना तुन्प्रत्ययः Sy.
२१. तिगु॰ M. गु॰ P.
२२. ॰सुवाव P. प्रयच्छ Sy.
२३. ॰विता द P.
२४. ॰गव P. सर्वैर्भजनीय ! Sy.
२५. अस्माकं रक्षक ! हे आदित्य ! Sy.
२६. धनलाभाय Sy.
२७. कुरु Sy.
२८. वाशति P. माध्यमिके हे वाक् ! धिषणे—आमन्त्रितत्वान्निघातः Sy.

त्रिरा दि॒वः स॑वि॒ता सो॑षवीति॒ राजा॑ना मि॒त्रावरु॑णा सुपा॒णी ।
आप॑श्चिदस्य॒ रोद॑सी चिदु॒र्वी रत्नं॑ भिक्षन्त सवि॒तुः स॒वाय॑ ॥ ७ ॥

त्रिरा[1] दिवः । सविता[2] । अमुष्माल्लोकात्[3] । अह्नः त्रिः[4] । प्रेरयति[5] । राजाना[6] । मित्रा-वरुणा[7]वहोरात्राधिपती[8] । शोभनपाणी[9], तावपि सवितृप्रेरितावित्यवगन्तव्यम् । आप[10] इत्यन्त-रिक्षनाम[11], अस्य[12] सवितुर्वशे[13] । अन्तरिक्षम्[14] । विस्तीर्णे । द्यावापृथिवी[15] । च । वर्तन्ते । तस्मादस्मा[16]-त्सवितुः । रत्नम्[17] । स्तोतारो याचन्ते[18] । प्रेरणाय[19] देहीति वदन्तीत्यर्थः[20] ।[21]

त्रिरु॑त्त॒मा दू॑ण॒शा रो॑च॒नानि॒ त्रयो॑ राज॒न्त्यसु॑रस्य वी॒राः ।
ऋ॒तावा॑न इषि॒रा दू॒ळभा॑स॒स्त्रिरा दि॒वो वि॒दथे॑ सन्तु दे॒वाः ॥ ८ ॥

त्रिरुत्तमा । त्रीणि । उत्तमानि[22], ऊर्ध्वानि । नाशयितुमशक्यानि[23] । पृथिव्यादीनि

---

१. त्रीरा P.
२. देवः Sy.
३. दिवसस्य Sy.
४. त्रिषु कालेषु Sy.
५. अस्मभ्यं धनान्यासुवतु प्रेरयतु । सोषवीति,—'षू प्रेरणे' इत्यस्य यङ्लुकि लटि रूपम् Sy.
६. राजानौ Sy.
७. मित्रावरुणा—'देवताद्वन्द्वे च' इत्युभयपदप्रकृतिस्वरत्वम् Sy.
८. ०पति M.
९. ०नवाणी M.
मित्रावरुणौ Sy.
१०. आप्नोति सर्वं जगदित्यापोऽन्तरिक्षम् । नित्यबहुवचनान्तत्वाद् बहुवचनम् Sy.
११. Ngh. I. 3.
१२. देवस्य Sy.
१३. ०तुर्वाशे P.
१४. अन्तरिक्षम् should immediately follow आप इत्यन्तरिक्षनाम and precede अस्य ।
१५. द्यावापृथिव्यावेता देवताः Sy.
१६. प्रेरकस्य Sy.
१७. रन्तम् P.
अपेक्षितमर्थम् Sy.
१८. ०चते P. भिक्षन्त—भिक्ष याच्ञायाम्' इत्यस्य लङि रूपम् Sy.
१९. सवेन प्रेरणेन । सवाय—'जवसवौ च' (Pa.3.56.4.) इत्यजन्तत्वेन निपातनादन्तोदात्तत्वम् Sy.
२०. त्यर्त्थः P.
२१. VM. seems to explain one चित् by च ॥ चित् अपिच Sy.
२२. उत्तमानि स्थानानि सन्ति । उत्तमा—'उत्तमशश्वत्तमौ सर्वत्र' इत्युञ्छादिषु पाठादन्तोदात्तत्वम् Sy.
२३. ०तुं श० P. केनापि विनाशयितुमशक्यानि । दूणशा—'नशेः कृच्छ्रार्थे खल्' । 'दुरो दाशनाशदभध्येषूत्वं वक्तव्यम्' इति रेफस्योत्वम् । उत्तरपदादेः ष्टुत्वम् । लित्स्वरः Sy.

रोचनानि[1]। त्रयः[2]। राजन्ति[3]। बलवतः[4] संवत्सरस्य। वीराः[5]—अग्निर्वायुः सूर्यश्च। सत्यवन्तः[6]।
हविषामेष्टारः[7]। दम्भितुमशक्याः[8]। दिवः[9]। त्रिः[10]। आ[11]। सन्तु[12]। अस्माकं[13] यज्ञे। देवाः।

III.57.

**प्र मे॑ विवि॒क्वाँ अ॑विद॒न्मनी॑षां धे॒नुं चर॑न्तीं॒ प्रयु॑ता॒मगो॑पाम्।**
**स॒द्यश्चि॒द्या दु॑दु॒हे भूरि॑ धा॒सेरिन्द्र॒स्तद॒ग्निः प॑नि॒तारो॑ अ॒स्याः॥ १॥**

[14][15]प्र मे विविक्वान्॥ विश्वामित्रः॥ प्रजानन्तु[16]। मम। गुणदोषविवेचनसमर्थः[17][18]।
पूजनसमर्थाम्[19]। धेनुम्[20]। बन्धायुता[21]=प्रयुता[22]=विमुक्ता[23] विमुक्ताम्[24]। तृणानि भक्षयन्तीम्[25]।

---

१. दीप्यमानानि Sy.
२. अग्निवायुसूर्यरूपाः Sy.
३. राज P. शोभन्ते Sy.
४. ०लतः P. एतेषु त्रिषु स्थानेषु असुरस्य। अस्यति क्षिपति सर्वमित्यसुरः कालात्मा संवत्सरः। तस्य Sy.
५. पुत्राः Sy.
६. तानेव विशिनष्टि—ऋतं सत्यभूतमग्निहोत्रादिकं कर्म तद्वन्तः Sy.
७. यज्ञार्थं शीघ्रगतिमन्तः Sy.
८. दुर्दभासः—केनापि स्वतेजसा तिरस्कर्तुमशक्या एते सर्वे देवाः। दूळभासः, पूर्ववदुत्वष्टुत्वे Sy.
९. अह्नः सम्बधिषु Sy.
१०. त्रिषु सवनेषु Sy.
११. समन्तात् Sy.
१२. सतु P. यजनीयतया भवन्तु Sy.
१३. अमस्मा० P. अस्मदीये यज्ञे Sy.
१४. 'प्र मे विविक्वान्' इति षडृचं चतुर्थं सूक्तम्। विश्वामित्र ऋषिः। त्रिष्टुप् छन्दः। विश्वेदेवा देवता। अत्रानुक्रमणिका 'प्र मे षट्' (KSA.20.57.p.16.) इति। सूक्तविनियोगो लैङ्गिकः Sy.
१५. प्रे M.
१६. ०जानां तु M. प्रजानातु is suggested for प्रजानन्तु॥ प्रकर्षेण जानातु। अविदत्—'विद ज्ञाने' इत्यस्य लङि 'बहुलं छन्दसि' इति शः Sy.
१७. विचेतन० P. विवेकवानिन्द्रोऽग्निर्वा। विविक्वान्—'विचिर् पृथग्भावे' इत्यस्य क्वसौ रूपम् Sy.
१८. ०समर्त्थः P.
१९. ०सक्तां P. देवताविषयां स्तुतिम् Sy.
२०. नवसूतिकां गामिव देवतानां प्रीणयित्रीं स्तुतिमविददित्यन्वयः Sy.
२१. बद्धायु० M.
२२. पृथग्भूतामेकाकिनीम् Sy.
२३. Omitted in P.
२४. ०मुक्तान् M.
२५. यवसे इतस्ततो गच्छन्तीम् Sy.

अगोपनीयाम्[१] । सद्यः[२] । एव । या[३] । दोग्धि[४] । बहु[५] । अन्नस्य[६] । तच्च[७] दुग्धम्[८] । अस्याः[९] । इन्द्राग्निरित्यादयो[१०] देवाः । स्तोतारो[११] भवन्तीति[१२], स्तुतिवाचः प्रवृत्ताया माधुर्यमिन्द्रादयः[१३] स्तुवन्ति[१४], सुष्ठु त्वया स्तुत[१५]मित्यर्थः[१६] ।

**इन्द्रः सु पूषा वृषणा सुहस्ता दिवो न प्रीताः शशयं दुदुह्रे ।**
**विश्वे यदस्यां रणयन्त देवाः प्र वोऽत्र वसवः सुम्नमश्याम् ॥ २ ॥**

इन्द्रः । इन्द्रः । पूषा । वर्षितारावश्विनौ[१७] च । शोभनहस्तावस्या[१८] धेनोः स्तनं[१९] सुष्ठु दुहन्ति । यथा[२०] । प्रीता[२१] अमी । दिवः[२२] । स्तनम्=मेघम्[२३] । दुहन्ति[२४] । यस्मात् । अस्यां धेन्वाम्[२५] । विश्वेऽपि[२६] । देवाः । रमन्ते[२७] । अस्यां[२८] धेन्वाम् । हे वासयितारः[२९] ! देवाः ! युष्मदीयम्[३०] । सुखमहम्[३१] ।

---

१. अहोपनीयायाम् M. अहोगोपनीया P. गोप्तृरहिताम् । यथाकामं चरन्तीम् Sy.
२. सेद्यः P. तदानीमेव Sy.
३. स्तुतिरूपा धेनुः Sy.
४. दोग्धिः P. दुग्धे । दुदुहे—'दुह प्रपूरणे' इत्यस्य लिटि रूपम् । यद्वृत्तयोगादनिघातः । प्रत्ययस्वरः Sy.
५. बह्वन्नमपेक्षितं फलम् Sy.
६. धारयति प्राणान् धीयते दीयतेर्ऽभिभ्य- इति वा धासिरन्नम् । कर्मणि षष्ठी Sy.
७. Omitted in P. तथान्नभूतस्य पयसः Sy. ८. दुग्घम् P.
९. स्तुतिरूपाया धेनोः Sy.
१०. इन्द्रोऽग्नि॰ is suggested for इन्द्राग्नि॰
११. पनितारः—'पन स्तुतौ' इत्यस्य तृचि रूपम् Sy.
१२. यद्वा इन्द्राग्नी स्तोतारो वयं चास्या धेनोस्तत्पयः प्राप्नुमः Sy.
१३. ०र्थं वीन्द्रा० P.
१४. ०वति M.
१५. ०यामि० P.
१६. ०त्यर्थः P.
१७. अभिमतफलस्य सेक्तारौ Sy.
१८. कल्याणपाणी नासत्यौ मित्रावरुणौ वा । 'राजाना मित्रावरुणा सुपाणी' इत्यादिषु दृष्टत्वात् । एते सर्वे देवाः । सुहस्ता—हसेः 'असिहसि—' इत्यादिना तन्प्रत्ययः । नित्त्वादाद्युदात्तः । बहुव्रीहौ 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् Sy.
१९. M. omits वस्या धेनोः स्तनं ॥ वृष्टिद्वारापेक्षितं फलम् Sy.
२०. नेति सम्प्रत्यर्थे । इदानीम् Sy.
२१. प्रीताः सन्तः Sy.
२२. नभसः सकाशात् Sy.
२३. नभसि शयानं मेघम् Sy.
२४. दुदुह्रे—'दुह प्रपूरणे' इत्यस्य लिटि 'इरयो रे' Sy.
२५. वेद्याम् Sy.
२६. विश्वे P. सर्वे Sy.
२७. रमयन्ते । रणयन्त—'रमु क्रीडायाम्' ण्यन्तस्य लङि रूपम् । वर्णव्यापत्तिः Sy.
२८. अत्र लोके Sy.
२९. सर्वस्य वासयितारो हे देवाः ! Sy.
३०. युष्माकं सम्बन्धिनि Sy.
३१. सुखकरमपेक्षितं फलम् Sy.

प्रकर्षेण[१] । प्राप्नुयाम्[२] ।

या जामयो वृष्णं इच्छन्ति शक्तिं नमस्यन्तीर्जानते गर्भमस्मिन् ।
अच्छा पुत्रं धेनवो वावशाना महश्चरन्ति बिभ्रतं वपूंषि ॥ ३ ॥

या जामयः[३] । जामयः[४], जनयन्त्याः स्वपत्यम्[५], इति यास्कः, याः । स्त्रियः[६] । सेक्त्रे[७] पुरुषाय । पुत्रम्[८] । इच्छन्ति । तास्तं[९] परिचरन्त्यः । तस्मिन्[१०] । वृष्टिगर्भम्[११] । जनयन्ति[१२], तदिदं देव[१३]कृतम्[१४] । तथा धेनवश्च[१५] । पुत्रं[१६] वत्सम् । कामयमानाः[१७], तदर्थम्[१८] । महान्ति[१९] । रूपाणि । बिभ्रतम्, पेशलमृषभम् । स्वयमेव[२०] । आचरन्ति[२१], एतच्च देवकृतमिति ।

---

१. M. omits words between युष्मदीयम् and प्रकर्षेण ॥
२. अश्याम्—'अशू व्याप्तौ' इत्यस्य लिङि 'बहुलं छन्दसि' इति विकरणस्य लुक् । व्यत्ययेन परस्मैपदम् Sy.
३. मयः P.
४. जमन्ति वर्षाकाले प्रादुर्भवन्तीति जामय ओषधयः । जमतेर्गतिकर्मणः 'जनिघसिभ्यामिण्' इति विधीयमानो बहुलवचनादस्मादपि भवति Sy.
५. यनन्त्या न्वपत्यमिति P. None of the readings is satisfactory. ०न्त्यास्वपत्यम् is suggested for ०न्त्याः स्वपत्यम् । Cf. 'जामिरन्येऽस्यां जनयन्ति जामपत्यम्' N.3.6.
६. प्रह्वीभूतास्ता ओषधयः Sy.
७. अपां वर्षकायेन्द्राय Sy.
८. सेचनसामर्थ्यम् Sy.
९. तास्ताः P. प्रह्वीभूतास्ता ओषधयः । नमस्यन्तीः—नमःशब्दात् 'नमोवरिवश्चित्रङः क्यच्' इति क्यच् । तदन्ताच्छतरि रूपम् । प्रत्ययस्वरः Sy.
१०. इन्द्रे Sy.
११. वृष्टिद्वारा पुष्पफलादिलक्षणगर्भाधानादिसामर्थ्यम् Sy.
१२. जानन्ति । जानते—'ज्ञा अवबोधने' इत्यस्य लटि रूपम् Sy.
१३. M. omits words between वृष्टि and देव ।
१४. ०तवन् P.
१५. सर्वस्य प्रीणयित्र्य ओषधयः Sy.
१६. ०त्रम P. व्रीहियवनीवारादिफललक्षणं तनयम् Sy.
१७. Sy. adds फलम् ।
१८. ०दर्त्थम् P.
१९. ०हान्तम् M.
महान्ति नानाप्रकाराणि Sy.
२०. अच्छ आभिमुख्येन । अच्छा—'निपातस्य च' इति संहितायां दीर्घः Sy.
२१. प्राप्नुवन्ति । लोके हि हम्भारवं कुर्वाणा धेनवो वत्समभिलक्ष्य गच्छन्ति तद्वत् । यद्वा जामयः । जमन्ति सर्वत्र प्रसरन्ति इति जामयः सूर्यदीप्तयः । वृष्णेऽपां वर्षकाय । स्वरश्मिभिर्भौमान् रसानादाय पुनर्वर्षतीति वर्षकः सूर्यः । 'आदित्याज्जायते वृष्टिः' इति स्मृतेश्च, तस्मै वर्षणशक्तिमिच्छन्ति । ता दीप्तयोऽस्मिन्नादित्ये गर्भम् अब्रूपगर्भाधानसामर्थ्यं जानन्ति Sy.

अच्छा॑ विवक्मि॒ रोद॑सी सु॒मेके॒ ग्राव्णो॑ यु॒जा॒नो अ॑ध्व॒रे म॑नी॒षा ।
इ॒मा उ॑ ते॒ मन॑वे॒ भूरि॑वारा ऊ॒र्ध्वा भ॑वन्ति द॒र्श॑ता यज॑त्राः ॥ ४ ॥

अच्छा विवक्मि[1] ॥ अवशिष्टा[2] आग्नेय्यः[3] ॥ द्यावापृथिवी[4] । शोभनमात्रे[5] । लक्षी-कृत्य[6] । स्तुतीः, विवक्मि[7] । सोमाभिषवग्राव्णः[8] । यज्ञे । युञ्जानः[9] । स्तुतिभिः[10], सह शब्दमुच्चा-रयन्[11] दिवं च पृथिवीं चाभ्युच्चरति । हे अग्ने ! तुभ्यम्[12] । मननकुशलाय[13] । इमाः स्तुतयः[14] । बहुभिर्वरणीयाः[15][16] । दर्शनीयाः[17] । यजनकुशलाः[18] । ऊर्ध्वाः[19] । भवन्ति मत्त उद्गच्छन्तीत्यर्थः[20] ।[21]

या ते॑ जि॒ह्वा मधु॑मती सु॒मे॒धा अग्ने॑ दे॒वेषू॒च्यत॑ उरू॒ची ।
तये॒ह विश्वाँ॒ अव॑से॒ यज॑त्रा॒ना सा॑दय पा॒यया॑ चा॒ मधू॑नि ॥ ५ ॥

या ते जिह्वा[22] । या । तव । जिह्वेति[23] वाङ्नामसु[24] । रसवती[25] । सुसारा[26] । अग्ने !

---

१. ०वक्षि P.

२. ०शिष्ट M.

३. ०ग्नेय P.

४. M. omits आग्नेय्यः ॥ द्यावापृथिवी ॥ द्यावापृथिव्यौ Sy.

५. सुरूपे Sy.

६. आभिमुख्येन Sy.

७. ०वक्षि M. and P. स्तौमि । विवक्मि-'वच परिभाषणे' । लटि 'बहुलं छन्दसि' इति शपः श्लुः । 'अर्तिपिपर्त्योश्च' । 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम् । चकारस्य कुत्वं व्यत्ययेन Sy.

८. सोमाभिषवार्थमुपलान् Sy.

९. प्रयुञ्जानोऽहम् । युजानः—'युजिबुधि-दृशः किच्च' इत्यानच् । कित्त्वादगुणः । चित्त्वादन्तोदात्तः Sy.

१०. मनस ईषया स्तुतिलक्षणया वाचा । मनीषा—सुपो डादेशः Sy.

११. ०ब्दं ह्युच्चरन् M.

१२. तव Sy.

१३. मनुष्यव्यवहारार्थम् Sy.

१४. स्तुत० P. दीप्तयः Sy.

१५. M. omits words between तुभ्यम् and बहुभिर् ॥ यजमानैर्बहु-वारं वरणीयाः Sy.

१६. ०णीयाय P.

१७. ०नीयाय P. कमनीयतया दर्शनीयाः Sy.

१८. जनाः कु० P. पूज्याः Sy.

१९. ऊर्ध्वमुखाः Sy.

२०. ०त्यर्थ्यः P.

२१. VM. ignores उ ।

२२. Omitted in P.

२३. ज्वाला Sy.

२४. ०नामसु Ngh. I. 11.

२५. ०वरी P. उदकवती Sy.

२६. शोभना मेधा प्रज्ञा यस्याः सा । सर्वस्य ज्ञापयित्री । सुमेधाः—'नित्यमसिच्प्रजा-मेधयोः' इत्यसिच् Sy.

देवान् प्रति[१] । उच्यते[२] । बहूनञ्चती[३] । ताम्[४] । विद्वान्[५] । रक्षणाय । यजनीयान्[६] देवान् । आसादय[७] । पायय[८] । च[९] । सोमान्[१०], ज्वाला[११] व[१२] जिह्वा, यां तवैवंविधां वदन्ति शोभनप्रज्ञाहेतुमिति तदानीं मधुमत्त्वं स्वादूकरणादिति[१३] ।[१४]

**या ते॑ अग्ने॒ पर्व॑तस्येव॒ धारास॑श्चन्ती पी॒पय॑द्देव चि॒त्रा ।**
**ताम॒स्मभ्यं॒ प्रम॑तिं जातवेदो॒ वसो॒ रास्व॑ सुम॒तिं वि॒श्वज॑न्याम् ॥ ६ ॥**

**या ते अग्ने ।** या सुमतिः । तव[१५] । अग्ने ! पर्वतस्येव[१६] । निर्झरधारा[१७] । अनवरतं[१८] प्रवृत्ता[१९] । आप्याययति[२०] स्तोतॄन् । देव[२१] ! चित्रा[२२] । ताम्[२३] । अस्मभ्यम् । प्रमतिम्[२४] । हे जातधन[२५] !

---

१. देवेषु मध्ये आह्वानार्थम् Sy.
२. उच्चते P. प्रेर्यते । उच्यते 'वच परिभाषणे' । कर्मणि यकि रूपम् । यद्वृत्तयोगादनिघातः Sy.
३. ०ञ्चन्ती is suggested for ०ञ्चती ॥ बहुव्याप्तिः सती । उरूची—अञ्चतेः क्विन् । 'अञ्चतेश्चोपसंख्यानम्' इति ङीप् । 'अनुदात्तस्य च यत्रोदात्तलोपः' इति ङीप उदात्तत्वम् Sy.
४. तम् P. तया जिह्वया Sy.
५. देवान् Sy.
६. The passage beginning with ०ते बहू० and ending with य० of यजनीयान् is omitted by M.
७. उपवेशय Sy.
८. 'पा पाने' इत्यस्य णौ परतः 'शाच्छासाह्वाव्यावेपां युक्' इति युक् । तिङ उत्तरत्वादनिघातः Sy.
९. किञ्च तान् विद्वान् देवान् Sy.
१०. सोमम् P. मदकरान् सोमान् Sy.
११. ज्वाल P.
१२. वा is suggested for व ॥
१३. साधूकर० P.
१४. VM. ignores इह ॥ इह कर्मण्यस्माकम् Sy.
१५. तव प्रमतिः प्रकृष्टा बुद्धिः Sy.
१६. ०र्वस्ये० P. तत्र दृष्टान्तः—यथा पर्वतस्य मेघस्योदकधारा ओषधिवनस्पत्यादिषु सङ्गतिं कुर्वाणा तान् वर्धयति तद्वत् Sy.
१७. निर्जरताधा० P.
१८. ०वतं P. अस्मादन्यत्र सङ्गतिमकुर्वाणा । असश्चन्ती—सश्चतिर्गतिकर्मा । शतरि 'उगितश्च' इति ङीप् । नञा समासे नञ्स्वरः Sy.
१९. वृत्ता P.
२०. अपेक्षितफलदानेनास्मान् वर्धयति । पीपयत्—'पा पाने' । ण्यन्तस्य लुङि चङि रूपम् । 'चङ्यन्यतरस्याम्' इति चङि परतः पूर्वस्योदात्तत्वम् । यद्वृत्तयोगादनिघातः Sy.
२१. हे दीप्यमान ! Sy.
२२. वित्ता M. मित्रा P. नानारूपा Sy.
२३. म् M. दाम् P.
२४. परहितकरणसमर्था बुद्धिम् । प्रमतिम्—'तादौ च निति कृत्यतौ' इति गतेः प्रकृतिस्वरत्वम् Sy.
२५. जातप्रज्ञ ! हे अग्ने ! Sy.

वासयितः[1] ! देहि[2]। शोभनाम्[3]। सर्वहिताम्[4]।

III.58.

धेनुः प्रत्नस्य काम्यं दुहानान्तः पुत्रश्चरति दक्षिणायाः।
आ द्योतनिं वहति शुभ्रयामोषसः स्तोमो अश्विनावजीगः ॥ १ ॥

धेनुः[5]। काचित्[6]। अग्नेर्वत्सस्य[7]। काम्यं[8] पयोऽग्निहोत्राख्यम्। दुहाना[9] भवति[10]। स पुत्रः[11]। तस्या[12] वर्धयित्र्याः[13]। मध्ये[14]। चरति। स शोभनगमनो[15] वत्सः। दीप्तिम्[16]। आवहतीत्युष[17]-समाह। अस्यां वेलायामुषसि[18] प्रवृत्तः। स्तोमः[19]। अश्विनौ[20]। उज्जहार[21], इति स्तुतिश्रवणार्थं[22] निर्गमयतीत्यर्थः[23][24]।

---

१. सर्वस्य वासयितः ! Sy.

२. दत्स्व। रास्व—'रा दाने' व्यत्ययेनात्मनेपदम्। लोटि रूपम्। आमन्त्रितस्याविद्यमानत्वान्निघाताभावः Sy.

३. शोभनां बुद्धिम् Sy.

४. M. omits हिताम् ॥ सर्वजनहिताम् Sy.

५. 'धेनुः प्रत्नस्य' इति नवर्चं पञ्चमं सूक्तं वैश्वामित्रं त्रैष्टुभमाश्विनम्। तथा चानुक्रान्तम्—'धेनुर्नवाश्विनम्'(KSA. 2. 58. p. 16.) इति। प्रातरनुवाके आश्विनक्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे चास्य सूक्तस्य विनियोगः। सूत्रितञ्च —'धेनुः प्रत्नस्य क उ श्रवदिति सूक्ते' (ASS. 4.15) इति। व्यूळ्हे दशरात्रे द्वितीये छन्दोमे प्रउगशस्त्रेऽयमाश्विनश्चतुर्थस्तृचः। 'द्वितीयस्याग्नि वः' इति खण्डे सूत्रितम्—'धेनुः प्रत्नस्य काम्यं दुहाना ब्रह्मा ण इन्द्रोप याहि विद्वान्' (ASS. 8.10.) इति Sy.

६. धेनुः प्रीणयित्र्युषाः Sy.

७. पुरातनस्याग्नेः Sy.

८. कमनीयं पयः Sy.

९. दोग्ध्री Sy.

१०. ०वन्ति P.

११. सूर्यः Sy.

१२. तस्य M.

१३. उषसः Sy.

१४. तस्या अन्तः Sy.

१५. उषसोऽनन्तरं सूर्यकिरणसम्पर्कात् शुभ्रतया गमनं यस्यासौ शुभ्रयामा दिवसः। शुभ्रयामा—'या प्रापणे'। आतो मनिन्। बहुव्रीहौ पूर्वपदस्वरः Sy.

१६. सर्वस्य प्रकाशकं सूर्यम् Sy.

१७. M. omits म्। and आ ॥ बिभर्ति Sy.

१८. उषसः पुरा Sy.

१९. स्तोत्रकारी होत्रादिः Sy.

२०. अश्विनौ स्तोतुम् Sy.

२१. जागर्ति उत्तिष्ठति। अजीगः—'जागृ निद्राक्षये'। लङि तिपि अदादित्वात् शपो लुक्। आकारस्येकारश्छान्दसः। गुणे कृते हल्ङ्यादिना तिपो लोपः Sy.

२२. ०णार्थं P.

२३. निर्मय M.

२४. ०तीत्यर्थः P.

सुयुग्वहन्ति प्रति वामृतेनोर्ध्वा भवन्ति पितरेव मेधाः ।
जरेथामस्मद्वि पणेर्मनीषां युवोरवश्चकृमा यातमर्वाक् ॥ २ ॥

सुयुक्[1][2] । यज्ञेन[3] हेतुना । सुयुक्ता[4] अश्वाः । वाम्[5] । प्रति । [6]वहन्ति । ऊर्ध्वाश्च[7] । भवन्ति । स्तोतृणां[8] प्रज्ञावतः[9], स्तोत्रार्थम्[10] । यथा[11] पुत्रं दृष्ट्वा पितरा[12]वुत्तिष्ठतः[13] । तौ युवामस्माकम्[14] । शत्रोः[15] । अभिलषितम् । विविधम् । जीर्णं कुरुतम्[16] । वयं युवयोः । अवनसाधनं स्तोमम्[17] । कर्मः[18] । आगच्छतम्[19] । अभिमुखम्[20] ।

सुयुग्भिरश्वैः सुवृता रथेन दस्राविमं शृणुतं श्लोकमद्रेः ।
किमङ्ग वां प्रत्यवर्तिं गमिष्ठाहुर्विप्रासो अश्विना पुराजाः ॥ ३ ॥

सुयुग्भिः[21] । शोभनयोगैः[22] । अश्वैः । शोभनावर्तनेन[23] च । रथेनाऽऽगत्य । दस्रौ[24] । इमम्[25] ।

---

१. ०युक्त P.
२. हे अश्विनौ ! Sy.
३. सत्यभूतेन रथेन Sy.
४. सुष्ठु रथे योजिताः । सुयुक्-युजेः क्विप् । 'सुपां सुलुक्—'इति सुपो लुक् Sy.
५. वः P.
युवाम् Sy.
६. यज्ञं प्रत्यागमनाय धारयन्ति Sy.
७. युष्मदभिमुखमूर्ध्वाः Sy.
८. स्तोतृणां P.
९. प्रज्ञापयतः P. प्रज्ञावताम् is suggested for प्रज्ञावतः ॥ मेधाः यज्ञाश्च Sy.
१०. ०त्रार्त्थं P.
११. तत्र दृष्टान्तः । यथा पुत्राः मातापितरावभिलक्ष्य गच्छन्ति तद्वत् Sy.
१२. पितरेव—'पिता मात्रा' इति पितुः शेषः । सुपो डादेशः Sy.
१३. ०ष्टथः M.
१४. अस्मत्तः सकाशात् Sy.
१५. आसुरीं बुद्धिम् Sy.
१६. विशेषेण नाशयतम् । जरेथाम्—'जृष् वयोहानौ' । ण्यन्तस्य 'जनी जृष्क्नसुरञ्जोऽमन्ताश्च' इति मित्वाद् वृद्ध्यभावः । 'छन्दस्युभयथा' इत्यार्धधातुकत्वात् णिलोपः । शपः पित्त्वादनुदात्तत्वे धातुस्वरः Sy.
१७. स्तोम P.
हविर्लक्षणमन्नम् Sy.
१८. कर्म P.
१९. अभिग० P.
आयातम् Sy.
२०. युवाम् अस्मदाभिमुख्येन Sy.
२१. हे अश्विनौ ! Sy.
२२. ०नगोगैः P.
सुष्ठु योजितैः Sy.
२३. पुनः पुनरावर्तत इति वृच्चक्रम् । शोभनचक्रोपेतेन Sy.
२४. दस्तौ P. शत्रूणामुपक्षपयितारौ युवाम् Sy.
२५. इव P.

श्रृणुतम् । श्लोकम्[१] । श्रद्दधानस्य स्तोतुः[२] । किम् । क्षिप्रमेव[३] । वां[४] मनुष्याणाम् । प्रवर्तिम-[५] जीवनम् । प्रति । गन्तृतरौ[६] । आहुः[७] । मेधाविनः । हे अश्विनौ ! पूर्वकालजाताः[८],—किमिति प्रश्ने—एवं[९] वदन्ति, तथा सति श्लोकं प्रत्यागच्छतमिति ।[१०]

**आ मंन्येथामा गंतं कच्चिदेवैर्विश्वे जनासो अश्विनां हवन्ते ।**
**इमा हि वां गोऋंजीका मधूंनि प्र मित्रासो न ददुरुस्रो अग्रें ॥ ४ ॥**

आ मन्येथाम् । आभिमुख्येन । अथास्माकं स्तुतिं बुध्यतम्[११] । आगच्छतं[१२] च । कदा[१३] । चित्[१३] । गमनसाधनरथैः[१४] । सर्व एव । जनाः[१५] । अश्विनावेव । हवन्ते[१६] । किंच, इमानि[१७] । हि । युवाभ्याम् । गोमिश्रणानि[१८] । सोममयानि[१९] मधूनि । जनाः प्रयच्छन्ति[२०] । यथा[२१] । मित्रेभ्यो मित्राणि प्रयच्छन्ति धनानि[२२] । तदाऽऽदित्यश्च[२३] । प्राच्यां[२४] दिशि प्रादुर्भवति स च भवतोः काल[२५] इति ।

---

१. स्तोत्रम् Sy.
२. आद्रियते सर्वैरित्यद्रिः स्तोता । तस्य Sy.
३. अङ्ग हे अश्विनौ ! Sy.
४. वाङ् M. युवाम् Sy.
५. अस्माकं वृत्तिहानिम् Sy.
६. ०तराव् M. ०तारौ P. अतिशयेन गन्तारौ । गमिष्ठा—गन्तृशब्दादिष्ठनि रूपम् Sy.
७. कथयन्ति । न कथयन्तीत्यर्थः Sy.
८. पुरातना ऋषयः Sy.
९. एव P.
१०. प्रथमाष्टकेऽष्टमेऽध्याये 'सुवृता रथेन' (RV. 1.118.3.) इत्यादि गतम् Sy.
११. इमां मदीयां स्तुतिं जानीतम् । मन्येथाम्—'मन ज्ञाने' । दिवादिः । लोटि रूपम् Sy.
१२. P. repeats it. यज्ञं प्रत्यागच्छतम् Sy.
१३. कच्चिदिति प्रश्ने Sy.
१४. गमनसाधनैरश्वैः Sy.
१५. स्तोतारः Sy.
१६. स्तुतिलक्षणाभिर्वाग्भिराह्वयन्ति Sy.
१७. हवींषि । इमा—सुपो डादेशः Sy.
१८. सोमि० P. गवां पयसा मिश्रणोपेतानि । गोऋजीका—'प्रकृत्यान्तःपादम्' इत्येङः प्रकृतिभावः Sy.
१९. मदकराणि सोमरसरूपाणि Sy.
२०. अध्वर्य्वादयः प्रयच्छन्ति । ददुः—'दाण् दाने' इत्यस्य लिटयुसि रूपम् । हि-योगादनिघातः Sy.
२१. तत्र दृष्टान्तः । यथा मित्राणि मित्रेभ्यो-ऽपेक्षितं ददति तद्वत् Sy.
२२. Omitted in P.
२३. वसति नभसीत्युस्रः सूर्यः । उस्रः—'वस निवासे' स्फायितञ्चि—'इत्यादिना रक् । कित्त्वात् सम्प्रसारणम् । 'शासिवसिघसीनां च' इति षत्वाभावश्छान्दसः Sy.
२४. उषसोऽग्र उदेति । तस्मादागच्छतमिति भावः Sy.
२५. करः P.

तिरः पुरू चिदश्विना रजांस्याङ्गूषो वां मघवाना जनेषु ।
एह यातं पथिभिर्देवयानैर्दस्राविमे वां निधयो मधूनाम् ॥ ५ ॥

तिरः पुरु चित् । तिर[1] इति प्राप्तनाम[2]ेति यास्कः[3] । हे अश्विनौ[4] ! बहूनि[5] । औषधानि[6] तेजांसि प्रादुर्भवन्ति । स्तोमश्च[7] । वाम्[8] । हे धनवन्तौ[9] । स्तोतृषु वर्तते । तथा सति, आगच्छतम् । पथिभिः[10] । देवयानैः । हे दस्रौ[11] ! इमे[12] । वाम्[13] । सोमानाम्[14] । निधयः[15] पात्रेषु गृहीताः सोमाः[16] ।

पुराणमोकः सख्यं शिवं वां युवोर्नरा द्रविणं जह्नाव्याम् ।
पुनः कृण्वानाः सख्या शिवानि मध्वा मदेम सह नू समानाः ॥ ६ ॥

पुराण[17]मोकः[18] ।[19] जह्नोरपत्यभूतायां[20] कुशिकायां प्रजायाम्[21] । युवयोः । पुराणम्[22] । ओकः[23]

---

१. स्वतेजसा तिरस्कुर्वन्तौ युवाम् Sy.
२. प्राप्ता तिङ्म P.
३. Cf. 'तिरः सत इति प्राप्तस्य' N. III. 20.
४. ०श्विना M. D.
५. बहून्यपि Sy.
६. ०षसानि P. रजांसि स्थानानि Sy.
७. आ समन्तात् घोषणीयं स्तोत्रं वर्तते । आङ्गूषः, आङ्पूर्वाद् घुषेः कर्मणि घञ् । आघुष्यत इत्याघोषः । घो इत्यस्य पृषोदरादित्वाद् 'गू' इत्यादेशः । 'आङोऽनुनासिकश्छन्दसि' इत्यनच्यप्यनुनासिकश्छान्दसः । यद्वा अगिर्गत्यर्थः । अस्मात् 'अङ्गूषः' इति सूत्रेणोषच्प्रत्ययान्तो निपातितः । अङ्गति गच्छति देवानित्यङ्गूषः स्तोत्रम् । अङ्गूष एव आङ्गूषः । प्रज्ञादित्वात्स्वार्थिकोऽण् । प्रत्ययस्वरः Sy. ८. आवाम् P. युवयोः Sy.
९. हे अश्विनौ ! Sy.
१०. मार्गैः Sy.
११. दस्राः P. शत्रूणामुपक्षपयितारौ ! हे अश्विनौ ! Sy.
१२. विमे P.
१३. युवयोः Sy.
१४. Omitted in M. मदकराणां सोमानाम् Sy.
१५. निधीयतेऽत्र सोम इति निधयः पात्रविशेषाः सन्ति । तस्मादागच्छतमिति भावः Sy.
१६. VM. ignores चित् and इह ॥ चिद् अपि । इह कर्मणि Sy.
१७. अप्तोर्यामेऽतिरिक्तोक्थ्ये अच्छावाकशस्त्रे 'पुराणमोकः' इति चतस्रो विकल्पेन याज्याः । सूत्रितञ्च—'यदि नाधीयात् पुराणमोकः सख्यं शिवं वामिति चतस्रो याज्याः' (ASS.9.11.) इति Sy.
१८. पुराण ओकः P.
१९. हे अश्विनौ ! Sy.
२०. जह्नुकुलजायां भवति । जह्नाव्याम्—जह्नोः सम्बन्धिनीत्यर्थे 'तस्येदम्' इत्यण् । 'ओर्गुणः' । ह्रस्वदीर्घयोर्व्यत्ययः Sy.
२१. प्रयाजाः P.
२२. पुरातनम् Sy.
२३. मातः P.

सेवनम्[1]। तथा सख्यं[2] च। तस्यां कल्याणं[3] भवति। तथा युवयोः। धनमपि तस्यामेव[4] विसृज्यते[5]।
वयं च जह्नो[6]रपत्यभूताः[7] पुनः। युवाभ्यां[8] सख्यानि। शिवानि[9]। कृण्वानाः[10]। सोमेन[11]। अश्विनौ!
मदेम[12]। सह[13]। क्षिप्रम्। समानमनस्काः[14]।

**अश्विना वायुना युवं सुदक्षा नियुद्भिश्च सजोषसा युवाना।**
**नासत्या तिरोअह्न्यं जुषाणा सोमं पिबतमस्रिधा सुदानू॥ ७॥**

अश्विना[15]। हे अश्विनौ! युवाम्। वायुना[16] सह। हे शोभनबलौ[17]! नियुद्भिः[18]। च।
सहितौ[19]। हे युवानौ[20]! नासत्यौ[21]! तिरोऽह्न्यम्[22]। सोमम्[23]। पिबतम्[24]। प्रीयमाणौ[25]। अक्षयौ[26]
युवाम्। हे शोभनदानौ[27]!

---

१. सव P. सेव्यम् Sy.
२. सख्यम्—सख्युर्भाव इत्यर्थे 'सख्युर्यः' इति यप्रत्ययः Sy.
३. कल्याणकरम् Sy.
४. तस्य मे° P.
५. विस्मज्य° P.
६. जवोर° P.
७. °भूता P. नरावस्मदीयस्य कर्मणो नेतारौ Sy.
८. युवयोः Sy.
९. सुखकराणि Sy.
१०. कुर्वन्तः Sy.
११. स्सोनेन P. मदकरेण सोमेन Sy.
१२. मदे (म) P. हर्षयेम। मदेम—'मदी हर्षे' इत्यस्याशीर्लिङि लिङ्याशिष्यङ् प्रत्ययः। निघातः Sy.
१३. युगपत् Sy.
१४. सहमा° P. हविष्प्रदानेनोपकारकत्वान्मित्रभूता एकीभूताः सन्तो वयम् Sy.
१५. Omitted in P.
१६. °युवना P.
१७. शोभनसामर्थ्योपेतौ Sy.
१८. युवत् नि° P. अश्वैः। यौतेः क्विप् Sy.
१९. °हिते P. सङ्गतौ Sy.
२०. Omitted in P. नित्यतरुणौ! Sy.
२१. नस° P. न विद्यतेऽसत्यं ययोस्तौ Sy.
२२. अह्नि तिरोहिते। अह्नि भवमह्न्यम्। 'भवे छन्दसि' इति यत्। तिरोभूतमह्न्यं यस्मिन् काले स तिरोअह्न्यः। पूर्वपदप्रकृतिस्वरः Sy.
२३. हूयमानमिमं सोमम् Sy.
२४. प्रीणयत P.
२५. प्रिय° M. प्रीणमायाप् P. सोमविषयप्रीतियुक्तौ Sy.
२६. अनुपक्षीणौ Sy.
२७. शोभनफलस्य दातारौ! हे अश्विनौ! Sy.

**अश्विना परि वामिषः पुरूचीरीयुर्गीर्भिर्यतमाना अमृध्राः ।**
**रथो ह वामृतजा अद्रिजूतः परि द्यावापृथिवी याति सद्यः ॥ ८ ॥**

अश्विना । हे[1] अश्विनौ[2] ! परिगच्छन्ति[3] । वाम्[4] । अन्नानि[5] । बह्वञ्चनानि[6] । मन्त्रैः[7] सह । यतमानानि[8] । रक्षोभिरहिंसितानि[9], यततिर्गतिकर्मा[10] । रथः । च[11] । युवयोः[12] । दिवस-[13]करणाय जातः । शिलोच्चयेनाऽऽकृष्टः[14] । परिगच्छति[15] । द्यावापृथिवी[16] । सद्य[17] एकेनैवाह्ला[18], तत्र मन्त्रः[19]—'न्य[20]घ्न्यस्य मूर्धनि[21]' इति ।

---

१. वाति P.

२. पुराणा P.

३. परितो गच्छन्ति । ईयुः—'इण् गतौ' इत्यस्य लिटि 'दीर्घ इणः किति' इत्यभ्यासस्य दीर्घः । पादादित्वादनिघातः Sy.

४. युवाम् Sy.

५. हविर्लक्षणान्यन्नानि Sy.

६. ०ह्वञ्जना० M. पुरु अञ्चन्ति गच्छन्तीति पुरूचीः । बहूनि Sy.

७. स्तुतिलक्षणाभिर्वाग्भिर्युवां परिचरन्ति Sy.

८. यमानि M. यतमानि P.
कर्मणि प्रवर्तमानाः स्तोतारः । 'यती प्रयत्ने' इत्यस्य शानचि रूपम् । शपः पित्त्वादनुदात्तत्वे शानचो लसार्वधातुकस्वरेणानुदात्तत्वे धातुस्वरः Sy.

९. केनाप्यतिरस्कृताः Sy.

१०. Ngh. II. 14. The passage यततिर्गतिकर्मा should immediately follow यतमानानि and precede रक्षोभि०

११. खलु Sy.

१२. युद्धवयो P.

१३. भिव० P. ऋतस्योदकस्य जनयिता । ऋते यज्ञे प्रादुर्भवतीति वा । ऋतजाः—जनेर्विट्, 'विड्वनोः—'इत्यात्वम् Sy.

१४. ०कृष्टैः P.
स्तोतृभिः । अद्रिजूतः—जू इति सौत्रो धातुः । कर्मणि क्तः । 'तृतीया कर्मणि' इति पूर्वपदस्वरः Sy.

१५. सर्वतः प्राप्नोति । अश्विनो रथस्य वेगवत्त्वे मन्त्रवर्णः—'यो वामश्विना मनसो जवीयान्रथः स्वश्वो विश आजिगाति' (RV. 1. 117. 2.) इति । अतः कारणादस्मदीयं यज्ञं प्रत्यागच्छतमिति भावः Sy.

१६. द्यावापृथिव्यौ Sy.

१७. तदानीमेव Sy.

१८. एकं नै बे न ना P.

१९. तन्त्र M. and P.

२०. अस्य P.

२१. न्याघ्न्या गुण्यस्य P. RV. I.30.19.

अश्विना मधुषुत्तमो युवाकुः सोमस्तं पातमा गतं दुरोणे ।
रथो ह वां भूरि वर्पः करिक्रत्सुतावतो निष्कृतमागमिष्ठः ॥ ९ ॥

अश्विना[1] । हे अश्विनौ ! मधुरसस्यातिशयेन सोता[2] । युवामेव[3] कामयमानः । सोमो[4] भवति । तम्[5] । पिबतम् । आगच्छतं च । गृहे[6] । रथः[7] । ह । वाम्[8] । बहु[9] । रूपम्[10] । कुर्वन्[11] । सुतवतो[12] यजमानस्य । निष्कृतं[13] सोमम् । अतिशयेनाऽऽगन्तेति[14] ।

III.59.

मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम् ।
मित्रः कृष्टीरनिमिषाभि चष्टे मित्राय हव्यं घृतवज्जुहोत ॥ १ ॥

[15]मित्रो जनान् । प्रातःकार्यार्थिनो[16] जनान् । निर्गमयति[17] । मित्रः[18] । स्तूयमानः

---

१. Omitted in M. २. मधुरसमत्यन्तं प्रेरयन् Sy. ३. ०मेक P. युवां कामयमानो वर्तते। यद्वा युवाकुर्वसतीवरीप्रभृतिभिर्मिश्रित इत्यर्थः। युवाकुः—'यौतेः—' 'कटिकुषिभ्यां काकुः'इति बाहुलकादस्मादपि भवति। प्रत्ययस्वरेण मध्योदात्तः Sy.
४. यः सोमः Sy. ५. इमं सोमम् Sy.
६. अस्माकं गृहे Sy. ७. रथे P.
८. युवयोः Sy. ९. प्रभूतम् Sy.
१०. वारकं तेजो रूपं वा सर्वैर्वरणीयं धनं वा Sy. ११. पुनः पुनः कुर्वन्। करिक्रत्—करोतेर्यङ्लुकि शतरि 'दाधर्तिदर्धर्तिदर्धर्षि—' इत्यादिना चुत्वाभावे यणादेशे कृतेऽङ्गस्यानृकारान्तत्वादभ्यासस्य रिगागमो न प्राप्नोतीति सोऽपि निपात्यते। अभ्यस्तस्वरः Sy. १२. ०तपतः M. ०तपंतः P. सोममभिषुतवतः Sy.
१३. निष्कते P. संस्कारि। यद्वा संस्कृतं गृहम्। निष्कृतम्—करोतेरादिकर्मणि क्तः। संस्कर्तुं प्रवृत्त इत्यर्थः। थाथादिस्वरः Sy. 'निरित्येष समित्येतस्य स्थाने' N.12.7.
१४. गते ति P. अतिशयेनागच्छन् भवति Sy.
१५. 'मित्रो जनान्' इति नवर्चं षष्ठं सूक्तं वैश्वामित्रं त्रैष्टुभं मैत्रम्। 'मित्रो मैत्रं चतुर्गायत्र्यन्तम्' इत्यनुक्रमणिका (KSA. 20. 59. p. 16.)। आदितः पञ्च त्रिष्टुभः शिष्टाश्चतस्रो गायत्र्यः। मित्रो देवता। अग्निहोत्रार्थे पयसि वर्षबिन्दुपतने 'मित्रो जनान्' इत्यनया समिधमादध्यात्। सूत्रितञ्च—'मित्रो जनान्यातयति ब्रुवाणः इति समिदाधानम्' (ASS. 3. 11.) इति Sy. १६. काल M. ०यार्थिं० P. कर्षकादिजनान् Sy. जनान् सर्वान् BB. कर्षकजनान् SKN.
१७. M. omits जनान् निर्गमयति ॥ कृष्यादिकर्मसु प्रयत्नं कारयति। यातयति—'यती प्रयत्ने' इत्यस्य ण्यन्तस्य लटि रूपम् Sy. चेष्टयति BB. 'यती प्रयत्ने' कृष्यादिकर्मसु प्रयत्नं कारयति SKN. आयातयति, कृष्यादिषु प्रवर्तयति। तत्कर्मपूर्वकत्वात् कृष्यादिकर्मणाम्। नह्यवृष्टे कृष्यादीन्यायात्यन्ते। आयातनमारम्भः। तद्यथा भोजनमायातितमनेनेति Dur.
१८. प्रकर्षेण सर्वैर्मीयते ज्ञायते तथा सर्वान् वृष्टिप्रदानेन त्रायत इति वा मित्रः सूर्यः Sy. मित्रो देवः BB. मित्र एव SKN. एवं प्रवर्तयन्कर्मस्वोषधीरुत्पादयन् यज्ञद्वारेण स एव मित्रः Dur.

शब्दं कुर्वन् । स एव । द्यावापृथिवी । बिभर्त्ति । मित्र एव । मनुष्यान् । अनिमेषेण । पश्यति । तस्मै मित्राय । हविः । घृतवत् । जुहोति ॥

१. स्तूयमानः शब्दं कुर्वाणो वा Sy. प्रजानन् तत्तदधिकारानुरूपविधानज्ञः BB. शब्दं स्तनयित्नुलक्षणं कुर्वन् SKN. कथमायातयति ?...स्तनयित्नुशब्दं कुर्वन् Dur. २. पृथिवीम्, द्यामेतावुभौ लोकौ, वृष्टिद्वारा अन्नं यागांश्च जनयन् Sy. पृथिवीमपि द्यामपि BB. पृथिवीं द्युलोकमपि SKN. पृथिवीलोकनिवासिनः सर्वान् Dur. ३. धारयति। दाधार–'तुजादीनाम्' इत्यभ्यासस्य दीर्घः Sy. धारयितुं प्रभवति BB. वृष्टिप्रदानद्वारेणान्नं यागं च जनयन् धारयति SKN. धारयत्यमुना प्रकारेणानुगृह्णन् Dur. ४. कर्मवतो मनुष्यान् Sy. कृष्टयो मनुष्याः..'कृष्टय इति मनुष्यनाम' (Ngh. 2. 3.) कर्म यतो भवतीति।..'कर्मवन्तो भवन्तीति विकृष्टदेहा वा' विविधं कृष्टो विक्षिप्तः परिकण्डूयनाद्यभिलषितक्रियानुष्ठानसमर्थो देहो येषाम्। तेन पश्वादयस्तु न कामतः, कण्डूयनादिसमर्थाः। तदपेक्षया विकृष्टदेहत्वम् SKN. 'कृष्टय इति मनुष्यनाम' तत्कस्मात् ? नित्यं हि ते कर्मवन्तो भवन्ति, आरम्भशीलत्वात्।...संसृष्टदेहा अन्ये पशवो गवादयः। ते हि न कामकारतोऽङ्गानि प्रसारयितुं शक्नुवन्ति। स तेषां सङ्कर्षः। मनुष्यास्तु कामतः प्रसारयन्त्यङ्गानि। स तेषां विकर्षो देहस्य Dur. ५. अनुग्रहदृष्ट्या Sy. विशेषेण अनिमिषेणादरेण मिषतेर्भावे क्विप्। यद्वा अनिमिषा देवाः। इगुपधलक्षणः कः। मनुष्यान् देवांश्च विशेषेण पश्यति BB. सततमित्यर्थः SKN. उपकारद्वारेण Dur.

६. सर्वतः पश्यति Sy. आभिमुख्येन पश्यति। उपकरोतीत्यर्थः। दर्शनमुपकारः BB. यत्नानुग्राह्यतया पश्यति SKN. यो हि यस्मा उपकरोति स तेन सम्यग् दृष्टो भवति Dur.

७. तस्मै देवाय Sy. तस्मात्तस्मै सत्यायामोघफलाय देवाय BB. अत एतज् ज्ञात्वा हे ऋत्विजः ! पुत्रपौत्राः ! वा मित्राय SKN. योऽयमेवमुपकारप्रवृत्तः कृत्स्नस्य लोकस्य तस्मै मित्राय Dur.

८. हवनयोग्यं पुरोडाशादिकम् Sy. चरुलक्षणम् BB. चर्वादि हविः SKN.

९. ०तव P. एतत्सर्वं ज्ञात्वा हे ऋत्विजः ! उपस्तरणाभिघारणयुक्तम् Sy. घृतसंयुक्तम् BB; SKN. घृतोन्मिश्रम् Dur.

१०. जुहुत प्रयच्छतेत्यर्थः। जुहोत—जुहोतेर्लोटि प्रत्ययस्य तबादेशः। गुणः। निघातः Sy. विधेम कुर्मो ददाम इत्यर्थः। विदधातिर्दानकर्मा। 'विध विधाने', तौदादिकः BB. जुहुत हे मनुष्याः ! Dur. 'मित्रो जनानायातयति। प्रब्रुवाणः शब्दं कुर्वन्। मित्र एव धारयति पृथिवीं च दिवं च। मित्रः कृष्टीरनिमिषन्नभिविपश्यतीति। कृष्टय इति मनुष्यनाम। कर्मवन्तो भवन्ति। विकृष्टदेहा वा। मित्राय हव्यं घृतवज्जुहोतेति व्याख्यातम्। जुहोतिर्दानकर्मा' N. 10. 22.; SKN. IV. 26. This stanza= TS. 3. 4. 11. 5. ११. VM. gives the combined explanation of two words पृथिवीम् and द्याम्, so he ignores the conjunction उत ॥ उत अपिच Sy.

प्र स मित्र मर्तो अस्तु प्रयस्वान्यस्त आदित्य शिक्षति व्रतेन ।
न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात् ॥ २ ॥

प्र[1] स मित्र। हे मित्र ! सः। मर्त्यः[2]। प्रकर्षेण। अन्नवान्। अस्तु[3] यः[4] तुभ्यम्। अदितेः पुत्र[5] ! हविः[6] प्रयच्छति[7] यज्ञे। सत्यादिना व्रतेन[8] युक्तः। न[9]। शत्रुभिर्हन्यते[10]। न च[11]। जीयते[12]। त्वया[13] रक्षितः। न च[14]। एनम्[15]। रक्षः[16]। व्याप्नोति[17]।

---

१. देवसुवां हविःषु मित्रस्य सत्यस्य 'प्र स मित्र' इति याज्या। एवंव प्रातर्होमस्य कालात्ययनिमित्ते मंत्रे चरौ याज्या। सूत्रितञ्च—'प्र स मित्र मर्तो अस्तु प्रयस्वांस्त्वां नष्टवान् महिमाय पृच्छते' (ASS.4.11.)इति। 'तत इष्टिर्मित्रः सूर्योऽभि यो महिना दिवं प्र स मित्र मर्तो अस्तु प्रयस्वानिति संस्थितायाम्' (ASS.3.12.) इति Sy. विश्वामित्र आह SKN. 'प्र स मित्र' इति विश्वामित्रेण दृष्टा Dur.

२. मनुष्यः Sy., SKN., Dur.

३. प्रभवतु Sy. प्रकर्षेण भवतु BB. भवतु SKN., Dur.

४. M. omits words between हे and यः ॥ मनुष्यः Sy.

५. हे आदित्य ! Sy.

६. हविर्लक्षणमन्नम् Sy. इदं हविश्चरुलक्षणम् Dur.

७. ददाति। शिक्षतिर्दानकर्मा। व्यत्ययेन परस्मैपदम्। यद्वृत्तयोगादनिघातः Sy. ददाति, किम् ? सामर्थ्याद् हविः SKN. यः किं करोति ? . . . ददाति Dur. शिक्षति शक्तो भवितुमिच्छति। अविघ्नेनान्वतिष्ठदित्यर्थः ।. . . यद्वा 'शिक्ष विद्योपादाने'। व्रतेनेति व्यत्ययेन द्वितीया बहुवचनस्य स्थाने तृतीयैकवचनम्। व्रतानि। शिक्षति पुनः पुनरभ्यस्यतीति BB.

८. यज्ञेन Sy. तव प्रीतेन कर्मणा यागादिना BB. कर्मणा यागाख्येन SKN. निर्वपनप्रोक्षणादिना संस्कृत्य Dur.

९. शत्रुभिर्व्याध्यादिभिश्च BB. केनचित् SKN. (न) केनचित् प्रत्यनीकभूतेनातिबलेनापि शत्रुणा Dur.

१०. केनापि बाध्यते Sy. (न) च पीड्यते BB. हिंस्यते Dur.

११. वि P.

१२. अभिभूयते। जयतेः कर्मणि यकि 'अकृत्सार्वधातुकयोः—'इति दीर्घः Sy. नाभिभूयते दारिद्र्यादिभिः BB. नचाहतोऽपि स च जीयते वशीक्रियते केनचित्। न च केवलं शत्रूणामनाधृष्यस्तेनातिबलेनापि Dur.

१३. त्वया रक्षितः स मनुष्यः। त्वोतः—'तृतीया कर्मणि 'इति पूर्वपदस्वरः Sy. एवमतिमहाप्रभावस्त्वम्। येन स मर्तो यस्तव यष्टा. . . त्वत्परिग्रहे वर्तमानस्त्वया रक्षितः Dur. पृषोदरादित्वाद्विष्टस्वररूपसिद्धिः BB.

१४. वा P.

१५. तुभ्यं हविर्दत्तवन्तं पुरुषम् Sy. नैनं त्वया रक्षितम् BB. एनं त्वोतं सन्तम् Dur.

१६. पापम् Sy., BB., SKN. पापमपि Dur.

१७. प्राप्नोति। अश्नोति—'अशू व्याप्तौ' स्वादिः। व्यत्ययेन परस्मैपदम् Sy. अश्नोति BB.

अन्तिकतः[१] । दूराद्[२] वा ।[३]

अनमीवास इळया मदन्तो मितज्ञवो वरिमन्ना पृथिव्याः ।
आदित्यस्य व्रतमुपक्षियन्तो वयं मित्रस्य सुमतौ स्याम ॥ ३ ॥

अनमीवासः[४] । [५]अराक्षसाः[६] । अन्नेन । मदन्तः[७] । ज्ञायमानजानुकाः[८] प्रकाशसद्भावाद् गच्छन्तः । पृथिव्याः । विस्तीर्णे देशे[९] । वयम्[१०] । अदितेः[११] पुत्रस्य । व्रतम्[१२] । उपेत्य[१३] निवसन्तः । मित्रस्य[१४] । कल्याण्यां[१५] मतौ । स्याम[१६] ।

---

१. समीपात् Sy. अन्तिके समीपे सन्तं(न) दूरात्सन्तम्...अतस्त्वामेव परिचरेमेति BB. समीपात् SKN. अन्तिकात्समीपात् । यत् स्वशरीरादेव वाङ्मनश्चेष्टानिमित्तमुत्पद्यते पापम्, तदुत्पत्तिसमकालमेव त्वदनुग्रहादपध्वस्यते ततस्तन्नैनं व्याप्नोति Dur.

२. M. omits तः । दूराद् वा ॥ दूरादपि Sy. स्वगतं सम्बन्धिगतं चेत्यर्थः । अथवा सन्निकृष्टकालं विप्रकृष्टकालं च, इदानीं कालान्तरे चेत्यर्थः SKN. नच केवलं यदन्तिक उत्पद्यते तदेवैनं न व्याप्नोति । किं तर्हि ? यदपि दूरात् पुत्रभ्रातृजायाद्विद्वारेणैनमास्कन्दति तदपि नैनमभिव्याप्तुं शक्नोति त्वोतं सन्तम् । एवं महानुभावस्त्वं ततस्त्वां स्तुम इत्यभिप्रायः Dur. N. 2. 13.; SKN. II. 84. This stanza=TS. 3.4. 11. 5.

३. VM. explains last न by वा ।

४. Supplied in different handwriting in M.

५. हे मित्र ! Sy.

६. राक्ष॰ M. रोगवर्जिताः Sy.

७. माद्यन्तः । 'मदी हर्षे' इत्यस्य शतरि व्यत्ययेन शप् Sy.

८. ॰माना जा॰ P. मितजानुकाः । मितज्ञवः—जानुशब्दस्य ज्ञुश्छान्दसः Sy.

९. प्रदेशे । वरिमन्—उरुशब्दात्पृथ्वादित्वादिमनिच्, 'प्रियस्थिर—'इत्यादिना वरादेशः । 'सुपां सुलुक्—' इति सप्तम्या लुक् । व्यत्ययेनाद्युदात्तः Sy.

१०. तादृशा वयम् Sy.

११. आदित्यस्य सम्बन्धि Sy.

१२. कर्म Sy.

१३. तस्य कर्मणः समीपे निवसन्तः । तदीयं कर्म कुर्वाणा इत्यर्थः Sy.

१४. आदित्यस्य Sy.

१५. शोभनायामनुग्रहबुद्धयाम् Sy.

१६. P. omits words between मित्रस्य and स्याम ॥ वर्तेमहि Sy.

अयं मित्रो नमस्यः सुशेवो राजा सुक्षत्रो अजनिष्ट वेधाः ।
तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ॥ ४ ॥

अयम्[1] । अयम्[2] । मित्रः[3] । नमस्कार्यः[4] । सुसुख[5] । अस्माकं[6] सर्वेषां[7] राजा । सुबलः[8] । प्रादुरभूत्[9] । विधाता[10] सर्वस्य । तस्य[11] । वयम्[12] । यज्ञार्हस्य[13] । स्याम[14] । तथा । भजनीये[15] । सौमनसे[16] च । मतिमनसोरल्पो[17] भेदः ।

महाँ आदित्यो नमसोपसद्यो यातयज्जनो गृणते सुशेवः ।
तस्मा एतत्पन्यतमाय जुष्टमग्नौ मित्राय हविरा जुहोत ॥ ५ ॥

महाँ[18] । महान्[19] । आदित्यः[20] । नमस्कारेण । उपसदनीयः[21] । यातयज्जनः[22]= निष्कामयति[23] प्राशकरणान्मनुष्यान्[24][25] । स्तुवते[26] च । सुसुखः[27] । तस्मै । एतत् ।

---

१. Supplied in different handwriting in M.
२. Omitted in M. पूर्वमन्त्रे प्रतिपादितः Sy. ३. सूर्यः Sy.
४. ०मस्य स्कार्या P. सर्वैर्नमस्करणीयः । नमसि साधुः 'तत्र साधुः' इति यत् । तित्स्वरितः Sy.
५. सुमुखः M. सुसुखः is suggested for सुसुख ॥ शोभनसुखः । सुखेन सेव्य इत्यर्थः Sy.
६. Omitted in P.
७. सर्वस्य जगतः प्रकाशप्रदानेन स्वामी Sy.
८. क्षत्रशब्देन बलमुच्यते । शोभनबलोपेतः Sy.
९. अजनिष्ट—'जनी प्रादुर्भावे' इत्यस्य लुङि सिचि रूपम् Sy.
१०. सर्वस्य जगतो विधाता । एवंगुणोपेतः सूर्यः Sy.
११. एवंविधगुणोपेतस्य Sy.
१२. वयं यजमानाः Sy.
१३. ०ज्ञास्याहीं P. यज्ञार्हस्य सूर्यस्य Sy.
१४. भवेम Sy.
१५. कल्याणकारिणि Sy.
१६. सौमनस्ये । सौमनसे—सुमनस इदमित्यर्थे 'तस्येदम्' इत्यण् । प्रत्ययस्वरः Sy.
१७. सुमतौ शोभनायां बुद्धौ Sy.
१८. Omitted in M.
१९. कारेणोपसदनीयो तामनजनो महान् M.
२०. योऽयमादित्यः Sy.
२१. ०दमयः P. अत एव सर्वैरुपसदनीयः Sy.
२२. यात्यानजनः M. यात्यमाजनः P. प्रातः प्रातः स्वस्वकर्मणि प्रवर्तनीया जना येनेति स तथोक्तः । यातयज्जनः–'यती प्रयत्ने' इत्यस्य ण्यन्तस्य शतरि रूपम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरे प्राप्ते मद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् Sy.
२३. निष्का० M. नियमयति P.
२४. प्राचक P. प्रकाशकरणात् is suggested for प्राशकरणात् ।
२५. ०नुष्यां M. and P.
२६. स्तोत्रं कुर्वते जनाय । गृणते—'गॄ शब्दे' । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् Sy.
२७. सुमुखः M. and D. सुशेवश्च भवति Sy.

स्तुत्यतमाय[1]। पर्याप्तम्[2]। अग्नौ। मित्राय[3]। हविः। आजुहोतेति[4]।

मि॒त्रस्य॑ चर्षणी॒धृतोऽवो॑ दे॒वस्य॑ सान॒सि। द्यु॒म्नं चि॒त्रश्र॑वस्तमम् ॥ ६ ॥

मित्रस्य[5]। मित्रस्य[6]। मनुष्याणां धारयितुः[7]। देवस्य[8]। रक्षणम्[9]। भजनीयम्[10]। 'द्युम्नं[11] द्योततेः, यशः[12]'—इति यास्कः, तत्। चित्रकीर्तिः[13], अतिशेते[14]।

---

१. M. omits words between सुसुखः and स्तुत्यतमाय ॥ पन्यतमाय—पनतेरघ्न्यादित्वात् यत्। 'यतोऽनावः' इत्याद्युदात्तत्वम् Sy.

२. प्रीतिविषयम्। जुष्टम्—'नित्यं मन्त्रे' इत्याद्युदात्तत्वम् Sy. ३. आदित्याय Sy. ४. ०होतीति P. जुहुत Sy.

५. अभिप्लवषडहे दशरात्रे च सप्तदशैकविंशादिस्तोमे सति होत्रादिकशस्त्रेष्वावापस्थाने पञ्चसप्तादिसंख्याका ऋच आवपनीयाः। तत्र मैत्रावरुणशस्त्रे 'मित्रस्य चर्षणीधृतः' इत्याद्याश्चतस्र आवापार्थाः। सूत्रितञ्च—'मित्रस्य चर्षणीधृत इति चतस्रो मैत्र्यः' (ASS.7.5.) इति Sy. ६. आदित्यस्य Mah., U. मित्रणाविकृतः BB.

७. मनुष्याणां वृष्टिप्रदानेन धारकस्य Sy. चर्षणयो मनुष्यास्तान् धरतीति चर्षणिधृत्तस्य। संहितायां दीर्घः। मनुष्याणां धारयितुः Mah. चर्षणयो मनुष्यास्तेषां धारणेऽधिकृतस्य U.

८. देवस्य सम्बन्धि Sy. दीप्यमानस्य Mah.

९. अन्नम् Sy. अवोऽन्नं यशो वा BB.

१०. सर्वैः सम्भजनीयम्। सानसि—सनोतेः 'सानसिवर्णसि—'इत्यादिनाऽसिच्प्रत्ययान्तत्वेन निपातनादुपधावृद्धिः। चित्स्वादन्तोदात्तः। 'स्वमो—'इति स्वमोर्लुक् Sy. सनातनम्। 'सानसीति पुराणनाम' (Ngh.3.27.) फलदानशीलं वा। 'षणु दाने' इत्यस्य प्रयोगः Mah. पुरातनं पुराणम् U. सननीयं सर्वेषां, देयं वा सर्वेभ्यः BB.

११. तदीयं धनं च Sy.

१२. N. 5.5. reads 'द्युम्नं द्योततेः। यशो वान्नं वा' ॥ यशोऽन्नं वा वयं स्तुम इति शेषः। याचेमहीति वा Mah. यशोऽन्नं वा U. सत्यमविनश्वरम् BB.

१३. अतिशयेन चायनीयकीर्तियुक्तम् Sy. चित्रं विचित्रमनेकैः श्रूयते तच्चित्रश्रवः। 'श्रु श्रवणे' इत्यस्मात्कर्मण्यसुन्। अतिशयेन चित्रश्रव इति चित्रश्रवस्तमम-त्यन्तं श्रवणीयं यशः प्रार्थयाम इति भावः Mah. अतिशयेन चाकर्णनीयं श्रवणीयं च वयं स्तुम इति वाक्यशेषः। याचेमहीति वा। यद्वा यस्य मित्रस्य चर्षणीधृतः पालने पुराणमस्ति द्युम्नं चित्रश्रवस्तमं स यजमानस्याभिप्रेतमर्थं साधयतु U. अतिशयेन चित्रं चायनीयं श्रवणमस्येति चायनीयः ? (नीय) यशस्तमं वा। यस्मात्त्वामेव यजामह इति BB.

१४. M. omits चित्रकीर्तिः, अतिशेते ॥ This stanza=YV.11.62.=TS.3.4.11.5.

अथ मित्रस्य चर्षणीधृत इति। मैत्रेण यजुषोपन्याचरति यावत्कियच्चोपन्याचरति न वै मित्रं कञ्चन हिनस्ति न मित्रं कश्चन हिनस्ति तथो हैष एतां न हिनस्ति नोऽएतमेषा तां द्विर्द्वेवोपवपेद्द्विवोद्वपेद्धर्ह्याग्नेयम्। SB.6.5.4.10.p.543.

अभि यो महिना दिवं मित्रो बभूव सप्रथाः । अभि श्रवोभिः पृथिवीम् ॥७॥

अभि यः । अभिबभूव । यः । महत्त्वेन । दिवम् । मित्रः । सर्वतः पृथुतमः । अपिच कीर्तिभिः । पृथिवीम् । अभ्यभवदिति ।

मित्राय पञ्च येमिरे जना अभिष्टिशवसे । स देवान्विश्वान्बिभर्ति ॥ ८ ॥

मित्राय । मित्राय । पञ्च । जनाः । आत्मानं नियच्छन्ति । शत्रूणामभ्येषणशीलबलाय । सः । देवान् । सर्वान् । धारयति ।

मित्रो देवेष्वायुषु जनाय वृक्तबर्हिषे । इष इष्टव्रता अकः ॥ ९ ॥

मित्रः । देवमनुष्यप्रीणनार्थम् । यो जनो वृक्तबर्हिर्भवति तस्मै । मित्रः । जनाय ।

---

१. प्रातर्होमस्य कालात्यये मैत्रेष्टिः । तस्याम् 'अभि यो महिना' इत्यनुवाक्या । सूत्रितञ्च 'अभि यो महिना दिवं प्र स मित्र मर्तो अस्तु प्रयस्वान्' (ASS. 3. 12.) इति Sy.

२. बहू P. अभिभवति स मित्रः Sy.

३. स्वकीयेन महिम्ना Sy.

४. दिव P. अन्तरिक्षम् Sy.

५. प्रथः प्रसिद्धिः कीर्तिः, तत्सहितः । सप्रथाः—'प्रथ प्रख्याने' । असुन् । 'वोपसर्जनस्य' इति सहस्य सभावः Sy.

६. ०ति यः P. वृष्टिद्वारोत्पादितैरन्नैः Sy.

७. पृथिवीमपि Sy.

८. अभिभवति । बह्वन्नयुक्तां करोतीत्यर्थः Sy.

९. निषादपञ्चमाश्चत्वारो वर्णाः Sy.

१०. यति० P. नियच्छन्ति as going with जनाः is suggested for नियच्छति ॥ हवींष्युद्यच्छन्ति Sy.

११. शत्रूणामभिगन्तृबलयुक्ताय । अभिष्टिशवसे—इषेः 'मन्त्रे वृष—'इत्यादिना क्तिन् । 'तादौ च निति—'इत्यभेरन्तोदात्तत्वम् । शकन्ध्वादित्वात् पररूपत्वम् । बहुव्रीहौ पूर्वपदस्वरः Sy.

१२. सर्वं P. तादृशो मित्रः Sy.

१३. स्वस्वरूपतया धारयति Sy.

१४. द्योतमानादिगुणयुक्तेषु मनुष्येषु मध्ये Sy. १५. ०नार्थम् P.

१६. वृक् ब० P. वृक्तबर्हिः—वृक्तं लूनं बर्हिर्येन सः । बर्हिर्लवनासादनपूर्वं हविषो दाता ऋत्विगित्यर्थः । तस्मै । 'ओव्रश्चू छेदने' । कर्मणि निष्ठायां 'यस्य विभाषा' इतीट्प्रतिषेधः । बहुव्रीहौ पूर्वपदस्वरः Sy.

१७. P. adds यज्ञो हि देवान् मनुष्यांश्च बिभर्ति ।

१८. भगवानादित्यः Sy.

१९. यनाय P.

अभिलषितकर्मसाधनानि[1] । अन्नानि[2] । करोति[3] ।

## III.60.

**इहेह वो मनसा बन्धुता नर उशिजो जग्मुरभि तानि वेदसा ।**
**याभिर्मायाभिः प्रतिजूतिवर्पसः सौधन्वना यज्ञियं भागमानश ॥ १ ॥**

इहेह[4] । हे नरः[5] ! युष्माकम् । बन्धुता स्तोत्रम्[6] । इह[7] च, इह च । अस्माकं मनसा सङ्गच्छते[8] बहूनि कर्माणि स्तुत्यानि[9] प्रादुर्भवन्तीत्यर्थः[10] । तानि[11] च[12] । कामयमानाः[13] स्तोतारः । अभिगच्छन्ति[14] स्तोतुम् । प्रज्ञानेन[15] । यैः । कर्मभिः[16] । मनुष्याणां चक्षूंषि प्रतिगच्छद्रूपास्तेजस्विनः[17] ।

---

१. इष्टानि कल्याणानि व्रतानि कर्माणि याभिः सिध्यन्ति ताः Sy.

२. तादृशान्यन्नानि Sy.

३. तस्मै ददातीत्यर्थः । अकः—करोतेर्लुङि च्लेः 'मन्त्रे घस—'इत्यादिना लुक् । सिपो हल्ङ्यादिलोपः । निघातः Sy.

४. 'इहेह वः' इति सप्तर्चं सप्तमं सूक्तं वैश्वामित्रं जागतमृभुदेवताकम् । अन्त्यस्तृच इन्द्रदेवताकश्च । तथा चानुक्रान्तम्—'इहेह वः सप्तार्भवं जागतं तृचोऽन्त्य ऐन्द्रश्च' (KSA. 20.60. p. 16.) इति । सूक्तविनियोगो लैङ्गिकः । आद्याश्चतस्रः पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि वैश्वदेवशस्त्रे आर्भवनिविद्धानीयाः । सूत्रितं च—'इहेह व इति चतस्रः' (ASS. 7.5.) इति Sy.

५. Omitted in P. हे मनुष्याः ! ऋभवः ! Sy.

६. स्तोत्रेम् P. बध्नन्ति फलेन संयोजयन्तीति बन्धवः कर्माणि । तेषां समूहो बन्धुता । 'बन्ध बन्धने' 'शृस्वृस्निहि—' इत्यादिना कर्तरि उप्रत्ययः । समूह इत्यर्थे 'ग्रामजनबन्धु(सहाये) भ्यस्तल्' (Pa. 4.2.43.) इति तल् । लित्स्वरः Sy.

७. सर्वत्र । इहेह—'नित्यवीप्सयोः' इति द्विर्वचनम् । परस्याम्रेडितत्वादनुदात्तत्वे पूर्वपदस्वरः Sy.

८. सर्वैर्ज्ञायते Sy.

९. स्तुत्या P.

१०. ॰त्यर्त्थः P.

११. तादृशानि कर्माणि Sy.

१२. Omitted in P.

१३. ॰मानः P. यज्ञभागं कामयमाना भवन्तः Sy.

१४. ॰च्छति P.
प्राप्नुवन्ति Sy.

१५. यज्ञभागप्रापककर्मविषयज्ञानेन Sy.

१६. कानि तानि ? मीयन्ते ज्ञायन्त इति मायाः कर्माणि Sy.

१७. ॰च्छद्रुपादुस्ते॰ P. प्रतिपक्षाभिभवनशीलतेजोयुक्ताः Sy.

सुधन्वनः पुत्राः[१] । यज्ञियम्[२] । भागम्[३] । प्राप्तवन्तः[४] ।

**याभिः शचीभिश्चमसाँ अपिंशत यया धिया गामरिणीत चर्मणः ।**
**येन हरी मनसा निरतक्षत तेन देवत्वमृभवः समानश ॥ २ ॥**

याभिः शचीभिः । याभिः । प्रज्ञाभिः[५] । चमसान्[६] । कृतवन्तः[७], 'एकं चमसं चतुरः कृणोतन[८]' इति[९] मन्त्रः । यया वा । प्रज्ञया । चर्मणः[१०] । गाम्[११] । अरिणीत[१२] निरगमयत[१३], 'निश्चर्मण ऋभवो गाम[१४]पिंशत[१५]' इति मन्त्रः । येन वा । मनसा[१६] । इन्द्रायाश्वौ[१७] । कृतवन्तः[१८] । तेन सर्वेण कर्मणा[१९] । यूयमृभवः । देवत्वम्[२०] । प्राप्ता[२१] इति[२२] ।

---

१. त्राय P. सुधन्वा नामाङ्गिरसः पुत्रः कश्चिदृषिः । तस्य पुत्राः सौधन्वनाः । ते च त्रय ऋभुर्विभ्वा वाज इति । एतन्नामका यूयम् Sy.

२. यज्ञार्हम् Sy.

३. सोमपानादिलक्षणम् Sy.

४. प्राप्ताः स्थ । तथाच मन्त्रवर्णः—'ऋभुर्विभ्वा वाजो देवाँ अगच्छत स्वपसो यज्ञियं भागमैतन' (RV.1.161.6.) इति । अयमर्थो ब्राह्मणेऽपि 'ऋभवो वै देवेषु तपसा सोमपीथमभ्यजयन्' (AB. 3. 30.) इत्यत्रोपाख्यानपूर्वकं स्पष्टमभिहितः । यद्वा नरः कर्मणां नेतारो हे ऋभवः ! उशिजः कामयमाना वेदसा हविर्लक्षणेन धनेन युक्ताः स्तोतारो वो युष्माकं तानि चमसतक्षणादीनि कर्माणि बन्धुता बन्धुतया सख्येन मनसा जग्मुरभिगच्छन्ति । कानीत्याशङ्कायामाह—यैः चमसतक्षणादिभिः कर्मभिर्यज्ञार्हं भागं यूयमाप्नुत तान्यभिगच्छन्ति । युष्माकं बुद्धिनैपुणानि चिन्तयन्तीत्यर्थः Sy.

५. शक्तिभिः Sy.

६. चमसान् चतुरः Sy.

७. विभक्तवन्तः स्थ । अपिंशत—'पिश अवयवे' तुदादिः । तस्य लङि मध्यमे रूपम् । यद्वृत्तयोगादनिघातः Sy.

८. चरः कृ० M. ०रस्कृ० D.

९. उति P. RV.I.161.2.

१०. चर्षणः P. चर्मणा योजनात् Sy.

११. गां मृताम् Sy.

१२. प्रापितवन्तः स्थ । अरिणीत—'री गतिरेषणयोः' । क्र्यादिः । तस्य लङि रूपम् । अत्रापि पूर्ववदनिघातः Sy.

१३. निग० P.

१४. गामि मंश० P.

१५. इत्रि M. RV.I.110.8.

१६. प्रज्ञानेन Sy.

१७. एतन्नामकाविन्द्रस्याश्वौ Sy.

१८. नितरामकुरुत । तथाच मन्त्रवर्णः—'य इन्द्राय वचोयुजा ततक्षुर्मनसा हरी' (RV.1.20.2.) इति । निरतक्षत—'तक्षू त्वक्षू तनूकरणे' । लङि रूपम् । पूर्ववदनिघाते 'तिङि चोदात्तवति' इति गतेर्निघातः । अडुदात्तः Sy.

१९. तेन सर्वेणानेन कर्मणा Sy.

२०. यज्ञभागार्हत्वलक्षणं देवभावम् Sy.

२१. सम्यक् प्राप्ताः स्थ । आनश—अश्नोतेर्लिटि रूपम् । निघातः Sy.

२२. VM. ignores सम् ।

इन्द्र॑स्य स॒ख्यमृ॒भवः॒ समा॑नशु॒र्मनो॒र्नपा॑तो अ॒पसो॑ दधन्विरे ।
सौ॒ध॒न्व॒नासो॑ अमृत॒त्वमेरि॑रे वि॒ष्ट्वी शमी॑भिः सु॒कृतः॑ सुकृ॒त्यया॑ ॥ ३ ॥

इन्द्रस्य । इन्द्रस्य[1] । सख्यम्[2] । ऋभवः । सम्प्राप्ताः[3] । तथा मनुष्यस्य सुधन्वनः[4] । पुत्राः[5] सन्तः । देववत्स[6]—कर्माणि । धारयन्ति[7] यज्ञिया भवन्ति । सुधन्वनः[8] पुत्राः । देवत्वम् । आभिमुखेन । प्राप्ताः[9] । कृत्वा[10] कर्माणि । तैः कर्मभिः[11] । शोभनकर्मकरणेनैव[12] । सुकृतः[13] ।

इन्द्रे॑ण याथ स॒रथं॑ सु॒ते सचाँ॒ अथो॒ वशा॑नां भवथा स॒ह श्रि॒या ।
न वः॑ प्रति॒मै सु॑कृ॒तानि॑ वाघतः॒ सौध॑न्वना ऋभवो वी॒र्या॑णि च ॥ ४ ॥

इन्द्रेण[14] । इन्द्रेण । सह । गच्छथ[15] । समानरथम्[16] । यज्ञे[17] । अपि[18]च[19] । कामयमानाम्[20] ।

---

१. इन्द्रेण M. D.

२. समानख्यानत्वम् Sy.

३. सम्यक् प्राप्नुवन् Sy.

४. सुन्व० M. अङ्गिरसः Sy.

५. नपातः—'नभ्राण्नपात्०' इत्यादिना नञः प्रकृतिभावः Sy.

६. देवत्स M. देववत् सर्वकर्माणि is suggested for देववत्सकर्माणि ॥ यागादिलक्षणकर्मवन्तः Sy.

७. ०यति P. तथेन्द्रस्य सख्यं प्राप्तास्त ऋभवः. . .पूर्वं मनुष्यत्वेन मरणयोग्या अपीदानीमिन्द्रस्य सख्येन प्राणान् धारयन्ति । तथा च मन्त्रवर्णः—'अधारयन्त वह्नयः' (RV. 1. 20. 8.) इति । दधन्विरे—'धविर्गत्यर्थः' । व्यत्ययेनात्मनेपदम् । लिटि रूपम् Sy.

८. सुधन्वनामकस्यर्षेः पुत्रा ऋभवः Sy.

९. प्रापुः । तथा च मन्त्रान्तरमाम्नायते—'मर्तासः सन्तो अमृतत्वमानशुः' (RV. 1. 110. 4.) इति । ईरिरे—'ईर गतौ' मन्त्रत्वाद् आम् न भवति । निघातः Sy.

१०. कृता P. व्याप्य Sy.

११. प्रभूतैः. . .देवत्वप्राप्तिप्रतिबन्धनिवारणहेतुभिः Sy.

१२. ०र्मणे० P. शोभनेन कर्मणा च । सुकृत्यया—करोतेर्भावे 'कृञः श च' इति क्यप्, प्रत्ययस्य व्यत्ययेनान्तोदात्तत्वम् । समासे कृदुत्तरस्वरः Sy.

१३. शोभनकर्माणः सन्तः

१४. हे ऋभवः ! यूयम् Sy.

१५. आग० M.

१६. समानमेकं रथमारुह्य Sy.

१७. अभिषुतसोमवति यज्ञे Sy.

१८. अथो अनन्तरमिन्द्रेण सहैकरथमारूढा यूयम् Sy. १९. व P.

२०. माना M. कामयमानानाम् is suggested for कामयमानाम् ॥ उश्यते काम्यते यजमानेन स्वर्गादिलक्षणं फलमेभिरिति वशा मनुष्यास्तेषाम् । वशानाम्—'वश कान्तौ' । 'वशिरण्योरुपसंख्यानम्' इति करणे अप्प्रत्ययः । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः । वशाशब्दो वन्ध्यावचनश्चेदन्तोदात्तो भवति । 'वशा मेषा अवंसृष्टास आहुताः' (RV.10.91.14.) इति Sy.

श्रिया[1] । सह । भवथ । न । युष्माकम्[2] । प्रतिमातुं[3] शक्यानि । सुकृतानि[4] । हे वहनशीलाः[5] ! सौधन्वनाः[6] ! ऋभवः ! एव । वीर्याणि[7] । अपि ।

**इन्द्र ऋभुभिर्वाजवद्भिः समुक्षितं सुतं सोममा वृषस्वा गभस्त्योः ।**
**धियेषितो मघवन्दाशुषो गृहे सौधन्वनेभिः सह मत्स्वा नृभिः ॥ ५ ॥**

[8]इन्द्र ऋभुभिः ॥ अवशिष्टानाम्[9]इन्द्रश्च देवता ॥ हे इन्द्र ! वाजेन[10] भ्रात्रा[11] तद्वद्भिः ऋभुभिः सह[12] । पात्रेषु समुक्षितम्[13] । सुतम्[14]इमम् । सोमम् । आसिञ्च[15] स्वजठरे । अध्वर्योर्बाहु[16]भ्यामादाय । हे मघवन्[17] ! कर्मणा[18] । प्रेषितः[19] । यजमानस्य[20] । गृहे । सुधन्वनः पुत्रैः । सह[21] ।

---

१. स्तुतिहविरादिरूपया Sy.
२. वः—युष्मच्छब्दस्य षष्ठीबहुवचने वसादेशः । निघातः Sy.
३. प्रतिमातुमियत्तया परिच्छेत्तुं न केनापि शक्यानि । प्रतिमैः—'माङ् माने' । विच् । प्रतिमाः प्रतिमानम् । तस्य चतुर्थ्येकवचने आतो लोपाभावश्छान्दसः । एकादेशस्वरः Sy.
४. Omitted in P. देवत्वस्य प्रापकाणि शोभनानि कर्माणि Sy.
५. M. omits words between श्रिया and शीलाः ॥ शील P. अमृतत्वादिलक्षणफलस्य 'वोढारो मेधाविनो वा' इति यास्कः (Cf.N.11.16.) तादृशाः Sy.
६. सोध० M. हे सुधन्वनः पुत्राः ! Sy.
७. युष्माकं सामर्थ्यानि Sy.
८. आभिप्लविके पञ्चमेऽहनि वैश्वदेवशस्त्रे 'इन्द्र ऋभुभिः' इत्यार्भवस्तृचः । सूत्रितञ्च—'घृतवती भुवनानामभिश्रियेन्द्र ऋभुभिर्वाजवद्भिरिति तृचौ' (ASS. 7.7.) इति । आद्या तृतीयसवने होतुः प्रस्थितयाज्या । सूत्रितं च—'इन्द्र ऋभुभिर्वाजवद्भिः समुक्षितमिन्द्रावरुणा सुतपाविमं सुतम्'(ASS. 5.5.) इति Sy.
९. अविशि० P.
१०. वाज्जेन P. वाजो नाम ऋभूणां भ्राता । यद्वा वाजोऽन्नम् । तत्सहितैः Sy.
११. भ्राता M.
१२. सहितस्त्वम् Sy.
१३. सम्यगद्भिः सिक्तम् । 'उक्ष सेचने' । कर्मणि क्तः । 'गतिरनन्तरः' इति गतेः स्वरः Sy.
१४. ग्रावभिः सुतम् Sy.
१५. आक्षारय । ग्रहमुभाभ्यां बाहुभ्यां गृहीत्वा सोमं पिबेत्यर्थः Sy.
१६. ०ध्वर्यवो बाहु० P. M. omits words between षु समुक्षितम् and बाहुभ्या ॥ बप्सत्यदन्त्याभ्यामन्नमिति गृह्णन्ति पदार्थानाभ्यामिति वा गभस्ती बाहू । तयोर्बाह्वोः । गभस्त्योः—'भस भर्त्सनदीप्त्योः' इत्यस्मात् 'भसेर्गट् च' इति सूत्रेण तिप्रत्ययो धातोर्गडागमश्च । यद्वा गृह्णातेः पृषोदरादित्वादेवं नेयम् Sy.
१७. इन्द्र ! Sy.
१८. स्तोत्ररूपेण कर्मणा Sy.
१९. प्रेरितस्त्वम् Sy.
२०. हविर्दत्तवतो यजमानस्य Sy.
२१. साकम् Sy.

मत्स्व[1]। मनुष्यैः[2]।

इन्द्रं ऋभुमान्वाजवान्मत्स्वेह नोऽस्मिन्त्सवने शच्या पुरुष्टुत।
इमानि तुभ्यं स्वसराणि येमिरे व्रता देवानां मनुषश्च धर्मभिः ॥ ६ ॥

इन्द्र[3]। हे इन्द्र! ऋभुणा[4] युक्तः। वाजेन[5] च। त्वं[6] मत्स्व[7]। अस्माकम्। इह[8] यज्ञे। तृतीयसवने[9]। शच्या[10] सह देव्या। हे बहुभिः स्तुत! तव प्रीत्यर्थमेवेन्द्र[11]! इमानि। अहानि। मनुष्याणाम्[12]। कर्मभिः सह[13]। देवानाम्[14]। कर्माणि। च[15]। यच्छन्ति[16] यज्ञियानि[17]ति[18]।

इन्द्रं ऋभुभिर्वाजिभिर्वाजयन्निह स्तोमं जरितुरुप याहि यज्ञियम्।
शतं केतेभिरिषिरेभिरायवे सहस्रणीथो अध्वरस्य होमनि ॥ ७ ॥

इन्द्र[19]। हे[20] इन्द्र[21]! वाजेन तद्वद्भिः[22]। ऋभुभिः[23]। इह[24]। वाजं कुर्वन्[25]। स्तोमम्[26]। स्तोतुः[27]।

---

१. महत्स्व P. सोमपानेन हृष्टो भव। 'मदि स्तुत्यादिषु'। लोटि 'बहुलं छन्दसि' इति विकरणस्य लुक्। निघातः Sy.
२. ऋभुभिः Sy.
३. M. has a later addition ऋभुमान्।
४. ऋभुणा तद्वान् Sy.
५. वाजेन ऋभोर्भ्रात्रा युक्तः Sy.
६. त्व P.
७. हृष्टो भव Sy.
८. कर्मणि Sy.
९. M. omits words between हे इन्द्र! and तृ ॥
१०. इन्द्राण्या कर्मणा वा सहितः सन् Sy.
११. ०त्यर्त्थं० P. त्वदर्थम् Sy.
१२. मनुष्यस्य Sy.
१३. साकं त्वदर्थं नियतान्यासते Sy.
१४. अग्न्यादीनाम् Sy.
१५. न P.
१६. येमिरे। तव सोमपानार्थं त्रिषु सवनेषु नियतान्यासते Sy.
१७. P. omits words between देवानां and ०यानिति।
१८. VM. explains अस्मिन् सवने as तृतीयसवने so he does not ignore अस्मिन्.
१९. Omitted in M. इन्द्रः P.
२०. Omitted in P.
२१. इन्द्रा हे P.
२२. वाजयुक्तैः Sy.
२३. ऋभुभिः सहितस्त्वम् Sy.
२४. यज्ञे Sy.
२५. स्तोतुर्वाजमन्नं कुर्वाणः। वाजयन्—वाजं करोतीति णिच्। 'णाविष्ठवत्—' इतीष्ठवद्भावात् 'तुरिष्ठेमेयःसु' इति टिलोपः Sy.
२६. स्तोत्रम् Sy.
२७. स्तोतुं M. and P.

उपगच्छ[१] । यज्ञार्हं कल्याणम् । शतेन[२] । विचिन्तितेन[३] । इष्टेन[४] सह । मनुष्याय[५] । बहुनयनो[६] भवसि त्वम् । यज्ञस्य[७] सम्बन्धिनि[८] । होमे[९] ।

## III.61.

**उषो वाजेन वाजिनि प्रचेताः स्तोमं जुषस्व गृणतो मघोनि ।**
**पुराणी देवि युवतिः पुरंधिरनु व्रतं चरसि विश्ववारे ॥ १ ॥**

उषो[१०] वाजेन[११] । हे उषः[१२] ! हविषा[१३] सह । अस्य[१४] स्तोतुः[१५] । स्तोमं[१६] च । सेवस्व[१७] । सुमतिस्त्वम्[१८] । हे अन्नवति[१९] ! धनवति[२०] ! हे देवि ! पुरातनी[२१] । तरुणा[२२] ।

---

१. आगच्छ Sy.
२. पुनः किंविशिष्टः ? शतसङ्ख्याकैः Sy.
३. केत्यते ज्ञायते सर्वमेभिरिति केताः प्राज्ञा मरुतस्तैः । 'कित ज्ञाने' । घञ् । ञित्त्वादाद्युदात्तः Sy.
४. इषिरैर्गमनकुशलैरश्वैः सहितः Sy.
५. मनुष्याय यजमानाय Sy.
६. M. omits words between शतेन and नयनो ॥ नयेन P. बहुप्रकारनयनोपेतः Sy.
७. न विद्यते ध्वरो हिंसा यस्य तादृशस्य सोमस्य Sy.
८. संधि० M.
९. आगच्छेति शेषः Sy.
१०. 'उषो वाजेन' इति सप्तर्चमष्टमं सूक्तं वैश्वामित्रमुषोदेवताकम् । तथाचानुक्रान्तम् 'उष उषस्यम्' (KSA. 20. 61. p. 16.) इति । प्रातरनुवाके उषस्ये क्रतावाश्विनशस्त्रे च त्रैष्टुभे छन्दस्येतस्य सूक्तस्य विनियोगः । सूत्रितञ्च— 'उषो वाजेनेदमु त्यत्' (ASS. 4. 14.) इति Sy.
११. Omitted in P.
१२. उषा P.
१३. अन्नेन Sy.
१४. स्य P.
१५. तव स्तोत्रं कुर्वतः स्तोतुः Sy.
१६. स्तोत्रम् Sy.
१७. यद्वा वाजेन हविर्लक्षणेनान्नेन सह, स्तोमं जुषस्वेति सम्बन्धः Sy.
१८. प्रकृष्टज्ञानवती सती त्वम् Sy.
१९. अन्नवति ! तथाच मन्त्रः—'सं वाजैर्वाजिनीवति' (RV.1.48.16.) इति Sy.
२०. मघोनि—मघशब्दान्मतुबर्थे 'छन्दसीवनिपौ—' इति वनिप् । स्त्रियाम् 'ऋन्नेभ्यो ङीप्' । 'श्वयुवमघोनामतद्धिते' इति सम्प्रसारणे कृते गुणः । सम्बुद्धौ 'अम्बार्थनद्योर्ह्रस्वः' । निघातः Sy.
२१. पुराणी । पुराणशब्दः—'पुराणप्रोक्तेषु—' इत्यन्तोदात्तत्वेन निपातितः । 'टिड्ढाणञ्—'इति ङीप् । 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्यन्तोदात्तत्वम् Sy.
२२. तरुणी is suggested for तरुणा ॥ युवतिरित्युपमा । तद्वच्छोभमाना । 'सुसङ्काशा मातृमृष्टेव योषा' (RV. 1. 123. 11.) इतिवत् Sy.

बहून्[1] धारयित्री[2] त्वम् । हे विश्ववरणीये[3] ! यज्ञम्[4] । लक्षीकृत्य[5] । चरसि[6] ।

उषो देव्यमर्त्या वि भाहि चन्द्ररथा सूनृता ईरयन्ती ।
आ त्वा वहन्तु सुयमासो अश्वा हिरण्यवर्णां पृथुपाजसो ये ॥ २ ॥

उषः । हे उषः ! देवि ! अमर्त्या[7] त्वम् । व्युच्छ[8] । कान्तरथा[9] । मनुष्याणां वयसां च वाचः[10] । प्रेरयन्ती[11] । त्वाम् । आवहन्तु[12] । सुयमाः[13] । अश्वाः[14] । हिरण्यसदृशवर्णाम्[15] । पृथुबलाः[16] । ये भवन्तीति ।

उषः प्रतीची भुवनानि विश्वोर्ध्वा तिष्ठस्यमृतस्य केतुः ।
समानमर्थं चरणीयमाना चक्रमिव नव्यस्या ववृत्स्व ॥ ३ ॥

उषः प्रतीची । हे उषः ! त्वम् । सर्वाण्येव । भुवनानि[17] । प्रतिमुखा[18] भवन्ती ।

---

१. M. omits words between हे अन्न and बहून् ॥ P. contains only न् of बहून् ।

२. पुरु बहु धीः स्तोत्रलक्षणं कर्म यस्याः सा, बहुस्तोत्रवती । पुरन्धिः शोभमाना वा । एवंविधगुणोपेता त्वम् । पुरन्धिः—पृषोदरादित्वादुकारस्य अमादेश ईकारस्य ह्रस्वश्च । 'आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम्' इत्याद्युदात्तत्वम् Sy. 'पुरन्धिर्बहुधीः' N. 6.13.

३. विश्वैः सर्वैर्वरणीये ! हे उषः ! Sy.

४. यज्ञकर्म Sy.

५. अभिलक्ष्य Sy.

६. पुरुषव्यत्ययेन वर्तसे Sy.

७. मरणधर्मरहिता Sy.

८. सूर्यकिरणसम्बन्धाद् विशेषेण दीप्यस्व Sy.

९. ०रथ M. सुवर्णमयरथोपेता Sy.

१०. याचः P. प्रियसत्यरूपा वाचः Sy.

११. उच्चारयन्ती । तथा च मन्त्रवर्णः—'सुम्नावरी सूनृता ईरयन्ती' (RV. 1. 113. 12.) इति । तादृशी त्वम् Sy.

१२. आवतु P.

१३. सुष्ठु नियन्तुं शक्या रथे योजितास्तेऽश्वाः । सुयमासः—यमेरकृच्छ्रार्थे खल् । लित्स्वरः Sy.

१४. अश्वा विद्यन्ते Sy.

१५. M. omits words between मनुष्याणां and सदृश० ॥ हिरण्यवर्णाम् Sy.

१६. प्रभूतबलयुक्ता अरुणवर्णाः Sy.

१७. भव० P.

१८. प्रति आभिमुख्येनाञ्चति प्राप्नोतीति प्रतीची । प्रतीची—प्रतिपूर्वादञ्चतेः क्विन् । 'अञ्चतेश्चोपसंख्यानम्' इति ङीप् । 'अचः' इत्यकारलोपे 'चौ' इति दीर्घः । उदात्तनिवृत्तिस्वरेणान्तोदात्तः Sy.

उत्तिष्ठसि । सुप्तानामुत्थापनात्, अमृतस्य[1] । प्रज्ञापयित्री[2] । सा त्वम्, एकमेव[3] । कार्यमुद्दिश्य[4] जगद्रक्षणात्मकम् । अन्वहं चरन्ती[5] । चक्रमिव[6] । हे[7] नवतरे ! एकरूपा आववृत्स्व[8]इति ।

**अव स्यूमेव चिन्वती मघोन्युषा याति स्वसरस्य पत्नी ।**
**स्व१र्जनन्ती सुभगा सुदंसा आन्ताद्दिवः पप्रथ आ पृथिव्याः ॥ ४ ॥**

अव स्यूमेव[9] । प्रकाशसद्भावात् सर्वे सुखान्यभिलषितानि प्राप्नुवन्ति, तत उषाः[10] सुखं मनुष्याणाम्[11] । चिन्वानेव[12] । अधः[13] प्राच्यां दिशि प्रादुर्भवति[14] । धनवती । उषाः[15] । अह्नः[16] । पत्नी[17] । तमसा तिरोहितं[18] सर्वमेव[19] । जनयन्ती[20] । सुधना[21] । शोभनकर्मा[22] । आ । दिवः[23] । अन्तात्[24] ।

---

१. मरणधर्मरहितस्य सूर्यस्य Sy.

२. केतुः—'चायृ पूजानिशामनयोः' इत्यस्मात् 'चायः की च' इति तुः, कीत्यादेशः । आर्धधातुकलक्षणो गुणः Sy.

३. एकं मार्गमुदयात् प्राचीनकाललक्षणम् Sy.

४. M. omits words between प्रतिमुखा and कार्यं ॥ अर्यते गम्यतेऽस्मिन्नित्यर्थो मार्गः । अर्तेस्थन्प्रत्ययः Sy.

५. ०रन्ति M. चरितुमिच्छन्ती त्वम् Sy.

६. तत्र दृष्टान्तः । यथा नभसि चरितुः सूर्यस्य रथाङ्गं पुनः पुनरावर्तते तद्वत् Sy.

७. ते M. पुनः पुनर्जायमानतया हे उषोदेवि ! नव्यसि—नवशब्दादीयसुनि ङीपि रूपम् । ईकारलोपश्छान्दसः Sy.

८. पुनस्तस्मिन् मार्गे आवृत्ता भव । ववृत्स्व—'वृतु वर्तने' । 'बहुलं छन्दसि' इति विकरणस्य श्लुः Sy.

९. अव स्यूम M. (a later addition over the line). अप स्युमेव P.

१०. P. reads ततोषाः for तत उषाः ।

११. M. omits words between प्रकाश and मनुष्याणाम् ॥ वस्त्रमिव विस्तृतं तमः । स्यूमेव—'षिवु तन्तुसन्ताने' 'अविसिविसिशुषिभ्यः कित्' इति मन्प्रत्ययः । 'छ्वोः शूडनुनासिके च' इत्यूठ् । यणादेशः । 'सुपां सुलुक्—' इति सोर्लुक् । नित्त्वादाद्युदात्तः Sy.

१२. ०नेव M. ०न्वावः P. अवचयमपक्षयं प्रापयन्ती । चिन्वती—'शतुरनुमः—' इति ङीप उदात्तत्वम् Sy.

१३. अध P.

१४. गच्छति Sy.

१५. येयमुषाः Sy.

१६. अह्ना P. स्वसरस्य सुष्ठ्वस्यति क्षिपति तम इति स्वसरः सूर्यो वासरो वा । तस्य Sy.

१७. पत्नी सती Sy.

१८. हित P.

१९. स्वकीयं तेजः Sy.

२०. जनन्ती—'जन जनने' इत्यस्य ण्यन्तस्य शतरि रूपम् । 'छन्दस्युभयथा' इति शप आर्धधातुकत्वेन णिलोपः Sy.

२१. सुधना सौभाग्ययुक्ता वा Sy.

२२. शोभनाग्निहोत्रकर्मा सेयमुषाः Sy.

२३. द्युलोकस्य Sy.

२४. ०न्तान् P. आवसानात् Sy.

प्रथिता भवन्ती[1] । आ च । पृथिव्या अन्तादिति[2] ।

अच्छा वो देवीमुषसं विभातीं प्र वो भरध्वं नमसा सुवृक्तिम् ।
ऊर्ध्वं मधुधा दिवि पाजो अश्रेत्प्र रोचना रुरुचे रण्वसंदृक् ॥ ५ ॥

अच्छा वः[3] । व्युच्छन्तीम्[4] । उषसम् । प्रति[5] । यूयम्[6] । नमस्कारेण सह । स्तुतिम्[7] । प्रभरध्वम्[8] । पुनः 'वः'[9] इति पूरणम् । ऊर्ध्वम्[10] । अश्रेत्[11] । दिवि[12] प्रादुरभूत् । मधुनो[13] धारकम् । तेजः, इत्युपसमाह । प्रादुर्भूतं[14] च तत्, रमणीयं दर्शयन्[15] । लोकान्[16] । प्ररोचयति[17] ।[18]

ऋतावरी दिवो अर्कैरबोध्या रेवती रोदसी चित्रमस्थात् ।
आयतीमग्न उषसं विभातीं वाममेषि द्रविणं भिक्षमाणः ॥ ६ ॥

ऋतावरी । वाग्भिर्युक्ता[19] । दिवः[20] सकाशात् । प्रातः प्रबुद्धानां[21] स्तोतॄणां स्तुतिभिर्युक्ता[22] ।

---

१. ०वती P. प्रथते प्रकाशत इत्यर्थः Sy.
२. M. omits words between सर्वमेव and अन्तादिति ।
३. अच्छ P. हे स्तोतारः ! Sy.
४. शोभमानाम् Sy.
५. अभिलक्ष्य Sy.
६. Perhaps VM. here explains first वः as यूयम् resorting to the rule of विभक्तिव्यत्यय ॥ युष्मान् Sy.
७. शोभनां स्तुतिम् Sy.
८. कुरुत Sy.
९. युष्माकं सम्बन्धिना Sy.
१०. ऊमूर्ध्वाम् P. ऊर्ध्वाभिमुखम् Sy.
११. अश्रे P. श्रयति Sy.
१२. नभसि Sy.
१३. मधुराणि स्तुतिलक्षणानि वाक्यानि दधातीति । मधुः सोमः, तं धारयतीति वा । यद्वा मधुधावित्यधात्री, यद्वा, अवग्रहाभावादव्युत्पन्नावयवमखण्डमिदं पदमुषोनाम । सेयमुषाः Sy.
१४. ०दुभू० P.
१५. रमणीयदर्शनोषाः । रण्वसन्दृक्—रवेर्गत्यर्थस्याच्प्रत्ययः । इदित्त्वान्नुमागमः । संपूर्वाद् दृशेः क्विन् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः Sy.
१६. M. omits words between श्रेत् and लोकान् ॥ रोचनशीला Sy.
१७. प्रकर्षेण दीप्यते । यद्वा रोचना लोकान् प्ररुरुचे प्रकर्षेण स्वतेजसा दीपयति । तथाच मन्त्रवर्णः—'व्युच्छन्ती हि रश्मिभिर्विश्वमाभासि रोचनम्' (RV. I. 49. 4.) Sy.
१८. VM. ignores देवीम् ।
१९. सत्यवती येयमुषाः Sy.
२०. द्युलोकात् Sy.
२१. ०द्धागा P.
२२. ०भिर्यक्ता P. तेजोभिः Sy.

प्रबुध्यते=ज्ञायते[१]। ज्ञाता सती धनवतीयम्[२]। द्यावापृथिवी[३]। चित्रम्[४]। आतिष्ठति[५]। तामिमाम्[६]। व्युच्छन्तीम्[७]। आगच्छन्तीम्[८]। हे अग्ने ! त्वम्। वननीयम्। अग्निहोत्राख्यं[९] धनम्। याचमानः[१०]। एषि[११]।

**ऋतस्य॑ बु॒ध्न उ॒षसा॑मिष॒ण्यन्वृषा॑ म॒ही रोद॑सी॒ आ वि॑वेश।**
**म॒ही मि॒त्रस्य॒ वरु॑णस्य मा॒या च॒न्द्रेव॑ भा॒नुं वि द॑धे पुरु॒त्रा ॥ ७ ॥**

ऋतस्य[१२]। उषसाम्[१३]। मूले। हविः। इच्छन्[१४]। अग्निः[१५] कामानां वर्षिता[१६]। द्यावापृथिवी[१७]। तेजसा[१८]। व्याप्नोति[१९]=प्रज्वलयत्युषतीत्यर्थः[२०]। अपिवा[२१], अह्नः[२२]। मूले। उषसः। इच्छन्। अग्निः[२३]। दीप्तः[२४]। व्याप्नोति। द्यावापृथिवी, इत्यर्थः[२५]। महती[२६]। मित्रावरुणयोः।

---

१. य P. सर्वैर्ज्ञायते। प्रबोधि—'बुध अवगमने'। कर्मणि लुङि 'चिण् भावकर्मणोः' इति चिण्। 'चिणो लुक्' Sy.
२. रेवती—रयिशब्दान्मतुप्। 'छन्दसीरः' इति वत्वम्। 'रयेर्मतौ बहुलम्' इति सम्प्रसारणपररूपत्वे। गुणः। 'उगितश्च' इति ङीप्। 'रेशब्दाच्चोपसंख्यानम्' इति मतुप उदात्तत्वम् Sy.
३. द्यावापृथिव्यौ Sy.
४. नानाविधरूपयुक्तं यथा भवति तथा Sy.
५. आतितिष्ठ P. सर्वतो व्याप्य तिष्ठति Sy.
६. M. omits words between भिर्युक्ता and तामिमाम् ॥ उषोदेवीम् Sy.
७. भासमानाम् Sy.
८. त्वदभिमुखमागच्छन्तीम् Sy.
९. अग्निहोत्रादिलक्षणम् Sy.
१०. हवींषि याचमानस्त्वम् Sy.
११. ए M. प्राप्नोषि Sy.
१२. In M. a different hand adds the *pratika* over the line but not in right place.
१३. ०षमूषां P.
१४. प्रेरणं कुर्वन् Sy.
१५. अग्निम् P.
१६. वृष्टिद्वारा अपां प्रेरक आदित्यः Sy.
१७. द्यावापृथिव्यौ Sy.
१८. महत्यौ Sy.
१९. M. omits words between उषसाम् and व्याप्नोति ॥ स्वतेजोभिः सर्वतः प्रविष्टवान् Sy.
२०. ०त्यर्त्थः P.
२१. यद्वा वृषा वर्षतेषण्यन् सर्वतो गच्छन्नुषसां सम्बन्धी रश्मिसमूहो रोदसी विष्टवानिति योजनीयम् Sy.
२२. अग्निहोत्रादिकर्मकरणे सत्यभूतस्याह्नः Sy.
२३. अग्नि P.
२४. दीप्ता M.
२५. ०त्यर्त्थः P.
२६. तत उषा महती। मही—अल्लोपश्छान्दसः Sy.

प्रजा[1]। यथा[2] रात्रौ वरुणश्[3]चन्द्रं[4] पुरुत्रा बहुषु देशेषु[5] चकार। तद्वदुषस्यागतायां[6] मित्रस्य माया सूर्यम्[7]।
अनेकेषु[8] देशेषु । विदथ[9] इति[10] ।

## III.62.

**इमा उ वां भृमयो मन्यमाना युवावते न तुज्या अभूवन् ।**
**क्व१त्यदिन्द्रावरुणा यशो वां येन स्मा सिनं भरथः सखिभ्यः ॥ १ ॥**

इमाः[11][12]। भ्रमणशीला[13] अपि[14] । इमाः[15] प्रजाः[16] । वाम्[17] । अर्चन्त्यः[18] । अपि[19] । युवाभ्यां

---

१. प्रभारूपा सती Sy.

२. M. omits the matter from वी, इत्यर्थः upto यथा ॥

३. वरु॰ P.

४. चन्द्रः P. सुवर्णानीव Sy.

५. Omitted in M.

६. ॰गच्छतां P.

७. स्वप्रभाम् Sy.

८. ॰मकेषु P. पुरुत्रा—'देवमनुष्य—' इत्यादिनाऽधिकरणे त्राप्रत्ययः Sy.

९. विधे P. विदथानि सर्वत्र प्रसारयति Sy.

१०. M. omits नेकेषु देशेषु । विदथ इति ॥

११. 'इमा उ वाम्' इत्यष्टादशर्चं नवमं सूक्तम्। अत्रेयमनुक्रमणिका 'इमा उ ह्यूनैन्द्रावरुणबार्हस्पत्यपौष्णसावित्रसौम्यमैत्रावरुणास्तृचा अन्त्यो जमदग्न्यार्षो वा चतुर्थ्याद्या गायत्र्यः' (KSA. 20. 62. p. 16.) इति। कृत्स्नस्य विश्वामित्र ऋषिरन्त्यस्य तृचस्य जमदग्निर्वा। आद्यास्तिस्रस्त्रिष्टुभः शिष्टाः पञ्चदश गायत्र्यः। प्रथमस्येन्द्रावरुणौ देवता द्वितीयस्य बृहस्पतिः, तृतीयस्य पूषा, चतुर्थस्य सविता, पञ्चमस्य सोमः, षष्ठस्य मित्रावरुणौ। आभिप्लविकेषूक्थ्येषु तृतीयसवने स्तोमवृद्धौ सत्यां स्वस्वशस्त्रे होत्रका अन्त्यसूक्तमवशोष्य स्तोमाभिशंसनार्थं तृचादिसंख्या ऋच आवपेयुः । तत्र मित्रावरुणस्यावापार्थमाद्यस्तृचः । सूत्रितञ्च—'इमा उ वां भृमयो मन्यमाना इति तिस्रः' (ASS. 7. 9.) इति Sy. विश्वामित्रस्यार्षम् SKN. विश्वामित्रस्येदमार्षम् Dur.

१२. M. has it added in different handwriting.

१३. भृमयः—'भ्रमु अनवस्थाने' 'भ्रमेः सम्प्रसारणञ्च' इतीन्प्रत्ययः सम्प्रसारणं च । व्यत्ययेनान्तोदात्तत्वम् Sy. किंविशिष्टाः स्तुतयः ? भृमयो भ्रमणशीलाः SKN. युवयोर्भृमयः स्तुतयः, या यास्तैस्तैः स्तोतृभिरुदीरिता युवामेव मार्गमाणा भ्रमन्तीव Dur.

१४. अचि P.

१५. M. omits भ्रमणशीला अपि। इमाः।

१६. प्रज्ञा P. इमा इति सामर्थ्यात् स्तुतीनां प्रतिनिर्देशः । इमाः स्तुतयः SKN.

१७. वा M. and P. युवयोः सम्बन्धिन्यः Sy. युवाम् SKN.

१८. बलिभिः शत्रुभिरभिमन्यमानाः Sy. मन्यतेरर्चतिकर्मण एतद्रूपम् । अर्चन्त्यः स्तुवन्त्यः SKN. ता एता यथा पूर्वमेवास्माकमभिमतफलदायिन्यो भविष्यन्तीति मन्यमाना वयमुदीरयामहे Dur.

१९. उः पूरणः Sy. उकारः पदपूरणः SKN. एव Dur.

सदृशाय[1] । धनाभावात् दानार्हाः[2] । न । भवन्ति[3] । हे इन्द्रावरुणौ[4] ! क्व[5] । तत्[6] । यशः[7] । युवयोर्गतम् । येन यशसा[8] । सखिभ्यः[9] । अन्नम्[10] । भरथः[11] ।[12]

**अयमु वां पुरुतमो रयीयञ्छश्वत्तममवसे जोहवीति ।**
**सजोषाविन्द्रावरुणा मरुद्भिर्दिवा पृथिव्या शृणुतं हवं मे ॥ २ ॥**

अयमु[13] । अयं स्तोता । रक्षार्थम्[14] । सर्वदा । वाम्[15] । आह्वयत्यत्यन्तम्[16][17] ।

---

१. Omitted in P. तृतीयार्थे चतुर्थी । यौवनवता बलिना शत्रुणा । युवावते—'युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम्' इति वतुप् । अविभक्तावपि युवादेशश्छान्दसः Sy. युष्मद्वते, युवां स्तुत्यतया यष्टव्यतया च यः स्तौति तस्मै मह्यं च SKN. ता पुनरेता अस्मै युवावते युष्मद्वते भवद्भ्यां तद्वते यजमानाय Dur.

२. हिंस्याः । तुज्याः—'तुज हिंसादाननिकेतनेषु' । 'अघ्न्यादयश्च' इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् Sy. तुजतेर्दानार्थस्य । पूर्ववत् सम्प्रति दानार्हता स्वस्य प्रतिपाद्यते SKN. ता एता यथापूर्वं तुज्या दानायाभिमतानामर्थानाम् Dur.

३. भवन्तु Sy. प्रतिपद्यन्त इत्यर्थः SKN. बभूवुः Dur.

४. यतो ब्रवीमि हे इन्द्रावरुणौ Dur.

५. कुत्रास्ते Sy.　　६. तादृशम् Sy.

७. कार्यकारणयोरभेदोपचारात् कार्यशब्दस्यायं कारणे प्रयोगः । यशसः कारणभूतं दानसामर्थ्यम् SKN. माहाभाग्यम् Dur.

८. येन । स्मशब्दः पादपूरणः SKN. माहाभाग्येनैताभिः स्तुतिभिरभिष्टुतौ सन्तौ Dur.

९. M. omits words between वरुणौ and सखि ॥ अस्मभ्यम् Sy. स्तुत्यस्तोतृलक्षणे च सख्ये वर्तमानेभ्योऽस्मदादिभ्यः SKN. समानख्यानेभ्यो यजमानेभ्यः Dur.

१०. सिनम्—'षिञ् बन्धने' 'इण्षिञ्जिदीङुष्यविभ्यो नक्' इति नक् । व्यत्ययेनाद्युदात्तत्वम् Sy. अन्नमेव हि प्रायेण यजमानैः प्रार्थ्यत इति सिनशब्देनात्रान्नमभिधीयत इत्युपपत्तिः Dur. सिनमन्नं भवति सिनाति भूतानि N. 5.5.

११. प्रदातुं सम्पादयथः । तत् क्वास्तीत्यन्वयः । यद्वा । हे इन्द्रावरुणौ ! वां युवयोः सम्बन्धिन्यः । इमा अस्माभिः क्रियमाणा भूमयो युवां प्राप्तुं भ्रमणशीला मन्यमानाः । मन्यतिरर्चतिकर्मा । युवामर्चन्त्यस्ता स्तुतयो युवावते युवाभ्यां सदृशायान्यस्मै देवाय न तुज्याः । तुजतिर्दानकर्मार्थः । प्रदेया मा भूवन् । शिष्टं समानम् Sy. प्रापयथो दत्थ इत्यर्थः SKN. धत्थः सुपूज्यं वा कुरुथः Dur. N.5.5.; SKN. II.313.

१२. VM. ignores स्म ।

१३. अयं मुं P.

१४. ०क्षार्त्थं P. रक्षणायान्नाय वा Sy.

१५. मावा P. युवाम् Sy.

१६. भृशमाह्वयति । ह्वयतेर्यङ्लुकि 'अभ्यस्तस्य च' इति सम्प्रसारणे कृते रूपम् Sy.　१७. ०यत्यन्तम् M. ०यन्तम् P.

पुरुतमो[1] बहुस्तुतिकः । धनमिच्छन्[2] । तथा सति हे इन्द्रावरुणौ[3] ! द्यावापृथिवीभ्याम्[4] । मरुद्भिश्च[5] । सहितौ[6] युवाम्[7] । मदीयम्[8] । आह्वानम्[9] । शृणुतमिति[10] ।

**अस्मे तदिन्द्रावरुणा वसु ष्यादस्मे रयिर्मरुतः सर्ववीरः ।**
**अस्मान्वरूत्रीः शरणैरवन्त्वस्मान्होत्रा भारती दक्षिणाभिः ॥ ३ ॥**

अस्मे । हे इन्द्रावरुणौ ! युवयोः । तत्[11] प्रसिद्धम्[12] । वसु[13] । अस्माकम्[14] । अस्तु[15] । हे मरुतः[16] ! अस्माकमेव[17] । सर्ववीरैः[18] सहितः । रयिरस्तु[19] । देवपत्न्यश्च[20] । अस्माकमेव[21] । गृहैः[22] समृद्धनैः[23] । अवन्तु[24] । तथाऽस्मानेव । होत्रा[25] । भारती[26] च देव्यौ । धनैरिति[27] ।

---

१. वैदिककर्मप्रवृत्ततयातिशयेन पुरुर्महानयं यजमानः । तमपो व्यत्ययेनाद्युदात्तत्वम् Sy.
२. रयिमात्मन इच्छन् Sy.
३. P. omits words between बहु and वरुणौ ।
४. दिवा—'उडिदम्' इति विभक्तेरुदात्तत्वम् । पृथिव्या—'उदात्तयणो हल्पूर्वात्' इत्युदात्तत्वम् Sy.
५. देवविशेषैः Sy. ६. सङ्गतौ Sy.
७. युवम् M. and P. ८. मम Sy.
९. युष्मदीयमाह्वानम् । हवम्—ह्वयतेः 'भावेऽनुपसर्गस्य' इत्यप् । पित्त्वादनुदात्तत्वम् Sy.
१०. VM. ignores ड ।
११. अभिलषितं तादृशम् Sy.
१२. प्रतिसि० P.
१३. धनम् । वसु ष्यात्—इत्यत्र संहितायां 'पूर्वपदात्—'इति षत्वम् Sy.
१४. अस्वाकमस्माकम् P. अस्मासु Sy.
१५. भवतु Sy.
१६. M. omits words between युवयोः and मरुतः ।
१७. ०स्माकं व P. अस्माकं भवतु Sy.
१८. सर्ववी० P. सर्वेषु कर्मसु वीरः समर्थः Sy.
१९. पुत्रपौत्रयुक्तः पशुसङ्घः । 'पशवो वै रयिः' (TB.1.4.4.9.) इति तैत्तिरीयकम् Sy.
२०. पत्न्याश्च P. सर्वैः सम्भजनीया देवपत्न्यः । वरूत्रीः—'ग्रसितस्कभित—'इत्यादिना ङीबन्तत्वेन निपातनादिष्टसिद्धिः Sy.
२१. अस्मान् Sy.
२२. शृणन्ति शीतादिक्लेशमिति शरणानि गृहास्तैः Sy.
२३. प्र स० M. प्रस्नोस्स P.
२४. सव० P.
२५. होता P. हूयन्तेऽस्यां हवींषीति । यद्वा हूयते तत्र प्राण इति होत्रा वाक् । तथा च श्रुतिः—'वाचि हि प्राणं जुहुमः, प्राणे वा वाचम्' इति, यद्वा होत्रेति यज्ञनाम । हूयतेऽत्र हविरिति । यज्ञश्च वागुच्यते । 'वाचं यच्छति वाग्वै यज्ञः' (A.B.5.24.) इति ब्राह्मणम् । तादृशी । होत्रा—हु दानादनयोः' 'हुयामाश्रुभसिभ्यस्त्रन्' इत्यधिकरणे त्रन्प्रत्ययः Sy.
२६. सरस्वती Sy.
२७. M. omits होत्रा । भारती च देव्यौ । धनैरिति ॥ गोरूपाभिर्दक्षिणाभिः । यद्वा, उदाराभिर्वाग्भिः पालयतु Sy.

**बृहस्पते जुषस्व नो हव्यानि विश्वदेव्य । रास्व रत्नानि दाशुषे ॥ ४ ॥**

[बृहस्पते][1] बृहस्पते[2] ! सेवस्व[3] । अस्माकम्[4] । हव्यानि[5] । विश्वेभ्यो देवेभ्यो हित[6] ! देहि[7] च । धनानि[8] । प्रयच्छते मह्यम्[9] ।[10]

**शुचिमर्कैर्बृहस्पतिमध्वरेषु नमस्यत । अनाम्योज आ चके ॥ ५ ॥**

शुचिम्[11] ।[12] शुचिम्[13] । बृहस्पतिम्[14] । दीप्तम्, हविर्भिः[15] । यज्ञेषु[16] । परिचरत । तस्यादह-[17]मानशीलम् । बलम् । कामये[18] ।

**वृषभं चर्षणीनां विश्वरूपमदाभ्यम् । बृहस्पतिं वरेण्यम् ॥ ६ ॥**

वृषभम् । वर्षितारम्[19] । मनुष्याणाम् । बहुरूपम्[20] । हिंसितुमशक्यम्[21] । बृहस्पतिम् ।

---

१. M. contains बृहस्पते जुषस्व, a later addition in different handwriting in space already left for omissions. P. also omits the *pratīka*.
२. बृहस्पते ! बृहतां पते ! ब्रह्मन् ! BB.
३. हव्यानि जुषस्व सेवस्व BB.
४. अस्मत्सम्बन्धीनि Sy.
५. हवनयोग्यानि पुरोडाशादीनि हवींषि Sy.
६. सर्वदेवहित ! Sy. विश्वदेवमय ! BB.
७. धेहि P. रास्व—'रा दाने' व्यत्ययेनात्मनेपदम् Sy.
८. उत्तमानि धनानि Sy. रत्नानि रमणीयानि BB.
९. हविर्दत्तवते यजमानाय । मह्यम् Sy. सेवित्वा च दाशुषे तद्दत्तवतेऽस्मै यजमानाय BB.
१०. M. omits whole of the commentary on this stanza. This stanza=TS. 1.8.22.2.
११. Omitted in P. M. omits the stanza.
१२. हे ऋत्विजः ! यूयम् Sy.
१३. शुद्धम् Sy.
१४. वनस्पत्यादित्वादुभयपदप्रकृतिस्वरः Sy.
१५. अर्चनीयैः स्तोत्रैः Sy.
१६. यज्ञे P..
१७. स्माद० P. तस्यानामशीलम् is suggested for तस्यादहमानशीलम् ॥ अनमनशीलं परैरनभिभवनीयम् Sy.
१८. आचके—सर्वतो याचे । चके—कमेर्लिटयुत्तमे मकारलोपश्छान्दसः Sy.
१९. अभिमतफलवर्षकम् Sy.
२०. M. omits words between वृषभम् and रूपम् ॥ व्याप्तरूपम् । यद्वा विश्वरूपानामकगोवाहनोपेतम् । तथा च मन्त्रवर्णः—'बृहस्पतिर्विश्वरूपामुपाजत' (RV. 1. 161. 6. ) इति । विश्वरूपम्—'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम्, यद्वा विश्वरूपास्यास्तीति, अर्शआदित्वादच्प्रत्ययः । मरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वम् Sy.
२१. केनाप्यतिरस्करणीयम् । अदाभ्यम्—'दभेश्चेति वक्तव्यम्' इति ण्यत्प्रत्ययः Sy.

वरणीयम्,[१] नमस्यतेति[२]।

**इयं तें पूषन्नाघृणे सुष्टुतिर्देव नव्यंसी । अस्माभिस्तुभ्यं शस्यते ॥ ७ ॥**

**इयं ते** । हे पूषन् ! आगतदीप्ते![३] देव ! नवतरा[४]। इयम् । शोभना[५] स्तुतिः । अस्माभिः[६] । त्वत्प्रीत्यर्थम्[७] । शस्यते[८] ।[९]

**तां जुंषस्व गिरं ममं वाजयन्तीमवा धियंम् । वधूयुरिंव योषंणाम् ॥ ८ ॥**

**तां जुषस्व**[१०] । ताम्[११] । मम[१२] । गिरम्[१३] । सेवस्व । अन्नमिच्छन्तीम्[१४] । मम[१५] बुद्धिम् । अन्नप्रदानेन[१६] तर्पय, अभिगच्छ[१७] वा[१८] । वधूयुर्[१९]वरः,[२०] **'सोमो वधूयुरभवत्'**[२१] इति मन्त्रः, स यथा[२२] । योषितं[२३] युवतिमभिगच्छति[२४] ।

---

१. सर्वैर्भजनीयम् Sy.

२. अभिमतफलं याचे इति पूर्वेणान्वयः Sy. ३. दीप्तिमन्! Sy.

४. नतरेत्यर्थं M.

५. ०भन M. शोभा P. शोभनस्तुतिरूपा वाक् Sy. ६. स्तोतृभिः Sy.

७. ०त्यर्त्थम् P. त्वदर्थम् Sy.

८. M. omits words between स्तुति and शस्यते ॥ क्रियते । तां जुषस्वेत्युत्तरेणान्वयः Sy.

९. VM. ignores ते ॥ त्वत्सम्बन्धिनी भवति । सैषा स्तुतिः Sy.

१०. Added in different hand-writing in M. in the space already left to show omission. अंजूषस्य P. हे पूषन्! Sy.

११. तादृशीम् Sy.

१२. स्तोत्रं कुर्वाणस्य मम Sy.

१३. स्तुतिलक्षणां वाचम् Sy.

१४. क्षियच्छति P. स्तुत्या प्रीतस्त्वं वाजमन्नमिच्छन्तीम्; हर्षकारिणीम् । वाजयन्तीम्—वाजशब्दादिच्छतीत्यर्थे क्यच् । तदन्ताच्छतरि ङीपि रूपम् । ङीपोऽनुदात्तत्वे प्रत्ययस्वरः Sy.

१५. धुम P. इमां स्तुतिं प्रति Sy.

१६. ०दानैः P.

१७. ०गच्छा M. अव—'अव रक्षणादिषु' इत्यस्य लोटि रूपम् Sy.

१८. वर्ा P.

१९. वधूयं M. स्त्रीकामः Sy.

२०. वरसरः P.

२१. RV. X.85.9

२२. तत्र दृष्टान्तः—यथा वधूयुः स्त्रीकामः स्त्रियं प्रत्यागच्छति तद्वत् Sy.

२३. स्त्रियं प्रति Sy.

२४. M. omits योषितं युवतिमभिगच्छति ।

**यो विश्वाभि विपश्यति भुवना सं च पश्यति । स नः पूषाविता भुवत् ॥९॥**

यो विश्वा[१] । यः । पूषा । सर्वाण्येव[२] । भुवनानि[३] । अभिविपश्यति[४] । सह । च । पश्यति[५], प्रत्येकं च कामैर्मनुष्यान्[६] योजयति[७] सर्वानपीत्यर्थः[८] । सः[९] । पूषा[१०] । अस्माकम् । रक्षकः[११] । भवतु[१२] ।

**तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ १० ॥**

तत्सवितुः[१३][१४] । तत्[१५] । सवितुः[१६] । देवस्य[१७] । वरणीयम्[१८] ।

---

१. M. contains यः विश्वा अभि added in different handwriting.
२. सर्वान् Sy.
३. M. omits यः पूषा । सर्वाण्येव । भुवना ॥ लोकान् Sy.
४. आभि० P.
आभिमुख्येन विशेषेण पश्यति । यद्वृत्तयोगादनिघातः । शपः पित्त्वादनुदात्तत्वे धातुस्वरः । 'तिङि चोदात्तवति' इति गतेर्निघातः Sy.
५. किंच तानि पश्यति तत्तद्वस्तुयाथात्म्यं सम्यग्जानाति । अत्र सकर्मकत्वात्परस्मैपदम् । पूर्ववदनिघातः Sy.
६. मेषु मनुष्या P.
७. यजति P.
८. ०त्यर्त्थः P.
९. तादृशः Sy.
१०. पुरुषः P. देवः Sy.
११. करः P.
१२. भुवत्—'भवतेर्लेटचडागमः । 'भूसुवोस्तिङि' इति गुणप्रतिषेधे उवङादेशः । निघातः Sy.
१३. दशरात्रस्य षष्ठेऽहनि वैश्वदेवशस्त्रे 'तत्सवितुः' इति द्वे ऋचौ प्रतिपत्तृचस्य द्वितीयात्तृतीये । सूत्रितञ्च—'तत्सवितुर्वरेण्यमिति द्वे दोषो आगात्' (AŚS. 8.1.) इति । अभिप्लवपृष्ठ्यषडहयोर्द्वितीयेऽहनि वैश्वदेवशस्त्रे प्रतिपत्तृचस्यैते एव प्रथमाद्वितीये । सूत्रितञ्च—'तत्सवितुर्वरेण्यमिति द्वे आ विश्वदेवम्' (AŚS. 7.6.) इति Sy.
१४. M. has the *pratīka* added in different handwriting.
१५. तदिति षष्ठ्यर्थे । तस्य Mah. तदिति षष्ठ्या विपरिणम्यते । तस्य U. तत् तस्य 'सुपां सुलुक्—' इति षष्ठ्या लुक् BB.
१६. तस्य सर्वान्तर्यामितया प्रेरकस्य जगत्स्रष्टुः परमेश्वरस्य Sy. प्रेरकस्यान्तर्यामिणो विज्ञानानन्दस्वभावस्य हिरण्यगर्भोपाध्यवच्छिन्नस्य वाऽऽदित्यान्तरपुरुषस्य वा ब्रह्मणः Mah. सर्वस्य प्रसवदातुः । आदित्यान्तरपुरुषस्य देवस्य हिरण्यगर्भोपाध्यवच्छिन्नस्य वा विज्ञानानन्दस्वभावस्य वा ब्रह्मणः U.
१७. दानादिगुणयुक्तस्य U. देवस्य दानादिगुणयुक्तस्य स्वभूतं तत्प्रसादलभ्यं वा BB.
१८. सर्वैरुपास्यतया ज्ञेयतया च सम्भजनीयम् Sy. सर्वैः प्रार्थनीयम् Mah. अतएव वरेण्यं वरणीयं सर्वैः प्रार्थनीयम् BB.

तेजः। ध्यायेम। यः। अस्माकम्। बुद्धिम्।

---

१. न्तेयः P. अविद्यातत्कार्ययोर्भर्जनाद्भर्गः स्वयंज्योतिः परब्रह्मात्मकं तेजः। भर्गः —'भ्रस्ज पाके'। असुन्। 'भ्रस्जो रोपधयोरमन्यतरस्याम्' (Pa.6.4.47.) इति रोपधयोर्लोपो रमागमः। न्यङ्क्वादिपाठात्कुत्वम् Sy. सर्वपापानां सर्वसंसारस्य च भर्जनसमर्थं तेजः सत्यज्ञानानन्दादिवेदान्तप्रतिपाद्यम्। यद्वा मण्डलं पुरुषो रश्मयः इति त्रयं भर्गःशब्दवाच्यम्। भर्गो वीर्यं वा Mah. भर्गःशब्दो वीर्यवचनः। 'वरुणाद्ध वा अभिषिषिचानाद्भर्गोऽपचक्राम वीर्यं वै भर्गः' इति श्रुतिः। तेन हि पापं भृज्जति दहति। 'भृजी भर्जने' अथवा भर्गस्तेजोवचनः। यद्वा मण्डलं पुरुषो रश्मयः इत्येतत् त्रितयमभिप्रेयते U. भर्गस्तेजोऽन्नं धनं वा BB.

२. वयं ध्यायामः। यद्वा, तदिति भर्गो विशेषणम्। सवितुर्देवस्य तत्तादृशं भर्गो धीमहि। किं तदित्यपेक्षायामाह—य इति लिङ्गव्यत्ययः। यद्भर्गो धियः प्रचोदयात्। तद् ध्यायेमेति समन्वयः। यद्वा यः सविता सूर्यो धियः कर्माणि प्रचोदयात् प्रेरयति, तस्य सवितुः सर्वस्य प्रसवितुर्देवस्य द्योतमानस्य सूर्यस्य तत्सर्वैर्दृश्यमानतया प्रसिद्धं वरेण्यं सर्वैः सम्भजनीयं भर्गः पापानां तापकं तेजोमण्डलं धीमहि ध्येयतया मनसा धारयेम। यद्वा भर्गशब्देनान्नमभिधीयते। यः सविता देवो धियः प्रचोदयति तस्य प्रसादाद्भर्गोऽन्नादिलक्षणं फलं धीमहि धारयामः। तस्याधारभूता भवेमेत्यर्थः। भर्गःशब्दस्यान्नपरत्वे धीशब्दस्य कर्मपरत्वे चाथर्वणम्—'वेदांश्छन्दांसि सवितुर्वरेण्यं भर्गो देवस्य कवयोऽन्नमाहुः। कर्माणि धियस्तदु ते प्रब्रवीमि प्रचोदयन्सविता याभिरेति। (GB. 1.32.) इति। धीमहि—ध्यायतेर्लिङि 'बहुलं छन्दसि' इति सम्प्रसारणम्। व्यत्ययेनात्मनेपदम्। यद्वा 'धीङ् आधारे' लिङि 'बहुलं छन्दसि' इति विकरणस्य लुक् Sy. ध्यायामः। छान्दसं सम्प्रसारणम् Mah. 'ध्यै चिन्तायाम्' अस्य छान्दसं सम्प्रसारणम्। ध्यायामश्चिन्तयामः। निदिध्यासं तद्विषयं कुर्म इति यावत्। तस्य सवितुः सम्बन्धि वीर्यं तेजो वा ध्यायाम इति सम्बन्धः U. धारयेम। तस्यैव प्रसादात्तस्याधारभूता भवेम। 'धीङ् आधारे'। दैवादिकः। दधातेर्वा लिङ् BB.

३. सविता देवः Sy. तस्य कस्य ? यः सविता Mah. यः सविता U यो देवस्सविता BB.

४. M. omits words between तत् and अस्माकम्॥

५. बुद्धि M. कर्माणि धर्मादिविषया वा बुद्धीः Sy. बुद्धीः कर्माणि वा Mah. धीशब्दो बुद्धिवचनः कर्मवचनो वा वाग्वचनश्च। बुद्धीः कर्माणि वा वाचो वा U. धियः कर्माणि BB.

कर्मसु प्रचोदयति ।

---

१. प्रेरयेत् । प्रचोदयात्—चोदयतेर्लेटचाडागमः । यद्वृत्तयोगादनिघातः । आगमस्यानुदात्तत्वे णिचःस्वरः Sy. प्रकर्षेण चोदयति प्रेरयति सत्कर्मानुष्ठानाय Mah. 'चुद सञ्चोदने' । प्रकर्षेण चोदयति प्रेरयति U. प्रचोदयेत् प्रवर्तयेत् । यद्वा धियो धर्मादिगोचरा बुद्धीः प्रचोदयात् प्रेरयेत् । लेटयडागमः BB.

२. यद्वा वाक्यभेदेन योजना । सवितुर्देवस्य तद् वरेण्यं भर्गो ध्यायामः । यश्च नो बुद्धीः प्रेरयति तं च ध्यायामः । स च सवितैव । लिङ्गव्यत्ययेन योजना । सवितुर्देवस्य तद् भर्गो धीमहि । यो यद् भर्गो नो बुद्धीः प्रेरयति Mah. वाक्यभेदेन वा योजना । तत्सवितुर्वरणीयं वीर्यं तेजो वा देवस्य ध्यायामः । यश्च बुद्धीः प्रचोदयात् प्रेरयत्यस्माकं तं च ध्यायामः सच सवितैव भवति । लिङ्गव्यत्ययेन वा योजना । तत्सवितुर्वरणीयं भर्गो देवस्य ध्यायामो धियो यद्भर्गोऽस्माकं प्रेरयति U. तस्य सवितुरिति । यद्वा सवितुर्देवस्य तदन्नादि धीमहि । किमित्याह—य इति । लिङ्गव्यत्ययः । यदस्माकं धियः प्रचोदयात् प्रेरयति । यद्वा यो देवस्सविता विश्वस्य प्रसविताऽस्माकं धर्मादिगोचरा धियः प्रेरयति । तस्य स्वभूतं वरेण्यं सर्वैर्भजनीयं भर्गः पापानां तापनं तेजो मण्डलात्मकं धीमहि मनसा धारयामः । ध्यायतेरेव वा छान्दसं सम्प्रसारणम् । एवं बोधप्रकाशाभ्यां समस्तस्य प्रपञ्चस्योपकुर्वाणं श्रेयोऽर्थिभिर्भजनीयं सूर्यात्मना स्थितं पारमेश्वरं तेज उपास्यत्वेनोपदिश्यते BB.

गायत्रीयं सवितृदेवता; ऋषिर्विश्वामित्रः, जपे विनियोगः । 'तत्' अध्ययनं भगवतः 'सवितुः' देवस्य' दानादिगुणयुक्तस्य 'वरेण्यं' वरणीयं 'भर्गः' भजनीयं सवित्रापि सेव्यं 'धीमहि' चिन्तयामः । स किम्भूतः सविता ? 'यः' 'नः' अस्माकं । 'धियः' बुद्धीः स्नानाध्ययनदानहोमेषु 'प्रचोदयात्' प्रवर्तयेत् । उदिते हि भगवति सकलाभ्युदयलक्षणानि कार्याणि प्रवर्तन्ते । भर्गः इति भृजिधातोः कर्मणि घञ्, व्यत्ययेन पुंस्त्वप्रथमैकवचने । धीमहि—इति दधातेः धारणार्थस्य लिङ् । "बहुलं छन्दसि" (Pa. 2.4.76.) इति शपो लुक् । "घुमास्थागापा—"(Pa. 6.4.66.) इत्यादिसूत्रेणेत्वम् । प्रचोदयात्—इति "चुद सञ्चोदने" चुरादिः । तिप्, आद्, शप्, "इतश्च लोपः परस्मैपदेषु" (Pa. 3.4.97.) इतीकारलोपः ॥ CHMB. 4.71, pp. 74.75.

तदिति ऋचस्तु विश्वामित्रः ऋषिः, छन्दः गायत्री, देवता सविता ।

"सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥"

इति याज्ञवल्क्यवचनात् प्राणायामे ईदृशः पाठः । व्याहृतयो भूरादयः सप्त । प्रणवः ओंकारः । तदिति गायत्री । आपो ज्योतिरित्यादि शिरः ।

'तत्' तस्य 'सवितुः' सर्वभावानां प्रसवितुः 'देवस्य' दीप्तिक्रीडादियुक्तस्य 'भर्गः' भर्गं तेजः 'धीमहि' चिन्तयामः । अत्र यद्यपि तदिति पदं विशेषणं नास्ति तथापि यच्छब्दप्रयोगादेव तच्छब्दप्रयोगो लभ्यते । 'यः' 'भर्गः' 'नः' अस्माकं 'धियः' बुद्धीः 'प्रचोदयात्' प्रेरयति धर्मार्थकाममोक्षेषु नियोजयति । किम्भूतं भर्गं चिन्तयामः? 'वरेण्यं' वरणीयं जन्ममृत्युदुःखादिभी-

रश्मिः ध्यानेन उपासनीयम् इत्यर्थः । अत्र यद्यपि सवितुर्भर्गः इति सवितृ-भर्गयोः भेदः प्रतीयते तथापि परमार्थ-चिन्तायाम् आदित्यभर्गयोः अभेद एव । एवं गायत्र्या भर्गस्य माहात्म्यम् उप-दर्श्य पुनस्तस्यैव महाप्रभावत्वं सप्तव्या-हृतिभिः विशेषणभूताभिः अभिधीयते किम्भूतो भर्गः ? भूरादिसप्तलोकप्रका-शनः । 'भूः' पृथिवी 'भुवः' अन्तरीक्षं, 'स्वः' द्यौः, 'महः' महर्लोकः 'जनः' जनलोकः, 'तपः' तपोलोकः, 'सत्यं' सत्य-लोकः, एवम् उपर्युपरि क्रमेण अवस्थि-तान् सप्तलोकान् अभिव्याप्य अवतिष्ठ-मानो भर्गः एतान् सप्त लोकान् प्रकाश-यतीत्यर्थः। सप्तलोकाः पुनः सप्त व्याहृ-तयः एव । अत्र च "क्षरत्यनोङ्कृतं ब्रह्म" इति प्रत्यवायपरिहाराय प्रति-व्याहृति प्रणवानां प्रयोगः ।

एवमादित्यस्वरूपस्य भर्गस्य प्रभावमुप-वर्ण्य पुनस्तस्यैवोत्कर्षः शिरोमन्त्रेण प्रतिपाद्यते । पुनरपि कीदृशो भर्गः ? 'ब्रह्म' ब्रह्मस्वरूपः भर्ग एव परमात्मभूत इत्यर्थः । तथा 'ज्योतिः' तेजःस्वरूपः मणिपाषाणधातूनां तेजोरूपेण संस्थितः । तथा 'रसः' तृणवृक्षौषधिस्थावरेषु स रसरूपेण वसतीत्यर्थः । एतेन अखिल-स्थावरजङ्गममेव तेन व्याप्तमिति । न केवलमयं भर्गः परमात्मस्वरूपतयैव जङ्गमेषु वर्तते अपितु अमृतनामाऽपि स एव भर्गः इति प्रदर्श्यते 'अमृतम्' इति। अमृतनामा ज्योतिर्मयः चेतनात्मा प्राणिनां हृदये यो वसति सोऽपि भर्ग एव । तथाहि—प्राणिनां हृदये सूर्य-मण्डलम्, तन्मध्ये सोममण्डलम् तन्मध्ये तेजः, तेजोमध्ये सत्यं सत्यमध्ये परमात्मा, तत्र सोममण्डलस्य मध्ये हुताशनो वसति, स एवामृतनामा चेतनात्मा । तदेवंस्व-रूपः अमृतनामा चेतनात्माऽपि तस्य परमात्मस्वरूपस्य भर्गस्यैव मूर्तिरिति प्रतिपादितम् । किञ्च यत्र जले त्रैलो-क्यमिदम् उत्पन्नं तदपि भर्ग एव इति दर्शयति 'आपः' इति । कारणजलस्व-रूपो भर्ग एव । तथा ब्रह्म-विष्णु-रुद्र-मूर्तिभेदेन सृष्टिस्थितिप्रलयप्रवर्तयिता भर्ग एव इति प्रदर्शयितुं विशेषणं 'भूर्भुवः स्वः' इति । एतद्व्याहृतित्रयं सत्त्वरज-स्तमोमयब्रह्म-विष्णु-रुद्रात्मकम् इति । इत्थं सचराचरत्रैलोक्यमेव भर्गस्वरूपम् । ततश्च परब्रह्मस्वरूपित्वं तस्य प्रति-पादितम् । तदेवं वाक्यार्थः—यः यथा-भूतो भर्गः अस्मान् प्रेरयति स एव जलज्योतीरसामृतभूरादिलोकत्रयात्मकं सचराचरस्वरूपब्रह्मविष्णुमहेश्वरसूर्यादि-ना नानादेवतामयः परमब्रह्मस्वरूपः भूरा-दिसप्तलोकान् प्रकाशयन् मदीयं जीवा-त्मकं ज्योतीरूपं सत्याख्यं सप्तमं लोकं ब्रह्मस्थानं नीत्वा आत्मन्येव ब्रह्मज्यो-तिषा सह एकभावं करोतु इति जपन् प्राणायामं कुर्यात् ।

CHMB. 5.4,pp.86-89.

"ओंकारं पूर्वमुच्चार्य भूर्भुवःस्वरनन्तरम्। गायत्री प्रणवश्चान्ते जपे ह्येवमुदाहृता॥"

ति योगियाज्ञवल्क्यवचनात् जपगाय-त्रीयम् । शेषमुक्तार्थम् ॥

CHMB. 5.15,pp.95,96. This stanza=YV.3.35.=TS. 1.5. 6.4. अथ सावित्री । सविता वै देवानां प्रसविता तयो हास्माऽएते सवितृप्रसूता एव सर्वे कामाः समृध्यन्ते तत्सवितुर्व-रेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयादिति । SB.2.3.4.39. p.167.

देवस्यं सवितुर्वयं वाजयन्तः पुरंध्या । भगंस्य रातिमींमहे ॥ ११ ॥

देवस्य । देवस्य[1] । सवितुः । वयम् । अन्नमिच्छन्तः[2] । प्रज्ञया[3] । धनस्य[4] । रातिम्[5] । याचामहे ।

देवं नरंः सवितारं विप्रा यज्ञैः सुवृक्तिभिंः । नमस्यन्तिं धियेषिताः ॥ १२ ॥

देवं नरः[6] । देवम्[7] । मनुष्याः[8] । सवितारम्[9] । यज्ञैः[10] । शोभनस्तुतिभिः[11] । परिचरन्ति[12] । प्रज्ञया[13] । प्रेरिताः[14] ।[15]

सोमों जिगाति गातुविद्देवानांमेति निष्कृतम् । ऋतस्य योनिंमासदंम् ॥ १३ ॥

सोमः[16][17] । सोमः[18] । गच्छति[19] । गमनवित्[20] । देवानाम्[21] । प्राप्नोति[22] । संस्कृतस्थानम्[23] ।

---

१. द्योतमानस्य Sy.
२. इच्छ० P. वाजमन्नमात्मन इच्छन्तः Sy.
३. तद्विषयस्तुत्या प्रज्ञया वा Sy.
४. भजनीयस्य धनस्य Sy.
५. दानम् । रातिम्—'मन्त्रे वृषेष—' इत्यादिना क्तिन उदात्तत्वम् Sy.
६. M. has the *pratīka* added in different handwriting. न P.
७. देव P. त्वाम् Sy.
८. कर्मणां नेतारः Sy.
९. ०तारः P.
१०. यजनीयैर्हविर्भिः Sy.
११. M. omits words between देवम् and शोभनस्तु ॥ शोभनस्तोत्रैश्च Sy.
१२. ०रन्ती यात P. नमस्यन्ति—'नमोवरिवश्चित्रङः क्यच्' इति क्यच् Sy.
१३. प्राज्ञ P.
कर्मणा बुद्धया वा Sy.
१४. प्ररि० P. प्रेर्यमाणाः सन्तः Sy.
१५. VM. ignores विप्राः ॥ विप्रा मेधाविनोऽध्वर्य्वादयः Sy.
१६. अग्नीषोमप्रणयने 'सोमो जिगाति' इत्याद्यास्तिस्र ऋचः । सूत्रितञ्च 'सोमो जिगाति गातुविद्देवानां तमस्य राजा वरुणस्तमश्विनेत्यर्धचं आरमेत्' (ASS. 8. 10.) इति Sy.
१७. सोमं P.
१८. सोम्ना P. ईदृशोऽयं सोमः BB.
१९. जिगाति—'गा स्तुतौ' । जुहोत्यादिः Sy. 'गा स्तुतौ' छन्दसि, इति जुहोत्यादिक उदात्तेत् । इह त्वयं गतिकर्मा । गतिकर्मसु जिगातीति निरुक्तकाराः पठन्ति BB.
२०. गातुर्वेदिमार्गः । तं जानानः Sy. गातुर्मार्गः । 'गाङ् गतौ' गातुं वेत्ति विन्दतीति वा गातुवित् BB.
२१. गन्तव्यं स्थानं दर्शयति–देवानां सम्बन्धि Sy. कं देशं गच्छतीत्याह—देवानामिति BB.
२२. एति प्रपद्यते BB.
२३. ०तस्थो M.

इत्येतद् विशदमाह—यज्ञस्य[1]। स्थानम्[2]। आसनमिति[3]।

**सोमो॑ अ॒स्मभ्यं॑ द्वि॒पदे॑ चतु॑ष्पदे च प॒शवे॑। अ॒न॒मी॒वा इष॑स्करत्॥ १४ ॥**

सोमः। सोमः। अस्मभ्यम्[5]। आरोग्याणि[6]। अन्नानि[7]। करोतु[8]। एवमन्यस्मै[9] द्विपदे[10]। चतुष्पदे[11]। चेति[12]।

**अ॒स्माक॒मायु॑र्व॒र्धय॑न्न॒भिमा॑तीः॒ सह॑मानः। सोमः॑ स॒धस्थ॒मास॑दत्॥ १५ ॥**

अस्माकम्। अस्माकम्[13]। जीवितम्[14]। वर्धयन्[15]। शत्रून्[16]। अभिभवन्। सोमः[17]। अन्नम्[18]। आसीदतु[19]।

१. आताद् P.

२. सत्यस्य यज्ञस्य वा BB.

३. स्थानं हविर्धानाख्यम् Sy. योनिमुत्पत्तिस्थानं हविर्धानम् BB.

४. M. omits words between इति and मिति॥ सर्वैरासदनीयम् Sy. आ समन्तात् सीदन्त्यस्मिन्नित्यासदः। 'घञर्थे कविधानम्' इति कः BB. This stanza=TS. 1.3.4.1.

५. स्तोतृभ्योऽस्मभ्यम् Sy.

६. ०ग्यानि M.
रोगवर्जितानि Sy.

७. आनि P.

८. करत्—करोतेर्लेटघडागमः। 'इषस्करत्' इत्यत्र संहितायां 'कः करत्करति०' इत्यादिना सत्वम् Sy.

९. M. adds च after अन्यस्मै।

१०. तथाऽस्मदीयाभ्यो द्विपाद्भ्यः प्रजाभ्यः Sy.

११. चतुष्पाद्भ्यः। चतुष्पदे—भसंज्ञायां पादस्य पद्भावः। 'इसुसोः सामर्थ्ये' इति संहितायां सत्वम्। 'आदेशप्रत्यययोः' इति षत्वम्, बहुव्रीहौ पूर्वपदस्वरः Sy.

१२. VM. ignores पशवे॥ गवादिपशुभ्यः Sy.

१३. ०स्मात् P.

१४. अन्नं जीवनं वा Sy.

१५. वृद्धिं प्रापयन् Sy.

१६. कर्मविघ्नकारिणः शत्रून् Sy.

१७. सः देवः Sy.

१८. अस्माकं हविर्धानाख्यं स्थानम् Sy.

१९. M. omits words between जीवितम् and आसीदतु॥ असदत्— सदेर्लेटि रूपम्। निघातः Sy.

आ नो॑ मि॒त्रावरुणा घृ॒तैर्गव्यू॑तिमुक्षतम् । मध्वा॒ रजां॑सि सुक्रतू ॥ १६ ॥

आ नः ॥ अन्त्यस्तृचो जामदग्न्य इत्येकम्, वैश्वामित्रमेवेत्यपरमिति ॥ हे मित्रावरुणौ ! अस्माकम् । गवां मार्गम् । उदकैः । सिञ्चतम् । एवं सर्वानेव लोकान् पार्थिवान् । उदकेन

१. अग्निष्टोमे प्रातःसवने मैत्रावरुणशस्त्रे 'आ नो मित्रावरुणा' इति स्तोत्रियस्तृचः । सूत्रितञ्च—'आ नो मित्रावरुणा नो गन्तं रिशादसा' (ASS. 5. 10.) इति । चतुर्विंशेऽहनि प्रातःसवने मैत्रावरुणे शस्त्रे 'आ नो मित्रावरुणा' इति षडहस्तोत्रियसंज्ञकस्तृचः । सूत्रितञ्च—'आ नो मित्रावरुणा मित्रं वयं हवामहे' (ASS. 7. 2.) इति । स्तोमवृद्धावयमेव तृच आवापार्थः । सूत्रितञ्च—'आ नो मित्रावरुणेति तृचौ' (ASS. 7. 5.) इति । दाक्षायणे यज्ञे द्वे अमावास्ये कर्तव्ये । तत्रोत्तरस्याममावास्यायां द्वितीयेऽहनि मैत्रावरुणे 'आ नो मित्रावरुणा' इति तस्यानुवाक्या । सूत्रितञ्च—'आ नो मित्रावरुणा यद्बंहिष्ठं नातिविधे सुदानू' (ASS. 2. 14.) इति Sy.

२. Omitted in P.

३. अन्त्यमाह यज्ञस्य स्थानमासन्नमिति स्तृचो P.; cf. VM. on RV. III. 62, 13.

४. जम० P.
जमदग्नेर्विश्वामित्रस्य वा SKN. विश्वामित्रस्यार्षम् Dur.

५. मित्रावरुणौ ! देवौ ! Mah.

६. अस्माकं स्वभूतम् SKN.

७. गवा M. गोनिवासस्थानम् । गव्यूतिम्—'गोर्यूतौ छन्दसि—' इति वान्तादेशः Sy.

८. मार्ग M. यज्ञमार्गम् Mah. गवि पृथिव्यामवनहेतुभूतं क्षेत्रं गोप्रचारं वा U. गोप्रचारम् । गावो यूयन्ते मिश्रयन्तेऽस्यामित्यधिकरणे क्तिन् ।...उपलक्षणं चैतत् । सर्वमप्यस्मदीयं क्षेत्रम् BB. गावो येन मार्गेण चरन्ति तम् SKN. गोयूतिं यवसोदकोत्पत्तये Dur.

९. क्षरणसाधनैः पयोभिः Sy. अक्षारोदकैः U. उदकैः BB., SKN. घृतोदकेन Dur.

१०. अस्मभ्यं दोग्ध्रीर्गाः प्रयच्छतमिति भावः Sy. युवाम्...सर्वतः सिञ्चतम् । यद्वा गवि पृथिव्यामूतिमवनहेतुभूतं क्षेत्रं घृतैः शुद्धोदकैः सिञ्चतम् Mah. आसिञ्चतम् U. समन्तादभिवर्षतम् । यद्वा गव्यूतिं व्रजं घृतैर्घृतदुग्धा(दि)भिस्समन्तादुक्षतं बहुदोग्ध्रीकं कुरुतम् BB. आ इत्युपसर्ग उक्षतमित्यनेन सम्बध्यते । आसिञ्चतमित्यर्थः SKN. आसिञ्चतमित्येतदाशास्महे Dur.

११. अस्मदावासस्थानानि Sy. लोका रजांस्युच्यन्ते तान् U. लोकान् सर्वानपि BB. गोयूतेर्यान्यन्यानि स्थानानि व्रीह्यादिधान्योत्पत्तिक्षेत्राणि तानि च व्रीह्याद्युत्पत्तये Dur.

१२. पार्त्थि० P. M. omits words between उदकैः and पार्थिवान् ।

१३. मधुरेण रसेन । मध्वा—सर्वविधीनां छन्दसि विकल्पितत्वादत्र नुमागमाभावः Sy. मधुना Mah. मधुस्वादोदकेन U. मधुरसेन जलेन घृतेनैव वा BB. नच केवलं गव्यूतिमेव । किं तर्हि ? मध्वा उदकेन वृष्टिलक्षणेन SKN. मधुरेण शस्यसम्पत्करणेन Dur.

सिञ्चतम्[१] । हे सुकर्माणौ[२] ! इति ।[३]

**उ॒रु॒शंसा॑ नमो॒वृधा॑ म॒ह्ना दक्ष॑स्य राजथः । द्राघि॑ष्ठाभिः शुचिव्रता ॥ १७ ॥**

उरुशंसा । बहुस्तुती[४] । वर्धयितारा[५]वन्नस्य । बलस्य[६] । महत्त्वेन[७] । राजथः[८] । दीर्घतमाभिरु[९]तिभिर्युक्तः । शुचि[१०]कर्माणौ ! इति[११] ।

**गृ॒णा॒ना ज॒मद॑ग्निना॒ योना॑वृ॒तस्य॑ सीदतम् । पा॒तं सोम॑मृतावृधा ॥ १८ ॥**

[१२]गृणाना[१३] । [१४]स्तूयमानः[१५] । जमदग्निना[१६] । यज्ञस्य । योनौ[१७] वेद्याम् । निषीदतम्[१८] । निषद्य च पिबतम्[१९] । सोमम् । यज्ञस्य वर्धयितारम्[२०], अथ यदा विश्वामित्र एव भवत्यृषिस्तदानीमयमर्थः[२१]—जमदग्निना । पुरा स्तूयमानौ[२२] युवाम् । तस्य यज्ञ इति ।

---

१. समन्तादुक्षतमित्येव BB.

२. शोभनकर्माणौ ! Sy. शोभनः क्रतुः कर्म ययोस्तौ हे सुकर्माणौ ! Mah. शोभनकर्माणौ ! शोभनप्रज्ञानौ ! वा BB. शोभनकर्माणौ ! युवामुच्येथे Dur. N. 7. 10; SKN. III. 60. This stanza=YV. 21.8. =TS. 1. 8. 22. 3.

३. VM. ignores आ ॥ आ समन्तात् Sy.

४. उरुभिर्बहुभिः शंसनीयौ । यद्वा उरु महत् शंसः शस्त्रं ययोस्तौ । उरुशंसा—'शंसु स्तुतौ' । कर्मणि घञ् । कृत्स्वरः Sy.

५. नमसा हविर्लक्षणेनान्नेन स्तोत्रेण वा वर्धमानौ Sy. ६. दक्षं धनं बलं वा, तस्य Sy.

७. मत्वेन P.        ८. ईशाथे Sy.

९. ०र्युक्तौ is suggested for ०र्युक्तः॥ अत्यन्तं दीर्घस्तुतिलक्षणाभिर्वाग्भिर्युक्तौ युवाम् । द्राघिष्ठाभिः—दीर्घशब्दादिष्ठनि 'प्रियस्थिर—' इत्यादिना द्राघीत्यादेशः । नित्त्वादाद्युदात्तः Sy.

१०. परिशुद्धकर्माणौ ! हे मित्रावरुणौ ! Sy.

११. M. omits ०थः । दीर्घतमाभिरुतिभिर्युक्तः । शुचिकर्माणाविति ।

१२. मैत्रावरुणस्य ग्रहस्य याज्या 'गृणाना जमदग्निना' इत्येषा । सूत्रितञ्च—'होता यक्षन्मित्रावरुणा गृणाना जमदग्निना' (ASS. 5.5.) इति । अध्यायोपाकरणे मण्डलाद्यन्तहोमे 'गृणाना जमदग्निना' (AGS. 3.5.7.) इत्येषा Sy.        १३. Added in M. in different handwriting.

१४. हे मित्रावरुणौ ! Sy.

१५. Omitted in M. स्तूयमानौ is suggested for स्तूयमानः ॥ गृणाना—'गृ शब्दे' । व्यत्ययेन कर्मणि शानच् । चित्त्वादन्तोदात्तः Sy.

१६. एतन्नामकेन महर्षिणा । यद्वा जमदग्निना प्रज्वलिताग्निना विश्वामित्रेण । स्तूयमानौ युवाम् Sy.

१७. देवयजनाख्ये देशे Sy.

१८. उपविशतम् । सीदतम्—सदेर्लोटि 'पाघ्रा—' इत्यादिना सीदादेशः Sy.

१९. पातम्—'पा पाने' । 'बहुलं छन्दसि' इति शपो लुक् Sy.

२०. ऋतस्य कर्मफलस्य वर्धयितारौ युवाम् Sy.        २१. ०मर्थः P.

२२. M. omits words between वर्धयितारम् and स्तूयमानौ ॥

## IV. 1.

त्वां ह्य॑ग्ने सद॒मित्स॑म॒न्यवो॑ दे॒वासो॑ दे॒वम॑र॒तिं न्ये॑रि॒र इति॒ क्रत्वा॑ न्येरि॒रे ।
अम॑र्त्यं यजत॒ मर्त्ये॒ष्वा दे॒वमादे॑वं जनत॒ प्रचे॑तसं॒ विश्व॒मादे॑वं जनत॒ प्रचे॑तसम् ॥१॥

[1] त्वां हि[2] ॥ गौतमो वामदेवश्चतुर्थ[3]मण्डलमपश्यत्[4] ॥ त्वाम्[5] । हि[6] । अग्ने ! सदा । एव । सकामाः[7] । देवाः[8] । देवम्[9] । गमनशीलम्[10] । न्येरिरे[11] मनुष्यलोकं प्रतीत्यर्थः[12] । यज्ञिया[13] कर्मणा[14] वा । पुन[15]र्न्येरिरे[16] इत्यादिकं पूरणम् पारुच्छेप[17]वदिति । तमिमं[18] मर्त्येषु[19] वर्तमानम् । अमर्त्यम्[20]

---

१. वामदेव्ये चतुर्थे मण्डले पञ्चानुवाकाः । तत्र प्रथमेऽनुवाके दश सूक्तानि । तेषु 'त्वां ह्यग्ने सदमित्' इति विंशत्यृचं प्रथमं सूक्तम् । अत्रेयमनुक्रमणिका—'त्वां ह्यग्ने विंशतिरष्टयतिजगतीधृतय आद्या उपाद्याश्चतस्रो वारुण्यश्च वा' (KSA. 20. 1. p. 17.) इति । मन्त्रद्रष्टा वामदेव ऋषिः । प्रथमा चतुःषष्ट्यक्षराष्टिः । द्वितीया द्विपञ्चाशदक्षरातिजगती । तृतीया द्विसप्तत्यक्षरा धृतिः । चतुर्थ्याद्या अनादेशपरिभाषया (Cf. KSA. 12. 6. p. 5.) सप्तदश त्रिष्टुभः । कृत्स्नस्य सूक्तस्य 'मण्डलादिष्वाग्नेयम्' (KSA. 12. 12. p. 5.) इति परिभाषयाग्निर्देवता । द्वितीयाद्याश्चतस्रो वरुणदेवत्या वा । सूक्तविनियोगो लैङ्गिकः । आद्या अध्यायोपाकरणे मण्डलादिहोमे विनियुक्ता Sy.

२. वामदेवः स्तौति Sy.

३. ०तुर्थं० P.

४. ०पश्य M., P. Cf. वामदेवो गौतमश्चतुर्थं मण्डलमपश्यत् KSA. 20. p. 17.

५. त्वा M. ६. खलु Sy.

७. मन्युः स्पर्धा तया सह वर्तमानाः । स्वसमानैः स्पर्धमाना इत्यर्थः Sy.

८. देवनशीला इन्द्रादयो देवाः Sy.

९. देव P. द्योतमानम् Sy.

१०. ०शीला P. शीघ्रं गन्तारम् Sy.

११. रिरे P. स्पर्धानिमित्ते युद्धे प्रेरयन्ति । 'ईर् गतौ' । लिटि मन्त्रत्वादाम्न भवति । सहेति योगविभागात्समासः । हियोगादनिघातः Sy.

१२. ०तीर्थम् P.

१३. M. omits words between सदा and यज्ञिया ॥ प्रज्ञया is suggested for यज्ञिया ॥

१४. यजमानाः स्तुतिलक्षणेन कर्मणा । क्रत्वा—'जसादिषु छन्दसि वावचनम्' इति नादेशाभावः । यणादेशः Sy.

१५. पु P.

१६. ०र्न्यैरि P. यज्ञकर्मणि देवान् हविः प्रापयितुं देवानाह्वातुं च त्वां नितरां प्रेरयन्ति खलु Sy.

१७. पारुच्छेदव० M.

१८. ०मिदं P.

१९. यागं कुर्वाणेषु मनुष्येषु Sy.

२०. मरणधर्मरहितम् Sy.

देवम्[1] । यजत[2] । तमिम[3]मादेवम्[4] । आदीपान्तस्य प्यमानारण्योः[5], जनयत[6] । प्रकृष्टज्ञानम्[7] ।
परिपूर्णमिति[8] ।

**स भ्रातरं वरुणमग्न आ ववृत्स्व देवाँ अच्छा सुमती यज्ञवनसं ज्येष्ठं यज्ञवनसम्।**
**ऋतावानमादित्यं चर्षणीधृतं राजानं चर्षणीधृतम् ॥ २ ॥**

**स भ्रातरम्** ॥ आग्निवारुण्यश्चतस्रो भवन्ति । आग्नेय्य[9] इत्यपरमिति ॥ स[10] त्वम् अग्ने ! यज्ञियान् देवान्[11] । प्रति । तव भ्रातृस्थानीयम्[12] । वरुणमपि[13], आवर्तय[14], आङ्पूर्वोऽन्त[15]-ण्यर्थः[16]। स्तोतृ[17]विषयया सुमत्या[18] सह । यज्ञस्य सम्भक्तारम्[19] । प्रशस्यतमम्[20] । सत्यवन्तम्[21] ।

---

१. देवा P. द्योतमानम् Sy.

२. येजत P. यजनीय ! हे अग्ने ! Sy.

३. तर्यमि० P.

४. आ सर्वतो देवं द्योतमानम्, आदेवमागन्तारम्, तत्तद्यज्ञेष्वागन्तारम् Sy.

५. आदीप्तादीप्यमानारण्योः is suggested for आदीपान्तस्य प्यमानारण्योः ।

६. देवा हविःश्रपणार्थमजनयन् । युगपन्नानादेशवर्तिषु यज्ञेषु यौगपद्येन हविरानयनार्थं व्याप्तं देवा अकुर्वन् Sy.

७. M. omits words between वर्तमानं and प्रकृष्ट० ॥ प्रकृष्टं कर्मविषयं चेतो ज्ञानं यस्य तादृशं त्वाम्. . .कर्माभिज्ञम् Sy.

८. VM. ignores इति ॥ इतिशब्दो हेत्वर्थः । यस्माद्देवास्त्वां युद्धार्थं नितरां प्रेरयन्ति तस्मात् Sy.

९. ०य्यः इ० P. Cf. द्वितीयाद्याश्चतस्रो वरुणदेवत्याश्च वा । अग्निवरुणदेवत्याः शुद्धाग्निदेवत्या वेत्यर्थः VD. 4.1. p. 108.　१०. स तादृशस्त्वम् Sy.

११. देवनशीलान् स्तोतॄन् Sy.

१२. ०नीय P. एकस्थानवासेन भ्रातरम् Sy.

१३. वृणोत्युदकमिति वरुणस्तं देवम् Sy.

१४. अभिमुखीकुरु । ववृत्स्व—'वृतु वर्तने' । लोटि 'बहुलं छन्दसि' इति विकरणस्य श्लुः । निघातः Sy.

१५. ०पूर्वे० P.　१६. ०ण्यर्थः P.

१७. M. omits words between स त्वम् and स्तोतृ०

१८. शोभनबुद्ध्या हेतुना । सुमती—'मन्त्रे वृष०' इत्यादिना क्तिन्नुदात्तः । 'सुपां सुलुक्०' इति तृतीयायाः पूर्वसवर्णदीर्घः । एकादेशस्वरः Sy.

१९. यज्ञैर्यजनीयैर्हविर्भिः सम्भजनीयम् । यज्ञवनसम्—'वन षण सम्भक्तौ' । कर्मकर्तरि चासुन्प्रत्ययः । 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इति पूर्वपदस्वरः Sy.

२०. अतिशयेन प्रशस्यम् । ज्येष्ठम्—प्रशस्यस्येष्ठनि 'ज्य च' इति ज्यादेशः । नित्स्वादाद्युदात्तः । एकादेशस्वरः Sy.

२१. अपां स्वामितयोदकवन्तं सत्यवन्तं वा Sy.

अदितेः पुत्रम् । मनुष्याणां धारयितारम्[1] । राजानमिति[2] ।

सखे सखायमभ्या ववृत्स्वाशुं न चक्रं रथ्येव रंह्यास्मभ्यं दस्म रंह्या ।
अग्ने मृळीकं वरुणे सचा विदो मरुत्सु विश्वभानुषु ।
तोकाय तुजे शुशुचान शं कृध्यस्मभ्यं दस्म शं कृधि ॥ २ ॥

[3]सखे सखायम्[4] । हे वरुणस्य सखे[5] ! त्वमस्मभ्यम्[6] । अभ्यावर्तय[7] । सखायम्[8] । क्षिप्रगमनम्[9] । इव । रथस्य चक्रम्[10] । रथ्ययेव[11] । रंहणयोग्यया[12] । अस्मदर्थम्[13] । हे दर्शनीय ! हे अग्ने ! सुखकरम्[14] । वरुणे[15] सह स्थित्वा तेन सह[16] । जानीहि[17] । तथा मरुत्सु[18] च । पूर्णतेजस्केषु[19] । स त्वं

---

१. चर्षणिभिर्विद्वद्भिर्धृतम् । मनुष्याणामुदकप्रदानेन धारकम् Sy.

२. M. omits words between ०णां धार० and ०मिति ॥ राजन्तमेतादृशं वरुणं देवम् Sy.

३. प्रवर्ग्येऽभिष्टवे उत्तरस्मिन् पटले 'सखे सखायम्' इत्येषा । सूत्रितञ्च—'सखे सखायमभ्या ववृत्स्वोर्ध्व ऊ षु ण ऊतये' (ASS. 4.7.) इति Sy.

४. A different hand has supplied सखे सखा in M. in the space already left to denote omission therein.

५. हे सखिभूत ! Sy.

६. त्वमस्मस् P. अस्मदर्थम् Sy.

७. अभिमुखीकुरु Sy.

८. M. omits words between हे वरुणस्य and सखायम् ॥ तव सखायं वरुणम् Sy.

९. शीघ्रगन्तृ Sy.

१०. चक्रं लक्ष्यदेशं प्रति अभिमुखीकुरुतस्तद्वत् Sy.

११. रथ्येमे० P. तत्र दृष्टान्तः—रथे योजितावश्वौ यथा । रथ्येव—रथस्येमावित्यर्थे 'रथाद्यत्' इति यत् । 'सुपां सुलुक्०' इति सुपो डादेशः Sy.

१२. ०योग्याया P. रंहणे गमने साधुभूतौ । रंह्या—रंहशब्दात् 'तत्र साधुः' इति यत्प्रत्ययः । 'यतोऽनावः' इत्याद्युदात्तत्वम् Sy.

१३. ०वर्थं M. ०दर्थं P.

१४. सुखकरं हविः Sy.

१५. In the classical Sanskrit, the instrumental case would of course be used and the form would be वरुणेन सह ।

१६. तव सहाये Sy.

१७. लब्धवानसि Sy.

१८. मरुत्सु सुखकरं (हविः) लब्धवानसि । आग्निवारुणाग्निमारुतयोः कर्मणोरिष्टवानसि Sy.

१९. M. omits words between हे अग्ने and तेजस्केषु ॥ सर्वतो व्याप्ततेजस्केषु Sy.

पुत्राय[1]। तत्पुत्राय[2] च। सुखम्। कुरु। हे दीपनशील[3]! अस्मभ्यं चेति।

त्वं नो॑ अग्ने॒ वरु॑णस्य वि॒द्वान्दे॒वस्य॒ हेळोऽव॑ यासिसीष्ठाः।
यजि॑ष्ठो॒ वह्नि॑तमः॒ शोशु॑चानो॒ विश्वा॒ द्वेषां॑सि॒ प्र मु॑मुग्ध्य॒स्मत् ॥ ४ ॥

[4]त्वं नः[5]। त्वम्[6]। अस्माकम्[7]। अग्ने[8]! वरुणस्य[9]। क्रोधम्[10]। यथारूपं जानन्नेव[11]। यजस्व[12]।

---

१. तत्पुत्राय P. तुज्यते पीडयतेऽनेन माता गर्भवासेनेति तोकं पुत्रस्तस्मै Sy.

२. M. repeats it. पुत्रा॰ P. गच्छत्यनेनानृण्यं पितेति तुक् पौत्रः। तस्मै Sy.

३. दीप्यमान! हे अग्ने! Sy.

४. 'त्वं नो अग्ने' इत्येतदारभ्येदं सूक्तमुत्तराणि सूक्तानि च प्रातरनुवाके आग्नेये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे च विनियुक्तानि। सूत्रितञ्च 'त्वं नो अग्ने वरुणस्य विद्वानित्येतत्प्रभृतीनि चत्वारि' (ASS. 4. 13.) इति। अवभृथेष्टयां स्विष्टकृदर्थेऽग्नीवरुणौ यष्टव्यौ। तत्र 'त्वं नो अग्ने' इति द्वे याज्यानुवाक्ये। सूत्रितञ्च—'अग्नीवरुणौ स्विष्टकृदर्थे त्वं नो अग्ने वरुणस्य विद्वानिति द्वे' (ASS. 6. 13.) इति। अस्नातो यद्यग्निहोत्रं जुहुयात् तदा आग्निवारुणीष्टिः। तस्यामेते एव याज्यानुवाके। 'तदाहुर्य आहिताग्निः' इत्युपक्रम्याम्नातम्—'तस्य याज्यानुवाक्ये त्वं नो अग्ने वरुणस्य विद्वान्त्स त्वं नो अग्नेऽवमो भवोति' (AB. 7. 9.) इति Sy.

५. वामदेवस्य SKN. वामदेवस्यार्षम् Dur.

६. स त्वम् BB.

७. अस्मत्सम्बन्धिनो वरुणकर्तृकान् पाशग्रहणान् Sy. अस्मान्प्रति Mah., U. अस्मत्सम्बन्धी BB. अस्मान् Dur.

८. हे अग्ने! Sy. हे भगवन्नग्ने Dur.

९. वरुणस्य व्यवहितसम्बन्धः SKN.

१०. क्रोधान्। हेळः—'हेड् अनादरे'। क्विप्। असि रूपम्। असः सुप्त्वावनुदात्तत्वे धातुस्वरः Sy. हेडः क्रोधोऽनादरो वा पाशग्रहणादिकः BB. क्रोधनामैतत्। योऽस्माकमुपरि क्रोधः SKN. योऽस्मान् प्रति हेळः क्रोधस्तम् Dur.

११. M. omits words between त्वम्। and जानन्नेव॥ सर्वपुरुषार्थसाधनोपायज्ञः Sy. कीदृशस्त्वम्? विद्वान् स्वाधिकारं जानन् Mah. सर्वार्थसाधनो वा यज्ञे BB. जानन् किम्? सामर्थ्यात् भक्तताम् SKN. यथावद् विद्वाज्जानानः भक्ता ममैत इति Dur.

१२. अपनय। यासिसीष्ठाः—यसेर्ण्यन्तादाशीलिङ्। थासि सीयुडागमः। 'छन्दस्युभयथा' इति लिङः सार्वधातुकत्वात् णिलोपाभावः। अवपूर्वो यासिर्विनाशे वर्तते Sy. निवर्तय। 'यसु उपक्षये'। अवपूर्वस्य णिजन्तस्याशीर्लिङि रूपम् Mah. अवगमय U. अपनय BB. अवशब्दोऽपेत्येतस्यार्थे, यातेर्लिङि अन्तर्णीतण्यर्थस्य। प्रत्यक्षेण मोचयापनय SKN. अनेनावभृथकर्मणा अपगमय Dur.

यष्टृतमः । वोढृतमः । दीप्यमानः । सर्वाण्येव । द्वेष्टृणि पापानि । अस्मत्तः । प्रमुञ्च ।

स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ ।
अव यक्ष्व नो वरुणं रराणो वीहि मृळीकं सुहवो न एधि ॥ ५ ॥

स त्वं नः । सः । त्वम् । अस्माकम् । अग्ने ! आसन्नः । भव । रक्षणेन । अस्याः ।

---

१. अतिशयेन यष्टा यजिष्ठः Mah. यश्च त्वं यजिष्ठो होतृत्वादतिशयेन यष्टा SKN. यस्त्वं...यष्टृतमो देवानां होतृत्वे वर्तमानः Dur.

२. हविषामतिशयेन वोढा Sy. वहतीति वह्निरत्यन्तं वह्निर्वह्नितमो हविषां वोढा Mah. वोढृतमो हविषाम् U. हविषां वोढृतमः BB. वोढृतमश्च सः SKN. वोढृतमश्च हविषाम् Dur.

३. अतिशयेन दीप्यमानस्त्वम् Sy. अत्यन्तं शोच्यते दीप्यते शोशुचानः । शोचतेर्यङन्ताच्छानच्प्रत्ययः Mah. देदीप्यमानः U. अतिशयेन दीप्यमानः BB. शुचेर्यङीदम् । अत्यर्थं दीप्यमानः SKN. स त्वं पुनः पुनः शोशुचानो देदीप्यमानस्तेषु तेषु कर्मसु Dur.

४. ईदृशस्त्वं विश्वानि वरुणव्यतिरिक्तानि अपि BB. सर्वाणि SKN., Dur.

५. रक्षांसि वा Sy. दौर्भाग्यानि Mah., U. द्वेष्टृणि वा रक्षःप्रभृतीनि BB. द्वेष्याणि द्वेष्टृणि वा रक्षआदीनि SKN.

६. अस्मत्तः सकाशात् Mah. पञ्चम्येषा, अस्मत्त इत्यर्थः SKN., Dur.

७. M. puts, after प्रमुञ्च, dots (...), a sign of omitting something, although nothing is, in reality, omitted. प्रकर्षेण मोचय । मुमुग्धि—मुञ्चतेर्लोटि रूपम् । 'बहुलं छन्दसि' इति शपः श्लुः Sy. दूरीकुरु । मुचेर्व्यत्ययेन शपश्श्लुः Mah. मुञ्च U. प्रकर्षेण मोचय BB. मुचेरन्तर्णीतण्यर्थस्य, प्रत्यक्षेण मोचयापनय SKN. मुञ्च वियोजयेत्यर्थः Dur. N. 7. 8., SKN. III. 51.

८. VM. ignores देवस्य and अव ॥ देवस्य द्योतमानस्य Sy. देवनशीलस्य SKN.
This stanza=YV. 21. 3.=TS. 2. 5. 12. 3.

९. तादृशः Sy.

१०. मन P.

११. अर्वाचीनः प्रत्यासन्नः सन् Sy. अवमो रक्षकः...अवतीत्यवमः । अवतेरमप्रत्ययः । यद्वा अवतीत्यवः, पचाद्यच् । अत्यन्तमवोऽवतमः । तलोपश्छान्दसः Mah. अवितृतमः पालयितृतमः U. अविता BB.

१२. ऊत्या । यद्वा गमनेनास्माकं रक्षको भव Sy. ऊत्या, अवनेन Mah., U. गमनेन । यद्वा ऊत्या रक्षणेनावमोऽर्वाचीनः प्रत्यासन्नः BB.

१३. M. omits words between त्वम् and अस्याः ।

उषसः । व्युच्छन्त्ये[1] । अन्तिकतमः[2] । स त्वमस्माकम् । अवयज[3] । वरुणं[4] शान्तहृदयं[5] कुरु । रममाणः[6] । सुखकरं[7] हविश्च । भक्षय[8] । स्वाह्वानः[9] । अस्माकम् । भव[10] ।

**अस्य श्रेष्ठा सुभगस्य संदृग्देवस्य चित्रतमा मर्त्येषु ।**
**शुचि घृतं न तप्तमघ्न्यायाः स्पार्हा देवस्य मंहनेव धेनोः ॥ ६ ॥**

अस्य श्रेष्ठा । अस्य[11] । प्रशस्यतमा[12] । शोभमानधनस्य[13] । सन्दृष्टिरनुग्रहात्मिका[14] । देवस्य[15] ।

---

१. प्रातःकालेऽग्निहोत्रादिकर्मसिद्ध्यर्थम् Sy. व्युष्टिकालेऽस्मिन्नहनि Mah. व्युष्टिकाले, अस्मिन्नेवाहनीति भावः U. रात्रेरवसाने रातरेव BB.

२. अतिक० P. अतिशयेनास्मदन्तिकस्थो भव । नेदिष्ठः—अन्तिकशब्दादिष्ठनि 'अन्तिकबाढयोर्नेदसाधौ' इति 'नेद' इत्यादेशः । नित्त्वादाद्युदात्तः Sy. समीपतमश्च . . . अत्यन्तमन्तिको नेदिष्ठः Mah. अस्मिन् दिवसे प्रातरेवास्मत्पार्श्वमागतस्त्वमिदानीं तत्क्षणेनापि प्रत्यासन्नतरो भवेति BB.

३. अपय० P. विनाशयेत्यर्थः Sy. अवपूर्वाद्यजतेर्लोटि शपो लुक् Mah. अवगत्य यज । अवपूर्वो यजतिर्नाशनार्थः । इह तु धात्वन्तरयोगात् स्वार्थमेव वक्ति U. नाशय BB.

४. ०रुण P. वरुणकृतं जलोदरादिरोगमाचारकं पापं वा Sy. वरुणं वारकं वरुणप्रवर्तितं वा पापरोगादिकम् BB.

५. शोन्त P.

६. अस्मद्दत्ते हविषि रममाणः । यद्वा यजमानेभ्योऽत्यन्तमीप्सितफलप्रदस्त्वम् । रराणः—रमतेः कानचि मकारलोपश्छान्दसः । यद्वा रातेर्यङ्लुकि व्यत्ययेन कानच् । अभ्यस्तानामादिः Sy. हविर्ददत् सन् Mah. रममाणः । 'रा दाने' हविर्ददत् वा U. अस्मदीये परिचरणे रममाणः । . . . रातेः शानचि, अन्त्यलोपश्छान्दसः BB.

७. ०खतरं P. सुखहेतुमि? (त्वि)दं हविः BB.

८. वी कान्तिव्याप्तिक्षेपप्रजनखादनेषु Mah. तदर्थं वीहि भुङ्क्ष्व BB.

९. स्वाहानः M. शोभनाह्वानोपेतः Sy. शोभनाह्वानश्च . . . आह्वानप्रयोजनस्य सद्यःसम्पत्तिः शोभनत्वम् BB.

१०. भवः P. M. omits words between भक्षय and भव ॥ एधि—अस्तेर्लोटि 'घ्वसोरेद्धावभ्यासलोपश्च' इति 'ए' इत्यादेशः । तस्यासिद्धत्वात् 'हुझल्भ्यो हेर्धिः' । निघातः Sy. This stanza=YV. 21. 4., TS. 2. 5. 12. 3.

११. Omitted in M.

१२. अतिशयेन प्रशस्या Sy.

१३. ०भनतमाध० P. सुभगस्य सुधनस्य सुष्ठु भजनीयस्याग्नेः । सुभगस्य—'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् Sy.

१४. सदृ० P.

१५. तत्र दृष्टान्तः । यथा देवस्य क्षीरं कामयमानस्य पुरुषस्य । देवस्य—दीव्यतीति देवः । दीव्यतेः कान्त्यर्थस्य पचाद्यचि रूपम् Sy.

पूज्यतमा[1] । स्तोतृषु मर्त्येषु । दीप्तम्[2] । घृतम्[3] । इव । लीनम्[4] । गोः[5] । स्पृहणीया भवति[6] । तथा[7] धेनोः[8] । पूजेव[9], पयःप्रदानादिका[10] स्पृहणीयेति ।

**त्रिरस्य ता परमा सन्ति सत्या स्पार्हा देवस्य जनिमान्यग्नेः ।**
**अनन्ते अन्तः परिवीत आगाच्छुचिः शुक्रो अर्यो रोरुचानः ॥ ७ ॥**

**त्रिरस्य ता** । त्रीणि[11] । अस्य । अग्नेः[12] । देवस्य । तानि[13] । पुरातनानि[14] । सत्यानि[15] । स्पृहणीयानि[16] । जन्मानि । सन्ति, '**दिवस्परि प्रथमं जज्ञे अग्निः**'[17] इति । सोऽयमपर्यन्तेऽन्तरिक्षे[18] । मध्ये । ज्वालाभिः[19] परिवीतः[20] । आगच्छति[21] । शुद्धरूपः[22] । 'शुक्रः[23] शोचतेर्ज्वलतिकर्मणः[24]'[25] । अर्यः[26] सर्वस्यापीनः[27] । भृशं दीप्यमानः[28] ।

---

१. **अतिशयेन चायनीया पूजनीया भवति** Sy. २. **तेजोयुक्तम्** Sy.

३. **क्षरणयुक्तम्** Sy.

४. **तप्तं क्षीरं स्पृहणीयं भवति** Sy.

५. **अहन्तव्याया गोः** Sy.

६. P. adds **संदृक्** after **भवति** ॥ **स्पार्हा—'कर्षात्वतो घञोऽन्त उदात्तः'** Sy.

७. M. omits words between **दीप्तम्** and **तथा** ॥ **तत्रैव दृष्टान्तान्तरम् । यथा गां भिक्षमाणस्य मर्त्यस्य** Sy. ८. **दोग्ध्र्या गोः** Sy.

९. **पूजेच** M. P. adds **च** after **पूजेव** ॥ **मंहनेव । मंहतिर्दानकर्मा । दानं यथा प्रियकरं भवति तद्वत्** Sy.

१०. **०ना इति का** P.

११. **अग्निवायुसूर्यात्मना त्रीणि** Sy.

१२. **अग्न्यभिमानिनः** Sy.

१३. **प्रसिद्धानि** Sy.

१४. **उत्तमानि** Sy.

१५. **यथार्थभूतानि । सत्या—'शेश्छन्दसि बहुलम्' इति शेर्लुक्** Sy.

१६. **सर्वैः स्पृहणीयानि** Sy.

१७. M. omits words between **सत्यानि** and **अग्निः** ॥ RV. X. 45. 1. Also see **'त्रीणि जाना परि भूषन्त्यस्य'** (RV. 1.95.3.).

१८. **नभसि** Sy.

१९. **स्वतेजसा** Sy.

२०. **परिवेष्टितः । परिवीतः—'व्येञ् संवरणे' । कर्मणि क्तः । यजादित्वात्सम्प्रसारणम् । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्** Sy.

२१. **अस्मदीयं यज्ञं प्रत्यागच्छतु** Sy.

२२. **सर्वस्य शोधकः** Sy.

२३. **दीप्तियुक्तः** Sy.

२४. **०ते ज्व०** M. **०ते ज्वालत्वकर्मस्य** P.

२५. N. 8. 11. N. reads **शुक्रं** for **शुक्रः** ।

२६. **अग्रस्या** P. **स्वामी तादृशो देवः । अर्यः—'ऋ गतौ' 'अर्यः स्वामिवैश्ययोः' इति यत्प्रत्ययान्तो निपातितः । 'स्वामिन्यन्तोदात्तत्वं वक्तव्यम्' इत्यन्तोदात्तत्वम्** Sy. २७. **०स्वामिन्नस्य** P.

२८. M. omits words between **कर्मणः** and **दीप्यमानः** ।

स दूतो विश्वेदभि वष्टि सद्मा होता हिरण्यरथो रंसुजिह्वः ।
रोहिदश्वो वपुष्यो विभावा सदा रण्वः पितुमतीव संसत् ॥ ८ ॥

स दूतः[1] । सः[2] । देवानां दूतः । सर्वान्[3] । एव । अभिकामयते । गृहान्[4] । ह्वाता[5] हिरण्मयरथः[6] । रमणीयशोभनज्वालाजिह्वः[7] । रोहिद्वर्णाश्वः[8] । वपुषे हितः[9] । [विभेति][10] प्रकाशनाम[11], दीप्तिमान्[12] । सदा । रमणीयः[13] । अन्नवदिव[14] । गृहम्[15] ।

स चेतयन्मनुषो यज्ञबन्धुः प्र तं मह्या रशनया नयन्ति ।
स क्षेत्यस्य दुर्यासु साधन्देवो मर्तस्य सधनित्वमाप ॥ ९ ॥

स चेतयत् । सः[16] । चेतयति[17] । मनुष्यान्[18] । यज्ञबन्धनः[19] । प्रणयन्ति[20] । तम्[21] । पुरस्तात्[22] वाचा[23] । मन्त्रात्मिकया रशनया[24], रशिनियमनकर्मा[25] । सः । क्षेति[26] वसति । यजमानस्यास्य ।

---

१. A different hand adds स दूतो विश्वा in M. २. तादृशोऽग्निः Sy.
३. M. omits सः । देवानां दूतः । सर्वान् ॥ सर्वाणि Sy.
४. देवयजनस्थानानि Sy.
५. देवानामाह्वाता Sy.
६. सुवर्णमयरथोपेतः Sy.
७. रमणीयशोभनज्वालोपेतः । रंसुजिह्वः—रमतेः 'अन्येभ्योऽपि दृश्यन्ते' इति विच् । बहुव्रीहौ पूर्वपदस्वरः Sy.
८. पुनश्च कीदृशः ? रोहितवर्णा अश्वा यस्य स तथोक्तः Sy.
९. वपुषि रूपे साधुः । वपुष्यः—'तत्र साधुः' इति यत् । तित्स्वरितः Sy.
१०. विभेति is conjectural. The only available evidence is of Ms. P. which omits विभेति । For M. see footnote no. 15. The passage contains the explanation of विभावा । विभा is a synonym of light: विभावा would thus mean 'bright.' विभावरी is a synonym of dawn, Ngh. I. 8.
११. ०नात् P.
१२. ०मासान् P. कान्तियुक्तः । विभावा—'छन्दसीवनिपौ' इति वनिप् Sy.
१३. ०णी ये P. रमणीयो भवति Sy.
१४. तत्र दृष्टान्तः । यथान्नादिमत्समृद्धं गृहं रमणीमं तद्वत् Sy.
१५. M. omits words between हितः and गृहम् ।
१६. अग्निः Sy. १७. जानाति Sy.
१८. कर्मणि प्रवृत्तान् मनुष्यान् Sy.
१९. यज्ञबन्धुः यज्ञेऽग्निहोत्रादौ बन्धनं विनियोजनं यस्य स तथोक्तः Sy.
२०. उत्तरवेद्यादिष्वध्वर्य्वादयः प्रक्षिपन्ति Sy. २१. तत् M. तादृशमग्निम् Sy.
२२. It goes with प्रणयन्ति ।
२३. It seems to be the explanation of मह्या ॥ मह्या महत्या Sy.
२४. स्तुतिरूपया रज्ज्वा युक्तम् Sy.
२५. ०शिम्नियं० P.
२६. ति P.

गृहेषु । कर्माणि साधयन्[1] । किं चायं देवः[2] । मर्त्यस्यार्थाय[3] । सधनित्वम्[4] । प्राप्नोति[5], सधनो[6] भवति प्रयच्छतीत्यर्थः[7] ।

**स तू नो॑ अ॒ग्निर्न॑यतु प्रजा॒नन्नच्छा॒ रत्नं॑ दे॒वभ॑क्तं॒ यद॑स्य ।**
**धि॒या यद्विश्वे॑ अ॒मृता॒ अकृ॑ण्व॒न्द्यौष्पि॒ता ज॑नि॒ता स॒त्यमु॑क्षन् ॥ १० ॥**

स तु[8] नः । सः । क्षिप्रम् । अस्मान् । अग्निः । नयतु[9] । प्रकर्षेण जानन्[10] । यत्[11] । अस्याग्नेः[12] । देवैरपि सम्भक्तम्[13] । उत्तमं रत्नम्[14] । तं प्रतीति[15] । कर्मणा[16] । यत्[17] । विश्वे[18] । देवाः[19] । अकृण्वन्[20] उत्पादितवन्तः[21] । सत्यभूतं[22] तद् ब्रह्म । द्युप्रभृतयः[23] । स्वरसेनासिञ्चन्[24] । तत्र 'पिता'[25] इत्यन्तरिक्षलोकमाह । 'जनिता'[26] इति पार्थिवमग्निम्[27], त्रयो लोका हविर्भिरुक्षन्तीत्यर्थः[28] ।

---

१. अभीष्टानि साधयन् । साधन्—'राध साध संसिद्धौ' । ण्यन्तस्य शतरि रूपम् Sy.
२. M. omits words between क्षेति and चायं ॥ (देवः) द्योतमानोऽग्निः Sy.
३. मत्यस्यार्त्था० P. मनुष्यस्य Sy.
४. यस्य गृहे निवसति तेन धनिना साहित्यम् Sy.
५. प्रभूतं धनं यजमानाय दापयित्वा तेन सहितोऽभवदित्यर्थः Sy.
६. धानो P.
७. ०त्यर्त्थः P.      ८. नू P.
९. प्रापयतु Sy.
१०. सर्वं जानानः Sy.
११. उत्तमम् Sy.
१२. ०स्याग्ने P.
१३. देवैः देवनशीलैः स्तोतृभिः सम्भजनीयम् । देवभक्तम्—'भज सेवायाम्' । कर्मणि क्तः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरः Sy.
१४. रत्न P. धनमस्ति तद्रत्नम् Sy.
१५. आभिमुख्येन Sy.
१६. M. omits words between यत् and कर्मणा ॥ हविर्वहनलक्षणेन कर्मणा हेतुना Sy.
१७. यमग्निम् Sy.
१८. सर्वे Sy.
१९. मरणधर्मरहिताः Sy.
२०. हविषां प्रापयितारमकुर्वन् Sy.
२१. पादि० P.
२२. यथार्थभूतं तमग्निम् Sy.
२३. द्युप्रभृतये P. यस्य चाग्नेः द्यौः Sy.
२४. ०ञ्चत M. घृताद्याहुतिभिरध्वर्य्वादयः सिञ्चन्ति । उक्षन्—'उक्ष सेचने' । लङि रूपम् । 'बहुलं छन्दसि' इत्यडभावः Sy.
२५. पालयित्री Sy.
२६. जनयिता P. जनयित्री च । 'अग्ने दिवः सूनुरसि प्रचेताः' (RV. 3. 25. 1.) इति श्रवणात् । यद्वा द्यौर्देवनशील आदित्यः पिता जनयिता च । आदित्यादग्निरित्याम्नानात् Sy.
२७. पार्त्थि० P.
२८. ०त्यर्त्थः P.

**स जायत प्रथमः पस्त्यासु महो बुध्ने रजसो अस्य योनौ ।**
**अपादशीर्षा गुहमानो अन्तायोयुवानो वृषभस्य नीळे ॥ ११ ॥**

स जायत । सः[१] । प्रादुरभूत्[२] । पूर्वम्[३] । 'पस्त्या'[४] इति नदीनामधेयम्[५] 'पस्त्यासु[६] चक्रे वरुणः सधस्थम्'[७] इति मन्त्रः । महतः । अन्तरिक्षस्य[८] । मूले[९] । अस्य पार्थिवस्य[१०] लोकस्य । उत्पत्तिकारणे[११] । पादरहितः[१२] । शिरोवर्जितः पिण्डीभूतः[१३] । छादयन्[१४] तेजसा[१५] । तानि पुनः पुनः, आत्मना[१६] । मिश्रयन्[१७] । पर्जन्यस्य[१८] मेघस्य वा । नीळे[१९] अन्तरिक्षे, एभ्योऽग्निः प्रागजायतेत्यर्थः[२०] ।

---

१. अग्निः Sy.

२. आहुत्यधिकरणतया सम्पद्यते Sy.

३. आहवनीयादिरूपतया श्रेष्ठः सन् Sy.

४. वस्त्या M.

५. पस्त्यम् is a synonym of गृहम् 'house,' Ngh. 3. 4.

६. यजमानानां गृहेषु Sy.

७. P. reads वरुणास्थम् for वरुणः सधस्थम् । VS. 10. 7[c]

८. ०रिक्षं ला स क प्रतीति स P.

९. पृथिव्याम् Sy.

१०. पार्थिं० P.

अन्तरिक्षस्य Sy.

११. M. omits the matter beginning with महतः and ending with का० ॥ तत्रापि उत्तरवेद्यादिस्थाने सम्पद्यते । सोऽग्निः Sy.

१२. पादवर्जितः । अपात्—'पादस्य लोपोऽहस्त्यादिभ्यः' इत्यकारलोपः समासान्तः Sy.

१३. ०भूतं P.

१४. गूहमानः । अविज्ञेयपादशिरा इत्यर्थः । गुहमानः—'गुहू संवरणे' । शब्विकरणी । शानचि रूपम् । शानचो लसार्वधातुकस्वरे कृते प्रत्ययस्वरः Sy.

१५. तेजसां M.

१६. अत्मानं M. तदेवाह—अन्ता आद्यन्ते पादशिरसी Sy.

१७. धूमाकारेणात्मानमायोजयन् वर्तते । यद्वा यः प्रथमो वैद्युतोऽग्निः पस्त्यासु नदीषु बुध्नेऽन्तरिक्षे महतो रजस उदकस्य तेजसो वा योनौ स्थाने च चरति । अपादशीर्षा पादशिरोवर्जितोऽन्ता आत्मनः पर्यन्तप्रदेशान् स्वतेजसा गुहमान आच्छादयन् पुनश्च आयोयुवानस्तानि तेजांसि स्वात्मनि मिश्रीकुर्वन् वृषभस्य मेघस्य नीळे स्थाने नभसि चरति सोऽग्निरधुना कर्मयोग्यतयाऽजायत । आयोयुवानः—'यु मिश्रणे' । यङ्लुकि शानचि रूपम् । अभ्यस्तस्वरेणाद्युदात्तः Sy.

१८. वर्जन्य० P. वर्षणसमर्थस्य मेघस्य Sy.

१९. निळे P. निलये नभसि Sy.

२०. ०त्यर्त्थः P.

**प्र शर्धं आर्त प्रथमं विपन्याँ ऋतस्य योनां वृषभस्यं नीळे ।**
**स्पार्हो युवां वपुष्यों विभावा सप्त प्रियासोऽजनयन्त वृष्णें ॥ १२ ॥**

[1]प्र शर्धः[2] । वेगम्[3] । प्रगच्छति[4] । पुरातनम्[5] । स्तोतॄणां स्तुत्या[6] प्रीतः[7] । वर्षणार्थमुदकस्य[8] । योनौ[9] । पर्जन्यस्य[10] । वासेऽन्तरिक्षे[11] । स्पृहणीयः[12] । युवा[13] । वपुषे हितः[14] । दीप्तिमान्[15] तस्मै वृष्णे[16] सप्त सिन्धवः[17] । प्रियाः[18] । अभवन्[19], अपि[20] वा[21] सप्त सिन्धवः । वृषाणमग्निम् । अजनयन्, छन्दोऽनुविधानार्थौ[22] विभक्तिव्यत्ययो, यथा—'उदूपथुरश्विना वन्दनाय' इति[23] ।

**अस्माकमत्रं पितरों मनुष्यां अभि प्र सेदुर्ऋतमाशुषाणाः ।**
**अश्मंव्रजाः सुदुघां वव्रे अन्तरुदुस्रा आजन्नुषसों हुवानाः ॥ १३ ॥**

अस्माकम् । अस्माकम् । अत्र[24] पणिभिरपहृतानां गवां व्रजे । पितरः[25] । मनुष्या[26]

---

१. M. omits the *pratīka*.
२. गर्धः P. हे अग्ने ! Sy.
३. तेजः Sy.
४. प्रयच्छ० P. प्रकर्षेण गच्छति । आर्त—'ऋ गतौ' । लङि व्यत्ययेनात्मनेपदम् । नियातः Sy.
५. प्रथमम् Sy.
६. विपन्या—'पन च' इत्यस्य इन्प्रत्ययः । 'कृदिकारादक्तिनः' इति ङीष् । प्रत्ययस्वरेणान्तोदात्तः । 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् । विपन्यें ऋतस्य इत्यत्र संहितायाम् 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' (Pa. 6.1.127.) इत्यनिकोऽपि ह्रस्वोऽनुनासिकश्च Sy.
७. स्तुत्या युक्तम् Sy.
८. ०णार्थं० P.
९. योनेन (नौ) M. स्थाने Sy.
१०. M. adds प्रशर्धः after पर्जन्यस्य in a different hand. वर्षणसमर्थस्य मेघस्य Sy.
११. कुलायभूतेऽन्तरिक्षे वैद्युताग्निरूपेण वर्तमानं त्वाम् Sy.
१२. यश्चाग्निः सर्वैः स्पृहणीयः Sy.
१३. नित्यतरुणः Sy.
१४. विजापवनाय P. P.'s reading is quite unintelligible. VM. has explained वपुष्यः as वपुषे हितः in RV. IV. 1. 8. VM.'s previous explanation of that word is adopted here. कमनीयः Sy.
१५. M. omits words between वासे and दीप्तिमान् ।
१६. अभिमतफलवर्षकायाग्नये Sy.
१७. होत्रकाः Sy.
१८. प्रयाः P.
१९. ० भव P. स्तोत्रमकुर्वन् Sy.
२०. भि P.
२१. Omitted in P.
२२. ०नार्थो P.
२३. RV. I. 117. 5[d].
२४. लोके Sy.
२५. अङ्गिरसः Sy.
२६. पूर्वे मनुष्याः Sy.

अङ्गिरसः । अभिप्रागच्छन्[1] । सत्यभूतं[2] गोधनम् । अश्नुवानाः[3] । ततः अश्मव्रजाः[4] । सुदोहाः[5] । वव्रे[6] । अन्तर्वर्तमानाः[7] । गाः[8] । उदाजन्[9] अङ्गिरसः उषसः[10] प्रति । वत्सेच्छया[11] शब्दायमानाः[12] ।

**ते मर्मृजत ददृवांसो अद्रिं तदेषामन्ये अभितो वि वोचन् ।**
**पश्वयन्त्रासो अभि कारमर्चन्विदन्त ज्योतिश्चकृपन्त धीभिः ॥ १४ ॥**

ते मर्मृजत ।[13] तेऽङ्गिरसः[14] । पणीन्[15] परिमृष्टवन्तः[16] । गवामावरणं शिलोच्चयम्[17] । दारितवन्तः[18] । तदिदम्[19] । अङ्गिरसाम्[20], अद्भुतं[21] कर्म । अन्य ऋषयः[22] । मनुष्याणाम् अभितः[23] । विवोचन्[24] । पशुहितयमनाः[25] । कारम्[26] । अभ्यर्चन्[27], अर्चतिरुच्चारणकर्मा[28], शङ्खमसृञ्जयार्थं[29] ध्मापितवन्तः ।

---

१. अग्निमभिलक्ष्य प्रजग्मुः Sy.
२. यज्ञम् Sy.
३. ०वाना P.
अश्नुवानाः सन्तः Sy.
४. अश्वव्र P. तेऽङ्गिरसोऽग्निपरिचर्याबलात् पर्वतैः परिवृताः Sy.
५. सुष्ठु दोग्ध्रीः Sy.
६. वव्रे P. वृणोत्याच्छादयतीति वव्रं पर्वतबिलान्तर्वर्ति तमः, तस्मिन् । वव्रे— वृणोतेरौणादिकः कः । 'कृञादीनां द्वे भवतः' इति द्विर्वचनम् Sy.
७. मध्ये स्थिताः Sy.
८. M. omits words between प्रागच्छन् and गाः ॥ पणिभिरपहृता गाः Sy.
९. उदजन् P. तस्माद्बिलान्निरगमयन् Sy.
१०. तमसो विध्वंसिनीः उषसः देवीः प्रकाशार्थम् Sy.
११. वसे० M.
१२. आह्वयन्तः Sy.
१३. Omitted in M. and P.
१४. तोऽ० M. ०ङ्गिरः P.
१५. पणि P.
१६. अग्निं पर्यचरन् । मर्मृजत—'मृजूष् शुद्धौ'। यङ्लुकि लङि व्यत्ययेनात्मनेपदम् । निघातः Sy.
१७. पणिभिरपहृतानां गवां निरोधकं पर्वतम् Sy.
१८. विदारयन्तः सन्तः Sy.
१९. तादृशं कर्म Sy.
२०. M. omits words between गवां and रसाम् ।
२१. तादृशम् Sy.
२२. महर्षयः Sy.
२३. मनुष्यान् अभितः is suggested for मनुष्याणामभितः । 'अभितः परितः समयानिकषाहाप्रतियोगेऽपि' इत्यनेन वार्तिकेन द्वितीयाया युक्तत्वात् ॥ सर्वत्र जगति Sy.
२४. विशेषेणाकथयन् Sy.
२५. पशुनिर्गमनार्थानि यन्त्राण्युपाया येषां तेऽङ्गिरसः Sy.
२६. अभिमतस्य प्रयोजनस्य कर्तारमग्निम् Sy.
२७. अस्तुवन् Sy.
२८. अर्चतिः means to worship Ngh. 3. 14.
२९. ०यार्त्वं P. शङ्खमार्चञ्जयार्थम् is suggested for शङ्खमसृञ्जयार्थम् ।

अग्निप्रसादादन्धकारं[1] विनाशयन्तो[2] ज्योतिश्च[3]। लब्धवन्तः[4]। अथ कर्मभिः[5]। चक्रपन्त[6]=कल्पन्ते[7] स्म, सिद्धकर्माण आसन्नित्यर्थः[8]।

ते ग॒व्य॒ता मन॑सा दृ॒ध्रमु॒ब्धं गा ये॑मा॒नं परि॒ षन्त॒मद्रि॑म् ।
दृ॒ळ्हं नरो॒ वच॑सा॒ दैव्ये॑न व्र॒जं गोम॑न्तमु॒शिजो॒ वि व॑व्रुः ॥ १५ ॥

ते गव्यता। अङ्गिरसः। पशूनिच्छता[9]। मनसा। दृंहितम्[10]। पूर्णम्[11]। पशून्[12]। अन्तर्नियच्छन्तम्[13]। परितः[14] सन्तम्[15]अच्छिद्रम्। शिलोच्चयम्[16]। दृढम्। मनुष्याः[17]। दैव्येन देवसम्बन्धेन[18] स्तुतिना[19]। व्रजम्[20]। गोमन्तम्[21]। कामयमानाः[22]। विवृतद्वारं कृतवन्तः[23], तदिदमङ्गिरोभिस्त्वया सह कृतमित्याग्नेयत्वम्[24], तथैव मन्त्रः—'त्वया॑ स॒ह द्रवि॑णमि॒च्छमा॑ना व्र॒जं गोम॑न्तमु॒शिजो॒ वि व॑व्रुः'[25] इति[26]।

---

१. ०कार P.

२. M. omits words between तिरुच्चारण and विनाशयन्तो ॥ ०यन् P.

३. ततस्तमोपहमावित्याख्यं ज्योतिः Sy.

४. अलभन्त Sy.

५. बुद्धिभिः Sy.

६. कृतवन्तः P. यज्ञानकुर्वन्। चक्रपन्त—'कृपू सामर्थ्ये'। ण्यन्तस्य लुङि चङि सन्वद्भावाभावश्छान्दसः Sy.

७. कल्पान्ते P.

८. ०त्यर्थः P.

९. गा इच्छता Sy.

१०. गवां निर्गमनद्वारनिरोधकम् Sy.

११. समुब्धं संहतम्। यद्वा, उभिः पूरणार्थः, गोभिः पूर्णम्। उभ्नातिर्हन्तिना समानार्थः। यद्वा 'उभ उन्भ पूरणे'। कर्मणि क्तः Sy.

१२. गाः Sy.

१३. ०न्तर्नि० P. येमानम्—यमेः कानचि एत्वाभ्यासलोपौ। चित्त्वादन्तोदात्तः Sy.

१४. परि सर्वतः सन्तं वर्तमानम्। परि षन्तम्, इत्यत्र संहितायाम्, 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' इति षत्वम् Sy.

१५. M. omits words between अङ्गिरसः and अच्छिद्रम्।

१६. ०च्चय M. पर्वतम् Sy.

१७. कर्मणां नेतारः Sy.

१८. अग्निविषयेण Sy.

१९. स्तुना P. स्तुत्या is suggested for स्तुतिना ॥ 'आङो नाऽस्त्रियाम्' इत्यनेन स्त्रियामाङो ना नानुष्ठीयते ॥ वेदात्मकेन स्तोत्रेण Sy.

२०. गवां निवासस्थानम् Sy.

२१. गोभिर्युक्तम् Sy.

२२. अग्निं कामयमानाः Sy.

२३. गोनिर्गमनार्थमुद्घाटितवन्तः Sy.

२४. M. omits words between द्वारं कृत and तथैव।

२५. विवदः P.

२६. RV. X. 45. 12$^{c-d}$.

**ते मंन्वत प्रथमं नामं धेनोस्त्रिः सप्त मातुः पंरमाणिं विन्दन् ।**
**तज्जानतीरुभ्यंनूषत व्रा आविर्भुवदरुणीर्यशसा गोः ॥ १६ ॥**

ते मन्वत[1]। "अहर्देवानामासीद् रात्रिरसुराणाम्। तेऽसुरा[2] यद्[3] देवानां वित्तं वेद्यमासीत् तेन सह रात्रि[4] प्राविशन्। ते देवा हीना[5] अमन्यन्त[6]। तेऽपश्यन्—'आग्नेयी रात्रिः[7] आग्नेयाः[8] पशवः। इममेवाग्निं स्तवामः स[9] नः स्तुतः[10] पशून् पुनर्दास्यतीति।' तेऽग्निमस्तुवन्। स एभ्यः स्तुतो रात्रिया अध्यहरभिपशून् निराजंत्[11][12]" इति ब्राह्मणम्॥ तत्रेदमुच्यते—देवा अङ्गिरसः। पूर्वम्। रात्रिम्[13]। नाम[14], अग्निम्। स्तुवन्तः[15]। अगदस्य[16] मातुः[17]। त्रिः[18]। सप्तसंख्यानि[19]। परमाणि[20] रत्नानि। अविन्दन्[21] तत्र सप्त ग्राम्याः पशवश्चतुर्दश ग्राम्यारण्याः, अन्नानि एवमेकविंशति[22] भवति। अथ तद्वनम्। जानत्यः[23] प्रजा यथा...[24]वत्यः। अभ्यस्तुवन्[25] 'ममेयं गौः' 'ममायमश्वः' इति तत्र[26] तेषां

१. हे अग्ने ! Sy.
२. असुरा P. स्तोत्रं कुर्वाणा अङ्गिरसः Sy.
३. य P.
४. ०शत P.
५. हिना P.
६. ०न्यन्ते P.
७. रात्रीः P.
८. ०ग्नेय्यः M.
९. Omitted in P.
१०. स्ततः P.
११. निराजयत् P.
१२. Cf. Sy. on TB. 1. 1. 4. 2-3.
१३. P. adds पूर्वं after रात्रिम् ॥ जनन्याः Sy.
१४. स्तुतिसाधकं शब्दमात्रम् Sy.
१५. स्तोत्रं कुर्वाणा अजानत Sy.
१६. धेनोर्वाचः सम्बन्धि Sy.
१७. रात्रेर्नामकम् P.
१८. त्रि P.
१९. पश्चात्तस्या वाचः सम्बन्धीनि । त्रिः सप्तैकविंशतिसंख्याकानि स्तुतिसाधनानि छन्दांसि । तानि च गायत्र्यादीनि जगत्यन्तानि सप्त । अतिजगत्यादीन्यतिधृत्यन्तानि सप्त । कृतिप्रभृतीन्युत्कृतिपर्यन्तानि सप्तेति । एवं त्रिः सप्त छन्दांसि Sy.
२०. उत्तमानि Sy.
२१. ०न्दत् M. and P. अलभन्त । एवंविधच्छन्दोयुक्तैर्मन्त्रैरग्निमस्तुवन्नित्यर्थः Sy.
२२. एव P.
२३. सर्वं जानानाः । जानतीः, एकस्मिन् पक्षे 'वा छन्दसि' इति पूर्वसवर्णदीर्घः । उभयत्र 'शतुरनुमो नद्यजादी' इति ङीप उदात्तत्वम् Sy.
२४. संवृध्वत्यः P. Reading is doubtful.
२५. अनूषत—'णु स्तुतौ' । लुङि रूपम्, कुटादित्वादगुणः Sy.
२६. M. omits words between ग्राम्याः and इति तत्र ।

साहाय्यं कर्तुमुषाः[1] । सूर्यस्य । तेजसा सह । आविरागमदिति[2] ।

**नेशत्तमो दुधितं रोचत द्यौरुद्देव्या उषसो भानुरर्त ।**
**आ सूर्यो बृहतस्तिष्ठदज्राँ ऋजु मर्तेषु वृजिना च पश्यन् ॥ १७ ॥**

नेशत्[4] । ततोऽसुरैरुत्पादितं[5] रात्रिकृतं[6] तमः[7] । दुर्निधानम्[8] । नष्टमासीत्[9] । ततश्च[10] तमसा[11] तिरोहिता द्यौश्च[12] । अरोचत[13] । उदगच्छत्[14] । देव्याः[15] । उषसश्च । तेजः[16] । तथा । सूर्यश्च । गमनपरान्[17], महतः । रश्मीन्[17] । आतिष्ठत्[18] । मनुष्येषु[19] । ऋजूनि[20] साधूनि[21] कर्माणि[22] । वृजिनानि[23] पापानि । च[24] । पश्यन्निति[25] ।

---

१. वा इत्युषोनाम, उषसः Sy.
२. M. omits words between तेजसा and इति ॥ आविरभूत्, यद्वा तेऽङ्गिरसः पुरातनं नाम एहि सुरभि गुग्गुलु गन्धिनीति धेनोर्नामधेयम् उच्चारयामासुः । मातुर्भूम्याः स्वभूतानि पणिभिरपहृतानि त्रिः सप्तरत्नानि विन्दन् । तत उच्चरितं नाम जानन्त्यो गावोऽभ्यनूषत । हम्भारवलक्षणं शब्दमकुर्वन् । तदानीमुषाः प्रादुरभूदिति Sy.
३. VM. ignores अरुणीः ॥ अरुणवर्णाः । सोरलोपश्छान्दसः 'गौरीर्मिमाय' (RV. 1. 164. 41.) इतिवत् Sy.
४. It is written in a different and probably later hand in M.
५. M. omits ततोऽसुरैरुत्पादितं ।
६. ०कृतवं P.
७. ध्वान्तम् Sy.
८. दर्नि० P. दुधिः प्रेरणकर्मा । प्रातरग्निविहरणकाले उषसा प्रेरितं सत् Sy.
९. अनश्यत् । नेशत्—'णश अदर्शने' । लङि 'नशिमन्योरलिट्येत्वं वक्तव्यम्' (VPA. 6. 4. 120. 5.) इत्येत्वम् । शपः पित्त्वादनुदात्तत्वे धातुस्वरः Sy.
१०. Omitted in P.
११. ममसा M.
१२. अन्तरिक्षम् Sy.
१३. अदीप्यत । रोचत—'रुच दीप्तौ' । लङि रूपम् । वाक्यभेदादनिघातः Sy.
१४. उगदच्छ P.
उद्गच्छति Sy.
१५. व्यो P.
देवनशीलायाः Sy.
१६. प्रभा Sy.
१७. अश्वान् अजरान् पर्वतान् गमनशीलान् रश्मीन् वा Sy.
१८. M. omits words between तेजः and आतिष्ठत् ॥ अध्यतिष्ठत् Sy.
१९. मनुष्येषु विद्यमानम् Sy.
२०. ऋज्जनि M. अनि P.
सत्कर्म Sy.
२१. M. adds च after साधूनि ।
२२. चर्मानि P.
२३. अनृजून्यसत्कर्माणि Sy.
२४. व M.
२५. पश्यन् अध्यतिष्ठदिति शेषः Sy.

**आदित्पश्चा बुबुधाना व्यख्यन्नादिद्रत्नं धारयन्त द्युभक्तम् ।**
**विश्वे विश्वासु दुर्यासु देवा मित्र धिये वरुण सत्यमस्तु ॥ १८ ॥**

आदित्[1]। अनन्तरम्[2]। एव, उपस्यागतायाम्। बुध्यमाना[3] नोऽश्वान्[4] पादार्थम्[5]। विविधम्[6]। अपश्यन्। तथाऽनन्तरम्। एव। अह्नां[7] सम्भक्तम्[8]। रत्नं[9]=च। अधारयन्[10]। तथा[11] विश्वे[12]। देवाः[12]। विश्वासु[13]। दुर्यासु[14]=यजमानगृहेषु यज्ञसद्भावादागताः[15], 'दिवा हि यज्ञो भवति, रात्रौ'[16] इति। सोऽयमेवं[17]विधो[18]ऽहोरा[19]त्रविभागो[20] हे मित्रावरुणौ[21]! मनुष्याणां कर्मकरणाय[22]। सत्यम्[23]। भवतु, मित्रावरुणावहोरात्रयोरीश्वरौ प्रसङ्गादाशास्त इति[24][25]।

**अच्छा वोचेय शुशुचानमग्निं होतारं विश्वभरसं यजिष्ठम् ।**
**शुच्यूधो अतृणन्न गवामन्धो न पूतं परिषिक्तमंशोः ॥ १९ ॥**

अच्छ[26]। अभिप्रब्रवाणि[27]। दीप्यमानम्[28]। अग्निम्[29]। होतारम्[30]। सर्वस्य

१. अदित् P. २. सूर्योदयादनन्तरम् Sy.
३. पणिभिरपहृता निरोधान्निर्गता गा जानाना अङ्गिरसः। बुबुधानाः—बुधेर्लिटि कानचि रूपम्। चित्त्वादन्तोदात्तः Sy. ४. अश्वां P. ५. ०दात्यंम् P.
६. अशेषेण ता गा अपश्यन् Sy.
७. M. omits words between बुध्य and अह्नां।
८. ०भक्ता P. दीप्तियुक्तम्। द्युभक्तम्—'भज सेवायाम्'। कर्मणि क्तः। 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरः Sy.
९. रंतं P. पणिभिरपहृतं धनं च Sy.
१०. धार० M. and P.
११. लब्धगोधनानामङ्गिरसाम् Sy.
१२. विश्व P. यजनीयाः सर्वे देवा आजग्मुः Sy. १३. विश्वदेवासु P. सर्वेषु Sy.
१४. ०र्यसु P. गृहेषु Sy.
१५. ०गत M. ०वा आसत् P.
१६. The quotation is untraced.
१७. सेय० P. १८. M. omits words between दिवा हि and मेवं वि०।
१९. या होरा० M.
२०. ०भाहोरात्रविभाहो P.
२१. हे मित्रभूत! उपद्रवाणां वारक! हे अग्ने! Sy. २२. कर्मणां कर्त्रे स्तोत्रे वा यजमानाय Sy. २३. यदेतत्तवोपद्रववारणसामर्थ्यं तद्यथार्थभूतमस्तु Sy.
२४. M. omits ०री प्रसङ्गादाशास्त इति।
२५. VM. ignores पश्चा॥ पृष्ठदेशेषु। पश्चा—'पश्च पश्चा च छन्दसि' इति निपातितः Sy.
२६. अच्छा वोचेय is added in M. in a different hand.
२७. ०व्रवाणि is suggested for ०ब्रुवाणि॥ अभिलक्ष्य स्तवानि। वोचेय—ब्रूञ आशीर्लिङि 'ब्रुवो वचिः' 'लिङ्याशिष्यङ्' 'छन्दस्युभयथा' इति सार्वधातुकत्वात् सीयुटः सलोपः Sy.
२८. भृशं दीप्यमानम् Sy.
२९. M. omits words between अभि and अग्निम्॥ त्वाम् Sy.
३०. देवानामाह्वातारम् Sy.

भर्तारम्[1] । यष्टृतमम् । यथा । गवाम् । ऊधः[2] कश्चित् । शुचि[3] पयः । तृणत्ति[4] । सोमलताया अभिषुतायाः[5] । रसः[6] । इव । पूतम्[7] । पात्रेषु परितः सिक्तं[8] पयः, एवं रात्रिमग्निमदुहद् रत्नानि—इत्यवगन्तव्यमिति[9] ।

विश्वेषामदितिर्यज्ञियानां विश्वेषामतिथिर्मानुषाणाम् ।
अग्निर्देवानामव आवृणानः सुमृळीको भवतु जातवेदाः ॥ २० ॥

विश्वेषाम्[10] । विश्वेषामपि[11] । यज्ञार्हाणाम्[12] । अक्षीणः[13] । तथा विश्वेषामपि[14] । मानुषाणाम्[15] । अतिथिर्भवति[16] गृहेषु । सोऽयमग्निः । देवानाम्[17] । रक्षणम्[18] । यज्ञकरणादावृणानः[19] । सुष्ठु[20] सुखयिता[21] । भवतु । जातधनः[22] [23] ।

---

१. आहुतिद्वारा वृष्टिप्रदानेन विश्वस्य पोषकम् Sy. २. ऊधा P.

३. शचि P. शुद्धं पयः Sy.

४. तृणस्त्रि M. तवाहुत्यर्थं यजमानो न दोग्धि । अतृणत्—'उतृदिर् हिंसानादरयोः' । दोहनमेव ऊधोहिंसनम् Sy.

५. सोमलताखण्डस्य सम्बन्धि Sy.

६. रसम् M. and P. रसाख्यमन्नम् Sy.

७. दशापवित्रेण शोधितं सत् Sy.

८. गृहेषु न प्रक्षिप्तम् । किन्त्वनेन यजमातेन केवलं स्तुतिरेव क्रियते । परिषिक्तम्—सिञ्चतेः कर्मणि क्तः । 'उपसर्गात्सुनोति०' इति संहितायां षत्वम् । 'गतिरनन्तरः' इति गतेः स्वरः Sy.

९. M. omits words between पात्रेषु and वगन्तव्य० ।

१०. अयमग्निः Sy. अग्निरीदृशः भवतु Mah. योऽग्निः U.

११. सर्वेषाम् Sy. सर्वेषां देवानां मध्ये Mah.

१२. यज्ञार्हाणां देवानाम् Sy. कीदृशानां देवानाम् ?...यज्ञार्हाणाम् Mah. यज्ञसम्पादकानाम् U.

१३. ०क्षीणं P. अदितिर्देवमाता । तद्वद्देवानां पोषक इत्यर्थः । यद्वा विश्वेषां देवानामदितिर्भूस्थानीय आधारभूत इति यावत् । 'इयं वाग्निर्वैश्वानरः' (TB. 3. 9. 17.) इति श्रुतेः Sy. नास्ति दितिः खण्डनं यस्यादीनः Mah., U.

१४. तथाऽयमग्निः Sy. सर्वेषाम् Mah.

१५. मनुष्याणाम् । मानुषाणाम्—मनोरपत्यानीत्यर्थे 'मनोर्जातावञ्यतौ षुक् च' इत्यञ्प्रत्ययः । ञित्वादाद्युदात्तः Sy. नराणाम् Mah. अग्निहोतृणाम् U.

१६. अतिथिवत् पूज्यो भवति । अतिथिः—'अत सातत्यगमने' 'ऋतन्यञ्जि०' इत्यादिना इथिन्प्रत्ययः । नित्त्वादाद्युदात्तः Sy. पूज्यः Mah.

१७. देवनशीलानां स्तोतॄणाम् Sy.

१८. अन्नं हविः Sy. हविर्लक्षणमन्नम् Mah. अन्नं हविर्लक्षणम् U. १९. ०णानाः P. सम्भजन् Sy. समर्पयन् Mah., U.

२०. M. omits words between गृहेषु and सुष्ठु ॥

२१. तेषां स्तोतॄणां सुखकरः Sy. शोभनं मृडीकं सुखं यस्मात् सुखकारी Mah.

२२. जातं सर्वं वेत्तीति जातवेदाः । सः Sy. जातप्रज्ञानः Mah., U.

२३ This stanza=YV. 33. 16.

IV.2.

यो मर्त्येष्वमृत ऋतावा देवो देवेष्वरतिर्निधायि ।
होता यजिष्ठो मह्ना शुचध्यै हव्यैरग्निर्मनुष ईरयध्यै ॥ १ ॥

[1]यो मर्त्येषु । यः[2] । अमरणः[3] । देवः[4] । देवेषु[5] । हविरादाय गच्छन्[6] । सत्यवान्[7] । मनुष्येषु । निहितः[8] । होता[9] । यष्टृतमः । अत्यन्तम्[10] । ज्वलितुम्[11] । हव्यैः[12] सह । यजमानस्य[13] । देवान्[14] प्रति गन्तुं च[15] ।

इह त्वं सूनो सहसो नो अद्य जातो जाताँ उभयाँ अन्तरग्ने ।
दूत ईयसे युयुजान ऋष्व ऋजुमुष्कान्वृषणः शुक्रांश्च ॥ २ ॥

इह त्वम् । हे सहसः[16], पुत्र[17] ! अस्मिन्नह्नि[18] । जातः[19] सन् । उभयानपि[20] । जातान् ।

---

१. 'यो मर्त्येषु' इति विंशत्यृचं द्वितीयं सूक्तं वामदेवस्यार्षं त्रैष्टुभमाग्नेयम् । 'यो मर्त्येषु' इत्यनुक्रमणिका (KSA. 20. 2. p. 17.) । अस्य सूक्तस्य प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्त एव विनियोग उक्तः Sy.

२. अग्निः Sy.

३. अरमणः P.
मरणधर्मरहितः Sy.

४. देवनशीलो योऽग्निः Sy.

५. इन्द्रादिषु देवेषु Sy.

६. अभिगन्ता शत्रूणाम् । यद्वा देवलोके गन्ता । अरतिः—'ऋ गतौ' 'वहिवस्यर्तिभ्यश्चित्' इत्यतिप्रत्ययः । चित्त्वादन्तोदात्तः Sy.

७. षत्य० P.

८. यद्वा मर्त्येषु मनुष्यसम्बन्धिषु वागादीन्द्रियेषु निहितः । 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' (AU. 2. 4.) इति श्रुतेः । निधायि—दधातेः कर्मणि लुङि रूपम् । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् Sy.

९. देवानामाह्वाता Sy.

१०. स्वकीयेन महता तेजसा Sy.

११. M. omits words between सत्यवान् and ज्वलितुम् ॥ दीपितुमुत्तरवेद्यां निहितः । शुचध्यै—'शुच दीप्तौ' । तुमर्थे कध्यैप्रत्ययः । कित्त्वादगुणः । प्रत्ययस्वरः Sy.

१२. हवनीयैराज्यपुरोडाशादिभिर्हविर्भिर्हेतुभिः Sy.

१३. मनुष्यस्य Sy.

१४. स्वर्गं प्रति प्रेरणाय निहितः । ईरयध्यै—ईरयतेस्तुमर्थे शध्यैप्रत्ययः । शित्त्वेन सार्वधातुकत्वात् णिलोपाभावः Sy.

१५. VM. ignores अग्निः ।

१६. बलस्य Sy.

१७. पुत्राः M. सूनो सहसः—'परमपि छन्दसि' इति सहसः पराङ्गवद्भावात् द्वयोः सर्वानुदात्तत्वम् Sy.

१८. ०न्नग्नि P. अस्मिन् दिवसे Sy.

१९. आधानपवमानेष्टिभिः संस्कृतः Sy.

२०. ०भयोन० M. अभ० P. देवमनुष्यान् Sy.

मध्येन[1]। अग्ने ! दूतो[2] भूत्वा । गच्छसि[3]। हविर्वहन आत्मानं[4] युयुजानः[5]। दर्शनीय[6]! कान् उभ-
यान् ? इत्याह—ऋजुमुष्कान्[7] युवानः[8]। यजमानान्[9] मनुष्यान्। दीप्तान्[10] देवान्[11]। च[12,13]।

**अत्या वृधस्नू रोहिता घृतस्नू ऋतस्य मन्ये मनसा जविष्ठा ।**
**अन्तरीयसे अरुषा युंजानो युष्मांश्च देवान्विश आ च मर्तान् ॥ ३ ॥**

अत्या[14] वृधस्नू[15]। अतनशीलौ[16]। वर्धमानान्[17] प्रतिगन्तारौ[17]। रोहितवर्णौ। घृतं प्रति
गन्तारौ[18]। अग्नेः[19]। अहं[20] मनसा[21]। वेगवत्तमौ। जानामि[22]। तौ हि त्वं स्वरथे[23] युञ्जानः[24]। मध्येन[25]।
गच्छसि[26]। आरोचमानौ[27]। कांश्च[28] कांश्चान्तः, इत्याह—युष्मानिति[29], त्वत्सहितान्[30]। देवान्।

१. तेषामुभयेषां मध्ये Sy.
२. दद्वतः P. हवींषि देवान् प्रापयितुम् Sy.
३. ईयसे—'ईङ् गतौ'। दिवादिः। निघातः Sy.
४. M. omits words between पि। जातान्. . .and आ of आत्मानम्।
५. स्वरथे योजयन्नीयसे, यद्वा हविर्वहने नियुज्यमानस्त्वम् । युजेर्वर्तमाने लिटि कानचि रूपम् Sy.
६. किं कुर्वन् ? हे दर्शनीयाग्ने ! यद्वा महन्नग्ने ! ऋष्व—संहितायाम् 'ऋत्यकः' इति प्रकृतिभावः Sy.
७. मुष्कशब्देन मांसलोऽभिधीयते । ऋजवः प्रसाधकाः । ऋजवश्च ते मुष्काश्चेति ऋजुमुष्काः । समासस्वरः Sy.
८. ०वान्यः M.
९. वृषणः—रेतःसेचनसमर्थान् । हविःसेचनसमर्थान् यजमानान् Sy.
१०. दीप्यमानानश्वान् Sy.
११. देव M. देवाः P.
१२. Omitted in M.
१३. VM. ignores इह । त्वम् and नः॥ इह कर्मणि। नः अस्मदीये Sy.
१४. अत्या is written in a different hand in M. आत्या P.
१५. वर्धयतीति वृधमन्नं तत् क्षरन्तौ Sy.
१६. अतनशीलौ is omitted by M. अश्वौ Sy.
१७. Omitted by M.
१८. घृतमुदकं तत्स्रवन्तौ Sy.
१९. सत्यभूतस्य तव सम्बन्धिनौ Sy.
२०. असं M.
२१. मनसोऽपि। 'सुपां सुलुक्०' इति पञ्चम्या आकारः Sy.
२२. स्तौमि Sy. मन्यतिरर्चतिकर्मा (Ngh. 3. 14.)
२३. सुर० P.
२४. युजानः—'युजिर् योगे' 'युजिबुधिदृशः किच्च' इत्यानच्प्रत्ययः। चित्त्वादन्तोदात्तः Sy.
२५. षष्ठ्यर्थे द्वितीया। तेषां मध्ये Sy.
२६. ०च्छति P. आ समन्तात् हविः स्वीकर्तुं यजमानान् गच्छसि, तद्धविः प्रदातुं देवान् गच्छसि Sy.
२७. आरोचमानौ तावश्वौ Sy.
२८. M. omits words between स्वरथे and कांश्च।
२९. देवेष्वग्नेरन्तर्भावात् यजनीयरूपेण कीर्तनम्, . . .यष्टव्यान् Sy.
३०. त्वं हि ता P. त्वं हि तान् D.

आविशसि । मनुष्यान् । च, इति ।

अर्यमणं वरुणं मित्रमेषामिन्द्राविष्णू मरुतो अश्विनोत ।
स्वश्वो अग्ने सुरथः सुराधा एदु वह सुहविषे जनाय ॥ ४ ॥

अर्यमणम् । एषां मनुष्याणां मध्ये । शोभनहविष्काय । यजमानाय । अर्यमप्रभृतीन् । शोभनधनस्त्वम् । आवह ।

गोमाँ अग्नेऽविमाँ अश्वी यज्ञो नृवत्सखा सदमिदप्रमृष्यः ।
इळावाँ एषो असुर प्रजावान्दीर्घो रयिः पृथुबुध्नः सभावान् ॥ ५ ॥

गोमान् । अग्ने ! अयम् । यज्ञस्त्वयाऽधिष्ठितः । गवादिहेतुर्भवति । नेतृपुरुषा यस्य

---

१. VM. takes विशः as a verb, construes it with आ and explains it as आविशसि । Sy. takes it as acc, pl. and explains it as परिचारकान् ।

२. ०नुष्याः P. षष्ठचर्थे द्वितीया । तेषां मध्ये Sy.

३. एति M.

४. एषा P.

५. मर्त्यानाम् Sy.

६. सुहविषे—'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् Sy.

७. M. omits words between मनुष्याणां and प्रभृतीन् ॥ प्रभृति refers to अर्यमणम् । वरुणम् । मित्रम् । इन्द्राविष्णू । मरुतः । and अश्विना ॥ अर्यमणं, वरुणं मित्रम्, इन्द्राविष्णू मरुतोऽश्विनौ च यष्टव्यान् देवान् । इन्द्राविष्णू—'ऋज्रेन्द्र०' इत्यादिना निपातनादिन्द्रशब्द आद्युदात्तः । 'देवताद्वन्द्वे च' इत्युभयपदप्रकृतिस्वरत्वम् Sy.

८. शोभनधनोपेतस्त्वम् Sy.

९. आहूय Sy.

१०. VM. ignores उत । स्वश्वः । अग्ने । सुरथः । इत् and उ ॥ उत अपि च । स्वश्वः शोभनाश्वोपेतः । सुरथः शोभनरथः । इद् एव । उः पूरणः Sy.

११. मदीयोऽयम् Sy. एव ईदृशो यज्ञः पुनः पुनराभवतु, आगच्छतु काले काले BB.

१२. गवादि refers to गोमान् । अविमान् । अश्वी । गोभिस्तद्वान् ॥ अविमान् अवयो मेषा अस्य सन्ति इति तद्वान् । अश्वी—अश्वोपेतश्चास्तु Sy. गोभिर्बहुभिरविभिरश्वैश्च तद्वान् BB.

सखायो[1] नृवत्[2]सखोक्तः, तादृशानपि साधयतीत्यर्थः[3]। सदा। एव। अनभिभवनीयः[4]। अन्नवान्[5]। प्राज्ञ[6]! प्रजायुक्तः[7]। अविच्छिन्न[8]धनहेतुः। पृथुमूलः[9]। परिचयुक्त[10] इति[11]।

**यस्त इध्मं जभरत्सिष्विदानो मूर्धानं वा ततपते त्वाया।**
**भुवस्तस्य स्वतवाँ ≍ पायुरग्ने विश्वस्मात्सीमघायत उरुष्य ॥ ६ ॥**

यस्ते। यः[12]। तुभ्यम्[13]। इध्मम्[14]। भरति[15]। स्विद्यन्[16]। मूर्धानम्[17]। च। तापयति[18]।

---

१. सखाय P.

२. नरः कर्मणां नेतारोऽध्वर्य्यादयस्तद्वन्तः सखायोऽनुष्ठातारो यस्य स तथोक्तः। नरो येषां सन्तीति नृवत् मतुप्। तस्य छान्दसं वत्वम्। 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम्, बहुव्रीहौ पूर्वपदस्वरः Sy. मनुष्यवन्तो देवास्सखायो यस्य तादृशः। छान्दसं मतुपो वत्वम् BB.

३. ०त्यर्त्थः P.

४. M. omits words between ०स्य सखायो and भवनीयः ॥ अप्रधृष्यश्चास्तु Sy.

५. इळा हविर्लक्षणमन्नम्। तद्वान् Sy.

६. हे बलवन्! Sy. असुमान् प्राणवान् मत्वर्थीयो रः। सुलुक् BB.

७. पुत्रपौत्रादियुक्तश्चास्तु Sy. सन्ततिमान् BB.

८. VM. seems to explain दीर्घः and रयिः together as अविच्छिन्नधनहेतुः॥ दीर्घः अविच्छिन्नानुष्ठानोपेतः, रयिः धनवान्, लुप्तमत्वर्थीयः Sy. अविच्छिन्नः BB.

९. पृथूनि बहुलानि बुध्नानि धनादीनि कारणानि यस्य स तथोक्तः Sy. विस्तीर्णमूलः। रयिः साक्षाद् धनं च BB.

१०. उपद्रष्टृरूपसभायुक्तश्चास्तु Sy. गृहवान् BB.

११. This stanza=TS. 1. 6. 6. 4.

१२. पुमान् Sy.

१३. त्वदर्थम् Sy.

१४. इध्वं P. त्वत्समिन्धनार्थं काष्ठभारम् Sy.

१५. आहरति। जभरत्—हरतेर्लुङि चङि रूपम्। 'चङ्यन्यतरस्याम्' इति चङ्पूर्वस्योदात्तत्वम् Sy.

१६. स्विद्य P. स्विद्यद्गात्रः सन्। सिष्विदानः—'ञिष्विदा गात्रप्रक्षरणे'। कानचि रूपम्। संहितायाम् 'आदेशप्रत्यययोः' इति धातुसकारस्य षत्वम् Sy.

१७. ०र्धानः P.
स्वमस्तकम् Sy.

१८. काष्ठभारेण तापयति Sy.

त्वत्कामनया[1] । भव त्वम्[2] । तस्य[3] । स्वायत्तबलः[4] । रक्षकः[5] । सर्वस्मात् । पापमिच्छतश्च[6] । एनम् । रक्षति[7] ।[8]

**यस्ते भरादन्नियते चिदन्नं निशिषन्मन्द्रमतिथिमुदीरत् ।**
**आ देवयुरिनधते दुरोणे तस्मिन्रयिर्ध्रुवो अस्तु दास्वान् ॥ ७ ॥**

यस्ते[9] । यः[10] । तुभ्यम् । भरति[11] । अन्नमिच्छते[12] । अन्नम्[13] । यो वा । मदकरं[14] सोमम्[15] । नियमेन शास्ति[16] । यो[17] वाऽतिथिं[18] त्वाम्[19] । उदीरयति[20]=अरण्योरुत्पादयति । तथा[21] । देवान्[22]

---

१. ०मना P. त्वाया—त्वामात्मन इच्छतीत्यर्थे क्यच् । 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तस्य त्वादेशः । दकारस्य छान्दसमात्वम् । क्यजन्ताद् धातोर्भावे 'अ प्रत्ययात्' इत्यकारप्रत्ययः । 'सुपां सुलुक्०' इति तृतीयाया आकारः । एकादेशस्वरः Sy.

२. भवसि । भुवः—भवतेर्लेटचडागमे रूपम् । 'भूसुवोस्तिङि' इति गुणप्रतिषेधः । आगमस्यानुदात्तत्वे धातुस्वरः Sy.

३. तादृशस्य पुंसः Sy.

४. 'स्वतवान्धनवान्' इति तलवकार उक्तम् । धनवान् । 'स्वतवाँ ≍ पायुः' इत्यत्र संहितायां 'स्वतवान्पायौ' (Pa. 8. 3. 11.) इति नकारस्य रुत्वम् 'अत्रानुनासिकः पूर्वस्य तु वा' इत्याकारोऽनुनासिकः । रेफस्य विसर्जनीयः । 'कुप्वो ≍ क ≍ पौ च' इति ≍ प इत्यादेशः Sy.

५. M. omits words between इध्मम् and रक्षकः ॥ पालयिता Sy.

६. अघं पापमिच्छतः पुरुषात् । अघायतः—अघमात्मन इच्छतीत्यर्थे सुपः क्यच् । 'अश्वाघस्यात्' इति-आत्वम् । तदन्ताच्छतृप्रत्ययः । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् Sy.

७. उरुष्य—उरुशब्दः कण्ड्वादिः । लोटि रूपम् । निघातः Sy.

८. VM. ignores अग्ने !

९. हे अग्ने ! Sy.

१०. पुमान् Sy.

११. दातुं बिभृयात् । भरात्—'डुभृञ् धारणपोषणयोः' इत्यस्य लेटचाडागमे रूपम् । यद्वृत्तयोगादनिघातः Sy.

१२. अन्नियते—'अन्नमात्मन इच्छते । क्यच् । 'क्यचि च' इतीत्वम् । ह्रस्वश्छान्दसः Sy.

१३. हविर्लक्षणं पुरोडाशादिकमन्नम् Sy.

१४. मङ्कुरं M.

१५. स्तोमं P.

१६. शस्ति P. नितरां प्रयच्छति । निशिषत्—'शासु अनुशिष्टौ' । लुङि 'सर्तिशास्त्यर्तिभ्यश्च' इति च्लेरङादेशः । 'शास इदङ्हलोः' इतीत्वम् Sy.

१७. Omitted in P.

१८. ०तिथि P. अतिथिवत् पूज्यं त्वाम् Sy.

१९. त्वम् P.

२०. उत्तरवेद्यां प्रणयति । उदीरत्—'ईर् गतौ' । लेटि व्यत्ययेन परस्मैपदम् । अडागमः । आगमस्यानुदात्तत्वे धातुस्वरः 'तिङि चोदात्तवति' इति गतेर्निघातः Sy.

२१. अपि च यश्च Sy.

२२. M. omits words between सोमम् and देवान् ॥ देवं त्वां कामयमानः Sy.

कामयमानः । समिद्धं[1] करोति । गृहे[2] । तस्मिन्[3] । रयिः[4] । नित्यः[5] । अस्तु । दानवान्[6]= अर्थिभ्यो[7] दीयमानः[8] ।

**यस्त्वा दोषा य उषसि प्रशंसात्प्रियं वा त्वा कृणवते हविष्मान् ।**
**अश्वो न स्वे दम आ हेम्यावान्तमंहसः पीपरो दाश्वांसम् ॥ ८ ॥**

यस्त्वा[9] । यः[10] । त्वाम्[11] । रात्रौ[12] । स्तौति[13] । यो वा[14] । उषसि[15] । यो वा[16] । हविषा युक्तः[17] । त्वाम् । प्रियम्[18] । करोति[19] । तम्[20] । यजमानम्[21] । दारिद्र्यात्[22] । पारय[23] । यथा । अश्वः[24] । स्वगृहे स्थितः[25] । वेगवान्[26] । आकारः सप्तम्यर्थं[27] स्फुटीकरोति ।

---

१. त्वां समिद्भिः समिन्धते । इनधते— 'ञिइन्धी दीप्तौ' । लटि व्यत्ययेन शप् । रुधादित्वात् श्नम् । 'श्नान्नलोपः' इति धातुनकारलोपः । ङित्परत्वाभावात् श्नसोरल्लोपाभावः । यद्वृत्तयोगादनिघातः । श्नमः स्वरः Sy.

२. गृ P. स्वकीये गृहे Sy.

३. एतस्मिन् पुरुषे Sy.

४. रयि M. इन्द्रयि P. पुत्रः Sy.

५. आस्तिक्यबुद्ध्या वैदिके मार्गे निश्चलः Sy.

६. तथा औदार्योपेतश्चास्तु । दास्वान्— 'दासृ दाने' । सम्पदादिलक्षणो भावे क्विप् । 'तदस्यास्ति' इति मतुप् । 'मादुपधायाः' इति वत्वम् । प्रत्यत्यस्य पित्त्वादनुदात्तत्वे धातुस्वरः Sy.

७. अर्त्थि० P.

८. ०मानं M.

९. हे अग्ने ! Sy.

१०. पुमान् Sy.

११. M. puts a few dots. . .after त्वाम् although nothing seems to be omitted.

१२. रात्रे P. दोषायां रात्रौ । दोषा— सप्तम्या आकारः Sy.

१३. संस्तुयात् । प्रशंसात्—'शंसु स्तुतौ' लेटयाडागमे रूपम् Sy.

१४. यश्च Sy.

१५. प्रातःकाले त्वां प्रशंसेत् Sy.

१६. यजमानः Sy.

१७. सम्भृतहविष्कः Sy.

१८. गृहे P. हविर्भिः प्रीतम् Sy.

१९. M. omits words between स्तौति and करोति ॥ कुर्यात् । कृणवते—'कृवि हिंसाकरणयोः' इत्यस्य लेटि 'धिन्विकृण्व्योरच्च' इत्युप्रत्ययः । 'लेटोऽडाटौ' इत्यडागमः । यद्वृत्तयोगादनिघातः । प्रत्ययस्वरः Sy.

२०. त P. तादृशम् Sy.

२१. येजमानान् P. हविर्दत्तवन्तम् Sy.

२२. पापरूपाद्दारिद्र्यात् Sy.

२३. पारं नय । तस्मै यजमानाय बहु धनं प्रयच्छेत्यर्थः । पीपरः —'पृ पालनपूरणयोः' इत्यस्य ण्यन्तस्य लुङि चङि रूपम् । निघातः Sy.

२४. अश्वा P. अश्व इव सञ्चरंस्त्वम् Sy.

२५. स्थितौ P. स्वकीये गृहे Sy.

२६. सुवर्णनिर्मितकक्ष्यावान् । हेम्यावान्— हेमार्हति 'छन्दसि च' इति यः Sy.

२७. ०म्यर्थं Sy.

यस्तुभ्यंमग्ने अमृताय दाशद्दुवस्त्वे कृणवंते यतस्रुंक् ।
न स राया शंशमानो वि योषन्नैनमंहः परि वरदघायोः ॥ ९ ॥

यस्तुभ्यम्[1] । यः[2] । तुभ्यम् । अग्ने ! अमृताय[3] । हविः प्रयच्छति[4] । यश्च त्वयि[5] । परिचर्याम्[6] । करोति[7] । यज्ञार्थं[8] यतस्रुक्[9] । न[10] । त्वां भजमानः[11] । धनेन । वियुक्तो भवतु[12] । न च । एनम्[13] । अघमिच्छतः[14] । अंहः[15] । परिवृणोतु[16][17] ।

यस्य त्वमंग्ने अध्वरं जुजोषो देवो मर्तस्य सुधितं रराणः ।
प्रीतेदंसद्धोत्रा सा यंविष्ठासाम यस्यं विधतो वृधासंः ॥ १० ॥

यस्य त्वम्[18] । यस्य । त्वम् । अग्ने ! यज्ञम्[19] । सेवसे[20] । देवः[21] । मनुष्यस्य[22] । सुनिहितम्[23] ।

---

१. The *pratīka* is written in a different hand in M.

२. यजमानः Sy.

३. मरणधर्मरहिताय Sy.

४. हवींषि प्रयच्छेत् । दाशत्—'दाशृ दाने' लेटयडागमे रूपम् Sy.

५. त्वे—'सुपां सुलुक्०' इति सप्तम्याः शे इत्यादेशः Sy.

६. M. omits words between तुभ्यम् and चर्याम् ।

७. कृणवते—यद्वृत्तयोगादनिघातः Sy.

८. ०ज्ञार्त्थं P.

९. यथास्रुक् M. यस्रुक् P. संयतस्रुग्यश्च यजमानः Sy.

१०. Omitted in P.

११. स्तोत्रं कुर्वाणः Sy.

१२. न पृथग्भवेत् । सदा धनयुक्तो भवेदित्यर्थः । योषत्—'यु मिश्रणे' । लेटि 'सिब्बहुलम्' इति सिप् । अडागमः । निघातः Sy.

१३. यजमानम् Sy.

१४. पापमिच्छतो हिंसकस्य सम्बन्धि Sy.

१५. अहः M. and P. आहननं पापम् Sy. १६. M. omits णोतु ॥ परिवृणुयात् । स्पृशेदित्यर्थः । वरत्—'वृञ् वरणे' । लेटि रूपम् Sy.

१७. VM. ignores सः ॥

१८. त्वम् is written in a different hand in M.

१९. यज्ञ P. अनुपहृतं हविर्लक्षणमन्नम् Sy.

२०. सेवेथाः । जुजोषः—'जुषी प्रीतिसेवनयोः' इत्यस्य 'बहुलं छन्दसि' इति श्लुः । अडागमः । अभ्यस्तस्वरः Sy.

२१. M. omits words between यस्य । and देवः ॥ दीप्यमानः Sy.

२२. मनुष्यस्य सम्बन्धि Sy.

२३. त्वदर्थं सुष्ठु निहितम् । सुधितम्—दधातेर्निष्ठायां 'सुधितवसुधित०' इति निपातनाद् ध्यादेशः । 'गतिरनन्तरः' इति गतेः स्वरः Sy.

रममाणः[१]। प्रियः[२]। एव। भवति[३]। यज्ञः[४]। सः[५] युवतम[६] ! देवानाम्। स्याम[७] च। यस्य[८] वयम्। परिचरन्तः[९]। वर्धकाः[१०]।

**चित्तिमचित्तिं चिनवद्वि विद्वान्पृष्ठेव वीता वृजिना च मर्तान्।**
**राये च नः स्वपत्याय देव दितिं च रास्वादितिमुरुष्य ॥ ११ ॥**

चित्तिम्[११]। ज्ञातव्यम्[१२]। अज्ञातव्यं[१३] च। विद्वानग्निः[१४]। पृथक्[१५] करोतु। 'पृष्ठं स्पृशतेः'[१६] पशव[१७] उच्यन्ते, पशूनिव[१८]। विविक्तान्[१९] करोतु, कान्तस्वभावान्[२०]। पापकृतः[२१]। च। मनुष्यान्[२२]।

---

१. ०माणं P.
२. प्रीतः Sy.
३. भवेत् Sy.
४. यज्ञम् M. and P. होत्रा स होता यजमानः Sy.
५. सु M. and P.
६. युतम M. and P.
७. तस्य यजमानस्य सम्बन्धिनो भवेम। असाम—अस्तेर्लोटि 'आडुत्तमस्य पिच्च' इत्याडागमः, उत्तमस्य पिद्वद्भावादनुदात्तत्वे धातुस्वरः Sy.
८. यजमानस्य Sy.
९. ०रन्ते M. अग्निपरिचर्या कुर्वतः। विघतः—'विध विधाने'। तुदादिः। 'शतुरनुमः०' इति विभक्तेरुदात्तत्वम् Sy.
१०. Omitted in P. होत्रादयः वृधासः यज्ञस्य वर्धयितारो भवन्ति Sy.
११. चित्तिमचित्ति is added after चित्तिम् in M. in a different hand. चित्तम् P.
१२. पुण्यं, यद्वा ज्ञानम्। चित्तिम्—'चिती संज्ञाने'। स्त्रियां क्तिन्, नित्त्वादाद्युदात्तः Sy. प्रतीतिम् BB.
१३. अनुपादेयत्वेनाचेतनीयं पापम्। यद्वा अचित्तिमज्ञानम् Sy. अप्रतीतिं चास्माकम् BB.
१४. प्राणिनां पुण्यपापरूपाणि कर्माणि जानानः सोऽग्निः Sy. यस्मादयं विद्वान् ज्ञातुं समर्थः BB.
१५. M. omits words between ज्ञातव्यम् and पृथक्॥ विचिनोतु। चिनवत्—चिनोतेर्लेटचडागमः Sy. विचिनुयात्। स्खलितास्खलितं निरूप्य स्वयमेव परिहरत्विति भावः। पूर्ववल्लेटचडागमः BB.
१६. ०शते M. N. 4. 3.
१७. पशवः P.
१८. तत्र दृष्टान्तः—यथाश्वपालोऽश्वानां पृष्ठा पृष्ठानि हेयोपादेयत्वेन पृथक्करोति तद्वत् Sy. किमिव।...पृष्ठानि, उपलक्षणत्वात् स्वाङ्गानि च सर्वाणि, अपकर्माणि प्रत्यक्षं वेदितुं समर्थ इति BB.
१९. कान्त० M. 'कान्तानि Sy. कानि तानि, विकलानि कर्माणि BB.
२०. दुर्वहाणि Sy.
२१. पुण्यकृतोऽपुण्यकृतश्च पृथक्करोतु Sy. मर्ता मरणधर्मणश्चास्मान् भाव्यमानप्रमादान् विद्वान्। क्षमाकारणमिदम् BB.
२२. अस्मान् Sy. स त्वं हे देव!...अस्माकम् BB.

एवं कृत्वा । अस्मभ्यम्[1] । शोभनापत्याय[2] । धनाय[3] । देवम्[4]=कारणम् । प्रयच्छ[5] । अदेवम्[6] । च । अस्मत्तः पृथक्[7] कुरु, इति[8] ।

कविं शशासुः कवयोऽदब्धा निधारयन्तो दुर्यास्वायोः ।
अतस्त्वं दृश्याँ अग्न एतान्पड्भिः पश्येरद्भुताँ अर्य एवैः ॥ १२ ॥

कविम्[9] । कविमग्निम् । 'एतद्[10] दातव्यम्' 'एतत् कर्तव्यम्' इति वदन्ति[11] । कवयः[12] । अहिंसिताः[13] । नियमेन[14] धारयन्तः[15] । गृहेषु । यजमानस्य[16] । तथा[17] सति । त्वम् । अनुग्राह्यान्[18] । अग्ने[19] ! एतान्[20] यजमानान्[21] । अद्भुतान्[22] । गमनस्वभावैः[23] । ज्वालाख्यैः[24] पादैः । द्रष्टुमर्हसि[25] । स्वामी[26] ।

---

१. अस्मान् Sy. स त्वं हे देव ! . . . अस्माकम् BB.

२. शोभनपुत्रोपेताय Sy. शोभनापत्यत्वाय BB.

३. धनवत्त्वाय BB.

४. देयम् P. M. omits words between मनुष्यान् and कारणम् ॥ दातारम् । दितिम्—'दाण् दाने' । कर्तरि क्तिन् Sy. यद् देयं तत् । . . . ददातेः—कर्मणि क्तिन् । छान्दसमित्वम् BB.

५. देहि । रास्व—'रा दाने' । लोटि व्यत्ययेनात्मनेपदम्, 'चवायोगे प्रथमा' इति न निघातः Sy. रातेर्व्यत्ययेनात्मनेपदम् BB.

६. अदेयम् P. अदितिम्—पञ्चम्यर्थे द्वितीया । अदातुः सकाशात् Sy. अदितिमखण्डनं च BB.

७. प्र P. रक्ष Sy. कुरुष्वेति यावत् । उरुष्यतिः कण्ड्वादिः BB.

८. VM. ignores देव ॥ देव ! हे अग्ने ! Sy. This stanza=TS. 5. 5. 4. 4.

९. मेधाविनं त्वाम् Sy.

१०. एत P.

११. होता भवेति शशंसुः Sy.

१२. क्रान्तदृशो देवाः Sy.

१३. केनाप्यतिरस्कृताः Sy.

१४. निमयेन P.

१५. निवसन्तः Sy.

१६. मनुष्यस्य Sy.

१७. M. omits words between अहिंसिताः and तथा ।

१८. दर्शनीयान् । दृश्यान्—'दृशिर् प्रेक्षणे' । 'ऋदुपधाच्चाक्लृपिचृतेः' (Pa. 3. 1. 110)इति कर्मणि क्यप् । कित्त्वादगुणः । पित्त्वादनुदात्तत्वे धातुस्वरः Sy.

१९. अने M.

२०. एकास्यन् P. देवान् Sy.

२१. ०मान P.

२२. भूतान् P. आश्चर्यरूपोपेतानिन्द्रादीन् Sy.

२३. गमनशीलैः Sy.

२४. पादैः स्वतेजोभिः Sy.

२५. M. puts a few dots...... after ०र्हसि, although nothing seems to have been omitted. पश्येः जानीयाः Sy.

२६. त्वामी P. यज्ञस्य स्वामी Sy.

रममाणः[1] । प्रियः[2] । एव । भवति[3] । यज्ञः[4] । सः[5] युवतम[6] ! देवानाम् । स्याम[7] च । यस्य[8] वयम् । परिचरन्तः[9] । वर्धकाः[10] ।

**चित्तिमचित्तिं चिनवद्वि विद्वान्पृष्ठेवं वीता वृजिना च मर्तान् ।**
**राये चं नः स्वपत्यायं देव दितिं च रास्वादितिमुरुष्य ॥ ११ ॥**

चित्तिम्[11] । ज्ञातव्यम्[12] । अज्ञातव्यं[13] च । विद्वानग्निः[14] । पृथक्[15] करोतु । 'पृष्ठं स्पृशतेः'[16] पशव[17] उच्यन्ते, पशूनिव[18] । विविक्तान्[19] करोतु, कान्तस्वभावान्[20] । पापकृतः[21] । च । मनुष्यान्[22] ।

---

१. ०माणं P.
२. प्रीतः Sy.
३. भवेत् Sy.
४. यज्ञम् M. and P. होत्रा स होता यजमानः Sy.
५. सु M. and P.
६. युतम M. and P.
७. तस्य यज्ञमानस्य सम्बन्धिनो भवेम । असाम—अस्तेर्लोटि 'आडुत्तमस्य पिच्च' इत्याडागमः, उत्तमस्य पिद्वद्भावादनुदात्तत्वे धातुस्वरः Sy.
८. यजमानस्य Sy.
९. ०रन्ते M. अग्निपरिचर्यां कुर्वतः । विधतः—'विध विधाने' । तुदादिः । 'शतुरनुमः०' इति विभक्तेरुदात्तत्वम् Sy.
१०. Omitted in P. होत्रादयः वृधासः यज्ञस्य वर्धयितारो भवन्ति Sy.
११. चित्तिमचित्ति is added after चित्तिम् in M. in a different hand. चित्तम् P.
१२. पुण्यं, यद्वा ज्ञानम् । चित्तिम्—'चिती संज्ञाने' । स्त्रियां क्तिन्, नित्त्वादाद्युदात्तः Sy. प्रतीतिम् BB.
१३. अनुपादेयत्वेनाचेतनीयं पापम् । यद्वा अचित्तिमज्ञानम् Sy. अप्रतीतिं चास्माकम् BB.
१४. प्राणिज्ञां पुण्यपापरूपाणि कर्माणि जानानः सोऽग्निः Sy. यस्मादयं विद्वान् ज्ञातुं समर्थः BB.
१५. M. omits words between ज्ञातव्यम् and पृथक् ॥ विचिनोतु । चिनवत्—चिनोतेर्लेटचडागमः Sy. विचिनुयात् । स्खलितास्खलितं निरूप्य स्वयमेव परिहरत्विति भावः । पूर्ववल्लेटचडागमः BB.
१६. ०शते M. N. 4. 3.
१७. पशंवः P.
१८. तत्र दृष्टान्तः—यथाश्वपालोऽश्वानां पृष्ठा पृष्ठानि हेयोपादेयत्वेन पृथक्करोति तद्वत् Sy. किमिव ।...पृष्ठानि, उपलक्षणत्वात् स्वाङ्गानि च सर्वाणि, अपकर्माणि प्रत्यक्षं वेदितुं समर्थ इति BB.
१९. कान्त० M. 'कान्तानि Sy. कानि तानि, विकलानि कर्माणि BB.
२०. दुर्वहाणि Sy.
२१. पुण्यकृतोऽपुण्यकृतश्च पृथक्करोतु Sy. मर्ता मरणधर्मणश्चास्मान् भाव्यमानप्रमादान् विद्वान् । क्षमाकारणमिदम् BB.
२२. अस्मान् Sy. स त्वं हे देव !...अस्माकम् BB.

एवं कृत्वा । अस्मभ्यम्[१] । शोभनापत्याय[२] । धनाय[३] । देवम्[४]=कारणम् । प्रयच्छ[५] । अदेवम्[६] । च । अस्मत्तः पृथक्[७] कुरु, इति[८] ।

**क॒विं शं॑शासुः क॒वयोऽद॑ब्धा निधा॒रय॑न्तो॒ दुर्या॑स्वा॒योः ।**
**अ॒त॒स्त्वं दृश्याँ॑ अग्न ए॒तान्प॒ड्भिः प॑श्ये॒रद्भु॑ताँ अ॒र्य एवैः॑ ॥ १२ ॥**

कविम् । कविमग्निम्[९] । 'एतद्[१०] दातव्यम्' 'एतत् कर्तव्यम्' इति वदन्ति[११] । कवयः[१२] । अहिंसिताः[१३] । नियमेन[१४] धारयन्तः[१५] । गृहेषु । यजमानस्य[१६] । तथा[१७] सति । त्वम् । अनुग्राह्यान्[१८] । अग्ने[१९] ! एतान्[२०] यजमानान्[२१] । अद्भुतान्[२२] । गमनस्वभावैः[२३] । ज्वालाख्यैः[२४] पादैः । द्रष्टुमर्हसि[२५] । स्वामी[२६] ।

---

१. अस्मान् Sy. स त्वं हे देव ! . . . अस्माकम् BB.

२. शोभनपुत्रोपेताय Sy. शोभनापत्यत्वाय BB.

३. धनवत्त्वाय BB.

४. देयम् P. M. omits words between मनुष्यान् and कारणम् ॥ दातारम् । दितिम्—'दाण् दाने' । कर्तरि क्तिन् Sy. यद् देयं तत् । . . . ददातेः—कर्मणि क्तिन् । छान्दसमित्वम् BB.

५. देहि । रास्व—'रा दाने' । लोटि व्यत्ययेनात्मनेपदम्, 'चवायोगे प्रथमा' इति न निघातः Sy. रातेर्व्यत्ययेनात्मनेपदम् BB.

६. अदेयम् P. अदितिम्—पञ्चम्यर्थे द्वितीया । अदातुः सकाशात् Sy. अदितिमखण्डनं च BB.

७. प्र P. रक्ष Sy. कुरुष्वेति यावत् । उरुष्यतिः कण्ड्वादिः BB.

८. VM. ignores देव ॥ देव ! हे अग्ने ! Sy. This stanza=TS. 5. 5. 4. 4.

९. मेधाविनं त्वाम् Sy.

१०. एत P.

११. होता भवेति शशंसुः Sy.

१२. क्रान्तदृशो देवाः Sy.

१३. केनाप्यतिरस्कृताः Sy.

१४. निमयेन P.

१५. निवसन्तः Sy.

१६. मनुष्यस्य Sy.

१७. M. omits words between अहिंसिताः and तथा ।

१८. दर्शनीयान् । दृश्यान्—'दृशिर् प्रेक्षणे' । 'ऋदुपधाच्चाक्लृपिचृतेः' (Pa. 3. 1. 110) इति कर्मणि क्यप् । कित्त्वादगुणः । पित्त्वादनुदात्तत्वे धातुस्वरः Sy.

१९. अग्ने M.

२०. एकास्यन् P. देवान् Sy.

२१. ०मान P.

२२. भूतान् P. आश्चर्यरूपोपेतानिन्द्रादीन् Sy.

२३. गमनशीलैः Sy.

२४. पादैः स्वतेजोभिः Sy.

२५. M. puts a few dots...... after ०र्हसि, although nothing seems to have been omitted. पश्येः जानीयाः Sy.

२६. त्वामी P. यज्ञस्य स्वामी Sy.

त्वमंग्ने वाघते सुप्रणीतिः सुतसोमाय विधते यविष्ठ ।
रत्नं भर शशमानाय घृष्वे पृथु श्चन्द्रमवसे चर्षणिप्राः ॥ १३ ॥

त्वमग्ने[1] । त्वम् । अग्ने ! यज्ञस्य[2] वोढ्रे[3] । सुप्रणयनः[4] । सुतसोमाय[5] । देवान् परिचरते[6] । युवतम् ! रत्नम्[7] । देहि[8] । भजमानाय[9] । हे घर्षणशील[10] ! विस्तीर्णम्[11] । ह्लादनकरम्[12] । रक्षणाय । मनुष्याणां[13] पूरयिता[14] ।

अधा ह यद्वयमंग्ने त्वाया पड्भिर्हस्तेभिश्चकृमा तनूभिः ।
रथं न क्रन्तो अपसा भुरिजोर्ऋतं येमुः सुध्यं आशुषाणाः ॥ १४ ॥

अधा[15] । अथ[16] । खलु । यदा[17] । वयम् । अग्ने ! त्वत्कामनया । पादैः । हस्तैः[18] । अङ्गैश्चान्यैः[19] । कर्म कृतवन्तः । रथम् । इव[20] । कुर्वन्तः[21] ।

---

१. त्वमग्ने वाघते is written over the line in M. in a different hand.

२. सर्वमेवं य० P. ३. बोढ्रो P. यज्ञनिर्वाहकाय यजमानाय Sy.

४. सुष्ठूत्तरवेद्यां प्रणयनीयः । सुप्रणीतिः—'णीञ् प्रापणे' । कर्मणि क्तिन् । 'तादौ च निति कृति०' इत्यनन्तरप्रशब्दस्योदात्तत्वम् Sy.

५. M. omits words between त्वम् and सुत ।

६. तव परिचरणं कुर्वते Sy.

७. उत्तमं धनम् Sy.

८. आहर प्रयच्छेत्यर्थः Sy.

९. त्वां स्तुवते Sy.

१०. वर्ष० M. and P. दीप्तियुक्त ! यद्वा परेषां घर्षणशील ! Sy.

११. प्रभूतम् Sy.

१२. आह्लादकारि । पृथुश्चन्द्रम्—इत्यत्र संहितायां 'ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे' इति सुडागमः । श्चुत्वेन शकारः Sy.

१३. ०ष्यानां P. अपेक्षितप्रदानेन मनुष्याणां कामपूरकः Sy.

१४. Omitted in M.

१५. अथ ह यत् in M. is written in a different hand.

१६. अधा—संहितायां 'निपातस्य च' इति दीर्घः Sy.

१७. यस्मात् कारणात् कर्मसिद्धचर्थं त्वामुपपादयामस्तस्मात् Sy.

१८. M. omits words between अथ and हस्तैः ।

१९. अन्यैश्चावयवैः Sy.

२०. तत्र दृष्टान्तः, यथा Sy.

२१. कारवः शिल्पिनः क्रामन्तोऽध्वगा वा हस्तयोर्यथा रथमुद्यच्छन्ति तद्वत् । यद्वा भुरिजोः । देवान् मनुष्यांश्च बिभृत इति भुरिजौ द्यावापृथिव्यौ । तयोर्मध्येऽपसा परिचरणकर्मणा सत्यभूतं तमग्निं येमुरुद्यच्छन्ति । क्रन्तः—करोतेः शतरि 'बहुलं छन्दसि' इति विकरणस्य लुक् । प्रत्ययस्वरः Sy.

बाह्वोः[1] । वेगेन[2] । तदानीं यज्ञम्[3] । आत्मनि यच्छन्ति[4] । शोभनाध्याना[5] देवाः । व्यापनशीलाः[6] ।

**अधा मातुरुषसः सप्त विप्रा जायेमहि प्रथमा वेधसो नॄन् ।**
**दिवस्पुत्रा अङ्गिरसो भवेमाद्रिं रुजेम धनिनं शुचन्तः ॥ १५ ॥**

अधा[7] । अग्निं सप्ताङ्गिरसः प्रार्थयन्ते[8]—अथ[9] वयम् । नृणां मातुः । उषसः[10] । सप्त[11] । विप्राः[12] । प्रथमाः[13] । स्रष्टारः[14] । मनुष्यान् सर्वान्[15] । जनयामः[16] । तथा द्युलोकस्य[17] । पुत्राश्च[18] । भवेम[19] । अङ्गिरसः । तथा शिलोच्चयं[20] च । रुजेम[21] । पणिभिरपहृतैर्गोभिस्तद्वन्तम्[22] । दीप्यमानाः[23] ।

---

१. भुरिजोः । बिभृतः कर्मकरणसामर्थ्यं पदार्थान् वेति भुरिजौ बाहू, तयोः । भुरिजोः—'डुभृञ् धारणपोषणयोः' । 'भृञ उच्च' इतीजिप्रत्ययः । धातोरुकारो रपरः । प्रत्ययस्वरः Sy.
२. मन्थनाख्येन कर्मणा Sy.
३. सत्यभूतं त्वाम् Sy.
४. उद्यच्छन्ति Sy.
५. ०ध्यान M. ०ध्या P. सुकर्माणः Sy.
६. व्यापशीलाः P. M. omits देवाः व्यापनशीलाः ॥ कर्माणि व्याप्नुवन्तस्तेऽङ्गिरसः Sy.
७. M. omits it. अधः P.
८. प्रार्थ्यं० P. वामदेवोऽन्यैः षड्भिरङ्गिरोभिः सह ब्रूते Sy.
९. M. omits words between अग्निं and अथ ॥ अपि च Sy.
१०. उषसः सकाशात् Sy.
११. सप्तसंख्याकाः Sy.
१२. प्राज्ञा वयं स्मः Sy.
१३. श्रेष्ठा वयम् Sy.
१४. अग्नेः परिचारकान् । वेधसः—'डुधाञ् धारणपोषणयोः' इत्यस्माद् 'विधाञो वेध च' (Uṇādi. 4. 664.) इत्यसिप्रत्ययः । धातोर्वेध इत्यादेशः Sy.
१५. वेधसो विधातॄन् रश्मीन् वा Sy.
१६. ०यामासुः P. वयं जनयामः । जायेमहि—'जनी प्रादुर्भावे' । लिङि 'ज्ञाजनोर्जा' इति जादेशः Sy.
१७. ०कश्च P. द्योतमानस्यादित्यस्य Sy.
१८. ०त्रश्च P. पुत्रा वयम् । दिवस्पुत्राः—इत्यत्र संहितायां 'षष्ठ्याः पतिपुत्र०' इति विसर्जनीयस्य सत्वम् Sy.
१९. भूतिमन्तः स्याम Sy.
२०. मेघम् Sy.
२१. वर्षार्थं भिन्द्याम । यद्वा धनिनं पणिनामकासुरापहृतगोधनयुक्तमद्रिं पर्वतं रुजेम । अङ्गिरसामादित्यपुत्रत्वमेवमाम्नायते 'तस्य यद्रेतसः प्रथममुददीप्यत तदसावादित्योऽभवत्' इत्युपक्रम्य 'येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्' (AB. 3. 34.) इति । रुजेम—'रुजो भङ्गे' अदादिः । लिङि रूपम् Sy.
२२. धनिनम् उदकवन्तम् Sy.
२३. M. omits words between तथा शिलो and मानाः ।

अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशुषाणाः ।
शुचीदयन्दीधितिमुक्थशासः क्षामा भिन्दन्तो अरुणीरप व्रन् ॥१६॥

अधा यथा नः[1]। अथ[2]। यथा[3]। अस्माकम्। पितरः[4]। पूर्वे[5]। पूर्वतरे[6] च। अग्ने! यज्ञम्[7]। अश्नुवाना[8] आसन्। तथा[9] शुचि[10]। एव[11]। तेजः[12]। प्राप्नुवन्[13]। उक्थानां शंसितारः[14]। तथा क्षयकरं शिलोच्चयम्[15]। अभिन्दन्[16]। गाश्च[17]

---

१. P. omits the *pratīka*.

२. अपि च Sy. अथानन्तरम् Mah. अथैवं सति U. अत एव कर्मसामर्थ्यात् BB. ३. यथावत् Sy. येन प्रकारेण Mah. ४. अङ्गिरसः Sy.

५. श्रेष्ठाः Sy. कीदृशाः पितरः ? परा उत्कृष्टाः Mah. परा एव परासः। उत्कृष्टाः U. पूर्वे पितरः BB.

६. पुराणाः Sy., Mah. प्रत्नशब्दः पुराणवचनः U. ततोऽपि पूर्वे पितरः BB. ७. यज्ञाय M. सत्यभूतं यज्ञम् Sy. सत्यं यज्ञं वा BB.

८. व्याप्नुवन्तः Mah., U.

९. एवंभूताः पितरो यथा देवयानं पन्थानं प्राप्तास्तथा वयमपि Mah. एवं वयमपि U.

१०. वचि P. दीप्तं स्थानम् Sy. सुपो लोपः। शुचि निर्मलम् Mah. अविभक्तिको निर्देशः। शुचि दीप्तं भास्वरम् U. ते च शुचि शुद्धं स्थानम् BB.

११. अव P. इदेवार्थे Mah. इच्छब्द एवार्थे U. इदित्यवधारणे BB.

१२. दीधितिम्—'दीधीङ् दीप्तिदेवनयोः' इत्यस्मात् क्तिनि ह्रस्वश्छान्दसः। नित्त्वादाद्युदात्तः Sy. रविमण्डलमेव Mah. आदित्यरश्मिम्। तत आदित्यमण्डलम्। एष हि देवयानः पन्थाः U. दीधितिं स्थानं तद्योगात्ताच्छब्द्यम् BB.

१३. अगच्छन्। अयन्—'इण् गतौ'। लङि 'इणो यण्' इति यण्। व्यत्ययेन अडागमः Sy. प्राप्ताः। 'अय गतौ' Mah. आगताः U. शुच्येव स्थानं यथाऽयन् आगच्छन् BB.

१४. उक्थानां शस्त्राणां शंसितारः। उक्थशासः—उक्थशब्दे उपपदे 'शंसु स्तुतौ' इत्यस्मात् 'मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्' (P. 3. 2. 71.) इति ण्विन्। नकारलोपश्च निपातनादेव। पदकाले ह्रस्वश्छान्दसः Sy. यज्ञेषूक्थानि शस्त्राणि शंसन्ति वदन्ति त उक्थाशसः। क्विप्। संहितायां दीर्घः Mah. उक्थानि ये शंसन्ति यज्ञेषु त उक्थशासः। पितॄणां विशेषणमेतत् U. उक्थैः स्तोत्रैः BB.

१५. क्षयकारणं तमः पापं वा Sy. क्षामां भूमिम् Mah. त्वत्प्रसादात् क्षामा... क्षामा अविभक्तिको निर्देशः। क्षामां पृथिवीम् U.

१६. ०न्दन्दो P. विनाशयन्तोऽङ्गिरसः Sy. वेदिचात्वालयूपावटोपलादिखननैर्विदारयन्तः। सर्वोपकरणैर्यज्ञं कुर्वन्त इत्यर्थः Mah. वेदिचात्वालयूपावटादिखननैः यद्वा पृथिव्याश्रयाणि यज्ञे व्रीहिपशुयूपादीनि भिन्दन्तः। यज्ञं सर्वोपकारकमनुतिष्ठन्त इत्यर्थः U.

१७. अरुणवर्णाः पणिभिरपहृता गा उषसो वा Sy. अरुणवर्णाम् Mah. आरोचनाः U.

पणिभिरपहृता[1]श्च[2] । अपावृण्व[3]न्निति ।

**सुकर्माणः सुरुचो देवयन्तोऽयो न देवा जनिमा धमन्तः ।**
**शुचन्तो अग्निं ववृधन्त इन्द्रमूर्वं गव्यं परिषदन्तो अग्मन् ॥ १७ ॥**

सुकर्माणः[4] । शोभनकर्मदीप्तिकाः[5] । देवानिच्छन्तः[6] । लोहपिण्डम्[7] । इव । असुरजातम्[8] । अग्निना धमन्तः[9] । देवाः[10] । अग्निम् । दीपयन्तः[11] । वर्धयन्तः[12] । इन्द्रम् । उरुम्[13] । गोसङ्घम्[14] । परितः[15] सीदन्तः । लब्धवन्तः[16] ।

---

१. M. omits words between क्थानां and रप ।

२. हृतात्म M.

३. वा वृण्व० M. प्रकाशितवन्त इत्यर्थः Sy. सूर्यदीधितिमपवृन्, अपवृणुमः । सूर्यरश्मीनपवृत्य देवयानमार्गं प्राप्नुम इत्यर्थः । 'वृञ् वरणे' Mah. रश्मीन् ...अपवृणुमः । अपवृत्य च रश्मीन् देवपन्थानमनुतिष्ठाम इत्यर्थः U. This stanza=YV. 19.69. = TS. 2. 6. 12. 4.

४. आग्रयण आग्नेन्द्रस्य हविषः 'सुकर्माणः' इति याज्या । सूत्रितञ्च—'सुकर्माणः सुरुचो देवयन्तो विश्वे देवास आ गत' (ASS. 2. 9.) इति Sy.

५. VM. seems to explain सुकर्माणः and सुरुचः together as शोभनकर्मदीप्तिकाः ॥ सुष्ठ्वनुष्ठितयागादिकर्माणः । शोभनदीप्तयः । सुकर्माणः—'सोर्मनसि०' इत्युत्तरपदाद्युदात्तत्वम् Sy.

६. देवान् कामयमानाः Sy.

७. तत्र दृष्टान्तः—यथा कर्मारा अयो भस्त्रेण धमन्ति तद्वत् Sy.

८. सुर० P. स्वकीयं मानुषं जन्म Sy.

९. यागादिलक्षणेन कर्मणा निर्मलीकुर्वन्तः । धमन्तः—'ध्मा शब्दाग्निसंयोगयोः' । शतरि पाघ्रादिना धमादेशः । शपः पित्त्वादनुदात्तत्वे शतुर्लसार्वधातुकस्वरः Sy.

१०. देवनशीलाः स्तोतारः Sy.

११. हविर्भिर्दीपयन्तः Sy.

१२. सोमेन स्तुत्या वा वर्धयन्तोऽङ्गिरसः । ववृधन्तः—'वृधु वर्धने' । व्यत्ययेन परस्मैपदम् । शतरि शपः श्लुः Sy.

१३. महान्तम् Sy.

१४. गव्यम्—गवां समूह इत्यर्थे 'खलगोरथात्' इति यः Sy.

१५. M. omits words between देवाः and परितः ॥ परितः सीदन्तः सन्तः Sy.

१६. प्राप्नुवन् । अग्मन्—गमेर्लुङि च्लेर्लुकि रूपम् Sy.

आ यू॒थेव॑ क्षु॒मति॑ प॒श्वो अ॑ख्यद्दे॒वानां॒ यज्जनि॒मान्त्यु॑ग्र ।
मर्ता॑नां चिदु॒र्वशी॑रकृप्रन्वृ॒धे चि॑द॒र्य उप॑रस्या॒योः ॥ १८ ॥

आ यूथेव । यथा । कश्चित् क्षुधायुक्ते जने[1] । अभिलक्षणार्थं[2] यूथानि,[3] आचष्ट,[4] एवम्[4] । पशून्[5] । आचष्ट[6] । यत्[7] । देवानाम्[8] । जनिम[9]=जातिः[10] । पर्वस्यान्तिक[11] आसीत् । हे उग्र[12] ! 'मनुष्येष्वमी[13] भवतां पशवः' इत्यूचुः । अथ । मर्त्यानाम्[14] । या ऊरुभ्यामश्नुवानाः[15] प्रजाः ताः[16] । पशुलाभात् क्लृप्ता[17] आसन् । तथा[18] । पशुलाभात् स्वामी[19] च । मनुष्यस्य[20] । उप्तस्य[21]=बालजनस्य[22] । वर्धनायाऽऽसीदिति[23] ।

---

१. अन्नवत्याढ्यगृहे वर्तमानानि पश्यन्ति जनास्तद्वत् । यद्वा हे अग्ने ! तव परिचारकोऽङ्गिरोगणो देवानामिन्द्रादीनां यज्जनिम योऽयं जनोऽन्ति मदन्तिके पश्वः पणिभिरपहृतान् पशूनाख्यत् समन्तात् पश्यति । तत्र दृष्टान्तः—यथा क्षुमति शब्दं कुर्वाणे गवां यूथा यूथे पशून् पश्यन्ति तद्वत् । क्षुमति—क्षुत् इत्यन्ननाम' । यद्वा 'टुक्षु शब्दे' । भावे क्विप् । छान्दसस्तकारलोपः । 'तदस्यास्ति०' इति मतुप् । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् Sy.

२. ०णार्त्थं P.

३. यूथेव—शसः सप्तम्या वा डादेशः Sy.

४. आप यष्ट एवम P.

५. पशूनां गवां यूथानि Sy.

६. आ समन्तादिन्द्रोऽपश्यत् । अख्यत्—'ख्या प्रकथने' । लुङि च्लेः 'अस्यतिवक्तिख्यातिभ्योऽङ्' इत्यङादेशः । आतो लोपः Sy.

७. य P.

८. 'अङ्गिरसां सम्बन्धि Sy.

९. जन्म P. यं गोसङ्घम् । जनिम—'जनी प्रादुर्भावे' । 'हृजनिभ्यामिमनिन्' इतीमनिन्प्रत्ययः । नित्त्वादाद्युदात्तः Sy.

१०. जाति P.

११. समीपे Sy.

१२. तेजस्विन् ! हे अग्ने ! Sy.

१३. M. omits words between यत् and मनुष्ये० ।

१४. मनुष्याणाम् Sy.

१५. उरु० P. उर्वभ्यश्नुत ऊरुभ्यामश्नुते (N. 5. 13.) इति यास्कः Sy.

१६. ता P.

१७. करप्ता M. करस्ता P. ताभिरानीताभिर्गोभिः क्लृप्ताः समर्था अभवन् । अकृप्रन्—'कृपू सामर्थ्ये'। लङि 'बहुलं छन्दसि' इति विकरणस्य लुक् । रुडागमः Sy.

१८. अपि च Sy.

१९. लब्धगोधनः Sy.

२०. ०नुष्य P. भृत्यादेश्च पोषणे समर्थो भवति Sy.

२१. निर्विक्तस्यापत्यस्य Sy.

२२. M. omits words between तथा and बाल०

२३. ०सीदति P. समर्थो भवति Sy.

अकर्म ते स्वपसो अभूम ऋतमवस्रन्नुषसो विभातीः ।
अनूनमग्निं पुरुधा सुश्चन्द्रं देवस्य मर्मृजतश्चारु चक्षुः ॥ १६ ॥

अकर्म[1] ।[2] कृतवन्तः[3] । तुभ्यं कर्म[4] । सुकर्माणश्च[5] । अभूम, फललाभात् । तेजः सत्यभूतम्[6] । आच्छादयन्ति[7] । उषसः । व्युच्छन्त्यः[8] । उषस्सु च परिपूर्णम्[9] । अग्निम्[10] । शोभनकान्तिम्[11] । बहुधा । स्वतेजसा मर्मृजतः[12] । देवस्याऽऽदित्यस्य[13] । कल्याणम्[14] । तेजः ।

एता ते अग्न उचथानि वेधोऽवोचाम कवये ता जुषस्व ।
उच्छोचस्व कृणुहि वस्यसो नो महो रायः पुरुवार प्र यन्धि ॥ २० ॥

एता । एतानि । तुभ्यम् । अग्ने ! स्तोत्राणि[15] । सर्वस्य विधातः[16] ! उक्तवन्तः[17] । कान्ताय[18] । तानि[19] । त्वं सेवस्व । उद्दीपयस्व[20] । कुरु च[21] । अस्मान्[22] । श्रेयसः[23] ? तदर्थम्[24] । हे

---

१. ०कर्मः P.
२. हे अग्ने ! Sy.
३. कुर्मः । अकर्म—करोतेर्लङि 'बहुलं छन्दसि' इति विकरणस्य लुक् Sy.
४. कम P.
तव परिचरणम् Sy.
५. ०कर्मण० P. तेन कर्मणा स्वपसः शोभनकर्माणः Sy.
६. ०भूतमूताम् M.
७. च्छादितवृत्य P.
धारयन्तीत्यर्थः Sy.
८. व्युच्छ P.
६. तथा ता उषसः सम्पूर्णम् Sy.
१०. M. omits words between च्छादयन्ति and अग्निम् ॥ आच्छादयन्ति धारयन्ति Sy.
११. सुष्ठ्वाह्लादकारिणं यद्वा सुहिरण्यम् Sy.
१२. ममृज्जते M. ममृजते P. परिचरन्तो 'वयं स्वपसोऽभूमेति पूर्वेणान्वयः । मर्मृजतः—'मृजूष् शुद्धौ'। यङ्लुकि 'रुग्रिको च लुकि', इत्यभ्यासस्य रुगागमः । शतरि 'नाभ्यस्ताच्छतुः' इति नुमभावः । अभ्यस्तस्वरः Sy.
१३. किञ्च द्योतमानस्य तव Sy.
१४. मनोहरम् Sy.
१५. उक्थानि शस्त्राणि Sy.
१६. विधाः P.
१७. अवोचाम—'वच परिभाषणे' । लुङि च्लेरङादेशः । पादादित्वादनिघातः Sy.
१८. मेधाविने Sy.
१६. M. omits words between स्तोत्राणि and तानि ।
२०. उदी० P.
२१. वा M.
२२. अस्मा P.
२३. Reading doubtful. श्रेयसः is suggested for ज्ञेयसः ॥ अतिशयेन धनयुक्तान् । वस्यसः—वसुमच्छब्दादीयसुनि 'विन्मतोर्लुक्' इति मतुपो लुकि टिलोपे च कृते ईकारलोपश्छान्दसः Sy.
२४. तदर्थ P.

बहुभिर्वरणीय ! महान्ति[1] । धनानि[2] । प्रयच्छ[3] ।

## IV.3.

**आ वो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः ।**
**अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ॥ १ ॥**

[4]आ वो राजानम्[5] । [6]अभिमुखम् । यूयम्[7] । कुरुध्वम्[8] । यज्ञस्य[9] । स्वामिनम्[10] । देवानां स्तोतारम्[11] । प्रजानां ह्वातारम्[12] । सत्येन[13], द्यावापृथिव्योः, पूजयितारम्[14] । अग्निम्[15] । प्रागेव[16] ।

---

१. महत् Sy.

२. धनम् Sy.

३. M. puts a few dots...after प्रयच्छ although nothing seems to have been omitted. अस्मभ्यं प्रयच्छ । यन्धि—यमेर्लोटि 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'वा छन्दसि' इति हेर्विकल्पेन पित्वात् 'अङितश्च' इति धिरादेशः Sy.

४. 'आ वो राजानम्' इति षोडशर्चं तृतीयं सूक्तं वामदेवस्यार्षं त्रैष्टुभमाग्नेयम् । 'आ वः षोळश' इत्यनुक्रान्तम् (KSA. 20. 3. p. 17.) । प्रातरनुवाकाश्विनशस्त्रयोर्विनियोग उक्तः Sy.

५. P. omits it.

६. हे ऋत्विग्यजमानाः ! Sy., BB.

७. समन्तात् Sy.

८. युष्माकम् Sy.

९. हविर्भिरग्निं भजध्वम् । कृणुध्वम्—'कृवि हिंसाकरणयोः' लोटि रूपम् Sy. आत्मसात्कुरुध्वम् । शत्रुमारणादियुष्मदभिमतसिद्ध्यर्थं भजध्वमित्यर्थः । 'कृवि हिंसाकरणयोः' 'धिन्विकृण्व्योर च' इत्युप्रत्ययः । व्यत्ययेनात्मनेपदम् । करोतेर्वा व्यत्ययेन श्नुप्रत्ययः BB.

१०. अधिपतिम् Sy. प्रधानाधिपतिम् BB.

११. M. omits words between अभि and स्तोतारम् ॥ रोरूयमाणं द्रवन्तं शत्रून् रोदयन्तं वा । यद्वा 'एषा वा अग्नेस्तनूर्यद्रुद्रः' इति रुद्रात्मकम् । रुद्रम्—रोदयतेः 'रोदेर्णिलुक् च (Uṇādi. 2. 179.) इति रक्प्रत्ययः Sy.

१२. देवानामाह्वातारम् Sy. अभिमतानां दातारमाह्वातारं वा । 'बहुलं छन्दसि' इति सम्प्रसारणम् BB.

१३. VM. seems to explain सत्ययजम् and रोदस्योः together as सत्येन द्यावापृथिव्योः पूजयितारम् । सत्येन should immediately precede पूजयितारम् ।

१४. सत्यस्यान्नस्य दातारम्, यद्वा हविषा देवान् यजन्तम्, यद्वा रोदस्योर्व्याप्य वर्तमानम् Sy. सत्यस्यान्नस्य दातारम् । 'अन्येभ्योऽपि दृश्यते' इति विच्, कृदुत्तरपदप्रकृतिस्वरत्वम् । यद्वा सत्यममोघं यजनं यस्य । यद्वा सत्यमेव यजनं यस्य । यद्वा सत्यस्य परमार्थस्यानन्दलक्षणस्य सङ्गमयितारम् BB.

१५. अग्निरूपेणावस्थितम् BB.

१६. प्रागेव देवं भजध्वम् BB.

अचिन्तितागमनात्[1] । तनयित्नोः[2] । हिरण्यसरूपम्[3] । रक्षणार्थम्[4] । अन्यदर्थमाह[5]—तनयित्नुरिति मेघशब्दवद् भयङ्कर इति[6] ।

**अ॒यं योनि॑श्चकृ॒मा यं व॒यं ते॑ जा॒येव॒ पत्य॑ उश॒ती सु॒वासाः॑ ।**
**अ॒र्वा॒ची॒नः परि॑वीतो॒ नि षी॑दे॒मा उ॑ ते स्वपाक प्रती॒चीः ॥ २ ॥**

अयं योनिः[7][8] । अयम् । योनिः[9], वेदिरित्यर्थः[10] । यं[11] योनिम् । वयम् । कृतवन्तः[12] । तुभ्यम्[13] । यथा[14] जाया । भर्त्रे[15] । कामयमाना । शोभनवस्त्रा[16], स्वसमीपे स्थाने कल्पयति[17] । तथा सति, अस्मदभिमुखः[18] । ज्वालाभिः परिगतः[19] । तस्मिन्निषीद[20] । इमाः स्तुतयः[21] । ते[22] ।

---

१. न विद्यते चित्तं यस्मिन् तदचित्तम् । चित्तोपलक्षितसर्वेन्द्रियोपसंहारो मरणमिति यावत् । तस्मान्मरणात् Sy. चित्तस्याभावोऽचित्तमन्तःकरणोपसंहारो मरणमिति यावत् । यद्वा यस्मिन्सति चित्तं नास्ति तन्मरणमेव, ततः BB.

२. तनयित्नुरशनिः स ह्याकस्मिकः तत्सदृशात् । तनयित्नोः—'तनिः शब्दार्थश्चुरादिरदन्तः' 'स्तनिशुषिपुषिगमिमनिभ्यो णेरित्नुच्' (Uṇādi. 3.309.) इतीत्नुच्प्रत्ययः । चित्स्वरेणान्तोदात्तः । सुपा सहैकादेशे एकादेशस्वरः Sy. कीदृशादचित्तात् ? तनयित्नोः, तनयित्नुर्मेघस्तादृशात्, अनिश्चितकालत्वात् । 'स्तन शब्दे' । चुरादिरदन्तः BB.

३. ॰सतूपम् P. सुवर्णप्रभमेवंविधम् Sy. हिरण्यवर्णम् BB.

४. ॰णात्र्थम् P. वो युष्माकमवसे रक्षणाय तृप्तये वा BB.

५. अनर्थ॰ P.

६. M. omits words between रक्ष and इति ।

This stanza=TS. 1. 3. 14. 1.

७. योनिष्ट इन्द्र निषद इति मन्त्रः M. and P.

८. हे अग्ने ! Sy.

९. तव स्थानं भवति Sy.

१०. त्यर्थः P.

११. अयं M. उत्तरवेदिलक्षणं प्रवेशम् Sy.

१२. कृमः । चकृम—करोतेर्लिटि रूपम् । वाक्यभेदान्निघाताभावः Sy.

१३. त्वदर्थम् Sy.

१४. अथ M. तत्र दृष्टान्तः—यथा Sy.

१५. भत्रे P. पतिम् Sy.

१६. शोभनवस्त्रोपेता जाया स्वात्मसमीपे तस्य स्थानं करोति तद्वत् Sy.

१७. ॰यन्ति P.

१८. M. omits words between जाया and अस्मदभिमुखः ॥ अर्वाचीनः—'विभाषाञ्चेरदिक्०' इति खः Sy.

१९. यष्टव्यदेवैस्तेजोभिर्वा परिवीतः । परिवीतः—'व्येञ् संवरणे' । कर्मणि निष्ठा । यजादित्वात्सम्प्रसारणम् । 'गतिरनन्तरः' इति गतेः स्वरः Sy.

२०. उत्तरवेद्यामुपविश Sy.

२१. ज्वालाः स्तुतयो वा Sy.

२२. तत्र स्थितस्य तव Sy.

सुष्ठ्वपवक्तव्य[1]प्रज्ञ ! प्रतिमुखगमनाः[2][3] ।

**आशृण्वते अदृपिताय मन्म नृचक्षसे सुमृळीकाय वेधः ।**
**देवाय शस्तिममृताय शंस ग्रावेव सोता मधुषुद्यमीळे ॥ ३ ॥**

**आ शृण्वते** । स्तोतॄणामभिलषितमाभिमुख्येन शृण्वते[4] । दर्परहिताय[5] । पूजनीय[6] ! मनुष्याणां द्रष्ट्रे[7] । सुष्ठु सुखयित्रे[8] । हे वेधः[9] ! देवाय[10] । शस्तिं[11] शस्त्रम् । अमरणाय[12] । शंस इति होतार[13]मुद्गाताऽ[14]नुशास्ति । यथा[15] ग्रावाभिषवप्रवृत्तः । मधुरसस्य[16] । सोता[17], शब्दं करोति, एवमहम् । यमग्निम्[18] । सामभिः स्तौमि[19] ।

**त्वं चिन्नः शम्या अग्ने अस्या ऋतस्य बोध्यृतचित्स्वाधीः ।**
**कदा त उक्था सधमाद्यानि कदा भवन्ति सख्या गृहे ते ॥ ४ ॥**

**त्वं चित्** । त्वम् । एव । अग्ने ! अस्मान्[20] । यज्ञस्य[21] । अस्याः स्तुतेः[22] । कर्मणे[23], समर्थान्[24]

---

१. ०पक्तव्य० is suggested for ०पवक्तव्य० ॥ हे स्वपस्क ! सुकर्मन्नग्ने ! त्वम् Sy.
२. त्वदभिमुखाः प्रवर्तन्ते Sy.
३. VM. ignores उ ।
४. स्तोत्राकर्णनपराय । आशृण्वते—'शतुरनुमः०' इति विभक्तेरुदात्तत्वम् Sy.
५. अदृप्तायाप्रमत्ताय Sy.
६. ०नीया P. M. omits words between स्तोतॄणां and पूजनीय ॥ मन्म स्तोत्रम् Sy. ७. द्रष्टः M. नृणां द्रष्ट्रे Sy. ८. सुसुखाय Sy.
९. स्तोत्राणां कर्तर्हे स्तोतः ! Sy.
१०. तस्मा अग्नये Sy.
११. शास्ति M. शस्ति P. शस्त्रं च Sy.
१२. मरणधर्मरहिताय Sy.
१३. होता तमुद्गाता M.
१४. उद्गाताऽशास्ति P.
१५. तत्र दृष्टान्तः—यथा ग्रावा सोमस्य Sy.
१६. मदकरस्य सोमस्य सोता Sy.
१७. सातो P. तद्वत् सोमाभिषवं कुर्वाणो यजमानः Sy.
१८. M. omits words between ग्रावा and यमग्निम् ।
१९. स्तौति । तस्मै शंसेति समन्वयः । यद्वा । मधुषुत् सोमसुद्यजमानोऽग्निमीडे स्तौति । तत्र दृष्टान्तः । यथा ग्रावा सोमस्य सोता शब्दं करोति 'प्रैते वदन्तु प्र वयं वदाम ग्रावभ्यः' (RV. 10. 94. 1.) इत्यत्र ग्राव्णां शब्दकर्तृत्वं श्रुतमिति । ईळे—'ईड स्तुतौ' लटि 'लोपस्त आत्मनेपदेषु' इति तलोपः । यद्वा लिटि तशब्दस्य एशादेशो कृते रूपम् Sy. २०. अस्मत्सम्बन्धिनोऽस्या कर्मणो देवता भवसि Sy. २१. अस्मदीयं स्तोत्रम् Sy. २२. स्तुनेः M.
२३. शमीशब्दः कर्मनाम Ngh. 2. 1.
२४. ०मर्त्यान् P.

कुरु । कृत्वा च तां बुध्यस्व[1] । शोभनाध्यानैः[2] । कदा[3] । तव । उक्थानि[4] । मदीयानि देवैः सह मदननिमित्तानि[5] । भवन्ति[6] । सख्यानि । त्वदीयानि[7] । अस्माकं[8] गृहे[9] ।

**कुथा ह तद्वरुणाय त्वमंग्ने कुथा दिवे गर्हसे कन्न आगः ।**
**कुथा मित्राय मीळ्हुषे पृथिव्यै ब्रवः कदर्यम्णे कद्भगाय ॥ ५ ॥**

कथा ह । अग्ने ! त्वम् । अस्मदीयम् । एनः[10] । कथम्[11] । वरुणाय[12] । गर्हसे[13] । कथं[14] वा दिवे[15], 'एतैः[16] पापं कृतम्' इति गर्हा । किं[17] वा । अस्माकमेनः[18] । कथं[19] वा[20] । मित्राय । कामानां सेक्त्रे[21] । पृथिव्यं च[22] । अस्मान् ब्रूयाः[23] । किं[24] वा । अर्यम्णे[25] । भगाय[26] वेति[27] ।

---

१. ०ध्यस्वा P.
२. ०ध्यानं P. सुकर्मा सुध्यानो वा त्वम् Sy.
३. कस्मिन् काले Sy.
४. शस्त्राणि Sy.
५. M. omits words between शोभना० and निमित्तानि ॥ सहमदनिमित्तानि । सधमाद्यानि—मादयतेर्ण्यन्तस्य 'अचो यत्' इति यत् । 'सधमादस्थयोः०' इति सहस्य सधादेशः Sy.
६. भविष्यन्ति । भवन्ति—'विभाषा कदाकर्ह्योः' (Pa. 3. 3. 5.) इति भविष्यदर्थे लट् Sy.
७. त्वया सह Sy.
८. तवास्मदीये गृहे Sy.
९. VM. ignores ऋतचित् ॥ ऋतचित् सत्यज्ञ ! हे अग्ने ! Sy.
१०. ०मेन P. पापम् Sy.
११. ०थम P. केन हेतुना । कथा—किंशब्दात् 'था हेतौ च छन्दसि' इति थाप्रत्ययः । 'प्राग्दिशो विभक्तिः' इति विभक्तिसंज्ञायां 'किमः कः' (Pa. 7. 2. 103.) इति कादेशः Sy.
१२. पुराणा० P.
१३. गर्हापूर्वमावेदयेः Sy.
१४. कथं तत् पापमावेदयेः Sy.
१५. द्युलोकाय द्योतमानाय सूर्याय वा Sy.
१६. नैतैः P.
१७. किमस्ति । त्वत्परिचरणान्नास्तीत्यर्थः Sy.
१८. M. omits words between दिवे and एनः ॥ तत्पापम् Sy.
१९. ०थम M.
२०. P. omits वा ।
२१. तथा अभिमतफलसेक्त्रे । मीळ्हुषे—'मिह सेचने' । क्वसौ 'दाश्वान् साह्वान् मीढ्वांश्च' इति निपातितः Sy.
२२. वा M.
२३. ब्रूयां M. आगो ब्रूयाः । ब्रवः—'ब्रूञ् व्यक्तायां वाचि' । लेटि 'लेटोऽडाटौ' इत्यडागमः । पादादित्वादनिघातः । आगमस्यानुदात्तत्वाद् धातुस्वरः Sy.
२४. कथं ब्रूयाः Sy.
२५. ०र्यम्ने P. देवाय Sy.
२६. एतन्नामकाय च देवाय Sy.
२७. VM. ignores ह ॥ ह इति पूरणः Sy.

कद्धिष्ण्यासु वृधसानो अग्ने कद्वाताय प्रतवसे शुभंये ।
परिज्मने नासत्याय क्षे ब्रवः कदग्ने रुद्राय नृघ्ने ॥ ६ ॥

कद्धिष्ण्यासु[1] । किम्[2] । आयतनेषु[3] । वर्धमानः,[4] त्वम् । अग्ने ! प्रकृष्टबलाय[5] । कल्याणं[6] गच्छते । वाताय[7] । ब्रूयाः[8] । कदिति[9] पूरणमेकं पदम् । परितो गन्त्रे[10] । नासत्याय,[11] अश्विनोरन्यतरस्य[12] संज्ञेयम्[13] । क्ष्मा[14] पृथिवी, तस्यै । मनुष्याणां[15] पापकृतां[16][17] निहन्त्रे[18] ।

---

१. वामदेवस्यार्षम् SKN.

२. कथं ब्रूयाः Sy. कदा SKN.

३. आग्नीध्रीयादिधिष्ण्येषु Sy. धिष्ण्येषु स्वेषु स्थानेषु SKN.

४. घृताद्याहुतिभिर्वर्धमानस्त्वम् । वृधसानः—'वृधु वर्धने' 'असानच्' इत्यनुवृत्तौ 'ऋञ्जिवृधिमन्दिसहिभ्यः कित्' इत्यसानच् प्रत्ययः कित्त्वादगुणः । चित्त्वादन्तोदात्तः Sy. प्रथमासमानाधिकरणे शानचो गुणाभावो व्यापत्तिश्च मकारस्य सकारेण । दैव्ये होतृत्वे वर्तमानो वर्धस इत्यर्थः SKN.

५. किंविशिष्टाय ? प्रकृष्टबलाय SKN.

६. M. omits words between किम् and कल्याणम् ॥ लयाणं M. शुभस्य प्रापयित्रे । शुभंये—'या प्रापणे' । विच् । 'तत्पुरुषे कृति बहुलम्' इति द्वितीयाया अप्यलुक् । कृत्स्वरः Sy. शुभंयवे इति प्राप्ते शुभंयुशब्दस्यायं छान्दस उकारलोपः, ततश्चतुर्थी । सर्वभूतानां कर्तव्यत्वेन शुभेन तद्वते SKN.

७. वायवे Sy. एवं गुणविशिष्टाय वातस्यार्थाय तेनोपध्मायमानः SKN.

८. ब्रवीषि । कदा प्रज्वलयिष्यसीत्यर्थः SKN.

९. कथं ब्रूयाः Sy. कदा SKN.

१०. सर्वतो गन्त्रे SKN.

११. सत्यस्य नेत्रे । यद्वा न विद्यतेऽसत्यं यस्य तस्मै । यद्वा नासत्यायेति वचनव्यत्ययः । नासत्याभ्यामश्विभ्याम् Sy. सत्यायैव SKN.

१२. ०रन्य. . .अपहृतान्निहन्त्रे नासत्यायाश्विनोरन्यत M.

१३. ०ज्ञेय P.

१४. क्षा इति पृथिवीमाह । क्षियन्ति निवसन्त्यस्यां प्राणिन इति तस्यै पृथिव्यै । क्षे—'क्षि निवासगत्योः' । 'अन्येभ्योऽपि दृश्यते' इत्यधिकरणे डः । ततष्टाप् । चतुर्थ्येकवचने 'आतो धातोः' इत्यत्र 'आतः' इति योगविभागादाकारलोपः Sy. 'क्षि हिंसायाम्' इत्यस्य डप्रत्यये टिलोपे चतुर्थ्यामितद्रूपम् । भौमानां रसानां हिंसित्रे शोषयित्रे, इत्यर्थः SKN.

१५. नृणाम् । नृघ्ने—'हन हिंसागत्योः' । 'बहुलं छन्दसि' इति क्विप् Sy. शत्रुमनुष्याणाम् SKN.

१६. M. omits words between ०रस्य and पाप० ।

१७. ०कृता P.

१८. हन्त्रे Sy.

रुद्राय[1] चेति ।

कथा महे पुष्टिंभराय पूष्णे कद्रुद्राय सुमखाय हविर्दे ।
कद्विष्णव उरुगायाय रेतो ब्रवः कदग्ने शरवे बृहत्यै ॥ ७ ॥

कथा । कथं[2] वा । महते[3] । पुष्टेः पोषकाय[4] । पूष्णे[5] । किं वा[6] । रुद्राय । अग्नये स्विष्टकृते—यज्ञस्य शोभनस्य कर्त्रे[7] । देवेभ्यो[8] हविषो[9] दात्रे । किं वा । विष्णवे । उरुक्रमणाय[10] । रेतो रेचयतीति पापमुच्यते । किं वा[11] । अग्ने ! हिंसिकायै[12] निर्ऋतये[13] । महत्यै[14] । ब्रव[15] इति[16] ।

---

१. देवाय Sy. एवंगुणविशिष्टाय रुद्राय वाताय चैवंगुणविशिष्टाय । एवंगुणविशिष्टं वातं रुद्रञ्च यष्टुमित्यर्थः । स्तुतिर्वा । कदा ब्रवो ब्रवीषि कथयिष्यसि । अथवा दैव्ये होतृत्वे व्यवस्थितोऽग्निराशास्यते । कदा स्वेषु स्थानेषु वर्धमान ! हे भगवन्नग्ने ! उक्तगुणाय वाताय रुद्राय च । प्रदर्शनार्थं चैतत् । अन्याभ्योऽपि देवताभ्यो मुख्ययजमानस्यैतानि हवींषि ब्रवो ब्रवीषि कथयसि । दैव्ये होतृत्वे वर्तमानः स्तुतिर्वा कदा ब्रवीषि । कदाऽस्माकमयं मनोरथः सम्पद्यत इत्यभिप्रायः SKN., N. 2. 7.; SKN. II. 57.

२. केन हेतुना पापं ब्रवीथाः Sy.

३. ०हत P.

४. पुष्टे पुषाकया P. पुष्टिधारकाय । पुष्टिम्भराय—'डुभृञ् धारणपोषणयोः' 'संज्ञायां भृतॄवृजि०' इत्यादिना खच् । 'अरुर्द्विषदजन्तस्य मुम्' इति पूर्वपदस्य मुमागमः । चित्त्वादन्तोदात्तः । समासे कृत्स्वरः Sy.

५. एतन्नामकाय देवाय Sy.

६. कथं ब्रूयाः ? Sy.

७. सुपूजनीयाय सुयज्ञाय वा Sy.

८. M. omits words between ०ग्नये and देवेभ्यः ।

९. ०विषे M. अग्निरूपेण देवानां हविर्दात्रे । यद्वा स्विष्टकृत्त्वाद्धविषो दात्रे । हविर्दे—'अनुदात्तस्य च यत्रोदात्तलोपः' इति सुप उदात्तत्वम् Sy.

१०. उरुभिर्बहुभिर्गीयमानाय । यद्वा प्रभूतकीर्तये Sy.

११. कथं वदेः Sy.

१२. M. reads हि for हिं ।

१३. शृणाति पक्वा ओषधीरिति शरुः शरत् संवत्सरः । यद्वा हिंसिका निर्ऋतिः । शरवे—'शॄ हिंसायाम्' 'शॄस्वृस्निहित्रप्यसि' इत्यादिना उप्रत्ययः, 'नित्' इत्यनुवृत्तेराद्युदात्तः Sy.

१४. शरदे निर्ऋत्यै वा Sy.

१५. कथं पापं ब्रूयाः Sy.

१६. M. omits words between हिंसिकायै and इति ॥

कुथा शर्धाय मुरुतांमृतायं कुथा सूरे बृंहुते पृच्छ्यमानः ।
प्रतिं ब्रुवोऽदितये तुराय साधा दिवो जातवेदश्चिकित्वान् ॥ ८ ॥

कथा[1]।[2] कथम्[3] । अपां मरुताम्[4] । वेगाय[5] । सत्यभूताय[6] । किं वा[7] । सूर्याय[8] । महते । पृच्छ्यमानः[9], 'किमनेन पापं कृतमुत भद्रम् ?' इति प्रश्नः । प्रतिब्रूयाः[10] । अदीनाय[11] । वायवे[12], 'यद्वा तद्वाऽस्मि, हितं[13] वक्तव्यम् ।' तदर्थम्[14] । दीप्तान् देवान् प्रति । गच्छ[15] । हे जातधन[16] ! प्राज्ञः[17] ।

ऋतेनं ऋतं नियंतमीळ आ गोरामा सचा मधुंमत्पुक्कमंग्ने ।
कृष्णा सुती रुशंता धासिनैषा जामंर्येण पयंसा पीपाय ॥ ९ ॥

ऋतेन । सत्येन[18] । उदकम्[19] । नित्यसम्बन्धम्[20] । गोः । [तद् । आ समन्तात्[21]] अग्ने[22] ! पयः । कृष्णवर्णा । सती । एषा[23] गौः । [श्वेतेन[24]] धासिः इत्यन्ननाम[25], धारकेण[26] पातकेन[27] वा ।

---

१. Originally M. omitted the *pratīka*. कथा शर्धा is however subsequently added in a different hand.

२. हे अग्ने ! Sy.

३. केन हेतुना मदीयमागः प्रतिब्रूयाः Sy.

४. M. omits words between कथम् and मरुताम् ।

५. बलभूताय गणाय Sy.

६. गन्त्रे सत्यभूताय वा Sy.

७. कथं वदेः Sy.

८. सूरे—सर्वविधीनां छन्दसि विकल्पितत्वात् ङेर्यत्वाभावः । 'अतो गुणे' इति पररूपत्वम् Sy.

९. तेन पृच्छ्यमानः सन् । पृच्छ्यमानः—'प्रच्छ ज्ञीप्सायाम्' । कर्मणि यक् । 'ग्रहिज्या०' आदिना सम्प्रसारणम् । शानचो लसार्वधातुकानुदात्तत्वे यक् स्वरः Sy.

१०. मदीयमागः कथं प्रतिब्रूयाः Sy.

११. देव्यै, अदीनाय वा Sy.

१२. त्वरितगमनाय वायवे च तुराय वा Sy.

१३. ह्वितं P. १४. तदथं P.

१५. साधय । यद्वा दिवो द्युलोकस्य यज्ञवहनलक्षणं कार्यं कुरु । साध—'राध साध संसिद्धौ' । अन्तर्भावितण्यर्थस्य लोटि व्यत्ययेन शप् Sy.

१६. यस्मादेवं तस्माद् हे अग्ने ! Sy.

१७. तत्सर्वं जानानस्त्वम् Sy.

१८. सत्यभूतेन यज्ञेन Sy.

१९. अहम् M. २०. अनुस्यूतम् Sy.

२१. स्ते M. After समन्तात् M. leaves blank space to indicate omission. On the margin, it is written अत्र ग्रन्थपातः । The text within brackets is conjectural.

२२. ग्ने M. २३. गौ M.

२४. इ(इ)च्छेतेद M. The reading is conjectural.

२५. Ngh. II. 7.

२६. प्राणिनां धारकेण Sy.

२७. ०केव्यन M.

जनितमनुष्येण[1]=वर्धितमनुष्येण । पयसा । आप्यायते[2] ।[3]

**ऋतेन हि ष्मा वृषभश्चिदक्तः पुमाँ अग्निः पयसा पृष्ठ्येन ।**
**अस्पन्दमानो अचरद्वयोधा वृषा शुक्रं दुदुहे पृश्निरूधः ॥ १० ॥**

ऋतेन । सत्येन[4] । हि । स्म[5] । कामानां वर्षिता[6] । गवां जघनार्धभवेन[7] । पयसा हुतेन । अग्निः । पुमान्[8] । रक्षसाम[9]नन्ववचाराय[10], अस्पन्दमानः[11] । चरति[12] । देवेभ्योऽन्नस्य दाता[13] । तथा वर्षिता[14] । उदकम्[15] । दोग्धि[16] । पृश्निवर्णः[17] । द्युलोकस्योधः[18] ।[19]

**ऋतेनाद्रिं व्यसन्भिदन्तः समङ्गिरसो नवन्त गोभिः ।**
**शुनं नरः परि षदन्नुषासमाविः स्वरभवज्जाते अग्नौ ॥ ११ ॥**

ऋतेन । अग्ने ! यज्ञेन[20] । शिलोच्चयम्[21] । व्याक्षिपन्[22] । विदारयन्तः[23] । सङ्गताश्चासन्[24] ।

---

१. जायन्त इति जाः प्रजाः । तासाम् अमर्त्येणामरणनिमित्तेन तेन Sy.

२. प्रजाः प्याययति । तवैव महिमा यद्रसान् परिणामयन्नेवं करोषि । पीपाय—प्यायतेः लिटि 'लिड्यङोश्च' इति पीभावः Sy.

३. P. omits the commentary on this stanza. VM. ignores ईळे । आमा । सचा and मधुमत् ॥ ईळे आयाचे सांनाय्यादिहविरर्थं गव्यं पयस्त्वां याचे इत्यभिप्रायः । आमा अपक्वा सा गौः । मधुमत् माधुर्योपेतम् । सचा सह धारयति Sy.

४. सत्यन P. सत्यभूतेन Sy.

५. हि ष्म चित् इति त्रयः पूरणाः Sy.

६. ०तात्तो P. अभिमतफलवर्षकः Sy.

७. ०नांडभ० P. धारकेण Sy.

८. श्रेष्ठः सः Sy.

९. ०क्षसम० P.

१०. ०चारय P.

११. स्पन्द० P. एकत्रावस्थितः सन्नेव Sy.

१२. सर्वत्र तेजसा चरति Sy.

१३. अन्नदः सोऽग्निः Sy.

१४. अपां वर्षकः Sy.

१५. पयः Sy.

१६. दुदुहे—द्विकर्मकोऽयं धातुः Sy.

१७. सूर्यः Sy.

१८. ०लोकाध० P. अन्तरिक्षं मेघं वा । 'अकथितञ्च' इति कर्मसंज्ञा Sy.

१९. VM. ignores चित् and अक्तः ॥ अक्तः सिक्तो भवति । अक्तः—'अञ्जू व्यक्तिम्रक्षणगतिषु' । कर्मणि निष्ठा Sy.

२०. यज्ञेन हेतुना Sy.

२१. ०च्चयम P. गवां निरोधकं पर्वतम् Sy.

२२. प्यक्षि० P. व्यक्षिपन् । असन्—अस्यतेर्लुङि च्लेः 'अस्यतिवक्ति० इत्यादिनाङादेशः । 'अनित्यमागमशासनम्' इति थुगभावः Sy.

२३. विदारयन्तः सन्तः Sy.

२४. समगच्छन्त Sy.

अङ्गिरसः[1]। पशुभिः[2]। सुखस्य कर्त्रीम्[3]। उपसं च । मनुष्याः[4]। लक्षीकृत्य[5]। निषण्णा आसन्[6]। द्युलोकश्च[7]। आविरभवत्[8]। प्रादुर्भूते[9]। अग्नौ[10]।

ऋतेन देवीरमृता अमृक्ता अर्णोभिरापो मधुमद्भिरग्ने ।
वाजी न सर्गेषु प्रस्तुभानः प्र सदमित्स्रवितवे दधन्युः ॥ १२ ॥

ऋतेन । सत्येनैव[11]। देव्यः[12]। अमृताः[13]। अनाधृष्टा रक्षोभिः[14]। अर्णःशब्दो[15] वीचीवचनः, आपः[16]। मधुरसवद्भिः[17]। अर्णोभिः सह[18]। अग्ने ! अश्वः[19]। इव[20]। विसर्गेषु[21]। ह्रेषाशब्दं[22] कुर्वन् । सदा । एव । स्रवणाय । आप एवंविधाः प्रदध्वन्युः[23], ध्वनेः[24] शब्दकर्मण एतत् रूपम्, अनुद्योगकर्मेत्यपर इति ।

मा कस्य यक्षं सदमिद्धुरो गा मा वेशस्य प्रमिनतो मापेः ।
मा भ्रातुरग्ने अनृजोर्ऋणं वेर्मा सख्युर्दक्षं रिपोर्भुजेम ॥ १३ ॥

मा कस्य । मा । कस्यचित्[25]। सर्वदा[26]। एव[27]। धनम्[28]। अपहरतः[29]। पूजां[30] गमः[31]।

---

१. अंशिर० P. मेधातिथिप्रभृतयः Sy.
२. ततस्ते गोभिः Sy. ३. सुखेन Sy.
४. ०नुष्यं M. कर्मणां नेतारस्ते Sy.
५. परितः Sy.
६. आस P. प्राप्नुवन् Sy.
७. ०कस्य इव P. सूर्योऽपि Sy.
८. आपि भवेत् M.
९. मथनेन निष्पादिते सत्यभूदिति Sy.
१०. सर्वमेतत् त्वयि Sy.
११. यज्ञेन वा हेतुना Sy.
१२. देव्यो नद्यः Sy.
१३. अमरणहेतवः Sy.
१४. रक्षःप्रभृतिभिरबाधिताः Sy.
१५. अर्ण० P. अर्णःशब्दो वीचीवचनः should immediately follow अर्णोभिः सह and precede अग्ने !
१६. आप्तव्याः सत्यः । आपः—'आप्लृ व्याप्तौ'। 'आप्नोतेः क्विब् ह्रस्वश्च' इति कर्मणि क्विप्। 'अप्तृन्'—इत्यादिना जसि दीर्घः Sy. १७. माधुर्योपेतैः Sy.
१८. उदकैर्युक्ताः Sy.
१९. Omitted in M.
२०. तत्र दृष्टान्तः यथा Sy.
२१. प्रेरणेषु Sy.
२२. प्रोत्साह्यमानः अश्वः प्रगच्छति तद्वत् । प्रस्तुभानः स्तोभतिरर्चतिकर्मा Sy.
२३. ०ध्वन्यु M. ०दधत्यूः P. प्रगच्छन्ति Sy. २४. ध्वने M.
२५. कस्यचिद् अपि जन्तोः Sy.
२६. सर्वं दा M. सर्वं P. सदैव Sy.
२७. Omitted in P. २८. यज्ञम् Sy.
२९. अस्माकं हिंसकस्य । हुरः —'हृ प्रसह्यकरणे'। क्विप्। 'बहुलं छन्दसि' इत्युत्वम् । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् Sy. ३०. पूजा P.
३१. कदाचिदपि (मा)गच्छ Sy.

मा च। मनुष्यस्य[१]। हिंसतः[२]। मा[३] च। अस्माकं बन्धोः[४]। तथाऽस्माकं भ्रातुः। [अग्ने][५] कुटिलस्य[६]। ऋणं[७] हविः[८]। मा। वेः[९], वेतिः[१०] कान्तिकर्मा। वयम्, मा[११] सख्युः[१२]। शत्रोर्वा। धनम्[१३]। भजेम[१४], अपि तद्धात्मीयमेव[१५] भजेम[१६], तदर्थमस्मास्वेवागच्छेति[१७]।

**रक्षा णो अग्ने तव रक्षणेभी रारक्षाणः सुमख प्रीणानः।**
**प्रति ष्फुर वि रुज वीड्वंहो जहि रक्षो महि चिद्वावृधानम् ॥ १४ ॥**

रक्षा[१८] णः[१९]। रक्ष[२०]। अस्मान्[२१]। अग्ने! त्वदीयैः। रक्षणैः[२२]। रक्षणशीलस्त्वम्[२३]। हे शोभनयज्ञ[२४]! प्रीयमाणः[२५]। प्रतिगच्छ[२६]। भग्नं च कुरु। दृढम्[२७]। हन्तृभूतम्[२८]। एतदेवाह—नाशय[२९]। महत्। अपि। वर्धमानम्[३०]।[३१]

---

१. प्रातिवेश्यस्य यज्ञं मा गाः Sy.
२. हिंसकस्य Sy.
३. यज्ञं (मा)गच्छ Sy.
४. तथा मद्व्यतिरिक्तस्य बन्धोर्यज्ञम् Sy.
५. Both M. and P. read अपि। The reading is conjectural.
६. कुटिलचित्तस्य Sy.
७. ण्डम P. ऋणवद्देयं हविः Sy.
८. हवेः M. चेः P.
९. कामयेथाः Sy.
१०. वति P. Ngh. II. 6.
११. M. omits वयम्, मा ॥ तथा वयमपि Sy.
१२. सख्यु P. मित्रस्य Sy.
१३. भोगसमर्थं धनम् Sy.
१४. भुजेम M. D. मा भुञ्जीमहि, किन्तु त्वया दत्तं धनं भुञ्जीमहि। भुजेम—'भुज पालनाभ्यवहारयोः'। आशीर्लिङि व्यत्ययेन परस्मैपदम्। 'लिङ्याशिष्यङ्' इत्यङ्प्रत्ययः Sy.
१५. ०यमत्र M.
१६. ०दर्त्थम० P.
१७. ०स्त्रेव ग० M.
१८. रक्ष P. १९. ण P.
२०. पालय Sy.
२१. णः—'नश्च धातुस्थोरुषुभ्यः' इति संहितायां णत्वम् Sy.
२२. अवनैः Sy.
२३. ०शील M. भृशमस्माकं रक्षिता। रारक्षाणः—रक्षेर्यङ्लुकि चानशि रूपम् Sy.
२४. सुयज्ञ! सुधन! इति वा Sy.
२५. हविर्भिः प्रीतस्त्वम् Sy.
२६. अस्मान् प्रतिदीप्यस्व Sy.
२७. ०ढम P.
२८. M. omits दृढम्। हन्तृ॥ पापम् Sy.
२९. विशेषेण नाशय। जहि—'हन हिंसागत्योः'। लोटि 'हन्तेर्जः' इति जादेशः, आभाच्छास्त्रीयस्यासिद्धत्वात् 'अतो हेः' इति लुक् न भवति Sy.
३०. वर्धमानं वृद्धं वा बाधकम् Sy.
३१. VM. ignores रक्षः।

एभिर्भव सुमना अग्ने अर्कैरिमान्त्स्पृश मन्मभिः शूर वाजान् ।
उत ब्रह्माण्यङ्गिरो जुषस्व सं ते शस्तिर्देववाता जरेत ॥ १५ ॥

एभिः । एभिर्मन्त्रैः[1] । त्वमग्ने ! सुमतिः[2] । भव । तथा शूर[3] ! इमानि[4] । हवींषि च । स्पृश[5] । मननकुशलैः[6]=प्रज्ञापकैः । तेजोभिः[7] । अपि[8] च । शस्त्राणि[9] । अग्ने[10] ! सेवस्व । तैः सह, ते, अग्ने[11] ! देवैर्भवद्गुणश्रवणपरैः प्रार्थिता[12] । स्तुतिश्च[13] । सञ्जरेत[14] भवद्गुणं[15] स्तुयात्[16], इति ।

एता विश्वा विदुषे तुभ्यं वेधो नीथान्यग्ने निण्या वचांसि ।
निवचना कवये काव्यान्यशंसिषं मतिभिर्विप्र उक्थैः ॥ १६ ॥

एता विश्वा[17] । एतानि । विश्वानि[18] । विदुषे[19] । तुभ्यम् । हे विधातः ! प्रशस्यानि[20] । अन्त[21]र्हित[22]भवद्गुणानि । वचांसि[23] । क्रान्तप्रज्ञाय[24] तुभ्यम् । आभिमुख्येन वचनीयानि[25] । काव्यानि[26]=

---

१. मदीयैः Sy.
२. शोभनमनस्कः Sy.
३. शूरो P.
४. मानी P. इमानस्मदीयान् हविर्लक्षणान् Sy.
५. प्रतिगृहाण । 'स्पृश संस्पर्शने' । तुदादिः Sy.
६. स्तोत्रैः सह Sy.
७. अर्चनीयैः शस्त्रैः Sy.
८. M. omits तेजोभिः and अपि च ।
९. मन्त्रान् Sy.
१०. अङ्गति हवींषिप्राप्नोतीत्यङ्गिरा अग्निः । यद्वा 'येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्' (AB. 3. 34.) इति ब्राह्मणम् । तेषामङ्गिरसां कारणत्वादग्नेरङ्गिरस्त्वम् । तत्कारणत्वे च मन्त्रः—'ये अङ्गिरसः सूनवस्ते अग्नेः परि जज्ञिरे' (RV. 10. 62. 5.) इति । तादृश हे अग्ने ! Sy.
११. ने M.
१२. ०र्थिमा M. प्रार्त्थि P. देवार्थं गता देवात् स्तोतुं प्राप्तेत्यर्थः । देववाता—'वा गतिगन्धनयोः' । 'गत्यर्थाकर्मक०' इति कर्तरि क्तः । देवः—पचाद्यजन्तः । 'क्ते च' इति चतुर्थ्यन्तस्य पदस्य प्रकृतिस्वरः Sy.
१३. स्तुतीश्च P. शंसनम् Sy.
१४. संवर्धयतु Sy.
१५. ०द्गुणां P.
१६. स्तूया० M. and P.
१७. Omitted in P.
१८. सर्वाणि Sy.
१९. कर्मविषयज्ञानवते Sy.
२०. फलप्रापकाणि Sy.
२१. M. omits words between हे and अन्त०
२२. तर्हि भ० M.
नेयार्थानि गूढानि Sy.
२३. काव्यानि Sy.
२४. ०प्रज्ञा P. क्रान्तदर्शिने Sy.
२५. नितरां वक्तव्यानि Sy.
२६. कविभिर्मेधाविभिः कृतानि Sy.

कवेर्भवतः कर्माणि । अहमशंसिषम्[1] । पूजनीयैः[2] । सूक्तैः[3] । मेधावी[4] ।[5]

## IV.4.

कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन ।
तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥ १ ॥

कृणुष्व[6] ।[7] विस्तारय[8] । ज्वालालक्षणं बलम्[9], तेज एव वा[10] पाजः[11] ! प्रसितिः[12] प्रबन्धनात्

---

१. अवोचम्, तानि सेवस्वेत्यर्थः Sy.

२. मननीयैः स्तोत्रैः Sy.

३. शस्त्रैश्च सहितः Sy.

४. M. omits सूक्तैः and मेधावी ॥ प्राज्ञोऽहम् Sy.

५. VM. ignores अग्ने ॥

६. 'कृणुष्व पाजः' इति पञ्चदशर्चं चतुर्थं सूक्तं वामदेवस्यार्षं त्रैष्टुभं रक्षोहाग्निदेवताकम् । कृणुष्व पञ्चोना राक्षोघ्नम्' इत्यनुक्रमणिका (KSA. 20. 4. p. 17) । प्रातरनुवाकाश्विनशस्त्रयोः सूक्तविनियोगः । प्रवर्ग्येऽभिष्टवे 'कृणुष्व पाजः' इत्याद्याः पञ्चर्चो विनियुक्ताः । सूत्रितञ्च—'कृणुष्व पाजः प्रसितिं न पृथ्वीमिति पञ्च' (ASS. 4. 6.) इति Sy. वामदेवस्य SKN. वामदेवस्यार्षम् Dur.

७. हे अग्ने ! Sy. अग्निरुच्यते SKN. हे भगवन्नग्ने ! Dur.

८. कृणुष्व विस्तारय । 'कृवि हिंसाकरणयोः' । लोटि 'धिन्विकृण्व्योर च' इत्युप्रत्ययः । व्यत्ययेनात्मनेपदम् । 'विकरणस्वरस्तु सतिशिष्टोऽपि लसार्वधातुकस्वरं न बाधते' इति लसार्वधातुकस्वरः (PMBH. on Pa. 6. 1. 158. 11.) Sy. कुरु SKN. कुरुष्व Dur., Mah., U. कुरुष्व—'कृवि हिंसाकरणयोः' । व्यत्ययेनात्मनेपदम्. . . करोतेर्विकरणव्यत्ययेन वा श्नुः BB.

९. 'ओजः, पाजः शवः' इति बलनामानि ॥ (Ngh. 2. 9.) बलं ज्वालासमाख्यम् . . .पाजः पालनात् SKN. एतदात्मीयं पाजो बलम् Dur. पाज इति बलनामसु पठितम् Mah., U. बलेन हि पाल्यते जनः BB.

१०. M. reads एव वा । कृणुष्व for कृणुष्व. . .वा ।

११. बाजः P. तेजःसंघम् Sy.

१२. ०सिति P. The passage 'प्रसितिः . . .मृगग्रहणाय' should immediately follow पृथ्वीम् and precede प्रसृतिम् ॥ तत्र दृष्टान्तः । यथा मृगयुः,. . .प्रकर्षेण सीयते बध्यत इति प्रसितिर्वागुरा, तादृशीं प्रसितिं पक्षिग्रहणार्थं वनगहनेषु प्रसारयति तद्वत्त्वमपि रक्षांसि हन्तुं महद्बलमग्रतस्तनुष्व Sy. प्रसितिश्च वागुरा जालं वा तद्वत् SKN.

तन्तिर्वा[१] जालं वा मृगग्रहणाय, पृथ्वीम्[२] । प्रसितिम्[३] । इव[४] । याहि[५] राजेव[६] ।

१. ०र्वाजा P. Cf. N. 6. 12. प्रसितिः प्रसयनात् । तन्तुर्वा । जालं वा ।

२. विस्तीर्णाम् Sy., Dur., BB. पृथिवीं विस्तीर्णां कृत्वा SKN. तत्र दृष्टान्तः। पृथ्वीं विशालाम् Mah.

३. ०तिद् P. वागुरातन्तुमिव जालमिव वा Dur. प्रसितिर्जालम् । 'षिञ् बन्धने'। प्रकर्षेण सीयन्ते बध्यन्ते पक्षिणो यया सा प्रसितिस्ताम् ।. . .पक्षिग्रहणाय प्रसारितं जालमिव शत्रुग्रहणाय बलं प्रसारयेत्यर्थः Mah. अथ कोऽर्थः ? कुरुष्व बलं वागुरामिव पृथिवीम् । यद्वा जलमिव पृथु U. प्रसतिः प्रसयनात्। प्रकर्षेण सीयते बध्यत इति प्रसितिः, बहुसूत्रनिर्मिता मृगग्राहिणी पाश्या नाम, मत्स्यग्रहणं जालं नाम । पक्षिग्रहणं च विसरो नाम प्रसितिरुच्यते ।. . .यथा लुब्धको मृगग्रहणार्थं पाश्यां करोति, वनगहनेषु स्थापयति, यथा वा मत्स्यग्रहणार्थं जालं करोति जले प्रसारयति । यथा पक्षिग्राही तद्ग्रहणार्थं विसरं करोति नदीपुलिनादौ विसारयति, तथा त्वमपि महद् बलं रक्षांसि हन्तुं कृणुष्व, अग्रतो विस्तारयेत्यर्थः BB.

४. नकार इवार्थः Mah. नकार उपमार्थीयः । उपरिष्टादुपचारः U. उपरिष्टादुपचारत्वान्नकार उपमार्थीयः BB. उपरिष्टादुपाचारस्तस्य येनोपमिमीते N. 1. 4.

५. रक्षांसि हन्तुं गच्छ Sy. रक्षांसि प्रतीति शेषः SKN. तत एवमेतद् विस्तीर्णं कृत्वा याहि त्वं रक्षांस्यभिमुखः Dur. शत्रून् प्रतिगच्छ Mah. शत्रून् प्रति याहि U. अथ तथा कुर्वन् याहि । केचिदाहुः—आङ्पूर्वो यातिर्द्रष्टव्यः । यागसाधनार्थमागमनस्याभिप्रेतत्वात् । यागोत्तरकालं हि रक्षोहननार्थं गन्तव्यमिति । अत्र ब्रूमः । याहीत्येव समीचीनम् । ननु यागोत्तरकालं गन्तव्यं तेन रक्षोहननार्थम् । मैवं वोचः । न हि देवो विश्वात्मा कुतश्चिदायाति । न क्वचिद्याति । स्तुतिः खल्वियं क्रियते स्वाभिलषितसम्पादनानुरूपा । 'याहि, आयाहि, उत्तिष्ठ, प्रत्यातनुष्व, ऊर्ध्वो भव, इत्यादिस्वरूपा । एतैश्च स्तुतिपदैस्तुष्टा देवता पुरुषमभिलषितेन फलेन योजयति । तस्माद्रक्षोहननार्थं त्वरितं यातव्यमायातव्यं वा यागो निर्वर्तितः एव मन्तव्यः । इत्येवंरूपा स्तुतिर्भवत्येवेति, किमश्रुतपदाध्याहारेणेति । किञ्च यागमागच्छतो देवस्य किं बलादिपरिग्रहणेन । हन्तव्यसकाशं गच्छतो हि बलादिना कार्यम् । तस्माद्यथोक्तं बलमादाय हन्तव्यसकाशं गच्छ BB.

६. तत्र दृष्टान्तः । यथा Sy. क इव ? उच्यते, राजेव यथा राजा SKN. कथं चपुनर्याहि. . .यथा राजा यायात् Dur. ततो राजेव नृप इव Mah. ततो याहि राजेव U. राजेव । राजा यथा महतीं सेनां कर्षन् शत्रुदेशं गच्छति BB.

अमात्यवान्[1] । हस्तिना[2] । क्षिप्रकारिणीम्[3] । प्रसितिम्[4] । राक्षसेष्व[5]नु[6]द्रुणानः, द्रुणातिर्वि[7]स्तारकर्मा ।

---

१. राज्ञा सह वर्तत इत्यमः अमात्यः । तद्वान्, यद्वा, अमोऽमनं रोगः । शत्रूणां कर्तव्यै रोगैस्तद्वान्, शत्रूणां रोगभूत इत्यर्थः Sy. ससहायः । अथवा ह्यमनं रोग उच्यते, कर्तव्यः शत्रूणां रोगैस्तद्वत् । दस्यूनां रोगभूत इत्यर्थः । आत्मवानायत्तवानित्यर्थः SKN. अमात्यवान् नीतियुक्तो विजयाय तथा त्वं याहि । अथवा यथा. . .रोगभूतः परेभ्यो भयदाता यायात् तथा याहि । अथवा यथा. . .आत्मवित्तवान् सुभृतसैन्यो यायाद् विजयाय तथा याहि. . .एवमत्र राजोपमानसम्बन्धादमवान् अमात्यवान् इत्येवमुपपद्यते Dur. अमवान् सहायवान्. . .'अम गतौ भजने शब्दे' । अमन्ति भजन्ति स्वामिन इत्यमाः सेवकास्तेऽस्य सन्तीत्यमवान् । पचाद्यजन्तादमशब्दान् मतुप् प्रत्ययः Mah. अमवान्, अमात्यवान् भूत्वा, अभ्यमनवान् वा । अभ्यमनं शत्रूणां भयादप्रतिपक्षकरणम्, गृहवान्वा भूत्वा U. राजा विशेष्यते । अमवानमात्यवान् । अमावर्तन्त इत्यमाः । अप्रत्ययश्छान्दसः । 'तद्धिताः' इति बहुवचननिर्देशाद् वा । यद्वा शत्रूणां मनआदिभञ्जनान्यायुधान्यमशब्देनोच्यन्ते । अमवानिति वृद्ध्यभावश्छान्दसः. . .पचाद्यचि वा वृधाविर्द्रष्टव्यः । अमनशब्दस्यैव वान्त्याक्षरलोपः । यथाहुः—"द्वौ चापरौ वर्णविकारनाशौ" इति BB.

२. गतभयेन तेजःसङ्घेन युक्तस्त्वम्, गजेन युक्तः सन् परबलं प्रतिगच्छति तद्वत् Sy. इरा अन्नं तद्भृतेन सुपुष्टेन गणेन बलसमूहेन गतभयेन वा शूरेण हस्तिना शत्रून् प्रति विश्वस्तो यायात् SKN. अन्नभृतेन गणेन सुपुष्टेन युक्तो यथा राजा यायात् तथा याहि । अथवा .... गतभयेन शूरेण हस्तिना यथा यायात् तथा याहि Dur. गजेन Mah. इभभवेन बलेन । यद्वा, इभेन हस्तिना गत्वा च U. अत्र नैरुक्ता बहुधा वदन्ति—इरयाम्नेनेडोभयेन भयनिवृत्त्यर्थं प्राप्त इभः । इतमपगतं भयमस्येति वा इभो वीतभयो हस्ती वा इति । एतदुक्तं भवति । यथा राजाऽमात्ययुक्तश्शत्रूणां भञ्जनैरायुधादिभिस्तद्वान् इभेन हस्तिना शत्रुवधादिकं साधयितुं युक्तो गच्छति तथा त्वं महद् बलमादाय शत्रुबलनाशनसमर्थेन रोगादिना तद्वान् इभेन इरापुष्टेन वीतभयेन तद्वान् गजेन वा सह रक्षांसि हन्तुं याहीति BB.

३. तृष्वीति क्षिप्रनाम N. 6. 12. क्षिप्रगामिनीम् । यद्वा तृष्वीमिति तृतीयार्थे द्वितीया । तृष्व्या क्षिप्रया अनुबद्धया सन्ततया गत्या Sy. उभयत्र व्यत्ययेन द्वितीयैकवचनं तृतीयैकवचनस्य स्थाने । तृष्वीति क्षिप्रनाम । तृष्व्या क्षिप्रया । कया ? सामर्थ्याद् गत्या SKN. क्षिप्रमनु Dur. क्षिप्रया Mah. यतस्त्वं क्षिप्रया U. क्षिप्रनामैतत् BB.

४. प्रकृष्टां सेनाम् Sy. कीदृश्या ? अनुप्रसित्या, अनुबन्धया सन्ततयेत्यर्थः SKN. सन्ततया गत्या Dur. प्रसितिं, विभक्तिव्यत्ययः ।. . .प्रसित्या जालेन Mah. प्रसित्येति विभक्तिव्यत्ययः. . . प्रसित्या तन्तुना जालेन वा U. प्रकृष्टा सितिः सेना प्रसितिः BB.

५. अनुगच्छन् । द्रूणानः परसेनां हिंसन् Sy. गत्या च द्रूणानः । द्रूणातीति वधकर्मा । घ्नन् SKN. रक्षांसि हिंसन् याहि Dur. शत्रून् मारयन् । 'द्रु हिंसायाम्' क्र्यादिः शानच् प्रत्ययः । द्रूणीतेऽसौ द्रूणानः Mah. द्रूणान इति हिंसाकर्मा. . . द्रूणानो हिंसन् U. अनुद्रवन्ननुधावन् । एतदुक्तं भवति । मन्त्रिभिर्बहुलं समस्तं बलमग्रतः प्रसारयेतीरितां क्षिप्रगामिनीं प्रकृष्टां सेनामग्रतः प्रसारितां द्रवन्तीमनुद्रवन् राजेव याहीति । यद्वा तृष्वीं क्षिप्रमागच्छन्तीं प्रसितिं परसेनामनुद्रूणानोऽनुक्रमेण हिंसन्याहीति । 'द्रूञ् हिंसायाम्' । क्र्यादिकः BB.

६. M. omits words between प्रकारिणी and द्रुणानः ॥

७. ०णादिर्वि० P.

निरसिता । असि । राक्षसान् । तप्तृतमैस्तेजोभिः । विध्येति ।

१. शत्रूणां क्षेप्ता Sy. अत्रैकवाक्यतायै सुखप्रतिपत्त्यर्थं यस्मात्तस्मादित्यध्याहार्यम् । यस्मादस्तासि, तृन्नयं साधुकारिणि । साधु क्षेप्तासि, इषूनिति शेषः SKN. कस्मात् पुनरेवमुच्यते ? इतो यस्मात् ...क्षेप्ता त्वं रक्षांसि प्रति दीप्ताया अर्चिषः Dur. हे अग्ने ! अस्ता शत्रूणां क्षेप्तासि Mah. क्षेप्तासि विकटः कृतास्त्रोऽसि, अतो ब्रवीमि U. कस्मादित्युच्यत इति चेत्...साधु निरसितासि शत्रूणाम् । यद्वा शत्रुसम्बन्धिनाममोघानां शस्त्राणामस्ता निरसिता निवारयिता त्वमसि । तस्मात्तपिष्ठैस्त्वदीयैरायुधैस्तान्विध्येति । अस्यतेः साधुकारिणि तृन् । रुधादित्वादिड् विकल्प्यते BB.

२. सराक्ष० P.
एतान् अस्मच्छत्रून् Dur.
अतो रक्षसो राक्षसान् Mah. रक्षश्शब्दोऽयमसुन्नन्तः । रक्षाहेतुत्वादपादानेऽसुन् । क्षरेर्वा हिंसार्थात्कर्तर्यसुन्याद्यन्तविपर्ययः BB.

३. तप्तत० P. तापयितृतमैरतिशयेन तापकैर्दीप्ततमैर्वा, अतिशयेन श्लक्ष्णैः । तप्तं मूढमुच्यते प्रविष्टं श्लक्ष्णम् SKN. तप्ततमैरर्चिभिः Dur. तापकतमैरायुधैः । तपन्ति सन्तापयन्तीति तप्तृणि, अतितप्तृणि तपिष्ठानि तैः Mah. तप्ततमैः प्रहारैः । यद्वा अतीव तप्ततमैरतिशयेन क्लेशकरैः U. तप्तृतमैः BB.

४. ताडय Sy. तस्मात्तैर्विध्य ताडय SKN. स त्वमेवमागत्य विध्य Dur. ताडय । 'व्यध ताडने' । दिवादित्वाच्छ्यन् Mah. हिन्धि U. ताडय BB.

५. कुरुष्व पाजः । पाजः पालनात् । प्रसितिमिव पृथ्वीम् । प्रसितिः प्रसयनात् । तन्तुर्वा । जालं वा । याहि राजेव । अमात्यवान् । अभ्यमनवान् । स्ववान्या । इराभृता गणेन गतभयेन । हस्तिनेति वा । तृष्व्यानु प्रसित्या द्रूणानः । तृष्वीति क्षिप्रनाम । तरतेर्वा । त्वरतेर्वा । असितासि । विध्य रक्षसः । तपिष्ठैः । तप्ततमैः । तृप्ततमैः । प्रपिष्ठतमैरिति वा N. 6. 12., SKN. II. 427.

यद्वेवैनमभिजुहोति । एतद्वै देवा एतमात्मानमुपधायाबिभयुर्यद्वै न . इममिह रक्षाꣳसि नाष्ट्रा न हन्युरिति तऽएतान्राक्षोघ्नान् प्रतिसरानपश्यन् कृणुष्व पाजः प्रसितिं न पृथ्वीमिति राक्षोघ्ना वै प्रतिसरास्तऽएतैः प्रतिसरैः सर्वाभ्यो दिग्भ्यो रक्षाꣳसि नाष्ट्रा अपहत्याभयेऽनाष्ट्रऽएतमात्मानꣳसमस्कुर्वत तथैवैतद्यजमान एतैः प्रतिसरैः सर्वाभ्यो दिग्भ्यो रक्षाꣳसि नाष्ट्रा अपहत्याभयेऽनाष्ट्रऽएतमात्मानꣳ संस्कुरुते ।
SB. 7. 4. 1. 33. p. 601.
This stanza=13. 9.=TS. 1. 2. 14. 1.

तव॑ भ्र॒मास॑ आशु॒या प॑त॒न्त्यनु॑ स्पृश धृष॒ता शोशु॑चानः ।
तपूं॑ष्यग्ने जु॒ह्वा॑ पत॒ङ्गानसं॑दितो॒ वि सृ॑ज॒ विष्व॑गु॒ल्काः ॥ २ ॥

तव भ्रमासः[1] । तव[2] । भ्रमणशीला[3] रश्मयः । आशवः[4] । पतन्ति[5] । तेषामन्यतमेन घर्षणशीलेन[6] । अनुस्पृशति[7] । दीप्यमानः[8] । तापयि[9]तृणि[10] रक्षांसि[11] । तपनशीलांश्[12]चासुरान् ।

---

१. Omitted in P.

२. तव सम्बन्धिनः Sy.

३. भ्राम्यन्तः Sy. भ्रमा वातोद्धूता ज्वालासमूहाः Mah. भ्रमणाः U. भ्रमणशीला विष्फुलिङ्गाः । पचाद्यच् BB.

४. शीघ्रगतयो रश्मयः । आशुया—आशुशब्दाज्जसः 'सुपां सुलुक्०' इति याजादेशः । चित्स्वरः Sy. कीदृशा भ्रमाः । . . . आशवः शीघ्रगमनाः Mah. आशवः स्थाने U. आशवः BB.

५. सर्वतः प्रसरन्ति Sy. इतस्ततो गच्छन्ति Mah. याः पतन्ति, इतश्चेतश्च गच्छन्ति U. निष्पतन्ति । यद्वा आशु निष्पतन्ति । क्रियाविशेषणत्वान्नपुंसकत्वम् BB.

६. अभिभवसमर्थेन तेजःसङ्घेन । धृषता —'धृष प्रसहने' । चुरादिराधृषीयः । व्यत्ययेन शः । 'शतुरनुमः०' इति विभक्तेरुदात्तत्वम् Sy. धृष्णोतीति धृषन् तेन धृषता प्रगल्भेन धृष्टेन ज्वालौघेन Mah. धृष्टेन ज्वालासमूहेन U. धृषता अभिभवित्रा । 'धृष प्रसहने', चुरादिराधृषीयः । व्यत्ययेन शः । . . . भावप्रधानोऽयम् । धर्षकत्वेनेत्यर्थः BB.

७. अनुस्पृशेति is suggested for अनुस्पृशति । शत्रून् अनु क्रमेण दह । दहनोपायं दर्शयति Sy. ज्वालाभिस्तान् दहेत्यर्थः Mah. तैरनुस्पृश, अभिमृश U. ये निष्पतन्ति तैर्भ्रमै रक्षश्शरीराण्यनुक्रमेण स्पृश । दहेति यावत् BB.

८. भृशं दीप्यमानस्त्वम् Sy. देदीप्यमानः । अत्यन्तं शोचते शोशुच्यत इति शोशुचानः । 'शुच दीप्तौ' Mah. देदीप्यमानः U. भृशं दीप्यमानः BB.

९. M. omits words between अनु and तापयि ॥ तापकानि Sy. तैर्भ्रमैस्तपूंषि, तपन्ति सन्तापयन्ति तानि तपूंषि तापयितॄणि रक्षांसि Mah. कान्यनुस्पृशेदित्याह. . .तापयितॄणि रक्षांसि U. इदानीं दहनोपाय उच्यते । . . .तापनौष्ण्यलक्षणान् तपनशीलान् । तपेरुसिप्रत्ययः BB.

१०. तृणि M.

११. M. adds च after रक्षांसि ॥ तेजांसि Sy.

१२. पतनशीलान् विस्फुलिङ्गान् Sy. पतन्तः सन्तो गच्छन्तीति पतङ्गाः पिशाचास्तांश्चानुस्पृश Mah. पतद्गगनानि रक्षांसि U. पतनशीलान् । पतेरङ्गच्प्रत्ययः BB.

होमसाधनभूतेन[1] । किं बहुना, दामभिरसम्बद्धस्त्वम्[2][3] । सर्वतः[4] । रक्षसां हननाय[5], उल्काः[6] । विसृज[7][8] ।

**प्रति॒ स्पशो॒ वि सृ॑ज॒ तूर्णि॑तमो॒ भवा॑ पा॒युर्वि॒शो अ॒स्या अद॑ब्धः ।**
**यो नो॑ दू॒रे अ॒घशं॑सो॒ यो अन्त्य॑ग्ने॒ माकि॑ष्टे॒ व्यथि॒रा द॑धर्षीत् ॥ ३ ॥**

प्रति स्पशः[9] । स्पशतिर्ज्ञानकर्मा[10], प्रतिविसृज[11] । ज्वालाः[12] । अतिशयेन शत्रून् तरन्[13] ।

---

१. हूयन्तेऽस्यामाहुतय इति जुहूर्ज्वाला तया । जुह्वा—'जुहोतेर्दीर्घश्च' इति क्विप् । द्विर्वचनं दीर्घत्वम् । 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वस्य 'नोङ्धात्वोः' इति प्रतिषेधे 'उदात्तस्वरितयोर्यणः०' इति स्वरितत्वम् Sy. स्रुचा हूयमान इति शेषः Mah., U. जुह्वस्येनाज्येनेत्यर्थः BB.

२. उदम० P. परैः Sy.

३. असंबन्धः M. अनिरुद्धस्त्वम् । असन्दितः—'दो अवखण्डने'।कर्मणि निष्ठा । 'द्यतिस्यति०' इतीत्वम् । नञा समासे तस्य स्वरः Sy. अखण्डितः । ईदृशः सन् Mah. 'दो अवखण्डने' । अनवखण्डितश्च सन् U. अयन्त्रितः । अग्निर्हि जुहूं दृष्ट्वा यन्त्रित इव भवति न क्वचिद्याति नचान्यत् करोति । तामेवाज्यवर्तीं व्याप्रियमाणां पश्यन्, तया बद्ध इव भवति, तस्मात्तया माभूरिति प्रार्थ्यते । . . . अन्य आह । असन्दितः केनचिदप्यखण्डितप्रसरस्सन् इत्थं कुरु BB.

४. सर्वत्र Mah. विषु नानावचनः । अञ्चतिर्गत्यर्थः । नानागमनास्तिर्यगूर्ध्वमधश्चेत्यर्थः U. इतश्चेतश्च । . . . विषु नाना अञ्चतीति ऋत्विगादिना क्विन्प्रत्ययः BB.

५. रक्षोघाताय Mah. रक्षोविघाताय U.

६. उल्काः चेत्येतत्त्रितयम् Sy. ज्वालाः Mah. उज्ज्वला महाज्वालाः । पृषोदरादिः BB.

७. M. omits रक्षसां हननाय, उल्काः । विसृज ॥ प्रसारय Sy. मुञ्चेत्यर्थः Mah. विक्षिप U. एवमेतत् त्रितयम् निस्सारय BB.

८. VM. ignores अग्ने ।
This stanza=YV. 13. 10=TS. 1. 2. 14. 1.

९. Omitted in P.

१०. ०शति ज्ञा० P. स्पशतिर्ज्ञानकर्मा should immediately follow ज्वालाः ।

११. शत्रून् प्रति विशेषेण प्रेरय Sy. तं प्रति . . . विसृज प्रेरय Mah., U. विसृज विस्तारय पाशैस्तं बधानेत्यर्थः BB.

१२. परबाधकान् रश्मीन् चारान् वा सत्यानृतविवेकार्थम् Sy. 'स्पश बन्धने' । स्पशयन्ति बध्नन्तीति स्पशो बन्धनकृतः प्रणिधीन् Mah. स्पाशयतीति स्पशः प्रणिधीन् अध्यक्षान् U. 'स्पश ग्रहणशोषणयोः' । करणे सम्पदादिलक्षणः क्विप् । यद्वा 'स्पश बाधने' बाधकान्यायुधानि तं प्रति विसृज BB.

१३. त्वरिततमस्त्वम् Sy. तूर्णं वेगोऽस्यास्तीति तूर्णी, अत्यन्तं तूर्णी तूर्णितमो वेगवत्तरः Mah. अतिशयेन त्वरन् U. त्वरिततमस्सन् BB.

भव। रक्षकः। अस्याः। विशः, त्वम्। रक्षोभिरहिंसितः। यः। अस्माकम्। दूरे। अघायुः। यो वा। अन्तिके, सः। मा। अस्मान् व्यावयिता। आवर्धयतु। तव स्वभूतान्।

१. पालकः Sy. पातीति पायुः पालकः Mah. पालयिता U., BB.

२. त्वदीयायाः Sy. अस्मदीयायाः Mah. मदीयायाः U. कस्याः ? त्वामनुगताया अस्मदादिकाया न पुनः प्रकृतायाः BB.

३. अस्मदादिकायाः प्रजायाः Sy. प्रजायाः Mah., BB. जनपदजातेः U.

४. M. omits words between स्वशति and हिंसितः ॥ केनाप्यहिंसितस्त्वम् Sy. अनुपहिंसितः Mah. अनुपहिंस्यः U. अनुपहिंसितः केनापि BB.

५. कस्मात्तद्रक्षणमित्यपेक्षायामाह—अस्माकं दूरे Sy. यो दूरे वसति Mah., U. दूरे स्थितः BB.

६. अघायु P. अघं पापात्मकं शंसनमभिलाषः कीर्तनं वा यस्य सोऽघशंसः Sy. अघं पापं शंसतीच्छत्यघशंसोऽस्मद्द्रोही Mah. पापस्योत्कीर्तको दुर्जनः U. अघं पापात्मकं शंसनमभिलाषः कीर्तनं वा यस्य सोऽघशंसो वधादिकारी दुरुक्तवादी वोच्यते BB.

७. अघशंसः Sy.

८. समीपे तिष्ठति तस्मादुभयविधाच्छत्रोः पालको भव। अन्ति, अन्तिकस्य कादिलोप आद्युदात्तत्वं च Sy. यश्चान्ति समीपे Mah. यश्चान्तिके वसत्यघशंसः U.

९. म M. न कश्चिदपि Sy. मा कश्चित् Mah., U. मा कश्चिदपि BB.

१०. बाधको राक्षसः Sy. व्यथयतीति व्यथिर्व्यथकः शत्रुः Mah. व्यथयिता शत्रुः U. व्यथयिता। व्यथेरन्तर्भावितण्यर्थात् BB.

११. अस्माकं कश्चिदपि परिभवं मा करोत्विति भावः। दधर्षीत्—'धृष प्रसहने'। लङि 'बहुलं छन्दसि' इति शपः श्लुः। 'बहुलं छन्दसि' इति तिप ईडागमः। निघातः Sy. धाष्ट्र्यं मा करोतु। दूरसमीपस्थानस्मच्छत्रून्प्रति त्वरतो बन्धकान् प्रेरय, केनाप्यहिंसितोऽस्मत्प्रजापालको भव। राक्षसाश्च त्वां प्रति धृष्टा मा सन्त्वित्यर्थः Mah. प्रत्यानीकोऽभूत् U. आवर्धयतु। तव कश्चिदपि परिभवं मा कार्षीदित्यर्थः। 'धृष प्रसहने'। चुरादिरापृषीयः BB.

१२. त्वत्सम्बन्धिनोऽस्मान्। माकिष्टे—इति संहितायां 'युष्मत्तत्क्षुःष्वन्तःपावम्' इति षत्वम् Sy. एवमनुग्रहप्रवृत्तस्य ते Mah. एवं च तवास्मदनुग्रहप्रवृत्तस्य सतः U.

१३. M. omits वर्धयतु तव. . .स्वभूतान्।

१४. VM. ignores अग्ने ॥ हे अग्ने ! पादादित्वात्षाष्ठिकमाद्युदात्तत्वम् Sy. This stanza=YV. 13. 11.=TS. 1. 2. 14. 1.

उद॑ग्ने तिष्ठ॒ प्रत्या त॑नुष्व॒ न्य१॒॑मित्राँ॑ ओषतात्तिग्महेते ।
यो नो॒ अरा॑तिं समिधान च॒क्रे नी॒चा तं ध॑क्ष्यत॒सं न शुष्क॑म् ॥ ४ ॥

उदग्ने । उत्तिष्ठ[1] । अग्ने ! प्रतिविस्तारय[2]ाऽऽत्मानम्[3] । अथ[4], अमित्रान्[5] । आभिमुख्येन[6] दह[7] । तिग्मदीप्त्यायुध[8] ! यः[9] । अस्माकम्[10] । अरातित्वम्[11] । करोति[12] । हे समिधान[13] ! न्यग्भूतं[14] कृत्वा । तम्[15] । दह[16] । अतसम्[17] । इव[18] । शुष्कम्[19], अतसान्[20] अनायादतो[21] दहत्यग्निरन्येभ्यः[22] काष्ठेभ्यः ।

---

१. रक्षोहननार्थमुद्यतो भव Sy. त्वमुत्तिष्ठ Mah., U., BB.
२. ०तिचवि० P. शत्रून् प्रति ज्वालासङ्घं विस्तारय Sy. ततः . . . ज्वाला विस्तारय Mah. प्रत्यातनुहि विस्तारय ज्वालाप्राग्भारान् U. उत्थाय प्रत्यातनुष्व शत्रून् प्रत्यात्ततेजा भव BB.
३. ०त्मान M.
४. तैस्तेजःसङ्घैः Sy. तथा च भूत्वा BB.
५. ०मित्रा P. शत्रून् Sy., Mah., U. अस्मच्छत्रून् . . . अमेरित्रप्रत्ययः BB.
६. नितराम् Sy., Mah. नियमेन BB.
७. ०हता M. 'उष दाहे'। लोटि हेः 'तुह्योः०' इति तातङादेशः Sy. निर्दह U.
८. तिम० P. तिग्मास्तीक्ष्णा हेतयो ज्वाला यस्य स तथोक्तः । तादृश ! Sy. तिग्मा हेतयो यस्य स तिग्महेतिः । तिग्मं तेजतेरुत्साहकर्मणः । तत्सम्बोधनं हे तिग्महेते ! उत्साहवदायुध ! Mah. हेतिरायुधम् । तिग्मं तेजतेरुत्साह–कर्मणः । उत्साहवदायुधं यस्य स तथोक्तः U. तीक्ष्णायुध ! BB.
९. पुमान् Sy.　　१०. नोऽस्मभ्यम् U.
११. भावप्रधाननिर्देशः, अरातित्वं शात्रवम् Sy. अरातिमदानम् U. अस्मभ्यं वा अरातिमदानम् BB.
१२. कुरुते, अरातिमदानं वा कुरुते Sy. दानं प्रतिषेधति Mah. न ददात्यश्रद्धालुः U. कुरुते, योऽस्मभ्यं न किञ्चिदपि ददाति BB.
१३. ०मिधा P. हे समिद्भिर्दीप्यमानाग्ने ! Sy. समिद्धे दीप्यतेऽसौ समिधानस्तत्सम्बुद्धौ हे समिधान ! दीप्यमान ! Mah. सामिधेनीसमिद्भिर्दीप्यमान ! BB.
१४. न्यङ्गूतं M. and P. नीचा नीचैः कृत्वा Mah. नीचा नीचैःकृत्य U. न्यग्भूतम् BB.　　१५. पुमांसम् Sy.
१६. धक्षि—दहेर्लोटि 'बहुलं छन्दसि' इति शपो लुक् । 'हो ढः' इति ढत्वम्, भष्भावः । 'षढोः कः सि' इति कत्वम् । निघातः Sy. 'दह भस्मीकरणे' Mah.
१७. अतत्सम् M. अतम् P. काष्ठम् Sy. तत्र दृष्टान्तः । . . . अतसो वृक्षः शुष्कं वृक्षमिवावातारं निर्दहेत्यर्थः Mah. वृक्षमिव शुष्कम् U. काष्ठमिव शुष्कम् BB.
१८. तत्र दृष्टान्तः । यथा Sy. न इवार्थः Mah. नकार उपमार्थीयः U.
१९. अनार्द्रमतसं काष्ठं दहसि तद्वत् Sy.
२०. अतसान् P.
२१. अनयासतो P. अनायासतः is suggested for अनायादतः ।
२२. ०रन्ये P. This stanza=YV. 13. 12.=TS. 1.2.14.2.

ऊ॒र्ध्वो भ॑व॒ प्रति॑ वि॒ध्याध्य॒स्मदा॒विष्कृ॑णुष्व॒ दैव्या॑न्यग्ने ।
अव॑ स्थि॒रा त॑नुहि यातु॒जूनां॑ जा॒मिमजा॑मिं॒ प्र मृ॑णीहि॒ शत्रू॑न् ॥ ५ ॥

ऊर्ध्वः । ऊर्ध्वम्[1] । उत्तिष्ठ[2] । अस्मत्तः[3] । अधि[4]। रक्षांसि[5] च प्रतिविध्य[6] । आविष्कुरु[7] च । दैव्यानि[8] तेजांसि । अग्ने ! पतितज्यानि[9] च कुरु । धनूंषि[10] । हिंसार्थं[11] जवं[12] कुर्वतां[13]

१. Omitted in P.

२. रक्षोहननार्थमुद्युक्तो भव Sy. उद्युक्तो भव Mah. ऊर्ध्वस्तिष्ठ U. उत्थितो भव BB.

३. अस्माकम् Mah. अस्मत्पक्षे तिष्ठन् । अस्मदर्थमित्यर्थः । यद्वा अस्मत्त उपरि ये तिष्ठन्त्यस्मान् न्यग्भावयन्तस्तान् BB.

४. Omitted in P. अधिकान् राक्षसान् Sy. उपरि Mah., U. अधिशब्देनापि सप्तम्यर्थ एव द्योत्यते BB.

५. वर्तमानाञ् शत्रून् Mah. व्यवस्थितान् U.

६. प्रत्येकं ताडय Sy. प्रतिताडय Mah. स्थित्वा च...प्रतिताडय U. उत्थाय प्रतिविध्य प्रत्येकं ताडय । यद्वा प्रतियोद्धा भव । ...यद्वा सप्तम्या लुक् । अस्मास्वधि प्रतिविध्यास्मन्निमित्तं प्रतियोद्धा भव BB.

७. विष्कु० P. आविष्कृणुष्व—इत्यत्र संहितायाम् 'इदुदुपधस्य चाप्रत्ययस्य' इति षत्वम् Sy. प्रकटय Mah. प्रकाशीकुरुष्व U. तदर्थं किं कर्तव्यमिति चेद् आविष्कृणुष्व प्रकाशय BB.

८. देवसम्बन्धीनि कर्माणि Mah. दैव्यानि कर्माणि U. देवस्य तव स्वभूतानि वीर्याणि यानि तवैव सन्ति तानि प्रकाशय । 'देवाद्यञञौ' इति यञ् BB.

९. अवगतज्यानि कुरु । तनुहि—तनोतेर्लोटि 'उतश्च प्रत्ययाच्छन्दसि वावचनम्' इति हेर्लुगभावः Sy. अवतारय Mah., U. अवाचीनं कुरु, नाशय BB.

१०. दृढानि Sy. स्थिराणि धनूंषि Mah., U. स्थिराणि वीर्याणि BB.

११. ०सार्थं P.

१२. जपं M. P.

१३. कुव० P. यातयितुं प्राणिनः क्लेशयितुं ये जवं कुर्वन्ति तेषां यातुधानानाम् । यातुजूनाम्—'जु गतौ' । 'क्विब्वचि०' इत्यादिना क्विप्, दीर्घः । आमि छान्दसो नुम् Sy. यातुधानानाम् Mah. जननप्रधानानाम् U. यातयितुं क्लेशयितुं प्राणिनो ये जनं कुर्वन्ति ते यातुजुवः... तेषां यातुधानानाम् BB.

राक्षसानाम् । ज्ञातिम्[१] । अज्ञातिं[२] वा । शत्रून्[३] । प्रमृणीहि[४] विनाशयेति[५] ।

**स ते जानाति सुमतिं यविष्ठ य ईवते ब्रह्मणे गातुमैरत् ।**
**विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्यो वि दुरो अभि द्यौत् ॥ ६ ॥**

स ते । सः[६] । तव । जानाति[७] । शोभनां मतिम्[८] । युवतम[९] ! यः[१०] । गमनवते[११] । ब्रह्मणे[१२] ।

---

१. जातिम् P. बन्धुम् Sy. जाम्यजामिशब्दौ पुनरुक्तापुनरुक्तवचनौ Mah. जामिशब्दः पुनरुक्तवचनः U. एवं त्वदीयानि वीर्याण्याविष्कृत्य यातुधानानां च वीर्याणि शिथिलीकृत्य पश्चादित्थं प्रवर्तितव्यमित्याह ।... यत्कृतमेव क्रियते तज्जामि BB.

२. Omitted in M. अबन्धुम् Sy. पुनरुक्तमपुनरुक्तं कृत्वा पुनःपुनस्ताडितमताडितं वा Mah., U.

३. एवंभूतान् शत्रून् Sy. रिपून् Mah.

४. प्रणी॰ P. प्रजहि—'मृङ् प्राणत्यागे'। अन्तर्भावितण्यर्थस्य लोटि 'बहुलं छन्दसि' इति विकरणस्य श्ना । निघातः Sy.

५. यद्वा । जामिं यः पूर्वं प्रहृतस्तम् । अजामिं पूर्वमप्रहृतम् । एवम्भूतान् शत्रून् जहि । प्रहृतोऽयमित्युपेक्षां मा कृथाः Sy. मृणातिर्मारणार्थः ।...मारय Mah. मृणातिर्मरणार्थः । प्रमारय शत्रून् U. प्रकर्षेण मारय । म्रियतेरन्तर्भावितण्यर्थाल्लोटि व्यत्ययेन श्ना,...यद्वा 'मृण हिंसायाम्' ।...अत्र प्रमृणीहीत्याख्यातसन्निधेर्मरणविषयं पौनरुक्त्यं विज्ञायते, उपचारेण तद्वति वृत्तिः । एतदुक्तम्भवति—शत्रून् प्रमृणीहि । किंविशेषेण ? जामिं चाजामिं च शत्रुं मारय, यः पूर्वं प्रहृतस्तमपि प्रहर । हतोऽयमिति मोपेक्षिष्ठाः । यश्च न प्रहृतः कुतश्चित्कारणात् तमपि प्रहर । वराकोऽयं न हन्तव्य इत्यादि चेतसि मा कृथाः । इदमेव कार्त्स्न्यं प्रतिपादयितुं बहुवचनं प्रयुक्तम् । एकेन जामिमारणेन, एकेनाजामिमारणेन देवस्य कृतार्थता मा विज्ञायीति । यद्वा द्वे अप्येते क्रियाविशेषणे ।... पुनरुक्तमपुनरुक्तं च शत्रून् मारयेति BB. This stanza=YV. 13. 13=TS. 1. 2. 14. 2.

६. पुमान् Sy.

७. लभत इत्यर्थः Sy. स एव तवानुग्रहबुद्धिं यथावद् भजत इति यावत् । यद्वा स एव त्वत्प्रसादात् सुमतिमात्महितं जानाति, स एवात्महिते प्रवर्तत इति यावत् BB.

८. कल्याणकरीमनुग्रहात्मिकां बुद्धिम् Sy. शोभनां कल्याणकारिणीं मतिम् BB.

९. ॰वक्ष P. यद्वा देवानां हवींषि मिश्रयितृतम ! हे अग्ने ! Sy. यद्वा हविर्देवानां मिश्रयितृतम ! यौतेस्तृजन्ताविष्ठन् BB.

१०. पुमान् Sy.

११. वत्वे M. and P. गमनवते कल्याणहेतुभूतागमनाय । ईवते—'ई गतौ'। क्विप् । 'तदस्यास्ति॰' इति मतुप् । 'छन्दसीरः' इति मतुपो वत्वम् Sy. प्रशस्तगतये कल्याणहेतुभूतागमनाय । यद्वा गृहमागताय BB.

१२. नये M. न य P. परिवृढाय तुभ्यम् Sy., BB.

स्तुतिम्[1] । प्रेरयति[2], गातिः शब्दकर्मा[3] । तत्कथमित्याह—विश्वान्येव[4] । अस्मै[5] । सुदिनानि[6] भवन्ति, अहानि । धनानि च भवन्ति । तथाऽयमीश्वरो[7] भूत्वा । अन्नानि[8] । तद्द्वाराणि[9] च । लक्षीकृत्य[10] । विद्योतते[11] ।

---

१. स्तुतिः M. गीयत उच्चार्यंत इति गातुः स्तोत्रं तत् Sy. गातुमन्नं हविर्लक्षणम् BB.

२. ऐरत्—'ईर् गतौ' । यद्वृत्तयोगादनिघातः Sy. ईरयति ददाति । 'ईर क्षेपे' चुरादिराधृषीयः ।. . . यद्वा ईवते गमनवते गमनकारिणे तुभ्यं यो गातुं मार्गमैरत् करोति । मार्गं हविरादिसम्पन्नं प्रवर्तयत्यलङ्कृतमिव राजमार्गम् । स एव सुमतिं जानाति BB.

३. Omitted in P. The passage गातिः शब्दकर्मा should immediately follow स्तुतिम् and precede प्रेरयति ।

४. एतानि विश्वान्यपि BB.

५. स्तोत्रं कृतवते यजमानाय तदर्थम् Sy. तस्मात्त्वया इत्थमस्यैवोपकर्तव्यमित्याह। अस्मै, इत्थं त्वयि श्रद्धां कुर्वते यजमानाय यजमानार्थम् BB.

६. नुदि० P. शोभनानि दिनानि Sy. शोभनानि दिनानि । यैर्द्युम्नादिभिश्शोभनानि दिनानि क्रियन्ते तानि सुदिनानि BB.

७. यज्ञानां स्वामी त्वम् । अर्यः—'ऋ गतौ' 'अर्यः स्वामिवैश्ययोः' इति यत्प्रत्ययान्तो निपातितः । स्वामिन्यन्तोदात्तत्वम् Sy. अर्यस्स्वामी BB.

८. द्युतिमन्ति रत्नकनकादीनि Sy. यशांसि BB.

९. तद्वारा० P. गृहान् Sy. गृहान्. . . दुर्वेर्हिंसाकर्मणः क्विपि वलोपः BB.

१०. अभिलक्ष्य Sy. अभिलक्षीकृत्य BB.

११. P. adds क after विद्योतते ॥ विशेषेण द्योतस्व । केचिदत्र वाक्यभेदमङ्गीकुर्वते । स्तोत्रं कृतवते यजमानाय विश्वानि सुदिनानि अभ्युदयकारीणि भवन्ति । रायः । रान्ति क्षीरादीनीति रायो गोधनानि । द्युम्नानि द्योतमानानि कनकादीनि चास्मै भवन्ति । अर्यः कर्मणामनुष्ठाता स यजमानो दुरो गृहानभि . . . विशेषेण द्योतते । द्योत्—'द्युत दीप्तौ' । छान्दसे लुङि 'द्युद्भ्यो लुङि' इति परस्मैपदम् । 'बहुलं छन्दसि' इत्यडभावः Sy. विशेषेण द्योतस्व । यथैतानि विश्वान्यपि सुदिनानि भवन्ति । इष्टदिनानि भवन्ति, तथा विद्योतस्व । अपरा योजना—विश्वानि द्युम्नानि दीप्तिमन्ति सुदिनानि शोभनदिनानि, अत्यन्तसंयोगे द्वितीया । यथा शोभनानि विश्वानि दिनानि भवन्ति तथा तेषु विद्योतस्व ।. . .दुरोऽभि गृहानभिलक्षीकृत्य विश्वानि दिनानि द्योतस्व । रायो धनस्य स्वामी त्वम् । अन्ये तु वाक्यभेदेन व्याचक्षते ।. . .विश्वान्यपि सुदिनान्यस्मै भवन्ति । द्युम्नानि यशांसि च भवन्ति । रायो धनस्य स्वामी भवति । गृहानभि विद्योतते । गृहस्थश्च भवति BB.

This stanza=TS. 1. 2. 14. 2.

सेदग्ने अस्तु सुभगः सुदानुर्यस्त्वा नित्येन हविषा य उक्थैः ।
पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै सुदिना सासदिष्टिः ॥ ७ ॥

सेदग्ने[1] । सः[2] । एव । अग्ने ! अस्तु[3] । शोभनधनः[4] । शोभनदानश्च[5] । यः[6] । त्वाम् । अनवरतम्[7] । तेन हविषा । प्रीणयितुमिच्छति[8] । यश्च । उक्थैः[9] । आत्मीये[10] । जीवनार्थम्[11] । गृहे[12] । तथा विश्वानि[13] । एव । अस्मै[14] । सुदिनानि[15] । सा[16] । भवतु[17] । इष्टिः[18], इत्युपसंहारः, इत्थं फलप्रदो[19] भवत्विति ।

१. स्वेदने P.

२. पुमान् Sy.

३. भवतु BB.

४. सौभाग्यवान् वा Sy., BB.

५. शोभनदानोपेतश्च Sy.

६. यत् M. पुमान् Sy. क इत्याह यः BB.

७. यावज्जीवं सङ्कल्पितेनाग्निहोत्रादिसाधनभूतेन Sy. अविच्छिन्नेन यावज्जीवसङ्कल्पनां परिपालयन् BB.

८. प्रीणयितुमिच्छति न कदाचिदपीमां हित्वा यजमानो भवति । 'प्रीञ् तर्पणे' BB.

९. शस्त्रैः प्रीणयितुमिच्छति । पिप्रीषति— 'प्रीञ् तर्पणे' । 'धातोः कर्मणः' (Pa. 3. 1. 7.) इति सन् Sy., BB.

१०. ०त्मीयैः M. ०त्मीयै P. स्वकीये Sy. आत्मार्थं न परार्थमिति स्वग्रहणेन दर्शयति BB.

११. ०नार्त्थम् P. शतवर्षाख्ये जीवने तिष्ठतु Sy. जीवितेऽग्नौ वा निमित्ते । 'निमित्तात्कर्मसंयोगे' सप्तमी BB.

१२. दुरवने कृच्छ्रलभ्ये Sy. स्व इत्येव । आत्मीये गृहे स्थितं त्वां पिप्रीषति, नत्वृत्विजाम् । दुःखेन रक्ष्यत इति दुरोणम् BB.

१३. सर्वाणि Sy. सा तादृशीत्थम्भूतेन क्रियमाणा. . .विश्वैव न पुनरेकैव BB.

१४. अस्मे P. यजमानाय Sy. अस्मा अस्य षष्ठ्यर्थे चतुर्थी । . . .यद्वा अस्य यजमानस्य विश्वान्यपि सुदिनानि भवन्ति BB.

१५. शोभनानि दिनानि भवन्तु Sy. शोभनदिना ? (नि) BB.

१६. स P. सः Sy.

१७. धयतु M. असत्—अस्तेर्लेटचडागमः Sy. भवति BB.

१८. यज्ञः । इष्टिः—'मन्त्रे वृषेष०' इत्यादिना क्तिन्नुदात्तः Sy. यागः BB.

१९. फलसाधनसमर्थो भवतु Sy. किञ्च सा तादृशेन क्रियमाणा, इष्टिरसङ्गवेत् । अतादृशेन क्रियमाणेष्टिरेव न भवति । तस्मात्स एव सुभगस्सुदानुश्चास्तु । भगोरूपमैश्वर्यं वा । दानुर्दानशीलो दातृत्वं वा BB.

This stanza=TS. 1. 2. 14. 2.

अर्चामि ते सुमतिं घोष्यर्वाक्सं ते वावाता जरतामियं गीः ।
स्वश्वास्त्वा सुरथा मर्जयेमास्मे क्षत्राणि धारयेरनु द्यून् ॥ ८ ॥

[1]अर्चामि[2][3]। उच्चारयामि[4] । तव[5] । सुमतिम्[6] । घोषयुक्तम्[7]—उच्चैर्यथा । अर्वाक्[8] सा[9] भवत्वस्मदभिमुखी । संस्तौतु[10] । ते[11] । प्रियतमा[12] । इयम्[13] । गीः[14] । त्वाम् । स्वश्वाः[15] । सुरथाश्च[16] सन्तो वयम् । तद्रक्षणार्थं[17] परिचरेम[18] त्वाम् । अस्मासु[19] । बलानि[20] । स्थापयत॰[21]। दिवसेषु[22] ।

---

१. उखासम्भरणीयेष्टावग्नेः क्षत्रभृतः 'अर्चामि ते' इति याज्या । सूत्रितञ्च—'अर्चामि ते सुमतिं घोष्यर्वागितीदंप्रभृतिकर्मणाम्' (ASS. 4. 1.) इति Sy.

२. अत्यर्चामि P.

३. हे अग्ने ! Sy.

४. पूजयामि Sy. अर्चयामि पूजयामि मनसा बहु मन्ये BB.

५. त P.

६. अनुग्रहकरीं शोभनां बुद्धिम् Sy. शोभनां बुद्धिमुपकर्त्रीं बुद्धिम् । सुष्ठु मन्यतेऽनयेति BB.

७. घोषयुक्तं यथा भवति तथा । घोषि—'घुष शब्दने'। औणादिक इन्, नित्त्वादाद्युदात्तः स्तुतिर्विशेष्यते ।...घुष्यत इति घोषि ।...क्रियाविशेषणत्वान्नपुंसकत्वम् BB.

८. त्वदभिमुखम् Sy.

९. स P. अर्वाचीनमस्मादृशजनोचितम् BB.

१०. स्तौतु P. सम्यक् स्तौतु । जरतिः स्तुतिकर्मा छन्दसि BB.

११. Omitted in P. त्वाम् Sy., BB.

१२. पुनः पुनस्त्वामभिगच्छन्तीयमुच्यमाना । वावाता—'वा गतिगन्धनयोः' इत्यस्य यङ्लुगन्तस्य निष्ठायां रूपम् Sy. कीदृशी गीः । त्वामेव वावाता पुनः पुनस्त्वामेवोपगच्छन्तीति क्षणमपि त्वां हातुमशक्नुवती ।...त्वां संवावाता त्वां सङ्गच्छन्ती वान्वीयते । यद्वा त्वामञ्चिता वाऽवगच्छन्तीति वा 'वष्टि भागुरिरल्लोपम्' इत्यवशब्दाकारो लुप्यते । ...यद्वा—आद्यन्तविपर्ययो वाऽवशब्दस्य । यथा 'श्वात्रोऽसि' इत्याशुशब्दस्य । ...यद्वा । अतिशयेन वननीया । यङ्लुकि छान्दसी रूपसिद्धिः BB.

१३. इयं मदीया BB.

१४. वाक् Sy. यथास्माभिर्घोषयितुं शक्यते तथा घोषयित्वा त्वद्गुणानियं स्तौतु BB.

१५. सश्वाः M. स्यश्वाः P. वयं शोभनाश्वोपेताः Sy.

१६. ॰था श्वा P. उपलक्षणमेतत् । पुत्रपौत्रादिभिः सहिताः सन्तस्त्वाम् Sy.

१७. णार्त्थम् P.

१८. ॰रेमः P. अलंकुर्याम । परिचरेम इति यावत् । 'मृजू शौचालङ्कारयोः'। ण्यन्तस्य लिङि रूपम्, वृद्ध्यभावश्छान्दसः Sy. अथ कायिकीं परिचर्यामाह ।...त्वत्प्रसादेन महाधनाः पुत्रपौत्रादिसहिताश्च सन्तस्त्वामर्चयेम । परिचरेमेति यावत् । 'मृजू शौचालङ्करणयोः' BB.

१९. अस्मभ्यमेवं वर्तमानेभ्यः BB.

२०. धनानि Sy.

२१. निधेहि Sy. धारयेः देहि BB.

२२. अन्वहम् Sy. दिने दिने । लक्षणादिना कर्मप्रवचनीयत्वम् BB.

This stanza=TS. 1. 2. 14. 3.

इह त्वा भूर्या चरेदुप त्मन्दोषावस्तर्दीदिवांसमनु द्यून् ।
क्रीळन्तस्त्वा सुमनसः सपेमाभि द्युम्ना तस्थिवांसो जनानाम् ॥ ९ ॥

इह त्वा[1] । अग्ने[2] ! अस्मिन् लोके[3] । आत्मनि[4] । भूयिष्ठम्[5] । प्राज्ञः[6], त्वाम्[7] । उपाचरति[8] । रात्रावह्नि[9] च । दीप्यमानम्[10] । दिने दिने[11] । वयं च पुत्रैर्नप्तृभिश्च क्रीडन्तः[12] । सुमनसो[13] मोदमानाः[14] । त्वाम् । भजेम[15] । शत्रुजनानाम्[16] । अन्नानि[17] । अभितिष्ठन्तः[18] ।

---

१. त्वाम् P.

२. अग्ने P.

३. रक्षोहननाख्ये कर्मणि । यद्वा अस्मिन् लोके यः पुरुषः Sy. इहास्मिन्कर्मणि रक्षोवधलक्षणे BB.

४. आत्मना स्वयमेव । त्मन्—आत्मन् शब्दस्य तृतीयायाः 'सुपां सुलुक्०' इति लुक् । 'मन्त्रेष्वाङ्यादेरात्मनः' इत्याकारलोपः Sy.

५. भूयिष्ठं यथा भवति तथा Sy.

६. प्राज्ञः M. पुरुषः BB.

७. त्वामेव BB.

८. समीपे परिचरति । तस्माद्वयमपि Sy. उपचरितुमर्हति BB.

९. ०वह्नी M. रात्रावहनि च । यद्वा । दोषावस्तरिति सम्बुद्धिः । दोषाया रात्रिकृतस्य तमसो वस्तराच्छादयितर्निवारयितः । द्वन्द्वपक्षे 'कार्तकौजपादयश्च' इति पूर्वपदप्रकृतिस्वरः । सम्बुद्धिपक्षे आमन्त्रितस्य पादादित्वात्वाष्टिकमाद्युदात्तत्वम् Sy. रात्रावहनि च । . . .पदसमुदायात्मको वैको निपातः BB.

१०. दीप्य दीप्यमा० M. सर्वेषामन्तः. . . सन्दीप्यमानम् । . . .छान्दसो वा दीदिविर्दीप्तिकर्मा कृतद्विवचन एव । यद्वा इहास्मिँल्लोके त्वामेव भूरि, उपाचरेत् पुरुष आत्मनिमित्तमात्मनोऽभिमतसम्पादनार्थं दोषावस्तः दीप्यमानम् BB.

११. अन्वहम् Sy. अनुद्यूनित्युपचरणं विशेष्यते । अनुदिनमुपाचरेदिति BB.

१२. स्वे स्वे गृहे पुत्रपौत्रादिभिः सह सङ्क्रीडमानास्तथा Sy. तस्माद्वयं क्रीडन्तस्तृप्यन्तः BB.

१३. शोभनमनस्काः सन्तस्त्वाम् Sy. अप्रतिकूलमनसः शोभनमनसो वा BB.

१४. मदामः P.

१५. परिचरेम । सपेम—'षप समवाये' लिङि रूपम् । निघातः Sy. 'षप समवाये' BB. सपतिः परिचरणकर्मा, अर्चतिकर्मा च N. 3. 5., 14.

१६. शत्रूणाम् Sy.

१७. अान् P. द्युम्नानि धनानि Sy. धनानि यशांसि वा BB.

१८. त्वत्प्रसादादात्मसात्कुर्वन्तः Sy. त्वत्प्रसादेनात्मसात्कुर्वन्तस्त्वत्सम्बन्धिन एव सदा भवेमेति BB.

This stanza=TS. 1. 2. 14. 4.

यस्त्वा स्वश्वः सुहिरण्यो अग्न उपयाति वसुमता रथेन ।
तस्य त्राता भवसि तस्य सखा यस्त आतिथ्यमानुषग्जुजोषत् ॥ १० ॥

यस्त्वा । यः[1] । त्वाम् । अग्ने ! स्वश्वः[2] । सुहिरण्यः[3] । वसुपूर्णेन[4] । रथेन च युक्तः[5] । तत्परिरक्षणार्थमुपगच्छति[6] । तस्य[7] । त्वं त्राता[8] । भवसि । सखा[9] च । उपगमनप्रकारमाह— यः । त्वदर्थम्[10] । आतिथ्यम्[11] । अनुषक्तम्[12] । सेवत इति[13] ।

महो रुजामि बन्धुता वचोभिस्तन्मा पितुर्गोतमादन्वियाय ।
त्वं नो अस्य वचसश्चिकिद्धि होतर्यविष्ठ सुक्रतो दमूनाः ॥ ११ ॥

महः[14] । महतोऽपि शत्रून्[15] । अहं रुजामि[16] । मम हि त्वयाऽग्ने ! बान्धवमस्ति[17] ।

---

१. पुमान् Sy. य ईदृशः सन् BB.

२. स्वश्च M. शोभनाश्वोपेतः Sy. शोभनाश्वो महाधनो यागयोग्य इति यावत् BB.

३. सहि० P. यागयोग्यधनोपेतः Sy.

४. ०पूर्णो P. व्रीह्यादिधनयुक्तेन Sy. व्रीह्यादिधनवता BB.

५. युक्तं M. सहितः सन् Sy.

६. णार्थं० P. परिचरणार्थं तव समीपं गच्छति । उपयाति—'सह सुपा' इत्यत्र सहेतियोगविभागात्समासः । तिपः पित्त्वादनुदात्तत्वे धातुस्वरः । 'तिङि चोदात्तवति' इति गतेर्निघातः Sy. त्वामुपयाति BB.

७. पुंसः Sy.

८. सर्वदुरितेभ्यो रक्षकः Sy. तस्य त्राता भवसि सर्वदुरितेभ्यः BB.

९. तदुचितफलप्रदानेनोपकर्ता भवसि Sy.

१०. ०दर्त्थम् P. तव Sy.

११. आदित्यम् M. अतिथियोग्यां पूजाम् । अतिथिशब्दात्तादर्थ्ये । 'अतिथेर्ञ्यः' इति ञ्यप्रत्ययः । प्रत्ययस्वरः Sy. अतिथिसत्कारम् । यद्वा—अनुषक्तं यथाभिलषितमातिथ्यम् BB.

१२. अनुक्रमेण Sy. नित्यम् BB.

१३. प्रापयति । जुजोषत्—जोषयतेर्लङि 'बहुलं छन्दसि' इति शपः श्लुः । अडागमः । 'छन्दस्युभयथा' इति तिप आर्धधातुकत्वाण्णिलोपः । 'अभ्यस्तानामादिः' इत्याद्युदात्तः Sy. जोषयति BB.
This stanza=TS. 1. 2. 14. 4.

१४. मह P.

१५. राक्षसान् Sy. असुरान् । ये धनादिना मामतिशेरते तान् BB.

१६. भनज्मि Sy. भञ्जयामि मत्तो न्यक्करोमि BB.

१७. बन्धुता बन्धुभावस्तया बन्धुतया Sy. हे अग्ने !...बन्धुतया बन्धुभावेन BB.

स्तुतिवचनैः[1]। तत्[2]—बान्धवम्। मम पितुः[3]। गोतमात्[4]। माम्[5]। अन्वियाय[6], मया[7] पित्रा च तवास्ति बान्धवमित्यर्थः[8]। तथा सति त्वम्[9]। अस्माकम्[10]। इदम्[11]। वचनम्[12]। बुध्यस्व[13]। होतः[14]! युवतम! सुप्रज्ञ[15]! रक्षमा[16] दमनमनास्त्वमिति।

**अस्वंप्नजस्तुरणंयः सुशेवा अतंन्द्रासोऽवृका अश्रंमिष्ठाः।**
**ते पायवंः सुध्र्यंञ्चो निषद्याग्ने तवं नः पान्त्वमूर ॥ १२ ॥**

अस्वप्नजः। स्वापमकुर्वन्तः[17]। क्षिप्रगतयः[18]। सुसुखाः। अनलसः[19]। स्तेनरहिताः[20]।

---

१. त्वदुद्देशेन कृतैः स्तोत्रैः समुपजाता येयम् Sy. स्तुतिभिरुपजातया त्वद्बन्धुतया BB. २. त्वत् P. तादृशं स्तोत्रात्मकं वचः Sy. तादृशं ज्ञानम् BB.

३. उत्पादयितुः Sy. पितुः सकाशात् BB.

४. गोतमा P. ऋषेः सकाशात् Sy. गोतमनाम्नो गोतमसदृशाद्वा BB.

५. मम् M. and P. वामदेवम् Sy.

६. अन्वगच्छत् BB.

७. या P.

८. ०त्यर्थं P. येन त्वां वाग्भिर्बन्धुत्वाय (येनेमां वाचं त्वद्बन्धुत्वाय) करोमि। यद्वा वचोभिरिति व्यत्ययेन बहुवचनम्। स्तुतिवचसोपजातेन तव बान्धवेन महो रुजामि प्रथमम्। तदनु तस्माद् गोतमात् त्वद्बान्धवहेतुभूतगोतमात् साधुतमात् स्तुतिवचसो हेतुभूतात्पितुरन्नमपि मामियाय, एति उपगच्छति तेनैव बान्धवेन। यद्वा तत्तादृशं वचो गोतमात्पितुः सकाशान्मामन्वियाय। सा स्तुतिशक्तिर्मामुपसङ्क्रान्तेत्यर्थः BB.

९. त्वमेव खलु BB. १०. अस्मदीयस्य Sy., BB. ११. अस्य Sy.

१२. Omitted in P. स्तोत्रात्मकमेतद् वाक्यम् Sy. अस्य स्तुतिवचसः. . . अस्येति स्तोत्ररूपं निर्दिशति, नतु प्रकृतं वचः BB.

१३. जानीहि। चिकिद्धि—'कित ज्ञाने'। जौहोत्यादिकः, लोटि रूपम् Sy. जानासि। एतज् ज्ञातुं शक्नोषि। 'कित ज्ञाने'। जुहोत्यादिकः BB.

१४. हे देवानामाह्वातः! पादादित्वात् षाष्ठिकमाद्युदात्तत्वम्। इतरयोस्तु 'नामन्त्रिते समानाधिकरणे०' इति प्रथमस्याविद्यमानवद्भावनिषेधादपादादित्वेन निघातः Sy. कस्तव विशेषः? इत्याह। हे होतः! देवानामाह्वातः! BB.

१५. शोभनप्रज्ञ! हे अग्ने! Sy.

१६. ०क्षसा P. दान्तमना दानमना वा शत्रूणामुपक्षपयिता वा तादृशः Sy. दान्तमना दानमना वा। पृषोदरादिः। ईदृशस्त्वमेवैतच्चिकिद्धि किमन्येनाज्ञानिनेति BB.

This stanza=TS. 1. 2. 14. 4.

१७. स्वपमकुर्वन्त P. अस्वपन्तः। जागरूका इति यावत्। अस्वप्नजः—'स्वपितृषोः०' नजिङ्प्रत्ययः। मध्येऽवग्रहश्छान्दसः Sy. अस्वप्नशीलः।. . .पदकारानभिमतत्वादन्यथा व्याख्यायते। स्वप्नजन्मानो न भवन्तीत्यस्वप्नजाः BB.

१८. ०गमयः P. सततगमनस्वभावा आपद्भ्यस्तारका वा Sy. दुरिततरणहेतवः। तरतेरनिप्रत्ययः BB.

१९. अतन्द्रा अनलसाः सर्वदोद्युक्ताः Sy. अलसत्वरहिताः BB.

२०. अहिंसकाः Sy. वृकत्वं हिंस्रत्वं तद्रहिताः BB.

अश्रान्ततमाः[1] । ते[2] । तव । रश्मयः[3] । सहाञ्चन्तः[4] । निषद्य[5] । अग्ने ! अस्मान् । रक्षन्तु[6] । अमूढ[7] !

**ये पायवो मामतेयं ते अग्ने पश्यन्तो अन्धं दुरितादरक्षन् ।**
**ररक्ष तान्त्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो नाह देभुः ॥ १३ ॥**

ये पायवः[8] । ये । रश्मयः । ममताया अपत्यं[9] दीर्घतमसम्[10] । तव । अग्ने ! पश्यन्तः[11] । अन्धम्[12], दासैः पीडयमानम् । तस्मात् दुःखात्[13] । अरक्षन्[14] । परोक्षः शेषः[15], अयमग्निः[16] । तान्

---

१. अखेदयितृतमाः । 'श्रमु खेदे' BB.
२. तादृशाः Sy. एवंस्वभावास्ते तादृशाः BB.
३. जगत्पालनशीला रश्मयः BB.
४. परस्परं सङ्गताः । सध्र्यञ्चः—सहपूर्वादञ्चतेः क्विप् । 'सहस्य सध्रिः' इति सहस्य सध्र्यादेशः । सध्र्यादेशस्यान्तोदात्तत्वनिपातनात् यणादेशे 'उदात्तस्वरितयोः०' इति स्वरितत्वम् Sy. सहाञ्चन्तः सम्भूयकारिणः BB.
५. अस्मद्यज्ञे निषण्णा भूत्वा Sy. अस्मद्यज्ञे निषीदन्तो भूत्वा सर्वेऽस्मद्यज्ञमागत्य त्वयि निषण्णास्त्वामुद्दीपयन्तः BB.
६. रक्षंस्तु M.
७. ०मूढः P. सर्वज्ञ ! यद्वा अप्रतिहतगते ! अमूर—'मुह वैचित्ये' । निष्ठायां ढकारस्य रेफश्छान्दसः । यद्वा 'मूङ् बन्धने' । औणादिको रक् Sy. अमोहनशील ! 'मूर्च्छा मोहनसमुच्छ्राययोः'। . . . मोहनशीलो मूरस्ततोऽन्योऽमूरः । यद्वा 'मूङ् बन्धने' औणादिको रक् । अमूर ! अबन्धनीय ! अनिग्राह्य ! यद्वा—अमतेरुरन्प्रत्ययः । अमूरोऽप्रतिहतगतिः BB. This stanza=TS. 1. 2. 14. 5.
८. अत्रेयमैतिहासिकी कथा । उचथ्यस्य गर्भिणीं ममतानामधेयां भार्यां तदनुजो बृहस्पतिरचकमत । तस्यां रेत आधित्सुं तं बृहस्पतिं गर्भस्थं रेतोऽब्रवीत्, रेतोऽत्र मा सैक्षीरहमत्र वसामीति । एवमुक्तो बृहस्पतिर्निरुद्धरेतस्कः सन् रेतोरूपं गर्भं शशाप । जात्यन्धत्वरूपं दीर्घं तमः प्राप्नुहीति । ततस्तस्यां दीर्घतमा अजनिष्ट । स चान्ध्यपरिहारायाग्निं स्तुत्वा चक्षुरलभतेति । तदिदानीमाह Sy.
९. अत्यपत्य P. पुत्रम् । ममताया अपत्यमित्यर्थे 'स्त्रीभ्यो ढक्' Sy. ममतानाम काचिदृषिपत्नी तस्या अपत्यं मामतेयम् । 'स्त्रीभ्यो ढक्' BB.
१०. ०र्घम० P.
११. अन्धोऽयमिति कृपादृष्ट्या पश्यन्तः Sy. तमन्धं पश्यन्तः BB.
१२. M. omits पश्यन्तः and अन्धम् ॥ चक्षुर्हीनम् Sy., BB.
१३. दःखा० P. आन्ध्यलक्षणात् शापात् Sy. दुरिताच् श्वभ्रपतनलक्षणात् । . . . दुरितशब्दः प्रवृद्धादिर्द्रष्टव्यः BB.
१४. चक्षुःप्रदानेनापालयन् Sy. प्रकाशप्रदानेन दुरितहीनमकुर्वन् BB.
१५. शे षोषः P.
१६. विश्ववेदास्त्वं विश्वस्य वेदयिता । . . . विश्वानि वेदांसि वा यस्य तादृशो भवान् तान् BB.

रश्मीन्[१]। शोभनकर्मणः कर्तॄन्[२]। ररक्ष न परित्यजति[३]। ते नोऽस्मान् दम्भितुमिच्छन्तः[४]। एव। शत्रवः[५]। न। एव[६]। देभुः[७], तत्सम्भवादिति[८]।

**त्वया वयं संधन्य॑स्त्वोतास्तव प्रणीत्यश्याम वाजान्।**
**उभा शंसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यह्याण ॥ १४ ॥**

त्वया वयम्[११]। त्वया[१२]। वयम्[१३]। अग्ने[१४]! सदा[१५] त्वया रक्षिताः[१६]। तव! प्रणयनेन[१७]।

---

१. नू इच रश्मिम्मीषिन् P.

२. शोभनं चक्षुष्प्रदानादिकर्म कृतवतः Sy. तथा शोभनं कर्म कृतवतः BB.

३. नू रक्ष P. आदरेण परिगृह्य पालयति तेषां परिग्रहसिद्धिरभिधीयते Sy. रक्षतेः परोक्षे लिट्। आदरेण परिगृह्य पालयेति।...परोक्ष एव ररक्ष विशेषणेन परिजग्राहेत्यर्थः BB.

४. जरति M.

५. त M. and P.

६. दाभितु० P. दम्भितुं परिभवितुमिच्छन्त एव। दिप्सन्तः—'दम्भु दम्भे'। 'सनीवन्तर्ध०' इत्यादिना इडभावः। 'दम्भ इच्च' इतीकारः Sy. रिपुं दम्भितुमिच्छन्तः परिभवितुमिच्छन्त एव सन्तः BB.

७. M. omits छन्तः। एव शत्रवः॥ एनं दीर्घतमसम् Sy. यथा रिपवो राक्षसादयः BB.

८. एवं M.

९. देभु P. परिभवन्ति खलु। देभुः—'श्रन्थिग्रन्थिदम्भिस्वञ्जीनामुपसंख्यानम्' (का० ६. १.) इति लिटः कित्त्वादुपधालोपः Sy. न परिबभूवुः। ततः प्रभृति तथा ररक्षेति BB.

१०. कतं भवामीति P.
This stanza=TS. 1. 2. 14. 5.

११. Omitted in P. वामदेवस्यार्षम SKN., Dur.

१२. अग्निना सह SKN.

१३. स्तोतारः Sy.

१४. हे अग्ने! Sy. हे भगवन्नग्ने! Dur.

१५. स्तदा P.

१६. त्वया रक्षिता वयम् Sy. यतः...त्वया रक्षिता यस्माच्चैवमतो ब्रूमः SKN. यत एवमतो ब्रूमः...त्वयैव रक्षिताः सन्तः Dur.
त्वया ऊता रक्षिताः। छान्दसी रूपसिद्धिः BB.

१७. प्रेरणेनानुज्ञया Sy. तृतीयायाः पूर्वसवर्णः। तवैव प्रणीत्या प्रकर्षेण धनेन त्वदुपदेशेनेत्यर्थः SKN. प्रणीत्या तवैव प्रणयनेन Dur. अनुज्ञानेन परिचरणेन वा वयम् BB.

भुञ्जीमहि[1]। अन्नानि । स त्वं शत्रूणाम्, प्रत्यक्षाभिशापं परोक्षाभिशापं च[2]। विनाशय[3]। सत्यस्य[4] विस्तारयितः ! साध्वेवास्माकम्[5]। कुरु[6]। अह्लीतगमन[7] ! कामप्रदानादिति[8]।

१. भुक्षीम M. प्राप्नुयाम Sy., SKN., Dur. भक्षीमहि BB.

२. It is combined explanation of उभा and शंसा ॥ उभावासन्नविप्रकृष्टौ, शंसा पापानां शंसितारौ Sy. उभे च प्रकाशयशसी ते प्रत्यक्षपरोक्षे वा सन्निकृष्टविप्रकृष्टे वा अस्माकं पापानां शंसितारौ SKN. उभावपि शंसितारौ, यश्चाग्रतो नः पापानि शंसति यश्च पृष्ठतस्तावुभावपि Dur. उभौ शंसनीयावर्थौ, ऐहिकमामुष्मिकं च BB.

३. जहि Sy. 'षूद क्षरणे'। क्षरय SKN. सुष्ठु जहि Dur. तौ सूदय, आनय । 'षूद क्षरणे' BB.

४. स्युत्य० P. M. omits शापं च विनाशय सत्यस्य ॥ सत्यं तनोतीति वा, सत्यं तायते यस्मिन्निति वा सत्यतातिः । हे सत्यताते Sy. सत्याय तनोति यस्मिन् वा तायते स सत्यतातिस्तस्य सम्बोधनं हे सत्यताते ! सत्यस्य तनितः ! तथा च स्मरणम्—'नाग्निर्ददाह रोमापि सत्येन जगति स्थितः' SKN. यज्ञतनितः Dur. सत्यकारिन्। व्यत्ययेन तातिल्प्रत्ययः । यद्वा तनोतेः क्तिनि छान्दसं दीर्घत्वम् । हे सत्यविस्तार ! BB.

५. अनुक्रमेण । अनुष्ठ्या—'अपदुःसुषु स्थः' इति विधीयमानः कुप्रत्ययो बहुवचनादनुपूर्वस्यापि भवति । 'सुपां सुलुक्' इति तृतीयाया याजादेशः Sy. सर्वं चेदमनुष्ठ्या, अनुष्ठानेन SKN. अनुष्ठानेनेत्यर्थः Dur.

६. अस्मिन् सूक्ते प्रतिपादितमर्थं कुरु Sy. कर्मणैतत्सम्पादय यदहं ब्रवीमि Dur. अनुक्रमेण स्थितौ कृणुहि कुरु ।... अनुक्रमेण स्थापनमनुष्ठु BB.

७. अतहीत० M. अतह्लीत० P. अलज्जितगमन ! तादृश ! हे अग्ने ! अहृयाण—'ह्री लज्जायाम्'। 'बहुलं छन्दसि' इति शपः श्लुभावाभावः । 'अनित्यमागमशासनम्' इति मुगभावः Sy. वेहे ...अलज्जयान ! SKN. अलज्जितयानेत्यर्थः । एवमत्र 'अह्रयाणः' इत्यनेनाह्लीतयानोऽग्निरुच्यते देवतेति । उपपद्यते हि देवताया अलज्जितयानत्वम् Dur. अह्रयाणोऽह्लीतयानः N. 5. 15.; SKN. II. 35. 1. This stanza=TS. 1. 2. 14. 5.
भक्तानामह्लेषयितः ! विजयकरत्वात् BB.

८. VM. ignores सधन्यः ॥ सधन्यः—त्वत्प्रसादात् समानधनाः । धनमेषामस्तीति 'छन्दसीवनिपौ०' इति ईप्रत्ययः । 'एरनेकाचः' इति यण् । 'उदात्तस्वरितयोः०' इति स्वरितत्वम् Sy. समानधना दर्शपौर्णमासचातुर्मास्यपशुसोमादियागक्रियायां साधारणधना इत्यर्थः SKN. समानधनिनः । यदेतदस्मद्गृहे धनमेतदावयोः सहेत्यभिप्रायः Dur. त्वया सधन्यः सहनेतारो वयं त्वं च वयं च सहाभिमतानि नयाम इत्यर्थः BB.

अया ते अग्ने समिधा विधेम प्रति स्तोमं शस्यमानं गृभाय ।
दहाशसो रक्षसः पाह्यस्मान्द्रुहो निदो मित्रमहो अवद्यात् ॥ १५ ॥

अया ते[1] । अनया । समिधा[2] । तुभ्यम्[3] । अग्ने ! परिचरामः[4] । स्तोमं[5] च । अस्माभिः शस्यमानम्[6] । प्रतिगृहाण[7] । दह[8] च । अशनपरान्[9] । राक्षसान्[10] । पाहि[11] च । अस्मान् । द्रोग्धुः[12] । निन्दितुश्च[13] । अवद्यात्[14] । हे मित्राणां पूजक[15] ! इति ।

व्याख्यच्चतुर्थ[16]मध्यायं तृतीयस्याष्टकस्य सः ।
भवगोलकुले यस्य मातुरासीत्समुद्भवः[17] ॥

इति तृतीयाष्टके चतुर्थोऽध्यायः[18] ।

---

१. Omitted in P.

२. दीप्त्या स्तुत्या Sy. समिन्धनेन सामिधेनीकृत्येन BB.

३. त्वाम् Sy. ते त्वाम्, पूर्ववत् कर्मणः सम्प्रदानत्वम् BB.

४. ०चरे न P. परिचरेम Sy., BB.

५. स्तोत्रम् Sy., BB.

६. ०स्यमनं P.

७. गृभाय—ग्रहेर्लोटि 'छन्दसि शायजपि' इति श्नः शायच्। 'हृग्रहोर्भः' Sy.

८. भस्मसात्कुरु Sy.

९. शन० P. शंसन्ति स्तुवन्तीति शसः स्तोतारः। ते न भवन्तीत्यशसो नृशंसास्तान् Sy. अशंसनानस्मद्द्वेष्यान्। बहुव्रीहिर्वा। अशेर्वाऽसुन्। व्यापकान् हिंसाद्वारा BB.

१०. ०क्षसः P. M. omits words between हाण and राक्षसाः० ॥ रक्षसः Sy.

११. रक्ष। वाक्यभेदादनिघातः Sy.

१२. राद्धु M. कस्मादित्याह—द्रुहो द्रोहात्परकर्तृकात् BB.

१३. निन्दकात्। निदः—'णिदि कुत्सायाम्'। क्विप्। आगमशासनस्यानित्यत्वान्नुमभावः। 'सावेकाचः' इति विभक्तेरुदात्तत्वम् Sy. निन्दतेः क्विप्। निन्दायाः परकर्तृकायाः BB.

१४. अपत्यात् P. परिवादाच्च। 'अवद्यपण्य०' इति यत्। 'ययतोश्चातदर्थे' (Pa. 6. 2. 156.) इत्यन्तोदात्तत्वम्। 'मित्रमहो अवद्यात्' इत्यत्र संहितायाम् 'अव्यादवद्यात्०' इत्येङः प्रकृतिभावः Sy. परिवादात् परकर्तृकाद् अस्मान्पाहि BB.

१५. हे मित्रैः पूजनीय ! हे अग्ने ! Sy. सर्वस्य मित्रवदुपकारकं महस्तेजो यस्य स तादृशः BB.

This stanza=TS. 1. 12. 14. 6.

१६. ०ख्यत् चतुर्थं० P.

१७. M. omits मातुरासीत्समुद्भवः।

१८. इति...ऽध्यायः is omitted in P.

# ॥ अथ तृतीयेऽष्टके पञ्चमोध्यायः ॥

'वैश्वानराय मीळ्हुषे' व्याचिख्यासति माधवः ।
आदौ प्रदर्शयन्नर्थमृचां या हिभिरन्विताः ॥ १ ॥
वाक्यार्थस्य परार्थत्वे हिशब्दोऽयं प्रयुज्यते ।
उद्गृह्णाति च वाक्यार्थम् 'इन्दवो वामुशन्ति हि' ॥ २ ॥
उद्गृह्यमाणो वाक्यार्थो न स्वस्मिन् पर्यवस्यति ।
कामयन्ते हि वां सोमास्तस्मादागच्छतं युवाम् ॥ ३ ॥
'सुते हि त्वा हवामहे' 'स हि नः प्रमतिर्मही' ।
"नहि त्वा रोदसी उभे" सर्वेषूद्ग्रहणं स्फुटम् ॥ ४ ॥
वाक्यान्तरेणान्वयार्थमप्ययं हिः प्रयुज्यते ।
असत्यपि च हेतुत्वे तथैवोद्ग्रहणे सति ॥ ५ ॥
'युक्ष्वा हि देवहूतमान्' 'उषो वाजं हि वंस्व यः' ।
'नहि ते क्षत्रं न सहः' 'उरुं हि राजा वरुणः' ॥ ६ ॥

---

१. Omitted by P., D.
२. ०ह्लुवे D. षे only for वैश्वानराय मीळ्हुषे in M. RV. IV. 5. 1ᵃ
३. ०न्नर्थस्तृचा या हि० P. ०न्नर्थं स्मृचां या हि० D. ०र्शय भि० M. ०र्शय-न्वृत्तिन्तिङां ये हिभि० R.
४. वामृश० P.
५. M. reads उ only for उद्गृह्णाति etc. RV. I. 2. 4. ६. ०मस्त० P. ०मः त० D. ७. युवं D.
८. RV. I. 16. 4. ९. न M.
१०. ०हि P., D. RV. VI. 45. 4.
११. RV. I. 10. 8. १२. ०द्गृ० D.
१३. ०सी स्फुटम् M. तिङर्थोऽत्र हिना स्फुटः R. १४. ०णा P.
१५. युष्मा P. १६. RV. VIII. 75. 1.
१७. वा जाहि. . . M. वंस्व चन् P. वंस्व च D. यः is omitted by R. RV. I. 48. 11.
१८. नहि ते क्षत्रं न सहः is omitted by M. RV. I. 24. 6.
१९. ०णम् M. RV. I. 24. 8.

अश्वान्रथे योजयित्वा तेनागत्य निषीद च ।

चित्र[1]मन्नं प्रयच्छोपस्ते[2]न यज्ञानुपाव[3]ह ॥७॥

छत्रादीनि वयो[4] नापुर्ना[5]प्यापो[6] वेगवत्तमाः ।

विस्तो[7]र्णं[8]मार्गकरणात् पा[9]दा कः प्रतिघात[10]वे ॥८॥

आश्चर्ये हि[11]ः प्रसिद्ध[12]यां च तयौचित्ये च दृश्यते ।

अस्ति चो[13]द्ग्रहणं ते[14]षु स[15]र्वेष्विति विनिश्चयः ॥९॥

'परा हि मे विमन्यव[16]ः' 'आ हि ष्मा[17] सूनवे पि[18]ता' ।

'नहि वामस्ति दूरके[19]' आश्चर्या[20]र्थी इमे हयः ॥१०॥

'स हि श्र[21]वस्युः' 'त्वं ह्य[22]ग्ने' प्रसिद्ध्यां [23]हौ श्रुताविमौ ।

त[24]था 'त्वां ह्यग्ने सदमि[25]द्' बहवः सन्ति तादृशाः ॥११॥

'ए[26]वा ह्यस्य सू[27]नृतेति तृ[28]चे द[29]ष्टा हयस्त्रयः ।

औचित्यार्था भवन्त्येते सन्त्यन्येऽपि च तादृशाः ॥१२॥

---

१. मित्र० D.
२. ०च्छोष तन P., D.
३. ०नुवाच ह M. यज्ञमुवाह च R.
४. वये P., D.
५. नावुर्ना० D.
६. ०पुर्न चापो R. वयो नापुर्नाप्यापो is missing in M.
७. पस्ती० P.
८. मार्ग is omitted by P., D.
९. पादौक P. पादोक D. पादो कः M.
१०. Cf. RV. 1. 24. 8.
११. हि P., D.
१२. ०द्ध्यन्त्व P.   १३. चे० M.
१४. तेन M. तेषां R.
१५. सवेष्वि० P.
१६. RV. I. 25. 4.
१७. ष्ठा M. ष्म D.
१८. RV. I. 26. 3.
१९. RV. I. 22. 4.
२०. ०र्थं P., M.
२१. शूरस्यः P. RV. I. 55. 6.
२२. RV. I. 144. 6.
२३. हि M.   २४. तदा P., D.
२५. RV. 4. 1. 1.
२६. एवां R. एवां M.
२७. RV. I. 8. 8.
२८. तुच P.
२९. इष्टा M.

समुच्चये च हिर्दृष्टः 'स मन्दस्वा ह्यन्धसः' ।

तत्पुरश्चानुदात्तस्तिङ् सन्त्यन्येऽपि च तादृशाः ॥ १३॥

हेरर्थं यो विजानाति न स मन्त्रेषु मुह्यति ।

तेन प्रदर्शितोऽस्माभिरर्थस्तस्य प्रपञ्चितः ॥ १४॥ इति ॥

## IV.5.

**वैश्वानराय मीळ्हुषे सजोषाः कथा दाशेमाग्नये बृहद्भाः ।**
**अनूनेन बृहता वक्षथेनोप स्तभायदुपमिन्न रोधः ॥ १ ॥**

वैश्वानराय ॥ वामदेवः ॥ वैश्वानराय । सेक्त्रे । सप्रीतयः । कथम् । हविर्दद्याम । योऽत्यन्तम् । भासते । सोऽयमविकलेन । महता । वहनकुशलेन तेजसा । रोधः । द्यामवः स्थित्वा उपस्तभायत् । यथा । उपमित् = स्थूणावंशमिति ।

---

१. RV. III. 41. 6. One syllable is too short in this *Pāda*.
२. तत्पर० P., R. ३. ०रर्थस्य M. ०भिर्हेरर्थश्च R. ४. प्रपञ्चतः R.
५. चतुर्थे मण्डले प्रथमेऽनुवाके दश सूक्तानि। 'वैश्वानराय' इति पञ्चदशर्चं पञ्चमं सूक्तं वामदेवस्यार्षं त्रैष्टुभं वैश्वानराग्निदेवताकम् । अत्रानुक्रमणिका—'वैश्वानराय वैश्वानरीयम्' (KSA. 21. 5. p. 17.) इति। विनियोगो लैङ्गिकः Sy.
६. विश्वनरसम्बन्धिने एतन्नामकाय Sy.
७. अभिमतवृष्ट्यादिसेक्त्रे Sy.
८. सजोषसः समानप्रीतियुक्ता वयमृत्विग्यजमानाः Sy. ९. केन प्रकारेण Sy.
१०. दद्याम । सामर्थ्याद्धविरिति गम्यते । अथवा बृहद्भा इत्युत्तरत्र योज्यम् । कथा दाशेमेत्युक्तम् । किं तत्राधिक्यम् ? इति तदुच्यते—योऽग्निर्बृहन्महान् भा भासमानश्च सन् Sy.
११. बृहते महते Sy.
१२. भासमानाय Sy. १३. सम्पूर्णेन Sy.
१४. अत एव प्रभूतेन Sy.
१५. वोढव्येन स्वशरीरेण Sy.
१६. तृणाच्छादनादिनिरोधकं वंशादिकम् Sy.
१७. द्यमाथवस्तुत्वा P.
१८. उपस्तभ्नाति सामर्थ्याद् द्यामिति शेषः । द्युलोकं व्याप्नोतीत्यर्थः । स्तन्भुः सौत्रो धातुः । लङि 'छन्दसि शायजपि' इति व्यत्ययेन अहावपि शायजादेशः । 'बहुलं छन्दसि' इत्यडभावः Sy.
१९. तत्र दृष्टान्तः सा यथा तद्वत् Sy.
२०. ०मन् P. उप समीपे मीयते क्षिप्यत इत्युपमित् स्थूणा । यद्वा वक्षथेनोक्थलक्षणेन फलादिवाहकेन स्तोत्रेण सह द्युलोकमुपस्तभायत् । किमिव उपमिन्न रोधः । उप समीपे मीयत इत्युपमिदुदकम् । कूलमिव Sy.
२१. VM. ignores अग्नये ॥ देवाय Sy.

मा निन्दत य इमां मह्यं रातिं देवो ददौ मर्त्याय स्वधावान् ।
पाकाय गृत्सो अमृतो विचेता वैश्वानरो नृतमो यह्वो अग्निः ॥ २ ॥

मा निन्दत[1] । मा । निन्दत[2] तम्[3] । यः । इमाम्[4] । मह्यम्[5] । रातिं धनम् । देवः[6] । ददौ[7] । मर्त्याय[8] । अन्नवान्[9] । अपक्वप्रज्ञाय[10] । स्वयं मेधावी[11] । अमरणधर्मा[12] । विशिष्टचेताः[13] । वैश्वानरः[14] । नेतृतमः[15] । महान्[16] । अग्निः[17] ।

साम द्विबर्हा महि तिग्मभृष्टिः सहस्ररेता वृषभस्तुविष्मान् ।
पदं न गोरपगूळ्हं विविद्वानग्निर्मह्यं प्रेदु वोचन्मनीषाम् ॥ ३ ॥

साम द्विबर्हाः । ऋक्[18] स्थं साम[19] । द्वयोः परिवृळ्हः[20] । महत्[21] । ज्वालालक्षणतिग्मदृष्टिः[22] भ्रंशयतीति । सहस्ररेता[23] नानाविधानां पशूनामुत्पादनात्, "तद् वैश्वानरवत् प्रजननवत्[24] तरमुपैति[25]" इति ब्राह्मणम्[26] । कामानां वर्षिता । बहुधनः । स्थानम्[27] । इव । चोरैरपहृतस्य गोः[28] । निगूढम्[29] ।

---

१. ०ता P.
२. हे होत्रादयः ! अमुं वैश्वानरमग्निम् Sy. निन्दां (मा) कुरुत । स्तुतेत्यर्थः Sy.
३. मा । निन्दत तम् is omitted by M.
४. इदानीं दीयमानप्रकाराम् Sy.
५. यजमानाय Sy.
६. दीप्यमानोऽग्निः Sy.
७. ददे M. दत्तवान् Sy.
८. मरणधर्माय Sy.
९. ०न्नपान् P. अस्मद्दत्तेन हविर्लक्षणेनान्नेन तद्वान् सन् Sy. १०. ० वान (न्) प० M. परिपक्वप्रज्ञाय Sy.
११. गृत्सः मेधाविनामैतत् (Ngh. 3. 15.) Sy. १२. अमरणस्वभावः Sy.
१३. विशिष्टमेताः P. विशिष्टप्रज्ञः Sy.
१४. विश्वैर्नरैराहवनीयादिरूपेण नीयमानः Sy.
१५. नेतृतमः फलादीनाम् Sy.
१६. यह्वः—महन्नामैतत् Ngh.3.3.
१७. अङ्गनादिगुणविशिष्टः । तादृशमग्निं स्तुतेति भावः Sy. १८. ऋक् P.
१९. अस्मदभिमतं स्तोत्रम् Sy.
२०. ० बृंहळा P. ०बृहळः D. द्वयोर्मध्यमोत्तमयोः स्थानयोः परिवृढः Sy.
२१. महा P. मह D. पूज्यम् Sy.
२२. ०ष्टि P. तीक्ष्णतेजाः Sy.
२३. बहुविधहिरण्यरेतस्कः । रेतःशब्दः सारवाची । प्रभूतसारो वा Sy.
२४. प्रजात० M.
२५. ०मुपंमि M. ०मुत्वं० P.
२६. TB. 1. 3. 1. 6.
२७. अत्यन्तगोपितं पदम् Sy.
२८. नष्टाया गोः Sy.
२९. नरूढं P., D. अत्यन्तरहस्यम् Sy.

याथात्म्येन जानन्[1] । अग्निः । मह्यम् । प्र । एव । वोचत्[2]—"साम[3] वै रक्षोहा[4]" इति ब्राह्मण-मिति ।[5]

**प्र ताँ अग्निर्बभसत्तिग्मजम्भस्तपिष्ठेन शोचिषा यः सुराधाः ।**
**प्र ये मिनन्ति वरुणस्य धाम प्रिया मित्रस्य चेततो ध्रुवाणि ॥ ४ ॥**

प्र तान् । प्रभक्षयतु[6] । तान्[7] । अग्निः । तीक्ष्णदंष्ट्रः । तप्ततमेन[8] । तेजसा । योऽग्निः । सुधनो[9] भवति । ये राक्षसाः[10] । प्रमिनन्ति[11] । वरुणस्य । स्थानानि[12] व्रतानीत्यर्थः[13] । प्रियाणि । मित्रस्य । जानतः[14] पुण्यपापानि मनुष्याणाम् । ध्रुवाणि[15] ।

**अभ्रातरो न योषणो व्यन्तः पतिरिपो न जनयो दुरेवाः ।**
**पापासः सन्तो अनृता असत्या इदं पदमजनता गभीरम् ॥ ५ ॥**

अभ्रातरः[16] । यथा । भ्रातुर्वर्जिताः[17] । स्त्रियः पुंसः प्रतीच्यो गच्छन्त्येवम् । राक्षसा मां दृष्ट्वा व्यतिगच्छन्ति[18] । यथा वा । पतिलिप्ताः[19] पतिव्रताः । जायाः[20] । परेषां दर्शनात् प्रतीच्यः

---

१. Omitted by M. विशेषेण जानन् Sy.　२. ब्रवीतु Sy.

३. स P.

४. Cf. साम हि नाष्ट्राणा ᳯ रक्षसामपहन्ता SB. 4. 4. 5. 6; 14. 3. 1. 10.

५. VM. ignores उ and मनीषाम् ॥ मनीषाशब्दो ज्ञानवाची सन्नत्र ज्ञातव्ये वर्तते । मनीषां ज्ञातव्यम् Sy.

६. ०यक्ष M. प्रकर्षेण भर्त्सयतु । दहत्वित्यर्थः । बभसत्—'भस भर्त्सनदीप्त्योः' । लेटि 'इतश्च लोपः' इतीकारलोपः । 'लेटोऽडाटौ' इत्यडागमः Sy.

७. वक्ष्यमाणान् द्वेष्टॄन् Sy.

८. अतिशयेन शत्रूणां तापकेन Sy.

९. शोभनधनः Sy.

१०. तानित्युक्तं कान् इत्याह ये द्वेष्टारः Sy.

११. प्रकर्षेण हिंसन्ति । 'मीञ् हिंसायाम्' । 'मीनातेर्निगमे' इति ह्रस्वत्वम् । विकरणस्वरः Sy.

१२. धामानि तेजःस्थानानि कर्माणि वा Sy.

१३. प्रतानित्य० M.

१४. चेततः जानतः । एतद्-(मित्रावरुण)-उभयविशेषणम् Sy.

१५. स्थिराणि Sy.

१६. ०तः M. भ्रात्रादिबन्धुरहिताः Sy.

१७. योषणः गतभर्तृका योषितः । 'वा षपूर्वस्य निगमे' इति विकल्पनाद् दीर्घाभावः । ता यथा भर्तृगृहात् पितृगृहं प्रत्यायन्ति तद्वत् Sy.

१८. ध्यति० P. व्यति is omitted by D. गच्छन्तः । यज्ञादीनपहायामार्गे वर्तमाना इत्यर्थः Sy.

१९. पतिद्वेषिण्यः Sy.

२०. याः P., D. स्त्रियः Sy.

कुटिलगमना[1] भवन्ति । पापस्वभावाः[2] । सन्तो[3] राक्षसाः । अनृतयुक्ताः[4] "बहु वै राजन्योऽनृतं करोति । उपजाम्यै हरते । जिनाति ब्राह्मणम् वदत्यनृतम्[5]" इति ब्राह्मणम् । वाचिकमनृतमस-[6] त्यमेवंविधाः । इदं[7] मदीयम् । वैश्वानरस्य स्थानभूतम्[8] । जानन्ति[9] हिंसार्थमभिगच्छन्तो बुध्यन्ते[10] । गम्भीरम्[11] उत्तरत्र सम्बन्धः[12] ।

इदं मे अग्ने कियते पावकामिनते गुरुं भारं न मन्म ।
बृहद्दधाथ धृषता गंभीरं यह्वं पृष्ठं प्रयसा सप्तधातु ॥ ६ ॥

इदं मे । इदम्[13] । मह्यम् । अग्ने ! स्वल्पभूताय[14] साधवे । पावक[15] ! साधूनहिंसते[16] । गुरुम्[17] । इव । भारम् । मननीयम्[18] । बृहत्[19] । धारय[20] । धृष्टेन[21] । अन्नेन[22] । गम्भीरम्[23] । महान्तं[24] मदीयम् । पृष्ठः[25] शरीरवचनः[26] । त्वक्चर्ममांसरुधिरमेदोऽस्थिमज्जानः सप्त[27] धातव इति ।

---

१. दुष्टगतयो दुराचाराः Sy.
२. अत एव पापाः Sy.
३. Omitted by P., D.
४. मानससत्यरहिताः Sy.
५. TB. 1. 7. 2. 6.
६. ०नृतस० P. वाचिकसत्यरहिताः । मनसा वाचाग्निमभजमानाः Sy.
७. पापिभिरनुभूयमानतया प्रसिद्धम् Sy.
८. नरकस्थानम् Sy.
९. अजनयन्त, उत्पादयन्ति । लङि जनेरन्तर्भावितण्यर्थाद् व्यत्ययेनैकवचनम् Sy.
१०. युध्य० P.
११. अगाधम् Sy.
१२. उत्तरत्र सम्बन्धः is omitted by M.
१३. दातव्यत्वेन प्रसिद्धम् Sy.
१४. अत्यल्पाय Sy.
१५. हे शोधक ! Sy.
१६. त्वदीयं कर्म अहिंसतेऽप्यजते Sy.
१७. वोढुमशक्यम्. . . । तं यथा धर्तुमसहमानः पातयति तद्वत् Sy.
१८. मननीयं धनम्
१९. प्रभूतम् Sy.
२०. देहि Sy.
२१. धृष्टे० P. तदेव विशेष्यते । शत्रूणां धर्षकेण Sy.
२२. प्रयसा—अन्ननामैतत् । अन्नेन युक्तम् Sy.
२३. अन्यैरनवगाह्यम् Sy.
२४. महत् Sy.
२५. The passage beginning with इदं मे and ending with पृष्ठः is omitted in M. M. reads मह only ॥ स्पष्टुं योग्यम् Sy.
२६. ०न D.
२७. ग्राम्यारण्यभेदेन सप्तप्रकारम्, 'सप्त ग्राम्याः पशवः सप्तारण्याः' (TS. 7. 2. 2. 1.) इति श्रुतेः । ईदृग्धनं देहीत्यर्थः ॥ गुरं भारं नान्यदीयं भारं यथान्यस्मै ददाति तद्वदस्माकं दातव्यं धनं देहीति वा योज्यम् Sy.

तमिद्वे॒३॑व सम॒ना सं॑मा॒नम॒भि क्रत्वा॑ पुन॒ती धी॒तिर॑श्याः ।
स॒सस्य॒ चर्म॒न्नधि॒ चारु॒ पृश्ने॒रग्रे॑ रु॒प आरु॑पितं॒ जबा॑रु ॥ ७ ॥

तमित्[1] । तम्[2] । एव[3] । सदृशी[4] । सदृशम्[5] । अभ्यश्नोति[6] । कर्मणा[7] । शोषयन्ती[8] । बुद्धि[9]स्तस्यैव मतिः कल्याणी भवतीत्यर्थः, प्रत्यक्षा[10]ग्निवन्न दहतीति वैश्वानरः स उच्यते । ससति[11]: स्वप्नकर्मा । गौः[12] पृश्निः, गौः[13] । अधि[14] । त्वचि[15] । येन वैश्वानरस्य प्रातरेव रोपयति[16]

१. वामदेवस्य SKN. वामदेवस्यार्षम् Dur.

२. अग्निविद्युदादित्यास्त्रयोऽपि मतभेदेन वैश्वानरशब्दाभिधेयाः (Cf. N. 7. 23.) इति यास्केनोक्तत्वादत्रादित्यात्मना वैश्वानरः स्तूयते । वैश्वानरं द्युस्थानम् Sy. तमेव प्रकृतं वैश्वानरमुत्तमस्थानम् SKN. तमेव...वैश्वानरं सूर्यम् Dur.

३. इश्रू पादपूरणौ SKN.

४. ०शीम् M. सदृशी तद्योग्या Sy. समानयोश्चातदनुरूपेत्यर्थः SKN. समानयैव तदनुरूपयैव स्तुत्या Dur.

५. Omitted by M. सर्वेषामेकरूपम् Sy. समानयोग्यमेव SKN.

६. अभिप्राप्नुयात् । भजेदित्यर्थः । अश्नोतेर्लिङि 'बहुलं छन्दसि' इति विकरणस्य लुक् । व्यत्ययेन परस्मैपदं मध्यमपुरुषत्वं च Sy. अभि-उपसर्गोऽश्या इत्येतेन सम्बध्यते ।...व्यत्ययेनायं प्रथमस्य स्थाने मध्यमः । अभ्यश्याद् व्याप्नुयात् तत्त्वतो जानीयादित्यर्थः SKN. हे यजमान ! त्वम्...प्राप्नुयाः Dur.

७. तदुचितेन कर्मणा Sy. कर्मणा तत्परिचर्याख्येन SKN. केन पुनरभ्यश्याः ? ...स्यात्मपवनसमर्थेन कर्मणा प्रज्ञानेन वा Dur.

८. अस्मान् शोषयित्री Sy. ...कम् ? सामर्थ्यादस्मानेव SKN.

९. मतिरस्मदीया स्तुतिः Sy. कासौ ? ...मतिरस्मदीया प्रज्ञा SKN.

१०. M. omits कल्याणी भवतीत्यर्थः । प्रत्य०

११. ससस्य लुप्तोपममेतत् । स्वपत इव निश्चलस्य Sy. लुप्तोपममेतत् । योऽयं निश्चलत्वात् सस इव 'सस स्वप्ने' सुप्त इव । कः ?...आदित्यलोकस्तस्य SKN. किंलक्षणः पुनर्यो वैश्वानरस्तमभ्यश्याः ? स्वपनस्य द्युलोकस्य Dur.

१२. नौः M. पृश्नेर्द्युनामैतत् (Ngh. 1. 4.) इति द्युलोकादित्ययोः साधारणनामसु पाठात् । ज्योतिरादिभिः स्पृश्यमानस्य द्युलोकस्य Sy. प्राष्टवर्णस्य Dur.

१३. गौः D.

१४. उपरि Sy., SKN. उपरि स्वपितीव हि द्युलोको निश्चलत्वात् Dur.

१५. चर्मणे चरणाय । चरेरौणादिको मनिन् । 'सुपां सुलुक्' इति चतुर्थ्या लुक् Sy. चरेरौणादिको मनिन् । तदन्तात् 'सुपां सुलुक्' इत्येवं तादर्थ्यचतुर्थ्या लुग् द्रष्टव्यः । चर्मणे चरणायोदयास्तमयलक्षणाय SKN. चरणार्थम् । कथं नाम सौर्येण प्रकाशेन जनाश्चरेयुरित्यनेनाभिप्रायेण Dur.

१६. रोचय० M. आरोपयति स्वात्मनि सस्यादीनीति रुबिति भूमिरुच्यते । तस्याः सकाशात् Sy.

शरीराणीति वैश्वानरो बुच्यते[1] तस्य । आरोपितमभिषवार्थम्[2] । जवारु[3] जवेन रोहणशीलं[4] जवहेतुर्वा[5] सोमांशुरिति ।[6]

**प्र॒वा॒च्यं॑ वच॑सः॒ किं मे॑ अ॒स्य गुहा॑ हि॒तमुप॑ नि॒णिग्व॑दन्ति ।**
**यदु॒स्रिया॑णा॒मप॒ वारि॑व॒ व्रन्पाति॑ प्रि॒यं रु॒पो अग्रं॑ प॒दं वेः ॥ ८ ॥**

प्रवाच्यम् । गवां गुहायाम् । निहितम्[7] । निर्णिगिति[8] रूपनाम निर्णेजनादिहेतुपयो-[9]वचनः । यः[10] । उस्रियाणां[11] गुहायां निहितं[12] मनुष्याः पयः[13] । उदकमिव[14] । अपावृण्वन्[15] दुग्धवन्त

---

१. नरोच्यु० D.

२. M. omits words between वैश्वानरः and रोपितम् ॥ आरोपितं देवैः । तमश्या इति पूर्वत्रान्वयः Sy. तव रूपम् । रिप् इत्यस्य पृथिवीनाम्नश्छान्दस इकारस्योकारः । पर्यायान्तरं वा । पृथिवीत आरोपितं देवैः SKN. । 'रिपः' इति विपरिणामः । भूम्या इत्यर्थः. . . आरोपितं देवैः Dur.

३. पूर्वत्र तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यस्य द्युस्थानस्य वैश्वानरस्य. . . जवमानरोहि जरमाणरोहि वा Sy. पुरस्तात्तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यस्य स्वभूतं जवारु इति सम्बन्धः. . . जवारु जवरूपया गत्या, जरयद्वा प्राणिनो वयः, गिरद् वा रसान् रश्मिभिर्यदा रोहति तदादित्यमण्डलम् SKN. जवारु मण्डलं यस्य तं त्वमभ्यश्याः 'इह वा आदित्य आसीत्' तमाभ्यां परिगृह्योपरिष्टात् तासां प्रजानां न्यदधुरिति ह विज्ञायते । एवमत्र 'जवारु आदित्यमण्डलम्' उच्यते तद्धि जवमानं गच्छन्नभसो मध्यमारोहति । जायते वा, उदेतीत्यर्थः । जवमानमेवमेव हि तत्र तत्रोदेति । 'जरमाणरोहि' वा स्यात् । तद्धि जरयमाणं सर्वभूतानि रोहति । 'गरमाणरोहि वा' तद्धि गरमाणं रसानारोहति Dur. जवारु जवमानरोहि । जरमाणरोहि । गरमाणरोहीति वा N. 6. 17.; SKN. II. 454.

४. आरो० M.

५. ०तुवा DP.

६. VM. ignores नु । एव । चारु and अग्रे ॥ न्वेव क्षिप्रमेव । चारु दीप्तं मण्डलम् । अग्रे पुरस्तात् पूर्वस्यां दिशि Sy. चारु दीप्तम् । अग्रे प्रथमं सृष्टिकाले SKN. चारु दीप्तिमत् । अग्रे पूर्वसर्गादौ Dur.

७. उपनिहितम् Sy.

८. निर्णिगिति D. निणिति M. नितरां नेनेक्ति शोधयतीति निणिक् क्षीरमुच्यते । तादृक् क्षीरमनेन वैश्वानरेण Sy.

९. ०हतु० P., D.

१०. यत् is suggested for यः ।

११. कि तद्वचः ? इत्युच्यते, गोनामैतत्, क्षीराद्युत्स्राविणीनां गवां सम्बन्धि Sy.

१२. M. omits words between रूपनाग and हाग्निहि०

१३. क्षीरम् Sy.

१४. तद्यथा सेकेनाविष्कुर्वन्ति तथा Sy.

१५. अपवृ० M. अपवृण्वन्ति दोग्धारः Sy.

इत्यर्थः[१] । तत् उपवदन्ति[२] दुग्ध्वादायाग्रतः[३] स्थित्वा पानार्थं गृहाणेति वदन्ति । तस्यास्य[४] । वचसः[५] । किम्[६] । मे[७] । प्रवाच्यं[८] प्रकर्षेण वक्तव्यमेवंविधं प्रियवचनं प्रतिवक्तुं[९] युक्तं न दृश्यत इत्यर्थः । तद्धि वैश्वानरस्य[१०] । कामयमानस्य[११] । प्रियम्[१२] । उत्तमम्[१३] । स्थानं शरीराख्यम् । रक्षतीति ।

**इ॒दमु॒ त्यन्महि॑ म॒हामनी॑कं॒ यदु॒स्रिया॒ सच॑त पू॒र्व्यं गौः ।**
**ऋ॒तस्य॑ प॒दे अधि॒ दीद्या॑नं॒ गुहा॑ रघु॒ष्यद्र॑घु॒यद्वि॑वेद ॥ ९ ॥**

इदम् । इदम् एव । तत्[१४] । महतां देवानाम् । महत्[१५] । अनीकम्[१६] अनीकशब्दः अग्रवचनः । पणीन् प्रति गच्छतां[१७] देवानामग्निर्वैश्वानरो मुखमासीदित्यर्थः । यदनीकम्[१८] । उत्सारणार्हा[१९] । गौः । अग्रे स्थितम्[२०] । सेवते[२१] स्म । तदेवाह[२२] यज्ञस्य[२३] । स्थाने[२४] धिष्ण्ये । दीप्यमानम्[२५] । पर्वतस्य गुहायाम् । लाघवेन[२६] स्यन्दमानम् । लघु[२७] च गच्छत् तदनीकं गौः । ज्ञातवती[२८] लब्धवती वेति[२९] ।

---

१. इत्यः P.
२. वदन्ति वेत्तारः Sy.
३. दग्ध्वा० M.
४. वक्ष्यमाणस्य Sy.
५. वाक्यस्य Sy.
६. ग्कं D.
७. मदीयस्य Sy.
८. च्यः P., D. अस्ति तथ्यमेवोच्यत इत्यर्थः Sy.
९. M. omits words between प्रकर्षेण and प्रति० ०चनमिति० P. श्रेष्ठम् Sy.
१०. भूम्याः Sy.
११. व्याप्तायाः Sy.
१२. सर्वेषामाधारत्वेन प्रियभूतम् Sy.
१३. उक्तम् P.
१४. प्रसिद्धम् Sy.
१५. महत् पूज्यम् Sy.
१६. समूहरूपं सूर्यमण्डलं वैश्वानर एवेति शेषः Sy.
१७. M. omits words between शब्द and गच्छताम् ।
१८. मण्डलम् Sy.
१९. अत्सा० P. क्षीराद्युत्स्राविणी Sy.
२०. पूर्व्यं पूर्वकालीनं पूरकं वा Sy.
२१. अग्निहोत्राद्यर्थं सेवते Sy.
२२. देवा० P.
२३. उदकस्य Sy.
२४. अन्तरिक्षे Sy.
२५. द्योतमानम् Sy.
२६. M. omits ०मानम् । पर्वतस्य गुहायाम् ॥ शीघ्रं स्यन्दमानम् Sy.
२७. Omitted by P., D. शीघ्रं गच्छत् सूर्यमण्डलम् Sy.
२८. जात० D., M. वैश्वानरमेवेति ज्ञातवानस्मि Sy.
२९. VM. ignores अधि ॥ अधि अधिकं यद्वाधीति सप्तम्यर्थानुवादः Sy.

अधं द्युतानः पित्रोः सचासामनुत गुह्यं चारु पृश्नेः ।
मातुष्पदे परमे अन्ति षद्गोर्वृष्णः शोचिषः प्रयतस्य जिह्वा ॥ १० ॥

अध द्युतानः । अथ । दीप्यमानः । द्यावापृथिव्योः । सह[1] । आसनेन[2] सहायभूतो वैश्वा-[3]नरः । पृश्नेः[4]धेनोः[5] । गुहायां निहितम्[6] । चारु[7] पयः । अमनुत[8] ममैतत् पातव्यमित्यर्थः । मातुः[9] । गोः[10] पृथिव्या इत्यर्थः तस्याः । परमम्[11] । पदमुत्तरवेदिस्तस्मिन्[12] । समीपे । सीदन्त्यभवत्[13] । वर्षितुः[14] । दीप्यमानस्य[15] । निर्मलस्य[16] । जिह्वा[17] ज्वाला[18] घृतादिपानार्थमुत्तरवेद्यामासीद्[19] वैश्वानर इति ।

ऋतं वोचे नमसा पृच्छ्यमानस्तवाशसा जातवेदो यदीदम् ।
त्वमस्य क्षयसि यद्ध विश्वं दिवि यदु द्रविणं यत्पृथिव्याम् ॥ ११ ॥

ऋतं वोचे । सत्यम् । अहं[20] ब्रवीमि । जिज्ञासुभिर्नमस्कारेण[21] । पृच्छ्यमानः[22] । तदुच्य-मानम्[23] । यदि । तव । आशंसनाय[24] भवति । किं तदिति चेद्, त्वम्[25] । अस्य[26] । ईश्वरो भवसि[27] ।

---

१. मध्ये व्याप्तः सन् Sy.
२. सहानसेनेन P. स्वकीयेनास्येन Sy.
३. M. omits ०नेन सहायभूतो वैश्वा० ।
४. गोः सम्बन्धि Sy.
५. धेनो P.
६. ऊधस्ति निगूढं पयः Sy.
७. रमणीयम् Sy.
८. पानायाबुध्यत Sy.
९. उक्तमेवार्थं विवृणोति—क्षीरादिनिर्मा-ण्याः Sy.
१०. गाः P.
११. उत्कृष्टे Sy.
१२. स्थाने ऊधोलक्षणे Sy.
१३. विद्यमानं क्षीरम् Sy.
१४. ०तुं P. फलानां वर्षितुः Sy.
१५. दीप्तस्य Sy.
१६. Omitted by P., D. आहवनीयादिरूपेण नियतस्य वैश्वानरस्य Sy.
१७. जिह्वा पातुमिच्छतीति शेषः Sy.
१८. लाः P.
१९. ०तामिपा० M.
२०. अहं यजमानः Sy.
२१. नमस्कारेण सह Sy.
२२. अन्यैरनुयुज्यमानः सन् Sy.
२३. किं तदित्युच्यते इदं धनं लब्धमस्माभिः स्यात् Sy.
२४. आश० P., D. स्तुत्या साधनेन Sy.
२५. त्वमेव Sy.
२६. धनस्य Sy.
२७. ईश्वरो भवसि । तस्य धनस्य यज्ञादिद्वारागम्यर्थत्वादिति भावः । अत्यल्पमिदमुक्तम् Sy.

यत् ॥ ह[1] नाम जगति । सर्वं[2] दृश्यते । किञ्च[3] । यत्[4] । द्यावापृथिव्योः[5] । धनं तस्येशिषे[6] ।

**किं नो अस्य द्रविणं कद्ध रत्नं वि नो वोचो जातवेदश्चिकित्वान् ।**
**गुहाध्वनः परमं यन्नो अस्य रेकु पदं न निदाना अगन्म ॥ १२ ॥**

**कि नः ।** किम् । नः[7] । अस्य[8] स्तोत्रस्य । धनम्[9] । किम्[10] । वा । रत्नं[11] त्वम् । वि । नः[12] । वोचः[13] । हे जातवेदः[14] ! विद्वान्[15] । विवचन[16] दास्यामीति विस्पष्टवचनम् । अस्य । अन्तरिक्षस्य[17] । गुहायां निहितम्[18] । यत् । उत्तमम्[19] । तदस्माकमस्तु[20] । येन रेचकं सुखरहितम्[21] । स्थानम्[22] । मनसा निन्दन्तः[23] । न । गच्छेमेति[24] ।

---

१. **यत्खलु** Sy.

२. **सं** P., D. **कृत्स्नं धनमस्ति तस्यापीशिषे । विश्वमिति सामान्येन यदुक्तं तदेव विशदयति** Sy.

३. **एव** Sy.

४. **य** P., D.

५. **द्युलोके यदेव धनं यच्च पृथिव्यां धनं तस्य सर्वस्य त्वमीश्वरो भवसि । 'यज्ञार्थं द्रव्यमुत्पन्नम्' इति स्मरणात् । अग्निव्यतिरेकेण यज्ञासम्भवादिति भावः** Sy.

६. VM. ignores **जातवेदः ॥ हे जातानां वेदितर्जातप्रज्ञ ! वाग्ने !**

७. **अस्मभ्यं दातव्यं धनमस्ति** Sy.

८. **पूर्वमन्त्रेण यस्य धनस्याग्निस्वामित्वमुक्तम् अस्य धनस्य** Sy.

९. **साधनभूतम्** Sy.

१०. **कं** D.

११. **रमणीयं हितकरं धनमस्ति** Sy.

१२. Omitted by P., D. **अस्मभ्यम्** Sy.

१३. **वोचे** M. **विवोचः विब्रूहि, यद्वा किं दातव्यं द्रविणमस्ति, अस्य द्रविणराशेः कद्ध रत्नमिति योज्यम्** Sy.

१४. **तद्धनं हे जातधनाग्ने !** Sy.

१५. **चेतनावानभिज्ञस्त्वम्** Sy.

१६. **विवचनं** is suggested for **विवचन । विवचनं दास्यामीति विस्पष्टवचनम्** seems to be the explanation of **वि वोचः ।**

१७. **धनप्राप्तिमार्गस्य** Sy.

१८. **गूढम्** Sy.

१९. **उत्कृष्टं प्राप्तव्यमस्ति** Sy.

२०. **तदप्यस्मभ्यं विवोचः** Sy.

२१. **वयं रिक्तम्** Sy.

२२. **गन्तव्यं स्थानं गुहादिकम्** Sy.

२३. **अन्यैर्निन्द्यमानाः । कर्मणि कर्तृप्रत्ययः** Sy.

२४. **प्राप्नुमः** Sy.

का मुर्यादा वुयुना कद्ध वाममच्छा गमेम रुघवो न वाजम् ।
कुदा नो देवीरुमृतस्य पत्नीः सूरो वर्णेन ततनन्नुपासः ॥ १३ ॥

का मर्यादा । का[1] । काष्ठा[2] । कान्ता[3] । किम् । वा[4] । वननीयम्[5] । तद् वयं लघुशरीराः[6] । सङ्ग्रामम् । इव । अभिगच्छेम । कदा[7] । नः[8] । देव्यः[9] । अमरणस्य सूर्यस्य[10] । पत्न्यः[11] । उषसः । सूर्यस्य[12] । तेजसा[13] । विस्तृता[14] भवन्ति व्युच्छन्तीत्यर्थः ।

अनिरेण वचसा फल्ग्वेन प्रतीत्येन कृधुनातृपासः ।
अधा ते अग्ने किमिहा वदन्त्यनायुधास आसता सचन्ताम् ॥ १४ ॥

अनिरेण । अनन्नेनाहविष्केण[15] । वचसा । फल्गुना[16] । प्रतिगन्तव्येनागतः[17] पुरुषो यच्छ्रुत्वा प्रतिगच्छति न शृणोति ? कमतो नूनं[18] कृधुः[19]स्तादृशेन वचसा । हे अग्ने ! युद्धे[20] समुपस्थिते । किं तव । वदन्ति[21] । तृप्तिरहिता[22] राक्षसास्तथा सति ते । अधुना । आयुध[23]वर्जिताः । अनृतेन[24] । संयुज्यन्तां[25] प्रतिभवन्तु ।

---

१. Omitted by P.
२. प्रीत्यादिव्यवस्था Sy.
३. प्रज्ञानं पदार्थविषयम् Sy.
४. पा M. च Sy.
५. वननीयं पदार्थजातम् । एतत्सर्वम् Sy.
६. तत्र दृष्टान्तः । शीघ्रगामिनोऽश्वादयः सङ्ग्राममिव तद्वत् Sy.
७. कस्मिन् काले Sy.
८. अस्माकं व्यवहाराय Sy.
९. देव्यो द्योतमानाः Sy.
१०. अमरस्य सूर्य P., D. अमरणधर्मस्यादित्यस्य Sy.
११. पत्न्यः पालयित्र्यः Sy.
१२. प्रसविश्यः Sy.
१३. प्रकाशेन Sy.
१४. विस्तारयेयुः । एवं सूर्यसम्बन्धिन उषसः स्तुत्या सर्वात्मनो वैश्वानरस्य स्तुतिरवगन्तव्या । ततनन्—तनोतेर्लेटि 'बहुलं छन्दसि' इति विकरणस्य श्लुः । द्विर्भावहलादिशेषौ Sy.
१५. ०ष्केन P. इराऽन्नं तद्रहितेन Sy.
१६. फद्गुना P., D. उक्थेन Sy.
१७. वगन्तव्योनागतः P. आरोहोणेत्यर्थः Sy.
१८. करटको नूनं P.
१९. ह्रस्वेन Sy. कृध्विति ह्रस्वनाम Ngh. 2. 2.
२०. अस्मिल्लोके Sy.
२१. वदन्ति । निर्हविष्केण वचसा न किञ्चिल्लभ्यत इत्यर्थः Sy.
२२. ०तो P. अतृप्ता जनाः Sy.
२३. आयुधशब्दः साधनं लक्षयति हविरादिसाधनरहितास्ते Sy.
२४. अनायुधेन P. अनानृतेन D. दुःखेन Sy.
२५. सङ्गच्छन्ताम् Sy.

अस्य श्रिये संमिधानस्य वृष्णो वसोरनीकं दम आ रुरोच ।
रुशद्वसानः सुदृशीकरूपः क्षितिर्न राया पुरुवारो अद्यौत् ॥ १५ ॥

अस्य । अस्य[1] स्तोतुः । अभ्युदयार्थम्[2] । दीप्यमानस्य[3] । वर्षितुः[4] । वासयितुः[5] । ज्वालाग्रम्[6] । यजमानगृहे[7] । आरोचते[8] । श्वेतं[9] रूपम् । वसानः[10] । सुतरां[11] दर्शनीयरूपः सोऽयम् । पृथिवी[12] । भवद्धनेन[13] । सा यथा सर्वं धनमुत्पादयत्येवमयम्[14] । बहुभिर्वरणीयः[15] । द्योतते[16] ।[17]

## IV.6.

ऊर्ध्व ऊ षु णो अध्वरस्य होतरग्ने तिष्ठ देवताता यजीयान् ।
त्वं हि विश्वमभ्यसि मन्म प्र वेधसश्चित्तिरसि मनीषाम् ॥ १ ॥

ऊर्ध्वः[18] । अग्ने ! यष्टृतरस्त्वम्[19] । अस्माकम् । यज्ञस्य[20] । होतः[21] । यस्मिन् काले

---

१. अग्नेः Sy.

२. किमर्थम् ? श्रेयसे यजमानानाम् Sy.

३. समिध्यमानस्य । कर्मणि कर्तृप्रत्ययः Sy.

४. वर्षितुः फलस्य Sy.

५. ०यितृ P.

६. ज्वालग्रं D. तेजःसङ्घः Sy.

७. यागगृहे Sy.

८. अरो० P. सर्वतो दीप्यते Sy.

९. सोग्निः रुशत् । दीप्तं तेजः Sy. रुशदिति वर्णनाम N. 6. 13.

१०. ०न P. आच्छादयन् Sy.

११. अत एव सुष्ठु दर्शनीयरूपः Sy.

१२. राजादिरिव । क्षितिरिति मनुष्यनाम Sy.

१३. किमिव अश्वादिधनेन Sy.

१४. उत्पा० P.

१५. बहुभिः ऋत्विग्भिर्यजमानैर्वरणीयः सन् Sy.

१६. The passage beginning with ज्वालाग्रम् and ending with द्योतते is omitted by M.

१७. MS. D. puts the figure ॥५॥ here to indicate the end of fifth hymn. No such number is given in P. and M.

१८. 'ऊर्ध्व ऊ षु णः' इत्येकादशर्चं षष्ठं सूक्तं वामदेवस्यार्षं त्रैष्टुभमाग्नेयम् । 'ऊर्ध्व ऊ ष्वेकादश' (KSA. 21. 6. p. 17.) इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ त्रैष्टुभे छन्दसीदम् । सूत्रितञ्च—'ऊर्ध्व ऊ षु णः सस्य यद्वियुतेति पञ्च' (ASS. 4. 13.) इति Sy.

१९. ऊर्ध्वः । अग्ने ! यष्टृतरः is omitted by M. ०र त्व P. यष्टृतमस्त्वम् Sy.

२०. यागसम्बन्धिनां देवानाम् Sy.

२१. आह्वातः ! होतरित्यत्र प्रकृत्यंशोऽनुवादः । हे होमनिष्पादक ! Sy.

देवास्तायन्ते इज्यन्ते तत्र । सुष्ठु । त्वमुत्तिष्ठ । त्वम् । हि । विश्वम् । मननीयमवगन्तव्यं जगत् । अभिभवसि । तथा विधातुर्यजमानस्य । अपि । मनीषाम् । वर्धयसि ।

**अमूरो होता न्यसादि विक्ष्वग्निर्मन्द्रो विदथेषु प्रचेताः ।**
**ऊर्ध्वं भानुं सवितेवाश्रेन्मेतेव धूमं स्तभायदुप द्याम् ॥ २ ॥**

अमूरः । अमूढः । ह्वाता । निषण्णः । मनुष्येषु । मदनशीलः । यज्ञेषु । प्रकृष्टज्ञानः । अग्निः । ऊर्ध्वं च । भानुं तत्र । सवितेव । श्रयते । सोऽयं यथा माता पुरुषः मानदण्डमुपस्तभ्नाति एवम् । दिवं प्रति । आत्मीयं धूमम् । उपस्तभ्नाति ।

**यता सुजूर्णी रातिनी घृताची प्रदक्षिणिद्देवतातिमुराणः ।**
**उदु स्वरुर्नवजा नाक्रः पश्वो अनक्ति सुधितः सुमेकः ॥ ३ ॥**

यता । अध्वर्युणा संयता । सुष्ठ्वाहवनीयं प्रति जवनस्य कर्त्री । हविर्दानवती ।

---

१. देवायन्त P.
२. कुत्र ? इति तदुच्यते, देवतातौ देवास्तायन्ते विस्तार्यन्ते अत्रेति देवतातिर्यज्ञः, तस्मिन् Sy.
३. उन्नत एव तिष्ठ, नित्यमुन्नतो भवेत्यर्थः Sy. ४. खलु Sy.
५. सर्वम् Sy.
६. मननीयं शत्रूणां धनम् Sy.
७. द्विधा० P. स्तोतुर्यजमानादेः Sy.
८. चित् पूजायाम् Sy.
९. मतिं स्तुतिम् Sy.
१०. प्रवर्धयसि Sy. प्रपूर्वस्तिरतिर्वर्धनार्थः Cf. N. 4. 7., 10. 35; 11. 36.
११. VM. ignores उ ।
१२. आ० M.
१३. आ० M. अमूतः P. प्रगल्भ इत्यर्थः Sy.
१४. वाता P. होमनिष्पादकः Sy.
१५. नितरां स्थापितः Sy.
१६. ऋत्विग्रूपासु प्रजासु मध्ये Sy.
१७. मदनीयो मादयिता वा Sy.
१८. यागेषु निमित्तभूतेषु Sy.
१९. देवः Sy.
२०. ऊर्ध्वमुखम् Sy.
२१. अथ तथाभूतोऽग्निः भानुं दीप्तिम् Sy.
२२. उदितः सूर्य इव Sy.
२३. श्रू० D. आश्रयति Sy.
२४. सायं त्वं P.
२५. स्थूणेव । सा यथा स्वाधिष्ठितं वंशादिकं स्तभ्नाति तद्वदयमग्निः Sy.
२६. नामदन्तमु० P.
२७. Omitted by P. द्युलोकस्य Sy.
२८. धूमं स्वोत्थितम् Sy.
२९. उपरि स्तभ्नाति Sy.
३०. ०र्यूणां P., D.
३१. जननस्य M. शोभनजवा सुष्ठु जीर्णा पुराणी वा Sy.
३२. सन्त्री M. कर्त्री P.
३३. ०वति M. रातिर्धनम् । हविर्लक्षणधनवती । आज्यपूर्णा भवतीत्यर्थः Sy.

जुहूर्घृताचीति[1] स्रुङ्नाम[2]। तथा प्रदक्षिणं गच्छति[3]। यज्ञम्। उरु कुर्वाणः[4][5]।

स्तीर्णे बर्हिषि समिधाने अग्ना ऊर्ध्वो अध्वर्युर्जुजुषाणो अस्थात्।
पर्यग्निः पशुपा न होता त्रिविष्ट्येति प्रदिव उराणः ॥ ४ ॥

[स्तीर्णे।][6] यथा[7]। गोपालः पशून्। पर्येति तद्वदिति[8]।

परि त्मना मितद्रुरेति होताग्निर्मन्द्रो मधुवचा ऋतावा।
द्रवन्त्यस्य वाजिनो न शोका भयन्ते विश्वा भुवना यदभ्राट् ॥ ५ ॥

परि त्मना[9]। परिगच्छति[10]। स्वयमेव[11]। मितगतिः[12]। होता[13]। अग्निः। मदयिता[14]।

---

१. जुहू P., M. २. ०तापीति M. घृतमञ्चतीति घृताची जुहूः Sy.

३. प्रदक्षिणमेतीति प्रदक्षिणित्। प्रदक्षिणगमनो भवति। अकारलोपश्छान्दसः Sy.

४. उरु कुर्वाणोऽध्वर्युरग्निर्वा Sy.

५. VM. ignores उत् उ स्वरुः। नवजाः। न। अक्रः। पश्वः। अनक्ति। सुधितः and सुमेकः॥ स्वरुः न—यूपशकलवाची स्वरुरत्र यूपं लक्षयति। 'स्रुवाल्वन्तः स्वरवः पृथिव्याम्' (RV. 3. 8. 10.) इत्यादिषु स्वरुशब्देन यूपाभिधानाच्च। नकारः समुच्चये। यूपोऽपि। उदु उपसर्गश्रुतेर्योग्यक्रियाध्याहारः। उन्नतो भवति। नवजाः नवजातस्तदानीमेवोत्पादितः। किञ्च अक्रः आक्रमिता। सुमेकः सुदीप्तः। सुधितः स्वधितिरित्यर्थः। सोऽपि पश्वः पशून्। अनक्ति गच्छति। यद्वा सुधितः स्वरुरेव उदु उत्कृष्टः पश्वः पशूननक्ति। 'स्वरुणा पशुमनक्ति' इति श्रुतेः Sy. ६. The *pratīka* is supplied by the Editor.

७. VM. explains three words पशुपाः। न and पर्येति only. Sy. explains the stanza in the following manner:—
बर्हिषि वेद्याम्। स्तीर्णे आस्तृते सति। अग्नौ आहवनीयादिके। समिधाने सम्यगिध्यमाने च सति। अध्वर्युः अध्वरस्य नेता। जुजुषाणः देवान् प्रीणयन्। ऊर्ध्वः अस्थात् तिष्ठति। होता होमनिष्पादकः। प्रदिवः। पुरातनः। उराणः स्वल्पमपि हविर्देवयोग्यत्वसम्पादनेनोरु कुर्वाणः। 'यद्वै देवैर्जोष्यते हविस्तद्गिरिमात्रं वर्धते' इति श्रुतेरग्नेरुरुकरणमुचितम्। ईदृशोऽग्निः। पशुपा न पशूनां पालक इव पशून्। त्रिविष्टि त्रिरावृत्य। परि एति त्रिर्हि पर्यग्निः क्रियते।

८. प्रदिवः पुराणनाम Ngh. 3. 27. उराण उरु कुर्वाणः N. 6. 17.

९. उक्तमेवार्थं स्पष्टयति Sy.

१०. परितो गच्छति पशुम् Sy.

११. आत्मना स्वरूपेणैव Sy.

१२. मितद्रुति M. परिमितगतिः सन् Sy.

१३. अयं होमनिष्पादकः Sy.

१४. कीदृशोऽयम्? मादनीयो मोदयिता वा Sy.

मधुरसंवचनः[1]। यज्ञवान्[2]। द्रवन्ति[3]। अस्य[4]। अश्वाः[5]। इव[6]। शोचका[7] रश्मयस्तस्मा अग्नये। विश्वान्येव[8]। भुवनानि[9]। बिभ्यति[10]। यदासौ[11]। भ्राजत[12] इति।

भद्रा ते अग्ने स्वनीक संदृग्घोरस्य सतो विषुणस्य चारुः।
न यत्ते शोचिस्तमसा वरन्त न ध्वस्मानस्तन्वी३रेप आ धुः ॥ ६ ॥

भद्रा। भजनीया[13]। ते[14]। अग्ने! शोभनरश्म्यनीक[15]! सन्दृष्टिः[16]। घोरस्य[17]। सतः। विष्वगञ्चनस्य[18]। शोभना[19]। यस्मात्[20]। ध्वंसनशीला[21] राक्षसाः। न। तव। तेजः[22]। तमसा[23]। आच्छादयन्ति[24]। न चैते[25]। तव शरीरे। रेतः पापं[26] च। आदधुस्तस्माच्छोभनेति[27][28]।

न यस्य सातुर्जनितोरवारि न मातरापितरा नू चिदिष्टौ।
अधा मित्रो न सुधितः पावको३ग्निर्दीदाय मानुषीषु विक्षु ॥ ७ ॥

न यस्य[29]। यस्यौषध्यादेः[30]। जनयितुर्दविरूपस्य[31]। समुच्छ्रितो रश्मिः[32]। न। वार्यते[33]।

---

१. मधुरवचनः Sy.
२. ०ज्ञव P.
३. ऋव० P. गच्छन्ति परितः Sy.
४. अग्नेः Sy.
५. अश्व्याः M. हविष्मतः Sy.
६. अपि। नशब्दोऽप्यर्थे। यद्वा नकार उपमार्थीयः, अश्वा इव द्रवन्तीति योज्यम् Sy.　७. दीप्तयः Sy.
८. सर्वाणि Sy.
९. भूतजातानि Sy.
१०. भीतानि भवन्ति Sy.
११. यस्मादयं तस्मात् Sy.
१२. भ्रात P.
१३. स्तुत्या कल्याणी वा मूर्तिः Sy.
१४. तव Sy.
१५. रम्यनिक P. हे शोभनज्वाल ! Sy.
१६. ससन्दृ० D. सान्दृष्टि P. सम्यग् दृश्या भवतीत्यर्थः Sy.
१७. भीतिजनकस्यापि Sy.
१८. विष्वक् सर्वतो व्याप्तस्य Sy.
१९. शो P. रमणीया Sy.
२०. यस्मा P.
२१. ध्वंसका राक्षसादयः Sy.
२२. दीप्तिम् Sy.
२३. अन्धकारेण Sy.
२४. वारयन्ति निशाः Sy.
२५. चेते M.
२६. पापं ध्वंसनादिरूपम् Sy.
२७. (न) दधति (न) कुर्वन्ति, अतः सन्दृगिति सम्बन्धः Sy.
२८. M. omits words between शरीरे and शोभनेति।
२९. यस्ये P.
३०. वैश्वानरस्य Sy.
३१. जनयितुर्वृष्टयुत्पादकस्य Sy.
३२. रश्मीः P. रश्मि M. सनिः पश्वादिलक्षणं दानं दीप्तिर्वा Sy.
३३. वाय्यते M. केनापि (न) वार्यते Sy.

येन चारण्ये जाते[1]न माता पिता[2]। भरणार्थमि[3]ष्यते। क्षिप्रम्। एव स्वयमे[4]व वर्धत इत्यर्थः। सोऽयमेवंविधः सखा। इ[5]व। सुष्ठु निहितः[6]। पाव[7]कः। अग्निः। दीप्य[8]ते। मानुषीषु[9]। प्रजासु यज्ञपरासु[10]।

**द्वियं पञ्च जीजनन्त्संवसानाः स्वसारो अग्निं मानुषीषु विक्षु ।**
**उषर्बुधमथर्यो३ न दन्तं शुक्रं स्वासं परशुं न तिग्मम् ॥ ८ ॥**

द्वियम्[11]। द्विः[12] पञ्च=दश। स्वसारो[13] दिशः। सर्वमाच्छादयन्त्यः[14]। मानुषीषु[15]। प्रजासु[16]। यम्। अग्निम्। अजीजनन्[17] 'वशोमं[18] त्वष्टुर्जनयन्त[19] गर्भम्' इति[20] मन्त्रः। उषसि प्रबुध्यमानम्[21]। अथर्यः[22] स्त्रियो मैथुनेऽश्वरा भवन्तीति स्त्रियः। इव। दन्तम्[23]। दीप्तम्[24]। शोभनास्यम्। परशुम्[25]। इव[26]। तीक्ष्णमिति[27]।

---

१. ०ण्येन जाता M.
२. मातापितरौ द्यावापृथिव्यौ यस्य Sy.
३. रार्थमि० P. यस्य प्रेषणे Sy.
४. M. omits words between ०मिष्य and मेव।
५. ०रवे M. न प्रभवतः। इव Sy.
६. सुतृप्तः Sy.
७. शोधकः Sy.
८. वीदाय—'दीपी दीप्तौ' पकारलोपश्छान्दसः। व्यत्ययेन परस्मैपदम्। लिटयभ्यासस्य ह्रस्वे कृते तुजादित्वादीर्घत्वम् Sy.
९. मनोः सम्बन्धिनीषु Sy.
१०. VM. ignores अथ॥ अपि च Sy.
११. ०र्यं P.
१२. द्विः द्विः M.
१३. अङ्गुलयः Sy.
१४. सञ्जुच्छमानाः Sy.
१५. मनोः सम्बन्धिनीषु Sy.
१६. M. omits words between सर्व० and प्रजासु।
१७. मंथनेनोत्पादयन्। 'जनी प्रादुर्भावे'। लुङि छान्दसत्वादडभावः Sy.
१८. वशोमं M.
१९. ०ष्टः ज० M.
२०. RV. I. 95. 2.
२१. ०नाम् P. कीदृशमग्निम्? उषसि बुध्यमानम् Sy.
२२. कीदृश्योऽङ्गुलयः? स्त्रिय इव Sy.
२३. दन्तं हविषां भक्षकम् Sy.
२४. ०प्त M. रश्मिभिर्दीप्यमानम् Sy.
२५. पशु० P.
२६. परशुमिव रक्षसां हन्तारमिति शेषः Sy.
२७. M. omits words between शोभना and मिति।

**तव त्ये अग्ने हरितो घृतस्ना रोहितास ऋज्वञ्चः स्वञ्चः ।**
**अरुषासो वृषण ऋजुमुष्का आ देवतातिमह्वन्त दस्माः ॥ ९ ॥**

तव त्ये । तवैव । ते[1] । अग्ने ! अश्वाः[2] । घृतस्य सनितारः[3] । रोहितवर्णाः[4] । ऋजु[5], शोभनं च गन्तारः[6] । आरोचनशीलाः[7] । सेक्तारः[8] । अकुटिलवृषणाः[9] । यज्ञम्[10] । आह्वयन्ति[11] यज्ञो यज्ञ[12] इति वदन्ति । दर्शनीयाः[13] ।

**ये ह त्ये ते सहमाना अयासस्त्वेषासो अग्ने अर्चयश्चरन्ति ।**
**श्येनासो न दुवसनासो अर्थं तुविष्वणसो मारुतं न शर्धः ॥ १० ॥**

ये ह[14] । ये । खलु । अमी[15] । तव । शत्रूणामभिभवनशीलाः[16] । गमनशीलाः । दीप्ताः । अग्ने ! अर्चयः[17] । चरन्ति[18] । श्येनाः[19] । इव शीघ्रम् । अभिलषितम्[20] । परिचरन्त[21]स्ते[22] भवन्ति[23] । तथा । बहुशब्दास्ते[24] । मारुतः[25] । इव । वेगः[26] ।

---

१. तवैव । ते । is missing in M. प्रसिद्धाः Sy.
२. त्वत्सम्बन्धिनोऽश्वाः Sy.
३. कीदृशाः ? घृतस्नुवो बलातिशयान्नासापुटादिस्थानेभ्य उदकं क्षरन्तः Sy.
४. रोहिता लोहितवर्णाः Sy.
५. ऋज्वकुटिलमञ्चन्ति गच्छन्तीत्यृज्वञ्चः Sy.
६. ०भवं P. ०भनवर्णं M. सुष्ठु गच्छन्तः Sy.
७. रो० P., D. आरोचमानाः Sy.
८. युवानो वर्षितारो वा । 'वा षपूर्वस्य निगमे' इति विकल्पेन दीर्घविधानादत्र दीर्घाभावः Sy.
९. कुटिल० P. ऋजुवृषणाः Sy.
१०. अस्मदीयं यागं प्रति Sy.
११. ऋत्विग्भिराहूयन्ते । लुङि 'लिपिसिचिह्वश्च' इत्यङादेशः Sy.
१२. यज्ञे D.
१३. वदन्ति । दर्शनीयाः is missing in M.
१४. ये ह त्ये ते M.
१५. ये । खलु । अमी is missing in M. ते प्रसिद्धाः Sy.
१६. शत्रूनभिभवन्तः Sy.
१७. रश्मयः Sy.
१८. ०र्यश्च० M. गच्छन्ति Sy.
१९. अश्वाः Sy.
२०. गन्तव्यम् Sy.
२१. परिचरणीयाः Sy.
२२. त्वदीयाः Sy.
२३. M. adds दर्शनीयाः after भवन्ति ।
२४. अधिकध्वनयो भवन्ति Sy.
२५. मारुताः D. मरुत्सम्बन्धी Sy.
२६. वेगाः D. Omitted by M. गणः Sy.

अकारि ब्रह्म समिधान तुभ्यं शंसात्युक्थं यजते व्यू धाः ।
होतारमग्निं मनुषो नि षेदुर्नमस्यन्त उशिजः शंसमायोः ॥ ११ ॥

अकारि[1] । कृतम्[2] । स्तोत्रं[3] मया । समिधान[4] ! अग्ने[5] ! तुभ्यं[6] कृत्वा च । शंसति[7] । उक्थम्[8] । यजते[9] चायं त्वां तदिदं सर्वम् । विशेषेण धारय[10] । त्वमग्ने ! अवशिष्टः परोक्षः— ह्वातारम्[11] । अग्निम्[12] । मनुष्याः[13] । नमस्यन्तः[14] । निषेदुः[15] । कामयमानाः[16] । शंसनीयम् । उर्वशीपुत्रस्यायोः[17][18] ।

IV.7.

अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः ।
यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे ॥ १ ॥

[19]अयमिह ।

---

१. ०रि ब्रह्म M.
२. अस्माभिः कृतम् Sy.
३. कृतम् । स्तोत्रं is omitted by M.
४. समि० M. हे समिध्यमानाग्ने ! Sy.
५. ०ध्वानः अग्ने P., D.
६. त्वदर्थम् Sy.
७. शंसाति—'शंसु स्तुतौ' । लेटोऽडाटौ' इत्याडागमः Sy.
८. होता शस्त्ररूपं स्तोत्रम् Sy.
९. त्वां यजमानः यजते Sy.
१०. अतः कारणादस्मभ्यं धनं विधेहि । धाः—दधातेश्छान्दसे लुङि 'बहुलं छन्दसि' इत्यडभावः Sy.
११. तारम् P. देवानामाह्वातारम् Sy.
१२. अग्नि त्वाम् Sy.
१३. मनुष्या ऋत्विजः Sy.
१४. मनस्यन्तः P. पूजयन्तः Sy.
१५. उपाविशन्, सेवन्त इत्यर्थः Sy.
१६. क्षयमेवानः P. क्षयमानः D. M. omits words between नमस्य० and ०मानाः ॥ पश्वादिलक्षणं धनं कामयमानाः Sy.
१७. मनुष्यस्य Sy.
१८. VM. ignores उ ॥ उ इति पादपूरणः Sy.
MS. D. puts the figure ॥६॥ here to indicate the end of sixth hymn. No such number is given in P. and M.
१९. 'अयमिह' इत्येकादशर्चं सप्तमं सूक्तं वामदेवस्यार्षमाग्नेयम् । आद्या जगती द्वितीयाद्याः पञ्चानुष्टुभः शिष्टास्त्रिष्टुभः । तथा चानुक्रान्तम्—'अयमिहाद्यौ जगती पञ्चानुष्टुभः' (KSA. 21. 7. p. 17.) इति । सूक्तविनियोगो लैङ्गिकः । अग्निप्रणयने 'अयमिह' इति वैश्यस्य प्रतिपत् । तथा च सूत्रितम्—'अयमिह प्रथमो धायि धातृभिरिति तु राजन्यवैश्ययोराद्ये' (ASS. 2. 17.) इति Sy.

अयम्[1] । इह यज्ञे[2] । प्रथममेव[3] । निधीयते[4] यजमानैः । धारयितृभिः[5] । ह्वाता[6] । यष्टृतमः[7] । यज्ञेषु[8] ।
स्तोतव्यः[9] । यम्[10] । अप्नवानः[11] । भृगवश्च[12] ऋषयः । विरोचयामासुः[13] । अरण्येषु[14] । चित्ररूपम्[15] ।

---

१. आहवनीयादिस्थानेषु प्रत्यक्षेणोपलभ्यमानोऽग्निः Sy. अयमाहवनीयः Mah. अयमाहवनीयोऽग्निः U. अयमग्निः BB.

२. अस्मिन् यज्ञे Sy. कर्मानुष्ठानस्थाने Mah. स्वरस्थाने U.

३. सर्वेषां देवानां मुख्यः Sy. मुख्यः Mah. दक्षिणाग्न्यभिप्रायं च प्राथम्यम् U. प्रधानभूतः BB.

४. अधायि निहितः । धायि—दधातेः कर्मणि लुङ् । 'बहुलं छन्दस्यमाङ्योगे' इत्यडभावः 'तिङ्ङतिङः' इति निघातः Sy. आहितोऽभूत् Mah. 'डुधाञ् धारणपोषणयोः' । निहितः U. धार्यतेऽस्माभिः BB.

५. धारयिद्भर्धारयि० M. यज्ञार्थं कर्म कुर्वद्भिरध्वर्युभिः Sy. आधानकर्तृभिः Mah. अग्निधातृभिरध्वर्युभिः U. धारणाय यतमानैः BB.

६. देवानामाह्वाता Sy., Mah. आह्वाता देवानाम् U., BB.

७. अतिशयेन यष्टा Sy., Mah. यष्टृतमो मानुषाद्धोतुः U. यष्टृतमः । मनुष्यहोतॄनपेक्ष्य प्रकर्षः BB.

८. यागेषु Sy. सोमयागादिषु Mah.

९. ऋत्विग्भिः स्तूयमानः Sy. ऋत्विग्भिः स्तुत्यः Mah. स्तुत्यः U., BB.

१०. देवानां हविर्वाहकत्वेन प्रसिद्धमग्निम् । यमिति यच्छब्दस्यायमिति इदंशब्देन संबन्धः Sy. अयमग्निम् Mah. यमग्निमाधाय U. अयमित्युक्तम् । कीदृशोऽयम् ? इत्याह—यम् BB.

११. M. omits words between यज्ञेषु and ०वानः ।। अयमग्निरित्युक्तम् । कोऽसावग्निः ? इत्यत आह—भृगुसम्बन्धी कश्चिदृषिः Sy. अप्नशब्दोऽपत्यनामसु पठितः (Ngh. 2. 2.) अप्नवानः पुत्रवन्तः Mah. पूर्वेऽप्यृषयोऽप्नवत्प्रभृतयः U. अप्न इति कर्मनाम (Ngh. 2. 1.) तद्वन्तः । . . . यद्वा अप्नवानो भृगविशेषः । यथाहुः 'भार्गवच्यावनाप्नवानौर्वजामदग्न्यः' इति BB.

१२. स चान्ये भृगवश्च Sy. भृगवंशोत्पन्ना मुनयः । यद्वा अप्नवानृषिः । अप्नवानस्तत्प्रभृतयो भृगवश्च मनयः Mah. भृगवश्च भृगोरपत्यानि U.

१३. दीप्तियुक्तं कुर्वन्ति स्म Sy. अन्तर्भूतो णिच् । रोचयामासुर्दीपितवन्तः . . . दीपयन्ति स्म Mah. 'रुच दीप्तौ' । विविधां दीप्तिं प्राप्तवन्त इत्यर्थः U. विविधं रोचयामासुः BB.

१४. ग्रामाद्बहिर्यजनाख्येष्वरण्यप्रदेशेषु Mah. वनावस्थितं सन्तमाधाय विरुरुचुः । वनेषु अरण्योराधानाभिप्रायम् U. वनेष्वाश्रमेषु BB.

१५. ०त्रवर्णं M. दावाग्निरूपेण बहुधा दर्शनीयम् Sy. विविधकर्मोपयोगित्वेनाश्चर्यकारिणम् Mah. चयनीयम् U. चायनीयम् BB.

मनुष्याय मनुष्याय[1]। अनेकशरीरम्[2]।

अग्ने॒ क॒दा त॑ आनुष॒ग्भुव॑द्दे॒वस्य॒ चेत॑नम्।
अधा॒ हि त्वां ज॑गृभ्रि॒रे मर्ता॑सो वि॒क्ष्वीड्य॑म्॥ २॥

अग्ने[3]। कदा। अग्ने! तव[4]। अनुक्तम्। प्रज्ञापनं[5] तेजः। भवतीति[6] प्रश्नस्य प्रयोजनम्। अथ[7]। हि[8]। त्वाम्। परिगृह्णन्ति[9]। मनुष्या यज्ञार्थम्। मनुष्येषु[10]। स्तुत्यमिति[11]।

ऋ॒तावा॑नं॒ विचे॑तसं॒ पश्य॑न्तो॒ द्यामि॑व॒ स्तृभिः॑।
विश्वे॑षामध्व॒राणां॑ हस्क॒र्तारं॒ दमे॑दमे॥ ३॥

ऋतावानम्। सत्यम्[13]। सुमतिम्[13]। पश्यन्तः[14]। द्यामिव। नक्षत्रैस्तेजोभिर्व्याप्तिम्[15]।

---

१. वीप्सया सर्वजनव्याप्तिर्गृह्यते। सर्वस्या विशः प्रजायाः Sy. विडिति मनुष्यनाम (Ngh. 2. 3.) यजमानरूपाय तस्मै तस्मै मनुष्याय तदुपकाराय Mah. विशे मनुष्याय। विश् इति मनुष्यनाम (Ngh. 2.3.) U. सर्वो मनुष्योऽभ्युदयेन युज्येतेति। यद्वा विभक्तिव्यत्ययः। विशि विशि व्याप्तवन्तमिति BB.

२. विभुमीश्वरम् Sy. विभुत्वशक्तियुक्तम्। यणादेशः Mah. यं चेदानीमप्यादधाति विभूतिशक्तियुक्तम् U. व्याप्तिव(म)न्तम्। तन्वादित्वादुवङ्...अयमेवं महानुभावोऽस्मान् मृडयत्विति शेषः BB. अयमिह प्रथमः। धायि धातृभिर्होता यजिष्ठोऽ अध्वरेष्वीडयः। यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशे-विश इत्यन्वेव धावति यद्यथा याचन्कल्याणं वदेदामुष्यायणो वै त्वमस्यलं वै त्वमेतस्माऽअसीत्येवमेषा यथोऽएवैष तथोऽएवैनमेतदाह यदाह विभ्वं विशे-विशऽइति विभुर्ह्येष विशे-विशे। SB. 2.3.4.14.p.164. This stanza=YV. 3. 15.= TS. 1. 5. 5. 1.

३. 'अग्ने कदा ते' इति। प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ आनुष्टुभे छन्दसि 'अग्ने कदा ते' इत्याद्याः पञ्चर्चः। सूत्रितञ्च—'अग्ने कदा त इति पञ्च' (ASS. 4. 13.) इति Sy.

४. तव सम्बन्धि Sy.

५. प्रजापनं M. प्रज्ञापकं P.

६. भवन्तीति M. भवेत्। लेटयडागमः। 'बहुलं छन्दसि' इति विकरणस्य लुक्। 'भूसुवोस्तिङि' इति गुणप्रतिषेधः Sy.

७. ०था P. अतः कारणात् Sy.

८. अतः कारणादित्युक्तम्। कस्माद्धेतोः? इत्युच्यते। यस्मात् कारणात् Sy.

९. जगृहिरे गृह्णन्ति। ग्रहेर्वर्तीलिटि 'हृग्रहोर्भः' इति भत्वम्। 'बहुलं छन्दसि' इति रुडागमः Sy.

१०. मनुषु P. विड्भिः प्रजाभिः Sy.

११. VM. ignores देवस्य॥ द्योतमानस्य Sy.　१२. अमायिनम् Sy.

१३. सत्यम्। सुमतिम् is omitted by M. विशिष्टज्ञानम् Sy.　१४. संप० M. पश्यन्त ऋत्विगादयः Sy.　१५. नक्षत्रैः परिवृतम्, विस्फुलिङ्गैः समेतम् Sy.

सर्वेषामेव । यज्ञानाम् । विकासस्य कर्तारम्[1] । यजमानगृहेषु[2], उत्तरत्र सम्बन्धः ।

आशुं दूतं विवस्वतो विश्वा यश्चर्षणीरभि ।
आ जभ्रुः केतुमायवो भृगवाणं विशेविशे ॥ ४ ॥

आशुम् । क्षिप्रम्[3] । दूतम् । यजमानस्य[4] । विश्वाः[5] । प्रजाः । यः[6] । अभिभवति तम् । आहुतवन्तः[7] । मनुष्याः[8] । यज्ञस्य प्रज्ञापकम् । पचन्तम्[9] । मनुष्याय[10] मनुष्याय[11] । भृगुः पाको भ्राजते[12]स्तत्कुर्वाणमित्याहुः भृगूणां रक्षकमित्यपरमिति[13] ।

तमीं होतारमानुषक् चिकित्वांसं नि षेदिरे ।
रण्वं पावकशोचिषं यजिष्ठं सप्त धामभिः ॥ ५ ॥

तमीम्[14] । तम् । एनम्[15] । होतारम्[16] । अनुषक्तम्[17] । प्राज्ञं[18] प्रति । निषेदिरे[19] । रमणीयम्[20] । शोधकदीप्तिम् । यष्टृतमम् । सप्तभिः । छन्दोभिः[21] ।

---

१. प्रभासकं वृद्धेः कर्तारं वा Sy.

२. सर्वस्मिन् यज्ञगृहे जगृभ्रिर इति पूर्वेण सम्बन्धः Sy.

३. क्षिप्रगामिनम् Sy.

४. मनुष्यस्य यजमानस्य Sy. विवस्वन्त इति मनुष्यनाम Ngh. 2. 3.

५. सर्वाः Sy.

६. अग्निः Sy.

७. आजह्रुः । जभ्रुः—'हृग्रहोर्भः' इति भत्वम् Sy.

८. मनुष्य M. आयव इति मनुष्यनाम Ngh. 2. 3.

९. वमन्तं M. भृगुवदाचरन्तम् । दीप्यमानमित्यर्थः । 'सर्वप्रातिपदिकेभ्यः क्विब् वक्तव्यः' इति क्विप् । तदन्ताल्लटो व्यत्ययेन शानच् । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे प्राप्ते वृषादेराकृतिगणत्वादाद्युदात्तत्वम् Sy.

१०. मनुष्यस्यायम् P. तमग्निं सर्वस्यै प्रजायै Sy.

११. Omitted by M.

१२. भूतेस्त० M. भ्रस्जते० is suggested for भ्राजते०

१३. The passage भृगुःपाको . . ०मित्यपरम् should immediately follow पचन्तम् and precede मनुष्याय मनुष्याय ।

१४. ऋत्विगादयो मनुष्याः Sy.

१५. ईम् इममग्निम् Sy.

१६. देवानामाह्वातारम् Sy.

१७. M. adds होतारं after अनुषक्तम् ॥ आनुपूर्व्येण Sy.

१८. प्रज्ञं D. प्राजज्ञं M. जानन्तम् । 'कित ज्ञाने' । लिटः क्वसुः । द्विर्भावहलादिशेषचुत्वदीर्घाः । प्रत्ययस्वरः Sy.

१९. निषादयन्ति स्म Sy.

२०. कीदृशम् ? रमणीयम् Sy.

२१. तेजोभिर्युक्तम् Sy.

तं शश्वतीषु मातृषु वन आ वीतमश्रितम् ।
चित्रं सन्तं गुहा हितं सुवेदं कूचिदर्थिनम् ॥ ६ ॥

तं शश्वतीषु । तम् । शश्वतीषु[1] । अग्नेर्[2]मातृष्वोषधीषु[3] । वने । गतम्[4] । आत्मन्यधिष्ठितम्[5] । चित्रम्[6] । सन्तम्[7] । गुहायाम् । निहितम् । शोभनज्ञानम्[8] । यो बह्वप्यर्थयते[9] स कूचिदर्थी[10] तं[11] निषेदिरे देवा इति[12] ।

ससस्य यद्वियुता सस्मिन्नूधन्नृतस्य धामन्रणयन्त देवाः ।
महाँ अग्निर्नमसा रातहव्यो वेरध्वराय सदमिदृतावा ॥ ७ ॥

ससस्य[13] । स्वप्नशीलस्य[14] । यदा[15] । वियुते[16] । सर्वस्मिन् । ऊधनि[17] आहवनीये । यज्ञस्य[18] । आवासस्थाने[19] । रमन्ते[20] । देवाः[21] । तदा[22] महान्[23] । अग्निः । नमस्कारेण । देवेभ्यो दत्तहविष्कः

---

१. बह्वीषु Sy.
२. अग्ने P.
३. अप्सु । ताः सस्यादिनिर्मातृकत्वान्मातर इत्युच्यन्ते Sy.
४. वीतं कान्तम् Sy.
५. प्राणिभिर्दाहभयादसेवितम् । दुरासदमित्यर्थः Sy.
६. चायनीयम् Sy.
७. विद्यमानम् Sy.
८. सुविज्ञानं सुधनं वा Sy.
९. ०ह्वव्यर्थ० M.
१०. क्वचि० P. क्वापि हविर्ष्वार्थिनं समिदाज्यपुरोडाशादिहविः स्वीकुर्वन्तम् । क्व इत्यत्र वकारस्य छान्दसे सम्प्रसारणे परपूर्वत्वे च 'हलः' इति दीर्घत्वम् Sy.
११. तमग्निं निषेदिर इति पूर्वेण सम्बन्धः Sy.
१२. VM. ignores आ ॥ आकारश्चार्थे । वने आ वृक्षसमूहे च Sy.
१३. प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभे छन्दसि 'ससस्य यद्वियुता' इत्याद्याः पञ्चर्चः । सूत्रितञ्च 'ससस्य यद्वियुतेति पञ्च' (ASS. 4. 13.) इति Sy.
१४. स्वप्नस्य Sy.
१५. यमग्निम् Sy.
१६. वियोगे । उषसीत्यर्थः Sy.
१७. युध० P. यज्ञे Sy.
१८. उदकस्य Sy.
१९. धामनि स्थाने Sy.
२०. रमयन्ति स्तोत्रैरिति शेषः Sy.
२१. स्तोतारः Sy.
२२. ०न्तेस्तमदा P.
२३. प्रभूतः Sy.

सन् । यज्ञाय । गच्छति ।

वेरंध्वरस्यं दूत्यांनि विद्वानुभे अन्ता रोदंसी संचिकित्वान् ।
दूत ईयसे प्रदिवं उराणो विदुष्टरो दिव आरोधंनानि ॥ ८ ॥

वेरध्वरस्य । कामयते । यज्ञस्य । दूत्यानि । विद्वान् । अथ द्यावापृथिवी । मध्येन ।

---

१. अध्वरं यजमानैः कृतं यज्ञम् । 'सुपां सुपो भवन्तीति वक्तव्यम्' (PMBH. 7. 1. 39.) इति वचनादत्र द्वितीयार्थे चतुर्थी Sy.

२. The passage beginning with स्वप्नशीलस्य and ending with गच्छति is omitted by M. वेत्ति जानाति । यद्वा, देवा इन्द्रादयः ससस्य ऋत्विग्भिः सेव्यस्य यज्ञस्याग्नेर्वियुता विशिष्टे सस्मिन् भजनीये ऋतस्य सत्यस्य धामन् धामनि योनौ ऊधन्नूधनि यज्ञे रणयन्त रमयन्ते । महान् प्रभूतो नमसा हविषा रातहव्यो दत्तहविष्कः ऋतावा सत्यवान् सोऽग्निरध्वराय यज्ञार्थं सदमित् सदैव वेः गन्ता भवति । अध्वराय यज्ञं वेः कामयते वा Sy.

३. VM. ignores सदम् । इत् and ऋतावा ॥ सदा । एव । सत्यवान् सः Sy.

Omitted by M. वामदेवस्य SKN. वामदेवस्यार्थम् Dur.

५. हे अग्ने ! Sy. हे भगवन्नग्ने ! Dur.

६. वेत्सि कामयसे वा । यद्वा वेरिति यज्ञविशेषणम्, वेर्यजमानस्याभीष्टफलजनकस्याध्वरस्य यागस्य सम्बन्धीनि दूतकर्माणि विद्वान् जानन् Sy. 'विद ज्ञाने' इत्यस्य वर्तमाने लङि अडभाव एतद्रूपम् । वेत्सि त्वम् SKN. त्वं जानीषे Dur.

७. Sy. adds सम्बन्धीनि ॥ यज्ञस्य तावद् यत्किञ्चिज्ज्ञातव्यं सर्वम् SKN. किम् ? Dur.

८. दूतकर्माणि Sy. दूतस्य च कर्माणि SKN. दूतकर्माणि यानि दूतेन कर्तव्यानि Dur.

९. सर्वं जानानस्त्वम् Sy. जानन् SKN. विजानीषे Dur.

१०. रोदस्योर्द्यावापृथिव्योः Sy. द्यावापृथिव्योर्मध्य इत्यर्थः SKN. रोदस्योः Dur.

११. मध्ये स्थितमन्तरिक्षम् Sy. अत्रैकवाक्यतायै यत्तच्छब्दावध्याहार्यौ यत् किञ्च पुनस्तत् ? सामर्थ्यादन्तरिक्षम् । तेनान्तरिक्ष इत्यर्थः SKN. अन्तौ Dur.

ते उभे[1] अपि[2]। जानन्[3]। दूतो[4] भूत्वा। गच्छसि[5]। पुराणः[6]। उरु[7] कुर्वाणः। विद्वत्तरः[8]। द्युलोकस्य[9]। आरोधनानि[10] रक्षांसि।

कृष्णं त एम रुशतः पुरो भाश्चरिष्ण्वर्चिर्वपुषामिदेकम् ।
यदप्रवीता दधते ह गर्भं सद्यश्चिज्जातो भवसीदु दूतः ॥ ९ ॥

कृष्णम्[11]। कृष्णः[12]। तव[13]। गमनमार्गः[14]। श्वेतवर्णस्य[15]। पुरस्च[16]। दीप्तिः[17]। उप्तानां[18]

१. उभयोः Sy., SKN. उभावपि Dur.

२. Omitted by M.

३. सम्यग् जानन् Sy. सम्यक् स्वमधिकारम् SKN. समस्तमप्येतज्जगच् चिकित्वानसि। न ते विज्ञानप्रतीघातोऽस्ति कृत्स्नेऽपि जगति। विजानीषे सर्वाणि देवतास्थानानि Dur.

४. देवानां दूतस्त्वम् Sy. यतोऽस्माभिस्त्वमेतस्मिन् कर्मणि . . . दूत्यत्वेन Dur.

५. ०च्छा० D. देवानां हवींष्यर्पयितुं गच्छसि Sy. याच्यसे Dur.

६. ०णा उ० P., D., M. पुराणनामेदम्। 'प्रत्नं प्रदिवः' (Ngh. 3. 27.) इति पुराणनामसु पाठात् Sy. पुराणनामेदम्। पुराणश्चिरन्तनः। एवकारोऽवधारणः SKN. असि दूतश्चिरन्तनः सर्वेषां यजमानानाम् Dur.

७. अल्पमपि हविरुरु बहु कुर्वाणः। 'उराण उरु कुर्वाणः' इति (N. 6. 17.) यास्केनोक्तत्वात् Sy. अल्पमपि हविरुरु बहु कुर्वाणः। तथा च श्रुतिः 'यद्वै देवो जोषत हविस्तदतिमात्रं वर्धत आधीयोऽपरिमितम्' इति SKN. स त्वम् . . . अल्पमपि हुतं हविर्देवतातृप्तिसमर्थं बहु कुर्वाणः। उराण उरु कुर्वाण N. 6. 17. . . . एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च 'उराणः' इत्यस्य 'उरु कुर्वाणः' इत्येष विपरिणाम उपपद्यते। Dur.

८. विद्वत्तरो देवानाम् Sy. सर्वस्माद् विद्वत्तरः SKN. विद्वत्तरो मनुष्यहोतुः सकाशात् Dur.

९. स्वर्गस्य Sy. किमीयसे ? उच्यते, दिवो द्युलोकस्य सम्बन्धीनि SKN.

१०. रो० P., D. आरोहणानि आरोहणार्हाणि स्थानानीत्यर्थः Sy. आरोहणानि, येषु यज्ञाङ्गसिद्ध्यर्थमारोहन्ति देवा इत्यभिप्रायः। यानि स्थानानि देवानाह्वयितुं हवींष्यर्पयितुमित्यर्थः SKN. आरोढव्यानि देवतास्थानानि प्रति वह, एतानि हवींषीत्यभिप्रायः Dur. N. 6. 17; SKN. II. 452.

११. ०ष्णः P.

१२. हे अग्ने ! Sy.

१३. कृष्णवर्णं भवति Sy.

१४. तव सम्बन्धि Sy.

१५. ०र्गं P., M. अत्रैमन्शब्देन गमनमार्ग उच्यते। वर्त्म Sy.

१६. ०र्णस्य M.
रोचमानस्य Sy.

१७. पुरस्ताद्भवति Sy.

१८. तव सम्बन्धिनी दीप्तिः Sy.

१९. उक्तप्ता० P. वपुष्मतां रूपवताम्, तेजस्विनामित्यर्थः Sy.

सर्वेषाम् । एव । सञ्चरणशीलम्[१] । इदमेकम्[२] । तेजः[३] । यस्मात्[४] । अनिषिक्तरेतांसि[५] । धारयन्ति । गर्भम्[६] 'उप्तान्योषध्या[७]दीनि तस्मादोषधयोऽनभ्यक्तारो भवन्ति'[८] इति ब्राह्मणम् । किञ्च जातस्त्वम्[९] । तदानीम्[१०] । एव । भवसि । देवानां[११] दूतः[१२] ।

**सद्यो जातस्य ददृशानमोजो यदस्य वातो अनुवाति शोचिः ।**
**वृणक्ति तिग्मामतसेषु जिह्वां स्थिरा चिदन्ना दयते वि जम्भैः ॥ १० ॥**

सद्यः[१३] । तदानीमेव[१४] । जातस्य[१५] । दृश्यमानम्[१६] । बलं[१७] भवति । यदा । अस्य[१८] जातस्य[१९] । तेजः[२०] । वातः[२१] । अनुवाति[२२] प्रेरयति । वृजिश्छेदनकर्मा[२३] । तीक्ष्णाम्[२४] । ज्वालां[२५] जिह्वाम् । अतसेषु[२६] । छिनत्ति[२७] । एवमपि भवति प्रयोगः । तथा स्थिराणि । अपि । काष्ठादीन्यन्नानि[२८] । दंष्ट्राभिः[२९] । विशेषेण क्षपयति[३०] ।

---

१. धरणशी० P.
२. Omitted by P., D. एकमित् मुख्यमेव भवति Sy.
३. त्वदीयं तेजः Sy.
४. यं त्वाम् Sy.
५. अनिर्विक्त० P. अनुपगता यजमानाः Sy.
६. त्वज्जननहेतुमरणिम् Sy.
७. ०ध्यानि M.
८. The quotation is untraced.
९. उत्पन्नः सन् Sy.
१०. स त्वं सद्य एव Sy.
११. यजमानस्य दूतः Sy.
१२. VM. ignores ह and उ ॥ ह खलु । उ एव Sy.
१३. सद्यो जातस्य सद्यः M.
१४. अरणिनिर्मंथनादनन्तरमेव Sy.
१५. उत्पन्नस्याग्नेः Sy.
१६. ऋत्विगादिभिर्दृश्यमानं भवतीति शेषः Sy.
१७. तेजः Sy.
१८. अग्नेः Sy.
१९. वजा० P.
२०. दीप्तिम् Sy.
२१. घातः P. वायुः Sy.
२२. लक्षीकृत्य गच्छति तदा सोऽयमग्निः Sy.
२३. व्रजि० D., M. प्रच्छेद० P. The passage: वृजिश्छेदनकर्मा should immediately follow छिनत्ति and precede एवमपि ।
२४. ०णा M. ० ण P.
२५. ज्वाला जिह्वाम् P. ज्वाला जिह्वा M.
२६. वृक्षसङ्घेषु Sy.
२७. संयोजयति Sy.
२८. अन्नरूपाणि Sy.
२९. ०भि D. तेजोभिः Sy.
३०. विखण्डयति भक्षयतीत्यर्थः Sy.

तृषु यदन्ना तृषुणा ववक्ष तृषुं दूतं कृणुते यह्वो अग्निः ।
वातस्य मेळिं सचते निजूर्वन्नाशुं न वाजयते हिन्वे अर्वा ॥ ११ ॥

तृषु[1]। क्षिप्रम्[2]। यदा[3]। अन्नानि[4]। क्षिप्रेण तेजसा[5]। वहति[6]। तदानीं क्षिप्रकारिणमात्मानम्। दूतम्[7]। करोति। महान्। अग्निः[8]। वातस्य[9] च। सम्पर्कम्[10]। सेवते। नितरामरण्यं हिंसन्[11]। अश्वम्[12]। इव चात्मानम्। प्रेरयति[13]। गमनाय[14]। गमनस्वभावः[15][16]।

IV.8.

दूतं वो विश्ववेदसं हव्यवाहममर्त्यम् । यजिष्ठमृञ्जसे गिरा ॥ १ ॥

दूतम्[17][18]। होतः[19]। त्वम्[20]। अध्वराणां[21] दूतम्। सर्ववेदसम्[22]। हविषां वोढारम्[23]।

---

१. त्रिषु P., D.
२. क्षिप्रमेव Sy.
३. योऽग्निः Sy.
४. अन्नादि M. अन्नानि काष्ठादीनि Sy.
५. क्षिप्रेण रश्मिसमूहेन Sy.
६. वपति P. वहति दहतीत्यर्थः Sy.
७. यजमानदूतम् Sy.
८. सोऽग्निः Sy.
९. वायोः Sy.
१०. बलम् Sy.
११. काष्ठानि निःशेषेण दहन्नग्निः Sy.
१२. अश्वसादी यथाश्वं तथा Sy.
१३. वाजिनं बलवन्तं करोति Sy.
१४. प्रेरयति च Sy.
१५. ०व P., D. गमन is omitted by M. गमनशीलोऽग्निः स्वरश्मिम् Sy.
१६. MS. D. puts the figure ॥७॥ here to indicate the end of seventh hymn. No such number is given in P. and M. .
१७. 'दूतं वा' इत्यष्टर्चमष्टमं सूक्तं वामदेवस्यार्षं गायत्रीछन्दस्कमग्निदेवताकम्। तथा चानुक्रम्यते 'दूतं वोऽष्टौ गायत्रं तु' (KSA. 21. 8. p. 17.) इति । व्यूळ्हे दशरात्रे प्रथमे छन्दोमे इदं सूक्तं जातवेदस्य निविद्धानीयम् । तथा च सूत्रितम्—'दूतं व इत्याग्निमारुतम्' (ASS. 8. 9.) इति । इदमादिके द्वे सूक्ते प्रातरनुवाकस्याग्नेये क्रतौ गायत्रे छन्दसि विनियुक्ते । सूत्रितञ्च—'अग्ने ! पावक दूतं व इति सूक्ते' (ASS. 4. 13.) इति Sy. वामदेवस्यार्षम् SKN., Dur.
१८. M. adds वः after दूतम् ।
१९. हे अग्ने ! Sy. अग्निरुच्यते SKN. यजमान ! Dur.
२०. त्वाम् Sy. द्वितीयैकवचनस्यायं वसादेशश्छान्दसत्वात् । त्वाम् SKN. वः इत्येतस्य त्वमिति विपरिणामः Dur.
२१. देवानाम् Sy.
२२. ०सङ्ग M. विश्वं समस्तं वेदो धनं यस्यासौ विश्ववेदाः । तं सर्वविदं वा Sy. सर्वस्य वेदितारं सर्वज्ञमित्यर्थः । सर्वधनं वा SKN. सर्वप्रज्ञानम् Dur.
२३. देवेभ्यो हविषां वोढारम् Sy.

अमर्त्यम्[1] । यष्टृतमम्[2] । प्रसाधयसि[3] । गिरा[4] ।

**स हि वेदा वसुधितिं महाँ आरोधनं दिवः । स देवाँ एह वक्षति ॥ २ ॥**

स हि । सः[5] । अग्निः । वसुनो निधानम्[6] । वेत्ति । महान्[7] । दिवश्च । आरोधनं[8] वशीकरणम् । स[9] एव । देवान्[10] । इह[11] । आवहति[12] ।

**स वेद देव आनमं देवाँ ऋतायते दमे । दाति प्रियाणि चिद्वसु ॥ ३ ॥**

स वेद । सः[13] । वेत्ति[14] । देवः[15] । आनमयितुम्[16] । देवान्[17] । यज्ञमिच्छते[18] । गृहे[19] । प्रयच्छति[20] । च[21] । प्रियाणि[22] । धनानि[23] ।

---

१. अमरणधर्माणम् Sy., Dur. मरणवर्जितम् SKN.

२. अतिशयेन यष्टारम् Sy., SKN. यष्टृतमम् Dur.

३. यजमानोऽहं प्रसाधयामि । वर्धयामीत्यर्थः Sy. व्यत्ययेन मध्यम उत्तमस्य स्थाने । ऋञ्जे । . . .प्रदर्शनमिदं हविषो दानेन स्तुत्या च प्रसाधयामि SKN. प्रसाधयामि । . . .एवमत्र 'ऋञ्जतिः प्रसाधनकर्मा' द्रुतसम्बन्धात् Dur.

४. स्तुतिरूपया वाचा Sy. स्तुत्या SKN. स्तुत्येत्यर्थः Dur., N.6.21., SKN. II. 4. 66.

५. प्रसिद्ध एव Sy.

६. यजमानाभीष्टफलरूपधनस्य दानम् Sy.

७. प्रभूतोऽग्निः Sy.

८. आरोहणं देवानां स्थानं वेत्ति Sy.

९. अग्निः Sy.

१०. इन्द्रादीन् Sy.

११. अस्मिन् यज्ञे Sy.

१२. आवहतु । वक्षति—वहेर्वर्ततोः 'लिङर्थे लेट्' इति लेट् । तस्य तिप् । 'सिब्बहुलं लेटि' इति सिप् । 'लेटोऽडाटौ' इत्यडागमश्च । 'हो ढः' इति ढत्वम् । कत्वषत्वे । 'तिङ्ङतिङः' इति निघातः Sy.

१३. अग्निः Sy.

१४. क्रमेण वेत्ति Sy.

१५. द्योतमानः Sy.

१६. यजमानादीन् आनमयितुं नमस्कारयितुम् Sy.

१७. इन्द्रादीन् Sy.

१८. ऋतं यज्ञमिच्छते यजमानाय Sy.

१९. यज्ञगृहे Sy.

२०. ददाति प्रयच्छति Sy.

२१. वि M. अपि Sy.

२२. अभीष्टानि Sy.

२३. च । प्रियाणि । धनानि are omitted by P. वसूनि पश्वादीनि धनानि Sy.

**स होता सेदु दूत्यं चिकित्वाँ अन्तरीयते। विद्वाँ आरोधनं दिवः ॥ ४ ॥**

स होता। सः[1]। ह्वाता[2]। सः। एव। दूतकर्म[3]। जानन्। द्यावापृथिव्योरन्तः[4]। गच्छति[5]। जानन्। दिवः[6]। आगमनप्रकारम्[7][8]।

**ते स्याम ये अग्नये ददाशुर्हव्यदातिभिः। य ईं पुष्यन्त इन्धते ॥ ५ ॥**

ते स्याम। वयमप्यग्नये। ते[9]। स्याम। ये[10]। दत्तवन्तस्तुभ्यम्[11]। हविषां दानैः[12]। ये[10] च। एनम्[13]। पोषयन्तः[14]। सन्दीपयन्ति[15][16]।

**ते राया ते सुवीर्यैः ससवांसो वि शृण्विरे। ये अग्ना दधिरे दुवः ॥ ६ ॥**

ते राया। ते। त्वाम्[17]। भजमानाः[18]। धनेन[19]। वीर्यैश्च[20]। विश्रुता[21] भवन्ति। ये[22]। अग्निनिमित्तम्[23]। परिचर्याम्। धारयन्ति[24][25]।

---

१. अग्निः Sy.
२. देवानामाह्वाता भवति Sy.
३. देवानां दूतकर्म Sy.
४. मध्ये Sy.
५. 'ईङ् गतौ'। 'दिवादिभ्यः श्यन्'। 'तिङ्ङतिङः' इति निघातः Sy.
६. स्वर्गस्य Sy.
७. आरोहणमारोहणार्हं देवानां स्थानम् Sy.
८. The commentary on the whole of this stanza is omitted by P.
९. ये D. तव यजमानाः Sy.
१०. ते इत्युक्तम्, के? इत्युच्यते। यजमानाः Sy.
११. दत्तः M. प्रीतिं कुर्वन्ति Sy.
१२. हविर्दानैः Sy.
१३. एनमग्निम् Sy.
१४. वर्धयन्तः Sy.
१५. समिद्भिर्दीप्तियुक्तं कुर्वन्ति Sy.
१६. The commentary on the whole of this stanza is omitted by P.
१७. अग्निम् Sy.
१८. सम्भजमानाः Sy.
१९. पश्वादिलक्षणेन धनेन Sy.
२०. ते शोभनवीर्योपेतैः पुत्रादिभिश्च विश्रूयन्ते Sy.
२१. विश्रूयन्ते, प्रख्यायन्ते Sy.
२२. यजमानाः Sy.
२३. अग्नौ। अग्ना 'सुपां सुलुक्' इत्याकारः Sy. २४. कुर्वन्तीत्यर्थः Sy.
२५. The commentary on the whole of this stanza is omitted by P.

अस्मे रायो दिवेदिवे सं चरन्तु पुरुस्पृहः । अस्मे वाजास ईरताम् ॥ ७ ॥

अस्मे । अस्मासु[1] । धनानि[2] । अन्वहम्[3] । सञ्चरन्तु[4] । बहुभि स्पृहणीयानि[5] । अन्नानि च । अस्मासु[6] । उद्युक्तानि[7] भवन्तु ।

स विप्रश्चर्षणीनां शवसा मानुषाणाम् । अति क्षिप्रेव विध्यति ॥ ८ ॥

स विप्रः[8] । सः[9] । विप्रः[10] । मनुष्येषु[11] । पश्यत्सु[12] । बलेन[13] । शत्रूनतिक्षिपति[14] । धानुष्क[15] इव क्षेप्ता शरानित्यग्नेः स्तोतारमाह[16] ।[17]

## IV.9.

अग्ने मृळ महाँ असि य ईमा देवयुं जनम् । इयेथ बर्हिरासदम् ॥ १ ॥

[18]अग्ने । अग्ने ! सुखय[19] । महान्[20] । त्वमसि[21] । यस्त्वम् । इमम् । देवम्[22] । जनम्[23]

---

१. यजमानेषु Sy.
२. पश्वादिधनानि Sy.
३. M. omits words between अस्मे and न्वहं M. प्रतिदिनम् । दिवुशब्दादुत्तरस्याः सप्तम्याः 'सुपां सुलुक्' इत्यादिना शेआदेशः । 'ऊडिदम्' इत्यादिना च तस्योदात्तत्वम् । 'नित्यवीप्सयोः' इति द्विर्भावे सत्युत्तरभागस्य 'अनुदात्तं च' इत्यनुदात्तत्वम् Sy.
४. सञ्चरन्ति M. प्रचरन्त्यो भवन्तु Sy.
५. स्पृहणीया M. ऋत्विगादिभिरभिलष्यमाणाः Sy.
६. अस्मान् Sy.
७. अस्माकं ग्यक्ता P. यज्ञार्थं प्रेरयन्तु Sy.
८. विप्र M.
९. अग्निः Sy.
१०. मेधावी Sy. विप्र इति मेधाविनाम Ngh. 3. 15.
११. मनुष्यसम्बन्धिनाम् Sy.
१२. प्रजानाम् Sy.
१३. शव इति बलनाम Ngh. 2. 9.
१४. अपिक्षपयति P. अविक्षिपति M. अतिविध्यतु । अतिशयेन नाशयतु Sy.
१५. धनुष्के P. क्षेप्याण्येव विनाशयितुमर्हाणि । दुरितानीति शेषः Sy.
१६. ०तारोमहं P. Missing in M.
१७. MS. D. puts the figure ॥८॥ here to indicate the end of eighth hymn. No such number is given in P. and M.
१८. 'अग्ने मृळ' इत्यष्टर्चं नवमं सूक्तं वामदेवस्यार्षं गायत्रीछन्दस्कमग्निदेवताकम् । अनुक्रान्तञ्च 'अग्ने मृळ' (KSA. 21. 9. p. 17). इति । द्वितीये छन्दोमे इदं सूक्तं जातवेदस्यनिविद्धानीयम् । सूत्रितञ्च—'कीळं वः शर्वोऽग्ने मृळेत्याग्निमारुतम्' (ASS. 8. 10.) इति Sy.
१९. मृळय D., P. अस्मान् सुखय Sy.
२०. प्रभूतः Sy.
२१. अपि M. स त्वं भवसि Sy.
२२. देव M. देवानां कामयितारम् Sy.
२३. यजमानम् Sy.

रक्षितुम्। आगच्छसि। आसन्नम्[1]। बर्हिः[2]।

**स मानुषीषु दूळभो विक्षु प्रावीरमर्त्यः। दूतो विश्वेषां भुवत् ॥ २ ॥**

स मानुषीषु। सः[3]। मानुषीषु[4]। दुर्दभः[5]। विक्षु[6]। प्रकर्षेण रक्षकः[7]। अमर्त्यः[8]। दूतः। विश्वेषां[9] देवानाम्। अ[10]भवदग्निः[11]।

**स सद्म परि णीयते होता मन्द्रो दिविष्टिषु। उत पोता नि षीदति ॥ ३ ॥**

स सद्म[12]। सः[13]। सद्म[14] यज्ञभवनम्। परितो नीयते[15]। मोदमानः[16]। दिव अन्वेषणेषु[17]। होता सन्[18] यजमानैः। अपि च। पोता सन्[19]। निषीदति[20]।

**उत ग्ना अग्निरध्वर उतो गृहपतिर्दमे। उत ब्रह्मा नि षीदति ॥ ४ ॥**

उत ग्नाः। अपि च। अग्निः। यज्ञे[21]। ग्नाश्च[22] भवति[23], देवपत्न्यो ग्ना उच्यन्ते।

---

१. यज्ञे आसत्तुम् Sy.
२. दर्भम् Sy.
३. अग्निः Sy.
४. मनुसम्बन्धिनीषु Sy.
५. दुर्दम्भः D. दुदुम्भः M. दुर्दभो राक्षसादिना दुर्हिंसः Sy.
६. प्रजासु Sy.
७. प्रकर्षेण गन्ता Sy.
८. अमरणधर्मा Sy.
९. सर्वेषां देवानाम् Sy.
१०. ०ना भ० P.
भवतु Sy.
११. विश्वेषां देवानाम्। अभवदग्निः missing in M.
१२. स सद्म is missing in M.
१३. अग्निः Sy.
१४. सप्त M. यज्ञगृहम् Sy.
१५. ऋत्विग्भिः परितो नीयते। नीयमानः सन् Sy.
१६. मदनीयः स्तुत्यः सोऽग्निः Sy.
१७. यागेषु Sy.
१८. अस्मद् M.
होता च भवति Sy.
१९. सं M.
२०. यज्ञगृहे उपविशति Sy.
२१. यागे Sy.
२२. नाश्वा M. देवपत्नीर्यजति। यष्टा भवतीत्यर्थः। यद्वा। ग्ना गच्छन्नध्वर्युर्भवति Sy.
२३. ०न्ति M.

एवम् । यजमानश्च भूत्वा । निषीदति । ब्रह्मा । च भवन्निति ।

**वेषि ह्यध्वरीयतामुपवक्ता जनानाम् । हव्या च मानुषाणाम् ॥ ५ ॥**

वेषि । अध्वरमिच्छताम् । जनानाम् । उपवक्ता सन् । गच्छसि । हव्यानि । च । मानुषाणां गच्छसि ।

**वेषीद्वस्य दूत्यं यस्य जुजोषो अध्वरम् । हव्यं मर्तस्य वोळ्हवे ॥ ६ ॥**

वेषि । गच्छसि । एव । अस्य । दूत्यम् । यस्य । भजसे । यज्ञम् । हविः । वोढुम् । मनुष्यस्य दूत्यं वेषीति ।

---

१. अपि च सोऽग्निः Sy.

२. त्वा M.
भवति Sy.

३. उपविशति Sy.

४. ०ह्म P.
ब्राह्मणाच्छंसी सन् Sy.

५. VM. ignores दमे ॥ यज्ञगृहे Sy.

६. यज्ञमिच्छताम् Sy.

७. उपवक्ता अध्वर्युप्रभृतीनां सर्वेषां कर्मणामनुज्ञार्थं 'मां प्रणय' इत्यादिरूपस्य वाक्यस्य वक्ता सन् ब्रह्मा चासि । 'ब्रह्मा त्वो वदति जातविद्याम्' (RV. 10. 71. 11.) इति श्रुतेः । उपवक्ता सर्वेषां कर्मणामवैकल्यार्थमुपद्रष्टा वा सदस्योऽसि । 'स हि सप्तदशः कर्मणामुपद्रष्टा भवति' इत्यापस्तम्बेनोक्तत्वात् Sy.

८. ०च्छासि D. हे अग्ने ! कामयसे Sy.

९. हवींषि Sy.

१०. मनुसम्बन्धिनाम् Sy.

११. VM. ignores हि ॥ हि खलु Sy.

१२. हे अग्ने ! त्वम् Sy.

१३. कामयसे Sy.

१४. यजमानस्य Sy.

१५ दूतकर्म Sy.

१६. यज्ञस्य P.
यजमानस्य Sy.

१७. सेवेथाः । जुजोषः—'जुषी प्रीतिसेवनयोः' लेट् । 'बहुलं छन्दसि' इति शपः श्लुर्द्विर्भावश्च । 'लेटोऽडाटौ' इत्यडागमः Sy.

१८. यागम् Sy.

१९. ०ढुः P., D. वोळ्हवे—वहेर्धातोः 'तुमर्थे सेसेनसे' इति तवेन्प्रत्ययः 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वम् Sy.

उत्तरा निगदव्याख्याता

**अस्माकं जोष्यध्वरमस्माकं यज्ञमङ्गिरः । अस्माकं शृणुधी हवम् ॥ ७ ॥**

[ अस्माकम् ।[1] ]

**परि ते दूळभो रथोऽस्माँ अश्नोतु विश्वतः । येन रक्षसि दाशुषः ॥ ८ ॥**

परि ते[2]। परिव्याप्नोतु[3]। ते[4]। अन्यैर्हिंसितुमशक्यः[5]। रथः[6]। अस्मान्[7]। सर्वत[8] एव। येन रथेन। रक्षसि[9]। यजमानान्[10]इति[11]।

---

१. The *pratika* is supplied by the Editor. Sy. explains this stanza in this manner:— हे अङ्गिरः ! अग्ने ! त्वम् । अस्माकमध्वरम् अस्मदीयं यागम् । जोषि जुषस्व सेवस्व । अस्माकमस्मदीयम् । यज्ञं यजनसाधनं हविश्च जुषस्व । अस्माकमस्मदीयम् । हवमाह्वानरूपं स्तोत्रं च । शृणुधि शृणु । शृणोतेर्लोण्मध्यमैकवचने सिप् । तस्य हिरादेशो 'श्रुवः शृ च' इति धातोः श्नुप्रत्ययः शृभावश्च । 'श्रुशृणुपृकृवृभ्यश्छन्दसि' इति हेर्धिरादेशः ।

२. हे अग्ने ! त्वम् Sy., Mah., U.

३. ०ति M. सर्वतो व्याप्नोतु । अश्नोतेर्व्यत्ययेन परस्मैपदम् Sy. परितो व्याप्नोतु । अस्मद्रक्षणाय सर्वतस्तिष्ठतु Mah.

४. त्वदीयः Sy. तव Mah., U.

५. दुर्दभो दुर्हिंसः Sy. दभ्नोतिर्वधकर्मा दुःखेन दभ्यते दुर्दभः केनापि सहसा हिंसितुमशक्यः Mah. दुर्दभः—दुरुपसर्गः प्रतिषेधार्थीयः. . .अवध्यः U.

६. स रथः Sy. त्वभूतो रथः. . .स रथोऽस्मान् पर्यश्नोतु U.

७. ०न P. यजमानान् Sy., Mah.

८. विश्वासु सर्वासु दिक्षु गच्छन् Sy. सर्वासु दिक्षु Mah.

९. विघ्नेभ्यः पालयसि Sy. पालयसि Mah.

१०. हविष्प्रदातॄन् यजमानान् Sy. यजमानान् Mah. यजमानानाम् 'यजमानो वै दाश्वांश्सः' (ŚB. 2. 3. 4. 40. p. 167.) इति श्रुतिः

११. अथाग्नेयी । तदग्नयऽएवैतदात्मानमन्ततः परिददाति गुप्त्यै परि ते दूडभो रथोऽस्मां ॥ २ऽअश्नोतु विश्वतः । येन रक्षसि दाशुष इति यजमाना वै दाश्वांश्सो यो ह वाऽअस्यानाधृष्यतमो रथस्तेनैव यजमानानभिरक्षति स यस्तेऽनाधृष्यतमो रथो येन यजमानानभिरक्षसि तेन नः सर्वतोऽभिगोपायेत्येवैतदाह त्रिरेतज्जपति । ŚB. 2. 3. 4. 40. p. 167.

This stanza=YV. 3. 36. MS. D. puts the figure ॥६॥ here to indicate the end of nineth hymn. No such number is given in P. and M.

IV.10.

अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदिस्पृशम् । ऋध्यामा त ओहैः ॥ १ ॥

[१]अग्ने । अग्ने । [२]तम् । त्वदीयं [३] भद्रं स्तोतुः । हृदिस्पृशम्[४] । कल्याणम्[५] । अद्य[६] वयम् । वेगवन्तमश्वम्[७] । इव[८] । यज्ञम्[९] । इव चानेकैर्बहुशः । निर्गच्छद्भिः[१०] । स्तोमैः[११] ।

१. 'अग्ने तमद्य' इत्यष्टर्चं दशमं सूक्तं वामदेवस्यार्षमाग्नेयम् । तथा चानुक्रमणिका—'अग्ने तमद्य पदपाङ्क्तं पञ्चमी महापदपङ्क्तिरन्त्योष्णिक् चतुर्थी षष्ठ्युपान्त्या वा सप्तम्याः पञ्चकौ मुख्यौ तृतीयः सप्तको नवकश्चाष्टम्या पञ्चकः पादश्चतुष्कः सप्तकस्त्रैष्टुभश्च' (KSA. 21. 10. p. 17.) इति । इदं कृत्स्नमपि सूक्तं पदपङ्क्तिच्छन्दस्कं 'पञ्चकाश्चत्वारः षट्कश्चैकश्चतुर्थश्चतुष्को वा पदपङ्क्तिः' (KSA. 4. 2. p. 3.) इत्युक्तलक्षणोपेतत्वात् । पञ्चमी 'तव स्वादिष्ठा' इत्येषा महापदपङ्क्तिः 'पञ्च पञ्चकाः षट्कश्चैकः' (KSA. 6. 2. p. 3.) इति लक्षणसद्भावात् । अन्त्या 'शिवा नः सख्या' इत्येषोष्णिक्छन्दस्का । चतुर्थीषष्ठीसप्तम्यः 'आभिष्टे अद्य', 'घृतं न पूतं', 'कृतं चिद्धि ष्मा' इत्येतास्तिस्रः उष्णिहः पदपङ्क्त्यो वा । अत्र सप्तम्यष्टम्योः पदपङ्क्त्युष्णिहोः परिभाषोक्तपादविच्छेदापवादाय प्रकारान्तरेण विच्छेदः कृतः । दशमेऽहनि इदं सूक्तमाज्यशस्त्रम् । सूत्रितञ्च—'अग्ने तमद्याश्वं न स्तोमैरित्याज्यम्' (ASS. 8. 12.) इति । पिण्डपितृयज्ञे 'अग्ने तमद्य' इत्यनयाग्निं प्रत्यागच्छेत् । सूत्रितञ्च—'अग्निं प्रत्येयादग्ने तमद्याश्वं न स्तोमैः' (ASS. 2. 7.) इति । पौनराधेयिक्यां स्विष्टकृत्येषैव याज्या । सूत्रितञ्च—'अग्ने तमद्याश्वं न स्तोमैरिति संयाज्ये' (ASS. 2. 8.) इति Sy.

२. त D. प्रसिद्धम् Sy., Mah. पावकं यज्ञम् U.

३. त्वाम् Sy. तावकम् Mah. तव सम्बन्धिभिः U.

४. हृदयङ्गमम्, अतिशयेन प्रियमित्यर्थः Sy. हृदि स्पृशति हृदिस्पृक् । . . . अतिप्रियं चिरं मनसि स्थितम् Mah. हृदि आत्मना स्पृश्यते बहुकालाभिध्यातं यथा समर्धयेयुरेवं समर्धयेमहि U.

५. भजनीयम् Sy. कल्याणम् Mah.

६. अस्मिन्नहनि । वयमृत्विगादयः Sy. अस्मिन् दिने Mah.

७. कीदृशं त्वाम् ? वोढारमश्वमिव Sy. तत्रैको दृष्टान्तः . . . यथा . . . अश्वमाश्वमेधिकं विप्रा समर्धयन्ति Mah. यथाऽश्वमाश्वमेधिकं . . . समर्धयेयुः U.

८. न इवार्थे Mah.

९. तथा हविषो वाहकम्, कर्तारमिव उपकर्तारमित्यर्थः Sy. द्वितीयो दृष्टान्तः । . . . क्रतुं सङ्कल्पं यथा समर्धयन्ति । क्रतुर्यज्ञः सङ्कल्पश्चेति दृष्टान्तदार्ष्टान्तिकयोरस्य सम्बन्धः । चिराभिलषितं यथा सन्तः सम्पादयन्तीत्यर्थः Mah. सङ्कल्पमिव U.

१०. इन्द्रादिप्रापकैः Sy. कीदृशैः स्तोमैः । ओहैः । वहे रूपम् । वहन्ति फलं प्रापयन्तीत्योहास्तैः । वहन्ति प्रतिपादयन्ति त्वत्कर्मरूपनामानीति वा Mah. वहेरेतद्रूपम् । प्रापणैः U.

११. स्तोत्रसमूहैः Sy. स्तुतिभिः सामसमूहैः Mah. स्तुतिभिः U.

समर्थयेम[1] त्वदीयं कल्याणं कर्म स्तुम इति 'यस्ते हृदिस्पृक्[2] स्तोमस्तमृध्यासमित्येतद्[3]' इति वाजसनेयकम्।

**अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः। रथीर्ऋतस्य बृहतो बभूथ॥ २॥**

अधा[4][5]। अथ[6] त्वम्। अग्ने! कर्मणः[7]। भजनीयस्य[8]। प्रवृद्धस्य[9]। साधयितुः[10]। सत्यभूतस्य[11]। महतः[12]। रथ इव हविषां वोढा[13]। भवसि[14]।[15]

---

१. संवर्ध॰ P. समर्धयामः Sy. समर्धयाम। समृद्धं करवामेत्यर्थः। आशिषि लोट्। संहितायां दीर्घः Mah. समर्धयेमहि। ...त्वां नामबन्धुकर्मरूपसंयुक्ताभिः स्तुतिभिर्दक्षिणाभिश्च यज्ञं समर्धयेमहीति समस्तार्थः U.

२. ॰स्पृशत् M.

३. ॰त्यद् P. SB. 9. 2. 3. 41. अथाहुतीर्जुहोति। यथा परिविष्यानुपाययेत्तादृक्तत्स्रुवेण पूर्वे स्रुचोत्तरामग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्र ꣳ हृदिस्पृशम्। ऋध्यामा तऽओहैरिति यस्ते हृदिस्पृक् स्तोमस्तं तऽऋध्यासमित्येतत्पङ्क्त्या जुहोति पञ्चपदा पङ्क्तिः पञ्चचितिकोऽग्निः पञ्चऽर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति। SB. 9. 2. 3. 41. p. 720.

This stanza=YV. 15. 44.

४. पौनराधेयिक्यामिष्टौ प्रधानस्य 'अधा ह्यग्ने' इत्येषानुवाक्या। 'एभिर्नो अर्कैः' इति तस्यां स्विष्टकृतोऽनुवाक्या। 'आभिष्टे अद्य' इति प्रधानस्य याज्या। सूत्रितञ्च—'अधा ह्यग्ने क्रतोर्भद्रस्याभिष्टे अद्य गीर्भिर्गृणन्त एभिर्नो अर्कैः' (ASS. 2. 8.) इति Sy.

५. अध P. अथ D.

६. इदानीमेव Sy. अथेत्यर्थेऽधेत्यव्ययम्। समनन्तरमेव Mah., U.

७. अस्मदीयस्य यागस्य Sy. अस्मद्यज्ञस्य Mah. सङ्कल्पस्य U.

८. कीदृशस्य यागस्य? ...भद्रस्य कल्याणरूपस्य Mah. भन्दनीयस्य U.

९. समृद्धस्य स्वफलदानसमर्थस्येति वा Mah. तस्यैव समृद्धस्य। समृद्धः सङ्कल्पो दक्ष उच्यते U.

१०. अभीष्टफलानां साधकस्य Sy. साध्यते निष्पाद्यत इति साधुस्तस्यातिशययुक्तस्येत्यर्थः Mah. साधोरतिशययुक्तस्य U.

११. ऋतस्यामोघफलस्य Mah. यज्ञस्य U.

१२. महतः प्रौढस्य Mah.

१३. नेता Sy. रथोऽस्यास्तीति रथीः सारथिः। ...सारथिर्यथा रथनिर्वाहं करोति तथा यज्ञनिर्वाहकः Mah. रथीरिव U.

१४. बभूथ—'छन्दसि लुङ्लङ्लिटः' इति भवतेर्वर्तमानेऽर्थे लिटि सिपस्थल्। 'आर्धधातुकस्येड्वलादेः' इतीडागमे प्राप्ते 'बभूथाततन्थ' इति निपातनादिडभावः Sy. भवेत्यर्थः Mah. अथवा यज्ञ एवोच्यते। अथाग्नेः क्रतोर्यज्ञस्य भन्दनीयस्य दक्षस्योत्साहयुक्तस्य दक्षिणाभिः समृद्धस्य साधो रथीरिव ऋतस्य यज्ञस्य बृहतो भव U.

१५. VM. ignores हि॥ हि इदानीमेव Sy. हिः पादपूरणः Mah., U.

This stanza=YV. 15. 45.

एभिर्नो अर्कैर्भवा नो अर्वाङ् स्वर्ण ज्योतिः ।
अग्ने विश्वेभिः सुमना अनीकैः ॥ ३ ॥

एभिः । एभिः[1] । अस्माकम्[2] । मन्त्रैः[3] । अस्मदभिमुखः[4] । भव । आदित्याख्यम्[5] । इव[6] । ज्योतिः[7] । अग्ने[8] ! ते[9] । सर्वैः[10] । तेजोभिः[11] । "तस्य रश्मयोऽनीकानि" इति[12] ब्राह्मणम् । शोभनमनस्कः[13] ।

आभिष्टे अद्य गीर्भिर्गृणन्तोऽग्ने दाशेम । प्र ते दिवो न स्तनयन्ति शुष्माः ॥४॥

आभिः । आभिः । स्तुतिभिः[14] । तुभ्यम्[15] । अग्ने ! हवींषि ददाम[16] । न । प्रस्तनयन्ति[17] । तव[18] । शोषका[19] रश्मयः । दीप्तस्य[20] । स्तोतॄन्[21] । पादादित्वात् पङ्क्तिष्वामन्त्रितनिघाताभावो[22]

---

१. एतैः Sy. अस्मत्पठितैः Mah.

२. अस्मदीयैः Sy. अस्मान् प्रति Mah. अस्माकं सम्बन्धिभिस्स्तूयमान इति शेषः U. अस्माकं स्वभूतैः SKN.

३. अर्चनीयैः स्तोत्रैः Sy. अर्चनीयैर्मन्त्रैः कृत्वा Mah. मन्त्रैः U. अर्कैः स्तूयमान इति शेषः SKN.

४. अस्माकमभिमुखः Sy. अवरं समीपदेशमञ्चतीत्यर्वाङ् । अनुगृहाणेत्यर्थः Mah. नोऽस्मानर्वाङ् अभिमुखाञ्चनः U. प्रसादाभिमुखः प्रसादपर इत्यर्थः SKN.

५. सूर्यः Sy. स्वःशब्देन सूर्यः. . .यथा स्वरादित्यरूपं ज्योतिरर्कैः स्तुतमुदयादारभ्य सर्वप्राणिसम्मुखं भवति Mah. यथा स्वराख्यं ज्योतिरुदयादारभ्यार्वागञ्चनम् । सर्वप्राणिनोऽनुगृह्णाति । एवं भवार्वागञ्चनोऽनुग्रहपरतया U. स्वर्णज्योतिरिति, आदित्याख्यमिव भास्वर इत्यर्थः SKN.

६. Omitted by P. न इवार्थे Mah.

७. ज्योतिष्मान् Sy.

८. ०ग्नेः P., D.

९. Omitted by M.

१०. तथा विश्वैः समस्तैः Sy.

११. मुखैः कृत्वा Mah. अनीकं मुखम् U. अनीकैर्ज्वालाख्यैर्मुखैरुपेत इत्यर्थः SKN.

१२. TB. 1. 6. 6. 2.

१३. Omitted by M. प्रसन्नः सन्नस्मत्सम्मुखो भवेत्यर्थः Mah. शोभनमनस्कः सन् U. सुमनाश्च भवेत्यनुषङ्गः । अतियाच्ञया खेदं मा यासीरित्यर्थः SKN. N. 2. 14., SKN. II. 86. This stanza=YV. 15. 46.

१४. स्तुतिरूपाभिर्वाग्भिः Sy.

१५. स्तुत्यं D., P.

१६. दद्याम Sy.

१७. ०स्तुन० M. प्रकर्षेण शब्दायन्ते Sy.

१८. त्वदीयाः Sy.

१९. शोषका ज्वालाः Sy.

२०. सूर्यस्य रश्मय इव, यद्वा दिवो न मेघा इव त्वदीया ज्वालाः शब्दायन्ते Sy.

२१. त्वां स्तुवन्तो वयमृत्विगादयः Sy.

२२. ०ष्वामिश्रितनि० P. न्त्रितत्रिङ्निताताभावो M.

बोद्धव्यः उत्तमश्[१]च पादः सप्ताक्षर इति[२]।

**तव॒ स्वादि॒ष्ठाग्ने॒ संदृ॑ष्टिरि॒दा चि॒दह्न॑ इ॒दा चि॑द॒क्तोः ।**
**श्रि॒ये रु॒क्मो न रो॑चत उपा॒के ॥ ५ ॥**

तव स्वादिष्ठा। तव[३]। स्वादुतमा[४]। अग्ने ! सन्दृष्टिः[५] यया ज्वालया सम्पश्यन्ती। इदाचिच्छब्दः[६] कदाचिच्छब्दपर्यायः स[७] कदाचित्[८]। अह्नः[९]। श्रियै[१०]। दीप्यते[११]। कदाचित्[१२]। रात्रेः[१३]। मणिः[१४]। इव। तयोः समीपे[१५]।

**घृ॒तं न पू॒तं त॒नूर॑रे॒पाः शुचि॒ हिर॑ण्यम् । तत्ते॑ रु॒क्मो न रो॑चत स्वधावः ॥ ६ ॥**

घृतं न। घृतम्[१६]। इव। पवित्रभूतम्[१७]। तव शरीरम्[१८]। निर्मलम्[१९]। दीप्तं[२०]। हिरण्यसदृशम्[२१]। तत्[२२]। तव[२३]। रुक्मः[२४]। इव। रोचते[२५]। हविष्मन्[२६] !

---

१. उक्तमश्वा P.
२. VM. ignores अद्य ॥ अस्मिन् दिवसे Sy.
३. त्वदीयाः Sy.
४. ०प्रियतमा Sy.
५. Omitted by P. दीप्तिः Sy.
६. इदानीञ्च Sy.
७. सा is suggested for सः।
८. वा M.
९. दिवसस्य Sy.
१०. ०यै M. पदार्थमाश्रयितुम् Sy.
११. राजते Sy.
१२. इदानीम् Sy.
१३. रात्रेरिदानीञ्च। अहोरात्र इत्यर्थः। 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु' इत्यस्माद्धातोः 'किच्च' इत्यौणादिकसूत्रेण तुप्रत्ययः, तस्य किद्वद्भावश्च। 'तितुत्र०' इतीट्प्रतिषेधः। 'अनिदिताम्०' इत्युपधानकारलोपः। 'चोः कुः' इति कुत्वम् Sy. अक्तुरिति रात्रिनाम Ngh. 1. 7.
१४. अलङ्कारः Sy.
१५. अन्तिके Sy. उपाक इत्यन्तिकनाम Ngh. 2. 16.
१६. आज्यम् Sy.
१७. शोधितम् Sy. शुद्धम् BB.
१८. त्वदीया मूर्तिः Sy.
१९. ०ल P., D. पापरहिता भवति Sy. अपापा तनूः BB.
२०. दीप्तम् is suggested for दीप्त ॥ शुद्धम् Sy.
२१. हितरमणीयम् Sy.
२२. Omitted by D. प्रसिद्धं तेजः Sy. तदिति लिङ्गव्यत्ययः। सा तव तनूरिति। यद्वा तत्तेऽन्नं रोचते किमिवेत्याह—पूतं घृतमिव। अरेपास्तनूरिव शुचि हिरण्यमिव। रोचनशीलं रजतमिवेति BB.
२३. त्वदीयम् Sy.
२४. रुग्मः D. भूषणम् Sy. रजतमिव BB.
२५. भासते Sy. रोचते तव तनूरिति BB.
२६. विष्वक् P. स्वधाशब्दोऽन्नवाची। हे अन्नवन्नग्ने ! Sy. अनिरुक्तत्वात्प्रजापतिरामन्त्र्यते। हे स्वधावः ! अन्नवन् ! BB.

This stanza=TS. 2. 2. 12. 7.

कृतं चिद्धि ष्मा सनेमि द्वेषोऽग्न इनोषि मर्तात् । इत्था यजमानादृतावः ॥ ७ ॥

कृतं चित् । कृतम्[1] । पुराणम्[2] । पापमपि शत्रूनिव द्वेष्टॄन् । सत्यमेव[3] । यजमानात् । मनुष्यात्[4] त्वम् । प्रेरयसि[5] । अन्नवन्[6] ! इति[7] ।

शिवा नः सख्या सन्तु भ्रात्राग्ने देवेषु युष्मे ।
सा नो नाभिः सदने सस्मिन्नूधन् ॥ ८ ॥

शिवा नः । शिवानि[8] । नः[9] । सख्यानि[10] । भवन्तु[11] । भ्रात्रा[12] त्वया[13] हेतुना । अग्ने ! युष्माकम्[14] । देवेषु[15] देव ! सख्यं[16] हि । अस्माकम् । नहनम्[17] । सर्वस्मिन् । कामानामुत्पत्तिस्थाने[18,19] ।

IV.11.

भद्रं ते अग्ने सहसिन्ननीकमुपाक आ रोचते सूर्यस्य ।
रुशद्दृशे ददृशे नक्तया चिदरूक्षितं दृश आ रूपे अन्नम् ॥ १ ॥

भद्रम्[20] । अग्ने ! बलवन् । कल्याणम्[21] । तव[22] । रश्मीनामनीकम्[23] । अह्नि[24] सूर्यस्य ।

---

१. यजमानेन कृतमपि Sy.
२. चिरन्तनम् Sy. सनेमीति पुराणनाम N. 3. 27.
३. ०त्येमे० P. इत्थेति सत्यनामैतत् Ngh. 3. 10.　　४. ०ष्यान् P., D.
५. नाशयसीत्यर्थः Sy.
६. हे सत्यवन्नग्ने ! Sy.
७. VM. ignores चित् । हि and स्म ॥ हि स्म एव । खलु Sy.
८. मङ्गलानि Sy.
९. अस्मदीयानि Sy. Omitted by D.
१०. संख्या M. सखित्वानि Sy.
११. सन्तु P., D.　　१२. भ्रा P. भ्रात्राणि भ्रातृसम्बन्धीनि कर्माणि Sy.
१३. त्वाया P.　　१४. युष्मासु । युष्मे—'सुपां सुलुक्' इति सप्तमीबहुवचनस्य शेआदेशः Sy.　　१५. द्योतमानेषु Sy.
१६. सं M. सखित्वभ्रातृकर्मसन्ततिः Sy.
१७. बन्धनं भवति Sy.
१८. उत्प० P. देवानां स्थाने Sy.
१९. VM. ignores ऊधन् ॥ यज्ञे Sy. ॥ MS. D. puts the figure ॥ १० ॥ here to indicate the end of tenth hymn. No such number is given in P. and M.
२०. द्वितीयेऽनुवाके एकादश सूक्तानि । तत्र 'भद्रं ते' इति षडृचं प्रथमं सूक्तं वामदेवस्यार्षं त्रिष्टुप्छन्दस्कमग्निदेवताकम् । 'भद्रं षट्' इत्यनुक्रमणिका (KSA. 21. 11. p. 17.) । प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ त्रैष्टुभे छन्दसीदमादिके द्वे सूक्ते विनियुक्ते । तथा च सूत्रितम्—'भद्रं ते अग्न इति सूक्ते' (ASS. 4. 13.) इति Sy.
२१. भजनीयम् Sy.　　२२. त्वदीयम् Sy.
२३. तेजः Sy.　　२४. ०ह्नी M.

समीपे[1]। दीप्यसे[2]। तथा रात्र्या[3]। च सह सङ्गतम्। श्वेतं[4] वर्णम्। दर्शनाय[5] भवति। किञ्च[6] तव। रूपे निहितम्[7]। अन्नम्[8]। पक्वम्[9]। सन्द्रष्टुं[10] योग्यं भवति कल्याणमिति।

वि षा॑ह्यग्ने गृण॒ते म॑नी॒षां खं वेप॑सा तुविजात॒ स्तवा॑नः।
विश्वे॑भि॒र्यद्वा॒वनः॑ शुक्र दे॒वैस्तन्नो॑ रास्व सुमहो॒ भूरि॒ मन्म॑ ॥ २ ॥

वि षाहि[11]। विषहस्व। अग्ने! स्तुतिम्। उच्चारयते[12]। छिद्रम्[13]। वेपकेन[14] शत्रूणां बलेन। बहुजनने[15]! स्तूयमानः[16]। हे दीप्त[17]! सर्वैः[18]। देवैः[19] सह। यत्[20] त्वम्। भजसे[21] पञ्चम्यर्थे[22] तृतीया। तद्[23] धनम्। अस्मभ्यम्। देहि। शोभनदान[24]। प्रभूतम्[25]। मननीयम्।

---

१. समीपभूते दिवसे इत्यर्थः Sy.

२. दीप्यते is suggested for दीप्यसे॥ समन्ताद्दीप्यते Sy.

३. रात्रावपि Sy.

४. रोचमानम् Sy.

५. VM. seems to explain दृशे and ददृशे together as दर्शनाय भवति but Sy. explains दृशे as दर्शनीयं तेजः and ददृशे as दृश्यते।

६. आ इत्ययं शब्दश्चेत्यर्थे वर्तते Sy.

७. महितम् P. रूपवति त्वयि ऋत्विगादिभिर्हुतं भवति Sy.

८. पुरोडाशादिरूपं हविः Sy.

९. स्निग्धम् Sy.

१०. संदृष्टम् P. सद्र० M. दर्शनीयम् Sy.

११. ०षास्व P. विष्य, विमुञ्चेत्यर्थः। साहि–'षोऽन्तकर्मणि' इत्यस्माद्धातोर्लोण्मध्यमपुरुषैकवचनं सिप्। 'दिवादिभ्यः श्यन्' तस्य 'बहुलं छन्दसि' इति लुक्। 'आदेच उपदेशेऽशिति' इत्यात्वम्। सेर्हिरादेशः। 'तिङ्ङतिङः' इति निघातः Sy.

१२. कुर्वते यजमानाय Sy.

१३. यजमानप्राप्यस्य पुण्यलोकस्य द्वारम् Sy.

१४. यज्ञादिकर्मणा Sy. वेप इति कर्मनाम Ngh. 2. 1.

१५. हे तुविजात! मथनेनारणिद्वारा यज्ञादिकर्मसु बहुजन्मन्! Sy.

१६. ऋत्विगादिभिः स्तूयमानस्त्वम् Sy.

१७. ०प्तं M. हे दीप्यमानाग्ने! त्वम् Sy.

१८. विश्वैः। विश्वेभिः—'बहुलं छन्दसि' इति भिस ऐसभावः Sy.

१९. इन्द्रादिभिः Sy.

२०. यः P., D. पश्वादिधनम् Sy.

२१. यजमानेभ्यः प्रयच्छेः। ववनः—वनतेर्लेट्। तस्य सिपः 'इतश्च लोपः' इतीकारलोपः। 'बहुलं छन्दसि' इति विकरणस्य श्लुः। 'श्लौ' इति द्विर्वचनम्। हलादिशेषः। 'लेटोऽडाटौ' इत्यडागमः। 'यद्वृत्तान्नित्यम्' इति निघाताभावः Sy.

२२. The passage पञ्चम्यर्थे तृतीया should immediately follow सर्वैर्देवैः and precede यत्त्वम्।

२३. तु P., D.

२४. शोभनतेजस्काग्ने! Sy.

२५. ०त P., D.

त्वद॑ग्ने॒ काव्या॒ त्वन्मनी॒षास्त्वदु॒क्था जा॑यन्ते॒ राध्या॑नि ।
त्वदे॑ति॒ द्रवि॑णं वी॒रपे॑शा इ॒त्थाधि॑ये दा॒शुषे॒ मर्त्या॑य ॥ ३ ॥

त्वदग्ने[1] । त्वत्तः । अग्ने ! कविकर्माणि[2] । स्तुतयः[3] । शस्त्राणि[4] च । सम्भावनीयानि[5] यज्ञार्थम् । प्रादुर्भवन्ति[6] । तथा त्वत्तः । आगच्छति[7] । धनमपि[8] । वीररूपं[9] वीरपरिवृतम्[10] । सत्यकर्मणे[11] । प्रयच्छते[12] । मनुष्याय[13] ।

त्वद्वा॒जी वा॑जंभ॒रो विहा॑या अभिष्टि॒कृज्जा॑यते स॒त्यशु॑ष्मः ।
त्वद्र॒यिर्दे॒वजू॑तो मयो॒भुस्त्वदा॒शुर्जू॒जुवाँ॑ अग्ने॒ अर्वा॑ ॥ ४ ॥

त्वद्वाजी[14] । त्वत्त एव । अश्वः[15] । अन्नस्याहर्ता[16] । महान् । शत्रूणामभ्येषणस्य कर्ता[17] । सत्यबलः[18] । त्वत्त एव । धनमपि । जायते[19] । देवैः प्रेरितम्[20] । सुखस्य भावयितृ[21] । त्वत्त एव[22] । वेगवान्[23] । गमनपरः[24] । अग्ने ! अश्वः[*] ।

---

१. महापितृयज्ञे स्विष्टकृदग्निः कव्यवाहनो यष्टव्यः । तस्य द्वे अनुवाक्ये । तत्र 'त्वदग्ने काव्या' इति द्वितीयानुवाक्या । तथा च सूत्रितम्—'त्वदग्ने काव्या त्वन्मनीषाः स प्रत्नथा सहसा जायमानः' (ASS. 2. 19.) इति Sy.
२. काव्यानि हविर्वहनदेवतानयनादीन्यग्निसम्बन्धीनि कर्माण्याध्वर्यवाणि कर्माणि वा Sy.
३. स्तुतिरूपा वाचः Sy.
४. उक्थानि शस्त्राणि Sy.
५. राद्धुं योग्यानि Sy.
६. ०ति P.,D. उत्पद्यन्ते Sy.
७. निर्गच्छति, उत्पद्यत इत्यर्थः Sy.
८. नमिव P.,D. पश्वादिधनम् Sy.
९. ०रं रु० P.,D. इदं विक्रान्तं रूपम् । अत्र लिङ्गव्यत्ययेन वीरपेशा इति रूपम् Sy. पेश इति रूपनाम Ngh. 3. 7.
१०. ०व्रतम् M.
११. धीरिति कर्मनाम Ngh. 2. 1. इत्थेति सत्यनाम Ngh. 3. 10.
१२. हवींषि दत्तवते Sy.
१३. यजमानाय Sy.
१४. ०जि P.
१५. बलवान् Sy.
१६. ०स्य ह D. हविर्लक्षणान्नस्य वाहकः । अग्नेर्वाजम्भर इत्येषा वैदिकी संज्ञा । 'संज्ञायां भृतृवृजि०' इति वाजशब्दे कर्मण्युपपदे खच्प्रत्ययः । 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः, 'चितः' इत्यन्तोदात्तत्वम् Sy.
१७. यज्ञकृत् अभ्येषणकृद्वा Sy.
१८. सत्यबलः पुत्रः Sy.
१९. उत्पद्यते Sy.
२०. प्रेरितः P., D. देवैः प्रेरितः Sy.
२१. भावयितुः P., D. सुखप्रदः Sy. मय इति सुखनाम Ngh. 3. 6.
२२. भवतो जायते Sy.
२३. वेगेन गच्छन् Sy.
२४. शीघ्रगामी । अप्रतिहतगमन इत्यर्थः Sy.

त्वाम॑ग्ने प्रथ॒मं दे॑व॒यन्तो॑ दे॒वं मर्ता॑ अमृत म॒न्द्रजि॑ह्वम् ।
द्वे॒षो॒युत॒मा वि॑वासन्ति धी॒भिर्दमू॑नसं गृ॒हप॑ति॒मम्मू॑रम् ॥ ५ ॥

त्वामग्ने । त्वाम् । अग्ने । प्रथममेव[1] । देवान् यष्टुमिच्छन्तः[2] । देवम्[3] । मनुष्याः[4] । अमृत[5] ! मोदनवाचम्[6] । राक्षसानां पृथक्कर्तारम्[7] । परिचरन्ति[8] । कर्मभिः[9] । दममनसम्[10] । गृहपतिम्[11] । अमूढम्[12] ।

आ॒रे अ॒स्मदम॑तिमा॒रे अंह॑ आ॒रे विश्वां॑ दु॒र्म॑तिं॒ यन्नि॒पासि॑ ।
दो॒षा शि॒वः स॑हसः सूनो अ॒ग्ने॒ यं दे॒व आ चि॒त्सच॑से स्व॒स्ति ॥ ६ ॥

आरे[13] । आरे[14] । अस्मत्तः । मतिविपर्यासम्[15] । पापम्[16] । सर्वम्[17] । दुर्ज्ञानं[18] च । यस्मात्[19] । त्वं नियमेन रक्षसि यथास्मान् नैतानि प्राप्नुवन्ति तथा करोषि[20] । रात्रौ । कल्याणस्त्वम्[21] । हे सहसः, सूनो[22] ! यं[23] च । देवनशीलस्त्वम्[24] । आसेवसे[25] । सोऽविनाशं[26]

१. कीदृशं त्वाम् ? देवानामाद्यम् Sy.
२. देवानिच्छन्तः Sy.
३. देवान् P., D. द्योतमानम् Sy.
४. मर्ताः मनुष्या यजमानाः Sy.
५. हे अमरणशील ! Sy.
६. मोदन is omitted by M. देवानां मादयित्री जिह्वा यस्य तम् Sy.
७. द्वेषसां पापानां पृथक्कर्तारम् Sy.
८. समन्तात् परिचरन्ति Sy.
९. स्तुतिभिः कर्मभिर्वा Sy.
१०. रक्षसां दमनकरेण मनसोपेतम् । दमूनः-शब्दस्य कथमयमर्थः इति 'दमूना दममना वा, दानमना वा दान्तमना वापि वा दम इति गृहनाम तन्मनाः स्यात्' (N. 4. 4.) इति यास्केनोक्तत्वादिति । 'दमु उपशमे' । दमेरूनसिः' इत्यौणादिक ऊनसिप्रत्ययः Sy.
११. गृहाणां पालयितारम् Sy.
१२. प्रगल्भमित्यर्थः Sy.
१३. स्वस्त्ययन्याम्—'आरे अस्मत्' इति स्वस्तिमतोऽग्नेर्याज्या । सूत्रितञ्च—'आरे अस्मदमतिमारे अंहः' (ASS. 2. 10.) इति Sy.
१४. Omitted by M. दूरे कुरु Sy.
१५. पापरूपामशनेच्छाम् । 'अशनाया वै पाप्मा मतिः (AB. 2. 2.) इति ब्राह्मणम् Sy.
१६. वाचं M. पापं कुरु Sy.
१७. सर्वाम् Sy.
१८. दुर्जातं P. दुर्मनस्त्वं कुरु Sy.
१९. ०स्मा P. यस्मात् कारणात् Sy.
२०. यजमानान् नितरां पालयसि Sy.
२१. शिवकरः Sy.
२२. बलस्य पुत्र । मथ्यमानोऽग्निर्मथनकारिणां हि बलेन जायत इत्यग्नेर्बलपुत्रत्वम् Sy.
२३. अयं M. यानस्मान् Sy.
२४. द्योतमानस्त्वम् Sy.
२५. परितः सेवसे Sy.
२६. अविनाशाय Sy.

प्राप्नोति[1]।

## IV.12.

यस्त्वामग्न इनधते यतस्रुक्त्रिस्ते अन्नं कृणवत्सस्मिन्नहन्।
स सु द्युम्नैरभ्यस्तु प्रसक्षत्तव क्रत्वा जातवेदश्चिकित्वान्॥ १॥

यस्त्वाम्[2]। यः[3]। त्वाम्। अग्ने! हविर्भिरिन्धे[4]। संयतस्रुक्कः[5]। यश्च समाने[6]। अहनि। त्रिः[7]। तुभ्यम्। हविः[8]। कृणोति[9]। स जनः[10]। अन्नैः[11] सुष्टु[12] अभिभवतु शत्रून्। प्रकर्षेण[13] त्वां पूजयन्। तव[14]। कर्मणा[15]। हे जातप्रज्ञ[16]! प्राज्ञ[17]!

इध्मं यस्ते जभरच्छश्रमाणो महो अग्ने अनीकमा सपर्यन्।
स इधानः प्रति दोषामुषासं पुष्यन्रयिं सचते घ्नन्नमित्रान्॥ २॥

इध्मम्। इध्मम्[18]। यः[19]। ते[20]। सम्भरति[21]। श्राम्यन्[22]। महतस्तव। अग्ने!

---

१. VM. ignores अग्ने। and चित्॥ चिदिति पूरणः Sy. MS. D. puts the figure ॥११॥ here to indicate the end of eleventh hymn. No such number is given in P. and M.

२. 'यस्त्वामग्ने' इति षडृचं द्वितीयं सूक्तम्। वामदेव ऋषिः। त्रैष्टुभं छन्दः। अग्निर्देवता। 'यस्त्वाम्' इत्यनुक्रान्तम् (KSA. 21. 12. p. 17.)। प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तो विनियोगः Sy.

३. यजमानः Sy.

४. दीप्तियुक्तं कुर्यात् Sy.

५. ०स्रुकः M. स्रुवा सम्बद्धः Sy.

६. सर्वस्मिन् Sy.

७. त्रिवारं सवनत्रये Sy.

८. हविर्लक्षणमन्नम् Sy.

९. कुर्यात् Sy.

१०. जानः M. यजमानः Sy.

११. धनैर्यशोभिर्वा Sy.

१२. अत्यन्तम् Sy.

१३. प्रसहमानं त्वदीयं तेजः Sy.

१४. तव तोषकेण Sy.

१५. इन्धनादिहेतुना कर्मणा Sy.

१६. ०प्रज्ञः P. हे जातानां वेदितरग्ने! Sy.

१७. ०ज्ञम् M. प्राज्ञः is suggested for प्राज्ञ॥ जानन् Sy.

१८. इध्म P. होमसाधनं समिज्जातम् Sy.

१९. यजमानः Sy.

२०. तुभ्यम् Sy.

२१. आहरेत्। जभरत्—'हृञ् हरणे'। 'लिङर्थे लेट्'। तस्य तिपः 'इतश्च लोपः०' इतीकारलोपः। 'बहुलं छन्दसि' इति शपः श्लुः। द्विर्वचनादिकार्यम्। 'लेटोऽडाटौ' इत्यडागमः। 'हृग्रहोर्भः' इति भत्वम् Sy.

२२. इध्माद्याहरणे श्राम्यन् Sy.

रश्मीनामनीकम्[१] । परिचरन्[२] । स त्वाम् । रात्रिम् । उषसं[३] च । प्रति[४] अहोरात्रयोः । इन्धानः[५] । प्रजाभिः पशुभिश्च पुष्यन्[६] । धनम् । सेवते[७] । घ्नन्[८] । शत्रून्[९] ।

**अ॒ग्निरी॑शे बृह॒तः क्ष॒त्रिय॑स्या॒ग्निर्वाज॑स्य पर॒मस्य॑ रा॒यः ।**
**दधा॑ति॒ रत्नं॑ विध॒ते यवि॑ष्ठो॒ व्या॑नु॒षङ्मर्त्या॑य स्व॒धावा॑न् ॥ ३ ॥**

अग्निः[१०] । अयमग्निः । ईश्वरो भवति[११] । महतः । क्षत्तात्राणसमर्थस्य[१२] बलस्य । अग्निः । अन्नस्य । उत्तमस्य[१३] । स च[१४] धनस्येश्वरो[१५] भवति[१६] । विदधाति[१७] च । रत्नम्[१८] । परिचरते[१९] । युवतमः । अनुपक्तम्[२०] । मनुष्याय[२१] । अन्नवान्[२२] ।

**यच्चि॒द्धि ते॑ पुरुष॒त्रा य॑विष्ठा॒चित्ति॑भिश्चकृ॒मा कच्चि॒दाग॑ः ।**
**कृ॒धी ष्व१॒॑स्माँ अदि॑ते॒रना॑गा॒न्व्येनां॑सि शिश्रथो॒ विष्व॑गग्ने ॥ ४ ॥**

यच्चित् । अग्ने ! मनुष्यमध्ये[२३] वयम्[२४] । तव[२५] । युवतम[२६] ! अज्ञानैः । कृतवन्तः[२७] । यत्[२८]

---

१. तेजश्च Sy.
२. परिचरन् यो यजमानः Sy.
३. उषःकालं च Sy.
४. लक्षीकृत्य । कालद्वयेऽपीत्यर्थः Sy.
५. इन्धानं M. इन्धानस्त्वां दीप्तियुक्तं करोति Sy.
६. पुष्टः सन् Sy.
७. सर्वदा पश्वादिधनसमृद्धो भवतीत्यर्थः Sy.
८. हिंसन् Sy.
९. VM. ignores आ ॥ आकारश्चार्थे Sy.
१०. उखासम्भरणीयेष्टौ अग्नेः क्षत्रभृतोऽनुवाक्या । तथा च सूत्रितम्—'अग्निरीशे बृहतः क्षत्रियस्यार्चामि ते सुमतिं घोष्यर्वाक्' (ASS. 4. 1.) इति Sy.
११. ईशे—वर्तमानेऽर्थे लिट् Sy.
१२. क्षतात्त्राण॰ is suggested for क्षत्तात्राण ।
१३. उत्कृष्टस्य Sy.
१४. Omitted by D. सा M.
१५. पश्वादेर्धनस्य Sy.
१६. ईशे Sy.
१७. करोति Sy.
१८. रमणीयं धनम् Sy.
१९. विधतिः परिचरणकर्मा Ngh. 3. 5. विधतिर्दानकर्मा N. 10. 23.
२०. Omitted by P., D.
२१. मनुष्य P. यजमानाय Sy.
२२. अन्नवान् तेजस्वी वाग्निः Sy.
२३. परिचारकेषु पुरुषेषु Sy.
२४. अयं M.
२५. त्वदीयेषु Sy.
२६. हे युवतम ! Sy.
२७. चकृम तथापि हे अग्ने ! Sy.
२८. यदि Sy.

किञ्चित्[1] । एनः[2] । ततोऽस्मान् । कुरु । अस्याः[3] पृथिव्याः[4] । अनागस्कान्[5] इयं[6] हि पापकृतो न धारयति तदर्थम् । एनांसि[7] । विष्वक्[8] । विश्लथय[9] । अग्ने ![10]

महश्चिदग्न एनसो अभीकं ऊर्वाद्देवानामुत मर्त्यानाम् ।
मा ते सखायः सदमिद्रिषाम यच्छा तोकाय तनयाय शं योः ॥ ५ ॥

महश्चित् । देवमनुष्यविषयस्य[11] । महतः । विस्तीर्णस्य[12] । पापस्य[13] । समीपे[14] वर्तमाना वयम् । ते[15] । सखायः[16] । सदा[17] । एव । मा । रिषाम[18] । यच्छ[19] । पुत्राय । तत्पुत्राय च[20] । शञ्च[21] । योश्च[22] ।[23]

यथा ह त्यद्वसवो गौर्यं चित्पदि षिताममुञ्चता यजत्राः ।
एवो ष्वस्मन्मुञ्चता व्यंहः प्र तार्यग्ने प्रतरं न आयुः ॥ ६ ॥

यथा । हे वसवः[24] । यथा[25] पुरा । एतदसुरैरन्यैर्वा[26] । यदि[27] । वद्धाम् । गाम्[28] । अमुञ्चत[29] ।

---

१. किञ्चिदपि Sy.
२. पापम् Sy.
३. कुरु अस्याः is missing in M.
४. भूमेः Sy.
५. अनागसः पापरहितान् Sy.
६. इय P.
७. अस्माभिः कृतानि पापानि Sy.
८. विष्व M. सर्वतो विद्यमानानि Sy.
९. विश्लथय शिथिलीकुरु Sy.
१०. VM. ignores चित् ॥ हि and सु ॥ चित् अपि। हि खलु। सु अत्यन्तम् Sy.
११. VM. seems to explain देवानाम् उत and मर्त्यानाम् as देवमनुष्यविषयस्य Sy. explains these words as देवानाम् इन्द्रादीनाम्, उत अपि च, मर्त्यानां मनुष्याणाम् ।
१२. अस्माभिर्यत्पापं कृतं विस्तृतावस्मात् Sy.
१३. पापात् Sy.
१४. अन्तिके Sy. अभीक इत्यन्तिकनामैतत् Ngh. 3. 29.
१५. त्वदीयाः Sy.
१६. मित्रभूताः स्तोतारो वयम् Sy.
१७. सर्वदैव Sy.
१८. M. omits रि ॥ हिंसिता भूम Sy.
१९. देहि Sy.
२०. हे अग्ने ! त्वं पौत्राय Sy.
२१. पापरूपोपद्रवाणां शान्तिम् Sy.
२२. सुकृतोत्पादितं सुखं च Sy.
२३. VM. ignores चित् and अग्ने ॥ चित् अपि Sy.
२४. निवासयितारोऽग्नयः ! यूयम् Sy.
२५. यथैव Sy.
२६. त्यां ताम् Sy.
२७. पति P. पादे Sy.
२८. गौरीं गाम् Sy.
२९. मुञ्च० M. त्यक्तवन्तो भूयास्त Sy.

हे यजनीयाः[1] । एवमेव । अस्मत्तश्च । पापम् । सुष्ठु[2] । विमुञ्चत[3] । अथाग्ने[4] ! त्वया[5] च वसूनां प्रधानेन[6] ! अस्माकम्[7] । आयुः । प्रवर्ध्यताम्[8][9] ।

## IV.13.

**प्रत्य॒ग्निरु॒षसा॒मग्र॑मख्यद्विभाती॒नां सु॒मना॑ रत्न॒धेय॑म् ।**
**यात॑मश्विना सु॒कृतो॑ दुरो॒णमुत्सूर्यो॒ ज्योति॑षा दे॒व ए॑ति ॥ १ ॥**

प्रत्यग्निः[10] ॥ आग्नेयमेव सूक्तं[11] लिङ्गोक्तदैवतमेके[12] ॥ मनुष्याणां रत्नाधारभूतम्[13] । व्युच्छन्तीनाम् । उषसाम्[14] । अग्रम्[15] । सुमनाः[16] । अग्निः । प्रकाशयत्यस्मिन्[17] काले । हे अश्विनौ[18] ! यजमानस्य । गृहम्[19] । प्रति[20] । आगच्छतम्[21] । उदेति[22] । सूर्यश्च[23] । देवः । ज्योतिषा[24] सह ।

---

१. या० D. ०नीय P. पूजार्हाः ! Sy.
२. अत्यन्तम् Sy.
३. विमुक्तं कुरुत । बहुवचनं पूजार्थम् Sy.
४. ०ञ्चतथाग्ने P.,D.,M. हे अग्ने ! Sy.
५. त्वं याच P., D., M.
६. बृधानेन P., D.
७. अस्मदीयम् Sy.
८. ०वध्य० P. M. प्रवृद्धं क्रियताम् Sy.
९. VM. ignores ह । चित् and प्रतरम् ॥ अपि । प्रवृद्धम् Sy. MS. D. puts the figure ॥१२॥ here to indicate the end of twelfth hymn. No such number is given in P. and M.
१०. 'प्रत्यग्निः' इति पञ्चर्चं तृतीयं सूक्तं वामदेवस्यार्षं त्रैष्टुभमाग्नेयं तत्तन्मन्त्रवर्णाभिधेयोषःप्रभृतिदैवतं वा । तथा चानुक्रान्तम्—'प्रत्यग्निः पञ्च लिङ्गोक्तदैवतं त्वेके' (KSA. 21. 13. p. 17.) इति । लैङ्गिको विनियोगः Sy.
११. D. adds लिङ्गोक्तं after सूक्तं
१२. ०देवमे० M. Cf. KSA. 21. 13. p. 17.
१३. रत्नधानम् । धनप्रकाशकमित्यर्थः Sy.
१४. उषोदेवतानाम् Sy.
१५. पूर्वकालम् Sy.
१६. शोभनमनस्कः Sy.
१७. ०काय० M. प्रवृद्धो भवति Sy.
१८. हे अश्विनौ ! युवाम् Sy.
१९. दुरोणे इति गृहनाम Ngh. 3. 4.
२०. लक्षीकृत्य Sy.
२१. गच्छतम् Sy.
२२. उषःकाले प्रादुर्भवतीत्यर्थः Sy.
२३. ऋत्विगादीनां प्रेरकः Sy.
२४. स्वेन तेजसा Sy.

ऊर्ध्वं भानुं सविता देवो अश्रेद्द्रप्सं दविध्वद्गविषो न सत्वा ।
अनु व्रतं वरुणो यन्ति मित्रो यत्सूर्यं दिव्यारोहयन्ति ॥ २ ॥

ऊर्ध्वं भानुम् । ऊर्ध्वंमुखम्[1] । तेजः[2] । सविता[3] । देवः[4] । श्रयति[5] । तेजसां लेशम्[6] । भृशं धूनयन्[7] । यथा । उदके वर्तमानं[8] सत्त्वमपां[9] द्रप्सं दविध्वदुच्चरति[10] तद्वदिति । सवितुश्चो-[11]दयम् । वरुणः[12] । मित्रः[13] । ये[14] चान्ये । सूर्यम् । दिवि[15] । आरोहयन्ति[16] । ते सर्वेऽनुगच्छन्ति[17] ।

यं सीमकृण्वन्तमसे विपृचे ध्रुवक्षेमा अनवस्यन्तो अर्थम् ।
तं सूर्यं हरितः सप्त यह्वीः स्पशं विश्वस्य जगतो वहन्ति ॥ ३ ॥

यं सीमकृण्वन् । सर्वतः । तमसः । वियोजनाय[18] । यम्[19] । अकृण्वन्[20] । स्थिरक्षेमाः[21] । जगद्रक्षणात्मकमिदं[22] स्वकार्यम्[23] । असमापयन्तः[24] सर्वदानुतिष्ठन्तः[25] । तम् । सूर्यम् । अश्वाः । सप्त[26] । महत्यः । विश्वस्य[27] । जगतः[28] । कृताकृतस्य ज्ञातारम्[29] । वहन्ति[30] ।

---

१. उन्मुखम् Sy.
२. भानुम् Sy.
३. प्रेरकः Sy.
४. ॰व॰ D.
५. आश्रयति Sy.
६. पार्थिवं रजः Sy.
७. धुन्वन् विकिरन्नित्यर्थः Sy.
८. ॰न P.
९. अनुगमने दृष्टान्तः, वृषभ इव तद्वत् Sy.
१०. दिवि॰ P.
११. तत्सम्बन्धि कर्म Sy.
१२. रात्र्यभिमानी देवः Sy.
१३. अहरभिमानी देवः, अन्ये देवाश्च Sy.
१४. यदा रश्मयः Sy.
१५. द्युलोके Sy.
१६. दिवारो॰ M. आरोहणं कारयन्ति तदा Sy.
१७. VM. ignores गविषः ॥ गविषः गा इच्छन् Sy.
१८. पृथक्करणाय Sy.
१९. सूर्यम् Sy.
२०. असृजन्नित्यर्थः Sy.
२१. ॰क्षेम P. स्थिरनिवासाः सृष्टिकर्तारो देवाः Sy.
२२. इदम् is omitted by P.
२३. अर्थं जगल्लक्षणं कार्यम् Sy.
२४. स॰ P.
२५. ॰दा अति॰ P., D. अविमुञ्चन्तः कुर्वन्त एव Sy.
२६. सप्तसंख्याकाः Sy.
२७. समस्तस्य Sy.
२८. प्राणिसमूहस्य Sy.
२९. प्रेरकत्वेन ज्ञातारम् Sy.
३०. धारयन्ति Sy.

वहिष्ठेभिर्विहरन्यासि तन्तुमवव्ययन्नसितं देव वस्म ।
दविध्वतो रश्मयः सूर्यस्य चर्मेवावाधुस्तमो अप्स्वन्तः ॥ ४ ॥

वहिष्ठेभिः । हे[१] सूर्य ! वोढृतमैर[२]श्वैः । आत्मीयं सूत्रसदृशं[३] तेजः । विविधं[४] हरन् । गच्छसि[५] । तं[६] तमोलक्षणम् । वासः[७] । तस्य तन्तोरधस्ताद् भवति[८] । यथाप्ययं ततश्च[९] भृशं विधुन्वन्तः[१०] । रश्मयः[११] । सूर्यस्य[१२] । नैशं तमः[१३] । चर्मेव[१४] । वायुः[१५] । अन्तरिक्षस्य[१६] । मध्ये ।

अनायतो अनिबद्धः कथायं न्यङ्ङुत्तानोऽव पद्यते न ।
कया याति स्वधया को ददर्श दिवः स्कम्भः समृतः पाति नाकम् ॥ ५ ॥

अनायतः[१७] । अयमूर्ध्वमाकृष्य । न तत्र केनचिद् बद्धः[१८] । नाप्यधस्तथाविधः[१९] । अयम्[२०] । कथम्[२१] । न्यङ्[२२] । न । अवपतति[२३] कथं वोर्ध्वमुद्गच्छतीत्यवगन्तव्यम् । केन वा । अन्नेन[२४] ध्रियमाणोऽयम् । अन्तरिक्षे गच्छति । कश्चैनम्[२५] । ददर्श[२६] । सोऽयं द्युलोकस्य । स्तम्भयिता[२७] सन् ।

---

१. हे देव ! द्योतमान ! सूर्य ! त्वं जगन्निर्वाहात्मकस्य रसस्यादानार्थम् Sy.
२. वोढुमत्यन्तं शक्तैरश्वैः Sy.
३. तत्र स० M. रश्मिसमूहम् Sy.
४. विस्तारयन् Sy.
५. गमनमार्गं गच्छसि Sy.
६. तत् is suggested for तम् ॥ कृष्णवर्णम् Sy. ७. ०ण सस्त० P. नक्तञ्चराणां निवासभूतां रात्रिम् Sy.
८. It seems to be the explanation of अवव्ययन् ॥ अवाचीनं यथा भवति तथा संवृण्वन्, तिरस्कुर्वन्नित्यर्थः Sy.
९. अस्यामृचि पूर्वार्धे सूर्यस्य प्रत्यक्षमर्थं प्रतिपाद्योत्तरार्धे परोक्षमर्थं प्रतिपादयितुमाह Sy.
१०. विधू० M. P. धुन्वानाः Sy.
११. किरणाः Sy. १२. सूर्य M. सूर्यस्य सम्बन्धिनः Sy. १३. अन्धकारम् Sy.
१४. चर्मवत् स्थितम् Sy.
१५. अदधुः is suggested for वायुः ॥ अवाचीनमदधुः । तिरस्कुर्वन्तीत्यर्थः Sy.
१६. अन्तरिक्षे Sy. आप इत्यन्तरिक्षनाम Ngh. 1. 3.
१७. किञ्चायम् उत्तानः ऊर्ध्वमुखत्वेन तिष्ठन् Sy.
१८. प्यधः P. केनापि बद्धो न क्रियते । अपि चायं सूर्यः Sy.
१९. आयतशब्दो दूरवाची । तद्विपरीतः अनायतः आसीनः सन् Sy.
२०. प्रत्यक्षेणोपलभ्यमानो मण्डलाभिमानी सूर्यः Sy.
२१. तथा P. ०थोयकेभ (थेयं कथा) M.
२२. Omitted by D. अवाङ्मुखः सन् Sy. २३. केनचित् हिंस्यते Sy.
२४. बलेन । स्वधाशब्दोऽन्नवाची, अत्र तत्कार्यं बलं लक्षयति Sy.
२५. ०न D.
२६. तत्त्वतः कः पश्यति । न कोऽपि जानातीत्यर्थः Sy. २७. स्तम्भः Sy.

तेन सङ्गतः[1] । नाकं[2] लोकम् । रक्षति[3] ।[4]

IV.14.

प्रत्यग्निरुषसो जातवेदा अख्यद्देवो रोचमाना महोभिः ।
आ नासत्योरुगाया रथेनेमं यज्ञमुप नो यातमच्छ ॥ १ ॥

प्रत्यग्निः[6] ॥ प्रत्यग्निरिति[5] समानं पूर्वेण सूक्तेन ॥ प्रकाशयति[7] । उषसः[8] । जातप्रज्ञः[9] । देवः[10] । तेजोभिः । दीप्यमानस्तथा सति । इमम् । यज्ञम् । प्रति[11] । आगच्छतम्[12] । रथेन । बहुभिः स्तोतव्यौ[13] ! अश्विनौ[14] ! इति ।[15]

ऊर्ध्वं केतुं सविता देवो अश्रेज्ज्योतिर्विश्वस्मै भुवनाय कृण्वन् ।
आप्रा द्यावापृथिवी अन्तरिक्षं वि सूर्यो रश्मिभिश्चेकितानः ॥ २ ॥

ऊर्ध्वम् । उर्ध्वम्[16] । तेजः[17] । सविता[18] । देवः[19] । श्रयति[20] । सर्वस्मै । लोकाय । ज्योतिः[21] ।

---

१. नाकेन समवेतः सूर्यः Sy.

२. स्वर्गम् Sy.

३. पालयति Sy.

४. MS. D. puts the figure ॥१३॥ here to indicate the end of thirteenth hymn. No such number is given in P. and M.

५. 'प्रत्यग्निरुषसः' इति पञ्चर्चं चतुर्थं सूक्तं वामदेवस्यार्षं त्रैष्टुभमाग्नेयं मान्त्रवर्णिकदैवतं वा । तथा चानुक्रान्तम्— 'प्रत्यग्निः' (KSA. 21. 14. p. 17.) इति । 'लिङ्गोक्तदैवतं तु' (KSA. 21. 13. p. 17.) इति तुशब्दादस्यापि सूक्तस्य लिङ्गोक्तदैवतत्वम् । विनियोगो लैङ्गिकः Sy.

६. प्रत्यग्निः is omitted by P., D.

७. प्रवृद्धो भवति Sy.

८. उषसो लक्षीकृत्य Sy.

९. जातधनः Sy.

१०. द्योतमानः Sy.

११. लक्षीकृत्य Sy.

१२. उपगच्छतम् Sy.

१३. बहिभिः M. प्रभूतगमनौ Sy.

१४. हे अश्विनौ ! Sy.

१५. VM. ignores उप । नः and अच्छ ॥ नः=अस्मदीयम् । अच्छ अभिमुखम् Sy.

१६. उन्मुखम् Sy.

१७. प्रकाशकं भानुम् Sy.

१८. प्रेरकः Sy.

१९. ०व P., D.

२०. आश्रयति Sy.

२१. तेजः Sy.

कुर्वन्[1]। आपूरयति[2] च। त्रीन् लोकान्[3]। विविधम्[4]। सूर्यैः[5]। रश्मिभिः[6]। सर्वं जानन्निति[7]।

आवहन्त्यरुणीर्ज्योतिषागान्मही चित्रा रश्मिभिश्चेकिताना
प्रबोधयन्ती सुविताय देव्युषा ईयते सुयुजा रथेन ॥ ३ ॥

आवहन्ती। आत्मीया अरुणवर्णा[8] अश्वाः। आवहन्ती[9]। ज्योतिषा सह[10]। गच्छति[11]। महती। चित्ररूपा[12]। रश्मिभिः[13]। ज्ञायमाना[14]। सुप्तं जगत् प्रबोधयन्ती[15]। अभ्युदयाय[16]। देवी[17]। उषाः। गच्छति। सुष्ठु युक्तेन[18]। रथेन[19]।

आ वां वहिष्ठा इह ते वहन्तु रथा अश्वास उषसो व्युष्टौ।
इमे हि वां मधुपेयाय सोमा अस्मिन्यज्ञे वृषणा मादयेथाम् ॥ ४ ॥

आ वां वहिष्ठाः[20]। आवहन्तु[21]। वाम्[22]। वोढृतमाः। अश्वाः। ते[23]। अस्मिन् यज्ञे। उषसः[24]। व्युच्छनवेलायाम्[25]। रथाश्च[26]। युवयोः[27]। मदकरस्य[28] सोमस्य पानाय। सोमाः सम्भृताः। अस्मिन्। यज्ञे। हे वर्षितारौ[29]! मादयेथाम्[30]।[31]

---

१. कुर्वन् Sy. २. समन्तादपूरयत् Sy.
३. त्रीन् लोकान् seems to be the explanation of द्यावापृथिवी and अन्तरिक्षम् ॥ द्युलोकभूलोकावन्तरिक्षं च Sy. ४. विशेषेण Sy.
५. सुवीर्यैः M.
६. स्वकीयैः किरणैः Sy.
७. सर्वं पश्यन् Sy.
८. अन्नवर्णा M. अरुणीः अरुणवर्णाः। प्रथमैकवचने द्वितीयाबहुवचनं छान्दसम् Sy.
९. ०न्ति M. धनानि धारयन्ती Sy.
१०. तेजसा युक्ता Sy.
११. आगच्छत् Sy.
१२. दर्शनीया Sy. १३. किरणैः Sy.
१४. जाय ० M. जानती Sy.
१५. सुप्तान् प्रबुद्धान् कुर्वती Sy.
१६. सुखप्राप्तये Sy. १७. द्योतमाना Sy.
१८. शोभनयुक्तेन Sy.
१९. VM. ignores आ।
२०. हे अश्विनौ ! Sy.
२१. समन्तात्प्रयन्तु Sy.
२२. ०हस्त्वा M. मा D. युवाम् Sy.
२३. प्रसिद्धाः Sy.
२४. उषोदेवतायाः Sy.
२५. व्युच्छनकाले Sy.
२६. रथाश्व D. यथाश्व M. रंहणा गन्तारः Sy. २७. युवाम् Sy.
२८. मधोः सोमस्य पानाय Sy.
२९. हे वृषणौ ! कामानां वर्षितारौ ! हे अश्विनौ ! Sy.
३०. ०थोम् P., D. हर्षयेथाम् Sy.
३१. VM. ignores इमे and हि ॥ यस्मात् कारणात् Sy.

उत्तरा निगदव्याख्याता[1]।

अनायतो अनिबद्धः कथायं न्यङ्ङुत्तानोऽव पद्यते न।
कया याति स्वधया को ददर्श दिवः स्कम्भः समृतः पाति नाकम् ॥ ५ ॥

[अनायतः।][2]

IV.15.

अग्निर्होता नो अध्वरे वाजी सन्परि णीयते। देवो देवेषु यज्ञियः ॥ १ ॥

अग्निः[3]। अग्निः। होता[4]। अस्माकम्[5]। यज्ञे[6]। अश्वः[7]। भूतः। परितो नीयते[8] पर्यग्निकरणे। देवः[9]। देवानां मध्ये[10]। यज्ञियः[11]।

---

१. व्याख्याता D. ख्यात P. MS. D. puts the figure ॥ १४ ॥ here to indicate the end of fourteenth hymn. No such number is given in P. and M.

२. The stanza has already been explained. See RV. IV. 13. 5.

३. 'अग्निर्होता' इति दशर्चं पञ्चमं सूक्तं वामदेवस्यार्षं गायत्रम्। अत्रेयमनुक्रमणिका—'अग्निर्होता दश गायत्रमु-पिर्बोधयदिति द्वाभ्यां सोमकं साहदेव्यमभ्यवदत्पराभ्यामस्याश्विनावायुरयाचत', (KSA. 21. 15. p. 17.) इति। 'बोधयत्' इति द्वचेन सोमकराजा स्तूयते 'एव वाम्' इति द्वचेनाश्विनौ शिष्टाभिः षड्भिरग्निः स्तूयते, अतस्ता एव क्रमेण देवताः। सूक्तविनियोगो लैङ्गिकः। पशोः पर्यग्निकरणे 'अग्निर्होता नः' इत्याद्यस्तृचोऽनुवचनीयः। तथा च सूत्रितम्—'अग्निर्होता न इति तृचं पर्यग्नयेऽन्वाह (ASS. 3. 2.) इति। प्रातरनुवाकेऽप्याग्नेये क्रतौ गायत्रे छन्दस्याश्विनशस्त्रे चायं तृचो विनियुक्तः। तथा च सूत्रितम्—'अग्निर्होता नो अध्वर इति तिस्रः' (ASS. 4. 13.) इति Sy.

४. देवानामाह्वाता होमनिष्पादको वा Sy.

५. अस्मदीये Sy.

६. यागे Sy.

७. ०इव P. वाजीत्येतल्लुप्तोपमाकम्, शीघ्रगामी घोडाश्व इव तथा देवेभ्यो हविर्वाहकः Sy.

८. समन्तात् प्राप्यते। तथा ब्राह्मणं च भवति—'वाजी सन् परि णीयत इति वाजिनमिव ह्येनं सन्तं परिणयन्ति' (AB. 2. 5.) इति Sy.

९. द्योतमानः Sy.

१०. कीदृशोग्निः ? द्योतमानेष्विन्द्रादिषु मध्ये Sy.

११. यज्ञार्हः Sy.

परि त्रिविष्ट्यध्वरं यात्यग्नी रथीरिव । आ देवेषु प्रयो दधत् ॥ २ ॥

परि त्रिविष्टि । सारथिरिव[1] । परियाति[2] । यज्ञवेष्टनं[3] त्रिरित्यर्थः[4] । देवेषु[5] । अन्नम्[6] । आदधदिति[7] ।[8]

परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ॥ ३ ॥

परि वाजपतिः । पर्यक्रमीत्[9] । हवींषि[10] । अन्नपतिः[11] । अग्निः[12] । यजमानाय[13] । रत्नानि[14] । प्रयच्छन्निति[15] ।[16]

---

१. सर० P. परिगमने दृष्टान्तः, रथवान् पुरुषो यथा शीघ्रं याति तद्वत् । तथा च ब्राह्मणम्—'परि त्रिविष्टयध्वरं यात्यग्नी रथीरिवेत्येव हि रथीरिवाध्वरं पर्येति' (AB. 2. 5.) इति Sy.

२. पर्या० M. समन्ताद् गच्छति Sy.

३. ०वेष्टन P.

४. ०र्थे P. त्रिवारम् । सवनत्रयेऽपीत्यर्थः Sy.

५. द्योतमानेष्विन्द्रादिषु Sy.

६. प्रय इत्यन्ननामेदम्, यजमानैर्दत्तं हवीरूपमन्नम् Sy.

७. समन्ताद्धारयन् Sy.

८. VM. ignores अध्वरम् and अग्निः ॥ अङ्गनादिगुणविशिष्टोऽग्निः । यजमानैः कृतं यागम् Sy.

९. ०क्रमित् D. परितः क्रामति व्याप्नोति Sy. परिक्रान्तवान् । परिक्रमणं भक्षणार्थं स्वीकरणमित्यर्थः Mah. परिक्रमणं भक्षणार्थम् U.

१०. हुनवींषि P. नानादेवत्यानि हवींषि Mah. नानादेवत्यान्यपि हव्यानि हवींषि U.

११. वाजानामन्नानां पतिः पालकः । 'परि वाजपतिः' कविरित्येव हि वाजानां पतिः, (AB. 2. 5.) Sy. वाजस्यान्नस्य पतिः पालयिता Mah. अन्नस्य पतिः U.

१२. अयमग्निः Mah.

१३. हविर्दत्तवते Sy. दत्ते स्म इति दाश्वान् तस्मै दाशुषे हवींषि दत्तवते यजमानाय Mah., U.

१४. रमणीयानि धनानि Sy., Mah., U.

१५. दधाति दत्त इति दधत् । धा धातुर्दानेऽपि । 'डुधाञ् धिारणे पुष्टौ दाने' इति कल्पद्रुमोक्तेः Mah. ददत् U.

१६. VM. ignores कविः ॥ कविः क्रान्तदर्शी मेधावी वा Sy. कविः क्रान्तदर्शनः Mah., U.

For the explanation of the SB. See RV. II. 1. 7.

This stanza=YV. 11. 25.

अयं यः सृञ्जये पुरो दैववाते समिध्यते । द्युमाँ अमित्रदम्भनः ॥ ४ ॥

अयं यः[1] । अयं सोऽग्निः[2] । यः[3] । पूर्वम्[4] । सृञ्जये[5] राजनि । दैववाते[6] । समिध्यते[7] स्म । दीप्तिमान्[8] । अमित्राणां[9] हिंसकः ।

अस्य घा वीर ईवतोऽग्नेरीशीत मर्त्यः । तिग्मजम्भस्य मीळ्हुषः ॥ ५ ॥

अस्य घ । एनम्[10] । गमनवन्तम्[11] । अग्निम्[12] । तिग्मदंष्ट्रम्[13] । सेक्तारम्[14] । मनुष्यः[15] । वीरो[16] भर्तुम् । ईश्वरो भवेदिति[17] प्रश्नः[18] ।

तमर्वन्तं न सानसिमरुषं न दिवः शिशुम् । मर्मृज्यन्ते दिवेदिवे ॥ ६ ॥

तमर्वन्तम्[19] । तम्[20] । अश्वम्[21] । इव । सम्भजनीयम् । आरोचमानम् । दिवः[22] । पुत्रम्[23] । इवादित्यम्[24] । परिचरन्ति[25] । अन्वहमर्थिनः[26] ।

---

१. वः M.
२. प्रत्यक्षेणोपलभ्यमानोऽग्निः Sy.
३. प्रसिद्धः Sy.
४. पूर्वं यं P. पूर्वस्यां दिशि स्थितायामुत्तरवेद्याम् Sy.
५. ०यो D. सृञ्जयो नाम कश्चित्सोमयाजी, तस्मिन्निमित्तभूते सति । तद्यागार्थमित्यर्थः । सृञ्जयस्य यष्टृत्वं तैत्तिरीया आमनन्ति—'वासिष्ठो ह सात्यहव्यो देवभागं पप्रच्छ यत्सृञ्जयान्बहुयाजिनोऽयीयजः (TS. 6. 6. 2. 2.) इति Sy.
६. दैवाते P. देववाते M. देववातस्य पुत्रे Sy.
७. ०ति M. सम्यग्दीप्यते Sy.
८. दीप्तिमान् भवतीति शेषः Sy.
९. शत्रूणां हिंसकः Sy.
१०. अनं D. अस्य Sy.
११. गमनवतः Sy.
१२. अग्नेः Sy.
१३. ष्टं D. तीक्ष्णतेजसः Sy.
१४. अभिलषितफलानां सेक्तुः Sy.
१५. मरणधर्मा यजमानः Sy.
१६. स्तुतौ विक्रान्तः Sy.
१७. भवदि० P., D. ईश्वरो भवेत् । एतेन यजमान आत्माभीष्टफलं कारयितुं समर्थो भवतीत्यर्थः Sy.
१८. VM. ignores घ ॥ घ इति पादपूरणः Sy.
१९. यजमानाः Sy.
२०. अग्निम् Sy.
२१. शीघ्रगामिनमश्वम् Sy.
२२. द्युलोकस्य Sy.
२३. पुत्रभूतम् Sy.
२४. सूर्यमिव Sy.
२५. भृशं परिचरणं कुर्वन्ति Sy.
२६. प्रतिदिनम् Sy.

बोधुद्यन्मा हरिंभ्यां कुमारः साहदेव्यः । अच्छा न हूत उदरम् ॥ ७ ॥

बोधत् ॥ वामदेवाय सहदेवपुत्रः प्रादादश्वौ रक्षसां जयाय तत्राह बोधदिति स एव द्वयोर्देवता भवति ॥ बोधयामास[1] । मामुत्तिष्ठेति । यदा । अश्वाभ्याम्[2] । कुमारः[3] । सहदेवपुत्रः[4] । तदानीमेवाहमाभिमुख्येन[5] । आहूतः पुरुषः[6] । इव[7] । शत्रून् प्रत्युद्गतवानस्मि[8] ।

उत त्या यंजता हरी कुमारात्साहदेव्यात् । प्रयंता सुद्य आ ददे ॥ ८ ॥

उत त्या । अपि च । इमौ[9] । पूजनीयौ । हरी[10] । कुमारात्[11] । सहदेवस्य पुत्रात् । शुद्धवर्णौ[12] । सद्य[13] एव । अहम् लब्धवानस्मि[14] ।

एष वां देवावश्विना कुमारः साहदेव्यः । दीर्घायुरस्तु सोमकः ॥ ९ ॥

अथैतदर्थमश्विनावनुधावति[15]—एष वाम्[16] । इति युवयोः[17] स्वभूतः[18] । अयमश्वप्रदः[19] । सोमको[20] नाम । दीर्घायुः[21] । अस्तु[22] ।

---

१. बोधयामास इमौ तवाश्वाविति Sy.
२. अश्वौ दातुम् Sy.
३. सोमकाभिधो राजा Sy.
४. सहदेवनाम्नो राज्ञः पुत्रः Sy.
५. तदा Sy.
६. कुमारेण हूतः सन् Sy.
७. न Sy.
८. तावश्वावलब्ध्वा (न) निर्गतवानस्मि Sy.
९. त्यौ तौ प्रसिद्धौ Sy.
१०. Omitted by P. हरि D. अश्वौ Sy.
११. सोमकाख्याद्राज्ञः Sy.
१२. शुद्धवर्णौ M. शुद्धपर्णौ P. प्रयतौ Sy.
१३. यस्मिन् दिने तेनाहूतस्तस्मिन्नेव दिने Sy.
१४. आदत्तवानस्मि ॥ मन्त्रद्रष्टा ऋषिः 'बोधत्' इत्यृग्द्वयेन कुमारमश्वेप्सयाभ्युपगम्याश्वावेतस्माल्लब्ध्वा प्रीतोऽभवदित्यर्थः Sy.
१५. ध्यायति is suggested for धावति।
१६. एवा वाम् P. एष वाद् M.
१७. युवां तर्पकः Sy.
१८. त्वभू० M.
१९. एष राजा Sy.
२०. सोमका M. सोमकाभिधानः Sy.
२१. शतायुष्को भवतु । 'एतम् हैव प्रोचतुः पर्वतनारदौ सोमकाय' इत्यादिना 'सर्वे हैव महाराजा आसुः' (AB. 7. 34.) इत्यनेन ब्राह्मणेन सोमकस्य राजत्वं स्पष्टीकृतम् Sy.
२२. VM. ignores देवौ । अश्विनौ । कुमारः and साहदेव्यः ॥ द्योतमानौ ! हे अश्विनौ ! सहदेवस्य पुत्रः Sy.

तं युवं दे॑वावश्विना कुमा॒रं सा॑हदे॒व्यम् । दी॒र्घायु॑षं कृणोतन ॥ १० ॥

[1]तं युवम् । कृणोतन=कुरुतम्, द्विवचनेऽपि तनवा[2]देशो दृष्ट इति ।[3]

IV.16.

आ स॒त्यो या॑तु म॒घवाँ॑ ऋजी॒षी द्रव॑न्त्वस्य॒ हर॑य॒ उप॑ नः ।
तस्मा॒ इदन्धः॑ सुषुमा सु॒दक्ष॑मि॒हाभि॑पि॒त्वं क॑रते गृणा॒नः ॥ १ ॥

[4]आ सत्यः । आ[5]यातु । सत्यकर्मा[6] । मघवान्[7] । ऋजीषेण तद्वान्[8] । अस्य[9] । अश्वाः । अस्मान्[10] । उपागच्छन्तु[11] । तदर्थम्[12] । एवेदम्[13] । अन्धः[14] सोमम् । सुतवन्तो[15] वयम्[16] । सुबलम्[17] । इह[18] । अभिप्राप्तिम्[19] । करोतीन्द्रः[20] । स्तूयमानः[21] ।

---

१. अनेन द्वृचेनास्य कुमारस्य दीर्घमायुरश्विनावृषिरयाचतेत्यर्थः Sy.

२. ०वा P.

३. VM. ignores the whole of the stanza except one word कृणोतन । Sy. explains this stanza in the following manner :—
हे देवावश्विना ! द्योतमानौ ! अश्विनौ ! युवं युवां तं साहदेव्यं सहदेवस्य पुत्रं कुमारं सोमकाख्यं राजानं दीर्घायुषं शतायुष्कं कृणोतन कुरुतम् ॥ MS. D. puts the figure ॥१५॥ here to indicate the end of fifteenth hymn. No such number is given in P. and M.

४. 'आ सत्यो यातु' इत्येकविंशत्यृचं षष्ठं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैन्द्रम् । अत्रेयमनुक्रमणिका—'आ सत्यः सैकैन्द्रम्' (KSA. 21. 16. p. 17.) इति । तत्र 'ऐन्द्रम्' इत्युक्तत्वादग्न्यधिकारो निवृत्त इत्यवगम्यते । चतुर्विंशेऽहनि माध्यन्दिनसवने मैत्रावरुणशस्त्रे इदं द्वितीयमहीनसूक्तम् । तथा च सूत्रितम्—'आ सत्यो यात्वित्यहीनसूक्तं द्वितीयं मैत्रावरुणः' (ASS. 7. 4.) इति । समूळ्हे दशरात्रे नवमेऽहनि निष्केवल्यशस्त्रे इदं सूक्तम् । तथा च सूत्रितम्—'आ सत्यो यात्वहं भुवं तत्त इन्द्रियमिति निष्केवल्यम्' (ASS. 8. 7.) इति Sy.

५. आगच्छतु Sy. ६. सत्यवान् Sy.

७. धनवानिन्द्रः Sy.

८. ऋजीषशब्देन निष्पिष्टो विगतसारः सोमोऽभिधीयते तद्वान् Sy.

९. इन्द्रस्य Sy.

१०. अस्याश्चास्मान् M. अस्माकम् Sy.

११. समीपे आगच्छन्तु Sy.

१२. इन्द्राय Sy.

१३. ०र्थमवे० M. इत् इदं प्रत्यक्षेणोपलभ्यमानम् Sy.

१४. अन्नरूपं सोमम् Sy.

१५. अभिषुतं कुर्मः Sy.

१६. यजमानाः Sy.

१७. शोभनबलम् । सारोपेतमित्यर्थः Sy.

१८. अस्मिन् यज्ञे Sy.

१९. अस्मदभिमतप्राप्तिम् Sy.

२०. करोतु Sy.

२१. अस्माभिः स्तूयमान इन्द्रः Sy.

**अवं स्य शूराध्वनो नान्तेऽस्मिन्नो अद्य सवने मन्दध्यै ।**
**शंसात्युक्थमुशनेव वेधाश्चिकितुषे असुर्याय मन्म ॥ २ ॥**

अव स्य । अध्वनः[1] । अन्ते[2] । यथा[3] पथिको विश्रमायास्त एवम् । हे शूरा[4] ! अस्मिन् । माध्यन्दिने[5] सवने । सोमेन मदितुम्[6] । अवस्य[7] अवस्यतिरवसानार्थः[8] । शंसत्ययम्[9] । शस्त्रम्[10] उशना[11] इव । प्राज्ञः[12] । चिकितुषे[13] जानते । असुराणां[14] हन्त्रे[15] । मननीयं[16] तुभ्यमिति[17] ।[18]

**कविर्न निण्यं विदथानि साधन्वृषा यत्सेकं विपिपानो अर्चात् ।**
**दिव इत्था जीजनत्सप्त कारूनह्ना चिच्चक्रुर्वयुना गृणन्तः ॥ ३ ॥**

कविर्न[19] । उशनाः[20] । इव । अन्तर्हितं[21] स्तोमं करोति वामदेवश्च । कर्माणि[22] । साधयन्[23] । इन्द्रः[24] । यदा । सोमस्य सेकम्[25] । विविधं पिबन्[26] । श्रद्धत्ते[27] यजमानो यज्ञार्थम् । दीप्तान्[28] । सप्त[29] । वषट्कर्तॄन्[30] ऋत्विजः[31] । इत्थं[32] परिक्रमेण । जनयति[33] । ते च झटिति[34] । कुर्वन्ति[35] ।

---

१. गन्तव्यस्य मार्गस्य Sy.
२. समीपे Sy.
३. तत्र दृष्टान्तः अश्वान् मनुष्या यथा मुञ्चन्ति तद्वत् Sy.
४. शूर is suggested for शूरा । हे शत्रूणामभिभवसमर्थेन्द्र ! Sy.
५. माध्यन्दिनाख्ये Sy.
६. त्वां मादयितुम् Sy.
७. अस्य P. विमुञ्च Sy.
८. ०रवनार्थं M. ०रवसानाथः D.
९. शंसनं करोति Sy.
१०. शस्त्ररूपं स्तोत्रम् Sy.
११. उसना M. काव्य इव Sy.
१२. शंसिता यजमानः Sy.
१३. चितितुषे M. सर्वं जानते Sy.
१४. सुराणां M.
१५. हे इन्द्र ! हिंसकाय तुभ्यम् Sy.
१६. मननीयः P.
१७. तुभ्यं should immediately follow असुराणां हन्त्रे ।
१८. VM. ignores नः and अद्य ॥ नः अस्मान् । अद्य इदानीम् Sy.
१९. अविर्न P. कविन्नः D.
२०. मेधावी Sy.
२१. अन्तर्हितं मूढमर्थमिव Sy. निण्यमित्यन्तर्हितनामैतत् Ngh. 3. 25.
२२. अन्त एत र्माणि P. वेदनीयानि कार्यजातानि Sy. २३. साधयद् M.
२४. कामानां वर्षिता इन्द्रः Sy.
२५. सेचनीयं सोमम् Sy.
२६. विविधामपि० M. अत्यर्थं पिबन् Sy.
२७. विष्यन्नद्धत्ते P. विशेषेणार्चति । सोमपाने श्रद्धां करोतीत्यर्थः Sy.
२८. अमुष्माद् द्युलोकात् Sy.
२९. सप्तसंख्याकान् Sy.
३०. ०षड्क० D. रश्मीन् Sy.
३१. त्विजः M. ३२. सत्यमेव Sy.
३३. अजीजनत् Sy.
३४. दिवसेनापि Sy.
३५. कृतवन्तः Sy.

प्रजननानि[1] । इन्द्रं[2] स्तुवन्तः[3] ।[4]

स्वर्यद्वेदि सुदृशीकमर्कैर्महि ज्योती रुरुचुर्यद्ध वस्तोः ।
अन्धा तमांसि दुधिता विचक्षे नृभ्यश्चकार नृतमो अभिष्टौ ॥ ४ ॥

स्वर्यत्[5] । स्वरित्यादित्यनाम[6] । अर्चनैः[7] रश्मिभिः । सुदर्शनम्[8] । स्वः । यदा । ज्ञायते[9] । तदा च महत्[10] । ज्योती[11] रश्मयः । रोचयन्ति[12] । अह्नि[13] तदानीम् । अन्धीकरणानि[14] । तमांसि । दुर्निहितानि[15] । मनुष्येभ्यः[16] । दर्शनाय[17] । करोति[18] । नेतृतमः[19] । अभ्येषणे[20] प्रार्थनायामिति ।

ववक्ष इन्द्रो अमितमृजीष्युभे आ पप्रौ रोदसी महित्वा ।
अतश्चिदस्य महिमा वि रेच्यभि यो विश्वा भुवना बभूव ॥ ५ ॥

ववक्षे[22] । वहति[23] । इन्द्रः[24] । अमितं[25] स्थावरं जङ्गमं च । ऋजीषेण तद्वान्[26] । उभे[27] । द्यावापृथिवी[28] । महत्त्वेन[29] । आपूरयति[30] । योऽयं[31] महिम्ना । विश्वान्यपि[32] । भुवनानि ।

---

१. वयुनानि मनुष्याणां ज्ञानानि Sy.
२. ०न्द्र P., D.
३. स्तुवन्तम् M. स्तूयमाना रश्मयः Sy.
४. VM. ignores चित् ॥ अपि Sy.
५. स्वार्य० M. स्वय० P.
६. The passage स्वरित्यादित्यनाम (Cf. Ngh. 1. 4.) should immediately follow स्वः and precede यदा ॥ द्युलोकः Sy.
७. ०नाम ञ्चनैः M.
८. सुष्ठु दर्शनीयम् Sy.
९. अवेदि ज्ञायते । तदानीं देवास्तस्मिन् स्वर्गे Sy.
१०. ०ह् P., D. प्रभूतम् Sy.
११. ०ति P. तेजोरूपम् Sy.
१२. दीप्तियुक्ता बभूवुः Sy.
१३. अग्नि P. निवासार्थम् Sy.
१४. अन्धकाररूपाणि निबिडानि Sy.
१५. दुधितानि नाशितानि Sy.
१६. नृणाम् Sy.
१७. विशेषेण दर्शनाय Sy.
१८. कृतवान् Sy.
१९. नेतृतमः सूर्यः Sy.
२०. अभ्यागमने Sy.
२१. VM. ignores यत् and ह ॥ यत् यः । ह खलु Sy.
२२. विवक्षे D.
२३. मह० P., D. उवाह Sy.
२४. परमैश्वर्ययुक्तः Sy.
२५. इयत्तारहितं महिमानम् Sy.
२६. ऋजीषशब्देन निष्पिष्टो विगतसारः सोमोऽभिधीयते । तद्वान् Sy.
२७. उभ P.
२८. द्यावापृथिव्यौ Sy.
२९. स्वेन महिम्ना Sy.
३०. समन्तादपूरयत् Sy.
३१. यूयं M. य इन्द्रः Sy.
३२. सर्वाणि Sy.

अभिबभूव[1] । तस्य[2] । महिमा । विश्वेभ्यः, अपि, भुवनेभ्यः । विरिक्तो[3] भवति बहिर्निश्चरति[4] ।

**विश्वा॑नि श॒क्रो नर्या॑णि वि॒द्वान॒पो रि॑रेच॒ सखि॑भि॒र्निका॑मैः ।**
**अश्मा॑नं चि॒द्ये बि॑भि॒दुर्वचो॑भिर्व्र॒जं गोम॑न्तमु॒शिजो॒ वि व॑व्रुः ॥ ६ ॥**

विश्वानि । सर्वाणि[5] । शक्रः[6] । नृहितानि[7] । जानन् । उदकानि[8] । निर्गमयति[9] । मरुद्भिः[10] । स्निग्धैः[11] । ये मरुतः । अस्य वचनैः[12] प्रेषिताः । शिलोच्चयं[13] पूर्वम् । विभिदुः[14] । ते पर्वतस्यान्तः पणिभिरपहृतैर्गोभिर्युक्तम्[15][16] । गोव्रजम्[17] । अपि विवृतवन्तः[18] । कामयमानाः[19] ।

**अ॒पो वृ॒त्रं व॑व्रि॒वांसं॒ परा॑ह॒न्प्राव॑त्ते॒ वज्रं॑ पृथि॒वी सचे॑ताः ।**
**प्रार्णां॑सि समु॒द्रिया॑ण्यैनोः॒ पति॒र्भव॒ञ्छव॑सा शूर धृष्णो ॥ ७ ॥**

अपः[20] । उदकानि[21] । वव्रिवांसम्[22] । अहिम्[23] । यदा हतवानसि[24] । तदा समनस्का[25] ।

---

१. तिरश्चकार Sy.
२. अस्येन्द्रस्य Sy.
३. विरि॰ D.
४. The passage beginning with विश्वेभ्यः and ending with चरति is omitted by P. अतिरिरिचे । अधिको बभूवेत्यर्थः Sy.
५. समस्तानि Sy.
६. समर्थ इन्द्रः Sy.
७. निहि॰ M. मनुष्याणां हितानि वृष्ट्यादीनि कार्याणि Sy.
८. वृष्टिलक्षणान्युदकानि Sy.
९. रिक्तीचकार । इन्द्रः सत्याविफलत्सिद्धचर्यं मेघस्यान्युदकानि मरुद्भ्यो दत्तवानित्यर्थः । यद्वा मरुद्भिः सहितः सन्नपो नभसः सकाशात् । अत्र विभक्तिव्यत्ययः । रिरेच व्यतिरिक्तो बभूव Sy. आप इत्यन्तरिक्षनामैतत् Ngh. I. 3.
१०. मित्रभूतेभ्यो मरुद्भ्यः । व्यत्ययेन चतुर्थ्यर्थे तृतीया Sy.
११. निकामयमानेभ्यः यद्वा निकामयमानैः Sy.
१२. वाग्रूपैर्ध्वनिभिः Sy.
१३. पर्वतं मेघं वा Sy. अश्मेति मेघनामैतत् Ngh. I. 10.
१४. अभैत्सुः Sy.
१५. The passage beginning with विश्वानि and ending with पणि is omitted by P.
१६. गोभिरुपेतम् Sy.
१७. अङ्गिरसां सम्बन्धि गोस्थानम् Sy.
१८. आच्छादयामासुः Sy.
१९. कामयमानास्ते मरुतः Sy.
२०. The commentary on this stanza is omitted by M. हे इन्द्र ! Sy.
२१. वृष्टिलक्षणान्युदकानि Sy.
२२. आवरकम् Sy.
२३. मेघम् Sy.
२४. प्रेरयति स्म Sy.
२५. चेतनावती त्वया सङ्गता बभूव Sy.

पृथिवी[१]। तव[२]। आयुधम्[३]। प्रकर्षेण रक्षितवती[४]। ततस्त्वमन्तरिक्षभवनानि[५]। उदकानि। प्रगमयसि[६]। स्वामी[७]। भवन्[८] सर्वस्य। बलेन। शूर[९]! हे धृष्णो[१०]![११]

**अपो यदद्रिं पुरुहूत दर्दराविर्भुवत्सरमा पूर्व्यं ते।**
**स नो नेता वाजमा दर्षि भूरिं गोत्रा रुजन्नङ्गिरोभिर्गृणानः ॥ ८ ॥**

अपः। पुरुहूत[१२]! यदा त्वं देवानामनागमनार्थं शिलोच्चयं परिवेष्टय शयानम्। मेघम्। उदकानि[१३]। दारितवानसि[१४]। ततः प्रादुर्भूति पर्वते[१५] तव[१६]। पुरातनं[१७] गोधनम्[१८]। सरमा[१९] नाम शुनी पणिषु त्वया प्रेषिता पुनरागत्य त्वत्समीपे वर्तमाना। दर्शयामास[२०]। अथ स त्वम्[२१]। नेता[२२]। गवात्मकं बहु[२३]। अन्नम्। अस्मदर्थम्[२४]। आदरितवानसि[२५]। शिलोच्चयान्[२६] तदावरणान्[२७] मेघान्। भिन्दन्। अङ्गिरोभिः[२८]। स्तूयमानः।

**अच्छा कविं नृमणो गा अभिष्टौ स्वर्षाता मघवन्नाधमानम्।**
**ऊतिभिस्तमिषणो द्युम्नहूतौ नि मायावानब्रह्मा दस्युरर्त ॥ ९ ॥**

अच्छ[२९]। अभिगतवानसि[३०]। कविं[३१] कुत्सम्। हे नृमणः[३२]। नृषु मनो यस्य स तथोक्तः।

---

१. भूमिः Sy.
२. त्वदीयम् Sy.
३. वज्रम् Sy.
४. राक्षसादिभ्यः प्रकर्षेण लोकान् पालयितृ Sy.
५. समुद्रसम्बन्धीनि नभसि स्थितानि Sy. समुद्र इत्यन्तरिक्षनाम Ngh. 1. 3.
६. प्र ऐनोः प्रेरकोऽभूः Sy.
७. लोकानां पालकः Sy.
८. सन् Sy.
९. विक्रान्तेन्द्र ! Sy.
१०. धर्षणशील ! Sy.
११. VM. ignores परा ॥ परा प्रकर्षेण Sy. १२. हे बहुभिराहूतेन्द्र ! Sy.
१३. वृष्टिलक्षणान्युदकानि लक्षीकृत्य Sy.
१४. विदारितवानसि Sy.
१५. वर्तते M. १६. तुभ्यम् Sy.
१७. पुरा Sy.
१८. पणिभिरपहृतं गोधनम् Sy.
१९. देवशुनी Sy.
२०. प्रकाशयामास Sy.
२१. त्व M. २२. प्रापयिता Sy.
२३. प्रभूतम् Sy. २४. अस्मान् Sy.
२५. आदरं कृतवानसि Sy.
२६. ०यं P. गोत्राण्यभ्राणि Sy.
२७. Omitted by P. वरुणान् D.
२८. मघान् भिन्नं गिरो० P. ऋषिभिः Sy.
२९. अच्छा कविम् M.
३०. अभ्यगाः Sy.
३१. मेधाविनं कुत्सम् Sy.
३२. नृभिर्मनुष्यैर्मन्यत इति नृमणः। त्वम् Sy.

सर्वैः सम्भजनीने । सङ्ग्रामे । मघवन् ! याचमानम् । रक्षणैः सह । तं कुत्सम् । ऐच्छः । अन्नार्थे तस्याह्वाने सति ततस्त्वय्यागते सति । मायायुक्तः । मन्त्रवर्जितः । तस्य शत्रुरसुरः । विपन्न आसीदिति ।

**आ दस्युघ्ना मनसा याह्यस्तं भुवत्ते कुत्सः सख्ये निकामः ।**
**स्वे योनौ नि षदतं सरूपा वि वां चिकित्सदृतचिद्ध नारी ॥ १० ॥**

आ दस्युघ्ना । कुत्सस्यास्तं गृहम् । आगतवानसि । तस्य शत्रून् हन्तुमिच्छता । मनसा, आगते च सति त्वयि । तव । सख्ये । कुत्सः । श्रद्धधानः । अभवत् । तथास्त्वित्युक्ते

---

१. स्वर्धनम्, तस्य सातौ दाने निमित्ते Sy.
२. कवेरभिगमे सति Sy.
३. हे धनवन्निन्द्र ! Sy.
४. युद्धार्थं त्वां याचमानं कुत्सम् Sy.
५. शत्रुकृतोपद्रवपरिहाररूपै रक्षणैः Sy.
६. प्रेरितवानसि Sy.
७. अना० P. द्युम्नं धनं हूतिराह्वानं यस्यां युधि तस्याम् Sy.
८. कपटवान् Sy.
९. अब्रह्मा ऋत्विग्भिः क्रियमाणं सर्वं कर्मजातमनुज्ञारूपेण जानन् ऋत्विग्विशेषो ब्रह्मशब्देनोच्यते । स न विद्यते यस्यासावब्रह्मा । वेदोक्तकर्मस्वास्तिक्यरहित इत्यर्थः Sy.
१०. कुत्सस्य शत्रुः Sy.
११. विनष्टो बभूव । इन्द्रः कुत्सेनाहूतः सन् तस्य शत्रुं हतवानित्यर्थः Sy.
१२. आसीदति M.
१३. अत्र काचिदाख्यायिका श्रूयते । कथम् ? रुरुनामकः कश्चिद्राजर्षिः । तस्य पुत्रः कुत्साख्यो राजर्षिरासीत् । स च कदाचित् शत्रुभिः सह युयुत्सुः सङ्ग्रामे स्वयमशक्तः सन् शत्रूणां हननार्थमिन्द्रस्याह्वानं चकार । स चेन्द्रः कुत्सस्य गृहमागत्य तस्य शत्रून् जघान । तदनन्तरमतिप्रीत्या तयोः सख्यमभवत् । सख्यानन्तरमिन्द्र एनमपि स्वकीयं गृहं प्रापयामास । तत्र शची इन्द्रं प्राप्तुमागता सती तौ समानरूपौ दृष्ट्वाऽयमिन्द्रोऽयं कुत्स इति विवेकाभावेन संशयं चकारेति । अनयाख्यायिकया प्रतीयमानोऽर्थोऽत्र प्रतिपाद्यते । हे इन्द्र ! Sy., DDN.
१४. इतिहासपूर्विका ऋक्— . . . । षष्ठेऽहनि मैत्रावरुणस्य विनियुक्तम् । आ सत्यो यातु मघवानृजीषी (RV. 4. 16. 1.) इति सर्वमिति सूत्रम् (SSS. 18. 19. 7.) ब्राह्मणमहाव्रते वामदेव्यस्य शंसेद्वामं ह्वोतद्देवानामिति (SSS. 2. 16.) वामदेवस्त्रिष्टुभा इन्द्रं तुष्टाव DDN.
१५. अन्तं D. अस्कं M. अस्तमिति गृहनामैतत् Ngh. 3. 4.
१६. आनत० M. आ याहि आगाः । लुङर्थे लोट् Sy.
१७. दस्यूनां शत्रूणां हन्त्रा Sy., DDN.
१८. मनसा युक्तस्त्वम् Sy., DDN.
१९. त्वया M. २०. तव सम्बन्धिनि Sy.
२१. सखित्वाय DDN.
२२. कुत्स P.
२३. नितरां कामयमानः Sy., DDN.

त्वदीये[1] । आसने[2] । समानशरीराकारौ कुत्सश्च त्वं च निषण्णौ[3] । किञ्च रथे सदृशरूपौ[4] स्थितौ । वाम्[5] । ऋतचित्[6] । नाम । इन्द्रस्य[7] भार्या[8] । कः कुत्सः[9] क इन्द्र इति व्यचिकित्सत्[10] । इत्यत्र शाट्यायनकम्—

कुत्सो[11] ह वा औरव इन्द्रस्योरोरधि[12]निर्मित आस यादृश[13] एवेन्द्रस्तादृशो[14] यथात्मनो निर्मितः[15] स्यादेवं तं[16] सङ्ग्रहीतारं[17] चक्रे । तं ह जायया[18]भिजग्राह शच्या[19] पौलोम्या । तां होवाच—कथेत्थमकरिति । सा होवाच न वां व्यज्ञासमिति[20] । स होवाच खलतिं वा एनं करिष्यामि तथा विजानीतात्[21] इत्यादि[22] ।

यासि॒ कुत्से॑न स॒रथ॑मव॒स्युस्तो॒दो वात॑स्य॒ हर्यो॒रीशा॑नः ।
ऋ॒ज्रा वाजं॒ न गध्यं॒ युयू॑षन्क॒विर्यदह॒न्पार्या॑य॒ भूषा॑त् ॥ ११ ॥

यासि कुत्सेन[23] । कुत्सं रक्षितुमिच्छन्[24] । अस्य गृहादेकं रथमास्थाय[25] । गतवानसि[26] ।

---

१. ततस्तौ युवां स्वकीये Sy.
२. स्थाने Sy. गृहे DDN.
३. ०ण्णः M. न्यसीदतम् उपविष्टावभूतम् Sy. निषदतम्—'दकारे चोत्तरे (RPR. 5. 14.) इति पूर्वात्वत्वम् DDN.
४. ०रूपे D. समानरूपौ Sy. समानरूपौ बुध्द्वा । 'सुपां सुलुक्' इत्याकारः (Pa. 7. 2. 39.) DDN.
५. युवाम् Sy., DDN.
६. सत्यवर्जनी Sy. चिदित्येषोऽनेककर्मा N. 1. 4.
७. नामेस्य P. ८. शची Sy.
९. Omitted by P.
१०. व्या० M. संशयं चकार Sy. 'विचिकित्सा तु संशयः' (Amara. 1. 5. 3.) इत्युक्तम् DDN.
११. ०त्सौ M.
१२. ०स्योत्तरो० P., D., M.
१३. यसद्० P. यासद् ० M.
१४. ०शौ M.
१५. ०त P., D., M.
१६. M. adds हं after तं ।
१७. संगृ० M., P.
१८. ०विज० P. १९. गव्या M.
२०. M. adds स होवाच न वां व्यज्ञासमिति after व्यज्ञासमिति ।
२१. ०तादि० D.
२२. Sāṭ. 14th Khaṇḍa.
२३. हे इन्द्र ! Sy. वामदेवस्यार्षम् । इन्द्र उच्यते SKN. वामदेवस्यार्षम् ।... हे भगवन्निन्द्र ! Dur.
२४. कुत्सस्य रक्षणमिच्छन् । छन्दसि क्यच् परेच्छायामपि दृश्यते Sy. अवस्तर्पणमात्मनः सोमेन तत्कामः SKN. रिरक्षिषुरात्मीयां ममर्दिषुश्च परकीयाम् Dur.
२५. समानरथम् Sy. क्रियाविशेषणमेतत् । समानो रथो यस्मिन् याने तत् सरथम् SKN. समानगमनमभिवहनरथमारुह्य अथवा सरथं रथसंयुक्तं परानीकम् Dur.
२६. गच्छसि Sy. साधु पतसि समानेन रथेन यासीत्यर्थः SKN.

वेगवातस्य[1]। प्रेरकः[2]। अश्वयोश्च[3]। ईश्वरो भवन्[4]। ऋजुना मार्गेण[5]। अन्नम्[6]। इव। मिश्रीभावार्हम्[7] 'गविर्मिश्रीभावकर्मा'[8] इति[9] यास्कः। भोजनार्हमित्यर्थः। यौतिश्च मिश्रीभावकर्मा सम्भक्तुमिच्छन्[10] जनेभ्यः शीघ्रं गच्छत्येवं गतवान्। कुत्सः[11]। यस्मिन्। अहनि[12]। पार्याय[13] शत्रुभिर्युद्धकर्मणः समाप्तौ यदहर्भवति[14] तदर्थम्। अभवत्[15]तदहस्तस्य युद्धं संस्थितमासीदित्यर्थः[16]।

---

१. वेगेन वातस्य is suggested for वेगवातस्य ॥ वायुसदृशयोर्वेगवतोः Sy. वातादपि शीघ्रतर इत्यर्थः। स्यादेतत्, शीघ्रत्वादधीनाश्व इति SKN. वातस्य जवेन यासि Dur.

२. तोदकः शत्रूणां हिंसकः Sy. तोदकः प्रेरयिता SKN. तुन्न इव केनचित् Dur.

३. आत्मीययोरश्वयोः SKN. तथापि च गच्छन्...अश्वयोः Dur.

४. वेगवातस्य प्रेरश्वयोश्चरो P. वेगवान् तस्य प्रेरश्वयोश्चेश्वरो D. वेगतवानतस्य प्रेरश्वयोश्चेश्वरो M. ईश्वरस्त्वम् Sy. वश्याश्व एवेत्यर्थः SKN. ईश्वरो न धावति त्वयि, अन्यत एव त्वामूहतुः Dur.

५. ०वन्० P. ऋजुगामिनावश्वौ Sy. ऋजुना। केन ? सामर्थ्यान्मार्गेण SKN. स त्वं भज...ऋजुनैव मार्गेण न काञ्चिदन्यां गतिं धावमानः Dur.

६. अन्नमिव SKN., Dur.

७. मिश्रिवार्हं P. ग्राह्यम् Sy. ग्राह्यं भोज्यमात्मना मिश्रयितव्यं भक्षयितव्यमित्यर्थः SKN. वाजमिव ग्रहणार्हं भोक्तुमाभिमुख्येन।...एवमेतस्मिन् शब्दसारूप्यादर्थोपपत्तेश्च गध्यम् इत्येष शब्दः गृह्णातेः इत्युपपद्यते Dur. गध्यं गृह्णातेः। 'ऋज्रा वाजं न गध्यं युयूषन्' इत्यपि निगमो भवति (N. 5. 15.) Sy.

८. ०षिमि० P. गध्यतिर्मि० M.

९. N. 5. 15.

१०. ०क्त० P. स्वकीये रथे योजयन् Sy. 'यु मिश्रणे'। मिश्रयितुमिच्छन्, विभक्षयिषुः सोममित्यर्थः SKN. पुनः पुनः सम्मिश्रयिष्यन्, आत्मानं शत्रुभिर्युद्धे Dur.

११. प्राज्ञः कुत्सः Sy. मेधावी SKN. क्रान्तदर्शनोऽसम्मूढः Dur.

१२. दिवसे Sy. कदा ? उच्यते यदहन् SKN.

१३. आपन्निस्तरणाय Sy. पारणाय प्राप्तये तव यज्ञम्प्रति SKN. पारणाय शत्रूणामुपरि चेतः करोषि पारयितव्या मयैत इति वा Dur.

१४. यदाह P.

१५. प्रभवते। तस्मिन्नेव दिने कुत्सेन सख्यं यासीति पूर्वेण सम्बन्धः Sy. भवति। यस्मिन्नहनि त्वं यज्ञं प्राप्नोषि तस्मिन्नित्यर्थः SKN. तस्मिन्नेवाहनि तान् सर्वान्...अतिक्रम्य वर्तसे इत्यर्थः। पर्यगृह्णात्, पर्यरक्षत् अत्यक्रामत्, इत्येते भूधतेरर्थाः (Cf. 10. 10.) Dur. N. 5. 15.; SKN. II. 348.

१६. VM. ignores कुत्सेन ॥ कुत्साख्येन राजर्षिणा Sy. कुत्सेन—सहयोगलक्षणा तृतीया। कुत्सनाम्ना प्रियसखेनर्षिणा सह SKN. कुत्सेनर्षिणा सह SKN. कुत्सेनर्षिणा स्तूयमानः। अथवा कुत्सेन वज्रेणाभ्युद्यतेन Dur.

कुत्साय शुष्णमशुषं नि बर्हीः प्रपित्वे अह्नः कुयवं सहस्रा ।
सद्यो दस्यून्प्र मृण कुत्स्येन प्र सूरश्चक्रं वृहतादभीके ॥ १२ ॥

[1]कुत्साय । कुत्सप्रीत्यर्थम्[2] । शत्रुभिरशोष्यम्[3] । शुष्णं[4] नामासुरम् । अमारयः[5] । कि चाह्नः[6] । प्रपित्वे[7]=प्राप्तौ प्रातःकाले । कुयवं[8] चासुरं निबर्हीः[9] । असुराणां सहस्रेण[10] सह[11] स त्वम्[12] । इदानीमस्माकमपि[13] । यथा कुत्साय[14] हतवान् तेन प्रकारेण । शत्रून् । प्रमृण[15]=मारय । स[16] त्वं[17] सूर्यस्य । चक्रम्[18] । युद्धे[19] । प्रवृहेति[20] ।

त्वं पिप्रुं मृगयं शूशुवांसमृजिश्वने वैदथिनाय रन्धीः ।
पञ्चाशत्कृष्णा नि वपः सहस्रात्कं न पुरो जरिमा वि दर्दः ॥ १३ ॥

त्वं पिप्रुम्[21] । त्वम्[22] । पिप्रुमसुरम्[23] । मृगयं चासुरम्[24] । वर्धमानम्[25] । विदथिपुत्राय[26] । ऋजिश्वने[27] । वशं नीतवानसि[28] । तथा कृष्णासुरसम्बद्धान्यसुराणाम्[29] । पञ्चाशतम्[30] । सहस्राणि

---

१. 'शुष्णं पिप्रुम्' (RV. 1. 103. 8.) इत्यस्यामृचि प्रतिपादितोऽर्थः 'कुत्साय' इत्यनेन ऋग्द्वयेन स्पष्टीक्रियते । हे इन्द्र ! त्वम् Sy.
२. कुत्सार्थम् Sy.
३. अशुषम्—शूषमिति सुखनामैतत् (Ngh. 3.6.), तद्रहितम्, अत्र दीर्घाभावः Sy.
४. ०ष्ण M. शुष्णनामानमसुरम Sy.
५. न्यबर्हीः, अवधीः Sy.
६. दिवसस्य Sy.
७. प्रक्रमे पूर्वाह्णे Sy.
८. कुयवनामानमसुरं च हतवानसि Sy.
९. असुरं निबर्हीः is omitted by P.
१०. तथा सहस्रा सहस्रेण बहुभिः परिजनैः सह Sy.
११. ह P.
१२. यस्मिन् काले कुयवमवधीस्तस्मिन् काल एव Sy.
१३. ०मभि P.
१४. कुत्स इति वज्रनामैतत् । (Ngh. 2. 20.) कुत्स एव कुत्स्यं वज्रम् । तेन Sy.
१५. प्रमृण । जहि । भूतार्थे लोट् । हतवानसि Sy.
१६. समत्वं P.
१७. प्रेरकस्य सूर्यस्य Sy.
१८. आयुधम् Sy.
१९. समीपे सङ्ग्रामे वा Sy.
२०. प्रकर्षेण छिन्नवानसि Sy.
२१. विप्रुं P., D.
२२. हे इन्द्र ! त्वम् Sy.
२३. विप्रुम० P., D. पिप्रुनामानमसुरम् Sy.
२४. ०सर मृगञ्च पुरः P. मृगयनामानमसुरं च हतवानसि Sy.
२५. प्रवृद्धम् Sy.
२६. विदथिनः पुत्राय Sy.
२७. ऋजिश्वनाम्ने राज्ञे Sy.
२८. वशमनयः Sy.
२९. कृष्णवर्णानि रक्षांसि Sy.
३०. पञ्चाशत्संख्याकानि Sy.

हत्वा पृथिव्याम् । निवपः । ततः कृष्णस्य पुराणि च । विविधं दारितवानसि । अत्क इति रूपनाम । यथा । जरिमाङ्गानाम् । श्रियं विदारयत्येवमिति ।

**सूर॑ उपा॒के त॒न्वं१॒ दधा॑नो॒ वि यत्ते॒ चेत्य॒मृत॑स्य॒ वर्पः॑ ।**
**मृ॒गो न ह॒स्ती तवि॑षीमुषा॒णः सिं॒हो न भी॒म आयु॑धानि॒ बिभ्र॑त् ॥ १४ ॥**

सूरः । यत् । तव । अमृतस्य । विज्ञायते । उज्ज्वलं रूपं तेजः । तस्य समीपे । सूर्यस्य च । आत्मीयं शरीरम् । बिभ्रत् भवति, ततस्तस्य तेजो भवतीत्यर्थः । मार्गणशीलो मत्तः । हस्ती । इव त्वं भवसि । शत्रुबलम् । दहन् । तथा सिंहः । इव । भयङ्करो भवति । आयुधानि । धारयन्निति ।

**इन्द्रं॒ कामा॑ वसू॒यन्तो॑ अग्म॒न्त्स्व॑र्मीळ्हे॒ न सव॑ने च॒का॒नाः ।**
**श्र॒व॒स्यवः॑ शशमा॒नास॑ उ॒क्थैरो॒को न र॒ण्वा सु॒दृशी॑व पु॒ष्टिः ॥ १५ ॥**

इन्द्रम् । इन्द्रम् । कामयमानाः । धनानीच्छन्तः । अभ्यागच्छन् । युद्धे । इव । यज्ञे

---

१. व्यान्निवपः P. निववः M. न्यवपः अवधीः Sy.
२. शम्बरस्य नगराणि Sy.
३. विदारितवानसि Sy.
४. The passage अत्क इति रूपनाम should immediately follow श्रियम् ॥ वयोविशेषं रूपमिव Sy.
५. जिरजिरमा० P. तथा स त्वं जरा Sy. ६. Omitted by M.
७. हे इन्द्र ! Sy. ८. यदा Sy.
९. त्वदीयम् Sy.
१०. मरणरहितस्य Sy.
११. व्यचेति । हे इन्द्र ! ज्ञातृभिर्विशेषेणाज्ञायत । सूर्यस्य समीपे सर्वाणि रूपाणि मलिनीभवन्ति न तथेन्द्रस्य रूपं किन्तु सूर्यस्य समीप इन्द्रस्य रूपं विशेषेण भासमानं बभूवेत्यर्थः Sy.
१२. उज्ज्व० P. १३. प्रेरकस्य सूर्यस्य Sy.
१४. त्वदीयं शरीरम् Sy.
१५. धारकोऽभवस्तदा Sy.
१६. अपि च हे इन्द्र ! गजविशेषो मृग इव Sy. १७. हन्ति व P.
१८. परेषां बलम् Sy.
१९. तथा is used here in the sense of च ।
२०. भवसि is suggested for भवति ॥ अभूः Sy.
२१. वज्रादीनि शस्त्राणि Sy.
२२. बिभ्राणस्त्वम् Sy.
२३. परमैश्वर्ययुक्तम् Sy.
२४. राक्षसादिभयनिवारणार्थमिन्द्रं कामयमानाः Sy.
२५. पश्वादिधनमिच्छन्तः स्तोतारः Sy.
२६. अगमन् गच्छन्ति । वर्तमानेऽर्थे छान्दसो लुङ् Sy.
२७. कीदृशाः स्तोतारः ? युद्धे Sy.

च लब्धैर्धनैः। दीप्यमाना[1]ः। अन्नमिच्छन्तः[2]। उक्थैः[3]। इन्द्रमर्चन्तः[4]। सोऽयमिन्द्रो गृहम्[5]। इव। रमयिता[6] भवति[7]। सुदर्शनेव[8] च। पुष्टिरिति[9]।

**तमिद्व इन्द्रं सुहवं हुवेम यस्ता चकार नर्या पुरूणि।**
**यो मावते जरित्रे गध्यं चिन्मक्षू वाजं भरति स्पार्हराधाः ॥ १६ ॥**

तमित्। तम्। एव वयम्[10]। युष्मदर्थम्[11]। साह्वानम्[12]। आह्वयेम[13]। यः[14]। तानि[15]। चकार[16]। नृभ्यो हितानि[17]। बहूनि[18]। यश्च। मत्सदृशाय। स्तोत्रे[19]। भोजनयोग्यम्[20]। अन्नम्। भरति[21]। क्षिप्रम्[22]। एव। स्पृहणीयधनः।

**तिग्मा यदन्तरशनिः पताति कस्मिंश्चिच्छूर मुहुके जनानाम्।**
**घोरा यदर्य समृतिर्भवात्यध स्मा नस्तन्वो बोधि गोपाः ॥ १७ ॥**

तिग्मा। तीक्ष्णा। अशनिः। यदा। मध्ये[23]। पतति[24]। कस्मिन्[25]। चित्। हे शूर[26]!

---

१. याचमानाः Sy.
२. अग्निमि० D.
अन्नकामाः Sy.
३. स्तोत्रैः Sy.
४. शंसमानाः स्तुवन्तः Sy.
५. तदा सोऽयमिन्द्रः स्तोतृणामावास इव भवति Sy.
६. रमणीया Sy.
७. M. reads रम भवसीति for रमयिता भवति।
८. शोभनदर्शना Sy.
९. The passage beginning with च लब्धैः and ending with पुष्टिरिति। is omitted by P.
लक्ष्मीरिव भवति Sy.
१०. स्तोतारो हे यजमानाः! Sy.
११. युष्मभ्यम् Sy.
१२. स्वाहानं M. स्वाह्वानम् is suggested for साह्वानम्॥ शोभनमाह्वानं यथा भवति तथा Sy.
१३. आह्वयामः Sy.
१४. इन्द्रः Sy.
१५. प्रसिद्धानि कर्माणि Sy.
१६. अकरोत् Sy.
१७. नर्याणि मनुष्यहितानि Sy.
१८. The passage beginning with तमित् and ending with बहूनि is omitted by P.
१९. चास्तोत्रे M.
२०. ग्राह्यं संयोजनीयमपि Sy.
२१. आहरति Sy.
२२. शीघ्रम् Sy.
२३. अस्माकं मध्ये Sy.
२४. पतेत् Sy.
२५. सर्वस्मिन्नपि Sy.
२६. विक्रान्तेन्द्र! Sy.

जनानाम्[1] । मोहके[2] सङ्ग्रामे । घोरश्च[3] । यदा[4] । स्वामिन्[5] । मनुष्याणां सङ्क्रमः[6] । भवति,[7] समृतिशब्दः सङ्ग्रामवचनः[8] । तदनन्तरमेव[9] । अस्माकम्[10] । शरीराणि[11] । गोपायिता[12] भवामीति । बुध्यस्व[13]इति[14] ।

भुवोऽविता वामदेवस्य धीनां भुवः सखावृको वाजसातौ ।
त्वामनु प्रमतिमा जगन्मोरुशंसो जरित्रे विश्वध स्याः ॥ १८ ॥

भुवः[15] । भव । वामदेवस्य[16] मम । कर्मणाम् । रक्षकः[17] । भव च । सखा[18] । रक्षोवर्जितस्त्वम्[19] । सङ्ग्रामे[20] । त्वाम् । प्रमतिम्[21] । वयमनुगच्छामः[22] । त्वं चास्मै स्तोत्रे । सर्वदा । बह्वाशंसन[23] । स्याः[24] इति ।

एभिर्नृभिरिन्द्र त्वायुभिष्ट्वा मघवद्भिर्मघवन्विश्व आजौ ।
द्यावो न द्युम्नैरभि सन्तो अर्यः क्षपो मदेम शरदश्च पूर्वीः ॥ १९ ॥

एभिर्नृभिः । एभिः[25] । मनुष्यैः[26] । इन्द्र ! त्वत्कामैः[27] सह । सर्वेऽपि[28] वयम् ।

---

१. मनुष्याणाम् Sy.
२. मोहकेन D. मोहते M. मोहके युद्धे Sy.
३. अस्माकं शत्रुभिः सह भीमरूपा Sy.
४. अस्माकं शत्रुभिः सह Sy.
५. स्मास्वामी P. इन्द्र ! Sy.
६. सङ्ग्रामः is suggested for सङ्क्रमः ॥ युद्धम् Sy.
७. भवेत् Sy.
८. The passage समृतिशब्दः सङ्ग्रामवचनः should immediately follow सङ्क्रमः and precede भवति ।
९. तदानीम् Sy.
१०. अस्मदीयस्य Sy.
११. शरीरस्य Sy. १२. रक्षकः Sy.
१३. अबोधि । शत्रुभ्यः सकाशादस्मान् रक्षकत्वेन बुद्धवानसि Sy.
१४. VM. ignores स्म ॥ स्म खलु Sy.
१५. हे इन्द्र ! त्वम् Sy.
१६. वामदेवाख्यस्य मन्त्रद्रष्टुर्मम सम्बन्धिनीनाम् Sy.
१७. रक्षिता Sy.
१८. मम सुहृत् Sy.
१९. हिंसारहितस्त्वम् Sy.
२०. युद्धे Sy.
२१. हे इन्द्र ! वयं प्रकृष्टज्ञानम् Sy.
२२. लक्षीकृत्यागच्छाम । स त्वम् Sy.
२३. बह्वाशंसनः is suggested for बह्वाशंसन ॥ महता शंसनेन युक्तः Sy.
२४. भवेः Sy.
२५. प्रत्यक्षेणोपलभ्यमानैः Sy.
२६. पुत्रपौत्राद्यैः परिजनैः सहिता वयं यजमानाः Sy.
२७. शत्रुजयार्थं त्वां कामयमानैः Sy.
२८. विश्वस्मिन् Sy.

सङ्ग्रामे । दिवसाः[१] । इव । तेजोभिरन्वकारम्[२] । अरीन्[३] । अभिभवन्तः । त्वाम् । रात्रीः[४] । संवत्सरान् । च । बहून्[५] । यज्ञैर्मादयेम[६] ।[७]

**एवेदिन्द्राय वृषभाय वृष्णे ब्रह्माकर्म भृगवो न रथम् ।**
**नू चिद्यथा नः सख्या वियोषदसन्न उग्रोऽविता तनूपाः ॥ २० ॥**

एवेत् । एवम्[८] । एव[८] । इन्द्राय । कामानां वर्षित्रे । पुंसे[९] । स्तोत्रम् । कृतवन्तः[१०] । भृगवः[११] । इव स्तोतारः । रथम्, इन्द्राय भृगवो रथमारोहणाय नूनं कृतवन्तः अथवा भृगव इव रंहणं[१२] स्तोत्रं कृतवन्त इति । क्षिप्रम् । एव । यथा । अस्माकमिन्द्रः[१३] । सख्यानि[१४] । विमिश्रयति[१५] । भवेच्च[१६] । अस्माकम्[१७] । उद्गूर्णः[१८] । रक्षिता । अङ्गानां पालयितेति[१९] ।

**नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो३ न पीपेः ।**
**अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥ २१ ॥**

नू ष्टुतः । क्षिप्रमेव[२०] । पूर्वैः[२१] स्तुतः । क्षिप्रमेव[२०] । सम्प्रतितनैः स्तूयमानः[२२] । अन्नम् । स्तोत्रे[२३] । पूरय[२४] । अद्भिर्नदीः । इव । हे हरिवः[२५] ! अस्माभिस्तुभ्यम् । नूतनम्[२६] । स्तोत्रम् ।

---

१. द्योतमानाः प्रकाशमाना धनिनो यथा तथा Sy.		२. द्युम्नैः धनैः Sy.
३. शत्रून् Sy.		४. सर्वा रात्रीः Sy.
५. बह्वीः Sy.
६. ०यम P. स्तवाम । यजमानाः सर्वेषु कालेषु स्तोत्रैरिन्द्रं हर्षयन्तीत्यर्थः Sy.
७. VM. ignores मघवद्भिः and मघवन् ॥ हे धनवन् ! त्वदर्थं दीयमानहविर्लक्षणैर्धनैरुपेतैः Sy.
८. तथा वयं यजमाना एवमेव उक्तप्रकारेण Sy.
९. पुंस P., D. नित्यतरुणाय Sy.
१०. अकुर्म Sy.
११. भृगः P. तत्र दृष्टान्तः—दीप्तास्तक्षाणः रथमिव तद्वत् । यजमानेभ्यो यथेन्द्रोऽभीप्सितफलप्रदो भवति तथेन्द्रं यजमानाः स्तुवन्तीत्यर्थः Sy.
१२. रंहणं M.		१३. अस्मदीयानि Sy.
१४. सख्यानि कर्माणि Sy.
१५. न पृथक्कुर्यात् Sy.
१६. स्यात् । तथा वयं यजमानाः Sy.
१७. अस्मान् Sy.
१८. तेजस्वी Sy.
१९. शरीराणां पालक इन्द्रो यथा Sy.
२०. क्षिप्रम् Sy.
२१. पूर्वे P. पूर्वैऋषिभिः संस्तुतः Sy.
२२. अस्माभिः स्तूयमानश्च त्वम् Sy.
२३. स्तोत्रे मह्यम् Sy.
२४. प्यायय प्रवृद्धं कुरु Sy.
२५. हे हे रिपो ! M. हरिवन् ! हरिसंज्ञकाश्वोपेतेन्द्र ! Sy.
२६. नवतरम् Sy.

कृतम्[1] । तथा सति वयं रथयुक्ता[2]: । कर्मणा[3] । शत्रूणां सदा सम्भक्तार[4]: । स्याम[5] ।[6]

IV.17.

**त्वं म॒हाँ इ॑न्द्र॒ तुभ्यं॑ ह॒ क्षा अनु॑ क्ष॒त्रं मं॒हना॑ मन्यत॒ द्यौः ।**
**त्वं वृ॒त्रं शव॑सा जघ॒न्वान्त्सृ॒जः सिन्धूँ॒रहि॑ना जग्रसा॒नान् ॥ १ ॥**

[7]त्वं महान् । त्वम् । महानसि[8] । इन्द्र ! तुभ्यम्[9] । ह[10] । पृथिवी[11] । बलम्[12] । अन्वमन्यत[13] । महती[14] । द्यौश्च[15] । त्वम्[16] । वृत्रम्[17] । बलेन[18] । हतवान् सन् । अहिना[19] । ग्रस्यमानान्[20] । सिन्धून्[21] । अवासृजः[22] सिन्धूनवासृजः[23] सर्वत[24] इति ।

---

१. कृतवन् P. अस्माभिः क्रियते Sy.
२. ०क्ता P. रथवन्तो वयम् Sy.
३. प्रज्ञारूपया स्तुत्या Sy.
४. त्वां सर्वदा भजमानास्त्वदर्थं हवीरूपस्यान्नस्य दातारो वा Sy.
५. भूयास्म Sy.
६. VM. ignores इन्द्र ॥ MS. D. puts the figure ॥१६॥ here to indicate the end of sixteenth hymn. No such number is given in P. and M.
७. 'त्वं महाँ इन्द्र तुभ्यम्' इत्येकविंशत्यृचं सप्तमं सूक्तं वामदेवस्यार्षम् । अत्रेयमनुक्रमणिका—'त्वं महाँ असिक्न्यामेकपदा' (KSA. 21. 17. p. 17.) इति । 'असिक्न्यां यजमानो न होता' इत्येकपदा विराट् शिष्टा विंशतिस्त्रिष्टुभः । इन्द्रो देवता । समूळ्हे दशरात्रेऽष्टमेऽहनि निष्केवल्ये इदं सूक्तं विनियुक्तम् । तथा च सूत्रितम्—'त्वं महाँ इन्द्र तुभ्यमिति निष्केवल्यम्' (ASS. 8. 7.) इति । इन्द्रस्य वृत्रघ्नः 'त्वं महाँ' इति पशुपुरोडाशस्यानुवाक्या । सूत्रितञ्च—'त्वं महाँ इन्द्र तुभ्यं ह क्षाः सत्राहणम्' (ASS. 3. 8.) इति Sy.
८. प्रभूतो भवसि Sy.
९. त्वदर्थम् Sy.
१०. एव Sy.
११. क्षा इति पृथिवीनामैतत् (Ngh. 1. 1.)
१२. त्वदीयं बलम् Sy.
१३. बलमन्वम M. अनुमतीचकार Sy.
१४. महत्त्वेन युक्ता सती Sy.
१५. द्यौश्च त्वदर्थं बलमन्वमन्यत Sy.
१६. हे इन्द्र ! त्वम् Sy.
१७. लोकानामावरकं वृत्रनामकमसुरम् Sy.
१८. त्वदीयेन बलेन Sy.
१९. किञ्च वृत्रेण Sy.
२०. जग्रसानान् जग्रहाणान् ग्रस्तान् । ग्रसतेर्लिटः कानजादेशः Sy.
२१. अपः Sy.
२२. असृजः सृष्टवानसि Sy.
२३. ०न्धुन० D. सिन्धूनवासृजः seems to be written twice.
२४. सर्तव D. सर्त P.

तव त्विषो जनिमन्रेजत द्यौ रेजद्भूमिर्भियसा स्वस्य मन्योः ।
ऋघायन्त सुभ्व१ः पर्वतास आर्दन्धन्वानि सरयन्त आपः ॥ २ ॥

तव त्विषः[1] । तव[2] । तेजसः[3] । अजनि[4] । द्यौः[5] । रेजत्=कम्पते[6] । भूमिश्च । अरेजत्[7] । त्वदीयस्य[8] । क्रोधस्य[9] । भयेन[10] । तथा शिलोच्चयाः[11] । शोभनभवनाः[12] । ऋघायन्ताभिभवार्थम्[13], ऋघायतिस्तिष्ठतीत्यर्थः[14] । तथा सपत्नान्[15] धनूंषि[16] । हिंसन्ति[17] । आपश्च[18] । त्वद्भयात्, गच्छन्तीति[19] ।

भिनद्गिरिं शवसा वज्रमिष्णन्नाविष्कृण्वानः सहसान ओजः ।
वधीद्वृत्रं वज्रेण मन्दसानः सरन्नापो जवसा हतवृष्णीः ॥ ३ ॥

भिनद्गिरिम्[20] । भिनत्[21] । गिरिम्[22] । बलेन । आत्मीयं वज्रम् । प्रेरयन् । आत्मीयमोजः[23] । प्रकाशयन्[24] । परेषामोजोऽभिभवन्[25] सोऽयम्[26] । अवधीत्[27] । वृत्रम्[28] । वज्रेण । मोदमानः[29] । अथापः[30] । वेगेन[31] । असरन्[32] । हतवृष्ण्यः[33] वृत्रे हते ततो निर्जग्मुरित्यर्थः[34] ।

---

१. हे इन्द्र ! Sy.
२. त्वदीये Sy.
३. दीप्यमानस्य Sy.
४. जन्मनि सति Sy.
५. अन्तरिक्षम् Sy.
६. अरेजत् अकम्पत Sy.
७. ॰ज M. कम्पमाना बभूव Sy.
८. त्वदीयात् Sy.
९. कोपात् । पञ्चम्यर्थे षष्ठी Sy.
१०. जातेन भयेन Sy.
११. पर्वता मेघाः Sy.
१२. महान्तः Sy.
१३. ॰र्थ P. सस्यादीनां वृष्टिप्रदानार्थं नियामकेन त्वया अबाध्यन्त Sy.
१४. ॰ष्ठन्तीत्य॰ P., M. तिष्ठत्यर्थः is suggested for तिष्ठतीत्यर्थः ।
१५. ॰त्नाद् D.
१६. उदकरहितान् देशान् Sy.
१७. तथा मेघा आर्दन् प्राणिनां पिपासारूपां पीडामहिंसन् Sy.
१८. अपः Sy.
१९. गमयन्ति Sy.
२०. ॰नं गिरिं D. ॰नद्गिरः P.
२१. अभिनत् बिभेद Sy.
२२. भिनत् । गिरिम् is omitted by M. गिरं P. पर्वतजातम् Sy.
२३. तेजः Sy.
२४. आविष्कुर्वन्निन्द्रः Sy.
२५. शत्रूणामभिभवन् Sy.
२६. तेजः M. २७. जघान Sy.
२८. वृत्रनामानमसुरम् Sy.
२९. किञ्च सोमेन मोदमान इन्द्रः Sy.
३०. वृत्रेणावृतान्युदकानि Sy.
३१. ॰मानोऽसीति अथाचो वेगे॰ M.
३२. सरन् D., P. अगच्छन् Sy.
३३. गत॰ M. हतो वृषा वृत्रो यासां ता हतवृष्ण्यः, ता वृत्रवधानन्तरं निवारणरहिताः सत्यः Sy.
३४. वृत्रे हते ततो निर्जग्मुरित्यर्थः refers to असरन् ।

सुवीरस्ते जनिता मन्यत द्यौरिन्द्रस्य कर्ता स्वपस्तमो भूत्।
य ईं जजान स्वर्यं सुवज्रमनपच्युतं सदसो न भूम ॥ ४ ॥

सुवीरः[1]। शोभनपुत्रः[3]। तव[2]। जनिता[4]। द्यौः[5]। अमन्यत लौकिकैः। अथ परोक्षः[6]— इन्द्रस्य। कर्ता जनयिता। अतिशयेन शोभनकर्मा[7]। अभवत्[8]। यः। एनम्[9]। जजान[10]। सर्वैर्हितम्[11]। सुवज्रम्[12]। अनपभ्रष्टम्[13]। परिषदः[14]। इव[15]। भूमानमिति[16]।

य एक इच्च्यावयति प्र भूमा राजा कृष्टीनां पुरुहूत इन्द्रः।
सत्यमेनमनु विश्वे मदन्ति रातिं देवस्य गृणतो मघोनः ॥ ५ ॥

य एकः। यः[17]। एकः। एव सन्[18]। शत्रूणां भूमानम्[19]। प्रच्यावयति[20]। मनुष्याणाम्[21]। राजा[22]। बहुभिराहूतः। इन्द्रः[23]। तमेनम्। अच्छन्नेनैव[24]। सर्वे[25] देवाः। अनुमदन्ति[26]। स्तूयमानस्य[27]। मेघवतः[28]। देवस्य[29]। हविषां दातारं[30] मनुष्यम्।

---

१. After RV. IV. 17. 3. M. reads the stanzas RV. IV. 19. 7. to RV. IV. 21. 3. and then RV. IV. 17. 4. to RV. IV. 19. 6.
२. हे इन्द्र ! Sy.
३. शोभनपुत्रवानहमस्मीति Sy.
४. स प्रजापतिः Sy.
५. द्योतमानः Sy.
६. किञ्च Sy.
७. अत्यन्तं शोभनकर्माभूत् Sy.
८. ०वन् M.
प्रजापतिः Sy.
९. एवं M. त्वाम् Sy.
१०. अजीजनत्। 'जन जनने' इति धातुः Sy.
११. ऋत्विगादिभिः स्तुत्यम् Sy.
१२. शोभनवज्रोपेतम् Sy.
१३. विच्युतिरहितम् Sy.
१४. स्वकीयात् स्वर्गाख्यात् स्थानात् Sy.
१५. न इति समुच्चयार्थे Sy.
१६. भूम्ना महत्त्वेन युक्तम् Sy.
१७. Omitted by P.
१८. P. and D. omit it. देवानां मध्ये मुख्य एव Sy.
१९. भूतं निष्पन्नं शत्रुभ्यो भयम् Sy.
२०. प्रकर्षेण नाशयति Sy.
२१. सर्वासां प्रजानाम् Sy.
२२. प्रभुः Sy.
२३. इन्द्रम् Sy.
२४. सत्यमेव Sy.
२५. सर्व P., D. यजमानाः Sy.
२६. लक्षीकृत्य स्तुवन्ति Sy.
२७. स्तुवतः Sy.
२८. हविर्लक्षणधनवत इत्यर्थः Sy.
२९. इन्द्रसमाश्रयाद् द्योतमानस्य Sy.
३०. बन्धुम् Sy.

सुत्रा सोमा अभवन्नस्यु विश्वे सुत्रा मदासो बृहुतो मदिष्ठाः ।
सुत्राभवो वसुपतिर्वसूनां दत्रे विश्वा अधिथा इन्द्र कृष्टीः ॥ ६ ॥

सत्रा सोमाः । इन्द्रस्यैव । सत्यमेव[1] । सर्वे । सोमाः । भवन्ति[2] । एतदेव प्रकारान्तरेणाह—सत्यमेव । सोमाः[3] । मादयितृतमाः[4] । महत[5] इन्द्रस्य भवन्तीति । शेषः प्रत्यक्षः—सत्यमेव[6] । त्वमिन्द्र ! वसूनाम्[7] । पतिः[8] । भवसि । स त्वमिन्द्र ! हविषः प्रदातरि[9] मयि । सर्वाः । प्रजाः[10] । अधिधेहि[11] ।

त्वमधं प्रथुमं जायमानोऽमे विश्वा अधिथा इन्द्र कृष्टीः ।
त्वं प्रति प्रवत आशयानुमहिं वज्रेण मघवन्वि वृश्चः ॥ ७ ॥

त्वमध । त्वम् । प्रातः सर्वेषामेव देवानां पूर्वमेव[12] । जायमानः । भये[13] । विश्वाः[14] । प्रजाः । अधिधाः[15] । त्वम् । निम्नान्[16] प्रदेशान् । लक्षीकृत्य । आवृत्य शयानम्[17] । अहिमिति[18] स्पष्टमिति[19] ।[20]

---

१. सत्रेति सत्यनामैतत् Ngh. 3. 10.

२. प्रभूता अभवन् Sy.

३. सो M.
   मदा मदकराः सोमाः Sy.

४. मद० D.

५. महतोऽस्येन्द्रस्य अभवन् Sy.

६. प्रत्यक्षमेव P., D.

७. न केवलं धनपतिः किन्तु सर्वेषां पश्वादीनां धनानां पतिः Sy.

८. धनपतिः Sy.

९. धने निमित्तभूते सति Sy. दत्रमिति हिरण्यनाम Ngh. 1. 2.

१०. स्तोत्रीः प्रजाः Sy.

११. धारयसि Sy.

१२. प्रथममेव Sy.

१३. अमे वृत्रनिमित्ते भये सति Sy.

१४. सर्वाः Sy.

१५. अधिधाः P., D., M. रक्षकत्वेन धारयसि Sy.

१६. प्रवणानुवकवतो देशान् Sy.

१७. ०त्यावृत्रं श० P., D., M. अपां निरोधकम् Sy.

१८. वृत्रनामानमसुरम् Sy.

१९. Omitted by P.

२०. VM. ignores अध । इन्द्र । वज्रेण । मघवन् । वि and वृश्चः ॥ अध अपि च । हे मघवन् धनवन् ! इन्द्र ! व्यवृश्चः छिन्नवानसि Sy.

सत्राहणं दाधृषिं तुम्रमिन्द्रं महामपारं वृषभं सुवज्रम् ।
हन्ता यो वृत्रं सनितोत वाजं दाता मघानि मघवा सुराधाः ॥ ८ ॥

[1]सत्राहणम् । सत्यमेव शत्रूणां हन्तारम्[2] । अभिभवितारम्[3] । तुमिः[4] प्रेरणकर्मा शत्रूणां प्रेरयितारम्[5] । इन्द्रम्[6] । महान्तम् । अदृष्टपर्यन्तम्[7] । वर्षितारम्[8] । सुवज्रमहं[9] स्तौमि । यः[10] । स्तोतृणामुपद्रवस्य[11] । ताच्छील्येन[12] हन्ता[13] भवति । अपि च[14] । दाता भवति[15] । अन्नम् । प्रयच्छति[16] । धनम्[17] । मघवा । शोभनधनः[18] । सर्वत्र तृन्प्रत्ययः[19] ।

अयं वृतश्चातयते समीचीर्य आजिषु मघवा शृण्व एकः ।
अयं वाजं भरति यं सनोत्यस्य प्रियासः सख्ये स्याम ॥ ९ ॥

अयम् । सम्भूयागच्छन्तीः[20] । परिवृण्वतीः परसेनाः[21] । अयम्[22] । विनाशयति[23] । यः । सङ्ग्रामेषु । असहाय[24] एव कार्यकरणः[25] । श्रूयते[26] । अयम्[22] । अन्नम् । तस्मै प्रयच्छति[27] । यं[28]

---

१. इन्द्रस्य वृत्रघ्नः पशौ 'सत्राहणम्' इति हविषोऽनुवाक्या । सूत्रितञ्च—'सत्राहणं दाधृषिं तुम्रमिन्द्रं महवानुं पुरुहूत क्षियन्तम्' (ASS. 3. 8.) इति Sy.

२. बहूनां शत्रूणां हन्तारम् Sy.

३. अत्यन्तं धर्षकम् Sy.

४. Missing in M.

५. शत्रूणां प्रेरकम् Sy.

६. इन्द्रं वयं स्तोतारः स्तुमेति शेषः Sy.

७. अपरिमाणम् । विनाशरहितमित्यर्थः Sy.

८. कामानां वर्षितारम् Sy.

९. शोभनेन वज्रेणोपेतम् Sy.

१०. इन्द्रः Sy.

११. वृत्रनामानमसुरम् Sy.

१२. तच्छी D.

१३. हिंसिता भवति Sy.

१४. अपि च य इन्द्रः Sy.

१५. Omitted by M.

१६. दाता भवति तमिन्द्रं स्तुमेति पूर्वेणान्वयः Sy.

१७. धनानि Sy.

१८. शोभनधनयुक्तः यः Sy.

१९. अत्र सर्वत्र तृन्नन्तत्वात् 'न लोकाव्यय' इति षष्ठीप्रतिषेधे सति द्वितीयैव भवति Sy.

२०. सङ्गताः Sy.

२१. ०रं से० M. वृण्वन्त्याच्छादयन्ति लोकानिति वृतः शत्रुसेनास्ताः Sy.

२२. इन्द्रः Sy.

२३. अपिना० P., D. नाशयति Sy.

२४. मुख्यः Sy.

२५. ०ण P., D.

२६. ०तेः P.

२७. यजमानाय ददाति तं वाजम् Sy.

२८. यः P., D. यत् Sy.

स्तोतारम् । भजते[1] । तस्यास्य[2] । सख्ये[3] वर्तमानाः । प्रियाः । स्यामास्येति[4] ।[5]

अयं शृंण्वे अध जयंन्नुत घ्नन्नयमुत प्र कृंणुते युधा गाः

यदा सत्यं कृंणुते मन्युमिन्द्रो विश्वं दृळ्हं भंयत एजंदस्मात् ॥ १० ॥

अयम् । युद्धे[6] प्रविष्टोऽयम्[7] । तदानीमेव[8] । शत्रून्[9] जयन्[10] । घ्नन्[11] । च । श्रूयते[12] । अयम्[13] । अपि च[14] शत्रुभ्यः । युद्धेन । आत्मीया[15] गाः । प्रकाशयति[16] । यदा । सत्यमेव[17] । क्रोधम्[18] । करोति[19] । इन्द्रः । सर्वमेव[20] । अस्मात्[21] । स्थावरम्[22] । जङ्गमं[23] च तदा । विभेति ।

समिन्द्रो गा अंजयत्सं हिरंण्या समंश्विया मघवा यो हं पूर्वीः ।

एभिर्नृभिर्नृतंमो अस्य शाकै रायो विंभक्ता संभरश्च वस्वंः ॥ ११ ॥

समिन्द्रः । यः[24] । इन्द्रः[25] । पूर्वीः[26] सेना जिगाय । सः[27] । ताः सेनाः गो[28]हिरण्याश्वसमूहान् ।

---

१. यजमानस्य तदन्नं दातुं बिभर्ति Sy.
२. स्तोतारो वयमेवम्भूतस्येन्द्रस्य Sy.
३. सखित्वे Sy.
४. भवेम Sy.
५. VM. ignores मघवा ॥ धनवान् Sy.
६. M. adds अयं before युद्धे ।
७. इन्द्रः Sy.
८. अपि च Sy.
९. ०त्रूं M.
१०. विजयन् Sy.
११. शत्रून् हिंसन् सर्वत्र श्रूयते Sy.
१२. सर्वत्र प्रख्यातो भवति Sy.
१३. ०तेः य० P.
१४. Omitted by P.
१५. आत्मनि D., M. पशून् Sy.
१६. ०कारय० P. M. शत्रुसकाशादाहरति Sy.
१७. ०र्वं M.
१८. Omitted by M. कोपम् Sy.
१९. द्विषदर्थं करोति तदानीम् Sy.
२०. समस्तं जगत् Sy.
२१. ०स्मान् M. इन्द्रात् Sy.
२२. स्थावर P. दृढं स्थिरं स्थावररूपम् Sy.
२३. एजत् कम्पमानं जङ्गमरूपं च Sy.
२४. Omitted by P.
२५. It seems to be the explanation of मघवा ॥ मघवा धनवान् Sy.
२६. बह्वीः शत्रुसेनाः समजयत् । इन्द्रः सर्वान् शत्रून् जित्वा सकलमपि पश्वादिधनमपहृतवानित्यर्थः Sy.
२७. It refers to इन्द्रः ।
२८. गो is omitted by P. गोहिरण्याश्वसमूहान् refers to गाः, हिरण्या and अश्विया ॥ गा असुराणाम् । हिरण्या हिरण्यानि हितरमणीयानि शत्रुसम्बन्धीनि धनानि समजयत् । तथाश्वियानि शत्रुसम्बन्धिनोऽश्वसमूहान् सम्यग् जयति स्म Sy.

समजयत्[1] । एभिः । नेतृभिः[2] मरुद्भिः सह । नेतृतमः[3] । यस्येन्द्रस्य । सहायाः[4] । स्तोतृषु धनस्य[5] । विभागं कुर्वन्[6] । सम्भरणशीलः[7] । च[8] । धनस्य शत्रुभ्यः[9] ।

**कियंत्स्विदिन्द्रो अध्यैति मातुः कियंत्पितुर्जनितुर्यो जजानं ।**
**यो अस्य शुष्मं मुहुकैरियंर्ति वातो न जूतः स्तनयंद्भिरभ्रैः ॥ १२ ॥**

कियत् । 'कियात्या[10] यत्समया भवाति[11] ।' इत्यनेन समानार्थो मन्त्रोऽयम् ॥ प्रातः प्रादुर्भवन् द्यावापृथिव्योः पर्यन्तात् प्रादुर्भवति तत्रास्य पृथिवीं मातरमाह पितरं दिवम्[12], अयम्, इन्द्रः[13] । पृथिव्याः[14] । कियत्[15] । स्वित् । अधिगच्छति[16] स्वतेजसा किं तं[17] देशं प्रकाशयन् गच्छतीत्यर्थः । कियच्च[18] । पितुः[19] । जनयितुः[20] । यः । एनमिन्द्रं जजान[21] । यः[22] । इन्द्रस्य[23] । बलम्[24] । मुहुर्मुहुः । प्रेरयति दिवि हीन्द्रो वर्तमानो बलिष्ठो भवति । सोऽयं वातः[25] । इव । कुष्टो[26]

---

१. सम् अजयत् सम्यक् जितवान् भवति Sy.
२. ०भिः ष्टिन्नेतृ० M. नृभिर्नेतृभिः स्तोतृभिः स्तुतः सन् Sy.
३. पश्वादीनामतिशयेन निर्वाहकः स इन्द्रः Sy.
४. सहार्यः or साहाय्यः is suggested for सहायाः ॥ सामर्थ्यः Sy.
५. पश्वादिरूपस्य धनस्य Sy.
६. स्तोतृभ्यो विभागस्य कर्ता, दाता भवतीत्यर्थः Sy.
७. सम्भर्ता धारकश्च भवति Sy.
८. वसुनः धनस्य Sy.
९. VM. ignores ह ॥ ह खलु Sy.
१०. कियया० M.
११. ०वति० P., D., M. RV. I. 113. 10.
१२. Omitted by P.
१३. अयमहं मिन्द्रः P.
१४. जनन्याः सकाशात् Sy.
१५. Omitted by P., D. यावद्बलम् Sy.
१६. ०धि इच्छ ० P., D.
१७. किन्त P. कित्वं M. कियन्तं is suggested for किं तं ।
१८. यावद्बलमधिगच्छति Sy.
१९. पितुः सकाशात् Sy.
२०. जनयितुर्यस्मात् प्रजापतेः सकाशात् Sy.
२१. इदं दृश्यमानं जगत् अजनयत् Sy.
२२. य इन्द्रस्तस्मात् प्रजापतेः सकाशात् Sy.
२३. जगतः Sy.
२४. यावद्बलम् Sy.
२५. वायुरिव तथा स इन्द्रः स्तोतृभिर्जूतः प्रेरितो हविष्प्रदानार्थमाहूतो भवति Sy.
२६. आकु० M. प्रेरितः Sy.

भवति ।. स्तनयद्भिः[1] । मेघैः ।

क्षियन्तं त्वमक्षियन्तं कृणोतीयर्ति रेणुं मघवा समोहम् ।
विभञ्जनुरशनिमाँइव द्यौरुत स्तोतारं मघवा वसौ धात् ॥ १३ ॥

क्षियन्तम्[2] । निवसन्तमपि[3] । अनिवसन्तम्[4] । एकम्[5] । करोति । उत्क्षिपति प्रेरयति[6] च । सङ्ग्रामोत्थं रेणुम्[7] । समूह्य[8] । शत्रूणां विभञ्जनशीलः[9] । यथा अशनिमान्[10] । द्यौः[11] प्रजानां भञ्जनं करोति । सोऽयम्[12] । स्तोतारम् । धने । दधाति[13][14] ।

अयं चक्रमिषणत्सूर्यस्य न्येतशं रीरमत्ससृमाणम् ।
आ कृष्ण ईं जुहुराणो जिघर्ति त्वचो बुध्ने रजसो अस्य योनौ ॥ १४ ॥

अयं चक्रम्[15] । एकपदोत्तरा तथैकवाक्यम्[16] । इषिः[17] प्रेरणकर्मा । सूर्यरथसम्बन्धि । चक्रम्[18] ।

---

१. गर्जद्भिः Sy.

२. धनराहित्येन क्षीयमाणम् Sy.

३. धनेनाक्षीयमाणम् Sy.

४. एकं जनम् Sy.

५. अकिञ्चनः कश्चित् पुरुष इन्द्रं स्तुत्वा धनसमृद्धोऽभवदित्यर्थः Sy.

६. स्तोतुः सकाशात् प्रेरयति Sy.

७. पापम् Sy.

८. समूढम् Sy.

९. ०भज० D. ०भजन् जनशो० M. शत्रूणां विशेषेण भञ्जकः Sy.

१०. अशनिना युक्तः Sy.

११. द्यैः M. अन्तरिक्षमिव Sy.

१२. धनवानिन्द्रः Sy.

१३. ददाति M. अधात् निदधाति Sy.

१४. VM. ignores मघवा । and उत ॥ उत अपि च Sy.

१५. 'प्रैतशं सूर्ये पस्पृधानम्' (RV. 1.61.15.c) इत्यर्धर्चे पूर्वं काचिदाख्यायिका सूचिता । अत्रापि 'अयं चक्रम्', इति पूर्वार्धे सा सूच्यते । स्वश्वनामा कश्चिद्राजा । स च पुत्रार्थं सूर्यमुपास्ते । स च सूर्यः पुत्ररूपेण स्वयमेव तत्रोत्पन्नः सन्नेतशाख्येन महर्षिणा सार्धं युद्धं चकार । तदानीं स ऋषिर्युद्धे जयार्थमिन्द्रं तुष्टाव । स इन्द्रस्तेन स्तूयमानः सन् स्वश्वपुत्रस्य सूर्यस्य सम्बन्धिनः सङ्ग्रामात् एनमपालयदिति Sy.

१६. थैक० P.

१७. इषिः प्रेरणकर्मा should immediately follow इषणत् ।

१८. आयुधम् Sy.

अयं[1] ततः। इषणत्[2]=प्रावृहदथ तेन चक्रेर्गतशस्य शत्रुं हत्वा[3]। तमेतशम्[4]। निरीरमत्[5]=रमयामास "प्रैतशं सूर्ये [6]पस्पृधानम्" इति[7] मन्त्रः। तम एतशः[8]। त्वचिः[9] संवरणकर्मा तेज उच्यते तस्य[10]। मूलभूते। उदकस्य। स्थान[11]भूते वर्तमानम्[12][13]।

**असिंक्न्यां यजंमानो न होतां ॥ १५ ॥**

[ असिक्न्याम् ][14]

**गव्यन्त इन्द्रं सख्याय विप्रा अश्वायन्तो वृषणं वाजयंन्तः।**
**जनीयन्तो जनिदामक्षितोतिमा च्यावयामोऽवते न कोशम् ॥ १६ ॥**

[ गव्यन्त ][15]। इन्द्रम्। मेधाविनः[16]। गा[17] अश्वान्[17], अन्नं[17] चेच्छन्तः[17] वयम्। आच्यावयामः[18]

---

१. इन्द्रः Sy.
२. प्रैरयत् Sy.
३. जित्वा D.
४. एतशनामानमृषिम् Sy.
५. निरिर० P. न्यरीरमत् निवारितवान् Sy.
६. ०यस्प० M.
७. RV. I. 61. 15.c
८. एतशम् is suggested for एतशः ॥ एनमिन्द्रम् Sy.
९. त्वत् M.
१०. तेजसः Sy.
११. स्थानेऽन्तरिक्षे स्थितम् Sy.
१२. The passage beginning with मन्त्रः and ending with वर्तमानम् is omitted by P.
१३. VM. ignores ससृमाणम्। आ। कृष्णः। जुहुराणः। जिघर्ति and अस्य ॥ ससृमाणं युद्धार्थं सरन्तं गच्छन्तम्। कृष्णः कृष्णवर्णो मेघः। जुहुराणः कुटिलं यथा गच्छति तथा सञ्चरन्। आजिघर्ति आसिञ्चति। शत्रूणां प्रेरिताच्चक्रादेस्त्रस्तं ररक्षेत्यर्थः Sy.
१४. The *pratīka* is supplied by the Editor. The stanza consists of one *pāda* only. VM. does not explain the stanza. It is described by Sāyaṇa as *Ekapadā Virāṭ*. Sy's commentary is added here for facility of reference :— एकपदेयमृक् पूर्वर्चा सह दृष्टान्तत्वेन सम्बध्यते। असिक्न्यां रात्रौ यजमानो न यजमान इव होता होतारमाह्वातारमग्निम्। द्वितीयार्थे प्रथमा। सोमेनासिञ्चति तद्वन्मेघ इन्द्रमासिञ्चतीत्यर्थः।
१५. The *pratīka* is supplied by the Editor. The commentary on this stanza is omitted by P.
१६. स्तोतारो वयम् Sy.
१७. गा इच्छन्तः, अश्वानिच्छन्तः, वाजमन्नमिच्छन्तः Sy.
१८. आगमयामः Sy.

एवम्। भार्यामिच्छन्तः[1]। जनीनां दातारम्[2]। अक्षीणपरिरक्षणम्[3]। यथा[4]। कूपे[5]। दृतिमुदकाहरणार्थमाच्यावयन्ति[6] सरस्वतीतीरे कोशैरुदकमुद्धरन्ति न[7] घटैः[8]।

**त्राता नो बोधि ददृशान आपिरभिख्याता मर्डिता सोम्यानाम् ।**
**सखा पिता पितृतमः पितॄणां कर्तेमु लोकमुशते वयोधाः ॥ १७ ॥**

त्राता[9]। रक्षकः। अस्माकं भवामीति[10]। बुध्यस्व[11]। आपिः[12]। दृश्यमानः[13]। सोमार्हाणाम्[14]। अभिख्यानं कुर्वन्[15]। सुखयंश्च[16] तान्[17]। सखा[18] त्वम् केषाञ्चित्। पितृतमश्च[19], पितॄणाम्[20], अतिशयेन पाता[21]=पितेत्यर्थः[22]। कर्ता[23] च। इमम्। लोकम्[24]। कामयमानाय[25]। अन्नस्य दाता[26] चेति[27]।

---

१. जायाश्चेच्छन्तः Sy.

२. जायाप्रदम् Sy.

३. अक्षीणं M. अक्षीणरक्षम्। सर्वदा रक्षाकरमित्यर्थः। एवम्भूतम् Sy.

४. तत्र दृष्टान्तः Sy.

५. अवत इति कूपनाम Ngh. 3. 23.

६. जलोद्धरणपात्रमिव, पुरुषा जलोद्धरणपात्रं जलेन पूरयितुं कूपे यथा आच्यावयन्ति तथा वयमाच्यावयाम इत्यर्थः Sy.

७. नि M., D. न seems to be unnecessary.

८. VM. ignores सख्याय and वृषणम्॥ सख्याय इन्द्रसम्बन्धिने सखित्वाय। वृषणं कामानां वर्षितारम् Sy.

९. हे इन्द्र ! Sy.

१०. The passage beginning with त्राता and ending with भवामीति is omitted by P.

११. भव Sy.

१२. आपि P., D., M. आप्तः Sy.

१३. सर्वं पालकत्वेन पश्यंस्त्वम् Sy.

१४. सोमार्हाणां यजमानादीनाम् Sy.

१५. किञ्च अभिद्रष्टा Sy.

१६. सुखयिता Sy.

१७. ता D. ०यश्वेतान् M.

१८. प्रजापतिना समानख्यातिः Sy.

१९. ०तमं च M.

२०. पालकानां मध्ये Sy.

२१. पालकः। केवलं पालको न किन्तु... अतिशयेन पालकः Sy.

२२. पितेवेत्य० M.

२३. पितॄणां स्रष्टा च त्वम् Sy.

२४. स्वर्गादिलोकम् Sy.

२५. ०मान P. स्तोत्रे Sy.

२६. वय इत्यन्ननामैतत्। अन्नप्रदो भव Sy.

२७. VM. ignores उ।

सखीयतामविता बोधि सखा गृणान इन्द्र स्तुवते वयो धाः ।
वयं ह्या ते चकृमा सबाध आभिः शमीभिर्महयन्त इन्द्र ॥ १८ ॥

सखीयताम् । सखित्वमिच्छताम्[1] । रक्षकः[2] । सखा[3] भवामीति । बुध्यस्व[4] । तथा स्तूयमानस्त्वम् । इन्द्र[5] ! स्तुवते[6] । धेहि[7] । अन्नम् । वयम् । हि[8] । तुभ्यम्[9] । एभिः[10] । कर्मभिः[11] । आचकृम[12] । पूजां कुर्वन्तः[13] । बाधसहिताः[14][15] ।

स्तुत इन्द्रो मघवा यद्ध वृत्रा भूरीण्येको अप्रतीनि हन्ति ।
अस्य प्रियो जरिता यस्य शर्मन्नकिर्देवा वारयन्ते न मर्ताः ॥ १९ ॥

स्तुतः[16] । स्तुतः[17] । इन्द्रः । धनवान् । यस्मात्[18] । शत्रून् । बहून्[19] । एक एव[20] । अप्रतिगतान्[21] । हन्ति[22] । तस्मादस्य[23] । प्रियः[24] । स्तोता । यस्येन्द्रस्य । प्रिये[25] स्तोत्रे[26] क्रियमाणे स्तोतारम् ।

---

१. सखित्वमिच्छतामस्माकम् Sy.
२. रक्षिता Sy.
३. सखा भव Sy.
४. बुध्यस्व (स्व) M. भव Sy.
५. हे इन्द्र ! त्वम् Sy.
६. स्तुतिं कुर्वते मह्यम् Sy.
७. अन्नं धेहि Sy.
८. खलु Sy.
९. त्वाम् Sy.
१०. किं कुर्वन्तः ? आभिः प्रत्यक्षेणोपलभ्यमानैः Sy.
११. स्तुतिरूपैः कर्मभिः Sy.
१२. आह्वयामः Sy.
१३. त्वां पूजयन्तः Sy.
१४. बाध्वा सतिहित M. बाधासहिताः Sy.
१५. VM. ignores इन्द्र ।
१६. इन्द्रस्य वृत्रघ्नः पुरोडाशस्य 'स्तुत इन्द्रः' इति याज्या । सूत्रितञ्च— 'स्तुत इन्द्रो मघवा यद्ध वृत्रेवा यस्य इन्द्रः सत्यः सम्राट्' (ASS. 3. 8.) इति Sy.
१७. अस्माभिः स्तुतो भवति तदा Sy.
१८. यदा Sy.
१९. Omitted by D. बहूनि Sy.
२०. एव एक P. असहाय एव Sy.
२१. अप्रतिगमनानि । अभिगमनयुक्तानीत्यर्थः Sy.
२२. हिनस्ति Sy.
२३. इन्द्रस्य Sy.
२४. प्रियो भवति Sy.
२५. ०य P., D.
२६. शर्मणि आश्रये वर्तमानं स्तोतारम् Sy.

देवाश्च। मनुष्याश्च। न। वारयन्तेऽपि[1] तर्हि शृण्वन्ति[2]।

**ए॒वा न॒ इन्द्रो॑ म॒घवा॑ विर॒प्शी कर॑त्स॒त्या च॑र्षणी॒धृद॑न॒र्वा ।**
**त्वं राजा॑ ज॒नुषां॑ धेह्य॒स्मे अधि॒ श्रवो॒ माहि॑नं॒ यज्ज॑रि॒त्रे ॥ २० ॥**

[3]एवा नः। एवम्[4]। अस्मान्[5]। इन्द्रः। धनवान्। महान्[6]। करोतु। सत्यान्[7]। मनुष्याणां धर्ता[8]। शत्रुभिरप्रत्युतः[9]। त्वम्। राजा[10]। जातानाम्[11]। अस्मासु। अधिधेहि[12]। श्रवः[13]=अन्नं धनं च। यत्। जरित्रे[14]। प्रयच्छसि तदिति[15][16]।

**नू ष्टु॒त इ॑न्द्र॒ नू गृ॑णा॒न इषं॑ जरि॒त्रे न॒द्यो॒३॑ न पी॑पेः ।**
**अका॑रि ते हरिवो॒ ब्रह्म॒ नव्यं॑ धि॒या स्या॑म र॒थ्यः॑ सदा॒साः ॥ २१ ॥**

[ नू ष्टुत ][17]

---

१. चार॰ P. निवारणं न कुर्वन्ति Sy.

२. VM. ignores ह and नकिः ॥ ह खलु। नकिः न Sy.

३. आग्निमारुतशस्त्रे 'एवा न इन्द्रः' इति परिधानीया। सूत्रितञ्च—'एवा न इन्द्रो मघवा विरप्शीति परिदध्यात्' (ĀSS. 5. 20.) इति Sy.

४. अस्माभिः स्तुतः सन् Sy.

५. अस्माकम् Sy.

६. बहुविधशब्दवान् Sy.

७. सत्यं P., D. सत्यरूपाण्यभिमतानि फलानि Sy.

८. सर्वासां प्रजानां धारयिता Sy.

९. प्र॰ M. केनापि प्रतिकूलेन न प्राप्त- इत्यर्थः Sy.

१०. प्रभुः Sy.

११. जन्मवतां सर्वेषाम् Sy.

१२. अधिदेहि M. अधिकत्वेन धेहि Sy.

१३. यशः Sy.

१४. स्तोत्रे देयं तद्यशः Sy.

१५. 'एवा न इन्द्रो मघवा विरप्शीत्युत्तमया परिदधातीयं वा इन्द्रो मघवा विरप्शी' (AB. 3. 38.) इत्यादि ब्राह्मणम् Sy.

१६. VM. ignores माहिनम् ॥ माहिनं महिम्नोपेतम् Sy.
Ms. D. puts the figure ॥१७॥ here to indicate the end of seventeenth hymn. No such number is given in P. and M.

१७. The *pratika* is supplied by the Editor. This stanza has already been explained. See RV. IV. 16. 21.

IV.18.

अयं पन्था अनुवित्तः पुराणो यतो देवा उदजायन्त विश्वे ।
अतश्चिदा जनिषीष्ट प्रवृद्धो मा मातरममुया पत्तवे कः ॥ १ ॥

अयम्—

१. 'अयं पन्थाः' इति त्रयोदशर्चमष्टमं सूक्तं त्रैष्टुभम्। अत्रानुक्रमणिका—'अयं पन्थाः' सप्तोना संवाद इन्द्रादिति वामदेवानाम् (KSA. 21. 18. p. 17.) इति। 'यस्य वाक्यं स ऋषिः, या तेनोच्यते सा देवता' (KSA. 2. 4. 5. p. 1.) इति परिभाषितत्वाद् ऋषिदेवते तत्र तत्र ज्ञातव्ये। अस्मिन् सूक्ते इन्द्रादिति वामदेवसंवादरूपिणी काचिदाख्यायिका श्लोकरूपेण सूच्यते—

गर्भस्थो ज्ञानसम्पन्नो
　वामदेवो महामुनिः।
मतिं चक्रे न जायेयं
　योनिदेशात्तु मातृतः ॥१॥
किन्तु पार्श्वावितश्चेति
　ज्ञात्वा नु जननी त्विदम्।
दध्यौ शान्त्यै शचीं देवी-
　मदितिं त्विन्द्रमातरम् ॥२॥
अदितिस्त्विन्द्रसहिता
　गर्भिणीमभ्यगाद्वने ।
अदितीन्द्रवामदेवाः
　संवादमथ चक्रिरे ॥३॥
संवाद इति सूत्रेण
　कथा सैवात्र सूच्यते।
नोक्तो वक्तृविशेषोऽत्र
　ह्युपदेशेष्वनुक्तितः ।
अर्थतस्त्ववगन्तव्यो
　वक्तृभेद इति स्थितिः ॥४॥
इन्द्रोऽदितिर्ऋषिश्चासि-
　न्मिथः सूक्ते समूचिरे।
गर्भे शयानं सुचिरं
　मातुर्गर्भाद्विनिर्गतम् ॥५॥
वामदेवं प्रति ब्रूत
　आद्ययर्चा शतक्रतुः।
द्वितीयादिभिरर्धर्चै-
　र्ऋषिरत्राह पञ्चभिः ॥६॥
'नही न्वस्येति सप्त स्यु-
　रर्चा अदितेर्वचः ।
'ममच्चन त्वा युवति-
　रित्यृचः पञ्च वै मुनेः ॥७॥
दौर्गत्यशान्तिमत्राह
　वामदेवस्तथान्त्यया ।
एवमर्थाद्वक्तृभेद
　इति बह्वृचशासनम् ॥८॥
अर्थो विवेकस्पष्टत्वा-
　दुपदेशेषु नेरितः ।
ऋषिदैवतसिद्ध्यर्थं
　विवेकादर्थ ईरितः ॥९॥

VD. 4. 18. p. 110. इति Sy. These *Slokas* of the *anukramaṇīBhāṣya* are quoted on RV. IV. 18. 13. by Dyādviveda also with slight variation.

इन्द्रादिति वामदेवानां सम्वादस्तत्र दीर्घकालं वामदेवो गर्भे[1] शिश्ये तत इन्द्र आह, अयमिति—अयम्[2]। योनिमार्गः[3]। सर्वैरेव जायमानैरनुक्रमेण[4] लब्धः। पुराणः[5]। यतः[6] पथः। देवा अपि। उदजायन्त[7]। सर्वे। वामदेवश्चास्मात्। एव। मार्गात्[8]। आजनितुमर्हति[9]। गर्भे[10] एव प्रवृद्धशिराः[11]। मा[12]। मातरम्[13]। अमूम्[14], द्वितीयायाः शादेशः[15]। पतितुम्[16]। कार्षीदिति[17] परोक्षेण वामदेवमाहेति।

**नाहमतो निरया दुर्गहैतत्तिरश्चता पार्श्वान्निर्गमाणि।**
**बहूनि मे अकृता कर्त्वानि युध्यै त्वेन सं त्वेन पृच्छै ॥ २ ॥**

नाहम्। गर्भे शयानस्य वामदेवस्य बुद्धिप्रकारं स्वयमेवाह[18]। न। अहम्। अस्माद्योनिमार्गात्। निर्गच्छामि[19]। दुःखेन गाहितव्यं[20] हि। एतत्[21] योन्याख्यं स्थानं सङ्कटम्। तस्मात् तिरश्चीनात्। पार्श्वात्[22]। अहं निर्गच्छानि, तिर्यक्शब्दात् **'अपादाने चाहीयरुहोः[23]'** इति तसिः,

---

१. ०र्भो P.
२. प्रत्यक्षेणोपलभ्यमानः Sy.
३. योनिनिर्गमनरूपो मार्गः Sy.
४. आनुपूर्व्येण Sy.
५. अनादिः Sy.
६. यस्माद्योनिमार्गात् Sy.
७. उदाजयतपि P. उदयजायन्त M. उत्कर्षेणोत्पन्ना भवन्ति। तस्माद्योनिमार्गान्मनुष्या उत्पन्ना भवन्तीति किमु वक्तव्यम् Sy.
८. योनिमार्गात् Sy.
९. समन्ताज्जायताम् Sy.
१०. भर्ग P.
११. ०र्द्धं शिराः P. ०द्धशिरः M. गर्भे प्रकर्षेण वृद्धिं गतो वामदेवः Sy.
१२. मामा M.
१३. मातम् P.
१४. अमून् M.
१५. ०तीयाच्छोदेशं M. यादेशः is suggested for शादेशः।
१६. पतनाय, मरणायेत्यर्थः Sy.
१७. करोतु Sy.
१८. वामदेव एवमुक्तवन्तमिन्द्रं प्रत्याह Sy.
१९. निरयाणि Sy.
२०. दुःखन गामित० P. दुर्ग्रहम्। दुःखेन ग्राह्यम्, न प्राप्यं भवतीत्यर्थः Sy.
२१. योनिनिर्गमनरूपं वर्त्म Sy.
२२. योनिदेशादनिर्गतोऽहं पार्श्वं भित्त्वा निर्गच्छानीत्यर्थः। अन्यैरकृतमिदमेव न केवलं मया क्रियते किन्त्वन्यैरकृतानि Sy.
२३. ०हिय० P. Pa. 5. 4. 45.

ततो विभक्तेः सादेशः[1]। बहूनि[2]। मे जातस्य। अकृतानि जन्मान्तरे। अस्मिन् जन्मनि[3] कर्तव्यानि[4] कार्याणि। केनचिद्राक्षसवर्गेण[5]। युद्धं करवाणि। सम्पृच्छै[6] च। केनचित्[7] ब्रह्मविद्यामिति।

परायतीं मातरमन्वचष्ट न नानु गान्यनु नू गमानि ।
त्वष्टुर्गृहे अपिबत्सोममिन्द्रः शतधन्यं चम्वोः सुतस्य ॥ ३ ॥

परायतीम्[8]। ममानिर्गमनेन[9] मातरम्। परागच्छन्तीं[10] म्रियमाणाम्। इन्द्रः। अनु[11]-ब्रवीति। ततोऽहं न[12]। न। अनुगच्छामि[13]। अपि तर्हि क्षिप्रमेव। अनुगमानि[14]=अधोमार्गेण गच्छामि। यथा वामदेवो गर्भे[15] चिरं शिश्ये तथेन्द्रश्चादित्या उदरे तत् किं समृद्धमुता[16]समृद्धमिति सन्दिहान आह[17] त्वष्टुरित्यर्धर्चयोरनन्तरयोरेको[18] वाक्यार्थः, त्वष्टुः[19]। गृहे। सोमम्। अनेकधनक्रीतम्[20]। तं[21] प्रसह्य अपिबत्[22]। अभिषवणफलकयोः[23]। सुतं[24] छन्दोऽनुविधानार्थे विभक्तिव्यत्ययः, तच्चैतदस्य व्यृद्धं[25] कर्म।

---

१. ग्लादे० M. ह्रादेशः is suggested for सादेशः॥ The passage तिर्यक्शब्दात्...सादेशः should immediately follow तिरश्चीनात् and precede पार्श्वात्।
२. कर्माणि Sy. ३. जनि M.
४. कर्तव्यानि सन्ति Sy.
५. एकेन सपत्नेन विवदमानेन सह Sy.
६. संवृच्छैव M. ०च्छे P. सम्यक् पृच्छानि Sy.
७. एकेन बुभुत्सुना Sy.
८. ०यति P.
९. मयि गर्भस्थिते सतीन्द्रो मदीयाम् Sy.
१०. ०न्ती P. परेतां म्रियमाणाम् Sy.
११. ०न्ब्रेनु० P., D. अन्वब्रवीत् Sy.
१२. ना P. एवमपीदानीं गर्भे स्थितोऽहं पुराणं पन्थानं न Sy.
१३. अनुगच्छानीति Sy.
१४. नुगमनानि P. अनुगमनानि M. अनुगच्छान्येव Sy.
१५. ०र्भेण P., D.
१६. ०मृता० P.
१७. ह P. वामदेवः स्वकीयमकृत्यकारित्वं परिहृत्येन्द्रस्याकृत्यकारित्वमुत्तरार्धर्चेन प्रतिपादयति Sy.
१८. ०र्चयोरेको M.
१९. त्वष्टुः सम्बन्धिनि गृहेऽनुपहूतः सन् Sy.
२०. बहुधनेन क्रीतम् Sy.
२१. तत् M.
२२. बलात्कारेण सोमस्य पानं कृतवान्। अयमर्थस्तैत्तिरीयैः 'त्वष्टा हतपुत्रो वीन्द्रं सोममाहरत्' (TS.2.4.12.1.) इत्यनुवाके महता प्रबन्धेन प्रपञ्चितः Sy.
२३. ०णं फ० D. ०यो P. सोमाभिषवफलकयोः Sy.
२४. सुधन् P. सुतस्य सोमं सुतवतोऽभिषुतवतः Sy. Sy. construes सुतस्य with त्वष्टुः।
२५. वृद्धं P.

कि स ऋधक्कृणवद्यं सहस्रं मासो जभार शरदश्च पूर्वीः ।
नही न्वस्य प्रतिमानमस्त्यन्तर्जातेषूत ये जनित्वाः ॥ ४ ॥

[कि सः ।][1] अथ किम्[2]। स इन्द्रः[3]। ऋद्धं[4] कर्म। कृतवान्[5]। यमेनम्[6]। अनेकान्[7]। मासान्[8]। वह्वीः। च। शरदः[9]। मातोदरे[10] बभारेति[11]। अथेन्द्रमाताऽदितिराह[12] नहीति—नहि[13]। अस्ति[13]। इन्द्रस्य। प्रतिमानं[14] सदृशम्। जातेषु[15]। अन्तः[16]। अपि च[17]। ये[18]। जनिष्यमाणास्तेषु[19] च तत्कथमित्याह[20]।

अवद्यमिव मन्यमाना गुहाकरिन्द्रं माता वीर्येणा न्यृष्टम् ।
अथोदस्थात्स्वयमत्कं वसान आ रोदसी अपृणाज्जायमानः ॥ ५ ॥

अवद्यमिव[21]। गर्ह्यमिव[22]। इन्द्रम्। मन्यमाना[23]। गुहायाम्[24]। कृतवती[25]। माता[26]। वीर्येण[27]। न्यृष्टं[28] यथा ह्रद ऊर्मिभिर्न्यृष्टो[29] भवत्येवमिन्द्रो वीर्येण न्यृष्टः सोऽयं सर्वान् हिंस्यादिति

---

१. The *pratika* is supplied by the Editor.
२. यत्किमपि । सर्वमपीत्यर्थः Sy.
३. इन्द्रं M.
४. विरुद्धं कर्म Sy.
५. अकरोत् Sy.
६. इन्द्रम् Sy.
७. बहून् Sy.
८. यनेनमनेका स्मा सात् P.
९. संवत्सरांश्च Sy.
१०. मासोद० P.
अदितिः Sy.
११. जभार—बिभर्तेरिदं रूपम् । गर्भे स्थित इन्द्रो बहुषु संवत्सरेष्वदिति क्लेशितवानित्यर्थः Sy.
१२. इन्द्रस्याक्षेपमसहमानाऽदितिरिन्द्रमाताप्येनं प्रति ब्रूते । हे वामदेव ! Sy.
१३. न विद्यते खलु Sy.
१४. उपमानम् Sy.
१५. M. adds भूतेषु after जातेषु ॥
उत्पन्नेषु देवादिषु Sy.
१६. मध्ये Sy.
१७. अपि M.
१८. देवादयः Sy.
१९. जनयितव्या जनयिष्यमाणास्तेषु मध्येऽस्येन्द्रस्य प्रतिमानं नास्ति Sy.
२०. VM. ignores नु ॥ नु इति पादपूरणार्थः Sy.
२१. ०मिति P., D.
२२. गह्य० P.
गर्ह्यमिव Sy.
२३. जानती Sy.
२४. गुहायां गह्वररूपे सूतिकागृहे जातम् Sy.
२५. अकरोत् Sy.
२६. इन्द्रजनन्यदितिः Sy.
२७. सामर्थ्येन Sy.
२८. न्य० M.
नितरां प्राप्तम् Sy.
२९. ०दमू० P., D.

गुहायां करणम्। अयांयम्[1]। उदस्थात्[2]। स्वयमेव। तेजोरूपम्। आच्छादयन्[3]। आपूरयच्च[4]। द्यावापृथिवी[5] तेजसा। जायमानः[6]।

ए॒ता अ॑र्षन्त्यल॒लाभव॑न्तीर्ऋ॒ताव॑रीरिव सं॒क्रोश॑मानाः ।
ए॒ता वि पृ॑च्छ॒ किमि॒दं भ॑नन्ति॒ कमापो॒ अद्रिं॑ परि॒धिं रु॑जन्ति ॥ ६ ॥

एताः। एता आपः[7]। समुद्रं प्रति गच्छन्ति। अललाशब्दं[8] कुर्वन्त्यः। धेनव[9] इव[10]। सह शब्दायमानाः[11]। वामदेव ! त्वमेताः[12]। विपृच्छ[13]। किमेतासु प्रष्टव्यमिति चेत् ? किम्। इम्[14]। आपः[15]। शब्दायन्ते[16], भनिः[17] शब्दकर्मा, भयादिन्द्रस्य[18] शब्दायन्त इत्यभिप्रायः[19]। कं[20] च। मेघम्। अपां निवारकम्[21]। आत्मनो निर्गमनार्थं भजन्तीति[22] स चेन्द्रहतो वृत्र इति[23]।

---

१. अनन्तरम् Sy.
२. उदस्मात् M.
उत्कर्षेणातिष्ठत् Sy.
३. आच्छादकः सन् दधान इत्यर्थः Sy.
४. समन्तात् पूरयामास Sy.
५. किञ्च द्यावापृथिव्यौ Sy.
६. ०ना P.
उत्पद्यमान इन्द्रः Sy.
७. नद्यः Sy.
८. अलचाश० M. अललेत्येवंरूपं शब्दं कुर्वत्यः Sy.
९. उदकवत्य एव Sy.
१०. Omitted by P.
११. ०नो P., D. इन्द्रमहत्त्वप्रतिपादकोद्भूतेन हर्षेण बहुविधं शब्दायमानाः सत्यः Sy.
१२. नदीः Sy.
१३. विच्छ P. विशेषेण पृष्टवान् भव। एवं सम्पृच्छ। विचारिते सत्येतच्छब्दायमानमिन्द्रमाहात्म्यस्यैव वचनं भवतीत्यर्थः Sy.
१४. इदम् is suggested for इम् ॥ एवम्भूता नद्यः इदं किम् Sy.
१५. उदकानि Sy.
१६. श्रोत्रग्राह्यं शब्दायमानं किं वदन्तीममर्थं हे ऋषे ! त्वम् Sy.
१७. भनः M.
१८. भवादि० P.
१९. ०यम् M.
२०. किं M.
२१. ०रयामा० P. आवरकम् Sy.
२२. भञ्जन्ति। आपः कमपि मेघं न भञ्जन्ति किन्त्विन्द्रो मम पुत्र एवोदकावरकं मेघं भङ्क्त्वापः प्रवर्तयतीत्यर्थः Sy.
२३. वृत्रमिति M.

किमु ष्विदस्मै निविदो भनन्तेन्द्रस्यावद्यं दिधिषन्त आपः ।
ममैतान्पुत्रो महता वधेन वृत्रं जघन्वाँ असृजद्वि सिन्धून् ॥ ७ ॥

किमु । निविदिति वाङ्नाम लौकिकानां वाचः । किमवद्यम् । इन्द्राय । वदन्ति । यच्चास्य । अवद्यं वृत्रवधादि तदपि । धारयन्ति । आपः, तथा च श्लोकः

'पाप्मानमिन्द्रस्य मही जलं च ।
वृक्षाश्च कामं जगृहुः स्त्रियश्च ॥इति॥'

मम । एतान् । पुत्रः । वृत्रम् । महता । वज्रेण । हत्वा । व्यसृजत । सिन्धूनिति ।

अथ सूक्तशेषेण वामदेव इन्द्रं स्तौति—

ममच्चन त्वा युवतिः परास ममच्चन त्वा कुषवा जगार ।
ममच्चिदापः शिशवे ममृड्युर्ममच्चिदिन्द्रः सहसोदतिष्ठत् ॥ ८ ॥

ममदिति । मादयन्ती । त्वाम् । युवतिरदितिः । स्वोदरात् परास्तवती । तथा गर्भात्

---

१. यदेन्द्रो वृत्रासुरं हतवान् तदा शाश्वतीं ब्रह्महत्यां प्राप्तवानिति वामदेवस्याभिप्रायमुन्नीयादितिराह Sy.
२. निविनिति P., D. मरुत्वतीयशस्त्रे प्रयुज्यमानानि 'मरुत्स्तोत्रो मरुद्गणः' इत्यादीनीन्द्रस्तुतिप्रतिपादकानि कानिचित् पदानि निविच्छब्देनोच्यन्ते ता निविदः Sy. निविदिति वाङ्नाम Ngh. 1. 11.
३. ब्रह्महत्यारूपं पापम् Sy.
४. इमं वृत्रवधनिमित्तं ब्रह्महत्यारूपं पापं प्राप्नुवन्तमिन्द्रम् Sy.
५. भणन्ति । किं वदन्तीति चेत् ? तर्हीन्द्रं पापरहितं मत्वा निविदः स्तुवन्ति । कथमिन्द्रस्य पापरहितत्वम् ? उच्यते Sy.
६. इन्द्रस्य Sy.
७. आपः फेनरूपेण Sy.
८. The quotation is untraced.
९. मदीयः Sy.
१०. सिन्धूनुदकानि Sy.
११. इन्द्रः Sy.
१२. प्रभूतेन Sy.
१३. वध इति वज्रनामैतत् Ngh. 2.20.
१४. हतवान् Sy.
१५. विशेषेण स्वैरत्वेन सर्तुं सृष्टवान् । इन्द्रेणोत्सृष्टा आपस्तस्य पापं जगृहुरित्यर्थः Sy.
१६. उदकानि Sy.
१७. VM. ignores उ । and स्वित् ।
१८. इन्द्रः M. सूक्तशेषेण ऋषिरिन्द्रं स्तौति हे इन्द्र ! Sy.
१९. माद्यन्त्येव । प्रमत्तैवेत्यर्थः Sy.
२०. ०न्तीस्त्वां P. त्वं P., D.
२१. अदिति P. त्वदीया मातादितिः Sy.
२२. परात् परास्त० P. पराचिक्षेप Sy.

परास्तं[1] मायन्ती[2]। एव। कुपतिर्निष्कर्षकर्मा निष्कृष्टोदरी[3]। जगार[4]। तथा मायन्त्यः[5]। एव। आपस्त्र। जाताय[6] शिशवे। स्नापनवेलायां सुखमुत्पादयाञ्चक्रुः[7]। अथ परोक्षः—मायन्[8]। एव। इन्द्रः[9] तदानीमेव। बलेन[10]। उदतिष्ठदिति[11]।

**ममंच्चन तें मघवुन्व्यंसो निविविध्वाँ अप हनूं जघानं।**
**अधा निविंद्ध उत्तरो बभूवाञ्छिरो दासस्य सं पिंणग्वधेनं ॥ ९ ॥**

ममत्। मायन्[12]। एव। तव[13]। इन्द्र[14]! व्यंसासुरः[15]। नितरां विध्यन्[16]। हनू[17]। अपजघान[18]। अथ[19]। व्यंसेन न्यङ् विद्धः सन्[20]। स्वबलेन व्यंसस्योत्तरः[21]। भवन्[22]। तस्यासुरस्य[23]। शिरस्त्वम्। वज्रेण। सं पिणक्[24]—चूर्णीकृतवानिति।

**गृष्टिः ससूव स्थविरं तवागामनाधृष्यं वृषभं तुम्रमिन्द्रम्।**
**अरीळ्हं वृत्सं चरथाय माता स्वयं गातुं तन्वं इच्छमानम् ॥ १० ॥**

गृष्टिः। 'यज्ञो[25] दक्षिणामभ्यध्यायत् तां[26] समभवत् तदिन्द्रोऽप्याचत् सोऽमन्यत यो वा इतो

---

१. परान्तं M.
२. प्रमत्तैवेत्यर्थः Sy.
३. निक्कु॰ D. किञ्च कुषवानाम्नी काचिद्राक्षसी सा Sy. ४. गिरति स्म Sy.
५. हे इन्द्र ! प्रमाद्यन्त्यः Sy.
६. जाताय तुभ्यम् Sy.
७. सुखयाञ्चक्रुः Sy.
८. The passage beginning with गर्भात् and ending with मायन् is omitted by P.
९. वेन्द्र वेन्द्रः P.
१०. स्वेन वीर्येण Sy.
११. सूतिकागृहाद्राक्षसीं बाधमानः समुत्कर्षेण तस्थौ Sy.
१२. प्रमाद्यन्नेव Sy.
१३. त्वदीये Sy.
१४. माद्यन्नेन्द्र तमेव इ P. हे धनवन्! इन्द्र ! Sy.
१५. व्यंसो नाम राक्षसः Sy.
१६. प्रविध्यन् Sy.
१७. मुखपार्श्वे Sy.
१८. अपहतवान् Sy.
१९. अनन्तरं हे इन्द्र ! Sy.
२०. विद्धः सन् is omitted by M. राक्षसेन ताडितस्त्वम् Sy.
२१. उत्तरः व्यंसादधिकबलः Sy.
२२. भरन् M. भूतः सन् Sy.
२३. क्षीणस्य व्यंसस्य Sy.
२४. स बिणक् M. पिष्टवानसि Sy.
२५. यज्ञ P. २६. ता M.

जनिष्यते स इदं भविष्यतीति तां प्राविशत् तस्या इन्द्र एवाजायत सोऽमन्यत यो वै मदितो[1]ऽपरो जनिष्यते स इदं भविष्यतीति[2] तस्या इन्द्रो[3]ऽनुमृश्य योनिमाच्छिनत् सासूत। वशाभवत्[4] इति ब्राह्मणम् ॥ सकृत्प्रसूता गौर्गृष्टिरित्युच्यते सा[5]। सूतवती[6]। पुरातनम्[7]। वृद्धानामभिगन्तारम्[8]। अनाधृष्यम्[9], सः। वृषभम्[10]। शत्रूणां प्रेरकम्। इन्द्रम्। सोऽयं जातस्तदानीमेव गतः[11]स्तस्मान्मातुः जिह्वया लीढः[12]। वत्स[13] उच्यते। स्वैरमयं सञ्चरत्विति[14]। स्वयमेव परानपेक्षम्[15]। आत्मनः शरीराय[16]। गमनम्[15]। इच्छमानम्[17]।[18]

**उत माता मंहिषमन्ववेनदमी त्वां जहति पुत्र देवाः।**
**अथाब्रवीद् वृत्रमिन्द्रो हनिष्यन्त्सखे विष्णो वितरं वि क्रमस्व ॥ ११ ॥**

उत माता। अपि च। माता[19]। महान्तं[20] पुत्रमभिलषितम्। अन्वकामयत[21]। अमी[22]। देवाः। हे पुत्र[23]! वृत्रेण पीड्यमानाः। त्वाम्। परित्यजन्ति[24], पतिमनिच्छन्तस्तस्माद् वृत्रं

---

१. वितो॰ D.
२. The passage beginning with तां प्राविशत् and ending with भविष्यतीति is omitted by P.
३. इन्द्रः is omitted by M.
४. TS. 6. 1. 3. 6.
५. काचिद् गौः Sy.
६. सुषुवे Sy.
७. वयसा प्रवृद्धम् Sy.
८. प्रवृद्धबलम् Sy.
९. शत्रुभिरनभिभाव्यम् Sy.
१०. सेचनसमर्थम् Sy.
११. गतः is omitted by M.
१२. लीढो P. शत्रुभिरनभिभूतम् Sy.
१३. भत्स P., D. वत्सं यथा Sy.
१४. स्वेच्छया सञ्चरणायेन्द्रं सुषुवे Sy.
१५. अन्यनिरपेक्षगमनम् Sy.
१६. स्वशरीराय Sy.
१७. इच्छन्तम् is suggested for इच्छमानम्।
१८. VM. ignores माता ॥ इन्द्रजनन्यदितिः Sy.
१९. इत्युक्तवतीन्द्रस्य माता अदितिरिन्द्रम् Sy. माता देवमाता BB.
२०. महिष इति महन्नामैतत् (Ngh. 3. 3.) Sy. महनीयं महान्तं वा पुत्रम् BB.
२१. अयाचत Sy. अनुक्रमेणोद्दीप्तवती। ज्ञापितवतीत्यर्थः। माता विज्ञापितवती स्वयं च ज्ञातवानित्यर्थः। वेनतिः कान्तिकर्मा BB. २२. बह्वादयः Sy.
२३. हे मदीयपुत्र! इन्द्र! Sy. अथ माता पुत्रमब्रवीद् हे पुत्र! BB.
२४. त्यजन्ति Sy. त्यजन्ति त्वया तूष्णीमास्यत इति BB.

जहीति । अथ । अब्रवीत् । इन्द्रः । वृत्रम् । हनिष्यन् । हे सखे ! विष्णो ! अत्यन्तम् । विक्रमस्वाहं वृत्रं हनिष्यामि मम सहायो भवेति ।

**कस्ते॑ मा॒तरं॑ वि॒धवा॑मचक्रच्छ॒युं कस्त्वाम॑जिघांस॒च्चर॑न्तम् ।**
**कस्ते॑ दे॒वो अधि॑ मार्डी॒क आ॑सी॒द्यत्प्राक्षि॑णाः पि॒तरं॑ पाद॒गृह्य॑ ॥ १२ ॥**

कस्ते । जातः सन्निन्द्रो दक्षिणाया गोर्योनिमनुमृश्याच्छिनत् । यज्ञं च पितरम् । क्रोधात् पादेषु गृहीत्वा परिभ्रमय्य देशान्तरे प्राक्षिणोत्[10] तत्रेदमाह कस्त इति । हे इन्द्र ! कः[11] । त्वामृते । स्वमातरम्[12] । विधवाम्[13] । करोति[14] । यश्च भवतो भ्रमोऽयं यो वा इतो जनिष्यते स मां शयानम् । चरन्तं[15] वा हनिष्यति सर्वस्य च स्वामी भविष्यतीति तत्राह शयुमिति एवंविधबलम् । कः[16] । त्वाम् । हन्तुमिच्छति[17] । को वा । देवोऽन्यः[18] । सुखयितृवर्गे[19] । अभिभवति[20] जगत्सुखयतीत्यर्थः ।[21]

१. अनन्तरम् Sy., BB.

२. विष्णुमुवाच Sy. विदितार्थोऽभिमुखो भूत्वा वृत्रं हनिष्यन्निन्द्रो विष्णुमब्रवीत् । एवं विदितार्थं वा विष्णुमिन्द्रोऽब्रवीत् BB.

३. हन्तुमिच्छन् Sy.

४. मित्रभूत ! हरे ! त्वम् Sy. किमब्रवीत् ? हे सखे ! विष्णो ! BB.

५. हे व्यापनशील ! Sy.

६. अतिपराक्रमी भव इति Sy. विक्रान्ततरं विक्रमस्व । जहि शीघ्रं शत्रुमिति BB.

७. Omitted by P., M. तौ वाऽस्मदभिमतं साधयतमिति । एवं शत्रुमारणख्यापनप्रधानमिदं युगलमभिचरतोऽभिचर्यमाणस्य वा युक्तमिति लक्ष्यते BB. This stanza=TS. 3. 2. 11. 3.

८. ०मनुष्यमृत्स्याछिनत् P. ०श्यच्छि० M.

९. पितुः सकाशात् जनिष्यमाणाद् भीतस्त्वं त्वदीयं पितरम् Sy.

१०. प्राहिणोत् M. प्रकर्षेणावधीः । तस्मात् कारणात् Sy.

११. देवः Sy.

१२. स्वकीयजननीम् Sy.

१३. पितृवधेन पतिरहिताम् Sy.

१४. अकरोत् Sy.

१५. जाग्रतम् Sy.

१६. त्वत्तोऽन्यः Sy.

१७. ०च्छन्दि M. हन्तुमैच्छत् Sy.

१८. ०न्य P.

१९. प्रजानां सुखकरणे Sy.

२०. वर्गो भवति P., D. अधिक आसीत् Sy.

२१. अयमर्थः 'ऋक्सामे वै देवेभ्यः' (TS. 6. 1. 3. 6.) इत्यनुवाके 'यज्ञो दक्षिणामभ्यध्यायत्' इत्यादिब्राह्मणेन तैत्तिरीयकैर्बहुधा प्रपञ्चितः Sy.

अवर्त्या शुनं आन्त्राणि पेचे न देवेषु विविदे मर्डितारम् ।
अपश्यं जायाममहीयमानामधा मे श्येनो मध्वा जभार ॥ १३ ॥

अवर्त्या[1] । वृत्त्यभावात्[2] । शुनः[3] । आन्त्राणि[4] । पेचे[5] भक्षणार्थम्[6] । नच । देवेषु[7] । अहं लब्धवानस्मि[8] । सुखयितारम्[9] । दृष्टवांश्चास्मि[10] । जायाम्[11] । अन्नाभावादपूज्यमानाम्[12] । अथे[13]-न्द्रचोदितः कश्चित् । श्येनः[14] । मह्यम्[15] । मधु[16] । आजभार[17][18] ।

व्याख्यत् पञ्चममध्यायं तृतीयस्याष्टकस्य सः ।
यज्ञनारायणकुले यस्य मातुः समुद्भवः ॥

इति तृतीयाष्टके पञ्चमोऽध्यायः[19] ॥

---

१. अनया वामदेवः स्वकीयं दारिद्र्यं सूचयन्निन्द्रस्योत्कर्षमाह । वामदेवोऽहम् Sy. तथा बृहद्देवता (BD. 4. 130., 131. 126.)
अञ्जसा न जनिष्येऽहं ब्रुवाणं गर्भमेव तु ॥१३०॥
अन्वशाददितिः पुत्रमिन्द्रमात्महितैषिणी ।
देवर्षिपितृपूजार्थं य आन्त्राण्यपचच्छुनः ।
यस्य वै श्येनरूपेण ह्याहरद् वृत्रहा मधु ॥१२६॥
इति वामदेवस्त्रिष्टुभा दौर्गत्यं प्रकाशयति DDN.

२. जीवनोपायराहित्येन Sy., DDN.

३. वृत्त्यभावाच्छुनः M. शुनकसम्बन्धीनि Sy., DDN.

४. पुरीतन्ति Sy., DDN.

५. चैव M. अपचम् Sy., DDN.

६. थं P. ७. द्योतमानेषु । वह्न्यादिषु मध्ये Sy., DDN.

८. लेभे Sy., DDN.

९. इन्द्रादन्यं सुखयितारम् Sy. इन्द्रादन्यमात्मनः सुखयितारम् । मर्डितारमिति द्वयोः स्वरयोर्मध्यमत्वाभावाद् ळत्वाभावः (Cf. RPR. 1.52.) DDN.

१०. अद्राक्षम् Sy., DDN.

११. ०यम० P. स्वकीयां भार्याम् Sy., DDN.

१२. ०जमा० P. अश्लाघनीयाम् Sy., DDN.

१३. अथ अनन्तरम् Sy., DDN.

१४. श्येनवच्छीघ्रगामीन्द्रः Sy., DDN.

१५. ०ह्य M. अधा मे इति—अत्र पुरुवहवर्धयेत्यद्यादित्वाद्दीर्घः (Cf. RPR. 7. 33.) DDN.

१६. मधुरोपेतमुदकम् Sy. मधुपुरीषमिति जलनामनी (Ngh. 1. 12.) DDN.

१७. आजहार Sy., DDN.

१८. Ms. D. puts the figure ॥१८॥ here to indicate the end of eighteenth hymn. No such number is given in P. and M.

१९. The line इति...ऽध्यायः is omitted by P., D.

# ॥ अथ तृतीयाष्टके षष्ठोऽध्यायः ॥

अथैवा[1] त्वामिन्द्र[2] वज्रिन्' व्याचिख्यासति माधवः ।

निपातेष्वेव वक्तव्यं प्रागनुक्तं प्रदर्शयन् ॥ १ ॥

अथाधेति समानार्थौ[3] तौ पठन्ति च बह्वृचाः ।

अवधानेन महता ज्ञायेते तौ यथा पृथक्[4] ॥ २ ॥

न गुरुत्वं लघुत्वं वा वर्णैर्मात्राभि[5]रेव च ।

भवतश्छन्दसां[6] किन्तु प्रयत्नैश्च पृथग्विधैः[7] ॥ ३ ॥

यथा सर्षप[8]मेयेषु करोति गुरुलाघवम् ।

त्रसरेणुस्तथा वेदे प्रयत्नो वर्णगोचरः ॥ ४ ॥

एवं ह्यघौ च पर्यायौ प्रसिद्धैः[9] प्रतिपादकौ ।

पृथक् पृथक् प्रयुज्येते बह्वृचैरभिधानतः[10] ॥ ५ ॥

---

१. अथ 'एवा...वज्रिन्' RV. 4. 19. 1ᵃ.

२. त्वा इन्द्र P.

३. Omitted by M., R.

४. स्तः पृथक् पृथक् R.

५. ॰र्णै मा॰ P.

६. ॰तं छ॰ P.

७. ॰धं D.

८. यथा सरिममे॰ P., D. यथात्सरिममे॰ M. I have adopted the reading of R. सर्षप is a mustard or any other minute seed, used in weighing objects. त्रसरेणुः is 'the mote or atom of dust moving in a sun-beam (considered as an ideal weight of the lowest denomination, or equal to 3 or 30 invisible atoms).'

९. ॰द्धे P.

१०. ॰रवधानतः M., R.

'परां ह यत् स्थिरं हथ'[१] 'यद्ध स्या ते पनीयसी'[२] ।
'आ घा गमद्यदि[३] श्रवत्'[४] 'आ घा ये[५] अग्निमिन्धते'[६] ॥ ६ ॥
'इयत्तिका शकुन्तिका'[७] 'सूर्ये विषमा संजामि'[८] ।
अनयोरुत्तरेर्धर्चे द्वैविध्यं दृश्यते पदे ॥ ७ ॥
अधीयते हि द्विविधं सो[९] इत्यपि स इत्यपि ।
न तत्र वासनामेके वक्तव्यां[१०] मन्वते जनाः ॥ ८ ॥
'यथा[११]नु श्रुतामुमतिम्'[१२] 'अर्क[१३]विहस्ता सुकृते'[१४] ।
'वरुणोळास्वन्तः'[१५] इति पद्वैविध्यदर्शने[१६] ॥ ९ ॥
न[१७] तत्र दोषः[१८] पूर्वस्यां पृथङ् मित्रश्च कीर्त्यते ।
वरुणेति द्वितीयस्यामेकेनोक्तावुभावपि ॥ १० ॥

---

१. हतथ M. RV. I. 39. 3.
२. RV. V. 6. 4.
३. ०श्रमि M.
४. RV. I. 30. 8.
५. येऽग्नि० M.
६. RV. VIII. 45. 1.
७. RV. I. 191. 11.
८. RV. I. 191. 10.
९. Omitted by P.
१०. ०व्यं P., D.
११. ०नू D. ०नु P. यथा 'अनु etc. RV.
१२. RV. V. 62. 5.
१३. अत्रविहस्तासु P. अकवि० D.
१४. RV. V. 62. 6.
१५. RV. V. 62. 6.
I have separated the Vedic quotation from इति with the result that *Sandhi* is dissolved. The dissolution of *Sandhi* makes the 6th syllable long. With *Sandhi*, it would be short. The 5th is already long.
१६. ०दर्शनम् M.
१७. Omitted by P., D.
१८. ०षं M.

तस्मादत्रापि वक्तव्यं द्वैविध्यस्य प्रयोजनम् ।

तदुच्यते 'सा[1] नो' अमा[2]' 'सो चि[3]न्नु भद्रा क्षुमती[4]' ॥ ११ ॥

'सो चिन्नु वृ[5]ष्टिर्यूथ्या[6]' च[7] त्रिषू[8]कारः प्रद[9]र्शयते ।

स्पष्टीकरोति स स्त्रीत्वमू[10]ढित्याहुर्विपश्चितः ॥ १२ ॥

ननु नाम्नामनेकस्मिन् वृत्तिरर्थेऽपि युज्यते ।

तानि ह्याख्यात[11]जान्याहुर्यथा गौर्गमनादिति ॥ १३ ॥

गमनात् पृथिवी गौः[12] स्यादादित्यः पशुरेव च ।

[13]गौश्च[14] स्याद् गच्छति जलं निम्नं प्रत्येति सर्वदा ॥ १४ ॥

निपाता उपसर्गाश्च दृश्यन्ते ते[15]न हेतुना ।

बहुष्वर्थेषु येष्वे[16]ते दृश्यन्त उपमादिषु ॥ १५ ॥

बहुष्वर्थेषु धातूनां वृत्तौ यत्कारणं भवेत् ।

तदेवात्रापि भवति सा च शक्तिरिति स्थितिः ॥ १६ ॥

---

१. से M.
२. RV.X.63. 16.
३. चिनु P.
४. RV. X. 11. 3.
५. पुष्टि० P.
६. RV. X. 23. 4.
७. सो चिन्नु वृष्टिर्यूथ्या च is missing in M.
८. त्रिप्रकारः M.
९. पद्० P.
१०. ०त्वमून्विरयाहु० M.
११. Cf. तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च N. 1. 12. सर्वाण्येतानि नामानि कर्मतस्त्वाह शौनकः BD. 1. 26. 27. नाम च धातुजमाह निरुक्ते । नाम खल्वपि धातुजम् । PMBH. III. 3. p. 138.
१२. गौ D.
१३. वागा स्याद् M. वाग्वा सा R.
१४. च is omitted by D.
१५. नैव P., D. केन R.
१६. ते P.

IV. 19.

एवा त्वामिन्द्र वज्रिन्नत्र विश्वे देवासः सुहवास ऊमाः ।
महामुभे रोदसी वृद्धमृष्वं निरेकमिद्वृणते वृत्रहत्ये ॥ १ ॥

एवा त्वाम्[1] ॥ वामदेवः ॥ एवम्[2] । त्वाम् । इन्द्र ! वज्रवन् ! अस्मिन्[3] । वृत्रहनने[4] । सर्वे । देवाः । शोभनाह्वानाः[5] । अवितारः[6] । महान्तम्[7] । उभे[8] द्यावापृथिव्यौ[9] । वृद्धम्[10] । दर्शनीयम् । एकम् । एव । आभिमुख्येन प्रार्थयन्ते[11] ।

अवासृजन्त जिव्रयो न देवा भुवः सम्राळिन्द्र सत्ययोनिः ।
अहन्नहिं परिशयानमर्णः प्र वर्तनीररदो विश्वधेनाः ॥ २ ॥

अवासृजन्त । यथा[12] । जीर्णाः[13] पुत्रान् कार्येष्ववसृजन्ति[14] एवं त्वाम् । देवाः । वृत्रहत्येऽव-सृष्टवन्तः[15] । त्वं च वृत्रवधार्थं गच्छतां तेषां सम्राट्[16] । इन्द्र ! अभवः[17] । कल्याणावासस्थानः[18] ।

---

१. चतुर्थे मण्डले द्वितीयेऽनुवाकेऽष्ट सूक्तानि व्याख्यातानि । 'एवा त्वामिन्द्र' इत्येकादशर्चं नवमं सूक्तम् । तस्य मण्डलादिपरिभाषया (Cf. KSA. 12. 12. p. 5.) वामदेव ऋषिः । अनादेशपरिभाषया (Cf. KSA. 12.6.5.) त्रिष्टुप् छन्दः । इन्द्रो देवता । तथा चानुक्रान्तम् 'एवैकादश' (KSA. 22. 19. p. 17.) इति । अग्निष्टोमे माध्यन्दिनसवने मैत्रावरुणशस्त्रे इदं सूक्तम् । सूत्र्यते हि—'एवा त्वामिन्द्रो शत्रु षु णः सुमना उपाक इति याज्या' (ASS. 5. 16.) इति । पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि मैत्रावरुणशस्त्रे अहीनसूक्तं तत्स्थाने त्रीणि सम्पातसूक्तानि । तत्रेदं प्रथमं सूक्तम् । सूत्रितञ्च—'एवा त्वामिन्द्र यत्र इन्द्रः' (ASS. 7. 5.) इति Sy.

२. एवा P. उक्तप्रकारेण स्तूयमानम् Sy.

३. अस्मिन् यज्ञे Sy.

४. वृत्रहननार्थम् Sy.

५. शोभनाः P. सुहवाः Sy.

६. रक्षकाः Sy.

७. महान्तं प्रभूतम् Sy.

८. उपे च M.

९. पृथिव्यो P.

१०. गुणैः प्रवृद्धम् Sy.

११. निःशेषेण सम्भजन्ते Sy.

१२. इव Sy.

१३. प्रवृद्धाः पितरो यूनः पुत्रानिव Sy.

१४. ०ष्ववसृ० M.

१५. असुरवधार्थं प्रैरयन् । ततो हे इन्द्र! Sy.

१६. सर्वेषां लोकानामधीश्वरः Sy.

१७. इन्द्रो भवः M.

१८. सत्यनिवासस्त्वम् Sy.

हतवानसि[1]। अहिम्[2]। उदकम्[3]। परिवृत्य शयानम्[4]। अप मार्गान्[5]। विश्वस्य प्रीणयितॄन्[6] प्राचीनान्। व्यलिखो[7] यैर्मार्गैर्नद्यो गच्छन्ति।

अतृप्णुवन्तं वियतमबुध्यमबुध्यमानं सुषुपाणमिन्द्र ।
सप्त प्रति प्रवत आशयानमहिं वज्रेण वि रिणा अपर्वन् ॥ ३ ॥

अतृप्णुवन्तम्[8]। निद्रायामनुपरतश्रद्धम्[9]। विवर्द्धं[10] पृथिव्यां विस्रस्तम्। गतबुद्धिम्[11]। अत एवाबुध्यमानम्[12]। स्वपन्तम्[13]। इन्द्र! सप्त[14]। प्रवणयुक्ता[15] नदीः। आवृत्य शयानम्[16]। अहिम्[17]। वज्रेण। विहिंसितवानसि[18]। अकाण्डे निद्रामध्ये[19][20]।

अक्षोदयच्छवसा क्षाम बुध्नं वार्ण वातस्तविषीभिरिन्द्रः ।
दृळ्हान्यौभ्नादुशमान ओजोऽवाभिनत्ककुभः पर्वतानाम् ॥ ४ ॥

अक्षोदयत्। उदकमूलं[21] मेघम्। इन्द्रः[22]। अक्षोदयत्[23]। यथा[24] क्षीणोदको[25] भवति।

---

१. गतवा० P., D. अवधीः Sy.
२. वृत्रासुरम् Sy.
३. उदकं लक्षीकृत्य Sy.
४. परितः समन्ताच्छयनं कुर्वन्तम् Sy.
५. सर्वत्र प्रवर्तिका नदीः Sy.
६. विश्वस्य प्रीणयित्रीः Sy.
७. प्रकर्षेण विलेखनं कृतवानसि। इन्द्रो वृत्रं हत्वा तेनावृतान्युदकानि प्रवाहरूपेण प्रवर्तयतीत्यर्थः Sy.
८. अतृप्नुव० D. अतृप्नुव० P.
९. भोगेष्वतृप्यन्तम् Sy.
१०. शिथिलाङ्गम् Sy.
११. दुर्विज्ञानम् Sy.
१२. एव बुध्य० P.
किमप्यजानन्तम् Sy.
१३. स्वतन्त्रम् M. सुप्तम् Sy.
१४. सर्पणस्वभावाः Sy.
१५. अपः Sy.
१६. आवृत्य तिष्ठन्तम् Sy.
१७. वृत्रम् Sy.
१८. व्यरिणाः। विशेषेण हतवानसि Sy.
१९. अपर्वणि पौर्णमास्याम्। पौर्णमास्यां वृत्रवधः 'त्वष्टा हतपुत्रः' इत्यनुवाके 'घ्नन्ति वा एनं पौर्णमास आमावास्यायां प्याययन्ति' (TS. 2. 5. 2. 5.) इति तैत्तिरीयेऽप्युक्तः Sy.
२०. VM. ignores प्रति।
२१. अन्तरिक्षम् Sy.
२२. परमैश्वर्ययुक्तः Sy.
२३. सम्पिपेष Sy.
२४. यदा M.
२५. क्षीणोदकम् Sy.

बलेन। तत्रोपमानम्[1], उदकम्। इव[2]। वायुः। बलैरिति। बलम्[3]। कामयमानः। तत्प्रकाशनार्थं मेघस्य दृढानि[4] स्थानानि। हिंसितवानित्[5]येतदेवा[6]हाभिनदिति। मेघानाम्[7]। उदकनिःसरणदिशः[8]। अधस्ता[9]दभिनदिति।

अभि प्र दंद्रुर्जनयो न गर्भं रथाइव प्र ययुः साकमद्रयः।
अतर्पयो विसृत उब्ज ऊर्मीन्त्वं वृताँ अरिणा इन्द्र सिन्धून् ॥ ५ ॥

अभि। अभिप्रदारितवन्तः[10] प्रकाशितवन्तो मेघा उदकम्। जायाः[11]। इव। गर्भम्[12]। रथा[13] इव च। प्रयान्ति[14]। साकम्[15]। मेघाः[16]। इन्द्र! त्वम्। विविधं गच्छतो[17] मनुष्यादीन्। अप्रीणयः[18]। हतवानसि[19]। उदकोर्मीन्[20]। ततश्च महिना[21] परिवृतान्[22]। सप्त सिन्धून्[23]। अगमयः[24]।

त्वं महीमवनिं विश्वधेनां तुर्वीतये वय्याय क्षरन्तीम्।
अरमयो नमसैजदर्णः सुतरणाँ अकृणोरिन्द्र सिन्धून् ॥ ६ ॥

त्वं महीम्[25]।[26] त्वम्। महतीम्। विश्वस्य प्रीणयित्रीम्[27]। तुर्वीतये[28]। वय्याय[29] च।

---

१. तत्र दृष्टान्तः Sy.
२. तद्वत् Sy.
३. बलः M.
४. स्थिराण्यप्यभ्राणि Sy.
५. अभाङ्क्षीत् Sy.
६. ०नित्यते देवा० D.
७. गिरीणाम् Sy.
८. पक्षान् Sy.
९. ०स्तद० P. अत्यन्तमभैत्सीत् Sy.
१०. अभिजग्मुः Sy.
११. जनन्यः Sy.
१२. पुत्रम् Sy.
१३. रंहणशीला रथा यथा तथा वृत्रवधार्थम् Sy.
१४. प्रकर्षेणायासिषुः Sy.
१५. त्वया साकम् Sy.
१६. मरुतः Sy.
१७. गचो P. हे इन्द्र! त्वं विसरणशीला नदीः Sy.
१८. अद्भिरपूरयः Sy.
१९. अवधीः Sy.
२०. ०कोमीन् P. कोर्मि M. मेघान् Sy.
२१. मह्ला M. अहिना is suggested for महिना।
२२. वृत्रेणावृतान् Sy.
२३. अपः Sy.
२४. प्रैरयः Sy.
२५. महिं P.
२६. हे इन्द्र! Sy.
२७. ०त्रीः M.
२८. तुर्वीतिनाम्ने राज्ञे Sy.
२९. वर्याय D. वयाय M. वय्यनाम्ने च Sy.

क्षरन्तीम्[1] । हविषा[2] दत्तेन । उदकम्[3] । एजत्[4] । अरमये[5] इति द्विकर्मकः उदकौघं[6] स्वल्पं स्वल्पं[7] कृत्वा तत्र पृथिवीं स्थापितवानसि तदानीमुदकेनोपेतान् सिन्धूंश्च[8] । सुतरणान्[9] । कृतवानसीति[10][11] ।

**प्राग्रुवो॑ नभ॒न्वो॒३॑ न वक्वा॑ ध्व॒स्रा अ॑पिन्वद्यु॒व॒तीॠ॑त॒ज्ञाः ।**
**धन्वा॒न्यज्रा॑ँ अपृणक्तृषा॒णाँ अधो॒गिन्द्रः॑ स्त॒र्यो॒३॑ दंसु॑पत्नीः ॥ ७ ॥**

प्राग्रुवः । प्रापिन्वत्[12] । नदीः[13] । नभतिर्हिंसाकर्मा,[14] सेनाः । इव । शब्दकारिणीः[15] । ध्वंसनशीलाः[16] । युवतीः[17] । सत्यज्ञाः[18] । ततश्चायं निरुदकान्[19] देशान् । ये प्राप्नुवन्ति तान्[20] । तृष्णार्तान्[21] । उदकेन प्रीणयति[22] । मेघान् दुग्धवान्[23] । गमनशीला अपः[24] । दंसुपत्नीः[25]—दमनपरा असुरा यासां शोभनाः पतयः[26] ।

---

१. क्षरन्ती M. अभीष्टान् कामान् वृहतीम् Sy.
२. अन्नेन Sy.
३. चोदकेम् P. अर्णसोदकेन च Sy.
४. एजता चलता Sy.
५. रमयसि । इन्द्रः पृथिवीमन्नोदकसमृद्धां करोतीत्यर्थः Sy.
६. ०केनघं P.
७. Omitted by P., D.
८. Omitted by P., D. जलानि Sy.
९. सुष्ठु तीर्णानि Sy.
१०. कृतवच्छ्वत्विति M. अकार्षीः Sy.
११. VM. ignores अवनिम् and इन्द्र ॥ अवनिं भूमिम् Sy.
१२. ०पिवत् P., D. प्रकर्षेणापूरयत् Sy.
१३. अग्रुव इति नदीनामैतत् (Ngh. I. 13.) । अग्रगामिनीर्नदीः Sy.
१४. ०ति हिं० P. The passage नभतिहिंसाकर्मा should immediately follow शब्दकारिणीः ।
१५. ०णी P., M. शत्रूणां हिंसिकाः Sy.
१६. ०सहन० P. कूलानां ध्वंसिकाः Sy.
१७. ०तीध्वं P. अद्भिर्मिश्रिताः Sy.
१८. सत्यं ना M. ऋतस्यान्नस्य जनयित्रीः Sy.
१९. निर्जलानुन्नतांश्च Sy.
२०. तां M. मार्गस्य गन्तॄन् Sy.
२१. ०र्ताः M. पिपासया युक्तान् पुरुषान् अपूरयत् Sy.
२२. वृष्टचा अपूरयत् Sy.
२३. दुग्धान् P., D. अधुक्षत् । इन्द्रो राक्षसकृतनिरोधदुःखान्निरुद्धप्रसवा अपि गा विमुच्य सप्रसवाश्चकारेत्यर्थः Sy.
२४. अवे P. अवो M. निवृत्तप्रसवा गाः Sy.
२५. वंसुवतीः M. किञ्च दमनपरा असुराः सुष्ठु पतयो यासां ताः Sy.
२६. VM. ignores इन्द्रः ।

पूर्वीरुषसः शरदश्च गूर्ता वृत्रं जघन्वाँ असृजद्वि सिन्धून् ।
परिष्ठिता अतृणद्बद्धधानाः सीरा इन्द्रः स्रवितवे पृथिव्या ॥ ८ ॥

पूर्वीः[1] । अहर्मुखस्योषसः[2] । शरदः[3] । च । वृत्रे गूर्ताः=भक्षिताः[4] । वृत्रम्[5] । जघन्वान्[6] । इन्द्रः । व्यसृजत्[7] । तथा सिन्धूंश्च[8] । तथा[9] परितः स्थिताः[10] सर्वं देशं व्याप्य वर्तमानाः । मनुष्यान् बाधमानाः[11] । नदीः[12] । वज्रेण समुद्रं प्रति स्रवितुम्[13] । अतृणत्[14] । पृथिव्या[15] तथा हि सरन्त्यापः[16] ।

वम्रीभिः पुत्रमग्रुवो अदानं निवेशनाद्धरिव आ जभर्थ ।
व्य१न्धो अख्यदहिमाददानो निर्भूदुखच्छित्समरन्त पर्व ॥ ९ ॥

वम्रीभिः । अग्रुनाम्नः[17] कस्यचित् । पुत्रम् । उपदीकाभिः[18] । अद्यमानम् । हरिवः[19] । तस्माद् वल्मीकनिवेशनात्[20] । आहृतवानसि । भवत्प्रसादाद्धस्तेन सर्पम् । प्रमादादाददानोऽग्रुवः[21] पुत्रः । अन्धः[22] सन् लब्धचक्षुस्तं सर्पम् । व्यख्यत्[23] । तथा स ऋषिः वल्मीकोखायाश्छेत्ता[24] । तस्मात् स्थानात् निर्भूत्[25]=पृथग् भूतः । तस्य विश्लिष्टानि[26] शरीरपर्वाणि च । इन्द्रप्रसादात्

---

१. ०र्वी D.
२. ०षः P.
३. संवत्सरांश्च Sy.
४. तमिस्रया गीर्णाः Sy.
५. वृत्राख्यमसुरम् Sy.
६. हतवान् Sy.
७. ०न्धोऽप्यसृ० P.
विशेषेण ससर्ज Sy.
८. वृत्रेणावृतान्युदकानि व्यसृजत् Sy.
९. किञ्च Sy.
१०. ०ता D. मेघेषु परितः स्थिताः Sy.
११. वृत्रेण परितो बध्यमानाः Sy.
१२. नीः P. सीरा इति नदीनामैतत् Ngh. 1. 13.
१३. गमनार्थम् Sy.
१४. अविध्यत् Sy.
१५. पृथिवीरूपेण मार्गेण Sy.
१६. VM. ignores पूर्वीः ॥ बह्वीः Sy.
१७. अग्रू नाम काचित्, तस्याः Sy.
१८. अप० D., P.
उपजिह्विकाभिः Sy.
१९. हे हरिसंज्ञकाश्वोपेतेन्द्र ! त्वम् Sy.
२०. वर्यकनि० P. वल्मीकाख्यात् स्थानात् Sy.
२१. इन्द्रेणाह्रियमाणोऽग्रुवः पुत्रः Sy.
२२. पूर्वमन्धः सन् Sy.
२३. व्या० D.
विशेषेणापश्यत् Sy.
२४. वल्लिको० P. वल्लीको० M. वल्मीकाख्याया उखायाश्छेदकानि Sy.
२५. निभू० D.
वल्मीकान्निर्गतोऽभूत् Sy.
२६. विशिष्टानि M. पर्वाण्यस्य सर्वाण्यङ्गानां शिथिलानि पर्वाणि Sy.

सङ्गतान्यासन्[1] ।

प्र ते पूर्वाणि करणानि विप्राविद्वाँ आह विदुषे करांसि ।
यथायथा वृष्ण्यानि स्वगूर्तापांसि राजन्नर्याविवेषीः ॥ १० ॥

प्र ते । मेधाविन्निन्द्र[2] ! तव[3] । पुरातनानि । क्रियमाणानि[4] च । कर्माणि[5] । आजानन्नय[6]-मृषिः । विदुषे[7] जनाय । प्रब्रवीति[8] । यथा यथा[9] त्वम् । वर्षणनिमित्तानि[10] । स्वमूतोद्यमनानि[11] । कर्माणि[12] । राजन्[13] ! नृहितानि[14] । प्राप्तवानसि[15][16] ।

नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो३ न पीपेः ।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥ ११ ॥

[नू ष्टुते[17] ।]

---

१. समगच्छन्त । उपजिह्विकाभिः शिथिलीकृतान्यग्रुवः पुत्रस्य पर्वाणीन्द्रेण समधीयन्तेत्यर्थः Sy.

२. हे प्राज्ञेन्द्र ! Sy.

३. त्वत्सम्बन्धीनि Sy.

४. करणानि कर्माणि Sy.

५. करांसि त्ववीयानि कर्माणि Sy.

६. अजा० D. आ समन्ताज्जानन् वामदेवः Sy. ७. विदुषः सर्वं जानतः Sy.

८. प्रकर्षेण ब्रवीति Sy.

९. Omitted by P.

१०. वर्षणयोग्यानि Sy.

११. स्वयमुद्गीर्णानि Sy.

१२. त्वत्सम्बन्धीनि कर्माणि Sy.

१३. हे राजमानेन्द्र ! Sy.

१४. नर्याणि मनुष्यहितानि Sy.

१५. व्याप्नोः । अकार्षीरिति यावत् Sy.

१६. MS. D. puts the figure ॥१९॥ here to indicate the end of nineteenth hymn. No such number is given in P. and M.

१७. The stanza has already been explained. See RV. IV. 16. 21. Sy. explains the stanza here again in the following manner:—

हे इन्द्र ! नु क्षिप्रम् । स्तुतः पूर्वैर्ऋषिभिः संस्तुतः । नु क्षिप्रं गृणानः अस्माभिः स्तूयमानस्त्वम् । इषमन्नम् । जरित्रे स्तोत्रे मह्यम् । नद्यो न अद्भिर्नदीरिव । पीपेः प्यायय । प्रवृद्धं कुरु । हे हरिवः । हरिसंज्ञकाश्वोपेतेन्द्र ! ते तुभ्यं नव्यं नवतरं ब्रह्म स्तोत्रम् । अकारि अस्माभिः क्रियते । रथ्यो रथवन्तो वयम् । धिया प्रज्ञारूपया स्तुत्या सदासाः त्वां सर्वदा भजमानास्त्वदर्थं हवीरूपस्यान्नस्य दातारो वा स्याम भूयास्म ।

## IV.20.

आ न॒ इन्द्रो॑ दू॒रादा न॑ आ॒साद॑भिष्टि॒कृदव॑से यासदु॒ग्रः ।
ओजि॑ष्ठेभिर्नृ॒पति॒र्वज्र॑बाहुः सं॒गे स॒मत्सु॑ तु॒र्वणिः॑ पृत॒न्यून् ॥ १ ॥

आ न इन्द्रः[1] । आगच्छतु[2] । अस्मान्[3] । पृतनामिच्छतः[4] । इन्द्रः । दूरात्[5] तत्रस्थश्चेत् । अथान्तिकस्थश्चेत् ततः[6] । आयातु[7] । अभिलषितानां कर्ता[8] । रक्षणाय[9] । उद्गूर्णः[10] । बलवत्तमैरश्वैः[11] । नृणां पालयिता[12] । वज्रबाहुः[13] । सङ्ग्रामेषु[14] । शत्रुभिः सङ्गे[15] सति । तरणशीलः[16] ।

---

१. 'आ न इन्द्रः' इत्येकादशर्चं दशमं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैन्द्रम् । 'आ नः' इत्यनुक्रमणिका (KSA. 22. 20. p. 17.) पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि निष्केवल्ये एतन्निविद्धानीयम् । सूत्रितञ्च—'आ न इन्द्र इति निष्केवल्यम्' (ASS. 7. 5.) इति । महाव्रतेऽप्येतत्सम्पातसक्तम् । तथैव पञ्चमारण्यके सूत्रितञ्च 'आ न इन्द्रो दूरादा न आसादिति सम्पातः'(AA. 5. 2. 2.) इति Sy.

२. आयातु Sy. आ उपसर्गो यासदित्यत्र सम्बध्यते U.

३. अस्माकम् Sy., Mah., U.

४. शत्रून् Sy. पृतनामिच्छन्ति पृतन्यन्ति Mah. सङ्ग्रामयतः शत्रून् U.

५. दूरप्रदेशाद् द्युलोकादेरपि Mah. दूराद् द्युलोकादेः U.

६. आसन्नादन्तिकाच्च Sy. निकृष्टप्रदेशादपि । . . . आसादित्यन्तिकनाम Mah. आगच्छतु चास्माकं समीपात् यद्यपि दूरे यद्यप्यन्तिक इत्यर्थः U.

७. दूरात्समीपाच्चागच्छत्वित्यर्थः Mah.

८. अभिवर्षिता० P. यजमानसम्बन्धिनामभीष्टानां कर्ता Sy. अभिष्टिमभिलाषं करोतीत्यभिष्टिकृन् मनोरथप्रदः Mah. अभिलषितपदार्थकारी U.

९. अवितुमस्माकं रक्षणं कर्तुम् Mah. अवनाय अन्नाय वा U.

१०. तेजस्वी Sy. उग्र उत्कृष्टः Mah. अतिविषमः U.

११. अतिशयेन तेजस्विभिर्मरुद्भिर्युक्त इति शेषः Sy. तेजस्वितमैर्बलैर्युक्त इति शेषः । ओजो विद्यते येषां त ओजस्विनः । अत्यन्तमोजस्विन ओजिष्ठाः Mah. एत्य च . . . ओजस्वितमैर्बलैरुपेतः U.

१२. वृष्टिद्वारा नृणां मनुष्याणां पालकः Sy. नृणां पालकः Mah.

१३. वज्रहस्तः Sy. वज्रं बाहौ यस्य सः Mah.

१४. बहुष्वपि सङ्ग्रामेषु युगपदुत्थितेषु सत्सु Mah. एतदपि सङ्ग्रामनाम (Ngh. 2. 17.) बहुषु च युगपदुपस्थितेषु U.

१५. शत्रुभिः संयोगे सति Sy. सङ्गः समदिति द्वे सङ्ग्रामनामनी (Ngh. 2. 17.) सङ्गे एकस्मिन् सङ्ग्रामे Mah., U.

१६. तर० D. The passage beginning with उद्गूर्णः and ending with तरणशीलः is omitted by M. हिंसन् Sy. 'तुर्व हिंसायाम्' । तुर्वतीति तुर्वणिर्हन्ता. . .सङ्ग्रामेच्छूनां हन्तेत्यर्थः Mah. तूर्णवनिः तूर्णसम्भक्ता U. This stanza=YV. 20. 48.

आ न इन्द्रो हरिभिर्यात्वच्छार्वाचीनोऽवसे राधसे च ।
तिष्ठाति वज्री मघवा विरप्शीमं यज्ञमनु नो वाजसातौ ॥ २ ॥

आ नः । आयातु[1] । अस्मान् । प्रति[2] । इन्द्रः । अश्वैः[3] । इतोमुखः[4] । रक्षणाय[5] । धनाय[6] । च । तिष्ठतु[7] । वज्री[8] । धनवान्[9] । महान्[10] । इमम्[11] । यज्ञमनु[12], यज्ञस्य पश्चात् । अस्मदर्थम्[13] । सङ्ग्रामे[14] ।

इमं यज्ञं त्वमस्माकमिन्द्र पुरो दधत्सनिष्यसि क्रतुं नः ।
श्वघ्नीव वज्रिन्त्सनये धनानां त्वया वयमर्य आजिं जयेम ॥ ३ ॥

इमं यज्ञम् । इन्द्र ! अस्मदीयम्[15] । यज्ञम् । त्वम् । पुरस्तात् । धारयन्[16] । अथास्माकम् । युद्धम्[17] । सम्भजसि[18] । यथा लुब्धकस्त्री[19] पक्षिणो जयत्येवम् । वज्रिन्[20] ! धनानाम्[21] । लाभाय । त्वया । वयम् । अरेः[22] । सङ्ग्रामम्[23] । जयेम[24][25] ।

---

१. आगच्छतु Sy.
२. अच्छ अभि लक्षीकृत्य Sy. अच्छाभेरर्थे Mah., U. अच्छाभेराप्तुमिति शाकपूणिः N. 5. 28.
३. अश्वैः सह Sy. हरितवर्णैः U.
४. अस्मदभिमुखः Sy. अभिमुखः सन् Mah. अर्वागञ्चनः U.
५. The passage beginning with आ नः and ending with रक्षणाय is omitted by M. अस्मदीयाय रक्षणाय Sy. अवनमवः असुन्, तस्मै रक्षणाय Mah. अन्नाय U.
६. धनाय च दानार्थम् U.
७. तिष्ठत M.
८. वज्रवान् Sy. इन्द्रः Mah.
९. धन्वा M. मघं धनमस्यास्तीति धनवान् Mah., U.
१०. विरप्शीति महन्नाम Ngh. 3. 3. विविधं रपति लपतीति विरप्शी महान् Mah. विरमणशीलः U.
११. इममस्मदीयम् Sy.
१२. यज्ञात् पश्चात् is suggested for यज्ञस्य पश्चात् ॥ अनु उद्दिश्य Sy. प्रति Mah., U.
१३. अस्माकम् Sy., Mah., U.
१४. अस्मदीयस्य कर्मणो द्वेष्टृभिरसुरादिभिः सह युद्धे प्राप्ते सति Sy. अन्नसम्भजने निमित्ते Mah. अन्नसम्भजने निमित्तभूते U. This stanza=YV. 20. 47.
१५. अस्मान् Sy.
१६. पुरस्कृतान् कुर्वन् Sy.
१७. क्रियमाणम् Sy.
१८. सम्भजिष्यसि Sy.
१९. ०कस्ति P. अपि च मृगयुर्मृगानिव Sy.
२०. हे वज्रवन्निन्द्र ! Sy.
२१. ०नाना P. पश्वादिधनानाम् Sy.
२२. अरे P., D. अरयः स्तोतारः Sy.
२३. शत्रुसम्बन्धिनं सङ्ग्रामम् Sy.
२४. सञ्जीयास्म Sy.
२५. VM. ignores इमम् ।

उ॒शन्नु॒ षु णः॑ सु॒मना॑ उपा॒के सोम॑स्य॒ नु सुषु॑तस्य स्वधावः।
पा इ॑न्द्र॒ प्रति॑भृतस्य॒ मध्वः॒ सम॑न्ध॑सा ममदः पृ॒ष्ठ्ये॑न ॥ ४ ॥

उशन्[1]। अस्माकम्[2]। अन्तिके[3]। सुष्ठु[4] सुतम्। सोमम्। अन्नवन्[5]! कामयमानस्त्वम्[6]। इन्द्र! आहवनीयं प्रतिहृतम्[7]। सोममयं मधु[8]। सुष्ठु। पिब। पीत्वा च पृष्ठस्य[9] बलकरेण। अन्धसा[10] तेन। सम्यङ् मत्तो[11] भव।[12]

वि यो र॑र॒प्श ऋषि॑भि॒र्नवे॑भिर्वृ॒क्षो न प॒क्वः सृण्यो॒ न जेता॑।
मर्यो॒ न योषा॑म॒भि मन्य॑मा॒नोऽच्छा॑ विवक्मि पुरुहू॒तमिन्द्र॑म् ॥ ५ ॥

वि यः[13]। य इन्द्रः। नवैः[14]। ऋषिभिः। स्तूयते। पक्वफलः। वृक्षः। इव भवन्[15]। सृण्यः[16] कुञ्जरो[17]ऽङ्कुशेन साध्यते सः। इव। जेता[18]। तं[19] पुरुहूतम्[20]। इन्द्रम्। प्रति[21]। अहमपि विविधं वदामि[22]। यथा[23]। मनुष्यः[24]। स्त्रियम्[25]। अभिगन्तुकामस्[26]तामभिवदति।[27]

---

१. अग्निष्टोमे माध्यन्दिनसवने मैत्रावरुणस्य 'उशन्नु षु णः' इति शस्त्रयाज्या। सूत्रितञ्च—'उशन्नु षु णः सुमना उपाक इति याज्या' (ASS. 5. 16.) इति Sy.
२. अस्मान् Sy.
३. समीपे Sy.
४. सुष्ठ्वभिषुतम् Sy.
५. ०वान् P. हे अन्नवन्! Sy.
६. उशन्नु सु अत्यन्तं कामयमानः सन् Sy.
७. सम्भृतम् Sy.
८. मादकम् Sy.
९. पृष्ठशब्देन माध्यन्दिनसवने उद्गातृभिर्गीयमानं स्तोत्रमुच्यते तत्सम्बन्धिना Sy.
१०. पीतेन सोमेन Sy.
११. मुक्तो M. प्रहृष्टो भव Sy.
१२. VM. ignores उ। सुमनाः and नु॥ सुमनाः शोभनमनस्कस्त्वम्। नु क्षिप्रमेव Sy.
१३. य D.
१४. नैव P. नूतनैः Sy.
१५. ०वत् P.
१६. अत्र सृणिशब्दोऽङ्कुशवाची। तेनायुधमात्रं लक्ष्यते। आयुधकुशलः Sy.
१७. ०रांकु० P.
अभिकामः M.
१८. शत्रुविजयी वीरपुरुष इव Sy.
१९. Omitted by D.
२०. स्तोताहं बहुभिराहूतम् Sy.
२१. अभि लक्षीकृत्य Sy.
२२. विशेषेण वच्मि स्तौमि Sy.
२३. तत्र दृष्टान्तः Sy.
२४. मर्त्यः Sy.
२५. स्त्रीमिव तद्वत् Sy.
२६. ०गन्त० P. मदीयेयं योषिदित्यभिजानन् Sy.
२७. VM. ignores वि। Sy. construes वि with ररप्शे and explains it as विविधं स्तूयते।

**गिरिर्न यः स्वतंवाँ ऋष्व इन्द्रः सनादेव सहसे जात उग्रः ।**
**आदर्ता वज्रं स्थविरं न भीम उद्नेव कोशं वसुना न्यृष्टम् ॥ ६ ॥**

गिरिः[1] । स्वायत्तबलः[2] । यः । इन्द्रः[3] । गिरिः[4] । इव । महान्[5] । चिरात् । एवारभ्य । शत्रुषु बलकरणाय[6] । जातः[7] । उद्गूर्णः[8] सः । आदत्ता[9] । वज्रम्[10] । उदकेनैव[11] । मेघम्[12] । धनेन[13] । न्यृष्टं[14] परिवृतम् । यथा[15] । स्थविरं[16] पर्वतादिकम् । भयङ्करो[17] बलवान् मृगः ।

**न यस्य वर्ता जनुषा न्वस्ति न राधस आमरीता मघस्य ।**
**उद्वावृषाणस्तविषीव उग्रास्मभ्यं दद्धि पुरुहूत रायः ॥ ७ ॥**

न यस्य[18] । यस्य[19] । मंहनीयस्य[20] । धनस्य[21] । जन्म[22] । अभिगन्ता[23] । न । विद्यते[24] । आभिमुख्येन नाशयिता[25] वा । स्तोतृभ्यो धनान्युत्सिञ्चन्[26] । बलवन् ! उद्गूर्ण[27] ! पुरुहूत[28] ! तद्[29] धनम्[30] । अस्मभ्यम्[31] । देहि[32] ।

---

१. गिरि D. पर्वतः Sy.
२. स्वयं प्रवृद्धः Sy.
३. Omitted by P., D.
४. हरिः P.
५. ऋष्व इति महन्नाम Ngh. 3. 3.
६. ०तरणाय D.
शत्रोरभिभवाय Sy.
७. उत्पन्नः Sy.
८. ओजस्वी Sy.
९. आदर्ता is suggested for आदत्ता ॥ आदृतवानासीत् Sy.
१०. M. adds आयुधं after वज्रम् ।
११. ०नैव P.
१२. जलपात्रम् Sy.
१३. तेजसा Sy.
१४. निगतम् Sy.
१५. नेति चार्थे Sy.
१६. वृहत् Sy.
१७. शत्रूणां भयङ्करः स इन्द्रः Sy.
१८. हे इन्द्र ! Sy.
१९. यस्य तव कश्चित् Sy.
२०. मह D. त्वया दीयमानस्य धनस्य Sy.
२१. यज्ञादिकर्मणां साधकस्य Sy.
२२. जन्मना स्वत एव Sy.
२३. अभिगन्ता seems to be the explanation of वर्ता ॥ वारयिता Sy.
२४. अस्ति Sy.
२५. कश्चिदपि नाशयिता नास्ति Sy.
२६. उत्सृञ्जन् M. अभीष्टान् कामान् वर्षकस्त्वम् Sy.
२७. उद्गूर्ण P.
तेजस्विन् ! Sy.
२८. हे बहुभिराहूतेन्द्र ! Sy.
२९. Omitted by M.
३०. पश्वादिधनानि Sy.
३१. स्तोतृभ्यः Sy.
३२. VM. ignores नु ॥ नु नूनं सत्यम् Sy.

ईक्षे रायः क्षयस्य चर्षणीनामुत व्रजमपवर्तासि गोनाम् ।
शिक्षानरः समिथेषु प्रहावान्वस्वो राशिमभिनेतासि भूरिम् ॥ ८ ॥

ईक्षे[1] [2]। मनुष्याणाम्[3]। धनगृहयोस्त्वम्[4]। ईशिषे[5]। अपि च स्तोतृभ्यः प्रदानार्थम्[6]। अपावृणोषि[7]। गवाम्। व्रजम्[8]। शिक्षाया[9] नेता[10]। सङ्ग्रामेषु[11]। उत्क्षेपणवान्[12]। धनस्य। महान्तम्[13]। राशिम्[8]। आभिमुख्येन प्रापयिता। असि[14]।

कया तच्छृण्वे शच्या शचिष्ठो यया कृणोति मुहु का चिदृष्वः ।
पुरु दाशुषे विचयिष्ठो अंहोऽथा दधाति द्रविणं जरित्रे ॥ ९ ॥

कया। कया। प्रज्ञया[15]। तन्निवेद्यमानं कार्यजातम्[16]। शृणोति[17]। अतिशयेन प्राज्ञः। यया प्रज्ञया स्तोत्रे। मुहुर्मुहुः। कानिचित्[18]। करोति। महानिन्द्रः सोऽयम्[19]। महदपि[20]। पापम्। अतिशयेन विचयिष्ठः अपनेता[21]। दाशुषे[22]। अनन्तरम्[23]। प्रयच्छति[24]। धनम्[25]। जरित्रे[26]।

---

१. रक्षे D.
२. हे इन्द्र ! त्वम् Sy.
३. प्रजानाम् Sy.
४. VM. seems to explain रायः and क्षयस्य together as धनगृहयोः ॥ धनस्य गृहस्य च Sy.
५. ईक्षसे Sy.
६. प्रदात्र्थम् P. प्रदा (ना) र्थम् M.
७. VM. seems to explain अपवर्ता and असि together as अपावृणोषि ॥ अपवारकः असि । निरोधकेभ्योऽसुरेभ्यो गवां मोचयिता भवसीत्यर्थः Sy.
८. समूहम् Sy.
९. शिक्षाय D. वृक्षा M. किञ्च हे इन्द्र ! शिक्षया नेता प्रजानां शासकः Sy.
१०. नता P.
११. युद्धेषु Sy.
१२. क्षे० P. उधन् क्षेप० M. प्रहरणवांस्त्वम् Sy.
१३. महान्त M. प्रभूतम् Sy.
१४. भवसि Sy.
१५. शचीति प्रज्ञानामैतत् Ngh. 3. 9.
१६. तं M. तदिति लिङ्गव्यत्ययः । स इन्द्रः Sy.
१७. श्रूयते Sy.
१८. कानिचित् कर्माणि Sy.
१९. सोमयं P.
२०. भूयिष्ठम् Sy.
२१. ०शयेनन गोपनेत M. ०ष्ठोपता P. अतिशयेन नाशको भवति Sy.
२२. हविर्दत्तवते यजमानाय Sy.
२३. अपि च Sy.
२४. ददाति Sy.
२५. पश्वादिधनम् Sy.
२६. स्तोत्रे Sy.

मा नो मर्धीरा भरा दद्धि तन्नः प्र दाशुषे दातवे भूरि यत्ते ।
नव्ये देष्णे शस्ते अस्मिन्त उक्थे प्र ब्रवाम वयमिन्द्र स्तुवन्तः ॥ १० ॥

मा नः ।[1] मा । अस्मान् । हिंसीः[2] । आहर[3]अस्मदर्थम् । धनम्[4] । आहृत्य चास्मभ्यम् । प्रयच्छ[5] । यजमानाय[6] । दातुम्[7] । यत्[8] । तव[9] । बहु धनं विद्यते । नवतरे[10] । दानकुशले[11] । शस्ते[12] । अस्मिन्[13] । तव[14] । उक्थे[15] । वयम् । इन्द्र ! त्वां स्तुवन्तोऽभिलषितं[16] तुभ्यम् । प्रब्रवामेति[17] ।[18]

नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो३ न पीपेः ।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥ ११ ॥

[नू ष्टुत][19]

---

१. हे इन्द्र ! त्वम् Sy.
२. कलहिनो मा कार्षीः BB.
३. किन्तु त्वं पोषको भव Sy. किन्तु नोऽस्मभ्यं . . . आहर BB.
४. तदित्युक्तमित्याह. . . दातवे इति सन्निधेर्धनमिति गम्यते BB.
५. देहि Sy. प्रदेहि BB.
६. हविर्दत्तवते यजमानाय Sy. पुरोडाशादीनि हवींषि दत्तवते यजमानाय BB.
७. दातु M. प्रभवतीति शेषः Sy. प्रदातव इति वा समस्तमेव सम्बध्यते । . . . तस्मै दातवे दातुम् BB.
८. तत् P., D. धनम् Sy. दानार्थमेव यत्त्वया कल्पितं प्रभूतं धनं (तत्) अस्मभ्यं प्रदेहीति BB.
९. त्वदीयम् Sy. तव सम्बन्धि BB.
१०. नूतने Sy. अभिनवे BB.
११. दातव्ये हविषि निमित्तभूते सति Sy. दानसमर्थे । औणादिके स्नप्रत्यये धातोरिकारान्तादेशः । यद्वा देष्णे दात्रे तुभ्यम् BB.
१२. प्रशस्ते Sy., BB.
१३. स्तोत्रस्थानीये BB.
१४. त्वदर्थम् Sy.
१५. अस्मिन्निष्केवल्याख्यशस्त्रे Sy. स्तोत्रे BB.
१६. ०तवं P. ०तः M. दाशुषे दातुं यत्तव भूरि तदस्मभ्यं देहीति । यद्वा ईदृशे शस्ते उक्थे समाप्त इदानीं यत्त्वां प्रब्रवाम तद्देहीति BB.
१७. ०ब्रुवा० D. प्रकर्षेण त्वां वदाम Sy. यस्मात्त्वां स्तुवन्तो वयं प्रब्रवाम प्रकर्षेण ब्रूमः—देहि नो देहि न इति । तस्मात्तवाहृत्य ते वयमपि दाश्वांस इति BB.
१८. VM. ignores तत् ॥ This stanza=TS. 1. 7. 13. 3. Ms. D. puts the figure ॥२०॥ here to indicate the end of the twentieth hymn. No such number is given in P. and M.
१९. The stanza has already been explained. See RV. IV. 16. 21.

## IV.21.

**आ यात्विन्द्रोऽवस उप न इह स्तुतः सधमादस्तु शूरः ।**
**वावृधानस्तविषीर्यस्य पूर्वीर्द्यौर्न क्षत्रमभिभूति पुष्यात् ॥ १ ॥**

आ यातु[1] । उपागच्छतु[2] । रक्षणाय[3] । अस्मान्[4] । इन्द्रः[5] । तथास्मिन् यज्ञे[6] । अस्माभिः[7] स्तुतः सन् । अस्माभिः सह[8] माद्यन्[9] । भवतु । शूरः[10] । यस्य[11] । पुरातनानि[12] । बलानि[13] । हविर्भिर्वर्धयन्[14] पुरुषः । अभिभावुकम्[15] । बलम्[16] । पुष्यति[17] । द्युलोकः[18] । इव स हि[19] वीर्यवतां देवानामावासः सन् बलवान् भवति ।

---

१. 'आ यात्विन्द्रः' इत्येकादशर्चमेकादशं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैन्द्रम् । 'आ यातु' (KSA. 22. 21. p. 17.) इत्यनुक्रान्तम् । पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहन्येतन्निविद्धानीयम् । सूत्रितञ्च— 'आ यात्विन्द्रोऽवस इति मरुत्वतीयम्' (ASS. 7. 5.) इति Sy.

२. Omitted by D. समीपमागच्छतु Mah. समीपे . . . आगच्छतु U.

३. अवितुं रक्षितुम् Mah. अवनाय तर्पणाय रक्षणाय वा U.

४. अस्माकम् Sy., U.

५. स इन्द्रः Sy.

६. तथान्ने M. य इन्द्रः अस्मिन् यज्ञे Sy. इहायातः सन् Mah.

७. ०स्मा P.

८. स्तुतः सन्नस्माभिः is omitted by D.

९. मान्यद् M. सह देवैः सार्धं मादयति तृप्यतीति सहमात् सह भोजनकर्तास्तु । मादयतेः क्विप् Mah. सहमदनः सहभोजनः U.

१०. विक्रान्तः Sy. कीदृश इन्द्रः ? शूरो विक्रान्तः Mah., U.

११. इन्द्रस्य Sy., Mah., U.

१२. पूर्वीः पूर्व्यो बहूनि सन्तीति शेषः Sy. पूर्वाणि कृतानि Mah. पूर्वाणि U.

१३. तविष्यो बलानि Sy. वृत्रवधादयः पराक्रमाः Mah. वृत्रवधादीनि बलानि U. तविषीति बलनाम Ngh. 2. 9. तवतेर्वृद्धिकर्मणः N. 9. 25.

१४. प्रवृद्धोऽयमिन्द्रः Sy. वर्धमानः Mah., U.

१५. भावु० M. परकीयं बलमभिभावुकम् Sy. अभिभवनशीलं शूरम् Mah. अभिभवितृ, अभिभवनशीलमपि U.

१६. स्वकीयं बलं तेजो वा Sy. क्षत्रमस्मदीयम् Mah., U.

१७. पुष्यतु । स इन्द्रः उपायात्विति पूर्वेण सम्बन्धः Sy. पुष्णाति U.

१८. यश्चेन्द्रो द्योतमानः सूर्य इव Sy. स्वर्ग इव कथ्यन्ते । स्वर्गो यथा स्तूयते तथा यस्येन्द्रस्य बलानि स्तूयन्ते Mah. द्यौरिवोच्चैः कथ्यन्ते U.

१९. स इन्द्र आयातु इति सम्बन्धः Mah. स आयात्विति सम्बन्धः U.

This stanza=YV. 20. 47.

तस्येदि॒ह स्त॑वथ॒ वृष्ण्या॑नि तुवि॒द्युम्नस्य॑ तुवि॒राध॑सो॒ नॄन् ।
यस्य॒ क्रतु॑र्वि॒द॒थ्यो॒३ न स॒म्राट् सा॒ह्वान्तरु॑त्रो अ॒भ्यस्ति॑ कृ॒ष्टीः ॥ २ ॥

तस्येत् । तस्य[1] । एव । कर्माणि स्तुत । इह[2] । वर्षणनिमित्तानि[3] । बहुहविष्कान्[4] । मनुष्यान्[5] प्रति । बह्वन्नस्येन्द्रस्य[6] । यस्य[7] । कर्म । नगरस्थितः[8] । राजा[9] इव राजते । यश्च शत्रूणां सहनशीलः[10] । तारकः[11] । शत्रून्[12] । अभिभवति ।

आ या॒त्विन्द्रो॑ दि॒व आ पृ॑थि॒व्या म॒क्षू स॑मु॒द्रादु॒त वा॒ पुरी॑षात् ।
स्व॑र्णरा॒दव॑से नो म॒रुत्वा॑न्परा॒वतो॑ वा॒ सद॑नादृ॒तस्य॑ ॥ ३ ॥

आ यातु । आगच्छतु । इन्द्रोऽस्मान्[13] । द्युलोकात्[14] । अपि च पृथिव्याः[15] । शीघ्रम् । अन्तरिक्षात्[16] । अपि । वा[17] । उदकात्[18] । अपि[19] च सर्वमनुष्यात्[20] । रक्षणार्थम्[21] । अस्मान्[22] । मरुत्वान्[23] । अपि च । अत्यन्तं दूरयुक्तात्[24] । सत्यस्य[25] । स्थानादागच्छत्विति[26] ।

---

१. इन्द्रस्य Sy.
२. अस्मिन् यज्ञे Sy.
३. P. and D. add कर्माणि after वर्षणनिमित्तानि ॥ बलभूतान् Sy.
४. बहुधनस्य Sy.
५. नेतॄन् मरुतो हे स्तोतारः ! यूयम् Sy.
६. ०न्नस्यस्येन्द्र० P. बहुकीर्तेः Sy.
७. इन्द्रस्य Sy.
८. विदथार्हो यज्ञार्हः Sy.
९. तत्र दृष्टान्तः। सम्राट् सकललोकानामधिपतिरिव तद्वत्। तस्य वृष्ण्यानीति पूर्वेण सम्बन्धः Sy.
१०. शत्रूनभिभावुकः Sy.
११. तारकं M. अस्मानापद्भ्यस्तारकः Sy.
१२. शत्रुसम्बन्धिनीः प्रजाः Sy.
१३. ०स्मा P.
१४. स्वर्गलोकात् Sy.
१५. भूलोकाच्च Sy.
१६. अन्तरिक्षलोकाच्चायातु Sy. सगरः। समुद्रः। अध्वरम्। इत्यन्तरिक्षनामानि Ngh. 1. 3.
१७. अथवा Sy.
१८. उदकाद् आयातु Sy. पुरीषमित्युदकनाम Ngh. 1. 12.
१९. ०कापि P.
२०. स्वरादित्यो नरो नेता यस्य तस्माल्लोकाद्वायातु Sy.
२१. रक्षणाय Sy.
२२. अस्माकम् Sy.
२३. मरुद्भिः सहितः Sy.
२४. क्तान् P. दूराद्वायातु Sy.
२५. उदकस्य Sy.
२६. आगन M. स्थानात् मेघलोकाद्वायातु Sy.

स्थूरस्य रायो बृहतो य ईशे तमु ष्टवाम विदथेष्विन्द्रम् ।
यो वायुना जयति गोमतीषु प्र धृष्णुया नयति वस्यो अच्छ ॥ ४ ॥

स्थूरस्य रायः । विस्तृतस्य[1] । महतः । धनस्य । यः[2] । ईश्वरो भवति[3] । तम् । एव । स्तवाम[4] । यज्ञेषु[5] । इन्द्रम् । यः[2] । वायुना[6] सह गत्वा । पशुमतीषु शत्रुसेनासु[7] । जयति जेतव्यान्[8] । यश्च[9] प्रणयति[10] । धृष्णुरिन्द्रः[11] । अभ्युदयम्[12] । प्रति[13] ।

उप यो नमो नमसि स्तभायन्नियर्ति वाचं जनयन्यजध्यै ।
ऋञ्जसानः पुरुवार उक्थैरेन्द्रं कृण्वीत सदनेषु होता ॥ ५ ॥

उप यः । योऽग्निः[14] । अन्नं[15] नवम् । पुराणेऽन्नेऽनुस्यूतम्[16] । स्तम्भयन्[17] । मनुष्यान् यज्ञार्थमुपप्रेरयति[18] । मन्त्रात्मिकां वाचम्[19] । यज्ञाय[20] । जनयन्[21] सः । देवानुक्थैः[22] । प्रसाधयन्[23] । बहुभिर्वरणीयोऽग्निः[24] । इन्द्रम्[25] । अस्मद्गृहेषु[26] । आकृणोतु[27][28] ।

---

१. वृस्त० D. स्थूलस्य Sy.
२. इन्द्रः Sy.
३. ईष्टे Sy.
४. स्तमाव M. वयं स्तोतारः स्तवाम Sy.
५. विदथ इति यज्ञनामैतत् Ngh. 3. 17.
६. प्राणरूपेण बलेन Sy.
७. ०नायासु P., D. सेनासु Sy.
८. शत्रून् विजयते Sy.
९. यव M.
१०. प्रापयति, तमेवेन्द्रं स्तवामेति पूर्वेण सम्बन्धः Sy.
११. प्रगल्भो य इन्द्रः स्तोतॄन् Sy.
१२. वसीयः श्रेष्ठं पश्वादिधनम् Sy.
१३. अभि Sy.
१४. इन्द्रः Sy.
१५. यजमानेभ्यो यज्ञादिसाधनमन्नम् Sy. नम इत्यन्ननामैतत् Ngh. 2. 7.
१६. यजमानैर्दत्ते हविषि Sy.
१७. स्तंभजन् P. स्तभायन् M. लोकानुपस्तम्भयन् Sy.
१८. अप० P. प्रेरयति । इन्द्रो हविषा तृप्तः सन् वृष्टिद्वारान्नं प्रयच्छति तेन चान्नेन पुनर्यज्ञः प्रजायत इत्यर्थः Sy.
१९. गर्जितलक्षणां वाचम् Sy.
२०. यष्टुम् Sy.
२१. यत् P. प्रजनयन् Sy.
२२. शस्त्रलक्षणैः स्तोत्रैः Sy.
२३. प्रसाध्यमानः Sy. 'ऋञ्जतिः प्रसाधनकर्मा' N. 6. 21.
२४. बहुभिः सम्भजनीयः Sy.
२५. तमिन्द्रम् Sy.
२६. यज्ञगृहेषु Sy.
२७. अभिमुखीकरोतु Sy.
२८. VM. ignores होता ॥ अस्मदीयो होता Sy.

**धिषा यदि धिषण्यन्तः सरण्यान्त्सदन्तो अद्रिमौशिजस्य गोहे ।**
**आ दुरोषाः पास्त्यस्य होता यो नो महान्त्संवरणेषु वह्निः ॥ ६ ॥**

धिषा यदि । स्तुतिवाचा[1] । यदि[2] । स्तुतिवाचमिच्छन्तः[3] । सरणं[4] पर्वतमार्गमिच्छन्ति । आसीदन्तः[5] । शिलोच्चयम्[6] । औशिजस्य[7]=कक्षीवतः । पर्वतमध्ये[8] । राक्षसैः[9] संवरणे सति[10] साहाय्यं कर्तुमिते वामदेवाः, ततस्त्वमग्ने ! शीघ्रमस्मास्विन्द्रम् । आवह[11] । राक्षसानां दुःखावहद-हनः[12] । पास्त्यस्य[13]=गृहस्थस्य यजमानस्य । यस्त्वं देवानां ह्वाता[14] भवसि । य इन्द्रः । अस्माकम् । महान्[15] । राक्षसानां संवरणेषु[16] सत्सु । वोढा भवति ।

**सत्रा यदीं भार्वरस्य वृष्णः सिषक्ति शुष्मः स्तुवते भराय ।**
**गुहा यदीमौशिजस्य गोहे प्र यद्धिये प्रायसे मदाय ॥ ७ ॥**

सत्रा यदीम् । सङ्ग्रामार्थं स्तुवते वामदेवाय[17] । तत्प्रीत्यर्थम्[18] । सत्यमेव । एनमौशि-[19]जम् । भाभिः शत्रूणां वारकस्य[20] । इन्द्रस्य[21] । बलम् । सेवते । यदि[22] । पर्वतस्य गुहायाम्[23] । अस्य[24] ।

---

१. स्तुत्या Sy. २. यदा Sy.
३. धिषणामिन्द्रविषयां स्तुतिमिच्छन्तः Sy.
४. सरण्यानुपागच्छेयुः Sy.
५. निषीदन्तो जनाः Sy.
६. आवृणाति शत्रूनित्यद्रिरिन्द्रस्तमिन्द्रम् Sy.
७. उशिजः कामयमाना ऋत्विजः, तेषां सम्बन्ध्यौशिजो यजमानस्तस्य Sy.
८. ०ध्यैः M. गृहे Sy.
९. ०सै D.
१०. Omitted by D. P. adds after सति (तमेनं त्वमग्ने कर्मणे प्रयच्छसि यदि वा तस्मिन् सोमेन मदाय प्रगच्छसि ततस्त्वमिन्द्रमाकृणुहीति शत्रुषु हतेष्वौशिजो यक्ष्यते तदर्थञ्चेन्द्रमस्मा आवहेत्येके यच्छब्दः पूरणः वियद्वरांसि यदीन्द्रस्य पर्वतस्य वरांसि प्रवेशननिवेशनानि द्वाराणि वृणोत्विति मन्य ।) The passage within brackets in P. bears a striking resemblance to the commentary on RV. IV. 21. 7, 8.
११. तदा स इन्द्र आयातु Sy.
१२. दुस्तरक्रोधः Sy.
१३. वास्त्य P. पस्त्ये गृहे वसता यजमानेन Sy. १४. आह्वाता Sy.
१५. प्रभूतो भवति स आयात्विति Sy.
१६. शत्रुसम्बन्धिषु निरोधेषु Sy.
१७. स्तोत्रं कुर्वन्तं यजमानम् Sy.
१८. भर्तुम् Sy.
१९. ईम् एषः Sy.
२०. भर्वरो जगद्भर्ता प्रजापतिस्तस्य पुत्रो भार्वरस्तस्य Sy.
२१. कामानां वर्षितुरिन्द्रस्य सम्बन्धी Sy.
२२. यत् तत्सत्यम् Sy.
२३. गुहारूपे हृदये Sy.
२४. एतद्बलम् Sy.

औशिजस्य[१]। वरणे[२] सति तमेनं त्वमग्ने! कर्मणे। प्रगच्छसि[३]। यदि वा तस्मिन्[४] सोमेन। मदाय[५]। प्रगच्छसि[६] ततस्त्वमिन्द्रमाकृणुहीति शत्रुषु[७] हतेष्वौशिजो यक्ष्यते तदर्थं चेन्द्रमस्मा[८] आवहेत्येको[९] यच्छब्दः पूरणः[१०]।

**वि यद्वरांसि पर्वतस्य वृण्वे पयोभिर्जिन्वे अपां जवांसि।**
**विदद्गौरस्य गवयस्य गोहे यदी वाजाय सुध्यो३ वहन्ति ॥ ८ ॥**

**वि यद्वरांसि**[११]। यदीन्द्र[१२]! पर्वतस्य[१३]। वरांसि प्रवेशननिरोधनानि[१४] द्वाराणि। वृणोत्विति[१५] मन्यसे[१६] तथा। अपाम्[१७]। जवांसि[१८] खातानि वृष्ट्यभावान् निरुदकानि। पयोभिर्यदीन्द्रः[१९]। पूरयति[२०]। यदि[२१] च लभताम्[२२]। गौरगवयौ[२३] पशू। पर्वतमध्ये[२४] संवृतादौशिजात्[२५] तत्र हि तावेव भवतो न ग्राम्याः पशव इति[२६]। यदि चैनमिन्द्रम्। सङ्ग्रामाय[२७]। सुकर्माणः[२८]। युद्धं प्रति च वहन्ति[२९] तत आवहतमिति।

---

१. यजमानस्य Sy.
२. गृहे Sy.
३. प्रयच्छसि M. प्रभवतीति यत् तत्सत्यम् Sy.  ४. Missing in M.
५. मादय D. हर्षाय तत्र यद्बलं प्रभवति तत्सत्यम्। इन्द्रस्य बलं यजमानं सर्वदा पालयतीत्यर्थः Sy.
६. गमनाय कामानां प्राप्तये Sy.
७. निः श॰ M.
८. ॰मास्मा P.
९. ॰क P., D.
   एक P., D.
१०. ॰णम् M.
११. इन्द्रः Sy.
१२. ॰न्द्रस्य P., D.
१३. मेघस्य Sy.
१४. ॰ननिवेशनानि P.
१५. विवृतानि कृतवानिति Sy.
१६. ॰न्यस्वे P.
१७. अवां M. उदकानाम् Sy.
१८. वेगान् Sy.
१९. जलैः Sy.
२०. प्याययतीति यत् Sy.
२१. यदा Sy.
२२. तौ द्वौ पशू लभत इति यत्। तत्सर्वं सत्रेति पूर्वेण सम्बन्धः Sy.
२३. ॰रवयौ M. VM. explains गौरस्य and गवयस्य together as गौरगवयौ॥ गौरमृगस्य गवयमृगस्य च Sy.
२४. गृहे Sy.
२५. ॰ता औशिजाः M.
२६. इव P.
२७. अन्नाय Sy.
२८. शोभनकर्माणो यजमानाः Sy.
२९. विह॰ P., D. इन्द्रं प्राप्नुवन्ति तदा Sy.

भद्रा ते हस्ता सुकृतोत पाणी प्रयन्तारा स्तुवते राध इन्द्र ।
का ते निषत्तिः किमु नो ममत्सि किं नोदुदु हर्षसे दातवा उ ॥ ९ ॥

भद्रा ते । इन्द्र ! भजनीयौ । तव । हस्तौ बाह्वोरवस्ताद्धस्तौ मणिबन्धादूर्ध्वं पाणिः । अपि च । सुकर्माणौ । पाणी । प्रयच्छन्तौ । स्तुवते । धनम् । तथा सति का । ते । इयं निषत्तिर्निषदनमनागमनेनावस्थानम् । किम् । वाऽस्मिन् यज्ञे । न । माद्यसि । किम् । वाऽस्मभ्यं धनम् । दातुम् । न । उद्धर्षसे ।

एवा वस्व इन्द्रः सत्यः सम्राड्ढन्ता वृत्रं वरिवः पूरवे कः ।
पुरुष्टुत क्रत्वा नः शग्धि रायो भक्षीय तेऽवसो दैव्यस्य ॥ १० ॥

एव । एवम् । धनस्य । इन्द्रः । सम्राट्, सत्यमेव, ईश्वरो भवति । वृत्रं चाश्रितस्य । हन्ति । धनं च । मनुष्याय । करोति । तथा सति त्वमिन्द्र ! पुरुष्टुत ! प्रज्ञया । अस्मभ्यम् ।

---

१. अभ्युदयेष्टौ इन्द्रस्य प्रदातुः 'भद्रा ते हस्ता' इति याज्या । सूत्रितञ्च 'दीर्घस्ते अस्त्वङ्कुशो भद्रा ते हस्ता सुकृतोत पाणी' (ASS. 3. 13.) इति Sy.
२. भद्रौ कल्याणौ Sy.
३. त्वदीयौ Sy.
४. बाह्वोः ? बाह्वोरवस्तातद्धो M. ०स्ताधस्तो P.
५. सुकृतौ शोभनकर्माणौ भवतः Sy.
६. त्वदीयौ हस्तौ Sy.
७. प्रयन्तारौ प्रदातारौ भवतः Sy.
८. स्तोत्रे यजमानाय Sy.
९. हे इन्द्र ! त्वदीया Sy.
१०. ०त्ति निषद M. ०निषीद० D. स्थितिः Sy.
११. त्वमस्मान् किमर्थम् Sy.
१२. मादयसि Sy.
१३. किमर्थम् Sy.
१४. एव Sy.
१५. अस्माकं धनं दातुम् Sy.
१६. दातु P. दातुः M.
१७. ०सौ P. हृष्टो भवसि Sy.
१८. ऐन्द्रस्य वार्त्रघ्नस्य पशोः 'एवा वस्वः' इति हविषो याज्या । सूत्रितञ्च 'एवा वस्व इन्द्रः सत्यः सम्राडघह्णग्वदन्त्यविचेतनानि' (ASS. 3. 8.) इति Sy.
१९. एवा वस्वः M.
२०. उक्तप्रकारेण स्तूयमानः Sy.
२१. सत्यवान् Sy.
२२. वृत्रनामानमसुरम् Sy.
२३. हिंसिता Sy.
२४. मनुष्याय यजमानाय Sy. पूरव इति मनुष्यनाम Ngh. 2. 3.
२५. ददातीत्यर्थः Sy.
२६. हे बहुभिर्यजमानैः स्तुतेन्द्र ! त्वम् Sy.
२७. कर्मणा स्तुतिहेतुना Sy.
२८. ज्ञयाया स्म० P.

धनानि । देहि । तव । कल्याणम् । स्तोता चाहम् । भजीय=लभे ।

नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो३ न पीपेः ।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥ ११ ॥

[ नू ष्टुत ]

IV.22.

यन्न इन्द्रो जुजुषे यच्च वष्टि तन्नो महान्करति शुष्म्या चित् ।
ब्रह्म स्तोमं मघवा सोममुक्था यो अश्मानं शवसा बिभ्रदेति ॥ १ ॥

यन्नः । यदि । अस्मान् । इन्द्रः । सेवते । यदि । चास्मान् । कामयते । ततः । अस्माकम् । महान् । कर्तव्यं करोति । तथास्मदर्थं बलयुक्तः । च भवति । यः । बलेन । वज्रम् । धारयन् । यज्ञम् । स्तोत्रशस्त्राणि । सोमं चाभिषुतम् । गच्छति ।

१. त्वया दीयमानस्य Sy.
२. देवसम्बन्धिनः Sy.
३. अन्नस्य । कर्मणि षष्ठी । अन्नम् Sy.
४. अहं भजेय Sy.
५. MS. D. puts the figure ॥२१॥ here to indicate the end of twenty-first hymn. No such number is given in P. and M.
६. The stanza has already been explained. See RV. IV. 16. 21.
७. तत्र तृतीयेऽनुवाके एकादश सूक्तानि । तत्र 'यन्न इन्द्रः' इत्येकादशर्चं प्रथमं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैन्द्रम् । 'यन्नः' इत्यनुक्रमणिका (KSA. 22. 22. p. 17.) । पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि माध्यन्दिनसवने मैत्रावरुणशस्त्रे द्वितीयमिदं सम्पातसूक्तम् । सूत्रितञ्च— 'एवा त्वामिन्द्र यन्न इन्द्रः' (ASS. 7. 5.) इति Sy.
८. हविर्लक्षणान्नादिकम् Sy.
९. अस्मदीयम् Sy.
१०. यद् हविरादिकं च Sy.
११. तद् ब्रह्मादि (ब्रह्मस्तोमसोमोक्थ) चतुष्टयम् Sy. १२. प्रभूतः Sy.
१३. आकरोतु स्वीकरोतु Sy.
१४. बलवानिन्द्रः Sy.
१५. चिदिति चार्थे Sy. १६. इन्द्रः Sy.
१७. बलेन युक्तः Sy. १८. अत्राश्मशब्दो वज्रवाची । अश्मानं वज्रम् Sy.
१९. हविर्लक्षणपुरोडाशादिकमन्नम् Sy.
२०. VM. seems to explain स्तोमम् and उक्था together as स्तोत्रशस्त्राणि ॥ स्तोमं स्तोत्रसमूहम्, उक्थानि शस्त्राणि चेत्येवंभूतम् Sy.
२१. अभिषुतं सोमञ्च Sy.
२२. आगच्छति, स इन्द्रः स्वीकरोत्विति पूर्वेण सम्बन्धः Sy. २३. VM. ignores आ and मघवा ॥ मघवा धनवान् Sy.

वृषा वृषन्धिं चतुरश्रिमस्यन्नुग्रो बाहुभ्यां नृतमः शचीवान् ।
श्रिये परुष्णीमुषमाण ऊर्णां यस्याः पर्वाणि सख्याय विव्ये ॥ २ ॥

वृषा । वर्षितेन्द्रः । वर्षितॄणां[१] धारकम्[२] । चतुष्कोटि[३] वज्रम् । बाहुभ्याम्[४] । प्रेरयन्[५] । उद्गूर्णः[६] । नेतृतमः । कर्मवान्[७] । परुष्णीं नदीम्[८] । उदकेन जगत् छादयन्तीम्[९] । आत्मीयैस्तेजोभि-[१०] र्मनुष्याणां श्रयणार्थम्[११] । शोभयन्[१२]नेतीति सम्बध्यते । यस्या नद्याः[१३] । पर्वाणि भिन्नान् प्रदेशान्[१४] । मनुष्यैर्नद्यास्तस्याः सख्यसिद्ध्यर्थम्[१५] । विव्ये पिहितान्यकरोदिति[१६] ।

यो देवो देवतमो जायमानो महो वाजेभिर्महद्भिश्च शुष्मैः ।
दधानो वज्रं बाह्वोरुशन्तं द्याममेन रेजयत्प्र भूम ॥ ३ ॥

यो देवः । यः[१७] । देवतमः[१८] । जायमान[१९] एव । महान्[२०] । बलैः[२१] । महद्भिः । च । शोषकै-[२२] स्तेजोभिः सह प्रादुर्भवति । धारयन् । बाह्वोः[२३] । वज्रम् । शत्रून्, कामयमानम्[२४] । स[२५] देवः[२५] । दिवम्[२६] । भूमिं[२७] च । अमेन[२८] बलेन । प्रकम्पयति[२९] ।

---

१. कामानां वर्षिता Sy.
२. धारयकं M. मेघभेदनद्वारेण वर्षं कुर्वन्तम् Sy.
३. चतसृभिरश्रिभिर्धाराभिरुपेतं वज्रम् Sy.
४. हस्ताभ्याम् Sy.
५. शत्रुषु प्रक्षिपन् Sy.
६. उद्गूर्णबलः Sy.
७. शचीति कर्मनाम Ngh. 2. 1.
८. पर्ववतीं नदीम् Sy.
९. आच्छादिकाम् Sy.
१०. D. adds सह प्रादुर्भवति धारयन् बाह्वोर्वज्रं शत्रून् कामान् after तेजोभिः ।
११. श्रवणा० M. आश्रयणार्थम् Sy.
१२. सेवमानो भवति Sy.
१३. यस्यां नद्यां M.
१४. ०शा P. भिन्नान् देशान् Sy.
१५. सखिकर्मणे Sy.
१६. ०व्येऽपि M. संवृतवान् Sy.
१७. इन्द्रः Sy.
१८. दातृतमः Sy.
१९. उत्पद्यमानः Sy.
२०. महद्भिः Sy.
२१. अन्नैः Sy.
२२. बलैः । युक्तोऽभवदिति शेषः Sy.
२३. हस्तयोः Sy.
२४. मानां P. कामानां P., D.
२५. दीप्यमानः Sy.
२६. द्युलोकं च Sy.
२७. भूलोकं च Sy.
२८. अनेन M.
२९. प्रकम्पयति स्म Sy.

विश्वा रोधांसि प्रवतश्च पूर्वीर्द्यौर्ऋष्वाज्जनिमन्नेजत क्षाः ।
आ मातरा भरति शुष्म्या गोर्नृवत्परिज्मन्नोनुवन्त वाताः ॥ ४ ॥

विश्वा रोधांसि । विश्वानि । रोधांसि स्थलानि[1] । प्रवणानि[2] । च । बहूनि[3] । जायमाने इन्द्रे[4] । महतस्तस्मात्[5] । अरेजन्त[6] । तथा[7] द्यौश्चावरेजत[8] । पृथिवी च[9] । सोऽयं तेजस्वी[10] सन् । द्यावापृथिवी[11] । बिभर्ति[12] । आ[13] च पूरयति । उदकस्य[14] । परितो गन्तरि तस्मिन्[15] । देवा[16] वायवः[17] । मनुष्यवत्[18] । अत्यन्तं शब्दं कुर्वन्ति[19] यथा राजानं परितो मनुष्या इति ।

ता तू त इन्द्र महतो महानि विश्वेष्वित्सवनेषु प्रवाच्या ।
यच्छूर धृष्णो धृषता दधृष्वानहिं वज्रेण शवसाविवेषीः ॥ ५ ॥

ता तू[20] ते । तानि तानि[21] । क्षिप्रम् । तव[22] । इन्द्र ! महतः[23] । महान्ति[24] चरितानि । अस्माभिः सर्वेषु । एव । सवनेषु[25] । प्रवाच्यानि[26] । यत् । शूर[27] ! धर्षित[28] ! शत्रूणाम् । धर्षणशीलेन[29] ।

---

१. स्थलान M. रोधःशब्देनोन्नतप्रदेशा उच्यन्ते । उन्नतप्रदेशाः पर्वताश्च Sy.
२. समुद्राश्चेत्यर्थः Sy.
३. पूर्व्यो बहूनि Sy.
४. इन्द्रस्य जन्मनि सति Sy.
५. महतोऽस्मादिन्द्रात् Sy.
६. ०न्ता P. अकम्पन्त Sy.
७. Omitted by P.
८. द्युलोकश्च Sy.
९. Omitted by D.
१०. बलवानिन्द्रः Sy.
११. मातरौ मातापितृभूतौ द्यावापृथिव्यौ च Sy.
१२. भर्ति M.
१३. Omitted by P. आ इति चार्थे । आ समन्तात् Sy.
१४. गन्तुः सूर्यस्य Sy.
१५. M. adds इन्द्रे after तस्मिन् ॥ अन्तरिक्षे Sy.
१६. Omitted by M.
१७. यवः P., D. वावाय० M. इन्द्रेण प्रेरिता वायवश्च Sy.
१८. मनुष्या इव Sy.
१९. शब्दायन्ते Sy.
२०. ता तु D., P.
२१. Omitted by M. कर्माणि Sy.
२२. त्वदीयानि Sy.
२३. प्रभूतस्य Sy.
२४. महान्ति भवन्ति Sy.
२५. प्रातःसवनादिकर्मसु Sy.
२६. प्राप्यानि P. प्राच्यानि D. त्वदीयानि कर्माणि स्तोतृभिः प्रकर्षेण वक्तुं योग्यानि स्तुत्यानीति Sy.
२७. हे शूर ! विक्रान्तेन्द्र ! Sy.
२८. हे प्रगल्भ ! Sy.
२९. धर्षकेण Sy.

वज्रेण । अहिम्[1] । अभिभवन्[2] । बलेन[3] । त्वं[4] व्याप्तवानसि[5] तादृशानीति ।

ता तू तें सत्या तुंविनृम्ण विश्वा प्र धेनवंः सिस्रते वृष्ण ऊध्नंः ।
अधां ह त्वद्वृंषमणो भियानाः प्र सिन्धंवो जवंसा चक्रमन्त ॥ ६ ॥

ता नू[6] ते । तानि[7] । क्षिप्रम् । तव[8] । सत्यानि[9] । बहुधन[10] ! चरितानि प्रवाच्यानि सर्वाणि । वर्षितुस्तव[11] । ऊध्नः[12] । काश्चन[13] धेनवः । आपः प्रसरन्ति[14] । तदनन्तरम्[15] । एव[16] । हे वर्षितुमनस्क[17] । त्वत्तः । बिभ्यन्तः[18] । सिन्धवः[19] । प्रक्रमन्ते[20] । वेगेनेति ।

अत्राहं ते हरिवस्ता उं देवीरवोंभिरिन्द्र स्तवन्त स्वसांरः ।
यत्सीमनु प्र मुचो बंद्बधाना दीर्घामनु प्रसिंतिं स्यन्दयध्यैं ॥ ७ ॥

अत्र[21] । अत्र । एव[22] क्षणे । तव[23] । हे हरिवः[24] ! ताः[25] । देव्यः[26] । मनुष्याणां रक्षणैर्हेतुभिः[27] ।

---

१. वृत्रमसुरम् Sy.
२. पालकत्वेन लोकान् धारयन् Sy.
३. The passage beginning with वज्रेण and ending with बलेन is omitted by P. बलेन युक्तस्त्वम् Sy. ४. तं P.
५. अवधीरिति यत् । एतदादीनि कर्माणि महान्तीति पूर्वेण सम्बन्धः । अत्र अविवेषीरिति वधकर्मा Sy.
६. नू P.
७. कर्माणि Sy.
८. त्वदीयानि Sy.
९. सत्यानि भवन्ति Sy.
१०. हे अधिकबल ! इन्द्र ! Sy.
११. हे इन्द्र ! कामानां वर्षितुस्त्वत्तो भयात् Sy.
१२. ऊध्नं M. स्वकीयादापीनात् Sy.
१३. काश्च P., M. गावः Sy.
१४. प्रकर्षेण क्षीरं क्षरन्ति Sy.
१५. अपि च Sy.
१६. खलु Sy.
१७. ०तमनस्के P. ०तम० M. कामानां वर्षणपरमनस्केन्द्र ! Sy.
१८. बिभ्यतः or बिभ्यत्यः is suggested for बिभ्यन्तः ।
१९. नद्यः Sy.
२०. प्रकर्षेण गच्छन्ति Sy.
२१. अत्राह M.
२२. अत्रेप P. मोचनवेलायाम् Sy.
२३. त्वाम् Sy.
२४. हरिवन्निन्द्र ! Sy.
२५. प्रसिद्धाः Sy.
२६. द्योतमानाः Sy.
२७. त्वत्कृतं रक्षणैः Sy.

स्तोतृभिः स्तुता[1] आसन् । स्वयं सरणशीला[2] नद्यः । यदा । सर्वतः[3] परिगृह्य । अनुक्रमेण[4] । प्रमुक्त[5]-वानसि । बाधमाना[6]: । दीर्घमार्गम्[7] । प्रति[8] स्यन्दितुमिति[9] ।

**पिपीळे अंशुर्मद्यो न सिन्धुरा त्वा शमी शशमानस्य शक्तिः ।**
**अस्मद्र्यक्शुशुचानस्य यम्या आशुर्न रश्मिं तुव्योजसं गोः ॥ ८ ॥**

पिपीळे[10] ।[11] पीडितः[12] । सोमस्यांशुः[13] । तस्य च रसो[14] मदकरः[15] । इव[16] । सिन्धुः[17] । महानद्य, आयच्छतु[18] । त्वाम्[19] । प्रवृद्धबलम्[20] । अस्मदभिमुखम् । स्तुतिकर्म[21] । शमनशीलम्[22] । स्तुवतः[23] । दीप्यमानस्यास्मदीयस्य हेतुः । यथा[24] क्षिप्रकारी[25] पुरुषः । गन्तुरश्वस्य । रश्मिमायच्छत्ये[26]वमिति[27] ।

---

१. स्तावयन्ति । नदीपूरणादिभिः कर्मभिर्जना इन्द्रं स्तुवन्तीत्यर्थः Sy.

२. अत्र स्वसृशब्दो नदीवाची Sy.

३. सीम् एता नदीः Sy.

४. अनुगृहानुक्र० M.
उद्दिश्य Sy.

५. प्रकर्षेणामोचयः Sy.

६. वृत्रेण बध्यमानाः Sy.

७. VM. seems to explain दीर्घां and प्रसितिं together as दीर्घमार्गम् ॥ दीर्घाम् अत्यधिकां प्रसितिं बन्धनम् Sy.

८. यथाकामम् Sy.

९. VM. ignores उ। and इन्द्र ॥ उ एव । हे इन्द्र ! त्वम् Sy.

१०. पिपीळे P.

११. हे इन्द्र ! Sy.

१२. पि:. . .तः P. पीलितः M. अपीड्यत अभ्यषूयतेत्यर्थः Sy.

१३. सोमः Sy.

१४. M. reads परतः for च रसः ।

१५. मादयिता Sy.

१६. नेति सम्प्रत्यर्थे, इदानीम् Sy.

१७. स्यन्दमानः सोमः Sy.

१८. आच्छतु P.
आयजतु M.

१९. त्वं M.

२०. तुव्योजसं बहुबलं दृढमित्यर्थः Sy.

२१. शक्तिः स्तुतिकर्म आयच्छतु Sy.

२२. शमी शमनम् Sy.

२३. शशमानस्य स्तुवतः सम्बन्धी Sy.

२४. तत्र दृष्टान्तः Sy.

२५. शीघ्रगामी यन्ता Sy.

२६. अश्वबन्धनरज्जुमिव तद्वत् Sy.

२७. ०मागच्छत्ये० P.

**अ॒स्मे वर्षि॑ष्ठा कृणुहि॒ ज्येष्ठा॑ नृ॒म्णानि॑ स॒त्रा स॑हुरे॒ सहां॑सि ।**
**अ॒स्मभ्यं॑ वृ॒त्रा सु॒हना॑नि रन्धि ज॒हि वध॑र्व॒नुषो॒ मर्त्य॑स्य ॥ ९ ॥**

अस्मे[1]। हे सहनशील[2]! अस्माकम्[3]। वृद्धतमानि[4]। प्रशस्यतमानि च[5]। धनानि[6]। बलानि[7] च। सत्यमेव[8]। कुरु। किञ्चास्माकम्[9]। सुहनानि[10]। वृत्राणि शत्रून्[11]। वशं नय[12]। जहि[13] च। आयुधम्[14]। अस्मान् घ्नतः[15]। मनुष्यस्य[16]।

**अ॒स्माक॒मित्सु शृ॑णुहि॒ त्वमि॑न्द्रा॒स्मभ्यं॑ चि॒त्राँ उप॑ माहि॒ वाजा॑न् ।**
**अ॒स्मभ्य॒ विश्वा॑ इषण॒ः पुरं॑धीर॒स्माकं॒ सु म॑घवन्बोधि गो॒दाः ॥ १० ॥**

अस्माकम्। अस्माकम्[17] एव स्तोत्राणि। त्वम्। इन्द्र[18]! सुष्ठु। शृणुहि। अस्मभ्यमेव[19]। नानारूपाणि[20]। अन्नानि च। उपाकुरु[21]। तथास्मभ्यमेव। प्रेरय। सर्वाः। प्रजाः[22]। तथास्माकम्। सुष्ठु। गवां दाता भवामीति। बुध्यस्वेति[23][24]।

**नू ष्टु॒त इ॑न्द्र॒ नू गृ॑णा॒न इषं॑ जरि॒त्रे न॒द्यो॒३ न पी॑पेः ।**
**अका॑रि ते हरिवो॒ ब्रह्म॒ नव्यं॑ धि॒या स्या॑म र॒थ्यः॑ सदा॒साः ॥ ११ ॥**

[ नू ष्टुत ][25]

---

१. अस्मं D.
२. ०शीलाः M. सहनशीलेन्द्र ! त्वम् Sy.
३. अस्मभ्यम् Sy.
४. वर्षिष्ठानि प्रवृद्धानि Sy.
५. Omitted by P. ज्येष्ठानि प्रशस्तानि Sy.
६. Omitted by P.
७. सहांसि शत्रूनभिभावुकानि Sy.
८. सर्वदा Sy.
९. तं M. हे इन्द्र ! त्वम् अस्मभ्यम् Sy.
१०. शोभनवधानि Sy.
११. शत्रू P.
१२. रन्धय वशं नय Sy.
१३. वशान्नहि P. नाशय Sy.
१४. Omitted by P. वधः हननसाधन-मायुधम् Sy.
१५. वनुषः हिंसकस्य Sy.
१६. मरणधर्मणः शत्रोः सम्बन्धि Sy.
१७. अस्मदीयाः एव स्तुतीः Sy.
१८. तथा हे इन्द्र ! त्वम् Sy.
१९. अमस्म० P.
२०. चायनीयानि Sy.
२१. देहि Sy.
२२. बुद्धीः Sy.
२३. बोधि भव Sy.
२४. VM. ignores मघवन् ॥ अपि च हे धनवन्निन्द्र ! त्वम् Sy.
२५. This stanza has already been explained. See RV. IV. 16. 21.

IV.23.

**कथा महामवृधत्कस्य होतुर्यज्ञं जुषाणो अभि सोममूधः ।**
**पिबन्नुशानो जुषमाणो अन्धो ववक्ष ऋष्वः शुचते धनाय ॥ १ ॥**

कथा[1] । कथमिन्द्रः[2] । पूजयितारम्[3] । वर्धयति[4] कीदृशं पूजकमित्यर्थः । कस्य[5] वा । होतुः[6] । यज्ञम्[7] । सेवमानः[8] । सोमम्[9] । अभिगच्छति[10] । ऊधसि[11] हविर्धाने स्थितम् । सोमम्[12] । पिबन्[13] । कामयमानः[14] । सेवमानः । सोऽयं[15] यजमानान् प्रति गच्छति[16] । दर्शनीयो[17] यजमानानाम् । दीप्यमानाय[18] । धनं[19] दातुम् ।

---

१. 'कथा महाम्' इत्येकादशर्चं द्वितीयं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैन्द्रम् । 'ऋतस्य हि' इत्याद्यास्तिस्र ऋतदेवताका वा । तथा चानुक्रान्तम्—'कथोपान्त्यास्तिस्र ऋतदेव्यो वा' (KSA. 22. 23. p.17.) इति । आभिप्लविकेऽहनि दशरात्रे प्रथमेऽहनि माध्यन्दिनसवने मैत्रावरुणशस्त्रेऽहीनसूक्तस्य स्थान इदं तृतीयं सम्पातसूक्तम् । सूत्रितञ्च—'कथा महामिन्द्रः पूर्भिद्य एक इत्' (ASS. 7. 5.) इति । महाव्रते निष्केवल्ये एतत् । तथैव पञ्चमारण्यके शौनकेन सूत्रितञ्च—'कथा महामवृधत्कस्य होतुरिति सम्पातः' (AA. 5. 2. 2.) इति Sy.

२. केन प्रकारेण Sy.

३. महान्तं गुणैः प्रवृद्धमिन्द्रम् Sy.

४. वर्धयेत् । अस्मत्प्रेरिता स्तुतिरिति शेषः । तस्य महिम्नोऽतिमहत्त्वादिति भावः Sy.

५. यजमानस्य Sy.

६. स एवेन्द्रः होतुः होमनिष्पादकस्य Sy.

७. यागम् Sy.

८. सेवमानं P.
प्रीयमाणः सन् Sy.

९. सोमलक्षणम् Sy.

१०. अपिग० M. अभिगच्छेदिति शेषः । उपसर्गश्रुतेरुचितक्रियाध्याहारः Sy.

११. उद्धतमतिप्रवृद्धम् Sy.

१२. सोऽयं P., D.
अन्नम् Sy.

१३. आस्वादयन् Sy.

१४. तदेवान्नं कामयमानः Sy.

१५. सोमम् P., M.

१६. उक्तलक्षणं धनं यजमानाय दातुं ववक्षे वहति । पीतमेवान्नं जठरे धारयति । अनेन वाक्यद्वयेनेन्द्रस्याचिन्त्यचरितत्वं ख्यापितं भवति Sy.

१७. ऋष्वः महानिन्द्रः Sy.

१८. प्रदीप्ताय Sy.

१९. हिरण्यादिलक्षणाय Sy.

को अस्य वीरः सधमादमाप समानंश सुमतिभिः को अस्य ।
कदस्य चित्रं चिकिते कदूती वृधे भुवच्छशमानस्य यज्योः ॥ २ ॥

**को अस्य ।** कः[1] । वीरः[2] । इन्द्रस्य[3] । सधमादम्[4] । आपेन्द्रेण[5] सह माद्यतीत्यर्थः । को वा । इन्द्रस्य । सुमतिभिः[6] सङ्गत[7] आसीत् । कदा वा । अस्य[8] । चित्रं[9] कर्म प्रज्ञायते[10] । कदा वायमिन्द्रः[11] । रक्षणेन[12] । वर्धनाय । भवति[13] । यजमानस्य[14] । यज्योः[15] ।

कथा शृणोति हूयमानमिन्द्रः कथा शृण्वन्नवसामस्य वेद ।
का अस्य पूर्वीरुपमातयो ह कथैनमाहुः पपुरिं जरित्रे ॥ ३ ॥

**कथा शृणोति ।** कथम् । शृणोति । हूयमानं[16] हविः । इन्द्रः[17] । कथं वा । शृण्वन्[18] । अस्य स्तोतुः[19] । जानाति[20] । रक्षणानि । का वा[21] । अस्य[22] । पुरातन्यः[23] । स्तुतयः[24] । कथम्[25] । वा । एनम्[26] । आहुर्[27]यथाऽऽस्यम् । स्तोत्रे जनाय कामानाम्[28] । पूरयिता[29] भवति ।

---

१. पुमान् Sy.
२. स्तोत्राणाममित्राणां वा वीरयिता Sy.
३. इन्द्रस्य सम्बन्धिनम् Sy.
४. सह माद्यन्तीति सधमादः सङ्ग्रामस्तम् । सह सोमपानं वा Sy.
५. आवेन्द्रे० P. आपे (प) इन्द्रे० M. प्राप्नोति Sy.
६. शोभनाभिरनुग्रहबुद्धिभिः Sy.
७. सङ्गच्छते Sy.
८. इन्द्रस्य Sy.
९. चायनीयं धनम् Sy.
१०. प्रजाय० P. तत्प्रदानसमयं न कोऽपि जानातीत्यर्थः Sy.
११. ०यदिन्द्रः M.
१२. ऊत्या रक्षया Sy.
१३. भवेत् Sy.
१४. स्तुवतः Sy.
१५. ०ज्यो D. यष्टुर्यजमानस्य Sy.
१६. हूम मानं M. आह्वयन्तं स्तोतारम् Sy.
१७. इन्द्रं M. परमैश्वर्ययुक्तः Sy.
१८. स्तोत्राणि शृण्वन् Sy.
१९. अस्य स्तोतुः सम्बन्धीनि Sy.
२०. वेत्ति Sy.
२१. कानिचित् सन्तीति शेषः Sy.
२२. इन्द्रस्य सम्बन्धीनि Sy.
२३. पुरातनः P. पुरातनानि Sy.
२४. उपमातयः दानानि Sy.
२५. कथा M.
२६. इन्द्रम् Sy.
२७. वदन्ति Sy.
२८. तानि दानानि जरित्रे स्तोतुः सम्बन्धिनां कामानाम् Sy.
२९. पूरयितारम् Sy.

कथा सबाधः शशमानो अस्य नशदभि द्रविणं दीध्यानः ।
देवो भुवन्नवेदा म ऋतानां नमो जगृभ्वाँ अभि यज्जुजोषत् ॥ ४ ॥

**कथा सबाधः** । कथम् । पीडायुक्तः[1] । यजमानः[2] । इन्द्रस्य[3] । धनम्[4] । अभिव्याप्नोति[5] । दीप्यमानः[6] । सोऽयं देवः[7] । भवेत् । ज्ञाता[8] । मम[9] । सत्यानां वचसाम्[10] । हविः[11] । गृहीतवान्[12] सन् माम् । यदि[13] । सेवते[14] ।[15]

कथा कदस्या उषसो व्युष्टौ देवो मर्तस्य सख्यं जुजोष ।
कथा कदस्य सख्यं सखिभ्यो ये अस्मिन्कामं सुयुजं ततस्रे ॥ ५ ॥

**कथा** । केन प्रकारेण[16] । कदा च । अस्याः । उषसः[17] । व्युच्छने[18] । देवः[19] । मर्त्यस्य[20] । सख्यम्[21] । सेवते[22] । कथं वा । कदा वा[23] । अस्य[24] । सख्यं भवति । सखिभ्यः[25] । ये सखायः[26] । इन्द्रे । अभिलषितमात्मनः[27] । सुयुक्तम्[28] । अकुर्वन्[29] ।

---

१. सपत्नानां पीडासहितः Sy.
२. इन्द्रविषयां स्तुतिं कुर्वन् Sy.
३. इन्द्रस्य सम्बन्धि Sy.
४. पश्वादिधनम् Sy.
५. अपि व्या॰ M.
अभिप्राप्नोति Sy.
६. कर्मभिर्दीप्यमानो यजमानः Sy.
७. दीप्यमान इन्द्रः Sy.
८. अतिशयेन ज्ञाता । अत्र निपातस्यो नकारोऽतिशयवाची Sy.
९. मं M.
मदीयानाम् Sy.
१०. स्तोत्राणाम् Sy.
११. हविर्लक्षणमन्नम् Sy.
१२. गृहीतवानिन्द्रः Sy.
१३. यदा Sy.
१४. अभिसेवेत Sy.
१५. VM. ignores अभि ।
१६. कथम् Sy.
१७. अस्य उषसः P., D.
अस्योषसः M.
१८. प्रभाते Sy.
१९. द्योतमान इन्द्रः Sy.
२०. मर्तस्य D. मनुष्यस्य स्तोतुः सम्बन्धि Sy.
२१. सखिकर्म Sy.
२२. सेवेत Sy.
२३. कदाचित् भवेदिति शेषः Sy.
२४. इन्द्रस्य Sy.
२५. स्तोतृभ्यः Sy.
२६. स्तोतारः Sy.
२७. कमनीयं हविः स्तोत्रं च Sy.
२८. सुष्ठु प्रयुज्यमानम् Sy.
२९. वितेनिरे Sy.

**कि॒माद॑मत्रं॑ स॒ख्यं सखि॑भ्यः क॒दा नु ते॑ भ्रा॒त्रं प्र ब्र॑वाम ।**
**श्रि॒ये सु॒दृशो॒ वपु॑रस्य॒ सर्गाः॒ स्व१॒॑र्ण चि॒त्रत॑ममिष॒ आ गोः ॥ ६ ॥**

**किमात्**[1]। कि तव । आगमनशीलम्[2]। सख्यं[3] भवति । सखिभ्यः[4]। पादिति पूरणम्[5]। कदा । नु[6]। ते[7] वयम् । भ्रातृत्वम्[8]। प्रब्रवाम[9]। अस्येन्द्रस्य वपुषः[10]। सर्गाः[11]। शोभनदर्शनाः[12]। श्रियै[13] भवन्ति । तथा स्वर्लोकः[14]। इव । विचित्रतमम्[15]। अस्य गन्तुः[16]। शरीरम् । आभिमुख्येन[17]। स्तोतृभिरिष्यते[18]।

**द्रु॒हं जिघां॑सन्ध्व॒रस॑मनि॒न्द्रां तेति॑क्ते ति॒ग्मा तु॒जसे॒ अनी॑का ।**
**ऋ॒णा चि॒द्यत्र॑ ऋण॒या न॑ उ॒ग्रो दू॒रे अज्ञा॑ता उ॒षसो॑ बबा॒धे ॥ ७ ॥**

**द्रुहं**[19] **जिघांसन्**[20]। द्रोग्ध्रीम्[21]। हिंसित्रीम्[22]। इन्द्ररहितां[23] सेनाम् । हन्तुमिच्छन्नयमिन्द्रः। तीक्ष्णीकरोति[24]। अयं तिग्माः[25]। सेनाः[26] शत्रूणाम् । हिंसायै[27]। यदा[28]। अस्माकम्[29]। ऋणानीन्द्रः। ऋणानां[30] यावयिता[31]। उद्गूर्णः[32] प्रक्षिपति यदा वै । उषसः=प्रस्याह्नः[33]। दूरे । बाधते[34]। अज्ञाताः[35]

---

१. हे इन्द्र ! वयं यजमानाः Sy.
२. ०शील P. शत्रूनभिभावुकम् Sy.
३. सखिकर्म Sy.
४. स्तोतृभ्यः Sy.
५. ०णः P., M. किमात् किं स्वित् Sy.
६. खलु Sy.
७. त्वदीयम् Sy.
८. भ्रातृकर्म Sy.
९. प्रकर्षेण वदेम Sy.
१०. वपुः P., D. अस्येन्द्रस्य सम्बन्धिनः Sy.
११. उद्योगाः Sy.
१२. दर्शना P., D. शोभनदर्शनस्य Sy.
१३. सर्वेषां स्तोतॄणां श्रेयसे भवन्तीति शेषः Sy.
१४. सूर्यो यथा दर्शनीयतमस्तथा Sy.
१५. ०त्रतम् M. दर्शनीयतमम् Sy.
१६. गन्तुरिन्द्रस्य Sy.
१७. आ समन्तात् Sy.
१८. सर्वैरिष्यते Sy.
१९. ०सं P.
२०. अयमिन्द्रः Sy.
२१. दोग्ध्रीं M. द्रोहं कुर्वतीम् Sy.
२२. एंसिम् M. ध्वरसं हिंसिकाम् Sy.
२३. इन्द्रमजानतीं राक्षसीम् Sy.
२४. अत्यर्थं तीक्ष्णीकरोति Sy.
२५. तिग्मानि पूर्वमेव तीक्ष्णानि Sy.
२६. अनीकान्यायुधानि Sy.
२७. हिंसितये P., D. तद्वधाय Sy.
२८. यासूषःसु तदुपलक्षितेष्वहःसु Sy.
२९. अस्मान् बाधन्त इति शेषः Sy.
३०. महानिन्द्रः M.
३१. यापयि० P. ऋणस्य हन्तेन्द्रः। यातिर्वधकर्मा Cf. Ngh. 2. 19.
३२. उद्गूर्णबलः Sy.
३३. अस्माह्नो M. ०ह्नः D.
३४. अपीडयत् Sy.
३५. ०ता P. अननुभूताः सतीः Sy.

शत्रुसेना इति[1]।

**ऋतस्य॒ हि शु॒रुधः॒ सन्ति॑ पू॒र्वीर्ऋ॒तस्य॑ धी॒तिर्वृ॑जि॒नानि॑ हन्ति ।**
**ऋतस्य॒ श्लोको॑ बधि॒रा त॑तर्द॒ कर्णा॑ बुधा॒नः शु॒चमा॑न आ॒योः ॥ ८ ॥**

ऋतस्य[2] हि। सत्यस्य[3]। हि[4]। अस्य शोकस्य रोधयित्र्यः[5]। बह्व्यः[6] आपः। सन्ति[7]। ऋतस्य[8]। प्रज्ञा[9]। वर्जनीयानि[10]। हन्ति[11]। किच ऋतस्य[12]। शब्दो महान्[13]। बधिरौ[14]। कर्णौ[15]। तृणत्ति[16] श्रद्धया[17] श्रवणात्। बाधयन्[18]। दीप्यमानः[19]।

---

१. VM. ignores चित्॥ चिद् अपि Sy.

२. ऋतपेयनाम्न्येकाहे मरुत्वतीयनिष्केवल्यशस्त्रयोः निविद्धानात् पुरस्तात् 'ऋतस्य हि' इत्येतदादिके द्वे ऋचौ क्रमेण शंसनीये। सूत्रितञ्च—'ऋतस्य हि शुरुधः सन्ति पूर्वीरिति सूक्तमुखीये' (ASS. 9. 7.) इति Sy.

३. अत्र ऋतशब्देनेन्द्रो वादित्यो वा सत्यं वा यज्ञो वोच्यते। ऋतदेवस्य सम्बन्धिन्यः Sy. मध्यमस्थानस्य SKN. मध्यमस्य Dur.

४. खलु Sy. हीति पादपूरणः SKN.

५. वृष्टिलक्षणा आपः SKN. आपः Dur.

६. पूर्वाश्चिरन्तन्यः SKN. किंलक्षणाः ? पूर्वीरनेककालसम्भूताः Dur.

७. भवन्ति Sy. विद्यन्ते Dur.

८. यतश्चासाविद्धोऽद्भिरतस्तस्य ऋतस्य Dur.

९. प्रज्ञा तद्विषया स्तुतिर्वा Sy. वृष्टिप्रदानविषया प्रज्ञा SKN. उदकसम्प्रदानद्वारेणाकालं नाशयन्ती...प्रज्ञा सर्वलोकस्य Dur.

१०. वर्णनीया M. पापानि Sy. पापानि दुर्भिक्षादीनि SKN. अयशांसि Dur.

११. Omitted by P., D. हिनस्ति Sy. नाशयति। अकाले हि क्षुत्परिगृहीतानामयशस्करेषु जिह्मादिषु प्रवृत्तिर्भवति Dur.

१२. किञ्च अस्य P. ददतश्चोदकं सर्वलोकवृजिनापघाताय तस्यतस्य Dur.

१३. स्तुतिरूपा वाक् Sy. श्लोकः स्तनयित्नुलक्षणः SKN. एवमतिमहान्...शब्दः स्तनयित्नुलक्षणो भवति Dur.

१४. प्रतिबद्धौ Sy. षळ्या आकारः। बधिरस्यापि SKN. यः...बद्धश्रोत्रस्य विधात्राऽपि निसर्गतोऽपिहितश्रोत्रस्य Dur.

१५. कर्णावतिदुर्भेदौ Dur.

१६. तृणत्ति P. तृदिर्हिंसार्थः। तृणत्ति हिनस्ति स्फोटयतीत्यर्थः SKN. आभिनत्ति Dur.

१७. श्रद्ध P.

१८. माधयन् P. बोधयन् is suggested for बाधयन्॥ कीदृशः श्लोकः ? बुध्यमानः Sy. बोधयन्नात्मानम् SKN. बोधयत्यस्मृत इति Dur.

१९. ऋतविशेषणमेतत्। प्रथमा षष्ठ्यर्थे। शुचमानस्य विद्युद्दीप्त्या दीप्यमानस्य SKN.

मनुष्यस्य[1]।

ऋतस्य दृळ्हा धरुणानि सन्ति पुरूणि चन्द्रा वपुषे वपूंषि।
ऋतेन दीर्घमिषणन्त पृक्ष ऋतेन गाव ऋतमा विवेशुः ॥ ९ ॥

ऋतस्य। ऋतस्य[2]। दृढान्युदकानि। धारकाणि। विद्यन्ते[3]। बहूनि। आह्लादनानि[4]। निवपनाय[5]। वपूंषि[6]=उदकानि। तथा ऋतेन[7]। अनुस्यूतम्[8]। अन्नम्। गच्छति[9]। तथा ऋतेनैव[10]। रश्मयः[11]। उदकम्[12]। आवेशयन्ति[13]।

ऋतं येमान ऋतमिद्वनोत्यृतस्य शुष्मस्तुरया उ गव्युः।
ऋताय पृथ्वी बहुले गभीरे ऋताय धेनू परमे दुहाते ॥ १० ॥

ऋतम्। उदकम्[14]। नियच्छन्[15]। उदकम्[14]। एव। प्रयच्छति[16]। तथा ऋतस्य[17]। शुष्मः[18]=

---

१. गन्तुर्मनुष्यस्य सम्बन्धिनौ Sy. मनुष्यनामैतत् (Ngh. 2. 3. 11.) बधिरस्येत्येतेन सामानाधिकरण्यम्। अथवा अयनमायुर्ज्योतिरुदकं वा। यदा ज्योतिस्तदा ऋतस्य विशेषणम्। कीदृशस्य ऋतस्य? आयोरयनस्वभावकस्य ज्योतिरात्मकस्येत्यर्थः। यदोदकं तदा ऋतस्येत्युदकवचनोपचीयमानव्यतिरेकनिबन्धना षष्ठी। आयोरिति श्लोकसम्बन्धना। ऋतस्य सम्बन्धि यदायुरुदकं तस्योदकस्यायोर्यः श्लोकः सम्बोधयन्नात्मानं बधिरस्यापि कर्णावातृणत्तीति सम्बन्धः SKN. अयनस्य मनुष्यस्य ... ज्योतिषश्चोदकस्य च श्लोकः। एवं सतत्त्वो ह्यसावृत इति Dur. ऋतस्य हि शुरुधः सन्ति पूर्वीः। ऋतस्य प्रज्ञा वर्जनीयानि हन्ति। ऋतस्य श्लोको बधिरस्यापि कर्णावातृणत्ति। बधिरो बद्धस्तोत्रः। कर्णौ बोधयन्। दीप्यमानश्च आयोरयनस्य मनुष्यस्य। ज्योतिषो वोदकस्य वा N. 10. 41.; SKN. IV. 45.

२. ऋतदेवस्य सम्बन्धीनि Sy.

३. भवन्ति Sy.

४. आदानानि P., D. चन्द्राण्याह्लादकानि Sy.

५. वचनाय M. वपुष्मतः। षष्ठ्यर्थे चतुर्थी Sy.

६. रूपाणि Sy.

७. ऋतदेवेन Sy.

८. अत्यधिकम् Sy.

९. गच्छन्ति M. स्तोतार इच्छन्ति Sy.

१०. ०थ त्रै वै P. ०थर्तें वै D. ऋतदेवेन Sy.

११. धेनवः Sy.

१२. यज्ञं दक्षिणात्वेन Sy.

१३. प्रविशन्ति। यद्वा गावो रश्मय ऋतमुदकमाविवेशुः Sy.

१४. ऋतदेवम् Sy.

१५. स्तुतिभिर्वशीकुर्वन् स्तोता Sy.

१६. ०च्छन्निति M. सम्भजते Sy.

१७. ऋतदेवस्य सम्बन्धि Sy.

१८. शुष्कः M.

बलम्। तूर्णंगतिः[1]। एवं सन्[2]। गा इच्छंन् भवति[3]। तवा ऋताय। द्यावापृथिव्यौ[4]। विस्तीर्णे[5]।
गम्भीरे[6] च भवतः। तवा ऋतायैव[7]। द्यावापृथिवी[8]। उत्तमे[9]। पयो[10] दुहाते[11]।[12]

नू ष्टुत इंन्द्र नू गृंणान इषं जरित्रे नद्यो॒ न पींपेः।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः॥ ११॥

[ नू ष्टुत ][13]

## IV.24.

का सुंष्टुतिः शवंसः सूनुमिन्द्रंमर्वाचीनं राधंस आ वंवर्तत्।
ददिर्हि वीरो गृंणते वसूंनि स गोपंतिर्निष्षिधां नो जनासः॥ १॥

[14]का सुष्टुतिः[15]। का[16]। शोभना स्तुतिः[17]। बलस्य[18]। पुत्रम्[19]। इन्द्रम्[20]। इतोमुखम्[21]।
आवर्तयन्ति[22]। धनाय[23]। दानशीलः[24]। हि[25]। अयं वीरः[26]। स्तुवते यजमानाय[27]। धनानि। स[28] हि।

---

१. तूर्णम् Sy.
२. उ इति चार्थे Sy.
३. जलकामश्च भवति Sy.
४. भवन्त ति P. ५. ०पिवी P.
६. दुरवगाहे Sy.
७. ऋतदेवायैव Sy.
८. द्यावापृथिव्यौ Sy.
९. उक्तमे P. उत्कृष्टे द्यावापृथिव्यौ Sy.
१०. वयः M.
११. दोहनं कुर्वाते Sy.
१२. Ms. D. puts the figure ॥२३॥ here to indicate the end of twenty-third hymn. No such number is given in P. and M.
१३. This stanza has already been explained. See RV. IV. 16. 21.
१४. 'का सुष्टुतिः' इत्येकादशर्चं तृतीयं सूक्तं वामदेवस्यार्षमैन्द्रम्। दशम्यनुष्टुप्, शिष्टास्त्रिष्टुभः। तथा चानुक्रमणिका 'का सुष्टुतिरुपान्त्यानुष्टुप्' (KSA. 22. 24. p. 17.) इति। विनियोगो लैङ्गिकः Sy.
१५. ०ति D. १६. कीदृशी Sy.
१७. सुष्टुतिः Sy.
१८. शोभना बं० P.
१९. अतिबलिनमित्यर्थः Sy.
२०. परमैश्वर्ययुक्तम् Sy.
२१. अस्मदभिमुखम् Sy.
२२. आवर्तयति is suggested for आवर्तयन्ति॥ आवर्तयेत् Sy.
२३. धनायास्मभ्यं धनं दातुम् Sy.
२४. दाता Sy.
२५. खलु भवति Sy.
२६. विक्रान्तः Sy.
२७. गृणद्भ्यः स्तोतृभ्यः Sy.
२८. इन्द्रः Sy.

अस्माकम्[1] । संनिरुन्धानानाम्[2] । हे जनाः[3] ! गवां[4] पतिर्भवति ।

स वृत्रहत्ये हव्यः स ईड्यः स सुष्टुत इन्द्रः सत्यराधाः ।
स यामन्ना मघवा मर्त्याय ब्रह्मण्यते सुष्वये वरिवो धात् ॥ २ ॥

स वृत्रहत्ये[5] । सः[6] । शत्रुहनने[7] । ह्वातव्यः[8] । स[6] एव तत्र । स्तुत्यः[9] । सः[10] । सुष्टुतः । इन्द्रः । सत्यधनः[11] । सः[12] । आगमने[13] । मघवा[14] । मर्त्याय[15] । स्तुतिमिच्छते[16] । सुन्वते[17] च मर्त्याय । धनम्[18] । आददाति[19] ।

तमिन्नरो वि ह्वयन्ते समीके रिरिक्वांसस्तन्वः कृण्वत त्राम् ।
मिथो यत्त्यागमुभयासो अग्मन्नरस्तोकस्य तनयस्य सातौ ॥ ३ ॥

तमित्[20] । तम्[21] । एव । मनुष्याः[22] । विह्वयन्ते[23] । युद्धे[24] । तथातिरिक्तबलाः[25] सन्तः । शरीरस्य[26] । त्रातारमेनम् । कृण्वन्ति[27] । मिथः[28] । यत्[29] । त्यागम्[30] । उभयेऽपि[31] । गच्छन्ति[32] योद्धृभ्यो[33] धनं परस्परं प्रयच्छन्ति । नरः[34] । लोकस्य[35] । तनयस्य[36] च । सम्भजननिमित्तमवधार्यं[37] ह्वयन्त इति ।

---

१. अस्मभ्यम् Sy.
२. तन्निरु० D. निरु० P. निव्येढूणां शत्रूणां सम्बन्धीनि Sy.
३. Omitted by P., D. यजमानाः Sy.
४. पश्वादिधनस्य पालकः Sy.
५. हत्ये is omitted by P., D.
६. इन्द्रः Sy.
७. वृत्राणां शत्रूणां हत्ये हनने निमित्तभूते सति Sy.
८. आह्वातव्यो भवति Sy.
९. स्तुत्यो भवति Sy.
१०. Omitted by M.
११. यजमानेभ्यो दातुं सत्यधनो भवति Sy.
१२. सत्यं धनस्य P.
१३. युद्धे Sy.
१४. धनवान् Sy.
१५. मनुष्याय यजमानाय Sy.
१६. स्तोत्रमिच्छते Sy.
१७. सुंन्व० P. सोमं सुन्वते Sy.
१८. आ समन्ताद्ददाति Sy.
१९. वरिव इति धननाम Ngh. 2. 10.
२०. तद्वित् D.
२१. इन्द्रम् Sy.
२२. नेतारो मनुष्याः Sy.
२३. अपिह्व M. विविधमाह्वानं कुर्वते Sy.
२४. बुद्धे M.
२५. ०धा विविक्त० M. तपसा रेचयन्तो यजमानास्तमेवेन्द्रम् Sy.
२६. स्वकीयानि शरीराणि Sy.
२७. कृण्वते कुर्वते Sy.
२८. परस्परं सङ्गताः Sy.
२९. य P., D., M. यदा Sy.
३०. त्यागकर्तारं दातारमिन्द्रम् Sy.
३१. यजमानाः स्तोतारश्च Sy.
३२. उपगच्छन्ति तदा Sy.
३३. योधृभ्यो P.
३४. नतः P. उभयविधा मनुष्याः Sy.
३५. पुत्रस्य Sy.
३६. पौत्रस्य Sy.
३७. लाभे निमित्तभूते सति तमेवेन्द्रं त्रातारं कुर्वन्तीति सम्बन्धः Sy.

**क्रतूयन्ति क्षितयो योग उग्राशुषाणासो मिथो अर्णसातौ ।
सं यद्विशोऽववृत्रन्त युध्मा आदिन्नेम इन्द्रयन्ते अभीके ॥ ४ ॥**

[ क्रतूयन्ति[1] ] क्रतुं[2] कर्म कर्तुमिच्छन्ति । मनुष्याः[3] । धनयोगार्थम्[4] । हे[5] उग्र[6] ! परस्परम् । व्याप्नुवानाः[7] । युद्धे[8] । यदा । योद्ध्यः[9] । प्रजाः । सङ्गच्छन्ते[10] । अनन्तरम्[11] । एव । नेमे[12] केचित् । इन्द्रमिच्छन्ति । युद्धे[13] ।

**आदिद्ध नेम इन्द्रियं यजन्त आदित्पक्तिः पुरोळाशं रिरिच्यात् ।
आदित्सोमो वि पपृच्यादसुष्वीनादिज्जुजोष वृषभं यजध्यै ॥ ५ ॥**

आदिद्ध । अनन्तरम्[14] । एव । केचिदिन्द्रस्य[15] । इन्द्रियम्[16] । यजन्ते[17] । अर्थैकवदाह, अनन्तरम्[18] । एव । पक्तिः=पचन् । पक्तव्यान्[19] चरुपुरोडाशादीनि[20][21]न्द्रियाय । प्रयच्छति[22] । ततः[23]

---

१. The *pratika* is supplied by the Editor.
२. क्रतु D. क्रतूनि कर्माणीच्छन्ति Sy.
३. क्षितय इति मनुष्यनामैतत् Ngh. 2. 3.
४. सम्बन्धे सति Sy.
५. Omitted by P., D.
६. उग्रं D. हे उद्गूर्णबलेन्द्र ! Sy.
७. व्याप्नुवन्तः Sy.
८. सस्यादिफलसिद्ध्यर्थमुदकलाभे निमित्ते सति Sy.
९. योध्यं M. योधयितृयः Sy.
१०. संवर्तन्ते परस्परं सङ्गच्छन्ते Sy.
११. तदानीम् Sy.
१२. केचन भाग्यवन्तो योधकाः Sy.
१३. अभीक इति सङ्ग्रामनाम Ngh. 2. 17.
१४. तदानीमेव युद्धकाले Sy.
१५. अन्ये योधाः Sy.
१६. M. adds च after इन्द्रियम् ॥ बलवन्तमिन्द्रम् Sy.
१७. पूजयन्ति Sy.
१८. कश्चित् अनन्तरमेव Sy.
१९. ०व्यं P.
२०. पिष्टरूपं हविः Sy.
२१. P. adds the following passage between ०दीनि० and ०न्द्रियाय—धानाश्च भुञ्जतीन्द्रमेव मनसा इच्छन् स्तोत्राणि प्रेप्सन्तस्मिन् प्रतिवर्धितारं शुष्ममिन्द्रः यदा यदा संग्रामं । The additional passage in P. has a striking resemblance with the commentary on RV. IV. 24. 7. and also a few words of the commentary on RV. IV. 24. 8.
२२. इन्द्राय दद्यात् Sy.
२३. अनन्तरमेव Sy.

सोऽयम् । सोमः—सोता[१] यजमानः । अयजमानान्[२] । वि पपृच्याद् व्यर्थयति[३] । अनन्तरम् । एव । वर्षितारम्[४] । सेवते[५], इन्द्रम् । यष्टुमुपस्थिते[६] युद्धे तृतीयः पादः फलमिति[७] ।

कृणोत्यस्मै वरिवो य इत्थेन्द्राय सोममुशते सुनोति ।
सध्रीचीनेन मनसाविवेनं तमित्सखायं कृणुते समत्सु ॥ ६ ॥

कृणोति । कृणोति[८] । अस्मै[९] । परिचर्याम्[१०] । यः[११] । इत्थम्[१२] । इन्द्राय । सोमं च । कामयमानाय । सुनोति[१३] । इन्द्रेण सहाऽन्वता[१४] । मनसा[१५] । तम्[१६] । एवेन्द्रम् । अविरूपं[१७] सुष्ठु कामयमानः[१८] । सखायम्[१९] । कृणुते[८] । युद्धेषु[२०] ।

य इन्द्राय सुनवत्सोममद्य पचात्पक्तीरुत भृज्जाति धानाः ।
प्रति मनायोरुचथानि हर्यन्तस्मिन्दधद्वृषणं शुष्ममिन्द्रः ॥ ७ ॥

य इन्द्राय । यः[२१] । एकस्मिन्नेव[२२] दिवसे । सोमम्[२३] । इन्द्राय[२४] । सुनोति[२५] । पचति[२६] च[२७] ।

---

१. अभिषुतसोमो यजमानः Sy.

२. जमभान् P. अनभिषुतसोमान् यजमानान् Sy.

३. वि व वृच्याद्व्यर्थं॰ P. वि पवृच्याद्व्यर्थं॰ D. ॰मानानपिपच्याध्यर्थं॰ M. धनैः पृथक्कुर्यात् Sy.

४. कश्चित् कामानां वर्षितारमिन्द्रम् Sy.

५. त P. ६. ॰स्थितं P.

७. VM. ignores ह ॥ खलु Sy.

८. करोति Sy.

९. इन्द्रोऽपि यजमानाय Sy.

१०. धनम् Sy.

११. यजमानः Sy.

१२. अमुत्र स्वर्गलोके स्थिताय Sy.

१३. अभिषवं करोति Sy.

१४. सङ्गतेन प्रवणेन Sy.

१५. चित्तेन Sy.

१६. सुन्वन्तं यजमानम् Sy.

१७. अपिरू॰ M.

१८. ॰मानम् is suggested for ॰मानः ॥ वेनतिः कान्तिकर्मा । (Cf. N. 10. 38.) विवेनो विगतेच्छः । तदन्योऽविवेनः । आत्मानं कामयमानम् Sy.

१९. मित्रम् Sy.

२०. सङ्ग्रामेष्विन्द्रः Sy.

२१. यजमानः Sy.

२२. एतस्मि॰ D. अस्मिन् Sy.

२३. सोमलक्षणमन्नम् Sy.

२४. परमैश्वर्ययुक्ताय देवाय Sy.

२५. सुनुयादभिषवं कुर्यात् Sy.

२६. पचेत् पचनं कुर्यात् Sy.

२७. Omitted by P.

पक्तव्यानि[1] पुरोडाशादीनि । धानाः[2] । च[3] । भृञ्जति[4] । इन्द्रमेव मनसेच्छतः[5] । स्तोत्राणि । प्रेप्सन्[6] । तस्मिन्[7] । प्रतिदधाति[8] । वर्षितारम्[9] । शुष्मम्[10] । इन्द्रः ।

यदा सम॒र्यं व्यचे॒दघा॑वा दी॒र्घं यदा॒जिम॒भ्यख्य॑दर्यः ।
अचि॑क्रद॒द्वृष॑णं॒ पत्न्यच्छा॑ दुरो॒ण आ निशि॑तं सोम॒सुद्भिः॑ ॥ ८ ॥

यदा । यदा । सङ्ग्रामम्[11] । विचिनोति[12] । हिंसावान्[13] । यदा वा । दीर्घम्[14] । आजिम्[15] । आभिमुख्येन । प्रकाशयति[16] । स्वामी[17] । तदानीं[18] वर्षितारमिन्द्रम्[19] । सेना[20] क्रन्दयति[21] । स्वे स्वे गृहे[22] । यजमानैः[23] । तीक्ष्णीकृतमिति[24] ।[25]

---

१. पक्तव्यांश्च पुरोडाशादीन् Sy.

२. भर्जनयोग्यान् यवान् । अत्र भृष्टयववाची धानाशब्दस्तद्योग्यं यवमात्रं लक्षयति Sy.

३. अपि च यः Sy.

४. भृज्यती० D. भृञ्जेत् भर्जनं कुर्यात् Sy.

५. ०सेच्छन् P., D. ०सेच्छ M. स्तुतिमिच्छतो यजमानस्य Sy.

६. प्रतिकामयमानः सन् Sy.

७. यजमाने Sy.

८. दधाति is omitted by P. धारयति Sy.

९. कामानां वर्षणसमर्थम् Sy.

१०. शुष्कम् M.
बलम् Sy.

११. सह मर्तव्यं शत्रुम् Sy.

१२. व्यज्ञासीद्विशेषेण जानीयात् Sy.

१३. शत्रूणां हिंसक इन्द्रः Sy.

१४. अत्यधिकम् Sy.

१५. सङ्ग्रामम् Sy.

१६. अभिपश्येत् Sy.

१७. स्वामीन्द्रः Sy.

१८. तदा तस्येन्द्रस्य Sy.

१९. कामानां वर्षितारमिन्द्रम् Sy.

२०. पत्नी Sy.

२१. आक्रन्दति, आह्वयते Sy.

२२. Omitted by M.
यज्ञगृहे Sy.

२३. सोमं सुन्वद्भिर्ऋत्विग्भिः Sy.

२४. सोमपानेनोत्साहवन्तमित्यर्थः Sy.

२५. VM. ignores अच्छ ।

भूयसा वस्नमचरत्कनीयोऽविक्रीतो अकानिषं पुनर्यन् ।
स भूयसा कनीयो नारिरेचीद्दीना दक्षा वि दुहन्ति प्र वाणम् ॥ ९ ॥

भूयसा[1] । इह कश्चित्, भूयसा[2]=महार्घेण । वस्न्येन[3] । न्यूनमूल्यम्[4] । अचरत्[5]=व्यवहरति । पुनश्च । अविक्रीतो[6]ऽयं भूयान्, अनुचित[7]मूल्यत्वादिति क्रेतरि[8] । अकानिषम्[9]=कामयेऽहम् । पुनस्तस्मिन् गच्छन्निति मन्यमानः[10] । स च क्रेता[11] । भूयसा[12] विक्रीतं प्रदाय । आत्मना दत्तं कनीयः[13] । पुनर्न । अरिरेचीत्[14] नादत्ते । एतस्मिन् विवादपदे निर्धना[15] विक्रेतारः । प्रवृद्धधना[16]ः क्रेतारश्च । वाणम्[17] । विप्रदुहन्ति[18]=आत्मानं प्रतीतरेतरमाकृषन्ति ।

---

१. अत्र ऋग्द्वये सम्प्रदायविद्भिः पूर्वाचार्यैः केचिच्छ्लोकाः पठ्यन्ते । त एवं लिख्यन्ते—
अल्पं यः परिगृह्णाति मूल्यं पण्येन भूयसा ।
स क्रेतारं पुनर्गच्छन्नविक्रीतस्त्वयं मया ॥१॥
इति ब्रुवन्कामयते पुनर्मूल्यस्य पूरणम् ।
स विक्रेता पुनर्मूल्यं भूयसा न प्रपूरयेत् ॥२॥
हीनं न लभते वस्नं यदा विक्रीतवान्पुरा ।
यथासमयमेव स्यात्तयोर्न पुनरन्यथा ॥३॥
अयं विक्रय एवेति समयश्चेत् कृतो भवेत् ।
अथ मूल्यार्थमेतत्स्याद्विचार्यैव तु निर्णयः ॥४॥
इत्येवं समयोऽकारि तदा मूल्यं प्रपूर्यते ।
तस्मादादौ मया कार्यः समयोऽत्रेति चिन्तयन् ॥५॥
वामदेवो वशीकृत्य शक्रं स्तोत्रेण भूयसा ।
विक्रीणन् समयं चक्र इदं क इममित्यृचि ॥६॥
अतश्च द्वृच एकार्थो भूयसा वस्नमित्ययम् ।
अयमर्थः प्रतिपाद्यते Sy. DDN. also quotes these Ślokas with slight variation and adds न्यायविद्भिर्ये श्लोकाः पठितास्ते लिख्यन्ते . . . वामदेवस्त्रिष्टुभा इन्द्रं विक्रीणन् क्रेतारं वदति DDN.

२. भूम्ना पण्येन द्रव्येण Sy., DDN.

३. वस्न्यन P. वन्येन M. वसु मूल्यं धनम् Sy. ४. अल्पतरम् Sy., DDN.

५. प्राप्नोति Sy., DDN.

६. अपि क्री० P., M.

७. ०चितततमू० M. ८. क्रोतरि M. क्रेतारं पुनर्गच्छन् स विक्रेतायमर्थो मयाऽविक्रीत इति ब्रुवन् Sy., DDN.

९. कानिष्टं M. मूल्यपूर्ति कामयते । व्यत्ययेनोत्तमपुरुषः Sy., DDN.

१०. मन्यमान P., D.

११. विक्रेता Sy., DDN. १२. भूयापसम् M. भूयसा धनेन Sy., DDN.

१३. कनियः P. अल्पतरं मूल्यम् Sy. कनीयोऽविक्रीतः—'एकीभवति पादादि०' (RPR. 2. 34.) इति अकारोऽभिनिधीयते DDN.

१४. ०रेर्वी M. क्रेतुः सकाशात् (न) रिक्तीकरोति (न) लभत इत्यर्थः Sy., DDN.

१५. असमर्थाः Sy., DDN.

१६. समर्थाश्च Sy., DDN.

१७. पाणं P. वचनम् Sy. वाणं पविरिति वचननाम Ngh. 1. 11.

१८. विप्रप्रदु० M. यथोक्तं क्रयकाले तथैव लभन्ते Sy., DDN.

क इमं दशभिर्ममेन्द्रं क्रीणाति धेनुभिः ।
यदा वृत्राणि जङ्घनदथैनं मे पुनर्ददत् ॥ १० ॥

क[1] इमम्[2] । निगदसिद्धा[3] ।

नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो३ न पीपेः ।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥ ११ ॥

[नू ष्टुत[4]]

IV.25.

को अद्य नर्यो देवकाम उशन्निन्द्रस्य सख्यं जुजोष ।
को वा महेऽवसे पार्याय समिद्धे अग्नौ सुतसोम ईट्टे ॥ १ ॥

को अद्य[5] । कः[6] । अद्य[7] । नरहितः[8] । देवान् कामयमानः[9] । इन्द्रस्य । सख्यम्[10] । प्रेप्सन्[11] ।

---

१. वामदेवोऽनुष्टुभा इन्द्रं विक्रीणन् समयं चक्रे. . .एवं दशभिर्धेनुभिरिन्द्रो वामदेवेन महान् त्यक्तः DDN.

२. मम मदीयम् । इमं स्वभूतम् । इन्द्रम् । धेनुभिः प्रीणयित्रीभिः । दशभिः दशसंख्याकाभिः स्तुतिभिः । कः क्रीणाति क्रयं करोति । तदानीं हे क्रेतारः ! युष्माकं मध्ये एवमपि समयः क्रियते । यदा अयमिन्द्रः । वृत्राणि त्वदीयान् शत्रून् । जङ्घनत् हन्यात् । अथ अनन्तरमेव । एनम् इन्द्रम् । मे मह्यम् । पुनर्ददत् पुनर्दद्यात् Sy. DDN. also explains this stanza in the same manner with slight variation.

३. Ms. D. puts the figure ॥२४॥ here to indicate the end of twenty-fourth hymn. No such number is given in P. and M. DD. adds अद्य भवन्ति तथा स्वर्लोक इति च विचित्रितममस्य गन्तुः शरीरमभिमुख्येन after figure ॥२४॥ The additional passage in D. has a striking resemblance with the commentary on RV. IV. 23. 6.

४. The stanza has already been explained. See RV. IV.16.21.

५. 'को अद्य' इत्यष्टर्चं चतुर्थं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैन्द्रम् । तथा चानुक्रान्तम्—'को अद्याष्टौ' (KSA. 22. 25. p. 17.) इति । दशरात्रे चतुर्थेऽहनि माध्यन्दिनसवने स्तोमवृद्धौ मैत्रावरुणशस्त्रे आरम्भणीयाया उपरिष्टादिदं सूक्तमावपनीयं च । सूत्रितञ्च—'स्तोमे वर्धमाने को अद्य नर्यः' (ASS. 7. 12.) इति Sy.

६. यजमानः Sy.

७. अस्मिन् दिवसे Sy.

८. मनुष्यहितः Sy.

९. देवान् इच्छन् Sy.

१०. सखित्वम् Sy.

११. कामयमानः Sy.

सेवते[१]। कः[२]। वा। महते[३]। रक्षणाय[४]। पारयितुं समर्थाय[५]। समिद्धे[६]। अग्नौ। सुतसोमः[७] सन्। इन्द्रं स्तौति।

**को नानाम वचसा सोम्याय मनायुर्वा भवति वस्त उस्राः।**
**क इन्द्रस्य युज्यं कः सखित्वं को भ्रात्रं वष्टि कवये क ऊती ॥ २ ॥**

को नानाम। कः[२]। नमनं करोति[८]। स्तुत्या[९]। सोमार्हाय[१०]। कः। वा। मनायुः[११]। भवति[१२]। स पशूनपि[१३]। वस्ते दीप्तिर्वा[१४]च्छादयति[१५]। को वा इन्द्रसम्बन्धार्हताम्[१६]। को वा। सखित्वम्। भ्रातृत्वं[१७] वा। कामयते[१८]। कवेरिन्द्रस्य[१९]। कः। वामिति[२०]।

**को देवानामवो अद्या वृणीते क आदित्याँ अदितिं ज्योतिरीट्टे।**
**कस्याश्विनाविन्द्रो अग्निः सुतस्यांशोः पिबन्ति मनसाविवेनम् ॥ ३ ॥**

को देवानाम्। कः। देवानाम्[२१]। रक्षणम्। अद्य[२२]। प्रार्थयते। को वा। आदित्यान्[२३]।

---

१. सव० M.
२. यजमानः Sy.
३. प्रवृद्धाय Sy.
४. रणाय P., D.
तर्पणाय Sy.
५. ०तुमस० P., D.
पारमर्हते Sy.
६. प्रज्वलिते सति Sy.
७. अभिषुतसोमः Sy.
८. करो P.
नमति प्रह्वीभवति Sy.
९. वाग्रूपया स्तुत्या Sy.
१०. सोमार्हायेन्द्राय Sy.
११. स्तुतिकामः Sy.
१२. अस्ति Sy.
१३. ०नधि M.
इन्द्रेण दत्ता गाः Sy.
१४. दीप्तीर्वा is suggested for दीप्तिर्वा। दीप्तीः seems to be the explanation of उस्राः। It should therefore follow पशून् and precede अपि।
१५. धारयतीत्यर्थः Sy.
१६. ०र्हातां P. VM. seems to explain इन्द्रस्य and युज्यम् together as इन्द्रसम्बन्धार्हताम्॥ इन्द्रस्य युज्यं साहाय्यम् Sy.
१७. भ्रातृभावम् Sy.
१८. इच्छति Sy.
१९. क्रान्तदर्शिने इन्द्राय Sy.
२०. वादिति M. अवम् (अवनम्) or वासम् is suggested for वाम्।
२१. कः। देवानाम् omitted by M.
देवानां द्योतमानानामिन्द्रादीनाम् Sy.
२२. अस्मिन् दिने Sy.
२३. देवान् Sy.

अदिति[1] च[2]। परम्[3]। स्तौति[4]। कस्य वा सम्बन्धिनः[5]। सुतस्य[6]। अश्विनौ[7]। इन्द्रः। अग्निश्च। अंशोः[8]। पिबन्ति[9]। मनसा[10]। अविगतकामं यथा तथा[11]।

**तस्मा अग्निर्भारतः शर्म यंसुज्ज्योक्पश्यात्सूर्यमुच्चरन्तम्।**
**य इन्द्राय सुनवामेत्याह नरे नर्याय नृतमाय नृणाम्॥ ४ ॥**

तस्मै[12]। अस्मै[13]। अग्निः[15]। हविषो वोढा[16]। सुखम्[17]। प्रयच्छति[18]। तथा[19] स एव दीर्घम्[20]। पश्यति[21]। सूर्यञ्च। उच्चरन्तम्[22]। यः[23]। इन्द्राय। सुनवाम[24]। इति। आह[25]। नेत्रे[26]। नृहिताय[27]।

---

१. ०ति P. ०तिः M. देवमातरं च Sy.
२. Omitted by P.
३. पर M. VM. seems to explain ज्योतिः by परम्॥ उदकम् Sy.
४. याचते Sy.
५. सम्बन्धिन P. यजमानस्य सम्बन्धिनम् Sy. ६. अभिषुतस्य Sy.
७. अश्विदेवौ Sy.
८. ०न्द्रो वह्निः अग्नि शो P. सोमस्य, सोममित्यर्थः Sy.
९. पानं कुर्वन्ति Sy.
१०. स्तुत्या प्रीताः सन्तः Sy.
११. ०सा पिग० D. यथाकाममित्यर्थः Sy.
१२. यथा P., D.
१३. ज्योक् पश्येम सूर्यमुच्चरन्तम् (RV. X. 59. 6.) मो षु णः सोम मृत्यवे परा दाः पश्येम नु सूर्यमुच्चरन्तम् (RV. X. 59. 4.) इत्यादिभिः तथा मा ते दृशन्त्सूर्यमुच्चरन्तम् (RV. VII. 104. 24.) इति शापान्मनुष्यस्य सूर्यदर्शनं दीर्घायुष्ट्वायेति प्रतिपादितम्। वामदेवेन 'तस्मा अग्निः' (RV. IV. 25. 4.) इत्यनयोक्तम्। 'को अद्येति तु सूक्तेन यो नित्यं शक्रमर्चति' (Rgvidh. 2. 65.) इति ऋग्विधाने विनियोगः। वामदेवस्त्रिष्टुभा इन्द्रं तुष्टाव DDN.
१४. यजमानाय Sy. जनाय DDN.
१५. ०ग्नेह० P.
१६. हविषो भर्ताग्निः 'प्राणो भूत्वा प्रजा धारयन् भारतः' (Cf. SB. 1. 4. 2. 2.) इति वाजसनेयकम् Sy. "अग्निर्वै भरतः। स वै देवेभ्यो हविर्भरति" इति कौषीतकिः (Kau. Br. 3. 2.) "प्राणो भूत्वा प्रजा धारयन्" इति वाजसनेये—(Cf. SB. 1. 4. 2. 2.) भारत इत्युक्तम् DDN. १७. सुखः P.
१८. यच्छेत् Sy. प्रयच्छेत् DDN.
१९. यथा P.
२०. किं चायमग्निः चिरकालम् Sy. तथा स यजमानश्चिरकालम् DDN.
२१. पश्येत् Sy., DDN.
२२. उद्यन्तम् Sy. ऊर्ध्वं चरन्तम् DDN.
२३. यजमानः Sy. जनः DDN.
२४. इन्द्रार्थं सोमाभिषवं कुर्यामिति Sy. वाङ्मात्रेणाह इन्द्रार्थं सोमाभिषवं कुर्यामिति DDN.
२५. एह P. ब्रवीति। कीदृशायेन्द्राय Sy.
२६. नरे—नृशब्दस्य चतुर्थी, ङेआदेशः? DDN.
२७. नरहिताय Sy. कीदृशाय इन्द्राय? नृभ्यो हिताय DDN.

नृणाम्[१] । अतिशयेन[२] नेत्रे[३] ।

**न तं जिनन्ति बहवो न दभ्रा उर्वस्मा अदितिः शर्म यंसत् ।**
**प्रियः सुकृत्प्रिय इन्द्रे मनायुः प्रियः सुप्रावीः प्रियो अस्य सोमी ॥ ५ ॥**

न तम् । न । तम्[४] । हिंसन्ति[५] । बहवः[६] । नापि । अल्पाः । तथाऽस्मै[७] । बहु[८] । अदितिः[९] । शर्म[१०] । यच्छति[११] । प्रियः[१२] । सुष्ठु कर्मणां[१३] कर्ता भवति । प्रियः[१४] । इन्द्रे[१५] । मनायुः[१६] । प्रियः । सुष्ठु प्रकर्षेण रक्ष्यमाणः[१७] । प्रियः । अस्तु[१८] । सोमवान्[१९] ।

**सुप्राव्यः प्राशुषाळेष वीरः सुष्वेः पक्तिं कृणुते केवलेन्द्रः ।**
**नासुष्वेरापिर्न सखा न जामिर्दुष्प्राव्योऽवहन्तेदवाचः ॥ ६ ॥**

सुप्राव्यः[२०] । सुष्ठु प्रकर्षेण रक्षणीयो[२१] भवति । प्राशूनां[२२] योद्धृणामभिभविता[२३] । एषः । वीरः[२४] । सोमं सुतवतो यजमानस्य[२५] । चरुपुरोडाशादीनामेव[२६] केवलम्[२७] । पङ्क्तिम्[२८] । कुरुते[२९]=

---

१. नराणां नेतॄणां मध्ये Sy., DDN.
२. नेतृतमाय Sy., DDN.
३. वोचाम मा सुनोतेति सोमम् (RV. 2. 30. 7.) इति गृत्समदेन प्रार्थितम् तस्मा अमंध्रा उषसो व्युच्छान् य इन्द्राय सुनवामेत्याह (RV. 5. 37. 1.) इत्यत्रिणोक्तम् DDN.
४. न । तम् । omitted by P., D. यजमानम् Sy.
५. ०न्ती M. हिंसन्तु । य इन्द्राय सुनवामेत्याह तमिति पूर्वेण सम्बन्धः Sy.
६. शत्रुजनाः Sy.
७. यजमानाय Sy.
८. विस्तीर्णम् Sy.
९. ०ति P. इन्द्रमाता Sy.
१०. सुखम् Sy.
११. ०च्छसि M. यच्छतु Sy.
१२. प्रियः भवति Sy.　　१३. ०णः P. शोभनयागादीनां कर्ता यजमानः Sy.
१४. अस्येन्द्रस्य प्रियो भवति Sy.
१५. इन्द्राय Sy.
१६. ०युद P. ०यु D. इन्द्रविषयस्तुतिकामश्च Sy.
१७. सुष्ठु प्राविता । सुष्ठु प्रगच्छन्नुपगच्छन् वा यजमानः Sy.
१८. अस्य is suggested for अस्तु ॥ इन्द्रस्य Sy.
१९. सोमवान् यजमानः Sy.
२०. ०प्राप्यः P., D.
२१. सुष्ठूपगच्छतो हविर्भिः सुष्ठु प्रतर्पयितुर्वा Sy.　　२२. प्रां M.
२३. शत्रूणां प्रकर्षेण शीघ्रमभिभविता Sy.
२४. विक्रान्तः Sy.
२५. सुन्वतो यजमानस्य सम्बन्धिनीम् Sy.
२६. ०शादिनमेव P.
२७. असाधारणाम् Sy.
२८. पक्तिम् is suggested for पङ्क्तिम् ।
२९. Omitted by M. आत्मनः कुरुते Sy.

स्वीकुरुते । न[1] । असुष्वेः[2] । आपिः[3] । न च । सखा[4] । नापि । जामिः[5] । दुःखेन प्रतर्पणीयः[6] । अवहन्ता[7] । एव भवति[8] । अवाचीनस्य[9] पराङ्मुखस्य[10] ।

**न रेवता पणिना सख्यमिन्द्रोऽसुन्वता सुतपाः सं गृणीते ।**
**आस्य वेदः खिदति हन्ति नग्नं वि सुष्वये पक्तये केवलो भूत् ॥ ७ ॥**

[11]न रेवता[12] । न[13] । धनवतापि । पणिना[14] । सख्यम्[15] । इन्द्रः[16] करोति । असुन्वता[17] । सुतपान[18] । सम्यक् सङ्गच्छते[19] । अस्य[20] । धनम्[21] । आखिदत्[22] । अनन्तरञ्च नग्नम्[23]=अधनं[24] तम् । हन्ति[25] । विभवति[26] चेन्द्रः । सुष्वये[27] सोमस्य । पक्त्रे[28] चरुपुरोडाशस्य । असाधारणः[29] ।

---

१. न भवति Sy.
२. किं चेन्द्रः, असुन्वतोऽयजमानस्य Sy.
३. ०सुष्वरापिःD. ०सुष्वेरापिन् P. व्याप्तः Sy. ४. सुखा M. इन्द्रोऽयजमानस्य सखा न भवति Sy.
५. ०मि P. बन्धुश्च Sy.
६. दुरुपगमनस्य Sy. ७. ०णीयोपह० P., D. हिंसिता Sy. ८. ०न्ति P.
९. स्तुतिरहितस्य पुरुषस्य Sy.
१०. VM. ignores इन्द्रः ।
११. तथोक्तम्—
देवानां करदा विप्रा विप्राणां करदा नृपाः ।
नृपाणां करदा लोका लोकानां करदा मही ॥
तथा गृह्ये—
देवताः पुरुषं गृह्याहरहर्गृहमेधिनाम् ।
भागार्थमुपसर्पन्ति ताभ्यो निर्वप्तुमर्हति ॥
तदर्थेयमृक् (RV. 4. 25. 7.) । वामदेवस्त्रिष्टुभा इन्द्रकृत्यं तुष्टाव DDN.
१२. रेवता D.
१३. Omitted by P., D.
१४. वणिजा लुब्धेन Sy. वणिजा वार्धुषिकेण DDN. १५. सखित्वम् Sy., DDN. १६. इन्द्र P.
१७. सोमाभिषवमकुर्वताऽयजमानेन सह Sy. यजमानेनेति वर्जयित्वेदमेव । इन्द्रोऽसुन्वतेति—'एकीभवति पादादिः' (RPR. 2.34.) इत्येकीभावः DDN.
१८. ०ना P. सुतपानः is suggested for सुतपान ॥ अभिषुतं सोमं पिबन् Sy. सुतं सोमं पिबतीति तस्मात्, असुन्वता सख्यं नेच्छतीत्यर्थः DDN.
१९. संस्तौति । नानुमन्यत इत्यर्थः Sy. नेच्छति DDN.
२०. अयजमानस्य Sy. 'इदमोऽन्वादेशे' (Pa. 2. 4. 32.) इत्यन्वादेशत्वादस्येति सर्वानुदात्तत्वम् । तथा यास्कः—'अथानुदात्तम्—'दीर्घायुरस्याः' इति N. 4. 24. DDN. २१. धनं ज्ञानं वा Sy.
२२. आक्खिदसि P. आक्खिदति D. उद्धरति Sy., DDN.
२३. मग्नं P. निरर्थकम् Sy. न केवलमसख्यं किन्त्वस्य पणेर्निरर्थकं धनम् DDN.
२४. अन्धं P., D.
२५. हिनस्ति च Sy. २६. व्यभूत् । सुन्वतः सखाऽभवदित्यर्थः DDN.
२७. सुष्ठु ये P. सुष्ठुवये D. सोमं सुन्वते Sy. सुष्वये—'युग्मान्तस्था०' (RPR. 5. 20) इति षत्वम् DDN.
२८. हवींषि पचते यजमानाय Sy., DDN.
२९. असाधारणः सन् Sy., DDN.

इन्द्रं परेऽवरे मध्यमास इन्द्रं यान्तोऽवसितास इन्द्रम् ।
इन्द्रं क्षियन्त उत युध्यमाना इन्द्रं नरो वाजयन्तो हवन्ते ॥ ८ ॥

इन्द्रम् । इन्द्रमेव । परे[1] । अपरे[2] । मध्यमाश्च । हवन्ते[3] । इन्द्रमेव । गच्छन्[4] । तथा युद्धभूमाववसिताः[5] । ततस्तत्र[6] निवसन्तश्च[7] । अनन्तरमेव[8] । युध्यमानाश्च[9] । इन्द्रमेव । नरः[10] । वाजं[11] कुर्वाणाः[12] ।

IV.26.

अहं मनुरभवं सूर्यश्चाहं कक्षीवाँ ऋषिरस्मि विप्रः ।
अहं कुत्समार्जुनेयं न्यृञ्जेऽहं कविरुशना पश्यता मा ॥ १ ॥

अहं[13] मनुः[14] ।

---

१. उत्कृष्टाः Sy.
२. Omitted by P., D. निकृष्टाश्च जनाः Sy.
३. आह्वयन्ति Sy.
४. गच्छन्तः is suggested for गच्छन् ॥ कार्यसिद्ध्यर्थं गच्छन्तो जनाः इन्द्रमेवाह्वयन्ति Sy.
५. ०भूमापवसिः D. ०वसिः P. निविष्टाश्चेन्द्रमेवाह्वयन्ति Sy.
६. ततस्त P.
७. गृहे निवसन्तो जनाः Sy.
८. ०मवे M. अपि च Sy.
९. ०मानाश्चमानाश्च P. युद्धं कुर्वाणा जना जयार्थमिन्द्रमेवाह्वयन्ति Sy.
१०. नेतारो मनुष्याः Sy.
११. अन्नमिच्छन्तः Sy.
१२. MS. D. puts the figure ॥२५॥ here to indicate the end of twenty-fifth hymn. No such number is given in P. and M.
१३. 'अहं मनुः' इति सप्तर्चं पञ्चमं सूक्तं वामदेवस्यार्षम् । अत्रेयमनुक्रमणिका 'अहं मनुः सप्ताद्याभिस्तिसृभिरिन्द्रमिवात्मानमृषिस्तुष्टावेन्द्रो वात्मानं परा नवाष्टौ वा श्येनस्तुतिः' (KSA. 22. 26. p. 17.) इति । अत्र 'अहं मनुः' इत्याद्याभिस्तिसृभिरात्मानमिन्द्ररूपेण वामदेवः स्तुतवान् । यद्वा इन्द्र एवात्मानं स्तुतवान् । अतो वामदेववाक्यपक्षे वामदेव ऋषिरिन्द्रो देवता । इन्द्रवाक्यपक्षे त्विन्द्र ऋषिः, परमात्मा देवता, त्रिष्टुप् छन्दः । अवशिष्टानां वामदेव ऋषिः । अवशिष्टाभिरुत्तरसूक्तेन च सुपर्णात्मना ब्रह्म स्तूयते । अतस्तासां परब्रह्म देवता । श्येननाम्न्येकाहे माध्यन्दिनसवने मरुत्वतीयशस्त्रे इदं सूक्तम् । सूत्रितञ्च—'श्येनाजिराभ्यामभिचरन् यजेताहं मनुर्गर्भे नु सन्' (ASS. 9. 7.) इति । इदमादिमन्त्रत्रयेण गर्भे वसन् वामदेव उत्पन्नतत्त्वज्ञानः सन् सार्वात्म्यं स्वानुभवं मन्वादिरूपेण प्रदर्शयन्नाह Sy. वामदेव इन्द्रो वाऽऽत्मानं तुष्टाव DDN.
१४. मनु P.

अहमेव[1]। मन्वादिः[2]। अभवम्। अहम्। अर्जुनीपुत्रम्[3]। कुत्सम्[4]। स्वकार्यसमर्थं करोमि[5]।
अहमेव[6]। कविः[7]। उशनाः[8]। माम्[9]। पश्यतेतीन्द्रस्य[10] वामदेवस्य[11] वा वचनम्[12]।

अहं भूमिमददामार्यायाहं वृष्टिं दाशुषे मर्त्याय।
अहमपो अनयं वावशाना मम देवासो अनु केतमायन् ॥ २ ॥

अहम्[13]। अहम्। पीडिताय[14]। भूमिम्[15]। ददामि[16]। अहमेव। प्रयच्छते[17]। मर्त्याय[18]।

---

१. वामदेव इन्द्रो वा Sy., DDN.

२. आदिः refers to सूर्यः। कक्षीवान्। ऋषिः and विप्रः॥ मनुः सर्वस्य मन्ता प्रजापतिरस्मि। अहमेव सूर्यश्च सर्वस्य प्रेरकः सविता चास्मि। विप्रः मेधावी। कक्षीवान् दीर्घतमसः पुत्र एतत्संज्ञक ऋषिरप्यहमेवास्मि Sy. कक्षीवाँ ऋषिः —नकार आकारोपधः' (RPR. 4. 65.) इत्यनुनासिकोपधत्वम् DDN. विप्रः विप्र इति मेधाविनाम Ngh. 3. 15.

३. अमर्जनिपु॰ P. अज्जूनीपु॰ D. अर्जुन्याः पुत्रम् Sy., DDN.

४. एतन्नामकमृषिम् Sy.

५. नितरां प्रसाधयामि Sy., DDN. ऋञ्जतिः प्रसाधनकर्मा N. 6. 21.

६. अहमेवास्मि। उक्तमुपलक्षणम्। परमार्थदृष्टया कृत्स्नमप्यहमेवास्मीत्यर्थः Sy., DDN.

७. कान्तदर्शी Sy., DDN.

८. उशना is suggested for उशनाः॥ एतदाख्य ऋषिः Sy.

९. हे जनाः! मां सर्वात्मकम् Sy.

१०. यूयमप्येवमेव स्वस्वरूपमनुभवतेत्युक्तं भवति Sy. पश्यता मा इति 'दशमं चैतयोः' (RPR. 8. 38.) इति दीर्घः DDN.

११. Omitted by D.

१२. इन्द्रस्य परमात्मत्वमुपनिषद्युक्तम् 'स होवाच प्राणोऽस्मि प्रज्ञात्मा' (Kau. U. 3. 2.) इति। स्वात्मगुणौ? (गुणस्तुतौ) माघे—
'न सौख्यसौभाग्यकरा नृणां गुणाः स्वयं गृहीताः सुदृशां कुचा इव।
परैर्गृहीता द्वितयं वितन्वते न तेन गृह्णन्ति निजं गुणं बुधाः ॥'
तथा चारुचर्यायाम्—(श्लो॰ २७)—
न स्वकीयैः स्तुतिपदैर्ग्लानिं गुणगणं नयेत्।
स्वगुणस्तुतिवादेन ययातिरपतद्दिवः ॥
इति DDN.

१३. अहम् is omitted by M. वामदेव इन्द्रो वा Sy.

१४. पीडिताय seems to be the explanation of आर्याय॥ मनवे Sy.

१५. पृथ्वीम् Sy.

१६. दत्तवानस्मि Sy.

१७. प्राय॰ M. हविर्दत्तवते Sy.

१८. मनुष्याय यजमानाय Sy.

वृष्टिम्[१] । अहमेव[२] । अपः[३] । अनवं[४] भुवं[५] प्रति । कामयमानाः[६] । मम[७] । आशाम्[८] । देवाः[९] । अनुगच्छन्ति[१०] ।

**अहं पुरो मन्दसानो व्यैरं नव साकं नवतीः शम्बरस्य ।**
**शततमं वेश्यं सर्वताता दिवोदासमतिथिग्वं यदावम् ॥ ३ ॥**

अहम् । अहम्[११] । पुरः[१२] । मोदमानः[१३] । विविधमितस्ततः प्ररितवान्[१४] । नव[१५] । नवतीश्च[१६] । शम्बरस्य[१७] । अथ तत्र[१८] यच्छतस्य[१९] पूरणं नगरम् । सर्वैराश्चर्यैस्ततं[२०] तत् । वेश्यम्[२१] प्रवेश्यमभवत् मम[२२] कदा । यदा । दिवोदासनामानमृषिम्[२३] । अतिथीन्[२४] प्रति[२५] गन्तारम् । अहमरक्ष[२६]मिति[२७] ।

**प्र सु ष विभ्यो मरुतो विरस्तु प्र श्येनः श्येनेभ्य आशुपत्वा ।**
**अचक्रया यत्स्वधया सुपर्णो हव्यं भरन्मनवे देवजुष्टम् ॥ ४ ॥**

प्र सु[२८] षः[२९] ॥ शौनकः । 'प्र सु ष[३०] विभ्यो नवभिर्ऋग्भिः श्येनश्च संस्तुतः[३१]' इति ॥ सः[३२] ।

१. सस्याद्यभिवृद्धयर्थं वृष्टिलक्षणमुदकम् Sy.
२. अहमेव अददाम् Sy.
३. षः P. उदकानि Sy.
४. सर्वमपि प्रदेशमगमयम् Sy.
५. Omitted by M.
६. किञ्च शब्दायमानाः Sy.
७. मदीयम् Sy.
८. सङ्कल्पम् Sy.
९. बहुधादयो देवाः Sy.
१०. अनुयन्ति Sy.
११. वामदेव इन्द्रो वा Sy.
१२. पुराणि Sy.
१३. सोमेन माद्यन् Sy.
१४. अध्वंसयम् Sy.
१५. Omitted by M. नवसंख्याकाः Sy.
१६. नवतिश्च P., M. नवतिसंख्याकाश्च Sy.
१७. एतन्नामकस्यासुरस्य सम्बन्धीनि Sy.
१८. त्र P.
१९. शततसंख्यापूरणं पुरम् Sy.
२०. ०ततः M. सर्वताती यज्ञे Sy.
२१. वे P. दिवोदासनाम्ने प्रवेशार्हमकरवम् Sy.
२२. भवं मम D.
२३. ०षिः P. दिवोदासनामकं राजर्षिम् Sy.
२४. अतिथीनामभिगन्तारम् Sy.
२५. प्ररिति M.
२६. अपालयम् । तदा पुरो व्यैरमिति पूर्वेण सम्बन्धः Sy.
२७. VM. ignores साकम् ॥ युगपदेव Sy.
२८. सः P., D.
२९. अथैतदादिभिः श्येनः स्तूयते Sy.
३०. स P., D. Omitted by M.
३१. संस्कृतः M. BD. (IV. 136.) reads श्येनस्य संस्तवः ।
३२. प्रसिद्धः श्येनाख्यः Sy.

श्येनः[१]। विभ्यः[२] गन्तृभ्योऽपि । सुष्ठु । हे मरुतः[३] ! प्रगन्ता[४] । भवतु[५] । श्येनेभ्योऽपि[६] । आशुपतनः[७] । सेना[८] । चक्ररहितेन[९]। अन्नप्रभवेण[१०] बलेन। यत् सुपर्णः[११]। देवैः सेवितम्[१२]। सोमम्[१३]। मनुष्याय[१४]। आजहार[१५]।

**भ॒रद्यदि॒ विर॒तो॒ वेवि॑जानः प॒थोरुणा॒ मनो॑जवा असर्जि ।**
**तूयं॑ ययौ॒ मधु॑ना सो॒म्येनो॒त श्रवो॑ विविदे श्ये॒नो अत्र॑ ॥ ५ ॥**

भरद्यदि[१६] । भरति[१७] । यदि[१८]। पक्षी[१९]। स्वर्गात्[२०]। चलन्[२१]। पथा[२२]। विस्तीर्णेन । मनोवेगः[२३]। सृष्टोऽभवत्[२४]—उद्युक्तोऽभवत्[२५] । क्षिप्रम् । अगच्छत्[२६] । सोममयेन । मधुना[२७] सह । अन्नम्[२८] । अपि[२९]। लेभे। श्येनः[३०]। स्वर्गे[३१]।

---

१. पक्षी Sy.
२. पिभ्यः D. पक्षिभ्यो युष्मत्तः Sy.
३. हे वेगेन मरुत्सदृशाः पक्षिणः ! Sy.
४. बलेन प्रकृष्टः Sy.
५. भवत्य P.
६. श्येनेश्येने D. श्येनोभ्यो० P. शंसनीयगमनेभ्यः स्वसमानजातिभ्यः पक्षिभ्यः सकाशात् Sy.
७. शीघ्रगामी Sy.
८. सौ M. श्येनः is suggested for सेना ॥ श्येनः प्रकृष्टो भवतु Sy.
९. चक्रवर्जितया Sy.
१०. अप्र० P. रथेन । अत्र स्वधाशब्दो रथवाची, "अचक्रया स्वधया वर्तमानम्" (RV. X. 27. 19.) इत्यादौ दर्शनात् Sy.
११. सुवर्णः P. शोभनपतनः Sy.
१२. सेवितः M.
१३. सोमलक्षणं हविः Sy.
१४. प्रजापतये Sy.
१५. अहरत् । द्युलोकसकाशादाहृतवान् Sy.
१६. ०द्यमी D. भरत् P.
१७. भरन्ति P. अहरत् सोममाहृतवान् Sy.
१८. यदा Sy.
१९. पक्षि P. पक्षी श्येनः Sy.
२०. अमुष्माद् द्युलोकात् Sy.
२१. सोमपालकान् भीषयन् Sy.
२२. अन्तरिक्षमार्गेण Sy.
२३. मनोवद्वेगयुक्तः सन् Sy.
२४. स्पृष्टो० P. सृस्टो० D. संसृष्ट आसीत् Sy.
२५. अभवन् P.
२६. जगाम Sy.
२७. अन्नेन सह Sy.
२८. सोमाहरणनिमित्तं यशः Sy.
२९. असि वि P. अपि च Sy.
३०. ०न P., D. सुपर्णः Sy.
३१. अस्मिँल्लोके Sy.

ऋजीपी श्येनो दद॑मानो अं॒शुं प॑रा॒वतः॑ शकु॒नो म॒न्द्रं मदं॑म् ।
सोमं॑ भरद्दादृहा॒णो दे॒वावा॑न्दि॒वो अ॒मुष्मा॑दुत्त॑राद॒दाय॑ ॥ ६ ॥

ऋजीपी[1] । ऋजुगामी । श्येनः[2] । धारयन् । अंशुम्[3] । परावतः[4] । शकुनशीलः[5] । मदकरम्[6] । मदम्[7] । सोमम् । दिव आहृतवान्[8] । सोमपालान् पीडयन्[9] । देवैस्तद्वान्[10] । दिवः[11] । अमुष्मात् । उद्गततरात् । आदाय[12] ।

आ॒दाय॑ श्ये॒नो अ॑भर॒त्सोमं॑ स॒हस्रं॑ स॒वाँ अ॒युतं॑ च सा॒कम् ।
अत्रा॒ पुरं॑धिरजहा॒द॒राती॒र्मदे॒ सोम॑स्य मू॒रा अमू॑रः ॥ ७ ॥

आदाय । आदाय[13] । श्येनः[14] । आजभार[15] । सोमम्[16] । सहस्रम्[17] ।

---

१. ०जीवी D. ०जिवी P. M. adds श्येनः after ऋजीपी ।

२. शंसनीयगमनः Sy.

३. धारय हूं पशुं P.
सोमम् Sy.

४. दूरात् Sy.

५. ०नलशीलः P., D.
पक्षी Sy.

६. मदकं P., D. मन्द्रं मदनीयं स्तुत्यम् Sy.

७. मदं मदकरम् Sy.

८. अहरत् Sy.

९. दृढीभवन् Sy.

१०. ०स्तद्वन् P.
देवैः सहितः Sy.

११. द्युलोकात् Sy.

१२. स्वीकृत्य Sy.

१३. Omitted by P., D. आदानं कृत्वा Sy. गृहीत्वा SKN.

१४. शंसनीयगमनः पक्षी Sy. श्येनो मध्यमस्थानः SKN.
इन्द्रः Dur.

१५. अहरत् । आजहार Sy. अहरत् स्वमात्यं प्रापितवान् पीतवानित्यर्थः SKN.
अपिबत् Dur.

१६. P. adds द्यावापृथिव्योरन्तः पपात पतनशीलस्य between आजभार and सोमम् ॥
सोमलक्षणमन्नम् Sy. ऋत्विग्भिर्विधानतः प्रत्तं . . सोमम् Dur.

१७. सहस्तम् M.
सहस्रसंख्याकम् Sy.

अयुतम् । च । सह । सोमयागान् । अत्र । बहुप्रज्ञः । शत्रून् । अत्यजत् ।

१. अयुतसंख्याकम् । अपरिमितसंख्याकमित्यर्थः Sy. कस्य ? अयुतमिति सामर्थ्याद् भक्षाणाम् । कथम् ? प्रतिसुत्यं हि दशानां चमसानां भक्षः । दशके सहस्रे सुत्यानामयुतं भवति। दशसहस्राणीत्यर्थः । अथवा—अयुतं च साकमित्ययुतं दक्षिणानाम् । कथम् ? सहस्रसाव्ये हि यद्यपि सत्रत्वादृत्विजां दक्षिणा नास्ति तथापि सदस्यदक्षिणाऽस्ति । 'यां सदस्येभ्यो ददाति सोमपीथं तया निष्क्रीणीते' इति सोमपीथार्थवादाद् यावन्तः सोमपीथास्तावत्या भवितव्यम् । ते चायुतम् । अतस्तत्सम्बन्धेन दक्षिणा अप्ययुतम् । बहुत्वमात्रप्रतिपादनार्थो वायुतशब्दः सहस्रशब्दोऽपि SKN. अयुतं च दक्षिणा प्राप्नुवन्ति न तु दीयन्ते सत्रत्वात् । पृष्ठचशमनाभिप्रायं वा दक्षिणादानं स्यात् । सहस्रसाव्ये सत्रे तेषां तत्सम्बन्धात् । . . . सहस्रसाव्यमभिप्रेत्य तत्सम्बन्धेनायुतं दक्षिणा इति वा । 'इति वा' शब्देन किं विकल्प्यते, सहस्रसाव्यं वा सूत्रम् ? यत् पठन्ति याज्ञिकाः तद्यथा—अतिरात्रयोर्मध्ये सहस्रमहानि शतकृत्वो दशरात्रस्यावृत्तिरग्ने सहस्रसाव्यमिति । तदह्नां सहस्रं दशभिश्चमसैर्गुणितं चमसपरिसङ्ख्ययोपलक्ष्यमाणमयुतं सोमभक्षाणां सम्पद्यते। सोमभक्षनिष्क्रयणश्रुतिश्च दक्षिणानामस्ति. . . न चासति प्रश्लेषे रूढिबाधो न्याय्य इति। असत्यप्यृत्विग्दक्षिणादानसम्बन्धे सहस्रसाव्यमेव सत्राणां प्रासर्पकाभिप्रायं वाऽयुतम् । अथवा—सहस्रमिति बहुनाम । 'सहस्रं सवान्' अभिषवा बहवः, प्रतिसवनमभिषवमभिप्रेत्य यस्मिन् कस्मिंश्चिद् दक्षिणावति सोमे, अयुतं च दक्षिणाः बह्वच इत्यर्थः। अस्ति हि प्रतिविशेषशब्दाः सामान्येषु भवन्तीति । तद्यथा हिमेनोदकेनेति । अदक्षिणत्वात् सत्राणामेवं वेत्यभिप्रेत्य वाशब्दं चकार Dur.

२. Omitted by P., D.

३. सवानां यज्ञानाम् Sy. सवशब्दः सुत्यानामह्नामुपलक्षणार्थः । यत्र सहस्रं सुत्याः कुर्वन्तीति शेषः । सहस्रसाव्यसञ्ज्ञके सत्र इत्यर्थः । तत्र हि सहस्रं सुत्याः कुर्वन्ति SKN. सहस्रं सुत्यानां यत्र कुर्वन्ति Dur.

४. अस्मिन् सोम आहृते सति Sy. अत्रशब्दस्तत्रार्थे तत्र तत्रैव SKN. अस्मिन् सहस्रसाव्ये सत्रे स श्येनः Dur.

५. °ज्ञा P. पुरन्धीर्बहुकर्मा Sy. बहुप्रज्ञो बहुकर्मा वा । कोऽसौ ? प्रकृतः श्येनः SKN. बहुनो धनस्य दाता Dur.

६. अत्रारातिशब्दः स्त्रीलिङ्गः Sy. स्त्रीलिङ्गश्रुतेः शत्रुसेना इति भावः । अथवा रातिर्दानम् । अरातयोऽदानबुद्धयोऽनधिकृतपुरुषजातीः SKN. असुरानमित्रान् पृथक्त्वपक्षेऽभ्यजयत् । प्राणमूढानप्रतिपत्तिकान् कृत्वा विषादमुपनीय । अमूढो निस्साध्वसः । त्रित्वपक्षे तु—अदानानिति वा । रातिर्दानार्थः, तत्प्रतिषेधेनारातिः प्राक् सोमपानमदप्राप्तेः । अदानानिति न दास्यामीत्येवंधियः Dur.

७. अत्यजत् । जघानेत्यर्थः Sy. हन्तेर्जहातेर्वा पर्यस्य रूपम् । हतवांस्त्याजितवान्वा । . . अजहात् स्वयमेव त्यक्तवान् SKN. अत्यजद् दाता सम्भेदे Dur.

सोममदे। मूढाः। न मूढः।

IV.27.

गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा।
शतं मा पुर आयसीररक्षन्नध श्येनो जवसा निरदीयम् ॥ १ ॥

गर्भे। गर्भे। एव। सन्। अहम्। एषाम्। देवानाम्=दिवि स्थितानाम्। जन्मानि।

---

१. VM. seems to explain सोमस्य and मदे together as सोममदे ॥ सोमस्य सम्बन्धिनि हर्षे सति Sy. सोमसम्बन्धिमदे। 'यस्य च भावेन भावलक्षणम्' इति सप्तमी तच्छ्रुतेश्च लक्षणयोग्यक्रियापदाध्याहारः। मदे सति प्राप्ते मदे SKN. तृप्तौ सोमस्य प्राप्तायाम् Dur.

२. अरातिविशेषणम्। मूढा अज्ञाः SKN. मूढमतयः कार्पण्यसंयुक्ता ये आसंस्तान्प्रति सोमस्य मदे प्राप्ते Dur.

३. अमूढः प्राज्ञ इन्द्रः Sy. अमूढोऽतिरोहितज्ञानः श्येनः SKN. अमूढोऽकृपणो भूत्वा Dur.

४. 'आदाय श्येनोऽहरत् सोमम्। सहस्रं सवान्। अयुतं च सह। सहस्रं सहस्रसाम्यमभिप्रेत्य। तत्रायुतं सोमभक्षाः। तत्सम्बन्धेनायुतं दक्षिणा इति वा। तत्र पुरन्धिरजहादमित्रानदानानिति वा। 'मदे सोमस्य मूरा अमूरः' (IV. 26. 7.) इति ऐन्द्रे च सूक्ते सोमपानेन च स्तुतः। तस्मादिन्द्रं मन्यन्ते N. 11. 2., SKN. III. 52.
Ms. D. puts the figure ॥२६॥ here to indicate the end of twenty-sixth hymn. No such number is given in P. and M.

५. 'गर्भे नु' इति पञ्चर्चं षष्ठं सूक्तं वामदेवस्यार्षं त्रैष्टुभम्। अन्त्या शक्वरी षट्पञ्चाशदक्षरा। श्येनो देवता। पूर्वसूक्ते 'अष्टौ वा' (KSA. 22. 26. p. 17.) इत्युक्तत्वात्, अन्त्याया इन्द्रो वा देवता। तथा चानुक्रान्तम् 'गर्भे नु पञ्चान्त्या शक्वरी' (KSA. 22. 27. p. 17.) इति। श्येने निष्केवल्यशस्त्रे इदं सूक्तम्। सूत्रं तु पूर्वमुदाहृतम् अत्रैष श्लोकः पठ्यते—
श्येनभावं समास्थाय गर्भाद्योगेन निःसृतः।
ऋषिर्गर्भे शयानः सन् ब्रूते 'गर्भे नु सन्निति' ॥ Sy.
देहादावात्मबुद्धिर्न कर्तव्या। तथा चोक्तम्—
अनात्मभूते देहादावात्मबुद्धिस्तु देहिनाम्।
साऽविद्या तत्कृतो बन्धस्तन्नाशो मोक्ष उच्यते ॥ इत्यात्मवृत्तौ अस्मिन्नर्थे श्लोकपूर्वा ऋक् (RV. IV. 27. 1.) वामदेवः श्येनरूपमास्थाय निःसृतो विषण्णो ब्रह्म तुष्टाव। तथोक्तम्—श्येनरूपं समास्थाय...सन्निति' DDN.

६. विद्यमानः Sy., DDN.

७. वामदेवः Sy.

८. इन्द्रादीनाम् Sy.

अनुक्रमेण । ज्ञातवानस्मि[१] । शतम्[२] । मा[३] । पुरः[४] । अयसा निर्मिताः[५] । सोममाजिहीर्षन्तमरक्षन्[६] ।
अथ[७] । अहम्[८] । जवेन[९] प्रविश्य[१०] । सोममादाय[११] निर्गतोऽस्मि[१२] ।[१३]

**न घा स मामप जोषं जभाराभीमास त्वक्षसा वीर्येण ।**
**ईर्मा पुरंधिरजहादरातीरुत वातॉ अतरच्छूशुवानः ॥ २ ॥**

न घा[१४] सः । न । एव खलु । स[१५] सोमरक्षी । सेवमानं माम्[१६] । बलेन[१७] । अपहृतवान्[१८] ।
अहं[१९] पुनरेव । अभ्यभवम् । तनूकर्तृणा[२०] । बलेन[२१] । परोक्षं शेषः[२२]—ईरणकुशलः[२३] । बहुप्रज्ञः[२४] । शत्रु-
सेनास्ताः[२५] । अत्यक्रामत्[२६] । अपि च । आगतान्[२७] सोमपालान् । अतरत्[२८] । दीप्यमानः[२९] ।

---

१. आनुपूर्व्येणाज्ञासिषम् । परमात्मनः सकाशात् सर्वे देवा जाता इत्यवेदिषमित्यर्थः Sy.
२. शम् P. इतः पूर्वं शतं बहूनि Sy. शतं सहस्रं बहुनामनी Ngh. 3. 1.
३. माम् Sy.
४. शरीराणि Sy.
५. अयोमयान्यभेद्यानि Sy.
६. अपालयन् । यथाहं शरीराद्व्यतिरिक्तमात्मानं न जानीयां तथा मामरक्षन्नित्यर्थः Sy., DDN.
७. अधुना Sy. अध अधुना अध श्येनेति दीर्घे प्राप्ते (Cf. RPR. 7. 33.) संयोगपरत्वान्न DDN.
८. श्येनवत्स्थितोऽहम् Sy.
९. वेगेन Sy.
१०. प्रवि P., D.
११. ०ममनाय P.
१२. शरीरान्निरगमम् । अनावरणमात्मानं जानन्निर्गतोऽस्मीत्यर्थः । 'पुरुषे ह वा अयमादितः' इति खण्डे 'गर्भ एवैतच्छयानो वामदेव एवमुवाच' (AA. 2. 5. 1.) इत्यादिनायमर्थः सम्यक् प्रतिपादितः Sy.
१३. VM. ignores विद्वा ॥ विद्वानि सर्वाणि Sy.
१४. ०ह्वः P., D.
१५. गर्भः Sy.
१६. वामदेवम् Sy.
१७. पर्याप्तम् Sy.
१८. अपजहार, गर्भेऽपि वसतो मे मोहो नाभूदित्यर्थः Sy.
१९. अहं is omitted by P., D. अहं तु ईम् । इदं गर्भस्थं दुःखम् Sy.
२०. ०वन्त D. ०रेव भ्यवन्त० P. तीक्ष्णेन Sy.
२१. ज्ञानसामर्थ्येन Sy.
२२. ०क्ष शे० P. ०क्षाशे० M. परोक्षः शेषः is suggested for परोक्षं शेषः ।
२३. सर्वस्य प्रेरकः Sy.
२४. पुरां धारकः परमात्मा Sy.
२५. शस्त्रं शसनात्ताः P. शत्रुं सनास्ताः D. गर्भसंश्रितान् शत्रून् Sy.
२६. ०क्र० P., D. अत्यजत् । जघान Sy.
२७. गर्भक्लेशकरान् वायून् Sy.
२८. सोमपानानन्तरं P. सोमपानानन्तर D. अतारीत् Sy.
२९. वर्धमानः परिपूर्णः परमात्मा Sy.

अव यच्छ्येनो अस्वनीदध द्योर्वि यद्यदि वात ऊहुः पुरंधिम् ।
सृजद्यदस्मा अव ह क्षिपज्ज्यां कृशानुरस्ता मनसा भुरण्यन् ॥ ३ ॥

अव[1] यत् । अनन्तरम्[2] । दीप्यमानः[3] । श्येनः । यदा । अवास्वनीत्[4] । यदा । वा[5] ।
अस्मात्[6] सोमस्थानात्[7] । पुरन्धि[8] श्येनम्[9] । विविधमपनीतवन्तः[10] सोमपालाः । यदा वा । अस्मै[11] ।
कृशानुरिषुमवासृजत्[12] । ज्याम्[13] । विक्षिपन्[14], नुमभावश्छान्दसः । कृशानुः[15] । वेद्धा[16] । मनसा
तुल्यवेगम्[17] । गच्छन् भरमाणो वेषम्[18][19] ।

ऋजिप्य ईमिन्द्रावतो न भुज्युं श्येनो जभार बृहतो अधि ष्णोः ।
अन्तः पतत्पतत्र्यस्य पर्णमध यामनि प्रसितस्य तद्वेः ॥ ४ ॥

ऋजिप्यः[20] । ऋजुगामी[21] । श्येनः[22] । सोमम्[23] । इन्द्रवतः[24] यजमानस्य । भोजनम्[25] । बृहतः[26] ।

---

१. कुव D. कव P.
२. ०र P. तदानीं सोमाहरणकाले Sy.
३. द्योः द्युलोकात् Sy.
४. ०स्वन्नीत् P. अवाङ्मुखं शब्दमकरोत् Sy.
५. च । वेति चार्थे Sy.
६. ०स्मान् M.
७. ०न P. श्येनात् Sy.
८. पुरन्धि P., D. सोमम् Sy.
९. श्येम P., D.
१०. ०धंमनीत P., D. सोमपालाः विक्षिप्तवन्तः Sy.
११. श्येनाय शरम् Sy.
१२. त्यक्तवान् तथा च ब्राह्मणम्—'तस्या अनुविसृज्य कृशानुः सोमपालः सव्यस्य पदो नखमच्छिनत्' (AB. 3. 26.) इत्यादि । यदा सोमपाला इत्थमित्थं चक्रुस्तदा श्येनः सोममाजहारेत्यृचोत्तरया सम्बन्धः Sy.
१३. ०सृज ज्य P. ज्या D. धनुषः कोटौ मौर्वीम् Sy.
१४. विक्षेप Sy.
१५. The passage कृशानुर्वेद्धा should immediately follow कृशानुः and precede इषुम् ॥ एतन्नामकः सोमपालः Sy.
१६. शराणां क्षेप्ता Sy.
१७. ०ल्यं वे० P., D. मनोवेगेन Sy.
१८. वेषुम् is suggested for वेषम् । Cf. N. 12. 22.
१९. VM. ignores ह ॥ ह खलु Sy.
२०. ऋजीप्यः D. ऋजीव्यः P. जी is long in ऋजीपी (RV.IV.26.6.) and also in ऋजीषी ।
२१. जुनामि P.
२२. ०नम् D.
२३. Omitted by D. एनं सोमम् Sy.
२४. इन्द्रा० M. इन्द्रो रक्षको यस्य तस्मात् । इन्द्रः समर्थः तद्वतो देशात् Sy.
२५. भुज्युनामकं राजानं यथाश्विनावाजह्रतुस्तद्वत् Sy.
२६. महतः Sy.

सानोः । अध्याजभार । द्यावापृथिव्योरन्तः । पपात । पतनशीलम् । अस्य । वर्णे । तदानीम् । गमने । प्रसक्तस्य । पक्षिणः ।

अधं श्वेतं कलशं गोभिरक्तमापिप्यानं मघवा शुक्रमन्धः ।
अध्वर्युभिः प्रयतं मध्वो अग्रमिन्द्रो मदाय प्रति धत्पिबध्यै
शूरो मदाय प्रति धत्पिबध्यै ॥ ५ ॥

अध । अथ । सोमाक्तं श्वेतम् । कलशम् । गोविकारैर्दध्यादिभिः । अक्तम् । उपर्युपरि वर्धमानम् । मघवा । निर्मलम् । अदनीयम् । अध्वर्युभिः । प्रयतम् । मधुरतस्य । अग्रभूतम् । इन्द्रः । मदाय । पातुम् । ओष्ठयोः प्रत्यदधात् । शूरः ।

१. सानोः P., D. अधि उपरि स्नोः स्थिताद् द्युलोकात् Sy.
२. आजहार Sy.
३. त्यावा० D.
४. मध्ये स्थितम् Sy.
५. अपतत् Sy.
६. शीम् M.
७. श्येनस्य Sy.
८. पर्णम् is suggested for वर्णे ।
९. Omitted by P., D. युद्धे Sy.
१०. कृशानोरस्त्रैर्बद्धस्य Sy.
११. वेः गन्तुः Sy.
१२. VM. ignores न and तत् ॥ तत्र दृष्टान्तः यथा Sy.
१३. अधं D.
१४. अधुना Sy.
१५. शुभ्रम् Sy.
१६. कलशे पात्रे स्थितम् Sy.
१७. ०विकात् दैर्ध्यादिभिः D. गोपितारैर्दध्या० M. गव्येन पयसा Sy.
१८. सिक्तम् Sy.
१९. ०न M. आप्याययन्तम् Sy.
२०. धनवान् Sy.
२१. सारोपेतम् Sy.
२२. सोमलक्षणमन्नम् Sy.
२३. प्रयम् P., D. दत्तम् Sy.
२४. मेधरस्य P., D. मधुरस्य is suggested for मधुरतस्य ॥ सोमरसस्य Sy.
२५. अग्रे Sy.
२६. मदार्थम् Sy.
२७. प्रतिदधातु Sy.
२८. शून्द्रः P. विक्रान्तः Sy.
२९. VM. ignores the repeated word मदाय । प्रति । धत् and पिबध्यै ॥ पुनरुक्तिरादरार्था Sy. Ms. D. puts the figure ॥२७॥ here to indicate the end of twenty-seventh hymn. No such number is given in P. and M.

## IV. 28.

त्वा युजा तव तत्सोम सख्य इन्द्रो अपो मनवे सस्रुतस्कः ।
अहन्नहिमरिणात्सप्त सिन्धूनपावृणोदपिहितेव खानि ॥ १ ॥

त्वा[1] युजा[2] । त्वया । सहायेन । तव[3] । सख्ये[4] । सोम ! तदानीम्[5] । इन्द्रः । अपः[6] । मनुष्याय[7] । सस्यन्दाः[8] । अकरोत्[9] । अहन्[10] । अहिम्[11] । अगमयच्च[12] । सप्त[13] । नदीः[14] । अपावृणोत्[15] । अपिहितानीव[16] । द्वाराणि[17] नदीनां निःसरणमार्गान् ।

त्वा युजा नि खिदत्सूर्यस्येन्द्रश्चक्रं सहसा सद्य इन्दो ।
अधि ष्णुना बृहता वर्तमानं महो द्रुहो अप विश्वायु धायि ॥ २ ॥

त्वा युजा । त्वया । सहायेन । प्रावृहत्[18] । सूर्यस्य[19] । इन्द्रः । चक्रम् । बलेन[20] । सद्य[21] एव । सोम ! महता । समुच्छ्रितेन[22] पर्वतेन[23] । गच्छन्[24] । सर्वगम्[25] । महतः[26] । द्रोग्धुः[27] सूर्यात् । अधि[28] । इन्द्रेणापाधायि[29] ।

---

१. 'त्वा युजा' इति पञ्चर्चं सप्तमं सूक्तं वामदेवस्यार्षं त्रैष्टुभमिन्द्रासोमदेवताकम् । अनुक्रान्तञ्च 'त्वा युजेन्द्रासोमम्' (KSA. 22. 28. p. 17.) इति । विनियोगो लैङ्गिकः Sy.
२. त्वया M., D., P.
३. त्वदीये Sy.
४. सखित्वे सति Sy.
५. तस्मिन् Sy.
६. Omitted by P., D. वृष्टिलक्षणान्युदकानि Sy.
७. मनुष्येभ्यः Sy.
८. सरणशीलाः Sy.
९. ०न्दनाकारो० P. ०न्दनाक० D.
१०. हतवान् Sy.
११. वृत्रमसुरम् Sy.
१२. अनमय० D. प्रैरयत् Sy.
१३. सर्पणशीलाः Sy.
१४. अपः Sy.
१५. उद्घाटितवान् Sy.
१६. वृत्रेण तिरोहितानि च, अत्रेवशब्दश्चार्थे Sy. १७. स्रोतसां द्वाराणि Sy.
१८. आच्छिनत् Sy.
१९. प्रेरकस्य सवितुः सम्बन्धिनः पूर्वं द्विचक्रस्य रथस्यैकम् Sy.
२०. अभिभावुकेन बलेन Sy.
२१. सपदि Sy.
२२. स्थितेन Sy.
२३. Omitted by P., D. अन्तरिक्षेण Sy.
२४. ०च्छत् P., D. वर्तमानम् Sy.
२५. विश्वायु सर्वतो गन्तृ चक्रम् Sy.
२६. प्रभूतस्य Sy.
२७. द्रोग्धुः सूर्यस्य सम्बन्धि Sy.
२८. उपरि Sy.
२९. अवाधा० P., M. अपाहारि Sy.

अह॒न्निन्द्रो॒ अद॑हद॒ग्निरि॑न्दो पु॒रा दस्यू॑न्म॒ध्यंदि॑नाद॒भीके॑ ।
दु॒र्गे दु॑रो॒णे क्रत्वा॒ न या॒तां पु॒रू स॒हस्रा॒ शर्वा॒ नि ब॑र्हीत् ॥ ३ ॥

अहन् । तदानीम् इन्द्रः । दस्यून्[1] । अहन्[2] । अग्निश्च[3] । तानदहत्[4] । सोम । मध्यन्दिनात्[5] । प्रागेव[6] । सङ्ग्रामे । दुर्गे[7] । देशे पर्वतादौ[8] । कार्यार्थम्[9] । इव[10] । गच्छतां[11] पथिकानाम्[12] । पुरूणि[13] । सहस्राण्यसुराणां[14] सार्थवत् सङ्गतानि । हिंसक[15] इन्द्रः । निवर्हीत्[16] ।

विश्व॑स्मात्सीमध॒माँ इ॑न्द्र॒ दस्यू॒न्विशो॒ दासी॑रकृणोरप्रश॒स्ताः ।
अबा॑धेथा॒मम॑ृणतं॒ नि शत्रू॒नवि॑न्देथा॒मप॑चितिं॒ वध॑त्रैः ॥ ४ ॥

विश्वस्मात् । सर्वस्माल्लोकात्[17] । अधमान्[18] । इन्द्र ! सर्वान्[19] । दस्यून्[20] । अकृणोः[21] । तथोपक्षपयित्रीश्च[22] । विशः[23] । अधनाः[24] कृतवान् । त्वं च सोमश्च[25] शत्रून्[26] । नितरां बाधितवन्तौ[27] । मारितवन्तौ[28] च । अलभेथां[29] च । पूजाम् । शत्रूणां वधैः[30] ।

---

१. शत्रून् Sy.
२. अवधीत् Sy.
३. अग्निश्च is suggested for अग्निञ्च ।
४. कांश्चिच्छत्रून् ददाह Sy.
५. ध्यन्दिनात् P. ०नान् M. कीदृशाविन्द्राग्नी ? मध्याह्नात् Sy.
६. पुरस्तात् पूर्वाह्णे तव पानात् लब्धबलाविति शेषः Sy.
७. दुरवगाहे देशे Sy.
८. पर्वातौदौ D. दुरवने रक्षितुमशक्ये Sy.
९. कर्यां० D.
१०. तत्र दृष्टान्तः, कर्मणा स्वकीयं कार्यमुद्दिश्य गच्छतः पथिकान् यथा धनलोलुपश्चोरो हन्ति तद्वत् Sy.
११. ०ताम P.
१२. Omitted by P., D. असुराणाम् Sy.
१३. बहूनि Sy.
१४. अपरिमितानि Sy.
१५. Sy. seems to read सर्वा for शर्वा in the text and explain it as सर्वाणि निरवशेषाणि ।
१६. बर्ही P. न्यबर्हीत् । इन्द्रोऽवधीत् Sy.
१७. सव० P. सर्वस्माद् गुणात् Sy.
१८. असमान् P., D. हीनान् अकरोः Sy.
१९. एनान् Sy.
२०. दसून् P.
२१. ०णो P. अकरोः Sy.
२२. कर्महीनाः Sy.
२३. मानुषीः प्रजाः Sy.
२४. गर्हिता अकृणोः Sy.
२५. हे इन्द्रासोमौ ! युवाम् Sy.
२६. शत्रुं M.
२७. अबाधेथाम् Sy.
२८. नितरां हिंसितवन्तौ Sy.
२९. जनेभ्यः अलभेथाम् Sy.
३०. अपि च तेषां शत्रूणां प्रहारैः Sy.

एवा सत्यं मघवाना युवं तदिन्द्रश्च सोमोर्वमश्व्यं गोः ।
आदर्दृतमपिहितान्यश्ना रिरिचथुः क्षाश्चित्ततृदाना ॥ ५ ॥

एव[1]। एवम्[2]। सत्यम्[3]। धनवन्तौ[4]। युवाम्[5]। तदिदं[6] कृतवन्तौ। इन्द्रः। च[7]। सोम! गौरपि[8]। अश्वसङ्घम्[9]। अत्यन्तं[10] गन्तारम्। आदर्दृतं[11] च। अपिहितद्वारान् मेघान्[12]। तदानीं सर्वां[13] पृथिवीम्। महत्तया[14]। रिरिचतुः[15]। मेघान् विध्यन्तौ[16][17]।

IV.29.

आ नः स्तुत उप वाजेभिरूती इन्द्र याहि हरिभिर्मन्दसानः ।
तिरश्चिदर्यः सवना पुरूण्याङ्गूषेभिर्गृणानः सत्यराधाः ॥ १ ॥

आ[18] नः[19]। उपायाहि[20]। अश्वैः मोदमानः। स्तुतः[21]। अस्माकम्[22]। अन्नैः[23] सह। रक्षणार्थम्[24]।

१. एवा सत्यं M.
२. एवमुक्तप्रकारेण यत् कृतवन्तौ Sy.
३. सत्यमेव Sy.
४. मघवानौ ! धनवन्तौ ! इन्द्रासोमौ ! Sy.
५. हे सोम ! त्वं च इन्द्रश्च इति युवामुभौ Sy.
६. तत् सर्वम् Sy.
७. ०न्ता विश्व P.
८. गवां समूहं च Sy.
९. गोरश्वस्यम् P. अश्वसंघम् D. अश्वसमूहम् Sy.
१०. महान्तम् Sy.
११. आदर्द P. आवर्वतं D. आवद्रुतं M. As the reading of the Mss. is grammatically wrong, I have put it down in the footnote and adopted the reading of the Vedic stanza itself in the commentary. आदरयतम् Sy.
१२. वाहितद्वारा माघन् P. पणिभिराच्छादितानि गवां वृन्दानि Sy.
१३. सर्वाः D., M. पणीनां भूमीश्च Sy.
१४. महक्तया D. अशनपरेण बलेन Sy.
१५. त्तयातिरिरि० M. चयु P. रेचितवन्तौ Sy.
१६. शत्रूणां हिंसकौ Sy.
१७. VM. ignores चित् ॥ चित् च Sy. Ms. D. puts the figure ॥२८॥ here to indicate the end of twenty-eighth hymn. No such number is given in P. and M.
१८. 'आ नः स्तुतः' इति पञ्चर्चमष्टमं सूक्तं वामदेवस्यार्षं त्रैष्टुभमिन्द्रम् 'आ नः स्तुतः' इत्यनुक्रमणिका। (KSA. 22. 29. p. 17.) विनियोगो लैङ्गिकः Sy.
१९. न P.
२०. ०पया० P., D. प्रत्यागच्छ Sy.
२१. ०नास्ततः M. स्तुतस्त्वम् Sy.
२२. ०ते स्मा० P. अस्मदीयान् यज्ञान् Sy.
२३. वाजैः Sy.
२४. ऊत्यै नोऽस्माकं रक्षणार्थम् Sy.

तिर इति प्राप्तकाल[१]नाम प्राप्तकालानि । सवनानि । सर्वाणि[२] । स्वामी[३] । स्तोमैः[४] । स्तूयमानः ।
सत्यवनः[५] ।

आ हि ष्मा याति नर्यश्चिकित्वान्हूयमानः सोतृभिरुप यज्ञम् ।
स्वश्वो यो अभीरुर्मन्यमानः सुष्वाणेभिर्मदति सं ह वीरैः ॥ २ ॥

आ हि[६] ष्मा । आ । हि[७] । स्म । गच्छति[८] । नृहितः[९] । प्राज्ञः[१०] । स्तोतृभिः[११] । हूयमानः[१२] । यज्ञम्[१३] । उप[१४] । स्वश्वः[१५] । यः[१६] । निर्भयः[१७] । मन्यमानः[१८] । सोमसुद्भिः[१९] । वीरैः[२०] । सह मदति[२१][२२] ।

श्रावयेदस्य कर्णा वाजयध्यै जुष्टामनु प्र दिशं मन्दयध्यै ।
उद्वावृषाणो राधसे तुविष्मान्करन्न इन्द्रः सुतीर्थाभयं च ॥ ३ ॥

श्रावय । श्रावय[२३] । एव[२४] । इन्द्रस्य[२५] । कर्णौ । बलिनं[२६] कर्तुम् । स्तोतः ! त्वया सेविताम्[२७] । दिशम्[२८] । मादयितुम्[२९] । प्रकर्षेणानुश्रावय । सोऽयमुद्वावृषाणः[३०] । अन्नाय[३१] । बलवान् । करोतु ।

---

१. ०लमान P. ०प्तनाम M. प्राप्तानि Sy. तिरः सतः इति प्राप्तस्य N. 3. 20.
२. पूर्णानि Sy.
३. स्वामं M. ०मीय P.
४. स्तोत्रैः Sy.
५. VM. ignores इन्द्र and चित् ।
६. आहिः P., D.
७. हि स्म इति पूरणौ Sy.
८. आगच्छतु Sy.
९. नृभ्यो हितः Sy.
१०. ०ज्ञ P. सर्वं जानन् Sy.
११. सातृ० P., D. सोममभिषुण्वद्भिर्ऋत्विग्भिः Sy.
१२. भूय० P., D.
१३. अस्मदीयं यज्ञम् Sy.
१४. प्रति Sy.
१५. स्वयेश्चा D. स्वयेयेश्वा P. शोभनाश्वोपेतः Sy.
१६. इन्द्रः Sy.
१७. ०येन D. निर्भयशीलः Sy.
१८. स्तूयमानः Sy.
१९. सुन्वद्भिर्यजमानैः Sy.
२०. शूरैर्मरुद्भिः सह Sy.
२१. माद्यति । स इन्द्र आगच्छत्विति पूर्वेण सम्बन्धः Sy.
२२. VM. ignores ह ॥ ह एव Sy.
२३. श्रवय D. स्तोत्राणि श्रावय Sy.
२४. इदिति पूरणः Sy.
२५. इन्द्रस्य सम्बन्धिनौ Sy.
२६. इन्द्रं बलिनं कर्तुम् Sy.
२७. सेवितासु Sy.
२८. ०श P. अनुदिशं सर्वासु दिक्षु Sy.
२९. ०तुम P., D. प्रकर्षेणेन्द्रम् Sy. मादयितुं च Sy.
३०. उद्वृषणः P., D. सोमेनोत्सिच्यमानः Sy.
३१. धनार्थम् Sy.

अस्मान्[1] । इन्द्रः । शोभनस्थानान्[2] । अभयम्[3] । च करोतु ।

अच्छा यो गन्ता नाधमानमूती इत्था विप्रं हवमानं गृणन्तम् ।
उप त्मनि दधानो धुर्या३शून्त्सहस्राणि शतानि वज्रबाहुः ॥ ४ ॥

अच्छ । अभिगन्ता[4] । यः[5] । याचमानम् । रक्षणार्थम् । इत्थम्[6] । मेधाविनम्[7] । ह्वयन्तम्[8] । स्तुवन्तं[9] च । उपनयति । आत्मनि[10] । स्वरथधुरि[11] । अश्वान्[12] । नियुञ्जन्[13] । धनानां सहस्राणि[14] । शतानि[15] च । वज्रबाहुः[16] ।

त्वोतासो मघवन्निन्द्र विप्रा वयं ते स्याम सूरयो गृणन्तः ।
भेजानासो बृहद्दिवस्य राय आकाय्यस्य दावने पुरुक्षोः ॥ ५ ॥

त्वोतासः । त्वया रक्षिताः[17] । मघवन्[18] ! इन्द्र ! विप्राः[19] । वयं च । त्वदीयाः[20] । स्याम[21] । प्राज्ञाः[22] । स्तुवन्तः[23] । भजमानाः[24] । महादीप्तिम्[25] । धनम्[26] । सर्वतः शब्दनीयम्[27] । दानाय[28] । बहुभिः

१. अस्माकम् Sy.
२. शोभनानि तीर्थानि Sy.
३. भयराहित्यं च Sy.
४. आभिमुख्येन गमनशीलो भवतीति शेषः । स इन्द्रः सुतीर्थान्यभयं च करोत्विति पूर्वेण सम्बन्धः Sy.
५. या P., D. इन्द्रः Sy.
६. इध्दं M. अनेन प्रकारेण Sy.
७. ०नः M.
८. आह्वयन्तम् Sy.
९. स्तुवन्तं यजमानम् Sy.
१०. आत्मनि स्थितानात्मवश्यान् Sy.
११. रथवहनप्रदेशे Sy.
१२. शीघ्रगामिनोऽश्वान् Sy.
१३. नियुज्य P. संस्थापयन् Sy.
१४. सहस्रसंख्याकान् Sy.
१५. शतसंख्याकान् Sy.
१६. यज्ञबा० P. वज्रहस्तः Sy.
१७. ०ताच P. ०क्षता D.
१८. हे धनवन् ! Sy.
१९. मेधाविनः Sy.
२०. या P., D. त्वदीयस्य Sy.
२१. भवेम Sy.
२२. प्रज्ञाः P. स्तोतारः Sy.
२३. त्वां स्तुवन्तः Sy.
२४. त्वां भजमानाः Sy.
२५. ०हान् दी० P., D. महद्दीप्तेः Sy.
२६. धनस्य Sy.
२७. आ समन्तात् स्तुत्यस्य Sy.
२८. दाने निमित्ते सति Sy.

शब्दितम्[1] ।[2]

IV.30.

नकि॑रिन्द्र॒ त्वदुत्त॑रो॒ न ज्याया॑ँ अस्ति वृत्रहन् । नकि॑रे॒वा यथा॒ त्वम् ॥ १ ॥

नकिः[3] । न कश्चित्[4] । इन्द्र ! त्वत्तः[5] । उत्तरकालीनः । विद्यते[6] । न च । पूर्वकालीनः[7] । न । अपि[8] । समः[9][10][11] ।

स॒त्रा ते॒ अनु॑ कृ॒ष्टयो॒ विश्वा॑ च॒क्रेव॑ वावृतुः । स॒त्रा म॒हाँ अ॑सि श्रु॒तः ॥ २ ॥

सत्रा[12] । सत्यमेव । तव[13] । प्रजाः । विश्वानि[14] च भूतानि । अनुवर्तनं कुर्वन्ति[15] । चक्राणीव[16] रथम् । सत्यमेव । महान्[17] । असि[18] । विश्रुतः[19] ।

---

१. बह्वन्नस्य बहुकीर्तेर्वा Sy.

२. Ms. D. puts the figure ॥२६॥ here to indicate the end of twenty-ninth hymn. No such-number is given in P. and M.

३. 'नकिरिन्द्र' इति चतुर्विंशत्यृचं नवमं सूक्तं वामदेवस्यार्षं गायत्रम् । अष्टमी चतुर्विंशी च द्वे अनुष्टुभौ । इन्द्रो देवता । 'दिवश्चिद्घा' इत्ययं तृच उषोदेवताक इन्द्रदेवताकश्च । तथा चानुक्रान्तम्—'नकिश्चतुर्विंशतिर्दिवश्चित्तृच उषस्यश्च गायत्रं ह्यष्टम्यन्त्ये चानुष्टुभौ' (KSA. 22. 30. p. 17.) इति । अतिरात्रे तृतीये पर्याये मैत्रावरुणशस्त्रे उत्तमावर्जमिदं सूक्तम् । तथा च सूत्रितम् 'नकिरिन्द्र त्वदुत्तर इत्युत्तमामुद्धरेत्' (ASS. 6. 4.) इति Sy.

४. ०कि D.

५. किञ्चित् P.

६. लोके एकोऽपीति शेषः । उत्तरः उत्कृष्टतरः Sy.

७. भवति Sy.

८. M. adds विद्यते न च पूर्वकालः after पूर्वकालीनः ॥ त्वत्तः ज्यायान् प्रशस्यतर एकोऽपि (न) अस्ति Sy.

९. नपि D. नकिरेव अस्ति नैव भवति । कश्चिदपि लोक इन्द्रसदृशो नास्तीत्यर्थः Sy.

१०. VM. seems to explain यथा and त्वम् together as समः ॥ हे इन्द्र ! त्वं लोके यथा प्रसिद्धो भवसि तथाविध एकोऽपि Sy.

११. VM. ignores वृत्रहन् ॥ हे वृत्रहन् ! वृत्रस्य नाशक !

१२. हे इन्द्र ! Sy.

१३. त्वाम् Sy.

१४. व्याप्तानि Sy.

१५. अनु लक्षीकृत्य वर्तन्ते Sy.

१६. तत्र दृष्टान्तः—यथा चक्राणि शकटमनुवर्तन्ते तद्वत् Sy.

१७. हे इन्द्र ! महांस्त्वम् Sy.

१८. भवसि Sy.

१९. गुणैः प्रख्यातः Sy.

विश्वे चनेदना त्वा देवास इन्द्र युयुधुः । यदहा नक्तमातिरः ॥ ३ ॥

विश्वे चन[1] । सर्वे[2] । हि । एव[3] । देवाः । प्राणनेन[4] बलेन । त्वाम्[5] । योधयाञ्चक्रुः[6] । यदा[7] त्वं सूर्यस्य चक्राहरणेन गमनं निरुन्धानः । अहानि[8] । रात्रि[9] च । आतिरः[10]=विनाशितवानसि सूर्यानुदये ह्येकरूपं[11] भवति सर्वम्[12][13] ।

यत्रोत बाधितेभ्यश्चक्रं कुत्साय युध्यते । मुषाय इन्द्र सूर्यम् ॥ ४ ॥

यत्रोत[14] । यत्र[15] । बाधितेभ्यः कुत्ससैनिकेभ्यः[16] । कुत्साय च । युध्यते[17] । रक्षणाय सूर्यम्[18] । चक्रम् । अमुष्णाः[19][20] ।

यत्र देवाँ ऋघायतो विश्वाँ अयुध्य एक इत् । त्वमिन्द्र वनूँरहन् ॥ ५ ॥

यत्र देवान्[21] । यस्मिन् युद्धे[22] । देवान्[23] । बाधमानान् । सर्वान्[24] । एकः[25] । एव । अयुध्यः[26] । त्वम् । इन्द्र । यत्र हिंसितॄंश्च[27] । हतवानसि[28] ।

---

१. विश्वेनः P. विश्वेन D.
२. सर्वेऽप्येवं M.
३. असुरान् विजिगीषवो देवाः Sy.
४. प्राणेन P. प्राणरूपेण बलेन Sy.
५. त्वां सहायं लब्ध्वा Sy.
६. असुरैः सह युद्धं चक्रुः Sy.
७. यस्मात् कारणात् Sy.
८. अहःसु Sy.
९. रात्रीश्च P. रात्रिषु च Sy.
१०. आ समन्ताच्छत्रूनवधीः, अतः कारणाद् युयुधुरिति पूर्वेण सम्बन्धः Sy. आतिरद् इति वधकर्मा Ngh. 2. 19.
११. ०येऽप्येक० M.
१२. सर्वस्य M.
१३. VM. ignores इन्द्र ।
१४. यत्रोतः P., D.
१५. यस्मिन् युद्धे Sy.
१६. कुत्ससहायेभ्यः Sy.
१७. बुध्यते P., D. युद्धं कुर्वते Sy.
१८. सूर्यं सूं D. सूर्यं M. सूर्यसम्बन्धि Sy.
१९. अपहृतवानसीत्यर्थः । तस्मिन् युद्धे 'प्रावः शचीभिरेतशम्' (RV. IV. 30. 6.) इति परेण सम्बन्धः Sy.
२०. VM. ignores उत and इन्द्र ॥ उत अपि च Sy.
२१. ०वानः P. २२. सङ्ग्रामे Sy.
२३. इन्द्रादीन् Sy.
२४. राक्षसादीन् Sy.
२५. असहायः Sy.
२६. ०ध्य P. युद्धमकरोः Sy.
२७. तथा हिंसकान् Sy.
२८. अवधीः Sy.

यत्रोत मर्त्याय कमरिणा इन्द्र सूर्यम् । प्रावः शचीभिरेतशम् ॥ ६ ॥

यत्रोत[1] । यस्मिन्[2] अपि[3] युद्धे । मर्ताय[4] । सूर्यम् । बाधितवानसि[5] । यत्र च[6] प्रकर्षेण[7] रक्षितवानसि । कर्मभिः[8] । एतशमृषिम्[9], तदानीं[10] च युयुत्सुः[11] ।[12]

किमादुतासि वृत्रहन्मघवन्मन्युमत्तमः । अत्राह दानुमातिरः ॥ ७ ॥

किमादुत[13] । यदि त्वं[14] मन्युमान्[15] । भवसि क्रुध्यसि । तदानीम्[16] । एव । असुरम्[17] । विनाशयसीति[18] समुदायार्थः । किमिति प्रश्नविशेषार्थः[19] ।[20]

एतद्घेदुत वीर्य१मिन्द्र चकर्थ पौंस्यम् ।
स्त्रियं यद्दुर्हणायुवं वधीर्दुहितरं दिवः ॥ ८ ॥

एतद्घेत्[21] । एतत्[22] । खलु । अपि च । वीर्यम्[23] । इन्द्र ! कृतवानसि । पुंस्त्वावहम्[24] ।

---

१. यत्र त्वं M. २. सङ्ग्रामे Sy.
३. अपि च Sy. ४. मर्त्ताय M. मनुष्याय एतशाख्याय ऋषये Sy.
५. P. adds the following after बाधितवानसि—पुंस्त्वावह मस्त्रियं यत्वं दुर्हणं प्रजापतिमिच्छन्ती मुषसमवधीः दिवश्चित् दिवः खलु दुहितरं महानितवानसि यत्रोत यस्मिन्नपि युद्धे मर्ताय सूर्यम् । The additional passage in P. has a striking resemblance with the commentary on RV. IV. 30. 8, 9. and repeats some words of the commentary on this stanza also. अहिंसीः Sy.
६. Omitted by D.
७. Omitted by P., D. प्रकर्षेणारक्षः Sy. ८. युद्धकर्मभिः Sy.
९. एतत्संज्ञकमृषिम् Sy.
१०. तनि P. तनीं D.
११. युयधुः M.
१२. VM. ignores कम् and इन्द्र ॥ कमिति पूरणः । हे इन्द्र ! त्वम् Sy. अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति पदपूरणास्ते मिताक्षरेष्वनर्थकाः । कमीमिद्विति N. I. 9.
१३. किमरत D. किमतर P.
१४. त्वदि त्व P.
१५. अत्यन्तं क्रोधवान् Sy.
१६. अनन्तरम् Sy.
१७. दनोः पुत्रं वृत्रम् Sy.
१८. आ समन्तादहिंसीः Sy.
१९. ०श्नभवि० P., D. किमिति प्रश्ने Sy.
२०. VM. ignores उत । वृत्रहन् । मघवन् and अत्र ॥ उत अपिच । हे वृत्रहन् ! वृत्राणामावरकाणां तमसां हन्तः ! मघवन् ! धनवन्निन्द्र ! त्वम् । अत्र अस्मिन्नन्तरिक्षे Sy.
२१. ०वृधं D., P.
२२. उपलक्षितम् Sy.
२३. सामर्थ्योपेतम् Sy.
२४. बलम् Sy.

स्त्रियम् । यत् त्वम् । दुर्हणं प्रजापतिमिच्छन्तीम् । उषसम् । अवधीः ।

दिवश्चिद्घा दुहितरं महान्महीयमानाम् । उषासमिन्द्र सं पिणक् ॥ ९ ॥

दिवश्चित् । दिवः । खलु । दुहितरम् । महानिन्द्रः । महीयमानां जनैः । उषसम् । इन्द्र ! सञ्चूर्णितवानसि ।

अपोषा अनसः सरत्संपिष्टादह बिभ्युषी । नि यत्सीं शिश्नथद्वृषा ॥ १० ॥

अपोषाः । अपासरत् । उषाः । इन्द्रेण सम्पिष्टा । शकटात् । बिभ्युषी ।

---

१. अस्त्रि० P. उषसम् Sy.

२. य P., D. यत्त्वम् Sy.

३. दुष्टं हननमिच्छन्तीम् Sy.

४. VM. seems to explain दिवः दुहितरम् together as उषसम् ॥ Sy. explains these words as दिवः दुहितरं द्युलोकसकाशादुत्पन्नाम् ।

५. VM. ignores इत् ॥ घ इत् इति पूरणौ Sy. ६. द्युलोकस्य Sy.

७. चिद् घ खलु Sy. ८. पुत्रीम् Sy.

९. P. adds the following between महान् and इन्द्रः— हतवानसि यत्रोत यस्मिन्नपि युद्धे मर्ताय सूर्यं बाधितवानसि यत्र च रक्षितवानसि कर्मभिरेतशमृषि तनिञ्च युयुत्सुः किमर त्व यदि त्वं मन्युमान् भवसि । The additional passage in P. has a striking resemblance with the commentary on RV. IV. 30. 6, 7.

१०. ०मानान् P., M. पूज्यमानाम् Sy.

११. ०नेख० P. M. adds इन्द्रम् before उषसम् ॥ उषोदेवीम् Sy.

१२. सम्पिष्टवानसि Sy.

१३. अपासरत् अपजगाम Sy. अपासरदिति सम्बन्धः । अपसर्पति SKN. अपासर्पत् Dur. १४. उषोदेवता Sy. तदा तन्निवासिन्युषाः Dur.

१५. संविष्टा M. सम्पिष्टात् is suggested for सम्पिष्टा ॥ इन्द्रेण सञ्चूर्णितात् Sy. पिषेर्वर्तमानार्थे कर्तरि निष्ठा छान्दसत्वात् । अहेति विनिग्रहार्थीयः । सम्पिषत एवेत्यर्थः । कम् ? सामर्थ्यान्मेघम् । अथवा—अनः शकटम् । लुप्तोपमं चात्र द्रष्टव्यम् । सम्पिष्टादित्यधिकरणे वर्तमाने निष्ठा । अनस इव, यथा कश्चिदनसः शकटात् स्तेनादिना सम्पिष्टात् सम्पिष्यमाणादित्यर्थः, शाकटिकोऽपसर्पेत् तद्वत् । मेघो वा, एतस्माद्धेवानितेरनः । तस्मात् सम्पिष्यमाणादेव SKN. यदा सम्पिनष्टि वायुर्मेघान् Dur.

१६. अनितेरनो वायुस्तस्मात् SKN. कुतः ? अनसो वायोः Dur.

१७. इन्द्रसकाशाद्भीता सती Sy. वर्तमाने लटि क्वसावेतद्रूपम् । बिभ्यती ।... उषा मेघोदरकोटरगोचरा सम्पिष्यतः सम्पिष्यमाणाद् वा बिभ्यती नश्यतीति SKN. मामय्यं हनिष्यतीति बिभ्यत्यपसरति Dur.

यदा । एनम् । इन्द्रः । परिगृह्य नितरां शिश्नथत् ।

एतदस्या अनः शये सुसंपिष्टं विपाश्या । ससारं सीं परावतः ॥ ११ ॥

एतदस्याः । एतत् । अस्याः । विशीर्णमनः । शेते । सुष्ठु चूर्णितम् । पाशिभिर्बन्धकैर्विरहितं च तदिदम् । दूराद् देशात् प्रवणं प्रति । ससार । सीमिति पूरणम् । अत्र यास्कः

---

१. कदा ? उच्यते...यद् यदा SKN. यदा Dur.

२. एतदुषसः सम्बन्धि शकटम् Sy. सर्वतः SKN.

३. कामानां वर्षिता इन्द्रः Sy. वर्षिता मध्यमो वा SKN. वर्षिता वायुः Dur.

४. शिश्नथत् P. परि०...०थत् seems to be the explanation of both अह and शिश्नथत् । Cf. अह इति च ह इति च विनिग्रहार्थीयौ पूर्वेण सम्प्रयुज्येते N. 1. 5. न्यवधीत्तदा निशिश्नथदिति सम्बन्धः ।...श्नथतिर्वधकर्मा ( Ngh. 2. 19 ) । निहन्ति मेघम् SKN. निर्जघान निर्हन्ति ...तदा, अपासरदुषाः ।...यथा शाकटिकः शकटात् केनचित् सम्पिष्यमाणादपसर्पेत्, एवं वायुना सम्पिष्यमाणान्मेघादपासरदुषा इति द्वितीया कल्पना Dur.

५. Also see N. 11. 47.; SKN. IV. 92.

६. एतदिति वृष्टयुदकं भूमिगतं प्रदर्शयन्नाह SKN. विशीर्णमुदकभावेन पृथिवीं सङ्क्लेद्यावस्थितं दर्शयन् ब्रवीति मेघम् Dur.

७. एतस्या P., D. उषसः सम्बन्धि Sy. अस्या उषस आधाराधेयसम्बन्धेन सम्बन्धि SKN. उषसः Dur.

८. विशीर्णम् P. शकटम् Sy. शकटं मेघाख्यम् SKN. मेघाख्यमाश्रयभूतम् Dur.

९. आ समन्ताच्छेते अशेत Sy. अर्थचान्तर आकारः शय इत्यत्र सम्बध्यते । आशये 'शीङ् स्वप्ने' । आशेत । आभिमुख्येन न भूम्यां तिष्ठतीत्यर्थः SKN. आतत्य पृथिवीं शेत आस्ते Dur.

१०. पणितं P. इन्द्रेण सुष्ठु सञ्चूर्णितम् Sy. उदकभूतम् SKN. सुष्ठु सञ्चूर्णितं वायुना Dur.

११. विपाडाख्या नदी । तस्यां तत्तीरे Sy. पाशि बन्धनं, विगतं पाशि यस्मात् तद्विमुक्तपाशं विच्छिन्नसर्वसम्बन्धनमित्यर्थः SKN. छिन्नसर्वपाशबन्धनम् Dur.

१२. दूरदेशात् Sy. दूरनाम (Ngh. 3. 26.) दूरात् प्रेरित इति । परावत इत्यस्य निर्वचनं प्रकर्षेणेरितात् परागतात् प्रदेशाद् वा SKN. दूराद् दूरतरम् Dur.

१३. प्रवं M.

१४. ससा M. अपससार Sy. ससार यत इति शेषः । यतो वायुना सम्पिष्यमाणादपसृतवती...उषाः SKN. यतः सम्पिष्यमाणात् ससार माध्यमिकोषाः...ननाशेति Dur.

१५. इयमुषोदेवता शकटे भग्ने सति Sy. सर्वतः SKN.

'अपासर[1]दुषाः। अनसः सम्पिष्टान्[2]मेघाद् बिभ्युषी। अनो वायुरनितेः[3]। अपि वोपमार्थे[4] स्यात्। अनस इव शकटादिति[5]। अनः[6] शकटम्। आनद्धमस्मिश्चीवरम्[7]। अनितेर्वा स्यात्। जीवन[8]-कर्मणः। उपजीवन्त्येनत्[9]। मेघोऽप्यन एतस्मादेव। यन्निरशिश्नथत्[10]। वृषा वर्षिता मध्यमः[11]। तस्या एवापरा भवति' 'एतदस्या अन[12] आशेते[13] सुसंपिष्टम्[14]। इव। विपाशि विमुक्तपाशि' इति[15][16]।

**उ॒त सिन्धुं॑ विबा॒ल्यं॑ वितस्था॒नामधि॒ क्षमि॑। परि॑ ष्ठा इन्द्र मा॒यया॑ ॥ १२ ॥**

उत सिन्धुम्। अपि[17] च। सिन्धुम्[18]। विबाल्यं[19] परुष्णियाम्[20]। पृथिव्यां[21] सर्वतः। वितिष्ठ-मानाम्। पारितवानसि[22]। इन्द्र ! कर्मणा[23]।

---

१. ०पार D.
२. मेष्टात् P.
अनः सम्पिष्टोन्मेष्टा M.
३. ०रविते: P. ०रवीते: D. वयुरविते: M. I have adopted the reading of N.
४. ०र्थं D.
५. N. reads विव for ०विति।
६. अगः M.
७. आनमन्वअस्मिन् विविरम् P., D. आनमन्वमस्मिन् विवरम् M. I have adopted the reading of N.
८. ०र्वाज्जी० M.
९. एनम् P.,D., M. I have adopted the reading of N.
१०. त्रिशिश्लथ P. त्रिशिश्नथ D. ०श्नद् M. I have adopted the reading of N.
११. The quotation of N. beginning with अपासरदुषाः etc. and ending with वृषा वर्षिता मध्यमः gives the explanation of RV. IV. 30. 10. and should have, therefore, been cited in the commentary of the previous stanza. Yāska's words तस्या एवापरा भवति refer to stanza 11. and should be put immediately before it.
१२. आन D. एषा भवा परत्येतस्य आन P.
१३. आंशेते D.
१४. ०संविष्ट० M. VM. has left out इतरद् immediately before इव from the quotation of N.
१५. ससारोषाः। परावतः प्रेरितवतः। परागताद्वा N. 11. 48.; SKN. IV. 93.
१६. VM. ignores आ।
१७. Omitted by P.
१८. अपि। च। सिन्धुम् is omitted by D. नदीम् Sy.
१९. पिबा० P. विगतबाल्यावस्थां सम्पूर्णजलाम् Sy.
२०. वरुष्णीयां M.
२१. क्षमायाम् Sy.
२२. वारि० M., D. पर्यस्थाः। सर्वतः स्थापनं कृतवानसि Sy.
२३. ०न्द्राक० P., D. प्रज्ञया Sy.

**उत शुष्णस्य धृष्णुया प्र मृक्षो अभि वेदनम् । पुरो यदस्य संपिणक् ॥ १३ ॥**

उत शुष्णस्य । अपि[1] च । शुष्णस्य[2] । वर्षणशीलम्[3] । ज्ञानम्[4] । प्रकर्षेणाभिभूतवानसि[5] । यत्[6] । अस्य[7] । पुरः[8] । सञ्चूर्णितवानसि[9] ।

**उत दासं कौलितरं बृहतः पर्वतादधि । अवाहन्निन्द्र शम्बरम् ॥ १४ ॥**

उत दासम् । अपि च । दासम्[10] । अत्यन्तकुलीलम्[11] । महतः । पर्वतात्[12] । अधः[13] । अधि[14] ततः । अपनीतवानसि[15] । इन्द्र ! शम्बरम्[16] ।

**उत दासस्य वर्चिनः सहस्राणि शतावधीः । अधि पञ्च प्रधीँरिव ॥ १५ ॥**

उत दासस्य । अपि च[17] । असुरस्य[18] । वर्चिनाम्नः[19] । सहस्राणि[20] । शतानि[21] चानुचरान् । अवधीः[22] । पञ्च च । प्रवीनिव[23] परिगतान्[24] ।

---

१. अपि च हे इन्द्र ! Sy.

२. अपि च । शुष्णस्य is omitted by M. शुष्णनाम्नोऽसुरस्य सम्बन्धि Sy.

३. धृष्णुर्धर्षकस्त्वम् Sy.

४. वित्तम् Sy.

५. अभितः सर्वतः प्रकर्षेणाबाधथाः Sy.

६. यदा Sy.

७. M. reads यस्य for यत् and अस्य ॥ शुष्णस्य Sy.

८. पुराणि नगराणि Sy.

९. सम्पिष्टवानसि । तदा प्र मृक्ष इति सम्बन्धः Sy.

१०. उपक्षपयितारम् Sy.

११. ०न्तकलीलनं M. कुलितरनाम्नोऽपत्यम् Sy.

१२. अद्रेः Sy.

१३. अव अवाचीनं कृत्वा Sy. It goes with अपनीतवानसि ।

१४. उपरि Sy.

१५. हतवानसि Sy.

१६. शव्वरं P. असुरम् Sy.

१७. अपि च हे इन्द्र ! त्वम् Sy.

१८. सुरस्य P. लोकानामुपक्षपयितुः Sy.

१९. वचिना० P., D. वर्चि० is suggested for पर्चि० ॥ वर्चिनामकस्यासुरस्य सम्बन्धिनोऽनुचरान् पुरुषान् Sy.

२०. सहस्रसंख्याकान् Sy.

२१. पञ्चशतसंख्याकान् Sy.

२२. हतवानसि Sy.

२३. अवसधीरवञ्च च पृधिवीनि P. अवधीरवञ्च च पृथिवीनि D. चक्रस्य परितः स्थितान्, शङ्कूनिव हिंसकान् Sy.

२४. VM. ignores अधि ॥ अधि अधिकम् Sy.

**उ॒त त्यं पु॒त्रम॒ग्रुवः॒ परा॑वृक्तं श॒तक्र॑तुः । उ॒क्थेष्विन्द्र॒ आभ॑जत् ॥ १६ ॥**

उत[1] त्यम् । अपि च । तम्[2] । पुत्रम् । अग्रुवः[3] । परावृक्तं[4] नाम । शतक्रतुः[5] । इन्द्रः । उक्थेषु[6] । आभजत्[7] । परावृगेव परावृक्तः[8] ।

**उ॒त त्या तु॒र्वशा॒यदू॑ अस्ना॒तारा॒ शची॒पतिः॑ । इन्द्रो॑ वि॒द्वाँ अ॑पारयत् ॥ १७ ॥**

उत । अपि च । तौ[9] । तुर्वशं यदुं च[10] । अनभिषिक्तौ[11] पितृशापात् । शचीपतिः[12] । इन्द्रः । जानन्[13] । अपारयत्[14] कृतवान् राज्यार्हाविति ।

**उ॒त त्या स॒द्य आर्या॑ स॒रयो॑रिन्द्र पा॒रतः॑ । अर्णा॑चि॒त्ररथा॑वधीः ॥ १८ ॥**

उत त्या । अपि च[15] । तौ[16] सद्य[17] एव । राजानौ[18] । सरयोर्नद्याः[19] । पारे[20] । अर्णं चित्ररथं च[21] । हतवानसि[22] ।[23]

१. उत्यु D.
२. मत P., D. प्रसिद्धम् Sy.
३. अश्रुव P., D. एतन्नाम्न्याः Sy.
४. एतन्नामकम् Sy.
५. शतकर्मा Sy.
६. स्तोत्रेषु Sy.
७. ०जन् P. भागिनं कृतवान् । अयमर्थः 'वम्रीभिः पुत्रमग्रुवः'(RV. IV. 19.9.) इत्यस्यामृचि प्रतिपादित इति Sy.
८. The passage परावृगेव परावृक्तः should immediately follow परावृक्तं नाम ॥
९. प्रसिद्धौ Sy.
१०. तुर्वशनामानं यदुनामकं च राजानौ Sy.
११. ययातिशापादनभिषिक्तौ Sy.
१२. कर्मणां पालकः, यद्वा शचीन्द्रस्य भार्या । तस्याः पतिर्भर्ता Sy.
१३. सकलमपि जानन् Sy.
१४. अवार० P., M. अभिषेकार्हावकरोत् Sy.
१५. Omitted by P.
१६. त्यौ तौ Sy.
१७. सपदि Sy.
१८. आर्यौ । आर्यत्वाभिमानिनौ सन्तावपि । इन्द्रविषयभक्तिश्रद्धारहितावित्यर्थः Sy.
१९. सरय्वा नद्याः Sy.
२०. चारे P., D. तीरे वसन्तौ Sy.
२१. अर्णनामकं चित्ररथनामकं च राजानौ Sy.
२२. अहिंसीः Sy.
२३. VM. ignores इन्द्र ।

अनु द्वा जहिता नयोऽन्धं श्रोणं च वृत्रहन् । न तत्ते सुम्नमष्टवे ॥ १९ ॥

अनु द्वा । अन्वदुयोः[1] । द्वौ[2] । वृद्धौ[3] । अन्धम्[4] ऋज्राश्वम् । श्रोणं[5] परावृजम । च[6] । न । तत्[7] । तव । सुखम् । अन्येनाप्तुं शक्यं देवेन स्तुतेन[8] ।[9]

शतमश्मन्मयीनां पुरामिन्द्रो व्यास्यत् । दिवोदासाय दाशुषे ॥ २० ॥

शतमश्मन् । शिलामयीनाम्[10] । पुराम्[11] । शतम्[12] । इन्द्रः । व्यस्तवान्[13] । दिवोदासाय[14] । यजमानाय[15] तत्पीतये[16] ।

अस्वापयद्दभीतये सहस्रा त्रिंशतं हथैः । दासानामिन्द्रो मायया ॥ २१ ॥

अस्वापयत् । दभीतिप्रीतये[17] । असुराणाम्[18] । त्रिंशतम्[19] । सहस्राणि । हननैः[20] । भूमावशाययत्[21] । इन्द्रः । कर्मणा[22] ।

स घेदुतासि वृत्रहन्त्समान इन्द्र गोपतिः । यस्ता विश्वानि चिच्युषे ॥ २२ ॥

स घेत् । सः[23] । खलु[24] । असि । वृत्रहन्[25] ! इन्द्र ! सर्वेषां साधारणः[26] । गोपतिः[27] ।

---

१. ०यो P. अन्वनयद्वुभौ is suggested for अन्वदुयोः ॥ अनु नयः अन्धपङ्गुत्वपरिहारेणानुनीतवानसि Sy.
२. एतौ द्वौ Sy.
३. जहितौ सर्वैर्बन्धुभिस्त्यक्तौ Sy.
४. अबन्ध० P., D. चक्षुर्हीनमेकम् Sy.
५. पङ्गुमपरं च Sy.
६. ०जश्च M.
७. हे इन्द्र ! त्वया दत्तम् Sy.
८. व्याप्तुं कोऽपि (न) प्रभवतीति शेषः Sy.
९. VM. ignores वृत्रहन् ॥ हे वृत्रस्य हिंसकेन्द्र ! त्वम् Sy.
१०. मनियां P. पाषाणैर्निर्मितानाम् Sy.
११. शम्बरस्य सम्बन्धिनां नगराणाम् Sy.
१२. शतसंख्याकम् Sy.
१३. व्यक्षिपत् Sy.
१४. एतन्नामकाय Sy.
१५. हविर्दत्तवते यजमानाय Sy.
१६. तत्प्रीतये is suggested for तत्पीतये ।
१७. दभीतिनामकस्यार्थाय Sy.
१८. लोकानामुपक्षपयितॄणां राक्षसादीनाम् Sy.
१९. त्रिंशत्संख्याकानि Sy.
२०. हननसाधनैरायुधैः Sy.
२१. अशत् P. अशयत् D. अवधीत् Sy.
२२. स्वकीयया शक्त्या Sy.
२३. त्वम् Sy.
२४. घेदिति पूरणौ Sy.
२५. हे वृत्राणां शत्रूणां हिंसकेन्द्र ! Sy.
२६. सर्वेषां यजमानानां समः सन् प्रख्यातः Sy.
२७. गवां पालकः Sy.

यस्त्वम्[1] । तानि विश्वान्यसुरपुराणि[2] । च्यावयसि[3] ।[4]

उत नूनं यदिन्द्रियं करिष्या इन्द्र पौंस्यम् ।
अद्या नकिष्टदा मिनत् ॥ २३ ॥

उत नूनम् । अपि च । पुरा[5] । यत् । वीर्यम्[6] । पुंस्त्वावहम्[7] । कृतवानसि । तत्[8] । अद्य[9] । न कश्चित् । हिनस्ति[10], इन्द्रसृष्टानि व्रतानि[11] तथानुवर्तन्ते[13] ।

वामंवामं त आदुरे देवो ददात्वर्यमा ।
वामं पूषा वामं भगो वामं देवः करूळती ॥ २४ ॥

वामंवामम्[14] । वननीयं धनम् । तव[15] । आदरणे[16] सति । अर्यमादिः[17] । देवोऽस्मभ्यम् ।

---

१. यज्ञस्त्वम् P., D.

२. समस्तान् शत्रून् Sy.

३. व्यापयसि M. प्राच्यावयः Sy.

४. VM. ignores उत ॥ उत अपि Sy.

५. खलु Sy.

६. सामर्थ्योपेतम् Sy.

७. त्वदीयं बलम् Sy.

८. बलम् Sy.

९. तदान्यः P. तदन्यः D. अद्यतनः कश्चित् Sy.

१०. हिंस्यात् Sy.

११. पृतनानि P., D.

१२. VM. ignores इन्द्र ।

१३. Omitted by P.

१४. वहनीं P. यद्यत् वननीयं सम्भजनीयं धनमस्ति लोके तद्वामं वसु Sy. वननीयं यावत् किञ्चित् प्रशस्यम् । किं पुनस्तत्? सामर्थ्याद् धनम् ।. . .वामंवाममिति । वीप्साप्रयोगः सर्वशेषतया पुरः पठितः SKN. इति भूयस्त्वार्थोऽभ्यासः । 'अभ्यासे भूयांसमर्थं मन्यन्ते' N. 10. 42. इति हि वक्ष्यति । यद्यत् सुष्ठु वननीयमिष्टम् Dur.

१५. तुभ्यम् SKN. तव धनम् Dur.

१६. हे आदुरे! शत्रूणामादारयितरिन्द्र! Sy. हे देवानामादरि! यजमान! SKN. आदरवन्! यजमान! स हि यागं प्रति नित्यमादृतो भवतीत्यत एव सम्बोध्यते हे आदुरे! Dur.

१७. ०वि M. आदिः refers to भगः and देवः ॥ अरीणां नियमयितॆतन्नामकः देवो वामं धनं ददातु । भगोऽपि वामं धनं ददातु Sy. कतमः? अर्यमा, वामं प्रशस्यमेव SKN. यदर्यम्णो वामं वननीयमिष्टमात्मनो धनं तत् । वामं भगो ददातु Dur.

ददातु । कृत्तदन्तः पूषा करूळती पुनर्वचनं विशेषेण समर्पणायेति ।

---

१. प्रयच्छतु Sy. ददात्विति सर्वत्रानुषङ्गः SKN. असौ देवस्तुभ्यं ददातु . . . वामं पूषा ददातु, . . . ददात्वित्येतदेवानुवर्तन्ते Dur.

२. कृत्तभन्तः P. कृत्ता दन्ता अनेन शत्रूणामिति च योगात् सुकृत्तदन्तो देवः SKN.

३. पोषकः वामं धनं ददातु Sy. 'पूषेत्यपरदर्शनम्' (Cf. N. 6. 31.) नास्मात्परमस्ति, एतदेव प्रकृष्टं दर्शनमित्यर्थः । कुत एतत् ? प्राशित्रब्राह्मणे पूष्णोऽदन्तकत्वश्रवणात् । 'तत्पूष्णे पर्याजह्रुः' तस्य दन्तात्परोवाप, अत्र च पविश्चोदने द्रष्टव्यः । 'तस्मादाहुरदन्तकः पूषा करं भाग इति' । व्यवहितस्यापि श्रुतिलिङ्गदर्शनादेशः पूष्ण एव प्रयोगत्वादन्वादेशे क्लृप्ते कल्पयितव्यो न भागस्य । तस्मादानन्तर्यं न कारणमित्याह सोऽदन्तक इत्यादि SKN. पूषा इत्यपरम्, किं कारणम् ? स हि पूषा अदन्तकः । आह कुत एतत् ? इत्युच्यते 'अदन्तकः पूषा' इति च ब्राह्मणम् । प्राशित्रभागब्राह्मणे हि श्रूयते—'तत् पूष्णे पर्याजह्रुः, तत् पूषा प्राश्नात् तस्य दन्तो निर्जघान तस्मादाहुरदन्तकः पूषा' इति Dur.

४. करु इति M. करूळन्ति D., P. I have adopted the reading of RV. ननु करूळतीत्येतत् सन्निहितत्वाद्भग इत्यनेन सम्बन्धनीयम् । अथवार्यमादीनां त्रयाणामपि विशेषणत्वेन भाव्यम् । कथं पूष्णो विशेषणं स्यादिति साकाङ्क्षत्वात् । न । सान्निध्याकाङ्क्षयोः सद्भावेऽपि योग्यतामन्तरेणान्वयायोगात् । 'तस्मात् पूषा प्रपिष्टभागोऽदन्तको हि' (TS. 2. 6. 8. 5.) इत्यादिश्रुतिषु पूष्ण एवादन्तकत्वेन प्रसिद्धेः व्यवहितस्यापि तस्यैव विशेषणत्वं युक्तम् Sy. करूळतीति न देवतान्तरम् । एवंविधस्य सविज्ञानपदत्वाभावात् परगुणस्य च निर्वचने गुणिनोऽप्रत्यक्षत्वादश्रुतसम्बन्धस्य चान्याय्यत्वात् प्रकृतस्यैव गुणाभिधानमेतदिति विनिश्चयः । तत्कस्येति विचारवाक्योपन्यासप्रयोजनस्तच्छब्दः । कः करूळती नाम, उच्यते, आनन्तर्याद् भगः । तस्यायं गुणयोगान्वादेश इत्येकं दर्शनम् SKN. करूळती, इत्येतद् गुणपदत्वात् सन्निह्यते, तदेतद् विचार्यते कः करूळतीति ? भगः पुरस्तात् करूळतीशब्दस्य तस्यैवायमन्वादेशः सन्निधानसामर्थ्यादित्येकमाचार्यमतम् Dur.   ५. विशेष M.

६. P. adds the following after विशेषेण—सर्पणतोतिशयेन महामादयेदस्य सम्बन्धिनां दृढान्यपि धनानि स्तोतृभ्यो दानायारोक्तं भुङ्तुमात्सदिति पर्णयेति । The additional passage in P. has a striking resemblance with the commentary on RV. IV. 31. 2. वामं वननीयं भवति । आदुरिरादरणात् । तत्कः करूळती ? भगः पुरस्तात्तस्यान्वादेश इत्येकम् । पूषेत्यपरं सोऽदन्तकः । 'अदन्तकः पूषा' इति च ब्राह्मणम् N. 6. 31. SKN. II. 497.

७. VM. ignores वामम् (thrice) ॥ धनम् Sy. Ms. D. puts the figure ॥३०॥ here to indicate the end of thirtieth hymn. No such number is given in P. and D.

IV.31.

**कया॑ नश्चि॒त्र आ भु॑वदू॒ती स॒दावृ॑धः॒ सखा॑ । कया॒ शचि॑ष्ठया वृ॒ता ॥ १ ॥**

कया[1] नः[2] । केन[3] । अस्मान्[4] । रक्षणेन[5] । पूजनीय[6] इन्द्रः । आभिमुख्येन[7] प्राप्नुयात्[8] । अस्माकं सदा वर्धयिता[9] । सखा[10] । केन च । अतिशयेन कर्मवता[11] । भजनेन[12] ।

**कस्त्वा॑ स॒त्यो मदा॑नां॒ मंहि॑ष्ठो मत्स॒दन्ध॑सः । दृ॒ळ्हा चि॑दा॒रुजे॒ वसु॑ ॥ २ ॥**

कस्त्वा सत्यः । कः[13] । त्वाम् । मदहेतुभूतानां[14] मध्ये । सत्यभूतः[15] । अतिशयेन महान्[16] ।

---

१. 'कया नः' इति पञ्चदशर्चं दशमं सूक्तं वामदेवस्यार्षमैन्द्रं गायत्रम् । 'अभी षु णः' इत्येषा पादनिचृन्नाम गायत्री । 'त्रयः सप्तकाः पादनिचृत्' (KSA. 4. 4. p. 3.) इति तल्लक्षणयुक्तत्वात् । तथा चानुक्रमणिका 'कया पञ्चोनाभी षु पादनिचृत्' (KSA. 22. 31. p. 17.) इति । सूक्तविनियोगो लैङ्गिकः । अग्निष्टोमे चातुर्विंशिकेऽहनि च माध्यन्दिने सवने मैत्रावरुणस्य 'कया नः' इत्याद्यस्तृचः स्तोत्रियः । सूत्रितञ्च —'होत्रकाणां कया नश्चित्र आ भुवत्' (ASS. 7. 4.) इति । वरुणप्रघासेषु कायस्य हविषोऽनुवाक्या 'कया नः' इत्येषा । तथा च सूत्रितम्—'कया नश्चित्र आ भुवद्धिरण्यगर्भः समवर्तताग्रे' (ASS. 2. 17.) इति Sy. २. ना D.

३. कया Sy. केन पुनः U.

४. अस्माकम् Mah., U.

५. ऊत्या तर्पणेन Sy. ऊत्या, अवनेन तर्पणेन प्रीणनेन वा Mah. अवनेन तर्पणेन U.

६. चायनीयः पूजनीयः Sy. विचित्रः पूज्यो वा Mah. चायनीयः U.

७. आकारो वृणा? (ता) सह सम्बध्यते U.

८. भवेत् Sy. भवति Mah. भूयात् U.

९. सदा वर्धमानः Sy. सदा वर्धत इति सदावृधः...सदा वर्धमानः Mah. सदाकालं वर्धयिता U.

१०. मित्रभूत इन्द्रः Sy. सहायः Mah. सखा भूयादिति वर्तते U.

११. प्रज्ञावत्तमया प्रज्ञासहितमनुष्ठीयमानेन Sy. अतिशयवत्या, अतिशयेन शची शचिष्ठा तया...यागक्रिययाऽस्माकं सखा भवति । शचीति कर्मनाम (Ngh. 2. 1.) तत इष्ठन्प्रत्ययः Mah. अतिशयेन शचीति कर्मनाम, मतुब्लोपः ।... कर्मवत्या U.

१२. वर्तनेन कर्मणा चाभिमुखो भवेत् Sy. वर्तत इति वृत् तया वृता वर्ण(तं)मानया Mah. This stanza=YV. 27. 39. १३. मदकरः Sy. कोऽशः Mah. को नाम U.

१४. मादयितॄणाम् Sy. मदयन्ति तानि मदानि पचाद्यच् । मदजनकानि हवींषि तेषां मध्ये Mah. मदानां मध्ये U.

१५. सत्योऽवितथः U.

१६. महा D. पूजनीयः Sy. मंहिष्ठः श्रेष्ठोऽत्यन्तमदजनकः, 'मंहि कान्तौ' । चुरादिः । मंहयति द्योतते मंही, अत्यन्तं मंही मंहिष्ठः । यद्वा 'महि वृद्धौ' भ्वादिः । मंहते वर्धते मंही, अत्यन्तं मंही मंहिष्ठः Mah. अतिशयेन मदजनकः U.

मादयेत्[1] । अन्नस्य[2] सम्बन्धिनाम् । दृढानि । अपि । धनानि[3] । स्तोतृभ्यो दानाय, आरोक्तु[4] भङ्क्तु[5] मत्सदिति[6] ।

**अभी षु णः सखीनामविता जरितॄणाम् । शतं भवास्यूतिभिः ॥ ३ ॥**

अभी षु णः[7] । आभिभवसि[8][9] । सुष्ठु[10] । अस्माकम् । तव सखीनाम्[11] । रक्षकः[12] । स्तोतृणाम्[13] । रक्षणप्रकारैः[14] । शत्रूणां शतम्[15] ।

**अभी न आ ववृत्स्व चक्रं न वृत्तमर्वतः । नियुद्भिश्चर्षणीनाम् ॥ ४ ॥**

अभी[16] नः । [17]अभ्याववृत्स्व[18] । अस्मान् । चक्रम् । इव । परिवृत्तम्[19] । अश्वान्[20] । मनुष्यान्[21] । प्रत्यागमनार्थैरश्वैः[22] ।

---

१. माद्यति मत्तं करोति, 'मदी हर्षे' Mah. मादयति U.

२. सोमस्य रसः Sy. अन्नस्य सोमरूपस्य Mah. सोमस्य स्वभूतोंऽशः U.

३. वसूनि शत्रूणां धनानि Sy. येनांशेन मत्तः सन्...दृढान्यपि वसु वसूनि धनानि कनकादीनि Mah. येन मत्तः सन् त्वं दृढान्यप्यसुरवृन्दानि ।...यद्वा दृढान्यपि सुवर्णप्रभृतीनि चिरकालस्थायीनि वसून्यारुजसि चूर्णयसि दानाय U.

४. आरोक्तं M. आ समन्ताद् भङ्क्तुं हे इन्द्र! Sy. 'रुजो भङ्गे' पुरुषपदव्यत्ययः। आरुजसि चूर्णयसि Mah. आरुजसि चूर्णयसि वसु च ददासीति शेषः U.

५. भुङ्क्तुं D. भुङ्क्त P. दातुं भनक्षि। भङ्क्त्वा भङ्क्त्वा ददासीत्यर्थः U.

६. मात्स० P.

This stanza=YV. 27. 40.

७. णं D., P.

८. हे इन्द्र! त्वम् Sy., Mah.

९. अभिमुखो भव Sy. आभिमुख्येन शतं ...भवसि Mah.

१०. सम्यक् Mah.

११. समानख्यातीनाम् Sy. मित्राणाम् Mah.

१२. रक्षिता त्वम् Sy. पालयिता Mah.

१३. स्तोतॄणां नोऽस्माकमृत्विजाम् Mah. प्रकृतत्वादस्माकमेव सखीनां जरितॄणां च U.

१४. रक्षाभिः सह Sy. पालनाय Mah. रक्षणाय U.

१५. शकम् M. शतेन बह्वीभिः Sy. शतशब्दो बहुवाची (Ngh. 3. 1.) बहुरूपो भवसि पालनाय नानारूपाणि दधासीत्यर्थः Mah. शतधा भवसि U.

This stanza=YV. 27. 41.

१६. अभि P.

१७. हे इन्द्र! त्वम् Sy.

१८. अभ्यावर्तस्व Sy.

१९. वर्तमानम् Sy.

२०. उपगन्तॄन् Sy.

२१. अस्मदीयानां मनुष्याणाम् Sy.

२२. स्तुतिभिः Sy.

प्रवता हि क्रतूनामा हा पदेव गच्छसि । अभक्षि सूर्ये सचा ॥ ५ ॥

प्रवता[1][2] । आरम्भेण[3] । हि[4] । कर्मणाम्[5] । आगच्छतीन्द्रः[6] । मार्गेणेव[7] । सेव्यते[8] । सूर्ये[9] उदिते । सह प्रातः[10] ।[11]

सं यत्त इन्द्र मन्यवः सं चक्राणि दधन्विरे । अध त्वे अध सूर्ये ॥ ६ ॥

सं यत्ते[12] । यत्[13] । तव[14] । इन्द्र ! क्रोधाः[15] । तेजः सन्दधिरे[16] । यच्च बलानि[17] । तत्त्वयि[18] । वा[19] विद्यते[20] । सूर्ये । वा[21] ।[22]

उत स्मा हि त्वामाहुरिन्मघवानं शचीपते । दातारमविदीधयुम् ॥ ७ ॥

उत स्म । अपि च । स्म[23] । हि । त्वाम् । आहुः[24] । धनिनम्[25] । शचीपते[26] ! दातारम्[27] । दीप्यमानम्[28] ।[29]

---

१. प्रपताः P., D.
२. हे इन्द्र ! त्वम् Sy.
३. यजमानानां सम्बन्धिनः प्रवतः प्रवणान् देशान् Sy.
४. खलु Sy.
५. ०णा D., M.
६. अगच्छतन्तीन्द्र P. मार्गेणैवागच्छच्छन्त्विन्द्रामार्गेणैव D. आगतो भवसि Sy.
७. पदानि स्वकीयानि स्थानानीव Sy.
८. भजे Sy.
९. हे इन्द्र ! त्वामहं सूर्येण Sy.
१०. सहातः P.
११. VM. ignores ह ॥ ह इति पूरणः Sy.
१२. यत्त P., D.
१३. Omitted by M. यदा Sy.
१४. त्वदर्थम् Sy.
१५. स्तुतयः Sy.
१६. अस्माभिरनुमन्यन्ते Sy.
१७. चङ्क्रमणानि कर्माणि च Sy.
१८. त P., D.
१९. अथ तदानीं ताः स्तुतयः तानि कर्माणि च Sy.
२०. भवन्ति Sy.
२१. व P. तदनन्तरं च भवन्ति Sy.
२२. VM. ignores सम् ।
२३. खलु Sy.
२४. प्रवदन्ति Sy.
२५. अहुर्धनिहं P., D. धनवन्तम् Sy.
२६. ०चिप० D. हे कर्मपालकेन्द्र ! Sy.
२७. स्तोतृभ्योऽभीष्टप्रदम् Sy.
२८. विदीधयुरदीप्यमानः । न विदीधयुरविदीधयुः, तं दीप्यमानम् Sy.
२९. VM. ignores इत् । हीदिति द्वयं पूरणार्थम् Sy.

उत स्मा सद्य इत्परि शशमानाय सुन्वते । पुरू चिन्मंहसे वसु ॥ ८ ॥

उत स्म । अपि च[1]। स्म[2]। सद्यः । एव[3]। भजमानाय[4]। सुन्वते[5]। बहु[6]। एव[7]। धनम्[8]। प्रयच्छसि[9]।

नहि ष्मा ते शतं चन राधो वरन्त आमुरः । न च्यौत्नानि करिष्यतः ॥ ९ ॥

नहि ष्मा ते[10]। न खलु । स्म[11]। तव[12]। धनम् । सर्वतो मूढाः[13]। शतम् । अपि[14] पुरुषाः । वारयन्ति[15]। न[16] च । बलानि । करिष्यतः[17]।

अस्माँ अवन्तु ते शतमस्मान्त्सहस्रमूतयः । अस्मान्विश्वा अभिष्टयः ॥ १० ॥

अस्मान्[18]। अस्मान् । रक्षन्तु । तव[19]। शतम्[20]। सहस्रं[21] च । रक्षणानि[22]। तथा विश्वानि[23]। अभ्येषणानि च[24]।

अस्माँ इहा वृणीष्व सख्याय स्वस्तये । महो राये दिवित्मते ॥ ११ ॥

अस्मान्[25]। अस्मान्[26]। इह[27]। आवृणीष्व[28]। सख्याय[29]। अविनाशाय च[30]। महान्[31]। धनाय च । दीप्तिमते ।

---

१. अपि च हे इन्द्र ! त्वम् Sy.
२. खलु Sy.
३. Omitted by M.
४. स्तुतिं कुर्वते Sy. शशमानः शंसमानः N. 6. 8.
५. सोमाभिषवं कुर्वते यजमानाय Sy.
६. पुरूणि बहूनि Sy.
७. अपि Sy. ८. वसूनि धनानि Sy.
९. VM. ignores परि ॥ परितः Sy.
१०. हे इन्द्र ! Sy.
११. खलु Sy. १२. त्वदीयम् Sy.
१३. बाधका राक्षसादयः Sy.
१४. शतपरिमितमपि Sy.
१५. रयन्ति P., D.
१६. न वारयन्ति Sy.
१७. कर्यंत P., D. किञ्च शत्रूणां हिंसनं करिष्यतस्तव Sy.
१८. हे इन्द्र ! Sy.
१९. नव D., M. त्वदीयाः Sy.
२०. शतसंख्याकाः Sy.
२१. सहस्रसंख्याकास्त्वदीयाः Sy.
२२. रक्षाः Sy.
२३. पश्वानि P. बश्वानि D. सर्वाणि Sy.
२४. त्वदीयान्यभिगमनानि Sy.
२५. हे इन्द्र ! त्वम् Sy.
२६. यजमानान् Sy.
२७. अस्मिन् यज्ञे Sy.
२८. सम्भजस्व Sy. २९. सखिभावाय Sy.
३०. Omitted by P.
३१. महते is suggested for महान् ।

**अ॒स्माँ अ॑विड्ढि वि॒श्वहेन्द्र॑ रा॒या परी॑णसा । अ॒स्मान्विश्वा॑भिरू॒तिभि॑ः ॥१२॥**

अस्मान् । अस्मान्[1] । रक्ष । सर्वदा[2] । इन्द्र ! धनेन । परितो[3] नद्धेन । विश्वैश्च[4] । रक्षणैः[5] ।

**अ॒स्मभ्यं॒ ताँ अपा॑ वृधि व्र॒जाँ अस्ते॑व॒ गोम॑तः । नवा॑भिरिन्द्रो॒तिभि॑ः ॥१३॥**

अस्मभ्यम् । अस्मदर्थम्[6] । तान्[7] । गोभिः सहितान्[8] । व्रजान्[9] । अपावृधि[10] । शरानिवास्ता[11] । नवैः[12] । इन्द्र ! मरुद्भिः[13] सह ।

**अ॒स्माकं॑ धृष्णु॒या रथो॑ द्यु॒माँ इ॒न्द्रान॑पच्युतः । ग॒व्युर॑श्व॒युरी॑यते ॥ १४ ॥**

अस्माकम् । अस्माकम्[14] । धृष्णुः[15] । रथः । दीप्तिमान् । इन्द्र ! शत्रुभिरनपच्युतः[16] । गाः[17], अश्वांश्चेच्छन्[18] । गच्छति[19] ।

**अ॒स्माक॑मुत्त॒मं कृ॑धि॒ श्रवो॑ दे॒वेषु॑ सूर्य । वर्षि॑ष्ठं॒ द्यामि॑वो॒परि॑ ॥ १५ ॥**

[20]अस्माकम् । अस्माकम्[21] । उत्तमम्[22] । अन्नम्[23] । कृधि[24] । देवेषु[25] । सुवीर्य[26] ! वृद्धतमम्[27] ।

---

१. यजमानान् Sy. २. सर्वेष्वहःसु Sy.
३. वरितो M. महता Sy. परीणसेति बहुनाम Ngh. 3. 1.
४. सर्वाभिः Sy. ५. रक्षाभिः Sy.
६. अस्मभ्यम् Sy. ७. प्रसिद्धान् Sy.
८. गोभिर्युक्तान् Sy.
९. गोनिवासान् Sy.
१०. अवा वृ० M. उद्घाटय Sy.
११. क्षेप्ता शूर इव Sy.
१२. शरणि वास्ता ना नवैः P. शराणिवास्ताननवैः D. नूतनाभिः Sy.
१३. रक्षाभिः Sy.
१४. अस्मत्सम्बन्धी Sy.
१५. धृष्णुः शत्रूणां धर्षकः Sy.
१६. अनवच्युतः M. विनाशरहितः Sy.
१७. गोमान् Sy.
१८. अश्वश्चेच्छत् P. ०च्छ D. अश्ववान् Sy.
१९. सर्वत्र गच्छतु । तेन रथेनास्मान् रक्षेत्यर्थः Sy.
२०. 'अस्माकमुत्तमं कृधि' इत्यनयादित्यं दृष्ट्वा रथादवरोहेत् । तथा च सूत्रितम्—'अस्माकमुत्तमं कृधीत्यादित्यमीक्षमाणो जपित्वावरोहेत् (AGS. 2. 6. 12.) इति Sy.
२१. अस्मत्सम्बन्धि Sy.
२२. उत्तरम् P. उत्कृष्टम् Sy.
२३. यशः Sy. २४. कुरु Sy.
२५. द्योतमानेषु वह्न्यादिषु मध्ये Sy.
२६. हे सूर्य ! सर्वस्य प्रेरकेन्द्र ! हे आदित्य ! वा त्वम् Sy.
२७. ०तम D. अतिशयेन प्रवृद्धं सेचनसमर्थं वा Sy.

द्युलोकमिव[1] । उपरि स्थितम्[2] ।[3]

IV.32.

**आ तू न इन्द्र वृत्रहन्नस्माकमर्धमा गहि । महान्महीभिरूतिभिः ॥ १ ॥**

आ तू नः[4][5] । आगच्छ[6] । क्षिप्रम्[7] । अस्माकम्[8] । इन्द्र ! वृत्रहन्[9] ! वेदः[10] । रक्षणैः[11] । अर्धम्[12] । महद्भिः[13] । अस्माकमिति पूरणम्[14] ।[15]

**भूमिश्चिद्घासि तूतुजिरा चित्र चित्रिणीष्वा । चित्रं कृणोष्यूतये ॥ २ ॥**

भूमिः[16] । भ्रमणशीलः । खलु[17] । असि[18] । हिंसकः[19] । स त्वम् । चित्र[20] !

---

१. तत्र दृष्टान्तः द्युलोकं यथा सर्वेषां लोकानाम् Sy.

२. उपरिस्थितमुत्कृष्टमकरोस्तद्वत् Sy.

३. Ms. D. puts the figure ॥३१॥ here to indicate the end of thirty-first hymn. No such number is given in P. and M.

४. 'आ तू न इन्द्र' इति चतुर्विंशत्यृचमेकादशं सूक्तं वामदेवस्यार्षं गायत्रमैन्द्रम् । अन्त्ये 'कनीनकेव' इत्यादिके द्वे इन्द्रस्याश्वदेवताके । तथा चानुक्रान्तम्—'आ तू नश्चतुर्विंशतिरन्त्याभ्यामिन्द्राश्वौ स्तुतौ' (KSA. 22. 32. p. 18.) इति । गतो विनियोगः Sy.

५. आ तु P., D. आ तू न इति त्रयो निपाताश्छन्दःपरिपूर्तिकराः U.

६. देवयजनदेशं प्राप्नुहीत्यर्थः Mah. एत्य चास्मान् पालयेति शेषः U.

७. तु इति निपातः क्षिप्रवचनः Mah.

८. अस्मान् प्रति Sy., Mah.

९. हे वृत्राणां शत्रूणां हिंसक ! Sy. वृत्राणामावरकाणां पाप्मनां हन्ता वृत्रहा Mah. वृत्रस्य हन्तः ! U.

१०. वेदेरश्च P. VM. seems to explain महान् as वेदः । This explanation is unnecessary and unsatisfactory. If वेदः is not the explanation of महान् then the later word is ignored by VM. and वेदः becomes redundant. महान् प्रभूतस्त्वम् Sy. योऽन्यं रक्षति स महानुच्यते Mah. महान् सन् U.

११. Omitted by D., M. रक्षाभिः सह Sy. अवनै रक्षाभिः Mah. अवनैः पालनैः U.

१२. अस्म्भ्यं र्धं P. अर्धं समीपम् Sy. अर्धमस्मन्निवासदेशम् Mah. पक्षम् U.

१३. महतीभिः Sy., Mah., U.

१४. आगत्य चास्माकम् Mah. अस्मदीयम् U.

१५. VM. explains आ once only ॥ आ आगच्छ Mah. This stanza= YV. 33. 65.

१६. भ्रमि P., D.

१७. घेति पूरणः Sy.

१८. भवसि Sy.

१९. ०क D. अस्मदभीष्टप्रदाता Sy.

२०. हे चायनीय ! पूजनीयेन्द्र ! त्वम् Sy.

चित्रिणीषु[१] पूजासु[२]। चित्रं[३] धनम्। आकृणोषि[४]। रक्षणाय[५]।

**दुभ्रेभिश्चिच्छशीयांसं हंसि व्राधन्तमोजसा। सखिभिर्ये त्वे सचा॥ ३॥**

दभ्रेभिः[६]। क्षुद्रैः[७]। अपि त्वम्। अभिभवन्तम्[८]। हंसि[९]। वर्धमानम्[१०]। बलेन। मरुद्भिः[११]। ये[१२] च। त्वयि। सह[१३] वसन्ति।

**वयमिन्द्र त्वे सचा वयं त्वाभि नोनुमः। अस्माँअस्माँ इदुदव॥ ४॥**

वयम्[१४]। वयम्[१५]। इन्द्र! त्वयि। समवेताः[१६]। वयम्। त्वाम्। अभिष्टुमः[१७]। अस्मान्[१८]। एव। त्वं सर्वदा रक्ष[१९]।

**स नश्चित्राभिरद्रिवोऽनवद्याभिरूतिभिः। अनाधृष्टाभिरा गहि॥ ५॥**

स नः। सः[२०]। अस्मान्। चित्रैः[२१]। मरुद्भिः[२२]। अवद्यरहितैः[२३]। शत्रुभिरनाधृष्टैः[२४]। आगच्छ[२५]। वज्रिन्[२६]!

---

१. चित्रीणीषु M. चित्रकर्मयुक्तास्वस्मद्रूपासु Sy.

२. प्रजासु is suggested for पूजासु।

३. चायनीयं धनम् Sy.

४. आ समन्तात् करोषि Sy.

५. VM. explains आ once only and ignores चित्॥ आकाररुचार्थे। चिद् अपि Sy.

६. हे इन्द्र! त्वम् Sy.

७. अल्पैः Sy. Cf. Ngh. 3. 2.

८. 'शश प्लुतगतौ'। उत्प्लवमानम् Sy.

९. हिंसि P., D. नाशयसि Sy.

१०. महान्तमपि शत्रुम् Sy.

११. Omitted by M. यजमानैः सह Sy.

१२. यजमानाः Sy.

१३. सङ्गताः, तैरिति पूर्वेण सम्बन्धः Sy.

१४. वयमिन्द्र M.

१५. यजमानाः Sy.

१६. समपेताः D. सङ्गताः स्मः Sy.

१७. अतिशयेनाभिष्टुमः Sy.

१८. हे इन्द्र! त्वमपि सर्वानस्मान् Sy.

१९. रक्षः D. रक्षणः P. उत्कर्षेण रक्ष Sy.

२०. त्वम् Sy.

२१. चायनीयाभिः Sy.

२२. रक्षणैः सहितः सन् Sy.

२३. ०तः P. अनिन्दिताभिः Sy.

२४. शत्रुभिरप्रधर्षितैः Sy.

२५. ०च्छरागच्छेति P., D.

२६. हे वज्रवन्निन्द्र! Sy.

भूयामो षु त्वावंतः सखाय इन्द्र गोमंतः। युजो वाजाय घृष्वंये ॥ ६ ॥

भूयामो[1]। त्वत्सदृशस्य[2]। गोमतः[3]। सुष्ठु। सखायः[4]। भूयाम[5]। सङ्गताः[6]। अन्नाय। शत्रूणां धर्षणशीलाय[7]।

उत्तरा निगदसिद्धा

त्वं ह्येक ईशिष इन्द्र वाजस्य गोमंतः। स नो यन्धि महीमिषम् ॥ ७ ॥

[त्वं ह्येकः[9]]

न त्वां वरन्ते अन्यथा यद्दित्संसि स्तुतो मघम्। स्तोतृभ्यं इन्द्र गिर्वणः ॥ ८ ॥

न त्वा। न। त्वाम्[10]। वारयन्ति[11]। अन्यथा कर्तुम्[12]। यदा त्वम्। दित्ससि[13]। स्तुतः[14]। धनम्। स्तोतृभ्यः[15]। इन्द्र! गिर्वणः[16]।

अभि त्वा गोतमा गिरानूंषत प्र दावनें। इन्द्र वाजाय घृष्वंये ॥ ९ ॥

अभि त्वा। अभ्यस्तुवन्[17]। प्रकर्षेण। त्वाम्। गोतमाः[18]। स्तोत्रेण[19]। इन्द्र! दानाय[20]।

---

१. भूयाम P. भूयम D.
२. त्वं स० P., D.
३. गोभिर्युक्तस्य देवस्य सम्बन्धिनः Sy.
४. स्तोतारो वयम् Sy.
५. भूयास्म is suggested for भूयाम ॥ भवामैव Sy.
६. संयुक्ताः Sy.
७. ०शीला P. धर्वणशीलाय is suggested for धर्षणशीलाय। See RV. IV. 32. 9. महते Sy.
८. VM. ignores इन्द्र ॥ हे इन्द्र! Sy.
९. The *pratika* is supplied by the Editor. Sy. explains the stanza in the following manner:
हे इन्द्र! हि यस्मात् कारणात्। त्वम्। एक एव। गोमतः गोभिर्युक्तस्य वाजस्य अन्नस्य। ईशिषे प्रभवसि। अतः कारणात् स त्वम्। नोऽस्मभ्यम्। महीं महतीम्। इषम् अन्नम्। यन्धि प्रयच्छ।
१०. त्वा P., D तवा त्वाम् Sy.
११. पार० M. निवारयन्ति, किन्तु सर्वेऽप्यनुकूला एव भवन्ति Sy.
१२. ०र्तु P. प्रकारान्तरेण Sy.
१३. दातुमिच्छसि Sy.
१४. अस्माभिः संस्तुतः Sy.
१५. अस्मभ्यम् Sy.
१६. गीर्वणं P. गिवणं D. हे गिरां सम्भक्तः! Sy.
१७. अभि लक्षीकृत्य स्तुवन्ति Sy.
१८. एतन्नामका ऋषयः Sy.
१९. स्तुतिरूपया वाचा Sy.
२०. धनदानार्थम् Sy.

अन्नाय च[1]। धर्षणशीलाय[2]।

प्र ते॑ वोचाम वी॒र्या॒३॒॑ या म॑न्दसा॒न आरु॑जः । पुरो॒ दासी॑र॒भीत्य॑ ॥ १० ॥

प्र ते वोचाम[3]।[4] प्रवोचाम[5]। तव[6]। वीर्याणि। याः[7]। पुरः[8]। मोदमानः[9]। सर्वतो भग्नवानसि[10]। दाससम्बधिनीः[11]। अभिगम्य तद्विषयाणि।

ता ते॑ गृणन्ति वे॒धसो॒ यानि॑ च॒कर्थ॒ पौंस्या॑ । सु॒तेष्वि॑न्द्र गिर्वणः ॥ ११ ॥

ता ते गृणन्ति[12]। तानि[13]। ते[14]। गृणन्ति[15]। स्तोतारः[16]। यानि। कृतवानसि। वीर्याणि[17]। यज्ञेषु[18]। इन्द्र! गिर्वणः[19]!

अवी॑वृधन्त॒ गोत॑मा॒ इन्द्र॒ त्वे स्तोम॑वाहसः । ऐषु॑ धा वी॒रव॒द्यशः॑ ॥ १२ ॥

अवीवृधन्त। वर्धयन्तु[20]। गोतमाः[21]। इन्द्र! त्वयि[22]। स्तोमानां[23] वोढारः। आधेहि[24]। गोतमेषु। वीरवत्[25]। अन्नम्[26]।

---

1. Omitted by D. अन्नाय प्रस्तुवन्ति Sy.
2. धर्ष॰ M. महते Sy.
3. प्र ते तवोचाम M.
4. हे इन्द्र! Sy.
5. वयं स्तोतारः प्रकर्षेण वदाम Sy.
6. हे इन्द्र! त्वदीयानि तत्रत्यानि Sy.
7. यानि Sy.
8. नगराणि Sy.
9. सोमेन मोदमानस्त्वम् Sy.
10. आ समन्तादभाङ्क्षीः Sy.
11. दानसम्बन्धिनीभिः M. क्षेप्तुरसुरस्य स्वभूताः Sy.
12. मह M.
13. तांनि M. बलानि Sy.
14. त्वदीयानि Sy.
15. कीर्तयन्ति Sy.
16. हे इन्द्र! वेधसः प्राज्ञाः Sy.
17. पौंस्यानि बलानि Sy.
18. अभिषुतेषु सोमेषु Sy.
19. गिरां स्तुतिरूपाणां वाचां सम्भक्ता त्वम् Sy.
20. ॰यंस्तु D. स्तोत्रैर्वर्धयन्ति Sy.
21. ॰मः D. ऋषयः Sy.
22. त्वाम् Sy.
23. स्तोत्राणाम् Sy.
24. त्वं निधेहि Sy.
25. पुत्रपौत्रादियुक्तम् Sy.
26. अन्तिम्नम् M.

यच्चिद्धि शश्वतामसीन्द्र साधारणस्त्वम् । तं त्वा वयं हवामहे ॥ १३ ॥

यच्चिद्धि[१] । यत्[२] । चित्[३] । हि[४] । बहूनाम्[५] । असि[६] । इन्द्र ! साधारणः[७] । त्वम् । तम्[८] । त्वा[९] । वयम्[१०] । हवामहे[११] ।

अर्वाचीनो वसो भवास्मे सु मत्स्वान्धसः । सोमानामिन्द्र सोमपाः ॥ १४ ॥

अर्वाचीनः[१२] । इतोमुखः[१३] । भव । वासयितः[१४] ! अस्मासु[१५] । सुष्ठु । तृप्यस्व[१६] । सोमेन[१७] । हे सोमस्य पातः[१८] ![१९]

अस्माकं त्वा मतीनामा स्तोम इन्द्र यच्छतु । अर्वागा वर्तया हरी ॥ १५ ॥

अस्माकम् । अस्माकम्[२०] । त्वाम्[२१] । स्तुतीनाम्[२२] । स्तोमस्त्वाम्[२३] । इन्द्र ! आयच्छतु[२४] । इतोमुखम्[२५] । आवर्तय[२६] । अश्वौ[२७] ।

---

१. वयञ्चिद्धि P.

२. यदि Sy.

३. वयञ्चित् P. अपि Sy.

४. खलु Sy.

५. बहूम् P., D. बहूनां सर्वेषां यजमानानाम् Sy.

६. भवसि Sy.

७. सामान्यः Sy.

८. तथापि तमेव Sy.

९. त्वाम् Sy.

१०. वयं स्तोतारः Sy.

११. वहे मा वा महे P. वहे वामहे D. आह्वयामः Sy.

१२. ०चीनः P.

१३. अभिमुखः Sy.

१४. ०यतः D. हे यज्ञनिवासकेन्द्र ! त्वम् Sy.

१५. अस्मासु यजमानेषु Sy.

१६. माद्य Sy.

१७. अन्नेन Sy.

१८. तथा हे सोमानां पातः ! Sy.

१९. VM. ignores सोमानाम् and इन्द्र ।

२०. अस्माकं सम्बन्धि Sy.

२१. त्वा M.

२२. मतीनां स्तोतृणाम् । मन्यतेः कर्तरि क्तिच् Sy.

२३. स्तोत्रम् Sy.

२४. अस्मासु नियच्छतु Sy.

२५. अस्मदभिमुखं यथा भवति तथा Sy.

२६. परिवर्तनं कुरु Sy.

२७. त्वमपि त्वदीयावश्वौ Sy.

गतोत्तरा ।

पुरो॒ळाशं॑ च नो॒ घसो॑ जो॒षया॑से॒ गिर॑श्च नः । व॒धू॒युरि॑व॒ योष॑णाम् ॥ १६ ॥

[पुरोळाशम्[1]]

स॒हस्रं॒ व्यती॑नां यु॒क्ताना॒मिन्द्र॑मीमहे । श॒तं सोम॑स्य खा॒र्यः॑ ॥ १७ ॥

सहस्रम्[2] । युक्तानाम्[3] । अश्वानाम्[4] । सहस्रम्[5] । इन्द्रम्[6] । याचामहे । शतम्[7] । इमाः[8] सोमस्य[9] । खार्यः[10] पानायेन्द्रस्येति ।

स॒हस्रा॑ ते श॒ता व॒यं गवा॒मा च्या॑वयामसि । अ॒स्म॒त्रा राध॑ एतु ते ॥ १८ ॥

सहस्रा[11][12] । त्वत्तः[13] । वयम् । गवाम् । सहस्राणि[14] । शतानि च[15] । आच्यावयामः[16] । अस्मासु । धनम्[17] । आगच्छतु । तव[18] ।

दश॑ ते क॒लशा॑नां॒ हिर॑ण्यानामधीमहि । भू॒रि॒दा अ॑सि वृत्रहन् ॥ १९ ॥

दश ते[19] । हिरण्यपूर्णान्[20] । दश[21] । कलशान्[22] । त्वत्तः । धारयेम[23] । भूरिदाः[24] । असि हि[25] ।

---

१. The *pratīka* is supplied by the Editor. हे इन्द्र ! त्वं नः अस्मदीयं पुरोडाशं च पुरोडाशरूपमन्नं च घसः अद्धि । तथा नः अस्मदीयाः गिरश्च स्तुतिरूपा वाचश्च जोषयासे सेवस्व । तत्र दृष्टान्तः वधूयुरिव । स्त्रीकामो यथा योषणां स्त्रीणां गिरः सेवते तद्वत् Sy. २. वयं स्तोतारः Sy.

३. युक्तम् P. शिक्षितानाम् Sy.

४. गमनवतामश्वानाम् Sy.

५. सहस्रसंख्याकम् Sy.

६. परमैश्वर्ययुक्तम् Sy.

७. शतसंख्याकाः Sy. ८. इमा D., P.

९. तथा अभिषुतसोमस्य Sy.

१०. खारीरीमहे । द्रोणकलशान् याचामहे । अत्र मानविशेषवाचिना खारीशब्देन द्रोणकलश उपलक्ष्यते । अपरिमितद्रोणकलशान् बहून् यज्ञान् याचामह इत्यर्थः Sy. ११. Omitted by P.

१२. हे इन्द्र ! Sy.

१३. त्वदीयानि Sy.

१४. सहस्रसंख्याकानि Sy.

१५. शतसंख्याकानि च Sy.

१६. आच्यावयामः M. अस्मदभिमुखं कुर्मः Sy.

१७. तथा त्वदीयं धनम् Sy.

१८. त्वत्तः Sy. १९. हे इन्द्र ! Sy.

२०. ०पूर्णकलशान् P., D. हितरमणीयानां धनानाम् Sy.

२१. दशसंख्याकानि Sy.

२२. कुम्भानां कुम्भपरिमितानामिति यावत् Sy. २३. धारयामः Sy.

२४. भूरिमदाः P., D. बहुप्रदः Sy.

२५. भवसि Sy.

वृत्रहन्[१] !

निगदसिद्धोत्तरा ।

**भूरिदा भूरि देहि नो मा दभ्रं भूर्या भर । भूरि घेदिन्द्र दित्ससि ॥ २० ॥**

[भूरिदाः][२]

**भूरिदा ह्यसि श्रुतः पुरुत्रा शूर वृत्रहन् । आ नो भजस्व राधसि ॥ २१ ॥**

भूरिदाः । बहुनो दाता[३] त्वम् । पुरुषु[४] देशेषु । श्रुतः[५] । अस्मान् । आभज[६] । धने ।[७]

**प्र ते बभ्रू विचक्षण शंसामि गोषणो नपात् । माभ्यां गा अनु शिश्रथः ॥ २२ ॥**

प्र ते बभ्रू । प्रशंसामि[८] । तव[९] । बभ्रुवर्णावश्वौ । प्राज्ञ ! दिव[१०] उदकस्य दातुः[११] । पुत्र[१२] ! मा । आभ्यामश्वाभ्याम्[१३] । पशून्[१४] । अनुशिश्रथः[१५] श्रथतिर्भेदनकर्मा ।

---

१. वृत्रं P., D. हे वृत्राणां शत्रूणां हिंसकेन्द्र ! त्वम् Sy.

२. The *pratīka* is supplied by the Editor.
हे इन्द्र ! भूरिदाः बहुप्रदस्त्वम् । भूरि बहु धनम् । नोऽस्मभ्यम् । देहि प्रयच्छ । किन्तु दभ्रमल्पं धनम् । मा प्रयच्छ । भूरि बहुलं धनमस्मभ्यमाभर आहर । किञ्च भूरि इत् अदभ्रमेव धनं दित्ससि घ अस्मभ्यं दातुमिच्छसि खलु Sy.

३. दा P. बहुप्रदस्त्वम् Sy.

४. बहुषु यजमानेषु Sy.

५. श्रुमः P. विख्यातः Sy.

६. ०जन D. आ समन्ताद् भागिनः कुरु Sy.

७. VM. ignores हि । असि । शूर and वृत्रहन् ॥ हि खलु । असि भवसि । शूर ! विक्रान्तेन्द्र ! हे वृत्रहन् ! वृत्रस्य हिंसक ! Sy.

८. प्रकर्षेण स्तौमि Sy.

९. त्वदीयौ Sy.

१०. Omitted by D.

११. हे गवां सनितः ! Sy.

१२. वृत्र P. हे न पातयितः ! स्तोतृनविनाशयितः ! किन्तु पालयितः ! इत्यर्थः Sy.

१३. हे इन्द्र ! त्वं त्वदीयाभ्यामश्वाभ्याम् Sy.

१४. पश्यन् P., D. अस्मदीया गाः Sy.

१५. ०थ P., D. लक्षीकृत्य विनष्टा मा कार्षीः । गावोऽश्वदर्शनाद्विश्लिष्यन्ते । तन्मा भूदित्यर्थः Sy.

कुनीनुकेव विद्रुधे नवे॑ द्रुपुदे अर्भुके । बुभ्रू यामे॑षु शोभेते ॥ २३ ॥

कनीनकेव । कन्यके इव । सिद्धे । नवे । पादुके । स्वल्पे स्थिते । बभ्रू इन्द्रस्याश्वे । गमनेषु । शोभेते सशफे निरुक्तं द्रष्टव्यम् ।

१. ०के P., D.
२. कन्याक M. कमनीये शालभञ्जिके इव Sy. प्रथमाद्विवचनस्यायमाकार आदेशः । कनीनका इव कनीनकेव । इतरथा हि प्रगृह्यत्वात् कनीनके इवेति स्यात् । तेनायमर्थः—यथा कन्यके SKN. 'कन्या कमनीया भवति' सर्व एव हि तां प्रार्थयन्त एव। अथवा 'क्वेयं नेतव्येति वा' दानायेत्येवं तां प्रति पिता चिन्तयतीति कन्या।. . .कन्यके शालभञ्जिके वा Dur.
३. पिडेन्व P. विडेन्व D. विदृढे व्यूढे Sy. द्रुहेर्हिंसार्थस्यैवं रूपम् । व्यत्ययेन चात्र सर्वत्र बहुवचनस्य स्थान एकवचनम् । विदथेष्वित्यवगमः । विविधं हिंसितेषु, अयः-कृतेष्वित्यर्थः SKN. विद्धे Dur.
४. नवजाते Sy. नवेषु नवघटितेषु SKN.
५. द्रुमाख्यस्थाने स्थिते Sy. द्रुपदेषु दारुमयेषु पादुकाख्येषु SKN. द्रुममये पदे इत्यवगमः । दारुपादौ वा, एताभ्यां शब्दाभ्यां विशेष्येते । कन्ययोर्वा पादपीठप्रवचने सप्तम्येकवचनान्ते एते । द्वयोरपि पदयोरेक एव निगमः Dur.
६. अल्पके Sy. अल्पकेषु अन्यूनानतिरिक्तेषु । सप्तमीश्रुतेरारूढे इति शेषः । एवमेतानि कन्ययोरधिष्ठानप्रवचनानि सप्तमीबहुवचनस्य स्थाने एकवचनानीति शाकपूणिर्मन्यते । यास्कस्तु कनीनकेव इति कन्ययोर्दृष्टान्तत्वेनोपन्यासादर्थसामर्थ्यान् नवे अर्भके इत्येते द्वे कन्ययोर्विशेषणे । सप्तम्येकवचने प्रथमाद्विवचने च तुल्यश्रुतित्वात् प्रथमाद्विवचनान्ते इति मन्यते । नवजाते अर्भके अवृद्धाल्पप्रमाणके ये तथा SKN.
७. ०ल्पेऽवस्थिते M. के ते ? यथा विद्रधेषु द्रुपदेषु पादुकाख्येष्वारूढे । एवं वा पादुकास्थानेषु खुरेऽवारूढौ SKN. एकस्मिन् दारुमये पादपीठे । यस्मिन् समधिरूढेषु पादुकाख्येष्वधिष्ठानेष्वधिरूढे Dur.
८. बहु बभ्रु M. हे इन्द्र ! बभ्रुवर्णौ त्वदीयावश्वौ Sy. बभ्रुवर्णाविश्वौ SKN. यथैवं बभ्रुवर्णे अश्वे Dur.
९. यज्ञेषु Sy. यामशब्दो रथवचनः ।. . . रथेष्वाजिधावनादिषु वा यानस्थानेषु SKN. आजिस्थानेषु यमनस्थानेषु Dur.
१०. कान्तियुक्तौ भवतः Sy.
११. कनीनके कन्यके। कन्या कमनीया भवति । क्वेयं नेतव्येति वा । (कमनेनानीयत इति वा) कनतेर्वा स्यात् कान्तिकर्मणः । कन्ययोरधिष्ठानप्रवचनानि । सप्तम्या एकवचनानीति शाकपूणिः । व्यूढयोर्दारुपाद्वोः । दारु दृणातेर्वा । द्रूणातेर्वा । तस्मादेव द्रु । नवे नवजाते । अर्भके अवृद्धे । ते यथा तदधिष्ठानेषु शोभेते एवं बभ्रू यामेषु शोभेते । । बभ्र्वोरश्वयोः संस्तवः N. 4. 15.; SKN. II. 231.

अरं म उस्रयाम्णेऽरमनुंस्रयाम्णे । बभ्रू यामेष्वस्रिधा ॥ २४ ॥

अरं मे[1]। वामदेवस्य द्वावुस्रौ[2] स्तस्ताभ्यां[3] गच्छते । महामिन्द्राय । अश्वपक्षिणी[4] । घनं पर्याप्तमाहरतामेवम्[5] । पादाभ्यां गच्छते[6][7]।

व्याकरोत् षष्ठमध्यायं[8] तृतीयस्याष्टकस्य सः ।

दुहिता भवगोलस्य सुन्दरी यमजीजनत् ॥

॥ इति तृतीयेऽष्टके षष्ठोऽध्यायः[9] ॥

## ॥ तृतीयेऽष्टके सप्तमोऽध्यायः[10] ॥

'प्र ऋभुभ्यो' दूतमिंव[11]' व्याचिख्यासति माधवः ।

उपसर्गेषु वक्तव्यमादितः सम्प्रदर्शयन् ॥ १॥

अन्वयव्यतिरेकाभ्यां प्रकृतेः प्रत्ययस्य च ।

पृथगर्थपरिज्ञानमिति शाब्दिकनिर्णयः ॥२॥

उपसर्गेष्वपि तथा भवेदिति विनिश्चयः ।

तदेतद्धातुसंज्ञायां स्पष्टमाह पतञ्जलिः ॥३॥

---

१. हे इन्द्र ! Sy.

२. ०वुस्तौ P.

३. स्तास्ताभ्यां D. स्ताभ्यां P. उस्राभ्यामनुड्द्भ्यां युक्तेन रथेन यातीत्युस्रयामा । तस्मै Sy.

४. इवपक्षिणौ P. अश्वावक्षिणौ M. बभ्रुवर्णौ त्वदीयावश्वौ Sy.

५. अलं पर्याप्तकारिणौ भवताम् Sy.

६. पद्भ्यामेव गच्छते मह्यम् Sy.

७. VM. explains अरम् once only and ignores यामेषु and अस्रिधा ॥ गमनेषु प्राप्तेषु सत्सु । अक्षियावहिंसकौ Sy.

Ms. D. puts the figure ॥३२॥ here to indicate the end of thirty-second hymn. No such number is given in P. and M.

८. षष्ठ० P.

९. The whole line beginning with इति and ending with ऽध्यायः is omitted by P., D.

१०. Omitted by P., D.

११. RV. IV. 33. 1ª.

वदन्ति वाचकानेक उपसर्गान्[1] विपश्चितः ।
अर्थानां धातु[2]लीनानां द्योतकास्ते पतञ्जलेः[3] ॥४॥

प्रतिष्ठते तिष्ठतीति गमनं स्थानमेव च ।
उभयं तिष्ठतेरर्थः[4] प्रस्तत्र द्योतको गतेः[5] ॥५॥

बीजानि वपतीत्यत्र निवापे[6] दृश्यते वपिः ।
'अधि पेशांसि[7] वपते[8]' छेदने तत्र वर्तते[9] ॥६॥

एवमन्येऽपि दृश्यन्ते बहुष्वर्थेषु धातवः ।
द्योत्यन्त उपसर्गैश्च धात्वर्था इति निर्णयः[10] ॥७॥

'प्र[11] यात शीभम्[12]आशुभिः' 'प्र वो' म्रियन्त[13] इन्दवः[14]' ।
प्रारम्भे[15] प्रोऽनयोर्दृष्टः[16] प्रकर्षे चापि दृश्यते ॥८॥

अर्चत प्रार्चतेत्यत्र वैस्पष्ट्ये चापि दृश्यते ।
'अस्येदु प्र ब्रूहि पूर्व्याः[17]' बहवः सन्ति तादृशाः ॥९॥

---

१. ०र्गाद् M.
२. तु निलीनानां R. तु. . .लीनानां M. अर्त्थदानान्धतुलिना P.
३. ०ले D.
४. रत्थं P. ०रत्थें D.
५. ०ते P., D. P. adds the following after गतेः—प्रत्ययस्य च। पृथगर्त्थपरिज्ञानमिति शाब्दिकनिर्णयः। उपसर्गेष्वपि तथा भवेदिति विनिश्चयः तदेतद्धातुसंज्ञायां स्पष्टमाह पतंजलिः वदन्ति वाचकानेक उपसर्गान् द्वि ॥ The additional passage is the repitition of *Slokas* 2 (partly), 3, and 4 (partly).
६. निपा D.
७. वेशांसि M. पेश्रांसि D.
८. RV. I. 92. 4.
९. The *Sloka* is omitted by P.
१०. The *Sloka* is omitted by P.
११. प P.
१२. शिफमा० P. शीफमा० D. गीषमा० M. RV. I. 37. 14.
१३. ह्रियन्त M.
१४. RV. I. 14. 4.
१५. प्ररेभे M.
१६. र्दृष्टः P.
१७. पूर्व्याणि P. RV. I. 61. 13.

प्रमुः प्रार्थयते कन्यां प्रशान्तः प्राञ्जलिस्[1]तया ।

प्रसन्नमुदकं चेति भिन्नार्थाः प्रा इमे मताः ॥१०॥

आङाभिमुख्यं वदति प्रपरौ तद्विपर्ययम् ।

'परा' याहि मघवन्ना'[2] 'परा[3] हि मे विमन्यवः'[4] ॥११॥

समेकीभाववचनः पृथग्भावे[5] व्यपौ[6] स्मृतौ ।

'यत्रा नरः सं च वि च'[7] 'अप द्वेषो अप ह्वरः[8]'[9] ॥१२॥

अनुः[10] सादृश्यवचनः पश्चाद्भावे च[11] वर्तते ।

उद्वर्तत उद्गमने न्यवौ[12] नीचीनवृत्तिनौ[13] ॥

सुं[14] पूजावचनं प्राहुर्विपरीतौ च निर्दुरौ[15] ।

अधेरुपरिभावो[16]ऽर्थ्यमाभिमुख्यमभेर्विदुः[17] ॥

---

१. प्राजनिस्तया M.
२. RV. III. 53. 5.
३. वरा M.    ४. RV. I. 25. 4.
५. ०भाव्ये M.    ६. व्यापौ D., P.
७. RV. VI. 75. 11.
८. वि च द्वेषो अह्वरस्च P. ०षो अह्व० D. ०षोऽह्वरस्च M.
९. RV. V. 20. 2. I have separated the two Vedic quotations by dissolving the *Sandhi* between च and अप । The Mss. D. and M. apply the *Sandhi* and read चाप । The number of syllables in the second hemistitch in P. and M. is 14, in D. 15. Both D. and M. add one च after ह्वरः । P. reads अह्वरस्व—व standing for च । Evidently, all the three Mss. read one च after ह्वरः । The separation of the two Vedic quotations has resulted in an extra syllable and has made the addition of च unnecessary.
१०. ०नु D.    ११. व D.
१२. न्यपौ P. न्यवो D.
१३. ०त्तिसौन P., D.
१४. सं M.    १५. ०रौः R.
१६. ०भवोत्यंमाभि० D. ०भावार्थमाभि० R. ०वोऽर्थ आभि० is suggested for ०वोऽर्थ्यमाभि० । ०वोऽर्थः is not the object of विदुः । अस्ति should be understood after अर्थः ।
१७. ०महेर्वि० P., M.

अतेरर्थोऽतिक्रमणं प्रातिलोम्ये प्रतिः स्मृतः ।
अपिः संसर्गवचन उपश्चोपजने स्मृतः ॥
वर्जने सर्वतोभावे परिं प्राहुर्विपश्चितः ।
एषामिमे प्रायिकार्था इत्थं यास्केन दर्शिताः ।
पाणिनिश्चाह भगवानर्थानेषां बहूंस्तथा ।
उदाहरणमेतेषां बहुत्वान्न प्रदर्शितम् ॥ इति ॥

---

१. तेरर्थोऽत्यतीतिक्र॰ M.
२. प्रति P., D., M.
३. ॰तं D.
४. ॰नमुप॰ M. ॰नमुपश्चो व॰ P. ॰न-मुपश्चाप॰ D.
५. प्ररि D. वि P.
६. ॰र्विवश्चि॰ D.
७. ॰मितेम M.
८. दर्शते P. ॰तम् D. न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनः। नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति। आ इत्यर्वागर्थे। प्र परा इत्येतस्य प्रातिलोम्यम्। अभि इत्याभिमुख्यम्। प्रति इत्येतस्य प्रातिलोम्यम्। अति सु इत्यभिपूजितार्थे। निर् दुर् इत्येतयोः प्रातिलोम्यम्। नि अव इति विनिग्रहार्थीयौ। उद् इत्येतयोः प्रातिलोम्यम्। सम् इत्येकीभावम्। वि अप इत्येतस्य प्रातिलोम्यम्। अनु इति सादृश्यापरभावम्। अपि इति संसर्गम्। उप इत्युपजनम्। परि इति सर्वतोभावम्। अधि इत्युपरिभावमैश्वर्यं वा N. 13.
९. 'उपसर्गाः क्रियायोगे' (Pa. 1. 4. 59.)। 'आङ् मर्यादावचने' (Pa. 1. 4. 89.)। 'अभिरभागे' (Pa. 1. 4. 91.)। 'अतिरतिक्रमणे च' (Pa. 1. 4. 95.)। 'सुः पूजायाम्' (Pa. 1. 4. 94.)। 'अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु' (Pa. 1. 4. 96.)। 'उपोऽधिके च' (Pa. 1. 4. 87.)। 'अपपरी वर्जने' (Pa. 1. 4. 88.)। 'अधिरीश्वरे' (Pa. 1. 4. 97.)। 'क्रियाविशेषक उपसर्गः' (PMBH. 1. 3. 1. Vol. 1. p. 256.) 'उपसर्गाश्च पुनरेवमात्मका यत्र कश्चित्क्रियावाची शब्दः प्रयुज्यते तत्र क्रियाविशेषमाहुः' (PMBH. 2. 1. 1. Vol 1. p. 365.) 'एतदेव च सौनागैर्विस्तरतरकेण पठितम्। स्वती पूजायाम्। स्वती पूजायामिति वक्तव्यम्। दुर्निन्दायाम्' (PMBH. 2. 2. 1. Vol. 1. p. 416.) 'समेकत्ववाची' (PMBH. 2. 1. 3. Vol. 1. p. 393.) 'परिः सर्वतोभावे वर्तते' (PMBH. 5. 1. 1. Vol. 2. p. 343.) 'अधिरुपरिभावे' (PMBH. 1. 3. 1. Vol. 2. p. 256.)।
१०. बाहुल्यान्न R.
११. प्रदमिति P.

IV.33.

**प्र ऋभुभ्यो दूतमिव वाचमिष्य उपस्तिरे श्वैतरीं धेनुमीळे ।**
**ये वातजूतास्तरणिभिरेवैः परि द्यां सद्यो अपसो बभूवुः ॥ १ ॥**

प्र[1] ऋभुभ्यः॥ वामदेवः ॥ प्रेरयामि[2] । ऋभुभ्यः[3] । दूतमिव[4] । स्तुतिम्[5] । ऋभूणामुप[6]-स्तरणाय[7] । श्वेतवर्णयुक्तां[8] निर्मलाम् । स्तुतिवाचम्[9] । याच[10] । ये[11] । वातप्रेरिताः[12] । तारकैः । गमनैः[13] । परिबभूवुः[14] । सद्य[15] एव । वेगवन्तः[16] ।[17]

**यदारमक्रन्नृभवः पितृभ्यां परिविष्टी वेषणा दंसनाभिः ।**
**आदिद्देवानामुप सख्यमायन्धीरासः पुष्टिमवहन्मनायै ॥ २ ॥**

यदारम् । यदा[18] । अलञ्चक्रुः[19] । पितृभ्याम्[20] । ऋभवः । भोजनेन[21] । व्याप्त्या[22] ।

---

१. चतुर्थेऽनुवाके त्रयोदश सूक्तानि । तत्र 'प्र ऋभुभ्यः' इत्येकादशर्चं प्रथमं सूक्तं वामदेवस्यार्षं त्रैष्टुभम् । तुह्यादिपरिभाषया (Cf. KSA. 12. 3. p. 5.) इदमादिसूक्तपञ्चकमृभुदेवताकम् । अत्रानुक्रमणिका—'प्र ऋभुभ्य एकादशार्भवं वा' (KSA. 23.33.p. 18.) इति । व्यूढे दशरात्रे चतुर्थेऽहनि वैश्वदेवशस्त्रे आर्भवनिविद्धानीयमिदम् । तथा च सूत्रितं—'प्र ऋभुभ्यः प्र शुक्रैत्विति वैश्वदेवम्' (ASS. 8. 8.) इति । तत्र ऋभूणां पूर्वं मनुष्याणामेव सतां तपसा देवत्वप्राप्तिः 'आर्भवं शंसत्यृभवो वै देवेभ्यः' (AB. 3. 30.) इत्यत्र ब्राह्मणे स्पष्टमाम्नाता । केचन ऋभवो नाम सूर्यरश्मय इत्याचक्षते Sy.

२. अहं यजमानः प्रेरयामि Sy.

३. उरु भासमानेभ्य एतन्नामकेभ्यो देवेभ्यः Sy. ४. यथा दूतं स्वकार्यं प्रति प्रेषयन्ति तद्वत् Sy.

५. वाचं स्तुतिरूपाम् Sy.

६. ऋणां D.

७. ०णाये P., D. सोमोपस्तरणाय Sy.

८. युक्ता D. पयोयुक्तां श्वेततरां वा Sy.

९. वाचम् is omitted by D. धेनुम् Sy.

१०. याचं P. याचे is suggested for याच ॥ याचाम्यृभून् Sy.

११. ऋभवः Sy.

१२. वातं प्रे० D. वातं प्रतिताः P. वातसमानगतयः Sy.

१३. नै D. गमनशीलैरश्वैः Sy.

१४. ०बभ्रुवुः D. परिभवन्ति सर्वतो व्याप्नुवन्ति । अथ रश्मय एव ऋभवः इत्युक्तत्वादादित्यं वा रश्मयः परितो व्याप्नुवन्ति Sy.

१५. तदानीमेव Sy.

१६. जगदुपकारिकर्माणः सन्तः Sy.

१७. VM. ignores द्याम् ॥ अन्तरिक्षम् Sy. १८. यस्मिन् काले Sy.

१९. अत्यर्थमकन् (व्याप्ताः) Sy.

२०. मातापितृभ्याम् Sy.

२१. परिवेषणेन परिचर्यया Sy.

२२. व्याप्ता P., D. वेषणेन व्याप्त्या यद्वा वेवेण जरद्रूपयोर्युवत्वकरणेन Sy.

कर्मभिश्च[1]। अनन्तरम्। एव। देवानाम्[2]। सख्यम्[3]। उपायन्[4]। प्राज्ञाः[5]। पुष्टिं च[6]। अवहन्[7]। स्तुत्यर्थं स्तोतुः[8]।

**पुनर्ये चक्रुः पितरा युवाना सना यूपेव जरणा शयाना।**
**ते वाजो विभ्वाँ ऋभुरिन्द्रवन्तो मधुप्सरसो नोऽवन्तु यज्ञम् ॥ ३ ॥**

पुनर्ये। पुनः। ये[9]। कृतवन्तः[10]। पितरौ[11]। युवानौ[12]। सनातनौ[13]। यूपाविव[14]। जीर्णौ। शयानौ। ते वाजादयः[15]। इन्द्रवन्तः[16]। सोमं प्रति सरन्तः[17]। अस्माकम्[18]। यज्ञम्। आगच्छन्तु[19]।

**यत्संवत्समृभवो गामरक्षन्यत्संवत्समृभवो मा अपिंशन्।**
**यत्संवत्समभरन्भासो अस्यास्ताभिः शमीभिरमृतत्वमाशुः ॥ ४ ॥**

यत् संवत्सम्। यत्[20]। सहवासयुक्तं सह वसन्त इत्यर्थः[21]। पित्रोर्गाम्[22]। अरक्षन्[23]। यच्च[24]। संवत्सं[25] पित्रोर्व्यञ्जनार्थम्। मांसम्[26]। अपिशन्[27]। यच्च[28]। संवत्सम्[29]। अस्या गोः। भासः[30]।

---

१. अन्यैश्चमसनिर्माणादिकर्मभिः Sy.
२. इन्द्रादीनाम् Sy.
३. सखित्वं समानख्यानत्वं देवतात्वम् Sy.
४. आगमन्। 'युवशा कर्त्ता' (RV. 1. 161. 3.) इति देवत्वप्राप्तेरेकान्तत्वेन देवैरुक्तत्वादिति भावः Sy.
५. धीरा बुद्धिमन्तः Sy.
६. तेषां पुष्टिं गवादिविषयाम् Sy.
७. वहन्ति धारयन्ति। यद्वा सविषयां पुष्टिं मनायै मनसे प्रकृष्टमनस्कत्वायावहन् Sy. ८. मतिकृते यजमानाय Sy.
९. ऋभवः Sy.
१०. अकुर्वन् Sy.
११. मातापितरौ Sy.
१२. नित्यतरुणौ Sy.
१३. सदा Sy.
१४. युवाविव P., D. छिन्नस्थाणू इव Sy.
१५. वाजाय P. आदि refers to विभ्वा and ऋभुः ॥ वाजो विभ्वा ऋभुश्चेति तन्नामकास्त्रयः सुधन्वनः आङ्गिरसस्य पुत्राः ऋभवः Sy.
१६. अनुग्राहकेणेन्द्रेण तद्वन्तः Sy.
१७. रसन्तः P. मधुरस्य सोमरसस्य भक्षयितारो मनोहररूपा वा Sy.
१८. अस्मदीयम् Sy.
१९. रक्षन्तु गच्छन्तु वा Sy.
२०. यदेतत्कर्मास्ति Sy.
२१. ०वासुक्तं P. संवसन्ति भूतान्यस्मिन्निति संवत्सः संवत्सरः। संवत्सरपर्यन्तम् Sy.
२२. गां मृताम् Sy.
२३. अपालयन्। स्वसामर्थ्यादिति Sy.
२४. D. adds पित्रोः after यच्च।
२५. Omitted by P. संवत्सरम् Sy.
२६. तस्या एव गोर्मांसम् Sy.
२७. अविशन् D. अवयवानकुर्वन्निति Sy.
२८. यत् D. इति यत् Sy.
२९. संवत्सरपर्यन्तम् Sy.
३०. दीप्तीरवयवशोभाः Sy.

बहिर्गृहं[1]मभरन्[2] । तैः । कर्मभिः[3] । अमृतत्वम्[4] । प्रापन्[5] । 'श्रोणामेकं उदकम्' इत्युक्तम्[6] ।[7]

ज्येष्ठ आह चमसा द्वा करेति कनीयान्त्रीन्कृणवामेत्याह ।
कनिष्ठ आह चतुरस्करेति त्वष्ट ऋभवस्तत्पनयद्वचो वः ॥ ५ ॥

ज्येष्ठः । ऋभुः[8] । आह । एकं[9] चमसम् । द्वौ । करोमि[10] । इति । मध्यमः[11] । त्रीन् । इति । तृतीयः[12] । चतुरः[13] । इति । हे ऋभवः ! त्वष्टा[14] । तत्[15] । युष्मद्वचनम् । अपूजयत्[16][17] ।

सत्यमूचुर्नर एवा हि चक्रुरनु स्वधामृभवो जग्मुरेताम् ।
विभ्राजमानांश्चमसाँ अहेवावेनत्त्वष्टा चतुरो ददृश्वान् ॥ ६ ॥

सत्यमूचुः । तदिदं[18] नेतारोऽमी[19] । सत्यम्[20] । ऊचुः[21], उक्तम्[22] । हि[23] । तथा[24] ।

---

१. अस्य गो भास वहि प्राहम् P.
२. ०रं M. अकुर्वन् Sy.
३. मृताया गोर्नवीकरणविषयैः कर्मभिः Sy.
४. देवत्वम् Sy.
५. ०पत M. प्राप्ताः । 'धेनुः कर्त्वा' (RV. I. 161. 3.) इति देवत्वप्राप्तिसाधनत्वेन देवैः प्रतिश्रुतत्वात् । यद्वा अत्र संवत्समित्येतद्वत्सेन सहेति व्याख्येयम् Sy.
६. श्रोणामित्यु० P. शोणमेका मित्यु० D. शोणा० M. The reading of the Mss. is corrupt and has to be ignored. As it is evidently a quotation of the RV. I have given the quotation in its correct form. RV. I. 161. 10.
७. VM. ignores ऋभवः ।
८. ऋहुः P. 'एकं चमसं चतुरः कृणोतन' (RV. 1. 161. 2.) [NM. of DD. and the Poona edition of Sāyaṇa's commentary read चतुरस्कृणोतन । ] इति यदा देवदूतोऽग्निर्ऋभूनाह देवत्वप्राप्त्युक्त्येन तदा तेषु मध्ये देवत्वप्राप्त्युत्कः एको ज्येष्ठः ऋभुरितरौ Sy.
९. एकमेव सन्तम् Sy.
१०. कृणवाम Sy.
११. सध्यः P. मध्यः D. तदनन्तरो विभ्वा Sy.
१२. तदवरो वाजः Sy.
१३. चतुर्धा करवाम Sy.
१४. युष्मद्गुरुः Sy.
१५. तदेव चतुष्करणरूपम् Sy.
१६. अस्तौत् । अङ्गीचकारेत्यर्थः Sy.
१७. VM. explains आह and कर once only and ignores कृणवाम ॥ कृणवाम करवाम Sy.
१८. सदिदं P., D.
१९. ०रोमि P. अमी is omitted by D. मनुष्यरूपा ऋभवः Sy.
२०. P. adds तत् before सत्यम् ।
२१. अब्रुवन् Sy.
२२. उक्तम् seems to be quite unnecessary । उक्तवन्तः is suggested for उक्तम् as an explanation of ऊचुः ।
२३. यस्मादेते Sy.
२४. एवम् Sy.

अनुष्ठितवन्तः[1] । पश्चात्[2] । एताम्[3] । स्वधां सोमम्[4] । अन्वगच्छन्[5] । देवेषु दीप्यमानान् । चतुरः । चमसान् । दिवसानिव[6] । अकामयत[7] । त्वष्टा[8] । पश्यन्[9] ।

**द्वाद॑श॒ द्यून्यदगो॑ह्यस्याति॒थ्ये रण॑न्नृभवः॑ स॒सन्तः॑ ।**
**सु॒क्षेत्रा॑कृण्व॒न्ननय॑न्त॒ सिन्धू॒न्धन्वाति॑ष्ठ॒न्नोष॑धीर्नि॒म्नमापः॑ ॥ ७ ॥**

द्वादश[10] द्यून्[11] । द्वादश[12] । दिवसान् । यदा । गूहितुमशक्यस्य[13] सवितुः । आतिथ्ये[14] । अरमन्त[15] । स्वपन्तः[16] । ऋभवः । तदानीं सवित्रे शोभनानि क्षेत्राणि[17] । अकृण्वन्[18] । नदीश्च । अनयन्[19] । तदानीं स्थलम्[20] । ओषध्यः[21] । आतिष्ठन् । प्रवणम्[22] । आपः 'उद्वत्स्वस्मा[23] अकृणोतन'[24] इत्युक्तम् ।

---

१. चतुरोऽकुर्वन् । यथोक्तं तथैव कृतत्वादित्यभिप्रायः Sy.
२. चतुर्धाकरणानन्तरम् Sy.
३. तृतीयसवनगताम् Sy.
४. सोमाख्यममृतम् Sy.
५. 'एकं चमसं चतुरः कृणोतन।...साकं देवैर्यज्ञियासो भविष्यथ' (RV. 1. 161. 2.) इति श्रुतत्वात् Sy.
६. दिवसान् is omitted by D. अहानीव Sy.
७. अङ्गीचकारेत्यर्थः Sy.
८. अथ त्वष्टा देवः Sy.
९. दृष्टवान् सन् Sy.
१०. ०द्यूंश्चा D.
११. तत्र रश्मय एव ऋभव इत्युक्तत्वात्तद्रूपेण स्तूयन्ते Sy.
१२. आर्द्रादिद्वादशवृष्टिनक्षत्राणीत्यर्थः Sy.
१३. यदा गू यदा गू० M. अगोप्यस्यादित्यस्य गृहे Sy.
१४. ०तुमुराति० P., D. अकस्मादागतोऽतिथिस्तदुचितं सत्काररूपं कर्मातिथ्यम् । तदर्थम् Sy.
१५. रमन्तः M. रमन्ते 'अगोह्यस्य यदसस्तना गृहे' (RV. 1. 161. 11.) इत्युक्तम् Sy.
१६. सुखेन निवसन्तः Sy.
१७. तदानीम् अकृष्टानि शून्यानि क्षेत्राणि वृष्ट्या सस्यादिसमृद्धानि Sy.
१८. अकुर्वन् Sy.
१९. अनयन्त M. प्रैरयन् Sy.
२०. Omitted by P., D. तस्मिन् काले निरुदकस्थानमाश्रित्य Sy.
२१. ओषधयः Sy.
२२. नीचस्थानम् Sy.
२३. उप स्व स्मा P. ०स्म D. उद्वत्स्वस्मा M. I have discarded the reading of the Mss. as it is corrupt. The passage is a quotation of the RV. and I have given it in its correct form.
२४. अकृतोतन M. उद्वत्स्वस्मा अकृणोतना तृणं निवत्स्वपः' (RV. 1. 161. 11.) इत्युक्तम् Sy.

रथं ये चक्रुः सुवृतं नरेष्ठां ये धेनुं विश्वजुवं विश्वरूपाम् ।
त आ तक्षन्त्वृभवो रयिं नः स्ववसः स्वपसः सुहस्ताः ॥ ८ ॥

रथं ये । रथम् । ये । चक्रुः । सुवर्तनम् । नेतरीन्द्रे स्थितम् । ये च । धेनुम् । विश्ववेगाम् । नानारूपां बृहस्पतये । ते । आकुर्वन्तु । ऋभवः । रयिम् । अस्माकम् । सुरक्षणाः । सुकर्माणः । सुहस्ताः ।

अपो ह्येषामजुषन्त देवा अभि क्रत्वा मनसा दीध्यानाः ।
वाजो देवानामभवत्सुकर्मेन्द्रस्य ऋभुक्षा वरुणस्य विभ्वा ॥ ९ ॥

अपो ह्येषाम् । [ कर्म । हि । एषाम् । अजुषन्त ] । देवाः । दीप्यमानाः । प्रज्ञया । मनसा च तत्र । वाजः । सर्वेषां देवानाम् । सुकर्मा । अभवत् । इन्द्रस्य । ज्येष्ठः । वरुणस्य । मध्यमः ।

---

१. ऋभवः Sy.
२. सुचक्रं सुष्ठु वर्तमानं वा Sy.
३. ०रिन्द्रे M. चक्रे वर्तमानम् Sy.
४. च्च M.
५. गाम् Sy.
६. विश्वस्य प्रेरयित्रीम् Sy.
७. बहुरूपामेतन्नामिकां वा । 'बृहस्पतिर्विश्वरूपामुपाजत' (RV. 1. 161. 6.) इति ह्युक्तम् Sy. (Cf. Ngh. 1. 15. and BD. 4. 142.)
८. महान्तः Sy.
९. अकुर्वन् P. सर्वतो निष्पादयन्तु Sy.
१०. धनम् Sy.
११. शोभनान्नोपेताः सुरक्षणा वा Sy.
१२. सुकर्मणः D. सुकर्मणा P.
१३. शोभनहस्ताः कुशलहस्ताः Sy.
१४. अश्वरथनिर्माणादिरूपं कर्म Sy.
१५. पूरणः Sy.
१६. ऋभूणाम् Sy.
१७. कमु ह्येवामत्यजुष P. कमु ह्येषामत्यजुष D. कर्मत्येषामत्यजु० M. The reading of the Mss. is corrupt. The passage within brackets is the Editor's suggestion. असेवन्त । 'इन्द्रो हरी युयुजे अश्विना रथम्' (RV. 1. 161. 6.) इत्यादिमन्त्रोक्तप्रकारेण स्वीकृतवन्त इत्यर्थः। कीदृशास्ते ? Sy.
१८. इन्द्रादयः Sy.
१९. वरप्रदानरूपेण कर्मणा Sy.
२०. वा P. व D.
२१. कनीयान् Sy.
२२. देवानां सर्वेषां सम्बन्धी Sy.
२३. देवानामनुग्रहेण किं लब्धमित्याह । शोभनव्यापारः Sy.
२४. इन्द्रस्य सम्बन्धी Sy.
२५. ०ष्ठे P., D. ऋभुज्येष्ठः Sy.
२६. वरुणस्य सम्बन्ध्यभवत् Sy.
२७. मध्यमा P., D.
२८. VM. ignores अभि ।

ये हरी मेधयोक्था मदन्त इन्द्राय चक्रुः सुयुजा ये अश्वा ।
ते रायस्पोषं द्रविणान्यस्मे धत्त ऋभवः क्षेमयन्तो न मित्रम् ॥ १० ॥

ये हरी[1]। ये[2]। इन्द्राय[3]। अश्वौ[4]। प्रज्ञया। उक्थैः[5]। मदन्तः[6]। चक्रुः[7]। ये च। तावश्वौ[8]। रथे संयुक्तौ[9]। ते यूयम्। रायः[10]। पोषम्[10]। द्रविणानि[11] च। अस्मभ्यम्[12]। धत्त[13]। क्षेमं कुर्वन्तः[14]। मित्रम्[15]। इव[16]।

इदाह्नः पीतिमुत वो मदं धुर्न ऋते श्रान्तस्य सख्याय देवाः ।
ते नूनमस्मे ऋभवो वसूनि तृतीये अस्मिन्त्सवने दधात ॥ ११ ॥

इदाह्नः। इदानीम्[17]। अह्नस्तृतीये[18] सवने। सोमपीतिं[19] च। मदम्[20]। च। दत्तवन्तः[21]। न हि। देवाः। तपसः[22]। सख्याय[23]। ऋते भवन्ति प्रयच्छन्ति श्रान्तस्य[24] फलं न मृषा श्रान्तं भवति[25]। ते[26]। सम्प्रति[27]। अस्मभ्यम्[28]। ऋभवः! वसूनि[29]। अस्मिन्। तृतीयसवने। प्रयच्छत[30]।[31]

---

१. हरिः P.
२. ऋभवः Sy.
३. इन्द्रार्थं चक्रुरकुर्वन् Sy.
४. ०न्द्राया या श्वौ P.
५. उत्थैः P. उक्थे D. स्तुतिभिः Sy.
६. हर्षयन्तः Sy.
७. अकुर्वन् Sy.
८. मानौ P.
९. ०क्तो P., D. सुयुजौ सुयोजनौ Sy.
१०. धनपुष्टिम् Sy.
११. गवादिधनानि च सुखानि वा Sy.
१२. ०म्यहिम् P., D. अस्मासु Sy.
१३. धारयत Sy.
१४. क्षेममिच्छन्तः Sy.
१५. चित्रम् P.
१६. VM. ignores ऋभवः ॥ हे ऋभवः! अत्र यद्यप्येक एव ऋभुनामा, तत्सम्बन्धादितरेऽप्यृभव उच्यन्ते प्राणभृन्न्यायेन Sy.
१७. चमसादिनिर्माणानन्तरम् Sy.
१८. सुत्याहसम्बन्धिनस्तृतीये सवने Sy.
१९. सोमपानम् Sy.
२०. मदं तज्जनितम् Sy.
२१. ददुर्देवाः Sy.
२२. तवस P. तवसः D. श्रान्तात्तपोयुक्तात् Sy.
२३. संख्या M. सखित्वाय Sy.
२४. श्रायन्तस्य P. यत एते श्रान्ता अतो ददुरित्यर्थः Sy. २५. भवन्ति M.
२६. महान्तो यूयम् Sy.
२७. निश्चयम् Sy.
२८. अस्मासु Sy.
२९. धनानि Sy.
३०. ०तः D., M. धारयत Sy.
३१. VM. ignores वः ॥ वः युष्माकम् Sy.
Ms. D. puts the figure ॥३३॥ here to indicate the end of the thirty-third hymn. No such number is given in P. and M.

IV.34.

ऋभुर्विभ्वा वाज इन्द्रो नो अच्छेमं यज्ञं रत्नधेयोप यात ।
इदा हि वो धिषणा देव्यह्नामधात्पीतिं सं मदा अग्मता वः ॥ १ ॥

ऋभुः[1] । ऋभ्वादयः[2] । इन्द्रश्च[3] । अस्माकम्[4] । इमम् । यज्ञम् । अभ्यागच्छत[5] । रत्नदानाय[6] । इदानीम् । हि[7] । वस्तृतीयसवने[8] । देवी[9] । स्तुतिवाक्[10] । अह्नाम्[11] । विदधाति[12] । सोमपानम् । देवैः समगमत[13] । वः[14] । मदाः[15] ।

विदानासो जन्मनो वाजरत्ना उत ऋतुभिर्ऋभवो मादयध्वम् ।
सं वो मदा अग्मत सं पुरंधिः सुवीरामस्मे रयिमेरयध्वम् ॥ २ ॥

विदानासः[16] । जानन्तः[17] । प्रादुर्भावकालम्[18] । हे रमणीयान्नाः[19] ! ऋभवः[20] ! ऋतुभिः[21] सहास्मिन् सवने । मादयध्वम्[22] । युष्माकम्[23] । सोमाः[24] । प्रज्ञा[25] च । देवैः समगमत[26] । तेऽस्मासु[27] ।

---

१. 'ऋभुर्विभ्वा' इत्येकादशर्चं द्वितीयं सूक्तं वामदेवस्यार्षं त्रैष्टुभमार्भवम् । 'ऋभुर्विभ्वा' इत्यनुक्रमणिका (KSA. 23. 34. p. 18.) । व्यूढे दशरात्रे पञ्चमेऽहनि वैश्वदेवशस्त्रे आर्भवनिविद्धानीयम् । 'ऋभुर्विभ्वा स्तुषे जनम्' (ASS. 8. 8.) इति सूत्रितत्वात् Sy.

२. ०यश्च M. आदिः refers to विभ्वा and वाजः ॥

३. इन्द्रश्च एते देवाः Sy.

४. अस्मदीयम् Sy.

५. अभिमुखमुपगच्छत । नन्विन्द्रः सोमस्वामित्वादागच्छतु । कथमेतेषां यज्ञप्राप्तिरिति चेत् ? उच्यते इदा हीति Sy.

६. अस्मभ्यं रत्नधानाय Sy.

७. खलु Sy.

८. ०ये स० P. युष्माकम् Sy.

९. देवी प्रजापतेः सम्बन्धिनी Sy.

१०. स्तुवा० P., D. वाक् Sy.

११. सोमाभिषवसम्बन्धिनाम् Sy.

१२. अधात् । 'स प्रजापतिरब्रवीत्सवितारं तव वा इमेऽन्तेवासास्त्वमेवैभिः सम्पिबस्व (AB. 3.30.) इति ब्राह्मणम् Sy.

१३. सङ्गताः । यद्वा वो मदा देवैः सङ्गताः Sy. १४. युष्मान् Sy.

१५. यस्मादेवं तस्मात् मदाश्च Sy.

१६. ०सा D., P.

१७. ०न्त P., D. देवत्वप्राप्ति जानन्तः यद्वा विदानासः सोमप्राप्ति जानन्तः Sy.

१८. ०ल M. जननस्य देवत्वलक्षणस्य यद्वा जन्मनः पूर्वं मनुष्यजन्मवन्तश्च सन्तः Sy.

१९. हे रमणीयान्नाः is missing in M. हे सोमलक्षणेनान्नेन राजमानाः ! Sy.

२०. यूयम् Sy.

२१. ऋभुभिः P., D. देवैः Sy.

२२. मदायध्वं P. मदायाध्वं D.

२३. युष्मान् Sy.

२४. सोमां P., D. मदाः सोमपानजनिताः Sy.

२५. स्तुतिरपि Sy. २६. सङ्गताः Sy.

२७. ते यूयमस्माकम् Sy.

सुपुत्रम् । धनम् । प्रेरयत ।

**अयं वो यज्ञ ऋभवोऽकारि यमा मनुष्वत्प्रदिवो दधिध्वे ।**
**प्र वोऽच्छा जुजुषाणासो अस्थुरभूत विश्वे अग्रियोत वाजाः ॥ ३ ॥**

अयम् । हे ऋभवः ! युष्माकम् । अयम् । अस्माभिर्यज्ञः । अकारि । यम् । पुराणम् । यूयमात्मनि दधिध्वे । मनाविव मनुष्येषु वा । युष्मान् । सेवमाना ऋत्विजः । अभिप्रतस्थुः । हे वाजाः ! यूयम् । भवत । सर्वे । प्रथमगायिनः ।

---

१. सु is omitted by P., D. शोभनैर्वीरैः पुत्रैरुपेताम् Sy.

२. ०तः P.

३. VM. ignores उत ॥ उतशब्दश्चार्थे Sy.

४. ऋभुप्रभृतयः SKN.

५. युष्मदर्थम् Sy.

६. Omitted by P., D.

७. कृतोऽस्माभिः SKN. अहमकार्षम् Dur. ८. यज्ञम् Sy.

९. यम् । पुराणं is missing in M. प्रकर्षेण द्योतमानाः सन्तः Sy. पुराणमस्मत्पूर्वैरपि कृतपूर्वम् SKN. तमागत्य . . . प्रकर्षेण द्योतमानाः सन्तः Dur. प्रदिव इति पुराणनाम Ngh. 3. 27.

१०. दध्मे P. धारयत जठरे Sy. आकारो दधिध्व इत्येतेन सम्बध्यते । . . . मर्यादया, आत्मनि धारयथानुभवथेत्यर्थः SKN. धारयध्वे एतद् वः प्रब्रवीमि Dur.

११. मनानि विव P. मनानिविप D. मनुष्यवत् Sy. मर्यादया . . . मनुष्यवत् SKN. मनुष्यवत् Dur.

१२. तदर्थं युष्मान् Sy. युष्मदर्थमित्यर्थः SKN. यूयम् Dur.

१३. सोमपानः P. देवैः सेव्यमाना वा Dur.

१४. सोमाः Sy.

१५. आभिमुख्येन प्रतिष्ठन्ते Sy. अच्छ, अभेरर्थे । अस्थुरित्येतेन चाभिप्रशब्दयोः सम्बन्धः । . . . अभिप्रस्थितानि, कानि ? सामर्थ्याद् हवींषि तानि SKN. प्रस्थितानि यान्येतानि हवींषि तानि Dur.

१६. वावाजाः P., D. ऋभवः Sy. ऋभुर्विभ्वा वाज इत्येते त्रयोऽन्ये चान्त्येनोपलक्षिता उच्यन्ते । जोषयमाणा भवत SKN. हे वाजाः ! यूयमपि Dur.

१७. अभ० D., M. भवथ Sy. लोडर्थे लुङ् । भवतेत्यर्थः SKN. एवमेव भवत Dur. १८. विश्वे यूयम् Sy.

१९. अग्राह्र्ा अग्रत्वसम्पादिनो वा Sy. अग्रयानेनाग्राह्र्ा अग्रभूता वा यूयम् । . . . ये ह्यग्रमर्हन्ति ते सम्पद्यन्तेऽग्रियाःSKN. अग्रगामिनोऽग्रसम्पादिनो वा, अग्रमेव वाऽग्रियाः । तथार्थोपपत्तेः शब्दसारूप्याच्च Dur.

२०. VM. ignores आ and उत ॥ उत अपि च धारयित्वा च Sy. प्रास्थुर्वो जोषयमाणा अभवत सर्वे अग्रगमनेनेति वा । अग्रगरणेनेति वा । अग्रसम्पादिन इति वा । अपि वा अग्रमित्येतदनर्थकमुपबन्धमाददीत N. 6. 16.; SKN. II. 443.

अभूदु वो विधते रत्नधेयमिदा नरो दाशुषे मर्त्याय ।
पिबत वाजा ऋभवो ददे वो महि तृतीयं सवनं मदाय ॥ ४ ॥

अभूदु वः । अभूत्[1] । युष्माकम्[2] । परिचरते[3] । रत्नधानम्[4] । तृतीयसवने[5] । हे[6] नेतारः ! दाशुषे[7] । मनुष्याय[8] । पिबत[9] सोमम् । हे ऋभवः[10] ! हे वाजाः[11] ! दीयते । युष्मभ्यम् । महत्[12] । तृतीयसवनम्[13] । मदाय[14] ।[15]

आ वाजा यातोप न ऋभुक्षा महो नरो द्रविणसो गृणानाः ।
आ वः पीतयोऽभिपित्वे अह्नामिमा अस्तं नवस्वइव ग्मन् ॥ ५ ॥

आ वाजाः । हे वाजाः ! हे ऋभवः ! अस्मान् । उपायात । हे नेतारः[16] ! महत्[17] । धनम्[18] वाचा गृणानाः[19] । समगमत[20] । युष्माकम्[21] । सोमः[22] । अपराह्णे[23] । गृहम्[24], इव । नवप्रसूता[25] गावः[26] ।

---

१. भवतु Sy.

२. युष्माकमनुग्रहात् Sy.

३. स्तुत्या परिचरते Sy. विधतिः परिचरणकर्मा Ngh. 3. 5.

४. ०धनं D. दातव्यं रत्नम् Sy.

५. इदानीम् Sy.

६. हेत P. ऋभवः ! Sy.

७. हविर्दत्तवते Sy.

८. यजमानाय मह्यम् Sy.

९. ०तं M.

१०. एतद्द्वयं विभ्वनामकस्याप्युपलक्षणम् । इतरापेक्षया प्रत्येकं बहुवचनम् Sy.

११. जाः M. १२. अहं M. प्रभूतम् Sy.

१३. तत्सम्बन्धिनं सोममित्यर्थः Sy.

१४. The passage beginning with हे ऋभवः ! and ending with मदाय is omitted by P. किमर्थम् ? हर्षाय तृप्तये वा Sy.

१५. VM. ignores उ ।

१६. यूयम् Sy.

१७. किं कुर्वन्तः ? महतः Sy.

१८. धनस्य । कर्मणि षष्ठ्यौ । महद् द्रविणम् Sy.

१९. गृहानाः D. गृहाणाः M. स्तुवन्तः Sy.

२०. आगच्छन्ति Sy.

२१. युष्मान् Sy.

२२. सोमाः M. पानानि Sy.

२३. VM. seems to explain अह्नामभिपित्वे together as अपराह्णे ॥ अह्नामभिपतने समाप्तौ तृतीये सवन इत्यर्थः Sy.

२४. अस्तम् इति गृहनाम Ngh. 3. 4.

२५. नवप्रसवा गाव इव Sy.

२६. VM. ignores इमाः । The commentary on this stanza is omitted by P.

**आ नंपातः शवसो यातनोपेमं यज्ञं नमंसा हूयमानाः ।**
**सजोषंसः सूरयो यस्यं च स्थ मध्वः पात रत्नधा इन्द्रंवन्तः ॥ ६ ॥**

आ नपातः[1] । उपागच्छत । हे शवसः, पुत्राः[2] ! इमम्[3] । यज्ञम् । हविषा[4] । हूयमानाः[5] । सङ्गताः[6] । सूरयः[7] । यस्य[8] । च । भवथ[9] । सोमस्य[10] तं सोमम् । पिबत । इन्द्रेण सहिताः[11] । रत्नानां[12] दातारः[13] ।

**सजोषा इन्द्र वरुंणेन सोमं सजोषाः पाहि गिर्वणो मरुद्भिः ।**
**अग्रेपाभिर्ऋतुपाभिः सजोषा ग्नास्पत्नीभी रत्नधाभिः सजोषाः ॥ ७ ॥**

सजोषाः । वरुणेन[14] । मरुद्भिश्च । सह[15] त्वम् । इन्द्र ! गीर्भिर्वननीय[16] ! पिब । सोमम् । तवाग्रे चाभिषवकाले[17] पिबद्भिश्च । देवैः[18] । सङ्गतः । तथा ग्नासंज्ञिताभिर्देवपत्नीभिश्च[19] । रत्नानां[20] धात्रीभिः[21] ।

---

१. नः पा॰ D.
२. शवः M. बलस्य न पातयितारस्तस्य पुत्रा वा, बलवन्त इत्यर्थः Sy.
३. Omitted by D.
४. यूयं स्तोत्रेण Sy.
५. भूय॰ D. आकारिताः सन्तः Sy.
६. कीदृशा यूयम् ? इन्द्रेण सह प्रीताः Sy.
७. मेधाविनः Sy.
८. इन्द्रस्य चैषां च कः प्रसङ्गः ? इत्युच्यते । चेति प्रसिद्धौ । यस्येन्द्रस्य सम्बन्धिनो यूयं भवथ तदुचिताश्वनिर्माणादित्यभिप्रायः Sy.
९. ॰थः M.
१०. मधुरं सोमम् Sy.
११. यस्मादेवं तस्मात् प्रीतेन इन्द्रेण तद्वन्तः Sy.
१२. रमणीयधनानां दातारो यूयम् Sy.
१३. The commentary on this stanza is omitted by P. which reads पिबतेन्द्रेण only.
१४. रात्र्यभिमानिदेवेन Sy.
१५. समानप्रीतिः सन् सङ्गतः सन् Sy.
१६. हे गीर्भिर्वननीय ! सम्भजनीयेन्द्र ! त्वम् Sy.
१७. ॰वाभिस्वकाल D. ॰वाभिस्वकाले M. किञ्च प्रथमपातृभिः Sy.
१८. ऋतुयाजदेवैश्च Sy.
१९. ग्नावसं॰ M. स्त्रीणां पालयित्र्यो देव्यो ग्नाः पत्न्यः, ताभिः Sy. मेना ग्ना इति स्त्रीणाम् N. 3. 21.
२०. रमणीयधनदातृभिर्ऋभुभिः सह पिब । यद्वा एतद् ग्नाःपत्नीभिरित्यस्य विशेषणम् । ताभिर्वा सजोषाः सोमं पिब Sy.
२१. The commentary on this stanza is omitted by P.

**सजोषस आदित्यैर्मादयध्वं सजोषस ऋभवः पर्वतेभिः ।**
**सजोषसो दैव्येना सवित्रा सजोषसः सिन्धुभी रत्नधेभिः ॥ ८ ॥**

सजोषसः । पर्वताः शिलोच्चयास्तेषां नदीनां च तृतीये सवनेऽस्त्यन्वयः ।[1]

**ये अश्विना ये पितरा य ऊती धेनुं ततक्षुर्ऋभवो ये अश्वा ।**
**ये अंसत्रा य ऋधग्रोदसी ये विभ्वो नरः स्वपत्यानि चक्रुः ॥ ९ ॥**

ये अश्विना । ये । ऋभवः । अश्विनौ रथकरणेन । प्रीताव[2]कुर्वन् । ये । जीर्णौ पितरौ सञ्चक्रुः[3] । ये रक्षणार्थं[4] बृहस्पतये । धेनुम्[5] । ततक्षुः[6] । ये वा । देवानामश्वा[7] बडवास्ततक्षुः[8] । ये च । देवानामिन्द्रस्यांसत्रौ[9] । अकुर्वन्[10] । ये[11] च । द्यावापृथिव्यौ[12] । ऋद्धं[12] कुर्वन्ति । ये च[13] । महान्तः[14] । नेतारः । शोभनानि[15] कर्माणि रथकरणादीनि ।

---

१. The commentary on this stanza is omitted by P. VM. explains just two words of the stanza.
हे ऋभवः ! आदित्यैः सजोषसः सङ्गता यूयं मादयध्वम् । तथा पर्वतेभिः पर्ववद्भिः पर्वण्यर्च्यमानैर्देवविशेषैः सजोषसो मादयध्वम् । तथा च दैव्येन देवेभ्यो हितेन सवित्रा सजोषसः रत्नधेभिः रत्नानां दातृभिः सिन्धुभिः स्यन्दनस्वभावैर्नद्यभिमानिदेवैश्च सजोषसो मादयध्वम् Sy.

२. P. begins न प्रीताव० etc. and omits ये अश्विना etc.

३. चक्रु D. जीर्णौ सन्तावूती ऊत्या युवानौ चक्रुः Sy.

४. ऊत्या क्रियया रथनिर्माणरूपया अप्रीणयन् Sy.

५. मधनुं P., D. मृतायाः पुनर्नवीकरणेन Sy.

६. तक्षणेन समपादयन् Sy.

७. अश्वौ ततक्षुः । 'निश्चर्मणो गामरिणीत धीतिभिर्या जरन्ता युवशा ताकृणोतन' (RV. I. 161. 7.) इत्याद्युक्तम् Sy.

८. बन्धवा० D. वंसत्रा च कुर्वं P.

९. वंसत्रा D. अंसतौ M. अंसत्राणि कवचानि देवेभ्यश्चक्रुः Sy.

१०. चाकु D. अकु M.

११. यें P.

१२. ०थिवी अवृद्धं P. ०थिवी व्यावृद्धं M. पृथक् चक्रुः Sy.

१३. एवमुक्तप्रकारेण ये Sy.

१४. व्याप्ता ऋभवः Sy.

१५. ०नादीनि D. स्वपतनसाधनानि तत्प्राप्तिसाधनानि वा कर्माणि चक्रुः । 'तेभ्रप्रेपाः' (RV. IV. 34. 10c.) इत्युत्तरत्र सम्बन्धः Sy.

**ये गोमन्तं वाजवन्तं सुवीरं रयिं धत्थ वसुमन्तं पुरुक्षुम् ।**
**ते अग्रेपा ऋभवो मन्दसाना अस्मे धत्त ये च रातिं गृणन्ति ॥ १० ॥**

ये गोमन्तम्[1] । ये यूयम्[2] । गवादियुक्तम् । धनम् । प्रयच्छथ[3] । वासयितृ[4] । पुत्रयुक्तम्[5] । बहुशब्दम्[6] । ते[7] । अग्रे पातारः[8] । ऋभवः ! मोदमानाः[9] । अस्मभ्यम् । प्रयच्छथ[10] । ये । चान्ये[11] देवाः । धनम्[12] । उच्चारयन्ति[13] ।

**नापाभूत न वोऽतीतृषामानिःशस्ता ऋभवो यज्ञे अस्मिन् ।**
**समिन्द्रेण मदथ सं मरुद्भिः सं राजभी रत्नधेयाय देवाः ॥ ११ ॥**

नाथाभूत[14] । न । अपभवत[15] । न वयम् । युष्मान् । तृषितान्[16] कुर्मः । न यूयमस्मिन्[17] । यज्ञे[18] । निशस्ता[19] अपि त्वन्तर्भूता एव । तथा सतीन्द्रेण । मरुद्भिश्च । सम्मदथ[20] । आदित्यैश्च[21] । रत्नानि[22] दातुम्[23] ।

---

१. हे ऋभवः ! Sy.
२. VM. explains गोमन्तम् and वाजवन्तम् together as गवादियुक्तम् ॥ गोमन्तं गोसहितं वाजवन्तमन्नवन्तम् Sy.
३. अप्र० D., M. धारयथ मह्यं दातुम् Sy.
४. निवासयोग्यगृहादिधनोपेतम् Sy.
५. शोभनपुत्रोपेतम् Sy.
६. बह्वन्नम् Sy.
७. यूयम् Sy.
८. प्रथमं पातारः Sy.
९. माद्यन्तः सन्तः Sy.
१०. दत्त रयिम् Sy.
११. यूयम् Sy.
१२. दानं दत्तं सोमं वा Sy.
१३. स्तुवन्ति तेभ्यो धत्त । यद्वा ये च रातिं गृणन्ति यजमानास्तेभ्योऽपि धत्त Sy.
१४. नावाभूता P. नवाभूतं D.
१५. अवभ० P., D. अपगच्छत । अपरक्ता भवत Sy.
१६. अत्यन्तं तृषितान् मा करवाम Sy.
१७. यूनम् M.
१८. यन्ने P., D.
१९. शस्ता M. अनिन्दिताः सन्तः Sy.
२०. तृप्ता भवथ Sy.
२१. ०मद यादि० M. राजमानैरन्यैर्देवैः Sy.
२२. रमणीयाय धनदानाय Sy.
२३. VM. explains सम् once and ignores ऋभवः and देवाः ॥ Ms. D. puts the figure ॥३४॥ here to indicate the end of thirty-fourth hymn. No such number is given in P. and M.

IV.35.

इहोपं यात शवसो नपातः सौधन्वना ऋभवो मापं भूत ।
अस्मिन्हि वः सवंने रत्नधेयं गमन्त्विन्द्रमनु वो मदासः ॥ १ ॥

[1] इह । [2] इह । [3] उपगच्छत । शवसः, पुत्राः [4] ! इति बलवत्तयाह । हे सुधन्वनः पुत्राः ! ऋभवः [5] ! मा च । अवगच्छत [6] । अस्मिन् । हि [7] । तृतीयसवने । वः [8] । रत्नदानम् [9] । स्तोतृभ्यो युष्माकम् [10] । सोमः [11] । इन्द्रम् । अनुगच्छन्तु [12] ।

आगंन्नृभूणामिह रत्नधेयमभूत्सोमंस्य सुषुंतस्य पीतिः ।
सुकृत्यया यत्स्वंपस्ययां चँ एकं विचक्र चमसं चंतुर्धा ॥ २ ॥

आगन्नृभूणाम् [13] । आगच्छन्तु [14] । ऋभूणाम् [15] । तृतीयसवने । रत्नदानम् । भवतु [16] च । सोमस्य [17] । सुष्ठु सुतम् [18] । यस्माद् [19] यूयम् । सुकर्मणा [20] । शोभनकरणेच्छया [21] । च । एकं सन्तम् । चमसम् । विकृतवन्तः [22] स्थ । चतुर्धा [23] [24] ।

---

१. 'इहोप यात' इति नवर्चं तृतीयं सूक्तं वामदेवस्यार्षं त्रैष्टुभमार्भवम् । 'इहोप नव' इत्यनुक्रमणिका (KSA. 23. 35. p. 18.) तृतीयसवने मैत्रावरुणस्येदमुन्नीयमानसूक्तम् । सूत्रितञ्च—'आ त्वा वहन्त्वसावि देवमिहोप यातेत्यनुसवनम्' (ASS. 5. 5.) इति Sy.
२. इहं D.
३. अस्मिन् तृतीयसवने Sy.
४. हे शवसो नपातः ! बलस्य पुत्रास्तस्य न पातयितारः ! वा Sy.
५. हे ऋभवः ! यूयम् Sy.
६. ग० P. चाग० D. अपगता भवत Sy.
७. हि पूरणः Sy.
८. युष्मान् Sy.
९. रमणीयधनस्य दातारम् Sy.
१०. ०क P.
११. ०मम् P., D. सोमाः is suggested for सोमः ॥ मदकराः सोमाः Sy.
१२. अनुसृत्य, गच्छन्तु । अन्विति क्रियया वा सम्बध्यते । इन्द्रं युष्मांश्चान्वागच्छन्त्वित्यर्थः Sy.
१३. ०गनन्नृभू० D.
१४. आगच्छतु is suggested for आगच्छन्तु ॥ मह्यम्, यद्वा युष्माकमेव सोमाख्यं रत्नमागन् Sy.
१५. युष्माकम् Sy.
१६. अभूत् प्रजापतिना लब्धमित्यर्थः Sy.
१७. यस्मात् सोमस्य Sy.
१८. ०त M. सुषुतस्य Sy.
१९. तदपि कुत इति चेत् ? उच्यते । यत् यस्मात् Sy.
२०. शोभनहस्तव्यापारेण Sy.
२१. शोभनेच्छया P., D. शोभनरथनिर्माणादिकर्मेच्छया Sy.
२२. कृतवन्तः Sy. २३. चतुर्धा P.
२४. VM. ignores पीतिः ॥ पीतिः पानम् Sy.

व्यकृणोत चमसं चतुर्धा सखे वि शिक्षेत्यब्रवीत ।
अथैत वाजा अमृतस्य पन्थां गणं देवानामृभवः सुहस्ताः ॥ ३ ॥

व्यकृणोत । व्यकृणोत[१] । एकं चमसम् । चतुर्धा[२] । अग्ने ! सखे[३] ! देवेभ्यश्चमसमिमं विदेहि[४] । इति । अब्रवीत[५] । अथ[६] । प्राप्तवन्तः स्थ[७] । अमृतत्वप्राप्तेः[८] । पन्थानम् । देवगणम्[९] । ऋभवः[१०] ! सुहस्ताः[११][१२] ।

किंमयः स्विच्चमस एष आस यं काव्येन चतुरो विचक्र ।
अथा सुनुध्वं सवनं मदाय पात ऋभवो मधुनः सोम्यस्य ॥ ४ ॥

किम्मयः[१३] । किंनिर्मितः[१४] । स्वित्[१५] । एषः । चमसः । अभूत्[१६] । यम्[१७] । कविकर्मणा[१८] । चतुरोऽपि च[१९] । सम्प्रति[२०] । सुनुध्वम्[२१] । ऋभूणां मदाय[२२] । तृतीयं[२३] सवनम् । पिबत । यूयं च ऋभवः[२४] ! सोममयम्[२५] । मधु[२६][२७] ।

---

१. व्यकुरुत । कृत्वा च Sy.
२. The passage beginning with व्यकृणोत and ending with चतुर्धा is omitted by P., D.
३. हे सखिभूताग्ने ! Sy.
४. अपि दे० D. अनुगृहाण सोमपानम् Sy.
५. अवदत यूयम् Sy.
६. चापि तथा P. चापीताय D. सोऽग्निर्युष्मानवादीत् खलु। किमिति ? Sy.
७. प्राप्तव स्तव P. प्रात्पव० M. गच्छत Sy.
८. प्राप्ते P., D. अमरणधर्मकस्य स्वर्गस्य Sy.
९. किं तदमृतमिति ? देवानामिन्द्रादीनां गणं सङ्घातमैत Sy.
१०. हे ऋभवः ! यूयम् Sy.
११. कुशलहस्ता यूयम् Sy.
१२. VM. ignores वाजाः ॥ हे वाजाः ! Sy.
१३. ०यं D. किमयं P.
१४. ०त P. किमात्मकः Sy.
१५. स्वित् प्रश्ने Sy.
१६. चदो भू० P., D. आस Sy.
१७. चमसमेकं सन्तम् Sy.
१८. कवीनां मेधाविनां सम्बन्धिना कर्मणा कौशलेन Sy.
१९. चतुरोपि चमसः P. चतुरोपि चमसा D.
२०. प्रति P., D. अधुना Sy.
२१. सुनुध्वं हे ऋत्विजः ! Sy.
२२. मदा P. हर्षाय Sy.
२३. तृतीय P. सूयत इति सवनः सोमः । तम् Sy.
२४. ऋभुः P. हे ऋभवः ! यूयञ्च Sy.
२५. सोमसम्बन्धिनम् Sy.
२६. मधुररसम् Sy.
२७. VM. ignores विचक्र ॥ विचक्र कृतवन्तः Sy.

शच्याकर्त पितरा युवाना शच्याकर्त चमसं देवपानम् ।
शच्या हरी धनुतरावतष्टेन्द्रवाहावृभवो वाजरत्नाः ॥ ५ ॥

शच्याकर्त[1] । प्रज्ञया[2] । कृतवन्तः[3] । पितरौ[4] । युवानौ जीर्णौ । तथा चमसं च बहुविधम् । देवानां सोमपानसाधनम्[5] । अश्वौ च । गन्तृतरौ[6] । इन्द्राय[7] । कृतवन्तः[8] स्थ[9] । हे ऋभवः ! रमणीयान्नाः[10] ![11]

यो वः सुनोत्यभिपित्वे अह्नां तीव्रं वाजासः सवनं मदाय ।
तस्मै रयिमृभवः सर्ववीरमा तक्षत वृषणो मन्दसानाः ॥ ६ ॥

यो वः । यः[12] । वः[13] । सुनोति । अपराह्णे[14] । तीव्ररसम्[15] । सोमम्[16] । हे वाजाः[17] ! मदाय । तस्मा इति स्पष्टम्[18] ।

---

१. ०कर्तः D.

२. कर्मणा Sy.

३. अकुरुत Sy.

४. मातापितरौ Sy.

५. देवपानार्हम् Sy.

६. कीदृशौ हरी ? शीघ्रं गन्तृतरौ Sy.

७. इन्द्राय seems to be the explanation of इन्द्रवाहौ ॥ इन्द्रवोढारौ Sy.

८. तक्षणेन सम्पादितवन्तः Sy.

९. स्थ P.

१०. हे रमणीयसोमान्नाः ! Sy.

११. VM. explains शच्या and अकर्त once only

१२. यजमानः Sy.

१३. युष्मभ्यम् Sy.

१४. अपराह्णे P. VM. explains अह्नाम् and अभिपित्वे together as अपराह्णे ॥ अह्नामभिपतने तृतीयसवने इत्यर्थः । तस्मिन् Sy.

१५. रसवत्तरम् Sy.

१६. सूयत इति सवनः सोमस्तम् Sy.

१७. अन्नवन्तः ! Sy.

१८. VM. ignores तस्मै । रयिम् । ऋभवः । सर्ववीरम् । आ । तक्षत । वृषणः and मन्दसानाः ॥ तस्मै । सर्ववीरं बहुपुत्रोपेतम् । रयिं धनम् । हे वृषणः ! फलवर्षितारः ! हे ऋभवः मन्दसानाः मोदमानाः सन्तः । आ तक्षत सम्पादयतेत्यर्थः Sy.

प्रातः सुतमपिबो हर्यश्व माध्यंदिनं सवनं केवलं ते ।
समृभुभिः पिबस्व रत्नधेभिः सखीँर्याँ इन्द्र चकृषे सुकृत्या ॥ ७ ॥

प्रातः सुतम् । चकृषे कृतवानसि । शिष्टं स्पष्टम् ।[1]

ये देवासो अभवता सुकृत्या श्येनाइवेदधि दिवि निषेद ।
ते रत्नं धात शवसो नपातः सौधन्वना अभवतामृतासः ॥ ८ ॥

ये देवासः[2] ।[3] श्येना इव शीघ्र[4]गतयः सन्तः । स्वर्गस्य[5] । उपरि[6] । निषण्णाः स्थ । अमृ-
तांश्च[7] । अभवत[8] लब्धसोमाः । शिष्टं[9] स्पष्टम् ।

यत्तृतीयं सवनं रत्नधेयमकृणुध्वं स्वपस्या सुहस्ताः ।
तदृभवः परिषिक्तं व एतत्सं मदेभिरिन्द्रियेभिः पिबध्वम् ॥ ९ ॥

यत्तृतीयम्[10] । यद् यूयम् । तृतीयम्[11] । सवनम् । रत्ननिधानम्[12] । अकृणुध्वं[13] सोमपाने ।

---

१. VM. ignores all the words of the stanza except चकृषे । Sy. explains this stanza in the following manner:— हे हर्यश्व ! हरितवर्णाश्वोपेतेन्द्र ! प्रातः प्रातःसवने । सुतमभिषुतं सोमम् । अपिबः पिबस्व ? (पिब) । माध्यन्दिनं सवनं केवलं ते परं तवैव नान्येषाम् । सवनद्वयस्य पृथगभिधानात्तृतीयसवनं परिशिष्यते । तृतीयसवने रत्नधेभिः रमणीयदानैः ऋभुभिः सं पिबस्व । हे इन्द्र ! यानृभून् सुकृत्या शोभनकर्मणा सखीन् चकृषे अकरोः ॥

२. देवास P.

३. हे ऋभवः ! Sy.

४. इव प्र P., D. शंसनीयगतयो गृध्रविशेषा इव Sy.

५. द्युलोके Sy. ६. अधि Sy.

७. देवाः Sy.

८. ०श्वात्मवत M. भ० P. अभूत Sy.

९. VM. means by शिष्टम्—ये । देवासः । अभवत । सुकृत्या । इत् । ते रत्नम् । धात । शवसः । नपातः and सौधन्वनाः ॥ ये यूयम् । सुकृत्या शोभनकर्मणा । देवासः देवाः । हे शवसो नपातः ! बलवन्तः ! ते यूयम् । रत्नं धनम् । धात प्रयच्छत । हे सौधन्वनाः ! सुधन्वनः पुत्राः ! Sy.

१०. यं P.

११. Omitted by P. तृतीय M.

१२. रमणीयसोमदानवत् Sy.

१३. प्रसाधितवन्तः Sy.

शोभनेन कर्मणा[1]। हे सुहस्ताः[2] ! तत्[3] तृतीयं सवनम्[4]। युष्माकं[5] मदाय। परितः सिक्तम्[6]। यूयम्। इन्द्रजुष्टैः[7]। सोमैः[8]। सह पानं कुरुत[9]।[10]

## IV.36.

**अनश्वो जातो अनभीशुरुक्थ्यो॑ रथस्त्रिचक्रः परि वर्तते रजः।**
**महत्तद्वो देव्यस्य प्रवाचनं द्यामृभवः पृथिवीं यच्च पुष्यथ ॥ १ ॥**

अनश्वः[11]। अश्वप्रग्रहाभ्यां वर्जितः[12]। स रथः[13]। जातः। तुभ्यं[14] यस्त्रिभिश्चक्रैर्युक्तः सन्[15]। परिवर्तते[16]। लोकम्[17] अश्विभ्यां भवद्भिः[18] कृतः। महच्च[19]। तत्[20]। वः[21]। देवत्वस्य। प्रवचनीयं[22] कर्म। यत्[23]। द्यां च। पृथिवीम्। चोदकैस्तेजोभिर्वा पुष्यथ[24]।[25]

---

१. शोभनकर्मेच्छया Sy.
२. सह० M. शोभनहस्ताः Sy.
३. तं P.
४. सवनगतं सोमद्रव्यम् Sy.
५. युष्माकं सम्बन्धिभिः Sy.
६. परिषेचनवत् Sy.
७. इन्द्रयुषैः P. इन्द्रयूषैः D. इन्द्रियैः Sy.
८. माद्यद्भिः Sy.
९. संपिबध्वम्। यद्यपि वदनमेव पानसाधनं तथापि चक्षुःश्रोत्रादीनामपि दर्शनश्रवणादिना तृप्तिसद्भावात् पातृत्वमुपचर्यते Sy.
१०. VM. ignores एतत्। Ms. D. puts the figure ॥३५॥ here to indicate the end of thirty-fifth hymn. No such number is given in P. and M.
११. 'अनश्वो जातः' इति नवर्चं चतुर्थं सूक्तमार्भवम्। ऋषिर्वामदेवः। अन्त्या त्रिष्टुप्। शिष्टास्त्रिष्टुबन्तपरिभाषया (Cf. KSA. 12. 13. p. 15.) जगत्यः। 'अनश्वोऽन्त्या त्रिष्टुप्' इत्यनुक्रमणिका (KSA. 23. 36. p. 18.) आभिप्लविके तृतीयेऽहनि वैश्वदेवशस्त्रे आर्भवनिविद्धानीयमिदम्। तथा च सूत्रितम्—'अनश्वो जातः परावतो य इति वैश्वदेवम्' (ASS. 7. 7.) इति Sy.
१२. अन्त्रप्र० P., D. VM. explains अनश्वः and अनभीशुः together as अश्वप्रग्रहाभ्यां वर्जितः ॥ अनश्वो जातः वाहनाश्वनिरपेक्षः सम्पन्नः। तथानभीशुः प्रग्रहरहितः Sy.
१३. अश्विनोः सम्बन्धी युष्मद्दत्तः रथः Sy.
१४. जागतस्तुभ्यं यः P. जागतस्तुभ्यत्यः D.
१५. चक्रत्रययुक्तः सन् Sy.
१६. परिभ्रमति Sy.
१७. अन्तरिक्षम् Sy.
१८. It goes with रथः।
१९. प्रभूतम् Sy.
२०. रथनिर्माणाख्यं कर्म Sy.
२१. तन्द्वः P. महचंतन्द्वः D. युष्माकम् Sy.
२२. प्रवक्तृ प्रख्यापकम् Sy.
२३. य P., D. येन कर्मणा Sy.
२४. पुष्टां कुरुथ Sy.
२५. VM. ignores उक्थ्यः and ऋभवः ॥ उक्थ्यः स्तुत्यः Sy.

रथं ये चक्रुः सुवृतं सुचेतसोऽविह्वरन्तं मनसस्परि ध्यया ।
ताँ ऊ न्वस्य सवनस्य पीतय आ वो वाजा ऋभवो वेदयामसि ॥ २ ॥

रथं ये[1] । रथम् । ये । चक्रुः । सुवर्तनम्[2] । सुज्ञानाः[3] । भारमहत्त्वेऽप्यकुटिली-भवन्तम्[4] । मनसः । ध्यानेन[5] । परिः पञ्चम्यर्थं स्फुटीकरोति[6] । तान्[7] । क्षिप्रम्[8] । अस्य । सवनस्य[9] । पानाय[10] । आवेदयामः[11] पिबध्वमिति[12] । हे वाजेन, ऋभुणा च संयुक्ताः[13] !

तद्वो वाजा ऋभवः सुप्रवाचनं देवेषु विभ्वो अभवन्महित्वनम् ।
जिव्री यत्सन्ता पितरा सनाजुरा पुनर्युवाना चरथाय तक्षथ ॥ ३ ॥

तद्वः[14] । तत् । हे वाजाः[15] ! ऋभवः ! सुष्ठु प्रवचनीयम्[16] । देवेषु[17] । अभवत् । महत्वम्[18] । हे विभ्वः[19] ! जीर्णौ[20] । यत् । सन्तौ । पितरौ । दीर्घकालजीर्णौ[21] । पुनः । युवानौ[22] । चरणार्थम्[23] । कृतवन्तः[24] स्थ[25] ।

---

१. Omitted by M. ये ऋभवः Sy.
२. सुवर्तनचक्रम् Sy.
३. शोभनचित्ताः Sy.
४. भावत्वेऽपि P. अकुटिलम् Sy.
५. ध्यानेनाप्रयत्नेन Sy.
६. कुर्वरि M.
७. ०र्थः D.
८. एतम् Sy.
९. सोमम् Sy.
१०. पातुम् Sy.
११. देवतयाम P. आवेदयाम D.
१२. पिञ्चध्व० P.
१३. हे ऋभवः ! हे वाजाः ! Sy.
१४. VM. ignores उ and वः ॥ उशब्द एवार्थे । वः युष्मान् Sy.
१५. वाजा च P. वाजा चा D.
१६. प्रजनीयं P.
प्रवाच्यम् Sy.
१७. देवेषु मध्ये Sy.
१८. महत्त्वम् is suggested for महत्वम् ॥ माहात्म्यम् Sy.
१९. विभवः ! इतरापेक्षया परस्परं बहुवचनमित्युक्तम् Sy.
२०. वृद्धौ Sy.
२१. सदा जीर्णौ सन्तौ Sy.
२२. नित्यतरुणौ Sy.
२३. यथेच्छं सञ्चरणाय Sy.
२४. सम्पादितवन्तः Sy.
२५. VM. ignores वः ॥ वः युष्माकम् Sy.

एकं॒ वि च॑क्र चम॒सं च॒तुर्व॑यं॒ निश्चर्म॑णो॒ गाम॑रिणीत धी॒तिभिः॑ ।
अथा॑ दे॒वेष्व॑मृत॒त्वमा॑नश श्रु॒ष्टी वा॑जा ऋभव॒स्तद्व॑ उ॒क्थ्य॑म् ॥ ४ ॥

एकं[1] वि[2]। एकम्[3]। वि चक्र[4]। चमसम्[5]। चतुर्व्यूहम्[6]। चर्मणश्च[7]। गाम्[8]। निष्कृतवन्तः[9]। कर्मभिः। अथ[10]। देवेषु[11]। अमृतत्वम्। आनशिध्वे[12]। वाजाः! ऋभवः! तत्[13] वः[14]। क्षिप्रम्[15]। स्तोतव्यम्[16]।

ऋ॒भु॒तो र॒यिः प्र॑थ॒मश्र॑वस्तमो॒ वाज॑श्रुतासो॒ यमजी॑जन॒न्नरः॑ ।
वि॒भ्व॒त॒ष्टो वि॒दथे॑षु प्र॒वाच्यो॒ यं दे॑वा॒सोऽव॑था॒ स विच॑र्षणिः ॥ ५ ॥

ऋभुतः। ऋभुतो[17] लब्धम्। धनम्[18]। जनोऽतिशयेन प्रथमं[19] श्रूयते। तथा वाजेन श्रूयमाणा[20] ऋभवः। नेतारः[21]। यं[22] रयिम्। जनयन्ति[23]। स च तथा विभ्वयुक्तैः[24] कृतो रयिः। विदथेषु[25]। प्रवचनीयः[26]। यम्[27]। हे ऋभवः[28]! रक्षथ। सः[29]। विद्रष्टा भवति पुरुषः[30]।

---

१. न् D. एक न् P.
२. हे ऋभवः! Sy.
३. एकमेव सन्तम् Sy.
४. चक्रं D. व्यकुरुत Sy.
५. पानसाधनं चमसम् Sy.
६. वयाः शाखाः। चतुःशाखं चतुरवयवम् Sy.
७. चर्मणञ्च D.
८. नूतनां गाम् Sy.
९. समस्कुरुत। निरित्येष समित्येतस्य स्थाने Sy.
१०. ०भी रथं P.
अतः कारणात् Sy.
११. देवेषु मध्ये Sy.
१२. अन्नध्वे P. अनशिध्वे D.
प्राप्नुत Sy.
१३. तादृशम् Sy.
१४. व P., D. युष्माकं कर्म Sy.
१५. श्रुष्टी इति क्षिप्रनाम Ngh. 4. 3., N. 6. 13.
१६. स्तोताव्यं D. स्तुत्यं भवति Sy.
१७. ऋभूणां सकाशात् Sy.
१८. धनमस्माकं भवत्विति शेषः Sy.
१९. प्रथमं मुख्यमतिशयितं श्रवोऽन्नं यशो वा यस्य धनस्य तत् Sy.
२०. ०माना P. श्रूयामा D. वाजैरन्नैः सह विख्याताः Sy.
२१. नेतार ऋभवः Sy.
२२. Omitted by M.
२३. उत्पादितवन्तः Sy.
२४. ०क्तै P. विभ्वभिर्ऋभुभिस्तष्टः। तक्षणसम्पन्नश्चमसोऽश्विनो रथो वा Sy.
२५. वद० P. यज्ञेषु Sy.
२६. प्रकर्षेण स्तुत्यः Sy.
२७. ०नीयोऽयं M.
रथं चमसं वा Sy.
२८. हे देवासः! द्योतमाना! यूयम् Sy.
२९. Omitted by P.
३०. Omitted by P. विविधं द्रष्टा भवति। द्रष्टव्यो भवतीत्यर्थः Sy.

स वा॒ज्यर्वा॒ स ऋषि॑र्वच॒स्यया॒ स शूरो॒ अस्ता॒ पृत॑नासु दु॒ष्टरः॑ ।
स रा॒यस्पोषं॒ स सु॒वीर्यं॑ द॒धे॒ यं वाजो॒ विभ्वाँ॑ ऋ॒भवो॒ यमावि॑षुः ॥ ६ ॥

स वाज्यर्वा । सः । अश्वः[1] । गन्ता[2] । सः । ऋषिर्भवति[3] । स्तोत्रेण[4] । सः । शूरः[5] । इषूणामस्ता[6] । पृतनासु[7] । दुष्टरो[8] भवति । सः[9] । रायः । पोषम्[10] । सुवीर्यं[11] च । धत्ते । यम्[12] । वाजः । विभ्वा च । रक्षतः[13] । यं[14] च सर्वे । ऋभवः[15] ।

श्रेष्ठं॑ वः॒ पेशो॒ अधि॑ धायि द॒र्श॒तं स्तोमो॑ वाजा ऋभव॒स्तं जु॑जुष्टन ।
धीरा॑सो॒ हि ष्ठा क॒वयो॑ विप॒श्चित॒स्तान्व॑ ए॒ना ब्रह्म॒णा वे॑दयामसि ॥ ७ ॥

श्रेष्ठं वः । प्रशस्यतमम्[16] । दर्शनीयम्[17] । रूपम् । वो[18] शरीरेषु । अध्यधायि[19] । स्तोमश्चायं[20] युष्माकं क्रियते । तम्[21] । सेवध्वम्[22] । धृष्टाः[23] । हि । भवथ[24] यूयम् । क्रान्तप्रज्ञाः[25] । तान् । युष्मान्[26] । अनेन[27] । स्तोत्रेण[28] । प्रज्ञापयामः[29][30] ।

---

१. वेजनवान् बलवान् सन् Sy.
२. अरणकुशलो भवति Sy.
३. अतीन्द्रियज्ञानी सन् Sy.
४. स्तुत्या युक्तो भवति Sy.
५. विक्रान्तः सन् Sy.
६. क्षेप्ता शत्रूणां भवति Sy.
७. स्वयञ्च सङ्ग्रामेषु Sy.
८. नाभिभाव्यः Sy.
९. स एव Sy.
१०. पेष P. धनपुष्टिम् Sy.
११. सवी० P. सुवीरत्वम् Sy.
१२. यद् M. मनुष्यम् Sy.
१३. रक्षकः M. अरक्षन् । स एवमेवं भवतीति । अन्त्यस्य बहुवचनिर्देशस्त्रयाणामभ्युव्यवहारप्राचुर्याभिप्रायः Sy.
१४. यज्ञं P., D.
१५. ०वा P.
१६. प्रशस्यमन्द (तमं) M. अत्युत्कृष्टम् Sy.
१७. अत एव दर्शनीयम् Sy.
१८. व P. वः is suggested for वो ॥ युष्माकम् Sy.
१९. अधिनिहितम् Sy.
२०. अयं is omitted by P. स्तोत्रमस्मत्कृतमस्ति Sy.
२१. स्तोमं स्तोत्रम् Sy.
२२. सेवत्वं (ध्वं) M.
२३. ते यूयं धीरासो धीमन्तः प्रसिद्धाः Sy.
२४. भवत Sy.
२५. कान्ताः प्राज्ञाः M. कान्तप्रज्ञाः D. मेधाविनः Sy.
२६. युर्वान् M.
२७. एनेन Sy.
२८. मन्त्रेण शस्त्रात्मकेन Sy.
२९. अथवोक्तलक्षणा विपश्चितः स्तोतारो यान् स्तुवन्तीति शेषः । तान् ब्रह्मणा आ वेदयामसि प्रज्ञापयामः Sy.
३०. VM. ignores वाजाः । ऋभवः and विपश्चितः ॥ विपश्चितः ज्ञानवन्तः Sy.

युयमस्मभ्यं धिषणाभ्यस्परि विद्वांसो विश्वा नर्याणि भोजना ।
द्युमन्तं वाजं वृषशुष्ममुत्तममा नो रयिमृभवस्तक्षता वयः ॥ ८ ॥

यूयमस्मभ्यम् [1] यूयम्[2] । अस्मभ्यम्[2] । स्तोत्रेभ्यः[3] । अनन्तरम् । जानन्तः । विश्वानि[4] । नृहितानि[5] । भोजनानि[6], कुरुत[7] । दीप्तिमत्[8] । अन्नम्[9] । वृष्यमाणबलम्[10] । उत्तमम् । रयिं च[11] । अस्मभ्यम्[12] । तक्षत । आयुश्च[13] ।[14]

इह प्रजामिह रयिं रराणा इह श्रवो वीरवत्तक्षता नः ।
येन वयं चितयेमात्यन्यान्तं वाजं चित्रमृभवो ददा नः ॥ ९ ॥

इह प्रजाम् । रममाणा यूयम् । अस्मिन् यज्ञे । प्रजाम्[15] । रयिम्[16] । वीरवत्[17] । अन्नं च । कुरुत[18] । येनान्नेन[19] । वयम् । अन्यान्[20] । अपि[21] ज्ञायेमहि । तम् । वाजम्[22] । चायनीयम् । ऋभवः ! दत्त । नः[23] ।[24]

---

१. हे ऋभवः ! Sy.
२. The words यूयम् and अस्मभ्यम् are omitted by P., D.
३. स्तुतिभ्यो निमित्तभूताभ्यः । परीति पञ्चम्यर्थानुवादी । यद्वा अस्मन्मतिभ्यो-ऽधिकानि Sy.
४. सर्वाणि Sy.
५. नृभ्यो हितानि Sy.
६. भोग्यानि Sy.
७. सम्पादयत Sy.
८. दीप्तिमन्तं हिरण्यादिरूपम् Sy.
९. अन्नः D. बलवन्तम् Sy.
१०. वृष्यमाणाव॰ D. पुष्यमाण P. सेक्तॄणां बलवतां शोषकम् Sy.
११. P. and D. add उपायातास्मद्यज्ञं हे देवाः ! before वृष्यमाणबलम् । It has a striking resemblance to the commentary on RV. IV. 37. 1.
१२. अस्माकम् Sy.
१३. आयुषश्च M. अन्नं च Sy.
१४. VM. ignores आ and ऋभवः ।
१५. पुत्रपौत्रादिरूपाम् Sy.
१६. प्रजानुयं P. रयिं च तक्षत Sy.
१७. वीरैर्भृत्यादिभिरुपेतं तक्षत Sy.
१८. सम्पादयत Sy.
१९. वाजेन Sy.
२०. अस्मत्समानान् Sy.
२१. अनिज्ञा॰ P. अन्यानिज्ञा॰ D. अति is suggested for अपि ॥ अतिक्रम्य ज्ञायेमहि Sy.
२२. अन्नम् Sy.
२३. अस्माकम्, अस्मभ्यम् Sy.
२४. VM. explains इह and नः once only. Ms. D. puts the figure ॥ ३६ ॥ here to indicate the end of thirty-sixth hymn. No such number is given in P. and M.

## IV.37.

उप॑ नो वाजा अध्व॒रमृ॑भुक्षा॒ देवा॑ या॒त प॒थिभि॑र्देव॒यानैः॑ ।
यथा॑ य॒ज्ञं मनु॑षो वि॒क्ष्वा॒३॒॑सु द॑धि॒ध्वे र॑ण्वाः सु॒दिने॒ष्वह्ना॑म् ॥ १ ॥

उप[1] नः । उपायात[2] । अस्मभ्यम्[3] । हे देवाः[4] ! ऋभवः[5] ! पथिभिः[6] । देवयानैः[7] । यथा[8] । यज्ञम्[9] । मनोः[10] प्रजापतेः । स्वभूतास्वासु । प्रजासु[11] । धारयथ[12] । हे रमणीयाः[13] ! अह्नाम् । सुदिनत्वे[14] सति शोभनत्वं कर्माधिकरणत्वाद् एवमिमं च यज्ञं धारयथेति[15] ।

ते वो॑ हृ॒दे मन॑से सन्तु य॒ज्ञा जुष्टा॑सो अ॒द्य घृ॒तनि॑र्णिजो गुः ।
प्र वः॑ सु॒तासो॑ हरयन्त पू॒र्णाः क्रत्वे॒ दक्षा॑य हर्षयन्त पी॒ताः ॥ २ ॥

ते[16] वः । ते[17] । युष्माकम् । यज्ञाः[18] । मनसे[19] । हृदयाय[20] च प्रियाः । सन्तु[21] । पर्याप्ताः[22] । अद्य[23] । क्षरद्रूपाः[24] । ऋभव आगच्छन्तु[25] । प्रह्लियन्ते[26] । युष्मभ्यम्[27] । सोमाः[28] । पूर्णाः[29] । प्रज्ञानाय[30] ।

---

१. 'उप नो वाजाः' इत्यष्टर्चं पञ्चमं सूक्तं वामदेवस्यार्षमार्भवं त्रैष्टुभम् । पञ्चम्याद्याश्चतस्रोऽनुष्टुभः । तथा चानुक्रान्तम्—'उप नोऽष्टौ चतुरनुष्टुबन्तम्' (KSA. 23. 37. p. 18.) इति । व्यूढे दशरात्रे षष्ठेऽहनि वैश्वदेवशस्त्रे आद्याश्चतस्रः शस्याः । 'उप नो वाजा इति त्रयोदशार्भवं चतस्रश्च' (ASS. 8. 8.) इति हि सूत्रितम् Sy.

२. उपगच्छत Sy.

३. उपायाताद्यज्ञं P., D. अस्मद्यज्ञं is suggested for अस्मभ्यम् or VM. ignores अध्वरम् ॥ यागम् Sy.

४. Omitted by M.

५. ऋभवा D. ६. मार्गैः Sy.

७. देवैर्गन्तव्यैः Sy.

८. यथा M. येन प्रकारेण Sy.

९. यज्ञमस्मदीयम् Sy.

१०. मनोः सम्बन्धिनीषु Sy.

११. यजमानेषु मध्ये Sy.

१२. यथा येन प्रकारेण यज्ञमागत्य सुदिनत्वं कुरुथ तथा यज्ञमायातेति Sy.

१३. रमणीया ऋभवः Sy.

१४. सुदिनत्वनिमित्तेषु Sy.

१५. VM. ignores वाजाः ॥

१६. वं P., D. १७. एते Sy.

१८. यागसाधनाः सोमाः Sy.

१९. तत्प्रीतये Sy.

२०. युष्मद्हृदयाय Sy. २१. भवन्तु Sy.

२२. पर्याप्ताः सोमाः Sy.

२३. अस्मिन् यागदिने Sy.

२४. मिश्रणद्रव्येण दीप्तरूपाः Sy.

२५. ०न्त P., D. गच्छन्तु युष्मद्धृदयम् Sy.

२६. हरयन्त प्रह्लियन्ते । यद्वा हर्यतेः कान्तिकर्मण इदं रूपम् । प्रकर्षेण वो युष्मान् कामयन्ते Sy.

२७. युष्मदर्थम् Sy.

२८. अभिषुताः सोमाः Sy.

२९. चमसेषु पूर्णाः Sy.

३०. क्रतवे कर्मणे Sy.

बलाय[1] च[2]। पीताः। युष्मान् हर्षयन्ताम्[3]।

त्र्युदायं देवहितं यथा वः स्तोमो वाजा ऋभुक्षणो ददे वः।
जुह्वे मनुष्वदुपरासु विक्षु युष्मे सचा बृहद्दिवेषु सोमम् ॥ ३ ॥

त्र्युदायम्[4]। तृतीयसवने[5] उद्गतमन्त्रम्[6]। यथा। वः[7]। देवैर्निहितम्[8]। यथा च हे ऋभवः! स्तोमः[9]। दत्तस्तथाहम्[10]। जुह्वे[11]। युष्मासु[12]। सोमम्[13]। बृहद्दीप्तिषु[14]। सहायभूतः[15]। यथा मनुः[16]। उप्तासु[17]। प्रजासु[18] अन्नं[19] निहितवान् तद्वदिति[20]।

पीवोअश्वाः शुचद्रथा हि भूतायःशिप्रा वाजिनः सुनिष्काः।
इन्द्रस्य सूनो शवसो नपातोऽनु वश्चेत्यग्रियं मदाय ॥ ४ ॥

पीवोअश्वाः। मांसलाश्वाः[21]। दीप्तरथाः। हि। भवत। हिरण्मयशिरस्त्राणाः[22]। हे वाजिनः[23]! शोभननिष्काः[24], निष्कः[25] कण्ठाभरणम्। इन्द्रस्य। सूनो[26]! शवसः[27], नपातः[28]! इति

---

१. उत्साहाय Sy.
२. Omitted by M.
३. ०यन्त M. हर्षयन्तु Sy.
४. Omitted by P., D.
५. ०ये स० M. त्र्युदयं सवनत्रयगमनोपेतम् Sy.
६. उद्गमनतां P. उद्गतमनां D.
७. युष्मान् Sy.
८. सोमाख्यमन्नं देवेभ्यो हितं देवैर्वा विहितम्। तृतीयसवनस्थमित्यर्थः Sy.
९. स्तोत्रम् Sy.
१०. दः M. धारयति Sy.
११. तथाह आह्वे P. तथाहर्जु० M. जुहोमि Sy.
१२. युष्मदर्थम् Sy.
१३. सोम P., D.
१४. बृहद्दिन्दी० P. बृहद्दवी० D. प्रभूतदीप्तिषु देवेषु मध्ये Sy.
१५. स या दत्तः P. सह अनेकग्रहेषु प्रस्थितम् Sy.
१६. मनुरिव Sy.
१७. उप देवयजनसमीपे रमन्त इत्युपराः। तासु Sy.
१८. मरुत्वाप्रच्छ्रासु P. मरुप्ता प्रच्छ्रासु D.
१९. स्वन्नं P., D.
२०. VM. ignores वाजाः ॥
२१. ०लाश्चाः D. ०लाश्चाश्वाः P. पीवानोऽश्वा येषां ते तादृशाः Sy.
२२. अयोवत्सारभूतशिप्राः Sy. शिप्रे हनू नासिके वा N. 6. 17.
२३. ऋभवः! Sy.
२४. ०ष्कः P. शोभनधनाश्च Sy.
२५. Omitted by M.
२६. हे इन्द्रस्य सूनो! सूनवः पुत्रवद्रक्षणीयाः! Sy.
२७. बलसः P., D.
२८. हे बलस्य पुत्राः! बलिनः! Sy.

बलवत्तया सम्बोधयति गणापेक्षयैकवचनम्[१]। युष्माकम्[२]। मुख्यं[३] हविः[४]। अन्वज्ञायि देवैः। मदाय।

**ऋभुमृ॑भुक्षणो र॒यिं वाजे॑ वा॒जिन्त॑मं॒ युज॑म् ।**
**इन्द्र॑स्वन्तं हवामहे सदा॒सात॑ममु॒श्विन॑म् ॥ ५ ॥**

**ऋभुम्**। दीप्तम्[५]। हे ऋभवः ! धनम्[६]। हवामहे[७]। वाजे[८] च सौधन्वने[९]। अतिशयेन [१०]चान्नवन्तम्। सहायभूतम्[११]। इन्द्रेण[१२] सहितं हवामहे। सर्वदातिशयेन दीयमानम्[१३] ऋभुभिः। अश्ववन्तम्[१४]।

**सेदृ॑भवो॒ यमव॑थ यू॒यमिन्द्र॑श्च॒ मर्त्य॑म् ।**
**स धी॒भिर॑स्तु॒ सनि॑ता मे॒धसा॑ता॒ सो अर्व॑ता ॥ ६ ॥**

**सेदृभवः**[१५]। सः। एव भवति[१६]। हे ऋभवः ! यम्। रक्षथ। मर्त्यम्। यूयम्। इन्द्रः। च। सः[१७]। कर्मभिः। अस्तु[१८]। सम्भक्ता शत्रूणां मर्त्यः। हविषो दाता[१९]। अश्वेन च[२०]।

**वि नो॑ वाजा ऋभुक्षणः प॒थश्चि॑तन॒ यष्ट॑वे ।**
**अ॒स्मभ्यं॑ सूरयः स्तु॒ता विश्वा॒ आशा॑स्तरी॒षणि॑ ॥ ७ ॥**

**वि नः**। हे ऋभवः ! अस्माकम्। यागाय[२१]। मार्गान्। विचिनुत[२२]। अस्मभ्यम्[२३]।

---

१. गणापेक्षयैकवचनम् goes with (इन्द्रस्य) सूनो !
२. युष्मभ्यम् Sy.
३. देवेषु अप्रियम् अग्रे भवं तृतीयसवनम् Sy.
४. अविः P., D.
५. M. adds ऋभुं before दीप्तम् ॥ उरुभासमानम् Sy.
६. धनरूपम् । तद्धेतुभूतत्वात्ताच्छब्द्यम् Sy.
७. आह्वयामि Sy.
८. सङ्ग्रामे Sy.
९. धन्वने P.
१०. मान्न० P. अत्यन्तबलवन्तम् Sy.
११. परस्परयोगोपेतम् Sy.
१२. इन्द्रवन्तमिन्द्रियवन्तम् Sy.
१३. वय० P., D.
दातृतमम् Sy.
१४. अश्ववन्तं भवतां गणम् Sy.
१५. व D.
१६. भवतु । नान्यः श्रेष्ठो भवत्वित्यर्थः Sy.
१७. Omitted by P.
१८. भवतु Sy.
१९. मेधसातौ यज्ञे Sy.
२०. अश्वो म P. अश्वगवताश्वेन युक्तो भवतु Sy.
२१. योग M. यष्टुं यज्ञमार्गान् Sy.
२२. विचेतयत । प्रज्ञापयतेत्यर्थः Sy.
२३. अस्माकं P.

प्राज्ञ[1] ! ऋभवः ! स्तुताः[2] । सर्वाः । आशाः[3] । तरणनिमित्तं कुर्वन्तु[4] ।

तं नो॑ वाजा[5] ऋभुक्षण इन्द्र॒ नास॑त्या र॒यिम् ।
सम॑श्वं चर्ष॒णिभ्य॒ आ पु॒रु श॑स्त म॒घत्त॑ये ॥ ८ ॥

तं नः[6] । हे वाजादयः[7] ! अस्मभ्यम् । तम् । रयिम्[8] । सम्प्रयच्छत । तथा धनदानाय ।
आभ्यः[9] प्रजाभ्यः[10] । यूयमश्वम् । संशंसत[11] । अत्यन्तम्[12] ।[13]

IV.38.

उ॒तो हि वां॑ दा॒त्रा सन्ति॒ पूर्वा॒ या पू॒रुभ्य॑स्त्र॒सद॑स्युर्नितो॒शे ।
क्षे॒त्रा॒सां द॑दथुरुर्व॒रा॒सां घ॒नं दस्यु॑भ्यो अ॒भिभू॑तिमु॒ग्रम् ॥ १ ॥

उतो[14] ।[15] अपि[16] च द्यावापृथिवी[17] ! युवयोः[18] । दानानि[19] । सन्ति । पूर्वाणि[20] । यानि[21] । लेभे[22]

---

१. प्राज्ञाः is suggested for प्राज्ञ ॥ हे मेधाविनः ! यूयम् Sy.

२. स्तुताः सन्तः Sy.

३. दिशः Sy.

४. तरीतुं सामर्थ्यं वितरतेति शेषः Sy.

५. VM. ignores वाजाः ।

६. अनया स्तुतिमुपसंहृत्याभिमतमाशास्ते Sy.

७. आदि refers to ऋभुक्षणः । इन्द्र and नासत्या ॥ हे वाजाः ! हे ऋभवः ! हे इन्द्र ! हे अश्विनौ ! ते यूयम् Sy.

८. धनम् Sy.

९. ०भ्यां P.

१०. मनुष्येभ्यः स्तोतृभ्यः Sy.

११. सम्यगाशासनं कुरुत Sy.

१२. सत्यान्तं P. सन्तात्यन्तं D. प्रभूतम् Sy.

१३. VM. ignores आ ॥ Ms. D. puts the figure ॥३७॥ here to indicate the end of thirty-seventh hymn. No such number is given in P. and M.

१४. 'उतो हि वाम्' इति दशर्चं षष्ठं सूक्तम् । वामदेव ऋषिः । त्रिष्टुप् छन्दः । दधिक्रा देवता । आद्या द्यावापृथिव्या । अत्रानुक्रमणिका 'उतो हि दश दाधिक्रं हि द्यावापृथिव्याद्या' (KSA. 23. 38. p. 18) इति । विनियोगो लैङ्गिकः Sy.

१५. उतो हि M.

१६. अव D. उतो इति पूरणः Sy.

१७. अस्या द्यावापृथिव्यत्वादत्र तद्वाचकशब्दाभावेऽपि ते एव सम्बोढव्ये । हे द्यावापृथिव्यौ ! Sy.

१८. युवाभ्यां सकाशात् Sy.

१९. दानकर्त्रा पौरुकुत्सेन त्रसदस्युना लब्धानि Sy.

२०. सर्वाणि P., D. पुरातनानि पूरकाणि वा धनानि Sy.

२१. यानि धनानि Sy.

२२. न्यतोशत दत्तवान् Sy.

दुर्भिक्षे । मनुष्येभ्यः[1] । त्रसदस्युः[2] निर्बाधायाम् । तस्मै युवां क्षेत्रदानम्[3] । ददथुः[4] । एवमुर्वरादानं[5] च । तथायुधम्[6] । शत्रुभ्यः[7] । अभिभावुकम्[8] । उद्गूर्णम्[9, 10] ।

**उत वाजिनं पुरुनिष्षिध्वानं दधिक्रामु ददथुर्विश्वकृष्टिम् ।**
**ऋजिप्यं श्येनं प्रुषितप्सुमाशुं चर्कृत्यमर्यो नृपतिं न शूरम् ॥ २ ॥**

उत वाजिनम् । अपि च । वाजिनम्[11] । बहूनां निषेद्धारम्[12] । यः[13] पदानि दधत्क्रमति[14] तम् । ददथुः[15] । विश्वस्य कर्मणः कर्तारम्[16] । ऋजुगामिनम्[17] । गन्तारम्[18] । पृषद्वर्णम्[19] । व्यापकम्[20] । पुनः पुनः प्रयोज्यम्[21] । राजा[22] । यथा । शूरम् । नृणां पतिं[23] राष्ट्राय प्रयच्छति[24] ।

---

१. अर्थिभ्यो मनुष्येभ्यः Sy.

२. ०स्युं P. ०भ्य सूसद० D. राजा Sy.

३. क्षेत्राणि सर्वा भूमीः सनोतीति क्षेत्रसा अश्वस्तम् Sy.

४. दधतुः० D.

५. उवरा० P. उर्वरा सर्वसस्याढ्या भूः, तां सनोतीत्युर्वरासाः पुत्रस्तं ददथुः Sy.

६. हननार्हमायुधम् Sy.

७. दस्यूनां वधार्थं च ददथुः Sy.

८. अभिभवितारम् Sy.

९. उद्गूर्णबलम् । यद्वा उत्तरार्धमेकं वाक्यम् । दातव्यानि धनान्युक्तलक्षणं पुत्रं च ददथुः । दत्तवत्यौ स्थः । तानि मह्यमपि दद्याथामित्यर्थः Sy.

१०. VM. ignores हि ।

११. गमनवन्तम् । अश्वरूपं वा देवम् । अग्नेरश्वरूपस्यैव दधिक्राख्यत्वात् । अग्नेस्तद्रूपत्वं ब्राह्मणे समाम्नातम्—'तानग्निरश्वो भूत्वाभ्यद्रवत्' इति Sy.

१२. निष्षेद्धारं D. पुरूणां बहूनां शत्रूणां निषेद्धारम् Sy.

१३. या P., D.

१४. ०त्क्रामयि M. ०क्रामति is suggested for क्रमति ॥ दधदन्यं धारयन् क्रामतीति दधिक्राः, तमेतन्नामकं देवम् Sy.

१५. धारयतः Sy.

१६. विश्वाः कृष्टयो रक्षणीयाः सेवका वा मनुष्या यस्य तम् Sy.

१७. ऋज्वाप्नोति गच्छतीत्यृजिप्यस्तम् Sy.

१८. शंसनीयगमनम् Sy.

१९. पृषद्वर्णं M. वृषद्वर्णम् D. दीप्तरूपम् Sy.

२०. व्याप्तं शीघ्रगमनं वा Sy.

२१. कर्तनशीलम् Sy.

२२. अरेः Sy.

२३. पति P. राजानमिव स्थितं देवं द्यावापृथिव्यौ Sy.

२४. VM. ignores उ ॥ उः पूरणः Sy.

यं सी॒मनु॑ प्र॒वते॑व॒ द्रव॑न्तं॒ विश्वः॑ पू॒रुर्मद॑ति॒ हर्ष॑माणः ।
प॒ड्भिर्गृध्य॑न्तं मेध॒युं न शूरं॑ रथ॒तुरं॒ वात॑मिव॒ ध्रज॑न्तम् ॥ ३ ॥

यं सीम्[1] । यम्[2] । अनुवदति[3] । प्रवणेनोदकमिव[4] । द्रवन्तम्[5] । सर्वः[6] । हृष्यन्[7] । मनुष्यः । पादैः । शत्रूनभिकाङ्क्षन्तम्[8] । सङ्ग्रामेच्छुम्[9] । इव । शूरम् । रथं त्वरयन्तम्[10] । वातमिव[11] । गच्छन्तम्[12] ।[13]

यः स्मा॑रु॒न्धा॒नो गध्या॑ स॒मत्सु॒ सनु॑तर॒श्चर॑ति॒ गोषु॒ गच्छ॑न् ।
आ॒विर्ऋ॑जीको वि॒दथा॑ नि॒चिक्य॑त्ति॒रो अ॑र॒तिं पर्याप॑ आ॒योः ॥ ४ ॥

यः स्म[14] । यः[15] । खलु । सङ्ग्रामेषु । सर्वतो निरुन्धन्[16] । अभिकाङ्क्ष्याणि[17] । सम्भक्तृतरः । चरति[18] । गोनिमित्तम्[19] । गच्छन् । आविर्भूताकुटिलगतिः[20] । ज्ञातव्यानि[21] । नियमेन । जानन्[22] । मनुष्यारतिम्[23] । परितिरस्करोति गच्छन् ।[24]

---

१. यं सीमनु M. यसि P.
२. दधिक्राम् Sy.
३. स्तौति तं देवं द्यावापृथिव्यौ ददथुरिति सम्बन्धः Sy.
४. स देवो विशेष्यते । प्रवता प्रवणवता निम्नेन मार्गेणोदकमिवानुक्रमेण Sy.
५. प्रवणोनोदक व द्रवन्तं P., D. गच्छन्तम् Sy. ६. सर्वोऽपि Sy.
७. हर्षयन् वा Sy.
८. अभिकाङ्क्षन्तं द्विषो लङ्घितुम् Sy.
९. तत्र दृष्टान्तः । सङ्ग्रामेच्छुं शूरमिव । यद्वा यज्ञकमणेच्छुमध्वर्य्वादिकमिव Sy.
१०. तरय० P. तरयन्त D. रथेन गच्छन्तम् Sy.
११. ह्वात० D. वायुमिव Sy.
१२. शीघ्रगम् । उक्तविशेषणविशिष्टानुदकशूरवायून् यथा सर्वो जनः स्तौति तथा यं देवं स्तौति तं ददथुरित्यर्थः Sy.
१३. VM. ignores सीम् ॥ सीं सर्वतः Sy. १४. य P., D.
१५. य P. देवः Sy. १६. निरोधयन् Sy.
१७. गध्यानि मिश्रयितव्यानि फलानि Sy. गध्यतिर्मिश्रीभावकर्मा N. 5. 15.
१८. ०न्ति D. परि सर्वतः Sy.
१९. सर्वासु दिक्षु गोषु वा निमित्तभूतेषु Sy. तिरः चरति तिरस्करोति Sy.
२०. ०भूतः कुटिल० P. भूताकुटिलगति D. आविर्भूतसाधनः, आविर्भूतमुष्को वा Sy.
२१. जात० M. विदथानि ज्ञातव्यानि Sy.
२२. निचिकयत् पश्यतिकर्मैतत् । जानन् Sy.
२३. VM. seems to explain आयोः and अरतिम् together as मनुष्यारतिम् ॥ अरतिम् अमरणं दुःखमभिगन्तारमरिं वा । आयोः मनुष्यस्य यजमानस्य Sy. २४. VM. ignores आपः ॥ व्याप्तस्य स्तोतुः Sy. VM. explains चरति separately from परि and तिरः but Sy. construes परि and तिरः with चरति ।

उत स्मैनं वस्त्रमथिं न तायुमनु क्रोशन्ति क्षितयो भरेषु ।
नीचायमानं जसुरिं न श्येनं श्रवश्चाच्छा पशुमच्च यूथम् ॥ ५ ॥

उत स्मैनम् । अपि[1] च । स्म[2] । एनम्[3] । वस्त्रमाथिनम्[4] । इव । स्तेनम्[5] । अनुक्रोशन्ति[6] । क्षितयः[7] । सङ्ग्रामेषु[8] । नीचैः[9] । अयमानम्[10] । क्षुधा[11] हिंसितम् । इव । श्येनम्[12] । धनम्[13] । पशुमत्[14] ।

---

१. पूर्वमपेक्षया चैतदुच्यते । अपि पूर्वस्यामृचि यदुक्तमप्येतदन्यत् किमुच्यते ? SKN.

२. खलु Sy. स्मेति पदपूरणः SKN.

३. The words अपि च । स्म । एनम् । are omitted by P., D. दधिक्राम् Sy.
अधिकृतत्वात् सूक्तस्य दधिक्राम् SKN. एनमिन्द्रम् Dur.

४. वस्त्रमाथिनमिव वस्त्रापहारिणमिव । . . . वस्त्रं वस्तेराच्छादनार्थस्य । आच्छाद्यते हि तत् SKN. कथं पुनरभिक्रन्दति ? . . . वस्त्रापहर्तारमिव Dur.

५. तस्करमिव, तं दृष्ट्वा Sy. तायुः स्तेनः । संस्त्यानसंहतं पिण्डीभूतमस्मिन् पापकमिति नैरुक्ताः । तस्यतेर्वा स्यादपक्षयार्थस्य । उपक्षीणो ह्यसाविह लोके । आयुषा सदा राज्ञो मारयिष्यमाणत्वात् परलोकेऽपि धर्मेणाधर्मकारित्वात् SKN. यथा केचिज्जनाः कञ्चिद् वस्त्रापहर्तारं तायुं दृष्ट्वा कञ्चिदन्यमात्मत्राणार्थमभिक्रन्देयुः Dur.

६. यथानुक्रोशन्ति तद्वद्वैरिणोऽनुक्रोशन्ति Sy. अयमागतोऽयमागतोऽयमागतोऽयमित्यनुक्रोशन्ति प्रतियोद्धुमशक्नुवन्तः SKN. एवमेतमिन्द्रमभिक्रन्दन्ति सङ्ग्रामेषु परैरप्यर्द्यमानास्त्राणार्थमात्मनः Dur.

७. तं दृष्ट्वा मनुष्याः Sy. मनुष्याः शत्रुभताः SKN. मनुष्याः Dur.

८. भर इति निर्विवक्षयोपन्यासः । भरतेर्वा । ह्रियन्ते हि तदर्थं योधानामायूंषि धनानि च SKN. क्व ? . . . सङ्ग्रामेषु Dur.

९. निचैः P. शत्रूणां वञ्चनार्थं नीचैर्गच्छन्तम् । . . . नीचैर्निचितमधश्चितम् । SKN. अपि चैनं तायुम् . . . नीचैर्गच्छन्तम् Dur.

१०. गच्छन्तम् Sy.

११. ०धां D. क्षुधितम् Sy. बद्धस्ताडितो वाहनं वेगश्रान्तो जसुरिरुच्यते । श्रान्तमिव SKN. बद्धं स्नायुतन्तुना Dur.

१२. श्येनं पक्षिणम् । तं यथा दृष्ट्वा पक्षिणः पलायन्ते तद्वत् Sy. श्येनः शंसनीयं गच्छति । उच्चैर्दूरं च गमनात् । प्रशंसायां च SKN. य एव याजिक इति प्रसिद्धो राज्ञाम्, स हि बद्धत्वादुत्पतितुमत्यर्थं न शक्नोति । नीचैरेव गच्छति । गत्वा च शशकादीनि हिनस्ति सत्त्वानि । स यथा जनैरभिक्रन्द्यते तथा चैनमभिक्रन्दन्ति Dur.

१३. अन्नं कीर्तिं वा Sy. किमर्थं गच्छन्तम् ? . . . श्रवो यशो धनं वा . . . प्रशंसाहेतुत्वाद् यशः प्रशंसेत्युक्तम् SKN. आह कमर्थमभिसन्धाय ? इत्युच्यते . . . कीर्तिं चाभिसन्धाय । कथं नाम श्रूयेमहि प्रशस्येमहि जितमेभिरित्येतमर्थमभिसन्धाय Dur.

१४. पशुभिश्चावयवभूतैर्बन्धुभिस्तद्वत् SKN. अनेकपशुजातिसंयुक्तम् Dur.

यूथम् । च । प्रति ।

उत स्मा॑सु प्रथ॒मः स॑रि॒ष्यन्नि वे॑वेति॒ श्रेणि॑भी॒ रथा॑नाम् ।
स्र॒जं॑ कृण्वा॒नो अन्यो॒ न शुभ्वा॑ रे॒णुं रेरि॑हत्कि॒रणं॑ ददश्वान् ॥ ६ ॥

उत स्म । अपि चा । स्म । आसु सेनासु । अग्रतः । सरिष्यन् । रथानाम् । सङ्घैः सह । न्यङ् गच्छति । पार्श्वयोर्मनुष्याणां श्रेणिम् । कुर्वन् । राजा । इव । शोभनः । सङ्ग्रामोत्थं रेणुम् । लिहन् विशन् । दीप्तिम् । प्रयच्छन् ।

---

१. यूथतं P. 'यूथं यौतेः, समायुतं भवति' समायुतं सम्मिश्रं स्त्रीभिः पुम्भिर्बालैर्वृद्धैः पशुभिः SKN. पशुयूथमभिसन्धायैतदस्माकं स्यादित्येवमभिक्रन्दतीत्येष समस्तोऽर्थः Dur.

२. अभिलक्ष्य गच्छन्तमेनमनुक्रोशन्तीति सम्बन्धः Sy. तच्च अच्छ आप्तुम् । . . . भाष्ये तु—अच्छशब्दोऽभेः स्थाने । अत्रोपसर्गश्रुतेः क्रियापदमध्याहार्यम् । अभिसन्धायेति SKN.

३. अपि स्मैनं वस्त्रमथिमिव वस्त्रमाथिनम् । वस्त्रं वस्तेः । तायुरिति स्तेननाम । संस्त्यानमस्मिन्पापकमिति नैरुक्ताः । तस्यतेर्वा स्यात् । अनुक्रोशन्ति क्षितयः सङ्ग्रामेषु । भर इति सङ्ग्रामनाम । भरतेर्वा । हरतेर्वा । नीचायमानं नीचैरयमानम् । नीचैर्निचितं भवति । उच्चैरुच्चितं भवति । जस्तमिव श्येनम् । श्येनः शंसनीयं गच्छति 'श्रवश्चाच्छां पशुमच्चं यूथम्' श्रवश्चापि पशुमच्च यूथम् । प्रशंसां च यूथं च । धनं च यूथं चेति वा । यूथं यौतेः । समायुतं भवति N. 4. 24. SKN. II. 266.

४. च is suggested for चा ।

५. खलु Sy.　　६. असुरसेनासु Sy.

७. प्रथमः प्रतमः उत्कृष्टतमो मुख्यः सन् Sy.　　८. सर्तुमिच्छन् Sy.

९. सङ्घे P., D. राजिभिर्युक्तः सन् Sy.

१०. न्यन्द D. स्यङ् M. नितरां गच्छति । इतस्ततो धावति Sy.

११. ०र्णी P. क इवेति ? उच्यते, स्रजं सृज्यत उत्पाद्यते रूपमनयेति स्रगलङ्कृतिस्ताम् Sy.　　१२. कुर्वाणः Sy.

१३. जनेभ्यो हितोऽश्व इव Sy.

१४. शोभन P., D. RV. reads शुभ्वा but Sy. takes it as सुभ्वा and explains it as सुष्ठु भवतीति सुभ्वा शोभमानः ।

१५. संग्रामार्त्थं P.

१६. करणं M. रेणुं स्वपादघातजनितम् Sy.

१७. भृशं लेढि Sy.

१८. आस्यगतं खलीनम् Sy.

१९. प्रच्छन् P. दधान् Sy.

उत स्य वाजी सहुरिर्ऋतावा शुश्रूषमाणस्तन्वा समर्ये ।
तुरं यतीषु तुरयन्नृजिप्योऽधि भ्रुवोः किरते रेणुमृञ्जन् ॥ ७ ॥

उत स्य[१] । अपि च । सः[२] । वाजी[३] । सहनवान्[४] । सत्यकर्मा[५] । मनुष्यान् चरेण[६] । शुश्रूषमाणः[७] । तूर्णम्[८] । गच्छन्तीषु[९] सेनासु । त्वरयन् । ऋजुगामी । मनुष्यान्[१०] भ्रुवोः । अधि[११] । रेणुम्[१२] । उत्किरति[१३] शत्रून् । प्रसाधयन्[१४][१५] ।

उत स्मास्य तन्यतोरिव द्योर्ऋघायतो अभियुजो भयन्ते ।
यदा सहस्रमभि षीमयोधीद्दुर्वर्तुः स्मा भवति भीम ऋञ्जन् ॥ ८ ॥

उत स्म[१६] । अपि च । अस्य[१७] । अशनेरिव[१८] । दीप्तस्य[१९] । हिंसतः । अभियोक्तुः[२०] । बिभ्यति[२१] । यदा । सहस्रं भटानाम् । सर्वतः । अयोधीः[२२] । दुर्वारोऽयम् । भवति । तदा भीमः[२३] । प्रसाधयन्[२४][२५] ।

---

१. स्यं D.

२. उक्तलक्षणः Sy.

३. वेजनवान् गमनवान् Sy.

४. सहनशीलः शत्रूणाम् Sy.

५. अन्नवान् Sy.

६. VM. has used the word चर in the sense of 'moving, galloping'. तन्वा स्वावयवेन खुरादिना Sy.

७. ०माणं D., M. स्वतनुं शुश्रूषमाणः Sy.

८. ०माणानूर्णा P., D.

९. तुरं यतीषु त्वरगामिनीष्वसुरसेनासु Sy.

१०. ०ष्यां D.

११. उपरि Sy.

१२. धूलिम् Sy.

१३. तमेव रेणुं विक्षिपति Sy.

१४. प्र is omitted by M.

१५. VM. ignores समर्ये ॥ समर्ये समरणे Sy.

१६. P. and D. add अस्य after स्म ।

१७. अस्माद्दधिक्रावाख्याद्देवात् Sy.

१८. अस्यापिशास्याशनेरिव M. शब्दयितु-रशनेरिव Sy.

१९. दीप्यमानात् Sy.

२०. अभियोक्तारोऽसुराः Sy.

२१. ०योक्तुं . . . ह्यति M.

२२. ०धि P. ०धी D. The reading of RV. is अयोधीत् and अयुद्ध is suggested for अयोधीः ॥ सम्प्रहरेत् Sy.

२३. मभीम P. भयहेतुः Sy.

२४. आत्मानं प्रसाधयन् Sy.

२५. VM. ignores स्म । (twice) and अभि ॥ स्म खलु Sy.

उत स्मास्य पनयन्ति जना जूतिं कृष्टिप्रो अभिभूतिमाशोः ।
उतैनमाहुः समिथे वियन्तः परा दधिक्रा असरत्सहस्रैः ॥ ९ ॥

उत स्मास्य[1]। अपि च । अस्य[2]। स्तुवन्ति । जनाः । वेगम्[3]। अभिभावुकम्[4]। मनुष्याणां पूरयितुः[5]। अश्नुवानस्य[6]। अपि च । एनम् । आहुः सङ्ग्रामे । गच्छन्तः[7]। परासरति[8] परावतो[9] देशान् । जनसहस्रैः[10]। अश्वोऽयमिति[11][12]।

आ दधिक्राः शवसा पञ्च कृष्टीः सूर्यइव ज्योतिषापस्ततान ।
सहस्रसाः शतसा वाज्यर्वा पृणक्तु मध्वा समिमा वचांसि ॥१०॥

[13]आ दधिक्राः । आ तनोति[14]। अश्वः[15]। बलेन[16]। सूर्य[17] इव । तेजसा[18]। अपः[19]।

---

१. स्मस्य D.

२. दधिक्राव्णः Sy.

३. पराभिभूतिर्व्वेत्युभयं वा Sy.

४. ०भावकं P., D. अभिभवित्रीम् Sy.

५. कीदृशस्य ? कृष्टयो मनुष्यास्तेषां पूरकस्य Sy.

६. M. adds च after अश्नुवानस्य ॥ व्याप्तस्य वेगवतो वा Sy.

७. ०च्छतिर्व P., D. विविधं गच्छन्तो जनाः Sy.

८. अस्मान् विहायान्यान् हन्तुं गत इत्याहुः। यद्वा, एनमेवमाहुः, वियन्तः शत्रवः परा भवन्तीति शेषः। दधिक्राः सहस्रैरसरत् गच्छतीति Sy.

९. पराभवतो M.

१०. अनुचरैः परिवृतः Sy.

११. अयं दधिक्राः देवः Sy.

१२. VM. ignores स्म ॥ खलु Sy.

१३. पवित्रेष्टौ 'आ दधिक्राः' इति दधिक्राव्णो याज्या । तथा च सूत्रितम् 'दधिक्राव्णो अकारिषमादधिक्राः शवसा पञ्च कृष्टीः' (ASS. 2. 12.) इति Sy.

१४. आकारस्य ततानेत्यनेन सम्बन्धः ।... तनोति SKN. सर्वतस्तनोति Dur. सुखवतीः करोति । छान्दसो लिट् BB.

१५. यो दधिक्राः देवः Sy. मध्यमस्थानः SKN. कोऽसाविति ? दधिक्राः Dur. दधीनि क्रामतीति ... ईदृशोऽग्निः BB.

१६. स्वसामर्थ्यातिशयलक्षणेन SKN. अन्नवत्त्वेन बलवत्त्वेन वा BB.

१७. यथा सूर्यः SKN.

१८. तेजसा यथा जगदावृणोति तद्वत् Sy. द्वितीयार्थे तृतीया ।...स्वज्योतिः सर्वत्रातनुयात् तद्वत् SKN. दीप्त्या BB.

१९. ०सा आपः P., D. उदकानि Sy. किम् ? वृष्टिलक्षणा अपः SKN. किमातनोति ? अपः Dur. कर्माणि प्रजानामाततान व्यक्तीचकार । अप एव वा ज्योतिषा दीप्त्या ततान BB.

पञ्च । जनान् । शतसहस्रयोर्दाता । बलवान् । गन्ता । अस्माकमिमानि । स्तोत्राणि । मधुना । सम्पर्चयतु ।

---

१. ०ना P., D. देवमनुष्यासुररक्षःपितृसंज्ञकान् निषादपञ्चमान् चतुरो वर्णान् वा Sy. निषादपञ्चमा मनुष्यजातीः प्रतीति शेषः SKN. मनुष्यजातानि प्रति Dur. मनुष्यांश्चतुरो वर्णान् निषादपञ्चमान् BB.

२. शतानां सहस्राणां च दाता Sy. सनो विट् आत्वे च रूपम् । सहस्रादिसङ्ख्यानां मेघानां सम्भक्ता SKN. बहूनां बहुतराणां चोदकानां सम्भक्ता Dur. बहुतरस्य बहुतमस्य प्रधानस्य संविभक्ता दाता वा भक्तेभ्यस्सहस्रं शतं वा सनोति ददातीति तेनैव विट् BB.

३. वेजनवान् Sy. हविर्लक्षणेनोदकजन्येन वाजेन तद्वान् । वेजनवान्वा । वाय्वात्मना चलनस्वभावकत्वात् SKN. वेगवान्, अन्नवान् वा BB.

४. अरणकुशलः स देवः Sy. ईरणवान् । वृष्टिलक्षणस्योदकस्येरणेन तद्वान् गमयिता प्रेरयितेत्यर्थः SKN. उदकेरणक्रियायोगी Dur. अरणशीलः ।... एव महाभागोऽग्निः BB.

५. उक्तानि Sy. य एवमादिगुणयुक्तो दधिक्राः, सोऽस्माकम् Dur. अस्मदीयानि Dur.

६. स्तुतिवचांसि Sy. स्तुतिलक्षणानि वचांसि SKN. स्तुतिवाक्यानि Dur.

७. ०नं P. मधुरेण फलेन Sy. मधुनोदकेन । ...मधु कस्मात् ? उच्यते, मेघोदरवर्तिसलिलं मध्वभिप्रेतम् । तच्च पुनर्विद्युदात्मना दह्यमानस्वरसवर्णेन तद्गतेनैव वायुना ध्मायमानं धमति । अतो धात्वर्थसम्बन्धासम्भवाद् धमतेराद्यन्तविपरीतस्येत्याह । नैरुक्तधातुर्वा धमतिर्गतिकर्मा । अन्तर्णीतण्यर्थो निष्कालने द्रष्टव्यः । निर्धाम्यते हि तन् मेघात् निष्काल्यत इत्यर्थः SKN. उदकेन Dur.

८. ०यतः P., D. संयोजयतु Sy. उपरिष्ठस्य समः पृणक्तु इत्येतेन सम्बन्धः । ...मिश्रयतु ।...स्तुवद्भ्योऽस्मभ्यमुदकं ददात्वित्यर्थः SKN. शवसा रसेन...संसृजतु । ततो मधुराणि शवसा सुखानि स्वयमेव श्रोष्यतीति भावः । अस्माकं श्रोतव्यानि वचनानि श्रुत्वा वचनार्थान् करोतु । अयञ्चाभिशंसनादस्मान् मुञ्चत्वित्याशास्महे BB.

९. आतनोति दधिक्राः । [शवसा] बलेनापः सूर्य इव ज्योतिषा पञ्च मनुष्यजातानि । सहस्रसाः शतसाः । वाजी वेजनवान् । अर्वा ईरणवान् । सम्पृणक्तु नो मधुनोदकेन वचनानीमानीति । मधु धमतेर्विपरीतस्य N. 10. 31.; SKN. IV. 38. This stanza=TS. 1. 5. 11. 4. Ms. D. puts the figure ॥३८॥ here to indicate the end of thirty-eighth hymn. No such number is given in P. and M.

## IV.39.

**आशुं दधिक्रां तमु नु ष्टवाम दिवस्पृथिव्या उत चर्किराम ।**
**उच्छन्तीर्मामुषसः सूदयन्त्वति विश्वानि दुरितानि पर्षन् ॥ १ ॥**

आशुम्[1] । आशुम्[2] । अश्वम्[3] । तम् । एव । क्षिप्रम् । स्तवाम । द्यावापृथिव्योः[4] । सुखेन वर्ततु यत् कर्तव्यं तत् पुनः पुनः कुर्मः[5] । उच्छन्त्यः[6] । माम्[7] । उषसः कर्माणि[8] । प्रेरयन्तु[9] । विश्वानि[10] च । दुरितानि । अति[11]नयन्तु[12] ।

**महश्चर्कर्म्यर्वतः क्रतुप्रा दधिक्राव्णः पुरुवारस्य वृष्णः ।**
**यं पूरुभ्यो दीदिवांसं नाग्निं ददथुर्मित्रावरुणा ततुरिम् ॥ २ ॥**

महः । महतः । पुनः पुनः[13] करोमि स्तुतिं विकिरामि च[14] घासम्[15] । अश्वस्य[16] । कर्मणां पूरयिता[17] । दधिक्राव्णः[18] । बहूनां वारकस्य[19] । सेक्तुः[20] । यम्[21] । मनुष्येभ्यः । दीप्तम्[22] । इव[23] । अग्निं शत्रूणामभिभवात् । ददथुः[24] । हे मित्रावरुणौ[25] ! तारकम् ।

---

१. 'आशुं दधिक्राम्' इति षडृचं सप्तमं सूक्तम् । आदितः पञ्च त्रिष्टुभः षष्ठ्यनुष्टुप् । ऋषिर्वामदेवः । पूर्वसूक्ते (Cf. KSA. 23.38.p.18.) हीत्युक्तत्वाद् एतदपि दाधिक्रम् । तथा चानुक्रान्तम् 'आशुं षळन्त्यानुष्टुप्' (KSA. 23. 39. p. 18.) इति । सूक्तविनियोगो लैङ्गिकः Sy.
२. शीघ्रगामिनम् Sy.
३. देवम् Sy.
४. दिवः पृथिव्याश्च सकाशात् Sy.
५. कर्मः M. अस्य घासं विक्षिपाम Sy.
६. तमो विवासयन्तीः Sy.
७. मां प्रति Sy.
८. कर्माणि M.
९. ०यतु P., D. रक्षन्तु फलानि Sy.
१०. सर्वाणि Sy.
११. अतिपारयन्तु । अन्यदेवताकेषु मन्त्रेष्वन्यदेवतास्तुतिस्तासां निपातभाक्त्वान्न विरुध्यते Sy.
१२. VM. ignores उत ॥ उत अपि च Sy.
१३. पुनः पुनः is omitted by P. अत्यर्थं करोमि Sy.
१४. व D., M.
१५. घांस० M.
१६. अरणवतः Sy.
१७. कर्मणां पूरकोऽहम् Sy.
१८. दिधिक्राव्णा D. दधि क्राव्ण P.
१९. ०नामावा० P., D. पुरुभिर्बहुभिर्वरणीयस्य Sy.
२०. वर्षकस्य Sy.
२१. Omitted by P. य D.
२२. दीप्तिम् D. दीप्यमानम् Sy.
२३. इव स्थितम् Sy.
२४. ददय D. ददथुः M. तेषामुपकाराय धारयथः Sy.
२५. हे मित्रावरुणौ ! युवाम् Sy.

यो अश्वस्य दधिक्राव्णो अकारीत्समिद्धे अग्ना उषसो व्युष्टौ ।
अनागसं तमदितिः कृणोतु स मित्रेण वरुणेना सजोषाः ॥ ३ ॥

यो अश्वस्य । यः[1] । अश्वस्य[2] । दधिक्राव्णः कर्म[3] । करोति[4] । अग्नौ । समिद्धे[5] । अह्नि[6] । तम्[7] । अपापम्[8] । पृथिवी[9] । करोतु । सः । मित्रावरुणाभ्यामहोरात्राधिपतिभ्याम्[10] । सङ्गतो[11] भवतु ।

दधिक्राव्ण इष ऊर्जो महो यदमन्महि मरुतां नाम भद्रम् ।
स्वस्तये वरुणं मित्रमग्निं हवामह इन्द्रं वज्रबाहुम् ॥ ४ ॥

दधिक्राव्णः । अश्वैः सर्वैः[12] । इष्यमाणस्य[13] । सर्वान्[14] ऊर्जयतः[15] । यदा । महतः[16] । स्तुमः । मरुतां च[17] । नाम[18] । भजनीयम्[19] । तदानीमिन्द्रादींश्च[20] । ह्वयामह[21] इति देवैः । सहाश्वं च[22] स्तौमीति[23] ।

इन्द्रमिवेदुभये वि ह्वयन्त उदीराणा यज्ञमुपप्रयन्तः ।
दधिक्रामु सूदनं मर्त्याय ददथुर्मित्रावरुणा नो अश्वम् ॥ ५ ॥

इन्द्रम् । इन्द्रमिवाश्वम्[24] । उभये[25] सैनिकाः, देवमनुष्या वा । विह्वयन्ते[26] । उदीर्णा

---

१. यजमानः Sy.
२. अश्वरूपस्य व्याप्तस्य वा Sy.
३. स्तुतिम् Sy.
४. अकार्षीत् Sy.
५. समिद्धे सति Sy.
६. VM. seems to explain उषसः and व्युष्टौ together as अह्नि ॥ प्रभाते सति Sy.
७. समिद्धेष्वग्नितमे P., D. यजमानम् Sy.
८. पावं D. पापरहितम् Sy.
९. अखण्डनीयो दधिक्राः Sy.
१०. ०णावहो रात्राधिपतीभ्यां P. अहोरात्राभिमानिदेवाभ्याम् Sy.
११. समानप्रीतिः Sy.
१२. दधिक्राव्णः देवस्य Sy.
१३. अन्नसाधकस्य Sy.
१४. सर्वन् P., D.
१५. बलसाधकस्य Sy.
१६. महान्तः P., D.
१७. स्तोतॄणां स्वभूतम् Sy.
१८. नामरूपमस्ति Sy.
१९. कल्याणम् Sy.
२०. आदि refers to वरुणम् । मित्रम् । अग्निम् and वज्रबाहुम् ॥ निपातभाजो वरुणादींश्च Sy.
२१. हवामहे Sy.
२२. ०श्व इय P. ०श्वश्च M.
२३. VM. ignores स्वस्तये ॥ क्षेमाय Sy.
२४. इन्द्रमिव एनं दधिक्राम् Sy.
२५. उभये इत्यत्र स्तोतृशंसितृभेदेन वा उभयविधत्वमवगन्तव्यम् Sy.
२६. आह्वयन्ति Sy.

युद्धार्थम्[१] । देवानां यज्ञं च जयार्थम् । उपप्रगच्छन्तः[२] । दधिक्रावाणम्[३] । शत्रोः[४] । सूदनम्[५] ।
ददथुः[६] । मित्रावरुणौ[७] ! अस्मभ्यम्[८] । अश्वम्[९] ।[१०]

**दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।**
**सुरभि नो मुखा करत्प्र ण आयूंषि तारिषत् ॥ ६ ॥**

दधिक्राव्णः[११] । दधिक्राव्णः[१२] । करोमि[१३] घासकण्डूयनादि[१४] । जिष्णोः[१५] । अश्वस्य[१६] ।

---

१. P., D. add त्वम् after युद्धार्थम् ॥ युद्धायोद्योगं कुर्वन्तः Sy.

२. यज्ञमुपक्रम्य प्रवर्तमानाश्च Sy.

३. ०वणं D. ०वण: P. देवम् Sy.

४. मर्त्याय मर्त्यस्य Sy.

५. सूनं P. यं प्रेरकम् Sy.

६. ददथम् D. ददथुः M. धारयथः । तं विह्वयन्ते Sy.

७. ०णा(भ्या)म् M. हे मित्रावरुणौ ! Sy.

८. अस्माकमर्थाय Sy.

९. अश्वरूपम् Sy.

१०. VM. ignores इत् and उ ।

११. 'दधिक्राव्णो अकारिषम्' इति षष्ठी पवित्रेष्ट्या अनुवाक्या । सूत्रितं च— 'दधिक्राव्णो अकारिषमा दधिकाः शवसा पञ्च कृष्टीः' (ĀSS. 2. 12.) इति । दधिद्रप्सभक्षणेऽप्येषा । 'दधिक्राव्णो अकारिषमित्याग्नीध्रीये दधिद्रप्सान् भक्षयन्ति' (ĀSS. 6. 12.) इति सूत्रितत्वात् Sy.

१२. Omitted by P., D. दधाति धारयति नरमिति दधिः ।...दधिः सन् कामतीति दधिक्रावा तस्य Mah. अश्वस्य संस्कारार्थम् U. दधीनि धारणसमर्थानि हवींषि काष्ठानि वा... तानि कामति गच्छतीति दधिक्रावाऽग्निः BB.

१३. करवाणि Sy. वयमध्वर्य्वादयः... अकार्ष्म कृतवन्तः । वचनव्यत्ययः । अश्वसंस्कारायाश्लीलभाषणं कृतवन्त इत्यर्थः Mah. अश्लीलभाषणम्... अकार्ष्म कृतवन्तः ।...एकस्य स्थाने बहुवचनं बोध्यम् । उपरिष्टाद् बहूनि पदानि बहुवचनान्तानि दृश्यन्ते U. ईदृशस्याग्नेरहमकार्यं करोमि । कर्मकरः स्यामिति यावत् BB.

१४. अश्लीलभाषणमिति शेषः Mah.

१५. जिष्णुः D. जयशीलस्य Sy., BB. जयनशीलस्य Mah. जेतुः U.

१६. व्यापकस्य Sy. किमर्थम् ? अश्वस्य, संस्कारायेति शेषः Mah. अशनस्य व्यापिनः U. व्यापकस्याश्वरूपस्य BB.

बलवतः । सुरभीणि । अस्माकम् । मुखानि । करोतु । प्रतरन्तु च । अस्मान् । आयूंषि ।

IV.40.

दधिक्राव्ण इदु नु चर्किराम विश्वा इन्मामुषसः सूदयन्तु ।
अपामग्नेरुषसः सूर्यस्य बृहस्पतेराङ्गिरसस्य जिष्णोः ॥ १ ॥

दधिक्राव्णः । दधिक्राव्णः । एव । पुनः । पुनर्घासं चिकिराम । विश्वाः । एव ।

१. वेगवतः Sy. वजति गच्छति वाजी, वाजोऽस्यास्तीति वा वाजी तस्य च Mah. 'ओविजी भयचलनयोः' वेजनवतः U. अन्नवतो वेगवतो वा BB.

२. अश्लीलभाषणेन दुर्गन्धं प्राप्तानि मुखानि सुरभीणि यज्ञः करोत्वित्यर्थः Mah. सुगन्धीनि । अश्लीलभाषणेन हि दुर्गन्धानि मुखानि भवन्ति पापहेतुत्वात् U. अस्मत्सुकृतसमृद्धया समासादितसौरभ्याणि करोतु BB.

३. स देवः चक्षुरादीन्द्रियाणि Sy. करोतु यज्ञ इति शेषः Mah. मुखानि, निकारलोपश्छान्दसः ।...करोतु यज्ञ इत्यध्याहारः U. करोतेर्लेटि व्यत्ययेन शप् BB.

४. प्रवर्धयतु । प्रपूर्वस्तिरतिर्वर्धनार्थः (Cf. N. 10. 35.) Sy. प्रतारयतु प्रवर्धयतु । लेटि रूपम् Mah. प्रवर्धयतु च U.

५. अस्मभ्यम् Sy. अस्माकम् Mah, U., BB.

६. जीवनानि बाल्ययौवनवार्धकानि Mah. बहुवचनं बाल्ययौवनवृद्धवयोऽपेक्षम् U. अप वाऽएतेभ्यः प्राणाः क्रामन्ति । ये यज्ञेऽपूतां वाचं वदन्ति दधिक्राव्णोऽस्य कारिषमिति सुरभिमतीमृचमन्ततोऽन्वाहुर्वाचमेव पुनते नैभ्यः प्राणा अपक्रामन्ति SB 13. 2. 9. 9. p. 972. This stanza=YV. 33. 32.= TS. 1. 5. 11. 4.

७. Ms. D. puts the figure ॥३९॥ here to indicate the end of thirtyninth hymn. No such number is given in P. and M.

८. 'दधिक्राव्ण इत्' इति पञ्चर्चमष्टमं सूक्तं वामदेवस्यार्षं दाधिक्रम्। आद्या त्रिष्टुप्। शिष्टा जगत्यः । 'हंसः शुचिषत्' इत्येषा सूर्यदेवताका । तथा चानुक्रमणिका— 'दधिक्राव्णः पञ्च चतस्रोऽन्त्या जगत्योऽन्त्या सौरी' (KSA. 23. 40. p. 18.) इति । सूक्तविनियोगो लैङ्गिकः Sy.

९. Omitted by M. एतन्नामकस्य देवस्यैव स्तुतिम् Sy.

१०. एवं M.

११. ०रामीति P. विकरातिम D. भृशं करवाम Sy.

१२. सर्वाः Sy.

१३. अपि ताः Sy.

उषसः । माम् । तत्र[१] प्रेरयन्तु । तथा प्रभृतीनां[२] च पञ्चानां कर्मणि ।

**सत्वा भरिषो गविषो दुवन्यसच्छ्रवस्यादिष उषसस्तुरण्यसत् ।**
**सत्यो द्रवो द्रवरः पतङ्गरो दधिक्रावेषमूर्जं स्वर्जनत् ॥ २ ॥**

सत्वा[३] । गमनशील:[४] । भरणशील:[५] । गवामेष्टा[६] । परिचरणकुशले सीदन्[७] । अन्नमिच्छतु[८] । अन्नस्येष्टा[९] । उषसः[१०] । त्वरणपरे[११] सीदन् । सत्यबलः[१२] । द्रवणशीलः[१३] । दवतां[१४] वरः । पतन्[१५] गमन-

---

१. कर्मसु प्रेरयन्तु Sy.

२. तथाव्रतीनां P. तथाप्रतीनां D. तथाप्रभृतीनां is suggested for तथा प्रभृतीनां ।
Seven deities are enumerated in the second hemistich of the stanza, whereas VM. mentions five only. In RV. IV. 38. 2. Sāyaṇa has identified Agni with Dadhikrāḥ In Nighaṇṭu 1. 14., Dadhikrāḥ and Dadhikrāvan are synonyms of Agni. Agni and Dadhikrāvan are therefore identical. As Dadhikrāvan has already been enumerated in the first hemistich, the number of deities in the second hemistich is thus reduced by one, the total being six. Uṣā occurs in the first hemistich also. VM.'s explanation may therefore be justified by saying that five new deities are enlisted in the second hemistich.
अपामग्नेः उषसः सूर्यस्य बृहस्पतेराङ्गिरसस्य जिष्णोरेतेषां देवतानामहं स्तुतिं करवाणीति शेषः । तासामपि निपातभाक्त्वात् स्तुतिरविरुद्धा Sy.

३. स त्वं P.

४. गन्ता Sy.

५. भरणकुशलः Sy.

६. गवां प्रेरक एष्टा वा Sy.

७. दुवः परिचरणमिच्छन्तो दुवन्यास्तेषु सीदतीति दुवन्यसत् Sy.

८. श्रवस्येत्, अन्नमिच्छेत् Sy.

९. इष्यमाणायाः । यद्वा इषः एष्टा एषणीयो वा Sy.

१०. ०मिच्छतु । अन्नस्ये ष्टोसः P. ०मिच्छन्नस्येष्टोषसः M. उषसः सम्बन्धिनि काले Sy.

११. ०णवरे P. त्वरया सीदतीति तुरण्यसत् Sy.

१२. सत्यः सत्सु तायमानः Sy.

१३. दवण० D. दवरण० P. गन्ता Sy.

१४. भवतां M. द्रवतां is suggested for दवतां ॥ प्रकृष्टवेगवान् Sy.

१५. पतत् D., P. पतनेनोत्प्लवनेन पतनं पतङ्गः । तद्वान् पतङ्गरः उक्तलक्षणः Sy.

वान् क्षिप्रगामी[1] । दधिक्रावा[2] । अन्नम्[3] । रसं[4] च । सर्वम्[5] । जनयति[6] ।

**उत स्मास्य द्रवतस्तुरण्यतः पर्णं न वेरनु वाति प्रगर्धिनः ।**
**श्येनस्येव ध्रजतो अङ्कसं परि दधिक्राव्णः सहोर्जा तरित्रतः ॥ ३ ॥**

उत स्मास्य । अपि च । स्म[7] । अस्य[8] । द्रवतः[9] । त्वरमाणस्य[10] । अङ्कसम्[11] उभयपार्श्वस्थं[12] कक्ष्यादिकं पर्णम्[13] । इव[14] । पक्षिणः[15] । पर्यनुगच्छति[16] । अत्यन्तमभिकाङ्क्षमाणस्य[17] गमनम् ।

---

१. ०गमी P. ०कामी M.

२. ०कावण D. ०कावणा P. देवः Sy.

३. Omitted by P., D.

४. बलम् Sy.

५. स्वर्गम् Sy.

६. जनयेदुत्पादयेत् Sy.

७. खलु Sy. स्मेति पादपूरणे BB.

८. अश्वस्य Mah., BB. रथयुक्तस्याश्वस्य U.

९. गच्छतः Sy. गच्छत आज्यन्तम् U.

१०. त्वरयतः Mah. तूर्णमश्नुवानस्याध्वानम् U.

११. अकसम् D. पादाधारमुरः(उरु)प्रदेशं वा Sy.

१२. अकमु स य वा शास्थं P. शृङ्गारचिह्नं वस्त्रचामरादिकम् Mah. अङ्कशब्दः शरीरवचनः । शरीरासक्तम् U. देहासक्तं चामरादिकं वस्त्रादिकं चास्य लक्षणभूतं तत् सर्वम्. . .अङ्कतेरौणादिकोऽसिच्प्रत्ययः BB.

१३. वर्णम् P. गमनं पत्रं वानुसृत्य यथा वान्त्यन्ये पक्षिणस्तद्वत् Sy. पक्षः Mah. पर्णं पत्रम् U. पत्रमिव BB.

१४. न उपमार्थीयः U. अनेकेवशब्दाद्वाक्यार्थोपमा भवतीति द्वयोरुपमार्थीययोरुपादानम् BB.

१५. पक्षिणा P. गन्तुः पक्षिणः Sy. यथा त्वरया गच्छतः पक्षिणः पक्ष उत्क्षिप्तो गच्छन्नवलोक्यते तथा धावतोऽश्वस्याङ्कसरूपं वस्त्रचामरादि विस्पष्टमवलोक्यत इत्यर्थः Mah. पक्षमिव शकुनेः U. श्येनस्य वेः पक्षिणः BB. विरिति शकुनिनाम N. 2.6.

१६. परितः अनुवाति सर्वो वेगवान् जनः । सर्वेषामपि शीघ्रगामीत्यर्थः Sy. परि सर्वस्मिन् देहे वर्तमानं सत्, गच्छन्तमश्वमनु, उत्क्षिप्तत्वेन दृश्यमानं गच्छति Mah. परिपश्यन्ति पक्षिणं भक्षणाय गृहीतम्, रथोऽनुवाति वातोद्धतः U. परितः सर्वस्मिन्नपि देहे विद्यमानं गच्छति BB.

१७. प्रकर्षेणाभिकाङ्क्षतः Sy. प्रगृध्यतीति प्रगर्धी Mah. आजिं जेतुं प्रगर्धोऽस्यास्तीति प्रगर्धी अश्वस्तस्य प्रगर्धिनः । यद्वा शकुनिविशेषणमामिषं प्रगर्धिनः शकुनेः । स ह्यामिषग्रहणार्थमतिशयेन धावति, अतस्तेनोपमीयते U. पत्रार्थं प्रगर्धिन आमिषार्थिनः BB.

श्येनस्येव[1] । गच्छतः[2] । पर्णम्[3] । दधिक्राव्णः[4] । सह[5] । बलेन[6] । तरतः[7] ।

**उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि ।**
**क्रतुं दधिक्रा अनु संतवीत्वत्पथामङ्कांस्यन्वापनीफणत् ॥ ४ ॥**

उत स्य[8] । अपि[9] । सः । वाजी[10] । अश्वारोहस्य क्षेपणमनु[11] । तूर्णमश्नुतेऽध्वानम्[12] । ग्रीवायाम्[13] ।

---

१. शीघ्रधावने श्येनदृष्टान्त उच्यते श्येनस्येव Mah.
यथा श्येनस्य U.

२. गच्छतो वेगेन 'व्रज गतौ' Mah. अतिशयेन गच्छतः U.

३. वर्णं P., D. अवधिं प्राप्तुं काङ्क्षतः पक्षिमात्रस्य पर्णमङ्कुसदृष्टान्तत्वेनाभिहितम् Mah.

४. ०क्राव्णां P. दधीन् क्रमते दधिक्रावा धारकपर्वताद्यतिक्रामिणः Mah. तथा तस्य दधिक्राव्णोऽश्वस्य रथं सक्तं परिपश्यन्ति U.

५. एकीभूय सङ्घेन गच्छन्तीति शेषः Sy.

६. निमित्तेनान्नार्थं वा Sy. सहान्नेन । . . .नैवारं चरुमवजिघ्रति तदभिप्रायेण सहोर्जेत्युक्तम् U. अन्नेनामिषादिना सह BB.

७. करत्न P. तारयतोऽन्यान् । अन्तर्भावितण्यर्थोऽयम् Sy. मार्गं भृशं तरतः । यङ्लुकि निपातोऽयम् Mah. तरतोऽतिशयेनाध्वानम् U. तरतः श्येनस्येव । वेगवत्त्वातिशयप्रदर्शनार्थं चेदम् । तरतेर्यङ्लुगन्तस्य तत्रैव निपात्यते BB. This stanza=YV. 9. 5.= TS. 1. 7. 8. 3. उत स्म । अस्य द्रवतस्तुरण्यतः पर्णं न वेरनुवाति प्रगर्धिनः । श्येनस्येव ध्रजतोऽअङ्कुसं परि दधिक्राव्णः सहोर्जा तरित्रतः स्वाहेति । SB. 5. 1. 5. 20 p. 431.

८. वामदेवस्यार्षम् SKN. गोतमपुत्रस्येदमार्षम् । वाजपेये वाजियुक्तं रथमधिरुह्य यजमानोऽनुवाकं जपति तत्रैषा Dur.

९. अपि च Sy.

१०. वेजनवानश्वरूपो देवः Sy. वेजनवान् कम्पनवान्, कम्पिता वा स्वयं कम्पयिता वा परेषामित्यर्थः SKN. 'ओ विजी भयचलनयोः' । भयवान् । परेभ्यो भयदाता । परेषां हि तं दृष्ट्वा भयमुत्पद्यते । चलनवान्वा, स हि नित्यं चलनशीलः Dur.

११. प्रेरणम् । द्वितीयाश्रुतेः कर्मप्रवचनीयोऽनुशब्दोऽध्याहार्यः । प्रेरणमनु । अश्वारोहणपाष्र्ण्या प्रेरितः सन्नित्यर्थः SKN. कशाघातमनु Dur.

१२. त्वरयति गन्तुम् Sy. त्वरते SKN. व्याप्नोतीत्यर्थः । . . .कशाप्रहारमनु तुरण्यति, अप्यनाहत एवेत्यपिशब्दः Dur.

१३. गरणसाधनायाम्, कण्ठे Sy. गिरत्याहारमनयेति गिरतेः । शब्दं वा गृणातेः । गृह्यते वाऽस्यामिति गृह्णातेः SKN. उरसि । . . .ग्रीवा 'गिरतेर्वा' गिलनार्थस्य तया हि गिलत्यन्नम् । 'गृणातेर्वा' शब्दार्थस्य तया हि शब्दो गीर्यते । 'गृह्णातेर्वा' तया ह्युदकादि गृह्यते तस्यामेव वा गृह्यते यः शृङ्खलीक्रियते Dur.

बद्धः[१] । अंसयोः[२] । आस्ये[३] च । गमनकर्म[४] । सन्तन्वन्[५] । दधिक्राः[६] । मार्गाणाम्[७] । कुटिलानि[८] । आन्वपनीफणत्[९] गच्छति, गतिकर्मसु पठितः फणिः[१०] ।

---

१. ग्रीवाय बन्धः P. रुरुचक्रेण SKN. वध्रेण बद्धः Dur.

२. कक्षप्रदेशे Sy. अपीति संसर्गमाह । कक्षेण यः संसृष्टः प्रदेशः सोऽपि कक्षः । कक्षस्य समीपं तस्मिश्च कक्ष्यया SKN. कक्षायाम् Dur.

३. आस्ये च बद्धः । बद्धपल्यङ्कस्योक्तेषु स्थानेषु पाशबन्धाः सम्भवन्ति । एवं बद्धः सन् Sy. आस्ये च खलीनेन SKN. अथ...मुखे खलीनेन बद्धः । एवमनेकेषु स्थानेषु बद्धस्तथापि तुरण्यत्येव । अन्यो ह्येकस्मिन्नपि प्रदेशे बद्धः स्पन्दितुमपि न शक्नोति किमुत त्वरितुम् Dur.

४. कर्म प्रज्ञां वा Sy. कर्म, आत्मीयं शीघ्रगतिलक्षणां प्रज्ञां वाऽश्वारोहस्य SKN. आत्मीयं गमनं कर्म वा प्रज्ञां वाऽश्वारोहस्य Dur.

५. सतवन् M. प्रवृद्धबलवान् Sy. तनोतेस्तवतेर्वा वृद्ध्यर्थस्येदं रूपम् । अनुसन्तनोत्यनुसंवर्धयति वा।...अनुसन्तनोतीति, अनुसन्तवतेः । तनोतिनार्थप्रदर्शनम् । अनुसन्तनोति वेगमविच्छिन्नं सम्पादयति । तवतेः पूर्वया 'पूर्वोऽभ्यासः' इत्यभ्यासलक्षणया प्रकृत्या सह साभ्यासस्य निगम इत्यर्थः । तनोतेरिति तु पाठे बहूत्प्रेक्ष्यम् SKN. सन्तनोति काममभिप्रेतेनार्थेन शीघ्रगामित्वात् Dur.

६. देवः Sy. अश्वोऽनुसन्तनोतीत्यर्थः Dur.

७. मार्गाः P. मार्गा D. पथां मध्ये।... 'पन्थाः पततेः पद्यतेर्वा' वर्णव्यापत्त्या, आकारो नामकरणः । 'पन्थतेः' सादृश्यभूयस्त्वम् । सर्वेऽपि गत्यर्थाः SKN.

८. ०लान् P. अनुशब्दोऽत्राप्यर्थे । अकिः कौटिल्ये।...ये कुटिलाः पन्थानस्तानपि। ...कुटिलानीत्यर्थः ।...'अङ्कोऽञ्चतेः' । कौटिल्यार्थस्येति नैरुक्ताः SKN. यान्यपि च कानिचित्...अञ्चितानि कुटिलानि सन्ति तान्यप्यनुलोमानीव कुर्वन्, आशुगामित्वात् Dur.

९. आन्ववनीफणत P. अपनीफणत् M. अन्वापनीफणत् is suggested for आन्वपनीफणत् ॥ सर्वतो भृशं गच्छति । फणतेर्गत्यर्थस्य यङ्लुकीदं रूपम् Sy. फणतिर्गतिकर्मा । अत्यर्थं गच्छन् ।... 'फण गतौ' इत्यस्य चर्करीतवृत्तं यङ्लुगन्तमिति क्रियाभ्यासविषयमित्यर्थः SKN. आभिमुख्येन पुनः पुनर्भृशं वा फणति गच्छतीत्यर्थः । एव समस्तार्थः Dur.

१०. वणिः P. D. अपि स वाजी वेजनवान् । क्षेपणमनु तूर्णमश्नुतेऽध्वानम् । ग्रीवायां बद्धः । ग्रीवा गिरतेर्वा । गृणातेर्वा । गृह्णातेर्वा । अपि कक्ष आसनीति व्याख्यातम् । 'क्रतुं दधिक्राः' कर्म वा प्रज्ञां वा । 'अनु सन्तवीत्वत्' तनोतेः पूर्वया प्रकृत्या निगमः । 'पथामङ्कांसि' पथां कुटिलानि । पन्था पततेर्वा । पद्यतेर्वा । पन्थतेर्वा । अङ्कोऽञ्चतेः । आपनीफणदिति फणतेश्चर्करीतवृत्तम् N. 2. 28. 5. SKN. II. 117.

हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥ ५ ॥

[1]हंसः । सौरी । वसुर्वायु[2]र्होताऽग्निरतिथि[3]श्च महानात्मैकस्त्रि[4]धा स्थितः । ब्राह्मणम्, 'एष वै हंसः शुचि[5]षद्' इति [6]।

---

१. दशरात्रे षष्ठेऽहनि तृतीयसवने मैत्रावरुणशस्त्रे 'हंसः शुचिषद्' इत्येषा । 'आहूय दुरोहणं रोहेद्धंसः शुचिषदिति पच्छोऽर्धर्चशः' (ĀSS. 8. 2.) इति सूक्तम् । स्मार्तविनियोगमाह शौनकः —'हंसः शुचिषदित्यृचा शुचिरीक्षेद्दिवाकरम् । अन्तकाले जपन्नेति ब्रह्मणः सद्म शाश्वतम्' (Ṛgvidh. 2. 67.) इति Sy.

२. वसूयुर्होता P., D.

३. सौरि वसुर्होग्निरथिश्च P.

४. ०कस्त्रिधास्त्रिधा P.

५. शुश्चिचिष० D. AB. 4. 20.

६. अनया सौर्यर्चा 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुः' (Chā. U. 1. 6. 6.) इत्यादिश्रुत्युक्तो मण्डलाभिमानी देवोऽस्ति यश्च सर्वप्राणिचित्तरूपस्थितः परमात्मा यच्च निरस्तसमस्तौपाधिकं परं ब्रह्म तत्सर्वमेकमेवेति प्रतिपाद्यते । हंसः, हन्तिर्गत्यर्थः । सर्वत्र सर्वदा गन्ता । 'योऽहं सोऽसौ' इत्यादिश्रुत्युक्तप्रकारेणैकीकृत्योपास्यः परमात्ममन्त्रप्रतिपाद्य आदित्यः । स च शुचौ दीप्ते द्युलोके सीदतीति शुचिषद्, 'अथ यदतः परो दिवो ज्योतिर्दीप्यते (Chā. U. 3. 13. 7.) इत्यादिश्रुतेः द्युस्थान आदित्यः प्रतिपादितः । स एव मध्यमस्थानो वायुरित्याह । वसुः, सर्वस्य वासयिता वायुः स चान्तरिक्षसत् अन्तरिक्षसञ्चारी । अथ तस्यैव क्षितिस्थानवैदिकाग्निरूपतामाह, होता देवानामाह्वाता होमनिष्पादको वा । वेदिषत् वेद्यां गार्हपत्यादिरूपेण स्थितः । अतिथिः अतिथिवत्सर्वदा पूज्योऽग्निः । . . .दुरोणसत् दुरोणं गृहनाम (Ngh. 3. 4.) । तत्र पाकादिसाधनत्वेन स्थितः । अनेन लौकिकाग्न्यात्मकत्वमुक्तम् । नृषत् नृषु मनुष्येषु चैतन्यरूपेण सीदतीति नृषत् । अनेन परमात्मरूपत्वमुक्तम् । पुनरप्यादित्यात्मतामाह वरसत् । वरे वरणीये मण्डले सीदतीति वरसत् आदित्यः । 'वरं वा एतत्सद्मनां यस्मिन्नेष आसन्नस्तपति' (AB. 4. 20.) इति हि श्रूयते । ऋतं सत्यं ब्रह्म यज्ञो वा । तत्र सीदतीति ऋतसत् अग्निः । व्योमान्तरिक्षम्, तत्र सीदतीति व्योमसत् वायुः । इदानीमादित्यतोच्यते । अब्जाः उदकेषु जातः । उदकमध्ये खल्वयं जायते । गोजाः गोषु रश्मिषु जातः । ऋतं सत्यम् । सर्वदृश्यत्वेन सत्यजातः । न ह्यसाविन्द्रादिवत् परोक्षो भवति । यद्वा उदकेषु वैद्युतरूपेण वा वाडवरूपेण वा जातः । अद्रिजाः अद्रावुदयाचले जातः । एवं महानुभाव आदित्यः ऋतं सत्यमबाध्यं सर्वाधिष्ठानं ब्रह्मतत्त्वम् । तद्रूपो ह्यसावेव । आदित्यस्योक्तरूपत्वं 'हंसः शुचिषदित्येष वै हंसः शुचिषत्' (AB. 4. 20.) इत्यादिना ब्राह्मणे समाम्नातम् Sy.

हन्त्यहङ्कारमिति हंसो भगवानादित्य

एवंविधं त्वां प्रत्यवतरामीति वाक्यशेषः। किम्भूतो हंसः ? शुचिषद् शुचौ दीप्तौ सीदतीति शुचिषदादित्यरूपेण । तथा वसुर्वासयिता नराणां प्रवर्तकः । अन्तरिक्षे सीदतीत्यन्तरिक्षसद् वायुरूपेण । होता आह्वाता देवानाम् । वेदौ सीदतीति वेदिषदग्निरूपेण । अतिथिः सर्वेषां पूज्यः । दुरोणे यज्ञगृहे सीदतीति दुरोणसदाहवनीयरूपेण। नृषु मनुष्येषु प्राणभावेन सीदतीति नृषत् । वरेषूत्कृष्टेषु स्थानेषु सीदतीति वरसत् । ऋते यज्ञे सीदतीति ऋतसत् । व्योम्नि आकाशे मण्डलरूपेण सीदतीति व्योमसत् । एवं सर्वत्र स्थितत्वेन स्तुत्वा सर्वत्रोत्पत्तिद्वारेण स्तौति । य अब्जा अप्सूदकेषु जायते मत्स्यादिरूपेणेत्यब्जाः । गवि पृथिव्यां जायते चतुर्विधभूतग्रामरूपेणेति गोजाः । ऋते सत्ये जायत ऋतजाः । अद्रौ पाषाणेऽग्निरूपेण जायत इत्यद्रिजाः । अद्रिर्मेघो वा, अद्रौ मेघे जलरूपेण जायत इति वा । ऋतम् 'ऋ गतौ' सर्वत्र गतम् । बृहद् महत्परिवृद्धमपर्यन्तं परब्रह्मरूपो यो हंसस्तं प्रति रथावतरामीति भावः । यद्वा हंसशब्देन रथ उच्यते । हन्ति पृथिवीमिति हंसो रथः । बृहन्महत् प्रौढमृतं यज्ञं सम्पादयत्विति शेषः । किम्भूतो हंसः । शुचिषच् शुचौ देवयजने रथवाहने वा सीदतीति । वसुः स्वस्योपरि यजमानं वासयतीति । अन्तरिक्षसद् वृक्षगुल्माद्यनवरुद्धेऽन्तरिक्षे सीदतीति । होता होतृसमानः । तदेव कथमित्यत आह—वेदिषद् वेद्यां सीदतीति । अतिथिरतिथिवत्पूज्यः । दुरोणसद् दुरोणे यज्ञगृहे सीदतीति । नृषद् नृषु वाहकत्वेन सीदतीति । वरसद् वरे श्रेष्ठे राजगृहे सीदतीति । ऋतसद् ऋते यज्ञे वाजपेयादौ सीदतीति। व्योमसत् सूर्यं वोढुं व्योमन्याकाशे सीदतीति । अब्जाः 'अप्सु योनिर्वा अश्वः' इति श्रुतेरद्भ्यो जातैरश्वैरुपेतत्वादब्जाः । गोजा गोशब्दवाच्याद्वज्राज्जायत इति गोजाः । 'इन्द्रो वृत्राय वज्रं प्राहरत् स त्रेधा व्यभवत्तस्य स्फ्यस्तृतीयं रथस्तृतीयं यूपस्तृतीयम्' इति तैत्तिरीयश्रुतेः। ऋतजा ऋतं यज्ञमुद्दिश्य जातत्वादृतजाः । अद्रिजा अद्रिभ्यः पाषाणसदृशकाष्ठेभ्यो जातत्वादद्रिजाः Mah.

हन्त्यध्वानमिति हंसो भगवानादित्यः । शुचिषत् शुचौ दीप्तौ सीदतीति शुचिषत्। य आदित्यरूपेण शुचिषत् । यश्च वसुर्वासयिता वायुरूपेणान्तरिक्षे सीदतीति। यश्च होता आह्वाता । अग्निरूपेण वेदौ सीदति । यश्चातिथिरूपेण दुरोणे गृहे सीदति। यश्च नृषु मनुष्येषु प्राणभावेन सीदति। यश्च वरेषूत्कृष्टेषु सीदति। यश्च ऋते सत्ये सीदति। यश्च व्योमस्वन्तरिक्षेषु सर्वेषु सीदति। एवं सर्वत्र स्थितिभावेन स्तुत्वाऽधेदानीं सर्वत्रोत्पत्तिद्वारेण स्तौति । यश्चाब्जा अप्सु जायत इत्यब्जाः । यश्च गवि पृथिव्यां चतुर्विधभूतग्रामरूपेण जायते। यश्च ऋते सत्ये जायते। यश्चाद्रौ पाषाणेऽग्निरूपेण जायते । मेघोऽप्यद्रिरुच्यते । मेघे वोदकरूपेण

जायते तदृतम् । 'ऋ गतौ' सर्वतो गतं परम्ब्रह्म । बृहत्परिवृद्धम् । अनन्तमपर्यन्तम् । एवं परब्रह्मवादिनोऽस्य मन्त्रस्य तत्परब्रह्म प्रत्यवतरामीति वाक्यशेषः U. अध्यात्ममधिदैवमधियज्ञं चाधिकृत्य त्रेधेमं मन्त्रं व्याचक्षते । तत्र प्रकरणानुरूपोऽर्थविशेषो ग्रहीतव्यः । अध्यात्मे तावत्—हंस आत्मा । शुचिषु स्थानेषु सीदतीति शुचिषत् । वासयिता वसुर्वरिष्ठो वा । अन्तरिक्षे हृदयाकाशादिषु सीदतीत्यन्तरिक्षसत् । होता आह्वाता देवानामादाता वा । वेद्यां यागार्थं सीदतीति वेदिषत् । अतिथिः सततगतिः, तिथिकृतविशेषरहितो वा । दुःखरक्षणेषु गृहादिषु सीदतीति दुरोणसत् । नृषु प्राणिशरीरेषु तद्भावेन सीदतीति नृषत् । वरेषु फलेषु भोक्तृत्वेन सीदतीति वरसत् । ऋते यज्ञे सत्ये वा सीदतीति ऋतसत् । विविधे रक्षणे तृप्तौ वा सीदतीति व्योमसत् । अद्भ्यो जातोऽब्जाः शरीराभिप्रायम् । शुक्लाज्जातत्वात् । यथा 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति । अपां वा यागद्वारेण जनयिता ।. . .गोषु पशुषु, अनुग्राहकतया जातो गोजाः । ऋते यज्ञे, ऋतार्थं वा जातः प्रादुर्भूत ऋतजाः । अद्रिजाः पर्वतादिष्वपि प्रादुर्भूतः । ऋतं सत्यरूपं बृहद्ब्रह्म । अथाधिदैवे—हंस आदित्यः । शुचिनि मण्डले सीदतीति शुचिषत् । होता अपामादाता । वेद्यामाराध्यतया सीदतीति वेदिषत् । अतिथिस्सततगतिः । दुरोणेषु गृहेषु मेघादिषु सीदतीति दुरोणसत् । वराणां दातृत्वेन तेषु सीदतीति वरसत् । अपो जनयतीत्यब्जाः । गोजा रश्मिसमूहवर्ती । ऋते सत्ये जात ऋतजाः । अद्रिजा उदयाचलात्प्रादुर्भूतः । समानमन्यत् । अथाधियज्ञे—हंसो रथो हन्ति पृथिवीमिति । शुचौ देवयजने रथवाहने च सीदतीति शुचिषत् । शुचिर्यजमानः सीदत्यस्मिन्निति वा शुचिषत् । होतेव वेद्यां सीदतीति वेदिषत् । अतिथिः सर्वत्राप्रतिहतगतिः । नृषद् मनुष्यार्थं शूरार्थं वा सीदतीति नृषु वोपकारार्थं सीदतीति नृषत् । ऋतार्थं सत्यार्थं यज्ञार्थं वा सीदतीति ऋतसत् । अब्जा उदकाज्जातः । गोजा गोविकारचर्मादिग्रथितत्वात्ततो जात इत्युच्यते । अद्रिभिर्वा-श्मभिरुत्पादितत्वात्ततो जात इत्युच्यतेऽद्रिजाः । गतमन्यत् BB.

This stanza=YV. 10. 24. =TS. 1. 8. 15. 2.

सोऽवतिष्ठति । हꣳ॒सः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहदित्येतामतिच्छन्दसं जपत्येषा वै सर्वाणि छन्दाꣳसि यदतिच्छन्दास्तथैनं पाप्मा नान्ववतिष्ठति SB. 5. 4. 3. 22. p. 464.

Ms. D. puts the figure ॥४०॥ here to indicate the end of the fortieth hymn. No such number is given in P. and M.

IV.41.

**इन्द्रा को वां वरुणा सुम्नमाप स्तोमो हविष्माँ अमृतो न होता ।**
**यो वां हृदि क्रतुमाँ अस्मदुक्तः पस्पर्शदिन्द्रावरुणा नमस्वान् ॥ १ ॥**

[1] इन्द्रा कः[2] । हे इन्द्रावरुणौ[3] ! कीदृशः । युवयोः । सुखम् । प्राप्नोति[4] । स्तोमः[4] । हविषा युक्तः[5] । अमृतः[6] दैव्यः[7] । इव । होताऽग्निः[8] । यः[9] । वां[10] भवतौ[11] स्तोमः । कर्मवान्[12] । अस्माभिः[13] । उक्तः[14] । अन्नवान्[15] । हृदये । स्पृशति[16], अग्निर्यथा हविष्मान्[17] स्तुन्वन्[18] हृदयं स्पृशति तद्वत् स्पृशती[19]ति[20] ।

**इन्द्रा ह यो वरुणा चक्र आपी देवौ मर्तः सख्याय प्रयस्वान् ।**
**स हन्ति वृत्रा समिथेषु शत्रूनवोभिर्वा महद्भिः स प्र शृण्वे ॥ २ ॥**

इन्द्रा । यः । इन्द्रावरुणा[21] । बन्धू । करोति । देवौ[22] । मनुष्यः[23] । सख्याय[24] च करोतु ।

---

१. 'इन्द्रा को वाम्' इत्येकादशर्चं नवमं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैन्द्रावरुणम् । अत्रानुक्रमणिका—'इन्द्रा को वामेकादशैन्द्रावरुणं तु' (KSA. 23. 41. p. 18.) इति । आभिप्लविकेषूक्थ्येषु तृतीयसवने मैत्रावरुणशस्त्रेषु स्तोमवृद्धावावापार्थमेतदादिसूक्तद्वयम् । 'इन्द्रा को वामिति सूक्ते' (ASS. 7. 9.) इति सूत्रितत्वात् Sy.

२. कं D.

३. इन्द्रावरुणौ—परस्परापेक्षया द्विवचनम् Sy.

४. सोमाज्यादिप्रदेयद्रव्योपेतं कतमत् स्तोत्रं सुम्नम् आप । फलकेत्वेन प्राप्नुयादित्यर्थः Sy.

५. हविर्भिरुपेतः । यद्वा हविष्मानित्येतदुत्तरत्र योज्यम् । हविर्युक्तः Sy.

६. अमरणलक्षणः स्वर्गसाधनः Sy.

७. देव्यः P.

८. होतायेग्निः D. अग्निरिव । स यथा तथा Sy.

९. स्तोमः Sy.

१०. वा P. युवयोः Sy.

११. भवतोः is suggested for भवतौ ।

१२. प्रज्ञोपेतः Sy.

१३. अस्मत्सकाशात् Sy.

१४. उदितः Sy.

१५. हविष्मान् नमस्कारोपेतो वा Sy.

१६. स्पृशेत् हृदयङ्गमो भवेत् । स क इति स्तोमप्रशंसा Sy.

१७. ०ष्मां M.

१८. स्तुसन् P. स्तुवन् is suggested for स्तुन्वन् ।

१९. प्रशतीति P., D.

२०. VM. explains इन्द्रावरुणा once only. हे इन्द्रावरुणौ ! Sy.

२१. इन्द्रावरुणौ Sy.

२२. देवो M.

२३. ०ष्य P., D. मरणधर्मा Sy.

२४. सखित्वाय Sy.

अन्नवान्[१] । सः[२] । हन्ति । उपद्रवाणि[३] । सङ्ग्रामेषु । शत्रून् । अन्नैः[४] । च[५] । महद्भिः । सः[६] । प्रश्रूयते[७] ।[८]

इन्द्रा ह रत्नं वरुणा धेष्ठेत्था नृभ्यः शशमानेभ्यस्ता ।
यदी सखाया सख्याय सोमैः सुतेभिः सुप्रयसा मादयैते ॥ ३ ॥

इन्द्रा[९] । इन्द्रावरुणौ ! युवाम् । अतिशयेन रत्नं[१०] दातारौ[११] । इत्थम्[१२] । नृभ्यः[१३] । भज-मानेभ्यः[१४] । तौ[१५] । यदीति[१६] स्पष्टम्[१७] ।

इन्द्रा युवं वरुणा दिद्युमस्मिन्नोजिष्ठमुग्रा नि वधिष्टं वज्रम् ।
यो नो दुरेवो वृकतिर्दभीतिस्तस्मिन्मिमाथामभिभूत्योजः ॥ ४ ॥

इन्द्रा[१८] । इन्द्रावरुणौ[१९] ! आयुधम्[२०] । द्योतमानम्[२१] । अस्मिन्[२२] । बलवत्तमम्[२३] । उद्गूर्णौ[२४] !

---

१. हविर्लक्षणान्नवान् सन् Sy.
२. मर्तः Sy.
३. उपद्रव should be in the mas. gen. आवरकाणि पापानि Sy.
४. अन्नैः P.
रक्षणैः Sy.
५. वाशब्दश्चार्थे Sy.
६. नरः Sy.
७. प्रकृष्टं श्रूयते विख्यातो भवति Sy.
८. VM. ignores ह ॥ हशब्दः पूरणः । प्रसिद्धौ वा Sy.
९. M. adds ह after इन्द्रा ।
१०. रत्न P., D.
रमणीयं धनम् Sy.
११. VM. seems to explain रत्नम् । धेष्ठा together as अतिशयेन रत्नं दातारौ ॥ दातृतमौ । भवत इति शेषः Sy.
१२. दाता वित्थम् D.
१३. मनुष्येभ्यः Sy.
१४. शंसमानेभ्यः स्तोतृभ्योऽस्मभ्यम् Sy.
१५. देवौ Sy.
१६. यदिति P. यदि Sy.
१७. VM. ignores ह and whole of the second hemistich ॥ ह खलु । सखाया परस्परं यजमानस्य वा सखिभूतौ । सख्याय सखिकर्मणे सखित्वाय । सुतेभिः अभिषुतैः । सोमैः । सुप्रयसा शोभनसोमान्नवन्तौ । मादयैते माद्येताम् । तर्हि रत्नानां दातारौ भवतः Sy.
१८. इन्द्रा ह M.
१९. हे इन्द्रा इन्द्रौ ! वरुणा वरुणौ ! Sy.
२०. वायुध P., D.
२१. दीप्तम् Sy.
२२. शत्रौ Sy.
२३. अतिशयेन तेजोवत् Sy.
२४. उग्रौ ! अत्र सर्वत्र परस्परापेक्षया द्विवचनम्—'प्र मित्रयोर्वरुणयोः' (RV. 7. 66. 1ª) इतिवत् । यद्वा छान्दसत्वाद् व्यवहितस्याप्यानङ् Sy.

निपातयतम्[1] । यः[2] । नः[3] । दुष्टागमनः[4] । स्तेनः[5] । हिंसकः[6] । तस्मिन्[7] । कुरुतम्[8] । अभिभावुकम्[9] । बलम्[10] ।

**इन्द्रा युवं वरुणा भूतमस्या धियः प्रेतारा वृषभेव धेनोः ।**
**सा नो दुहीयद्यवसेव गत्वी सहस्रधारा पयसा मही गौः ॥ ५ ॥**

इन्द्रा । इन्द्रावरुणौ ! युवाम् । अस्य[11] । कर्मणः[12] । प्रीणयितारौ । भवतम् । वृषभाविव[13] । धेनोः । तत्[14] कर्म । अस्माकम्[15] । दुग्धम्[16] । यथा यवसानि[17] । गत्वा[18] । महती । सहस्रधारा[19] । पयसा । गौर्दुग्ध[20] इति ।

**तोके हिते तनय उर्वरासु सूरो दृशीके वृषणश्च पौंस्ये ।**
**इन्द्रा नो अत्र वरुणा स्यातामवोभिर्दस्मा परितक्म्यायाम् ॥ ६ ॥**

तोके[21][22] । पुत्रे । हिते[23] सुहृदि । पौत्रे[24] । क्षेत्रेषु[25] । सूर्यस्य[26] । दर्शने[27] । यूनः[28] । प्रजननशक्तौ[29] ।

---

१. निवारयतं P. निपरतयतं D. बधार्थं प्रेरयतमित्यर्थः Sy.
२. शत्रुः Sy.
३. नौ P., D. अस्माकम् Sy.
४. दुष्प्रापः Sy.
५. वृकतिः अतिशयेनादाता Sy.
६. ०कं P.
७. ततस्मिन् P., D. शत्रौ Sy.
८. कुरुतमित्यर्थः Sy.
९. ०भाविकं P., D.
१०. VM. ignores युवम् ॥ युवाम् Sy.
११. अस्याः Sy.
१२. स्तुत्याः Sy.
१३. सेक्तारौ वृषभौ Sy.
१४. त P. सा स्तुतिरूपा धेनुः Sy.
१५. असस्काहं P. असस्काकम् D.
१६. दुह्यात् । कामान् पूरयेत् Sy.
१७. पयसानि P. बयसानि D. तृणादिघासेन निमित्तेन Sy.
१८. गवा P.
१९. ०धाराः M.
२०. गौरिव Sy.
२१. तेके D.
२२. हे इन्द्रावरुणौ ! देवौ ! Sy.
२३. हुते M.
२४. पौत्र P., D. तत्पुत्रे च Sy.
२५. सस्याढ्यासु भूमिषु निमित्तभूतासु Sy.
२६. सूर्यं P., D. प्रेरकस्य सूर्यस्य Sy.
२७. चिरकालदर्शनाय । चिरजीवनायेत्यर्थः Sy. २८. सेक्तुर्मम Sy.
२९. पुंस्त्वाय च पुनरपि प्रजननसामर्थ्याय च Sy.

अत्र सर्वत्र । इन्द्रावरुणौ । भवताम्[१] । रक्षणैः[२] । दर्शनीयौ[३] । रात्रावन्धकारे[४] च[५] ।

युवामिद्ध्यवसे पूर्व्याय परि प्रभूती गविषः स्वापी ।
वृणीमहे सख्याय प्रियाय शूरा मंहिष्ठा पितरेव शम्भू ॥ ७ ॥

युवामिद्धि ।[६] युवाम् । एव । हि[७] । रक्षणाय[८] । पुरातनाय[९] । परिवृणीमहे[१०] । प्रकृष्टभूतिकौ[११] । ता[१२] इच्छन्तः । शोभनबन्धू[१३] । सख्याय[१४] च । प्रियाय । शूरौ[१५] । दातृतमौ[१६] । पितराविव[१७] । सुखस्य भावयितारौ ।

ता वां धियोऽवसे वाजयन्तीराजिं न जग्मुर्युवयूः सुदानू ।
श्रिये न गाव उप सोममस्थुरिन्द्रं गिरो वरुणं मे मनीषाः ॥ ८ ॥

ता वाम् । तौ । वाम्[१८] । कर्माणि[१९] । रक्षणाय । अन्नमिच्छन्ति[२०] । युद्धम्[२१] । इव । गच्छन्ति । हे शोभनदानौ[२२] ! यथा । श्रिये[२३] सोमं[२४] राजानम् । गावः[२५] । उपतिष्ठति[२६] । एवमिन्द्रावरुणौ[२७] ।

---

१. भवेताम् Sy.
२. रक्षणैः सह Sy.
३. दस्मा शत्रूणां हिंसकौ सन्तौ Sy.
४. परितकने निमित्तभूते सति, यद्वा रात्रिनामैतत् (Ngh. 4. 1.; N. 11. 25.) । रात्रौ हिंसकानां वधाय Sy.
५. VM. ignores च and नः ॥ नः अस्माकम् Sy.
६. हे इन्द्रावरुणौ ! Sy.
७. हि इति पादपूरणः Sy.
८. रक्षणाय । वृणीमह इति सम्बन्धः Sy.
९. पुरातनाय युवाभ्यां कृताय Sy.
१०. परितः प्रार्थयामहे Sy.
११. भूतिको P. प्रभवन्तौ Sy.
१२. गाः is suggested for ताः ॥ गा इच्छन्तो वयम् Sy.
१३. शोभनबन्धुभूतौ । आपिरिति बन्धुनाम । यद्वा सुष्ठु व्यापनशीलौ Sy.
१४. समानख्यानाय Sy.
१५. विक्रान्तौ Sy.
१६. मंहिष्ठा अतिशयेन पूज्यौ युवाम् Sy.
१७. पितरौ पुत्राय तद्वत् Sy.
१८. वा P., D. The words तौ and वाम् are omitted by M. युवाम् Sy.
१९. स्तुतयः Sy.
२०. रत्नमिच्छन्त्यः Sy.
२१. सङ्ग्रामम् Sy.
२२. शोभनफलदातारौ ! हे देवौ ! Sy.
२३. दध्यादिश्रयणाय Sy.
२४. सोम P., D. सोममिव Sy.
२५. गावम् M.
२६. उपतिष्ठन्ति is suggested for उपतिष्ठति ॥ उपतिष्ठन्ति प्रीणयन्तीत्यर्थः Sy.
२७. इन्द्रं वरुणं च Sy.

मदीयाः । गिरः[1] । मनीषा[2]श्वोपतिष्ठन्ति[3] ।[4]

इमा इन्द्रं वरुणं मे मनीषा अग्मन्नुप द्रविणमिच्छमानाः ।
उपेमस्थुर्जोष्टारइव वस्वो रघ्वीरिव श्रवसो भिक्षमाणाः ॥ ९ ॥

इमाः[5] । मदीयाः[6] । इमाः । मनीषाः[7] । धनम् । इच्छमानाः[8] । उपगच्छन्ति[9] । इन्द्रावरुणौ[10] । उपेमस्थुः[11], एनौ । धनस्य[12] । जोष्टार[13] इव याचका[14] आढ्यम्[15] । गन्त्र्य[16] इव च प्रजाः । अन्नम्[17] । भिक्षमाणाः[18] ।

अश्व्यस्य त्मना रथ्यस्य पुष्टेर्नित्यस्य रायः पतयः स्याम ।
ता चक्राणा ऊतिभिर्नव्यसीभिरस्मत्रा रायो नियुतः सचन्ताम् ॥ १० ॥

अश्व्यस्य[19] । अश्वसङ्घस्य[20] । आत्मनैव[21] । रथसङ्घस्य[22] । पुष्टेश्च[23] । नित्यस्य[24] च । धनस्य । पतयः[25] । स्याम । तौ[26] । कुर्वाणौ[27] । रक्षणैः[28] । नवतरैः[29] । असुरेभ्यस्त्रातारौ[30] । धनानि । नियुतश्च[31] । अस्मान् सचन्ताम्[32] ।

---

१. स्तुतयः Sy.
२. ०नीषया० P., D. मनस ईश्वराः Sy.
३. ०तिष्ठति P.
४. VM. ignores युवयूः ॥ युवां कामयमानाः पदातयः Sy.
५. Omitted by M.
६. मम Sy. ७. स्तुतयः Sy.
८. इषु is in परस्मैपद । इच्छमानाः । should therefore be इच्छन्त्यः ।
९. ०गच्छति D.
१०. इन्द्रं वरुणं च Sy.
११. उपास्थूः P., D. उपतिष्ठन्ते Sy.
१२. धनस्य लाभाय धनिकं स्वामिनमिव Sy.
१३. जोष्टर P. सेवकाः Sy.
१४. वाचकाः seems to have been used in the sense of बन्दिनः । याचकाः is suggested for वाचकाः ।
१५. आढ्यम् P.
१६. लघ्व्य इव शीघ्रगामिन्य इव Sy.
१७. अन्नस्य Sy.
१८. ०माणं P., D. एनमिन्द्रं वरुणं च Sy. १९. अश्वस्य D.
२०. ०संघस्य P. अश्वसमूहस्य Sy.
२१. स्वयमेवाप्रयत्नेन Sy.
२२. रथरूपस्य रथार्हस्य वा Sy.
२३. पोषस्य Sy.
२४. अविचलितस्य Sy.
२५. पतय P.
२६. देवौ Sy.
२७. चङ्क्रममाणौ गन्तारौ । भवतमिति शेषः Sy.
२८. रक्षाभिः Sy.
२९. नूतनाभिः Sy.
३०. अस्मासु Sy.
३१. अश्वाः Sy.
३२. सेवन्ताम् Sy.

आ नो॑ बृहन्ता बृह॒तीभि॑रू॒ती इन्द्र॑ या॒तं व॑रुण॒ वाज॑सातौ ।
यद्दि॒द्यव॒ः पृत॑नासु प्र॒क्रीळा॒न्तस्य॑ वां स्याम सनि॒तार॑ आ॒जेः ॥ ११ ॥

आ नः । आयातम्[1] । अस्मान् । महान्तौ[2] । महद्भिः[3] । रक्षणैः[4] । इन्द्रावरुणौ[5] ! सङ्ग्रामे[6] । यदि[7] । द्योतमाना[8] योद्धारः । प्रक्रीडन्ति[9] । युवयोः[10] स्वभूता वयम् । तस्य[11] । सङ्ग्रामस्य[12] । सम्भक्तारः । स्याम[13] ।[14]

## IV.42.

मम॑ द्वि॒ता रा॒ष्ट्रं क्ष॒त्रिय॑स्य वि॒श्वायो॒र्विश्वे॑ अ॒मृता॒ यथा॑ नः ।
क्रतुं॑ सचन्ते॒ वरु॑णस्य दे॒वा राजा॑मि कृ॒ष्टेरु॑प॒मस्य॑ व॒व्रेः ॥ १ ॥

मम[15] द्विता । 'त्रसदस्युः[16] पौरुकुत्स्यः[17] षळाया[18] आत्मस्तवः[19]' । मम[20] । द्विधा[21] भवति । राष्ट्रम् । क्षत्रियस्य[22] पृथिव्यां दिवि चैश्वर्यात् । सर्वस्य देशस्य गन्तुः[23] । सर्वे । देवाः । यथा ।

---

१. आगच्छतम् Sy.
२. हे महान्तौ ! Sy.
३. मरुद्भिः P. मद्भिः D. महतीभिः Sy.
४. ऊतिभिः रक्षाभिः Sy.
५. हे इन्द्र ! वरुण ! Sy.
६. अन्नलाभनिमित्तभूते वा Sy.
७. यस्मिन्नाजौ सङ्ग्रामे Sy.
८. दिद्यवः । आयुधनामैतत् । आयुधानि शत्रुसम्बन्धीनि Sy.
९. प्रक्रीडन्ते Sy.
१०. युवयोरनुग्रहात् Sy.
११. तादृशस्य Sy.
१२. युद्धस्य Sy.
१३. भवेम Sy.
१४. VM. ignores पृतनासु ॥ पृतनासु सेनासु Sy. Ms. D. puts the figure ॥४१॥ here to indicate the end of forty-first hymn. No such number is given in P. and M.
१५. 'मम द्विता' इति दशर्चं दशमं सूक्तम् । पुरुकुत्सस्य पुत्रस्त्रसदस्यू राजर्षिः । आद्यासु षट्स्वात्मनः स्तुत्यत्वात् आत्मा देवता । अवशिष्टानां चतसृणामिन्द्रावरुणौ देवता । त्रिष्टुप् छन्दः । अत्रानुक्रमणिका—'मम द्विता दश त्रसदस्युः पौरुकुत्स्यः षळाद्या आत्मस्तवः' (KSA. 23. 42. p. 18.) इति । उक्तो विनियोगः पूर्वसूक्ते Sy.
१६. ०स्यु P.
१७. ०स्युः P., D.
१८. षडाद्या M.
१९. A fragment of a sentence of KSA. 23. 42. p. 18.
२०. ममेत्यात्मनो निर्देशः, त्रसदस्योः Sy.
२१. क्षितिस्वर्गभेदेन द्वित्वापन्नम् Sy.
२२. क्षत्रियजात्युत्पन्नस्य Sy.
२३. कृत्स्नमनुष्याद्यधीनस्य Sy.

अस्माकं वशवर्तिनो[1] भवन्त्येतदेवाह[2] क्रतुमिति वरुणभूतस्य[3] मम । कर्म[4] । सेवन्ते, देवानुक्तमनुतिष्ठन्ति[5] । तथेश्वरो[6] भवामि । कृष्टेः[7] । अन्तिभूतस्य[8] । पृथिव्यां[9] वर्तमानस्य मद्भयादमृत्युग्रस्तस्य[10][11] तत एव जीर्णस्येति ।

**अहं राजा वरुणो मह्यं तान्यसुर्याणि प्रथमा धारयन्त ।**
**क्रतुं सचन्ते वरुणस्य देवा राजामि कृष्टेरुपमस्य वव्रेः ॥ २ ॥**

अहं राजा । अहम्[12] । राजा । वरुणो भवामि । मह्यम्[13] । तानि[14] । पुरातनानि[15] । असुरवधनिमित्तानि[16] कर्माणि । सर्वे देवा अधारयन्त[17] । दहनोत्क्षेपणादिकं ममाज्ञयानुतिष्ठन्ति[18] तदेवोक्तं क्रतुमिति[19] ।

**अहमिन्द्रो वरुणस्ते महित्वोर्वी गभीरे रजसी सुमेके ।**
**त्वष्टेव विश्वा भुवनानि विद्वान्त्समैरयं रोदसी धारयं च ॥ ३ ॥**

अहमिन्द्रः । अहम्[20] । इन्द्रश्च[21] । वरुणश्च[22] भवामि । ते[23] । द्यावापृथिव्यौ[24] । माहात्म्येन[25] ।

---

१. वशेत्तिनो M. अस्माकं भवन्ति तथा राष्ट्रं प्रजाश्चेत्यर्थः Sy.
२. एव is omitted by M.
३. वारकस्य वरुणात्मनो वा Sy.
४. सर्व P. कर्मा M.
५. ०वानुक्तमितिष्ठ० P. ०वानुक्तमतिष्ठ० D. देवा अनुक्त० or देवा नानुक्त० is suggested for देवानुक्त०
६. अहञ्च राजामि । राजतिरैश्वर्यकर्मा । सर्वेश्वरो भवामि । यद्वा उपमस्य वव्रेः कृष्टे राजामीति योज्यम् Sy.
७. मनुष्यस्य तद्वतो वा Sy.
८. अतिभू P., D. उपमस्य । अन्तिकनामैतत् (Ngh. 2. 16.) । सर्वेषामन्तिकतमस्य Sy.
९. पृथिव्यां वर्तमानस्य is omitted by P. वव्रेः, रूपनामैतत् (Ngh. 3. 7.) रूपवतो मम Sy.
१०. मत् P.
११. ०भयाद् मृत्यु० is suggested for ०भयादमृत्यु०
१२. अहमेव च Sy.
१३. मदर्थमेव Sy.
१४. प्रसिद्धानि Sy.
१५. मुख्यानि Sy.
१६. असुरविघातकानि बलानि Sy.
१७. अधारयन् देवाः Sy.
१८. ०दिकर्मममाज्ञ० P., D.
१९. VM. ignores क्रतुम् । सचन्ते । वरुणस्य । देवाः । राजामि । कृष्टेः । उपमस्य and वव्रेः । These words are explained by him in the previous stanza. Sy. remarks—शिष्टं गतम् ।
२०. त्रसदस्युः Sy.
२१. अहमश्च P. इन्द्रोऽप्यस्मि Sy.
२२. वरुणश्चाहम् Sy.
२३. M. adds च after ते ।
२४. ०थिव्यो P.
२५. महित्वेन Sy.

उर्वी[1] । गम्भीरे[2] । शोभमाने[3] । यथा त्वष्टा[4] । सर्वाणि । भूतानि । सङ्गमयति[5] । धारयति[6] । च तद्वदहमपीति[7] ।

**अ॒हम॒पो अ॑पिन्वमु॒क्षमा॑णा धा॒रय॒ं दिव॒ं सद॑न ऋ॒तस्य॑ ।**
**ऋ॒तेन॑ पु॒त्रो अदि॑तेर्ऋ॒तावो॒त त्रि॒धातु॑ प्रथय॒द्वि भूम॑ ॥ ४ ॥**

अहमपः । अहम्[8] । अपः । सिञ्चन्तीः[9] । अपिन्वम्[10] । अन्तरिक्षलोकम्[11] । धारयन् । उदकस्य[12] । आवासे[13] । अथ परोक्षमाह—अदितेः । पुत्रः । ऋतवान्[14] । यज्ञेनोदकेन[15] वा । त्रिधातु[16] । भूम[17] । व्यप्रथयत[18], त्रिधातुः[19] पृथिवी भवति 'तिस्रो भूमीः[20]' इति मन्त्रः[21][22] ।

**मां नर॒ः स्वश्वा॑ वा॒जय॑न्तो॒ मां वृ॒ताः स॒मर॑णे हवन्ते ।**
**कृ॒णोम्या॒जिं म॒घवा॒हमिन्द्र॒ इय॑र्मि रे॒णुम॒भिभू॑त्योजाः ॥ ५ ॥**

मां नरः[23] । माम्[24] । नरः[25] । शोभनाश्वाः । बलिनं[26] कुर्वन्तः । हवन्ते[27] । मामेव । सङ्ग्रामे ।

---

१. विस्तीर्णे Sy.
२. दुरवगाहे अवकाशवत्यौ वा Sy.
३. शोभनमाने M. सुरूपे Sy.
४. P. adds सति after त्वष्टा ॥ प्रजापतिरिव Sy.
५. सम्प्रेरयम् Sy.
६. धृतवानस्मि Sy.
७. VM. ignores रजसी and विद्वान् ॥ रजसी द्यावापृथिव्यौ ते अप्यहमेव । विद्वान् जानन्नहम् Sy.
८. अहमेव Sy.
९. ०ञ्चती M. सिञ्चतीः Sy.
१०. असेचयम् Sy.
११. ०पिबन्नन्तरिक्षेलो० P. ०पिबन्नन्तरीक्षे लो० D. द्युलोकम् । यद्वा उदकाधारे स्थाने दिवमादित्यं धारयम् Sy.
१२. आदित्यस्य वा Sy.
१३. वासे D. स्थाने निमित्ते सति Sy.
१४. वन् P. ऋतावा यज्ञवान् अभूवम् Sy.
१५. अहमेव उदकेन निमित्तेन Sy.
१६. त्रिप्रकारम् Sy.
१७. भ्रम M. व्याप्तमाकाशम् Sy.
१८. व्यप्रथय P. विशेषेण प्रथयत् । मदर्थमेव क्षित्यादिलोकत्रयमकार्षीत् परमेश्वरः Sy.
१९. त्रिधातु M., D.
२०. RV. II. 27. 8.
२१. P. adds अहमिन्द्रः before मन्त्रः । The passage त्रिधातुः. . .मन्त्रः should immediately follow त्रिधातु and precede भूम ।
२२. VM. ignores उत ॥ उत अपि च Sy.
२३. नरं P., D.
२४. मामेव Sy.
२५. नरं D. The words माम् and नरः are omitted by P. नेतारो भटा अनुगच्छन्तीति शेषः Sy.
२६. सङ्ग्राममिच्छन्तः Sy.
२७. आह्वयन्ति युद्धार्थम् Sy.

शत्रुभिर्वृताः[1]। करोमि। युद्धम्[2]। अहम्। मघवा[3]। इन्द्रः[4]। प्रेरयामि च युद्धे। रेणुम्। अभिभावुकबलः[5]।

**अहं ता विश्वा चकरं नकिर्मा दैव्यं सहो वरते अप्रतीतम्।**
**यन्मा सोमासो ममदन्यदुक्थोभे भयेते रजसी अपारे॥ ६॥**

अहं ता। अहम्[6]। तानि वृत्रवधादीनि[7]। सर्वाणि कर्माणि। कृतवानस्मि। माम्। देवसम्बन्धि। बलम्। शत्रुभिरप्रतिगतम्[8]। वारयति[9]। यथा[10]। माम्। सोमाः। अमदन्[11]। यथा[12] च। उक्थानि[13]। तदानीमुभौ[14]। लोकौ। मत्तो बिभ्यतः[15]। अपर्यन्तपारौ[16], इन्द्रावरुणाभ्यामधिष्ठितो नूनं कदाचिदासीत् त्रसदस्युरिति[17]।[18]

**विदुष्टे विश्वा भुवनानि तस्य ता प्र ब्रवीषि वरुणाय वेधः।**
**त्वं वृत्राणि शृण्विषे जघन्वान्त्वं वृताँ अरिणा इन्द्र सिन्धून्॥ ७॥**

विदुष्टे[19]। तस्य[20]। तवेन्द्र! विश्वानि[21] कर्माणि। जानन्ति[22]। भूतानि[23]। त्वं च तानि। विधातः[24]। वरुणाय[25] सख्ये। प्रब्रवीषि[26]। त्वम्। वृत्राणि[27]। घ्नन्[28]। श्रूयसे[29]। त्वम्[30]। वृत्रेण

---

१. वताः P., D. वृताः सन्तः Sy.
२. रणम् Sy.
३. धनवान् Sy.
४. इन्द्रः सन् Sy.
५. अभिभावुकमबलः D. ०भिभवुकदकमबलः P. परेषामभिभाविबलोऽहम् Sy.
६. Omitted by M. त्रसदस्युः Sy.
७. प्रसिद्धानि Sy.
८. अकार्यम् Sy.
९. पार० P.
१०. यस्मात् Sy.
११. अमदयन् Sy.
१२. यदा is suggested for यथा॥ यच्च Sy.
१३. शस्त्राण्यपि ममदन् तस्मात् मत्तः Sy.
१४. द्यावापृथिव्यौ Sy.
१५. चलतः Sy.
१६. ०वारौ P., D. दूरपारे Sy.
१७. ०स्युविति D.
१८. VM. ignores नकिः॥ नैव Sy. It goes with वारयति।
१९. इतः परमिन्द्रावरुणयोः स्तुतिः। हे वरुण! Sy.
२०. कर्मणि षष्ठी। तं त्वाम् Sy.
२१. सर्वाणि Sy.
२२. जानते P.
२३. भूतजातानि Sy.
२४. ०धात् D. हे वेधः स्तोतृनामैतत्। हे स्तोतः! Sy. वेधा मेधाविनाम Ngh. 3. 15.
२५. वरुणम् Sy.
२६. प्र is omitted by D.
२७. वित्राणि D. वैरिणः Sy.
२८. हतवानिति Sy.
२९. जूयसे D. श्रेयसे M.
३०. किञ्च हे इन्द्र! Sy.

वृतान्[1] । इन्द्र[2] ! निरगमयः[3] । सिन्धून्[4] ।

**अस्माकमत्र पितरस्त आसन्त्सप्त ऋषयो दौर्गहे बध्यमाने ।**
**त आयजन्त त्रसदस्युमस्या इन्द्रं न वृत्रतुरमर्धदेवम् ॥ ८ ॥**

[5] अस्माकमत्र । अस्माकम्[6] । अस्मिन् लोके[7] । ते[8] । पितरः[9] । आसन्[10] । सप्त । ऋषयः[11] । दुर्गहकुलजाते मयि[12] । शत्रुभिर्बध्यमाने[13] तवेन्द्रश्च[14] मामध्यतिष्ठत् अयेन्द्राधिष्ठितं[15] माम् । ते[16] । आयजन्त[17] तत्र । त्रसदस्युम् । अस्याः[18] पृथिव्याः । इन्द्रम् । इव । वृत्राणां[19] हन्तारम् । अर्धदेवम्[20], इन्द्रस्य स्वामी[21] त्रसदस्युश्च तमिन्द्राधिष्ठितमयजन्तेति ।

---

१. आच्छन्नान् Sy.
२. ०तानीन्द्र D.
३. अगमयः Sy.
४. The passage beginning with भूतानि and ending with सिन्धून् is omitted by P. स्यन्दनस्वभावानपसङ्घान् Sy.
५. पुरुकुत्सस्य महिषी दौर्गहे बन्धनस्थिते ।
पत्यावराजकं दृष्ट्वा राष्ट्रं पुत्रस्य लिप्सया ॥
यदृच्छया समायातान् सप्तर्षीन्पर्यपूजयत् ।
ते च प्रीताः पुनः प्रोचुर्यजेन्द्रावरुणौ भृशम् ॥
सा चेन्द्रावरुणाविष्ट्वा त्रसदस्युमजीजनत् ।
इतिहासमिमं जानन्नृषिर्ब्रूते ऋचाविह ॥
Sy. DDN. after these ślokas adds त्रसदस्युरिन्द्रावरुणौ त्रिष्टुभा तुष्टावेति ।
६. मस्मा० D.
७. अथ अत्रास्मिन्नराजके देशेऽस्यां पृथिव्यां वा Sy., DDN.
८. The passage beginning with अस्माकमत्र and ending with ते is omitted by P.
९. पालयितार उत्पादकाः Sy., DDN.
१०. अभवन् Sy., DDN.
११. प्रसिद्धाः Sy. त एते सप्तर्षयः प्रसिद्धाः DDN.
१२. दुर्ग्रह D. दु(दौ)र्ग्रह० M. दुर्गहस्य पुत्रे पुरुकुत्से Sy.
१३. बध्यमाने दृढं पाशैर्यस्मात् Sy. दृढं पाशैर्बध्यमाने सति DDN.
१४. कश्चे० P.
१५. न्द्रातिष्ठि० M.
१६. Omitted by P.
१७. प्रादुरिन्द्रावरुणयोरनुग्रहात् Sy. 'यज देवपूजासङ्गतिकरणदानेषु' DDN.
१८. अस्यै पुरुकुत्सान्यै Sy.
१९. वृत्रस्य शत्रोर्हन्तारम् Sy. कीदृशं तम् ? DDN.
२०. अर्द्धदे० D. अद्धेदे० P. देवानामर्धे समीपे वर्तमानम् । 'यत् सर्वेषामर्धमिन्द्रः प्रति तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तमः' (TS. 5. 4. 8. 3.) इति तैत्तिरीयकम् Sy. DDN. also quotes the *Brāhmaṇas* with a slight variation and adds देवानामूर्ध्वभूतं इन्द्रं न इन्द्रमिव स्थितं पुत्रं दत्तवन्तः ।
२१. स्वमि P., D.

पुरुकुत्सानी हि वामदाशद्धव्येभिरिन्द्रावरुणा नमोभिः ।
अथा राजानं त्रसदस्युमस्या वृत्रहणं ददथुरर्धदेवम् ॥ ९ ॥

पुरुकुत्सानी हि । त्रसदस्योर्माता पुरुकुत्सस्य स्त्री । वां । हि । दानं कृतवती । हे इन्द्रावरुणौ ! हविर्भिः । नमस्कारैश्च युक्ता । तौ युवां प्रीतौ त्रसदस्युम् । राजानम् । अस्याः पृथिव्याः । ददथुः ।

राया वयं ससवांसो मदेम हव्येन देवा यवसेन गावः ।
तां धेनुमिन्द्रावरुणा युवं नो विश्वाहा धत्तमनपस्फुरन्तीम् ॥ १० ॥

राया वयम् । हे इन्द्रावरुणौ ! वाम् भजमानाः । वयम् । धनेन । मदेम । यथा हव्येन । देवा मदन्ति । यवसेन च । गावः । तदर्थं ताम् । धेनुम् । इन्द्रावरुणौ । युवाम् ।

---

१. ०त्सानि P.

२. न्ती P., D. पुरुकुत्सस्य पत्नी ऋषिप्रेरिता Sy.

३. या M. वाम् is suggested for वा ॥ युवाम् Sy.

४. खलु Sy.

५. अप्रीणयत् Sy.

६. ०भिन्नम० P. स्तुतिभिश्च Sy.

७. ता P. अतो M.

८. प्रीतो P.

९. अस्यं पुरुकुत्सान्यं Sy.

१०. पृथिव्य P.

११. ददथु P., D.
दत्तवन्ताविति Sy.

१२. VM. ignores अथ । वृत्रहणम् and अर्धदेवम् ।
वृत्रहणम् अर्धदेवमुक्तलक्षणं पुत्रम् Sy.

१३. मन्त्रदृक् कामदुघां प्रार्थयते Mah. इह कामदुघां प्रार्थयते मन्त्रदृक् U.

१४. युवां सम्भक्तारः Sy. 'वन षण सम्भक्तौ' इत्यस्य क्वसौ रूपम् । धनेन सम्भक्ताः सम्पन्नाः सन्तः Mah. सम्भक्ताः सन्तः U.

१५. P. reads यद्धनेन यद्धनेम for वयम् । धनेन ॥ उत्तरार्धे तामिति तदः श्रवणाविह यदोऽध्याहारः । यथा धेन्वा गृहे सत्या Mah., U.

१६. भजेम P. हृष्टाः स्याम Mah., U.

१७. यथा हविषा सम्भक्ता देवाः Mah., U.

१८. मोदन्ते Sy.
हृष्यन्ति Mah., U.

१९. घासेन गवाह्निकादिना गावो हृष्यन्ति Mah. गवाह्निकादिना गावो हृष्टा भवन्ति U.

२०. तथाभूताम् U.

२१. प्रीणयित्रीं रयिम् Sy.

अस्मभ्यम्[1] । दत्तम्[2] । सर्वदा[3] । अनपस्फुरन्तीं[4] गुणवतीमिति[5] ।

IV.43.

क उ॑ श्रवत्कत॒मो य॒ज्ञिया॑नां व॒न्दारु॑ दे॒वः कत॒मो जु॑षाते ।
कस्ये॒मां दे॒वीम॒मृते॑षु प्रेष्ठां हृ॒दि श्रे॑षाम सुष्टु॒तिं सु॑ह॒व्याम् ॥ १ ॥

क उ श्रवत्[6] ॥ पुरुमीळ्हाजमीळ्हौ[7] सौहोत्रौ[8] ॥ कः[9] । कतमः । वा[10] । शृणोति[11] । देवमध्ये[12] । स्तोत्रम्[13] । कतमः । देवः । सेवते । कस्य[14] । इमाम् । देवीम्[15] । देवमध्ये[16] ।

---

१. अस्मद् P. अस्माकम् Sy.
२. अनन्यगामिनीं दत्तमित्यर्थः Mah., U.
३. विश्वस्य हन्तारौ । यद्वा विश्वाहेत्यव्ययम्, सर्वदेत्यर्थः Sy. विश्वाहेति सततं दानक्रियार्थम् U.
४. अनवस्फु P., D. अनवहिंसिताम् Sy. स्फुरतिर्गत्यर्थः । अपस्फुरति पुरुषान्तरं गच्छतीत्यपस्फुरन्ती नापस्फुरन्ती ताम् Mah. अपेत्यापेत्य या पुरुषान्तरात्पुरुषान्तरं गच्छति साऽपस्फुरन्ती । अपस्फुरन्ती न भवतीत्यनपस्फुरन्ती ताम् U. This stanza=YV. 7. 10.
५. स श्रीणाति । राया वयꣳ ससवाꣳसो मदेम हव्येन देवा यवसेन गावः । तां धेनुं मित्रावरुणा युवं नो विश्वाहा धत्तमनपस्फुरन्तीमेष[1] ते योनिर्ऋतायुभ्यां त्वेति सादयति स यदाहर्तायुभ्यां त्वेति ब्रह्मवाऽऋतं ब्रह्म हि मित्रो ब्रह्मो ह्यृतं वरुण एवायुः संवत्सरो हि वरुणः सम्वत्सर आयुस्तस्मादाहैष ते योनिर्ऋतायुभ्यां त्वेति SB. 4. 1. 4. 10. p. 350. Ms. D. puts the figure ॥४२॥ here to indicate the end of forty-second hymn. No such number is given in P. and M.
६. 'क उ श्रवत्' इति सप्तर्चमेकादशं सूक्तम् । सुहोत्रपुत्रौ पुरुमीळ्हाजमीळ्हावृषी । त्रिष्टुप् छन्दः । अश्विनौ देवता । अत्रानुक्रमणिका—'क उ श्रवत्सप्त पुरुमीळ्हाजमीळ्हौ सौहोत्रौ त्वाश्विनं हि' (KSA. 23. 43. p. 18.) इति । प्रातरनुवाकाश्विनशस्त्रयोराश्विने क्रतौ त्रैष्टुभे छन्दसीदमादिके द्वे सूक्ते । 'धेनुः प्रत्नस्य क उ श्रवत्' (ĀSS. 4. 15.) इति सूत्रितत्वात् Sy.
७. ०मीढा P., D.
८. ०होत्र D. ०हो रात्र P. Cf. KSA. 23. 43. p. 18.
९. का P., D. देवः Sy.
१०. Omitted by P. देवः Sy.
११. शृणुयात् स्तुतिम् Sy.
१२. यज्ञार्हाणां देवानां मध्ये Sy.
१३. वन्दनशीलं स्तोत्रम् Sy.
१४. तस्य P.
१५. द्योतमानाम् Sy.
१६. ०मध्य P. अमृतेषु मध्ये Sy.

---

[1] 'एष ते योनिर्ऋतायुभ्यां त्वा' इत्यधिकं यजुषि ।

प्रियतमाम्[1] । हृदये[2] । श्लेषयेम[3] । शोभनां स्तुतिम् । हविर्युक्ताम्[4] ।

**को मृ॑ळाति कत॒म आग॑मिष्ठो दे॒वाना॑मु कत॒मः शंभ॑विष्ठः ।**
**रथं॒ कमा॑हुर्द्र॒वद॑श्वमा॒शुं यं सूर्य॑स्य दुहि॒तावृ॑णीत ॥ २ ॥**

को मृळाति[5] । कः[6] । सुखयति[7] । को वा । अत्यन्तमागच्छति[8] । देवानां मध्ये । कतमः । वा । अत्यन्तं सुखमुत्पादयति[9] । कं वा । रथम् । आहुः[10] । क्षिप्राश्वम् । क्षिप्रगन्तारमाह[11] । तं रथमश्विनोः[12] स्वभूतम् । सूर्यस्य । दुहिता[13] । स्वयम्वरेऽवृणीत[14] तथाऽश्विनावेव मृळयितारा-वित्यादि द्रष्टव्यम् ।

**म॒क्षू हि ष्मा॒ गच्छ॑थ॒ ईव॑तो॒ द्यूनिन्द्रो॒ न श॒क्तिं परि॑तक्म्यायाम् ।**
**दि॒व आजा॑ता दि॒व्या सु॑प॒र्णा कया॒ शची॑नां भवथः॒ शचि॑ष्ठा ॥ ३ ॥**

मक्षू[15] हि । शीघ्रम् । हि[16] । स्म[16] । युवां गच्छथः । गमनवतः[17] । प्रादुर्भूतान् दिवसान्[18] । यथा । इन्द्रः । रात्र्यां[19] गतायाम् । शक्तिमधितिष्ठति[20] । दिवः[21] । आजातौ[22] । दिवि भवौ[23] ।

---

१. ०तमा P., D.
प्रियतराम् Sy.
२. हृदि Sy.
३. श्लेषमयाम P., D. श्राययेम वा । अश्विनावन्तरेण स्तुतेः को देवः स्वामी भवेदिति Sy.
४. शोभनान्नोपेतां शोभनैर्हविर्भिर्युक्तां वा Sy.
५. को मृळयाति is omitted by P.
६. देवः Sy.
७. सुखयेदस्मान् Sy.
८. आगन्तृतमोऽस्मद्यज्ञं प्रति Sy.
९. ०मुत्पा० P. सुखस्य भावयितृतमः । एवमुक्तगुणविशिष्टः को भवेदश्विनावन्तरेणेति भावः Sy.
१०. ब्रुवते Sy.
११. ०माहु P. आहुः is suggested for आह ।
१२. अश्विनो P.
१३. पत्नी Sy.
१४. ०म्वरं वृ० P. समभजत् । तं कं रथं वेगवन्तमाहुः Sy.
१५. मंक्षु P., D.
१६. 'हि स्म' इति पूरणौ Sy.
१७. गमनपथः M.
आगामिनः Sy.
१८. सुत्यासम्बन्धिनः प्रति Sy.
१९. रात्रावतीतायाम् । प्रदर्शयतीति शेषः । सुत्याहन्युषःकाले इन्द्रो यथा गच्छति तद्वद् युवामपि गच्छतमित्यर्थः Sy.
२०. स्वकीयां शक्ति यथा Sy.
२१. द्युलोकात् Sy.
२२. आगतौ Sy.
२३. भवा M.

सुपतनौ[1] । कया स्तुत्या[2] । कर्मणामर्थाय[3] । भवथः[4] । कर्मवत्तमौ[5] ।

का वां भूदुपमातिः कया न आश्विना गमथो हूयमाना ।
को वां महश्चित्त्यजसो अभीक उरुष्यतं माध्वी दस्रा न ऊती ॥ ४ ॥

का वाम् । किम्[6] । अभवत्[7] । युवयोः । उपमानं[8] स्तोत्रम् । कयोपमित्या[9] । अस्मान् । आहूयमानौ[10] । वागच्छथः[11] । अश्विनौ ! कः[12] । वाम्[13] । महतः । वनत्यागस्य[14] । समीपे[15] भवति । हे नासत्यौ ! अस्मान् । रक्षतम्[16] । मधुमता[17] । गमनेन[18] । दर्शनीयौ[19] ![20]

उरु वां रथः परि नक्षति द्यामा यत्समुद्रादभि वर्तते वाम् ।
मध्वा माध्वी मधु वां प्रुषायन्यत्सीं वां पृक्षो भुरजन्त पक्वाः ॥ ५ ॥

उरु वाम्[21] । भृशम्[22] । युवयोः । रथः । द्याम्[23] । परि गच्छति । यदा[24] । अन्तरिक्षात्[25] । अभ्यावर्तते[26] मनुष्यान्[27] प्रति । वामिति पूरणम् । यथा[28] युवयोः । हे माध्वी[29] ! पक्वा[30] रश्मयः ।

---

१. शोभनगमनौ युवाम् Sy.
२. शच्या Sy.
३. युष्मत्सम्बन्धिनां कर्मणां शक्तीनां वा मध्ये Sy.
४. भवतः M.
५. The passage beginning with गमनवतः and ending with कर्मवत्तमौ is omitted by P., D. शक्तिमत्तरौ शोभनकर्मवन्तौ वा Sy.
६. का Sy.
७. भवेत् Sy.
८. उप समीपे मातिर्मानं गुणानां परिच्छित्तिर्यस्यां सा स्तुतिः Sy.
९. स्तुत्या Sy.
१०. The passage beginning with का वाम् and ending with आहूयमानौ is omitted by P., D. आहूयमानौ सन्तौ Sy.
११. अगच्छथः M. वागच्छथे P. आगच्छथः is suggested for वागच्छथः ।
१२. को भवेत् Sy.
१३. युवयोः Sy.
१४. त्यज्यते परित्यज्यते सर्वैरिति त्यजः क्रोधस्तस्य सोढा Sy.
१५. आसन्नप्रदेशे Sy.
१६. ऋक्षतम P. उरुष्यतम्—रक्षाकर्मैतत् । रक्षतम् Sy.
१७. हे मधुररसस्योदकस्य स्रष्टारौ ! Sy.
१८. ऊत्या रक्षया Sy.
१९. ०नीय M. हे शत्रूणामुपक्षपयितारावश्विनौ ! Sy.
२०. VM. ignores चित् ।
२१. हे अश्विनौ ! Sy.
२२. प्रभूतम् Sy.
२३. द्युलोकस्य परितः Sy.
२४. यस्मात् Sy.
२५. समुद्द्रवणसाधनादन्तरिक्षात् Sy.
२६. आभिमुख्येनार्वाक् गच्छति Sy.
२७. वां प्रति Sy.
२८. यदा is suggested for यथा ॥ यस्मात् Sy.
२९. उक्तलक्षणौ ! Sy.
३०. पक्वा यवाः Sy.

अन्नम्[1] । भरन्ति[2] । तदानीं मधुमन्तो मधुना[3] सहाविरतम्[4] । मधु[5] । सिञ्चन्ति[6] ।[7]

सिन्धुर्ह वां रसया सिञ्चदश्वान्घृणा वयोऽरुषासः परि ग्मन् ।
तदू षु वामजिरं चेति यानं येन पती भवथः सूर्यायाः ॥ ६ ॥

सिन्धुः । समुद्रः[8] । स्वभूतया[9] नद्या[10] । युवयोः । अश्ववान् । असिञ्चत्[11] । दीप्त्या युक्ताः[12] । युवयो रथमयः[13] । आरोचमानाः[14] । परिगच्छन्ति[15] । तत् । युवयोः । सुष्ठु । ज्ञायते । क्षिप्रम्[16] । यानम्[17] । येनेति स्पष्टम्[18] ।[19]

इहेह यद्वां समना पपृक्षे सेयमस्मे सुमतिर्वाजरत्ना ।
उरुष्यतं जरितारं युवं ह श्रितः कामो नासत्या युवद्रिक् ॥ ७ ॥

इहेह[20] । इह चेह[21] च । यत्[22] । वाम्[23] । समना[24] योग्या समानी[25] । सम्पृक्ता[26] भवति । ततः सा । इयम्[27] । अस्माकम्[28] । सुमतिः[29] स्तुतिः । रमणीयधना[30] भवति । रक्षतम् । स्तोतारम्[31] ।

---

१. युवयोः सोमम् Sy.
२. भरति D. प्राप्नुवन्ति । तस्मादभिवर्तते वामिति Sy.
३. मधुरेण पयसा Sy.
४. सह विरतं M.
५. मधुरं सोमरसम् Sy.
६. सिञ्चन्त्यध्वर्यवः Sy.
७. VM. ignores सीम् ॥ सीं सर्वतः Sy. ८. समुद्र P. सिन्धुः स्यन्दमानो मेघ उदकं वा Sy.
९. स्वभूताया P., D.
१०. रसेन Sy.
११. असिञ्चन् P. असेचयत् Sy.
१२. युक्त्या M.
१३. पक्षिसदृशा वेतारो गन्तारो वाश्वाः Sy.
१४. आरोचमानाः सन्तः Sy.
१५. ०गच्छति P., M. परितो गच्छन्ति Sy.
१६. अजिरम्–क्षिप्रनामैतत् Ngh. 2. 15.
१७. ज्ञानं M. गमनसाधनं प्रसिद्धो रथः Sy.
१८. P. adds यदान्तरिक्षा before स्पष्टम् ॥ येन रथेन Sy.
१९. VM. ignores ह । ऊ । पती । भवथः and सूर्यायाः ॥ सूर्यायाः । पती पालयितारौ वोढारौ भवथः स रथश्चेतीति Sy.
२०. हे अश्विनौ ! Sy.
२१. अस्मिन्नेव यज्ञे Sy.
२२. यस्माद् यया वा सुमत्या Sy.
२३. तौ युवां सुमत्या Sy.
२४. सवना M. समानमनस्कौ सदृशावित्यर्थः Sy. २५. समनी M.
२६. संवृक्ता M. स्तुत्या संयोजयामि Sy.
२७. इदानीं क्रियमाणा Sy.
२८. अस्माकमेव फलवती भवत्विति शेषः Sy.
२९. शोभनस्तुतिः Sy.
३०. रमणीयं धनं D. हे रमणीयान्नौ Sy. 'अन्नं वै वाजः' SB. 9.3.4.1. P. 728.
३१. गरितारं स्तोतारं माम् Sy.

युवाम् । खलु । हे नासत्यौ[1] ! कामः[2] । आपः[3] । युवामेव[4] प्रतिगच्छन् भवति[5] ।

IV.44.

तं वां रथं वयमद्या हुवेम पृथुज्रयमश्विना संगतिं गोः ।
यः सूर्यां वहति वन्धुरायुर्गिर्वाहसं पुरुतमं वसूयुम् ॥ १ ॥

तं[6] वाम्[7] । तम् । युवयोः । रथम् । वयम्[8] । अद्य[9] । ह्वयामः[10] । पृथुवेगम्[11] । अश्विनौ ! सङ्गमनम्[12] । उदकस्य[13] । यः[14] । सूर्यदुहितरम्[15] । वहति[16] । बन्धुरवान्[17] । तं गिरां[18] वोढारम् । महत्तमम्[19] । धनानीच्छन्तं[20] ह्वयामः ।

युवं श्रियमश्विना देवता तां दिवो नपाता वनथः शचीभिः ।
युवोर्वपुरभि पृक्षः सचन्ते वहन्ति यत्ककुहासो रथे वाम् ॥ २ ॥

युवम् । युवाम् । श्रियम् । अश्विनौ ! हे देवपुत्रौ[21] ! देवतानां[22] मध्ये[23] । ताम्[24] । प्रयच्छथः[25] ।

---

१. अश्विनौ ! Sy. २. अस्मदीयः Sy.
३. आपः seems to be the explanation. आप is therefore suggested for आपः ॥ प्राप्तः Sy.
४. आवयोर्वा० P., M.
५. Ms. D. puts the figure ॥४३॥ here to indicate the end of forty-third hymn. No such number is given in P. and M.
६. 'तं वां रथम्' इति सप्तर्चं द्वादशं सूक्तम् । पुरुमीळ्हाजमीळ्हावेव ऋषी । त्रिष्टुप् छन्दः । अश्विनौ देवता 'तं वाम्' (KSA. 23. 44. p. 18.) इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः Sy. ७. The words तं and वाम् are omitted by P.
८. स्तोतारः Sy.
९. सुत्याहनि Sy.
१०. आह्वयामः Sy.
११. पृथुद्वेगम् P. पृथुद्वेगमम् D. प्रथितवेगम् Sy.
१२. सङ्गमयितारम् Sy.
१३. गवाम् Sy. १४. रथः Sy.
१५. सूर्याम् Sy. १६. धारयति Sy.
१७. वधुवान् P. वधुरवान् D. रथे निवासाधारभूतः काष्ठो बन्धुरं तद्वान् Sy.
१८. गिरां स्तुतीनां वोढारम् Sy.
१९. महत्तं D. महत्तत् P. प्रभूततमम् Sy.
२०. धनं निच्छन्तं P. वसुमन्तम् Sy.
२१. ०पुत्रो M. हे दिवो नपाता आदित्यस्य पुत्रस्थानीयौ ! द्युलोकस्य वा न पातयितारौ ! Sy.
२२. देवते । विभक्तिव्यत्ययः Sy.
२३. ०वतामध्ये P., D.
२४. प्रसिद्धाम् Sy.
२५. ०थ D. सम्भजेथे । यद्वा वनतिर्दानार्थः Sy.

कर्मभिः[1] । युवयोः । शरीरम् । अन्नाद्यानि[2] । सेवन्ते[3] । वहन्ति । यदि[4] । अश्वाः[5] । रथे[6] । वाम्[7] ।

**को वा॑मु॒द्या क॑रते रा॒तह॑व्य ऊ॒तये॑ वा सु॒तपे॒याय॑ वा॒र्कैः ।**
**ऋ॒तस्य॑ वा व॒नुषे॑ पू॒र्व्याय॒ नमो॑ येमा॒नो अ॑श्वि॒ना व॑वर्तत् ॥ ३ ॥**

को वाम् । कः[8] । वाम्[9] । अद्य[10] । करोति[11] । दत्तहविष्कः[12] । रक्षणाय । सोमपानाय । च[13] । स्तोत्रैः[14] । यज्ञस्य[15] । वा । भजनाय[16] युवयोः । पुरातनाय[17] । अन्नम्[18] । नियच्छन्[19] । आवर्तयति[20] । भवन्तौ[21][22] ।

**हि॒र॒ण्यये॑न पुरुभू॒ रथे॑ने॒मं य॒ज्ञं ना॑स॒त्योप॑ यातम् ।**
**पिबा॑थ॒ इन्मधु॑नः सो॒म्यस्य॒ दध॑थो॒ रत्नं॑ विध॒ते जना॑य ॥ ४ ॥**

हिरण्ययेन[23] । हिरण्मयेन[24] । रथेन । बहुषु भवन्तौ[25] ! शिष्टं स्पष्टम्[26] ।

---

१. कर्मभिः शक्तिभिर्वा Sy.
२. अन्नाद्यमिव P., D. सोमलक्षणानि Sy.
३. प्राप्नुवन्ति Sy.
४. यदा Sy.
५. अश्ववश्वाः P., D. महान्तोऽश्वाः ! यद्वा स्तुतयो वां युवां रथे वहन्ति Sy.
६. रथा P., D.
७. व P. वा D.
८. यजमानः Sy.
९. युवयोः Sy.
१०. मध्ये D.
११. कुर्यात् स्तुतिम् Sy.
१२. दत्तसोमः Sy.
१३. वा Sy.
१४. मन्त्रैः Sy.
१५. यज्ञनवयज्ञस्य P. यज्ञवयज्ञस्य D. उदकस्य Sy.
१६. भजमानाय P., D. सम्भजनाय Sy.
१७. पुराणाय Sy.
१८. ०तनीयान्नं M. ०तनायोन्नं P. नमस्कारम् Sy.
१९. कुर्वाणः Sy.
२०. आवर्तयेद्यज्ञं प्रति Sy.
२१. हे अश्विनौ ! Sy.
२२. VM. explains वा once only.
२३. हिरण्मयेन D.
२४. Omitted by P.
२५. हे पुरुभू बहु भवन्तौ नासत्यौ ! Sy.
२६. VM. ignores इमम् । यज्ञम् । नासत्या । उप । यातम् । पिबाथः । इत् । मधुनः । सोम्यस्य । दधथः । रत्नम् । विधते and जनाय ॥ Sy. explains these words in the following manner—इमं यज्ञं उपयातम् । सोम्यस्य सोमसम्बन्धिनः । मधुनो मधुररसस्य । कर्मणि षष्ठ्यौ । सोमरसं पिबाथः पिबथः । विधते परिचरते जनाय मह्यं रत्नं रमणीयं धनं दधथो धारयथः । दधतेर्दानार्थस्य लेटि रूपम् Sy.

आ नों यातं दिवो अच्छां पृथिव्या हिरण्ययेंन सुवृता रथेंन ।
मा वांमन्ये नि यमन्देवयन्तः सं यद्दे नाभिः पूर्व्या वांम् ॥ ५ ॥

आ नः । विस्तृतायाः[1] । दिवः[2] । आयातम्[3] । अस्मान् । प्रति[4] । हिरण्मयेन[5] सुवर्तनेन[6] । रथेन । मा । वाम्[7] । अन्ये[8] । नियच्छन्तु[9] । यजमानाः[10] । यस्मात्[11] । अस्माभिः प्रथममेव[12] । युवयोः । बन्धनसाधनं[13] स्तोत्रम् । समाददे[14] ।

नू नों रयिं पुरुवीरं बृहन्तं दस्रा मिमाथामुभयेष्वस्मे ।
नरो यद्वामश्विना स्तोममावन्त्सधस्तुतिमाजमीळ्हासो अग्मन् ॥ ६ ॥

नू[15] नः । क्षिप्रम् । अस्माकम् । पुरुवीरम्[16] । महान्तम् । रयिम्[17] । कुरुतम्[18] । तत्राप्युभयेषु[19] । अस्मासु पुरुमीढाजमीढेषु । मनुष्याः[20] । युवयोः । क्रियमाणमिदं स्तोत्रं शुश्रूषया । यदा[21] । गच्छन्ति[22] । तदानीमजमीढाः[23] पुरुमीढाश्च । सह स्थित्वा स्तुतिम्[24] । गच्छन्ति[22] वक्तुमिच्छन्ति।[25]

---

१. पृथिव्याः सकाशाद्वा Sy.
२. द्युलोकात् Sy.
३. ०तायामिवाया० M.
४. अभिप्राप्तुम् Sy.
५. केन साधनेन ? हितरमणीयेन Sy.
६. शोभनावर्तनेन Sy.
७. युवाम् Sy.
८. M. reads मां मन्ये for मा । वाम् and अन्ये ।
९. ०न्तं P. नियमनं (मा) कुर्वन् Sy.
१०. देवौ युवामिच्छन्तो यजमानाः Sy.
११. यास्मात् P. यदस्मान् M.
१२. पूर्वार्हा इतरयष्टृभ्यः पूर्वभाविनी Sy.
१३. ०नः P. बन्धिका स्तुतिः Sy.
१४. सम्बध्नाति तस्मादायातम् Sy.
१५. नून P. नूनं D.
१६. बहुपुत्रोपेतम् Sy.
१७. धनम् Sy.
१८. कुरुत P., D.
१९. पुरुमीळ्हाजमीळ्हेषु Sy.
२०. नेतार ऋत्विजः पुरुमीळ्हसम्बन्धिनःSy.
२१. यादा P.
२२. अगमन् प्राप्ताः Sy.
२३. अजमीळ्हसम्बन्धिनोऽपि तैः सह Sy.
२४. सहस्तुतिम् Sy.
२५. VM. ignores दस्रा and अश्विना ॥ Ms. D. puts the figure ॥४४॥ here to indicate the end of forty-fourth hymn. No such number is given in P. and M.

इ॒हेह॒ यद्वां॑ स॒मना॑ पंपृ॒चे सेयम॒स्मे सुं॑म॒तिर्वा॑जरत्ना ।
उ॒रु॒ष्यतं॑ जरि॒तारं॑ यु॒वं ह॑ श्रि॒तः कामो॑ नासत्या युव॒द्रिक् ॥ ७ ॥

[ इहेह[1] ]

IV.45.

ए॒ष स्य भा॒नुरुदि॑यर्ति यु॒ज्यते॑ रथः॒ परि॑ज्मा दि॒वो अ॒स्य सान॑वि ।
पृ॒क्षासो॑ अस्मिन्मिथु॒ना अधि॒ त्रयो॒ दृति॑स्तु॒रीयो॒ मधु॑नो॒ वि र॑प्शते ॥ १ ॥

[2]एव स्यः ॥ वामदेवः ॥ सः । एषः[3] । सूर्यः[4] । उदेति[5] । युज्यते च । रथः[6] । परितो गन्ता । दिवः[7] । अस्य । [8]समुच्छ्रिते[9] देशे । अश्विनोस्तस्मिन् रथे । खाद्यपेयाद्यभेदात् त्रिविधानि । अन्नानि[10] । संश्लिष्टानि[11] च[12] तथा सन्ति[13] । मधुनः[14] पूर्णा । भस्त्रा[15] च । विराजते[16] ।[17]

---

१. The *pratīka* is supplied by the Editor. The stanza has already been explained. See RV. IV. 43. 7.

२. 'एष स्य भानुः' इति सप्तर्चं त्रयोदशं सूक्तम् । आदितः षड् जगत्यः । सप्तमी त्रिष्टुप् । मण्डलद्रष्टा वामदेव ऋषिः । अश्विनौ देवता । 'एष स्य त्रिष्टुबन्तम्' (KSA. 23.45. p. 18.) इति ह्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोर्जागते छन्दसीदं शस्यम् । तथा च सूत्रितम्—'अबोध्यग्निर्ज्म एष स्य भानुः' (ASS. 4. 15.) इति Sy.

३. पुरतो दृश्यमानः Sy.

४. दीप्तिमानादित्यः Sy.

५. ऊर्ध्वं गच्छति Sy.

६. पुरस्तात् रथश्च युवयोः सम्बन्धी Sy.

७. द्योतमानस्यादित्यस्य Sy.

८. गन्तास्य समु॰ P. गन्ताप्यसमु॰ D. सानौ समुच्छ्रितप्रदेशे । उदियर्तीति विरप्शत इति वा सम्बन्धनीयम् Sy.

९. देशे is omitted by D.

१०. त्रिविधाः । त्रेधा विहितं चान्नम्—'इदमन्नमशनं पानं खादश्च' इति हि श्रुतम् Sy.

११. मिथुनीभूताः । त्रिष्वपि पदार्थेषु मिथुनशब्दः तैत्तिरीयेषु दृश्यते—'माता पिता पुत्रस्तदेव तन्मिथुनम्' इति Sy.

१२. M. reads न for च and shows omission by some dots after न ।

१३. Omitted by M.

१४. ॰ना P. सोमरसस्य सम्बन्धी मधुपूर्णः Sy.

१५. रसद्रव्याधारः पदार्थश्चर्ममयो दृतिरित्युच्यते Sy.

१६. विविधं राजते Sy.

१७. VM. ignores अधि and तुरीयः ॥ अधि उपरिभागे । तुरीयः चतुर्थः Sy.

उद्वाँ पृक्षासो मधुमन्त ईरते रथा अश्वास उषसो व्युंष्टिषु ।
अपोर्णुवन्तस्तम आ परीवृतं स्वर्ण शुक्रं तन्वन्त आ रजः ॥ २ ॥

उद्वाम् । उद्गच्छन्ति । युवयोः । अन्नादीनि । प्रातः । मधुसंयुक्ताः । तमः । अपगमयन्तः । परिवृत्य स्थितम् । उदकम् । इव । निर्मलम् । ज्योतिः । सर्वतो विस्तारयत इति ।

मध्वः पिबतं मधुपेभिरासभिरुत प्रियं मधुने युञ्जाथां रथम् ।
आ वर्तनिं मधुना जिन्वथस्पथो दृतिं वहेथे मधुमन्तमश्विना ॥ ३ ॥

मध्वः । सोमम् । पिबत । सोमपेभिः । आस्यैः । अपि च । प्रियम् । रथम् । सोमपानार्थम् । युञ्जाथाम् । आसिञ्चतम् । मार्गस्य । पद्धतिम्, गमनमार्गम् । पीतशिष्टेन मधुना । मधुपूर्णं च । दृतिं कृत्वा । वहतमिति ।

१. उन्मुखं गच्छन्ति Sy.
२. आदि refers to रथाः and अश्वासः ॥ पृक्षास्त्रिविधान्नवन्तः । अश्वयुक्ता रथाः । यद्वा मधुमन्तः पृक्षाः, रथाः, अश्वासोऽश्वाः Sy.
३. व्रतं P., D. उषसो व्युच्छनेषु सत्सु Sy.
४. मधुना युक्ताः P. सोमरसोपेताः Sy.
५. तमोवगमयन्तं P. तमेवागमयन्तः D. अपाकुर्वन्तः Sy.
६. परितो व्याप्तम् Sy.
७. आदित्यः Sy.
८. निर्मल P., M. दीप्तम् Sy.
९. तेजश्च Sy.
१०. आकारश्चार्थे Sy.
११. ०यन्तः is suggested for ०यतः ॥ तन्वन्तः । यद्वा रजोऽन्तरिक्षं शुक्रं दीप्तं तन्वन्तः Sy.
१२. VM. ignores one आ ।
१३. मध्वं D.
१४. मधुरं सोमरसम् Sy.
१५. पिबतम् is suggested for पिबत ।
१६. सोमवेवोस्यैः P. सोमपेपोस्यैः D. सोमपैः is suggested for सोमपेभिः ॥ सोमपानार्हैः Sy.
१७. प्रिय M.
१८. मधुलाभाय Sy.
१९. अश्वैर्युक्तं कुरुतम् Sy.
२०. आ गच्छतमिति शेषः Sy.
२१. ०त P. प्रीणयतम् । यद्वैकं वाक्यम्, पथो वर्तनिमाकाशं जिन्वथः Sy.
२२. गमनमार्गान् Sy.
२३. वर्थनं P. यजमानगृहम् Sy.
२४. मधुमन्तम् Sy.
२५. धारयथः Sy.
२६. VM. ignores अश्विना ।

**हं॒सासो॒ ये वां॒ मधु॑मन्तो अ॒स्रिधो॒ हिर॑ण्यपर्णा उ॒हुव॑ उष॒र्बुधः॑ ।**
**उ॒द॒प्रुतो॑ म॒न्दिनो॑ मन्दिनि॒स्पृशो॒ मध्वो॒ न मक्षः॒ सव॑नानि गच्छथः ॥ ४ ॥**

हंसासः । अश्वाः[1] । ये । युवयोः । मधुमन्तः[2] । अक्षीणाः[3] । हिरण्मयकक्ष्याः[4] । वोढारः । उषर्बुधः[5] । उदकस्य गमयितारः[6] । मादयितारः[7] । मदकरस्य सोमस्य[8] निष्प्रष्टारस्तैः[9] । मधूनि[10] । इव[11] । मक्षिकाः[12] । सवनानीव[13] । गच्छथः[14] ।

**स्व॒ध्व॒रासो॒ मधु॑मन्तो अ॒ग्नय॑ उ॒स्रा ज॑रन्ते॒ प्रति॒ वस्तो॑र॒श्विना॑ ।**
**यन्नि॒क्तह॑स्तस्त॒रणि॑र्विचक्ष॒णः सोमं॑ सु॒षाव॒ मधु॑मन्त॒मद्रि॑भिः ॥ ५ ॥**

स्वध्वरासः । शोभनयज्ञाः[15] । सोमवन्तः[16] । यजमानानां होतृत्वमास्थिता अग्नयः[17] । अश्विनौ गत्वा । अह्नि[18] । प्रतिस्तुवन्ति[19] । यदि[20] । निर्णिक्तहस्तः[21] । क्षिप्रकारी[22] । यजमानः[23] । सोमम् । रसवन्तम्[24] । ग्रावभिः । सुनोति[25] ।[26]

---

१. हंसासः अध्वनि शीघ्रं गन्तारः Sy.
२. ०न्तौ P., D. माधुर्योपेताः Sy.
३. अद्रोग्धारः Sy.
४. हितरमणीयपर्णाः Sy.
५. ०बबु० D. उषसि बुध्यमानाः Sy.
६. गमयितो P. उदकस्य प्लावयितारः Sy.
७. हर्षयितारः Sy.
८. Omitted by M.
९. ०स्य० P., D.
१०. मधु Sy.
११. Omitted by P., D. मन्दिनिस्पृशः—मन्दिनं सोमं स्पृशन्तः । इत्थंलक्षणा अश्वा ये सन्ति तैरश्वैः Sy.
१२. मक्षिका P.
१३. सवनामिव P. सवनानि अस्मदीयानि Sy.
१४. गच्छथ P.
१५. शोभनयागसाधनाः Sy.
१६. होतव्यसोमवन्तः Sy.
१७. आग्नेयः P. आग्नयः D. गार्हपत्यादयः Sy.
१८. गत्वानि P. अन्वहमुषःकाले Sy.
१९. स्तुवन्ति Sy.
२०. यदा Sy.
२१. ०क्तं M. समन्त्रेणोदकेन शोधितहस्तः Sy.
२२. कर्मणस्तारयिता Sy.
२३. विविधं द्रष्टाध्वर्युः Sy.
२४. मधुमन्तम् Sy.
२५. अभिषुतवान् । तदा तेऽग्नयः स्तुवन्ति तस्मादागच्छतमित्यर्थः Sy.
२६. VM. ignores उस्रा ॥ उस्रा सह निवसन्तौ Sy.

आ॒के॒नि॒पासो॒ अह॑भि॒र्दवि॑ध्वतः॒ स्व१॒र्ण शु॒क्रं त॒न्वन्त॒ आ रजः॑ ।
सूर॑श्चि॒दश्वा॑न्युयुजा॒न ई॑यते॒ विश्वाँ॒ अनु॑ स्व॒धया॑ चेतथस्प॒थः ॥ ६ ॥

आकेनिपासः[1] । आसन्ने प्रातः सवने नितरां पातारः[2] । दिवसेभ्यः[3] । भृशं शरीरं[4] धूनयन्तः[5] । उदकम्[6] । इव । निर्मलम्[7] । तेजः[8] । कुर्वाणा गच्छन्ति[9] । भवतोरश्वान्[10] । सूर्यः । अपि[11] । भवद्भ्यां सह स्वरथे[12] नियुञ्जानः[13] । गच्छति । तौ युवां[14] सर्वान्[15] । मार्गान्[16] । अन्नेनोदकेन[17] वा प्रदित्सितेन सह गच्छन्तौ[18] । अनुक्रमेण जानीथो[19] दैव्यान् पार्थिवांश्च ।

प्र वा॑मवोचमश्विना धियं॒धा रथ॒ः स्वश्वो॑ अ॒जरो॒ यो अस्ति॑ ।
येन॑ स॒द्यः परि॒ रजां॑सि या॒थो ह॒विष्मं॑न्तं त॒रणिं॑ भो॒जमच्छ॑ ॥ ७ ॥

प्र वाम् । प्रावोचम्[20] । हे अश्विनौ ! कर्मणो विधाता[21] । युवयोः । यः[22] । रथ[23] । स्वश्वः[24] । जरारहितः[25] । विद्यते[26] । येन[27] । समानेऽह्नि[28] । सर्वान् लोकान् । परिगच्छथः[29] । हविष्मन्तम्[30] । क्षिप्रकारिणम्[31] । यजमानम्[32] । प्रति[33] तमिति[34] ।

---

१. आके P., D.
२. आकेऽन्तिके निपतन्तीत्याकेनिपा रश्मयस्ते च Sy.
३. अहोभिः Sy.
४. शरीरान् D.
५. कम्पयन्तो ध्वंसयन्तो वा तमांसि Sy.
६. आदित्यः Sy.
७. दीप्तम् Sy.
८. रजः Sy.
९. आ तन्वन्तो भवन्त्यश्विनोरश्वाः Sy.
१०. भरतोः P.
११. सोऽप्योऽपि M. च Sy.
१२. सरथे P., D.
१३. योजयन् Sy.
१४. हे अश्विनौ ! युवाम् Sy.
१५. विद्वान् Sy.
१६. आगमनमार्गाननुक्रमेण Sy.
१७. अन्नेन सोमलक्षणेन Sy.
१८. गच्छथौ P.
१९. चेतथः प्रज्ञापयथः Sy.
२०. प्रवो० P. प्रब्रवीमि स्तौमि Sy.
२१. कर्मणां धारकोऽहम् Sy.
२२. Omitted by P.
२३. रथः is suggested for रथ ।
२४. स्याश्वः P., D.
२५. अजीर्णो नित्यनूतनोऽजरयिता वा Sy.
२६. अस्ति Sy.
२७. रथेन Sy.
२८. तदानीमेव Sy.
२९. परियाथः Sy.
३०. तेन रथेन हविष्मन्तं सोमादिहविर्युक्तम् Sy.
३१. तारकं शीघ्रगामिनम् Sy.
३२. भोजयितारमस्मद्यागम् Sy.
३३. अच्छ प्राप्तुम् । आगच्छतमिति शेषः Sy.
३४. Ms. D. puts the figure ॥४५॥ here to indicate the end of forty-fifth hymn. No such number is given in P. and M.

IV.46.

**अग्रं पिबा मधूनां सुतं वायो दिविष्टिषु । त्वं हि पूर्वपा असि ॥ १ ॥**

अग्रं पिब[1] । अग्रम्[2] । पिब[3] । सोमानाम्[4] । सुतम्[5] । वायो ! दिवसस्यागमनेषु[6] प्रातः । त्वम्[7] । हि[8] । पूर्वं पिबसि[9] ।

**शतेना नो अभिष्टिभिर्नियुत्वाँ इन्द्रसारथिः । वायो सुतस्य तृम्पतम् ॥ २ ॥**

शतेन । बहुभिः[10] । आगमनैः[11] । अस्माकम्[12] । इन्द्रसारथिः[13] । वायुः सोमेन[14] तृप्यतु । प्रत्यक्षमाह—वायो ! त्वं चेन्द्रश्च । सोमेन तृप्यत[15]मिति[16] ।

---

१. पञ्चमेऽनुवाके त्रयोदश सूक्तानि । तत्र 'अग्रं पिब' इति सप्तर्चं प्रथमं सूक्तं वामदेवस्यार्षं गायत्रम् । कृत्स्नमिन्द्रवायुदेवताकम् । आद्या केवलवायव्या । तथा चानुक्रान्तम्—'अग्रं वायव्याद्यैन्द्रवायवं तु गायत्रम्' (KSA. 23. 46. p. 18.) इति । सूक्तविनियोगो लैङ्गिकः । आद्ये द्वे ऐन्द्रवायवग्रहस्य याज्ये । तथा च सूत्रितम्—'अग्रं पिबा मधूनामिति याज्ये अनवानम्' (ASS. 5. 5.) इति Sy.

२. इन्द्रादिभ्यः पूर्वम् Sy.

३. The words अग्रम् and पिब are omitted by M.

४. मधुररसानां सोमानां सम्बन्धिनम् Sy.

५. अभिषुतं रसम् Sy.

६. कुत्रेति तदुच्यते । दिवः स्वर्गस्य प्रापकेषु यज्ञेषु । यद्वा अस्माकं दिवः स्वर्गस्यैषणेषु निमित्तेषु Sy. ७. स्वं M.

८. खलु । हिशब्दः 'देव दधिषे पूर्वपेयम्' (RV. VII. 92. 1[d]) इत्यादिमन्त्रान्तरप्रसिद्धिद्योतनार्थः Sy.

९. वायोरग्रपानं 'देवा वै सोमस्य राज्ञोऽग्रपेये न समपादयन्नहं प्रथमः पिबेयम्' (AB. 2. 25.) इत्यादिब्राह्मणे स्पष्टमाम्नातम् । तत्र हि वायुराजि प्रथमं धावित्वाग्रपानं लब्धवान् Sy.

१०. अपरिमितैः Sy. ११. अभित एषणीयैः कार्मैर्निमित्तभूतैरागच्छेति शेषः Sy.

१२. अस्मदीयं सोमम् Sy.

१३. इन्द्रसहायः सन् त्वम् Sy.

१४. आगत्य च सुतस्य सुतमभिषुतम् Sy.

१५. पिबतं त्वमिन्द्रश्च । इन्द्रस्य साहित्यं ब्राह्मण एवोक्तम्—'ततुरीयभागिन्द्रोऽभवत्त्रिभाग्वायुः' इति तुरीये हैव सङ्ग्रहीतारो वदन्तेऽमुनैवानूकाशेन यदद इन्द्रः सारथिरिव भूत्वोदजयत्' (AB. 2. 25.) इति वा Sy.

१६. VM. ignores नियुत्वान् ॥ नियुद्भिस्तद्वान् Sy.

**आ वां सहस्रं हरय इन्द्रवायू अभि प्रयः । वहन्तु सोमपीतये ॥ ३ ॥**

आ वाम् । अस्माकमन्नार्थम्[१] । वहवः[२] । अश्वाः[३] । वाम्[४] । आवहन्त्विति ।[५]

**रथं हिरण्यवन्धुरमिन्द्रवायू स्वध्वरम् । आ हि स्थाथो दिविस्पृशम् ॥ ४ ॥**

रथम्[६] । रथम्[७] । हिरण्यवन्धुरम्[८] । शोभनयज्ञहेतुम्[९] । आतिष्ठथः[१०] । हि[११] । दीप्तेः स्प्रष्टारम्[१२][१३] ।

उत्तरास्तिस्रो निगदव्याख्याताः[१४] ।

**रथेन पृथुपाजसा दाश्वांसमुप गच्छतम् । इन्द्रवायू इहा गतम् ॥ ५ ॥**

[ रथेन[१५] पृथुपाजसा[१६] ][१७] ।

**इन्द्रवायू अयं सुतस्तं देवेभिः सजोषसा । पिबतं दाशुषो गृहे ॥ ६ ॥**

[ इन्द्रवायू[१६] ][१८] ।

---

१. अन्नं प्रति Sy.
२. सहस्रसङ्ख्याकाः Sy.
३. अश्वाः त्वरयन्तः सन्ति । अत्र हरिशब्दोऽश्वसामान्यवचनः Sy.
४. युवाम् Sy. ५. VM. ignores इन्द्रवायू । अभि and सोमपीतये ।
६. M. adds हिरण्यवन्धुरं after रथम् ।
७. Omitted by M.
८. °ण्मयं वन्धु° P., D. °वन्धुरम् is suggested for °बन्धुरम् ॥ हिरण्मयनिवासाधारकाष्ठोपेतम् Sy.
९. शोभनाध्वरवन्तम् Sy.
१०. आस्थितौ Sy.
११. °ष्ठतोहि M. खलु । यस्मादेवं तस्मादागच्छतमित्यर्थः । स्वध्वरं प्रत्याख्याय इति वा व्याख्येयम् Sy.
१२. स्पृष्टा° P. द्युलोकस्पर्शिनम् Sy.
१३. VM. ignores इन्द्रवायू ।
१४. °ता P. Ms. D. puts the figure ॥४६॥ here to indicate the end of forty-sixth hymn. No such number is given in P. and M.
१५. 'रथेन पृथु' इत्यादिकस्तृचो दशरात्रे पञ्चमेऽहनि प्रउगशस्त्र ऐन्द्रवायवो द्वितीयः । सूत्रितञ्च 'रथेन पृथुपाजसा वहवः सूरचक्षसः' (ASS. 7. 12.) इति Sy. १६. The *pratika* is supplied by the Editor.
१७. हे इन्द्रवायू ! पृथुपाजसा प्रभूतबलेन दाश्वांसं दातारं यजमानम् । उपगच्छतम् । तदर्थमिह अस्मिन् यज्ञे आगतम् आगच्छतम् Sy. १८. हे इन्द्रवायू ! अयं सोमः सुतोऽभिषुतः । तं सोमं देवेभिः देवैः सजोषसा समानप्रीतौ दाशुषः हविर्दातुः गृहे यागशालायां पिबतम् Sy.

इ॒ह प्र॒याण॑मस्तु वा॒मिन्द्र॑वायू वि॒मोच॑नम् । इ॒ह वां॒ सोम॑पीतये ॥ ७ ॥

[ इह प्रयाणम्[1] ][2] ।

IV.47.

वायो॑ शु॒क्रो अ॑यामि ते॒ मध्वो॒ अग्रं॒ दिवि॑ष्टिषु ।
आ या॑हि॒ सोम॑पीतये स्पा॒र्हो दे॑व नि॒युत्व॑ता ॥ १ ॥

[3]वायो[4] । वायो ! शुक्रवर्ण[5]स्त्वमसि । प्रेरयामि[6] । तुभ्यम्[7]ऐन्द्रवायवे[8] । सोमस्य[9] । अग्रम्[10] । दिवसस्या[11]गमनेषु । त्वमागच्छ[12] । सोमपानाय । स्पृहणीयः[13] । देव ! नियुत्[14]वता रथेन ।

---

१. The *pratīka* is supplied by the Editor.

२. हे इन्द्रवायू ! वां युवयोः । इह अस्मिन् यज्ञे । प्रयाणं गमनमस्तु । इह अस्मिन्नेव यज्ञे वां सोमपीतये विमोचनमश्वानामस्तु । पर्यवसानत एकार्थत्वेऽप्यादरार्थत्वादविरोधः Sy.

३. 'वायो शुक्रः' इति चतुरृचं द्वितीयं सूक्तमानुष्टुभं वामदेवस्यार्षमैन्द्रवायवम् । आद्या केवलवायव्या । अत्रानुक्रमणिका—'वायो चतुष्कमाद्या वायव्यानुष्टुभं तु' (KSA. 23. 47. p. 18.) इति । सूक्तविनियोगो लैङ्गिकः । आद्या दशरात्रे चतुर्थेऽहनि प्रउगशस्त्रे वायव्यतृचे प्रथमा । 'वायो शुक्रो अयामि ते विहि होत्रा अवीताः' (ASS. 7. 11.) इति सूत्रितम् Sy.

४. वायोः P.

५. व्रतचर्यादिना दीप्तोऽहम् Sy. शुक्रो ग्रहः Mah., U.

६. आययामि । अयतिरन्तर्भावितण्यर्थः Sy. आगच्छतु Mah., स्वयमेवागच्छतु U.

७. त्वाम् Mah. त्वां प्रति U.

८. ०न्द्रं० D. तुभ्यरमेन्द्रं० P.

९. मधुरं सोमरसम् । कर्मणि षष्ठी Sy. मधुनो रसस्य Mah. रसस्य U.

१०. इतरेभ्यः पूर्वम् Sy. सारभूतः । यज्ञरसेषु शुक्रो ग्रहः सारभूत इत्यर्थः Mah. सारभूतः U.

११. किमर्थम् ? दिवो द्युलोकस्यैषणेषु सत्सु Sy. द्यौरिष्यते प्रार्थ्यते याभिस्ता दिविष्टयो यज्ञा ज्योतिष्टोमेन स्वर्गकामो यजेतेत्युक्तेः Mah. यज्ञेष्वित्यर्थः U.

१२. आगतश्च M. आयाहि Sy.

१३. ०य P. स्पृहणीयस्त्वम् Sy. स्पृहायोग्यो यजमानादिभिः स्पृहणीयः Mah.

१४. नियुद् वायोः प्रतिनियतोऽश्वः । तेन साधनेन Sy. अश्ववता रथेन Mah. नियुच्छब्दवता मन्त्रेण स्तूयसे U. This stanza=YV. 27. 30.

तिस्र उत्तरा निगदसिद्धाः—

इन्द्रश्च वायवेषां सोमानां पीतिमर्हथः ।
युवां हि यन्तीन्दवो निम्नमापो न सध्र्यक् ॥ २ ॥

[इन्द्रश्चेति] ।

वायविन्द्रश्च शुष्मिणा सरथं शवसस्पती ।
नियुत्वन्ता न ऊतय आ यातं सोमपीतये ॥ ३ ॥

[वायो इति] ।

या वां सन्ति पुरुस्पृहो नियुतो दाशुषे नरा ।
अस्मे ता यज्ञवाहसेन्द्रवायू नि यच्छतम् ॥ ४ ॥

[या वामिति] ।

---

१. Ms. D. puts here the figure ॥४७॥ to indicate the end of forty-seventh hymn. No such number is given in P. and M.

२. 'इन्द्रश्च' इत्यादिस्तृचो बशरात्रे चतुर्थेऽहन्यैन्द्रवायवो द्वितीयः । सूत्रितञ्च—'इन्द्रश्च वायवेषां सोमानामा चिकितान सुक्रतू' (ASS. 7. 11.) इति Sy.

३. The *pratika* is supplied by the Editor.

४. हे वायो ! त्वम् इन्द्रश्च एषां गृहीतानां सोमानां पीतिं पानम् अर्हथः । युवां हि खलु इन्दवः सोमाः यन्ति प्राप्नुवन्ति । निम्नं खातप्रदेशम् आपो न सध्र्यक् उदकानि यथा सहैव गच्छन्ति तद्वत् सर्वे सोमा युवां हि यन्ति Sy.

५. हे वायो ! त्वम् इन्द्रश्च हे शवसस्पती ! शुष्मिणा बलवन्तौ नियुत्वन्ता नियुत्संज्ञकाश्ववन्तौ युवां सरथं समानमेव रथमारुह्येति शेषः । न ऊतये रक्षणाय सोमपीतये सोमपानायात्र आ यातम् आगच्छतम् । यद्वा सरथमधितिष्ठतम् आरुह्य चायातमिति च वाक्यद्वयम् Sy.

६. हे नरा ! नेतारौ ! हे यज्ञवाहसा ! यज्ञवाहकौ ! इन्द्रवायू ! याः पुरुस्पृहः बहुभिः स्पृहणीयाः नियुतः सन्ति । अस्मे अस्मभ्यं दाशुषे हविर्दत्तवते यजमानाय मदर्थं ताः नियुतः नि यच्छतम् Sy.

IV.48.

विहि होत्रा अवीता विपो न रायो अर्यः ।
वायवा चन्द्रेण रथेन याहि सुतस्य पीतये ॥ १ ॥

[1] विहि[2] । कामयस्व[3] । स्तुतिवाचः[4] । असेविता नवतराः[5] । विप्रस्य[6] । इव यजमानस्य । धनानि[7] । स्वामी[8] त्वम् । वायविति[9] स्पष्टम् ।[10]

निर्युवाणो अशस्तीर्नियुत्वाँ इन्द्रसारथिः ।
वायवा चन्द्रेण रथेन याहि सुतस्य पीतये ॥ २ ॥

निर्युवाणः । पृथक्[11] कुर्वन् । बाधाः[12] । शिष्टं स्पष्टम्[13] ।

अनु कृष्णे वसुधिती येमाते विश्वपेशसा ।
वायवा चन्द्रेण रथेन याहि सुतस्य पीतये ॥ ३ ॥

अनु[14] । अनुनियच्छतः[15] । कृष्णवर्णा[16] रात्रिः[17] । विश्वरूपमहश्च[18] । निहितहविर्धाने[19] वायुम् ।

---

१. 'विहि होत्राः' इति पञ्चर्चं तृतीयं सूक्तं वामदेव्यं वायव्यम् । अत्रानुक्रमणिका—'विहि पञ्च वायव्यम्'(KSA. 23. 48. p. 18 ) इति । सूक्तविनियोगो लैङ्गिकः । आद्या दशरात्रे चतुर्थेऽहनि प्रउगशस्त्रे वायव्यतृचस्य द्वितीया । तथा च सूत्रितम्—'विहि होत्रा अवीता वायो शतं हरीणाम्' (ASS. 7. 11.) इति Sy.

२. M. adds होत्रा after विहि।

३. भक्षय Sy.

४. होमसाधिकाः सोमाहुतीः Sy.

५. नाव० P.
अन्यैः पूर्वमभक्षिताः Sy.

६. शत्रूणां वेपयिता राजा Sy.

७. धनानि सम्पादयेति शेषः Sy.

८. स्तोतुर्मम Sy.

९. वायमिति M.

१०. VM. ignores वायो । आ । चन्द्रेण । रथेन। याहि। सुतस्य। and पीतये ॥ हे वायो ! चन्द्रेण आह्लादकेन रथेना-याहि सुतस्य सोमस्य पीतये पानाय Sy.

११. निःशेषेण नियोजयन् Sy.

१२. अशस्तीः अभिशस्तीः Sy.

१३. VM. ignores नियुत्वान् । इन्द्र-सारथिः and the second hemistich. हे वायो ! त्वम् । नियुत्वान् नियुत्संज्ञकाश्ववान् । इन्द्रसारथिः इन्द्रसहायः सन् आयाहि Sy.

१४. अनुः P. M. adds कृष्णे after अनु ।

१५. यच्छत D. अनुगच्छतः Sy.

१६. ०वर्ण P., D. कृष्णवर्णे Sy.

१७. रात्रीः P.

१८. विश्वरूपे द्यावापृथिव्यौ त्वाम् Sy.

१९. वसूनां धात्र्यौ Sy.

अवशिष्टं स्पष्टम् ।[१]

**वहन्तु त्वा मनोयुजो युक्तासो नवतिर्नव ।**
**वायवा चन्द्रेण रथेन याहि सुतस्य पीतये ॥ ४ ॥**

वहन्तु त्वा । मनोवेगाः[२] । रथे युक्ताः[३] । नव । नवतिश्चाश्वाः[४] । त्वाम् । वहन्तु[५] ।[६]

**वायो शतं हरीणां युवस्व पोष्याणाम् ।**
**उत वा ते सहस्रिणो रथ आ यातु पाजसा ॥ ५ ॥**

वायो[७] । वायो ! शतम् । अश्वानाम्[८] । पोषनिमित्तानाम्[९] । रथे निमिश्रय[१०] । अपि[११] । वा[११] । तव । सहस्राश्वयुक्तस्य[१२] । तैः सर्वैर्युक्तो[१३] रथः । आगच्छतु[१४] । बलेन[१५] ।[१६]

---

१. VM. ignores the second hemistich.

२. नोवे० P., D. मनःसमानगतयः Sy.

३. परस्परसंयुक्ताः Sy.

४. नवोत्तरनवतिसंख्याका अश्वाः Sy.

५. धारयन्तु Sy.

६. VM. ignores the second hemistich of the stanza.

७. 'वायो शतम्' इति पञ्चमी पूर्वोक्त एव तृचे तृतीया । सूत्रं पूर्वमेवोक्तम् Sy.

८. हरीणाम् Sy. हरितवर्णानामश्वानाम् BB.

९. पोषणीयानाम् Sy. पोषे साधूनामिति 'तत्र साधुः' इति यत् BB.

१०. ०श्रयाणि D. ०श्रयामि P. योजय Sy. मिश्रय रथे योजयास्मद्द्युम्न-मागन्तुम् । यौतेर्व्यत्ययेन शः BB.

११. च Sy.

१२. सहस्रसङ्ख्यापूरका अश्वाः Sy. हरिसहस्रवतः ।. . . सहस्रं हरीणां रथे युज्यतामिति सामर्थ्याल्लभ्यते । यद्वा ते हरयः सहस्रिणः सहस्रसङ्ख्यावन्तो रथे युज्यन्ताम् BB.

१३. क्ता P. तैर्युक्तः Sy. तत एवंयुक्तो रथः BB.

१४. अस्मत्सकाशमागच्छतु BB.

१५. बलेन सहितः BB.

१६. This stanza=TS. 2. 2. 12. 7. Ms. D. puts the figure ॥४८॥ here to indicate the end of forty-eighth hymn. No such number is given in P. and M.

IV.49.

**इदं वा॑मा॒स्ये॑ ह॒विः प्रि॒यमि॑न्द्राबृहस्पती । उ॒क्थं मद॑श्च शस्यते ॥ १ ॥**

इदं वाम् । इदम् । हविर्हूयते । युवयोः । आस्ये । तथा मदकरः । उक्थम् । च । शस्यते ।

अवशिष्टो वर्गः स्पष्टः—

**अ॒यं वां॒ परि॑ षिच्यते॒ सोम॑ इन्द्राबृहस्पती । चारु॒र्मदा॑य पी॒तये॑ ॥ २ ॥**

[ अयं वामिति ] ।

---

१. 'इदं वामास्ये' इति षडृचं चतुर्थं सूक्तं वामदेवस्यार्षं गायत्रमैन्द्राबार्हस्पत्यम् । अत्रानुक्रमणिका—'इदं वां षळैन्द्राबार्हस्पत्यं गायत्रम्' (KSA. 23. 49. p. 18.) इति । सूक्तविनियोगो लैङ्गिकः Sy.

२. सोमरूपम् प्रक्षिपामीति शेषः Sy. हविरास्यस्थमेवेदं मन्तव्यं न यत्नसाध्यम् । यद्वा इदं हविर्युवयोरास्ये जुहोमीति शेषः BB. प्रक्षिप्तं सद् हविः प्रियमस्त्विति शेषः SKN. यद् वयं वपस्तत् Dur.

३. युष्मदीये Sy.

४. मुखे Sy. अग्न्याख्ये मुखे SKN.

५. मदजनकम् Sy. मदकरत्वान्मदः SKN. मदश्च प्रतिगरेण सह तच्च प्रियमस्त्वित्येतदाशास्महे Dur. मदहेतुश्च युवयोः । यद्वा उक्थं शस्त्रं मदः प्रतिगरस्तदुभयमपि युवयोः प्रियत्वाच्छस्यत एवेदं हविरपि युवयोः प्रियत्वाद् मया हूयत इति । यद्वा उक्थं मदश्च शस्यते यदर्थं स सोम एवेदं हविः । याभ्यां बोक्थं मदश्च शस्यते तयोर्युवयोरिदं हविरिति BB.

६. शस्त्रम् Sy. तदुक्थम्, तदर्थं तदपि प्रियमस्त्वित्यनुषङ्गः SKN. यश्चेदमुक्थम् Dur. उक्थं शस्त्रं तदपि होत्रा शस्यते युवयोः प्रियम् BB.

७. होत्रादिभिर्यच्छस्यते SKN.

८. VM. ignores प्रियम् and इन्द्राबृहस्पती ॥ प्रियं प्रियमस्त्विति शेषः SKN. प्रियमिष्टम् Dur. N. 7. 10. SKN. III. 57. This stanza=TS. 3. 3. 11. 1.

९. The *pratika* is supplied by the Editor.

१०. हे इन्द्राबृहस्पती ! वाम् आस्ये चारुः शोभनः अयं सोमः परिषिच्यते परितो दीयते। मदाय हर्षाय, पीतये पानाय च Sy. हे इन्द्राबृहस्पती ! अयं सोमः सोमसदृशं हविश्चारुर्दीप्तिमान् मदनसमर्थो वा वां युवयोर्मदाय मदार्थं पीतये पानाय परिषिच्यते सर्वतः पूर्यते BB. This stanza=TS. 3. 3. 11. 1.

आ नं इन्द्राबृहस्पती गृहमिन्द्रश्च गच्छतम् । सोमपा सोमंपीतये ॥ ३ ॥

[आ[१] न[२] इति]।[३]

अस्मे इन्द्राबृहस्पती रयिं धत्तं शतग्विनंम् । अश्वावन्तं सहस्रिणंम् ॥ ४ ॥

[अस्मे इन्द्राबृहस्पती इति[२]]।[४]

इन्द्राबृहस्पती वयं सुते गीर्भिर्हवामहे । अस्य सोमंस्य पीतये ॥ ५ ॥

[इन्द्राबृहस्पती इति[२]]।[५]

सोमंमिन्द्राबृहस्पती पिबंतं दाशुषो गृहे । मादयेथां तदोकसा ॥ ६ ॥

[सोममिन्द्राबृहस्पती इति[२]]।[६]

---

१. ऐन्द्राबार्हस्पत्यायामिष्टौ प्रधानस्य 'आ न इन्द्रा' इति तृतीयानुवाक्या उत्तरा याज्या । सूत्रितञ्च—'आ न इन्द्राबृहस्पती अस्मे इन्द्राबृहस्पती' (ASS. 2. 11.) इति Sy.

२. The *pratika* is supplied by the Editor.

३. हे इन्द्राबृहस्पती ! अथ विविच्योच्यते । हे बृहस्पते ! त्वं च इन्द्रश्च सोमपा सोमपौ युवां सोमपीतये सोमपानाय नः गृहम् अस्मद्यागसम्बन्धि आ गच्छतम् Sy.

४. अस्या विनियोगः पूर्वमन्त्रेण सहोक्तः । हे इन्द्राबृहस्पती ! अस्मे अस्मभ्यं रयिं धनं धत्तम् । कीदृशं रयिम् ? शतग्विनं शतसङ्ख्याकाभिर्गोभिर्युक्तम् अश्वावन्तम् अश्ववन्तं सहस्रिणं सहस्रसङ्ख्यायुक्तम् Sy.

हे इन्द्राबृहस्पती ! अस्मे अस्मभ्यम् 'सुपां सुलुक्०'इति शे–आदेशः. . . रयिं धनं धत्तं दत्तम् । रयिर्विशेष्यते—शतग्विनं शतसङ्ख्याकानां बहूनां गवां समाहारश्शतगवम्. . .तद्वन्तं शतग्विनम् । अकारलोपश्छान्दसः । अश्वावन्तम् अश्वैस्तद्वन्तम् ।. . .कियद्भिरश्वैस्तद्वन्तम् ? सहस्रियं सहस्रसङ्ख्यैर्गोभ्योऽपि बहुतरैरश्वैरन्यैर्वा गजादिभिस्तद्वन्तम् । ईदृशं रयिमस्मभ्यं धत्तमस्मासु स्थापयतम् BB. This stanza=TS. 3. 3. 11. 1.

५. सुते सोमेऽभिषुते गीर्भिः स्तुतिभिः । शिष्टं गतम् Sy.

६. हे इन्द्राबृहस्पती ! युवां दाशुषः हविर्दातुर्यजमानस्य गृहे तदोकसा तदेव यजमानगृहमोको निवासस्थानं ययोस्तौ तादृशौ सन्तौ सोमं पिबतम् । पीत्वा च मादयेथामिति Sy.

यजमानगृहे समवेतौ तदोकसाविति ।

IV.50.

यस्तुस्तम्भ सहसा वि ज्मो अन्तान्बृहस्पतिस्त्रिषधस्थो रवेण ।
तं प्रत्नास ऋषयो दीध्यानाः पुरो विप्रा दधिरे मन्द्रजिह्वम् ॥ १ ॥

यस्तस्तम्भ । यम् । पृथिव्याः । पर्यन्तान् । बलेन । विविधं स्तभ्नाति । बृहस्पतिः । त्रिस्थानः । गर्जितरवेण सहितः । तम् । पुराणाः । दीप्यमानाः । ऋषयः । मेधाविनः ।

---

१. Ms. D. puts the figure ॥४६॥ here to indicate the end of forty-ninth hymn. No such number is given in P. and M.

२. 'यस्तस्तम्भ' इत्येकादशर्चं पञ्चमं सूक्तं वामदेवस्यार्षं त्रैष्टुभम् । दशमी जगती । दशम्येकादश्याविन्द्राबृहस्पतीदेवताके,शिष्टा नव बार्हस्पत्याः । अत्रानुक्रमणिका—'यस्तस्तम्भैकादश बार्हस्पत्यमन्त्ये ऐन्द्रयौ चोपान्त्या जगती' (KSA. 23.50. p. 18.)। आभिप्लविकेषूक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिनः स्तोमवृद्धाविदं सूक्तमावापार्थम्। तथा च सूत्रम्—'यस्तस्तम्भ यो अद्रिभित्' (ASS.7.9.) इति । आद्ये बृहस्पतिसवे मरुत्वतीयनिष्केवल्ययोः सूक्तमुखीये । सूत्रितञ्च 'यस्तस्तम्भ धुनेतय इति सूक्तमुखीये' (ASS. 9. 5.) इति Sy.

३. यस्तम्भ P.

४. यः is suggested for यम् ।

५. ज्म इति च दिवोऽन्तरिक्षस्य पृथिव्याश्चेति द्रष्टव्यम् SKN.

६. ०न्तात् D., P. दश दिश इत्यर्थः Sy. प्रदेशात् SKN.

७. बलेन माहात्म्यातिशयेन SKN.

८. स्तम्भितवान् । नियमितवान् Sy. विष्टम्भितवान् बद्धवान् घनघटाभिर्वेष्टितवानित्यर्थः SKN.

९. बृहतो देवस्य यज्ञस्य वा पालयिता देवः Sy.

१०. त्रिः स्था० M. त्रिषु स्थानेषु वर्तमानः Sy. त्रिषु स्थानेषु सह स्थाता SKN.

११. एवं तिष्ठतेत्यनेन शब्देन Sy. रवेण शब्देन त्रुवियदवनीनां गर्जितध्वनिना पूरयितेत्यर्थः । रवेणाज्ञापरेण शब्देन दीध्यानाः सामर्थ्यातिशयसमन्वितोऽयमिति योज्यम् SKN.

१२. ०तं P.

१३. देवम् Sy.

१४. ०णं P.

१५. अत्यर्थं ध्यायन्तः । किम् ? सामर्थ्याद् वर्येदिति SKN.

१६. अतीन्द्रियद्रष्टारः Sy. ऋषयो मरीच्यादयः SKN.

१७. मेधाविनो यजमानादयः Sy.

पुरः[1] । दधिरे[2] । मोदनवाचम्[3] ।

धुनेतयः सुप्रकेतं मदन्तो बृहस्पते अभि ये नस्ततस्रे ।
पृषन्तं सृप्रमदब्धमूर्वं बृहस्पते रक्षतादस्य योनिम् ॥ २ ॥

धुनेतयः[4] । धूननपरगमनाः[5][6] । शोभनप्रज्ञानम्[7] । माम्[8] । मदन्तः[9] । ये[10] । अभिगच्छन्ति[11] मेघाः । अर्थैकवदाह[12]—सिञ्चन्तम्[13] । सर्पणशीलम्[14] । अहिंसितम् । महान्तम्[15] । बृहस्पते ! त्वं रक्षतात्[16] । अस्य[17] मेघस्य । उदकनिःसरणमार्गम्[18] ।[19]

बृहस्पते या परमा परावदत आ तं ऋतस्पृशो नि षेदुः ।
तुभ्यं खाता अवता अद्रिदुग्धा मध्वः श्चोतन्त्यभितो विरप्शम् ॥ ३ ॥

बृहस्पते[20] । बृहस्पते ![21] यः[22] । परमः[23] । देशः[24] । अतः[25] । आनिषीदन्तु[26] । त्वदीयाः[27] ।

---

१. पुरस्तात् Sy. अग्रे सर्वकर्मणामावावेवेत्यर्थः । किं कारणम् ? अन्नस्थितिकारकत्वाद् भूतानां तस्य च वर्षहेतुत्वात् । आह च 'अन्नाद् भवन्ति भूतानि पर्जन्यादन्नसम्भवः' इति SKN.

२. स्थापितवन्तः स्तुत्यादिना Sy. शुद्धोऽप्ययं दधातिरवपूर्वो द्रष्टव्यः । अवधारितवन्तः । सर्वकर्माणि तत्पुरस्सराणि ज्ञातवन्त इत्यर्थः । ऐतिहासिकपक्षेण वा पुरो दधिरे पुरोहितं स्थापितवन्त इत्यर्थः । इन्द्रस्य राज्याभिषेकसमये कृतवन्तो ग्रहाधिपत्यार्थमित्यर्थः SKN.

३. मोदवा० P., D. मादनजिह्वं मोदनजिह्वम् Sy. जिह्वेति वाङ्नाम (Ngh. I. 11.) । गर्जितलक्षणा, इतरा वा मन्द्रा कल्याणी वाग् यस्य तम् SKN.

N. 2. 7.; SKN. II. 58.

४. सुने० D.,P. ५. धुन० P. धुना शत्रूणां कम्पयित्रीतिर्गतिर्येषां ते । तादृशाः Sy.

६. ०नां M. ७. शोभनप्रज्ञं त्वाम् Sy.

८. मा P. नः अस्मत्सम्बन्धिनः Sy.

९. मादयन्तः Sy.

१०. यदि D. ऋत्विजः Sy.

११. ०भिर्ग P. गच्छन्ति D. आत्मानमुपक्षिपन्ति स्तुवन्ति वा Sy.

१२. ०कपदा० M.

१३. योनिर्विशेष्यते । फलानि सिञ्चन्तम् Sy.

१४. सर्पणस्वभावम् Sy. १५. उग्रम् Sy.

१६. ०क्ष तद् M. मां रक्ष Sy.

१७. एषाम् Sy.

१८. कारणं यज्ञं यजमानं वा Sy.

१९. VM. explains बृहस्पते once only.

२०. 'बृहस्पते या' इत्यादिके द्वे बार्हस्पत्ये पशौ वपापुरोडाशयोरनुवाक्ये । 'बृहस्पते या परमा परावदिति द्वे' (ASS. 3. 7.) इति हि सूत्रितम् Sy.

२१. Omitted by D. ०पत P.

२२. यं P., D. प्रसिद्धा Sy.

२३. उत्कृष्टा Sy. २४. देश P. अत्यन्तं दूरभूता वसतिः स्वर्गाख्यास्ति । यद्वा लिङ्गव्यत्ययः । परमं स्थानमस्ति Sy.

२५. तः P. अस्माद्देशात् Sy.

२६. आ इत्यर्वागर्थे । अधस्तात् निषण्णा भवन्ति Sy. २७. तव सम्बन्धिनः Sy.

यज्ञस्पृशोऽश्वाः[1] । तुभ्यम् । खाताः[2] । कूपाः । अभिषवग्रावभिरुत्पादकास्ते[3] कूपाः । सोस्मान्[4] । प्रेरयन्ति[5] । स्तुतिमन्तं[6] त्वां प्रति ।

**बृहस्पतिः प्रथमं जायमानो महो ज्योतिषः परमे व्योमन् ।**
**सप्तास्यस्तुविजातो रवेण वि सप्तरश्मिरधमत्तमांसि ॥ ४ ॥**

बृहस्पतिः[7] । अह्नः प्रारम्भे । प्रादुर्भवन् । महतः । ज्योतिषः[8] स्थाने । परमे[9] व्योम्नि दिवि । सप्तमुखः[10] । बहुजननः[11] । शब्देन महता[12] । विधमति[13] । तमांसि । सप्तरश्मिः[14] तादृशी चास्य तनुरस्तीत्यवगन्तव्यम्[15] ।

**स सुष्टुभा स ऋक्वता गणेन वलं रुरोज फलिगं रवेण ।**
**बृहस्पतिरुस्रिया हव्यसूदः कनिक्रदद्वावशतीरुदाजत् ॥ ५ ॥**

स सुष्टुभा[16] । सः[17] । शोभनस्तुतिकेन[18] । ऋग्भिर्युक्तेन[19] । गणेन[20] । वलमसुरम्[21] ।

---

१. ०श्वा P. यज्ञं स्पृशन्तोऽश्वाः Sy.
२. लुप्तोपमैषा । यथा खाताः कूपाः Sy.
३. ०ग्रावादिरु० P. तद्वत् ग्रावभिरभिषुताः सोमाः Sy.
४. सोस्मात् P. सोऽस्स्मान् M. सोमान् is suggested for सोऽस्मान् ॥ मधुररसम् Sy.
५. अभितः स्रवन्ति Sy.
६. ०मन्तः D. ०मवन्त P. विशेषेण शब्देन स्तोत्रं यथा भवति तथा Sy.
७. ०ति P.
८. दीप्तस्यादित्यस्य Sy.
९. निरतिशये Sy.
१०. सप्तच्छन्दोमयमुखः Sy.
११. बहुप्रकारं सम्भूतः Sy.
१२. महतः P.
१३. विविधं गच्छति । नाशयतीत्यर्थः Sy. धमतिर्गतिकर्मा N. 6. 1.
१४. सर्पणस्वभावतेजोयुक्तः Sy.
१५. VM. ignores बृहस्पतिः ॥ अयं बृहस्पतिर्मन्त्राभिमानी देवः Sy.
१६. सुष्टभं D.
१७. बृहस्पतिः BB.
१८. शोभनस्तुतिमता Sy. शोभनस्तुव (तिम) ता । (शोभनं स्तुवता) स्तोभतिस्स्तुतिकर्मा । स्तौतेर्वा क्विपि वर्णव्यत्यये तुको भत्वम् BB.
१९. ०क्ते P. दीप्तिमता Sy. स्तुतिमता BB.
२०. गणे P. गणेन अङ्गिरसाम् Sy. ईदृशेन गणेन सहितः BB.
२१. बलनामानमसुरम् Sy. वलं मेघम् । वृणोतेः पचाद्यच् । कपिलकादित्वाल्लत्वम् BB.

हिंसितवान्[1] । मेघाकारम्[2] । शब्देन[3] । बृहस्पतिः[4] । हविषः प्रेरयित्रीम्[5] । शब्दं कुर्वन् । कामयमानाः[6] । पणिभ्य उदाजत्[7] ।[8]

**एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः ।**
**बृहस्पते सुप्रजा वीरवन्तो वयं स्याम पतयो रयीणाम् ॥ ६ ॥**

एवा पित्रे[9] । एवम्[10] । पालयित्रे[11] । सर्वेषां देवाय[12] । वृष्णे[13] । यज्ञैः[14] । नमस्कारेण[15] । हविर्भिश्च[16] । परिचरणं कुर्मः[17] । शिष्टं स्पष्टम्[18] ।

---

१. बभञ्ज Sy. भिनत्ति BB. २. ०करं P. स्वच्छोदकपूर्णं बलवदुदकं वा BB.

३. शब्देन सह Sy. रवेण शब्देनोपलक्षितं बलम् । रवेण वा फलिगं गिरिगुहादिषु प्रतिफलवन्तम् BB.

४. ०ति P., D. अयं बृहस्पतिः BB.

५. ०यित्: M. ०यित्रीः is suggested for ०यित्रीम् ॥ क्षीरादिहविष्प्रेरिकाः Sy. हव्यसूदो हविषो भोक्ता BB.

६. वावश्यमाना गाः Sy. उस्रिया अपो वावशतीरत्यर्थं कामयमानाः BB.

७. उद्घाटयति स्म Sy. भञ्जनानन्तरं बलादुद्गमयति । 'अज गतिक्षेपणयोः' । छान्दसो लुङ् BB.

८. VM. ignores सः and उस्रियाः ॥ द्वितीयः सशब्दः पूरणः । स एव देवः । भोगानामुत्स्राविणीः Sy.

This stanza=TS. 2. 3. 14. 4.

९. 'एवा पित्रे' इति बार्हस्पत्ये पशौ हविषो याज्या । 'एवा पित्रे विश्वदेवाय वृष्णे विश्वे अद्य मरुतो विश्व ऊती' (ASS. 3. 7.) इति सूत्रितत्वात् । अग्निष्टोमे वैश्वदेवशस्त्रे एषैव धाय्या । तथा च सूत्रम्—'एवा पित्रे विश्वदेवाय वृष्ण आ नो भद्राः क्रतवो यन्तु विश्वतः' (ASS. 5. 18.) इति Sy.

१०. उक्तप्रकारेण Sy. एवमेव BB.

११. पालकाय Sy. पात्रे रक्षित्रे BB.

१२. सर्वदेवतारूपाय । देवानां मन्त्रप्रतिपाद्यत्वादस्य च मन्त्राभिमानित्वाद् विश्वदेवत्वम् । यद्वा अत्र देवशब्दः स्तुत्यर्थः । सर्वैः स्तुत्याय Sy. विश्वे देवा अस्य सन्तीति विश्वेऽपि देवा अस्याज्ञां कुर्वन्तीति BB.

१३. वर्षकाय बृहस्पतये देवाय Sy. वर्षित्रे ...कर्मणः सम्प्रदानत्वाच्चतुर्थी BB.

१४. इमं देवं यज्ञैः BB.

१५. स्तुत्या च Sy. नमस्कारेण BB.

१६. ०विभि० P. तत्साधनैः हविर्भिः आज्यचर्वादिलक्षणैः Sy. चर्वादिभिश्च BB.

१७. परिचरेम Sy. 'विध विधाने' । तौदादिकः BB.

१८. VM. ignores बृहस्पते । सुप्रजाः । वीरवन्तः । वयम् । स्याम । पतयः । and रयीणाम् ॥ हे बृहस्पते ! सुप्रजाः शोभनपुत्राः । वीरवन्तो वीर्योपेताः वयं रयीणां धनानां पतयः स्याम Sy. किमर्थमिति चेत् । सुप्रजाः शोभनपुत्रपौत्रा वीरवन्तोऽन्यांश्च शूरांश्च तद्वन्तो रयीणां धनानां च पतयस्स्याम भवेमेत्येवमर्थं परिचरेम BB.

This stanza=TS. 1. 8. 22. 2.

स इद्राजा प्रतिजन्यानि विश्वा शुष्मेण तस्थावभि वीर्येण ।
बृहस्पतिं यः सुभृतं बिभर्ति वल्गूयति वन्दते पूर्वभाजम् ॥ ७ ॥

स इद्राजा[1]। सः। एव। राजा[2]। प्रतिजनपदप्रादुर्भूतानि बलानि[3]। शोषकेण[4]। वीर्येण[5]। अभितिष्ठति[6]। यो राजा[7]। बृहस्पतिम्[8]। ब्राह्मणस्य पुरोधानद्वारेण सुभृतम्[9]। बिभर्ति[10]। स्तौति[11]। नमस्करोति च[12]। पूर्वमेव भजमानं मुख्यम्[13][14]।

स इत्क्षेति सुधित ओकसि स्वे तस्मा इळा पिन्वते विश्वदानीम् ।
तस्मै विशः स्वयमेवा नमन्ते यस्मिन्ब्रह्मा राजनि पूर्व एति ॥ ८ ॥

स इत् क्षेति। सः। एव। निवसति। सुप्रीतः[15]। स्वस्मिन्[16]। स्थाने[17]। तस्मा एव। पृथिवी[18]। सर्वदा[19]। कामान् पिबते[20]। तस्मा एव। मनुष्या[21] जानपदाः[22]। स्वयम्। एव। नमनं कुर्वन्ति[23]। यस्मिन्। राजनि। बृहस्पतिभूतः[24]। पुरोधा[25] ब्राह्मणः[26]। कर्मणामग्रे[27]। गच्छति[28]।

१. 'इदमाद्युक्त्रयं पुरोहितप्रशंसा' इति ब्राह्मणम् (AB. 8. 26.) अथवा सूक्तस्य ऋग्द्वयवर्जितस्य बार्हस्पत्यत्वात् बृहस्पतेरेव स्तुतिः Sy.
२. इ रा० D. इदाजां P.
३. मूर्धाभिषिक्तोऽन्यो वा राजमानः Sy.
४. ०पदं प्रा० P. जन्यं युद्धं प्रति बलानीत्यर्थः। प्रत्यर्थिजनपदानि वा तानि Sy.
५. ०केन D. बलेन Sy.
६. शरीरसामर्थ्येन वा Sy.
७. अधिति० M. अभिगम्याक्रम्याभितिष्ठति Sy.
८. स इत्युक्तम्। कः ? इत्याह Sy.
९. बृहतां महतां पालयितारं देवमुक्तलक्षणं पुरोहितं वा Sy.
१०. सुष्ठु हविः स्तोत्रादिनान्नाच्छादनादिना वा Sy.
११. भरति Sy.
१२. पूव० D. पूर्वेण P. इतरेभ्यः प्रथमं सम्भक्तारं कृत्वा। एवं यः करोति स एव तस्थाविति Sy.
१३. ०न P., D.
१४. VM. ignores विश्वा।
१५. सुष्ठु तृप्तः सन् Sy.
१६. स्वकीय एव Sy.
१७. सदने स एव समृद्धो निर्बाधः सन् सुखेनास्ते Sy. १८. भूमिः Sy.
१९. सप्तदामा P., D. सर्वकालम् Sy.
२०. पिन्वते is suggested for पिबते॥ वर्धते फलैः Sy.
२१. प्रजाः Sy.
२२. ष्य जानपदा P., D.
२३. प्रणता भवन्ति। दण्डनमन्तरेण स्वयमेव दत्तकरा भवन्ति Sy.
२४. ब्रह्मा Sy.
२५. पुरोता M.
२६. ०ण P.
२७. प्रथमं पूज्यः सन् Sy.
२८. गच्छति। वर्तत इत्यर्थः Sy.

अप्रतीतो जयति सं धनानि प्रतिजन्यान्युत या सजन्या ।
अवस्यवे यो वरिवः कृणोति ब्रह्मणे राजा तमवन्ति देवाः ॥ ९ ॥

अप्रतीतः । शत्रुभिरप्रतिगतः[1] । यजति[2] । उभयानि धनानि । प्रतिजनभवानि[3] । यानि[4] । च[5] । सजन्यानि[6] । रक्षणमिच्छते[7] । यः । राजा । पूजाम्[8] । करोति[9] । पुरोधसे[10] । तम्[11] । रक्षन्ति । देवाः[12] ।

इन्द्रश्च सोमं पिबतं बृहस्पतेऽस्मिन्यज्ञे मन्दसाना वृषण्वसू ।
आ वां विशन्त्विन्दवः स्वाभुवोऽस्मे रयिं सर्ववीरं नि यच्छतम् ॥१०॥

इन्द्रश्च[13] । बृहस्पते ! त्वम् । इन्द्रः[14] । च । सोमम् । पिबतम् । अस्मिन्[15] । यज्ञे । वृष्यमाणधनौ[16] । मोदमानौ[17] । शोभनभवनाः[18] । सोमाः[19] । आविशन्तु[20] । वाम्[21] । अस्मासु[22] । धनम् । सर्ववीरैर्युक्तम्[23] । नियच्छतम्[24] ।

---

१. स एव अप्रतीतः अन्यैरप्रतिगतः सन् Sy.
२. जयति is suggested for यजति ।
३. प्रजन॰ P., D. प्रतिस्पर्धिजनसम्बन्धीनि Sy.
४. धनानि Sy.
५. अपि च Sy.
६. सजनानि P., D. जनसम्बन्धीनि Sy.
७. अवसीयसे धनरहिताय रक्षणमिच्छते Sy.
८. वरिवः धनम् Sy.
९. ददाति । स उक्तप्रकारेण महान् भवति Sy.
१०. ब्राह्मणाय वा प्रीणनमिच्छते बृहस्पतये वा Sy.
११. तमेव Sy.
१२. VM. ignores सम् ।
१३. 'इन्द्रश्च सोमम्' इति दशमी तृतीयसवने ब्राह्मणाच्छंसिनः प्रस्थितयाज्या । सूत्रितञ्च 'इन्द्रश्च सोमं पिबतं बृहस्पते आ वो वहन्तु सप्तयो रघुष्यदः' (ASS. 5. 5.) इति Sy.
१४. इन्द्र M.
१५. पिब त्वमस्मिन् M. पिबत तस्मिन् P.
१६. ॰धनेन D. कीदृशौ युवाम् ? वर्षितृधनौ यजमानेभ्यो दीयमानधनावित्यर्थः Sy.
१७. ॰मानेन D. हृष्यन्तौ Sy.
१८. सुष्ठु सर्वतो भवन्तः, कृत्स्नशरीरव्यापनसमर्था इत्यर्थः Sy.
१९. तादृशाः सोमाः Sy.
२०. ॰न्त D. युवयोः शरीरं प्रविशन्तु Sy.
२१. त्वाम् M. युवाम् Sy.
२२. अस्मभ्यम् Sy.
२३. ॰र्वीरैर्यु॰ P. सर्वं वीरं॰ D. सर्वपुत्राद्युपेतम् Sy.
२४. दत्तम् Sy.

बृह॑स्पत इन्द्र॒ वर्ध॑तं नः॒ सचा॒ सा वां॑ सुम॒तिर्भू॑त्व॒स्मे ।
अ॒वि॒ष्टं धियो॑ जिगृ॒तं पुरं॑धीर्जज॒स्तम॒र्यो व॒नुषा॒मरा॑तीः ॥ ११ ॥

बृहस्पते । इन्द्राबृहस्पती[1] ! वर्धयतम्[2] । अस्मान्[3] । सा । युवयोः । सुमतिः[4] । अस्मासु । संवृक्ता[5] । भवतु[6] । रक्षतम्[7] । कर्माणि । प्रकाशयतम्[8] । प्रज्ञाः[9] । उपक्षपयतम्[10] । याचितॄणां[11] धनानि । अप्रयच्छन्तीः[12] । शत्रुभूताः[13] ।[14]

अष्टकस्य तृतीयस्य माधवः सुन्दरीसुतः ।
व्याख्यत् सप्तममध्यायमित्थं श्रीवेङ्कटात्मजः ॥

# ॥ अथ तृतीयाष्टके ऽष्टमोऽध्यायः ॥[15]

'इ॒दमु[16] त्यत् पु॑रु॒तमं[17]' व्याचिख्यासति माधवः ।
उपसर्गेषु वक्तव्यमनुक्तं सम्प्रदर्शयन् ॥ १ ॥

आकारोऽधिपरौ चोभौ स्पष्टीकुर्वन्ति कारके ।
अपादानाधिकरणे 'धनो॒रधि[18]' 'दि॒वस्परि[19]' ॥ २ ॥

---

१. हे बृहस्पते ! हे इन्द्र ! युवाम् Sy.
२. प्रवृद्धान् कुरुतम् Sy.
३. अस्मासु P.
४. अनुग्रहबुद्धिः Sy.
५. संवृत्ता M. सचा सह Sy.
६. ति M.
७. अविष्टं रक्षतम् । पारं नयतम् Sy.
८. प्रबुध्यतम् Sy.
९. पुरं शरीरं धीयते स्वाप्यते याभिर्मति-भिस्ताः स्तुतीः Sy.
१०. ०क्षय० D. युष्यतं क्षपयतमित्यर्थः । एवं स्तुतिं निगमय्याभीष्टं प्रार्थितवान् Sy.
११. याः पितृ० P. M. सम्भक्तॄणामस्माकम् Sy.
१२. ०न्ति, M. अरातीः । शत्रूनित्यर्थः । छन्दस्यरातिशब्दः स्त्रीलिङ्गः Sy.
१३. गन्त्रीः Sy.
१४. Ms. D. puts the figure ॥५०॥ here to indicate the end of the fiftieth hymn. No such number is given in P. and M.
१५. The line is supplied by the Editor.
१६. ०दा० D.
१७. RV. IV. 51. 1ᵃ.
१८. RV. I. 34. 4.
१९. ०री P. RV. I. 121. 10.

आकारो 'दिव आजाता'[1] दृश्यन्ते[2] चापि पूरणाः ।

सुं[3] च 'मो षु[4] णः'[5] इत्यादौ केचिदिच्छन्ति पूरणम् ॥३॥

अमी कि[6]मुपसर्गाणां निपाताः प्रतिरूपकाः ।

भवेयुरुपसर्गा वा किं नु ते संज्ञयानया ॥४॥

'अयं ते' अस्तु हर्यतः'[7] 'आ याहि पूर्वीरति'[8][9] च ।

आकारौ[10] पूरणावाहुर्[11]बहवः सन्ति तादृशाः ॥५॥

'यस्ते सखिभ्य आ वरम्'[12][13] 'इमे सोमास इन्दवः'[14] ।

'नि नो होता वरेण्यः'[15][16] 'प्र यद्दिवो हरिवः स्यातः'[17][18] ॥६॥

'यास्ते प्रजा अमृतस्य'[19] 'विश्वा यश्चर्षणीरभि'[20] ।

'प्र प्रा वो अस्मे स्वयशोभिः'[21] 'अर्चन्ननु स्वराज्यम्'[22] ॥७॥

'प्र देवयन् यशसः सम्'[23] 'शुचिर्जन्मनो रज आ'[24] ।

आक्षिप्यन्ते क्रियाशब्दाः सर्वेष्वेषू[25]पसर्गतः ॥८॥

---

१. आज्मना P., D. आङ्मना M. आजात R. RV. IV. 43. 3.
२. दृश्यते . . . पूरणः is suggested for दृश्यन्ते . . . पूरणाः ।
३. स्वञ्च P. स्वं च D.
४. षू P., M.
५. RV. I. 38. 6.
६. तिमु॰ P.
७. RV. III. 44. 1.
८. ॰र्वीरिति R.
९. RV. III. 43. 2ᵃ.
१०. ॰रो M. ११. ॰बाहु॰ M.
१२. परम् P. वर M.
१३. RV. I. 4. 4.
१४. RV. I. 16. 6.
१५. ॰ण्य M. १६. RV. I. 26, 2.
१७. ॰रिवः D.
१८. RV. I. 33. 5.
१९. RV. I. 43. 9.
२०. RV. I. 86. 5.
२१. प्रा वो अस्मे स्वयशोऽभिः M. The third पाद is omitted by P. RV. I. 129. 8.
२२. RV. I. 80. 1.
२३. RV. X. 46. 10.
२४. Omitted by P., M. RV. I. 141. 7.
२५. ॰ष्वेव स॰ M.

अन्त[1]र्ण्यर्थांश्च कुर्वन्ति तेऽमी धातूनपि क्वचित्[2] ।
'विश्वमाभासि रोचनम्[4]'[3] 'आ नो भज परमेषु'[5] ॥९॥
'आर्की[6] सूर्यस्य रोचनाद्'[7] आवहत्विति[8] गम्यते ।
तस्मादाकारसदृशं निपातं तं विदुर्बुधाः ॥१०॥
विनश्यन्ति च धात्वर्था उपसर्गसमन्वयात् ।
'अव ते हेळो'[9][10] वरुण 'सुन्वानो हि ष्मा[11] यजति'[12] ॥११॥
अत्र[13]पूर्वौ विनाशार्थावीयजी[14] अनयोर्ऋचोः ।
'रात्र्याश्चिदन्धो[15] अति'[16] इति विनाशार्थस्तथा दृशिः ॥१२॥
व्यञ्जते[17] तिरतेरर्था उपसर्गैः पृथग्विधाः ।
'मायाभिरिन्द्र मायिनम्'[18] 'सोम[19] प्र तिरन्त आयुः'[20] ॥१३॥
आख्यातशब्दैरस्माभिर्दृश्यते न दुरोऽन्वयः ।
दूर्व्यो[21] दुर्वा दधातीति[22] कृदन्तैर्दृश्यतेऽन्वयः ॥१४॥

---

१. ०न्तण्य D. अन्तण्यर्थाश्च P.
२. कुर्वन्ति तादृशाः ते रुध नपि क्वचित् P.
३. RV. I. 49. 4.
४. रोचमानो D., M. रोचनमानो P.
५. RV. I. 27. 5.
६. आर्कि P., D., M.
७. RV. I. 14. 9.
८. आवबह० M.
९. हेळ्ह D.
१०. RV. I. 24. 14.
११. Omitted by P., D., M.
१२. RV. I. 133. 7.
१३. अपपू० P.
१४. ०र्थाविय० P., M. ०र्थावियजीः D.
१५. ०दग्धो अ० D. ०दग्धो अतिति P. रात्र्यविश्वंधोऽतीति M. RV. I. 94. 7.
१६. ०र्वन्त० P.
१७. व्यञ्जती तिरतेरर्थे P., D. व्यज्यन्ते is suggested for व्यञ्जते ।
१८. ०नः M. RV. I. 11. 7.
१९. सोमं P.
२०. ०यूः D. RV. X. 107. 2.
२१. दूडयो P., D.
२२. ददाती० M.

तृतीयस्याष्टकस्येत्थमध्यायादिषु दर्शिताः[1] ।

उपसर्गनिपातार्थाः सर्वे वेदोपकारिणः ॥१५॥

## IV.51.

**इदमु त्यत्पुरुतमं पुरस्ताज्ज्योतिस्तमसो वयुनावदस्थात् ।**
**नूनं दिवो दुहितरो विभातीर्गातुं कृणवन्नुषसो जनाय ॥ १ ॥**

इदमु[2] त्यत् ॥ वामदेवः ॥ तत्[3] । एतत्[4] । बहुतमम्[5] । प्राच्याम्[6] । ज्योतिः[7] । तमसः[8] सकाशात्[9] । प्रज्ञानवत्[10] । आविर्भवति[11] । नूनम्[12] । दिवः[13] । दुहितरः[14] । व्युच्छन्त्यः[15] । आगमनम्[16] ।

---

१. दशिताः D.

२. अथाष्टमं व्याख्यातुमारभते । 'इदमु त्यत्' इत्येकादशर्चं षष्ठं सूक्तं वामदेवस्यार्षं त्रैष्टुभमुषोदेवताकम् । 'इदमुषस्यं तु' (KSA. 24. 51. p. 18.) इत्यनुक्रान्तम् । प्रातरनुवाके उषस्ये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे इदं सूक्तम् । सूत्रितञ्च—'उषो वाजेनेदमु त्यत्' (ASS. 4. 14.) इति Sy. वामदेवस्यार्षम् SKN. वामदेवो गौतमोऽनया त्रिष्टुभोषसं तुष्टाव Dur.

३. अस्माभिः स्तुत्यं सर्वप्रसिद्धम् Sy. तज्ज्योतिर्यज्जनाः कथयन्ति Dur.

४. पुरतो दृश्यमानमिदम् Sy. इदम् SKN. एतत् Dur.

५. ॰हुमन्तं म P. हुमतं म D. अत्यन्तप्रभूतम् Sy.

६. पूर्वस्यां दिशि Sy., SKN. प्राच्यां दिशि Dur.

७. तेजः Sy. ज्योतिरुषआख्यम् SKN.

८. प्राच्या प्तमतः P. अन्धकारात् Sy. कुतः पुरुतमम् ? उच्यते, तमसः सकाशात् SKN. कुतः पुरुतमम् ? . . . यदभिभूय शार्वरं तमः स्वमात्मानमभिव्यनक्ति, अत एव तद् बहुतमम् Dur.

९. P. and D. add प्रकाशात् after सकाशात् ।

१०. वेतेः कान्तिकर्मण इदम् । प्रकृष्टकान्तिमत् । अथवा वयुनमिति प्रज्ञानाम (Ngh. 3. 9.) । प्रज्ञोपेतम् । सर्वस्य प्रज्ञापकमित्यर्थः Sy. कान्तिमत् SKN.

११. उदतिष्ठत् Sy. स्थितमुदितमित्यर्थः SKN. उत्तिष्ठति Dur.

१२. एवं सति नूनं सत्यम् Sy. स्थित्वा नूनं निश्चयेन SKN. निश्चयेन Dur.

१३. आदित्यस्य Sy. आदित्येन जन्यमानत्वात् SKN.

१४. दुहितृस्थानीयाः Sy. एकस्या एव पूजनार्थं बहुवचनं व्यत्ययेन वा SKN. रूपसामान्याद् दुहितृत्वम् Dur.

१५. विभानं कुर्वतीः Sy. विविधं दीप्यमानाः SKN. विभासमानाः Dur.

१६. गमनं गमनादिव्यापारसामर्थ्यम् Sy. तमांस्यपहृत्य गमनम् SKN. गमनमपि कृतार्थं जनानाम् Dur.

कुर्वन्ति[1] । उपसः[2] । जनार्थम्[3] ।[4]

अस्थुरु चित्रा उषसः पुरस्तान्मिताइव स्वरवोऽध्वरेषु ।
व्यू व्रजस्य तमसो द्वारोच्छन्तीरव्रञ्छुचयः पावकाः ॥ २ ॥

अस्युरु[5] । तिष्ठन्ति[6] । चित्रवर्णाः[7] । उषसः । प्राच्याम्[8] । मिता[9] इव । स्वरवो[10] यूपाः[11] । यज्ञेषु[12] । विवृण्वन्ति[13] । वारकस्य । तमसः । द्वाराणि । व्युच्छन्त्यः । दीप्ताः[14] । शोधयित्र्यः[15] ।

उच्छन्तीरद्य चितयन्त भोजान्राधोदेयायोषसो मघोनीः ।
अचित्रे अन्तः पणयः ससन्त्वबुध्यमानास्तमसो विमध्ये ॥ ३ ॥

उच्छन्तीः[16] । व्युच्छन्त्य[17] उषसः । अद्य[18] । बोधयन्तु[19] । भोजयितॄनु[20]दारान्[21] । धनदानाय[22] । उषसः । धनवत्यः[23] । चित्ररहितेऽप्रज्ञायमानसर्वपदार्थे[24] । अन्तः । लुब्धाः[25] । स्वबुध्यमानाः[26] ।

---

१. अकुर्वन् Sy. कुर्वत्य आगच्छन्ति । ययेयमनुरज्यते प्राची दिक्, विध्वंसते च तमः Dur.
२. एकस्या एव पूजनार्थं बहुवचनम् Dur.
३. जातनार्थं P. यजमानानाम् Sy. जनस्यार्थाय SKN.
४. VM. ignores उ ॥ उ इति पदपूरणः SKN., Dur. N. 1. 5.; SKN. I. 60.
५. अस्थुरु P., D.
६. तिष्ठति P. व्याप्ता इत्यर्थः Sy.
७. चायनीयाः Sy.
८. प्राच्या P., D. पूर्वस्यां दिशि Sy.
९. खाताः Sy.
१०. स्वपरः P. स्वरपः D.
११. यूवाः D.
१२. Omitted by P. तत्र दृष्टान्तः, ते यथा वेद्याः पुरतो भासन्ते तद्वत् । यद्यपि स्वरुशब्दो यूपच्छेदपतितप्रथमशकलवाची 'यः प्रथमः शकलः परापतेत् स स्वरुः कार्यः' इत्युक्तत्वात् तथाप्यत्र मितशब्दश्रवणात् 'चषालवन्तः स्वरवः' (RV. III. 8. 10.) इत्यादौ तथा दर्शनाच्चात्र यूपवचनः Sy.
१३. विप्रण्वन्ति D. व्यावृण्वन् Sy.
१४. शोधिकाः Sy.
१५. VM. ignores उ ।
१६. ०न्ती M.
१७. उच्छ० P. तमो विवासयन्त्यः Sy.
१८. अस्मिन् दिने Sy.
१९. प्रज्ञापयन्ति Sy.
२०. बोधयि० M.
२१. ०राः तॄन् D. यजमानान् Sy.
२२. तेषां सोमादिधनदानाय Sy.
२३. नव० M.
२४. प्रचायनीये Sy.
२५. ल० P. तत्र पणयः वणिज इवादातारः Sy.
२६. स्वबंध्य० P. स्वर्बुध्य० D. स्वपन्तु । अबुध्यमानाः is suggested for स्वबुध्यमानाः ।

तमसः। विमध्ये[1] अत्यन्तमन्तः[2]।

कुवित्स देवीः सनयो नवो वा यामो बभूयादुषसो वो अद्य।
येना नवग्वे अङ्गिरे दशग्वे सप्तास्ये रेवती रेवदूष ॥ ४ ॥

कुवित्सः[3]। बहु[4]। सः[5]। देव्यः[6]! पुरातनः[7]। नूतनः। वा। यामः[8]। भवतु[9]। उषसः! युष्माकम्[10]। अद्य[11]। येन[12] गमनेन। नवग्वैः[13]। दशग्वैश्च[14]। अङ्गिरोभिर्युक्ते[15]। सप्तास्ये[16] बृहस्पतिना च युक्ते युद्धे। हे रेवत्यः[17]! धनयुक्तम्[18]। ऊष[19] निवसितवत्यः[20]।

यूयं हि देवीर्ऋतयुग्भिरश्वैः परिप्रयाथ भुवनानि सद्यः।
प्रबोधयन्तीरुषसः ससन्तं द्विपाच्चतुष्पाच्चरथाय जीवम् ॥ ५ ॥

यूयम्[21]। यूयम्। हि[22]। देव्यः[23]। यज्ञार्थं युक्तैः[24]। अश्वैः। परिगच्छथ[25]। सद्य एव।

---

१. ॰मसोऽपि म॰ M.

२. मध्य त्यन्तो मन्त्रः P. अत्यन्तगाढान्धकार इत्यर्थः Sy.

३. कुर्वीत्सः P., D.

४. बहुः P., D. बहुवारम् Sy.

५. रथः Sy.

६. हे द्योतमानाः! Sy.

७. पुराणः Sy.

८. गमनसाधनः Sy.

९. भवेत्, गच्छेदित्यर्थः Sy.

१०. अस्मा॰ M. युष्मान् Sy.

११. अस्मिन् यागदिने Sy.

१२. रथेन Sy.

१३. Omitted by P., M. नवग्वैः is suggested for नवग्वै ॥ नवग्वे Sy.

१४. दशग्वे Sy.

१५. ग्वैश्चाङ्गि॰ P. वग्वेश्चाङ्गि॰ M. अङ्गिरोगणे। तौ द्वौ तत्र येऽप्यङ्गिरसस्तेषां गणे। तथान्यत्र—'नवग्वो नु दशग्वो अङ्गिरस्तमः' (RV. X. 62. 6.) इति Sy.

१६. सप्तस्ये P. सप्तस्येन M. सप्तच्छन्दोयुक्तमुखे Sy.

१७. हे धनवत्यः! यूयम् Sy.

१८. ॰न मुक्त॰ P. धनवत् यथा भवति तथा Sy.

१९. विभातं कृतवत्यः। वसेर्व्युच्छनकर्मणो लिण्मध्यमबहुवचनस्येदं रूपम् Sy.

२०. निवसित्यपत्यं P. निवसित्यवत्यं D.

२१. यूयम् M.

२२. खलु Sy.

२३. देव्या P., D. हे द्योतमानाः! Sy.

२४. यज्ञगामिभिः Sy.

२५. परितः प्रकृष्टं गच्छथ Sy.

सर्वाणि भुवनानि । प्रबोधयन्त्यः[1] । उषसः[2] । स्वपन्तम् । द्विपात् । चतुष्पाच्च[3] सर्वं च । जीवम् । चरणाय[4] ।

क्व स्विदासां कतमा पुराणी यया विधाना विदधुर्ऋभूणाम् ।
शुभं यच्छुभ्रा उषसश्चरन्ति न वि ज्ञायन्ते सदृशीरजुर्याः ॥ ६ ॥

क्व स्वित् । क्व । स्विद् इदानीम्[5] । आसां[6] सा भवति । कतमा च सा । पुरातनी । ययोषसा देवाः । दीप्तीनाम्[7] । विधातव्यानि[8] तेजांसि । विदधुः[9] । शुभम्[10] । यदा[11] । शोभमानाः[12] । उषसः । चरन्ति[13] तदानीम् । समानाकाराः[14] । पृथग्[15] न । विज्ञायन्ते । जरारहिताः[16] । "सदृशीरद्य सदृशीरिदु श्वः[17]" इत्युक्तम्[18] ।

ता घा ता भद्रा उषसः पुरासुरभिष्टिद्युम्ना ऋतजातसत्याः ।
यास्वीजानः शशमान उक्थैः स्तुवञ्छंसन्द्रविणं सद्य आप ॥ ७ ॥

ता घा ताः[19] । ताः[20] । खलु[21] । भजनीयाः[22] । उषसः[23] । पुरा[24] । बभूवुः[25] । अभ्येषणीयान्नाः[26] ।

---

१. किं कुर्वत्यः ? प्रबोधयन्त्यः सत्यः परिप्रयाय Sy. २. उषस P.

३. मनुष्यगवादिलक्षणम् Sy.

४. The passage beginning with स्वपन्तम् and ending with चरणाय is omitted by D. गमनादिव्यवहाराय Sy.

५. P. reads त्वदितिदानीम् for क्व । स्विद् इदानीम् ॥ स्वित् अभूवद्य Sy.

६. उषसां मध्ये Sy.

७. ऋभूणां सम्बन्धीनि Sy.

८. चमसादिनिर्माणानि Sy.

९. अकुर्वन् ऋभवः Sy.

१०. शोभां दीप्तिम् Sy.

११. Omitted by P. यास्च Sy.

१२. दीप्ताः Sy. १३. कुर्वन्ति Sy.

१४. सदृश्यः । सर्वेष्वपि दिवसेष्वेकरूपा अतोऽद्यतन्य एताः, एताः पुराण्य इति न ज्ञायन्ते । उषसां सादृश्यं 'सदृशीरद्य सदृशीरिदु श्वः' (RV. I. 123. 8.) इत्यत्र प्रतिपादितम् Sy.

१५. आनकारा पृथिवी P. १६. अशीर्णा नित्यनूतनाः Sy. १७. ०शीरुवश्च M. ०वुश्च P. RV. I. 123. 8ᵃ.

१८. The commentary on this stanza is omitted by D.

१९. ता P. Omitted by M.

२०. ताः खलूपकारिण्यः Sy.

२१. घेति प्रसिद्धौ Sy.

२२. कल्याण्यः स्तुत्या वा Sy.

२३. The passage beginning with ता घा ताः and ending with उषसः is omitted by D.

२४. पूर्वम् Sy. २५. अभवन् Sy.

२६. अभिष्टिद्युम्नाः । अभिगमनमात्रेण द्युम्नं धनं यासां ताः Sy.

यज्ञार्थं जात[1]सत्यभूतसर्वपदार्था: । यास्विति स्पष्टम्[2] । पुनस्ता इति पूरणम् ।

ता आ चरन्ति समना पुरस्तात्समानतः समना पप्रथानाः ।
ऋतस्य देवीः सदसो बुधाना गवां न सर्गा उषसो जरन्ते ॥ ८ ॥

ता आ चरन्ति[3] । ताः[4] । आगच्छन्ति[5] । समानमेव[6] । प्राच्याम्[7] । समाने[8] काले । समानम्[9] । प्रथमानाः । सत्यम्[10] । स्थानम्[11] । जानत्यः[12] । गवाम्[13] । इव । सर्गाः[14] । उषसः[15] । स्तूयन्ते[16] यथा विसृष्टा गाव आगच्छन्त्येवमागच्छन्ति ।[17]

ता इन्न्वे३व समना समानीरमीतवर्णा उषसश्चरन्ति ।
गूहन्तीरभ्वमसितं रुशद्भिः शुक्रास्तनूभिः शुचयो रुचानाः ॥ ९ ॥

ता इन्न्वेव[18] । ताः[19] । क्षिप्रम्[20] । एव । समाने[21] काले । समान्यः[22] । अम्लानेवर्णाः[23] ।

---

१. ०तास० P. ऋतार्थं यज्ञार्थं जाताश्च ताः सत्याः सत्यफलाश्च तादृश्यः Sy.

२. VM. ignores ईजानः । शशमानः । उक्थैः । स्तुवन् । शंसन् । द्रविणम् । सद्यः and आप ॥ यासु उषःसु । ईजानः यागं कुर्वाणः । उक्थैःशस्त्रैः । शशमानः शंसमानः । स्तुवन् सामभिः स्तोत्रं निष्पादयन् । शंसन् शस्त्राणि कुर्वन् । द्रविणं धनम् । सद्यः । आप प्राप्नोति । ता भद्रा इति सम्बन्धः Sy.

३. चन्ति D.

४. उषसः Sy.

५. सर्वतश्चरन्ति Sy.

६. सर्वतः समानाः Sy.

७. प्राच्या P. प्राच्य D. पूर्वस्यां दिशि Sy.

८. समानाद्देशादन्तरिक्षात् Sy.

९. समान P., D. सर्वतः Sy.

१०. यज्ञस्य Sy.

११. सदः, तत्रत्यमृत्विग्यविरादिकमित्यर्थः Sy.

१२. बुधाना बोधयन्त्यः । अन्तर्भावितण्यर्थोऽयम् Sy.

१३. उदकानाम् Sy.

१४. सृष्टयः । 'गवां सर्गा न रश्मयः' (RV. IV. 52. 5.) इति हि श्रुतम् । ता यथा सर्वत्र प्रसङ्गादुपकारत्वाच्च स्तूयन्ते तद्वत् Sy.

१५. एवंमहानुभावा उषसः Sy.

१६. सूयन्ते P.

१७. VM. ignores देवीः ।

१८. इन्वेव P., D. इन्वे M.

१९. ता D. तां M. उषसः Sy.

२०. अद्य Sy.

२१. समाना एकचेत्यर्थः Sy.

२२. एकरूपाः Sy.

२३. समानस्यो मन वर्णाः P. समास्यो मनवर्णाः D. अम्लानवर्णाः is suggested for अम्लानेवर्णाः ॥ अहिंसितवर्णा अपरिमितवर्णा वा Sy.

उषसः । चरन्ति[1] । विनाशयन्त्यः[2] । महत्[3] । तमः[4] । शुक्रैस्तेजोभिः[5] । शुक्लवर्णाः[6] । तनूभिः[7] । दीप्यमानाः[8] । रोचमानाः[9] ।[10]

रयिं दिवो दुहितरो विभातीः प्रजावन्तं यच्छतास्मासु देवीः ।
स्योनादा वः प्रतिबुध्यमानाः सुवीर्यस्य पतयः स्याम ॥ १० ॥

रयिं दिवः । रयिम्[11] । दिवः[12] । दुहितरः[13] । व्युच्छन्त्यः[14] । प्रजावन्तम्[15] । यच्छत[16] । अस्मासु । देव्यः ! सुखात्[17] स्यात्[18] ? यूयम्[19] प्रतिबुध्यमाना भवथ, सुखहेतोर्वा युष्मान्, प्रतिबोधयन्तः[20] । शोभनस्य वीर्यस्य धनस्य[21] । पतयः[22] । स्याम[23][24] ।

तद्वो दिवो दुहितरो विभातीरुप ब्रुव उषसो यज्ञकेतुः ।
वयं स्याम यशसो जनेषु तद्द्यौश्च धत्तां पृथिवी च देवी ॥ ११ ॥

तद्[25] वो दिवः । तत्[26] । वः[27] । हे[28] दिवः, दुहितरः ! व्युच्छन्तीः[29] । उपब्रुवे[30] । उषसः ।

---

१. चरन्ति सर्वतः Sy.
२. किं कुर्वत्यः ? गोपयन्तः Sy.
३. अभ्वम् अतिमहत् Sy. अभ्व इति महन्नाम Ngh. 3. 3.
४. कृष्णं रूपम् Sy.
५. तेजो D. रोचमानैः Sy.
६. ०र्णैः P. दीप्ताः Sy.
७. तनुभिः D. स्वशरीरैः Sy.
८. शुद्धाः Sy.
९. रोचमाना रोचयन्त्यो वा Sy.
१०. VM. ignores इत् ॥ इदिति पूरणः Sy.
११. धनम् Sy.
१२. द्योतमानस्यादित्यस्य Sy.
१३. हे दुहितृस्थानीयाः ! Sy.
१४. विभात्यो विशेषेण भानं कुर्वत्यः Sy.
१५. ०वन्तः P. ०वन्तः D. पुत्राद्युपेतम् Sy.
१६. दत्त Sy.
१७. स्योनात् सुखात् निमित्तभूतात् Sy. स्योनमिति सुखनाम Ngh. 3. 6.
१८. स्थानात् is suggested for स्यात् ।
१९. ययं P. युष्मान् Sy.
२०. प्रतिबोधयन्तो वयम् Sy.
२१. पुत्रादिसहितस्य धनस्य Sy.
२२. ०य D. पालकाः Sy.
२३. ०मः P. भवेम Sy.
२४. VM. ignores आ ।
२५. 'तद्वो दिवः' इति व्युष्टायां जपेत् Sy.
२६. उत्तरार्धप्रथमपादेन वक्ष्यमाणं फलम् Sy.
२७. युष्मान् Sy.
२८. Omitted by D.
२९. विभातीः Sy.
३०. उपेत्य ब्रवीमि Sy.

यज्ञो यस्य प्रज्ञापकः[1]। मम किमित्याह[2] वयम्[3]। स्याम। यशस्विनः[4]। जनेषु[5]। तदस्मभ्यम्[6]। द्यावापृथिवी[7]। च। प्रयच्छताम्[8]।[9]

IV.52.

प्रति॒ ष्या सू॒नरी॒ जनी॑ व्यु॒च्छन्ती॒ परि॒ स्वसुः॑ । दि॒वो अ॑दर्शि दुहि॒ता ॥ १ ॥

[10]प्रति ष्या। एषा[11]। उषाः[12]। जनयित्री[13]। व्युच्छन्ती[14]। रात्रेः[15]। परि[16]। दिवः[17]। दुहिता[18]। प्रत्यदर्शि[19]।

अश्वे॑व चि॒त्रारु॑षी मा॒ता गवा॑मृ॒ताव॑री । सखा॑भूद॒श्विनो॑रु॒षाः ॥ २ ॥

अश्वेव। अश्वेव। चित्रा[20]। रोचमानाः। रश्मीनाम्[21]। माता। यज्ञवती[22]। सखा[23][24]।

---

१. यज्ञ एव केतुः प्रज्ञापको यस्य तादृशोऽहम् Sy.

२. अथ बहुवदुच्यते Sy.

३. वयं स्तुवन्तः Sy.

४. कीर्तेरन्नस्य वा स्वामिनः Sy.

५. अस्मत्समानेषु मध्ये Sy.

६. यशः Sy.

७. द्यौः पृथिवी च Sy.

८. धारयताम् Sy.

९. VM. ignores च and देवी। Ms. D. puts the figure ॥५१॥ here to indicate the end of fifty-first hymn. No such number is given in P. and M.

१०. 'प्रति ष्या' इति सप्तर्चं सप्तमं सूक्तं वामदेवस्यार्षं गायत्रमुषोदेवताकम् 'प्रति ष्या सप्त गायत्रम्' (KSA. 24. 52. p. 18.) इत्यनुक्रमणिका। प्रातरनुवाक उषस्ये क्रतौ गायत्रे छन्दस्याश्विनशस्त्रे चेदं शस्यम्। 'अथोषस्यः प्रति ष्या सूनरी' (ASS. 4. 14.) इति हि सूत्रितम् Sy.

११. Omitted by P. एषो D. सा संस्तूयमाना Sy.

१२. Omitted by D. षो P. सुष्ठु प्राणिनां नेत्री Sy.

१३. जान० D. जनयित्री फलानाम् Sy.

१४. ०न्ति D. तमो विवासयन्ती Sy.

१५. स्वसृस्थानीयाया रात्रेः। 'स्वसा स्वस्रे ज्यायस्यै' (RV. I. 124. 8.) इत्युक्तम् Sy.

१६. उपरिभागे रात्रिपर्यवसानकाले Sy.

१७. द्योतमानस्यादित्यस्य Sy.

१८. उषाः Sy.

१९. प्रतिदृश्यते सर्वैः Sy.

२०. अश्वेन्वित्र P. अश्वेव न्वित्रा D. चायनीया Sy.

२१. ०श्मीन्ना P.

२२. निर्मात्री Sy.

२३. ०वति P.

२४. सुखा P., D. समानख्याना सह स्तूयमाना। अश्विनोरुषसा सह स्तूयमानत्वात् सखित्वं परस्परम् Sy.

अभूत्[1]। अश्विनोः[2]। उषाः।

निगदसिद्धोत्तरा—

उत सखास्यश्विनोरुत माता गवामसि। उतोषो वस्व ईशिषे ॥ ३ ॥

[उत सखा][3][4]।

यावयद्द्वेषसं त्वा चिकित्वित्सूनृतावरि। प्रति स्तोमैरभुत्स्महि ॥ ४ ॥

यावयत्[5]। पृथक्क्रियमाणशत्रुकाम्। त्वाम्। चिकितुषीम्[6]। उषः[7]! स्तोमैः[8]। प्रतिबोधयामः[9]।

प्रति भद्रा अदृक्षत गवां सर्गा न रश्मयः। ओषा अप्रा उरु ज्रयः ॥ ५ ॥

प्रति भद्राः[10]। प्रतिदृश्यन्ते[11]। रश्मयः। विसृष्टाः[12]। इव गावः। सेयम्। उरु[13]। बलम्[14]। आपूरयतु[15][16]।

---

१. ०भूदिति P., भवति Sy.

२. ०नौः P.

३. The *pratīka* is supplied by the Editor.

४. उत अपि च। अश्विनोः सखा। असि। उत अपि च। गवां रश्मीनां मातासि। उत अपि च। हे उषः! वस्वो धनस्य ईशिषे ईश्वरा भवसि Sy.

५. यवयत् D., P.

०का P. यवयन्तो वियुज्यमाना द्वेषांसि द्वेष्टारो यस्यास्तादृशी। पृथक्क्रियन्ते द्वेषांस्यनयेति वा। रात्रौ हननायोद्युक्ता द्वेषिण उषःकाले हि पलायन्ते। तादृशीम् Sy.

६. ज्ञापयन्तीम् Sy.

७. ०तमिव M. सूनृतावरि! सूनृतेति वाङ्नाम। तद्वति! हे देवि! Sy. सूनृतावरीत्युषोनाम Ngh. 1. 8.

८. स्तुतिभिः Sy.

९. प्रतिबोधयामः। स्तुम इत्यर्थः Sy.

१०. ०द्रा P., D.

११. प्रविश्यतेन P., D.

१२. सर्गाः वर्षधाराः Sy.

१३. महत् Sy.

१४. तेजः Sy.

१५. आपूरयत् Sy.

१६. VM. ignores भद्राः and गवाम्॥ स्तुत्याः। गवाम् उदकानाम् Sy.

आपप्रुषी विभावरि व्यावज्ज्योतिषा तमः । उषो अनु स्वधामव ॥ ६ ॥

आपप्रुषी[1] । आपूरयन्ती[2] । उषः[3]! विवारयति[4] । ज्योतिषा[5] । तमः[6] । सा । त्वम् । अन्नम्[7] । प्रति[8] । आगच्छ[9] ।

आ द्यां तनोषि रश्मिभिरान्तरिक्षमुरु प्रियम् । उषः शुक्रेण शोचिषा ॥ ७ ॥

आ[10] द्यां[11] तनोषि । आ[12] तनोषि । रश्मिभिः । दिवम् । आतनोषि[13] च । अन्तरिक्षम्[14] । विस्तीर्णम्[15] । प्रियम् । अर्थैकवदाह[16]—उष इति[17] ।

IV.53.

तद्देवस्य सवितुर्वार्यं महद्वृणीमहे असुरस्य प्रचेतसः ।
छर्दिर्येन दाशुषे यच्छति त्मना तन्नो महाँ उदयान्देवो अक्तुभिः ॥ १ ॥

तद्[18] देवस्य । तत्[19] । देवस्य । सवितुः[20] । वरणीयम् । महत्[21] । वृणीमहे[22] । प्राज्ञस्य[23] ।

---

१. ०पप्रुषि D. ०पप्रुषि P.
२. आपूरयन्ती तेजसा जगत् Sy.
३. VM. seems to explain विभावरि as उषः and उषः as सा त्वाम् ॥ हे विभावरि ! विभावति ! Sy.
४. विवारयसि P. निवा० M. व्यावृणोः Sy.
५. तेजसा Sy. ६. अन्धकारम् Sy.
७. हविर्लक्षणमन्नम् Sy. ८. अनु पश्चात् Sy. ९. ०च्छः P. रक्ष Sy.
१०. 'आ द्यां तनोषि' इत्येषा देवानां हविःषु उषसोऽनुवाक्या । सूत्रितञ्च 'आ द्यां तनोषि रश्मिभिरावहन्ती पोष्या वार्याणि' (ASS. 6. 14.) इति Sy.
११. ०द्यन्त० P.
१२. Omitted by P.
१३. आतनोषि । रश्मिभिः । दिवम् and आ omitted by M. १४. ०क्ष P.
१५. ०र्णा P., D. १६. ०वदह M.
१७. VM. ignores शुक्रेण and शोचिषा ॥ शुक्रेण दीप्तेन । शोचिषा प्रकाशेन युक्ता सती एवं करोषि Sy. Ms. D. puts the figure ॥५२॥ here to indicate the end of fifty-second hymn. No such number is given in P. and M.
१८. 'तद्देवस्य' इति सप्तर्चमष्टमं सूक्तं वामदेवस्यार्षं जागतं सावित्रम् । तथा चानुक्रम्यते 'तद्देवस्य सावित्रं तु जागतम्' (KSA. 24. 53. p. 18.) इति । आभिप्लविके तृतीयेऽहनि वैश्वदेवशस्त्रे सावित्रनिविद्धानमिदम् । तथा च सूत्रितम्—'तद्देवस्य धृतेन द्यावापृथिवी इति तिस्रः' (ASS. 7. 7.) इति Sy.
१९. धनम् Sy.
२०. Omitted by P., D. प्रेरकस्य Sy.
२१. पूज्यम् Sy. २२. प्रार्थयामः Sy.
२३. असुबलम् । तद्वतः Sy.

सुमतेः[1] । तेजः[2] । येन तेजसा[3] । आत्मनैव । यजमानाय[4] धनम् । प्रयच्छति । तत् । तेजः महान् । सविता । अस्माकम् । उद्यच्छतु[5] । रात्रिभ्यः[6] ।

दिवो धर्ता भुवनस्य प्रजापतिः पिशङ्गं द्रापिं प्रति मुञ्चते कविः ।
विचक्षणः प्रथयन्नापृणन्नुर्वजीजनत्सविता सुम्नमुक्थ्यम् ॥ २ ॥

दिवो धर्ता । दिवः[7] । धर्ता[8] । प्रजापतिः[9] । भूतजातस्य[10] । पिशङ्गवर्णम्[11] । तेजोरूपं[12] कवचम् । प्रतिमुञ्चते[13] । क्रान्तप्रज्ञः[14] । विद्रष्टा[15] । तेजः । प्रथयन्[16] । उर्वन्तरिक्षम्[17] । आपूरयन्[18] । अस्माकं प्रशस्यम्[19] । धनम्[20] । जनयतु[21][22] ।

आप्रा रजांसि दिव्यानि पार्थिवा श्लोकं देवः कृणुते स्वाय धर्मणे ।
प्र बाहू अस्राक्सविता सवीमनि निवेशयन्प्रसुवन्नक्तुभिर्जगत् ॥ ३ ॥

आप्राः रजांसि[23] । दैव्यान्[24] । पार्थिवांश्च[25] । लोकान्[26] । तेजसापूरयति[27] । सोऽयं देवः[28] ।

---

१. प्रकृष्टमतेः । देवस्येति सम्बन्धः Sy.
२. छर्दिः । गृहनामैतत् (Ngh. 3. 4.) । गृहोपलक्षितं धनजातम् । यद्वा छर्दिरिति तेजोनाम । तत्तेज उद्यच्छत्विति Sy.
३. धनेन युक्तः सन् Sy. ४. हविर्दत्तवते यजमानाय Sy. ५. करोत्वित्यर्थः Sy.
६. The passage beginning with तत् तेजः and ending with रात्रिभ्यः is omitted by P. P. adds सोयदेव आत्मस्वामी कायमनुष्याणां क्रमणेनुज्ञाशब्दं करोति प्रसौति after प्रयच्छति । The additional passage in P. has a striking resemblance with the commentary on RV. IV. 53. 3. रात्रिभिः । एतदह्नामप्युपलक्षणम् । सर्वैः दिवसैः सर्वेषु दिवसेषु Sy.
७. द्युलोकस्य Sy. ८. दिवः । धर्ता omitted by P. धारकः Sy.
९. प्रजानां प्रकाशवृष्ट्यादिना पालयिता Sy.
१०. न केवलं दिव एव अपि तु कृत्स्नस्यापि लोकस्य धर्ता Sy.
११. ०ङ्गं व० M. ०वर्णः D.
१२. हिरण्मयं कवचम् Sy. १३. प्रमु० P., D. आच्छादयति प्रत्युदयम् Sy.
१४. प्राज्ञो देवः Sy. १५. निद्र० M. विविधं द्रष्टा स एव देवः Sy. १६. प्रख्यापयन् Sy. १७. प्रभूतम् Sy. १८. आपूरयन् परितः Sy. १९. स्तुत्यम् Sy.
२०. सुखम् Sy.
२१. जयतु P., D. उत्पादयति Sy.
२२. VM. ignores सविता ।
२३. जांसि D.
२४. दे० P. द्युसम्बन्धीनि Sy.
२५. पार्थिवानि Sy.
२६. तिस्रः खलु द्यावः पृथिव्यश्च । 'तिस्रो भूमीर्धारयन् त्रीँरुत द्यून्' (RV. II. 27. 8.) इति हि श्रुतम् Sy.
२७. आपूरयति स्वाभिर्भाभिः Sy.
२८. अयं देवः सविता Sy.

आत्मस्वामिकाय[१] । मनुष्याणां कर्मणे[२] । अनुज्ञाशब्दम्[३] । करोति प्रसौतीत्यर्थः । प्रसूजति[४] । बाहू[५] । प्रसवार्थम्[६] । निवेशयन्[७] । प्रसुवंश्च[८] । अञ्जनसाधने रश्मिभिः[९] । जगत्[१०] ।[११]

अदा॑भ्यो॒ भुव॑नानि प्र॒चाक॑शद्व्र॒तानि॑ दे॒वः स॑वि॒ताभि र॑क्षते ।
प्रास्रा॑ग्बा॒हू भुव॑नस्य प्र॒जाभ्यो॑ धृ॒तव्र॑तो म॒हो अज्म॑स्य राजति ॥ ४ ॥

अदाभ्यः[१२] । अहिंस्यः[१३] । भुवनानि[१४] । प्रकाशयन्[१५] । कर्माणि[१६] । देवः । सविता । अभिरक्षते । प्रसुजति[१७] । बाहू[१८] । लोकस्य । सर्वाभ्यः प्रजाभ्यस्तदर्थम्[१९] । धृतकर्मा[२०] । महतः[२१] । गृहस्य[२२] दिवः । ईश्वरो भवति ।[२३]

त्रिर॒न्तरि॑क्षं सवि॒ता म॑हित्व॒ना त्री रजां॑सि परि॒भूस्त्रीणि॑ रोच॒ना ।
ति॒स्रो दिवः॑ पृथि॒वीस्ति॒स्र इ॑न्वति त्रि॒भिर्व्र॒तैर॒भि नो॑ रक्षति॒ त्मना॑ ॥ ५ ॥

त्रिरन्तरिक्षम् । त्रीणि[२४] । अन्तरिक्षाणि[२५] । सविता[२६] । महत्त्वेन[२७] । त्रीणि च[२८] ।

---

१. ०मीका० D. स्वकीयाय Sy.
२. धारणाय Sy. ३. प्रशस्तिम् Sy.
४. प्रसृजति । प्रसारयतीत्यर्थः Sy.
५. बहू P. बाहू स्वीयौ Sy.
६. प्रसवेऽनुज्ञायां निमित्तायाम् Sy.
७. निवें० D. निवेश० P. स्वस्वकार्ये स्थापयन् Sy. ८. प्रेरयन् Sy.
९. ०वस्थाजसधन P. कान्तिभिः । अथवाक्तुभिरिति रात्रिनाम । (Ngh. 1. 7.) तदुपलक्षितैः सर्वैर्वासरैः सर्वेष्वपि दिनेष्वेवं करोतीत्यर्थः Sy.
१०. जम P. जगं D.
११. VM. ignores सविता ।
१२. आदा० D.
१३. अन्यैरहिंसितः सन् Sy.
१४. भव० P., D.
१५. दीपयन् Sy.
१६. कर्माणि प्राणिनाम् Sy.
१७. प्रसारयति । स्वस्वकर्मणेऽनुजानातीत्यर्थः । सर्वव्यापाराणां सूर्याधीनत्वात् । 'सविता वै प्रसवानामीशे' (AB. 1. 16.) इति हि श्रुतिः Sy.
१८. बाहु P. बाहू स्वीयौ Sy.
१९. प्रजाभ्यः तत्रत्याभ्यः Sy.
२०. धृतकर्मा स तथा कुर्वन् Sy.
२१. महते P.
२२. ग्रहस्य M. जगतः Sy.
२३. The passage beginning with अभिरक्षते and ending with भवति is omitted by M.
२४. त्रिभेदम् Sy.
२५. अन्तरा क्षान्तं भवति जगदित्यन्तरिक्षम् । 'वायुविद्युद्वरुणाख्यास्त्रयो लोका अन्तरिक्षभेदाः स वायुलोकं स वरुणलोकम्' (Kau. U. 1. 3.) इत्यादिश्रुतेः Sy.
२६. अयं सविता Sy.
२७. The passage beginning with त्रिरन्तरिक्षम् and ending with महत्त्वेन is omitted by M.
२८. त्रीणि Sy.

पार्थिवांश्च[१] । परिभवति[२] । त्रीणि[३] च । दिव्यानि[४] । प्रकारान्तरेणाह[५]—तिस्रः । दिवः[६] । तिस्रश्च । पृथिवीः[७] । व्याप्नोति[८] । त्रिभिश्च[९] । कर्मभिः[१०] । अस्मान् । अभिरक्षति[११] । स्वयमेव[१२] ।

**बृहत्सुम्नः प्रसवीता निवेशनो जगतः स्थातुरुभयस्य यो वशी ।**
**स नो देवः सविता शर्म यच्छत्वस्मे क्षयाय त्रिवरूथमंहसः ॥ ६ ॥**

बृहत्सुम्नः[१३] । महासुखः[१४] । प्रेरयिता[१५] । निवेशयिता[१६] । जङ्गमस्य । स्थावरस्य च । उभयस्य । यः । स्वामी[१७] । सः[१८] । नः[१९] । देवः । सविता । सुखम् । प्रयच्छतु[२०] । अस्माकम् । अंहसः[२१] । विनाशय[२२] । तिगुणमपि[२३] वास्माकं वासाय दारिद्र्यमतीत्येति[२४] ।

---

१. VM. seems to explain रजांसि as पार्थिवांश्च ॥ रञ्जनात्मकानि त्रीणि क्षित्यन्तरिक्षद्युलक्षणान् त्रीन् लोकान् इन्वति । पूर्वमन्तरिक्षस्यैवान्तरभेद उक्तः । इह तु सामान्याकारेणेत्यपुनरुक्तिः Sy.

२. P. adds च after परिभवति ॥ व्याप्नोति Sy.

३. त्रीणि च omitted by P., D.

४. VM. seems to explain रोचना as दिव्यानि ॥ रोचनानि रोचमानानग्निवाय्वादित्यानुक्तस्थानत्रयस्वामित्वेन इन्वति Sy.

५. पूर्वमन्तरिक्षस्यैवावान्तरभेद उक्तः । अथ द्युपृथिव्योरवान्तरभेद उच्यते Sy.

६. इन्द्रप्रजापतिसत्याख्यान् त्रीन् लोकान् इन्वति Sy.

७. क्षित्यवान्तरभेदान् लोकान् इन्वति Sy.

८. वाप्नो० D.

९. एवं सर्वत्र व्याप्तो देवः त्रिभिः Sy.

१०. कर्मभिः उष्णवर्षहिमाख्यैः Sy.

११. ०रक्ष P., D. अभिरक्षतु । परिपालयतु Sy.

१२. आत्मनैव स्वीयानुग्रहबुद्धयैव Sy.

१३. The *pratika* is omitted by P. सुम्नः is omitted by D.

१४. ०सुखं P., D. यः प्रभूतधनः प्रभूतसुखो वा Sy.

१५. प्रकर्षेणानुज्ञाता कर्मणाम् Sy.

१६. निवेशिता P., M. सर्वैर्गन्तव्यः Sy.

१७. य स्वामी P., D.

१८. स महान् Sy.

१९. अस्मभ्यम् Sy.

२०. यच्छतु Sy.

२१. पापस्य Sy.

२२. विनाशय is suggested for विनाशय ॥ क्षयाय भवत्विति शेषः Sy.

२३. त्रिगु० is suggested for तिगु० ॥ त्रीणि वरूथानि गृहाणि स्थानानि क्षित्यादीनि यस्य तत्तादृशम् Sy.

२४. दाविद्रय० M.

आग॑न्दे॒व ऋ॒तुभि॒र्वर्ध॑तु॒ क्षयं॒ दधा॑तु नः सवि॒ता सु॑प्र॒जामिष॑म् ।
स नः॑ क्ष॒पाभि॒रह॑भिश्च जिन्वतु प्र॒जाव॑न्तं र॒यिम॒स्मे समि॑न्वतु ॥ ७ ॥

[1]आगन्[2] । आगच्छतु[3] । देवः । ऋतुभिः[4] । वर्धयतु च । क्षयम्[5] । दधातु[6] च । अस्माकम् । सविता । शोभनप्रजम्[7] । अन्नम्[8] । सः । अस्मान् । अहोभिः[9] । रात्रिभिः[10] । च[11] । प्रीयतु[12] । प्रजावन्तम् । रयिम् । अस्मासु । समागमयतु[13] ।[14]

IV.54.

अभू॑द्दे॒वः स॑वि॒ता वन्द्यो॒ नु न॑ इ॒दानी॒मह्न॑ उप॒वाच्यो॒ नृभिः॑ ।
वि यो रत्ना॒ भज॑ति मान॒वेभ्यः॒ श्रेष्ठं॑ नो॒ अत्र॒ द्रवि॑णं॒ यथा॒ दध॑त् ॥ १ ॥

[15]अभूद् देवः । भवतु[16] । देवः । सविता[17] । स्तोतव्यः[18] । क्षिप्रम्[19] । अस्माकम् । अस्मिन्[20]

---

१. राजकये 'आगन्देवः' इत्येषानुवचनीया । सूत्रितञ्च—'आगन्देव ऋतुभिर्वर्धतु क्षयमित्यर्धर्चं आरमेत्' (ASS. 4. 4.) इति Sy. २. आगन्देवः M.

३. आगन्—गमेर्लङि रूपम् Sy.

४. ऋतुभिः सह Sy.

५. गृहम् Sy. ६. ददातु Sy.

७. प्रजम् P., D. शोभनपुत्राद्युपेतम् Sy.

८. अन्न P.

९. सर्वेषु दिनेष्वित्यर्थः Sy.

१०. भि० P.

११. Omitted by D.

१२. P. reads अस्मानभिरक्ष स्वयमेव बृहत् महासुखं प्रेरयिता नि for रात्रिभिः । च प्रीयतु । This has a striking resemblance with the commentary on RV. IV. 53. 5, 6. प्रीणयतु is suggested for प्रीयतु ॥ प्रीणयतु धनादिभिः Sy.

१३. प्रजागम० P. व्याप्नोतु प्रापयत्वित्यर्थः Sy.

१४. Ms. D. puts the figure ॥५३॥ here to indicate the end of fifty-third hymn. No such number is given in P. and M.

१५. 'अभूद्देवः' इति षड्र्चं नवमं सूक्तं वामदेवस्यार्षं सावित्रम् । अन्त्या त्रिष्टुप् शिष्टास्त्रिष्टुबन्तपरिभाषया (Cf. KSA. 12. 13. p. 5.) जगत्यः । तथा चानुक्रमणिका—'अभूद्देवः षट् त्रिष्टुबन्तम्' (KSA. 24. 54. p. 18.) इति । अग्निष्टोमे वैश्वदेवशस्त्रे सावित्रनिविद्धानमिदम् । तथा च सूत्रम् 'अभूद्देव एकया च दशभिश्च स्वभूते' (ASS. 5. 18.) इति । आद्या सावित्रग्रहस्यानुवाक्या । तथा च सूत्रम् 'सावित्रेण ग्रहेण च चरन्त्यभूद्देवः सविता वन्द्यो नु नः' (ASS. 5. 18.) इति Sy.

१६. प्रादुरासीत् Sy.

१७. सः सविता Sy.

१८. वन्दनीयो भवति Sy.

१९. अतः नु क्षिप्रमेव Sy.

२०. यागकाले Sy.

काले। अह्नः[1]। उपस्तोतव्यः[2]। मनुष्यैः[3]। यः[4]। रत्नानि[5]। विभजति[6]। मनुष्येभ्यः[7]। सवितास्मभ्यमपि। यथा। श्रेष्ठम्[8]। धनम्[9]। अस्मिन् तृतीये सवने[10]। प्रयच्छति[11] तथोपवाच्यः।

देवेभ्यो हि प्रथमं यज्ञियेभ्योऽमृतत्वं सुवसि भागमुत्तमम्।
आदिद्दामानं सवितर्व्यूर्णुषेऽनूचीना जीविता मानुषेभ्यः॥ २॥

देवेभ्यः। देवेभ्यः। हि[12]। प्रथमम्[13]। यज्ञियेभ्यः[14]। अमृतत्वम्[15]। प्रयच्छसि[16]। भजनीयम्[17]। उत्तमम्[18]। अनन्तरम्[19]। एव। खण्डयितारम्[20]न्धकारम्[21]। अपावृणोषि[22]। तथा[23]नूचीनानि[24]। जीवितानि[25]। मनुष्येभ्यः[26] प्रयच्छसि[27]।[28]

---

१. तृतीयसवने Sy.
२. स्तोतव्य P. स्तुत्यो भवति Sy.
३. अस्मदीयैर्होतृभिः Sy.
४. या P. देवः Sy.
५. रमणीयानि धनानि Sy.
६. विभजन्ति P., M. ७. मनोरपत्येभ्यो यजमानेभ्यस्तेषामर्थाय Sy.
८. स देवः श्रेष्ठं प्रशस्यम् Sy.
९. द्रविणं गवादिलक्षणं धनम् Sy.
१०. अस्मिन् कर्मणि Sy.
११. दद्यादित्यर्थः। तथा वन्द्य उपवाच्यश्चाभूदिति Sy.
१२. हिशब्दः प्रसिद्धौ Sy. हे सवितः! हि निश्चितम् Mah. हि यस्मात् U.
१३. प्रथममुदयसमये Mah.
१४. यज्ञार्हेभ्यः Sy. यज्ञार्हेभ्यो देवेभ्यः Mah.
१५. तत्साधनम् Sy. कीदृशं भागम्? अमृतत्वममृतप्रदमित्यर्थः। कार्यकारणयोरभेदेन निर्देशः Mah.
१६. अनुजानासि Sy. प्रेरयसि 'षू प्रेरणे' तुदादिः। अभ्यनुजानासीत्यर्थः Mah.
१७. सोमादिलक्षणम् Sy. भागमग्निहोमरूपम् Mah.
१८. उत्तरम् P. उत्कृष्टतमम् Sy.
१९. उदयानन्तरम् Mah.
२०. हविषां दातारम् Sy. ददाति प्रकाशमिति दामा रश्मिसमूहस्तम् Mah. दातारमुत्पत्तिस्थितिलयानां स्वकीयं रश्मिजालम् U.
२१. अन्धकारम् is omitted by M.
२२. प्रकाशयसि Sy. विवृणोषि विस्तारयसि Mah. रश्मीनामुद्गमे हि विप्रोऽकम्पितमनसाऽग्निहोत्रादीनि कर्माणि कुर्वीत U.
२३. Omitted by P., D. किञ्च U.
२४. नू० P., D. अनुक्रमयुक्तानि पितृपुत्रपौत्रा इत्यनुक्रमः। ईदृशानि जीवितानि पश्चात् व्यूर्णुषे Sy. अन्वञ्चन्ति तान्यनूचीनानि रश्मिसमूहानुगतानि तमसि तदभावात् Mah. अन्वञ्चितानि तदनुगतानि U.
२५. जीविता जीवनहेतूनि कर्माणि व्यूर्णुषे। सूर्योदयानन्तरमेव प्राणिनां कर्मसु प्रवृत्तेः Mah. जीवनहेतूनि कर्माणि U.
२६. यजमानेभ्यः Sy.
२७. लौकिकवैदिकव्यवहारप्रवर्तयिता त्वमेवेत्यर्थः Mah. ददासि तस्मात्त्वामेव स्तुम इति वाक्यशेषः U.
२८. VM. ignores सवितः!
This stanza=YV. 33. 54.

अचित्ती यच्चकृमा दैव्ये जने दीनैर्दक्षैः प्रभूती पूरुषत्वता ।
देवेषु च सवितर्मानुषेषु च त्वं नो अत्र सुवतादनागसः ॥ ३ ॥

अचित्ती[1] । अज्ञानेन[2] । यत्[3] । चकृम । दैव्ये[4] । जने । दीनत्वे[5] । वृद्धया[6] । प्रभावेन[7] । पौरुषेण[8] वा कर्तव्यम् । देवेषु[9] । मनुष्येषु[10] । च[11] । अस्मिन्[12]नकर्तव्ये कृतेऽपि । अनागस्कान्[13] । अस्मान्[14] । प्रसुवेति[15] यथोभयेऽस्मान् न निन्दन्ति तथा कुर्विति[16] ।

न प्रमिये सवितुर्दैव्यस्य तद्यथा विश्वं भुवनं धारयिष्यति ।
यत्पृथिव्या वरिमन्ना स्वङ्गुरिर्वर्ष्मन्दिवः सुवति सत्यमस्य तत् ॥ ४ ॥

न प्रमिये[17] । न । प्रमातुं शक्यम्[18] । सवितुः । दैव्यस्य[19] । तत्कर्म । येन[20] कर्मणा । सर्वमिदम् । भुवनम् । धारयिष्यति धारयति[21] च । यत्[22] । पृथिव्याः[23] । स्तृते[24] देशे । शोभनाङ्गुलिकः[25] सविता । प्रसौति[26] । यच्च[27] दिवः[28] । उच्छ्रिते[29] । सत्यम्[30] । तत्[31] । अस्य[32] कर्म ।

---

१. ०त्ति P.
२. वयम् अप्रज्ञया Sy.
३. आगः Sy.
४. देवे त्वयि Sy.
५. दुर्बलैः पुत्रादिभिर्ऋत्विग्भिर्वा Sy.
६. तथा प्रवृद्धैर्वा तैः Sy.
७. प्रभूत्या । ऐश्वर्यमदेनेति यावत् Sy.
८. पुरुषवत्तया च Sy.
९. न केवलं त्वय्येव कृतमपि तु अन्येषु Sy.
१०. मानुषेषु च Sy.
११. अज्ञानादिभिर्यच्चकृम Sy.
१२. अस्मिन् कर्मणि Sy.
१३. अनेनस्कान० P. अनानस्कान० D. अपापान् Sy.
१४. कृतवतोऽस्मान् Sy.
१५. अनुजानीहि Sy.
१६. VM. ignores च । सवितः and त्वम् ॥
१७. देवसुवां हविःषु सवितुः सत्यप्रसवस्य 'न प्रमिये' इति याज्या । सूत्रितञ्च 'न प्रमिये सवितुर्दैव्यस्य तद् बृहस्पते प्रथमम्' (ASS. 4. 11.) इति Sy.
१८. न प्रमीयेत न प्रहिंस्येत । हिंसार्हं न भवतीत्यर्थः । कृत्यार्थे केन्प्रत्ययः Sy.
१९. देवस्य P., D. यद्वा दैव्यस्येत्यधिकरणे षष्ठी । सा च कर्मार्था । दैव्यं कर्मेत्यर्थः Sy.
२०. P. and D. add तत् after येन ॥ यथा Sy.
२१. धारयति विश्वधारणरूपं यत्कर्मास्ति तन्न प्रमिये Sy.
२२. यः Sy.
२३. भूम्याः Sy.
२४. उरुत्वे Sy.
२५. शोभमानाङ्गुलीयकः P. शोभनाङ्गुल्युपलक्षितहस्तः Sy.
२६. ०सौ० P. प्रेरयति Sy.
२७. आकारश्चार्थे Sy.
२८. द्युलोकस्य Sy.
२९. उरुत्वे च सुवति Sy.
३०. अबाध्यमिति Sy.
३१. उक्तं कर्म Sy.
३२. देवस्य Sy.

इन्द्र॑ज्येष्ठान्बृ॒हद्भ्यः॒ पर्व॑तेभ्यः॒ क्षयाँ॑ ए॒भ्यः सु॑वसि प॒स्त्या॑वतः ।
यथा॑यथा प॒तय॑न्तो वियेमि॒र ए॒वैव त॑स्थुः सवितः स॒वाय॑ ते ॥ ५ ॥

इन्द्रज्येष्ठान्[1] । इज्यमानेनेन्द्रेण युक्तान्[2] । महद्भ्यः । शिलोच्चयेभ्यः[3] । गृहयुक्तान्[4] । ऋषिनिवासान्[5] । प्रसुवसि[6] । किं च यथा यथा[7] । पतयन्तो[8] मनुष्याः । कर्मणि विविधं यच्छन्ति[9] । तथा[10] तथा । तव । अनुज्ञामपेक्ष्य[11] । तिष्ठन्ति[12] ।[13]

ये ते॒ त्रिरह॑न्त्सवितः स॒वासो॑ दि॒वेदि॑वे॒ सौभ॑गमासु॒वन्ति॑ ।
इन्द्रो॒ द्यावा॑पृथि॒वी सिन्धु॑र॒द्भिरा॑दि॒त्यैर्नो॒ अदि॑तिः॒ शर्म॑ यंसत् ॥ ६ ॥

ये ते त्रिः[14] । प्रातर्मध्यन्दिने सायमिति । ये[15] । ते[16] । त्रयः[17] । सर्वाः[18] । अन्वहम्[19] । सौभाग्यम्[20] । आसुवन्ति[21] । तैः सहेन्द्रादयः[22] । सरस्वती[23] च । अद्भिः[24] । आदित्यैः[25] सह । अदितिश्च[26] । अस्मभ्यम्[27] । सुखम् । यच्छतु[28] ।

---

१. ०ष्ठात् P.
२. ०क्तात् P. इन्द्रः परमैश्वर्ययुक्तस्त्वमेवेन्द्रो वा ज्येष्ठो ज्यायान् पूज्यो येषां ते तादृशाः । तानस्मान् Sy.
३. पर्वतेभ्योऽप्यधिकान् Sy.
४. ग्रह० D. गृहवतः Sy.
५. निवासान् ग्रामनगरादीन् Sy.
६. प्रेरयसि Sy.
७. Omitted by P., D.
८. गच्छन्तस्त्वाम् Sy.
९. विनियम्यन्ते त्वया Sy.
१०. एवमेव नियमनमनतिक्रम्य Sy.
११. ०मनपे० P. अनुज्ञायै Sy.
१२. तिष्ठति P. १३. VM. ignores एभ्यः and सवितः ॥ एभ्यः यजमानेभ्यः । हे सवितः ! Sy. १४. त्रीः P.
१५. यजमानाः Sy. १६. त्वदर्थम् Sy.
१७. त्रिरहन्, अभिषुण्वन्ति । न केवलमेकस्मिन्नेवाहनि सवनत्रयेष्वपि Sy.
१८. सवाः is suggested for सर्वाः ॥ सोमाः । द्वितीयार्थे प्रथमा । सोमान् । यद्वा सवासः सवनानि प्रातरादीनि प्रति Sy. १९. प्रतिदिनम् Sy.
२०. सौभाग्यजनकम् Sy.
२१. सौग्यभामा संपन्ति P. सौम्य भावा सु० D. अभिषुण्वन्ति Sy.
२२. इन्द्राय M. आदि refers to द्यावापृथिवी ॥ इन्द्रो द्यावापृथिव्यौ च Sy.
२३. सिन्ध्वभिमानिदेवता च Sy.
२४. चानभिः P. अद्भिर्विशिष्टा Sy.
२५. आदित्यैः सहिता Sy.
२६. दितिः M. शर्म यंसत् । सावित्रे सूक्ते इन्द्रादीनां निपातमुक्त्वा तेषां प्रार्थना न विरुध्यते Sy.
२७. तेभ्यः अस्मभ्यम् Sy.
२८. VM. ignores सवितः ॥ Ms. D. puts the figure ॥५४॥ here to indicate the end of fifty-fourth hymn. No such number is given in P. and M.

## IV.55.

**को वंस्त्राता वंसवः को वंरूता द्यावाभूमी अदिते त्रासीथां नः ।**
**सहींयसो वरुण मित्र मर्तात्को वोऽध्वरे वरिंवो धाति देवाः ॥ १ ॥**

को[1] वः । कः । वः[2] । रक्षिता[3] । हे वसवः[4] ! को वो[5] । सम्भक्ता[6] । हे द्यावाभूमी[7] ! अदिते[8] ! रक्षतम् । अस्मान्[9] । तथा वरुण ! मित्र[10] ! अभिभवितुः[11] । मनुष्याद् अस्मान् रक्षतम्[12] । हे विश्वेदेवाः[13] ! कः । वः[14] । यज्ञे[15] । पूजाम्[16] । धारयति[17] ।

**प्र ये धामांनि पूर्व्याण्यर्चान्वि यदुच्छान्वियोतारो अमूंराः ।**
**विधातारो वि ते दंधुरजंस्रा ऋतधींतयो रुरुचन्त दस्माः ॥ २ ॥**

प्र ये धामानि[18] । प्रार्चन्ति[19] । ये[20] । पूर्व्याणि[21] । धामानि[22] । व्युच्छन्ति[23] । यदा[24] । पृथक्-

---

१. 'को वस्त्राता' इति दशर्चं दशमं सूक्तं वामदेवस्यार्षं विश्वेदेवदेवताकम् । अष्टम्याद्यास्तिस्रो गायत्र्यः शिष्टा अनादेशपरिभाषया (Cf. KSA. 12. 6. p. 5.) त्रिष्टुभः । तथा चानुक्रम्यते— 'को वो दश वैश्वदेवं त्रिगायत्र्यन्तं तु' (KSA. 24. 55. p. 18.) इति । विनियोगो लैङ्गिकः Sy. २. युष्मान् Sy.
३. त्रातास्ति । यतो यूयं वसवोऽत्र इत्यभिप्रायः Sy. ४. हे सर्वस्य वासयितारो देवाः ! Sy. ५. वः P.
६. सम्भक्ता अस्ति । यद्वा वो युष्माकं मध्ये कस्त्राता रक्षको देवः कश्च वरूता वारयिता दुःखानां वरणीयो वा भवति Sy. ७. द्यावापृथिवी M.
८. हे अखण्डनीये ! एतदपि द्यावाभूम्योर्विशेषणम् । संख्याव्यत्ययः । यदीदं पृथग्देवतामन्त्रणं स्यात् तर्हि निघातो न स्यात् 'आमन्त्रितं पूर्वमविद्यमानवत्' इति पूर्वस्याविद्यमानवत्त्वेनास्यैव पादादित्वात् 'अदिते मित्र वरुणोत मृळ' (RV. II. 27. 14.) इति 'आदित्या रुद्रा वसवः सुदानवः' (RV. X. 66. 12.) इतिवत् । तस्यैव विशेषणत्वे 'नामन्त्रिते समानाधिकरणे' इत्यविद्यमानवत्त्वप्रतिषेधात् 'अग्ने पावक रोचिषा' (RV. V. 26. 1.) इतिवत् अस्य निघातः सिध्यति । तस्मात् द्यावाभूमी इत्येतस्य विशेषणम् Sy.
९. ०क्षतास्मा० M. रक्षितमास्मा० D.
१०. हे मित्र ! युवाम् Sy.
११. ०भवतु P.
१२. रक्षतं P. नस्त्रासीथाम् Sy.
१३. हे देवाः ! Sy. १४. युष्माकम् Sy.
१५. यागे Sy. १६. धनम् Sy.
१७. ०न्ति M. ददाति । यद्वा वो युष्माकं मध्ये को वरिवो धाति धारयति Sy.
१८. सामानि D.
१९. अर्चन्ति प्रयच्छन्ति स्तोतृभ्यः Sy.
२०. देवाः Sy.
२१. पुरातनानि Sy.
२२. स्थानानि वा Sy.
२३. उच्छन्ति तमो विवासयन्ति देवाः Sy.
२४. यथा M. ये च Sy.

कर्तारः पापस्य[१] । अमूढाः । विधातारः[२] । ते । विदधुः[३] । अजस्रा[४] रश्मयः । सप्त[५] दीप्तयस्ते । दीप्यन्ते[६] । दर्शनीयाः ।

प्र प॒स्त्या॒३॑मदि॑तिं॒ सिन्धु॑म॒र्कैः स्व॒स्तिमी॑ळे स॒ख्याय॑ दे॒वीम् ।
उ॒भे यथा॑ नो॒ अह॑नी नि॒पात॑ उ॒षासा॒नक्ता॑ करता॒मद॑ब्धे ॥ ३ ॥

प्र पस्त्याम्[७] । अस्तौमि[८] । गृहहिताम्[९] । अदितिम्[१०] । सरस्वतीम्[११] । स्वस्ति च[१२] । देवीम्[१३] । स्तोत्रैः[१४] । सख्यसिद्ध्यर्थम्[१५] । उभये[१६] । यथा । अस्मान् । अहोरात्रे[१७] । निश्रमेण[१८] रक्षत एवम् । अहिंसिते[१९] । कर्म कुरुताम्[२०] ।[२१]

व्य॑र्य॒मा वरु॑णश्चेति॒ पन्था॑मि॒षस्पति॑ः सुवि॒तं गा॒तुम॒ग्निः ।
इन्द्रा॑विष्णू नृ॒वदु॒ षु स्तवा॑ना॒ शर्म॑ नो यन्त॒मम॑वद्वरू॑थम् ॥ ४ ॥

व्यर्यमा । विचिनोति[२२] । पन्थानम्[२३] । अर्यमा[२४] । वरुणश्चास्माकम्[२५] । तथान्नपतिः[२६] । शोभनमार्गम्[२७] । अग्निः[२८] । हे इन्द्राविष्णू ! स्तूयमानौ । बलवत्[२९] । वरणीयम् । गृहम्[३०] ।

---

१. वास्य M. दुःखानामभिश्रयितारः Sy.
२. ते विधातारः फलानां कर्तारः Sy.
३. कुर्वन्त्यभिमतम् Sy.
४. नित्याः Sy.
५. सत्य० is suggested for सप्त० ॥ सत्यकर्माणः Sy.
६. रोचन्ते Sy.
७. वस्त्यां P.
८. ०स्तो० M. स्तौमि Sy.
९. सर्वैर्गन्तव्याम् Sy.
१०. अदीनां देवमातरं ताम् Sy.
११. स्यन्दनशीलां नद्यभिमानिदेवीम् Sy.
१२. सुखनिवासामेतन्नामिकां देवीम् Sy.
१३. देवीः P. १४. मन्त्रैः Sy.
१५. आनुकूल्याय Sy.
१६. द्यावापृथिव्यौ Sy.
१७. उषासानक्ता अहोरात्राभिमानिदेवते Sy.
१८. नितरां पातस्तया स्तौमि Sy.
१९. अदम्भनीये Sy.
२०. कुरुताम् । अभिमतमिति शेषः Sy.
२१. VM. ignores अहनी ।
२२. ज्ञापयति Sy.
२३. पन्थानम् D. अस्माकं पन्थां यज्ञादि मार्गम् Sy. २४. देवः Sy.
२५. तथा वरुणः विचेति Sy.
२६. अन्नवतिः P. अन्नवति D. VM. explains इषः and पतिः together as अन्नपतिः ॥ अन्नस्य हविर्लक्षणस्य पतिः पालकः Sy.
२७. VM. seems to explain सुवितं गातुम् together as शोभनमार्गम् ॥ सुखकरं गातुं गमनं मार्गं वा स्वर्गादिर्वि चेति Sy.
२८. अग्नि P.
२९. बलोपेतम् Sy.
३०. गृहं सुखं वा Sy.

अस्मभ्यम्[१] । मनुष्ययुक्तम्[२] । सुष्ठु दत्तम्[३] ।[४]

**आ पर्वतस्य मुरुतामवांसि देवस्य त्रातुरव्रि भगस्य ।**
**पात्पतिर्जन्यादंहसो नो मित्रो मित्रियादुत नं उरुष्येत् ॥ ५ ॥**

आ पर्वतस्य । आवृणे । मेघस्य[५] । मरुतां च । रक्षणानि । तथा मेघस्य । त्रातुः[६] । भगस्य[७] । रक्षतु[८] । पालयितेन्द्रः[९] । जनभवात्[१०] । उपद्रवात्[११] । अस्मान् । मित्रः । च[१२] । मित्रभवादुपद्रवात्[१३] । अस्मान् । रक्षेत्[१४] ।

**नू रोदसी अहिंना बुध्न्येन स्तुवीत देवी अप्येभिरिष्टैः ।**
**समुद्रं न संचरणे सनिष्यवो घुर्मस्वरसो नुद्यो३ अप व्रन् ॥ ६ ॥**

नू रोदसी[१५] । क्षिप्रम् । हे[१६] द्यावापृथिवी[१७] ! अहिना[१८] । बुध्न्येन[१९] देवेन[२०] सह । स्तुवीत[२१] । तथान्तरिक्ष्यैश्च[२२] । प्रियैर्देवैः[२३] सह । यथा । समुद्रम्[२४] । सञ्चरणे[२५] । सम्भक्तुमिच्छवो[२६] गच्छन्त्येवम् । क्षरदुदकाः[२७] । नद्यः[२८] । अपगच्छन्तु[२९]

---

१. अस्माकम् Sy.
२. मनुष्यवन्मनुष्योपेतम् Sy.
३. युक्तं P.
यच्छतम् Sy.
४. VM. ingores उ ॥ उ पूरणः Sy.
५. इन्द्रसखस्यैतन्नामकस्य Sy.
६. रक्षकस्य Sy.
७. भगस्य देवस्य च Sy.
८. पात् पातु रक्षतु Sy.
९. किञ्च पतिः वरुणो देवः Sy.
१०. जनसम्बन्धात् Sy.
११. पापात् Sy.
१२. अपि च Sy.
१३. मित्रभावेन Sy.
१४. रक्षतु Sy.
१५. P. and D. read आरो सुवसी for नू रोदसी ।
१६. होता P., D.
१७. हे द्यावापृथिव्यौ ! युवाम् Sy.
१८. हिना P., D.
१९. बध्न्येन P. वध्येन D. अहिर्बुध्न्यनामकेन देवेन सह Sy.
२०. देवन D.
२१. स्तुवे Sy.
२२. अप्येभिः आपनीयैः Sy.
२३. कामैर्निमित्तभूतैः Sy.
२४. ०द्र M. तं यथा स्तुवन्ति तद्वत् Sy.
२५. सञ्चाराय समुद्रमध्यगमनाय Sy.
२६. धनानां सम्भक्तुमिच्छन्तः Sy.
२७. यस्मादेते देवा दीप्तध्वनयः Sy.
२८. नदीः Sy.
२९. ०का दस्योप० P. नद्योवग० D. अपवृण्वन्तीति परोक्ष इव । अथवा ते देवा नदीरपवृण्वन्त्वित्याशीः । तस्मात् स्तुवे इति सम्बन्धः Sy.

यथाकामं[1] चरन्तु[2]।

**दे॒वैर्नो॑ दे॒व्यदि॑ति॒र्नि पा॑तु दे॒वस्त्रा॒ता त्रा॑यता॒मप्र॑युच्छन्।**
**न॒हि मि॒त्रस्य॒ वरु॑णस्य धा॒सिमर्हा॑मसि प्र॒मियं॒ सान्व॒ग्नेः॥ ७॥**

देवैः। गतः पूर्वार्धः[3]। नहि वयम्। मित्रावरुणयोः[4]। अन्नम्[5]। प्रहिंसितुम्[6]। अर्हामः[7]। तथाग्नेश्च। समुच्छ्रितं हविः।

**अ॒ग्निरी॑शे वसु॒व्य॑स्या॒ग्निर्म॒हः सौभ॑गस्य। तान्य॒स्मभ्यं॑ रासते॥ ८॥**

अग्निः। वसूनां समूहस्य[8]। सौभाग्यस्य च[9]। ईश्वरः[10]। अग्निः[11]। तान्युभयानि[12]। अस्मभ्यम्। प्रयच्छतु[13][14]।

**उषो॑ मघो॒न्या व॑ह॒ सूनृ॑ते॒ वार्या॑ पु॒रु। अ॒स्मभ्यं॑ वाजिनीवति॥ ९॥**

उषः पुरूणि[15]। वनानि[16]। उषः! अस्मभ्यम्। आभर[17]। स्पष्टं शिष्टं च[18]।

---

१. यथा० M.
२. VM. ignores देवी।
३. पूर्वान्वर्हः P., D. By पूर्वार्धः VM. means देवैः। नः। देवी। अदितिः। नि। पातु। देवः। त्राताः। त्रायताम् and अप्रयुच्छन्॥ अदितिः देवी अदीना देवमाता। देवैरन्यैर्मित्रादिभिः सह नोऽस्मान् नि पातु पालयतु। तथा त्राता पालकः देवः। इन्द्र इत्यर्थः। सोऽपि अप्रयुच्छन् अप्रमाद्यन् त्रायताम् Sy.
४. वयं च मित्रस्य वरुणस्य च Sy.
५. अन्नं सोमादिलक्षणम् Sy.
६. हिंसितुम् Sy.
७. समर्था भवामः। किन्त्वनुष्ठानेन संवर्धितुमर्हाम इत्यर्थः Sy.
८. धनसमूहस्य Sy.
९. सुभगत्वस्यापि ईशे Sy.
१०. ईष्टे दातुम् Sy.
११. देवः Sy.
१२. अतः धनानि सौभाग्यं च Sy.
१३. ददातु Sy.
१४. VM. ignores महः and explains अग्निः once. महो महतः Sy.
१५. बहूनि Sy.
१६. वरणीयानि धनानि Sy.
१७. प्रापय Sy.
१८. Omitted by M. By शिष्टम् VM. means मघोनि। सूनृते। and वाजिनीवति॥ हे मघोनि! धनवति! सूनृते! प्रियसत्यरूपवागभिमानिनि! हे वाजिनीवति! अन्नवति! देवि! Sy.

तत्सु नः सविता भगो वरुणो मित्रो अर्यमा ।
इन्द्रो नो राधसा गमत् ॥ १० ॥

तत्सु नः । सवित्रादिः[१] । तद् धनम्[२] । अस्मभ्यम् । सुष्ठु प्रयच्छतु[३] । इन्द्रश्च । अस्मान् ।
धनेन[४] । आगच्छतु[५][६] ।

IV.56.

मही द्यावापृथिवी इह ज्येष्ठे रुचा भवतां शुचयद्भिरर्कैः ।
यत्सीं वरिष्ठे बृहती विमिन्वन्रुवद्धोक्षा पप्रथानेभिरेवैः ॥ १ ॥

[७]मही । महती[८] । द्यावापृथिवी[९] । इह[१०] । प्रशस्यतमे[११] । दीप्त्या[१२] । शुचयद्भिः[१३] । अग्नैश्च[१४]
सह । भवताम् । यदा[१५] । सर्वतः । वरिष्ठे[१६] । महती[१७] । परिच्छिन्दन्[१८] । शब्दं करोति[१९] । पर्जन्यः[२०] ।
प्रथमानैः[२१] । मरुद्भिः सह[२२] ।

---

१. आदि refers to सविता । भगः । वरुणः । मित्रः । and अर्यमा ॥ Sy. adds after these deities प्रत्येकम् ।

२. P. and D. read तनम् for तद् धनम् ।

३. ते देवाः प्रयच्छन्त्विति शेषः Sy.

४. धनेन सह Sy.

५. आगच्छति यज्ञम् Sy.

६. Ms. D. puts the figure ॥५५॥ here to indicate the end of fifty-fifth hymn. No such number is given in P. and M.

७. 'मही द्यावापृथिवी' इति सप्तर्चमेकादशं सूक्तं वामदेवस्यार्षं द्यावापृथिव्यम् । पूर्वत्र 'त्रिगायत्र्यन्तं तु' इत्युक्तत्वात्पञ्चम्याद्यास्तिस्रो गायत्र्यः शिष्टास्त्रिष्टुभः । 'मही सप्त द्यावापृथिवीयम्' (KSA. 24. 56. p. 18.) इत्यनुक्रमणिका । व्यूढे दशरात्रे पञ्चमेऽहनि वैश्वदेवशस्त्रे आदितश्चतुर्ऋचं द्यावापृथिव्यनिविद्धानीयम् । तथा च सूत्रितम्—'मही द्यावापृथिवी इति चतस्र ऋभुर्विभ्वा' (ASS. 8. 8.) इति Sy.

८. महत्यौ Sy. ९. द्यावापृथिव्यौ Sy.

१०. यज्ञे Sy. ११. प्रशस्ये Sy.

१२. दीप्त्या युक्ते Sy.

१३. दीपयद्भिः Sy.

१४. मन्त्रैः सोमादिहविर्भिर्वा युक्ते Sy.

१५. यस्मात् Sy. १६. उरुतरे Sy.

१७. ०ति P. महत्यौ द्यावापृथिव्यौ Sy.

१८. परिच्छन्दन् P. परिच्छि० D. परिच्छिन्दन् स्थापयन् Sy.

१९. परिच्छिन्दच्छब्दं M. रौति शब्दं करोति । तस्माद्रुचा भवतामिति सम्बन्धः Sy.

२०. सेक्ता पर्जन्यः Sy.

२१. गमनशीलैर्मरुद्भिर्मेघैर्वा सह Sy.

२२. VM. ignores ह ॥ ह इति पूरणः Sy.

देवी देवेभिर्यजते यजत्रैरमिनती तस्थतुरुक्षमाणे ।
ऋतावरी अद्रुहा देवपुत्रे यज्ञस्य नेत्री शुचयद्भिरर्कैः ॥ २ ॥

देवी देवेभिः । देवनशीले[1] । देवैः[2] । यष्टव्ये[3] । यजनीयैः[4] । अहिसन्ती[5] । तस्थतुः[6] । सिन्वन्त्यौ[7] कामान् । यज्ञवती[8] । अद्रोग्ध्र्यौ[9] । देवाः पुत्रा ययोः[10] । यज्ञस्य । नेत्र्यौ[11] । दीप्यमानैः[12] । अन्नैः[13] ।

स इत्स्वपा भुवनेष्वास य इमे द्यावापृथिवी जजान ।
उर्वी गभीरे रजसी सुमेके अवंशे धीरः शच्या समैरत् ॥ ३ ॥

स इत् । सः । एव । सुकर्मा[14] । जातेषु[15] । अभवत्[16] । यः । इमे । द्यावापृथिवी[17] । जजान[18] । विस्तीर्णे[19] । गम्भीरे[20] । द्यावापृथिवी । शोभमाने[21] । स धीरः[22] । अवंशे[23] । अस्तभ्नात्[24] । कर्मणा[25] ।

---

१. देव्यौ Sy.
२. ०लैर्वे० D., M.
३. य ब्ये D. ०व्यैः M.
४. यष्टव्यैः सहिते Sy.
५. अहिसती is also a Vedic dual but अहिसत्यौ would be a better reading on the analogy of सिन्वत्यौ etc. ॥ प्रजा अहिसत्यौ Sy.
६. तथतुः P. तिष्ठतः स्यातामित्यर्थः Sy.
७. सिन्वत्यौ Sy.
८. यज्ञवती is also a Vedic dual but यज्ञवत्यौ would be a better reading on the analogy of सिन्वत्यौ etc. ऋतवत्यौ Sy.
९. अद्रोग्ध्र्यौ द्रोहमकुर्वत्यौ Sy.
१०. ययैः D. देवोत्पादिक्यौ ? (देवोत्पादयित्र्यौ) Sy.
११. निर्वाहयित्र्यौ द्यावापृथिव्यौ Sy.
१२. ०मानेः P. शोचयद्भिः Sy.
१३. मन्त्रैर्हविर्भिर्वा युक्ते Sy.
१४. शोभनकर्मा सन् Sy.
१५. भुवनेषु Sy.
१६. आस्ते Sy.
१७. द्यावापृथिव्यौ Sy.
१८. उत्पादितवान् Sy.
१९. यश्च प्रजापतिः उर्व्यौ विस्तीर्णे Sy.
२०. अविचले Sy.
२१. शोभनरूपे Sy.
२२. धीमान् Sy.
२३. उत्पत्तिरहितेऽनाधारे वान्तरिक्षे Sy.
२४. समैरत् सम्यक् प्रेरितवान् । स एव स्वपा इति Sy.
२५. कुशलकर्मणा Sy.

**नू रो॑द॑सी बृ॒हद्भि॑र्नो॒ वरू॑थैः पत्नी॑वद्भिरि॒षय॑न्ती स॒जोषाः॑ ।**
**उ॒रू॒ची विश्वे॑ यज॒ते नि पा॑तं धि॒या स्या॑म र॒थ्यः॑ सदा॒साः ॥ ४ ॥**

नू[1] रोदसी । क्षिप्रम् । द्यावापृथिवी[2] ! महद्भिः । अस्मद्गृहैः[3] । पत्नीयुक्तैः[4] । अन्नं कुर्वाणे[5] । सङ्गते[6] । उरुत्वमञ्चत्यौ[7] । व्याप्ते । यष्टव्ये[8] । नितरां रक्षतम्[9] । रथिनो[10] वयम् । कर्मणा[11] । सदा सम्भक्तारः[12] । स्याम[13] ।

**प्र वां॒ महि॒ द्यवी॑ अ॒भ्युप॑स्तुतिं भरामहे । शुची॒ उप॒ प्रश॑स्तये ॥ ५ ॥**

प्र[14] वाम्[15] । प्रभरामहे[16] । वाम्[17] । अभि । द्यावापृथिव्यौ[18] । महतीम्[19] । उपस्तुतिम्[20] । दीप्यमाने[21] । उपप्रशंसितुम्[22] ।

**पु॒ना॒ने त॒न्वा॑ मि॒थः स्वेन॒ दक्षे॑ण राजथः । ऊ॒ह्याथे॑ स॒नादृ॒तम् ॥ ६ ॥**

पुनाने[23] । क्षरन्त्यौ[24] । ततेन[25] हविषा उदकेन च । परस्परम्[26] । स्वेन । बलेन । राजथः ।

---

१. आ P., D.
२. हे द्यावापृथिव्यौ ! Sy.
३. अस्मान् गृ० P. VM. seems to explain नः वरूथैः together as अस्मद्गृहैः ॥ गृहैर्धनैर्वा सह Sy.
४. पत्नीसहितैः Sy.
५. अस्माकमन्नमिच्छन्त्यौ Sy.
६. परस्परं सङ्गते Sy.
७. उर्वञ्चने Sy.
८. यष्टव्ये सत्यौ Sy.
९. रक्षत M.
१०. रथवन्तो वयम् Sy.
११. स्तुत्या Sy.
१२. त्वां सर्वदा भजमानाः Sy.
१३. स्यामः M. भूयास्म Sy.
१४. 'प्र वाम्' इत्यादिगायत्रस्तृचो व्यूढे दशरात्रे वैश्वदेवशस्त्रे द्यावापृथिव्यनिविद्धानीयत्वेन प्रक्षेप्यः। तथाच सूत्रितम्—'प्र वां महि द्यवी इति तृचौ' (ASS. 8. 11.) इति Sy.
१५. हे द्यावापृथिव्यौ ! Sy.
१६. ०हे M. प्रकर्षेण सम्पादयामः Sy.
१७. युवाभ्याम् Sy.
१८. द्योतमाने Sy.
१९. महत् प्रभूतम् Sy.
२०. स्तुति D. स्तोत्रम् Sy.
२१. शुद्धे युवाम् Sy.
२२. प्रशंसितुम् । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । उप गच्छाम इति शेषः Sy.
२३. हे देव्यौ ! Sy.
२४. ०न्त्यो M. शोधयन्त्यौ यज्ञं यजमानं वा युवाम् Sy.
२५. घृतेन० P. तेन D. स्वकीयया मूर्त्या । यद्वा तन्वा शरीरैकदेशेन परस्परं पुनाने शोधयन्त्यौ । द्यौः स्वीयेनासारेण भुवं सा च स्वकीयेन काव्येन चन्द्रमसि स्थितेन दिवमिति विवेकः Sy.
२६. प्रत्येकम् Sy.

वहथश्च[1] । चिरादारभ्य[2] । यज्ञम् ।[1]

**मही मित्रस्य साधथस्तरन्ती पिप्रती ऋतम् । परि यज्ञं नि षेदथुः ॥ ७ ॥**

मही । महती[3] । सख्युः[4] । यज्ञम्[5] । साधयथः । तरन्त्यौ[6] । मित्रं पूरयन्त्यौ । परिनिषेदथुश्च[7] तस्य । यज्ञम् ।[8]

## IV.57.

**क्षेत्रस्य पतिना वयं हितेनेव जयामसि ।**
**गामश्वं पोषयित्न्वा स नो मृळातीदृशे ॥ १ ॥**

क्षेत्रस्य[9] । "क्षेत्रस्य[10] पतिना[11] वयं[12]

---

१. च is omitted by P.
२. चिदा० P. सदाकालम् Sy.
३. महती is a Vedic dual but महत्यौ is suggested on the analogy of तरन्त्यौ etc. ॥ महत्यौ द्यावापृथिव्यौ Sy.
४. मित्रभूतस्य स्तोतुरभिमतम् Sy.
५. अन्नम् Sy.
६. तारयन्त्यौ Sy.
७. परितः आश्रयथः Sy.
८. Ms. D. puts the figure ॥५६॥ here to indicate the end of fifty-sixth hymn. No such number is given in P. and M.
९. 'क्षेत्रस्य पतिना' इत्यष्टर्चं द्वादशं सूक्तं वामदेवस्यार्षम् । आद्या चतुर्थीषष्ठीसप्तम्योऽनुष्टुभः पञ्चमी पुरउष्णिक् । 'आद्यश्चेत् पुरउष्णिक्' (KSA. 4. 2. p. 3.) इति तल्लक्षणम् । शिष्टास्तिस्रस्त्रिष्टुभः । आद्यास्तिस्रः क्षेत्रपतिदेवताकाश्चतुर्थी शुनाख्यदेवताका पञ्चम्यष्टम्यौ शुनासीरदेवताके षष्ठीसप्तम्यौ सीतादेवताके । तथा चानुक्रमणिका—'क्षेत्रस्याष्टौ तिस्रः क्षेत्रपत्याः शुनायैका परा पुरउष्णिक् सान्त्या च शुनासीराभ्यामुपान्त्ये सीतायै ते अनुष्टुभावाद्या च चतुर्थी च' (KSA. 24.57. p. 18.) इति । क्षेत्रस्य कर्षणे अनेन सूक्तेन प्रत्यृचं जुहुयाज्जपेद्वा । तथा च सूत्रितम्—'क्षेत्रस्य पतिना वयमिति प्रत्यृचं जुहुयाज्जपेद्वा' (AGS. 2.10.4.) इति । अप्तोर्यामे होतुरतिरिक्तोक्थ्य आश्विनशस्त्रादूर्ध्वं चत्वार्यतिरिक्तोक्थ्यानि । तत्राद्या परिधानीया । सूत्रितञ्च—'क्षेत्रस्य पतिना वयमिति परिधानीया' (ASS. 9. 11.) इति Sy.
१०. क्षेत्रस्य निष्पत्त्याधारस्य BB.
११. देवेन 'रुद्रं क्षेत्रपतिं प्राहुः केचिदग्निमथापरे । स्वतन्त्र एव वा कश्चित्क्षेत्रस्य पतिरुच्यते' Sy.
पतिना पत्याऽधिष्ठात्रा BB.
१२. यजमानाः Sy. तेनानुगृह्यमाणा वयम् BB. संयुक्ताः सन्तो वयम् Dur.

सुहितेनेव जयामः । गामश्वं पोषयित्नु चाहर" इति यास्कः । समुच्चयार्थो वाकारः ।
"'स नो मृळातीदृशे' बलेन वा धनेन वेदृशेन" इति यास्कः ।

---

१. अहि० D. इवशब्द एवार्थे । सर्वप्राणिहितेनैव तेन । अथवा मित्रेणैव । यथा सख्युः साहाय्येन स्वकार्यं साधयति तद्वत् Sy. यथा हितेन केनचिन्मित्रेण कश्चित् SKN. सुष्ठु हितेन केनचिदाप्तेन मित्रेण इव Dur. यथा हितेन मित्रेण जनेनामित्रं जयत्येवं क्षेत्रपतिना जयेम BB.

२. यजामः D. जयामः क्षेत्रम् Sy. तद्वज्जयेम शत्रूनिति SKN.

३. स देवः गामश्वं च Sy. गोजातमश्वजातं च SKN. गवाश्वादीनि धनानि पुष्टानि बलवन्ति Dur.

४. N. reads पुष्टं पोषयितृ for पोषयित्नु ॥ पोषयितृ गवाश्वलक्षणं धनम् Sy. पोषयतेः कर्म तद्धर्मत्वे, इदञ्च पोषणधर्मसामर्थ्यात्स्वयं च पुष्टमस्माकं च पोषयितृ, इत्यर्थः SKN. पोषयितॄणि पोषणाय समर्थानि, उपनामितद्रव्याणां चास्माकं क्षेत्रस्य पतिना त्वत्प्रसादादेव तानि भोक्तुं शक्तिरस्तु Dur. किं जयेम ? गामश्वं पोषयित्नु पोषकमन्नादिकं प्रजाम् । . . . गां चाश्वं च पोषयित्नु च BB.

५. आहरत्विति शेषः । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः Sy. आ इत्युपसर्गश्रुतेर्हरेति मध्यमपुरुषैकवचनान्तं क्रियापदमध्याहरता भाष्यकृता युक्तमत्राध्याहरणमिति प्रदर्शितम् । अतो वाक्यैकवाक्यत्वाय या क्षेत्रस्य पतिना सहानुगृह्यमाणा वेति वाक्यशेषाध्याहारः । . . . आहरेति शेषः SKN. कथमिति ? आ इत्यस्योपसर्गस्य सम्बन्धि क्रियापदमध्याजहार भाष्यकारः, आहरेति । कोऽर्थः ? उपजातशक्तयो वयमेवमाज्ञापयन्तः परिचारकानिदमाहरतेति सर्वद्रव्याणि यथाऽनुब्रवीमहि तथा क्षेत्रस्य पतिरस्मान्मृडयतु Dur.

६. ०र्थे P.

७. आकारः समुच्चये BB.

८. स एव देवः Sy.
स च क्षेत्रपतिः BB.

९. अस्मान् Sy., SKN., Dur., BB.

१०. सुखयति Sy. मृडयतु सुखयतु । 'मृड सुखने' । तौदादिकः BB. मृडातिरुपदयाकर्मा । उपदया रक्षा । पूजाकर्मा वा । आशिषि लोडर्थे च पञ्चमः । रक्षतु, केन ? सामर्थ्याद् बलेन स्वेन । पूजयतु वा धनप्रदानेन SKN.

११. उक्तलक्षणे धने दातव्ये सति Sy. ईदृशाय कामाय ईदृशं कामं प्रापयितुमित्यर्थः SKN. धनलाभाय भोगाय चास्मान् ददातु धारयतु नित्यस्थिरान् करोत्वित्येतदाशास्महे Dur. यथोक्तै गवाद्यर्थैरस्मान् स्वामित्वेन स्थापयित्वा सुखयतु BB.

१२. ईदृशेन is omitted by N.

१३. N. 10. 15. M. adds क्षेत्रबलेनेति यास्कः after यास्कः क्षेत्रस्य पतिः । क्षेत्रं क्षियतेर्निवासकर्मणः । तस्य पाता वा पालयिता वा । तस्यैषा भवति । . . . मृळतिर्दानकर्मा पूजाकर्मा वा N. 10. 15.; SKN. VI. 16.
This stanza=TS. 1. 1. 14. 2.

क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व ।
मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृळयन्तु ॥ २ ॥

क्षेत्रस्य पते[१]। क्षेत्रस्य। पते[२] ! मधुमन्तम्[३]। ऊर्मिं[४] गोसङ्घम्[५]। यथा धेनुः[६]। पयो[७] दुग्ध[८] एवम् । अस्मासु[९]। धुक्ष्व[१०] प्रयच्छ पशून्। मधुश्चुतमूर्मिम्[११]। घृतमिव[१२]। सुपूतम्[१३], अस्मासु धुक्ष्व[१४]। यज्ञस्य[१५]। पतयः[१६]। अस्मान्[१७]। मृळयन्तु[१८] देवान्[१९] निरुक्तं[२०] द्रष्टव्यम् ।

---

१. अप्तोर्यामि मैत्रावरुणस्यातिरिक्तोक्थ्ये परिधानीया। सूत्रितञ्च—'क्षेत्रस्य पते मधुमन्तमूर्मिमिति परिधानीया' (ASS. 9. 11.) इति Sy.

२. पत D. क्षेत्रस्य पते। त्वम् Sy.

३. माधुर्योपेतम् Sy. मधूदकम् । भूम्नि मतुप्। बहुनोदकेन तद्वन्तम्। रसवचनो वा। मधुस्वादुतमम् SKN. मधुरं स्वादु Dur. मधुरेण क्षीरादिना तद्वन्तम् BB.

४. प्रवृद्धमुदकम् Sy. उदकसङ्घातम् SKN., Dur. अरणशीलम् BB.

५. गवादिसमुदायम् . . . यद्वा क्षेत्रमित्यध्याह्रियते, गवादिसमुदायं क्षेत्राणि BB.

६. ०नुं P., D. सा यथा दुग्धे तथा Sy. यथा धेन्वा SKN. धेनुर्यथा Dur.

७. क्षीरम् SKN.

८. धार्यते तद्वत् SKN. दोग्धि, एवम् Dur. स्वयमेव दुग्धे दोग्धृवात्सल्येन BB.

९. अस्मासु निमित्तभूतेषु SKN.

१०. क्षारय, कम् ? सामर्थ्यान्मेघम् । द्विकर्मको हि दुहिः SKN. प्रक्षर Dur. ईदृशं गवादिसमुदायमस्मासु धुक्ष्व । स्वयमेव धुक्ष्व । स्वयमेव धुक्ष्वास्मद्वात्सल्येन BB.

११. मधुस्राविं Sy. कीदृशम् ? मधु स्वादु स्यात् स्वादूदकस्य क्षरितारम् SKN. मधु इव यन्मुहुर्मुहुश्चोतति Dur. मधुक्षीरादिकमासिञ्चन्तम् । न केवलं मधुमन्तमपि तु सर्वदा प्राणिभ्यस्स्रवन्तम् । 'श्च्युतिर् आसेचने' BB.

१२. घृतमिव इत्युपमा। तादृशमुदकमित्यर्थः Sy. कीदृशं घृतमिव याज्ञे कर्मणि SKN. उदकमिव Dur.

१३. पवित्रं निर्मलं चेति भावः SKN. अकलुषम् Dur. १४. दुग्ध(धु)क्ष्व M.

१५. यज्ञस्योदकस्य वा Sy. उदकस्य SKN. तस्य दानेन . . . उदकस्य Dur.

१६. स्वामिनः Sy. पातारस्ते च SKN., Dur. अग्न्यादयो देवाः BB.

१७. Omitted by P., D. अस्मान् नित्यमेव SKN. नित्यमस्मान् Dur. अस्मदीयं वा त्वया दीयमानं गवादिसमुदायम् BB. १८. सुखयन्तु यद्वा ऋतस्यैतत् कर्मणि षष्ठी । ऋतं मृळयन्तु प्रयच्छन्तु। मृळतिरत्र दानकर्मा Sy. सुखं ददतु सुखयन्त्वित्यर्थः SKN. रक्षन्तु पूजयन्तु वा Dur. सुखयन्तु BB.

१९. देवान् D. भेवा M. य एते त्वदनुचरा माध्यमिका देवगण। मरुदादयः SKN. माध्यमिका देवाः क्षेत्रस्य पतिप्रमुखाः Dur. २०. क्षेत्रस्य पतेः मधुमन्तमूर्मि धेनुरिव पयोऽस्मासु धुक्ष्वेति । मधुश्चुतं घृतमेवोदकं सुपूतम् । ऋतस्य नः पातारो वा पालयितारो वा मृळयन्तु। मृळयतिरुपदयाकर्मा । पूजाकर्मा वा N. 10. 16. SKN. IV. 17.

This stanza=TS. 1. 1. 14. 3.

मधुमतीरोषधीर्द्याव आपो मधुमन्नो भवत्वन्तरिक्षम् ।
क्षेत्रस्य पतिर्मधुमान्नो अस्त्वरिष्यन्तो अन्वेनं चरेम ॥ ३ ॥

मधुमतीः[2] । एते[3] सर्वे । अस्माकम्[4] । मधुमन्तः[5] । भवन्तु[6] वयम् । अनुचराम[7] । क्षेत्रस्य पतिम् । अहिंस्यमानाः[8] ।

शुनं वाहाः शुनं नरः शुनं कृषतु लाङ्गलम् ।
शुनं वरत्रा बध्यन्तां शुनमष्ट्रामुदिङ्गय ॥ ४ ॥

शुनं[9] वाहाः । सुखम्[10]अस्यां पृथिव्याम् । बलीवर्दाः । कृषन्तु । तथा कीनाशा नरः[11] । शुनमेव । कृषन्तु[12] । लाङ्गलं[13] तथा[14] । वस्त्राश्च[15] । शुनम्[16] । बध्यन्तां तासु च । सुखं भवतु । हे कीनाश ! त्वमष्ट्रां[17] च । सुखमेव । उदिङ्गयेति[18] द्विकर्मकः, शुनो देवता मन्त्रस्य तच्च[19] सुखम्, भवति हि क्षेत्रकर्षणे सुखमिति ।

---

१. ब्राह्मणाच्छंसिनोऽतिरिक्तोक्थ्ये परिधानीयैषा । 'मधुमतीरोषधीर्द्याव आप इति परिधानीया' (ASS. 9. 11.) इति सूत्रितत्वात् Sy.

२. M. adds ओषधीः after मधुमतीः ।

३. By एते सर्वे VM. refers to ओषधीः । द्यावः । आपः । अन्तरिक्षम् । क्षेत्रस्य and पतिः ॥ ओषधीः ओषध्यो व्रीहिप्रियङ्ग्वादयः मधुमत्यो भवन्तु । तथा द्यावः तिस्रो दिव इत्युक्तत्वात् बहुवचनं युक्तम् । तथाऽऽपः अन्तरिक्षं च भवतु नो मधुमद् क्षेत्रस्य पतिरपि मधुमान्नोऽस्तु Sy.

४. सर्वास्माकम् P., D. अस्मभ्यम् Sy.

५. ०मन्तौ P., D. मधुमत्यः Sy.

६. भवतु P., D.

७. अनु अनुसृत्य चरेम सञ्चरेम सुखेन Sy.

८. अन्वैरहिंस्यन्तो वयम् Sy.

९. Omitted by M. शुनः वाहाः D.

१०. सुखनामैतत् (Ngh. 3. 6.)। सुखं यथा भवति तथा वहन्त्विति शेषः Sy.

११. नेतारो मनुष्याः कर्षकाः Sy.

१२. कुर्वन्तु Sy.

१३. लांगूलं P.

१४. अपि Sy.

१५. ०त्राश्च M. वरणेन त्रायमाणाः प्रग्रहाः Sy.        १६. इनं M.

१७. अष्ठां P. त्वष्ट्रां for त्वम् । अष्ट्रां M. प्रतोदम् Sy.

१८. उदि ये० P., D. प्रेरय । शुनाख्यो वाय्विन्द्रयोरन्यतमः सुखकृद्देवः । तदनुग्रहादेतत्सर्वं भवत्विति तस्य श्रुतिसामान्येन स्तुतिः Sy.

१९. तव P.

शुनासीरा॒वि॒मां वाचं॑ जुषेथां॒ यद्दि॒वि च॒क्रथुः॒ पयः॑ ।
तेने॒मामुप॑ सिञ्चतम् ॥ ५ ॥

शुनासीरौ[1] । इन्द्रः[2] सुखरूपेण परिणमति वायुः[3] सीररूपो भवति हे शुनासीरौ ! स्तुतिम्[4] । इमाम्[5] । सेवेथाम्[6] । यद्युवाम्[7] । अन्तरिक्षे देवताभूतौ । उदकम् । चक्रथुः[8] । तेन । भूमिम्[9] । उपसिञ्चतम्[10] ।[11]

अ॒र्वाची॑ सुभगे भव॒ सीते॒ वन्दा॑महे त्वा ।
यथा॑ नः सु॒भगास॑सि॒ यथा॑ नः सु॒फलास॑सि ॥ ६ ॥

अर्वाची । हे सुभगे ! सीते[12] ! अभिमुखी[13] । भव । वन्दामहे[14] । त्वा वयम्[15] । यथा । नः[16] । सुधना[17] । भवसि । यथा च । सुफला[18] धान्यहेतुः[19] ।[20]

---

१. शुनासीरीये पर्वणि शुनासीरदेवताकस्य हविषोऽनुवाक्यैषा अन्त्या ऋक् याज्या । सूत्रितञ्च 'शुनासीराविमां वाचं जुषेथां शुनं नः फालाः' (ĀSS. 2. 20.) इति Sy.

२. Cf. वायुः शुनः सूर्य एवात्र सीरः शुनासीरौ वायुसूर्यौ वदन्ति । शुनासीरं यास्क इन्द्रं तु मेने सूर्येन्द्रौ तौ मन्यते शाकपूणिः ॥ BD. V. 7. and the commentary on RV.IV.57.8. 'शुदेवः शुनदेवता' इति शौनकः । अतः शुनः इन्द्रः सीरो वायुः तौ युवाम् Sy.

३. सीर आदित्यः...स हि नित्यं सरति गच्छति Dur.

४. वाचम् Sy. स्तुतिलक्षणां वाचम् SKN. वाचमिमां स्तुतिलक्षणाम् Dur.

५. वक्ष्यमाणां मदीयाम् Sy.

६. जुषेथाम् Sy.

७. यच्च SKN. कथं च पुनरासेवितेयं युवाभ्यां स्याद् यत् Dur.

८. कृतवन्तौ स्थः SKN. सम्भरथो युवाम् Dur.

९. पृथिवीमुपगम्य SKN. पृथिवीम् Dur.

१०. सिञ्चतम् । एतद्धि कर्म युवयोः । तथा चोक्तम्—'द्वा बृबूकं वहतः पुरीषं वाय्वादित्यौ' (N. 2. 22.) SKN. एवमनेनास्मद्वागासेविता युवाभ्यां भविष्यतीति Dur.
N. 9. 41. ; SKN. III. 175.

११. शुनासीरौ शुनो वायुः शु एत्यन्तरिक्षे सीर आदित्यः सरणात् (N. 9. 40.) शुनो वायुः । शु एत्यन्तरिक्षे...स हि क्षिप्रमेत्य प्रतिबध्यमानोऽन्तरिक्षे Dur.

१२. हे सीते ! त्वम् Sy.

१३. ०मुखा P., D. अर्वागञ्चना Sy.

१४. स्तुवीमहि Sy.

१५. मयम् D.

१६. यथा महे त्वा वयं यथा न for यथा । नः P.

१७. शोभनधना Sy.

१८. सफ० M. सुफलाससि तथा वन्दामहे Sy.

१९. हेतु D.

२०. VM. explains नः and असप्ति once only.

इन्द्रः सीतां नि गृह्णातु तां पूषानु यच्छतु ।
सा नः पयस्वती दुहामुत्तरामुत्तरां समाम् ॥ ७ ॥

इन्द्रः[1] सीताम् । पृथिव्यां निगृह्णातु । तां सीताम् । पूषा[2] । अनुनियच्छतु[3] । सा[4] सीता । रसवती[5] । दुग्धाम्[6] अन्नम् । उत्तरस्मिन्[7], संवत्सरे, तत उत्तरस्मिंश्चेति[8] ।

शुनं नः फाला वि कृषन्तु भूमिं शुनं कीनाशा अभि यन्तु वाहैः ।
शुनं पर्जन्यो मधुना पयोभिः शुनासीरा शुनमस्मासु धत्तम् ॥ ८ ॥

शुनं[9] नः । फाला[10]ः । सुखम् । अस्माकं सीराग्राणि । भूमिम्[11] । विकृषन्तु । शुनमेव[12] । कृषमाणाः कीनाशाः[13] । अभिगच्छन्तु[14] । वाहैः[15] सह । शुनम् । पर्जन्यः । उदकेन[16] । सारैश्चौषधि-भूतैः[17] । ये शुनासीरौ[18] ! युवां च । शुनम्[19] । अस्मासु । धत्तम्[20] । इत्यत्र बृहद्देवता[21]—

"शुनं वाहाः[22] शुनं नर इत्यृगुत्तरा[23] ॥
वायुः शुनः सूर्यस्त्वेव[24] सीरः शुनासीरौ वायुसूर्यौ वदन्ति ।
शुनासीरमिन्द्रं यास्कस्तु[25] मेने सूर्येन्द्रौ तु[26] मन्यते शाकपूणिः[27] ॥

---

१. इन्द्र P.
२. देवः Sy.
३. ०निच्छतु D. नियमयतु Sy.
४. द्यौः Sy.
५. उदकवती Sy.
६. दुह्यात् कदेति ? तदुच्यते Sy.
७. अस्मित्तरस्मिन् P. उस्म्युत्त० D. उत्तरमुत्तरं सम्वत्सरम् Sy.
८. VM. ignores इन्द्रः । सीताम् and नः ॥ इन्द्रः देवः । सीतां सीताधारकाष्ठम् Sy.
९. अस्या अष्टम्या विनियोगः 'शुनासीराविमाम्' इत्यत्रोक्तः Sy.
१०. फलाः D. भूमिविदारककाष्ठाः Sy.
११. भूमीं D.
१२. शुनं यथा भवति तथा Sy.
१३. बलीवर्दरक्षकाः Sy.
१४. ०माणा किशानामभि० P.
१५. बलीवर्दैः Sy.
१६. मधुरैः Sy.
१७. उदकैः सिञ्चतु Sy.
१८. हेतुनासीरौ M. हे इन्द्रवायू ! वाय्वादित्यौ ! वा Sy.
१९. सुखम् Sy.
२०. धारयतम् Sy.
२१. ०ताः D. ०तां M. बहवद्देवता P. BD. 5. 7-10.
२२. वा वाहाः P.
२३. शुनदेवी त्वृगु० BD.
२४. सूर्य एवात्र BD.
२५. शुनासीरं यास्क इन्द्रं तु BD.
२६. Omitted by D. तौ BD.
२७. ०णि P., D.

शुनासीरौ पञ्चम्यां तु स्तुतौ द्वौ द्वे सीतायै षष्ठी सप्तमी च ।

शुनं न फालाः कृषिं स्तौति पादे शुनं कीनाशाः कृषिजीवा मनुष्यान् ॥

स्तुतः पादे पर्जन्यस्तृतीये अन्त्यं त्वृषिर्धनकामो जगाद ।

कृषिमत् स्तौति सर्वं हि सूक्तम् ।" इति ।

IV.58.

समुद्रादूर्मिर्मधुमाँ उदारदुपांशुना सममृतत्वमानट् ।
घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥ १ ॥

समुद्रात् । कात्यायनः—'समुद्रादेकादशाग्नेयं जगत्यन्तं सौर्यं वाप्यं वा गव्यं वा घृतस्तुतिर्वा' इति ॥ समुद्रात् । कश्चनोदकवान् ।

---

१. ०तौ P. २. तौ BD.
३. BD. adds तु after द्वे ।
४. फला P. पाला M. ५. पादः BD.
६. ०शं D. ०शा P., M. ७. ०जीवान् म० BD. ८. ०देऽत्र प० BD.
९. ०र्जन्यं तु तृयन्त्ये न्त्वृषि० P.
१०. कृषि वा० BD. ११. सूमिति P., D.
१२. 'समुद्रादूर्मिः' इत्येकादशर्चं त्रयोदशं सूक्तम् । अन्त्या जगती शिष्टास्त्रिष्टुभः । अग्निसूर्याब्गोघृतानामन्यतमो देवता । वामदेव ऋषिः । अत्रानुक्रमणिका—'समुद्राद् ऊर्मिम् ? (ऊर्मिः) एकादशाग्नेयं जगत्यन्तं सौर्यं वाप्यं वा गव्यं वा घृतस्तुतिर्वा' (KSA. 24. 58. p. 18.) इति । विषुवतीदं सूक्तमाज्यम् । तथा च सूत्रम्—'समुद्रादूर्मिरित्याज्यं त्यं सुमेषम्' (ASS. 8. 6.) इति । व्यूढे दशरात्रे सप्तमेऽह्नीदमेव सूक्तमाज्यम् । सूत्रितञ्च—'अथ छन्दोमाः समुद्रादूर्मिरित्याज्यम्' (ASS. 8. 9.) इति Sy. अत्रात्राध्यासेन घृतं स्तूयते प्राणाध्यासेन चाग्निः Mah. अन्नाध्यासेन घृतमन्नमत्र स्तूयते प्राणाध्यासेन चाग्निः U.
१३. Omitted by D. ०ग्नेयज्जग० P.
१४. सौव्यं P. १५. ०प P., D.
१६. Omitted by P., D.,
१७. D. adds वापगव्यं after गव्यं ।
१८. KSA. 24. 58. p. 18.
१९. The passage beginning with कात्यायनः and ending with समुद्रात् is omitted by M. सम्मोदन्तेऽस्मिन् यजमाना इति वा समुद्रोऽग्निः पार्थिवः । अथवा समुद्द्रवन्त्यापोऽस्मादिति व्युत्पत्त्या वैद्युतोऽग्निः । तस्मात् Sy. समुद्राद् घृतमयात् । . . . अक्षीणत्वाद् घृतस्य समुद्रेणोपमानमन्त्रदेवताभिप्रायं वा । सा ह्यक्षीणैव Mah. तस्मात्समुद्राद् घृतमयाद् अक्षीणत्वाद् घृतस्य समुद्रेणोपमानमन्त्रदेवताभिप्रायं वा । सा ह्यनुपक्षीणैव U. समुद्रादुदकसङ्घातात् Dur.
२०. माधुर्योपेतफलसमूहः Sy. रसवान् Mah., U. मध्वित्युदकनामैतत् (Ngh. 1. 14.) । उदकवानित्यर्थः SKN.

ऊर्मिरग्निरादित्यो वा । उदारद् उदगात् । सोऽयमूर्मिरात्मीयेनांशुना मनुष्यान् । अमृतत्वम् । प्रापयति । तथास्य क्षरणशीलस्य । यत् । गुह्यम् । भवति तदहं कीर्तयामि । तदाह—देवानाम् ।

---

१. ०कवांस्तूर्मि० M. ऊर्मिवदुपर्युपरि उद्भूतः Sy. ऊर्मिः कल्लोलः Mah. महाराशिर्घृतकल्लोलः U. तेजःसङ्घात आदित्याख्यः SKN.
चन्द्रमसा Dur.

२. ०र P., D. उद्गच्छति । अथवा वैद्युतादूर्म्युत्पादको रस उदारत् उद्भूतः । अथवा समुद्रात् समुद्द्रवणसाधनादादित्यादूर्मी रस उदकलक्षण उदारत् । 'आदित्याज्जायते वृष्टिः' इति श्रुतेः । यद्वा समुद्रादुक्तव्युत्पत्तेरन्तरिक्षादूर्मिरुदकमुदारत् । अथवा समुद्रादुक्तलक्षणाद् गवामूधसः सकाशादूर्मिरुज्ज्वलः क्षीररसः । एतद् घृतपक्षेऽपि समानम् । यद्यपि घृतं क्षीराज्जायते तथापि तस्योधस उत्पत्तेरेवमुपचर्यते । शिष्टं वाक्यमग्न्यादिपञ्चसु पक्षेष्वपि समानम् Sy. उदगच्छत् । 'ऋ गतौ' Mah., U. उद्गच्छति । एकवाक्यतार्थं यत्तच्छब्दाध्याहारः SKN. उदतीतरत्, उत्तरति वा उदेत्यहन्यहनि प्रथमजन्माभिप्रेत्य Dur.

३. उदकाव P.

४. ०र्मीरा० M. उद्गत्य च स ऊर्मिः Mah. उद्गत्य च U.

५. दीप्यांशेन वा Sy. प्राणेन जगत्प्राणभूतेनाग्निना Mah., U. चन्द्रमसाऽऽहारभूतेन SKN.
चन्द्रमसा Dur.

६. मोक्षम् Sy. अमरणधर्मित्वम् Mah., U. स पुनर्जातः सन्...अमृतभावम् Dur.

७. उपेति पूरणः । प्राप्नोति नरः Sy. सं सङ्गत्यैकीभूय...उपव्याप्नोतु 'नश अदर्शने'...व्याङ्पसर्गाभ्यां व्याप्त्यर्थः । प्राणश्चान्नं चैकीभूयामृतत्वं प्राप्नुत इत्यर्थः Mah., U. उपेत्युपसर्ग आनडित्याख्यातेन सम्बध्यते ।...'अशू व्याप्तौ' अश्नुते, उपसंव्याप्नोतीत्यर्थः । कुत एतत्—'यमक्षितिमक्षितयः पिबन्ति' (SS 5. 8. 4ᵇ; N. 5. 11.) इति मन्त्रान्तरे दर्शनात् SKN. उपसंव्याप्नोति सोऽस्यान्नं तेन न म्रियते । 'यमक्षितिमक्षितयः पिबन्ति' (YV. 5. 7., N. 5. 11.) इत्युक्तम् Dur.

८. दीप्तस्य क्षीरद्रव्यरूपस्य वा Sy. नच केवलमंशुना, किं तर्हि ? घृतस्याहुतिलक्षणस्याज्यस्य, उदकस्य वा रश्मिभिराहृतस्य SKN. कथममृतत्वं तेनोप समानद् ?...उदकस्य हविषो वा Dur.

९. यदस्ति तद् ब्रवीमि Sy. यदस्ति तत्कथ्यत इति शेषः Mah. यदस्ति तदहं वेद्मि U. यदस्ति तेन चामृतत्वमानडिति सम्बन्धः SKN. अत्रास्ति विद्यते चन्द्रमसि Dur.

१०. गोपनीयम् Sy. अविद्वद्भिरज्ञेयं श्रुतिमन्त्रपठितम् Mah. अविज्ञातमविद्वद्भिः श्रुतिमन्त्रपरिपठितम् U. गुह्यत्वेन सारवत्तां दर्शयति नामशब्दोऽपि निपातोऽप्रकाशनायामन्यत्र । सारभूतमप्रकाशकम् SKN. नाम नमनम्...रहस्यमविज्ञातं केनचिदपि Dur.

११. दीप्तानां रश्मीनां तदायत्तप्रवृत्तिर्वा तेषाम् SKN.
रश्मीनाम् Dur.

जिह्वा भवति, अग्नौ हि देवानां होमः आदित्ये वा। अमृतत्वस्य च। स्थानं भवतीति।

१. आस्वादकजिह्वास्थानीयम् Sy. किं तदाह देवानां जिह्वा अत्यभिलाषाद्देवानां जिह्वोत्थाननिमित्तम्। अग्नेर्जिह्वासि (SB.1.3.1.19.) इत्युक्तेः 'यदा वा एतदग्नौ जुह्वत्यथाग्नेर्जिह्वा इवोत्तिष्ठन्ति' (SB.1.3.1.19.) इति श्रुतेः Mah. अत्यभिलाषाज् जिह्वास्थाननिमित्तं देवानाम् U. जिह्वाभूतः SKN. तदमृतं नित्यमास्वादयन्ति देवास्तेन न म्रियन्ते Dur.

२. Omitted by D. यच्च सर्वप्रकाशं नाम तदप्युच्यते। अमृतस्य...अमरणधर्मस्य Mah. यच्च सर्वप्रकाशं तदप्यहं वेद्मि। अमृतस्य...अमरणधर्मित्वस्य U. अमृतस्योदकस्य च SKN. तेषाम्...अमरणत्वस्य Dur.

३. बन्धकं भवति तदुभयं घृतस्य नामेत्यर्थः। एवं सर्वमन्त्रेषु तत्तत्पक्षानुसारेण योज्यम् Sy. नहनं बन्धनं यो हि घृतमश्नाति स दीर्घायुर्भवति Mah., U. नाभिराश्रय इत्यर्थः। य एवंविशिष्टोऽमृतत्वमानशे स समुद्रादुदारदिति सम्बन्धः SKN. नहनं स हेतुरित्यर्थः Dur.

४. The passage beginning with प्रकाशयति तथास्य and ending with भवतीति is omitted by P. ॥ यद्वा ऋगर्थेन मन्त्रः स्तूयते, अर्थेन घृतम्। समुद्रादाग्निकाद्यजुः समुद्राद-स्माद्यज्ञाद् य ऊर्मिः शब्दसङ्घातो नामाख्यातोपसर्गनिपातरूप उपमोत्प्रेक्षारूपकाद्यलङ्कारारूपो मधुमान् रसवान् वाक्यार्थगुणैर्युक्त उदारद् मुखादुदगात्। स एवोपांशुना सवनेन क्रियमाणः सन्नमृतत्वमाप्नोत्। 'तदेतद्यजुरुपांशवनिरुक्तम्' इति श्रुतेः। अतोऽग्निचिद्भिः स ऊर्मिः प्रकाशनीयः। घृतस्य गुह्यं नाम यदस्ति तदपि देवानां जिह्वोत्थाननिमित्तं किं पुनर्होमः। 'अथास्य घृतकीर्तिविवाग्निर्वैश्वानरो मुखादुज्जज्वाल' (SB. 1.4.1.13.) इति श्रुतेः। अमृतस्य नाभिर्नहनं यजमानानाममृतत्वप्रापकं घृतं यजनेनेत्यर्थः। अतोऽग्निचिद्भिर्हूयते स्तूयते च घृतमिति भावः Mah. यद्वा अर्थेन सत्रं स्तूयते, अर्थेन घृतं मन्त्रस्य। समुद्रादाग्निकाद् यजुःसमुद्राच्च ऊर्मिः शब्दसङ्घातो नामाख्यातोपसर्गनिपातलक्षण उपमोत्प्रेक्षारूपकाद्यलङ्कारोपेतः। मधुमान् रसवान् वाक्यगुणैर्युक्त उदारद् उदगान्मुखतः। स एवोपांशुना सवनेन क्रियमाणः... सम्प्राप्नोदमृतत्वमतोऽग्निचिद्भिः प्रकाशनीयः। घृतस्य नाम गुह्यं यदस्ति तदपि जिह्वास्थाननिमित्तं देवानां किमुत साक्षाद्धोमः। अथास्य घृतकीर्तिविवाग्निर्वैश्वानरो जज्वालेत्येतदभिप्रायं वचनम्। अमृतत्वस्य च नाभिर्नहनं यजमानानाम्। अतोऽग्निचिद्भिर्हूयते स्तूयते च U.

५. VM. ignores नाम॥ नमनसाधनम् Sy. N. 7. 17., SKN. 3. 79. This stanza=YV. 17. 89.

व॒यं नाम॒ प्र ब्र॑वामा घृ॒तस्या॒स्मिन्य॒ज्ञे धा॑रयामा॒ नमो॑भिः ।
उप॑ ब्र॒ह्मा शृ॑णवच्छ॒स्यमा॑नं॒ चतुः॑शृङ्गोऽवमीद्गौ॒र ए॒तत् ॥ २ ॥

वयं नाम[1] । जिह्वा देवानामितीदं नाम[2] । वयम्[3] । अग्नेः[4] । प्रब्रवाम[5] । अस्मिन् । यज्ञे[6] । धारयाम[7] च तमग्निम् । नमोभिः[7] । उप शृणोति[8] । महानग्निः[9] । उच्यमानं[10] नाम । तदिदं[11] नाम । चतुःशृङ्गः[12] कश्चन । गौरः[13] । वमति[14] प्रकाशयति[15] ।

च॒त्वारि॒ शृङ्गा॒ त्रयो॑ अस्य॒ पादा॒ द्वे शी॒र्षे स॒प्त हस्ता॑सो अस्य ।
त्रिधा॑ ब॒द्धो वृ॑ष॒भो रो॑रवीति म॒हो दे॒वो मर्त्याँ॒ आ वि॑वेश ॥ ३ ॥

[16]चत्वारि शृङ्गा[17] । तस्य[18] गौरस्य[19] ।

---

१. नम D.
२. घृतस्य नाम Mah., U.
३. यजमानाः Sy. यतो घृतनामोच्चारणमपि देवानां प्रियमतो वयम् Mah. यतो नामोच्चारणमपि प्रियं देवानामतो वयम् U. ४. घृतस्य Sy.
५. स्तुमः Sy. अस्मिन् यज्ञे घृतनाम स्तुमः Mah. ६. धारयाम यज्ञमिति शेषः Mah. धारयाम च यज्ञम् U.
७. नमस्कारैर्हविर्भिर्वा Sy. अन्नैः Mah. हविर्भिः U. ८. ०भिमुप० D. शृणुयात् Sy. उपाशृणोत् U.
९. ०नग्नि M. परिवृढो देवः Sy. ब्रह्मा ऋत्विक् Mah., U.
१०. उच्य is omitted in M. स्तूयमानमिदम् Sy., Mah.
११. कर्म जगद्वा Sy. एतद् घृतनाम Mah. एतद् घृतम् U.
१२. चत्वारि शृङ्गाणि वेदचतुष्टयरूपाणि यस्य सः । आदित्याग्निपक्षे एवम् । इतरेष्वपि यास्कोक्तव्युत्पत्त्या शृङ्गशब्दो व्याख्येयः Sy. चत्वार ऋत्विजः शृङ्गभूता यस्य सः Mah. यथा चतुःशृङ्गो यज्ञः । ऋत्विजोऽस्य शृङ्गाणि U.
१३. अरुणवर्णस्तादृशो देवः Sy. यथा गौरो गौरवर्णः शुद्धो यज्ञः Mah. गौरवर्णः U.
१४. उद्गिरति निर्वहतीत्यर्थः Sy. एतद् घृतयज्ञफलरूपमवमीदुद्गिरति यज्ञपरिमाणाभिप्रायम् Mah. उद्गिरति यज्ञपरिमाणाभिप्रायम् U.
१५. The commentary on this stanza is omitted by P. This stanza=YV. 17. 90.
१६. यद्यपि सूक्तस्याग्निसूर्यादिपञ्चदेवताकत्वात् पञ्चधायं मन्त्रो व्याख्येयस्तथापि निरुक्ताद्युक्तरीत्या यज्ञात्मकाग्नेः सूर्यस्य च प्रकाशकत्वेन तत्परतया व्याख्यायते Sy. चतुःशृङ्गोऽवमीदित्युक्त्वा चतुःशृङ्गं यज्ञं वृषभरूपेण प्रतिपादयितुमाह Mah. चतुःशृङ्गोऽवमीदित्युक्त्वा अधुना चतुःशृङ्गं यज्ञं वृषशब्दं वृषभं प्रतिपादयितुमाह U. १७. शृङ्गाः P., D.
१८. Omitted by M. अस्य यज्ञात्मकस्याग्नेः Sy.
१९. हौरस्य P. अस्य वृषभस्य यज्ञस्य Mah. अस्यास्य U.

चत्वारि । शृङ्गाणि भवन्ति । त्रयश्च । पादाः । द्वे च । शीर्षे ।
सप्त । हस्तासः । अस्य । स चायं त्रिधा । बद्धः । वृषभः ।
शब्दं करोति । सोऽयं महान् । देवः । मनुष्यान् । आविवेश ।

---

१. चत्वारो वेदाः शृङ्गस्थानीयाः । यद्यप्यापस्तम्बेन 'यज्ञं व्याख्यास्यामः स त्रिभिर्वेदैर्विधीयते' (परिभा० १. ३.) इत्युक्तं तथाप्याथर्वणस्येतरानपेक्षयैव एकाग्निसाध्यानां कृत्स्नकर्मणामभिधायकत्वात्तदपेक्षया चत्वारि शृङ्गेत्युक्तम् Sy.

२. ब्रह्मोद्गातृहोत्रध्वर्युलक्षणानि Mah. ब्रह्मोद्गातृहोत्रध्वर्य्वाख्यानि U.

३. सवनानि त्रीण्यस्य पादाः । प्रवृत्तिसाधनत्वात् पादा इत्युच्यन्ते Sy. पादा ऋग्यजुःसामरूपाः Mah. ऋग्यजुःसामलक्षणाः U.

४. ब्रह्मौदनं प्रवर्ग्यश्च इष्टिसोमप्राधान्येनेदमुक्तम् Sy. शिरसी हविर्धानप्रवर्ग्याख्ये । शिर एवास्य हविर्धानम् । 'ग्रीवा वै यज्ञस्योपसदः शिरः प्रवर्ग्यः' (SB. 3.4.4.1) इति श्रुतिः Mah., U.

५. ०स्त० D. सप्त छन्दांसि । हस्ता अनुष्ठानस्य मुख्यसाधनम् । छन्दांस्यपि देवताप्रीणनस्य मुख्यसाधनमिति हस्तव्यवहारः Sy. सप्त होतारो हस्ता इव व्याप्रियन्ते सप्तच्छदांसि वा हस्ताः Mah. सप्त होतारो हस्ता इव व्याप्रियन्ते । यद्वा सप्तच्छन्दांसि हस्ता इव U.

६. वृषभस्य Mah.

७. मन्त्रब्राह्मणकल्पैः त्रिप्रकारं बद्धः । बन्धनमस्य तन्निष्पाद्यत्वम् Sy. त्रिप्रकारैः Mah. त्रिप्रकारम् U.

८. प्रातःसवनमाध्यन्दिनसवनतृतीयसवनैर्बद्धः । यद्वा चत्वारो वेदा शृङ्गाणि । त्रयः पादाः सवनानि । द्वे शीर्षे प्रायणीयोदयनीये सप्त हस्तासश्छन्दांसि । त्रिधा बद्धो मन्त्रब्राह्मणकल्पैर्बद्धः Mah. सम्बद्धः प्रातःसवनमाध्यन्दिनतृतीयसवनैः U.

९. फलानां वर्षिता Sy. वृषभः कामानां वर्षिता Mah. वर्षिता U.

१०. भृशं शब्दायते । ऋग्यजुःसामोक्थैः शस्त्रयागस्तुतिरूपैर्होत्राद्युत्पादितैर्ध्वनिभिरसौ रौति Sy. 'रु शब्दे' । यङ्लुगन्तम् । अत्यर्थं शब्दं करोति Mah., U.

११. महति पूजयति मह्यते वा जनैरिति महो महान् Mah.

१२. महा P. ब्रह्मादिस्तम्बपर्यन्तानां प्राणिनामुपजीव्यो ज्ञानकर्मसमुच्चयकारिणां विदुषां शरीरभूतः Mah. हिरण्यगर्भस्तम्बपर्यन्तानां प्राणिनामुपजीव्यो ज्ञानकर्मसमुच्चयकारिणां शरीरभूतः U.

१३. आविशति मनुष्यान् व्याप्य तिष्ठति Mah.

इत्य[1]त्राथर्वणिकम्—'चत्वारि शृङ्गा इति वेदा एवै[2]त उक्ता[3]स्त्रयो अ[4]स्य पादा इति सवनान्येव द्वे शीर्षे इति ब्रह्मौदनप्रवर्ग्या एव सप्त हस्तासो अस्येति छन्दांस्येव त्रिधा बद्ध इति मन्त्रः कल्पो ब्राह्मणम् ऋषभो रोरवीत्येष ह[5] वै वृ[6]षभ ए[7]व तद्रो[8]रवीति यद्यज्ञे शस्त्राणि शंस[9]न्ति। ऋग्भिर्य[10]जुर्भिः सामभिर्ब्रह्मभिरिति म[11]हो देवो मर्त्या[12] आविवेशेत्येष एव वै[13] महान् देवो यद्यज्ञो मर्त्यानाविवे[14]श' इति।

---

१. ०र्वा० P. अत्र यास्कः—चत्वारि शृङ्गेति वेदा वा एत उक्ताः (N. 13. 7.) इत्यादिना निरवोचत् तदत्रानुसन्धेयम्। अथ सूर्यपक्षे व्याख्यायते। अस्यादित्यस्य चत्वारि शृङ्गाणि चतस्रो दिशः एताः श्रयणार्थत्वात् शृङ्गाणीत्युपचर्यन्ते। त्रयो अस्य पादाः। त्रयो वेदाः पादस्थानीया भवन्ति गमनसाधनत्वात्। तथा हि ऋग्भिः 'पूर्वाह्णे दिवि देव ईयते' इत्युपक्रम्य 'वेदैरशून्यस्त्रिभिरेति सूर्यः' (TB. 3. 12. 9. 1.) इति हि वेदत्रयेण गतिराम्नाता। द्वे शीर्षे। अहश्च रात्रिश्चेति द्वे शिरसी। सप्त हस्तासो अस्य। सप्त रश्मयः षड्विलक्षणा ऋतवः एकः साधारण इति वा सप्त हस्ता भवन्ति। त्रिधा बद्धस्त्रिषु स्थानेषु क्षित्यादिष्वग्न्याद्यात्मकत्वेन सम्बद्धः। ग्रीष्मवर्षाहिमन्ताख्यैस्त्रिभिस्त्रेधा बद्धो वा। वृषभो वर्षिता रोरवीति शब्दं करोति वृष्ट्याद्विद्वारा। स महो महान् देवो मर्त्याना विवेश तन्नियन्तृतया। 'सूर्य आत्मा जगतस्तस्थुषश्च' (RV. I. 115. 1.) इति हि श्रुतम्। एवं त्वष्टादिपक्षेऽपि योज्यम्। शाब्दिकास्तु शब्दब्रह्मपरतया 'चत्वारि शृङ्गेति चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्चे'त्यादिना व्याचक्षते। अपरे त्वपरथा। तत्सर्वमत्र द्रष्टव्यम् Sy. शब्दग्रामो वा व्याख्येयः। चत्वारि शृङ्गाणि नामाख्यातोपसर्गनिपाताः। त्रयः पादाः प्रथमपुरुषमध्यमपुरुषोत्तमपुरुषास्त्रयः काला वा। द्वे शीर्षे कार्यताव्यज्यते। सप्त हस्ता विभक्तिरूपाः। त्रिधा बद्ध एकवचनद्विवचनबहुवचनैर्बद्धः। वृषभ इवायमन्यशास्त्राण्यधः कृत्वा रोरवीति सोऽयं महान् देवो मर्त्यानाविवेश आविशति प्रतिपादयति मनुष्येष्विति मनुष्याधिकारत्वाच्छास्त्रस्येति न्यायात् Mah. शब्दग्रामो वाभिधेयः। चत्वारि शृङ्गाणि नामाख्यातोपसर्गनिपाताः। त्रयोऽस्य पादाः प्रथमपुरुषमध्यमपुरुषोत्तमपुरुषाः। द्वे शीर्षे नामाख्याते। सप्त हस्ताः सप्त विभक्तयः। त्रिधा बद्ध एकवचनद्विवचनबहुवचनैः। वृषभ इवामर्षादन्यानि शास्त्राण्यधःपदीकृत्य रोरवीति। य उक्तगणः सोऽयं महान्देवो मर्त्यानाविशति प्रतिपादयति U.

This stanza=YV. 17. 91.

२. इवं० D.

३. ०क्तस्त्र० P.

४. उक्तस्तु योस्य D.

५. हंव for ह वै P.

६. पृष० P.

७. एष P., D.

८. ०ररवी० P.

९. हंस० D.

१०. हंसन्त्रिभिर्य० P.

११. महा P.

१२. ०र्त्यान् P.

१३. शो त्ये ए वै P. एवैव M.

१४. ०र्त्यां आवि० P., D.

त्रिधा॑ हि॒तं प॒णिभि॑र्गु॒ह्यमा॑नं॒ गवि॑ दे॒वासो॑ घृ॒तमन्व॑विन्दन् ।
इन्द्र॒ एकं॒ सूर्य॒ एकं॑ जजान वे॒नादेकं॑ स्व॒धया॒ निष्ट॑तक्षुः ॥ ४ ॥

त्रिधा हितम् । त्रिधा[१] । हितम्[२] । पणिभिः[३] । अवगुह्यमानम्[४] । कस्मिंश्चिद् गवि[५] स्थितम् । घृतम्[६] उदकम्[७] । देवाः । अन्वविन्दन्[८] । तस्य घृतस्यैकमंशम्[९] । इन्द्रः[१०] । जनयति[११] । द्वितीयम् । सूर्यः[१२] । अथाग्ने[१३] [१४] । हविषा[१५] यजमानाः[१६] । निष्कृण्वन्ति[१७] त्रयो देवा आकाशाद् वृष्टिमुत्पादयन्तीति समुदायार्थः ।

ए॒ता अ॑र्षन्ति॒ हृद्या॑त्समु॒द्राच्छ॒तव्र॑जा रि॒पुणा॒ नाव॒चक्षे॑ ।
घृ॒तस्य॒ धारा॑ अ॒भि चा॑कशीमि हिर॒ण्ययो॑ वेत॒सो मध्य॑ आसाम् ॥ ५ ॥

एता अर्षन्ति । एताः[१८] । गच्छन्ति[१९] । हृद्यात्[२०] । अन्तरिक्षात्[२१] ।

---

१. क्षीरदध्याज्यभेदेन त्रिप्रकारम् Sy. त्रिप्रकारैः Mah.

२. त्रिधा । हितम् omitted by M. निहितम् Sy. एषु लोकेषु हितं स्थापितम् Mah. निहितं स्थापितमेषु लोकेषु U.

३. असुरैः Sy., Mah. सुरैः U. ४. उह्यमानं P. पणिभिरुपणभिरुपद्गुह्यमानं D. गोपितम् Sy. गुप्यमानं सत् Mah. गुप्यमानम् U. ५. गोषु Sy. धेनौ Mah.

६. दीप्तं रसरूपं वा द्रव्यम्, घृतम् Sy. द्रुतं यज्ञपरिणामभूतम् Mah. यज्ञपरिणामभूतं यथा घृतं तथा U.

७. उदकान् M. ८. अलभन्त Sy. आनुपूर्व्याल्लब्धवन्तः Mah.

९. क्षीरम् Sy. भागम् Mah.

१०. तत्र इन्द्रः Sy. 'ते वाऽएते । आहुती हुते ऽउत्क्रामतस्ते ऽअन्तरिक्षमाविशतः' (SB. 11.6.2.6.) इत्यादिश्रुतिरिन्द्रस्य जनकत्वं दर्शयति Mah., U.

११. उदपादयत् Sy. 'जनी प्रादुर्भावे' । लिट् परस्मैपदमार्षम् Mah. १२. सूर्यः जजान 'ते तत उत्क्रामतस्ते दिवमाविशतः' इत्यादिश्रुतिः सूर्यस्य घृतभागजनकत्वं दर्शयति Mah., U. १३. अथवा P.

१४. अग्नेः is suggested for अग्ने ॥ कान्तिमन्तोऽग्नेर्गमनवतो वायोर्वा Sy. यज्ञसाधनभूतादग्नेः Mah. अग्नेर्यज्ञसाधनभूतात् U. १५. अन्नेन निमित्तेन द्रव्येण वा साधनेन Sy. अन्नेन त्रेताहुतिलक्षणेन Mah. अन्नेनाहुतिलक्षणेन U.

१६. ०नाय P., D. द्विजातयः Mah., U.

१७. निरपादयन् देवाः Sy. निष्कर्षितवन्तः Mah. निष्कर्षितवन्तः ।. . . यस्ततः पुत्रो जायते स लोकप्रत्युत्थायीत्येतदुक्तम्भवति U.

This stanza=YV. 17. 92.

१८. आपो घृतधारा वा Sy. वाचः Mah. ऊर्मयो या एता वाचः U. १९. अधः पतन्ति Sy. उद्गच्छन्ति Mah., U.

२०. हृदयङ्गमात् Sy. श्रद्धोदकप्लुतात् Mah. श्रद्धोदकप्लुतादेव U.

२१. देवतायाथात्म्यचिन्तनसन्तानरूपात्समुद्रान्निगमनिरुक्तनिघण्टुव्याकरणशिक्षाच्छन्दोभिः पावनैः पूतात् Mah.

शतसङ्ख्याः[1] । केनचित् शत्रुणा[2] । न । अवख्याताः[3] । ता एता घृतस्य । धाराः[4] । अभिपश्यामि[5] ।
तासाम्[6] । मध्ये[7] । हिरण्मयः[8] कश्चित् । वेतसस्तिष्ठतीति[9] वैद्युतमग्निमादित्यं[10] वाहेति ।

---

१. अपरिमितगतयः सत्यः Sy. कीदृश्यो वाचः । शतव्रजाः शतं व्रजं व्रजा गतयो यासां ता बहुगतयः । बह्वर्था इत्यर्थः Mah. ता याथात्म्यचिन्तनसन्तानगर्भ-त्रिगमनिरुक्तनिघण्टुव्याकरणशिक्षाच्छ-न्दोभिः परिपूरिताः शब्दव्रजाः । बहुग-तयो बह्वर्थाः U.

२. जललोकप्रतिबन्धकारिणा शत्रुणा वृत्रेण Sy. याश्चार्वन्त्यो रिपुणा कुतार्किक-वृन्दशत्रुणा Mah. कुतार्किकवृन्दशत्रु-सङ्घातेन U.

३. ०ख्यातव्यास्ता M. नावदर्शनाय यथा-दृष्टं भवति तथा अर्षन्ति Sy. नाव-चक्ष्यन्ते । पुरुषवचनव्यत्ययः । नाप-वदितुं खण्डयितुं शक्यन्ते Mah. नाप-वदितुं शक्याः U.

४. धार P. ता घृतस्य धारा इव ।... लुप्तोपमानम् Mah. ता घृतस्येव धारा देवानां तृप्तिकराः U. ५. अहं पश्यामि Mah. अहमभिगच्छामि U.

६. अपां वर्तत इति शेषः Sy. आसां वचनम् Mah. आसां वाग्व्यक्तीनाम्

७. मध्ये...विद्यमानम् U. ८. ०याः D. कुत्रेति तदुच्यते Sy. दीप्यमानः Mah.

९. वेतसोऽग्निः, तं चाभिचाकशीमि । अग्निर्हि वाचामधिष्ठात्री देवता Mah. वेतसोऽग्निः (तं) चाकशीमि, अहमभि-यास्यामि । हिरण्मयो वेतसोऽग्निरा-हवनीयाख्यः... अग्निर्हि वाचामधि-ष्ठात्री देवता U.

१०. ०तमत्यग्नि० P. ०तमत्यनिमादि० D. अप्सम्भवोऽग्निर्वैद्युतः । अत्र घृतस्य धारा अभिचाकशीमीत्यनेन चरमपादेन होमाधारोऽग्निर्वैद्युतोऽग्निरादित्यो वोक्तः Sy. यद्वा घृतधारा एवोच्यन्ते, या एता हृद्यात्समुद्राद् घृतधारा अर्षन्ति गच्छन्ति । हृदयेन सङ्कल्प्य यजनाद्धृ-दयादुद्गतिरुच्यते । शतव्रजा नानाग-तयो याश्च रिपुणा नावचक्षे यज्ञपरि-पन्थिना द्रष्टुं न शक्यन्ते ता घृतधाराः पश्यामि । यश्चायं हिरण्मयो वेतसोऽग्नि-राहवनीय आसां धाराणां मध्ये स्थितस्तं च पश्यामि । द्रव्यदेवताश्च याथात्म्ये-नाहं पश्यामीत्यर्थः Mah. यद्वा घृतस्य धारा एवोच्यन्ते । या एता अर्षन्ति गच्छन्ति हृद्यात्समुद्रात् । हृदयेन हि सङ्कल्प्य पश्चाद्यजन्ते ता एवमुच्यन्ते । शतव्रजा बहुगतयः । याश्चैता रिपुणा शत्रुणा यज्ञपरिपन्थिना नावचक्षे नाव-द्रष्टुं शक्यन्ते ता घृतस्य धारा अहमभि-चाकशीमि पश्यामि । यश्चायं हिरण्मयो वेतसोऽग्निराहवनीयाख्यो मध्य आसां व्यवतिष्ठति? (ते) तमप्यहं पश्यामि । याथात्म्यतोऽहं द्रव्यं देवतां च पश्यामी-त्युक्तं भवति U.

This stanza=YV. 17. 93.

सम्यक्स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः ।
एते अर्षन्त्यूर्मयो घृतस्य मृगाइव क्षिपणोरीषमाणाः ॥ ६ ॥

सम्यक् स्रवन्ति । समीचीनं समुद्रात् । स्रवन्ति । नद्यः । इव । वाचः । द्यावापृथिव्योरन्तरग्निना । मनसा । हृदयेन च । पूयमानाः । ईर्यमाणाः । प्रकारान्तरेणाह, एते । गच्छन्ति । ऊर्मयः । घृतस्य शीघ्रम् । मृगा इव । क्षेप्तुर्व्याधाद् भयात् । पलायमानाः ।

---

१. अस्याग्नेरुपरि सम्यक् Sy. साधु U.
२. द्रवन्ति M.
क्षरन्ति घृतधाराः Sy.
३. नद्य इवानवच्छिन्नप्रवाहाः Mah. नद्य इवानवच्छिन्नोदकसन्तानप्रवृद्धाः U.
४. नद्यजवापः P., D. प्रीणयित्र्यः Sy. धेना इति वाङ्नाम Ngh. 1. 11.
५. शरीरान्तर्व्यवस्थितेन Mah. अन्तर्व्यवस्थितेन U.
६. हृदयमध्यगतेन चित्तेन भावनासचिवेनेति यावत् Sy. पावनस्थानीयेन मनसा Mah. परिपवस्थानीयेन मनसा च U.
७. हृदयेन U.
८. पूरयामा० P., D. तेन शुद्धीकृताः Sy. शब्ददोषेभ्यो विविच्यमानाः । ता अग्निमेव स्तुवन्तीति शेषः Mah. विविच्यमानाः शब्ददोषेभ्यः U.
९. क्षार्यमाणां P. क्षर्यमाणा D. ईर्यमाणाः should immediately come before पलायमानाः.
१०. जुह्वाः सकाशादग्नेरुपरि पतन्ति Sy. स्रुक्परिभ्रष्टा गच्छन्ति । 'ऋष गतौ' तेऽप्यग्निं तर्पयन्तीति शेषः Mah.
११. रसाः Sy. कल्लोलाः Mah. सङ्घाता घृतस्य स्रुक्परिभ्रष्टाः U.
१२. ते यथा कक्षं प्रविशन्ति तद्वत् । अनेन शैघ्र्यमुक्तं भवति Sy. व्याधाद्भीता मृगा इव ये घृतोर्मयो गच्छन्ति । तेऽग्निं तर्पयन्तीत्यर्थः । श्रुतिर्द्रव्यं चाग्न्यर्थमेवेति भावः Mah. तेऽप्यग्निं तर्पयन्तीति शेषः । एतदुक्तम्भवति श्रुतिश्च द्रव्यं चाग्न्यर्थमेव U.
१३. क्षेपकाद् व्याधात् Sy. क्षिपति हिनस्ति क्षिपणुर्व्याधः Mah., U.
१४. The passage beginning with शीघ्रम् and ending with पलायमानाः is omitted by P. P. also adds धारा अभिपश्यामि after घृतस्य ।
This stanza=YV. 13. 38. 17. 94.
मुखे प्रथमं प्रत्यस्यति । "सम्यक् स्रवन्ति सरितो न धेना इत्यन्नं वै धेनास्तदिदꣳ सम्यङ्मुखमभि सꣳस्रवन्त्यन्तर्हृदा मनसा पूयमाना इत्यन्तर्वै हृदयेन मनसा सतान्नं पूतं य ऋजुस्तस्य घृतस्य धारा अभिचाकशामीति या एवैतस्मिन्नग्नावाहुतीर्होष्यन्भवति ता एतदाह हिरण्ययो वेतसो मध्येऽग्नेरिति य एवैष हिरण्मयः पुरुषस्तमेतदाह SB. 7. 5. 2. 11. p. 615.
अत्र पूर्वार्द्धं RV. IV. 58.6. इत्यस्याः, उत्तरार्द्धञ्च RV. IV. 58.5. इत्यस्या अस्ति किन्तु यजुष्ययमेव क्रमोऽस्ति YV. p. 253.

सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः ।
घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः ॥ ७ ॥

सिन्धोरिव । नद्या[1] इव । अध्वनः[2] प्रारम्भे पतनदेशे । शूघनासः[3] शीघ्रं गन्त्र्यः[4] पृथिव्याम्[5] । वेगेनेतस्ततः[6] प्रक्षिप्यमाणाः । पतन्ति[7] । महत्यः[8] । घृतस्य । धाराः[9] प्रेरयन्ति[10] । आरोचमानः[11] । इव[12] अश्वः[13] । दिशो[14] मेघैरधिष्ठिताः । भिन्दन्[15] । अपामूर्मिभिः[16] । पिन्वमानः[17] ।

---

१. स्यन्दमानाया नद्याः सकाशात् इव उदकानीव Sy. यथा सिन्धोर्नद्या वातप्रमियस्तरङ्गाः प्राध्वने विषमप्रदेशे पतन्ति तद्वत् Mah.

२. प्रवणवति देशे Sy. प्रगतोऽध्वनः प्राध्वनो विषमप्रदेशः Mah. प्रगतोऽध्वनः प्राध्वा महोदकप्रपातः, तस्मिन् महोदकप्रपाते U.

३. शूघकानाः P. शूघनाः D.

४. हन्त्र्याः P. हन्त्र्यः D. ह(ग)न्त्र्यः M. आशुगन्त्र्यः Sy. शु इति क्षिप्रनाम । हन्तेर्गत्यर्थस्य घनमिति रूपम् । शु क्षिप्रं घनं गमनं येषां ते शुघनाः शीघ्रगमनाः Mah. शू इति क्षिप्रनाम । हन्तेर्गत्यर्थस्य घनः । क्षिप्रगमनाः U. आशु इति च शु इति च क्षिप्रनामनी भवतः N. 6. 1.

५. ०व्या P.

६. पोतेनतस्ततः P. पोतेनेत० D. वायुवत् प्रकृष्टवेगाः Sy. वातेन प्रमीयन्ते नश्यन्ति ते वातप्रमियस्तरङ्गाः । 'मीङ् हिंसायाम्' दिवादिः Mah., U.

७. गच्छन्त्यग्नेरुपरि । घृतमुदकमिति पक्षे सिन्धोरिवेत्यत्रेवशब्दोऽनर्थकः । स्यन्दनसाधनादन्तरिक्षादुक्तलक्षणा घृतधारा उदकधाराः पतयन्ति गच्छन्ति भूमौ Sy. स्रुङ्मुखात्पतन्ति । 'पत ऐश्वर्ये गतौ च' चुरादिरदन्तः Mah. स्वार्थे णिच् । प्रपतन्ति U.

८. यह्व इति महन्नाम (Ngh. 3. 3.)

९. स्रुङ्मुखात् परिभ्रष्टा घृतस्य धारास्ताश्च पतन्तीत्यश्नात्यग्निः U.

१०. ०ति० M.

११. ०नाः P. कीदृशो वाजी । . . . 'रुष क्रोधे' रोषति क्रुध्यतीति रुषः . . . न रुषोऽरोषणो जात्यादिभिरुत्कृष्ट इत्यर्थः Mah. यथाऽरोचनो जात्यादिभिरुत्कृष्टः U.

१२. न इवार्थे Mah. नकार उपमार्थीयः U.

१३. गर्वेण गमनशीलोऽश्व इव । स यथा भिन्दन् पिन्वमानश्च भवति तद्वत् Sy. अन्यो दृष्टान्तः । . . . यथा वाजी अश्वः पतति Mah. वेजनवानश्वः U.

१४. किञ्च घृतसंस्त्यायः मर्यादाभूतान् परिधीन् Sy. आज्यन्तान् सङ्ग्रामप्रदेशान् Mah. आज्यन्तान् U.

१५. भिः P. विदारयन् Mah., U.

१६. ०र्मूमिभि P. रसैः Sy. काष्ठभेदनोत्थश्रमस्वेदोदकैः Mah. आज्यन्तविभेदनश्रमयोगाच्च स्वेदोदकोर्मिभिः U.

१७. पिन्वमानाः प्र P. पिवमानः M. वर्धमानो भवति । उदकमिति पक्षे क्रान्त्वा स्थित्वा दिशो भिन्दन् तरङ्गैः Sy. भूमिं सिञ्चन् । 'पिवि सेचने' शानच् । स वाजी यथा पतित्वाऽन्नान्यश्नाति, एवं पतन्ती घृतधारा अग्निरश्नातीत्यर्थः Mah. पिन्वमानः प्रसिञ्चनभूमिम् । यथैतद्गुणविशिष्टोऽश्वोऽश्नाति एवमग्निरप्यश्नातीति वाक्यार्थः । ननु हीनोपमानमग्नेरश्वो ज्यायांस्तत्र गुणोऽभिप्रेत इति परिहृतं यास्केन U.

This stanza=YV. 17. 95.

अभि प्रवन्त समनेव योषाः कल्याण्यः स्मयमानासो अग्निम् ।
घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः ॥ ८ ॥

अभि प्रवन्त[1] । यास्कः—अभिनमन्ति[2] समनस[3] इव योषाः । समनं[4] समननाद्वा[5] । संमाननाद्वा । कल्याण्यः[6] । स्मयमानासः[7] । अग्निमित्यौपमिकम्[8] । घृतस्य धारा उदकस्य धाराः समिधो[9] नसन्त । नसतिराप्नोतिकर्मा[10] वा । नमतिकर्मा[11] वा । 'ता जुषाणो हर्यति[12] जातवेदाः' हर्यतिः[13] प्रेप्साकर्माभिहर्यतीति[14], अयमर्थः[15]—अभिगच्छन्ति[16] । समनस्का[17] इव । स्त्रियः[18] । कल्याण्यः[19] । स्मयमानाः[20] । अग्नि माध्यमिकम्[21] ।

---

१. प्रपन्त D.
२. N. reads अभिनमन्त ।
३. समनं P., D. ४. समना M.
५. संमान० N. ६. ०ण्य P.
७. स्वयमा० P. स्वयमागासो D. ०नाः सो M. ८. ०क P. अमुमग्निम् Sy. औपमिकमुपमाप्रयुक्तम् SKN.
९. नन् न्त P., D.
१०. ०कर्म P. नतिराप्नोतिकर्म D.
११. नसतिरा. . .तिकर्मा M.
१२. हर्यसीति P.
१३. D. repeats हर्यति ।
१४. N. reads विहर्यतीति N. 7. 17.
१५. अयत्यं P. अत्यंः D.
१६. अभिनमयन्ति । निमग्नं कुर्वन्ति Sy. 'प्रुङ् गतौ'। अग्निं प्रतिगच्छन्ति । लङ् । अडभावः आर्षः Mah. अभिनमन्त्यो यान्ति प्रह्वीभवन्ति U. प्रवतेर्गतिकर्मणश्छान्दसत्वाद् वर्तमाने लङि प्रवन्तेति । अभिप्रवन्ते अभिगच्छन्ति SKN. आभिमुख्येन नमन्ति प्रह्वीभवन्ति Dur.
१७. समानमनस्काः Sy. समानं मनो यासां ताः समनसः । विभक्तेडविशः Mah. समानमनस्का इव योषा एकभर्तारं प्रति सङ्गतमनसः U. समाने पुंसि, अननं प्राणनं मनो वा यासां ता समानना: समनसो वा, तत्र समननशब्दस्य समनशब्दस्य वा इवे छान्दसो नकारस्य सकारस्य वा लोपः । समना इव समनस इव वा । कृतान्तलोपमेव समनश्शब्दं निर्ब्रवीति । सम्पूर्वादनतेर्मनोतेर्वा । तथा चोक्तम् 'मनो मनोतेः' N.4. 4. इति SKN. समानमनसः । एकस्मिन् भर्तरि यासां मनांसि वर्तन्ते ताः समनसः Dur.
१८. योषितः पतिमिव Sy. तत्र दृष्टान्तः योषा इव, यथा योषाः स्त्रियः पतिं प्रति प्रवन्ते Mah. यथा ता एकभर्तृका बह्वयो योषाः स्त्रियः SKN.
१९. ०ण्य P. भद्ररूपाः Sy. कल्याण्यो रूपयौवनसम्पन्नाः Mah., U. दर्शनीयाः SKN. ता यथा कल्याण्यो रूपयौवनादिगुणसम्पन्नाः Dur.
२०. हसन्त्यः Sy. स्मयमाना ईषद्धसन्त्यः । 'स्मिङ् ईषद्धसने' Mah. ईषद्धसमानाः U. ईषद्धसन्त्यः । स्मयनेन चात्र सम्भोगकारकत्वं लक्ष्यते । भर्तृदर्शितसम्भोगाभिलाषा इत्यर्थः । ता युगपदभिगच्छन्ति SKN. स्मयमाना ईषद्धसन्त्यो हर्षमुपजनयन्त्यो भर्तुस्तं प्रति परिष्वजनायाभिनमेयुः Dur.
२१. मध्यमितं P. माध्यमिकस्य M. तद्वदग्निं वैद्युतम् SKN. कमभिप्रह्वीभवन्ति ? मध्यममग्निम्. . .तथा मध्यमस्थानमग्निम् Dur.

घृतस्य । धाराः । समिधः इव । भजन्ते । ताः । प्रीयमाणाः । कामयते । अग्निरिति ।

१. Omitted by M. घृतस्य घृतस्य D. घृतस्योदकस्य मेघस्य धाराः SKN. घृतस्योदकस्य धाराः Dur.

२. ता धाराः Mah. इत्थम्भूता धाराः U.

३. ०धा P. सम्यग्दीपयित्र्यः सत्यः Sy. समिन्धते दीपयन्त्यग्निमिति समिधः Mah. समिन्धनाः U. उदकेन्धनत्वात्तस्य समिन्धनकारिण्योऽभिगच्छन्ति SKN. समिन्धयन्त्यः Dur.

४. व्याप्नुवन्ति Sy. हरन्ति। 'नस हरणे'। ...नसतिराप्नोतिकर्मा वा । अग्निं व्याप्नुवन्ति Mah. अग्निमभिप्रह्वीभूय, ततस्तमेवाग्निं नसन्त । नसतिराप्नोतिकर्मा वा नमतिकर्मा वा । व्याप्नुवन्ति U. नसतिराप्नोतेर्नमतेर्वाऽर्थे । आप्नुवन्ति नमन्ति वा तं प्रति SKN. प्राप्नुवन्तीत्यर्थः Dur.

५. एव धाराः Sy. ता घृतधाराः Mah. ताश्च धाराः U. असावपि ताः SKN. ताश्च ताश्च पुनः Dur. ६. ०णाः P. सेवमानो वायम् Sy. प्रीतियुक्तः सन् Mah. जुषमाणः प्रीयमाणो भावानुवृत्त्या सेवमानः SKN. प्रीयमाणः Dur.

७. हर्यति प्राप्नोति । 'हर्य क्लमे गतौ' । हर्यतिः प्रेप्साकर्मा वा । ता धाराः प्रेप्सति कामयते । नास्य ग्रहणशक्तिपरिहरणमस्तीति भावः Mah. हर्यतिः प्रेप्साकर्मा । प्रेप्सति प्रतिकामयते U. पुमानिव कामयते ।... हर्यतिर्गतिकान्त्योः । कान्तिश्चात्र प्रेप्सा अभिहर्यतीति प्रसिद्धप्रयोगदर्शनम् SKN. पुनः पुनः प्रेप्सति Dur.

८. जातवेदाः Sy. जातप्रज्ञानोऽग्निः Mah., U. जातविद्यः SKN. मध्यमस्थानो वैद्युतोऽग्निः Dur.

९. घृतशब्दस्योदकमिति पक्षेऽग्निजातवेदःशब्दाभ्यां वैद्युतोऽग्निरादित्यो वा गृह्यते। तं देवमुदकधारा अभिप्रवन्त नसन्त च । स ताश्च हर्यति Sy. कस्मात्पुनरत्र पार्थिव एवाग्निर्न गृह्यते, घृतं वाहुतिलक्षणम् । आज्यमाहवनीयम् । आहुतिलक्षणस्याज्यस्य धारा अभिगच्छन्ति ? उच्यते, बह्वीनां धाराणां युगपदभिगमनवचनात् । क्रमत्वाच्चाहुतीनां घृतधाराणां युगपदग्निं प्रत्यभिगमनस्यासम्भवात् । वैद्युते तु सम्भवति ।... 'समुद्रादूर्मिर्मधु०' (RV. IV. 58. 1.) इत्यत्र मन्त्रे उदेषि, अस्तमेषि पर्येषीत्युदयकर्मणा लिङ्गेनादित्येन प्रसिद्धेनादित्यमुक्तं मन्यन्तेऽभियुक्ताः। तथा चास्मिन्नर्थे ब्राह्मणमपि दर्शयति—'समुद्रादध्येषोऽद्भ्य उदैत' (Kau. Br. 25. 1.) इति । उदैत उदेतीत्यर्थः।...सूक्तादित्वादस्या ऋचो य एवास्यामुक्तः स्वाभिप्रायः स एव परास्वप्यृक्षु वक्तव्यः । तेन 'अभि प्रवन्त' (RV. IV. 58. 8.) इत्यत्राप्यादित्य एवाग्निरुच्यते न पार्थिवो वैद्युतो वेत्यभिप्रायः । आदित्यमपि हि रश्मिभिराह्रियमाणस्योदकस्य धारा अभिगच्छन्ति । अग्निरुत्तरं ज्योतिरादित्यमौपमिकं च समानम् । ताश्च सम्प्रीयमाणः कामयते । अत आदित्योऽग्निरुच्यते SKN. एवमेतस्मिन् मन्त्रे युगपदभिधानात् पार्थिवे घृताहुतिहवनस्योपमानोपमेयवैधर्म्याच्च युगपत्सम्भवाच्चोदकस्य धाराणां वैद्युते, तत्रोपमानोपमेयसामञ्जस्याच्च सामर्थ्यात् प्रसिद्धिमुपरुध्य घृतधाराशब्द उदकधारावचनः सम्पद्यते । पठितं चैतदेव सामर्थ्यमपेक्ष्योदकनामसु 'घृतं मधु' (Ngh. 1. 12.)इति। एवं च योऽयमग्निशब्दोऽत्र सामर्थ्यान्मध्यमं ज्योतिराह Dur. N. 7. 17.; SKN. III. 78. This stanza=YV. 17. 96.

कन्याइव वहतुमेतवा उं अञ्ज्यञ्जाना अभि चाकशीमि ।
यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा अभि तत्पवन्ते ॥ ९ ॥

कन्याइव । युवतय[1] इव । भर्तारम्[2] । एतुम्[3] । शरीरम्[4] । अलङ्कुर्वाणाः[5] । पतिर्घृतस्य[6] धारा अभिपश्यति[7] । यत्र[8] । सोमः[9] । सिच्यते[10] । यत्र चान्यद्धविरग्नौ[11] । तत्र[12] । घृतस्य । धाराः[13] । अभिगच्छन्ति[14] ।[15]

अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त ।
इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवन्ते ॥ १० ॥

अभ्यर्षत[16] । अभिगच्छत[17][18] । सुस्तोत्रम्[19] ।

---

१. युवतीः is suggested for युवतयः ॥ अनूढा बालिका इव । ता यथा Sy. कन्या यथा पतिं गच्छन्ति तथा यज्ञं घृतधारा गच्छन्ति ता यज्ञसहिता घृतधाराः पश्यामीत्यर्थः Mah. या एता कन्या इव नवपरिणीता इव U.

२. उद्वाहं प्राप्तुम् Sy. वहति परिणयति वहतुर्भर्ता, यथा॰ वहतुं पतिम् Mah. वोढारं भर्तारम् U.

३. पतिं गन्तुम् Sy. प्राप्तुम् Mah. एतुं गमनाय U.

४. अञ्जकमाभरणं तेजो वा Sy. अञ्जि भगम्. . . .अज्यते व्यक्तीक्रियते स्त्रीपुंव्यक्ति येन तत् Mah. प्रजननम् U.

५. व्यञ्जयन्त्यः । एवंकुर्वत्यः कन्या इव स्वभर्तृभूतमाध्वरं वैद्युतं वाग्निमादित्यं वा वहतुमेतुमञ्जि व्यञ्जकं तदीयरूपमञ्जाना व्यञ्जयन्तीः Sy. व्यक्तं योग्यं कुर्वाणाः Mah. व्यक्तं कुर्वाणाः U.

६. पती P. वति D.

७. अभिपश्यामि । घृतेनोदकेन च भौमस्य वैद्युतस्य चाग्नेः प्रज्वलनं प्रसिद्धम् । किं च ता धाराः Sy. पश्यामि Mah. अभिपश्यामि U.

८. तत्र कुत्र, यत्र स्थाने Mah.

९. सोमो लताविशेषः Mah.

१०. अभिषूयते Mah., U.

११. यज्ञः सौत्रामण्याख्यः क्रियते तत्र Mah. यत्र सौत्रामण्याख्यो यज्ञस्तायते U.

१२. तं यज्ञमभिलक्ष्य Sy. तत्रेत्यर्थः U.

१३. यज्ञसहचरिता घृतस्य धारा इत्यभिप्रायः U. १४. 'पव गतौ' गच्छन्ति खलु Sy. १५. VM. ignores यज्ञः । इतरो यज्ञस्तायते Sy.

This stanza=YV. 17. 97.

१६. ०तः D.

१७. हे मदीया ऋत्विजः! Sy. हे देवाः! Mah., U. १८. अभिगमयत वा Sy. अभ्यगच्छत Mah., U.

१९. शोभनां स्तुतिम् Sy., Mah., U.

गोहितम्[1] । गमनशीलमग्निम्[2] । अस्मासु[3] च । भजनीयानि[4] । धनानि[5] । धत्त[6] । तथेमम् । यज्ञम्[7] । नयत[8] । देवतासु[9] । अस्माकम्[10] । घृतस्य । धारा इमाः[11] । मधुयुक्तम्[12] । क्षरन्ति[13] पादश्चतुर्थः परोक्ष इति ।

**धामन्ते विश्वं भुवनमधि श्रितमन्तः समुद्रे हृद्यन्तरायुषि ।**
**अपामनीके समिथे य आभृतस्तमश्याम मधुमन्तं त ऊर्मिम् ॥ ११ ॥**

धामन्ते[14] । अग्ने[15] ! सूर्य ! वा तव[16] । तेजसि[17] । विश्वम्[18] । भूतजातम्[19] । अधिश्रितम्[20] ।

---

१. ०त P., D. गोसमूहरूपं गोसम्बन्धिनं वा । अत्र गोशब्देनोदकानि गावो वोच्यन्ते तत्सङ्घातोऽभिप्रेतः Sy. गव्यं घृतं विद्यते यस्मिन्स गव्यस्तं घृतयुतम् । अर्शआदित्वादच् प्रत्ययः Mah. गोविकारैर्घृतैर्जनितं गव्यम् U.

२. सङ्घातम् Sy. आजिं यज्ञं च ।... अज्यते प्राप्यते स्वर्गो येन स आजिर्यज्ञः Mah. आजिमानमनमभ्यागच्छत U.

३. यजमानेषु Sy. आगत्य चास्मासु Mah. अभ्यागत्य चास्मासु U.

४. स्तुत्यानि Sy. कल्याणानि Mah. भद्राणि U.   ५. द्रविणानि Sy.

६. धारयत । स्तुत्या खलु फलं लप्स्यते Sy. स्थापयत दत्त वा । 'डुधाञ् धारणपोषणयोः' दाने चेति वचनात् Mah. स्थापयत दत्त वा U.

७. यज्ञं सौत्रामणीम् Mah.

८. अत्र यष्टव्यान् देवान् नयत प्रापयत Sy.

९. देवतासु देवलोके Mah. तत्र देवा देवत्वम् U.   १०. अस्मदीयम् Sy. अस्माभिर्यो देवलोको जित इत्यर्थः U.

११. याश्चैनाः Mah. याश्चैताः U.

१२. मधुमत् यथा तथा Sy. रसवत् यथा तथा Mah. मधुसंयुक्तम् U.

१३. गच्छन्ति Sy. प्रसरन्ति ता अपि देवतासु नयत, यज्ञे यज्ञद्रव्ये स्वर्गं गते यजमानो गच्छत्येवेत्यर्थः Mah. ताश्चास्मज्जितं लोकं नयतेत्यनुवर्तते U.

This stanza=YV. 17. 98.

१४. 'धामन्ते' इत्येषोत्तरसूक्तस्याद्या चाध्यायोत्सर्जनोपाकरणयोर्विनियुक्ते । 'धामन्ते विश्वम्' इति प्रतीकमुक्त्वा तदन्ते 'हूयाः' (AGS. 3. 5. 7.) इति सूत्रितत्वात् Sy.

१५. ब्रह्मादिस्तम्बपर्यन्तं निखिलं जगदाहुतिपरिणामभूतं मन्यमानो मुनिराह, हे अग्ने ! Mah. आहुतिपरिणामभूतमिदं जगद् ब्रह्मादिस्तम्बपर्यन्तं मन्यमान आह U.   १६. त्वदीये Sy.

१७. धामनि तेजःस्थाने Sy. धामनि विभूत्याम् । धामन्निति...विभक्तिलोपः Mah. धामनि विभूत्याम् U.

१८. सर्वम् Mah.   १९. भुवनम् Sy.

२०. आश्रितं स्थितम् । त्वन्महिमोत्थमित्यर्थः Mah. अध्याश्रितम् U.

स त्वमन्तरिक्षस्य[1]। अन्तर्वर्तसे[2][3]। तथा मनुष्ये[4] च। हृदि[5]। अन्तर्वर्तसे। अपां सङ्घे[6]।
सङ्गते[7]। यः[8]। आहृतः[9]। तम्[10]। मधुमन्तम्[11]। उदकसङ्घातम्। त्वत्तः[12]। वयं
लभेमहि[13][14]।

प्रायच्छदभिप्रायमस्मभ्यं[15] सूक्तमञ्जसा[16]।

शौनकोऽप्याह[17] बहुधा वामदेवः प्रसीदतु ॥ इति[18]।

---

१. समुद्रे Sy. यश्चान्तः समुद्रे समुद्रमध्ये Mah. समुद्रस्य U.

२. वडवाग्नित्वेन सर्वप्राणिनां हृदये वैश्वानरत्वेन Sy. मध्ये U.

३. ब्रह्मणो जीवनपर्यन्तं यद्भूतजातं तदपि ते धामनि श्रितम्. . .अतोऽहं प्रार्थये Mah. किञ्चिदपि धामनि तवाधिश्रितमित्यनुवर्तते। यत एवमतस्त्वां ब्रवीमि U.

४. अन्ने। सर्वप्राण्याहारत्वेन। यद्वा आयुषीत्येतत् हृद्विशेषणम्। जठराग्निना स्वल्पायुर्धार्यते Sy. आयुर्मध्ये Mah. आयुषि U.

५. हृन्मध्ये Mah.

६. उदकसंस्त्याये वैद्युताग्नित्वेन Sy. मुखे वर्तमानः Mah. मुखे वर्तमानो य ऊर्मिराहृतः U.

७. वर्तते वां सङ्घे सङ्गते M. सङ्ग्रामे च शौर्याग्निरूपेण। एवं सर्वेषु स्थानेषु वर्तमानं धाम Sy. पणिभिः सह युद्धे Mah. सङ्ग्रामे च पणिभिः सह वर्तमानः। . . .तदुक्तं पणिभिर्गुह्यमानमिति U.

८. तस्मिन् धामनि ऊर्मिर्घृतरूप उदकरूपो वा रसः Sy. ऊर्मिः Mah., U.

९. स्थापितः Sy. आनीतः Mah.

१०. रसम् Sy. ऊर्मि घृतकल्लोलम् Mah.

११. त्वदीयम् Sy. ते त्वदीयम् Mah. तव सम्बन्धिनम् U.

१२. माधुर्योपेतम् Sy. रसवन्तम् Mah., U.

१३. व्याप्नुयाम Sy. भक्षयामो व्याप्नुयामो वा।. . .अश्यामेति अश्नातेरश्नोतेर्वा विकरणव्यत्ययेन श्यनि प्रत्यये लोटि रूपम्। हविःपरिणामिनो रसस्य वयं भोक्तारो भवेमेति भावः। देवत्वं प्राप्नुयामेति वक्रोक्त्या प्रार्थ्यते Mah., U.

१४. ०महि न M. यद्वाऽस्या ऋचोऽर्थान्तरमुच्यते। हे अग्ने! इदं विश्वं भुवनं तव धामनि अधिश्रितं, तत्ते धाम कुत्र कुत्रेति तदुच्यते। अन्तःसमुद्रेऽन्तरिक्षमध्ये सूर्यरूपेण। समुद्र इत्यन्तरिक्षनाम (Ngh. 1. 3.)। हृदि अन्तः सर्वप्राणिनां हृदये जठराग्निरूपेण, आयुषि अन्ने सर्वप्राण्याहारत्वेन, अपामनीक उदकानां सङ्घाते वैद्युताग्निरूपेण, समिथे सङ्ग्रामे सौर्याग्निरूपेण, एवं सर्वेषु स्थानेष्वाभृतः स्थापितो यस्तव धामरूप ऊर्मिर्घृतरूप उदकरूपो वा तं तव रसं मधुमन्तं माधुर्योपेतं वयमश्याम प्राप्नुयाम। सर्वरसभोक्तारः स्यामेति भावः Mah.

१५. ०भ्यां M.

१६. ०क्तवञ्जसा P., D.

१७. ०प्याहृ P.

१८. This stanza=YV. 17. 99. Ms. D. puts the figure ॥५८॥ here to indicate the end of fifty-eighth hymn. No such number is given in P. and M.

II. 1.

त्वम् । अग्ने । द्युऽभिः । त्वम् । आशुशुक्षणिः । त्वम् । अत्ऽभ्यः । त्वम् । अश्मनः । परि । त्वम् । वनेभ्यः । त्वम् । ओषधीभ्यः । त्वम् । नृणाम् । नृऽपते । जायसे । शुचिः ॥ १ ॥ तव । अग्ने । होत्रम् । तव । पोत्रम् । ऋत्वियम् । तव । नेष्ट्रम् । त्वम् । अग्नित् । ऋतऽयतः । तव । प्रऽशास्त्रम् । त्वम् । अध्वरिऽयसि । ब्रह्मा । च । असि । गृहऽपतिः । च । नः । दमे ॥ २ ॥ त्वम् । अग्ने । इन्द्रः । वृषभः । सताम् । असि । त्वम् । विष्णुः । उरुऽगायः । नमस्यः । त्वम् । ब्रह्मा । रयिऽवित् । ब्रह्मणः । पते । त्वम् । विधर्तः । रयिम् । विऽधर्तः । सचसे । पुरम्ऽध्या ॥ ३ ॥ त्वम् । अग्ने । राजा । वरुणः । धृतऽव्रतः । त्वम् । मित्रः । भवसि । दस्मः । ईड्यः । त्वम् । अर्यमा । सत्ऽपतिः । यस्य । सम्ऽभुजम् । त्वम् । अंशः । विदथे । देव । भाजयुः ॥ ४ ॥ त्वम् । अग्ने । त्वष्टा । विधते । सुऽवीर्यम् । तव । ग्नावः । मित्रऽमहः । सऽजात्यम् । त्वम् । आशुऽहेमा । ररिषे । सुऽअश्व्यम् । त्वम् । नराम् । शर्धः । असि । पुरुऽवसुः ॥ ५ ॥ त्वम् । अग्ने । रुद्रः । असुरः । महः । दिवः । त्वम् । शर्धः । मारुतम् । पृक्षः । ईशिषे । त्वम् । वातैः । अरुणैः । यासि । शम्ऽगयः । त्वम् । पूषा । विधतः । पासि । नु । त्मना ॥ ६ ॥ त्वम् । अग्ने । द्रविणःऽदाः । अरम्ऽकृते । त्वम् । देवः । सविता । रत्नऽधाः । असि । त्वम् । भगः । नृऽपते । वस्वः । ईशिषे । त्वम् । पायुः । दमे । यः । ते । अविधत् ॥ ७ ॥ त्वाम् । अग्ने । दमे । आ । विश्पतिम् । विशः । त्वाम् । राजानम् । सुऽविदत्रम् । ऋञ्जते । त्वम् । विश्वानि । सुऽअनीक । पत्यसे । त्वम् । सहस्राणि । शता । दश । प्रति ॥ ८ ॥ त्वाम् । अग्ने । पितरम् ।

इष्टिऽभिः । नरः । त्वाम् । भ्रात्राय । शम्या । तनूऽरुचम् । त्वम् । पुत्रः ।
भवसि । यः । ते । अविधत् । त्वम् । सखा । सुऽशेवः । पासि । आऽधृषः
॥ ९ ॥ त्वम् । अग्ने । ऋभुः । आके । नमस्यः । त्वम् । वाजस्य ।
क्षुऽमतः । रायः । ईशिषे । त्वम् । वि । भासि । अनु । धक्षि । दावने ।
त्वम् । विऽशिक्षुः । असि । यज्ञम् । आऽतनिः ॥ १० ॥ त्वम् ।
अग्ने । अदितिः । देव । दाशुषे । त्वम् । होत्रा । भारती । वर्धसे ।
गिरा । त्वम् । इळा । शतऽहिमा । असि । दक्षसे । त्वम् । वृत्रऽहा ।
वसुऽपते । सरस्वती ॥ ११ ॥ त्वम् । अग्ने । सुऽभृतः । उत्ऽतमम् ।
वयः । तव । स्पार्हे । वर्णे । आ । सम्ऽदृशि । श्रियः । त्वम् । वाजः ।
प्रऽतरणः । बृहन् । असि । त्वम् । रयिः । बहुलः । विश्वतः । पृथुः
॥ १२ ॥ त्वाम् । अग्ने । आदित्यासः । आस्यम् । त्वाम् । जिह्वाम् ।
शुचयः । चक्रिरे । कवे । त्वाम् । रातिऽसाचः । अध्वरेषु । सश्चिरे ।
त्वे इति । देवाः । हविः । अदन्ति । आऽहुतम् ॥ १३ ॥ त्वे इति ।
अग्ने । विश्वे । अमृतासः । अद्रुहः । आसा । देवाः । हविः । अदन्ति ।
आऽहुतम् । त्वया । मर्तासः । स्वदन्ते । आऽसुतिम् । त्वम् । गर्भः ।
वीरुधाम् । जज्ञिषे । शुचिः ॥ १४ ॥ त्वम् । तान् । सम् । च । प्रति ।
च । असि । मज्मना । अग्ने । सुऽजात । प्र । च । देव । रिच्यसे ।
पृक्षः । यत् । अत्र । महिना । वि । ते । भुवत् । अनु । द्यावापृथिवी
इति । रोदसी इति । उभे इति ॥ १५ ॥ ये । स्तोतृऽभ्यः । गोऽअग्राम् ।
अश्वऽपेशसम् । अग्ने । रातिम् । उपऽसृजन्ति । सूरयः । अस्मान् । च ।
तान् । च । प्र । हि । नेषि । वस्यः । आ । बृहत् । वदेम । विदथे ।
सुऽवीराः ॥ १६ ॥

II. 2.

यज्ञेन । वर्धत । जातऽवेदसम् । अग्निम् । यजध्वम् । हविषा । तना । गिरा । सम्ऽइधानम् । सुऽप्रयसम् । स्वः॑ऽनरम् । द्युक्षम् । होतारम् । वृजनेषु । धूःऽसदम् ॥ १ ॥ अभि । त्वा । नक्तीः । उषसः । ववाशिरे । अग्ने । वत्सम् । न । स्वसरेषु । धेनवः । दिवःऽइव । इत् । अरतिः । मानुषा । युगा । आ । क्षपः । भासि । पुरुऽवार । सम्ऽयतः ॥ २ ॥ तम् । देवाः । बुध्ने । रजसः । सुऽदंससम् । दिवः पृथिव्योः । अरतिम् । नि । एरिरे । रथम्ऽइव । वेद्यम् । शुक्रऽशोचिषम् । अग्निम् । मित्रम् । न । क्षितिषु । प्रऽशंस्यम् ॥ ३ ॥ तम् । उक्षमाणम् । रजसि । स्वे । आ । दमे । चन्द्रम्ऽइव । सुऽरुचम् । ह्वारे । आ । दधुः । पृश्न्याः । पतरम् । चितयन्तम् । अक्षऽभिः । पाथः । न । पायुम् । जनसी इति । उभे इति । अनु ॥ ४ ॥ सः । होता । विश्वम् । परि । भूतु । अध्वरम् । तम् । ऊँ इति । हव्यैः । मनुषः । ऋञ्जते । गिरा । हिरिऽशिप्रः । वृधसानासु । जर्भुरत् । द्यौः । न । स्तृऽभिः । चितयत् । रोदसी इति । अनु ॥ ५ ॥ सः । नः । रेवत् । सम्ऽइधानः । स्वस्तये । सम्ऽददस्वान् । रयिम् । अस्मासु । दीदिहि । आ । नः । कृणुष्व । सुविताय । रोदसी इति । अग्ने । हव्या । मनुषः । देव । वीतये ॥ ६ ॥ दाः । नः । अग्ने । बृहतः । दाः । सहस्रिणः । दुरः । न । वाजम् । श्रुत्यै । अप । वृधि । प्राची इति । द्यावापृथिवी इति । ब्रह्मणा । कृधि । स्वः । न । शुक्रम् । उषसः । वि । दिद्युतुः ॥ ७ ॥ सः । इधानः । उषसः । राम्याः । अनु । स्वः । न । दीदेत् । अरुषेण । भानुना । होत्राभिः । अग्निः । मनुषः । सुऽअध्वरः । राजा । विशाम् ।

अतिथिः । चारुः । आयवे ॥ ८ ॥ एव । नः । अग्ने । अमृतेषु । पूर्व्य । धीः । पीपाय । बृहत्ऽदिवेषु । मानुषा । दुहाना । धेनुः । वृजनेषु । कारवे । त्मना । शतिनम् । पुरुऽरूपम् । इषणि ॥ ९ ॥ वयम् । अग्ने । अर्वता । वा । सुऽवीर्यम् । ब्रह्मणा । वा । चितयेम । जनान् । अति । अस्माकम् । द्युम्नम् । अधि । पञ्च । कृष्टिषु । उच्चा । स्वः । न । शुशुचीत । दुस्तरम् ॥ १० ॥ सः । नः । बोधि । सहस्य । प्रऽशंस्यः । यस्मिन् । सुऽजाताः । इषयन्त । सूरयः । यम् । अग्ने । यज्ञम् । उपऽयन्ति । वाजिनः । नित्ये । तोके । दीदिऽवांसम् । स्वे । दमे ॥ ११ ॥ उभयासः । जातऽवेदः । स्याम । ते । स्तोतारः । अग्ने । सूरयः । च । शर्मणि । वस्वः । रायः । पुरुऽचन्द्रस्य । भूयसः । प्रजाऽवतः । सुऽअपत्यस्य । शग्धि । नः ॥ १२ ॥ ये । स्तोतृऽभ्यः । गोऽअग्राम् । अश्वऽपेशसम् । अग्ने । रातिम् । उपऽसृजन्ति । सूरयः । अस्मान् । च । तान् । च । प्र । हि । नेषि । वस्यः । आ । बृहत् । वदेम । विदथे । सुऽवीराः ॥ १३ ॥

II. 3.

समिद्धः । अग्निः । निऽहितः । पृथिव्याम् । प्रत्यङ् । विश्वानि । भुवनानि । अस्थात् । होता । पावकः । प्रऽदिवः । सुऽमेधाः । देवः । देवान् । यजतु । अग्निः । अर्हन् ॥ १ ॥ नराशंसः । प्रति । धामानि । अञ्जन् । तिस्रः । दिवः । प्रति । मह्ना । सुऽअर्चिः । घृतऽप्रुषा । मनसा । हव्यम् । उन्दन् । मूर्धन् । यज्ञस्य । सम् । अनक्तु । देवान् ॥ २ ॥ ईळितः । अग्ने । मनसा । नः । अर्हन् । देवान् । यक्षि । मानुषात् । पूर्वः । अद्य । सः । आ । वह । मरुताम् । शर्धः । अच्युतम् । इन्द्रम् ।

नरः । बर्हिऽसदम् । यजध्वम् ॥ ३ ॥ देव । बर्हिः । वर्धमानम् ।
सुऽवीरम् । स्तीर्णम् । राये । सुऽभरम् । वेदी इति । अस्याम् । घृतेन ।
अक्तम् । वसवः । सीदत । इदम् । विश्वे । देवाः । आदित्याः ।
यज्ञियासः ॥ ४ ॥ वि । श्रयन्ताम् । उर्विया । हूयमानाः । द्वारः ।
देवीः । सुप्रऽअयनाः । नमःऽभिः । व्यचस्वतीः । वि । प्रथन्ताम् ।
अजुर्याः । वर्णम् । पुनानाः । यशसम् । सुऽवीरम् ॥ ५ ॥ साधु ।
अपांसि । सनता । नः । उक्षिते इति । उषसानक्ता । वय्याऽइव । रण्विते
इति । तन्तुम् । ततम् । संवयन्ती इति सम्ऽवयन्ती । समीची इति
सम्ऽईची । यज्ञस्य । पेशः । सुदुघे इति सुऽदुघे । पयस्वती इति ॥ ६ ॥
दैव्या । होतारा । प्रथमा । विदुःऽतरा । ऋजु । यक्षतः । सम् । ऋचा ।
वपुःऽतरा । देवान् । यजन्तौ । ऋतुऽथा । सम् । अञ्जतः । नाभा ।
पृथिव्याः । अधि । सानुषु । त्रिषु ॥ ७ ॥ सरस्वती । साधयन्ती ।
धियम् । नः । इळा । देवी । भारती । विश्वऽतूर्तिः । तिस्रः । देवीः ।
स्वधया । बर्हिः । आ । इदम् । अच्छिद्रम् । पान्तु । शरणम् ।
निऽसद्य ॥ ८ ॥ पिशङ्गऽरूपः । सुऽभरः । वयःऽधाः । श्रुष्टी । वीरः ।
जायते । देवऽकामः । प्रऽजाम् । त्वष्टा । वि । स्यतु । नाभिम् । अस्मे
इति । अथ । देवानाम् । अपि । एतु । पाथः ॥ ९ ॥ वनस्पतिः ।
अवऽसृजन् । उप । स्थात् । अग्निः । हविः । सूदयाति । प्र । धीभिः ।
त्रिधा । सम्ऽअक्तम् । नयतु । प्रऽजानन् । देवेभ्यः । दैव्यः । शमिता ।
उप । हव्यम् ॥ १० ॥ घृतम् । मिमिक्षे । घृतम् । अस्य । योनिः ।
घृते । श्रितः । घृतम् । ऊँ । इति । अस्य । धाम । अनुऽस्वधम् । आ ।
वह । मादयस्व । स्वाहाऽकृतम् । वृषभ । वक्षि । हव्यम् ॥ ११ ॥

## II. 4.

हुवे । वः । सुऽद्योत्मानम् । सुऽवृक्तिम् । विशाम् । अग्निम् । अतिथिम् । सुऽप्रयसम् । मित्रःऽइव । यः । दिधिषाय्यः । भूत् । देवः । आऽदेवे । जने । जातऽवेदाः ॥ १ ॥ इमम् । विधन्तः । अपाम् । सधऽस्थे । द्विता । अदधुः । भृगवः । विक्षु । आयोः । एषः । विश्वानि । अभि । अस्तु । भूम । देवानाम् । अग्निः । अरतिः । जीरऽअश्वः ॥ २ ॥ अग्निम् । देवासः । मानुषीषु । विक्षु । प्रियम् । धुः । क्षेष्यन्तः । न । मित्रम् । सः । दीदयत् । उशतीः । ऊर्म्याः । आ । दक्षाय्यः । यः । दास्वते । दमे । आ ॥ ३ ॥ अस्य । रण्वा । स्वस्यऽइव । पुष्टिः । सम्ऽदृष्टिः । अस्य । हियानस्य । धक्षोः । वि । यः । भरिभ्रत् । ओषधीषु । जिह्वाम् । अत्यः । न । रथ्यः । दोधवीति । वारान् ॥ ४ ॥ आ । यत् । मे । अभ्वम् । वनदः । पनन्त । उशिक्ऽभ्यः । न । अमिमीत । वर्णम् । सः । चित्रेण । चिकिते । रम्ऽसु । भासा । जुजुर्वान् । यः । मुहुः । आ । युवा । भूत् ॥ ५ ॥ आ । यः । वना । ततृषाणः । न । भाति । वाः । न । पथा । रथ्याऽइव । स्वानीत् । कृष्णऽअध्वा । तपुः । रण्वः । चिकेत । द्यौःऽइव । स्मयमानः । नभःऽभिः ॥ ६ ॥ सः । यः । वि । अस्थात् । अभि । धक्षत् । उर्वीम् । पशुः । न । एति । स्वऽयुः । अगोपाः । अग्निः । शोचिष्मान् । अतसानि । उष्णन् । कृष्णऽव्यथिः । अस्वदयत् । न । भूम ॥ ७ ॥ नु । ते । पूर्वस्य । अवसः । अधिऽइतौ । तृतीये । विदथे । मन्म । शंसि । अस्मे इति । अग्ने । संयत्ऽवीरम् । बृहन्तम् । क्षुऽमन्तम् । वाजम् । सुऽअपत्यम् । रयिम् । दाः ॥ ८ ॥ त्वया । यथा । गृत्सऽमदासः । अग्ने । गुहा ।

वन्वन्तः । उपरान् । अभि । स्युरिति स्युः । सुऽवीरासः । अभिमातिऽसहः ।
स्मत् । सूरिऽभ्यः । गृणते । तत् । वयः । धाः ॥ ९ ॥

II. 5.

होता । अजनिष्ट । चेतनः । पिता । पितृऽभ्यः । ऊतये । प्रऽयक्षन् ।
जेन्यम् । वसु । शकेम । वाजिनः । यमम् ॥ १ ॥ आ । यस्मिन् । सप्त ।
रश्मयः । तताः । यज्ञस्य । नेतरि । मनुष्वत् । दैव्यम् । अष्टमम् । पोता ।
विश्वम् । तत् । इन्वति ॥ २ ॥ दधन्वे । वा । यत् । ईम् । अनु ।
वोचत् । ब्रह्माणि । वेः । ऊँ इति । तत् । परि । विश्वानि । काव्या ।
नेमिः । चक्रम्ऽइव । अभवत् ॥ ३ ॥ साकम् । हि । शुचिना । शुचिः ।
प्रऽशास्ता । क्रतुना । अजनि । विद्वान् । अस्य । व्रता । ध्रुवा । वयाःऽइव ।
अनु । रोहते ॥ ४ ॥ ताः । अस्य । वर्णम् । आयुवः । नेष्टुः । सचन्त ।
धेनवः । कुवित् । तिसृऽभ्यः । आ । वरम् । स्वसारः । याः । इदम् ।
ययुः ॥ ५ ॥ यदि । मातुः । उप । स्वसा । घृतम् । भरन्ती । अस्थित ।
तासाम् । अध्वर्युः । आऽगतौ । यवः । वृष्टीऽइव । मोदते ॥ ६ ॥
स्वः । स्वाय । धायसे । कृणुताम् । ऋत्विक् । ऋत्विजम् । स्तोमम् ।
यज्ञम् । च । आत् । अरम् । वनेम । ररिम । वयम् ॥ ७ ॥ यथा ।
विद्वान् । अरम् । करत् । विश्वेभ्यः । यजतेभ्यः । अयम् । अग्ने । त्वे
इति । अपि । यम् । यज्ञम् । चकृम । वयम् ॥ ८ ॥

II. 6.

इमाम् । मे । अग्ने । सम्ऽइधम् । इमाम् । उपऽसदम् । वनेरिति वनेः ।
इमाः । ऊँ इति । सु । श्रुधि । गिरः ॥ १ ॥ अया । ते । अग्ने । विधेम ।

ऊर्जः । नपात् । अश्वम्ऽइष्टे । एना । सुऽउक्तेन । सुऽजात ॥ २ ॥ तम् । त्वा । गीःऽभिः । गिर्वणसम् । द्रविणस्युम् । द्रविणःऽदः । सपर्येम । सपर्यवः ॥ ३ ॥ सः । बोधि । सूरिः । मघऽवा । वसुऽपते । वसुऽदावन् । युयोधि । अस्मत् । द्वेषांसि ॥ ४ ॥ सः । नः । वृष्टिम् । दिवः । परि । सः । नः । वाजम् । अनर्वाणम् । सः । नः । सहस्रिणीः । इषः ॥ ५ ॥ ईळानाय । अवस्यवे । यविष्ठ । दूत । नः । गिरा । यजिष्ठ । होतः । आ । गहि ॥ ६ ॥ अन्तः । हि । अग्ने । ईयसे । विद्वान् । जन्म । उभया । कवे । दूतः । जन्याऽइव । मित्र्यः ॥ ७ ॥ सः । विद्वान् । आ । च । पिप्रयः । यक्षि । चिकित्वः । आनुषक् । आ । च । अस्मिन् । सत्सि । बर्हिषि ॥ ८ ॥

II. 7.

श्रेष्ठम् । यविष्ठ । भारत । अग्ने । द्युऽमन्तम् । आ । भर । वसो इति । पुरुऽस्पृहम् । रयिम् ॥ १ ॥ मा । नः । अरातिः । ईशत । देवस्य । मर्त्यस्य । च । पर्षि । तस्याः । उत । द्विषः ॥ २ ॥ विश्वाः । उत । त्वया । वयम् । धाराः । उदन्याःऽइव । अति । गाहेमहि । द्विषः ॥ ३ ॥ शुचिः । पावक । वन्द्यः । अग्ने । बृहत् । वि । रोचसे । त्वम् । घृतेभिः । आऽहुतः ॥ ४ ॥ त्वम् । नः । असि । भारत । अग्ने । वशाभिः । उक्षऽभिः । अष्टाऽपदीभिः । आऽहुतः ॥ ५ ॥ द्रुऽअन्नः । सर्पिःऽआसुतिः । प्रत्नः । होता । वरेण्यः । सहसः । पुत्रः । अद्भुतः ॥ ६ ॥

II. 8.

वाजयन्ऽइव । नु । रथान् । योगान् । अग्नेः । उप । स्तुहि । यशःऽतमस्य । मीळ्हुषः ॥ १ ॥ यः । सुऽनीथः । ददाशुषे । अजुर्यः ।

जरयन् । अरिम् । चारुऽप्रतीकः । आऽहुतः ॥ २ ॥ यः । ऊँ इति । श्रिया । दमेषु । आ । दोषा । उषसि । प्रऽशस्यते । यस्य । व्रतम् । न । मीयते ॥३॥ आ । यः । स्वः । न । भानुना । चित्रः । विऽभाति । अर्चिषा । अञ्जानः । अजरैः । अभि ॥ ४ ॥ अत्रिम् । अनु । स्वऽराज्यम् । अग्निम् । उक्थानि । ववृधुः । विश्वाः । अधि । श्रियः । दधे ॥ ५ ॥ अग्नेः । इन्द्रस्य । सोमस्य । देवानाम् । ऊतिऽभिः । वयम् । अरिष्यन्तः । सचेमहि । अभि । स्याम । पृतन्यतः ॥ ६ ॥

II. 9.

नि । होता । होतृऽसदने । विदानः । त्वेषः । दीदिऽवान् । असदत् । सुऽदक्षः । अदब्धव्रतऽप्रमतिः । वसिष्ठः । सहस्रम्ऽभरः । शुचिऽजिह्वः । अग्निः ॥ १ ॥ त्वम् । दूतः । त्वम् । ऊँ इति । नः । परःऽपाः । त्वम् । वस्यः । आ । वृषभ । प्रऽनेता । अग्ने । तोकस्य । नः । तने । तनूनाम् । अप्रऽयुच्छन् । दीद्यत् । बोधि । गोपाः ॥ २ ॥ विधेम । ते । परमे । जन्मन् । अग्ने । विधेम । स्तोमैः । अवरे । सधऽस्थे । यस्मात् । योनेः । उत्ऽआरिथ । यजे । तम् । प्र । त्वे इति । हवींषि । जुहुरे । सम्ऽइद्धे ॥ ३ ॥ अग्ने । यजस्व । हविषा । यजीयान् । श्रुष्टी । देष्णम् । अभि । गृणीहि । राधः । त्वम् । हि । असि । रयिऽपतिः । रयीणाम् । त्वम् । शुक्रस्य । वचसः । मनोता ॥४॥ उभयम् । ते । न । क्षीयते । वसव्यम् । दिवेऽदिवे । जायमानस्य । दस्म । कृधि । क्षुऽमन्तम् । जरितारम् । अग्ने । कृधि । पतिम् । सुऽअपत्यस्य । रायः ॥ ५ ॥ सः । एना । अनीकेन । सुऽविदत्रः । अस्मे इति । यष्टा । देवान् । आऽयजिष्ठः । स्वस्ति । अदब्धः । गोपाः । उत ।

नः । परःऽपाः । अग्ने । द्युऽमत् । उत । रेवत् । दिदीहि ॥ ६ ॥

II. 10.

जोहूत्रः । अग्निः । प्रथमः । पिताऽइव । इळः । पदे । मनुषा ।
यत् । सम्ऽइद्धः । श्रियम् । वसानः । अमृतः । विऽचेताः । मर्मृजेन्यः ।
श्रवस्यः । सः । वाजी ॥ १ ॥ श्रुयाः । अग्निः । चित्रऽभानुः । हवम् ।
मे । विश्वाभिः । गीःऽभिः । अमृतः । विऽचेताः । श्यावा । रथम् ।
वहतः । रोहिता । वा । उत । अरुषा । अह । चक्रे । विऽभृत्रः ॥ २ ॥
उत्तानायाम् । अजनयन् । सुऽसूतम् । भुवत् । अग्निः । पुरुऽपेशासु ।
गर्भः । शिरिणायाम् । चित् । अक्तुना । महःऽभिः । अपरिऽवृतः ।
वसति । प्रऽचेताः ॥ ३ ॥ जिघर्मि । अग्निम् । हविषा । घृतेन । प्रतिऽक्षि-
यन्तम् । भुवनानि । विश्वा । पृथुम् । तिरश्चा । वयसा । बृहन्तम् ।
व्यचिष्ठम् । अन्नैः । रभसम् । दृशानम् ॥ ४ ॥ आ । विश्वतः । प्रत्य-
ञ्चम् । जिघर्मि । अरक्षसा । मनसा । तत् । जुषेत । मर्यऽश्रीः । स्पृह-
यत्ऽवर्णः । अग्निः । न । अभिऽमृशे । तन्वा । जर्भुराणः ॥ ५ ॥
ज्ञेयाः । भागम् । सहसानः । वरेण । त्वाऽदूतासः । मनुऽवत् । वदेम ।
अनूनम् । अग्निम् । जुह्वा । वचस्या । मधुऽपृचम् । धनऽसाः ।
जोहवीमि ॥ ६ ॥

II. 11.

श्रुधि । हवम् । इन्द्र । मा । रिषण्यः । स्याम । ते । दावने । वसू-
नाम् । इमाः । हि । त्वाम् । ऊर्जः । वर्धयन्ति । वसुऽयवः । सिन्धवः ।
न । क्षरन्तः ॥ १ ॥ सृजः । महीः । इन्द्र । याः । अपिन्वः । परिऽ-
स्थिताः । अहिना । शूर । पूर्वीः । अमर्त्यम् । चित् । दासम् । मन्य-

मानम् । अर्व । अभिनत् । उक्थैः । ववृधानः ॥ २ ॥ उक्थेषु । इत् ।
नु । शूर । येषु । चाकन् । स्तोमेषु । इन्द्र । रुद्रियेषु । च । तुभ्य ।
इत् । एताः । यासु । मन्दसानः । प्र । वायवे । सिस्रते । न । शुभ्राः ॥३॥
शुभ्रम् । नु । ते । शुष्मम् । वर्धयन्तः । शुभ्रम् । वज्रम् । बाह्वोः ।
दधानाः । शुभ्रः । त्वम् । इन्द्र । ववृधानः । अस्मे इति । दासीः ।
विशः । सूर्येण । सह्याः ॥ ४ ॥ गुहा । हितम् । गुह्यम् । गूळ्हम् । अप्सु ।
अपिऽवृतम् । मायिनम् । क्षियन्तम् । उतो इति । अपः । द्याम् । तस्तभ्वां-
सम् । अहन् । अहिम् । शूर । वीर्येण ॥ ५ ॥ स्तव । नु । ते । इन्द्र ।
पूर्व्या । महानि । उत । स्तवाम । नूतना । कृतानि । स्तव । वज्रम् ।
बाह्वोः । उशन्तम् । स्तव । हरी इति । सूर्यस्य । केतू इति ॥ ६ ॥ हरी
इति । नु । ते । इन्द्र । वाजयन्ता । घृतऽश्चुतम् । स्वारम् । अस्वार्ष्टाम् ।
वि । समना । भूमिः । अप्रथिष्ट । अरंस्त । पर्वतः । चित् । सरिष्यन् ॥७॥
नि । पर्वतः । सादि । अप्रऽयुच्छन् । सम् । मातृऽभिः । वावशानः ।
अक्रान् । दूरे । पारे । वाणीम् । वर्धयन्तः । इन्द्रऽइषिताम् । धमनिम् ।
पप्रथन् । नि ॥ ८ ॥ इन्द्रः । महाम् । सिन्धुम् । आऽशयानम् ।
मायाऽविनम् । वृत्रम् । अस्फुरत् । निः । अरेजेताम् । रोदसी इति ।
भियाने इति । कनिक्रदतः । वृष्णः । अस्य । वज्रात् ॥ ९ ॥ अरो-
रवीत् । वृष्णः । अस्य । वज्रः । अमानुषम् । यत् । मानुषः । निऽजू-
र्वात् । नि । मायिनः । दानवस्य । मायाः । अपादयत् । पपिऽवान् ।
सुतस्य ॥ १० ॥ पिबऽपिब । इत् । इन्द्र । शूर । सोमम् । मन्दन्तु ।
त्वा । मन्दिनः । सुतासः । पृणन्तः । ते । कुक्षी इति । वर्धयन्तु ।
इत्था । सुतः । पौरः । इन्द्रम् । आव ॥ ११ ॥ त्वे इति । इन्द्र ।

अपि । अभूम । विप्राः । धियम् । वनेम । ऋतऽया । सपन्तः । अव-
स्यवः । धीमहि । प्रऽशस्तिम् । सद्यः । ते । रायः । दावने । स्याम ॥ १२ ॥
स्याम । ते । ते । इन्द्र । ये । ते । ऊती । अवस्यवः । ऊर्जम् । वर्ध-
यन्तः । शुष्मिन्ऽतमम् । यम् । चाकनाम । देव । अस्मे इति । रयिम् ।
रासि । वीरऽवन्तम् ॥ १३ ॥ रासि । क्षयम् । रासि । मित्रम् । अस्मे
इति । रासि । शर्धः । इन्द्र । मारुतम् । नः । सऽजोषसः । ये । च ।
मन्दसानाः । प्र । वायवः । पान्ति । अग्रऽनीतिम् ॥ १४ ॥ व्यन्तु ।
इत् । नु । येषु । मन्दसानः । तृपत् । सोमम् । पाहि । द्रह्यत् । इन्द्र ।
अस्मान् । सु । पृत्ऽसु । आ । तरुत्र । अवर्धयः । द्याम् । बृहत्ऽभिः ।
अर्कैः ॥ १५ ॥ बृहन्तः । इत् । नु । ये । ते । तरुत्र । उक्थेभिः ।
वा । सुम्नम् । आऽविवासान् । स्तृणानासः । बर्हिः । पस्त्यऽवत् । त्वाऽ-
ऊताः । इत् । इन्द्र । वाजम् । अग्मन् ॥ १६ ॥ उग्रेषु । इत् । नु ।
शूर । मन्दसानः । त्रिऽकद्रुकेषु । पाहि । सोमम् । इन्द्र । प्रऽदोधुवत् ।
श्मश्रुषु । प्रीणानः । याहि । हरिऽभ्याम् । सुतस्य । पीतिम् ॥ १७ ॥
धिष्व । शवः । शूर । येन । वृत्रम् । अवऽअभिनत् । दानुम् । और्णऽ-
वाभम् । अप । अवृणोः । ज्योतिः । आर्याय । नि । सव्यतः । सादि ।
दस्युः । इन्द्र ॥ १८ ॥ सनेम । ये । ते । ऊतिऽभिः । तरन्तः ।
विश्वाः । स्पृधः । आर्येण । दस्यून् । अस्मभ्यम् । तत् । त्वाष्ट्रम् ।
विश्वऽरूपम् । अरन्धयः । साख्यस्य । त्रिताय ॥ १९ ॥ अस्य । सुवा-
नस्य । मन्दिनः । त्रितस्य । नि । अर्बुदम् । ववृधानः । अस्तरित्य-
स्तः । अवर्तयत् । सूर्यः । न । चक्रम् । भिनत् । वलम् । इन्द्रः । अङ्गि-
रस्वान् ॥ २० ॥ नूनम् । सा । ते । प्रति । वरम् । जरित्रे । दुहीयत् ।

इन्द्र । दक्षिणा । मघोनी । शिक्ष । स्तोतृऽभ्यः । मा । अति । धक् । भगः । नः । बृहत् । वदेम । विदथे । सुऽवीराः ॥ २१ ॥

II. 12.

यः । जातः । एव । प्रथमः । मनस्वान् । देवः । देवान् । क्रतुना । परिऽअभूषत् । यस्य । शुष्मात् । रोदसी इति । अभ्यसेताम् । नृम्णस्य । मह्ना । सः । जनासः । इन्द्रः ॥ १ ॥ यः । पृथिवीम् । व्यथमानाम् । अदृंहत् । यः । पर्वतान् । प्रऽकुपितान् । अरम्णात् । यः । अन्तरिक्षम् । विऽममे । वरीयः । यः । द्याम् । अस्तभ्नात् । सः । जनासः । इन्द्रः ॥२॥ यः । हत्वा । अहिम् । अरिणात् । सप्त । सिन्धून् । यः । गाः । उत्ऽआजत् । अपऽधा । वलस्य । यः । अश्मनोः । अन्तः । अग्निम् । जजान । सम्ऽवृक् । समत्ऽसु । सः । जनासः । इन्द्रः ॥ ३ ॥ येन । इमा । विश्वा । च्यवना । कृतानि । यः । दासम् । वर्णम् । अधरम् । गुहा । अकरित्यकः । श्वघ्नीऽइव । यः । जिगीवान् । लक्षम् । आदत् । अर्यः । पुष्टानि । सः । जनासः । इन्द्रः ॥ ४ ॥ यम् । स्म । पृच्छन्ति । कुह । सः । इति । घोरम् । उत । ईम् । आहुः । न । एषः । अस्ति । इति । एनम् । सः । अर्यः । पुष्टीः । विजःऽइव । आ । मिनाति । श्रत् । अस्मै । धत्त । सः । जनासः । इन्द्रः ॥ ५ ॥ यः । रध्रस्य । चोदिता । यः । कृशस्य । यः । ब्रह्मणः । नाधमानस्य । कीरेः । युक्तऽग्राव्णः । यः । अविता । सुऽशिप्रः । सुतऽसोमस्य । सः । जनासः । इन्द्रः ॥ ६ ॥ यस्य । अश्वासः । प्रऽदिशि । यस्य । गावः । यस्य । ग्रामाः । यस्य । विश्वे । रथासः । यः । सूर्यम् । यः । उषसम् । जजान । यः । अपाम् । नेता । सः । जनासः । इन्द्रः ॥ ७ ॥ यम् ।

क्रन्दसी इति । संयती इति सम्ऽयती । विह्वयेते इति विऽह्वयेते । परे । अवरे । उभयाः । अमित्राः । समानम् । चित् । रथम् । आतस्थिऽवांसा । नाना । हवेते इति । सः । जनासः । इन्द्रः ॥ ८ ॥ यस्मात् । न । ऋते । विऽजयन्ते । जनासः । यम् । युध्यमानाः । अवसे । हवन्ते । यः । विश्वस्य । प्रतिऽमानम् । बभूव । यः । अच्युतऽच्युत् । सः । जनासः । इन्द्रः ॥ ९ ॥ यः । शश्वतः । महि । एनः । दधानान् । अमन्यमानान् । शर्वा । जघान । यः । शर्धते । न । अनुऽददाति । शृध्याम् । यः । दस्योः । हन्ता । सः । जनासः । इन्द्रः ॥१०॥ यः । शम्बरम् । पर्वतेषु । क्षियन्तम् । चत्वारिंश्याम् । शरदि । अनुऽअविन्दत् । ओजायमानम् । यः । अहिम् । जघान । दानुम् । शयानम् । सः । जनासः । इन्द्रः ॥ ११ ॥ यः । सप्तऽरश्मिः । वृषभः । तुविष्मान् । अवऽअसृजत् । सर्तवे । सप्त । सिन्धून् । यः । रौहिणम् । अस्फुरत् । वज्रऽबाहुः । द्याम् । आऽरोहन्तम् । सः । जनासः । इन्द्रः ॥ १२ ॥ द्यावा । चित् । अस्मै । पृथिवी इति । नमेते इति । शुष्मात् । चित् । अस्य । पर्वताः । भयन्ते । यः । सोमऽपाः । निऽचितः । वज्रऽबाहुः । यः । वज्रऽहस्तः । सः । जनासः । इन्द्रः ॥१३॥ यः । सुन्वन्तम् । अवति । यः । पचन्तम् । यः । शंसन्तम् । यः । शशमानम् । ऊती । यस्य । ब्रह्म । वर्धनम् । यस्य । सोमः । यस्य । इदम् । राधः । सः । जनासः । इन्द्रः ॥ १४ ॥ यः । सुन्वते । पचते । दुध्रः । आ । चित् । वाजम् । दर्दर्षि । सः । किल । असि । सत्यः । वयम् । ते । इन्द्र । विश्वह । प्रियासः । सुऽवीरासः । विदथम् । आ । वदेम ॥ १५ ॥

## II. 13.

ऋतुः । जनित्री । तस्याः । अपः । परि । मक्षु । जातः । आ । अविशत् । यासु । वर्धते । तत् । आहनाः । अभवत् । पिप्युषी । पयः । अंशोः । पीयूषम् । प्रथमम् । तत् । उक्थ्यम् ॥ १ ॥ सध्री । ईम् । आ । यन्ति । परि । बिभ्रतीः । पयः । विश्वऽप्स्न्याय । प्र । भरन्त । भोजनम् । समानः । अध्वा । प्रऽवताम् । अनुऽस्यदे । यः । ता । अकृणोः । प्रथमम् । सः । असि । उक्थ्यः ॥ २ ॥ अनु । एकः । वदति । यत् । ददाति । तत् । रूपा । मिनन् । तत्ऽअपाः । एकः । ईयते । विश्वाः । एकस्य । विऽनुदः । तितिक्षते । यः । ता । अकृणोः । प्रथमम् । सः । असि । उक्थ्यः ॥ ३ ॥ प्रऽजाभ्यः । पुष्टिम् । विऽभजन्तः । आसते । रयिम्ऽइव । । पृष्ठम् । प्रऽभवन्तम् । आऽयते । असिन्वन् । दंष्ट्रैः । पितुः । अत्ति । भोजनम् । यः । ता । अकृणोः । प्रथमम् । सः । असि । उक्थ्यः ॥ ४ ॥ अध । अकृणोः । पृथिवीम् । सम्ऽदृशे । दिवे । यः । धौतीनाम् । अहिऽहन् । अरिणक् । पथः । तम् । त्वा । स्तोमेभिः । उदऽभिः । न । वाजिनम् । देवम् । देवाः । अजनन् । सः । असि । उक्थ्यः ॥ ५ ॥ यः । भोजनम् । च । दयसे । च । वर्धनम् । आर्द्रात् । आ । शुष्कम् । मधुऽमत् । दुदोहिथ । सः । शेवऽधिम् । नि । दधिषे । विवस्वति । विश्वस्य । एकः । ईशिषे । सः । असि । उक्थ्यः ॥ ६ ॥ यः । पुष्पिणीः । च । प्रऽस्वः । च । धर्मणा । अधि । दाने । वि । अवनीः । अधारयः । यः । च । असमाः । अजनः । दिद्युतः । दिवः । उरुः । ऊर्वान् । अभितः । सः । असि । उक्थ्यः ॥ ७ ॥ यः । नार्मरम् । सहऽवसुम् । निऽहन्तवे । पृक्षाय । च । दासऽवेशाय । च । अवहः ।

ऊर्जयन्त्याः । अपरिऽविष्टम् । आस्यम् । उत । एव । अद्य । पुरुऽकृत् ।
सः । असि । उक्थ्यः ॥ ८ ॥ शतम् । वा । यस्य । दश । साकम् ।
आ । अद्यः । एकस्य । श्रुष्टौ । यत् । ह । चोदम् । आविथ । अरज्जौ ।
दस्यून् । सम् । उनप् । दभीतये । सुप्रऽअव्यः । अभवः । सः । असि ।
उक्थ्यः ॥ ९ ॥ ॥ विश्वा । इत् । अनु । रोधनाः । अस्य । पौंस्यम् ।
ददुः । अस्मै । दधिरे । कृत्नवे । धनम् । षट् । अस्तभ्नाः । विऽस्तिरः ।
पञ्च । सम्ऽदृशः । परि । परः । अभवः । सः । असि । उक्थ्यः
॥ १० ॥ सुऽप्रवाचनम् । तव । वीर । वीर्यम् । यत् । एकेन । क्रतुना ।
विन्दसे । वसु । जातूऽस्थिरस्य । प्र । वयः । सहस्वतः । या । चकर्थ ।
सः । इन्द्र । विश्वा । असि । उक्थ्यः ॥ ११ ॥ अरमयः । सरऽअपसः ।
तराय । कम् । तुर्वीतये । च । वय्याय । च । स्रुतिम् । नीचा । सन्तम् ।
उत् । अनयः । पराऽवृजम् । प्र । अन्धम् । श्रोणम् । श्रवयन् । सः ।
असि । उक्थ्यः ॥ १२ ॥ अस्मभ्यम् । तत् । वसो इति । दानाय ।
राधः । सम् । अर्थयस्व । बहु । ते । वसव्यम् । इन्द्र । यत् । चित्रम् ।
श्रवस्याः । अनु । द्यून् । बृहत् । वदेम । विदथे । सुऽवीराः ॥ १३ ॥

II. 14.

अध्वर्यवः । भरत । इन्द्राय । सोमम् । आ । अमत्रेभिः । सिञ्चत ।
मद्यम् । अन्धः । कामी । हि । वीरः । सदम् । अस्य । पीतिम् । जुहोत ।
वृष्णे । तत् । इत् । एषः । वष्टि ॥ १ ॥ अध्वर्यवः । यः । अपः ।
वव्रिवांऽसम् । वृत्रम् । जघान । अशन्याऽइव । वृक्षम् । तस्मै । एतम् ।
भरत । तत्ऽवशाय । एषः । इन्द्रः । अर्हति । पीतिम् । अस्य ॥ २ ॥
अध्वर्यवः । यः । दृभीकम् । जघान । यः । गाः । उत्ऽआजत् । अप ।

हि । वलम् । वरिति वः । तस्मै । एतम् । अन्तरिक्षे । न । वातम् । इन्द्रम् ।
सोमैः । आ । ऊर्णुत । जूः । न । वस्त्रैः ॥ ३ ॥ अध्वर्यवः । यः ।
उरणम् । जघान । नव । चख्वांसम् । नवतिम् । च । बाहून् । यः ।
अर्बुदम् । अव । नीचा । बबाधे । तम् । इन्द्रम् । सोमस्य । भृथे ।
हिनोत ॥ ४ ॥ अध्वर्यवः । यः । सु । अश्नम् । जघान । यः । शुष्णम् ।
अशुषम् । यः । विऽअंसम् । यः । पिप्रुम् । नमुचिम् । यः । रुधिऽक्राम् ।
तस्मै । इन्द्राय । अन्धसः । जुहोत ॥ ५ ॥ अध्वर्यवः । यः । शतम् ।
शम्बरस्य । पुरः । बिभेद । अश्मनाऽइव । पूर्वीः । यः । वर्चिनः ।
शतम् । इन्द्रः । सहस्रम् । अपऽअवपत् । भरत । सोमम् । अस्मै ॥ ६ ॥
अध्वर्यवः । यः । शतम् । आ । सहस्रम् । भूम्याः । उपऽस्थे । अवपत् ।
जघन्वान् । कुत्सस्य । आयोः । अतिथिऽग्वस्य । वीरान् । नि । अवृ-
णक् । भरत । सोमम् । अस्मै ॥ ७ ॥ अध्वर्यवः । यत् । नरः ।
कामयाध्वे । श्रुष्टी । वहन्तः । नशथ । तत् । इन्द्रे । गभस्तिऽपूतम् ।
भरत । श्रुताय । इन्द्राय । सोमम् । यज्यवः । जुहोत ॥ ८ ॥ अध्वर्यवः ।
कर्तन । श्रुष्टिम् । अस्मै । वने । निऽपूतम् । वने । उत् । नयध्वम् ।
जुषाणः । हस्त्यम् । अभि । वावशे । वः । इन्द्राय । सोमम् । मदिरम् ।
जुहोत ॥ ९ ॥ अध्वर्यवः । पयसा । ऊधः । यथा । गोः । सोमेभिः ।
ईम् । पृणत । भोजम् । इन्द्रम् । वेद । अहम् । अस्य । निऽभृतम् ।
मे । एतत् । दित्सन्तम् । भूयः । यजतः । चिकेत ॥ १० ॥ अध्वर्यवः ।
यः । दिव्यस्य । वस्वः । यः । पार्थिवस्य । क्षम्यस्य । राजा । तम् । ऊर्दरम् ।
न । पृणत । यवेन । इन्द्रम् । सोमेभिः । तत् । अपः । वः । अस्तु ॥ ११ ॥
अस्मभ्यम् । तत् । वसो इति । दानाय । राधः । सम् । अर्थयस्व । बहु ।

ते । वसव्यम् । इन्द्र । यत् । चित्रम् । श्रवस्याः । अनु । द्यून् । बृहत् । वदेम । विदथे । सुऽवीराः ॥ १२ ॥

II. 15.

प्र । घ । नु । अस्य । महतः । महानि । सत्या । सत्यस्य । करणानि । वोचम् । त्रिऽकद्रुकेषु । अपिबत् । सुतस्य । अस्य । मदे । अहिम् । इन्द्रः । जघान ॥ १ ॥ अवंशे । द्याम् । अस्तभायत् । बृहन्तम् । आ । रोदसी इति । अपृणत् । अन्तरिक्षम् । सः । धारयत् । पृथिवीम् । पप्रथत् । च । सोमस्य । ता । मदे । इन्द्रः । चकार ॥ २ ॥ सद्मऽइव । प्राचः । वि । मिमाय । मानैः । वज्रेण । खानि । अतृणत् । नदीनाम् । वृथा । असृजत् । पथिऽभिः । दीर्घऽयाथैः । सोमस्य । ता । मदे । इन्द्रः । चकार ॥ ३ ॥ सः । प्रऽवोळ्हॄन् । परिऽगत्य । दभीतेः । विश्वम् । अधाक् । आयुधम् । इद्धे । अग्नौ । सम् । गोभिः । अश्वैः । असृजत् । रथेभिः । सोमस्य । ता । मदे । इन्द्रः । चकार ॥ ४ ॥ सः । ईम् । महीम् । धुनिम् । एतोः । अरम्णात् । सः । अस्नातॄन् । अपारयत् । स्वस्ति । ते । उत्ऽस्नाय । रयिम् । अभि । प्र । तस्थुः । सोमस्य । ता । मदे । इन्द्रः । चकार ॥ ५ ॥ सः । उदञ्चम् । सिन्धुम् । अरिणात् । महिऽत्वा । वज्रेण । अनः । उषसः । सम् । पिपेष । अजवसः । जविनीभिः । विऽवृश्चन् । सोमस्य । ता । मदे । इन्द्रः । चकार । ॥ ६ ॥ सः । विद्वान् । अपऽगोहम् । कनीनाम् । आविः । भवन् । उत् । अतिष्ठत् । पराऽवृक् । प्रति । श्रोणः । स्थात् । वि । अनक् । अचष्ट । सोमस्य । ता । मदे । इन्द्रः । चकार ॥ ७ ॥ भिनत् । वलम् । अङ्गिरःऽभिः । गृणानः । वि । पर्वतस्य । दृंहितानि । ऐरत् । रिणक् ।

रोधांसि । कृत्रिमाणि । एषाम् । सोमस्य । ता । मदे । इन्द्रः । चकार ॥ ८ ॥
स्वप्नेन । अभिऽउप्य । चुमुरिम् । धुनिम् । च । जघन्थ । दस्युम् । प्र ।
दभीतिम् । आवः । रम्भी । चित् । अत्र । विविदे । हिरण्यम् । सोमस्य ।
ता । मदे । इन्द्रः । चकार ॥ ९ ॥ नूनम् । सा । ते । प्रति । वरम् ।
जरित्रे । दुहीयत् । इन्द्र । दक्षिणा । मघोनी । शिक्ष । स्तोतृऽभ्यः ।
मा । अति । धक् । भगः । नः । बृहत् । वदेम । विदथे ।
सुऽवीराः ॥ १० ॥

II. 16.

प्र । वः । सताम् । ज्येष्ठऽतमाय । सुऽस्तुतिम् । अग्नौऽइव ।
सम्ऽइधाने । हविः । भरे । इन्द्रम् । अजुर्यम् । जरयन्तम् । उक्षितम् ।
सनात् । युवानम् । अवसे । हवामहे ॥ १ ॥ यस्मात् । इन्द्रात् । बृहतः ।
किम् । चन । ईम् । ऋते । विश्वानि । अस्मिन् । सम्ऽभृता । अधि ।
वीर्या । जठरे । सोमम् । तन्वि । सहः । महः । हस्ते । वज्रम् । भरति ।
शीर्षणि । क्रतुम् ॥ २ ॥ न । क्षोणीभ्याम् । परिऽभ्वे । ते । इन्द्रियम् ।
न । समुद्रैः । पर्वतैः । इन्द्र । ते । रथः । न । ते । वज्रम् । अनु ।
अश्नोति । कः । चन । यत् । आशुऽभिः । पतसि । योजना । पुरु ॥ ३ ॥
विश्वे । हि । अस्मै । यजताय । धृष्णवे । क्रतुम् । भरन्ति । वृषभाय ।
सश्चते । वृषा । यजस्व । हविषा । विदुःऽतरः । पिब । इन्द्र । सोमम् ।
वृषभेण । भानुना ॥ ४ ॥ वृष्णः । कोशः । पवते । मध्वः । ऊर्मिः ।
वृषभऽअन्नाय । वृषभाय । पातवे । वृषणा । अध्वर्यू इति । वृषभासः ।
अद्रयः । वृषणम् । सोमम् । वृषभाय । सुस्वति ॥ ५ ॥ वृषा । ते ।
वज्रः । उत । ते । वृषा । रथः । वृषणा । हरी इति । वृषभाणि ।

आयुधा । वृष्णः । मदस्य । वृषभ । त्वम् । ईशिषे । इन्द्र । सोमस्य ।
वृषभस्य । तृप्णुहि ॥ ६ ॥ प्र । ते । नावम् । न । समने । वचस्युवम् ।
ब्रह्मणा । यामि । सवनेषु । दधृषिः । कुवित् । नः । अस्य । वचसः ।
निऽबोधिषत् । इन्द्रम् । उत्सम् । न । वसुनः । सिचामहे ॥ ७ ॥
पुरा । सम्ऽबाधात् । अभि । आ । ववृत्स्व । नः । धेनुः । न । वत्सम् ।
यवसस्य । पिप्युषी । सकृत् । सु । ते । सुमतिऽभिः । शतक्रतो इति
शतऽक्रतो । सम् । पत्नीभिः । न । वृषणः । नसीमहि ॥ ८ ॥
नूनम् । सा । ते । प्रति । वरम् । जरित्रे । दुहीयत् । इन्द्र । दक्षिणा ।
मघोनी । शिक्ष । स्तोतृऽभ्यः । मा । अति । धक् । भगः । नः । बृहत् ।
वदेम । विदथे । सुऽवीराः ॥ ९ ॥

II. 17.

तत् । अस्मै । नव्यम् । अङ्गिरस्वत् । अर्चत । शुष्माः । यत् ।
अस्य । प्रत्नऽथा । उत्ऽईरते । विश्वा । यत् । गोत्रा । सहसा । परिऽवृता ।
मदे । सोमस्य । दंहितानि । ऐरयत् ॥ १ ॥ सः । भूतु । यः । ह ।
प्रथमाय । धायसे । ओजः । मिमानः । महिमानम् । आ । अतिरत् ।
शूरः । यः । युत्ऽसु । तन्वम् । परिऽव्यत । शीर्षणि । द्याम् । महिना ।
प्रति । अमुञ्चत ॥ २ ॥ अध । अकृणोः । प्रथमम् । वीर्यम् । महत् ।
यत् । अस्य । अग्रे । ब्रह्मणा । शुष्मम् । ऐरयः । रथेऽस्थेन । हरिऽअश्वेन ।
विऽच्युताः । प्र । जीरयः । सिस्रते । सध्र्यक् । पृथक् ॥ ३ ॥ अध ।
यः । विश्वा । भुवना । अभि । मज्मना । ईशानऽकृत् । प्रऽवयाः ।
अभि । अवर्धत । आत् । रोदसी इति । ज्योतिषा । वह्निः । आ । अत-
नोत् । सीव्यन् । तमांसि । दुधिता । सम् । अव्ययत् ॥ ४ ॥ सः ।

प्राचीनान् । पर्वतान् । दृंहत् । ओजसा । अधराचीनम् । अकृणोत् ।
अपाम् । अपः । अधारयत् । पृथिवीम् । विश्वऽधायसम् । अस्तभ्नात् ।
मायया । द्याम् । अवऽस्रसः ॥ ५ ॥ सः । अस्मै । अरम् । बाहुऽभ्याम् ।
यम् । पिता । अकृणोत् । विश्वस्मात् । आ । जनुषः । वेदसः । परि ।
येन । पृथिव्याम् । नि । क्रिविम् । शयध्यै । वज्रेण । हत्वी । अवृणक् ।
तुविऽस्वनिः ॥ ६ ॥ अमाजूःऽइव । पित्रोः । सचा । सती । समानात् ।
आ । सदसः । त्वाम् । इये । भगम् । कृधि । प्रऽकेतम् । उप । मासि ।
आ । भर । दद्धि । भागम् । तन्वः । येन । ममहः ॥ ७ ॥ भोजम् ।
त्वाम् । इन्द्र । वयम् । हुवेम । ददिः । त्वम् । इन्द्र । अपांसि । वाजान् ।
अविड्ढि । इन्द्र । चित्रया । नः । ऊती । कृधि । वृषन् । इन्द्र । वस्यसः ।
नः ॥ ८ ॥ नूनम् । सा । ते । प्रति । वरम् । जरित्रे । दुहीयत् । इन्द्र ।
दक्षिणा । मघोनी । शिक्ष । स्तोतृऽभ्यः । मा । अति । धक् । भगः ।
नः । बृहत् । वदेम । विदथे । । सुऽवीराः ॥ ९ ॥

II. 18.

प्रातः । रथः । नवः । योजि । सस्निः । चतुःऽयुगः । त्रिऽकशः ।
सप्तऽरश्मिः । दशऽअरित्रः । मनुष्यः । स्वःऽसाः । सः । इष्टिऽभिः ।
मतिऽभिः । रंह्यः । भूत् ॥ १ ॥ सः । अस्मै । अरम् । प्रथमम् । सः ।
द्वितीयम् । उतो इति । तृतीयम् । मनुषः । सः । होता । अन्यस्याः ।
गर्भम् । अन्ये । ऊँ इति । जनन्त । सः । अन्येभिः । सचते । जेन्यः ।
वृषा ॥ २ ॥ हरी इति । नु । कम् । रथे । इन्द्रस्य । योजम् । आऽयै ।
सुऽउक्तेन । वचसा । नवेन । मो इति । सु । त्वाम् । अत्र । बहवः ।
हि । विप्राः । नि । रीरमन् । यजमानासः । अन्ये ॥ ३ ॥ आ ।

द्वाभ्याम् । हरिंऽभ्याम् । इन्द्र । याहि । आ । चतुःऽभिः । आ ।
षट्ऽभिः । हूयमानः । आ । अष्टाभिः । दशऽभिः । सोमऽपेयम् । अयम् ।
सुतः । सुऽमख । मा । मृधः । करिति कः ॥ ४ ॥ आ । विंशत्या ।
त्रिंशता । याहि । अर्वाङ् । आ । चत्वारिंशता । हरिंऽभिः । युजानः ।
आ । पञ्चाशता । सुऽरथेभिः । इन्द्र । आ । षष्ट्या । सप्तत्या ।
सोमऽपेयम् ॥ ५ ॥ आ । अशीत्या । नवत्या । याहि । अर्वाङ् । आ ।
शतेन । हरिंऽभिः । उह्यमानः । अयम् । हि । ते । शुनऽहोत्रेषु । सोमः ।
इन्द्र । त्वाऽया । परिंऽसिक्तः । मदाय ॥ ६ ॥ मम । ब्रह्म । इन्द्र ।
याहि । अच्छ । विश्वा । हरी इति । धुरि । धिष्व । रथस्य । पुरुऽत्रा ।
हि । विऽहव्यः । बभूथ । अस्मिन् । शूर । सवने । मादयस्व ॥ ७ ॥
न । मे । इन्द्रेण । सख्यम् । वि । योषत् । अस्मभ्यम् । अस्य । दक्षिणा ।
दुहीत । उप । ज्येष्ठे । वरूथे । गभस्तौ । प्रायेऽप्राये । जिगीवांसः ।
स्याम ॥ ८ ॥ नूनम् । सा । ते । प्रति । वरम् । जरित्रे । दुहीयत् ।
इन्द्र । दक्षिणा । मघोनी । शिक्ष । स्तोतृऽभ्यः । मा । अति । धक् ।
भगः । नः । बृहत् । वदेम । विदथे । सुऽवीराः ॥ ९ ॥

II. 19.

अपायि । अस्य । अन्धसः । मदाय । मनीषिणः । सुवानस्य ।
प्रयसः । यस्मिन् । इन्द्रः । प्रऽदिवि । वावृधानः । ओकः । दधे ।
ब्रह्मण्यन्तः । च । नरः ॥ १ ॥ अस्य । मन्दानः । मध्वः । वज्रऽहस्तः ।
अहिम् । इन्द्रः । अर्णःऽवृतम् । वि । वृश्चत् । प्र । यत् । वयः । न ।
स्वसराणि । अच्छ । प्रयांसि । च । नदीनाम् । चक्रमन्त ॥ २ ॥ सः ।
माहिनः । इन्द्रः । अर्णः । अपाम् । प्र । ऐरयत् । अहिऽहा । अच्छ ।

समुद्रम् । अजनयत् । सूर्यम् । विदत् । गाः । अक्तुना । अह्नाम् ।
वयुनानि । साधत् ॥ ३ ॥ सः । अप्रतीनि । मनवे । पुरूणि । इन्द्रः ।
दाशत् । दाशुषे । हन्ति । वृत्रम् । सद्यः । यः । नृऽभ्यः । अतसाय्यः ।
भूत् । पस्पृधानेभ्यः । सूर्यस्य । सातौ ॥ ४ ॥ सः । सुन्वते । इन्द्रः ।
सूर्यम् । आ । देवः । रिणक् । मर्त्याय । स्तवान् । आ । यत् । रयिम् ।
गुहत्ऽअवद्यम् । अस्मै । भरत् । अंशम् । न । एतशः । दशस्यन् ॥ ५ ॥
सः । रन्धयत् । सऽदिवः । सारथये । शुष्णम् । अशुषम् । कुयवम् ।
कुत्साय । दिवःऽदासाय । नवतिम् । च । नव । इन्द्रः । पुरः । वि ।
ऐरत् । शम्बरस्य ॥ ६ ॥ एव । ते । इन्द्र । उचथम् । अहेम । श्रवस्या ।
न । त्मना । वाजयन्तः । अश्याम । तत् । साप्तम् । आशुषाणाः । ननमः ।
वधः । अदेवस्य । पीयोः ॥ ७ ॥ एव । ते । गृत्सऽमदाः । शूर । मन्म ।
अवस्यवः । न । वयुनानि । तक्षुः । ब्रह्मण्यन्तः । इन्द्र । ते । नवीयः ।
इषम् । ऊर्जम् । सुऽक्षितिम् । सुम्नम् । अश्युः ॥ ८ ॥ नूनम् । सा ।
ते । प्रति । वरम् । जरित्रे । दुहीयत् । इन्द्र । दक्षिणा । मघोनी । शिक्ष ।
स्तोतृऽभ्यः । मा । अति । धक् । भगः । नः । बृहत् । वदेम । विदथे ।
सुऽवीराः ॥ ९ ॥

## II. 20.

वयम् । ते । वयः । इन्द्र । विद्धि । सु । नः । प्र । भरामहे ।
वाजऽयुः । न । रथम् । विपन्यवः । दीध्यतः । मनीषा । सुम्नम् ।
इयक्षन्तः । त्वाऽवतः । नॄन् ॥ १ ॥ त्वम् । नः । इन्द्र । त्वाभिः ।
ऊती । त्वाऽयतः । अभिष्टिऽपा । असि । जनान् । त्वम् । इनः ।
दाशुषः । वरूता । इत्थाऽधीः । अभि । यः । नक्षति । त्वा ॥ २ ॥

सः । नः । युवा । इन्द्रः । जोहूत्रः । सखा । शिवः । नराम् । अस्तु ।
पाता । यः । शंसन्तम् । यः । शशमानम् । ऊती । पचन्तम् । च ।
स्तुवन्तम् । च । प्रऽनेषत् ॥ ३ ॥ तम् । ऊँ इति । स्तुषे । इन्द्रम् ।
तम् । गृणीषे । यस्मिन् । पुरा । ववृधुः । शाशदुः । च । सः । वस्वः ।
कामम् । पीपरत् । इयानः । ब्रह्मण्यतः । नूतनस्य । आयोः ॥ ४ ॥
सः । अङ्गिरसाम् । उचथा । जुजुष्वान् । ब्रह्म । तूतोत् । इन्द्रः । गातुम् ।
इष्णन् । मुष्णन् । उषसः । सूर्येण । स्तवान् । अश्नस्य । चित् ।
शिश्नथत् । पूर्व्याणि ॥ ५ ॥ सः । ह । श्रुतः । इन्द्रः । नाम । देवः ।
ऊर्ध्वः । भुवत् । मनुषे । दस्मऽतमः । अव । प्रियम् । अर्शसानस्य ।
सह्वान् । शिरः । भरत् । दासस्य । स्वधाऽवान् ॥ ६ ॥ सः । वृत्रऽहा ।
इन्द्रः । कृष्णऽयोनीः । पुरम्ऽदरः । दासीः । ऐरयत् । वि । अजनयत् ।
मनवे । क्षाम् । अपः । च । सत्रा । शंसम् । यजमानस्य । तूतोत् ॥ ७ ॥
तस्मै । तवस्यम् । अनु । दायि । सत्रा । इन्द्राय । देवेभिः । अर्णऽसातौ ।
प्रति । यत् । अस्य । वज्रम् । बाह्वोः । धुः । हत्वी । दस्यून् । पुरः ।
आयसीः । नि । तारीत् ॥ ८ ॥ नूनम् । सा । ते । प्रति । वरम् ।
जरित्रे । दुहीयत् । इन्द्र । दक्षिणा । मघोनी । शिक्ष । स्तोतृऽभ्यः ।
मा । अति । धक् । भगः । नः । बृहत् । वदेम । विदथे ।
सुऽवीराः ॥ ९ ॥

II. 21.

विश्वऽजिते । धनऽजिते । स्वःऽजिते । सत्राऽजिते । नृऽजिते ।
उर्वराऽजिते । अश्वऽजिते । गोऽजिते । अप्ऽजिते । भर । इन्द्राय । सोमम् ।
यजताय । हर्यतम् ॥ १ ॥ अभिऽभुवे । अभिऽभङ्गाय । वन्वते ।

अषाळ्हाय । सहमानाय । वेधसे । तुविऽग्रये । वर्द्धये । दुस्तरीतवे । सत्राऽसहे । नमः । इन्द्राय । वोचत ॥ २ ॥ सत्राऽसहः । जनऽभक्षः । जनम्ऽसहः । च्यवनः । युध्मः । अनु । जोषम् । उक्षितः । वृतम्ऽचयः । सहुरिः । विक्षु । आरितः । इन्द्रस्य । वोचम् । प्र । कृतानि । वीर्या ॥ ३ ॥ अनतुऽदः । वृषभः । दोधतः । वधः । गम्भीरः । ऋष्वः । असंमष्टऽकाव्यः । रध्रऽचोदः । श्नथनः । वीळितः । पृथुः । इन्द्रः । सुऽयज्ञः । उषसः । स्वः । जनत् ॥ ४ ॥ यज्ञेन । गातुम् । अप्ऽतुरः । विविद्रिरे । धियः । हिन्वानाः । उशिजः । मनीषिणः । अभिऽस्वरा । निऽसदा । गाः । अवस्यवः । इन्द्रे । हिन्वानाः । द्रविणानि । आशत ॥ ५ ॥ इन्द्र । श्रेष्ठानि । द्रविणानि । धेहि । चित्तिम् । दक्षस्य । सुभगऽत्वम् । अस्मे इति । पोषम् । रयीणाम् । अरिष्टिम् । तनूनाम् । स्वाद्मानम् । वाचः । सुदिनऽत्वम् । अह्नाम् ॥ ६ ॥

II. 22.

त्रिऽकद्रुकेषु । महिषः । यवऽआशिरम् । तुविऽशुष्मः । तृपत् । सोमम् । अपिबत् । विष्णुना । सुतम् । यथा । अवशत् । सः । ईम् । ममाद । महि । कर्म । कर्तवे । महाम् । उरुम् । सः । एनम् । सश्चत् । देवः । देवम् । सत्यम् । इन्द्रम् । सत्यः । इन्दुः ॥ १ ॥ अध । त्विषिऽमान् । अभि । ओजसा । क्रिविम् । युधा । अभवत् । आ । रोदसी इति । अपृणत् । अस्य । मज्मना । प्र । वावृधे । अधत्त । अन्यम् । जठरे । प्र । ईम् । अरिच्यत । सः । एनम् । सश्चत् । देवः । देवम् । सत्यम् । इन्द्रम् । सत्यः । इन्दुः ॥ २ ॥ साकम् । जातः । क्रतुना । साकम् । ओजसा । ववक्षिथ । साकम् । वृद्धः । वीर्यैः । सासहिः ।

मृधः । विऽचर्षणिः । दाता । राधः । स्तुवते । काम्यम् । वसु । सः । एनम् । सश्चत् । देवः । देवम् । सत्यम् । इन्द्रम् । सत्यः । इन्दुः ॥३॥ तव । त्यत् । नर्यम् । नृतो इति । अपः । इन्द्र । प्रथमम् । पूर्व्यम् । दिवि । प्रऽवाच्यम् । कृतम् । यत् । देवस्य । शवसा । प्र । अरिणाः । असुम् । रिणन् । अपः । भुवत् । विश्वम् । अभि । अदेवम् । ओजसा । विदात् । ऊर्जम् । शतऽक्रतुः । विदात् । इषम् ॥ ४ ॥

II. 23.

गणानाम् । त्वा । गणऽपतिम् । हवामहे । कविम् । कवीनाम् । उपमश्रवःऽतमम् । ज्येष्ठऽराजम् । ब्रह्मणाम् । ब्रह्मणः । पते । आ । नः । शृण्वन् । ऊतिऽभिः । सीद । सदनम् ॥ १ ॥ देवाः । चित् । ते । असुर्य । प्रऽचेतसः । बृहस्पते । यज्ञियम् । भागम् । आनशुः । उस्राःऽइव । सूर्यः । ज्योतिषा । महः । विश्वेषाम् । इत् । जनिता । ब्रह्मणाम् । असि ॥ २ ॥ आ । विऽबाध्य । परिऽरपः । तमांसि । च । ज्योतिष्मन्तम् । रथम् । ऋतस्य । तिष्ठसि । बृहस्पते । भीमम् । अमित्रऽदम्भनम् । रक्षःऽहनम् । गोत्रऽभिदम् । स्वःऽविदम् ॥ ३ ॥ सुनीतिऽभिः । नयसि । त्रायसे । जनम् । यः । तुभ्यम् । दाशात् । न । तम् । अंहः । अश्नवत् । ब्रह्मऽद्विषः । तपनः । मन्युऽमीः । असि । बृहस्पते । महि । तत् । ते । महिऽत्वनम् ॥ ४ ॥ न । तम् । अंहः । न । दुःऽइतम् । कुतः । चन । न । अरातयः । तितिरुः । न । द्वयाविनः । विश्वाः । इत् । अस्मात् । ध्वरसः । वि । बाधसे । यम् । सुऽगोपाः । रक्षसि । ब्रह्मणः । पते ॥ ५ ॥ त्वम् । नः । गोपाः । पथिऽकृत् । विऽचक्षणः । तव । व्रताय । मतिऽभिः । जरामहे । बृहस्पते । यः । नः । अभि ।

ह्वरः । दधे । स्वा । तम् । मर्मर्तु । दुच्छुना । हरस्वती ॥ ६ ॥ उत ।
वा । यः । नः । मर्चयात् । अनागसः । अरातिऽवा । मर्तः । सानुकः ।
वृकः । बृहस्पते । अप । तम् । वर्तय । पथः । सुऽगम् । नः । अस्यै ।
देवऽवीतये । कृधि ॥ ७ ॥ त्रातारम् । त्वा । तनूनाम् । हवामहे ।
अवऽस्पर्तः । अधिऽवक्तारम् । अस्मऽयुम् । बृहस्पते । देवऽनिदः । नि ।
बर्हय । मा । दुःऽएवाः । उत्ऽतरम् । सुम्नम् । उत् । नशन् ॥ ८ ॥
त्वया । वयम् । सुऽवृधा । ब्रह्मणः । पते । स्पार्हा । वसु । मनुष्या ।
आ । ददीमहि । याः । नः । दूरे । तळितः । याः । अरातयः । अभि ।
सन्ति । जम्भय । ताः । अनप्नसः ॥ ९ ॥ त्वया । वयम् । उत्ऽतमम् ।
धीमहे । वयः । बृहस्पते । पप्रिणा । सस्निना । युजा । मा । नः । दुःऽशंसः ।
अभिऽदिप्सुः । ईशत । प्र । सुऽशंसाः । मतिऽभिः । तारिषीमहि ॥ १० ॥
अननुऽदः । वृषभः । जग्मिः । आऽहवम् । निःऽतप्ता । शत्रुम् । पृतनासु ।
ससहिः । असि । सत्यः । ऋणऽयाः । ब्रह्मणः । पते । उग्रस्य । चित् ।
दमिता । वीळुऽहर्षिणः ॥ ११ ॥ अदेवेन । मनसा । यः । रिषण्यति ।
शासाम् । उग्रः । मन्यमानः । जिघांसति । बृहस्पते । मा । प्रणक् ।
तस्य । नः । वधः । नि । कर्म । मन्युम् । दुःऽएवस्य । शर्धतः ॥ १२ ॥
भरेषु । हव्यः । नमसा । उपऽसद्यः । गन्ता । वाजेषु । सनिता ।
धनम्ऽधनम् । विश्वाः । इत् । अर्यः । अभिऽदिप्स्वः । मृधः । बृहस्पतिः ।
वि । ववर्ह । रथान्ऽइव ॥ १३ ॥ तेजिष्ठया । तपनी । रक्षसः । तप ।
ये । त्वा । निदे । दधिरे । दृष्टऽवीर्यम् । आविः । तत् । कृष्व । यत् ।
असत् । ते । उक्थ्यम् । बृहस्पते । वि । परिऽरपः । अर्दय ॥ १४ ॥
बृहस्पते । अति । यत् । अर्यः । अर्हात् । द्युऽमत् । विऽभाति । क्रतुऽमत् ।

जनेषु । यत् । दीदयत् । शवसा । ऋतऽप्रजात । तत् । अस्मासु । द्रविणम् । धेहि । चित्रम् ॥ १५ ॥ मा । नः । स्तेनेभ्यः । ये । अभि । द्रुहः । पदे । निरामिणः । रिपवः । अन्नेषु । जगृधुः । आ । देवानाम् । ओहते । वि । व्रयः । हृदि । बृहस्पते । न । परः । साम्नः । विदुः ॥१६॥ विश्वेभ्यः । हि । त्वा । भुवनेभ्यः । परि । त्वष्टा । अजनत् । साम्नःऽसाम्नः । कविः । सः । ऋणऽचित् । ऋणऽयाः । ब्रह्मणः । पतिः । द्रुहः । हन्ता । महः । ऋतस्य । धर्तरि ॥ १७ ॥ तव । श्रिये । वि । अजिहीत । पर्वतः । गवाम् । गोत्रम् । उत्ऽअसृजः । यत् । अङ्गिरः । इन्द्रेण । युजा । तमसा । परिऽवृतम् । बृहस्पते । निः । अपाम् । औब्जः । अर्णवम् ॥ १८ ॥ ब्रह्मणः । पते । त्वम् । अस्य । यन्ता । सुऽउक्तस्य । बोधि । तनयम् । च । जिन्व । विश्वम् । तत् । भद्रम् । यत् । अवन्ति । देवाः । बृहत् । वदेम । विदथे । सुऽवीराः ॥ १९ ॥

II. 24

सः । इमाम् । अविड्ढि । प्रऽभृतिम् । यः । ईशिषे । अया । विधेम । नवया । महा । गिरा । यथा । नः । मीढ्वान् । स्तवते । सखा । तव । बृहस्पते । सीसधः । सः । उत । नः । मतिम् ॥ १ ॥ यः । नन्त्वानि । अनमत् । नि । ओजसा । उत । अदर्दः । मन्युना । शम्बराणि । वि । प्र । अच्यवयत् । अच्युता । ब्रह्मणः । पतिः । आ । च । अविशत् । वसुऽमन्तम् । वि । पर्वतम् ॥ २ ॥ तत् । देवानाम् । देवऽतमाय । कर्त्वम् । अश्रथ्नन् । दृळ्हा । अव्रदन्त । वीळिता । उत् । गाः । आजत् । अभिनत् । ब्रह्मणा । वलम् । अगूहत् । तमः । वि । अचक्षयत् । स्वः१रिति स्वः ॥ ३ ॥ अश्मऽआस्यम् । अवतम् । ब्रह्मणः । पतिः । मधुऽधारम् । अभि । यम् ।

ओजसा । अतृणत् । तम् । एव । विश्वे । पपिरे । स्वःऽदृशः । बहु ।
साकम् । सिसिचुः । उत्सम् । उद्रिणम् ॥ ४ ॥ सना । ता । का ।
चित् । भुवना । भवीत्वा । मात्ऽभिः । शरत्ऽभिः । दुरः । वरन्त ।
वः । अयतन्ता । चरतः । अन्यत्ऽअन्यत् । इत् । या । चकार । वयुना ।
ब्रह्मणः । पतिः ॥ ५ ॥ अभिऽनक्षन्तः । अभि । ये । तम् । आनशुः ।
निऽधिम् । पणीनाम् । परमम् । गुहा । हितम् । ते । विद्वांसः ।
प्रतिऽचक्ष्य । अनृता । पुनः । यतः । ऊँ इति । आयन् । तत् । उत् ।
ईयुः । आऽविशम् ॥ ६ ॥ ऋतऽवानः । प्रतिऽचक्ष्य । अनृता । पुनः ।
आ । अतः । आ । तस्थुः । कवयः । महः । पथः । ते । बाहुऽभ्याम् ।
धमितम् । अग्निम् । अश्मनि । नकिः । सः । अस्ति । अरणः । जहुः ।
हि । तम् ॥ ७ ॥ ऋतऽज्येन । क्षिप्रेण । ब्रह्मणः । पतिः । यत्र ।
वष्टि । प्र । तत् । अश्नोति । धन्वना । तस्य । साध्वीः । इषवः ।
याभिः । अस्यति । नृऽचक्षसः । दृशये । कर्णऽयोनयः ॥ ८ ॥ सः ।
सम्ऽनयः । सः । विऽनयः । पुरःऽहितः । सः । सुऽस्तुतः । सः ।
युधि । ब्रह्मणः । पतिः । चाक्ष्मः । यत् । वाजम् । भरते । मती । धना ।
आत् । इत् । सूर्यः । तपति । तप्यतुः । वृथा ॥ ९ ॥ विऽभु । प्रऽभु ।
प्रथमम् । मेहनाऽवतः । बृहस्पतेः । सुऽविदत्राणि । राध्या । इमा ।
सातानि । वेन्यस्य । वाजिनः । येन । जनाः । उभये । भुञ्जते । विशः
॥ १० ॥ यः । अवरे । वृजने । विश्वऽथा । विऽभुः । महाम् । ऊँ इति ।
रण्वः । शवसा । ववक्षिथ । सः । देवः । देवान् । प्रति । पप्रथे । पृथु ।
विश्वा । इत् । ऊँ इति । ता । परिऽभूः । ब्रह्मणः । पतिः ॥ ११ ॥
विश्वम् । सत्यम् । मघऽवाना । युवोः । इत् । आपः । चन । प्र ।

मिनन्ति । व्रतम् । वाम् । अच्छ । इन्द्राब्रह्मणस्पती इति । हविः । नः ।
अन्नम् । युजाऽइव । वाजिना । जिगातम् ॥ १२ ॥ उत । आशिष्ठाः ।
अनु । शृण्वन्ति । वह्नयः । सभेयः । विप्रः । भरते । मती । धना ।
वीळुऽद्वेषाः । अनु । वशा । ऋणम् । आऽददिः । सः । ह । वाजी ।
सम्ऽइथे । ब्रह्मणः । पतिः ॥ १३ ॥ ब्रह्मणः । पतेः । अभवत् । यथा-
ऽवशम् । सत्यः । मन्युः । महि । कर्म । करिष्यतः । यः । गाः ।
उत्ऽआजत् । सः । दिवे । वि । च । अभजत् । महीऽइव । रीतिः ।
शवसा । असरत् । पृथक् ॥ १४ ॥ ब्रह्मणः । पते । सुऽयमस्य । विश्वहा ।
रायः । स्याम । रथ्यः । वयस्वतः । वीरेषु । वीरान् । उप । पृङ्धि ।
नः । त्वम् । यत् । ईशानः । ब्रह्मणा । वेषि । मे । हवम् ॥ १५ ॥
ब्रह्मणः । पते । त्वम् । अस्य । यन्ता । सुऽउक्तस्य । बोधि । तनयम् ।
च । जिन्व । विश्वम् । तत् । भद्रम् । यत् । अवन्ति । देवाः । बृहत् ।
वदेम । विदथे । सुऽवीराः ॥ १६ ॥

## II. 25.

इन्धानः । अग्निम् । वनवत् । वनुष्यतः । कृतऽब्रह्मा । शूशुवत् ।
रातऽहव्यः । इत् । जातेन । जातम् । अति । सः । प्र । सर्सृते ।
यम्ऽयम् । युजम् । कृणुते । ब्रह्मणः । पतिः ॥ १ ॥ वीरेभिः । वीरान् ।
वनवत् । वनुष्यतः । गोभिः । रयिम् । पप्रथत् । बोधति । त्मना । तोकम् ।
च । तस्य । तनयम् । च । वर्धते । यम्ऽयम् । युजम् । कृणुते । ब्रह्मणः ।
पतिः ॥ २ ॥ सिन्धुः । न । क्षोदः । शिमीऽवान् । ऋघायतः । वृषाऽइव ।
वध्रीन् । अभि । वष्टि । ओजसा । अग्नेःऽइव । प्रऽसितिः । न । अर्ह ।
वर्तवे । यम्ऽयम् । युजम् । कृणुते । ब्रह्मणः । पतिः ॥ ३ ॥ तस्मै ।

अर्षन्ति । दि॒व्याः । अस॑श्चतः । सः । स॒त्वऽभिः । प्र॒थ॒मः । गोषु॑ । गच्छ॑ति ।
अनि॑भृष्टऽतविषिः । ह॒न्ति । ओज॑सा । यम्ऽय॑म् । युज॑म् । कृ॒णु॒ते ।
ब्रह्म॑णः । पति॑ः ॥ ४ ॥ तस्मै॑ । इत् । विश्वे॑ । धु॒न॒यन्त॑ । सिन्ध॑वः ।
अच्छि॑द्रा । शर्म॑ । द॒धि॒रे । पु॒रूणि॑ । दे॒वाना॑म् । सु॒म्ने । सु॒ऽभग॑ः । सः ।
ए॒ध॒ते । यम्ऽय॑म् । युज॑म् । कृ॒णु॒ते । ब्रह्म॑णः । पति॑ः ॥ ५ ॥

## II. 26.

ऋ॒जुः । इत् । शंस॑ः । व॒न॒व॒त् । व॒नु॒ष्य॒तः । दे॒व॒ऽयन् । इत् ।
अदे॑वऽयन्तम् । अ॒भि । अ॒स॒त् । सु॒प्र॒ऽअ॒वीः । इत् । व॒न॒व॒त् । पृ॒त्ऽसु ।
दु॒स्तर॑म् । यज्वा॑ । इत् । अय॑ज्योः । वि । भ॒जा॒ति । भोज॑नम् ॥ १ ॥
यज॑स्व । वी॒र । प्र । वि॒हि॒ । म॒ना॒य॒तः । भ॒द्रम् । मन॑ः । कृ॒णु॒ष्व॒ ।
वृ॒त्र॒ऽतूर्ये॑ । ह॒विः । कृ॒णु॒ष्व॒ । सु॒ऽभग॑ः । यथा॑ । अस॑सि । ब्रह्म॑णः । पतेः॑ ।
अवः॑ । आ । वृ॒णी॒म॒हे॒ ॥ २ ॥ सः । इत् । जने॑न । सः । वि॒शा । सः ।
जन्म॑ना । सः । पु॒त्रैः । वाज॑म् । भ॒र॒ते । धना॑ । नृ॒ऽभिः॑ । दे॒वाना॑म् ।
यः । पि॒तर॑म् । आ॒ऽविवा॑सति । श्र॒द्धाऽम॑नाः । ह॒विषा॑ । ब्रह्म॑णः ।
पति॑म् ॥ ३ ॥ यः । अ॒स्मै॒ । ह॒व्यैः । घृ॒तव॑त्ऽभिः । अवि॑धत् । प्र ।
तम् । प्रा॒चा । न॒य॒ति॒ । ब्रह्म॑णः । पति॑ः । उ॒रु॒ष्यति॑ । ई॒म् । अंह॑सः ।
रक्ष॑ति । रि॒षः । अं॒होः । चि॒त् । अ॒स्मै॒ । उ॒रु॒ऽचक्रिः॑ । अद्भु॑तः ॥ ४ ॥

## II. 27.

इ॒माः । गिर॑ः । आ॒दि॒त्येभ्यः॑ । घृ॒तऽस्नूः॑ । स॒नात् । राज॑ऽभ्यः ।
जु॒ह्वा॑ । जु॒हो॒मि॒ । शृ॒णोतु॑ । मि॒त्रः । अ॒र्य॒मा । भग॑ः । नः॒ । तु॒वि॒ऽजा॒तः ।
वरु॑णः । दक्ष॑ः । अंश॑ः ॥ १ ॥ इ॒मम् । स्तोम॑म् । सऽक्र॑तवः । मे॒ ।
अ॒द्य । मि॒त्रः । अ॒र्य॒मा । वरु॑णः । जु॒ष॒न्त॒ । आ॒दि॒त्यास॑ः । शुच॑यः ।

धारैऽपूताः । अवृंजिनाः । अनवद्याः । अरिंष्टाः ॥ २ ॥ ते । आदित्यासः । उरवः । गभीराः । अदंब्धासः । दिप्संन्तः । भूरिऽअक्षाः । अन्तरिति । पश्यन्ति । वृजिना । उत । साधु । सर्वम् । राजंऽभ्यः । परमा । चित् । अन्ति ॥ ३ ॥ धारयन्तः । आदित्यासः । जगत् । स्थाः । देवाः । विश्वस्य । भुवनस्य । गोपाः । दीर्घऽधियः । रक्षमाणाः । असुर्यम् । ऋतऽवानः । चयमानाः । ऋणानि ॥ ४ ॥ विद्याम् । आदित्याः । अवसः । वः । अस्य । यत् । अर्यमन् । भये । आ । चित् । मयःऽभु । युष्माकम् । मित्रावरुणा । प्रऽनीतौ । परि । श्वभ्राऽइव । दुःऽइतानि । वृज्याम् ॥ ५ ॥ सुऽगः । हि । वः । अर्यमन् । मित्र । पन्थाः । अनुक्षरः । वरुण । साधुः । अस्ति । तेन । आदित्याः । अधि । वोचत । नः । यच्छत । नः । दुःऽपरिहन्तु । शर्म ॥ ६ ॥ पिपर्तु । नः । अदितिः । राजंऽपुत्रा । अति । द्वेषांसि । अर्यमा । सुऽगेभिः । बृहत् । मित्रस्य । वरुणस्य । शर्म । उप । स्याम । पुरुऽवीराः । अरिष्टाः ॥ ७ ॥ तिस्रः । भूमीः । धारयन् । त्रीन् । उत । द्यून् । त्रीणि । व्रता । विदथे । अन्तः । एषाम् । ऋतेन । आदित्याः । महि । वः । महिऽत्वम् । तत् । अर्यमन् । वरुण । मित्र । चारु ॥ ८ ॥ त्री । रोचना । दिव्या । धारयन्त । हिरण्ययाः । शुचयः । धारैऽपूताः । अस्वप्नऽजः । अनिऽमिषाः । अदंब्धाः । उरुऽशंसाः । ऋजवे । मर्त्याय ॥ ९ ॥ त्वम् । विश्वेषाम् । वरुण । असि । राजा । ये । च । देवाः । असुर । ये । च । मर्ताः । शतम् । नः । रास्व । शरदः । विऽचक्षे । अश्याम । आयूंषि । सुऽधितानि । पूर्वा ॥ १० ॥ न । दक्षिणा । वि । चिकिते । न । सव्या । न । प्राचीनम् । आदित्याः । न । उत । पश्चा । पाक्या । चित् । वसवः ।

धीर्या । चित् । युष्माऽनीतः । अभयम् । ज्योतिः । अश्याम् ॥ ११ ॥ यः । राजऽभ्यः । ऋतनिऽभ्यः । ददाश । यम् । वर्धयन्ति । पुष्टयः । च । नित्याः । सः । रेवान् । याति । प्रथमः । रथेन । वसुऽदावा । विदथेषु । प्रऽशस्तः ॥ १२ ॥ शुचिः । अपः । सुऽयवसाः । अदब्धः । उप । क्षेति । वृद्धऽवयाः । सुऽवीरः । नकिः । तम् । घ्नन्ति । अन्तितः । न । दूरात् । यः । आदित्यानाम् । भवति । प्रऽनीतौ ॥ १३ ॥ अदिते । मित्र । वरुण । उत । मृळ । यत् । वः । वयम् । चकृम । कत् । चित् । आगः । उरु । अश्याम् । अभयम् । ज्योतिः । इन्द्र । मा । नः । दीर्घाः । अभि । नशन् । तमिस्राः ॥ १४ ॥ उभे इति । अस्मै । पीपयतः । समीची इति समऽईची । दिवः । वृष्टिम् । सुऽभगः । नाम । पुष्यन् । उभा । क्षयौ । आऽजयन् । याति । पृत्ऽसु । उभौ । अर्धौ । भवतः । साधू इति । अस्मै ॥ १५ ॥ याः । वः । मायाः । अभिऽद्रुहे । यजत्राः । पाशाः । आदित्याः । रिपवे । विऽचृत्ताः । अश्वीऽइव । तान् । अति । येषम् । रथेन । अरिष्टाः । उरौ । आ । शर्मन् । स्याम ॥ १६ ॥ मा । अहम् । मघोनः । वरुण । प्रियस्य । भूरिऽदाव्नः । आ । विदम् । शूनम् । आपेः । मा । रायः । राजन् । सुऽयमात् । अव । स्थाम् । बृहत् । वदेम । विदथे । सुऽवीराः ॥ १७ ॥

II. 28.

इदम् । कवेः । आदित्यस्य । स्वऽराजः । विश्वानि । सन्ति । अभि । अस्तु । मह्ना । अति । यः । मन्द्रः । यजथाय । देवः । सुऽकीर्तिम् । भिक्षे । वरुणस्य । भूरेः ॥ १ ॥ तव । व्रते । सुऽभगासः । स्याम । सुऽआध्यः । वरुण । तुस्तुऽवांसः । उपऽअयने । उषसाम् । गोऽमतीनाम् ।

अग्नयः । न । जरमाणाः । अनु । द्यून् ॥ २ ॥ तव । स्याम । पुरुऽवीरस्य । शर्मन् । उरुऽशंसस्य । वरुण । प्रनेतरिति प्रऽनेतः । यूयम् । नः । पुत्राः । अदितेः । अदब्धाः । अभि । क्षमध्वम् । युज्याय । देवाः ॥३॥ प्र । सीम् । आदित्यः । असृजत् । विऽधर्ता । ऋतम् । सिन्धवः । वरुणस्य । यन्ति । न । श्राम्यन्ति । न । वि । मुचन्ति । एते । वयः । न । पप्तुः । रघुऽया । परिऽज्मन् ॥ ४ ॥ वि । मत् । श्रथय । रशनाम्ऽइव । आगः । ऋध्याम । ते । वरुण । खाम् । ऋतस्य । मा । तन्तुः । छेदि । वयतः । धियम् । मे । मा । मात्रा । शारि । अपसः । पुरा । ऋतोः ॥ ५ ॥ अपो इति । सु । म्यक्ष । वरुण । भियसम् । मत् । सम्ऽराट् । ऋतऽवः । अनु । मा । गृभाय । दामऽइव । वत्सात् । वि । मुमुग्धि । अंहः । नहि । त्वत् । आरे । निऽमिषः । चन । ईशे ॥६॥ मा । नः । वधैः । वरुण । ये । ते । इष्टौ । एनः । कृण्वन्तम् । असुर । श्रीणन्ति । मा । ज्योतिषः । प्रऽवसथानि । गन्म । वि । सु । मृधः । शिश्रथः । जीवसे । नः ॥ ७ ॥ नमः । पुरा । ते । वरुण । उत । नूनम् । उत । अपरम् । तुविऽजात । ब्रवाम । त्वे इति । हि । कम् । पर्वते । न । श्रितानि । अप्रऽच्युतानि । दुःऽदभ । व्रतानि ॥ ८ ॥ परा । ऋणा । सावीः । अध । मत्ऽकृतानि । मा । अहम् । राजन् । अन्यऽकृतेन । भोजम् । अविऽउष्टाः । इत् । नु । भूयसीः । उषसः । आ । नः । जीवान् । वरुण । तासु । शाधि ॥ ९ ॥ यः । मे । राजन् । युज्यः । वा । सखा । वा । स्वप्ने । भयम् । भीरवे । मह्यम् । आह । स्तेनः । वा । यः । दिप्सति । नः । वृकः । वा । त्वम् । तस्मात् । वरुण । पाहि । अस्मान् ॥ १० ॥ मा । अहम् । मघोनः । वरुण ।

प्रियस्य । भूरिऽदाव्नः । आ । विदम् । शूनम् । आपेः । मा । रायः । राजन् । सुऽयमात् । अव । स्थाम् । बृहत् । वदेम । विदथे । सुऽवीराः ॥ ११ ॥

II. 29

घृतऽव्रताः । आदित्याः । इषिराः । आरे । मत् । कर्त । रहसूःऽइव । आगः । शृण्वतः । वः । वरुण । मित्र । देवाः । भद्रस्य । विद्वान् । अवसे । हुवे । वः ॥ १ ॥ यूयम् । देवाः । प्रऽमतिः । यूयम् । ओजः । यूयम् । द्वेषांसि । सनुतः । युयोत । अभिऽक्षत्तारः । अभि । च । क्षमध्वम् । अद्य । च । नः । मृळयत । अपरम् । च ॥ २ ॥ किम् । ऊँ इति । नु । वः । कृणवाम । अपरेण । किम् । सनेन । वसवः । आप्येन । यूयम् । नः । मित्रावरुणा । अदिते । च । स्वस्तिम् । इन्द्रामरुतः । दधात ॥ ३ ॥ हये । देवाः । यूयम् । इत् । आपयः । स्थ । ते । मृळत । नाधमानाय । मह्यम् । मा । वः । रथः । मध्यमऽवाट् । ऋते । भूत् । मा । युष्मावत्ऽसु । आपिषु । श्रमिष्म ॥ ४ ॥ प्र । वः । एकः । मिमय । भूरि । आगः । यत् । मा । पिताऽइव । कितवम् । शशास । आरे । पाशाः । आरे । अघानि । देवाः । मा । मा । अधि । पुत्रे । विम्ऽइव । ग्रभीष्ट ॥ ५ ॥ अर्वाञ्चः । अद्य । भवत । यजत्राः । आ । वः । हार्दि । भयमानः । व्ययेयम् । त्राध्वम् । नः । देवाः । निऽजुरः । वृकस्य । त्राध्वम् । कर्तात् । अवऽपदः । यजत्राः ॥ ६ ॥ मा । अहम् । मघोनः । वरुण । प्रियस्य । भूरिऽदाव्नः । आ । विदम् । शूनम् । आपेः । मा । रायः । राजन् । सुऽयमात् । अव । स्थाम् । बृहत् । वदेम । विदथे । सुऽवीराः ॥ ७ ॥

II. 30.

ऋतम् । देवाय । कृण्वते । सवित्रे । इन्द्राय । अहिऽघ्ने । न । रमन्ते ।
आपः । अहःऽअहः । याति । अक्तुः । अपाम् । कियति । आ । प्रथमः ।
सर्गः । आसाम् ॥ १ ॥ यः । वृत्राय । सिनम् । अत्र । अभरिष्यत् ।
प्र । तम् । जनित्री । विदुषे । उवाच । पथः । रदन्तीः । अनु । जोषम् ।
अस्मै । दिवेऽदिवे । धुनयः । यन्ति । अर्थम् ॥ २ ॥ ऊर्ध्वः । हि ।
अस्थात् । अधि । अन्तरिक्षे । अध । वृत्राय । प्र । वधम् । जभार ।
मिहम् । वसानः । उप । हि । ईम् । अदुद्रोत् । तिग्मऽआयुधः । अज-
यत् । शत्रुम् । इन्द्रः ॥ ३ ॥ बृहस्पते । तपुषा । अश्नाऽइव । विध्य ।
वृकऽद्वरसः । असुरस्य । वीरान् । यथा । जघन्थ । धृषता । पुरा । चित् ।
एव । जहि । शत्रुम् । अस्माकम् । इन्द्र ॥ ४ ॥ अव । क्षिप । दिवः ।
अश्मानम् । उच्चा । येन । शत्रुम् । मन्दसानः । निऽजूर्वाः । तोकस्य ।
सातौ । तनयस्य । भूरेः । अस्मान् । अर्धम् । कृणुतात् । इन्द्र । गोनाम्
॥ ५ ॥ प्र । हि । क्रतुम् । वृहथः । यम् । वनुथः । रध्रस्य । स्थः ।
यजमानस्य । चोदौ । इन्द्रासोमा । युवम् । अस्मान् । अविष्टम् ।
अस्मिन् । भयऽस्थे । कृणुतम् । ऊँ इति । लोकम् ॥ ६ ॥ न । मा ।
तमत् । न । श्रमत् । न । उत । तन्द्रत् । न । वोचाम । मा । सुनोत ।
इति । सोमम् । यः । मे । पृणात् । यः । ददत् । यः । निऽबोधात् ।
यः । मा । सुन्वन्तम् । उप । गोभिः । आ । अयत् ॥ ७ ॥ सरस्वति ।
त्वम् । अस्मान् । अविड्ढि । मरुत्वती । धृषती । जेषि । शत्रून् । त्यम् ।
चित् । शर्धन्तम् । तविषीऽयमाणम् । इन्द्रः । हन्ति । वृषभम् । शण्डि-
कानाम् ॥ ८ ॥ यः । नः । सनुत्यः । उत । वा । जिघत्नुः । अभि-

ऽस्यार्य । तम् । तिगितेन । विध्य । बृहस्पते । आयुधैः । जेषि । शत्रून् । द्रुहे । रिषन्तम् । परि । धेहि । राजन् ॥ ९ ॥ अस्माकेभिः । सत्वऽभिः । शूर । शूरैः । वीर्या । कृधि । यानि । ते । कर्त्वानि । ज्योक् । अभूवन् । अनुऽधूपितासः । हत्वी । तेषाम् । आ । भर । नः । वसूनि ॥ १० ॥ तम् । वः । शर्धम् । मारुतम् । सुम्नऽयुः । गिरा । उप । ब्रुवे । नमसा । दैव्यम् । जनम् । यथा । रयिम् । सर्वऽवीरम् । नशामहै । अपत्यऽसाचम् । श्रुत्यम् । दिवेऽदिवे ॥ ११ ॥

II. 31.

अस्माकम् । मित्रावरुणा । अवतम् । रथम् । आदित्यैः । रुद्रैः । वसुऽभिः । सचाऽभुवा । प्र । यत् । वयः । न । पप्तन् । वस्मनः । परि । श्रवस्यवः । हृषीवन्तः । वनऽसदः ।॥ १ ॥ अध । स्म । नः । उत् । अवत । सऽजोषसः । रथम् । देवासः । अभि । विक्षु । वाजऽयुम् । यत् । आशवः । पद्याभिः । तित्रतः । रजः । पृथिव्याः । सानौ । जङ्घनन्त । पाणिऽभिः ॥ २ ॥ उत । स्यः । नः । इन्द्रः । विश्वऽचर्षणिः । दिवः । शर्धेन । मारुतेन । सुऽक्रतुः । अनु । नु । स्थाति । अवृकाभिः । ऊतिऽभिः । । रथम् । महे । सनये । वाजऽसातये ॥ ३ ॥ उत । स्यः । देवः । भुवनस्य । सक्षणिः । त्वष्टा । ग्नाभिः । सऽजोषाः । जूजुवत् । रथम् । इळा । भगः । बृहत्ऽदिवा । उत । रोदसी इति । पूषा । पुरम्ऽधिः । अश्विनौ । अध । पती इति ॥ ४ ॥ उत । त्ये इति । देवी इति । सुभगे इति सुऽभगे । मिथुऽदृशा । उषसानक्ता । जगताम् । अपिऽजुवा । स्तुषे । यत् । वाम् । पृथिवि । नव्यसा । वचः । स्थातुः । च । वयः । त्रिऽवयाः । उपस्तिरे ॥ ५ ॥ उत । वः । शंसम् । उशि-

जीम्ऽइव । श्मसि । अहिः । बुध्न्यः । अजः । एकंऽपात् । उत । त्रितः । ऋभुक्षाः । सविता । चनः । दधे । अपाम् । नपात् । आशुऽहेमा । धिया । शमि ॥ ६ ॥ एता । वः । वश्मि । उत्ऽयता । यजत्राः । अतक्षन् । आयवः । नव्यसे । सम् । श्रवस्यवः । वाजम् । चकानाः । सप्तिः । न । रथ्यः । अहं । धीतिम् । अश्याः ॥ ७ ॥

II. 32.

अस्य । मे । द्यावापृथिवी इति । ऋतऽयतः । भूतम् । अवित्री इति । वचसः । सिसासतः । ययोः । आयुः । प्रऽतरम् । ते इति । इदम् । पुरः । उपस्तुते इत्युपऽस्तुते । वसुऽयुः । वाम् । महः । दधे ॥ १ ॥ मा । नः । गुह्याः । रिपः । आयोः । अहन् । दभन् । मा । नः । आभ्यः । रीरधः । दुच्छुनाभ्यः । मा । नः । वि । यौः । सख्या । विद्धि । तस्य । नः । सुम्नऽयता । मनसा । तत् । त्वा । ईमहे ॥ २ ॥ अहेळता । मनसा । श्रुष्टिम् । आ । वह । दुहानाम् । धेनुम् । पिप्युषीम् । असश्चतम् । पद्याभिः । आशुम् । वचसा । च । वाजिनम् । त्वाम् । हिनोमि । पुरुऽहूत । विश्वहा ॥ ३ ॥ राकाम् । अहम् । सुऽहवाम् । सुऽस्तुती । हुवे । शृणोतु । नः । सुऽभगा । बोधतु । त्मना । सीव्यतु । अपः । सूच्या । अच्छिद्यमानया । ददातु । वीरम् । शतऽदायम् । उक्थ्यम् ॥ ४ ॥ याः । ते । राके । सुऽमतयः । सुऽपेशसः । याभिः । ददासि । दाशुषे । वसूनि । ताभिः । नः । अद्य । सुऽमनाः । उपऽआगहि । सहस्रऽपोषम् । सुऽभगे । रराणा ॥ ५ ॥ सिनीवालि । पृथुऽस्तुके । या । देवानाम् । असि । स्वसा । जुषस्व । हव्यम् । आऽहुतम् । प्रऽजाम् । देवि । दिदिड्ढि । नः ॥ ६ ॥ या । सुऽबाहुः । सुऽअङ्गुरिः । सुऽसूमा ।

बहुऽसूर्वरी । तस्यै । विश्पत्न्यै । हविः । सिनीवाल्यै । जुहोतन ॥ ७ ॥ या । गुङ्गूः । या । सिनीवाली । या । राका । या । सरस्वती । इन्द्राणीम् । अह्वे । ऊतये । वरुणानीम् । स्वस्तये ॥ ८ ॥

II. 33.

आ । ते । पितः । मरुताम् । सुम्नम् । एतु । मा । नः । सूर्यस्य । सम्ऽदृशः । युयोथाः । अभि । नः । वीरः । अर्वति । क्षमेत । प्र । जायेमहि । रुद्र । प्रऽजाभिः ॥ १ ॥ त्वाऽदत्तेभिः । रुद्र । शम्ऽतमेभिः । शतम् । हिमाः । अशीय । भेषजेभिः । वि । अस्मत् । द्वेषः । विऽतरम् । वि । अंहः । वि । अमीवाः । चातयस्व । विषूचीः ॥ २ ॥ श्रेष्ठः । जातस्य । रुद्र । श्रिया । असि । तवःऽतमः । तवसाम् । वज्रबाहो इति वज्रऽबाहो । पर्षि । नः । पारम् । अंहसः । स्वस्ति । विश्वाः । अभिऽइतीः । रपसः । युयोधि ॥ ३ ॥ मा । त्वा । रुद्र । चुक्रुधाम । नमःऽभिः । मा । दुःऽस्तुती । वृषभ । मा । सऽहूती । उत् । नः । वीरान् । अर्पय । भेषजेभिः । भिषक्ऽतमम् । त्वा । भिषजाम् । शृणोमि ॥ ४ ॥ हवीमऽभिः । हवते । यः । हविःऽभिः । अव । स्तोमेभिः । रुद्रम् । दिषीय । ऋदूदरः । सुऽहवः । मा । नः । अस्यै । बभ्रुः । सुऽशिप्रः । रीरधत् । मनायै ॥ ५ ॥ उत् । मा । ममन्द । वृषभः । मरुत्वान् । त्वक्षीयसा । वयसा । नाधमानम् । घृणिऽइव । छायाम् । अरपाः । अशीय । आ । विवासेयम् । रुद्रस्य । सुम्नम् ॥ ६ ॥ क्व । स्यः । ते । रुद्र । मृळयाकुः । हस्तः । यः । अस्ति । भेषजः । जलाषः । अपऽभर्ता । रपसः । दैव्यस्य । अभि । नु । मा । वृषभ । चक्षमीथाः ॥ ७ ॥ प्र । बभ्रवे । वृषभाय । श्वितीचे । महः । महीम् । सुऽस्तुतिम् । ईरयामि । नमस्य । कल्मलीकिनम् ।

किर्नम् । नम॑ःऽभिः । गृणीमसि॑ । त्वेषम् । रुद्रस्य॑ । नाम॑ ॥ ८ ॥
स्थिरेभिः । अङ्गैः । पुरुऽरूपः । उग्रः । बभ्रुः । शुक्रेभिः । पिपिशे ।
हिर॑ण्यैः । ईशा॑नात् । अस्य । भुव॑नस्य । भूरैः । न । वै । ॐ इति॑ ।
योषत् । रुद्रात् । असुर्य॑म् ॥ ९ ॥ अर्ह॑न् । बिभर्षि । साय॑कानि । धन्वं ।
अर्ह॑न् । निष्कम् । यजतम् । विश्वऽरूपम् । अर्ह॑न् । इदम् । दयसे ।
विश्व॑म् । अभ्व॑म् । न । वै । ओजी॑यः । रुद्र । त्वत् । अस्ति ॥ १० ॥
स्तुहि । श्रुतम् । गर्तऽसद॑म् । युवा॑नम् । मृगम् । न । भीमम् । उपऽ-
हत्नुम् । उग्रम् । मृळ । जरित्रे । रुद्र । स्तवा॑नः । अन्यम् । ते । अस्मत् ।
नि । वपन्तु । सेना॑ः ॥ ११ ॥ कुमारः । चित् । पितर॑म् । वन्द॑मानम् ।
प्रति॑ । ननाम । रुद्र । उपऽयन्त॑म् । भूरैः । दातार॑म् । सत्ऽप॑तिम् ।
गृणीषे । स्तुतः । त्वम् । भेषजा । रासि । अस्मे इति॑ ॥ १२ ॥ या ।
वः । भेषजा । मरुतः । शुची॑नि । या । शम्ऽत॑मा । वृषणः । या ।
मयःऽभु । यानि॑ । मनु॑ः । अवृ॑णीत । पिता । नः । ता । शम् । च । योः ।
च । रुद्रस्य॑ । वश्मि ॥१३॥ परि॑ । नः । हेतिः । रुद्रस्य॑ । वृज्याः । परि॑ ।
त्वेषस्य॑ । दुःऽमतिः । मही । गात् । अव॑ । स्थिरा । मघव॑त्ऽभ्यः ।
तनुष्व । मीढ्वः । तोकाय॑ । तन॑याय । मृळ ॥ १४ ॥ एव । बभ्रो इति॑ ।
वृषभ । चेकितान । यथा॑ । देव । न । हृणीषे । न । हंसि॑ । हवनऽश्रुत् ।
नः । रुद्र । इह । बोधि । बृहत् । वदेम । विदथे॑ । सुऽवीरा॑ः ॥ १५ ॥

II. 34.

धारावराः । मरुतः । धृष्णुऽओ॑जसः । मृगाः । न । भीमाः ।
तवि॑षीभिः । अर्चिन॑ः । अग्नयः । न । शुशुचानाः । ऋजीषिण॑ः । भूमि॑म् ।
धम॑न्तः । अप॑ । गाः । अवृण्वत ॥ १ ॥ द्याव॑ः । न । स्तृऽभिः ।

चितयन्त । खादिनः । वि । अभ्रियाः । न । द्युतयन्त । वृष्टयः । रुद्रः ।
यत् । वः । मरुतः । रुक्मऽवक्षसः । वृषा । अजनि । पृश्न्याः । शुक्रे ।
ऊधनि ॥ २ ॥ उक्षन्ते । अश्वान् । अत्यान्ऽइव । आजिषु । नदस्य ।
कर्णैः । तुरयन्ते । आशुऽभिः । हिरण्यऽशिप्राः । मरुतः । दविध्वतः ।
पृक्षम् । याथ । पृषतीभिः । सऽमन्यवः ॥ ३ ॥ पृक्षे । ता । विश्वा ।
भुवना । ववक्षिरे । मित्राय । वा । सदम् । आ । जीरऽदानवः । पृषत्ऽ-
अश्वासः । अनवभ्रऽराधसः । ऋजिप्यासः । न । वयुनेषु । धूःऽसदः ॥४॥
इन्धन्वऽभिः । धेनुऽभिः । रप्शदूधऽभिः । अध्वस्मऽभिः । पथिऽभिः ।
भ्राजत्ऽऋष्टयः । आ । हंसासः । न । स्वसराणि । गन्तन । मधोः ।
मदाय । मरुतः । सऽमन्यवः ॥ ५ ॥ आ । नः । ब्रह्माणि । मरुतः ।
सऽमन्यवः । नराम् । न । शंसः । सवनानि । गन्तन । अश्वाम्ऽइव ।
पिप्यत । धेनुम् । ऊधनि । कर्त । धियम् । जरित्रे । वाजऽपेशसम् ॥६॥
तम् । नः । दात । मरुतः । वाजिनम् । रथे । आपानम् । ब्रह्म ।
चितयत् । दिवेऽदिवे । इषम् । स्तोतृऽभ्यः । वृजनेषु । कारवे । सनिम् ।
मेधाम् । अरिष्टम् । दुस्तरम् । सहः ॥ ७ ॥ यत् । युञ्जते । मरुतः ।
रुक्मऽवक्षसः । अश्वान् । रथेषु । भगे । आ । सुऽदानवः । धेनुः । न ।
शिश्वे । स्वसरेषु । पिन्वते । जनाय । रातऽहविषे । महीम् । इषम् ॥८॥
यः । नः । मरुतः । वृकऽताति । मर्त्यः । रिपुः । दधे । वसवः ।
रक्षत । रिषः । वर्तयत । तपुषा । चक्रिया । अभि । तम् । अव । रुद्राः ।
अशसः । हन्तन । वधरिति ॥ ९ ॥ चित्रम् । तत् । वः । मरुतः ।
यामं । चेकिते । पृश्न्याः । यत् । ऊधः । अपि । आपयः । दुहुः ।
यत् । वा । निदे । नवमानस्य । रुद्रियाः । त्रितम् । जराय । जुरताम् ।

अदाभ्याः ॥ १० ॥ तान् । वः । महः । मरुतः । एवऽयाव्नः । विष्णोः ।
एषस्य । प्रऽभृथे । हवामहे । हिरण्यऽवर्णान् । ककुहान् । यतऽस्रुचः ।
ब्रह्मण्यन्तः । शंस्यम् । राधः । ईमहे ॥ ११ ॥ ते । दशऽग्वाः । प्रथमाः ।
यज्ञम् । ऊहिरे । ते । नः । हिन्वन्तु । उषसः । विऽउष्टिषु । उषाः ।
न । रामीः । अरुणैः । अप । ऊर्णुते । महः । ज्योतिषा । शुचता ।
गोऽअर्णसा ॥ १२ ॥ ते । क्षोणीभिः । अरुणेभिः । न । अञ्जिऽभिः ।
रुद्राः । ऋतस्य । सदनेषु । ववृधुः । निऽमेघमानाः । अत्येन । पाजसा ।
सुऽचन्द्रम् । वर्णम् । दधिरे । सुऽपेशसम् ॥ १३ ॥ तान् । इयानः ।
महि । वरूथम् । ऊतये । उप । घ । इत् । एना । नमसा । गृणीमसि ।
त्रितः । न । यान् । पञ्च । होतॄन् । अभिष्टये । आऽववर्तत् । अवरान् ।
चक्रिया । अवसे ॥ १४ ॥ यया । रध्रम् । पारयथ । अति । अंहः ।
यया । निदः । मुञ्चथ । वन्दितारम् । अर्वाची । सा । मरुतः । या ।
वः । ऊतिः । ओ इति । सु । वाश्राऽइव । सुऽमतिः । जिगातु ॥ १५ ॥

II. 35.

उप । ईम् । असृक्षि । वाजऽयुः । वचस्याम् । चनः । दधीत ।
नाद्यः । गिरः । मे । अपाम् । नपात् । आशुऽहेमा । कुवित् । सः ।
सुऽपेशसः । करति । जोषिषत् । हि ॥ १ ॥ इमम् । सु । अस्मै । हृदः ।
आ । सुऽतष्टम् । मन्त्रम् । वोचेम । कुवित् । अस्य । वेदत् । अपाम् ।
नपात् । असुर्यस्य । मह्ना । विश्वानि । अर्यः । भुवना । जजान ॥ २ ॥
सम् । अन्याः । यन्ति । उप । यन्ति । अन्याः । समानम् । ऊर्वम् ।
नद्यः । पृणन्ति । तम् । ऊँ इति । शुचिम् । शुचयः । दीदिऽवांसम् ।
अपाम् । नपातम् । परि । तस्थुः । आपः ॥ ३ ॥ तम् । अस्मेराः ।

युवतयः । युवानम् । मर्मृज्यमानाः । परि । यन्ति । आपः । सः ।
शुक्रेभिः । शिक्वऽभिः । रेवत् । अस्मे इति । दीदाय । अनिध्मः । घृतऽ-
निर्निक् । अप्ऽसु ॥ ४ ॥ अस्मै । तिस्रः । अव्यथ्याय । नारीः । देवाय ।
देवीः । दिधिषन्ति । अन्नम् । कृताःऽइव । उप । हि । प्रऽसर्स्रे । अप्ऽ-
सु । सः । पीयूषम् । धयति । पूर्वऽसूनाम् ॥ ५ ॥ अश्वस्य । अत्र ।
जनिम । अस्य । च । स्वः । द्रुहः । रिषः । सम्ऽपृचः । पाहि । सूरीन् ।
आमासु । पूर्षु । परः । अप्रऽमृष्यम् । न । अरातयः । वि । नशन् ।
न । अनृतानि ॥ ६ ॥ स्वे । आ । दमे । सुऽदुघा । यस्य । धेनुः ।
स्वधाम् । पीपाय । सुऽभु । अन्नम् । अत्ति । सः । अपाम् । नपात् ।
ऊर्जयन् । अप्ऽसु । अन्तः । वसुऽदेयाय । विधते । वि । भाति ॥७॥
यः । अप्ऽसु । आ । शुचिना । दैव्येन । ऋतऽवा । अजस्रः । उर्विया ।
विऽभाति । वयाः । इत् । अन्या । भुवनानि । अस्य । प्र । जायन्ते ।
वीरुधः । च । प्रऽजाभिः ॥८॥ अपाम् । नपात् । आ । हि । अस्थात् ।
उपऽस्थम् । जिह्मानाम् । ऊर्ध्वः । विऽद्युतम् । वसानः । तस्य । ज्येष्ठम् ।
महिमानम् । वहन्तीः । हिरण्यऽवर्णाः । परि । यन्ति । यह्वीः ॥ ९ ॥
हिरण्यऽरूपः । सः । हिरण्यऽसंदृक् । अपाम् । नपात् । सः । इत् । ऊँ
इति । हिरण्यऽवर्णः । हिरण्ययात् । परि । योनेः । निऽसद्य । हिरण्यऽ-
दाः । ददति । अन्नम् । अस्मै ॥ १० ॥ तत् । अस्य । अनीकम् । उत ।
चारु । नाम । अपीच्यम् । वर्धते । नप्तुः । अपाम् । यम् । इन्धते । युव-
तयः । सम् । इत्था । हिरण्यऽवर्णम् । घृतम् । अन्नम् । अस्य ॥ ११ ॥
अस्मै । बहूनाम् । अवमाय । सख्ये । यज्ञैः । विधेम । नमसा । हविः-
ऽभिः । सम् । सानु । मार्ज्मि । दिधिषामि । बिल्मैः । दधामि । अन्नैः ।

परि । वन्दे । ऋक्ऽभिः ॥ १२ ॥ सः । ईम् । वृषा । अजनयत् ।
तासु । गर्भम् । सः । ईम् । शिशुः । धयति । तम् । रिहन्ति । सः ।
अपाम् । नपात् । अनभिम्लातऽवर्णः । अन्यस्यऽइव । इह । तन्वा ।
विवेष ॥ १३ ॥ अस्मिन् । पदे । परमे । तस्थिऽवांसम् । अध्वस्मऽभिः ।
विश्वहा । दीदिऽवांसम् । आपः । नप्त्रे । घृतम् । अन्नम् । वहन्तीः ।
स्वयम् । अत्कैः । परि । दीयन्ति । यह्वीः ॥ १४ ॥ अयांसम् । अग्ने ।
सुऽक्षितिम् । जनाय । अयांसम् । ऊँ इति । मघवत्ऽभ्यः । सुऽवृक्तिम् ।
विश्वम् । तत् । भद्रम् । यत् । अवन्ति । देवाः । बृहत् । वदेम । विदथे ।
सुऽवीराः ॥ १५ ॥

II. 36.

तुभ्यम् । हिन्वानः । वसिष्ट । गाः । अपः । अधुक्षन् । सीम् ।
अविऽभिः । अद्रिऽभिः । नरः । पिब । इन्द्र । स्वाहा । प्रऽहुतम् ।
वषट्ऽकृतम् । होत्रात् । आ । सोमम् । प्रथमः । यः । ईशिषे ॥ १ ॥
यज्ञैः । सम्ऽमिश्लाः । पृषतीभिः । ऋष्टिऽभिः । यामन् । शुभ्रासः ।
अञ्जिषु । प्रियाः । उत । आऽसद्य । बर्हिः । भरतस्य । सूनवः । पोत्रात् ।
आ । सोमम् । पिबत । दिवः । नरः ॥ २ ॥ अमाऽइव । नः । सुऽ-
हवाः । आ । हि । गन्तन । हि । बर्हिषि । सदतन । रणिष्टन । अथ ।
मन्दस्व । जुजुषाणः । अन्धसः । त्वष्टः । देवेभिः । जनिऽभिः । सुमत्ऽ-
गणः ॥ ३ ॥ आ । वक्षि । देवान् । इह । विप्र । यक्षि । च । उशन् ।
होतः । नि । सद । योनिषु । त्रिषु । प्रति । वीहि । प्रऽस्थितम् ।
सोम्यम् । मधु । पिब । आग्नीध्रात् । तव । भागस्य । तृप्णुहि ॥ ४ ॥
एषः । स्यः । ते । तन्वः । नृम्णऽवर्धनः । सहः । ओजः । प्रऽदिवि ।

बाह्वोः । हितः । तुभ्यम् । सुतः । मघऽवन् । तुभ्यम् । आऽभृतः । त्वम् । अस्य । ब्राह्मणात् । आ । तृपत् । पिब ॥ ५॥ जुषेथाम् । यज्ञम् । बोधतम् । हवस्य । मे । सत्तः । होता । निऽविदः । पूर्व्याः । अनु । अच्छ । राजाना । नमः । एति । आऽवृतम् । प्रऽशास्त्रात् । आ । पिबतम् । सोम्यम् । मधु ॥ ६ ॥

II. 37.

मन्दस्व । होत्रात् । अनु । जोषम् । अन्धसः । अध्वर्यवः । सः । पूर्णाम् । वष्टि । आऽसिचम् । तस्मै । एतम् । भरत । तत्ऽवशः । ददिः । होत्रात् । सोमम् । द्रविणःऽदः । पिब । ऋतुऽभिः ॥ १ ॥ यम् । ऊँ इति । पूर्वम् । अहुवे । तम् । इदम् । हुवे । सः । इत् । ऊँ इति । हव्यः । ददिः । यः । नाम । पत्यते । अध्वर्युऽभिः । प्रऽस्थितम् । सोम्यम् । मधु । पोत्रात् । सोमम् । द्रविणःऽदः । पिब । ऋतुऽभिः ॥ २ ॥ मेद्यन्तु । ते । वह्नयः । येभिः । ईयसे । अरिषण्यन् । वीळयस्व । वनस्पते । आऽयूय । धृष्णो इति । अभिऽगूर्य । त्वम् । नेष्ट्रात् । सोमम् । द्रविणःऽदः । पिब । ऋतुऽभिः ॥ ३ ॥ अपात् । होत्रात् । उत । पोत्रात् । अमत्त । उत । नेष्ट्रात् । अजुषत । प्रयः । हितम् । तुरीयम् । पात्रम् । अमृक्तम् । अमर्त्यम् । द्रविणःऽदाः । पिबतु । द्राविणःऽदसः ॥ ४ ॥ अर्वाञ्चम् । अद्य । यय्यम् । नृऽवाहनम् । रथम् । युञ्जाथाम् । इह । वाम् । विऽमोचनम् । पृङ्क्तम् । हवींषि । मधुना । आ । हि । कम् । गतम् । अथ । सोमम् । पिबतम् । वाजिनीवसू इति वाजिनीऽवसू ॥ ५ ॥ जोषि । अग्ने । समऽइधम् । जोषि । आऽहुतिम् । जोषि । ब्रह्म । जन्यम् । जोषि । सुऽस्तुतिम् । विश्वेभिः । विश्वान् । ऋतुना । वसो इति । महः । उशन् । देवान् । उशतः । पायय । हविः ॥ ६ ॥

II. 38.

उत् । ऊँ इति॑ । स्यः । देवः । सविता । सवाय । शश्वत्ऽतमम् ।
तत्ऽअपाः । वह्निः । अस्थात् । नूनम् । देवेभ्यः । वि । हि । धाति ।
रत्नम् । अथ । आ । अभजत् । वीतिऽहोत्रम् । स्वस्तौ ॥ १ ॥ विश्वस्य ।
हि । श्रुष्टये । देवः । ऊर्ध्वः । प्र । बाहवा । पृथुऽपाणिः । सिसर्ति ।
आपः । चित् । अस्य । व्रते । आ । निऽमृग्राः । अयम् । चित् । वातः ।
रमते । परिऽज्मन् ॥ २ ॥ आशुऽभिः । चित् । यान् । वि । मुचाति ।
नूनम् । अरीरमत् । अतमानम् । चित् । एतोः । अह्यर्षूणाम् । चित् । नि ।
अयान् । अविष्याम् । अनु । व्रतम् । सवितुः । मोकी । आ । अगात् ॥ ३ ॥
पुनरिति । सम् । अव्यत् । विऽततम् । वयन्ती । मध्या । कर्तोः । नि ।
अधात् । शक्म । धीरः । उत् । सम्ऽहाय । अस्थात् । वि । ऋतून् ।
अदर्धः । अरमतिः । सविता । देवः । आ । अगात् ॥ ४ ॥ नाना ।
ओकांसि । दुर्यः । विश्वम् । आयुः । वि । तिष्ठते । प्रऽभवः । शोकः ।
अग्नेः । ज्येष्ठम् । माता । सूनवे । भागम् । आ । अधात् । अनु । अस्य ।
केतम् । इषितम् । सवित्रा ॥ ५ ॥ सम्ऽआववर्ति । विऽस्थितः । जिगीषुः ।
विश्वेषाम् । कामः । चरताम् । अमा । अभूत् । शश्वान् । अपः । विऽ-
कृतम् । हित्वी । आ । अगात् । अनु । व्रतम् । सवितुः । दैव्यस्य ॥ ६ ॥
त्वया । हितम् । अप्यम् । अप्ऽसु । भागम् । धन्व । अनु । आ । मृग-
यसः । वि । तस्थुः । वनानि । विऽभ्यः । नकिः । अस्य । तानि ।
व्रता । देवस्य । सवितुः । मिनन्ति ॥ ७ ॥ यात्ऽराध्यम् । वरुणः ।
योनिम् । अप्यम् । अनिऽशितम् । निऽमिषि । जर्भुराणः । विश्वः ।
मार्ताण्डः । व्रजम् । आ । पशुः । गात् । स्थऽशः । जन्मानि । सविता ।

वि । आ । अकरित्यकः ॥ ८ ॥ न । यस्य । इन्द्रः । वरुणः । न ।
मित्रः । व्रतम् । अर्यमा । न । मिनन्ति । रुद्रः । न । अरातयः । तम् ।
इदम् । स्वस्ति । हुवे । देवम् । सवितारम् । नमःऽभिः ॥ ९ ॥ भगम् ।
धियम् । वाजयन्तः । पुरम्ऽधिम् । नराशंसः । ग्नाःपतिः । नः । अव्याः ।
आऽअये । वामस्य । सम्ऽगथे । रयीणाम् । प्रियाः । देवस्य । सवितुः ।
स्याम ॥ १० ॥ अस्मभ्यम् । तत् । दिवः । अत्ऽभ्यः । पृथिव्याः ।
त्वया । दत्तम् । काम्यम् । राधः । आ । गात् । शम् । यत् । स्तोतृऽ-
भ्यः । आपये । भवाति । उरुऽशंसाय । सवितः । जरित्रे ॥ ११ ॥

II. 39

ग्रावाणाऽइव । तत् । इत् । अर्थम् । जरेथे इति । गृध्राऽइव । वृक्षम् ।
निधिऽमन्तम् । अच्छ । ब्रह्माणाऽइव । विदथे । उक्थऽशसा । दूताऽइव ।
हव्या । जन्या । पुरुऽत्रा ॥ १ ॥ प्रातःऽयावाना । रथ्याऽइव । वीरा ।
अजाऽइव । यमा । वरम् । आ । सचेथे इति । मेने इवेति मेनेऽइव ।
तन्वा । शुम्भमाने इति । दम्पतीइवेति दम्पतीऽइव । क्रतुऽविदा । जनेषु ॥२॥
शृङ्गाऽइव । नः । प्रथमा । गन्तम् । अर्वाक् । शफौऽइव । जर्भुराणा ।
तरःऽभिः । चक्रवाकाऽइव । प्रति । वस्तोः । उस्रा । अर्वाञ्चा । यातम् ।
रथ्याऽइव । शक्रा ॥ ३ ॥ नावाऽइव । नः । पारयतम् । युगाऽइव ।
नभ्याऽइव । नः । उपधी इवेत्युपधीऽइव । प्रधी इवेति प्रधीऽइव ।
श्वानाऽइव । नः । अरिषण्या । तनूनाम् । खृगलाऽइव । विऽस्रसः ।
पातम् । अस्मान् ॥ ४ ॥ वाताऽइव । अजुर्या । नद्याऽइव । रीतिः ।
अक्षी इवेत्यक्षी इव । चक्षुषा । आ । यातम् । अर्वाक् । हस्तौऽइव ।
तन्वे । शम्ऽभविष्ठा । पादाऽइव । नः । नयतम् । वस्यः । अच्छ ॥५॥

ओष्ठौऽइव । मधु । आस्ने । वदन्ता । स्तनौऽइव । पिप्यतम् । जीवसे । नः । नासाऽइव । नः । तन्वः । रक्षितारा । कर्णौऽइव । सुऽश्रुता । भूतम् । अस्मे इति ॥ ६ ॥ हस्ताऽइव । शक्तिम् । अभि । संददी इति सम्ऽददी । नः । क्षामऽइव । नः । सम् । अजतम् । रजांसि । इमाः । गिरः । अश्विना । युष्मऽयन्तीः । क्ष्णोत्रेणऽइव । स्वऽधितिम् । सम् । शिशीतम् ॥ ७ ॥ एतानि । वाम् । अश्विना । वर्धनानि । ब्रह्म । स्तोमम् । गृत्सऽमदासः । अक्रन् । तानि । नरा । जुजुषाणा । उप । यातम् । बृहत् । वदेम । विदथे । सुऽवीराः ॥ ८ ॥

II. 40.

सोमापूषणा । जनना । रयीणाम् । जनना । दिवः । जनना । पृथिव्याः । जातौ । विश्वस्य । भुवनस्य । गोपौ । देवाः । अकृण्वन् । अमृतस्य । नाभिम् ॥ १ ॥ इमौ । देवौ । जायमानौ । जुषन्त । इमौ । तमांसि । गूहताम् । अजुष्टा । आभ्याम् । इन्द्रः । पक्वम् । आमासु । अन्तः । इति । सोमापूषऽभ्याम् । जनत् । उस्रियासु ॥ २ ॥ सोमापूषणा । रजसः । विऽमानम् । सप्तऽचक्रम् । रथम् । अविश्वऽमिन्वम् । विषुऽवृतम् । मनसा । युज्यमानम् । तम् । जिन्वथः । वृषणा । पञ्चऽरश्मिम् ॥ ३ ॥ दिवि । अन्यः । सदनम् । चक्रे । उच्चा । पृथिव्याम् । अन्यः । अधि । अन्तरिक्षे । तौ । अस्मभ्यम् । पुरुऽवारम् । पुरुऽक्षुम् । रायः । पोषम् । वि । स्यताम् । नाभिम् । अस्मे इति ॥ ४ ॥ विश्वानि । अन्यः । भुवना । जजान । विश्वम् । अन्यः । अभिऽचक्षाणः । एति । सोमापूषणौ । अवतम् । धियम् । मे । युवाभ्याम् । विश्वाः । पृतनाः । जयेम ॥५॥ धियम् । पूषा । जिन्वतु । विश्वम्ऽइन्वः । रयिम् । सोमः । रयिऽपतिः ।

दधातु । अवतु । देवी । अदितिः । अनर्वा । बृहत् । वदेम । विदथे । सुऽवीराः ॥ ६ ॥

II. 41.

वायो इति । ये । ते । सहस्रिणः । रथासः । तेभिः । आ । गहि । नियुत्वान् । सोमऽपीतये ॥ १ ॥ नियुत्वान् । वायो इति । आ । गहि । अयम् । शुक्रः । अयामि । ते । गन्ता । असि । सुन्वतः । गृहम् ॥२॥ शुक्रस्य । अद्य । गोऽआशिरः । इन्द्रवायू इति । नियुत्वतः । आ । यातम् । पिबतम् । नरा ॥ ३ ॥ अयम् । वाम् । मित्रावरुणा । सुतः । सोमः । ऋतऽवृधा । मम । इत् । इह । श्रुतम् । हवम् ॥ ४ ॥ राजानौ । अनभिऽद्रुहा । ध्रुवे । सदसि । उत्ऽतमे । सहस्रऽस्थूणे । आसाते इति ॥५॥ ता । सम्ऽराजा । घृतासुती इति घृतऽआसुती । आदित्या । दानुनः । पती इति । सचेते इति । अनवऽह्वरम् ॥ ६ ॥ गोऽमत् । ऊँ इति । सु । नासत्या । अश्वऽवत् । यातम् । अश्विना । वर्तिः । रुद्रा । नृऽपाय्यम् ॥ ७ ॥ न । यत् । परः । न । अन्तरः । आऽदधर्षत् । वृषण्वसू इति वृषण्ऽवसू । दुःऽशंसः । मर्त्यः । रिपुः ॥ ८ ॥ ता । नः । आ । वोळ्हम् । अश्विना । रयिम् । पिशङ्गऽसंदृशम् । धिष्ण्या । वरिवःऽविदम् ॥ ९ ॥ इन्द्रः । अङ्ग । महत् । भयम् । अभि । सत् । अप । चुच्यवत् । सः । हि । स्थिरः । विऽचर्षणिः ॥ १० ॥ इन्द्रः । च । मृळयाति । नः । न । नः । पश्चात् । अघम् । नशत् । भद्रम् । भवाति । नः । पुरः ॥ ११ ॥ इन्द्रः । आशाभ्यः । परि । सर्वाभ्यः । अभयम् । करत् । जेता । शत्रून् । विऽचर्षणिः ॥ १२ ॥ विश्वे । देवासः । आ । गत । शृणुत । मे । इमम् । हवम् । आ । इदम् । बर्हिः । नि ।

सीदत ॥ १३ ॥ तीव्राः । वः । मधुऽमान् । अयम् । शुनऽहोत्रेषु । मत्सरः । एतम् । पिबत । काम्यम् ॥ १४ ॥ इन्द्रऽज्येष्ठाः । मरुत्ऽगणाः । देवासः । पूषऽरातयः । विश्वे । मम । श्रुत । हवम् ॥ १५ ॥ अम्बिऽतमे । नदीऽतमे । देविऽतमे । सरस्वति । अप्रशस्ताःऽइव । स्मसि । प्रऽशस्तिम् । अम्ब । नः । कृधि ॥ १६ ॥ त्वे इति । विश्वा । सरस्वति । श्रिता । आयूंषि । देव्याम् । शुनऽहोत्रेषु । मत्स्व । प्रऽजाम् । देवि । दिदिड्ढि । नः ॥ १७ ॥ इमा । ब्रह्म । सरस्वति । जुषस्व । वाजिनीऽवति । या । ते । मन्म । गृत्सऽमदाः । ऋतऽवरि । प्रिया । देवेषु । जुह्वति ॥ १८ ॥ प्र । इताम् । यज्ञस्य । शम्ऽभुवा । युवाम् । इत् । आ । वृणीमहे । अग्निम् । च । हव्यऽवाहनम् ॥ १९ ॥ द्यावा । नः । पृथिवी इति । इमम् । सिध्रम् । अद्य । दिविऽस्पृशम् । यज्ञम् । देवेषु । यच्छताम् ॥ २० ॥ आ । वाम् । उपऽस्थम् । अद्रुहा । देवाः । सीदन्तु । यज्ञियाः । इह । अद्य । सोमऽपीतये ॥ २१ ॥

II. 42.

कनिक्रदत् । जनुषम् । प्रऽब्रुवाणः । इयर्ति । वाचम् । अरिताऽइव । नावम् । सुऽमङ्गलः । च । शकुने । भवासि । मा । त्वा । का । चित् । अभिऽभा । विश्व्या । विदत् ॥ १ ॥ मा । त्वा । श्येनः । उत् । वधीत् । मा । सुऽपर्णः । मा । त्वा । विदत् । इषुऽमान् । वीरः । अस्ता । पित्र्याम् । अनु । प्रऽदिशम् । कनिक्रदत् । सुऽमङ्गलः । भद्रऽवादी । वद । इह ॥ २ ॥ अव । क्रन्द । दक्षिणतः । गृहाणाम् । सुऽमङ्गलः । भद्रऽवादी । शकुन्ते । मा । नः । स्तेनः । ईशत । मा । अघऽशंसः । बृहत् । वदेम । विदथे । सुऽवीराः ॥ ३ ॥

II. 43.

प्रऽदक्षिणित् । अभि । गृणन्ति । कारवः । वयः । वदन्तः । ऋतुऽथा । शकुन्तयः । उभे इति । वाचौ । वदति । सामगाःऽइव । गायत्रम् । च । त्रैस्तुभम् । च । अनु । राजति ॥ १ ॥ उद्गाताऽइव । शकुने । साम । गायसि । ब्रह्मपुत्रःऽइव । सवनेषु । शंससि । वृषाऽइव । वाजी । शिशुऽमतीः । अपिऽइत्य । सर्वतः । नः । शकुने । भद्रम् । आ । वद । विश्वतः । नः । शकुने । पुण्यम् । आ । वद ॥ २ ॥ आऽवदन् । त्वम् । शकुने । भद्रम् । आ । वद । तूष्णीम् । आसीनः । सुऽमतिम् । चिकिद्धि । नः । यत् । उत्ऽपतन् । वदसि । कर्करिः । यथा । बृहत् । वदेम । विदथे । सुऽवीराः ॥ ३ ॥

III. 1.

सोमस्य । मा । तवसम् । वक्षि । अग्ने । वह्निम् । चकर्थ । विदथे । यजध्यै । देवान् । अच्छ । दीद्यत् । युञ्जे । अद्रिम् । शम्ऽआये । अग्ने । तन्वम् । जुषस्व ॥ १ ॥ प्राञ्चम् । यज्ञम् । चकृम । वर्धताम् । गीः । समित्ऽभिः । अग्निम् । नमसा । दुवस्यन् । दिवः । शशासुः । विदथा । कवीनाम् । गृत्साय । चित् । तवसे । गातुम् । ईषुः ॥ २ ॥ मयः । दधे । मेधिरः । पूतऽदक्षः । दिवः । सुऽबन्धुः । जनुषा । पृथिव्याः । अविन्दन् । ऊँ इति । दर्शतम् । अप्ऽसु । अन्तः । देवासः । अग्निम् । अपसि । स्वसृणाम् ॥ ३ ॥ अवर्धयन् । सुऽभगम् । सप्त । यह्वीः । श्वेतम् । जज्ञानम् । अरुषम् । महिऽत्वा । शिशुम् । न । जातम् । अभि । आरुः । अश्वाः । देवासः । अग्निम् । जनिमन् । वपुष्यन् ॥ ४ ॥ शुक्रेभिः । अङ्गैः । रजः । आऽततन्वान् । क्रतुम् । पुनानः । कविऽभिः । पवित्रैः ।

शोचिः । वसानः । परि । आयुः । अपाम् । श्रियः । मिमीते । बृहतीः ।
अनूनाः ॥ ५ ॥ वव्राजे । सीम् । अनदतीः । अदब्धाः । दिवः । यह्वीः ।
अवसानाः । अनग्नाः । सनाः । अत्र । युवतयः । सऽयोनीः । एकम् ।
गर्भम् । दधिरे । सप्त । वाणीः ॥ ६ ॥ स्तीर्णाः । अस्य । सम्ऽहतः ।
विश्वऽरूपाः । घृतस्य । योनौ । स्रवथे । मधूनाम् । अस्थुः । अत्र ।
धेनवः। । पिन्वमानाः । मही इति । दस्मस्य । मातरा । समीची इति
सम्ऽईची ॥ ७ ॥ बभ्राणः । सूनो इति । सहसः । वि । अद्यौत् ।
दधानः । शुक्रा । रभसा । वपूंषि । श्चोतन्ति । धाराः । मधुनः । घृतस्य ।
वृषा । यत्र । ववृधे । काव्येन ॥ ८ ॥ पितुः । चित् । ऊधः । जनुषा ।
विवेद । वि । अस्य । धाराः । असृजत् । वि । धेनाः । गुहा । चरन्तम् ।
सखिऽभिः । शिवेभिः । दिवः । यह्वीभिः । न । गुहा । बभूव ॥ ९ ॥
पितुः । च । गर्भम् । जनितुः । च । बभ्रे । पूर्वीः । एकः । अधयत् ।
पीप्यानाः । वृष्णे । सपत्नी इति सऽपत्नी । शुचये । सबन्धू इति सऽ-
बन्धू । उभे इति । अस्मै । मनुष्ये३ इति । नि । पाहि ॥ १० ॥ उरौ ।
महान् । अनिऽबाधे । ववर्ध । आपः । अग्निम् । यशसः । सम् । हि ।
पूर्वीः । ऋतस्य । योनौ । अशयत् । दमूनाः । जामीनाम् । अग्निः ।
अपसि । स्वसॄणाम् ॥ ११ ॥ अक्रः । न । बभ्रिः । सम्ऽइथे । मही-
नाम् । दिदृक्षेयः । सूनवे । भाःऽऋजीकः । उत् । उस्रियाः । जनिता ।
यः । जजान । अपाम् । गर्भः । नृऽतमः । यह्वः । अग्निः ॥ १२ ॥
अपाम् । गर्भम् । दर्शतम् । ओषधीनाम् । वना । जजान । सुऽभगा ।
विऽरूपम् । देवासः । चित् । मनसा । सम् । हि । जग्मुः । पनिष्ठम् ।
जातम् । तवसम् । दुवस्यन् ॥ १३ ॥ बृहन्तः । इत् । भानवः । भाःऽ-

ऋञ्जीकम् । अग्निम् । सचन्त । विऽद्युतः । न । शुक्राः । गुहाऽइव ।
वृद्धम् । सदसि । स्वे । अन्तः । अपारे । ऊर्वे । अमृतम् । दुहानाः ॥१४॥
ईळे । च । त्वा । यजमानः । हविःऽभिः । ईळे । सखिऽत्वम् । सुऽ-
मतिम् । निऽकामः । देवैः । अवः । मिमीहि । सम् । जरित्रे । रक्ष ।
च । नः । दम्येभिः । अनीकैः ॥ १५ ॥ उपऽक्षेतारः । तव । सुऽ-
प्रनीते । अग्ने । विश्वानि । धन्या । दधानाः । सुऽरेतसा । श्रवसा ।
तुञ्जमानाः । अभि । स्याम । पृतनाऽयून् । अदेवान् ॥ १६ ॥ आ ।
देवानाम् । अभवः । केतुः । अग्ने । मन्द्रः । विश्वानि । काव्यानि ।
विद्वान् । प्रति । मर्तान् । अवासयः । दमूनाः । अनु । देवान् । रथिरः ।
यासि । साधन् ॥ १७ ॥ नि । दुरोणे । अमृतः । मर्त्यानाम् । राजा ।
ससाद । विदथानि । साधन् । घृतऽप्रतीकः । उर्विया । वि । अद्यौत् ।
अग्निः । विश्वानि । काव्यानि । विद्वान् ॥ १८ ॥ आ । नः । गहि ।
सख्येभिः । शिवेभिः । महान् । महीभिः । ऊतिऽभिः । सरण्यन् । अस्मे
इति । रयिम् । बहुलम् । सम्ऽतरुत्रम् । सुऽवाचम् । भागम् । यशसम् ।
कृधि । नः ॥ १९ ॥ एता । ते । अग्ने । जनिम । सनानि । प्र । पूर्व्याय ।
नूतनानि । वोचम् । महान्ति । वृष्णे । सवना । कृता । इमा । जन्मन्ऽ-
जन्मन् । निऽहितः । जातऽवेदाः ॥ २० ॥ जन्मन्ऽजन्मन् । निऽहितः ।
जातऽवेदाः । विश्वामित्रेभिः । इध्यते । अजस्रः । तस्य । वयम् । सुऽ-
मतौ । यज्ञियस्य । अपि । भद्रे । सौमनसे । स्याम ॥ २१ ॥ इमम् ।
यज्ञम् । सहसाऽवन् । त्वम् । नः । देवऽत्रा । धेहि । सुक्रतो इति सुऽ-
क्रतो । रराणः । प्र । यंसि । होतः । बृहतीः । इषः । नः । अग्ने । महि । द्रवि-
णम् । आ । यजस्व ॥ २२ ॥ इळाम् । अग्ने । पुरुऽदंसम् । सनिम् ।

गोः । शश्वत्ऽतमम् । हवमानाय । साध । स्यात् । नः । सूनुः । तनयः ।
विजाऽवा । अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इति ॥ २३ ॥

III. 2.

वैश्वानराय । धिषणाम् । ऋतऽवृधे । घृतम् । न । पूतम् । अग्नये ।
जनामसि । द्विता । होतारम् । मनुषः । च । वाघतः । धिया । रथम् ।
न । कुलिशः । सम् । ऋण्वति ॥ १ ॥ सः । रोचयत् । जनुषा । रोदसी
इति । उभे इति । सः । मात्रोः । अभवत् । पुत्रः । ईड्यः । हव्यऽवाट् ।
अग्निः । अजरः । चनःऽहितः । दुःऽदभः । विशाम् । अतिथिः । विभाऽ-
वसुः ॥ २ ॥ क्रत्वा । दक्षस्य । तरुषः । विऽधर्मणि । देवासः । अग्निम् ।
जनयन्त । चित्तिऽभिः । रुरुचानम् । भानुना । ज्योतिषा । महाम् ।
अत्यम् । न । वाजम् । सनिष्यन् । उप । ब्रुवे ॥ ३ ॥ आ । मन्द्रस्य ।
सनिष्यन्तः । वरेण्यम् । वृणीमहे । अह्रयम् । वाजम् । ऋग्मियम् ।
रातिम् । भृगूणाम् । उशिजम् । कविऽक्रतुम् । अग्निम् । राजन्तम् ।
दिव्येन । शोचिषा ॥ ४ ॥ अग्निम् । सुम्नाय । दधिरे । पुरः । जनाः ।
वाजऽश्रवसम् । इह । वृक्तऽबर्हिषः । यतऽस्रुचः । सुऽरुचम् । विश्वऽ-
देव्यम् । रुद्रम् । यज्ञानाम् । साधत्ऽइष्टिम् । अपसाम् ॥ ५ ॥ पावकऽ-
शोचे । तव । हि । क्षयम् । परि । होतः । यज्ञेषु । वृक्तऽबर्हिषः ।
नरः । अग्ने । दुवः । इच्छमानासः । आप्यम् । उप । आसते ।
द्रविणम् । धेहि । तेभ्यः ॥ ६ ॥ आ । रोदसी इति । अपृणत् । आ ।
स्वः । महत् । जातम् । यत् । एनम् । अपसः । अधारयन् । सः ।
अध्वराय । परि । नीयते । कविः । अत्यः । न । वाजऽसातये । चनःऽ-
हितः ॥ ७ ॥ नमस्यत । हव्यऽदातिम् । सुऽअध्वरम् । दुवस्यत । दम्यम् ।

जातऽवेदसम् । रथीः । ऋतस्य । बृहतः । विऽचर्षणिः । अग्निः । देवानाम् । अभवत् । पुरःऽहितः ॥ ८ ॥ तिस्रः । यह्वस्य । सम्ऽइधः । परिऽज्मनः । अग्नेः । अपुनन् । उशिजः । अमृत्यवः । तासाम् । एकाम् । अदधुः । मर्त्ये । भुजम् । ऊँ इति । लोकम् । ऊँ इति । द्वे इति । उप । जामिम् । ईयतुः ॥ ९ ॥ विशाम् । कविम् । विश्पतिम् । मानुषीः । इषः । सम् । सीम् । अकृण्वन् । स्वऽधितिम् । न । तेजसे । सः । उत्ऽवतः । निऽवतः । याति । वेविषत् । सः । गर्भम् । एषु । भुवनेषु । दीधरत् ॥ १० ॥ सः । जिन्वते । जठरेषु । प्रजज्ञिऽवान् । वृषा । चित्रेषु । नानदत् । न । सिंहः । वैश्वानरः । पृथुऽपाजाः । अमर्त्यः । वसु । रत्ना । दयमानः । वि । दाशुषे ॥ ११ ॥ वैश्वानरः । प्रत्नऽथा । नाकम् । आ । अरुहत् । दिवः । पृष्ठम् । भन्दमानः । सुमन्मऽभिः । सः । पूर्वऽवत् । जनयन् । जन्तवे । धनम् । समानम् । अज्मम् । परि । एति । जागृविः ॥ १२ ॥ ऋतऽवानम् । यज्ञियम् । विप्रम् । उक्थ्यम् । आ । यम् । दधे । मातरिश्वा । दिवि । क्षयम् । तम् । चित्रऽयामम् । हरिऽकेशम् । ईमहे । सुऽदीतिम् । अग्निम् । सुविताय । नव्यसे ॥ १३ ॥ शुचिम् । न । यामन् । इषिरम् । स्वःऽदृशम् । केतुम् । दिवः । रोचनऽस्थाम् । उषःऽबुधम् । अग्निम् । मूर्धानम् । दिवः । अप्रतिऽस्कुतम् । तम् । ईमहे । नमसा । वाजिनम् । बृहत् ॥ १४ ॥ मन्द्रम् । होतारम् । शुचिम् । अद्वयाविनम् । दमूनसम् । उक्थ्यम् । विश्वऽचर्षणिम् । रथम् । न । चित्रम् । वपुषाय । दर्शतम् । मनुःऽहितम् । सदम् । इत् । रायः । ईमहे ॥ १५ ॥

III. 3.

वैश्वानराय । पृथुऽपाजसे । विपः । रत्ना । विधन्त । धरुणेषु ।
गातवे । अग्निः । हि । देवान् । अमृतः । दुवस्यति । अथ । धर्माणि ।
सनता । न । दूदुषत् ॥ १ ॥ अन्तः । दूतः । रोदसी इति । दस्मः ।
ईयते । होता । निऽसत्तः । मनुषः । पुरःऽहितः । क्षयम् । बृहन्तम् ।
परि । भूषति । द्युऽभिः । देवेभिः । अग्निः । इषितः । धियाऽवसुः ॥२॥
केतुम् । यज्ञानाम् । विदथस्य । साधनम् । विप्रासः । अग्निम् । महयन्त ।
चित्तिऽभिः । अपांसि । यस्मिन् । अधि । सम्ऽदधुः । गिरः । तस्मिन् ।
सुम्नानि । यजमानः । आ । चके ॥ ३ ॥ पिता । यज्ञानाम् । असुरः ।
विपःऽचिताम् । विऽमानम् । अग्निः । वयुनम् । च । वाघताम् । आ ।
विवेश । रोदसी इति । भूरिऽवर्पसा । पुरुऽप्रियः । भन्दते । धामऽभिः ।
कविः ॥४॥ चन्द्रम् । अग्निम् । चन्द्रऽरथम् । हरिऽव्रतम् । वैश्वानरम् ।
अप्सुऽसदम् । स्वःऽविदम् । विऽगाहम् । तूर्णिम् । तविषीभिः । आऽ-
वृतम् । भूर्णिम् । देवासः । इह । सुऽश्रियम् । दधुः ॥ ५ ॥ अग्निः ।
देवेभिः । मनुषः । च । जन्तुऽभिः । तन्वानः । यज्ञम् । पुरुऽपेशसम् ।
धिया । रथीः । अन्तः । ईयते । साधदिष्टिऽभिः । जीरः । दमूनाः ।
अभिशस्तिऽचातनः ॥ ६ ॥ अग्ने । जरस्व । सुऽअपत्ये । आयुनि ।
ऊर्जा । पिन्वस्व । सम् । इषः । दिदीहि । नः । वयांसि । जिन्व ।
बृहतः । च । जागृवे । उशिक् । देवानाम् । असि । सुऽक्रतुः ।
विपाम् ॥ ७ ॥ विश्पतिम् । यह्वम् । अतिथिम् । नरः । सदा । यन्ता-
रम् । धीनाम् । उशिजम् । च । वाघताम् । अध्वराणाम् । चेतनम् ।
जातऽवेदसम् । प्र । शंसन्ति । नमसा । जूतिऽभिः । वृधे ॥ ८ ॥

विभाऽवा । देवः । सुऽरणः । परि । क्षितीः । अग्निः । बभूव । शवसा ।
सुमत्ऽरथः । तस्य । व्रतानि । भूरिऽपोषिणः । वयम् । उप । भूषेम ।
दमे । आ । सुवृक्तिऽभिः ॥ ९ ॥ वैश्वानर । तव । धामानि । आ ।
चक्रे । येभिः । स्वःऽवित् । अभवः । विऽचक्षण । जातः । आ ।
अपृणः । भुवनानि । रोदसी इति । अग्ने । ता । विश्वा । परिऽभूः ।
असि । त्मना ॥ १० ॥ वैश्वानरस्य । दंसनाभ्यः । बृहत् । अरिणात् ।
एकः । सुऽअपस्यया । कविः । उभा । पितरा । महयन् । अजायत ।
अग्निः । द्यावापृथिवी इति । भूरिऽरेतसा ॥ ११ ॥

III. 4.

समित्ऽसमित् । सुऽमनाः । बोधि । अस्मे इति । शुचाऽशुचा । सुऽ-
मतिम् । रासि । वस्वः । आ । देव । देवान् । यजथाय । वक्षि । सखा ।
सखीन् । सुऽमनाः । यक्षि । अग्ने ॥ १ ॥ यम् । देवासः । त्रिः ।
अहन् । आऽयजन्ते । दिवेऽदिवे । वरुणः । मित्रः । अग्निः । सः ।
इमम् । यज्ञम् । मधुऽमन्तम् । कृधि । नः । तनूऽनपात् । घृतऽयोनिम् ।
विधन्तम् ॥ २ ॥ प्र । दीधितिः । विश्वऽवारा । जिगाति । होतारम् ।
इळः । प्रथमम् । यजध्यै । अच्छ । नमःऽभिः । वृषभम् । वन्दध्यै । सः ।
देवान् । यक्षत् । इषितः । यजीयान् ॥ ३ ॥ ऊर्ध्वः । वाम् । गातुः ।
अध्वरे । अकारि । ऊर्ध्वा । शोचींषि । प्रऽस्थिता । रजांसि । दिवः ।
वा । नाभा । नि । असादि । होता । स्तृणीमहि । देवऽव्यचाः । वि ।
बर्हिः ॥ ४ ॥ सप्त । होत्राणि । मनसा । वृणानाः । इन्वन्तः । विश्वम् ।
प्रति । यन् । ऋतेन । नृऽपेशसः । विदथेषु । प्र । जाताः । अभि ।
इमम् । यज्ञम् । वि । चरन्त । पूर्वीः ॥ ५ ॥ आ । भन्दमाने इति ।

उषसौ । उपाके इति । उत । स्मयेते इति । तन्वा । विरूपे इति विऽरूपे । यथा । नः । मित्रः । वरुणः । जुजोषत् । इन्द्रः । मरुत्वान् । उत । वा । महःऽभिः ॥ ६ ॥ दैव्या । होतारा । प्रथमा । नि । ऋञ्जे । सप्त । पृक्षासः । स्वधया । मदन्ति । ऋतम् । शंसन्तः । ऋतम् । इत् । ते । आहुः । अनु । व्रतम् । व्रतऽपाः । दीध्यानाः ॥ ७ ॥ आ । भारती । भारतीभिः । सऽजोषाः । इळा । देवैः । मनुष्येभिः । अग्निः । सरस्वती । सारस्वतेभिः । अर्वाक् । तिस्रः । देवीः । बर्हिः । आ । इदम् । सदन्तु ॥ ८ ॥ तत् । नः । तुरीपम् । अध । पोषयित्नु । देव । त्वष्टः । वि । रराणः । स्यस्वेति स्यस्व । यतः । वीरः । कर्मण्यः । सुऽदक्षः । युक्तऽग्रावा । जायते । देवऽकामः ॥ ९ ॥ वनस्पते । अव । सृज । उप । देवान् । अग्निः । हविः । शमिता । सूदयाति । सः । इत् । ऊँ इति । होता । सत्यऽतरः । यजाति । यथा । देवानाम् । जनिमानि । वेद ॥१०॥ आ । याहि । अग्ने । सम्ऽइधानः । अर्वाङ् । इन्द्रेण । देवैः । सऽरथम् । तुरेभिः । बर्हिः । नः । आस्ताम् । अदितिः । सुऽपुत्रा । स्वाहा । देवाः । अमृताः । मादयन्ताम् ॥ ११ ॥

III. 6.

प्रति । अग्निः । उषसः । चेकितानः । अबोधि । विप्रः । पदऽवीः । कवीनाम् । पृथुऽपाजाः । देवयत्ऽभिः । सम्ऽइद्धः । अप । द्वारा । तमसः । वह्निः । आवरित्यावः ॥ १ ॥ प्र । इत् । ऊँ इति । अग्निः । वावृधे । स्तोमेभिः । गीःऽभिः । स्तोतृणाम् । नमस्यः । उक्थैः । पूर्वीः । ऋतस्य । सम्ऽदृशः । चकानः । सम् । दूतः । अद्यौत् । उषसः । विऽरोके ॥ २ ॥ अधायि । अग्निः । मानुषीषु । विक्षु । अपाम् । गर्भः ।

मित्रः । ऋतेन । साधन् । आ । हर्यतः । यजतः । साधुः । अस्थात् । अभूत् । ऊँ इति । विप्रः । हव्यः । मतीनाम् ॥ ३ ॥ मित्रः । अग्निः । भवति । यत् । सम्ऽइद्धः । मित्रः । होता । वरुणः । जातऽवेदाः । मित्रः । अध्वर्युः । इषिरः । दमूनाः । मित्रः । सिन्धूनाम् । उत । पर्वतानाम् ॥ ४ ॥ पाति । प्रियम् । रिपः । अग्रम् । पदम् । वेः । पाति । यह्वः । चरणम् । सूर्यस्य । पाति । नाभा । सप्तऽशीर्षाणम् । अग्निः । पाति । देवानाम् । उपऽमादम् । ऋष्वः ॥ ५ ॥ ऋभुः । चक्रे । ईड्यम् । चारु । नाम । विश्वानि । देवः । वयुनानि । विद्वान् । ससस्य । चर्म । घृतऽवत् । पदम् । वेः । तत् । इत् । अग्निः । रक्षति । अप्रऽयुच्छन् ॥६॥ आ । योनिम् । अग्निः । घृतऽवन्तम् । अस्थात् । पृथुऽप्रगानम् । उशन्तम् । उशानः । दीद्यानः । शुचिः । ऋष्वः । पावकः । पुनःऽपुनः । मातरा । नव्यसी इति । करिति कः ॥ ७ ॥ सद्यः । जातः । ओषधीभिः । ववक्षे । यदि । वर्धन्ति । प्रऽस्वः । घृतेन । आपःऽइव । प्रऽवता । शुम्भमानाः । उरुष्यत् । अग्निः । पित्रोः । उपऽस्थे ॥ ८ ॥ उत् । ऊँ इति । स्तुतः । सम्ऽइधा । यह्वः । अद्यौत् । वर्ष्मन् । दिवः । अधि । नाभा । पृथिव्याः । मित्रः । अग्निः । ईड्यः । मातरिश्वा । आ । दूतः । वक्षत् । यजथाय । देवान् ॥ ९ ॥ उत् । अस्तम्भीत् । सम्ऽइधा । नाकम् । ऋष्वः । अग्निः । भवन् । उत्ऽतमः । रोचनानाम् । यदि । भृगुऽभ्यः । परि । मातरिश्वा । गुहा । सन्तम् । हव्यऽवाहम् । सम्ऽईधे ॥ १० ॥ इळाम् । अग्ने । पुरुऽदंसम् । सनिम् । गोः । शश्वत्ऽतमम् । हवमानाय । साध । स्यात् । नः । सूनुः । तनयः । विजाऽवा । अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इति ॥ ११ ॥

III. 6.

प्र । कारवः । मनना । वच्यमानाः । देवद्रीचीम् । नयत । देवऽयन्तः । दक्षिणाऽवाट् । वाजिनी । प्राची । एति । हविः । भरन्ती । अग्नये । घृताची ॥ १ ॥ आ । रोदसी इति । अपृणाः । जायमानः । उत । प्र । रिक्थाः । अध । नु । प्रयज्यो इति प्रऽयज्यो । दिवः । चित् । अग्ने । महिना । पृथिव्याः । वच्यन्ताम् । ते । वह्नयः । सप्तऽजिह्वाः ॥ २ ॥ द्यौः । च । त्वा । पृथिवी । यज्ञियासः । नि । होतारम् । सादयन्ते । दमाय । यदि । विशः । मानुषीः । देवऽयन्तीः । प्रयस्वतीः । ईळते । शुक्रम् । अर्चिः ॥ ३ ॥ महान् । सधऽस्थे । ध्रुवः । आ । निऽसत्तः । अन्तः । द्यावा । माहिने इति । हर्यमाणः । आस्क्रे इति । सपत्नी इति सऽपत्नी । अजरे इति । अमृक्ते इति । सबर्दुघे इति सबःऽदुघे । उरुऽगायस्य । धेनू इति ॥ ४ ॥ व्रता । ते । अग्ने । महतः । महानि । तव । क्रत्वा । रोदसी इति । आ । ततन्थ । त्वम् । दूतः । अभवः । जायमानः । त्वम् । नेता । वृषभ । चर्षणीनाम् ॥ ५ ॥ ऋतस्य । वा । केशिना । योग्याभिः । घृतऽस्नुवा । रोहिता । धुरि । धिष्व । अथ । आ । वह । देवान् । देव । विश्वान् । सुऽअध्वरा । कृणुहि । जातऽवेदः ॥ ६ ॥ दिवः । चित् । आ । ते । रुचयन्त । रोकाः । उषः । विऽभातीः । अनु । भासि । पूर्वीः । अपः । यत् । अग्ने । उशधक् । वनेषु । होतुः । मन्द्रस्य । पनयन्त । देवाः ॥ ७ ॥ उरौ । वा । ये । अन्तरिक्षे । मदन्ति । दिवः । वा । ये । रोचने । सन्ति । देवाः । ऊमाः । वा । ये । सुऽहवासः । यजत्राः । आऽयेमिरे । रथ्यः । अग्ने । अश्वाः ॥ ८ ॥ आ । एभिः । अग्ने । सऽरथम् ।

याहि । अर्वाङ् । नानाऽरथम् । वा । विऽभवः । हि । अश्वाः । पत्नीऽवतः । त्रिंशतम् । त्रीन् । च । देवान् । अनुऽस्वधम् । आ । वह । मादयस्व ॥ ९ ॥ सः । होता । यस्य । रोदसी इति । चित् । उर्वी इति । यज्ञम्ऽयज्ञम् । अभि । वृधे । गृणीतः । प्राची इति । अध्वराऽइव । तस्थतुः । सुमेके इति सुऽमेके । ऋतवरी इत्यृतऽवरी । ऋतऽजातस्य । सत्ये इति ॥ १० ॥ इळाम् । अग्ने । पुरुऽदंसम् । सनिम् । गोः । शश्वत्ऽतमम् । हवमानाय । साध । स्यात् । नः । सूनुः । तनयः । विजाऽवा । अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इति ॥ ११ ॥

III. 7.

प्र । ये । आरुः । शितिऽपृष्ठस्य । धासेः । आ । मातरा । विविशुः । सप्त । वाणीः । परिऽचिता । पितरा । सम् । चरेते इति । प्र । सस्राते इति । दीर्घम् । आयुः । प्रऽयक्षे ॥ १ ॥ दिवक्षसः । धेनवः । वृष्णः । अश्वाः । देवीः । आ । तस्थौ । मधुऽमत् । वहन्तीः । ऋतस्य । त्वा । सदसि । क्षेमऽयन्तम् । परि । एका । चरति । वर्तनिम् । गौः ॥ २ ॥ आ । सीम् । अरोहत् । सुऽयमाः । भवन्तीः । पतिः । चिकित्वान् । रयिऽवित् । रयीणाम् । प्र । नीलऽपृष्ठः । अतसस्य । धासेः । ताः । अवासयत् । पुरुधऽप्रतीकः ॥ ३ ॥ महि । त्वाष्ट्रम् । ऊर्जयन्तीः । अजुर्यम् । स्तभुऽयमानम् । वहतः । वहन्ति । वि । अङ्गेभिः । दिद्युतानः । सधऽस्थे । एकाम्ऽइव । रोदसी इति । आ । विवेश ॥ ४ ॥ जानन्ति । वृष्णः । अरुषस्य । शेवम् । उत । ब्रध्नस्य । शासने । रणन्ति । दिवःऽरुचः । सुऽरुचः । रोचमानाः । इळाः । येषाम् । गण्या । माहिना । गीः ॥ ५ ॥ उतो इति । पितृऽभ्याम् । प्रऽविदा । अनु । घोषम् ।

महः । महत्ऽभ्याम् । अनयन्त । शूषम् । उक्षा । ह । यत्र । परि ।
धानम् । अक्तोः । अनु । स्वम् । धाम । जरितुः । ववक्ष ॥ ६ ॥
अध्वर्युऽभिः । पञ्चऽभिः । सप्त । विप्राः । प्रियम् । रक्षन्ते । निऽहितम् ।
पदम् । वेरिति वेः । प्राञ्चः । मदन्ति । उक्षणः । अजुर्याः । देवाः ।
देवानाम् । अनु । हि । व्रता । गुरिति गुः ॥ ७ ॥ दैव्या । होतारा ।
प्रथमा । नि । ऋञ्जे । सप्त । पृक्षासः । स्वधया । मदन्ति । ऋतम् ।
शंसन्तः । ऋतम् । इत् । ते । आहुः । अनु । व्रतम् । व्रतऽपाः ।
दीध्यानाः ॥ ८ ॥ वृषऽयन्ते । महे । अत्याय । पूर्वीः । वृष्णे ।
चित्राय । रश्मयः । सुऽयामाः । देव । होतः । मन्द्रऽतरः । चिकित्वान् ।
महः । देवान् । रोदसी इति । आ । इह । वक्षि ॥ ९ ॥ पृक्षऽप्रयजः ।
द्रविणः । सुऽवाचः । सुऽकेतवः । उषसः । रेवत् । ऊषुः । उतो इति ।
चित् । अग्ने । महिना । पृथिव्याः । कृतम् । चित् । एनः । सम् ।
महे । दशस्य ॥ १० ॥ इळाम् । अग्ने । पुरुऽदंसम् । सनिम् । गोः ।
शश्वत्ऽतमम् । हवमानाय । साध । स्यात् । नः । सूनुः । तनयः ।
विजाऽवा । अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इति ॥ ११ ॥

III. 8.

अञ्जन्ति । त्वाम् । अध्वरे । देवऽयन्तः । वनस्पते । मधुना ।
दैव्येन । यत् । ऊर्ध्वः । तिष्ठाः । द्रविणा । इह । धत्तात् । यत् । वा ।
क्षयः । मातुः । अस्याः । उपऽस्थे ॥ १ ॥ सम्ऽइद्धस्य । श्रयमाणः ।
पुरस्तात् । ब्रह्म । वन्वानः । अजरम् । सुऽवीरम् । आरे । अस्मत् । अम-
तिम् । बाधमानः । उत् । श्रयस्व । महते । सौभगाय ॥ २ ॥ उत् ।
श्रयस्व । वनस्पते । वर्ष्मन् । पृथिव्याः । अधि । सुऽमिती । मीयमानः ।

वर्चः । धाः । यज्ञऽवाहसे ॥ ३ ॥ युवा । सुऽवासाः । परिऽवीतः । आ । अगात् । सः । ऊँ इति । श्रेयान् । भवति । जायमानः । तम् । धीरासः । कवयः । उत् । नयन्ति । सुऽआध्यः । मनसा । देवऽयन्तः ॥ ४ ॥ जातः । जायते । सुदिनऽत्वे । अह्नाम् । सऽमर्ये । आ । विदथे । वर्धमानः । पुनन्ति । धीराः । अपसः । मनीषा । देवऽयाः । विप्रः । उत् । इयर्ति । वाचम् ॥ ५ ॥ यान् । वः । नरः । देवऽयन्तः । निऽमिम्युः । वनस्पते । स्वऽधितिः । वा । ततक्ष । ते । देवासः । स्वरवः । तस्थिऽवांसः । प्रजाऽवत् । अस्मे इति । दिधिषन्तु । रत्नम् ॥ ६ ॥ ये । वृक्णासः । अधि । क्षमि । निऽमितासः । यतऽस्रुचः । ते । नः । व्यन्तु । वार्यम् । देवऽत्रा । क्षेत्रऽसाधसः ॥ ७ ॥ आदित्याः । रुद्राः । वसवः । सुऽनीथाः । द्यावाक्षामा । पृथिवी । अन्तरिक्षम् । सऽजोषसः । यज्ञम् । अवन्तु । देवाः । ऊर्ध्वम् । कृण्वन्तु । अध्वरस्य । केतुम् ॥ ८ ॥ हंसाःऽइव । श्रेणिऽशः । यतानाः । शुक्रा । वसानाः । स्वरवः । नः । आ । अगुः । उत्ऽनीयमानाः । कविऽभिः । पुरस्तात् । देवाः । देवानाम् । अपि । यन्ति । पाथः ॥ ९ ॥ शृङ्गाणिऽइव । इत् । शृङ्गिणाम् । सम् । ददृश्रे । चषालऽवन्तः । स्वरवः । पृथिव्याम् । वाघत्ऽभिः । वा । विऽहवे । श्रोषमाणाः । अस्मान् । अवन्तु । पृतनाज्येषु ॥ १० ॥ वनस्पते । शतऽवल्शः । वि । रोह । सहस्रऽवल्शाः । वि । वयम् । रुहेम । यम् । त्वाम् । अयम् । स्वऽधितिः । तेजमानः । प्रऽनिनाय । महते । सौभगाय ॥ ११ ॥

III. 9

सखायः । त्वा । ववृमहे । देवम् । मर्तासः । ऊतये । अपाम् ।

नपा॑तम् । सु॒ऽभगं॑म् । सु॒ऽदीदि॑तिम् । सु॒ऽप्रतू॑र्तिम् । अ॒नेहसं॑म् ॥ १ ॥
काय॑मानः । व॒ना । त्वम् । यत् । मा॒तॄः । अजंगन् । अ॒पः । न ।
तत् । ते॒ । अ॒ग्ने॒ । प्र॒ऽमृषे॑ । नि॒ऽवर्तं॑नम् । यत् । दू॒रे । सन् । इ॒ह ।
अभंवः ॥ २ ॥ अति॑ । तृ॒ष्टम् । व॒व॒क्षि॒थ॒ । अर्थ । ए॒व । सु॒ऽमनाः॑ ।
अ॒सि॒ । प्र॒ऽप्र । अ॒न्ये । यन्ति॑ । परि॑ । अ॒न्ये । आ॒स॒ते॒ । येषा॑म् । स॒ख्ये ।
असि॑ । श्रि॒तः ॥ ३ ॥ ई॒यि॒ऽवांसं॑म् । अति॑ । स्रिधः॑ । शश्व॑तीः । अति॑ ।
स॒श्चतः॑ । अनुं॑ । ई॒म् । अ॒वि॒न्द॒न् । नि॒ऽचि॒रासः॑ । अ॒द्रुहः॑ । अ॒प्ऽसु ।
सिं॒हम्ऽइ॑व । श्रि॒तम् ॥ ४ ॥ स॒सृ॒वांसं॑म्ऽइव । त्मना॑ । अ॒ग्निम् । इ॒त्था ।
ति॒रःऽहि॑तम् । आ । ए॒नम् । न॒य॒त् । मा॒तरिश्वा॑ । प॒रा॒ऽवतः॑ । दे॒वेभ्यः॑ ।
म॒थि॒तम् । परि॑ ॥ ५ ॥ तम् । त्वा॒ । मर्ताः॑ । अ॒गृ॒भ्ण॒त॒ । दे॒वेभ्यः॑ ।
ह॒व्य॒ऽवा॒ह॒न॒ । विश्वा॑न् । यत् । य॒ज्ञान् । अ॒भि॒ऽपासि॑ । मा॒नु॒ष॒ । तव॑ ।
क्रत्वा॑ । य॒वि॒ष्ठ्य॒ ॥ ६ ॥ तत् । भ॒द्रम् । तव॑ । दं॒सना॑ । पाका॑य ।
चि॒त् । छ॒द॒य॒ति॒ । त्वाम् । यत् । अ॒ग्ने॒ । प॒शवः॑ । स॒म्ऽआसं॑ते । सम्ऽ-
इ॑द्धम् । अ॒पि॒ऽश॒र्वरे॑ ॥ ७ ॥ आ । जु॒हो॒त॒ । सु॒ऽअ॒ध्व॒रम् । शी॒रम् । पा॒व॒-
क॒ऽशोचिषम् । आ॒शुम् । दू॒तम् । अ॒जि॒रम् । प्र॒त्नम् । ईड्य॑म् । श्रु॒ष्टी ।
दे॒वम् । स॒प॒र्य॒त॒ ॥ ८ ॥ त्रीणि॑ । श॒ता । त्री । स॒हस्रा॑णि । अ॒ग्निम् ।
त्रिं॒शत् । च॒ । दे॒वाः । नव॑ । च॒ । अ॒स॒प॒र्य॒न् । औक्ष॑न् । घृ॒तैः । अस्तृ॑-
ण॒न् । ब॒र्हिः । अ॒स्मै॒ । आत् । इत् । होता॑रम् । नि । अ॒सा॒द॒य॒न्त॒ ॥ ९ ॥

III. 10.

त्वाम् । अ॒ग्ने॒ । म॒नी॒षिणः॑ । स॒म्ऽराज॑म् । च॒र्ष॒णी॒नाम् । दे॒वम् ।
मर्ता॑सः । इ॒न्ध॒ते॒ । सम् । अ॒ध्व॒रे ॥ १ ॥ त्वाम् । य॒ज्ञेषु॑ । ऋ॒त्विज॑म् ।
अग्ने॑ । होता॑रम् । ई॒ळ॒ते॒ । गो॒पाः । ऋ॒तस्य॑ । दी॒दि॒हि॒ । स्वे । दमे॑ ॥ २ ॥

सः । घ । यः । ते । ददाशति । सम्ऽइधा । जातऽवेदसे । सः । अग्ने । धत्ते । सुऽवीर्यम् । सः । पुष्यति ॥ ३ ॥ सः । केतुः । अध्वराणाम् । अग्निः । देवेभिः । आ । गमत् । अञ्जानः । सप्त । होतृऽभिः । हविष्मते ॥ ४ ॥ प्र । होत्रे । पूर्व्यम् । वचः । अग्नये । भरत । बृहत् । विपाम् । ज्योतींषि । बिभ्रते । न । वेधसे ॥ ५ ॥ अग्निम् । वर्धन्तु । नः । गिरः । यतः । जायते । उक्थ्यः । महे । वाजाय । द्रविणाय । दर्शतः ॥ ६ ॥ अग्ने । यजिष्ठः । अध्वरे । देवान् । देवऽयते । यज । होता । मन्द्रः । वि । राजसि । अति । स्रिधः ॥ ७ ॥ सः । नः । पावक । दीदिहि । द्युऽमत् । अस्मे इति । सुऽवीर्यम् । भव । स्तोतृऽभ्यः । अन्तमः । स्वस्तये ॥ ८ ॥ तम् । त्वा । विप्राः । विपन्यवः । जागृऽवांसः । सम् । इन्धते । हव्यऽवाहम् । अमर्त्यम् । सहःऽवृधम् ॥ ९ ॥

## III. 11.

अग्निः । होता । पुरःऽहितः । अध्वरस्य । विऽचर्षणिः । सः । वेद । यज्ञम् । आनुषक् ॥ १ ॥ सः । हव्यऽवाट् । अमर्त्यः । उशिक् । दूतः । चनःऽहितः । अग्निः । धिया । सम् । ऋण्वति ॥ २ ॥ अग्निः । धिया । सः । चेतति । केतुः । यज्ञस्य । पूर्व्यः । अर्थम् । हि । अस्य । तरणि ॥ ३ ॥ अग्निम् । सूनुम् । सनऽश्रुतम् । सहसः । जातऽवेदसम् । वह्निम् । देवाः । अकृण्वत ॥ ४ ॥ अदाभ्यः । पुरःऽएता । विशाम् । अग्निः । मानुषीणाम् । तूर्णिः । रथः । सदा । नवः ॥ ५ ॥ सह्वान् । विश्वाः । अभिऽयुजः । क्रतुः । देवानाम् । अमृक्तः । अग्निः । तुविश्रवःऽतमः ॥ ६ ॥ अभि । प्रयांसि । वाहसा । दाश्वान् । अश्नोति । मर्त्यः ।

क्षयम् । पावकऽशोचिषः ॥ ७ ॥ परि । विश्वानि । सुऽधिता । अग्नेः ।
अश्याम । मन्मऽभिः । विप्रासः । जातऽवेदसः ॥ ८ ॥ अग्ने । विश्वानि ।
वार्या । वाजेषु । सनिषामहे । त्वे इति । देवासः । आ । ईरिरे ॥ ९ ॥

III. 12.

इन्द्राग्नी इति । आ । गतम् । सुतम् । गीःऽभिः । नभः । वरेण्यम् ।
अस्य । पातम् । धिया । इषिता ॥ १ ॥ इन्द्राग्नी इति । जरितुः ।
सचा । यज्ञः । जिगाति । चेतनः । अया । पातम् । इमम् । सुतम् ॥२॥
इन्द्रम् । अग्निम् । कविऽछदा । यज्ञस्य । जूत्या । वृणे । ता । सोमस्य ।
इह । तृम्पताम् । ॥ ३ ॥ तोशा । वृत्रऽहना । हुवे । सऽजित्वाना ।
अपराऽजिता । इन्द्राग्नी इति । वाजऽसातमा ॥ ४ ॥ प्र । वाम् ।
अर्चन्ति । उक्थिनः । नीथऽविदः । जरितारः । इन्द्राग्नी इति । इषः ।
आ । वृणे ॥ ५ ॥ इन्द्राग्नी इति । नवतिम् । पुरः । दासऽपत्नीः ।
अधूनुतम् । साकम् । एकेन । कर्मणा ॥ ६ ॥ इन्द्राग्नी इति । अपसः ।
परि । उप । प्र । यन्ति । धीतयः । ऋतस्य । पथ्याः । अनु ॥ ७ ॥
इन्द्राग्नी इति । तविषाणि । वाम् । सधऽस्थानि । प्रयांसि । च । युवोः ।
अप्ऽतूर्यम् । हितम् ॥ ८ ॥ इन्द्राग्नी इति । रोचना । दिवः । परि ।
वाजेषु । भूषथः । तत् । वाम् । चेति । प्र । वीर्यम् ॥ ९ ॥

III. 13.

प्र । वः । देवाय । अग्नये । बर्हिष्ठम् । अर्च । अस्मै । गमत् ।
देवेभिः । आ । सः । नः । यजिष्ठः । बर्हिः । आ । सदत् ॥ १ ॥
ऋतऽवा । यस्य । रोदसी इति । दक्षम् । सचन्ते । ऊतयः । हविष्मतः ।
तम् । ईळते । तम् । सनिष्यन्तः । अवसे ॥ २ ॥ सः । यन्ता । विप्रः ।

एषाम् । सः । यज्ञानाम्॑ । अथ॑ । हि । सः । अ॒ग्निम् । तम् । वः । दुवस्यत । दाता॑ । यः । वनि॑ता । मघम् ॥ ३ ॥ सः । नः । शर्मा॑णि । वीतये॑ । अग्निः । यच्छतु । शम्ऽत॑मा । यत॑ः । नः । प्रुष्णव॑त् । वसु॑ । दिवि । क्षितिऽभ्य॑ः । अप्ऽसु । आ ॥ ४ ॥ दीदिऽवांस॑म् । अपू॑र्व्यम् । वस्वी॑भिः । अस्य । धीतिऽभि॑ः । ऋक्वा॑णः । अग्निम् । इन्धते । होता॑ऽरम् । विश्पति॑म् । विशाम् ॥ ५ ॥ उत । नः । ब्रह्म॑न् । अविषः । उक्थेषु । देवऽहूत॑मः । शम् । नः । शोच । मरुत्ऽवृ॑धः । अग्ने॑ । सहस्रऽसात॑मः ॥ ६ ॥ नु । नः । रास्व । सहस्र॑ऽवत् । तोकऽव॑त् । पुष्टिऽमत् । वसु॑ । द्युऽमत् । अग्ने । सुऽवीर्य॑म् । वर्षि॑ष्ठम् । अनु॑पऽक्षितम् ॥७॥

III. 14.

आ । होता॑ । मन्द्रः । विदथा॑नि । अस्थात् । सत्यः । यज्वा॑ । कविऽत॑मः । सः । वेधाः । विद्युत्ऽर॑थः । सह॑सः । पुत्रः । अग्निः । शोचिःऽके॑शः । पृथिव्याम् । पाजः॑ । अश्रेत् ॥ १ ॥ अया॑मि । ते । नमः॑ऽउक्तिम् । जुषस्व । ऋत॑ऽवः । तुभ्य॑म् । चेत॑ते । सहस्वः । विद्वान् । आ । वक्षि । विदुषः॑ । नि । सत्सि । मध्ये॑ । आ । बर्हिः । ऊतये॑ । यजत्र ॥ २ ॥ द्रव॑ताम् । ते । उषसा॑ । वाजय॑न्ती इति॑ । अग्ने॑ । वात॑स्य । पथ्या॑भिः । अच्छ॑ । यत् । सीम् । अञ्जन्ति॑ । पूर्व्य॑म् । हविःऽभि॑ः । आ । वन्धुरा॑ऽइव । तस्थतुः । दुरोणे ॥ ३ ॥ मित्रः । च । तुभ्य॑म् । वरु॑णः । सहस्वः । अग्ने॑ । विश्वे॑ । मरुत॑ः । सुम्नम् । अर्चन् । यत् । शोचिषा॑ । सहसः । पुत्र । तिष्ठाः॑ । अभि । क्षितीः । प्रथय॑न् । सूर्यः॑ । नॄन् ॥ ४ ॥ वयम् । ते । अद्य । ररिम । हि । काम॑म् । उत्तान॑ऽहस्ताः । नम॑सा । उपऽसद्य॑ । यजि॑ष्ठेन । मन॑सा । यक्षि । देवान् ।

असैधता । मन्मना । विप्रः । अग्ने ॥ ५ ॥ त्वत् । हि । पुत्र । सहसः । वि । पूर्वीः । देवस्य । यन्ति । ऊतयः । वि । वाजाः । त्वम् । देहि । सहस्रिणम् । रयिम् । नः । अद्रोघेण । वचसा । सत्यम् । अग्ने ॥ ६ ॥ तुभ्यम् । दक्ष । कविक्रतो इति कविऽक्रतो । यानि । इमा । देव । मर्तासः । अध्वरे । अकर्म । त्वम् । विश्वस्य । सुऽरथस्य । बोधि । सर्वम् । तत् । अग्ने । अमृत । स्वद । इह ॥ ७ ॥

III. 15.

वि । पाजसा । पृथुना । शोशुचानः । बाधस्व । द्विषः । रक्षसः । अमीवाः । सुऽशर्मणः । बृहतः । शर्मणि । स्याम् । अग्नेः । अहम् । सुऽहवस्य । प्रऽनीतौ ॥ १ ॥ त्वम् । नः । अस्याः । उषसः । विऽउष्टौ । त्वम् । सूरे । उत्ऽइते । बोधि । गोपाः । जन्मऽइव । नित्यम् । तनयम् । जुषस्व । स्तोमम् । मे । अग्ने । तन्वा । सुऽजात ॥ २ ॥ त्वम् । नृऽचक्षाः । वृषभ । अनु । पूर्वीः । कृष्णासु । अग्ने । अरुषः । वि । भाहि । वसो इति । नेषि । च । पर्षि । च । अति । अंहः । कृधि । नः । राये । उशिजः । यविष्ठ ॥ ३ ॥ अषाळ्हः । अग्ने । वृषभः । दिदीहि । पुरः । विश्वाः । सौभगा । सम्ऽजिगीवान् । यज्ञस्य । नेता । प्रथमस्य । पायोः । जातऽवेदः । बृहतः । सुऽप्रनीते ॥ ४ ॥ अच्छिद्रा । शर्म । जरितरिति । पुरूणि । देवान् । अच्छ । दीद्यानः । सुऽमेधाः । रथः । न । सस्निः । अभि । वक्षि । वाजम् । अग्ने । त्वम् । रोदसी इति । नः । सुमेके इति सुऽमेके ॥ ५ ॥ प्र । पीपय । वृषभ । जिन्व । वाजान् । अग्ने । त्वम् । रोदसी इति । नः । सुदोघे इति सुऽदोघे । देवेभिः । देव । सुऽरुचा । रुचानः । मा । नः । मर्तस्य । दुःऽमतिः ।

परि॑ । स्या॒त् ॥ ६ ॥ इळा॑म् । अ॒ग्ने॒ । पु॒रु॒ऽदंस॑म् । स॒निम् । गोः ।
श॒श्व॒त्ऽत॒मम् । हव॑मानाय । सा॒ध॒ । स्यात् । नः॒ । सू॒नुः । तन॑यः ।
वि॒जाऽवा॑ । अग्ने॑ । सा । ते॒ । सु॒ऽम॒तिः । भू॒तु॒ । अ॒स्मे इति॑ ॥ ७ ॥

III. 16.

अ॒यम् । अ॒ग्निः । सु॒ऽवीर्य॑स्य । ईशे॑ । म॒हः । सौभ॑गस्य । रा॒यः ।
ई॒शे॒ । सु॒ऽअ॒प॒त्यस्य॑ । गोऽम॑तः । ईशे॑ । वृ॒त्र॒ऽहथा॑नाम् ॥ १ ॥ इ॒मम् ।
न॒रः॒ । म॒रु॒तः॒ । स॒श्च॒त॒ । वृध॑म् । यस्मि॑न् । राय॑ः । शेऽवृ॑धासः । अ॒भि ।
ये । सन्ति॑ । पृत॑नासु । दुः॒ऽध्यः॑ । वि॒श्वाहा॑ । शत्रु॑म् । आ॒ऽद॒भुः ॥२॥
सः । त्वम् । नः॒ । रा॒यः । शि॒शी॒हि॒ । मीढ्वः॑ । अ॒ग्ने॒ । सु॒ऽवीर्य॑स्य ।
तुवि॑ऽद्युम्न । वर्षि॑ष्ठस्य । प्र॒जाऽव॑तः । अ॒न॒मी॒वस्य॑ । शु॒ष्मिण॑ः ॥ ३ ॥
चक्रिः॑ । यः । विश्वा॑ । भुव॑ना । अ॒भि । स॒स॒हिः । चक्रिः॑ । दे॒वेषु॑ ।
आ । दुवः॑ । आ । दे॒वेषु॑ । यत॑ते । आ । सु॒ऽवीर्ये॑ । आ । शंसे॑ । उ॒त ।
नृ॒णाम् ॥ ४ ॥ मा । नः॒ । अ॒ग्ने॒ । अम॑तये । मा । अ॒वीर॑तायै । री॒र॒धः॒ ।
मा । अ॒गोता॑यै । स॒ह॒सः॒ । पु॒त्र॒ । मा । नि॒दे । अप॑ । द्वेषां॑सि । आ ।
कृ॒धि॒ ॥ ५ ॥ श॒ग्धि । वाज॑स्य । सु॒ऽभ॒ग॒ । प्र॒जाऽव॑तः । अग्ने॑ । बृ॒ह॒तः ।
अ॒ध्व॒रे । सम् । रा॒या । भूय॑सा । सृ॒ज॒ । म॒यः॒ऽभुना॑ । तुवि॑ऽद्युम्न ।
यश॑स्वता ॥ ६ ॥

III. 17.

स॒म्ऽइ॒ध्यमा॑नः । प्र॒थ॒मा । अनु॑ । धर्म॑ । सम् । अ॒क्तुऽभिः॑ ।
अ॒ज्य॒ते॒ । वि॒श्वऽवा॑रः । शो॒चिःऽके॑शः । घृ॒तऽनि॑र्निक् । पा॒व॒कः । सु॒ऽ-
य॒ज्ञः । अ॒ग्निः । य॒जथा॑य । दे॒वान् ॥ १ ॥ यथा॑ । अय॑जः । हो॒त्रम् ।
अ॒ग्ने॒ । पृ॒थि॒व्याः । यथा॑ । दि॒वः । जा॒त॒ऽवे॒दः॒ । चि॒कि॒त्वान् । ए॒व ।

अनेनं । हविषां । यक्षि । देवान् । मनुष्वत् । यज्ञम् । प्र । तिर । इमम् । अद्य ॥ २ ॥ त्रीणि । आयूंषि । तवं । जातऽवेदः । तिस्रः । आऽजानीः । उषसः । ते । अग्ने । ताभिः । देवानाम् । अवः । यक्षि । विद्वान् । अर्थ । भव । यजमानाय । शम् । योः ॥ ३ ॥ अग्निम् । सुऽदीतिम् । सुऽदृशम् । गृणन्तः । नमस्यामः । त्वा । ईड्यम् । जातऽवेदः । त्वाम् । दूतम् । अरतिम् । हव्यऽवाहम् । देवाः । अकृण्वन् । अमृतस्य । नाभिम् ॥ ४ ॥ यः । त्वत् । होतां । पूर्वः । अग्ने । यजीयान् । द्विता । च । सत्तां । स्वधयां । च । शम्ऽभुः । तस्य । अनुं । धर्म । प्र । यज । चिकित्वः । अर्थ । नः । धाः । अध्वरम् । देवऽवीतौ ॥ ५ ॥

III. 18.

भवं । नः । अग्ने । सुऽमनाः । उपऽइतौ । सखाऽइव । सख्ये । पितराऽइव । साधुः । पुरुऽद्रुहः । हि । क्षितयः । जनानाम् । प्रति । प्रतीचीः । दहतात् । अरातीः ॥ १ ॥ तपो इति । सु । अग्ने । अन्तरान् । अमित्रान् । तप । शंसम् । अररुषः । परस्य । तपो इति । वसो इति । चिकितानः । अचित्तान् । वि । ते । तिष्ठन्ताम् । अजराः । अयासः ॥ २ ॥ इध्मेन । अग्ने । इच्छमानः । घृतेन । जुहोमि । हव्यम् । तरसे । बलाय । यावत् । ईशे । ब्रह्मणा । वन्दमानः । इमाम् । धियम् । शतऽसेयाय । देवीम् ॥ ३ ॥ उत् । शोचिषा । सहसः । पुत्र । स्तुतः । बृहत् । वयः । शशमानेषु । धेहि । रेवत् । अग्ने । विश्वामित्रेषु । शम् । योः । मर्मृज्म । ते । तन्वम् । भूरि । कृत्वः ॥ ४ ॥ कृधि । रत्नम् । सुऽसनितः । धनानाम् । सः । घ । इत् । अग्ने । भवसि । यत् । सम्ऽ-

इंद्रः । स्तोतुः । दुरोणे । सुऽभगस्य । रेवत् । सृप्रा । करस्ना । दधिषे । वपूंषि ॥ ५ ॥

III. 19.

अग्निम् । होतारम् । प्र । वृणे । मियेधे । गृत्सम् । कविम् । विश्वऽविदम् । अमूरम् । सः । नः । यक्षत् । देवऽताता । यजीयान् । राये । वाजाय । वनते । मघानि ॥ १ ॥ प्र । ते । अग्ने । हविष्मतीम् । इयर्मि । अच्छ । सुऽद्युम्नाम् । रातिनीम् । घृताचीम् । प्रऽदक्षिणित् । देवऽतातिम् । उराणः । सम् । रातिऽभिः । वसुऽभिः । यज्ञम् । अश्रेत् ॥२॥ सः । तेजीयसा । मनसा । त्वाऽऊतः । उत । शिक्ष । सुऽअपत्यस्य । शिक्षोः । अग्ने । रायः । नृऽतमस्य । प्रऽभूतौ । भूयाम । ते । सुऽस्तुतयः । च । वस्वः ॥ ३ ॥ भूरीणि । हि । त्वे इति । दधिरे । अनीका । अग्ने । देवस्य । यज्यवः । जनासः । सः । आ । वह । देवऽतातिम् । यविष्ठ । शर्धः । यत् । अद्य । दिव्यम् । यजासि ॥ ४ ॥ यत् । त्वा । होतारम् । अनजन् । मियेधे । निऽसादयन्तः । यजथाय । देवाः । सः । त्वम् । नः । अग्ने । अविता । इह । बोधि । अधि । श्रवांसि । धेहि । नः । तनूषु ॥ ५ ॥

III. 20.

अग्निम् । उषसम् । अश्विना । दधिऽक्राम् । विऽउष्टिषु । हवते । वह्निः । उक्थैः । सुऽज्योतिषः । नः । शृण्वन्तु । देवाः । सऽजोषसः । अध्वरम् । वावशानाः ॥ १ ॥ अग्ने । त्री । ते । वाजिना । त्री । सधऽस्था । तिस्रः । ते । जिह्वाः । ऋतऽजात । पूर्वीः । तिस्रः । ऊँ इति । ते । तन्वः । देवऽवाताः । ताभिः । नः । पाहि । गिरः । अप्रऽ-

युच्छन् ॥ २ ॥ अग्ने । भूरीणि । तव । जातऽवेदः । देव । स्वधाऽवः । अमृतस्य । नाम । याः । च । मायाः । मायिनाम् । विश्वम्ऽइन्व । त्वे इति । पूर्वीः । सम्ऽदधुः । पृष्टबन्धो इति पृष्टऽबन्धो ॥ ३ ॥ अग्निः । नेता । भगःऽइव । क्षितीनाम् । दैवीनाम् । देवः । ऋतुऽपाः । ऋतऽवा । सः । वृत्रऽहा । सनयः । विश्वऽवेदाः । पर्षत् । विश्वा । अति । दुःऽइता । गृणन्तम् ॥ ४ ॥ दधिऽक्राम् । अग्निम् । उषसम् । च । देवीम् । बृहस्पतिम् । सवितारम् । च । देवम् । अश्विना । मित्रावरुणा । भगम् । च । वसून् । रुद्रान् । आदित्यान् । इह । हुवे ॥ ५ ॥

## III. 21.

इमम् । नः । यज्ञम् । अमृतेषु । धेहि । इमा । हव्या । जातऽवेदः । जुषस्व । स्तोकानाम् । अग्ने । मेदसः । घृतस्य । होतः । प्र । अशान । प्रथमः । निऽसद्य ॥ १ ॥ घृतऽवन्तः । पावक । ते । स्तोकाः । श्चोतन्ति । मेदसः । स्वऽधर्मन् । देवऽवीतये । श्रेष्ठम् । नः । धेहि । वार्यम् ॥ २ ॥ तुभ्यम् । स्तोकाः । घृतऽश्चुतः । अग्ने । विप्राय । सन्त्य । ऋषिः । श्रेष्ठः । सम् । इध्यसे । यज्ञस्य । प्रऽअविता । भव ॥ ३ ॥ तुभ्यम् । श्चोतन्ति । अध्रिगो इत्यध्रिऽगो । शचीऽवः । स्तोकासः । अग्ने । मेदसः । घृतस्य । कविऽशस्तः । बृहता । भानुना । आ । अगाः । हव्या । जुषस्व । मेधिर ॥ ४ ॥ ओजिष्ठम् । ते । मध्यतः । मेदः । उत्ऽभृतम् । प्र । ते । वयम् । ददामहे । श्चोतन्ति । ते । वसो इति । स्तोकाः । अधि । त्वचि । प्रति । तान् । देवऽशः । विहि ॥ ५ ॥

III. 22

अयम् । सः । अग्निः । यस्मिन् । सोमम् । इन्द्रः । सुतम् । दधे । जठरे । वावशानः । सहस्रिणम् । वाजम् । अत्यम् । न । सप्तिम् । ससऽवान् । सन् । स्तूयसे । जातऽवेदः ॥ १ ॥ अग्ने । यत् । ते । दिवि । वर्चः । पृथिव्याम् । यत् । ओषधीषु । अप्ऽसु । आ । यजत्र । येन । अन्तरिक्षम् । उरु । आऽततन्थ । त्वेषः । सः । भानुः । अर्णवः । नृऽचक्षाः ॥ २ ॥ अग्ने । दिवः । अर्णम् । अच्छ । जिगासि । अच्छ । देवान् । ऊचिषे । धिष्ण्याः । ये । याः । रोचने । परस्तात् । सूर्यस्य । याः । च । अवस्तात् । उपऽतिष्ठन्ते । आपः ॥ ३ ॥ पुरीष्यासः । अग्नयः । प्रवणेभिः । सऽजोषसः । जुषन्ताम् । यज्ञम् । अद्रुहः । अनमीवाः । इषः । महीः ॥ ४ ॥ इळाम् । अग्ने । पुरुऽदंसम् । सनिम् । गोः । शश्वत्ऽतमम् । हवमानाय । साध । स्यात् । नः । सूनुः । तनयः । विजाऽवा । अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इति ॥ ५ ॥

III. 23.

निःऽमथितः । सुऽधितः । आ । सधऽस्थे । युवा । कविः । अध्वरस्य । प्रऽनेता । जूर्यत्ऽसु । अग्निः । अजरः । वनेषु । अत्र । दधे । अमृतम् । जातऽवेदाः ॥ १ ॥ अमन्थिष्टाम् । भारता । रेवत् । अग्निम् । देवऽश्रवाः । देवऽवातः । सुऽदक्षम् । अग्ने । वि । पश्य । बृहता । अभि । राया । इषाम् । नः । नेता । भवतात् । अनु । द्यून् ॥ २ ॥ दश । क्षिपः । पूर्व्यम् । सीम् । अजीजनन् । सुऽजातम् । मातृषु । प्रियम् । अग्निम् । स्तुहि । दैवऽवातम् । देवऽश्रवः । यः । जनानाम् । असत् । वशी ॥ ३ ॥ नि । त्वा । दधे । वरे । आ । पृथिव्याः ।

इळायाः । पदे । सुदिनऽत्वे । अह्नाम् । दृषत्ऽवत्याम् । मानुषे । आपयायाम् । सरस्वत्याम् । रेवत् । अग्ने । दिदीहि ॥ ४ ॥ इळाम् । अग्ने । पुरुऽदंसम् । सनिम् । गोः । शश्वत्ऽतमम् । हवमानाय । साध । स्यात् । नः । सूनुः । तनयः । विजाऽवा । अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इति ॥ ५ ॥

III. 24.

अग्ने । सहस्व । पृतनाः । अभिऽमातीः । अप । अस्य । दुस्तरः । तरन् । अरातीः । वर्चः । धाः । यज्ञऽवाहसे ॥ १ ॥ अग्ने । इळा । सम् । इध्यसे । वीतिऽहोत्रः । अमर्त्यः । जुषस्व । सु । नः । अध्वरम् ॥ २ ॥ अग्ने । द्युम्नेन । जागृवे । सहसः । सूनो इति । आऽहुत । आ । इदम् । बर्हिः । सदः । मम ॥ ३ ॥ अग्ने । विश्वेभिः । अग्निऽभिः । देवेभिः । महय । गिरः । यज्ञेषु । ये । ऊँ इति । चायवः ॥ ४ ॥ अग्ने । दाः । दाशुषे । रयिम् । वीरऽवन्तम् । परीणसम् । शिशीहि । नः । सूनुऽमतः ॥ ५ ॥

III. 25.

अग्ने । दिवः । सूनुः । असि । प्रऽचेताः । तना । पृथिव्याः । उत । विश्वऽवेदाः । ऋधक् । देवान् । इह । यज । चिकित्वः ॥ १ ॥ अग्निः । सनोति । वीर्याणि । विद्वान् । सनोति । वाजम् । अमृताय । भूषन् । सः । नः । देवान् । आ । इह । वह । पुरुक्षो इति पुरुऽक्षो ॥ २ ॥ अग्निः । द्यावापृथिवी इति । विश्वजन्ये इति विश्वऽजन्ये । आ । भाति । देवी इति । अमृते इति । अमूरः । क्षयन् । वाजैः । पुरुऽचन्द्रः । नमःऽभिः ॥ ३ ॥ अग्ने । इन्द्रः । च । दाशुषः । दुरोणे । सुतऽवतः ।

यज्ञम् । इह । उप॑ । यातम् । अम॑र्धन्ता । सोमऽपेया॑य । देवा ॥ ४ ॥
अग्ने॑ । अपाम् । सम् । इध्यसे । दुरोणे । नित्यः॑ । सूनो इति॑ । सहसः ।
जातऽवेदः । सधऽस्था॑नि । महय॑मानः । ऊती ॥ ५ ॥

III. 26.

वैश्वानरम् । मन॑सा । अग्निम् । निऽचाय्य॑ । हविष्म॑न्तः । अनुऽ-
सत्यम् । स्वः॑ऽविद॑म् । सुऽदानु॑म् । देवम् । रथिरम् । वसुऽयवः॑ । गीः-
ऽभिः । रण्वम् । कुशिकासः॑ । हवामहे ॥ १ ॥ तम् । शुभ्रम् । अग्निम् ।
अव॑से । हवामहे । वैश्वानरम् । मातरिश्वा॑नम् । उक्थ्य॑म् । बृहस्पति॑म् ।
मनु॑षः । देवऽता॑तये । विप्र॑म् । श्रोता॑रम् । अति॑थिम् । रघुऽस्यद॑म् ॥२॥
अश्वः॑ । न । क्रन्द॑न् । जनि॑ऽभिः । सम् । इध्यते । वैश्वानरः । कुशि-
केभिः॑ । युगेऽयु॑गे । सः । नः । अग्निः । सुऽवीर्य॑म् । सुऽअश्व्य॑म् ।
दधा॑तु । रत्न॑म् । अमृते॑षु । जागृ॑विः । ॥ ३ ॥ प्र । यन्तु । वाजाः॑ ।
तवि॑षीभिः । अग्नयः॑ । शुभे । सम्ऽमि॑श्लाः । पृष॑तीः । अयुक्षत । बृहत्ऽ-
उक्षः॑ । मरुतः॑ । विश्वऽवे॑दसः । प्र । वेपयन्ति । पर्व॑तान् । अदा॑भ्याः ॥४॥
अग्निऽश्रियः॑ । मरुतः॑ । विश्वऽकृ॑ष्टयः । आ । त्वेषम् । उग्रम् । अवः॑ ।
ईमहे । वयम् । ते । स्वानिनः॑ । रुद्रियाः॑ । वर्षऽनि॑र्निजः । सिंहाः । न ।
हेषऽक्र॑तवः । सुऽदान॑वः ॥ ५ ॥ व्रात॑म्ऽव्रातम् । गणम्ऽग॑णम् । सुश-
स्तिऽभिः॑ । अग्नेः । भाम॑म् । मरुताम् । ओजः॑ । ईमहे । पृष॑त्ऽअश्वासः ।
अनवभ्रऽरा॑धसः । गन्ता॑रः । यज्ञम् । विदथे॑षु । धीराः॑ ॥ ६ ॥ अग्निः ।
अस्मि । जन्म॑ना । जातऽवे॑दाः । घृतम् । मे । चक्षुः॑ । अमृत॑म् । मे ।
आसन् । अर्कः॑ । त्रिऽधातुः॑ । रज॑सः । विऽमानः॑ । अज॑स्रः । घर्मः॑ ।
हविः । अस्मि । नाम॑ ॥ ७ ॥ त्रिऽभिः । पवित्रैः॑ । अपु॑पोत् । हि ।

अर्कम् । हृदा । मतिम् । ज्योतिः । अनु । प्रऽजानन् । वर्षिष्ठम् । रत्नम् ।
अकृत । स्वधाभिः । आत् । इत् । द्यावापृथिवी इति । परि । अप-
श्यत् ॥ ८ ॥ शतऽधारम् । उत्सम् । अक्षीयमाणम् । विपःऽचितम् ।
पितरम् । वक्वानाम् । मेळिम् । मदन्तम् । पित्रोः । उपऽस्थे । तम् ।
रोदसी इति । पिपृतम् । सत्यऽवाचम् ॥ ९ ॥

III. 27.

प्र । वः । वाजाः । अभिऽद्यवः । हविष्मन्तः । घृताच्या । देवान् ।
जिगाति । सुम्नऽयुः ॥ १ ॥ ईळे । अग्निम् । विपःऽचितम् । गिरा ।
यज्ञस्य । साधनम् । श्रुष्टीऽवानम् । धितऽवानम् ॥ २ ॥ अग्ने । शकेम ।
ते । वयम् । यमम् । देवस्य । वाजिनः । अति । द्वेषांसि । तरेम ॥३॥
सम्ऽइध्यमानः । अध्वरे । अग्निः । पावकः । ईड्यः । शोचिःऽकेशः ।
तम् । ईमहे ॥ ४ ॥ पृथुऽपाजाः । अमर्त्यः । घृतऽनिर्निक् । सुऽआहुतः ।
अग्निः । यज्ञस्य । हव्यऽवाट् ॥ ५ ॥ तम् । सऽबाधः । यतऽस्रुचः ।
इत्था । धिया । यज्ञऽवन्तः । आ । चक्रुः । अग्निम् । ऊतये ॥ ६ ॥
होता । देवः । अमर्त्यः । पुरस्तात् । एति । मायया । विदथानि । प्रऽ-
चोदयन् ॥ ७ ॥ वाजी । वाजेषु । धीयते । अध्वरेषु । प्र । नीयते ।
विप्रः । यज्ञस्य । साधनः ॥ ८ ॥ धिया । चक्रे । वरेण्यः । भूतानाम् ।
गर्भम् । आ । दधे । दक्षस्य । पितरम् । तना ॥ ९ ॥ नि । त्वा ।
दधे । वरेण्यम् । दक्षस्य । इळा । सहःऽकृत । अग्ने । सुऽदीतिम् ।
उशिजम् ॥ १० ॥ अग्निम् । यन्तुरम् । अप्ऽतुरम् । ऋतस्य । योगे ।
वनुषः । विप्राः । वाजैः । सम् । इन्धते ॥ ११ ॥ ऊर्जः । नपातम् ।
अध्वरे । दीदिऽवांसम् । उप । द्यवि । अग्निम् । ईळे । कविऽक्रतुम् ॥ १२ ॥

ईळेन्यः । नमस्यः । तिरः । तमांसि । दर्शतः । सम् । अग्निः । इध्यते ।
वृषा ॥ १३ ॥ वृषो इति । अग्निः । सम् । इध्यते । अश्वः । न । देवऽ-
वाहनः । तम् । हविष्मन्तः । ईळते ॥ १४ ॥ वृषणम् । त्वा । वयम् ।
वृषन् । वृषणः । सम् । इधीमहि । अग्ने । दीद्यतम् । बृहत् ॥ १५ ॥

## III. 28.

अग्ने । जुषस्व । नः । हविः । पुरोळाशम् । जातऽवेदः । प्रातःऽ-
सावे । धियावसो इति धियाऽवसो ॥ १ ॥ पुरोळाः । अग्ने । पचतः ।
तुभ्यम् । वा । घ । परिऽकृतः । तम् । जुषस्व । यविष्ठ्य ॥ २ ॥
अग्ने । वीहि । पुरोळाशम् । आऽहुतम् । तिरःऽअह्न्यम् । सहसः ।
सूनुः । असि । अध्वरे । हितः ॥ ३ ॥ माध्यंदिने । सवने । जातऽवेदः ।
पुरोळाशम् । इह । कवे । जुषस्व । अग्ने । यह्वस्य । तव । भागऽ-
धेयम् । न । प्र । मिनन्ति । विदथेषु । धीराः ॥ ४ ॥ अग्ने । तृतीये ।
सवने । हि । कानिषः । पुरोळाशम् । सहसः । सूनो इति । आऽहु-
तम् । अथ । देवेषु । अध्वरम् । विपन्यया । धाः । रत्नऽवन्तम् । अमृ-
तेषु । जागृविम् ॥ ५ ॥ अग्ने । वृधानः । आऽहुतिम् । पुरोळाशम् ।
जातऽवेदः । जुषस्व । तिरःऽअह्न्यम् ॥ ६ ॥

## III. 29.

अस्ति । इदम् । अधिऽमन्थनम् । अस्ति । प्रऽजननम् । कृतम् ।
एताम् । विश्पत्नीम् । आ । भर । अग्निम् । मन्थाम । पूर्वऽथा ॥ १ ॥
अरण्योः । निऽहितः । जातऽवेदाः । गर्भःऽइव । सुऽधितः । गर्भिणीषु ।
दिवेऽदिवे । ईड्यः । जागृवत्ऽभिः । हविष्मत्ऽभिः । मनुष्येभिः ।
अग्निः ॥ २ ॥ उत्तानायाम् । अव । भर । चिकित्वान् । सद्यः । प्रऽ-

वीता । वृषणम् । जजान । अरुषऽस्तूपः । रुशत् । अस्य । पाजः ।
इळायाः । पुत्रः । वयुने । अजनिष्ट ॥ ३ ॥ इळायाः । त्वा । पदे ।
वयम् । नाभा । पृथिव्याः । अधि । जातऽवेदः । नि । धीमहि । अग्ने ।
हव्याय । वोळ्हवे ॥ ४ ॥ मन्थत । नरः । कविम् । अद्वयन्तम् । प्रऽ-
चेतसम् । अमृतम् । सुऽप्रतीकम् । यज्ञस्य । केतुम् । प्रथमम् । पुरस्तात् ।
अग्निम् । नरः । जनयत । सुऽशेवम् ॥ ५ ॥ यदि । मन्थन्ति । बाहुऽ-
भिः । वि । रोचते । अश्वः । न । वाजी । अरुषः । वनेषु । आ । चित्रः ।
न । यामन् । अश्विनोः । अनिऽवृतः । परि । वृणक्ति । अश्मनः ।
तृणा । दहन् ॥ ६ ॥ जातः । अग्निः । रोचते । चेकितानः । वाजी ।
विप्रः । कविऽशस्तः । सुऽदानुः । यम् । देवासः । ईड्यम् । विश्वऽवि-
दम् । हव्यऽवाहम् । अदधुः । अध्वरेषु ॥ ७ ॥ सीद । होतः । स्वे । लोके । इति ।
स्वे । ऊँ इति । लोके । चिकित्वान् । सादय । यज्ञम् । सुऽकृतस्य ।
योनौ । देवऽअवीः । देवान् । हविषा । यजासि । अग्ने । बृहत् । यज-
माने । वयः । धाः ॥ ८ ॥ कृणोत । धूमम् । वृषणम् । सखायः ।
अस्रेधन्तः । इतन । वाजम् । अच्छ । अयम् । अग्निः । पृतनाषाट् ।
सुऽवीरः । येन । देवासः । असहन्त । दस्यून् ॥ ९ ॥ अयम् । ते ।
योनिः । ऋत्वियः । यतः । जातः । अरोचथाः । तम् । जानन् । अग्ने ।
आ । सीद । अथ । नः । वर्धय । गिरः ॥ १० ॥ तनूऽनपात् ।
उच्यते । गर्भः । आसुरः । नराशंसः । भवति । यत् । विऽजायते ।
मातरिश्वा । यत् । अमिमीत । मातरि । वातस्य । सर्गः । अभवत् ।
सरीमणि ॥ ११ ॥ सुनिःऽमथा । निःऽमथितः । सुऽनिधा । निऽहितः ।
कविः । अग्ने । सुऽअध्वरा । कृणु । देवान् । देवऽयते । यज ॥ १२ ॥

अजीजनन् । अमृतम् । मर्त्यासः । अस्रेमाणम् । तरणिम् । वीळुऽजम्भम् । दश । स्वसारः । अग्रुवः । सम्ऽईचीः । पुमांसम् । जातम् । अभि । सम् । रभन्ते ॥ १३ ॥ प्र । सप्तऽहोता । सनकात् । अरोचत । मातुः । उपऽस्थे । यत् । अशोचत् । ऊधनि । न । नि । मिषति । सुऽरणः । दिवेऽदिवे । यत् । असुरस्य । जठरात् । अजायत ॥ १४ ॥ अमित्रऽयुधः । मरुताम्ऽइव । प्रऽयाः । प्रथमऽजाः । ब्रह्मणः । विश्वम् । इत् । विदुः । द्युम्नऽवत् । ब्रह्म । कुशिकासः । आ । ईरिरे । एकःऽएकः । दमे । अग्निम् । सम् । ईधिरे ॥ १५ ॥ यत् । अद्य । त्वा । प्रऽयति । यज्ञे । अस्मिन् । होतः । चिकित्वः । अवृणीमहि । इह । ध्रुवम् । अयाः । ध्रुवम् । उत । अशमिष्ठाः । प्रऽजानन् । विद्वान् । उप । याहि । सोमम् ॥ १६ ॥

III. 30.

इच्छन्ति । त्वा । सोम्यासः । सखायः । सुन्वन्ति । सोमम् । दधति । प्रयांसि । तितिक्षन्ते । अभिऽशस्तिम् । जनानाम् । इन्द्र । त्वत् । आ । कः । चन । हि । प्रऽकेतः ॥ १ ॥ न । ते । दूरे । परमा । चित् । रजांसि । आ । तु । प्र । याहि । हरिऽवः । हरिऽभ्याम् । स्थिराय । वृष्णे । सवना । कृता । इमा । युक्ताः । ग्रावाणः । सम्ऽइधाने । अग्नौ ॥ २ ॥ इन्द्रः । सुऽशिप्रः । मघऽवा । तरुत्रः । महाऽव्रातः । तुविऽकूर्मिः । ऋघावान् । यत् । उग्रः । धाः । बाधितः । मर्त्येषु । क्व । त्या । ते । वृषभ । वीर्याणि ॥ ३ ॥ त्वम् । हि । स्म । च्यवयन् । अच्युतानि । एकः । वृत्रा । चरसि । जिघ्नमानः । तव । द्यावापृथिवी इति । पर्वतासः । अनु । व्रताय । निमिताऽइव । तस्थुः ॥ ४ ॥

उत । अमंये । पुरुऽहूत । श्रवःऽभिः । एकः । दृळ्हम् । अवदः ।
वृत्रऽहा । सन् । इमे इति । चित् । इन्द्र । रोदसी इति । अपारे इति ।
यत् । सम्ऽगृभ्णाः । मघऽवन् । काशिः । इत् । ते ॥ ५ ॥ प्र । सु ।
ते । इन्द्र । प्रऽवता । हरिऽभ्याम् । प्र । ते । वज्रः । प्रऽमृणन् ।
एतु । शत्रून् । जहि । प्रतीचः । अनूचः । पराचः । विश्वम् । सत्यम् ।
कृणुहि । विष्टम् । अस्तु ॥ ६ ॥ यस्मै । धायुः । अदधाः । मर्त्याय ।
अभक्तम् । चित् । भजते । गेह्यम् । सः । भद्रा । ते । इन्द्र । सुऽमतिः ।
घृताची । सहस्रऽदाना । पुरुऽहूत । रातिः ॥ ७ ॥ सहऽदानुम् । पुरुऽ-
हूत । क्षियन्तम् । अहस्तम् । इन्द्र । सम् । पिणक् । कुणारुम् । अभि ।
वृत्रम् । वर्धमानम् । पियारुम् । अपादम् । इन्द्र । तवसा । जघन्थ ॥८॥
नि । सामनाम् । इषिराम् । इन्द्र । भूमिम् । महीम् । अपाराम् । सदने ।
ससत्थ । अस्तभ्नात् । द्याम् । वृषभः । अन्तरिक्षम् । अर्षन्तु । आपः ।
त्वया । इह । प्रऽसूताः ॥ ९ ॥ अलातृणः । वलः । इन्द्र । व्रजः ।
गोः । पुरा । हन्तोः । भयमानः । वि । आर । सुऽगान् । पथः ।
अकृणोत् । निःऽअजे । गाः । प्र । आवन् । वाणीः । पुरुऽहूतम् ।
धमन्तीः ॥ १० ॥ एकः । द्वे इति । वसुमती इति वसुऽमती । समीची
इति सम्ऽईची । इन्द्रः । आ । पप्रौ । पृथिवीम् । उत । द्याम् । उत ।
अन्तरिक्षात् । अभि । नः । सम्ऽईके । इषः । रथीः । सऽयुजः । शूर ।
वाजान् ॥ ११ ॥ दिशः । सूर्यः । न । मिनाति । प्रऽदिष्टाः । दिवेऽ-
दिवे । हर्यश्वऽप्रसूताः । सम् । यत् । आनट् । अध्वनः । आत् । इत् ।
अश्वैः । विऽमोचनम् । कृणुते । तत् । तु । अस्य ॥ १२ ॥ दिदृक्षन्ते ।
उषसः । यामन् । अक्तोः । विवस्वत्याः । महि । चित्रम् । अनीकम् ।

विश्वे । जानन्ति । महिना । यत् । आ । अगात् । इन्द्रस्य । कर्म ।
सुऽकृता । पुरूणि ॥ १३ ॥ महि । ज्योतिः । निऽहितम् । वक्षणासु ।
आमा । पक्वम् । चरति । बिभ्रती । गौः । विश्वम् । स्वाद्म । सम्ऽ-
भृतम् । उस्रियायाम् । यत् । सीम् । इन्द्रः । अदधात् । भोजनाय ॥१४॥
इन्द्र । दृळ्ह । यामऽकोशाः । अभूवन् । यज्ञाय । शिक्ष । गृणते ।
सखिऽभ्यः । दुःऽमायवः । दुःऽएवाः । मर्त्यासः । निषङ्गिणः । रिपवः ।
हन्त्वासः ॥ १५ ॥ सम् । घोषः । शृण्वे । अवमैः । अमित्रैः । जहि ।
नि । एषु । अशनिम् । तपिष्ठाम् । वृश्च । ईम् । अधस्तात् । वि । रुज ।
सहस्व । जहि । रक्षः । मघऽवन् । रन्धयस्व ॥ १६ ॥ उत् । वृह ।
रक्षः । सहऽमूलम् । इन्द्र । वृश्च । मध्यम् । प्रति । अग्रम् । शृणीहि ।
आ । कीवतः । सललूकम् । चकर्थ । ब्रह्मऽद्विषे । तपुषिम् । हेतिम् ।
अस्य ॥ १७ ॥ स्वस्तये । वाजिऽभिः । च । प्रनेतरिति प्रऽनेतः ।
सम् । यत् । महीः । इषः । आऽसत्सि । पूर्वीः । रायः । वन्तारः ।
बृहतः । स्याम । अस्मे इति । अस्तु । भर्गः । इन्द्र । प्रजाऽवान् ॥१८॥
आ । नः । भर । भगम् । इन्द्र । द्युऽमन्तम् । नि । ते । देष्णस्य ।
धीमहि । प्रऽरेके । ऊर्वःऽइव । पप्रथे । कामः । अस्मे इति । तम् । आ ।
पृण । वसुऽपते । वसूनाम् ॥ १९ ॥ इमम् । कामम् । मन्दय । गोभिः ।
अश्वैः । चन्द्रऽवता । राधसा । पप्रथः । च । स्वःऽयवः । मतिऽभिः ।
तुभ्यम् । विप्राः । इन्द्राय । वाहः । कुशिकासः । अक्रन् ॥२०॥ आ ।
नः । गोत्रा । दर्दृहि । गोऽपते । गाः । सम् । अस्मभ्यम् । सनयः ।
यन्तु । वाजाः । दिवक्षाः । असि । वृषभ । सत्यऽशुष्मः । अस्मभ्यम् ।
सु । मघऽवन् । बोधि । गोऽदाः ॥ २१ ॥ शुनम् । हुवेम । मघऽवा-

नम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजेऽसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ २२ ॥

III. 31.

शासत् । वह्निः । दुहितुः । नप्त्यम् । गात् । विद्वान् । ऋतस्य । दीधितिम् । सपर्यन् । पिता । यत्र । दुहितुः । सेकम् । ऋञ्जन् । सम् । शग्म्येन । मनसा । दधन्वे ॥ १ ॥ न । जामये । तान्वः । रिक्थम् । अरैक् । चकार । गर्भम् । सनितुः । निऽधानम् । यदि । मातरः । जनयन्त । वह्निम् । अन्यः । कर्ता । सुऽकृतोः । अन्यः । ऋन्धन् ॥२॥ अग्निः । जज्ञे । जुह्वा । रेजमानः । महः । पुत्रान् । अरुषस्य । प्रऽयक्षे । महान् । गर्भः । महि । आ । जातम् । एषाम् । मही । प्रऽवृत् । हरिऽअश्वस्य । यज्ञैः ॥ ३ ॥ अभि । जैत्रीः । असचन्त । स्पृधानम् । महि । ज्योतिः । तमसः । निः । अजानन् । तम् । जानतीः । प्रति । उत् । आयन् । उषसः । पतिः । गवाम् । अभवत् । एकः । इन्द्रः ॥ ४ ॥ वीळौ । सतीः । अभि । धीराः । अतृन्दन् । प्राचा । अहिन्वन् । मनसा । सप्त । विप्राः । विश्वाम् । अविन्दन् । पथ्याम् । ऋतस्य । प्रऽजानन् । इत् । ता । नमसा । आ । विवेश ॥ ५ ॥ विदत् । यदि । सरमा । रुग्णम् । अद्रेः । महि । पाथः । पूर्व्यम् । सध्र्यक् । करिति कः । अग्रम् । नयत् । सुऽपदी । अक्षराणाम् । अच्छ । रवम् । प्रथमा । जानती । गात् ॥ ६ ॥ अगच्छत् । ऊँ इति । विप्रऽतमः । सखिऽयन् । असूदयत् । सुऽकृते । गर्भम् । अद्रिः । ससान । मर्यः । युवऽभिः । मखस्यन् । अथ । अभवत् । अङ्गिराः । सद्यः । अर्चन् ॥ ७ ॥ सतःऽ-

संतः । प्रतिऽमानम् । पुरःऽभूः । विश्वा । वेद । जनिम । हन्ति ।
शुष्णम् । प्र । नः । दिवः । पदऽवीः । गव्युः । अर्चन् ।सखा । सखीन् ।
अमुञ्चत् । निः । अवद्यात् ॥८॥ नि । गव्यता । मनसा । सेदुः । अर्कैः ।
कृण्वानासः । अमृतऽत्वाय । गातुम् । इदम् । चित् । नु । सदनम् ।
भूरि । एषाम् । येन । मासान् । असिसासन् । ऋतेन ॥ ९ ॥ सम्ऽ-
पश्यमानाः । अमदन् । अभि । स्वम् । पयः । प्रत्नस्य । रेतसः ।
दुघानाः । वि । रोदसी इति । अतपत् । घोषः । एषाम् । जाते । निःऽ-
स्थाम् । अदधुः । गोषु । वीरान् ॥ १० ॥ सः । जातेभिः । वृत्रऽहा ।
सः । इत् । ऊँ इति । हव्यैः । उत् । उस्रियाः । असृजत् । इन्द्रः ।
अर्कैः । उरूची । अस्मै । घृतऽवत् । भरन्ती । मधु । स्वाद्म । दुदुहे ।
जेन्या । गौः ॥ ११ ॥ पित्रे । चित् । चक्रुः । सदनम् । सम् । अस्मै ।
महि । त्विषिऽमत् । सुऽकृतः । वि । हि । ख्यन् । विऽस्कभ्नन्तः ।
स्कम्भनेन । जनित्री इति । आसीनाः । ऊर्ध्वम् । रभसम् । वि ।
मिन्वन् ॥ १२ ॥ मही । यदि । धिषणा । शिश्नथे । धात् । सद्यःऽ-
वृधम् । विऽभ्वम् । रोदस्योः । गिरः । यस्मिन् । अनवद्याः । सम्ऽईचीः ।
विश्वाः । इन्द्राय । तविषीः । अनुत्ताः ॥ १३ ॥ महि । आ । ते ।
सख्यम् । वश्मि । शक्तीः । आ । वृत्रऽघ्ने । निऽयुतः । यन्ति । पूर्वीः ।
महि । स्तोत्रम् । अवः । आ । अगन्म । सूरेः । अस्माकम् । सु । मघऽ-
वन् । बोधि । गोपाः ॥ १४ ॥ महि । क्षेत्रम् । पुरु । चन्द्रम् । विविद्वान् ।
आत् । इत् । सखिऽभ्यः । चरथम् । सम् । ऐरत् । इन्द्रः । नृऽभिः ।
अजनत् । दीद्यानः । साकम् । सूर्यम् । उषसम् । गातुम् । अग्निम् ॥१५॥
अपः । चित् । एषः । विऽभ्वः । दमूनाः । प्र । सध्रीचीः । असृजत् ।

विश्वऽचन्द्राः । मध्वः । पुनानाः । कविऽभिः । पवित्रैः । द्युऽभिः । हिन्वन्ति । अक्तुऽभिः । धनुत्रीः ॥ १६ ॥ अनु । कृष्णे इति । वसुधिती इति वसुऽधिती । जिहाते इति । उभे इति । सूर्यस्य । मंहना । यजत्रे इति । परि । यत् । ते । महिमानम् । वृजध्यै । सखायः । इन्द्र । काम्याः । ऋजिप्याः ॥ १७ ॥ पतिः । भव । वृत्रऽहन् । सूनृतानाम् । गिराम् । विश्वऽआयुः । वृषभः । वयःऽधाः । आ । नः । गहि । सख्येभिः । शिवेभिः । महान् । महीभिः । ऊतिऽभिः । सरण्यन् ॥ १८ ॥ तम् । अङ्गिरस्वत् । नमसा । सपर्यन् । नव्यम् । कृणोमि । सन्यसे । पुराऽजाम् । द्रुहः । वि । याहि । बहुलाः । अदेवीः । स्वरिति स्वः । च । नः । मघऽवन् । सातये । धाः ॥ १९ ॥ मिहः । पावकाः । प्रऽतताः । अभूवन् । स्वस्ति । नः । पिपृहि । पारम् । आसाम् । इन्द्र । त्वम् । रथिरः । पाहि । नः । रिषः । मक्षुऽमक्षु । कृणुहि । गोऽजितः । नः ॥ २० ॥ अदेदिष्ट । वृत्रऽहा । गोऽपतिः । गाः । अन्तरिति । कृष्णान् । अरुषैः । धामऽभिः । गात् । प्र । सूनृताः । दिशमानः । ऋतेन । दुरः । च । विश्वाः । अवृणोत् । अप । स्वाः ॥ २१ ॥ शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ २२ ॥

III. 32.

इन्द्र । सोमम् । सोमऽपते । पिब । इमम् । माध्यंदिनम् । सवनम् । चारु । यत् । ते । प्रऽपुथ्य । शिप्रे इति । मघऽवन् । ऋजीषिन् । विऽमुच्य । हरी इति । इह । मादयस्व ॥ १ ॥ गोऽआशिरम् । मन्थिनम् । इन्द्र । शुक्रम् । पिब । सोमम् । ररिम । ते । मदाय । ब्रह्मऽकृता ।

मारुतेन । गणेन । सऽजोषाः । रुद्रैः । तृपत् । आ । वृषस्व ॥ २ ॥
ये । ते । शुष्मम् । ये । तविषीम् । अवर्धन् । अर्चन्तः । इन्द्र । मरुतः ।
ते । ओजः । माध्यंदिने । सवने । वज्रऽहस्त । पिब । रुद्रेभिः । सऽ-
गणः । सुऽशिप्र ॥ ३ ॥ ते । इत् । नु । अस्य । मधुऽमत् । विविप्रे ।
इन्द्रस्य । शर्धः । मरुतः । ये । आसन् । येभिः । वृत्रस्य । इषितः ।
विवेद । अमर्मणः । मन्यमानस्य । मर्म ॥ ४ ॥ मनुष्वत् । इन्द्र । सव-
नम् । जुषाणः । पिब । सोमम् । शश्वते । वीर्याय । सः । आ । ववृत्स्व ।
हरिऽअश्व । यज्ञैः । सरण्युऽभिः । अपः । अर्णा । सिसर्षि ॥ ५ ॥
त्वम् । अपः । यत् । ह । वृत्रम् । जघन्वान् । अत्यान्ऽइव । प्र । असृजः ।
सर्तवै । आजौ । शयानम् । इन्द्र । चरता । वधेन । वव्रिऽवांसम् ।
परि । देवीः । अदेवम् ॥ ६ ॥ यजामः । इत् । नमसा । वृद्धम् ।
इन्द्रम् । बृहन्तम् । ऋष्वम् । अजरम् । युवानम् । यस्य । प्रिये इति ।
ममतुः । यज्ञियस्य । न । रोदसी इति । महिमानम् । ममाते इति ॥ ७ ॥
इन्द्रस्य । कर्म । सुऽकृता । पुरूणि । व्रतानि । देवाः । न । मिनन्ति ।
विश्वे । दाधार । यः । पृथिवीम् । द्याम् । उत । इमाम् । जजान ।
सूर्यम् । उषसम् । सुऽदंसाः ॥ ८ ॥ अद्रोघ । सत्यम् । तव । तत् ।
महिऽत्वम् । सद्यः । यत् । जातः । अपिबः । ह । सोमम् । न । द्यावः ।
इन्द्र । तवसः । ते । ओजः । न । अहा । न । मासाः । शरदः ।
वरन्त ॥ ९ ॥ त्वम् । सद्यः । अपिबः । जातः । इन्द्र । मदाय ।
सोमम् । परमे । विऽओमन् । यत् । ह । द्यावापृथिवी इति । आ ।
अविवेशीः । अथ । अभवः । पूर्व्यः । कारुऽधायाः ॥ १० ॥ अहन् ।
अहिम् । परिऽशयानम् । अर्णः । ओजायमानम् । तुविऽजात । तव्यान् ।

न॒ । ते॒ । म॒हि॒ऽत्वम् । अनु॑ । भत् । अध॑ । द्यौः । यत् । अ॒न्यया॑ ।
स्फि॒ग्या॑ । क्षाम् । अव॑स्थाः ॥ ११ ॥ य॒ज्ञः । हि । ते॒ । इ॒न्द्र॒ । वर्ध॑नः ।
भूत् । उ॒त । प्रि॒यः । सु॒तऽसो॑मः । मि॒येधः॑ । य॒ज्ञेन॑ । य॒ज्ञम् । अ॒व॒ ।
य॒ज्ञियः॑ । सन् । य॒ज्ञः । ते॒ । वज्र॑म् । अ॒हि॒ऽहत्ये॑ । आ॒व॒त् ॥ १२ ॥
य॒ज्ञेन॑ । इन्द्र॑म् । अव॑सा । आ । च॒क्रे॒ । अ॒र्वाक् । आ । ए॒न॒म् ।
सु॒म्नाय॑ । नव्य॑से । व॒वृ॒त्या॒म् । यः । स्तोमे॑भिः । व॒वृ॒धे । पू॒र्व्येभिः॑ ।
यः । म॒ध्य॒मेभिः॑ । उ॒त । नूत॑नेभिः ॥ १३ ॥ वि॒वेष॑ । यत् । मा॒ ।
धि॒षणा॑ । ज॒जान॑ । स्तवै॑ । पु॒रा । पार्या॑त् । इन्द्र॑म् । अह्नः॑ । अंह॑सः ।
यत्र॑ । पी॒प॑रत् । यथा॑ । नः॒ । ना॒वाऽइ॑व । यान्त॑म् । उ॒भये॑ । ह॒व॒न्ते॒ ॥१४॥
आऽपू॑र्णः । अ॒स्य॒ । क॒लशः॑ । स्वाहा॑ । सेक्ता॑ऽइव । कोश॑म् । सि॒सि॒चे॒ ।
पिब॑ध्यै । सम् । ऊँ॒ इति॑ । प्रि॒याः । आ । अ॒व॒वृ॒त्र॒न् । मदा॑य । प्र॒ऽद॒क्षि॒-
णित् । अ॒भि । सोमा॑सः । इन्द्र॑म् ॥ १५ ॥ न । त्वा॒ । ग॒भी॒रः । पु॒रु॒ऽ-
हू॒त॒ । सिन्धुः॑ । न । अद्र॑यः । परि॑ । सन्तः॑ । व॒र॒न्त॒ । इ॒त्था । सखि॑ऽ-
भ्यः । इ॒षि॒तः । यत् । इ॒न्द्र॒ । आ । दृ॒ळ्हम् । चि॒त् । अरु॑जः । गव्य॑म् ।
ऊ॒र्वम् ॥ १६ ॥ शु॒नम् । हु॒वे॒म॒ । म॒घऽवा॑नम् । इन्द्र॑म् । अ॒स्मिन् । भरे॑ ।
नृऽत॑मम् । वाज॑ऽसातौ । शृ॒ण्वन्त॑म् । उ॒ग्रम् । ऊ॒तये॑ । स॒मत्ऽसु॑ । घ्नन्त॑म् ।
वृ॒त्राणि॑ । स॒म्ऽजित॑म् । धना॑नाम् ॥ १७ ॥

III. 33.

प्र । पर्व॑तानाम् । उ॒श॒ती इति॑ । उ॒पऽस्था॑त् । अश्वे॑ इ॒वेत्यश्वे॑ऽइव ।
वि॒सि॑ते॒ इति॒ विऽसि॑ते । हास॑माने॒ इति॑ । गावा॑ऽइव । शु॒भ्रे इति॑ ।
मा॒तरा॑ । रि॒हा॒णे इति॑ । विऽपाट् । शु॒तुद्री॑ । पय॑सा । ज॒वे॒ते॒ इति॑ ॥ १ ॥
इन्द्रे॑षिते॒ इतीन्द्र॑ऽइषिते । प्र॒ऽस॒वम् । भिक्ष॑माणे॒ इति॑ । अच्छ॑ । स॒मु॒द्रम् ।

रथ्याऽइव । याथः । समाराणे इति सम्ऽआराणे । ऊर्मिऽभिः । पिन्व-
माने इति । अन्या । वाम् । अन्याम् । अपि । एति । शुभ्रे इति ॥ २ ॥
अच्छ । सिन्धुम् । मातृऽतमाम् । अयासम् । विऽपाशम् । उर्वीम् ।
सुऽभगाम् । अगन्म । वत्सम्ऽइव । मातरा । संरिहाणे इति सम्ऽरि-
हाणे । समानम् । योनिम् । अनु । संचरन्ती इति सम्ऽचरन्ती ॥ ३ ॥
एना । वयम् । पयसा । पिन्वमानाः । अनु । योनिम् । देवऽकृतम् ।
चरन्तीः । न । वर्तवे । प्रऽसवः । सर्गऽतक्तः । किम्ऽयुः । विप्रः ।
नद्यः । जोहवीति ॥ ४ ॥ रमध्वम् । मे । वचसे । सोम्याय । ऋतऽ-
वरीः । उप । मुहूर्तम् । एवैः । प्र । सिन्धुम् । अच्छ । बृहती । मनीषा ।
अवस्युः । अह्वे । कुशिकस्य । सूनुः ॥ ५ ॥ इन्द्रः । अस्मान् । अर-
दत् । वज्रऽबाहुः । अप । अहन् । वृत्रम् । परिऽधिम् । नदीनाम् ।
देवः । अनयत् । सविता । सुऽपाणिः । तस्य । वयम् । प्रऽसवे । यामः ।
उर्वीः ॥ ६ ॥ प्रऽवाच्यम् । शश्वधा । वीर्यम् । तत् । इन्द्रस्य । कर्म ।
यत् । अहिम् । विऽवृश्चत् । वि । वज्रेण । परिऽसदः । जघान । आयन् ।
आपः । अयनम् । इच्छमानाः ॥ ७ ॥ एतत् । वचः । जरितः । मा ।
अपि । मृष्ठाः । आ । यत् । ते । घोषान् । उत्ऽतरा । युगानि । उक्थेषु ।
कारो इति । प्रति । नः । जुषस्व । मा । नः । नि । करिति कः ।
पुरुषऽत्रा । नमः । ते ॥ ८ ॥ ओ इति । सु । स्वसारः । कारवे ।
शृणोत । ययौ । वः । दूरात् । अनसा । रथेन । नि । सु । नमध्वम् ।
भवत । सुऽपाराः । अधःऽअक्षाः । सिन्धवः । स्रोत्याभिः ॥ ९ ॥
आ । ते । कारो इति । शृणवाम । वचांसि । ययाथ । दूरात् । अनसा ।
रथेन । नि । ते । नंसै । पीप्यानाऽइव । योषा । मर्यायऽइव । कन्या ।

शश्वचै । त इति ते ॥ १० ॥ यत् । अङ्ग । त्वा । भरताः । सम्ऽ-
तरेयुः । गव्यन् । ग्रामः । इषितः । इन्द्रऽजूतः । अर्षात् । अह । प्रऽ-
सवः । सर्गऽतक्तः । आ । वः । वृणे । सुऽमतिम् । यज्ञियानाम् ॥ ११ ॥
अतारिषुः । भरताः । गव्यवः । सम् । अभक्त । विप्रः । सुऽमतिम् ।
नदीनाम् । प्र । पिन्वध्वम् । इषयन्तीः । सुऽराधाः । आ । वक्षणाः ।
पृणध्वम् । यात । शीभम् ॥ १२ ॥ उत् । वः । ऊर्मिः । शम्याः ।
हन्तु । आपः । योक्त्राणि । मुञ्चत । मा । अदुःऽकृतौ । विऽएनसा ।
अघ्न्यौ । शूनम् । आ । अरताम् ॥ १३ ॥

III. 34.

इन्द्रः । पूःऽभित् । आ । अतिरत् । दासम् । अर्कैः । विदत्ऽ-
वसुः । दयमानः । वि । शत्रून् । ब्रह्मऽजूतः । तन्वा । ववृधानः ।
भूरिऽदात्रः । आ । अपृणत् । रोदसी इति । उभे इति ॥ १ ॥ मखस्य ।
ते । तविषस्य । प्र । जूतिम् । इयर्मि । वाचम् । अमृताय । भूषन् । इन्द्र ।
क्षितीनाम् । असि । मानुषीणाम् । विशाम् । दैवीनाम् । उत । पूर्वऽ-
यावा ॥ २ ॥ इन्द्रः । वृत्रम् । अवृणोत् । शर्धऽनीतिः । प्र । मायि-
नाम् । अमिनात् । वर्पऽनीतिः । अहन् । विऽअंसम् । उशधक् । वनेषु ।
आविः । धेनाः । अकृणोत् । राम्याणाम् ॥ ३ ॥ इन्द्रः । स्वःऽसाः ।
जनयन् । अहानि । जिगाय । उशिक्ऽभिः । पृतनाः । अभिष्टिः । प्र ।
अरोचयत् । मनवे । केतुम् । अह्नाम् । अविन्दत् । ज्योतिः । बृहते ।
रणाय ॥ ४ ॥ इन्द्रः । तुजः । बर्हणाः । आ । विवेश । नृऽवत् ।
दधानः । नर्या । पुरूणि । अचेतयत् । धियः । इमाः । जरित्रे । प्र ।
इमम् । वर्णम् । अतिरत् । शुक्रम् । आसाम् ॥ ५ ॥ महः । महानि ।

पनयन्ति । अस्य । इन्द्रस्य । कर्म । सुऽकृता । पुरूणि । वृजनेन । वृजि-
नान् । सम् । पिपेष । मायाभिः । दस्यून् । अभिभूतिऽओजाः ॥ ६ ॥
युधा । इन्द्रः । मह्ना । वरिवः । चकार । देवेभ्यः । सत्ऽपतिः । चर्ष-
णिऽप्राः । विवस्वतः । सदने । अस्य । तानि । विप्राः । उक्थेभिः ।
कवयः । गृणन्ति ॥ ७ ॥ सत्राऽसहम् । वरेण्यम् । सहःऽदाम् । ससऽ-
वांसम् । स्वः । अपः । च । देवीः । ससान । यः । पृथिवीम् । द्याम् ।
उत । इमाम् । इन्द्रम् । मदन्ति । अनु । धीऽरणासः ॥ ८ ॥ ससान ।
अत्यान् । उत । सूर्यम् । ससान । इन्द्रः । ससान । पुरुऽभोजसम् ।
गाम् । हिरण्ययम् । उत । भोगम् । ससान । हत्वी । दस्यून् । प्र ।
आर्यम् । वर्णम् । आवत् ॥ ९ ॥ इन्द्रः । ओषधीः । असनोत् । अहानि ।
वनस्पतीन् । असनोत् । अन्तरिक्षम् । बिभेद । वलम् । नुनुदे । विऽ-
वाचः । अथ । अभवत् । दमिता । अभिऽक्रतूनाम् ॥ १० ॥ शुनम् ।
हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ ।
शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजि-
तम् । धनानाम् ॥ ११ ॥

III. 35.

तिष्ठ । हरी इति । रथे । आ । युज्यमाना । याहि । वायुः । न । निऽयुतः ।
नः । अच्छ । पिबासि । अन्धः । अभिऽसृष्टः । अस्मे इति । इन्द्र । स्वाहा ।
ररिम । ते । मदाय ॥ १ ॥ उप । अजिरा । पुरुऽहूताय । सप्ती इति ।
हरी इति । रथस्य । धूःऽसु । आ । युनज्मि । द्रवत् । यथा । सम्ऽ-
भृतम् । विश्वतः । चित् । उप । इमम् । यज्ञम् । आ । वहातः ।
इन्द्रम् ॥ २ ॥ उपो इति । नयस्व । वृषणा । तपुःऽपा । उत । ईम् ।

अव । त्वम् । वृषभ । स्वधाऽवः । ग्रसेताम् । अश्वा । वि । मुच । इह ।
शोणा । दिवेऽदिवे । सऽदृशीः । अद्धि । धानाः ॥ ३ ॥ ब्रह्मणा । ते ।
ब्रह्मऽयुजा । युनज्मि । हरी इति । सखाया । सधऽमादे । आशू इति ।
स्थिरम् । रथम् । सुऽखम् । इन्द्र । अधिऽतिष्ठन् । प्रऽजानन् । विद्वान् ।
उप । याहि । सोमम् ॥ ४ ॥ मा । ते । हरी इति । वृषणा । वीतऽ-
पृष्ठा । नि । रीरमन् । यजमानासः । अन्ये । अतिऽआयाहि । शश्वतः ।
वयम् । ते । अरम् । सुतेभिः । कृणवाम । सोमैः ॥ ५ ॥ तव । अयम् ।
सोमः । त्वम् । आ । इहि । अर्वाङ् । शश्वत्ऽतमम् । सुऽमनाः । अस्य ।
पाहि । अस्मिन् । यज्ञे । बर्हिषि । आ । निऽसद्य । दधिष्व । इमम् ।
जठरे । इन्दुम् । इन्द्र ॥ ६ ॥ स्तीर्णम् । ते । बर्हिः । सुतः । इन्द्र ।
सोमः । कृताः । धानाः । अत्तवे । ते । हरिऽभ्याम् । तत्ऽओकसे ।
पुरुऽशाकाय । वृष्णे । मरुत्वते । तुभ्यम् । राता । हवींषि ॥ ७ ॥
इमम् । नरः । पर्वताः । तुभ्यम् । आपः । सम् । इन्द्र । गोभिः ।
मधुऽमन्तम् । अक्रन् । तस्य । आऽगत्य । सुऽमनाः । ऋष्व । पाहि ।
प्रऽजानन् । विद्वान् । पथ्याः । अनु । स्वाः ॥ ८ ॥ यान् । आ ।
अभजः । मरुतः । इन्द्र । सोमे । ये । त्वाम् । अवर्धन् । अभवन् ।
गणः । ते । तेभिः । एतम् । सऽजोषाः । वावशानः । अग्नेः । पिब ।
जिह्वया । सोमम् । इन्द्र ॥ ९ ॥ इन्द्र । पिब । स्वधया । चित् । सुतस्य ।
अग्नेः । वा । पाहि । जिह्वया । यजत्र । अध्वर्योः । वा । प्रऽयतम् ।
शक्र । हस्तात् । होतुः । वा । यज्ञम् । हविषः । जुषस्व ॥ १० ॥
शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् ।

वाजेऽसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ ११ ॥

III. 36.

इमाम् । ऊँ इति । सु । प्रऽभृतिम् । सातये । धाः । शश्वत्ऽशश्वत् । ऊतिऽभिः । यादमानः । सुतेऽसुते । ववृधे । वर्धनेभिः । यः । कर्मऽभिः । महत्ऽभिः । सुऽश्रुतः । भूत् ॥ १ ॥ इन्द्राय । सोमाः । प्रऽदिवः । विदानाः । ऋभुः । येभिः । वृषऽपर्वा । विऽहायाः । प्रऽयम्यमानान् । प्रति । सु । गृभाय । इन्द्र । पिब । वृषऽधूतस्य । वृष्णः ॥२॥ पिब । वर्धस्व । तव । घ । सुतासः । इन्द्र । सोमासः । प्रथमाः । उत । इमे । यथा । अपिबः । पूर्व्यान् । इन्द्र । सोमान् । एव । पाहि । पन्यः । अद्य । नवीयान् ॥ ३ ॥ महान् । अमत्रः । वृजने । विऽरप्शी । उग्रम् । शवः । पत्यते । धृष्णु । ओजः । न । अह । विव्याच । पृथिवी । चन । एनम् । यत् । सोमासः । हरिऽअश्वम् । अमन्दन् ॥ ४ ॥ महान् । उग्रः । ववृधे । वीर्याय । सम्ऽआचक्रे । वृषभः । काव्येन । इन्द्रः । भगः । वाजऽदाः । अस्य । गावः । प्र । जायन्ते । दक्षिणाः । अस्य । पूर्वीः ॥५॥ प्र । यत् । सिन्धवः । प्रऽसवम् । यथा । आयन् । आपः । समुद्रम् । रथ्याऽइव । जग्मुः । अतः । चित् । इन्द्रः । सदसः । वरीयान् । यत् । ईम् । सोमः । पृणति । दुग्धः । अंशुः ॥ ६ ॥ समुद्रेण । सिन्धवः । यादमानाः । इन्द्राय । सोमम् । सुऽसुतम् । भरन्तः । अंशुम् । दुहन्ति । हस्तिनः । भरित्रैः । मध्वः । पुनन्ति । धारया । पवित्रैः ॥ ७ ॥ ह्रदाःऽइव । कुक्षयः । सोमऽधानाः । सम् । ईम् इति । विव्याच । सवना । पुरूणि । अन्ना । यत् । इन्द्रः । प्रथमा । वि । आश । वृत्रम् । जघन्वान् ।

अवृणीत । सोमम् ॥ ८ ॥ आ । तु । भर । मार्किः । एतत् । परि । स्थात् । विद्म । हि । त्वा । वसुऽपतिम् । वसूनाम् । इन्द्र । यत् । ते । माहिनम् । दत्रम् । अस्ति । अस्मभ्यम् । तत् । हरिऽअश्व । प्र । यन्धि ॥९॥ अस्मे इति । प्र । यन्धि । मघऽवन् । ऋजीषिन् । इन्द्र । रायः । विश्वऽवारस्य । भूरेः । अस्मे इति । शतम् । शरदः । जीवसे । धाः । अस्मे इति । वीरान् । शश्वतः । इन्द्र । शिप्रिन् ॥ १० ॥ शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ ११ ॥

III. 37.

वार्त्रऽहत्याय । शवसे । पृतनाऽसह्याय । च । इन्द्र । त्वा । आ । वर्तयामसि ॥ १ ॥ अर्वाचीनम् । सु । ते । मनः । उत । चक्षुः । शतक्रतो इति शतऽक्रतो । इन्द्र । कृण्वन्तु । वाघतः ॥ २ ॥ नामानि । ते । शतक्रतो इति शतऽक्रतो । विश्वाभिः । गीःऽभिः । ईमहे । इन्द्र । अभिमातिऽसह्ये ॥ ३ ॥ पुरुऽस्तुतस्य । धामऽभिः । शतेन । महयामसि । इन्द्रस्य । चर्षणिऽधृतः ॥ ४ ॥ इन्द्रम् । वृत्राय । हन्तवे । पुरुऽहूतम् । उप । ब्रुवे । भरेषु । वाजऽसातये ॥ ५ ॥ वाजेषु । सासहिः । भव । त्वाम् । ईमहे । शतक्रतो इति शतऽक्रतो । इन्द्र । वृत्राय । हन्तवे ॥ ६ ॥ द्युम्नेषु । पृतनाज्ये । पृत्सुतूर्षु । श्रवःऽसु । च । इन्द्र । साक्ष्व । अभिऽमातिषु ॥ ७ ॥ शुष्मिन्ऽतमम् । नः । ऊतये । द्युम्निनम् । पाहि । जागृविम् । इन्द्र । सोमम् । शतक्रतो इति शतऽक्रतो ॥ ८ ॥ इन्द्रियाणि । शतक्रतो इति शतऽक्रतो । या । ते । जनेषु । पञ्चऽसु । इन्द्र । तानि ।

ते । आ । वृणे ॥ ९ ॥ अगन् । इन्द्र । श्रवः । बृहत् । द्युम्नम् ।
दधिष्व । दुस्तरम् । उत् । ते । शुष्मम् । तिरामसि ॥ १० ॥ अर्वाऽवतः ।
नः । आ । गहि । अथो इति । शक्र । पराऽवतः । ऊँ इति । लोकः ।
यः । ते । अद्रिऽवः । इन्द्र । इह । ततः । आ । गहि ॥ ११ ॥

III. 38.

अभि । तष्टाऽइव । दीधय । मनीषाम् । अत्यः । न । वाजी । सुऽ-
धुरः । जिहानः । अभि । प्रियाणि । मर्मृशत् । पराणि । कवीन् ।
इच्छामि । सम्ऽदृशे । सुऽमेधाः ॥ १ ॥ इना । उत । पृच्छ । जनिम ।
कवीनाम् । मनःऽधृतः । सुऽकृतः । तक्षत । द्याम् । इमाः । ऊँ इति ।
ते । प्रऽन्यः । वर्धमानाः । मनःऽवाताः । अध । नु । धर्मणि । ग्मन् ॥२॥
नि । सीम् । इत् । अत्र । गुह्या । दधानाः । उत । क्षत्राय । रोदसी
इति । सम् । अञ्जन् । सम् । मात्राभिः । ममिरे । येमुः । उर्वी इति ।
अन्तः । मही इति । समृते इति सम्ऽऋते । धायसे । धुरिति धुः ॥ ३ ॥
आऽतिष्ठन्तम् । परि । विश्वे । अभूषन् । श्रियः । वसानः । चरति ।
स्वऽरोचिः । महत् । तत् । वृष्णः । असुरस्य । नाम । आ । विश्वऽरूपः ।
अमृतानि । तस्थौ ॥ ४ ॥ असूत । पूर्वः । वृषभः । ज्यायान् । इमाः ।
अस्य । शुरुधः । सन्ति । पूर्वीः । दिवः । नपाता । विदथस्य । धीभिः ।
क्षत्रम् । राजाना । प्रऽदिवः । दधाथे इति ॥ ५ ॥ त्रीणि । राजाना ।
विदथे । पुरूणि । परि । विश्वानि । भूषथः । सदांसि । अपश्यम् । अत्र ।
मनसा । जगन्वान् । व्रते । गन्धर्वान् । अपि । वायुऽकेशान् ॥ ६ ॥
तत् । इत् । नु । अस्य । वृषभस्य । धेनोः । आ । नामऽभिः । ममिरे ।
सक्म्यम् । गोः । अन्यत्ऽअन्यत् । असुर्यम् । वसानाः । नि । मायिनः ।

ममिरे । रूपम् । अस्मिन् ॥ ७ ॥ तत् । इत् । नु । अस्य । सवितुः ।
नकिः । मे । हिरण्ययीम् । अमतिम् । याम् । अशिश्रेत् । आ । सुऽ-
स्तुती । रोदसी इति । विश्वमिन्वे इति विश्वम्ऽइन्वे । अपिऽइव ।
योषा । जनिमानि । वव्रे ॥ ८ ॥ युवम् । प्रत्नस्य । साधथः । महः ।
यत् । दैवी । स्वस्तिः । परि । नः । स्यातम् । गोपाजिह्वस्य । तस्थुषः ।
विऽरूपा । विश्वे । पश्यन्ति । मायिनः । कृतानि ॥ ९ ॥ शुनम् । हुवेम ।
मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ । शृण्व-
न्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् ।
धनानाम् ॥ १० ॥

## III. 39.

इन्द्रम् । मतिः । हृदः । आ । वच्यमाना । अच्छ । पतिम् । स्तोमऽ-
तष्टा । जिगाति । या । जागृविः । विदथे । शस्यमाना । इन्द्र । यत् ।
ते । जायते । विद्धि । तस्य ॥ १ ॥ दिवः । चित् । आ । पूर्व्या ।
जायमाना । वि । जागृविः । विदथे । शस्यमाना । भद्रा । वस्त्राणि ।
अर्जुना । वसाना । सा । इयम् । अस्मे इति । सनऽजा । पित्र्या । धीः ॥ २ ॥
यमा । चित् । अत्र । यमऽसूः । असूत । जिह्वायाः । अग्रम् । पतत् ।
आ । हि । अस्थात् । वपूंषि । जाता । मिथुना । सचेते इति । तमःऽ-
हना । तपुषः । बुध्ने । आऽइता ॥ ३ ॥ नकिः । एषाम् । निन्दिता ।
मर्त्येषु । ये । अस्माकम् । पितरः । गोषु । योधाः । इन्द्रः । एषाम् ।
दृंहिता । माहिनऽवान् । उत् । गोत्राणि । ससृजे । दंसनाऽवान् ॥ ४ ॥
सखा । ह । यत्र । सखिऽभिः । नवऽग्वैः । अभिऽज्ञु । आ । सत्वऽभिः ।
गाः । अनुऽग्मन् । सत्यम् । तत् । इन्द्रः । दशऽभिः । दशऽग्वैः ।

सूर्यम् । विवेद । तमसि । क्षियन्तम् ॥ ५ ॥ इन्द्रः । मधु । सम्ऽभृतम् । उस्रियायाम् । पत्ऽवत् । विवेद । शफऽवत् । नमे । गोः । गुहा । हितम् । गुह्यम् । गूळ्हम् । अप्ऽसु । हस्ते । दधे । दक्षिणे । दक्षिणऽवान् ॥ ६ ॥ ज्योतिः । वृणीत । तमसः । विऽजानन् । आरे । स्याम । दुःऽइतात् । अभीके । इमाः । गिरः । सोमऽपाः । सोमऽवृद्ध । जुषस्व । इन्द्र । पुरुऽतमस्य । कारोः ॥ ७ ॥ ज्योतिः । यज्ञाय । रोदसी इति । अनु । स्यात् । आरे । स्याम । दुःऽइतस्य । भूरेः । भूरि । चित् । हि । तुजतः । मर्त्यस्य । सुऽपारासः । वसवः । बर्हणाऽवत् ॥ ८ ॥ शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ ९ ॥

III. 40.

इन्द्र । त्वा । वृषभम् । वयम् । सुते । सोमे । हवामहे । सः । पाहि । मध्वः । अन्धसः ॥ १ ॥ इन्द्र । क्रतुऽविदम् । सुतम् । सोमम् । हर्य । पुरुऽस्तुत । पिब । आ । वृषस्व । ततृपिम् ॥ २ ॥ इन्द्र । प्र । नः । धितऽवानम् । यज्ञम् । विश्वेभिः । देवेभिः । तिर । स्तवान । विश्पते ॥ ३ ॥ इन्द्र । सोमाः । सुताः । इमे । तव । प्र । यन्ति । सत्ऽपते । क्षयम् । चन्द्रासः । इन्दवः ॥ ४ ॥ दधिष्व । जठरे । सुतम् । सोमम् । इन्द्र । वरेण्यम् । तव । द्युक्षासः । इन्दवः ॥ ५ ॥ गिर्वणः । पाहि । नः । सुतम् । मधोः । धाराभिः । अज्यसे । इन्द्र । त्वाऽदातम् । इत् । यशः ॥ ६ ॥ अभि । द्युम्नानि । वनिनः । इन्द्रम् । सचन्ते । अक्षिता । पीत्वी । सोमस्य । वावृधे ॥ ७ ॥ अर्वाऽवतः ।

नः । आ । गहि । पराऽवतः । च । वृत्रऽहन् । इमाः । जुषस्व । नः । गिरः ॥ ८ ॥ यत् । अन्तरा । पराऽवतम् । अर्वाऽवतम् । च । हूयसे । इन्द्र । । इह । ततः । आ । गहि ॥ ९ ॥

III. 41.

आ । तु । नः । इन्द्र । मद्र्यक् । हुवानः । सोमऽपीतये । हरिऽभ्याम् । याहि । अद्रिऽवः ॥ १ ॥ सत्तः । होता । नः । ऋत्वियः । तिस्तिरे । बर्हिः । आनुषक् । अयुज्रन् । प्रातः । अद्रयः ॥ २ ॥ इमा । ब्रह्म । ब्रह्मऽवाहः । क्रियन्ते । आ । बर्हिः । सीद । वीहि । शूर । पुरोळाशम् ॥ ३ ॥ ररन्धि । सवनेषु । नः । एषु । स्तोमेषु । वृत्रऽहन् । उक्थेषु । इन्द्र । गिर्वणः ॥ ४ ॥ मतयः । सोमऽपाम् । उरुम् । रिहन्ति । शवसः । पतिम् । इन्द्रम् । वत्सम् । न । मातरः ॥ ५ ॥ सः । मन्दस्व । हि । अन्धसः । राधसे । तन्वा । महे । न । स्तोतारम् । निदे । करः ॥ ६ ॥ वयम् । इन्द्र । त्वाऽयवः । हविष्मन्तः । जरामहे । उत । त्वम् । अस्मऽयुः । वसो इति ॥ ७ ॥ मा । आरे । अस्मत् । वि । मुमुचः । हरिऽप्रिय । अर्वाङ् । याहि । इन्द्र । स्वधाऽवः । मत्स्व । इह ॥ ८ ॥ अर्वाञ्चम् । त्वा । सुऽखे । रथे । वहताम् । इन्द्र । केशिना । घृतस्नू इति घृतऽस्नू । बर्हिः । आऽसदे ॥ ९ ॥

III. 42.

उप । नः । सुतम् । आ । गहि । सोमम् । इन्द्र । गोऽआशिरम् । हरिऽभ्याम् । यः । ते । अस्मऽयुः ॥ १ ॥ तम् । इन्द्र । मदम् । आ । गहि । बर्हिःऽस्थाम् । ग्रावऽभिः । सुतम् । कुवित् । नु । अस्य । तृष्णवः ॥ २ ॥ इन्द्रम् । इत्था । गिरः । मम । अच्छ । अगुः । इषिताः ।

इतः । आऽवृतें । सोमऽपीतये ॥ ३ ॥ इन्द्रम् । सोमस्य । पीतये ।
स्तोमैः । इह । हवामहे । उक्थेभिः । कुवित् । आऽगमत् ॥ ४ ॥ इन्द्र ।
सोमाः । सुताः । इमे । तान् । दधिष्व । शतक्रतो इति शतऽक्रतो ।
जठरे । वाजिनीवसो इति वाजिनीऽवसो ॥ ५ ॥ विद्म । हि । त्वा ।
धनम्ऽजयम् । वाजेषु । दधृषम् । कवे । अर्ध । ते । सुम्नम् । ईमहे ॥ ६ ॥
इमम् । इन्द्र । गोऽआशिरम् । यवऽआशिरम् । च । नः । पिब । आऽगत्य ।
वृषऽभिः । सुतम् ॥ ७ ॥ तुभ्य । इत् । इन्द्र । स्वे । ओक्ये । सोमम् ।
चोदामि । पीतये । एषः । ररन्तु । ते । हृदि ॥ ८ ॥ त्वाम् । सुतस्य ।
पीतये । प्रत्नम् । इन्द्र । हवामहे । कुशिकासः । अवस्यवः ॥ ९ ॥

III. 43.

आ । याहि । अर्वाङ् । उप । वन्धुरेऽस्थाः । तव । इत् । अनु ।
प्रऽदिवः । सोमऽपेयम् । प्रिया । सखाया । वि । मुच । उप । बर्हिः ।
त्वाम् । इमे । हव्यऽवाहः । हवन्ते ॥ १ ॥ आ । याहि । पूर्वीः ।
अति । चर्षणीः । आ । अर्यः । आऽशिषः । उप । नः । हरिऽभ्याम् ।
इमाः । हि । त्वा । मतयः । स्तोमऽतष्टाः । इन्द्र । हवन्ते । सख्यम् ।
जुषाणाः ॥ २ ॥ आ । नः । यज्ञम् । नमःऽवृधम् । सऽजोषाः । इन्द्र ।
देव । हरिऽभिः । याहि । तूयम् । अहम् । हि । त्वा । मतिऽभिः ।
जोहवीमि । घृतऽप्रयाः । सधऽमादे । मधूनाम् ॥ ३ ॥ आ । च । त्वाम् ।
एता । वृषणा । वहातः । हरी इति । सखाया । सुऽधुरा । सुऽअङ्गा ।
धानाऽवत् । इन्द्रः । सवनम् । जुषाणः । सखा । सख्युः । शृणवत् ।
वन्दनानि ॥ ४ ॥ कुवित् । मा । गोपाम् । करसे । जनस्य । कुवित् ।
राजानम् । मघऽवन् । ऋजीषिन् । कुवित् । मा । ऋषिम् । पपिऽवांसम् ।

सुतस्य । कुवित् । मे । वस्वः । अमृतस्य । शिक्षाः ॥ ५ ॥ आ । त्वा । बृहन्तः । हरयः । युजानाः । अर्वाक् । इन्द्र । सधऽमादः । वहन्तु । प्र । ये । द्विता । दिवः । ऋञ्जन्ति । आताः । सुऽसंमृष्टासः । वृषभस्य । मूराः ॥ ६ ॥ इन्द्र । पिब । वृषऽधूतस्य । वृष्णः । आ । यम् । ते । श्येनः । उशते । जभार । यस्य । मदे । च्यवयसि । प्र । कृष्टीः । यस्य । मदे । अप । गोत्रा । ववर्थ ॥ ७ ॥ शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ ८ ॥

III. 44.

अयम् । ते । अस्तु । हर्यतः । सोमः । आ । हरिऽभिः । सुतः । जुषाणः । इन्द्र । हरिऽभिः । नः । आ । गहि । आ । तिष्ठ । हरितम् । रथम् ॥ १ ॥ हर्यन् । उषसम् । अर्चयः । सूर्यम् । हर्यन् । अरोचयः । विद्वान् । चिकित्वान् । हरिऽअश्व । वर्धसे । इन्द्र । विश्वाः । अभि । श्रियः ॥ २ ॥ द्याम् । इन्द्रः । हरिऽधायसम् । पृथिवीम् । हरिऽवर्पसम् । अधारयत् । हरितोः । भूरि । भोजनम् । ययोः । अन्तः । हरिः । चरत् ॥ ३ ॥ जज्ञानः । हरितः । वृषा । विश्वम् । आ । भाति । रोचनम् । हरिऽअश्वः । हरितम् । धत्ते । आयुधम् । आ । वज्रम् । बाह्वोः । हरिम् ॥ ४ ॥ इन्द्रः । हर्यन्तम् । अर्जुनम् । वज्रम् । शुक्रैः । अभिऽवृतम् । अप । अवृणोत् । हरिऽभिः । अद्रिऽभिः । सुतम् । उत् । गाः । हरिऽभिः । आजत ॥ ५ ॥

III. 45.

आ । मन्द्रैः । इन्द्र । हरिऽभिः । याहि । मयूररोमऽभिः । मा ।

त्वा । के । चित् । नि । यमन् । विम् । न । पाशिनः । अति । धन्वंऽइव । तान् । इहि ॥ १ ॥ वृत्रऽखादः । वलम्ऽरुजः । पुराम् । दर्मः । अपाम् । अजः । स्थाता । रथस्य । हर्योः । अभिऽस्वरे । इन्द्रः । दृळ्हा । चित् । आऽरुजः ॥ २ ॥ गम्भीरान् । उदधीन्ऽइव । क्रतुम् । पुष्यसि । गाःऽइव । प्र । सुऽगोपाः । यवसम् । धेनवः । यथा । ह्रदम् । कुल्याःऽइव । आशत ॥ ३ ॥ आ । नः । तुजम् । रयिम् । भर । अंशम् । न । प्रतिऽजानते । वृक्षम् । पक्वम् । फलम् । अङ्कीऽइव । धूनुहि । इन्द्र । सम्ऽपारणम् । वसु ॥ ४ ॥ स्वऽयुः । इन्द्र । स्वऽराट् । असि । स्मत्ऽदिष्टिः । स्वयशःऽतरः । सः । ववृधानः । ओजसा । पुरुऽस्तुत । भव । नः । सुश्रवःऽतमः ॥ ५ ॥

III. 46.

युध्मस्य । ते । वृषभस्य । स्वऽराजः । उग्रस्य । यूनः । स्थविरस्य । घृष्वेः । अजूर्यतः । वज्रिणः । वीर्याणि । इन्द्र । श्रुतस्य । महतः । महानि ॥ १ ॥ महान् । असि । महिष । वृष्ण्येभिः । धनऽस्पृत् । उग्र । सहमानः । अन्यान् । एकः । विश्वस्य । भुवनस्य । राजा । सः । योधय । च । क्षयय । च । जनान् ॥ २ ॥ प्र । मात्राभिः । रिरिचे । रोचमानः । प्र । देवेभिः । विश्वतः । अप्रतिऽइतः । प्र । मज्मना । दिवः । इन्द्रः । पृथिव्याः । प्र । उरोः । महः । अन्तरिक्षात् । ऋजीषी ॥ ३ ॥ उरुम् । गभीरम् । जनुषा । अभि । उग्रम् । विश्वऽव्यचसम् । अवतम् । मतीनाम् । इन्द्रम् । सोमासः । प्रऽदिवि । सुतासः । समुद्रम् । न । स्रवतः । आ । विशन्ति ॥ ४ ॥ यम् । सोमम् । इन्द्र । पृथिवीद्यावा । गर्भम् । न । माता । बिभृतः । त्वाऽया । तम् । ते । हिन्वन्ति । तम् ।

ऊँ इति । ते । मृजन्ति । अध्वर्यवः । वृषभ । पातवै । ऊँ इति ॥ ५ ॥

III. 47.

मरुत्वान् । इन्द्र । वृषभः । रणाय । पिब । सोमम् । अनुऽस्वधम् । मदाय । आ । सिञ्चस्व । जठरे । मध्वः । ऊर्मिम् । त्वम् । राजा । असि । प्रऽदिवः । सुतानाम् ॥ १ ॥ सऽजोषाः । इन्द्र । सऽगणः । मरुत्ऽभिः । सोमम् । पिब । वृत्रऽहा । शूर । विद्वान् । जहि । शत्रून् । अप । मृधः । नुदस्व । अथ । अभयम् । कृणुहि । विश्वतः । नः ॥२॥ उत । ऋतुऽभिः । ऋतुऽपाः । पाहि । सोमम् । इन्द्र । देवेभिः । सखिऽभिः । सुतम् । नः । यान् । आ । अभजः । मरुतः । ये । त्वा । अनु । अहन् । वृत्रम् । अदधुः । तुभ्यम् । ओजः ॥ ३ ॥ ये । त्वा । अहिऽहत्ये । मघऽवन् । अवर्धन् । ये । शाम्बरे । हरिऽवः । ये । गोऽइष्टौ । ये । त्वा । नूनम् । अनुऽमदन्ति । विप्राः । पिब । इन्द्र । सोमम् । सऽगणः । मरुत्ऽभिः ॥ ४ ॥ मरुत्वन्तम् । वृषभम् । ववृधानम् । अकवऽअरिम् । दिव्यम् । शासम् । इन्द्रम् । विश्वऽसहम् । अवसे । नूतनाय । उग्रम् । सहःऽदाम् । इह । तम् । हुवेम ॥ ५ ॥

III. 48.

सद्यः । ह । जातः । वृषभः । कनीनः । प्रऽभर्तुम् । आवत् । अन्धसः । सुतस्य । साधोः । पिब । प्रतिऽकामम् । यथा । ते । रसऽआशिरः । प्रथमम् । सोम्यस्य ॥ १ ॥ यत् । जायथाः । तत् । अहः । अस्य । कामे । अंशोः । पीयूषम् । अपिबः । गिरिऽस्थाम् । तम् । ते । माता । परि । योषा । जनित्री । महः । पितुः । दमे । आ । असिञ्चत् । अग्रे ॥ २ ॥ उपऽस्थाय । मातरम् । अन्नम् । ऐट्ट । तिग्मम् । अप-

श्यत् । अभि । सोमम् । ऊर्ध्वः । प्रऽयवयन् । अचरत् । गृत्सः । अन्यान् । महानि । चक्रे । पुरुधऽप्रतीकः ॥ ३ ॥ उग्रः । तुराषाट् । अभिभूतिऽओजाः । यथाऽवशम् । तन्वम् । चक्रे । एषः । त्वष्टारम् । इन्द्रः । जनुषा । अभिऽभूय । आऽमुष्य । सोमम् । अपिबत् । चमूषु ॥ ४ ॥ शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् धनानाम् ॥ ५ ॥

III. 49

शंस । महाम् । इन्द्रम् । यस्मिन् । विश्वाः । आ । कृष्टयः । सोमऽपाः । कामम् । अव्यन् । यम् । सुऽक्रतुम् । धिषणे इति । विभ्वऽतष्टम् । घनम् । वृत्राणाम् । जनयन्त । देवाः ॥ १ ॥ यम् । नु । नकिः । पृतनासु । स्वऽराजम् । द्विता । तरति । नृऽतमम् । हरिऽस्थाम् । इनऽतमः । सत्वऽभिः । यः । ह । शूषैः । पृथुऽज्रयाः । अमिनात् । आयुः । दस्योः ॥२॥ सहऽवा । पृत्ऽसु । तरणिः । न । अर्वा । विऽआनशिः । रोदसी इति । मेहनाऽवान् । भगः । न । कारे । हव्यः । मतीनाम् । पिताऽइव । चारुः । सुऽहवः । वयःऽधाः ॥ ३ ॥ धर्ता । दिवः । रजसः । पृष्टः । ऊर्ध्वः । रथः । न । वायुः । वसुऽभिः । नियुत्वान् । क्षपाम् । वस्ता । जनिता । सूर्यस्य । विऽभक्ता । भागम् । धिषणाऽइव । वाजम् ॥ ४ ॥ शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ ५ ॥

III. 50.

इन्द्रः । स्वाहा । पिबतु । यस्य । सोमः । आऽगत्य । तुम्रः । वृषभः । मरुत्वान् । आ । उरुऽव्यचाः । पृणताम् । एभिः । अन्नैः । आ । अस्य । हविः । तन्वः । कामम् । ऋध्याः ॥ १ ॥ आ । ते । सपर्यू इति । जवसे । युनज्मि । ययोः । अनु । प्रऽदिवः । श्रुष्टिम् । आवः । इह । त्वा । धेयुः । हरयः । सुऽशिप्र । पिब । तु । अस्य । सुऽसुतस्य । चारोः ॥ २ ॥ गोभिः । मिमिक्षुम् । दधिरे । सुऽपारम् । इन्द्रम् । ज्यैष्ठ्याय । धायसे । गृणानाः । मन्दानः । सोमम् । पपिऽवान् । ऋजीषिन् । सम् । अस्मभ्यम् । पुरुधा । गाः । इषण्य ॥ ३ ॥ इमम् । कामम् । मन्दय । गोभिः । अश्वैः । चन्द्रऽवता । राधसा । पप्रथः । च । स्वःऽयवः । मतिऽभिः । तुभ्यम् । विप्राः । इन्द्राय । वाहः । कुशिकासः । अक्रन् ॥ ४ ॥ शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ ५ ॥

III. 51.

चर्षणिऽधृतम् । मघऽवानम् । उक्थ्यम् । इन्द्रम् । गिरः । बृहतीः । अभि । अनूषत । ववृधानम् । पुरुऽहूतम् । सुवृक्तिऽभिः । अमर्त्यम् । जरमाणम् । दिवेऽदिवे ॥ १ ॥ शतऽक्रतुम् । अर्णवम् । शाकिनम् । नरम् । गिरः । मे । इन्द्रम् । उप । यन्ति । विश्वतः । वाजऽसनिम् । पूःऽभिदम् । तूर्णिम् । अप्ऽतुरम् । धामऽसाचम् । अभिऽसाचम् । स्वःऽविदम् ॥ २ ॥ आऽकरे । वसोः । जरिता । पनस्यते । अनेहसः । स्तुभः । इन्द्रः । दुवस्यति । विवस्वतः । सदने । आ । हि । पिप्रिये ।

सत्राऽसाहम् । अभिमातिऽहनम् । स्तुहि ॥ ३ ॥ नृणाम् । ऊँ इति । त्वा ।
नृऽतमम् । गीःऽभिः । उक्थैः । अभि । प्र । वीरम् । अर्चत । सऽबाधः ।
सम् । सहसे । पुरुऽमायः । जिहीते । नमः । अस्य । प्रऽदिवः । एकः ।
ईशे ॥ ४ ॥ पूर्वीः । अस्य । निःऽसिधः । मर्त्येषु । पुरु । वसूनि ।
पृथिवी । बिभर्ति । इन्द्राय । द्यावः । ओषधीः । उत । आपः । रयिम् ।
रक्षन्ति । जीरयः । वनानि ॥ ५ ॥ तुभ्यम् । ब्रह्माणि । गिरः । इन्द्र ।
तुभ्यम् । सत्रा । दधिरे । हरिऽवः । जुषस्व । बोधि । आपिः । अवसः ।
नूतनस्य । सखे । वसो इति । जरितृऽभ्यः । वयः । धाः ॥ ६ ॥ इन्द्र ।
मरुत्वः । इह । पाहि । सोमम् । यथा । शार्याते । अपिबः । सुतस्य ।
तव । प्रऽनीती । तव । शूर । शर्मन् । आ । विवासन्ति । कवयः ।
सुऽयज्ञाः ॥ ७ ॥ सः । वावशानः । इह । पाहि । सोमम् । मरुत्ऽभिः ।
इन्द्र । सखिऽभिः । सुतम् । नः । जातम् । यत् । त्वा । परि । देवाः ।
अभूषन् । महे । भराय । पुरुऽहूत । विश्वे ॥ ८ ॥ अप्ऽतूर्ये । मरुतः ।
आपिः । एषः । अमन्दन् । इन्द्रम् । अनु । दातिऽवाराः । तेभिः ।
साकम् । पिबतु । वृत्रऽखादः । सुतम् । सोमम् । दाशुषः । स्वे । सध-
ऽस्थे ॥ ९ ॥ इदम् । हि । अनु । ओजसा । सुतम् । राधानाम् । पते ।
पिब । तु । अस्य । गिर्वणः ॥१०॥ यः । ते । अनु । स्वधाम् । असत् ।
सुते । नि । यच्छ । तन्वम् । सः । त्वा । ममत्तु । सोम्यम् ॥ ११ ॥
प्र । ते । अश्नोतु । कुक्ष्योः । प्र । इन्द्र । ब्रह्मणा । शिरः । प्र । बाहू
इति । शूर । राधसे ॥ १२ ॥

III. 52.

धानाऽवन्तम् । करम्भिणम् । अपूपऽवन्तम् । उक्थिनम् । इन्द्र ।

प्रातः । जुषस्व । नः ॥ १ ॥ पुरोळाशम् । पचत्यम् । जुषस्व । इन्द्र । आ । गुरस्व । च । तुभ्यम् । हव्यानि । सिस्रते ॥ २ ॥ पुरोळाशम् । च । नः । घसः । जोषयासे । गिरः । च । नः । वधूयुःऽइव । योषणाम् ॥ ३ ॥ पुरोळाशम् । सनऽश्रुत । प्रातःऽसावे । जुषस्व । नः । इन्द्र । क्रतुः । हि । ते । बृहन् ॥ ४ ॥ माध्यंदिनस्य । सवनस्य । धानाः । पुरोळाशम् । इन्द्र । कृष्व । इह । चारुम् । प्र । यत् । स्तोता । जरिता । तूर्णिऽअर्थः । वृषऽयमाणः । उप । गीःऽभिः । ईट्टे ॥ ५ ॥ तृतीये । धानाः । सवने । पुरुऽस्तुत । पुरोळाशम् । आऽहुतम् । ममहस्व । नः । ऋभुऽमन्तम् । वाजऽवन्तम् । त्वा । कवे । प्रयस्वन्तः । उप । शिक्षेम । धीतिऽभिः ॥ ६ ॥ पूषण्ऽवते । ते । चकृम । करम्भम् । हरिऽवते । हरिऽअश्वाय । धानाः । अपूपम् । अद्धि । सऽगणः । मरुत्ऽभिः । सोमम् । पिब । वृत्रऽहा । शूर । विद्वान् ॥ ७ ॥ प्रति । धानाः । भरत । तूयम् । अस्मै । पुरोळाशम् । वीरऽतमाय । नृणाम् । दिवेऽदिवे । सऽदृशीः । इन्द्र । तुभ्यम् । वर्धन्तु । त्वा । सोमऽपेयाय । धृष्णो इति ॥ ८ ॥

III. 53.

इन्द्रापर्वता । बृहता । रथेन । वामीः । इषः । आ । वहतम् । सुऽवीराः । वीतम् । हव्यानि । अध्वरेषु । देवा । वर्धेथाम् । गीःऽभिः । इळया । मदन्ता ॥ १ ॥ तिष्ठ । सु । कम् । मघऽवन् । मा । परा । गाः । सोमस्य । नु । त्वा । सुऽसुतस्य । यक्षि । पितुः । न । पुत्रः । सिचम् । आ । रभे । ते । इन्द्र । स्वादिष्ठया । गिरा । शचीऽवः ॥ २ ॥ शंसाव । अध्वर्यो इति । प्रति । मे । गृणीहि । इन्द्राय । वाहः । कृण-

वाव । जुष्टम् । आ । इदम् । बर्हिः । यजमानस्य । सीद । अथ । च ।
भूत् । उक्थम् । इन्द्राय । शस्तम् ॥ ३ ॥ जाया । इत् । अस्तम् । मघ-
ऽवन् । सा । इत् । ऊँ इति । योनिः । तत् । इत् । त्वा । युक्ताः ।
हरयः । वहन्तु । यदा । कदा । च । सुनवाम । सोमम् । अग्निः । त्वा ।
दूतः । धन्वाति । अच्छ ॥ ४ ॥ परा । याहि । मघऽवन् । आ । च ।
याहि । इन्द्र । भ्रातः । उभयत्र । ते । अर्थम् । यत्र । रथस्य । बृहतः ।
निऽधानम् । विऽमोचनम् । वाजिनः । रासभस्य ॥ ५ ॥ अपाः ।
सोमम् । अस्तम् । इन्द्र । प्र । याहि । कल्याणीः । जाया । सुऽरणम् ।
गृहे । ते । यत्र । रथस्य । बृहतः । निऽधानम् । विऽमोचनम् । वाजिनः ।
दक्षिणाऽवत् ॥ ६ ॥ इमे । भोजाः । अङ्गिरसः । विऽरूपाः । दिवः ।
पुत्रासः । असुरस्य । वीराः । विश्वामित्राय । ददतः । मघानि । सहस्र-
ऽसावे । प्र । तिरन्ते । आयुः ॥ ७ ॥ रूपम्ऽरूपम् । मघऽवा । बोभ-
वीति । मायाः । कृण्वानः । तन्वम् । परि । स्वाम् । त्रिः । यत् ।
दिवः । परि । मुहूर्तम् । आ । अगात् । स्वैः । मन्त्रैः । अनृतुऽपाः ।
ऋतऽवा ॥ ८ ॥ महान् । ऋषिः । देवऽजाः । देवऽजूतः । अस्तभ्नात् ।
सिन्धुम् । अर्णवम् । नृऽचक्षाः । विश्वामित्रः । यत् । अवहत् । सुऽदा-
सम् । अप्रियायत । कुशिकेभिः । इन्द्रः ॥ ९ ॥ हंसाःऽइव । कृणुथ ।
श्लोकम् । अद्रिऽभिः । मदन्तः । गीःऽभिः । अध्वरे । सुते । सचा ।
देवेभिः । विप्राः । ऋषयः । नृऽचक्षसः । वि । पिबध्वम् । कुशिकाः ।
सोम्यम् । मधु ॥ १० ॥ उप । प्र । इत । कुशिकाः । चेतयध्वम् ।
अश्वम् । राये । प्र । मुञ्चत । सुऽदासः । राजा । वृत्रम् । जङ्घनत् ।
प्राक् । अपाक् । उदक् । अथ । यजाते । वरे । आ । पृथिव्याः ॥ ११ ॥

यः । इमे इति । रोदसी इति । उभे इति । अहम् । इन्द्रम् । अतुष्टवम् ।
विश्वामित्रस्य । रक्षति । ब्रह्म । इदम् । भारतम् । जनम् ॥ १२ ॥
विश्वामित्राः । अरासत । ब्रह्म । इन्द्राय । वज्रिणे । करत् । इत् । नः ।
सुऽराधसः ॥ १३ ॥ किम् । ते । कृण्वन्ति । कीकटेषु । गावः । न ।
आऽशिरम् । दुह्रे । न । तपन्ति । घर्मम् । आ । नः । भर । प्रऽम-
गन्दस्य । वेदः । नैचाऽशाखम् । मघऽवन् । रन्धय । नः ॥ १४ ॥
ससर्परीः । अमतिम् । बाधमाना । बृहत् । मिमाय । जमदग्निऽदत्ता । आ ।
सूर्यस्य । दुहिता । ततान । श्रवः । देवेषु । अमृतम् । अजुर्यम् ॥ १५ ॥
ससर्परीः । अभरत् । तूयम् । एभ्यः । अधि । श्रवः । पाञ्चऽजन्यासु ।
कृष्टिषु । सा । पक्ष्या । नव्यम् । आयुः । दधाना । याम् । मे । पलस्तिऽ-
जमदग्नयः । ददुः ॥ १६ ॥ स्थिरौ । गावौ । भवताम् । वीळुः ।
अक्षः । मा । ईषा । वि । वर्हि । मा । युगम् । वि । शारि । इन्द्रः ।
पातल्ये३ इति । ददताम् । शरीतोः । अरिष्टऽनेमे । अभि । नः ।
सचस्व ॥ १७ ॥ बलम् । धेहि । तनूषु । नः । बलम् । इन्द्र । अन-
ळुत्ऽसु । नः । बलम् । तोकाय । तनयाय । जीवसे । त्वम् । हि ।
बलऽदाः । असि ॥ १८ ॥ अभि । व्ययस्व । खदिरस्य । सारम् ।
ओजः । धेहि । स्पन्दने । शिंशपायाम् । अक्ष । वीळो इति । वीळित ।
वीळयस्व । मा । यामात् । अस्मात् । अव । जीहिपः । नः ॥ १९ ॥ अयम् ।
अस्मान् । वनस्पतिः । मा । च । हाः । मा । च । रिरिषत् । स्वस्ति ।
आ । गृहेभ्यः । आ । अवऽसै । आ । विऽमोचनात् ॥ २० ॥ इन्द्र ।
ऊतिऽभिः । बहुलाभिः । नः । अद्य । यात्ऽश्रेष्ठाभिः । मघऽवन् । शूर ।
जिन्व । यः । नः । द्वेष्टि । अधरः । सः । पदीष्ट । यम् । ऊँ इति ।

द्विष्मः । तम् । ऊँ इति । प्राणः । जहातु ॥ २१ ॥ परशुम् । चित् ।
वि । तपति । शिम्बलम् । चित् । वि । वृश्चति । उखा । चित् । इन्द्र ।
येषन्ती । प्रऽयस्ता । फेनम् । अस्यति ॥ २२ ॥ न । सायकस्य ।
चिकिते । जनासः । लोधम् । नयन्ति । पशु । मन्यमानाः । न ।
अवाजिनम् । वाजिना । हासयन्ति । न । गर्दभम् । पुरः । अश्वात् ।
नयन्ति ॥ २३ ॥ इमे । इन्द्र । भरतस्य । पुत्राः । अपऽपित्वम् ।
चिकितुः । न । प्रऽपित्वम् । हिन्वन्ति । अश्वम् । अरणम् । न । नित्यम् ।
ज्याऽवाजम् । परि । नयन्ति । आजौ ॥ २४ ॥

III. 54.

इमम् । महे । विदथ्याय । शूषम् । शश्वत् । कृत्वः । ईड्याय ।
प्र । जभ्रुः । शृणोतु । नः । दम्येभिः । अनीकैः । शृणोतु । अग्निः ।
दिव्यैः । अजस्रः ॥ १ ॥ महि । महे । दिवे । अर्च । पृथिव्यै ।
कामः । मे । इच्छन् । चरति । प्रऽजानन् । ययोः । ह । स्तोमे ।
विदथेषु । देवाः । सपर्यवः । मादयन्ते । सचा । आयोः ॥ २ ॥
युवोः । ऋतम् । रोदसी इति । सत्यम् । अस्तु । महे । सु । नः ।
सुविताय । प्र । भूतम् । इदम् । दिवे । नमः । अग्ने । पृथिव्यै । सप-
र्यामि । प्रयसा । यामि । रत्नम् ॥ ३ ॥ उतो इति । हि । वाम् ।
पूर्व्याः । आऽविविद्रे । ऋतवरी इत्यृतऽवरी । रोदसी इति । सत्यऽवाचः ।
नरः । चित् । वाम् । सम्ऽइथे । शूरऽसातौ । ववन्दिरे । पृथिवि ।
वेविदानाः ॥ ४ ॥ कः । अद्धा । वेद । कः । इह । प्र । वोचत् ।
देवान् । अच्छ । पथ्या । का । सम् । एति । ददृश्रे । एषाम् । अवमा ।
सदांसि । परेषु । या । गुह्येषु । व्रतेषु ॥ ५ ॥ कविः । नृऽचक्षाः । अभि ।

सीम् । अचष्ट । ऋतस्य । योना । विघृते इति विऽघृते । मदन्ती इति ।
नाना । चक्राते इति । सदनम् । यथा । वेः । समानेन । क्रतुना ।
संविदाने इति सम्ऽविदाने ॥ ६ ॥ समान्या । वियुते इति विऽयुते ।
दूरेअन्ते इति दूरेऽअन्ते । ध्रुवे । पदे । तस्थतुः । जागरूके इति । उत ।
स्वसारा । युवती इति । भवन्ती इति । आत् । ऊँ इति । ब्रुवाते इति ।
मिथुनानि । नाम ॥ ७ ॥ विश्वा । इत् । एते इति । जनिम । सम् ।
विविक्तः । महः । देवान् । बिभ्रती इति । न । व्यथेते इति । एजत् ।
ध्रुवम् । पत्यते । विश्वम् । एकम् । चरत् । पतत्रि । विषुणम् । वि ।
जातम् ॥ ८ ॥ सना । पुराणम् । अधि । एमि । आरात् । महः ।
पितुः । जनितुः । जामि । तत् । नः । देवासः । यत्र । पनितारः ।
एवैः । उरौ । पथि । विऽउते । तस्थुः । अन्तरिति ॥ ९ ॥ इमम् ।
स्तोमम् । रोदसी इति । प्र । ब्रवीमि । ऋदूदराः । शृण्वन् । अग्निऽ-
जिह्वाः । मित्रः । सम्ऽराजः । वरुणः । युवानः । आदित्यासः । कवयः ।
पप्रथानाः ॥ १० ॥ हिरण्यऽपाणिः । सविता । सुऽजिह्वः । त्रिः । आ ।
दिवः । विदथे । पत्यमानः । देवेषु । च । सवितरिति । श्लोकम् । अश्रेः ।
आत् । अस्मभ्यम् । आ । सुव । सर्वऽतातिम् ॥ ११ ॥ सुऽकृत् ।
सुऽपाणिः । स्वऽवान् । ऋतऽवा । देवः । त्वष्टा । अवसे । तानि ।
नः । धात् । पूषण्ऽवन्तः । ऋभवः । मादयध्वम् । ऊर्ध्वऽग्रावाणः ।
अध्वरम् । अतष्ट ॥ १२ ॥ विद्युत्ऽरथाः । मरुतः । ऋष्टिऽमन्तः ।
दिवः । मर्याः । ऋतऽजाताः । अयासः । सरस्वती । शृण्वन् । यज्ञि-
यासः । धात । रयिम् । सहऽवीरम् । तुरासः ॥ १३ ॥ विष्णुम् । स्तो-
मासः । पुरुऽदस्मम् । अर्काः । भगस्यऽइव । कारिणः । यामनि ।

ग्मन् । उरुऽक्रमः । ककुहः । यस्य । पूर्वीः । न । मर्धन्ति । युवतयः ।
जनित्रीः ॥ १४ ॥ इन्द्रः । विश्वैः । वीर्यैः । पत्यमानः । उभे इति ।
आ । पप्रौ । रोदसी इति । महिऽत्वा । पुरम्ऽदरः । वृत्रऽहा । धृष्णुऽ-
सेनः । सम्ऽगृभ्य । नः । आ । भर । भूरि । पश्वः ॥ १५ ॥ नासत्या ।
मे । पितरा । बन्धुऽपृच्छा । सऽजात्यम् । अश्विनोः । चारु । नाम ।
युवम् । हि । स्थः । रयिऽदौ । नः । रयीणाम् । दात्रम् । रक्षेथे इति ।
अक्वैः । अदब्धा ॥ १६ ॥ महत् । तत् । वः । कवयः । चारु । नाम ।
यत् । ह । देवाः । भवथ । विश्वे । इन्द्रे । सखा । ऋभुऽभिः । पुरुऽहूत ।
प्रियेभिः । इमाम् । धियम् । सातये । तक्षत । नः ॥ १७ ॥ अर्यमा ।
नः । अदितिः । यज्ञियासः । अदब्धानि । वरुणस्य । व्रतानि । युयोत ।
नः । अनपत्यानि । गन्तोः । प्रजाऽवान् । नः । पशुऽमान् । अस्तु ।
गातुः ॥ १८ ॥ देवानाम् । दूतः । पुरुध । प्रऽसूतः । अनागान् । नः ।
वोचतु । सर्वऽताता । शृणोतु । नः । पृथिवी । द्यौः । उत । आपः ।
सूर्यः । नक्षत्रैः । उरु । अन्तरिक्षम् ॥ १९ ॥ शृण्वन्तु । नः । वृषणः ।
पर्वतासः । ध्रुवऽक्षेमासः । इळया । मदन्तः । आदित्यैः । नः । अदितिः ।
शृणोतु । यच्छन्तु । नः । मरुतः । शर्म । भद्रम् ॥ २० ॥ सदा ।
सुऽगः । पितुऽमान् । अस्तु । पन्थाः । मध्वा । देवाः । ओषधीः ।
सम् । पिपृक्त । भगः । मे । अग्ने । सख्ये । न । मृध्याः । उत् । रायः ।
अश्याम् । सदनम् । पुरुऽक्षोः ॥ २१ ॥ स्वदस्व । हव्या । सम् । इषः ।
दिदीहि । अस्मद्र्यक् । सम् । मिमीहि । श्रवांसि । विश्वान् । अग्ने ।
पृत्ऽसु । तान् । जेषि । शत्रून् । अहा । विश्वा । सुऽमनाः । दीदिहि । नः ॥

III. 55

उषसः । पूर्वाः । अर्ध । यत् । विऽऊषुः । महत् । वि । जज्ञे । अक्षरम् । पदे । गोः । व्रता । देवानाम् । उप । नु । प्रऽभूषन् । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १ ॥ मो इति । सु । नः । अत्र । जुहुरन्त । देवाः । मा । पूर्वे । अग्ने । पितरः । पदऽज्ञाः । पुराण्योः । सद्मनोः । केतुः । अन्तः । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ २ ॥ वि । मे । पुरुऽत्रा । पतयन्ति । कामाः । शमि । अच्छ । दीद्ये । पूर्व्याणि । सम्ऽइद्धे । अग्नौ । ऋतम् । इत् । वदेम । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ३ ॥ समानः । राजा । विऽभृतः । पुरुऽत्रा । शये । शयासु । प्रऽयुतः । वना । अनु । अन्या । वत्सम् । भरति । क्षेति । माता । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ४ ॥ आऽक्षित् । पूर्वासु । अपराः । अनूरुत् । सद्यः । जातासु । तरुणीषु । अन्तः । अन्तःऽवतीः । सुवते । अप्रऽवीताः । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ५ ॥ शयुः । परस्तात् । अध । नु । द्विऽमाता । अबन्धनः । चरति । वत्सः । एकः । मित्रस्य । ता । वरुणस्य । व्रतानि । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ६ ॥ द्विऽमाता । होता । विदथेषु । सम्ऽराट् । अनु । अग्रम् । चरति । क्षेति । बुध्नः । प्र । रण्यानि । रण्यऽवाचः । भरन्ते । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ७ ॥ शूरस्यऽइव । युध्यतः । अन्तमस्य । प्रतीचीनम् । ददृशे । विश्वम् । आऽयत् । अन्तः । मतिः । चरति । निःऽसिधम् । गोः । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ८ ॥ नि । वेवेति । पलितः । दूतः । आसु । अन्तः । महान् । चरति । रोचनेन । वपूंषि । बिभ्रत् । अभि ।

नः । वि । चष्टे । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ९ ॥ विष्णुः ।
गोपाः । परमम् । पाति । पाथः । प्रिया । धामानि । अमृता । दधानः ।
अग्निः । ता । विश्वा । भुवनानि । वेद । महत् । देवानाम् । असुरऽ-
त्वम् । एकम् ॥ १० ॥ नाना । चक्राते इति । यम्या । वपूंषि । तयोः ।
अन्यत् । रोचते । कृष्णम् । अन्यत् । श्यावी । च । यत् । अरुषी ।
च । स्वसारौ । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ११ ॥ माता ।
च । यत्र । दुहिता । च । धेनू इति । सबर्दुघे इति । सबःऽदुघे । धापयेते
इति । समीची इति सम्ऽईची । ऋतस्य । ते इति । सदसि । ईळे ।
अन्तः । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १२ ॥ अन्यस्याः ।
वत्सम् । रिहती । मिमाय । कया । भुवा । नि । दधे । धेनुः । ऊधः ।
ऋतस्य । सा । पयसा । अपिन्वत । इळा । महत् । देवानाम् । असुरऽ-
त्वम् । एकम् ॥ १३ ॥ पद्या । वस्ते । पुरुऽरूपा । वपूंषि । ऊर्ध्वा ।
तस्थौ । त्रिऽअविम् । रेरिहाणा । ऋतस्य । सद्म । वि । चरामि । विद्वान् ।
महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १४ ॥ पदेइवेति पदेऽइव ।
निहिते इति निऽहिते । दस्मे । अन्तरिति । तयोः । अन्यत् । गुह्यम् ।
आविः । अन्यत् । सध्रीचीना । पथ्या । सा । विषूची । महत् । देवा-
नाम् । असुरऽत्वम् । एकम् ॥ १५ ॥ आ । धेनवः । धुनयन्ताम् ।
अशिश्वीः । सबःऽदुघाः । शशयाः । अप्रऽदुग्धाः । नव्याःऽनव्याः ।
युवतयः । भवन्तीः । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १६ ॥
यत् । अन्यासु । वृषभः । रोरवीति । सः । अन्यस्मिन् । यूथे । नि ।
दधाति । रेतः । सः । हि । क्षपाऽवान् । सः । भगः । सः । राजा । महत् ।
देवानाम् । असुरऽत्वम् । एकम् ॥ १७ ॥ वीरस्य । नु । सुऽअश्व्यम् ।

जनासः । प्र । नु । वोचाम । विदुः । अस्य । देवाः । षोळ्हा । युक्ताः ।
पञ्चऽपञ्च । आ । वहन्ति । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १८ ॥
देवः । त्वष्टा । सविता । विश्वऽरूपः । पुपोष । प्रऽजाः । पुरुधा ।
जजान । इमा । च । विश्वा । भुवनानि । अस्य । महत् । देवानाम् ।
असुरऽत्वम् । एकम् ॥ १९ ॥ मही इति । सम् । ऐरत् । चम्वा ।
समीची इति सम्ऽईची । उभे इति । ते इति । अस्य । वसुना । न्यृष्टे
इति निऽऋष्टे । शृण्वे । वीरः । विन्दमानः । वसूनि । महत् । देवानाम् ।
असुरऽत्वम् । एकम् ॥ २० ॥ इमाम् । च । नः । पृथिवीम् । विश्वऽ-
धायाः । उप । क्षेति । हितऽमित्रः । न । राजा । पुरःसदः । शर्मऽ-
सदः । न । वीराः । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ २१ ॥
निःऽसिध्वरीः । ते । ओषधीः । उत । आपः । रयिम् । ते । इन्द्र ।
पृथिवी । बिभर्ति । सखायः । ते । वामऽभाजः । स्याम । महत् ।
देवानाम् । असुरऽत्वम् । एकम् ॥ २२ ॥

III. 56.

न । ता । मिनन्ति । मायिनः । न । धीराः । व्रता । देवानाम् ।
प्रथमा । ध्रुवाणि । न । रोदसी इति । अद्रुहा । वेद्याभिः । न ।
पर्वताः । निऽनमे । तस्थिऽवांसः ॥ १ ॥ षट् । भारान् । एकः ।
अचरन् । बिभर्ति । ऋतम् । वर्षिष्ठम् । उप । गावः । आ । अगुः ।
तिस्रः । महीः । उपराः । तस्थुः । अत्याः । गुहा । द्वे इति । निहिते
इति निऽहिते । दर्शि । एका ॥ २ ॥ त्रिऽपाजस्यः । वृषभः । विश्वऽ-
रूपः । उत । त्रिऽउधा । पुरुध । प्रजाऽवान् । त्रिऽअनीकः । पत्यते ।
माहिनऽवान् । सः । रेतःऽधाः । वृषभः । शश्वतीनाम् ॥ ३ ॥ अभीके ।

आसाम् । पद्ऽवीः । अबोधि । आदित्यानाम् । अह्वे । चारु । नाम । आपः । चित् । अस्मै । अरमन्त । देवीः । पृथक् । व्रजन्तीः । परि । सीम् । अवृञ्जन् ॥ ४ ॥ त्री । सधऽस्था । सिन्धवः । त्रिः । कवीनाम् । उत । त्रिऽमाता । विदथेषु । सम्ऽराट् । ऋतऽवरीः । योषणाः । तिस्रः । अप्याः । त्रिः । आ । दिवः । विदथे । पत्यमानाः ॥ ५ ॥ त्रिः । आ । दिवः । सवितः । वार्याणि । दिवेऽदिवे । आ । सुव । त्रिः । नः । अह्नः । त्रिऽधातु । रायः । आ । सुव । वसूनि । भग । त्रातः । धिषणे । सातये । धाः ॥ ६ ॥ त्रिः । आ । दिवः । सविता । सोसवीति । राजाना । मित्रावरुणा । सुपाणी इति सुऽपाणी । आपः । चित् । अस्य । रोदसी इति । चित् । उर्वी इति । रत्नम् । भिक्षन्त । सवितुः । सवाय ॥ ७ ॥ त्रिः । उत्ऽतमा । दुःऽनशा । रोचनानि । त्रयः । राजन्ति । असुरस्य । वीराः । ऋतऽवानः । इषिराः । दुःऽदभासः । त्रिः । आ । दिवः । विदथे । सन्तु । देवाः ॥ ८ ॥

III. 57.

प्र । मे । विविक्वान् । अविदत् । मनीषाम् । धेनुम् । चरन्तीम् । प्रऽयुताम् । अगोपाम् । सद्यः । चित् । या । दुदुहे । भूरि । धासेः । इन्द्रः । तत् । अग्निः । पनितारः । अस्याः ॥ १ ॥ इन्द्रः । सु । पूषा । वृषणा । सुऽहस्ता । दिवः । न । प्रीताः । शशयम् । दुदुह्रे । विश्वे । यत् । अस्याम् । रणयन्त । देवाः । प्र । वः । अत्र । वसवः । सुम्नम् । अश्याम् ॥ २ ॥ याः । जामयः । वृष्णे । इच्छन्ति । शक्तिम् । नमस्यन्तीः । जानते । गर्भम् । अस्मिन् । अच्छ । पुत्रम् । धेनवः । वावशानाः । महः । चरन्ति । बिभ्रतम् । वपूंषि ॥ ३ ॥ अच्छ । विवक्मि ।

रोदसी इति । सुमेके इति सुऽमेके । ग्राव्णः । युजानः । अध्वरे । मनीषा । इमाः । ऊँ इति । ते । मनवे । भूरिऽवाराः । ऊर्ध्वाः । भवन्ति । दर्शताः । यजत्राः ॥ ४ ॥ या । ते । जिह्वा । मधुऽमती । सुऽमेधाः । अग्ने । देवेषु । उच्यते । उरूची । तया । इह । विश्वान् । अवसे । यजत्रान् । आ । सादय । पायय । च । मधूनि ॥ ५ ॥ या । ते । अग्ने । पर्वतस्यऽइव । धारा । असश्चन्ती । पीपयत् । देव । चित्रा । ताम् । अस्मभ्यम् । प्रऽमतिम् । जातऽवेदः । वसो इति । रास्व । सुऽमतिम् । विश्वऽजन्याम् ॥ ६ ॥

III. 58.

धेनुः । प्रत्नस्य । काम्यम् । दुहाना । अन्तरिति । पुत्रः । चरति । दक्षिणायाः । आ । द्योतनिम् । वहति । शुभ्रऽयामा । उषसः । स्तोमः । अश्विनौ । अजीगरिति ॥ १ ॥ सुऽयुक् । वहन्ति । प्रति । वाम् । ऋतेन । ऊर्ध्वाः । भवन्ति । पितराऽइव । मेधाः । जरेथाम् । अस्मत् । वि । पणेः । मनीषाम् । युवोः । अवः । चकृम । आ । यातम् । अर्वाक् ॥ २ ॥ सुयुक्ऽभिः । अश्वैः । सुऽवृता । रथेन । दस्रौ । इमम् । शृणुतम् । श्लोकम् । अद्रेः । किम् । अङ्ग । वाम् । प्रति । अवर्तिम् । गमिष्ठा । आहुः । विप्रासः । अश्विना । पुराऽजाः ॥ ३ ॥ आ । मन्येथाम् । आ । गतम् । कत् । चित् । एवैः । विश्वे । जनासः । अश्विना । हवन्ते । इमा । हि । वाम् । गोऽऋजीका । मधूनि । प्र । मित्रासः । न । ददुः । उस्रः । अग्रे ॥ ४ ॥ तिरः । पुरु । चित् । अश्विना । रजांसि । आङ्गूषः । वाम् । मघऽवाना । जनेषु । आ । इह । यातम् । पथिऽभिः । देवऽयानैः । दस्रौ । इमे । वाम् । निऽधयः । मधूनाम् ॥ ५ ॥

पुराणम् । ओकः । सख्यम् । शिवम् । वाम् । युवोः । नरा । द्रविणम् । जह्नाव्याम् । पुनरितिं । कृण्वानाः । सख्या । शिवानि । मध्वा । मदेम । सह । नु । समानाः ॥ ६ ॥ अश्विना । वायुना । युवम् । सुऽदक्षा । नियुत्ऽभिः । च । सऽजोषसा । युवाना । नासत्या । तिरःऽअह्न्यम् । जुषाणा । सोमम् । पिबतम् । अस्रिधा । सुदानू इति सुऽदानू ॥ ७ ॥ अश्विना । परि । वाम् । इषः । पुरूचीः । ईयुः । गीःऽभिः । यतमानाः । अमृध्राः । रथः । ह । वाम् । ऋतऽजाः । अद्रिऽजूतः । परि । द्यावापृथिवी इति । याति । सद्यः ॥ ८ ॥ अश्विना । मधुसुत्ऽतमः । युवाकुः । सोमः । तम् । पातम् । आ । गतम् । दुरोणे । रथः । ह । वाम् । भूरि । वर्पः । करिक्रत् । सुतऽवतः । निःऽकृतम् । आऽगमिष्ठः ॥ ९ ॥

III. 59.

मित्रः । जनान् । यातयति । ब्रुवाणः । मित्रः । दाधार । पृथिवीम् । उत । द्याम् । मित्रः । कृष्टीः । अनिमिषा । अभि । चष्टे । मित्राय । हव्यम् । घृतऽवत् । जुहोत ॥ १ ॥ प्र । सः । मित्र । मर्तः । अस्तु । प्रयस्वान् । यः । ते । आदित्य । शिक्षति । व्रतेन । न । हन्यते । न । जीयते । त्वाऽऊतः । न । एनम् । अंहः । अश्नोति । अन्तितः । न । दूरात् ॥ २ ॥ अनमीवासः । इळया । मदन्तः । मितऽज्ञवः । वरिमन् । आ । पृथिव्याः । आदित्यस्य । व्रतम् । उपऽक्षियन्तः । वयम् । मित्रस्य । सुऽमतौ । स्याम ॥ ३ ॥ अयम् । मित्रः । नमस्यः । सुऽशेवः । राजा । सुऽक्षत्रः । अजनिष्ट । वेधाः । तस्य । वयम् । सुऽमतौ । यज्ञियस्य । अपि । भद्रे । सौमनसे । स्याम ॥ ४ ॥ महान् । आदित्यः ।

नमसा । उपऽसद्यः । यातयत्ऽजनः । गृणते । सुऽशेवः । तस्मै । एतत् । पन्यऽतमाय । जुष्टम् । अग्नौ । मित्राय । हविः । आ । जुहोत ॥ ५ ॥ मित्रस्य । चर्षणिऽधृतः । अवः । देवस्य । सानसि । द्युम्नम् । चित्रश्रवःऽतमम् ॥ ६ ॥ अभि । यः । महिना । दिवम् । मित्रः । बभूव । सऽप्रथाः । अभि । श्रवःऽभिः । पृथिवीम् ॥ ७ ॥ मित्राय । पञ्च । येमिरे । जनाः । अभिष्टिऽशवसे । सः । देवान् । विश्वान् । बिभर्ति ॥८॥ मित्रः । देवेषु । आयुषु । जनाय । वृक्तऽबर्हिषे । इषः । इष्टऽव्रताः । अकः इत्यकः ॥ ९ ॥

III. 60.

इहऽइह । वः । मनसा । बन्धुता । नरः । उशिजः । जग्मुः । अभि । तानि । वेदसा । याभिः । मायाभिः । प्रतिजूतिऽवर्पसः । सौधन्वनाः । यज्ञियम् । भागम् । आनश ॥ १ ॥ याभिः । शचीभिः । चमसान् । अपिंशत । यया । धिया । गाम् । अरिणीत । चर्मणः । येन । हरी इति । मनसा । निःऽअतक्षत । तेन । देवऽत्वम् । ऋभवः । सम् । आनश ॥ २ ॥ इन्द्रस्य । सख्यम् । ऋभवः । सम् । आनशुः । मनोः । नपातः । अपसः । दधन्विरे । सौधन्वनासः । अमृतऽत्वम् । आ । ईरिरे । विष्ट्वी । शमीभिः । सुऽकृतः । सुऽकृत्यया ॥ ३ ॥ इन्द्रेण याथ । सऽरथम् । सुते । सचा । अथो इति । वशानाम् । भवथ । सह । श्रिया । न । वः । प्रतिऽमै । सुऽकृतानि । वाघतः । सौधन्वनाः । ऋभवः । वीर्याणि । च ॥ ४ ॥ इन्द्र । ऋभुऽभिः । वाजवत्ऽभिः । सम्ऽउक्षितम् । सुतम् । सोमम् । आ । वृषस्व । गभस्त्योः । धिया । इषितः । मघऽवन् । दाशुषः । गृहे । सौधन्वनेभिः । सह । मत्स्व ।

नृऽभिः॑ ॥ ५ ॥ इन्द्र॑ । ऋ॒भु॒ऽमान् । वाज॑ऽवान् । म॒त्स्व॒ । इ॒ह । नः॒ । अ॒स्मिन् ।
सव॑ने । शच्या॑ । पु॒रु॒ऽस्तु॒त॒ । इ॒मानि॑ । तुभ्य॑म् । स्व॒स॑राणि । ये॒मि॒रे॒ ।
व्र॒ता । दे॒वाना॑म् । मनु॑षः । च॒ । धर्म॑ऽभिः ॥ ६ ॥ इन्द्र॑ । ऋ॒भुऽभिः॑ ।
वा॒जिऽभिः॑ । वा॒जय॑न् । इ॒ह । स्तोम॑म् । ज॒रि॒तुः । उप॑ । या॒हि॒ । य॒ज्ञि-
य॑म् । श॒तम् । केतै॑भिः । इ॒षि॒रेभिः॑ । आ॒यवे॑ । स॒हस्र॑ऽनीथः । अ॒ध्व॒रस्य॑ ।
होम॑नि ॥ ७ ॥

III. 61.

उषः॑ । वाजे॑न । वा॒जि॒नि॒ । प्रऽचे॑ताः । स्तोम॑म् । जु॒ष॒स्व॒ । गृ॒ण॒तः ।
म॒घो॒नि॒ । पु॒रा॒णी । दे॒वि॒ । यु॒व॒तिः । पुर॑म्ऽधिः । अनु॑ । व्र॒तम् । च॒र॒सि॒ ।
वि॒श्व॒ऽवा॒रे॒ ॥ १ ॥ उषः॑ । दे॒वि॒ । अम॑र्त्या । वि । भा॒हि॒ । च॒न्द्रऽर॑था ।
सू॒नृताः॑ । ई॒रय॑न्ती । आ । त्वा॒ । व॒ह॒न्तु॒ । सु॒ऽयमा॑सः । अश्वाः॑ । हिर॑-
ण्यऽवर्णाम् । पृ॒थु॒ऽपाज॑सः । ये ॥ २ ॥ उषः॑ । प्र॒ती॒ची । भुव॑नानि ।
विश्वा॑ । ऊ॒र्ध्वा । ति॒ष्ठ॒सि॒ । अ॒मृत॑स्य । के॒तुः । स॒मा॒नम् । अर्थ॑म् । च॒र॒-
णी॒यमा॑ना । च॒क्रम्ऽइ॑व । न॒व्य॒सि॒ । आ । व॒वृ॒त्स्व॒ ॥ ३ ॥ अव॑ ।
स्यूम॑ऽइव । चि॒न्व॒ती । म॒घोनी॑ । उ॒षाः । या॒ति॒ । स्वस॑रस्य । पत्नी॑ ।
स्वः॑ । जन॑न्ती । सु॒ऽभगा॑ । सु॒ऽदंसाः॑ । आ । अन्ता॑त् । दि॒वः । प॒प्र॒थे॒ ।
आ । पृ॒थि॒व्याः ॥ ४ ॥ अच्छ॑ । वः॒ । दे॒वीम् । उ॒षस॑म् । वि॒ऽभा॒तीम् ।
प्र । वः॒ । भ॒र॒ध्व॒म् । नम॑सा । सु॒ऽवृ॒क्तिम् । ऊ॒र्ध्वम् । म॒धु॒धा । दि॒वि ।
पाजः॑ । अ॒श्रे॒त् । प्र । रो॒च॒ना । रु॒रु॒चे॒ । र॒ण्वऽसं॑दृक् ॥ ५ ॥ ऋ॒त॒ऽव॑री ।
दि॒वः । अ॒र्कैः । अ॒बो॒धि॒ । आ । रे॒वती॑ । रोद॑सी॒ इति॑ । चि॒त्रम् ।
अ॒स्था॒त् । आ॒ऽयतीम् । अ॒ग्ने॒ । उ॒षस॑म् । वि॒ऽभा॒तीम् । वा॒मम् । ए॒षि॒ ।
द्रवि॑णम् । भिक्ष॑माणः ॥ ६ ॥ ऋ॒तस्य॑ । बु॒ध्ने । उ॒षसा॑म् । इ॒ष॒ण्यन् ।

वृषा । मही इति । रोदसी इति । आ । विवेश । मही । मित्रस्य । वरुणस्य । माया । चन्द्राऽइव । भानुम् । वि । दधे । पुरुऽत्रा ॥ ७ ॥

III. 62.

इमाः । ऊँ इति । वाम् । भृमयः । मन्यमानाः । युवाऽवते । न । तुज्याः । अभूवन् । क्व । त्यत् । इन्द्रावरुणा । यशः । वाम् । येन । स्म । सिनम् । भरथः । सखिऽभ्यः ॥ १ ॥ अयम् । ऊँ इति । वाम् । पुरुऽतमः । रयिऽयन् । शश्वत्ऽतमम् । अवसे । जोहवीति । सऽजोषौ । इन्द्रावरुणा । मरुत्ऽभिः । दिवा । पृथिव्या । शृणुतम् । हवम् । मे ॥ २ ॥ अस्मे इति । तत् । इन्द्रावरुणा । वसु । स्यात् । अस्मे इति । रयिः । मरुतः । सर्वऽवीरः । अस्मान् । वरूत्रीः । शरणैः । अवन्तु । अस्मान् । होत्रा । भारती । दक्षिणाभिः ॥ ३ ॥ बृहस्पते । जुषस्व । नः । हव्यानि । विश्वऽदेव्य । रास्व । रत्नानि । दाशुषे ॥ ४ ॥ शुचिम् । अर्कैः । बृहस्पतिम् । अध्वरेषु । नमस्यत । अनामि । ओजः । आ । चक्रे ॥ ५ ॥ वृषभम् । चर्षणीनाम् । विश्वऽरूपम् । अदाभ्यम् । बृहस्पतिम् । वरेण्यम् ॥ ६ ॥ इयम् । ते । पूषन् । आघृणे । सुऽस्तुतिः । देव । नव्यसी । अस्माभिः । तुभ्यम् । शस्यते ॥ ७ ॥ ताम् । जुषस्व । गिरम् । मम । वाजऽयन्तीम् । अव । धियम् । वधूयुःऽइव । योषणाम् ॥ ८ ॥ यः । विश्वा । अभि । विऽपश्यति । भुवना । सम् । च । पश्यति । सः । नः । पूषा । अविता । भुवत् ॥ ९ ॥ तत् । सवितुः । वरेण्यम् । भर्गः । देवस्य । धीमहि । धियः । यः । नः । प्रऽचोदयात् ॥ १० ॥ देवस्य । सवितुः । वयम् । वाजऽयन्तः । पुरम्ऽध्या । भगस्य । रातिम् । ईमहे ॥ ११ ॥ देवम् । नरः । सवितारम् । विप्राः ।

यज्ञैः । सुवृक्तिऽभिः । नमस्यन्ति । धिया । इषिताः ॥ १२ ॥ सोमः ।
जिगाति । गातुऽवित् । देवानाम् । एति । निःऽकृतम् । ऋतस्य ।
योनिम् । आऽसदम् ॥ १३ ॥ सोमः । अस्मभ्यम् । द्विऽपदे । चतुःऽ-
पदे । च । पशवे । अनमीवाः । इषः । करत् ॥ १४ ॥ अस्माकम् ।
आयुः । वर्धयन् । अभिऽमातीः । सहमानः । सोमः । सधऽस्थम् । आ ।
असदत् ॥ १५ ॥ आ । नः । मित्रावरुणा । घृतैः । गव्यूतिम् । उक्ष-
तम् । मध्वा । रजांसि । सुक्रतू इति सुऽक्रतू ॥ १६ ॥ उरुऽशंसा । नमःऽ-
वृधा । मह्ना । दक्षस्य । राजथः । द्राघिष्ठाभिः । शुचिऽव्रता ॥ १७ ॥
गृणाना । जमत्ऽअग्निना । योनौ । ऋतस्य । सीदतम् । पातम् ।
सोमम् । ऋतऽवृधा ॥ १८ ॥

IV. 1.

त्वाम् । हि । अग्ने । सदम् । इत् । सऽमन्यवः । देवासः । देवम् ।
अरतिम् । निऽएरिरे । इति । क्रत्वा । निऽएरिरे । अमर्त्यम् । यजत ।
मर्त्येषु । आ । देवम् । आऽदेवम् । जनत । प्रऽचेतसम् । विश्वम् ।
आऽदेवम् । जनत । प्रऽचेतसम् ॥ १ ॥ सः । भ्रातरम् । वरुणम् ।
अग्ने । आ । ववृत्स्व । देवान् । अच्छ । सुऽमती । यज्ञऽवनसम् ।
ज्येष्ठम् । यज्ञऽवनसम् । ऋतऽवानम् । आदित्यम् । चर्षणिऽधृतम् ।
राजानम् । चर्षणिऽधृतम् ॥ २ ॥ सखे । सखायम् । अभि । आ । ववृ-
त्स्व । आशुम् । न । चक्रम् । रथ्याऽइव । रंह्या । अस्मभ्यम् । दस्म ।
रंह्या । अग्ने । मृळीकम् । वरुणे । सचा । विदः । मरुत्ऽसु । विश्वऽभानुषु ।
तोकाय । तुजे । शुशुचान । शम् । कृधि । अस्मभ्यम् । दस्म । शम् ।
कृधि ॥ ३ ॥ त्वम् । नः । अग्ने । वरुणस्य । विद्वान् । देवस्य । हेळः ।

अर्वं । यासिसीष्ठाः । यजिष्ठः । वह्निऽतमः । शोशुचानः । विश्वा ।
द्वेषांसि । प्र । मुमुग्धि । अस्मत् ॥ ४ ॥ सः । त्वम् । नः । अग्ने ।
अवमः । भव । ऊती । नेदिष्ठः । अस्याः। उषसः । विऽउष्टौ । अर्व ।
यक्ष्व । नः । वरुणम् । रराणः । वीहि । मृळीकम् । सुऽहवः । नः ।
एधि ॥ ५ ॥ अस्य । श्रेष्ठा । सुऽभर्गस्य । सम्ऽदृक् । देवस्य । चित्र-
ऽतमा । मर्त्येषु । शुचि । घृतम् । न । तप्तम् । अघ्न्यायाः । स्पार्हा ।
देवस्य । मंहनाऽइव । धेनोः ॥ ६ ॥ त्रिः । अस्य । ता । परमा ।
सन्ति । सत्या । स्पार्हा । देवस्य । जनिमानि । अग्नेः । अनन्ते । अन्तः-
रिति । परिऽवीतः । आ । अगात् । शुचिः । शुक्रः । अर्यः । रोरु-
चानः ॥ ७ ॥ सः । दूतः । विश्वा । इत् । अभि । वष्टि । सद्म ।
होता । हिरण्यऽरथः । रम्ऽसुजिह्वः । रोहित्ऽअश्वः । वपुष्यः । विभा-
ऽवा । सदा । रण्वः । पितुमतीऽइव । सम्ऽसत् ॥ ८ ॥ सः । चेत-
यत । मनुषः । यज्ञऽबन्धुः । प्र । तम् । मह्या । रशनया । नयन्ति ।
सः । क्षेति । अस्य । दुर्यासु । साधन् । देवः । मर्तस्य । सधनिऽत्वम् ।
आप ॥ ९ ॥ सः । तु । नः । अग्निः । नयतु । प्रऽजानन् । अच्छ ।
रत्नम् । देवऽभक्तम् । यत् । अस्य । धिया । यत् । विश्वे । अमृताः ।
अकृण्वन् । द्यौः । पिता । जनिता । सत्यम् । उक्षन् ॥ १० ॥ सः ।
जायत । प्रथमः । पस्त्यासु । महः । बुध्ने । रजसः । अस्य । योनौ ।
अपात् । अशीर्षा । गुहमानः । अन्ता । आऽयोयुवानः । वृषभस्य ।
नीळे ॥ ११ ॥ प्र । शर्धः । आर्त । प्रथमम् । विपन्या । ऋतस्य ।
योना । वृषभस्य । नीळे । स्पार्हः । युवा । वपुष्यः । विभाऽवा । सप्त ।
प्रियासः । अजनयन्त । वृष्णे ॥ १२ ॥ अस्माकम् । अत्र । पितरः ।

मनुष्याः । अभि । प्र । सेदुः । ऋतम् । आशुषाणाः । अश्मऽव्रजाः ।
सुऽदुघाः । वव्रे । अन्तः । उत् । उस्राः । आजन् । उषसः । हुवानाः ॥ १३ ॥
ते । मर्मृजत । ददृऽवांसः । अद्रिम् । तत् । एषाम् । अन्ये । अभितः ।
वि । वोचन् । पश्वऽयन्त्रासः । अभि । कारम् । अर्चन् । विदन्त ।
ज्योतिः । चकृपन्त । धीभिः ॥ १४ ॥ ते । गव्यता । मनसा । दृध्रम् ।
उब्धम् । गाः । येमानम् । परि । सन्तम् । अद्रिम् । दृळ्हम् । नरः ।
वचसा । दैव्येन । व्रजम् । गोऽमन्तम् । उशिजः । वि । वव्रुरिति वव्रुः ॥ १५ ॥
ते । मन्वत । प्रथमम् । नाम । धेनोः । त्रिः । सप्त । मातुः । परमाणि ।
विन्दन् । तत् । जानतीः । अभि । अनूषत । व्राः । आविः । भुवत् ।
अरुणीः । यशसा । गोः ॥ १६ ॥ नेशत् । तमः । दुधितम् । रोचत ।
द्यौः । उत् । देव्याः । उषसः । भानुः । अर्त । आ । सूर्यः । बृहतः ।
तिष्ठत् । अज्रान् । ऋजु । मर्तेषु । वृजिना । च । पश्यन् ॥ १७ ॥
आत् । इत् । पश्चा । बुबुधानाः । वि । अख्यन् । आत् । इत् । रत्नम् ।
धारयन्त । द्युऽभक्तम् । विश्वे । विश्वासु । दुर्यासु । देवाः । मित्र ।
धिये । वरुण । सत्यम् । अस्तु ॥ १८ ॥ अच्छ । वोचेय । शुशुचानम् ।
अग्निम् । होतारम् । विश्वऽभरसम् । यजिष्ठम् । शुचि । ऊधः । अतृ-
णत् । न । गवाम् । अन्धः । न । पूतम् । परिऽसिक्तम् । अंशोः ॥ १९ ॥
विश्वेषाम् । अदितिः । यज्ञियानाम् । विश्वेषाम् । अतिथिः । मानुषा-
णाम् । अग्निः । देवानाम् । अवः । आऽवृणानः । सुऽमृळीकः । भवतु ।
जातऽवेदाः ॥ २० ॥

## IV. 2.

यः । मर्त्येषु । अमृतः । ऋतऽवा । देवः । देवेषु । अरतिः । निऽ-

धायि । होता । यजिष्ठः । मह्ना । शुचध्यै । हव्यैः । अग्निः । मनुषः ।
ईरयध्यै ॥ १ ॥ इह । त्वम् । सूनो इति । सहसः । नः । अद्य । जातः ।
जातान् । उभयान् । अन्तः । अग्ने । दूतः । ईयसे । युयुजानः । ऋष्व ।
ऋजुऽमुष्कान् । वृषणः । शुक्रान् । च ॥२॥ अत्यः । वृधस्नू इति वृध-
ऽस्नू । रोहिता । घृतस्नू इति घृतऽस्नू । ऋतस्य । मन्ये । मनसा ।
जविष्ठा । अन्तः । ईयसे । अरुषा । युजानः । युष्मान् । च । देवान् ।
विशः । आ । च । मर्तान् ॥ ३ ॥ अर्यमणम् । वरुणम् । मित्रम् ।
एषाम् । इन्द्राविष्णू इति । मरुतः । अश्विना । उत । सुऽअश्वः । अग्ने ।
सुऽरथः । सुऽराधाः । आ । इत् । ऊँ इति । वह । सुऽहविषे ।
जनाय ॥ ४ ॥ गोऽमान् । अग्ने । अविऽमान् । अश्वी । यज्ञः । नृवत्-
ऽसखा । सदम् । इत् । अप्रऽमृष्यः । इळाऽवान् । एषः । असुर ।
प्रजाऽवान् । दीर्घः । रयिः । पृथुऽबुध्नः । सभाऽवान् ॥ ५ ॥ यः । ते ।
इध्मम् । जभरत् । सिस्विदानः । मूर्धानम् । वा । ततपते । त्वाऽया ।
भुवः । तस्य । स्वऽतवान् । पायुः । अग्ने । विश्वस्मात् । सीम् । अघऽ-
यतः । उरुष्य ॥ ६ ॥ यः । ते । भरात् । अन्निऽयते । चित् । अन्नम् ।
निऽशिषत् । मन्द्रम् । अतिथिम् । उत्ऽईरत् । आ । देवऽयुः । इनधते ।
दुरोणे । तस्मिन् । रयिः । ध्रुवः । अस्तु । दास्वान् ॥ ७ ॥ यः ।
त्वा । दोषा । यः । उषसि । प्रऽशंसात् । प्रियम् । वा । त्वा । कृणवते ।
हविष्मान् । अश्वः । न । स्वे । दमे । आ । हेम्याऽवान् । तम् । अंहसः ।
पीपरः । दाश्वांसम् ॥ ८ ॥ यः । तुभ्यम् । अग्ने । अमृताय । दाशत् ।
दुवः । त्वे इति । कृणवते । यतऽस्रुक् । न । सः । राया । शशमानः ।
वि । घोषत् । न । एनम् । अंहः । परि । वरत् । अघऽयोः ॥ ९ ॥

यस्यं । त्वम् । अग्ने । अध्वरम् । जुजोषः । देवः । मर्तस्य । सुऽधितम् । ररांणः । प्रीता । इव । असत् । होत्रा । सा । यविष्ठ । असाम । यस्य । विधतः । वृधासः ॥ १० ॥ चित्तिम् । अचित्तिम् । चिनवत् । वि । विद्वान् । पृष्ठाऽइव । वीता । वृजिना । च । मर्तान् । राये । च । नः । सुऽअपत्याय । देव । दितिम् । च । रास्व । अदितिम् । उरुष्य ॥ ११ ॥ कविम् । शशासुः । कवयः । अदब्धाः । निऽधारयन्तः । दुर्यासु । आयोः । अतः । त्वम् । दृश्यान् । अग्ने । एतान् । पट्ऽभिः । पश्येः । अद्भुतान् । अर्यः । एवैः ॥ १२ ॥ त्वम् । अग्ने । वाघते । सुऽप्रनीतिः । सुतऽसोमाय । विधते । यविष्ठ । रत्नम् । भर । शशमानाय । घृष्वे । पृथु । चन्द्रम् । अवसे । चर्षणिऽप्राः ॥ १३ ॥ अध । ह । यत् । वयम् । अग्ने । त्वाऽया । पट्ऽभिः । हस्तेभिः । चकृम । तनूभिः । रथम् । न । क्रन्तः । अपसा । भुरिजोः । ऋतम् । येमुः । सुऽध्यः । आशुषाणाः ॥ १४ ॥ अध । मातुः । उषसः । सप्त । विप्राः । जायेमहि । प्रथमाः । वेधसः । नॄन् । दिवः । पुत्राः । अङ्गिरसः । भवेम । अद्रिम् । रुजेम । धनिनम् । शुचन्तः ॥ १५ ॥ अध । यथा । नः । पितरः । परासः । प्रत्नासः । अग्ने । ऋतम् । आशुषाणाः । शुचि । इत् । अयन् । दीधितिम् । उक्थऽशसः । क्षाम । भिन्दन्तः । अरुणीः । अप । व्रन् ॥ १६ ॥ सुऽकर्माणः । सुऽरुचः । देवऽयन्तः । अयः । न । देवाः । जनिम । धमन्तः । शुचन्तः । अग्निम् । ववृधन्तः । इन्द्रम् । ऊर्वम् । गव्यम् । परिऽसदन्तः । अग्मन् ॥ १७ ॥ आ । यूथाऽइव । क्षुऽमति । पश्वः । अख्यत् । देवानाम् । यत् । जनिम । अन्ति । उग्र । मर्तानाम् । चित् । उर्वशीः । अकृप्रन् । वृधे । चित् । अर्यः । उपरस्य । आयोः ॥ १८ ॥

अकर्म । ते । सुऽअपसः । अभूम । ऋतम् । अवस्रन् । उषसः ।
विभातीः । अनूनम् । अग्निम् । पुरुधा । सुऽचन्द्रम् । देवस्य । मर्मृजतः ।
चारु । चक्षुः ॥ १९ ॥ एता । ते । अग्ने । उचथानि । वेधः । अवोचाम ।
कवये । ता । जुषस्व । उत् । शोचस्व । कृणुहि । वस्यसः । नः । महः ।
रायः । पुरुऽवार । प्र । यन्धि ॥ २० ॥

IV. 3.

आ । वः । राजानम् । अध्वरस्य । रुद्रम् । होतारम् । सत्यऽयजम् ।
रोदस्योः । अग्निम् । पुरा । तनयित्नोः । अचित्तात् । हिरण्यऽरूपम् ।
अवसे । कृणुध्वम् ॥ १ ॥ अयम् । योनिः । चकृम । यम् । वयम् ।
ते । जायाऽइव । पत्ये । उशती । सुऽवासाः । अर्वाचीनः । परिऽवीतः ।
नि । सीद । इमाः । ऊँ इति । ते । सुऽअपाक । प्रतीचीः ॥ २ ॥
आऽशृण्वते । अदृपिताय । मन्म । नृऽचक्षसे । सुऽमृळीकाय । वेधः ।
देवाय । शस्तिम् । अमृताय । शंस । ग्रावाऽइव । सोता । मधुऽसुत् ।
यम् । ईळे ॥ ३ ॥ त्वम् । चित् । नः । शम्यै । अग्ने । अस्याः ।
ऋतस्य । बोधि । ऋतऽचित् । सुऽआधीः । कदा । ते । उक्था । सध-
माद्यानि । कदा । भवन्ति । सख्या । गृहे । ते ॥ ४ ॥ कथा । ह ।
तत् । वरुणाय । त्वम् । अग्ने । कथा । दिवे । गर्हसे । कत् । नः ।
आगः । कथा । मित्राय । मीळ्हुषे । पृथिव्यै । ब्रवः । कत् । अर्यम्णे ।
कत् । भगाय ॥ ५ ॥ कत् । धिष्ण्यासु । वृधसानः । अग्ने । कत् ।
वाताय । प्रऽतवसे । शुभम्ऽये । परिऽज्मने । नासत्याय । क्षे । ब्रवः ।
कत् । अग्ने । रुद्राय । नृऽघ्ने ॥ ६ ॥ कथा । महे । पुष्टिम्ऽभराय ।
पूष्णे । कत् । रुद्राय । सुऽमखाय । हविःऽदे । कत् । विष्णवे । उरु-

गायाय । रेतः । ब्रवः । कत् । अग्ने । शरवे । बृहत्यै ॥ ७ ॥ कथा ।
शर्धाय । मरुताम् । ऋताय । कथा । सूरे । बृहते । पृच्छ्यमानः ।
प्रति । ब्रवः । अदितये । तुराय । साध । दिवः । जातऽवेदः । चिकि-
त्वान् ॥ ८ ॥ ऋतेन । ऋतम् । निऽयतम् । ईळे । आ । गोः । आमा ।
सचा । मधुऽमत् । पक्वम् । अग्ने । कृष्णा । सती । रुशता । धासिना ।
एषा । जामर्येण । पयसा । पीपाय ॥ ९ ॥ ऋतेन । हि । स्म । वृषभः ।
चित् । अक्तः । पुमान् । अग्निः । पयसा । पृष्ठ्येन । अस्पन्दमानः ।
अचरत् । वयःऽधाः । वृषा । शुक्रम् । दुदुहे । पृश्निः । ऊधः ॥ १० ॥
ऋतेन । अद्रिम् । वि । असन् । भिदन्तः । सम् । अङ्गिरसः । नवन्त ।
गोभिः । शुनम् । नरः । परि । सदन् । उषसम् । आविः । स्वः । अभवत् ।
जाते । अग्नौ ॥ ११ ॥ ऋतेन । देवीः । अमृताः । अमृक्ताः । अर्णः-
ऽभिः । आपः । मधुमत्ऽभिः । अग्ने । वाजी । न । सर्गेषु । प्रऽस्तुभानः ।
प्र । सदम् । इत् । स्रवितवे । दधन्युः ॥ १२ ॥ मा । कस्य । यक्षम् ।
सदम् । इत् । हुरः । गाः । मा । वेशस्य । प्रऽमिनतः । मा । आपेः ।
मा । भ्रातुः । अग्ने । अनृजोः । ऋणम् । वेः । मा । सख्युः । दक्षम् ।
रिपोः । भुजेम ॥ १३ ॥ रक्ष । नः । अग्ने । तव । रक्षणेभिः । रर-
क्षाणः । सुऽमख । प्रीणानः । प्रति । स्फुर । वि । रुज । वीळु । अंहः ।
जहि । रक्षः । महि । चित् । वावृधानम् ॥ १४ ॥ एभिः । भव । सु-
ऽमनाः । अग्ने । अर्कैः । इमान् । स्पृश । मन्मऽभिः । शूर । वाजान् ।
उत । ब्रह्माणि । अङ्गिरः । जुषस्व । सम् । ते । शस्तिः । देवऽवाता ।
जरेत ॥ १५ ॥ एता । विश्वा । विदुषे । तुभ्यम् । वेधः । नीथानि ।

अग्ने । निण्या । वचांसि । निऽवचना । कवये । काव्यानि । अशंसि-
षम् । मतिऽभिः । विप्रः । उक्थैः ॥ १६ ॥

IV. 4.

कृणुष्व । पाजः । प्रऽसितिम् । न । पृथ्वीम् । याहि । राजाऽइव ।
अमऽवान् । इभेन । तृष्वीम् । अनु । प्रऽसितिम् । द्रूणानः । अस्ता ।
असि । विध्य । रक्षसः । तपिष्ठैः ॥ १ ॥ तव । भ्रमासः । आशुऽया ।
पतन्ति । अनु । स्पृश । धृषता । शोशुचानः । तपूंषि । अग्ने । जुह्वा ।
पतङ्गान् । असम्ऽदितः । वि । सृज । विष्वक् । उल्काः ॥ २ ॥
प्रति । स्पशः । वि । सृज । तूर्णिऽतमः । भव । पायुः । विशः ।
अस्याः । अदब्धः । यः । नः । दूरे । अघऽशंसः । यः । अन्ति । अग्ने ।
माकिः । ते । व्यथिः । आ । दधर्षीत् ॥ ३ ॥ उत् । अग्ने । तिष्ठ ।
प्रति । आ । तनुष्व । नि । अमित्रान् । ओषतात् । तिग्मऽहेते । यः ।
नः । अरातिम् । सम्ऽइधान । चक्रे । नीचा । तम् । धक्षि । अतसम् ।
न । शुष्कम् ॥ ४ ॥ ऊर्ध्वः । भव । प्रति । विध्य । अधि । अस्मत् ।
आविः । कृणुष्व । दैव्यानि । अग्ने । अव । स्थिरा । तनुहि । यातुऽ-
जूनाम् । जामिम् । अजामिम् । प्र । मृणीहि । शत्रून् ॥ ५ ॥ सः ।
ते । जानाति । सुऽमतिम् । यविष्ठ । यः । ईवते । ब्रह्मणे । गातुम् ।
ऐरत् । विश्वानि । अस्मै । सुऽदिनानि । रायः । द्युम्नानि । अर्यः । वि ।
दुरः । अभि । द्यौत् ॥ ६ ॥ सः । इत् । अग्ने । अस्तु । सुऽभगः ।
सुऽदानुः । यः । त्वा । नित्येन । हविषा । यः । उक्थैः । पिप्रीषति ।
स्वे । आयुषि । दुरोणे । विश्वा । इत् । अस्मै । सुऽदिना । सा । असत् ।
इष्टिः ॥ ७ ॥ अर्चामि । ते । सुऽमतिम् । घोषि । अर्वाक् । सम् । ते ।

ववार्ता । जरताम् । इयम् । गीः । सुऽअश्वाः । त्वा । सुऽरथाः । मर्जयेम । अस्मे इति । क्षत्राणि । धारयेः । अनु । द्यून् ॥ ८ ॥ इह । त्वा । भूरि । आ । चरेत् । उप । त्मन् । दोषाऽवस्तः । दीदिऽवांसम् । अनु । द्यून् । क्रीळन्तः । त्वा । सुऽमनसः । सपेम । अभि । द्युम्ना । तस्थिऽवांसः । जनानाम् ॥ ९ ॥ यः । त्वा । सुऽअश्वः । सुऽहिरण्यः । अग्ने । उपऽयाति । वसुऽमता । रथेन । तस्य । त्राता । भवसि । तस्य । सखा । यः । ते । आतिथ्यम् । आनुषक् । जुजोषत् ॥ १० ॥ महः । रुजामि । बन्धुता । वचःऽभिः । तत् । मा । पितुः । गोतमात् । अनु । इयाय । त्वम् । नः । अस्य । वचसः । चिकिद्धि । होतः । यविष्ठ । सुक्रतो इति सुऽक्रतो । दमूनाः ॥ ११ ॥ अस्वप्नऽजः । तरणयः । सुऽशेवाः । अतन्द्रासः । अवृकाः । अश्रमिष्ठाः । ते । पायवः । सध्र्यञ्चः । निऽसद्य । अग्ने । तव । नः । पान्तु । अमूर ॥ १२ ॥ ये । पायवः । मामतेयम् । ते । अग्ने । पश्यन्तः । अन्धम् । दुःऽइतात् । अरक्षन् । ररक्ष । तान् । सुऽकृतः । विश्वऽवेदाः । दिप्सन्तः । इत् । रिपवः । न । अह । देभुः ॥ १३ ॥ त्वया । वयम् । सऽधन्यः । त्वाऽऊताः । तव । प्रऽनीती । अश्याम । वाजान् । उभा । शंसा । सूदय । सत्यऽताते । अनुष्ठुया । कृणुहि । अह्रयाण ॥ १४ ॥ अया । ते । अग्ने । सम्ऽइधा । विधेम । प्रति । स्तोमम् । शस्यमानम् । गृभाय । दह । अशसः । रक्षसः । पाहि । अस्मान् । द्रुहः । निदः । मित्रऽमहः । अवद्यात् ॥ १५ ॥

IV. 5.

वैश्वानराय । मीळ्हुषे । सऽजोषाः । कथा । दाशेम । अग्नये ।

बृहत् । भाः । अनूनेन । बृहता । वक्षथेन । उप । स्तभायत् । उपऽमित् ।
न । रोधः ॥ १ ॥ मा । निन्दत । यः । इमाम् । मह्यम् । रातिम् ।
देवः । ददौ । मर्त्याय । स्वधाऽवान् । पाकाय । गृत्सः । अमृतः ।
विऽचेताः । वैश्वानरः । नृऽतमः । यह्वः । अग्निः ॥ २ ॥ साम । द्वि-
ऽबर्हाः । महि । तिग्मऽभृष्टिः । सहस्रऽरेताः । वृषभः । तुविष्मान् ।
पदम् । न । गोः । अपऽगूळ्हम् । विविद्वान् । अग्निः । मह्यम् । प्र ।
इत् । ऊँ इति । वोचत् । मनीषाम् ॥ ३ ॥ प्र । तान् । अग्निः । बभसत् ।
तिग्मऽजम्भः । तपिष्ठेन । शोचिषा । यः । सुऽराधाः । प्र । ये ।
मिनन्ति । वरुणस्य । धाम । प्रिया । मित्रस्य । चेततः । ध्रुवाणि ॥४॥
अभ्रातरः । न । योषणः । व्यन्तः । पतिऽरिपः । न । जनयः । दुःऽ-
एवाः । पापासः । सन्तः । अनृताः । असत्याः । इदम् । पदम् । अज-
नत । गभीरम् ॥ ५ ॥ इदम् । मे । अग्ने । कियते । पावक । अमिनते ।
गुरुम् । भारम् । न । मन्म । बृहत् । दधाथ । धृषता । गभीरम् ।
यह्वम् । पृष्ठम् । प्रयसा । सप्तऽधातु ॥ ६ ॥ तम् । इत् । नु । एव ।
समना । समानम् । अभि । क्रत्वा । पुनती । धीतिः । अश्याः ।
ससस्य । चर्मन् । अधि । चारु । पृश्नेः । अग्रे । रुपः । आरुपितम् ।
जबारु ॥ ७ ॥ प्रऽवाच्यम् । वचसः । किम् । मे । अस्य । गुहा ।
हितम् । उप । निणिक् । वदन्ति । यत् । उस्रियाणाम् । अप । वाः-
ऽइव । वन् । पाति । प्रियम् । रुपः । अग्रम् । पदम् । वेरिति वेः ॥८॥
इदम् । ऊँ इति । त्यत् । महि । महाम् । अनीकम् । यत् । उस्रिया ।
सचत । पूर्व्यम् । गौः । ऋतस्य । पदे । अधि । दीद्यानम् । गुहा ।
रघुऽस्यत् । रघुऽयत् । विवेद ॥ ९ ॥ अध । द्युतानः । पित्रोः ।

सचा । आसा । अमनुत । गुह्यम् । चारु । पृश्नेः । मातुः । पदे । परमे । अन्ति । सत् । गोः । वृष्णः । शोचिषः । प्रऽयतस्य । जिह्वा ॥ १० ॥ ऋतम् । वोचे । नमसा । पृच्छ्यमानः । तव । आऽशसा । जातऽवेदः । यदि । इदम् । त्वम् । अस्य । क्षयसि । यत् । ह । विश्वम् । दिवि । यत् । ऊँ इति । द्रविणम् । यत् । पृथिव्याम् ॥ ११ ॥ किम् । नः । अस्य । द्रविणम् । कत् । ह । रत्नम् । वि । नः । वोचः । जातऽवेदः । चिकित्वान् । गुहा । अध्वनः । परमम् । यत् । नः । अस्य । रेकु । पदम् । न । निदानाः । अगन्म ॥ १२ ॥ का । मर्यादा । वयुना । कत् । ह । वामम् । अच्छ । गमेम । रघवः । न । वाजम् । कदा । नः । देवीः । अमृतस्य । पत्नीः । सूरः । वर्णेन । ततनन् । उषसः ॥ १३ ॥ अनिरेण । वचसा । फल्ग्वेन । प्रतीत्येन । कृधुना । अतृपासः । अध । ते । अग्ने । किम् । इह । वदन्ति । अनायुधासः । असता । सचन्ताम् ॥ १४ ॥ अस्य । श्रिये । सम्ऽइधानस्य । वृष्णः । वसोः । अनीकम् । दमे । आ । रुरोच । रुशत् । वसानः । सुदृशीकऽरूपः । क्षितिः । न । राया । पुरुऽवारः । अद्यौत् ॥ १५ ॥

## IV. 6.

ऊर्ध्वः । ऊँ इति । सु । नः । अध्वरस्य । होतः । अग्ने । तिष्ठ । देवऽताता । यजीयान् । त्वम् । हि । विश्वम् । अभि । असि । मन्म । प्र । वेधसः । चित् । तिरसि । मनीषाम् ॥ १ ॥ अमूरः । होता । नि । असादि । विक्षु । अग्निः । मन्द्रः । विदथेषु । प्रऽचेताः । ऊर्ध्वम् । भानुम् । सविताऽइव । अश्रेत् । मेताऽइव । धूमम् । स्तभायत् । उप । द्याम् ॥ २ ॥ यता । सुऽजूर्णिः । रातिनी । घृताची । प्रऽदक्षिणित् ।

देव॑ऽतातिम् । उ॒रा॒णः । उत् । ऊँ॒ इति॑ । स्वरुः॑ । नव॑ऽजाः । न । अ॒क्रः । प॒श्वः । अ॒न॒क्ति॒ । सु॒ऽधितः॑ । सु॒ऽमेकः॑ ॥ ३ ॥ स्ती॒र्णे । ब॒र्हिषि॑ । स॒म्ऽइ॒धा॒ने । अ॒ग्नौ । ऊ॒र्ध्वः । अ॒ध्व॒र्युः । जु॒जु॒षा॒णः । अ॒स्था॒त् । परि॑ । अ॒ग्निः । प॒शु॒ऽपाः । न । होता॑ । त्रि॒ऽवि॒ष्टि । ए॒ति॒ । प्र॒ऽदिवः॑ । उ॒रा॒णः ॥ ४ ॥ परि॑ । त्मना॑ । मि॒तऽद्रुः॑ । ए॒ति॒ । होता॑ । अ॒ग्निः । म॒न्द्रः । मधु॑ऽवचाः । ऋ॒तऽवा॑ । द्रव॑न्ति । अ॒स्य॒ । वा॒जिनः॑ । न । शोकाः॑ । भय॑न्ते । विश्वा॑ । भुव॑ना । यत् । अभ्रा॑ट् ॥ ५ ॥ भ॒द्रा । ते॒ । अग्ने॑ । सु॒ऽअ॒नी॒क॒ । स॒म्ऽदृक् । घो॒रस्य॑ । स॒तः । विषु॑णस्य । चारुः॑ । न । यत् । ते॒ । शो॒चिः । तम॑सा । वर॑न्त । न । ध्व॒स्मानः॑ । त॒न्वि॑ । रेपः॑ । आ । धु॒रिति॑ धुः ॥ ६ ॥ न । यस्य॑ । सातुः॑ । जनि॑तोः । अवा॑रि । न । मा॒तरा॑पि॒तरा॑ । नु । चि॒त् । इ॒ष्टौ । अध॑ । मि॒त्रः । न । सु॒ऽधितः॑ । पा॒व॒कः । अ॒ग्निः । दी॒दा॒य॒ । मानु॑षीषु । वि॒क्षु ॥ ७ ॥ द्विः । यम् । पञ्च॑ । जीज॑नन् । स॒म्ऽवसा॑नाः । स्वसा॑रः । अ॒ग्निम् । मानु॑षीषु । वि॒क्षु । उ॒षः॒ऽबुध॑म् । अ॒थर्यः॑ । न । दन्त॑म् । शु॒क्रम् । सु॒ऽआस॑म् । प॒र॒शुम् । न । ति॒ग्मम् ॥ ८ ॥ तव॑ । त्ये । अ॒ग्ने॒ । ह॒रितः॑ । घृ॒त॒ऽस्नाः । रोहि॑तासः । ऋ॒जु॒ऽअश्वः॑ । सु॒ऽअश्वः॑ । अ॒रु॒षासः॑ । वृष॑णः । ऋ॒जु॒ऽमु॒ष्काः । आ । दे॒व॑ऽतातिम् । अ॒ह्व॒न्त॒ । द॒स्माः ॥ ९ ॥ ये । ह॒ । त्ये । ते॒ । सह॑मानाः । अ॒यासः॑ । त्वे॒षासः॑ । अ॒ग्ने॒ । अ॒र्चयः॑ । चर॑न्ति । श्ये॒नासः॑ । न । दु॒व॒स॒नासः॑ । अर्थ॑म् । तु॒वि॒ऽस्व॒नसः॑ । मारु॑तम् । न । शर्धः॑ ॥ १० ॥ अका॑रि । ब्रह्म॑ । स॒म्ऽइ॒धा॒न॒ । तुभ्य॑म् । शंसा॑ति । उ॒क्थम् । यज॑ते । वि । ऊँ॒ इति॑ । धाः॒ । होता॑रम् । अ॒ग्निम् । मनु॑षः । नि । से॒दुः । न॒म॒स्यन्तः॑ । उ॒शिजः॑ । शंस॑म् । आ॒योः ॥ ११ ॥

IV. 7.

अयम् । इह । प्रथमः । धायि । धातृऽभिः । होता । यजिष्ठः ।
अध्वरेषु । ईड्यः । यम् । अप्नवानः । भृगवः । विऽरुरुचुः । वनेषु ।
चित्रम् । विऽभ्वम् । विशेऽविंशे ॥ १ ॥ अग्ने । कदा । ते । आनुषक् ।
भुवत् । देवस्य । चेतनम् । अध । हि । त्वा । जगृभ्रिरे । मर्तासः ।
विक्षु । ईड्यम् ॥ २ ॥ ऋतऽवानम् । विऽचेतसम् । पश्यन्तः । द्याम्ऽ-
इव । स्तृऽभिः । विश्वेषाम् । अध्वराणाम् । हस्कर्तारम् । दमेऽदमे ॥ ३ ॥
आशुम् । दूतम् । विवस्वतः । विश्वाः । यः । चर्षणीः । अभि । आ ।
जभ्रुः । केतुम् । आयवः । भृगवाणम् । विशेऽविंशे ॥ ४ ॥ तम् । ईम् ।
होतारम् । आनुषक् । चिकित्वांसम् । नि । सेदिरे । रण्वम् । पावकऽ-
शोचिषम् । यजिष्ठम् । सप्त । धामऽभिः ॥ ५ ॥ तम् । शश्वतीषु ।
मातृषु । वने । आ । वीतम् । अश्रितम् । चित्रम् । सन्तम् । गुहा ।
हितम् । सुऽवेदम् । कूचित्ऽअर्थिनम् ॥ ६ ॥ ससस्य । यत् । विऽयुता ।
सस्मिन् । ऊधन् । ऋतस्य । धामन् । रणयन्त । देवाः । महान् । अग्निः ।
नमसा । रातऽहव्यः । वेः । अध्वराय । सदम् । इत् । ऋतऽवा ॥ ७ ॥
वेः । अध्वरस्य । दूत्यानि । विद्वान् । उभे इति । अन्तरिति । रोदसी
इति । सम्ऽचिकित्वान् । दूतः । ईयसे । प्रऽदिवः । उराणः । विदुःऽ-
तरः । दिवः । आऽरोधनानि ॥ ८ ॥ कृष्णम् । ते । एम । रुशतः ।
पुरः । भाः । चरिष्णु । अर्चिः । वपुषाम् । इत् । एकम् । यत् । अप्रऽवीता ।
दधते । ह । गर्भम् । सद्यः । चित् । जातः । भवसि । इत् । ऊँ इति ।
दूतः ॥ ९ ॥ सद्यः । जातस्य । ददृशानम् । ओजः । यत् । अस्य ।
वातः । अनुऽवाति । शोचिः । वृणक्ति । तिग्माम् । अतसेषु । जिह्वाम् ।

स्थिरा । चित् । अन्ना । दयते । वि । जम्भैः ॥ १० ॥ तृषु । यत् । अन्ना । तृषुणा । ववक्ष । तृषुम् । दूतम् । कृणुते । यह्वः । अग्निः । वातस्य । मेळिम् । सचते । निऽजूर्वन् । आशुम् । न । वाजयते । हिन्वे । अर्वा ॥ ११ ॥

IV. 8.

दूतम् । वः । विश्वऽवेदसम् । हव्यऽवाहम् । अमर्त्यम् । यजिष्ठम् । ऋञ्जसे । गिरा ॥ १ ॥ सः । हि । वेद । वसुऽधितिम् । महान् । आऽरोधनम् । दिवः । सः । देवान् । आ । इह । वक्षति ॥ २ ॥ सः । वेद । देवः । आऽनमम् । देवान् । ऋतऽयते । दमे । दाति । प्रियाणि । चित् । वसु ॥ ३ ॥ सः । होता । सः । इत् । ऊँ इति । दूत्यम् । चिकित्वान् । अन्तः । ईयते । विद्वान् । आऽरोधनम् । दिवः ॥ ४ ॥ ते । स्याम । ये । अग्नये । ददाशुः । हव्यदातिऽभिः । ये । ईम् । पुष्यन्तः । इन्धते ॥ ५ ॥ ते । राया । ते । सुऽवीर्यैः । ससऽवांसः । वि । शृण्विरे । ये । अग्ना । दधिरे । दुवः ॥ ६ ॥ अस्मे इति । रायः । दिवेऽदिवे । सम् । चरन्तु । पुरुऽस्पृहः । अस्मे इति । वाजासः । ईरताम् ॥ ७ ॥ सः । विप्रः । चर्षणीनाम् । शवसा । मानुषाणाम् । अति । क्षिप्राऽइव । विध्यति ॥ ८ ॥

IV. 9.

अग्ने । मृळ । महान् । असि । यः । ईम् । आ । देवऽयुम् । जनम् । इयेथ । बर्हिः । आऽसदम् ॥ १ ॥ सः । मानुषीषु । दुःऽदभः । विक्षु । प्रऽअवीः । अमर्त्यः । दूतः । विश्वेषाम् । भुवत् ॥ २ ॥ सः । सद्म । परि । नीयते । होता । मन्द्रः । दिविष्टिषु । उत । पोता । नि ।

सीदति ॥ ३ ॥ उत । ग्नाः । अग्निः । अध्वरे । उतो इति । गृह-
ऽपतिः । दमे । उत । ब्रह्मा । नि । सीदति ॥ ४ ॥ वेषि । हि । अध्व-
रिऽयताम् । उपऽवक्ता । जनानाम् । हव्या । च । मानुषाणाम् ॥ ५ ॥
वेषि । इत् । ऊँ इति । अस्य । दूत्यम् । यस्य । जुजोषः । अध्वरम् ।
हव्यम् । मर्तस्य । वोळ्हवे ॥ ६ ॥ अस्माकम् । जोषि । अध्वरम् ।
अस्माकम् । यज्ञम् । अङ्गिरः । अस्माकम् । शृणुधि । हवम् ॥ ७ ॥
परि । ते । दुःऽदभः । रथः । अस्मान् । अश्नोतु । विश्वतः । येन ।
रक्षसि । दाशुषः ॥ ८ ॥

## IV. 10.

अग्ने । तम् । अद्य । अश्वम् । न । स्तोमैः । क्रतुम् । न । भद्रम् । हृदि-
ऽस्पृशम् । ऋध्याम । ते । ओहैः ॥ १ ॥ अध । हि । अग्ने । क्रतोः ।
भद्रस्य । दक्षस्य । साधोः । रथीः । ऋतस्य । बृहतः । बभूथ ॥ २ ॥
एभिः । नः । अर्कैः । भव । नः । अर्वाङ् । स्वः । न । ज्योतिः ।
अग्ने । विश्वेभिः । सुऽमनाः । अनीकैः ॥ ३ ॥ आभिः । ते । अद्य ।
गीःऽभिः । गृणन्तः । अग्ने । दाशेम । प्र । ते । दिवः । न । स्तनयन्ति ।
शुष्माः ॥ ४ ॥ तव । स्वादिष्ठा । अग्ने । सम्ऽदृष्टिः । इदा । चित् ।
अह्नः । इदा । चित् । अक्तोः । श्रिये । रुक्मः । न । रोचते । उपाके ॥ ५ ॥
घृतम् । न । पूतम् । तनूः । अरेपाः । शुचि । हिरण्यम् । तत् । ते ।
रुक्मः । न । रोचत । स्वधाऽवः ॥ ६ ॥ कृतम् । चित् । हि । स्म ।
सनेमि । द्वेषः । अग्ने । इनोषि । मर्तात् । इत्था । यजमानात् । ऋत-
ऽवः ॥ ७ ॥ शिवा । नः । सख्या । सन्तु । भ्रात्रा । अग्ने । देवेषु ।
युष्मे इति । सा । नः । नाभिः । सदने । सस्मिन् । ऊधन् ॥ ८ ॥

## IV. 11.

भद्रम् । ते । अग्ने । सहसिन् । अनीकम् । उपाके । आ । रोचते । सूर्यस्य । रुशत् । दृशे । ददृशे । नक्तऽया । चित् । अरूक्षितम् । दृशे । आ । रूपे । अन्नम् ॥ १ ॥ वि । साहि । अग्ने । गृणते । मनीषाम् । खम् । वेपसा । तुविऽजात । स्तवानः । विश्वेभिः । यत् । ववनः । शुक्र । देवैः । तत् । नः । रास्व । सुऽमहः । भूरि । मन्म ॥ २ ॥ त्वत् । अग्ने । काव्या । त्वत् । मनीषाः । त्वत् । उक्था । जायन्ते । राध्यानि । त्वत् । एति । द्रविणम् । वीरऽपेशाः । इत्थाऽधिये । दाशुषे । मर्त्याय ॥ ३ ॥ त्वत् । वाजी । वाजम्ऽभरः । विऽहायाः । अभिष्टिऽकृत् । जायते । सत्यऽशुष्मः । त्वत् । रयिः । देवऽजूतः । मयःऽभुः । त्वत् । आशुः । जूजुऽवान् । अग्ने । अर्वा ॥ ४ ॥ त्वाम् । अग्ने । प्रथमम् । देवऽयन्तः । देवम् । मर्ताः । अमृत । मन्द्रऽजिह्वम् । द्वेषःऽयुतम् । आ । विवासन्ति । धीभिः । दमूनसम् । गृहऽपतिम् । अमूरम् ॥ ५ ॥ आरे । अस्मत् । अमतिम् । आरे । अंहः । आरे । विश्वाम् । दुःऽमतिम् । यत् । निऽपासि । दोषा । शिवः । सहसः । सूनो इति । अग्ने । यम् । देवः । आ । चित् । सचसे । स्वस्ति ॥ ६ ॥

## IV. 12.

यः । त्वाम् । अग्ने । इनधते । यतऽस्रुक् । त्रिः । ते । अन्नम् । कृणवत् । सस्मिन् । अहन् । सः । सु । द्युम्नैः । अभि । अस्तु । प्रऽसक्षत् । तव । क्रत्वा । जातऽवेदः । चिकित्वान् ॥ १ ॥ इध्मम् । यः । ते । जभरत् । शश्रमाणः । महः । अग्ने । अनीकम् । आ । सपर्यन् । सः । इधानः । प्रति । दोषाम् । उषसम् । पुष्यन् । रयिम् । सचते ।

घ्नन् । अमित्रान् ॥ २ ॥ अग्निः । ईशे । बृहतः । क्षत्रियस्य । अग्निः । वाजस्य । परमस्य । रायः । दधाति । रत्नम् । विधते । यविष्ठः । वि । आनुषक् । मर्त्याय । स्वधाऽवान् ॥ ३ ॥ यत् । चित् । हि । ते । पुरुषऽत्रा । यविष्ठ । अचित्तिऽभिः । चकृम । कत् । चित् । आगः । कृधि । सु । अस्मान् । अदितेः । अनागान् । वि । एनांसि । शिश्रथः । विष्वक् । अग्ने ॥ ४ ॥ महः । चित् । अग्ने । एनसः । अभीके । ऊर्वात् । देवानाम् । उत । मर्त्यानाम् । मा । ते । सखायः । सदम् । इत् । रिषाम । यच्छ । तोकाय । तनयाय । शम् । योः ॥ ५ ॥ यथा । ह । त्यत् । वसवः । गौर्यम् । चित् । पदि । सिताम् । अमुञ्चत । यजत्राः । एवो इति । सु । अस्मत् । मुञ्चत । वि । अंहः । प्र । तारि । अग्ने । प्रऽतरम् । नः । आयुः ॥ ६ ॥

## IV. 13.

प्रति । अग्निः । उषसाम् । अग्रम् । अख्यत् । विऽभातीनाम् । सुऽमनाः । रत्नऽधेयम् । यातम् । अश्विना । सुऽकृतः । दुरोणम् । उत् । सूर्यः । ज्योतिषा । देवः । एति ॥ १ ॥ ऊर्ध्वम् । भानुम् । सविता । देवः । अश्रेत् । द्रप्सम् । दविध्वत् । गोऽइषः । न । सत्वा । अनु । व्रतम् । वरुणः । यन्ति । मित्रः । यत् । सूर्यम् । दिवि । आऽरोहयन्ति ॥ २ ॥ यम् । सीम् । अकृण्वन् । तमसे । विऽपृचे । ध्रुवऽक्षेमाः । अनवऽस्रन्तः । अर्थम् । तम् । सूर्यम् । हरितः । सप्त । यह्वीः । स्पशम् । विश्वस्य । जगतः । वहन्ति ॥ ३ ॥ वहिष्ठेभिः । विऽहरन् । यासि । तन्तुम् । अवऽव्ययन् । असितम् । देव । वस्म । दविध्वतः । रश्मयः । सूर्यस्य । चर्मऽइव । अव । अधुः । तमः । अप्ऽसु । अन्त-

रिति ॥४॥ अनायतः । अनिऽबद्धः । कथा । अयम् । न्यङ् । उत्तानः । अव । पद्यते । न । कया । याति । स्वधया । कः । ददर्श । दिवः । स्कम्भः । समृऽऋतः । पाति । नाकम् ॥ ५ ॥

IV. 14.

प्रति । अग्निः । उषसः । जातऽवेदाः । अख्यत् । देवः । रोचमानाः । महःऽभिः । आ । नासत्या । उरुऽगाया । रथेन । इमम् । यज्ञम् । उप । नः । यातम् । अच्छ ॥ १ ॥ ऊर्ध्वम् । केतुम् । सविता । देवः । अश्रेत् । ज्योतिः । विश्वस्मै । भुवनाय । कृण्वन् । आ । अप्राः । द्यावापृथिवी इति । अन्तरिक्षम् । वि । सूर्यः । रश्मिऽभिः । चेकितानः ॥२॥ आऽवहन्ती । अरुणीः । ज्योतिषा । आ । अगात् । मही । चित्रा । रश्मिऽभिः । चेकिताना । प्रऽबोधयन्ती । सुविताय । देवी । उषाः । ईयते । सुऽयुजा । रथेन ॥ ३ ॥ आ । वाम् । वहिष्ठाः । इह । ते । वहन्तु । रथाः । अश्वासः । उषसः । विऽउष्टौ । इमे । हि । वाम् । मधुऽपेयाय । सोमाः । अस्मिन् । यज्ञे । वृषणा । मादयेथाम् ॥ ४ ॥ अनायतः । अनिऽबद्धः । कथा । अयम् । न्यङ् । उत्तानः । अव । पद्यते । न । कया । याति । स्वधया । कः । ददर्श । दिवः । स्कम्भः । समृऽऋतः । पाति । नाकम् ॥ ५ ॥

IV. 15.

अग्निः । होता । नः । अध्वरे । वाजी । सन् । परि । नीयते । देवः । देवेषु । यज्ञियः ॥ १ ॥ परि । त्रिऽविष्टि । अध्वरम् । याति । अग्निः । रथीःऽइव । आ । देवेषु । प्रयः । दधत् ॥ २ ॥ परि । वाजऽपतिः । कविः । अग्निः । हव्यानि । अक्रमीत् । दधत् । रत्नानि ।

दाशुषे ॥ ३ ॥ अयम् । यः । सृञ्जये । पुरः । दैवऽवाते । सम्ऽइध्यते । द्युऽमान् । अमित्रऽदम्भनः ।॥ ४ ॥ अस्य । घ । वीरः । ईवतः । अग्नेः । ईशीत । मर्त्यः । तिग्मऽजम्भस्य । मीळ्हुषः ॥ ५ ॥ तम् । अर्वन्तम् । न । सानसिम् । अरुषम् । न । दिवः । शिशुम् । मर्मृज्यन्ते । दिवेऽदिवे ॥ ६ ॥ बोधत् । यत् । मा । हरिऽभ्याम् । कुमारः । साहऽदेव्यः । अच्छ । न । हूतः । उत् । अरम् ॥ ७ ॥ उत । त्या । यजता । हरी इति । कुमारात् । साहऽदेव्यात् । प्रऽयता । सद्यः । आ । ददे ॥८॥ एषः । वाम् । देवौ । अश्विना । कुमारः । साहऽदेव्यः । दीर्घऽआयुः । अस्तु । सोमकः ॥ ९ ॥ तम् । युवम् । देवौ । अश्विना । कुमारम् । साहऽदेव्यम् । दीर्घऽआयुषम् । कृणोतन ॥ १० ॥

### IV. 16.

आ । सत्यः । यातु । मघऽवान् । ऋजीषी । द्रवन्तु । अस्य । हरयः । उप । नः । तस्मै । इत् । अन्धः । सुसुम । सुऽदक्षम् । इह । अभिऽपित्वम् । करते । गृणानः ॥ १ ॥ अव । स्य । शूर । अध्वनः । न । अन्ते । अस्मिन् । नः । अद्य । सवने । मन्दध्यै । शंसाति । उक्थम् । उशनाऽइव । वेधाः । चिकितुषे । असुर्याय । मन्म ॥ २ ॥ कविः । न । निण्यम् । विदथानि । साधन् । वृषा । यत् । सेकम् । विऽपिपानः । अर्चात् । दिवः । इत्था । जीजनत् । सप्त । कारून् । अह्ना । चित् । चक्रुः । वयुना । गृणन्तः ॥ ३ ॥ स्वः । यत् । वेदि । सुऽदृशीकम् । अर्कैः । महि । ज्योतिः । रुरुचुः । यत् । ह । वस्तोः । अन्धा । तमांसि । दुधिता । विऽचक्षे । नृऽभ्यः । चकार । नृऽतमः । अभिष्टौ ॥ ४ ॥ ववक्षे । इन्द्रः । अमितम् । ऋजीषी । उभे इति । आ ।

पप्रौ । रोदसी इति । महिऽत्वा । अतः । चित् । अस्य । महिमा ।
वि । रेचि । अभि । यः । विश्वा । भुवना । बभूव ॥ ५ ॥ विश्वानि ।
शक्रः । नर्याणि । विद्वान् । अपः । रिरेच । सखिऽभिः । निऽकामैः ।
अश्मानम् । चित् । ये । बिभिदुः । वचःऽभिः । व्रजम् । गोऽमन्तम् ।
उशिजः । वि । वव्रुरिति वव्रुः ॥ ६ ॥ अपः । वृत्रम् । वव्रिऽवांसम् ।
परा । अहन् । प्र । आवत् । ते । वज्रम् । पृथिवी । सऽचेताः । प्र ।
अर्णांसि । समुद्रियाणि । ऐनोः । पतिः । भवन् । शवसा । शूर ।
धृष्णो इति ॥ ७ ॥ अपः । यत् । अद्रिम् । पुरुऽहूत । दर्दः । आविः ।
भुवत् । सरमा । पूर्व्यम् । ते । सः । नः । नेता । वाजम् । आ । दर्षि ।
भूरिम् । गोत्रा । रुजन् । अङ्गिरःऽभिः । गृणानः ॥ ८ ॥ अच्छ ।
कविम् । नृऽमनः । गाः । अभिष्टौ । स्वःऽसाता । मघऽवन् । नाध-
मानम् । ऊतिऽभिः । तम् । इषणः । द्युम्नऽहूतौ । नि । मायाऽवान् ।
अब्रह्मा । दस्युः । अर्त ॥ ९ ॥ आ । दस्युऽघ्ना । मनसा । याहि ।
अस्तम् । भुवत् । ते । कुत्सः । सख्ये । निऽकामः । स्वे । योनौ ।
नि । सदतम् । सऽरूपा । वि । वाम् । चिकित्सत् । ऋतऽचित् । ह ।
नारी ॥ १० ॥ यासि । कुत्सेन । सऽरथम् । अवस्युः । तोदः ।
वातस्य । हर्योः । ईशानः । ऋज्रा । वाजम् । न । गध्यम् । युयूषन् ।
कविः । यत् । अहन् । पार्याय । भूषात् ॥ ११ ॥ कुत्साय । शुष्णम् ।
अशुषम् । नि । बर्हीः । प्रऽपित्वे । अह्नः । कुयवम् । सहस्रा । सद्यः ।
दस्यून् । प्र । मृण । कुत्स्येन । प्र । सूरः । चक्रम् । बृहतात् ।
अभीके ॥ १२ ॥ त्वम् । पिप्रुम् । मृगयम् । शूशुऽवांसम् । ऋजिश्वने ।
वैदथिनाय । रन्धीः । पञ्चाशत् । कृष्णा । नि । वपः । सहस्रा ।

अत्कम् । न । पुरः । जरिमा । वि । दर्दरीति दर्दः ॥ १३ ॥ सूरः । उपाके । तन्वम् । दधानः । वि । यत् । ते । चेति । अमृतस्य । वर्पः । मृगः । न । हस्ती । तविषीम् । उषाणः । सिंहः । न । भीमः । आयुधानि । बिभ्रत् ॥ १४ ॥ इन्द्रम् । कामाः । वसुऽयन्तः । अग्मन् । स्वःऽमीळ्हे । न । सवने । चकानाः । श्रवस्यवः । शशमानासः । उक्थैः । ओकः । न । रण्वा । सुदृशीऽइव । पुष्टिः ॥ १५ ॥ तम् । इत् । वः । इन्द्रम् । सुऽहवम् । हुवेम । यः । ता । चकार । नर्या । पुरूणि । यः । माऽवते । जरित्रे । गध्यम् । चित् । मक्षु । वाजम् । भरति । स्पार्हऽराधाः ॥ १६ ॥ तिग्मा । यत् । अन्तः । अशनिः । पताति । कस्मिन् । चित् । शूर । मुहुके । जनानाम् । घोरा । यत् । अर्य । सम्ऽऋतिः । भवाति । अध । स्म । नः । तन्वः । बोधि । गोपाः ॥ १७ ॥ भुवः । अविता । वामऽदेवस्य । धीनाम् । भुवः । सखा । अवृकः । वाजऽसातौ । त्वाम् । अनु । प्रऽमतिम् । आ । जगन्म । उरुऽशंसः । जरित्रे । विश्वध । स्याः ॥ १८ ॥ एभिः । नृऽभिः । इन्द्र । त्वायुऽभिः । त्वा । मघवत्ऽभिः । मघऽवन् । विश्वे । आजौ । द्यावः । न । द्युम्नैः । अभि । सन्तः । अर्यः । क्षपः । मदेम । शरदः । च । पूर्वीः ॥ १९ ॥ एव । इत् । इन्द्राय । वृषभाय । वृष्णे । ब्रह्म । अकर्म । भृगवः । न । रथम् । नु । चित् । यथा । नः । सख्या । विऽयोषत् । असत् । नः । उग्रः । अविता । तनूऽपाः ॥ २० ॥ नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरिति पीपेः । अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥ २१ ॥

IV. 17.

त्वम् । महान् । इन्द्र । तुभ्यम् । ह । क्षाः । अनु । क्षत्रम् । मंहना । मन्यत । द्यौः । त्वम् । वृत्रम् । शवसा । जघन्वान् । सृजः । सिन्धून् । अहिना । जग्रसानान् ॥ १ ॥ तव । त्विषः । जनिमन् । रेजत । द्यौः । रेजत् । भूमिः । भियसा । स्वस्य । मन्योः । ऋघायन्त । सुऽअभ्वः । पर्वतासः । आर्दन् । धन्वानि । सरयन्ते । आपः ॥ २ ॥ भिनत् । गिरिम् । शवसा । वज्रम् । इष्णन् । आविःऽकृण्वानः । सहसानः । ओजः । वधीत् । वृत्रम् । वज्रेण । मन्दसानः । सरन् । आपः । जवसा । हतऽवृष्णीः ॥ ३ ॥ सुऽवीरः । ते । जनिता । मन्यत । द्यौः । इन्द्रस्य । कर्ता । स्वपःऽतमः । भूत् । यः । ईम् । जजान । स्वर्यम् । सुऽवज्रम् । अनपऽच्युतम् । सदसः । न । भूम ॥ ४ ॥ यः । एकः । इत् । च्यवयति । प्र । भूम । राजा । कृष्टीनाम् । पुरुऽहूतः । इन्द्रः । सत्यम् । एनम् । अनु । विश्वे । मदन्ति । रातिम् । देवस्य । गृणतः । मघोनः ॥ ५ ॥ सत्रा । सोमाः । अभवन् । अस्य । विश्वे । सत्रा । मदासः । बृहतः । मदिष्ठाः । सत्रा । अभवः । वसुऽपतिः । वसूनाम् । दत्रे । विश्वाः । अधिथाः । इन्द्र । कृष्टीः ॥ ६ ॥ त्वम् । अध । प्रथमम् । जायमानः । अमे । विश्वाः । अधिथाः । इन्द्र । कृष्टीः । त्वम् । प्रति । प्रऽवतः । आऽशयानम् । अहिम् । वज्रेण । मघऽवन् । वि । वृश्चः ॥ ७ ॥ सत्राऽहनम् । दधृषिम् । तुम्रम् । इन्द्रम् । महाम् । अपारम् । वृषभम् । सुऽवज्रम् । हन्ता । यः । वृत्रम् । सनिता । उत । वाजम् । दाता । मघानि । मघऽवा । सुऽराधाः ॥ ८ ॥ अयम् । वृतः । चातयते । सम्ऽईचीः । यः । आजिषु । मघऽवा । शृण्वे । एकः ।

अयम् । वाजम् । भरति । यम् । सनोति । अस्य । प्रियासः । सख्ये । स्याम ॥ ९ ॥ अयम् । शृण्वे । अधं । जयन् । उत । घ्नन् । अयम् । उत । प्र । कृणुते । युधा । गाः । यदा । सत्यम् । कृणुते । मन्युम् । इन्द्रः । विश्वम् । दृळ्हम् । भयते । एजत् । अस्मात् ॥ १० ॥ सम् । इन्द्रः । गाः । अजयत् । सम् । हिरण्या । सम् । अश्विया । मघऽवा । यः । ह । पूर्वीः । एभिः । नृऽभिः । नृऽतमः । अस्य । शाकैः । रायः । विऽभक्ता । सम्ऽभरः । च । वस्वः ॥ ११ ॥ कियत् । स्वित् । इन्द्रः । अधि । एति । मातुः । कियत् । पितुः । जनितुः । यः । जजान । यः । अस्य । शुष्मम् । मुहुकैः । इयर्ति । वातः । न । जूतः । स्तनयत्ऽभिः । अभ्रैः ॥ १२ ॥ क्षियन्तम् । त्वम् । अक्षियन्तम् । कृणोति । इयर्ति । रेणुम् । मघऽवा । सम्ऽओहम् । विऽभञ्जनुः । अशनिमान्ऽइव । द्यौः । उत । स्तोतारम् । मघऽवा । वसौ । धात् ॥ १३ ॥ अयम् । चक्रम् । इषणत् । सूर्यस्य । नि । एतशम् । रीरमत् । ससृमाणम् । आ । कृष्णः । ईम् । जुहुराणः । जिघर्ति । त्वचः । बुध्ने । रजसः । अस्य । योनौ ॥ १४ ॥ असिक्न्याम् । यजमानः । न । होता ॥ १५ ॥ गव्यन्तः । इन्द्रम् । सख्याय । विप्राः । अश्वऽयन्तः । वृषणम् । वाजयन्तः । जनिऽयन्तः । जनिऽदाम् । अक्षितऽऊतिम् । आ । च्यवयामः । अवते । न । कोशम् ॥ १६ ॥ त्राता । नः । बोधि । ददृशानः । आपिः । अभिऽख्याता । मर्डिता । सोम्यानाम् । सखा । पिता । पितृऽतमः । पितृणाम् । कर्ता । ईम् । ऊँ इति । लोकम् । उशते । वयःऽधाः ॥ १७ ॥ सखिऽयताम् । अविता । बोधि । सखा । गृणानः । इन्द्र । स्तुवते । वयः । धाः । वयम् । हि । आ । ते ।

चकृम । सऽवार्धः । आभिः । शमीभिः । महयन्तः । इन्द्र ॥ १८ ॥ स्तुतः । इन्द्रः । मघऽवा । यत् । ह । वृत्रा । भूरीणि । एकः । अप्रतीनि । हन्ति । अस्य । प्रियः । जरिता । यस्य । शर्मन् । नकिः । देवाः । वारयन्ते । न । मर्ताः ॥ १९ ॥ एव । नः । इन्द्रः । मघऽवा । विऽरप्शी । करत् । सत्या । चर्षणिऽधृत् । अनर्वा । त्वम् । राजा । जनुषाम् । धेहि । अस्मे इति । अधि । श्रवः । माहिनम् । यत् । जरित्रे ॥ २० ॥ नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरिति पीपेः । अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥ २१ ॥

IV. 18.

अयम् । पन्थाः । अनुऽवित्तः । पुराणः । यतः । देवाः । उत्ऽअजायन्त । विश्वे । अतः । चित् । आ । जनिषीष्ट । प्रऽवृद्धः । मा । मातरम् । अमुया । पत्तवे । कः ॥ १ ॥ न । अहम् । अतः । निः । अय । दुःऽगहा । एतत् । तिरश्चता । पार्श्वात् । निः । गमानि । बहूनि । मे । अकृता । कर्त्वानि । युध्यै । त्वेन । सम् । त्वेन । पृच्छै ॥२॥ पराऽयतीम् । मातरम् । अनु । अचष्ट । न । न । अनु । गानि । अनु । नु । गमानि । त्वष्टुः । गृहे । अपिबत् । सोमम् । इन्द्रः । शतऽधन्यम् । चम्वोः । सुतस्य ॥ ३ ॥ किम् । सः । ऋधक् । कृणवत् । यम् । सहस्रम् । मासः । जभार । शरदः । च । पूर्वीः । नहि । नु । अस्य । प्रतिऽमानम् । अस्ति । अन्तः । जातेषु । उत । ये । जनिऽत्वाः ॥४॥ अवद्यम्ऽइव । मन्यमाना । गुहा । अकः । इन्द्रम् । माता । वीर्येण । निऽऋष्टम् । अथ । उत् । अस्थात् । स्वयम् । अत्कम् । वसानः । आ ।

रोदसी इति । अपृणात् । जायमानः ॥ ५ ॥ एताः । अर्षन्ति । अलला-
ऽभवन्तीः । ऋतवरीःऽइव । सम्ऽक्रोशमानाः । एताः । वि । पृच्छ ।
किम् । इदम् । भनन्ति । कम् । आपः । अद्रिम् । परिऽधिम् । रुजन्ति ॥६॥
किम् । ऊँ इति । स्वित् । अस्मै । निऽविदः । भनन्त । इन्द्रस्य ।
अवद्यम् । दिधिषन्ते । आपः । मम । एतान् । पुत्रः । महता । वधेन ।
वृत्रम् । जघन्वान् । असृजत् । वि । सिन्धून् ॥ ७ ॥ ममत् । चन ।
त्वा । युवतिः । पराऽआस । ममत् । चन । त्वा । कुषवा । जगार ।
ममत् । चित् । आपः । शिशवे । ममृड्युः । ममत् । चित् । इन्द्रः ।
सहसा । उत् । अतिष्ठत् । ॥ ८ ॥ ममत् । चन । ते । मघऽवन् । वि-
ऽअंसः । निऽविविध्वान् । अप । हनू इति । जघान । अध । नि-
ऽविद्धः । उत्ऽतरः । बभूवान् । शिरः । दासस्य । सम् । पिणक् ।
वधेन ॥ ९ ॥ गृष्टिः । ससूव । स्थविरम् । तवागाम् । अनाधृष्यम् ।
वृषभम् । तुम्रम् । इन्द्रम् । अरीळ्हम् । वत्सम् । चरथाय । माता ।
स्वयम् । गातुम् । तन्वे । इच्छमानम् ॥ १० ॥ उत । माता । महि-
षम् । अनु । अवेनत् । अमी इति । त्वा । जहति । पुत्र । देवाः ।
अथ । अब्रवीत् । वृत्रम् । इन्द्रः । हनिष्यन् । सखे । विष्णो इति ।
विऽतरम् । वि । क्रमस्व ॥ ११ ॥ कः । ते । मातरम् । विधवाम् ।
अचक्रत् । शयुम् । कः । त्वाम् । अजिघांसत् । चरन्तम् । कः । ते ।
देवः । अधि । मार्डीके । आसीत् । यत् । प्र । अक्षिणाः । पितरम् ।
पादऽगृह्य ॥ १२ ॥ अवर्त्या । शुनः । आन्त्राणि । पेचे । न । देवेषु ।
विविदे । मर्डितारम् । अपश्यम् । जायाम् । अमहीयमानाम् । अध ।
मे । श्येनः । मधु । आ । जभार ॥ १३ ॥

## IV. 19.

एव । त्वाम् । इन्द्र । वज्रिन् । अत्र । विश्वे । देवासः । सुऽहवासः । ऊमाः । महाम् । उभे इति । रोदसी इति । वृद्धम् । ऋष्वम् । निः । एकम् । इत् । वृणते । वृत्रऽहत्ये ॥ १ ॥ अव । असृजन्त । जिव्रयः । न । देवाः । भुवः । सम्ऽराट् । इन्द्र । सत्यऽयोनिः । अहन् । अहिम् । परिऽशयानम् । अर्णः । प्र । वर्तनीः । अरदः । विश्वऽधेनाः ॥ २ ॥ अतृप्णुवन्तम् । विऽयतम् । अबुध्यम् । अबुध्यमानम् । सुसुपानम् । इन्द्र । सप्त । प्रति । प्रऽवतः । आऽशयानम् । अहिम् । वज्रेण । वि । रिणाः । अपर्वन् ॥ ३ ॥ अक्षोदयत् । शवसा । क्षाम । बुध्नम् । वाः । न । वातः । तविषीभिः । इन्द्रः । दृळ्हानि । औभ्नात् । उशमानः । ओजः । अव । अभिनत् । ककुभः । पर्वतानाम् ॥ ४ ॥ अभि । प्र । दद्रुः । जनयः । न । गर्भम् । रथाःऽइव । प्र । ययुः । साकम् । अद्रयः । अतर्पयः । विऽसृतः । उब्जः । ऊर्मीन् । त्वम् । वृतान् । अरिणाः । इन्द्र । सिन्धून् ॥ ५ ॥ त्वम् । महीम् । अवनिम् । विश्वऽधेनाम् । तुर्वीतये । वय्याय । क्षरन्तीम् । अरमयः । नमसा । एजत् । अर्णः । सुऽतरणान् । अकृणोः । इन्द्र । सिन्धून् ॥ ६ ॥ प्र । अग्रुवः । नभन्वः । न । वक्वाः । ध्वस्राः । अपिन्वत् । युवतीः । ऋतऽज्ञाः । धन्वानि । अज्रान् । अपृणक् । तृषाणान् । अधोक् । इन्द्रः । स्तर्यः । दम्ऽसुपत्नीः ॥ ७ ॥ पूर्वीः । उषसः । शरदः । च । गूर्ताः । वृत्रम् । जघन्वान् । असृजत् । वि । सिन्धून् । परिऽस्थिताः । अतृणत् । बद्धधानाः । सीराः । इन्द्रः । स्रवितवे । पृथिव्या ॥ ८ ॥ वम्रीभिः । पुत्रम् । अग्रुवः । अदानम् । निऽवेशनात् । हरिऽवः । आ ।

जभर्थ । वि । अन्धः । अख्यत् । अहिम् । आऽददानः । निः । भूत् ।
उखऽछित् । सम् । अरन्त । पर्व ॥ ९ ॥ प्र । ते । पूर्वाणि । करणानि ।
विप्र । आऽविद्वान् । आह । विदुषे । करांसि । यथाऽयथा । वृष्ण्यानि ।
स्वऽगूर्ता । अपांसि । राजन् । नर्या । अविवेषीः ॥ १० ॥ नु ।
स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपे-
रिति पीपेः । अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम ।
रथ्यः । सदाऽसाः ॥ ११ ॥

IV. 20.

आ । नः । इन्द्रः । दूरात् । आ । नः । आसात् । अभिष्टिऽकृत् ।
अवसे । यासत् । उग्रः । ओजिष्ठेभिः । नृऽपतिः । वज्रऽबाहुः । सम्ऽगे ।
समत्ऽसु । तुर्वणिः । पृतन्यून् ॥ १ ॥ आ । नः । इन्द्रः । हरिऽभिः ।
यातु । अच्छ । अर्वाचीनः । अवसे । राधसे । च । तिष्ठाति । वज्री ।
मघऽवा । विऽरप्शी । इमम् । यज्ञम् । अनु । नः । वाजऽसातौ ॥२॥
इमम् । यज्ञम् । त्वम् । अस्माकम् । इन्द्र । पुरः । दधत् । सनिष्यसि ।
क्रतुम् । नः । श्वघ्नीऽइव । वज्रिन् । सनये । धनानाम् । त्वया । वयम् ।
अर्यः । आजिम् । जयेम ॥ ३ ॥ उशन् । ऊँ इति । सु । नः । सुऽमनाः ।
उपाके । सोमस्य । नु । सुऽसुतस्य । स्वधाऽवः । पाः । इन्द्र । प्रतिऽ-
भृतस्य । मध्वः । सम् । अन्धसा । ममदः । पृष्ठ्येन ॥४॥ वि । यः । ररप्शे ।
ऋषिऽभिः । नवेभिः । वृक्षः । न । पक्वः । सृण्यः । न । जेता । मर्यः । न ।
योषाम् । अभि । मन्यमानः । अच्छ । विवक्मि । पुरुऽहूतम् । इन्द्रम् ॥५॥
गिरिः । न । यः । स्वऽतवान् । ऋष्वः । इन्द्रः । सनात् । एव । सहसे ।
जातः । उग्रः । आऽदर्ता । वज्रम् । स्थविरम् । न । भीमः । उद्नाऽइव ।

कोशम् । वसुना । निऽऋष्टम् ॥ ६ ॥ न । यस्य । वर्ता । जनुषा । नु । अस्ति । न । राधसः । आऽमरीता । मघस्य । उत्ऽवव्रुषाणः । तविषी-ऽवः । उग्र । अस्मभ्यम् । दद्धि । पुरुऽहूत । रायः ॥ ७ ॥ ईक्षे । रायः । क्षयस्य । चर्षणीनाम् । उत । व्रजम् । अपऽवर्ता । असि । गोनाम् । शिक्षाऽनरः । समऽइथेषु । प्रहाऽवान् । वस्वः । राशिम् । अभिऽनेता । असि । भूरिम् ॥ ८ ॥ कया । तत् । शृण्वे । शच्या । शचिष्ठः । यया । कृणोति । मुहु । का । चित् । ऋष्वः । पुरु । दाशुषे । विऽचयिष्ठः । अंहः । अथ । दधाति । द्रविणम् । जरित्रे ॥ ९ ॥ मा । नः । मर्धीः । आ । भर । दद्धि । तत् । नः । प्र । दाशुषे । दातवे । भूरि । यत् । ते । नव्ये । देष्णे । शस्ते । अस्मिन् । ते । उक्थे । प्र । ब्रवाम । वयम् । इन्द्र । स्तुवन्तः ॥ १० ॥ नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेः । इति पीपेः । अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥ ११ ॥

## IV. 21.

आ । यातु । इन्द्रः । अवसे । उप । नः । इह । स्तुतः । सधऽ-मात् । अस्तु । शूरः । ववृधानः । तविषीः । यस्य । पूर्वीः । द्यौः । न । क्षत्रम् । अभिऽभूति । पुष्यात् ॥ १ ॥ तस्य । इत् । इह । स्तवथ । वृष्ण्यानि । तुविऽद्युम्नस्य । तुविऽराधसः । नॄन् । यस्य । क्रतुः । विदथ्यः । न । सम्ऽराट् । सह्वान् । तरुत्रः । अभि । अस्ति । कृष्टीः ॥ २ ॥ आ । यातु । इन्द्रः । दिवः । आ । पृथिव्याः । मक्षु । समुद्रात् । उत । वा । पुरीषात् । स्वःऽनरात् । अवसे । नः । मरुत्वान् । पराऽवतः । वा । सदनात् । ऋतस्य ॥ ३ ॥ स्थूरस्य । रायः । बृहतः ।

यः । ईशे । तम् । ऊँ इति । स्तवाम । विदथेषु । इन्द्रम् । यः । वायुना ।
जयति । गोऽमतीषु । प्र । धृष्णुऽया । नयति । वस्यः । अच्छ ॥ ४ ॥
उप । यः । नमः । नमसि । स्तभायन् । इयर्ति । वाचम् । जनयन् ।
यजध्यै । ऋञ्जसानः । पुरुऽवारः । उक्थैः । आ । इन्द्रम् । कृण्वीत ।
सदनेषु । होता ॥ ५ ॥ धिषा । यदि । धिषण्यन्तः । सरण्यान् । सदन्तः ।
अद्रिम् । औशिजस्य । गोहे । आ । दुरोषाः । पास्त्यस्य । होता । यः ।
नः । महान् । सम्ऽवरणेषु । वह्निः ॥६॥ सत्रा । यत् । ईम् । भार्वरस्य ।
वृष्णः । सिसक्ति । शुष्मः । स्तुवते । भराय । गुहा । यत् । ईम् ।
औशिजस्य । गोहे । प्र । यत् । धिये । प्र । अयसे । मदाय ॥७॥ वि ।
यत् । वरांसि । पर्वतस्य । वृण्वे । पयःऽभिः । जिन्वे । अपाम् । जवांसि ।
विदत् । गौरस्य । गवयस्य । गोहे । यदि । वाजाय । सुऽध्यः ।
वहन्ति ॥ ८ ॥ भद्रा । ते । हस्ता । सुऽकृता । उत । पाणी इति ।
प्रऽयन्तारा । स्तुवते । राधः । इन्द्र । का । ते । निऽसत्तिः । किम् ।
ऊँ इति । नो इति । ममत्सि । किम् । न उत्ऽउत् । ऊँ इति । हर्षसे ।
दातवै । ऊँ इति ॥ ९ ॥ एव । वस्वः । इन्द्रः । सत्यः । सम्ऽराट् ।
हन्ता । वृत्रम् । वरिवः । पूरवे । करिति कः । पुरुऽस्तुत । क्रत्वा । नः ।
शग्धि । रायः । भक्षीय । ते । अवसः । दैव्यस्य ॥ १० ॥ नु । स्तुतः ।
इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।
अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः ।
सदाऽसाः ॥ ११ ॥

IV. 22.

यत् । नः । इन्द्रः । जुजुषे । यत् । च । वष्टि । तत् । नः ।

महान् । करति । शुष्मी । आ । चित् । ब्रह्म । स्तोमम् । मघऽवा ।
सोमम् । उक्था । यः । अश्मानम् । शवसा । बिभ्रत् । एति ॥ १ ॥
वृषा । वृषन्धिम् । चतुःऽअश्रिम् । अस्यन् । उग्रः । बाहुऽभ्याम् । नृऽ-
तमः । शचीऽवान् । श्रिये । परुष्णीम् । उषमाणः । ऊर्णाम् । यस्याः ।
पर्वाणि । सख्याय । विव्ये ॥ २ ॥ यः । देवः । देवऽतमः । जायमानः ।
महः । वाजेभिः । महत्ऽभिः । च । शुष्मैः । दधानः । वज्रम् । बाह्वोः ।
उशन्तम् । द्याम् । अमेन । रेजयत् । प्र । भूम ॥ ३ ॥ विश्वा । रोधांसि ।
प्रऽवतः । च । पूर्वीः । द्यौः । ऋष्वात् । जनिमन् । रेजत । क्षाः ।
आ । मातरा । भरति । शुष्मी । आ । गोः । नृऽवत् । परिऽज्मन् ।
नोनुवन्त । वाताः ॥ ४ ॥ ता । तु । ते । इन्द्र । महतः । महानि ।
विश्वेषु । इत् । सवनेषु । प्रऽवाच्या । यत् । शूर । धृष्णो इति । धृषता ।
दधृष्वान् । अहिम् । वज्रेण । शवसा । अविवेषीः ॥ ५ ॥ ता । तु । ते ।
सत्या । तुविऽनृम्ण । विश्वा । प्र । धेनवः । सिस्रते । वृष्णः । ऊध्नः ।
अध । ह । त्वत् । वृषऽमनः । भियानाः । प्र । सिन्धवः । जवसा ।
चक्रमन्त ॥ ६ ॥ अत्र । अह । ते । हरिऽवः । ताः । ऊँ इति । देवीः ।
अवःऽभिः । इन्द्र । स्तवन्त । स्वसारः । यत् । सीम् । अनु । प्र । मुचः ।
बद्बधानाः । दीर्घाम् । अनु । प्रऽसितिम् । स्यन्दयध्यै ॥ ७ ॥ पिपीळे ।
अंशुः । मद्यः । न । सिन्धुः । आ । त्वा । शमी । शशमानस्य । शक्तिः ।
अस्मद्र्यक् । शुशुचानस्य । यम्याः । आशुः । न । रश्मिम् । तुविऽओजसम् ।
गोः ॥ ८ ॥ अस्मे इति । वर्षिष्ठा । कृणुहि । ज्येष्ठा । नृम्णानि । सत्रा ।
सहुरे । सहांसि । अस्मभ्यम् । वृत्रा । सुऽहनानि । रन्धि । जहि । वधः ।
वनुषः । मर्त्यस्य ॥ ९ ॥ अस्माकम् । इत् । सु । शृणुहि । त्वम् । इन्द्र ।

अस्मभ्यम् । चित्रान् । उप । माहि । वाजान् । अस्मभ्यम् । विश्वाः ।
इषणः । पुरम्ऽधीः । अस्माकम् । सु । मघऽवन् । बोधि । गोऽदाः ॥१०॥
नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपे-
रिति पीपेः । अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम ।
रथ्यः । सदाऽसाः ॥ ११ ॥

IV. 23.

कथा । महाम् । अवृधत् । कस्य । होतुः । यज्ञम् । जुषाणः ।
अभि । सोमम् । ऊधः । पिबन् । उशानः । जुषमाणः । अन्धः ।
ववक्षे । ऋष्वः । शुचते । धनाय ॥ १ ॥ कः । अस्य । वीरः । सधऽ-
मादम् । आप । सम् । आनंश । सुमतिऽभिः । कः । अस्य । कत् ।
अस्य । चित्रम् । चिकिते । कत् । ऊती । वृधे । भुवत् । शशमानस्य ।
यज्योः ॥ २ ॥ कथा । शृणोति । हूयमानम् । इन्द्रः । कथा । शृण्वन् ।
अवसाम् । अस्य । वेद । काः । अस्य । पूर्वीः । उपऽमातयः । ह ।
कथा । एनम् । आहुः । पपुरिम् । जरित्रे ॥ ३ ॥ कथा । सऽबाधः ।
शशमानः । अस्य । नशत् । अभि । द्रविणम् । दीध्यानः । देवः ।
भुवत् । नवेदाः । मे । ऋतानाम् । नमः । जगृभ्वान् । अभि । यत् ।
जुजोषत् ॥ ४ ॥ कथा । कत् । अस्याः । उषसः । विऽउष्टौ । देवः ।
मर्तस्य । सख्यम् । जुजोष । कथा । कत् । अस्य । सख्यम् । सखिऽभ्यः ।
ये । अस्मिन् । कामम् । सुऽयुजम् । ततस्रे ॥ ५ ॥ किम् । आत् ।
अमत्रम् । सख्यम् । सखिऽभ्यः । कदा । नु । ते । भ्रात्रम् । प्र । ब्रवाम ।
श्रिये । सुऽदृशः । वपुः । अस्य । सर्गाः । स्वः । न । चित्रऽतमम् ।
इषे । आ । गोः ॥ ६ ॥ द्रुहम् । जिघांसन् । ध्वरसम् । अनिन्द्राम् ।

तेति॑क्ते । तिग्मा । तुजसे॑ । अनी॑का । ऋणा । चित् । यत्र॑ । ऋणऽयाः ।
नः । उग्रः । दूरे । अज्ञा॑ताः । उषसः॑ । बबाधे ॥ ७ ॥ ऋतस्य॑ । हि ।
शुरुधः॑ । सन्ति॑ । पूर्वीः । ऋतस्य॑ । धीतिः । वृजिनानि॑ । हन्ति ।
ऋतस्य॑ । श्लोकः॑ । बधिरा । ततर्द । कर्णा॑ । बुधानः । शुचमा॑नः ।
आयोः ॥ ८ ॥ ऋतस्य॑ । दृळ्हा । धरुणा॑नि । सन्ति । पुरूणि॑ । चन्द्रा ।
वपु॑षे । वपूं॑षि । ऋतेन॑ । दीर्घम् । इषणन्त । पृक्षः॑ । ऋतेन॑ । गावः॑ ।
ऋतम् । आ । विवेशुः ॥ ९ ॥ ऋतम् । येमानः । ऋतम् । इत् । वनोति ।
ऋतस्य॑ । शुष्मः॑ । तुरऽयाः । ऊँ इति॑ । गव्युः । ऋताय॑ । पृथ्वी इति॑ ।
बहुले इति॑ । गभीरे इति॑ । ऋताय॑ । धेनू इति॑ । परमे इति॑ । दुहाते इति॑ ॥ १० ॥
नु । स्तुतः । इन्द्र । नु । गृणानः । इष॑म् । जरित्रे । नद्यः॑ । न । पीपे-
रिति॑ पीपेः । अका॑रि । ते । हरिऽवः । ब्रह्म॑ । नव्य॑म् । धिया । स्याम ।
रथ्यः॑ । सदाऽसाः ॥ ११ ॥

IV. 24.

का । सुऽस्तुतिः । शव॑सः । सूनुम् । इन्द्र॑म् । अर्वाचीनम् । राध॑से ।
आ । ववर्तत् । ददिः । हि । वीरः । गृणते । वसू॑नि । सः । गोऽप॑तिः ।
निःऽसिधा॑म् । नः । जनासः ॥ १ ॥ सः । वृत्रऽहत्ये॑ । हव्यः॑ । सः ।
ईड्यः॑ । सः । सुऽस्तु॑तः । इन्द्रः॑ । सत्यऽरा॑धाः । सः । याम॑न् । आ ।
मघऽवा॑ । मर्त्या॑य । ब्रह्मण्यते । सुस्व॑ये । वरि॑वः । धात् ॥ २ ॥ तम् ।
इत् । नरः॑ । वि । ह्वयन्ते । सम्ऽईके । रिरिक्वांसः॑ । तन्वः॑ । कृण्वत ।
त्राम् । मिथः । यत् । त्यागम् । उभया॑सः । अग्म॑न् । नरः॑ । तोकस्य॑ ।
तन॑यस्य । सातौ ॥ ३ ॥ क्रतुऽयन्ति॑ । क्षितयः॑ । योगे॑ । उग्र । आशु-
षाणासः॑ । मिथः । अर्ण॑ऽसातौ । सम् । यत् । विशः॑ । अव॑वृत्रन्त ।

युष्माः । आत् । इत् । नेमे । इन्द्रयन्ते । अभीके ॥ ४ ॥ आत् । इत् ।
ह । नेमे । इन्द्रियम् । यजन्ते । आत् । इत् । पक्तिः । पुरोळाशम् ।
रिरिच्यात् । आत् । इत् । सोमः । वि । पपृच्यात् । असुस्वीन् । आत् ।
इत् । जुजोष । वृषभम् । यजध्यै ॥ ५ ॥ कृणोति । अस्मै । वरिवः ।
यः । इत्था । इन्द्राय । सोमम् । उशते । सुनोति । सध्रीचीनेन ।
मनसा । अविऽवेनम् । तम् । इत् । सखायम् । कृणुते । समत्ऽसु ॥ ६ ॥
यः । इन्द्राय । सुनवत् । सोमम् । अद्य । पचात् । पक्तीः । उत ।
भृज्जाति । धानाः । प्रति । मनायोः । उचथानि । हर्यन् । तस्मिन् ।
दधत् । वृषणम् । शुष्मम् । इन्द्रः ॥ ७ ॥ यदा । सऽमर्यम् । वि । अचेत् ।
ऋघावा । दीर्घम् । यत् । आजिम् । अभि । अख्यत् । अर्यः । अचि-
क्रदत् । वृषणम् । पत्नी । अच्छ । दुरोणे । आ । निऽशितम् । सोम-
सुत्ऽभिः ॥ ८ ॥ भूयसा । वस्नम् । अचरत् । कनीयः । अविऽक्रीतः ।
अकानिषम् । पुनः । यन् । सः । भूयसा । कनीयः । न । अरिरेचीत् ।
दीनाः । दक्षाः । वि । दुहन्ति । प्र । वाणम् ॥ ९ ॥ कः । इमम् ।
दशऽभिः । मम । इन्द्रम् । क्रीणाति । धेनुऽभिः । यदा । वृत्राणि ।
जङ्घनत् । अथ । एनम् । मे । पुनः । ददत् ॥ १० ॥ नु । स्तुतः ।
इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।
अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः ।
सदाऽसाः ॥ ११ ॥

IV. 25.

कः । अद्य । नर्यः । देवऽकामः । उशन् । इन्द्रस्य । सख्यम् ।
जुजोष । कः । वा । महे । अवसे । पार्याय । सम्ऽइद्धे । अग्नौ । सुत-

ऽसोमः । ईट्टे ॥ १ ॥ कः । ननाम । वचसा । सोम्याय । मनायुः ।
वा । भवति । वस्ते । उस्राः । कः । इन्द्रस्य । युज्यम् । कः । सखि-
ऽत्वम् । कः । भ्रात्रम् । वष्टि । कवये । कः । ऊती ॥ २ ॥ कः ।
देवानाम् । अवः । अद्य । वृणीते । कः । आदित्यान् । अदितिम् ।
ज्योतिः । ईट्टे । कस्य । अश्विनौ । इन्द्रः । अग्निः । सुतस्य । अंशोः ।
पिबन्ति । मनसा । अविऽवेनम् ॥ ३ ॥ तस्मै । अग्निः । भारतः ।
शर्म । यंसत् । ज्योक् । पश्यात् । सूर्यम् । उत्ऽचरन्तम् । यः ।
इन्द्राय । सुनवाम । इति । आह । नरे । नर्याय । नृऽतमाय ।
नृणाम् ॥ ४ ॥ न । तम् । जिनन्ति । बहवः । न । दभ्राः । उरु ।
अस्मै । अदितिः । शर्म । यंसत् । प्रियः । सुऽकृत् । प्रियः । इन्द्रे ।
मनायुः । प्रियः । सुप्रऽअवीः । प्रियः । अस्य । सोमी ॥ ५ ॥
सुप्रऽअव्यः । प्राशुषाट् । एषः । वीरः । सुस्वेः । पक्तिम् । कृणुते ।
केवला । इन्द्रः । न । असुस्वेः । आपिः । न । सखा । न । जामिः ।
दुःप्रऽअव्यः । अवऽहन्ता । इत् । अवाचः ॥ ६ ॥ न । रेवता ।
पणिना । सख्यम् । इन्द्रः । असुन्वता । सुतऽपाः । सम् । गृणीते ।
आ । अस्य । वेदः । खिदति । हन्ति । नग्नम् । वि । सुस्वये । पक्तये ।
केवलः । भूत् ॥ ७ ॥ इन्द्रम् । परे । अवरे । मध्यमासः । इन्द्रम् ।
यान्तः । अवऽसितासः । इन्द्रम् । इन्द्रम् । क्षियन्तः । उत । युध्यमानाः ।
इन्द्रम् । नरः । वाजयन्तः । हवन्ते ॥ ८ ॥

IV. 26.

अहम् । मनुः । अभवम् । सूर्यः । च । अहम् । कक्षीवान् । ऋषिः ।
अस्मि । विप्रः । अहम् । कुत्सम् । आर्जुनेयम् । नि । ऋञ्जे । अहम् । कविः ।

उशना । पश्यत । मा ॥ १ ॥ अहम् । भूमिम् । अददाम् । आर्याय । अहम् । वृष्टिम् । दाशुषे । मर्त्याय । अहम् । अपः । अनयम् । वावशानाः । मम । देवासः । अनु । केतम् । आयन् ॥ २ ॥ अहम् । पुरः । मन्द-सानः । वि । ऐरम् । नव । साकम् । नवतीः । शम्बरस्य । शतऽत-मम् । वेश्यम् । सर्वऽताता । दिवःऽदासम् । अतिथिऽग्वम् । यत् । आवम् ॥ ३ ॥ प्र । सु । सः । विऽभ्यः । मरुतः । विः । अस्तु । प्र । श्येनः । श्येनेभ्यः । आशुऽपत्वा । अचक्रया । यत् । स्वधया । सुऽपर्णः । हव्यम् । भरत् । मनवे । देवऽजुष्टम् ॥ ४ ॥ भरत् । यदि । विः । अतः । वेविजानः । पथा । उरुणा । मनःऽजवाः । असर्जि । तूयम् । ययौ । मधुना । सोम्येन । उत । श्रवः । विविदे । श्येनः । अत्र ॥ ५ ॥ ऋजीपी । श्येनः । ददमानः । अंशुम् । पराऽवतः । शकुनः । मन्द्रम् । मदम् । सोमम् । भरत् । ददृहाणः । देवऽतान् । दिवः । अमुष्मात् । उत्ऽतरात् । आऽदाय ॥ ६ ॥ आऽदाय । श्येनः । अभरत् । सोमम् । सहस्रम् । सवान् । अयुतम् । च । साकम् । अत्र । पुरम्ऽधिः । अजहात् । अरातीः । मदे । सोमस्य । मूराः । अमूरः ॥ ७ ॥

IV. 27.

गर्भे । नु । सन् । अनु । एषाम् । अवेदम् । अहम् । देवानाम् । जनिमानि । विश्वा । शतम् । मा । पुरः । आयसीः । अर-क्षन् । अध । श्येनः । जवसा । निः । अदीयम् ॥ १ ॥ न । घ । सः । माम् । अप । जोषम् । जभार । अभि । ईम् । आस । त्वक्षसा । वीर्येण । ईर्मा । पुरम्ऽधिः । अजहात् । अरातीः । उत । वातान् ।

अतरत् । शूशुवानः ॥ २ ॥ अव । यत् । श्येनः । अस्वनीत् । अध । द्योः । वि । यत् । यदि । वा । अतः । ऊहुः । पुरम्ऽधिम् । सृजत् । यत् । अस्मै । अव । ह । क्षिपत् । ज्याम् । कृशानुः । अस्ता । मनसा । भुरण्यन् ॥ ३ ॥ ऋजिप्यः । ईम् । इन्द्रऽवतः । न । भुज्युम् । श्येनः । जभार । बृहतः । अधि । स्नोः । अन्तरिति । पतत् । पतत्रि । अस्य । पर्णम् । अध । यामनि । प्रऽसितस्य । तत् । वेरिति वेः ॥ ४ ॥ अध । श्वेतम् । कलशम् । गोभिः । अक्तम् । आऽपिप्यानम् । मघऽवा । शुक्रम् । अन्धः । अध्वर्युऽभिः । प्रऽयतम् । मध्वः । अग्रम् । इन्द्रः । मदाय । प्रति । धत् । पिबध्यै । शूरः । मदाय । प्रति । धत् । पिबध्यै ॥ ५ ॥

## IV. 28.

त्वा । युजा । तव । तत् । सोम । सख्ये । इन्द्रः । अपः । मनवे । सऽस्रुतः । करिति कः । अहन् । अहिम् । अरिणात् । सप्त । सिन्धून् । अप । अवृणोत् । अपिहिताऽइव । खानि ॥ १ ॥ त्वा । युजा । नि । खिदत् । सूर्यस्य । इन्द्रः । चक्रम् । सहसा । सद्यः । इन्दो इति । अधि । स्नुना । बृहता । वर्तमानम् । महः । द्रुहः । अप । विश्वऽआयु । धायि ॥ २ ॥ अहन् । इन्द्रः । अदहत् । अग्निः । इन्दो इति । पुरा । दस्यून् । मध्यंदिनात् । अभीके । दुःऽगे । दुरोणे । क्रत्वा । न । याताम् । पुरु । सहस्रा । शर्वा । नि । बर्हीत् ॥३॥ विश्वस्मात् । सीम् । अधमान् । इन्द्र । दस्यून् । विशः । दासीः । अकृणोः । अप्रऽशस्ताः । अबाधेथाम् । अमृणतम् । नि । शत्रून् । अविन्देथाम् । अपऽचितिम् । वधत्रैः ॥ ४ ॥ एव । सत्यम् । मघऽवाना । युवम् । तत् । इन्द्रः । च ।

सोम । ऊर्वम् । अश्व्यम् । गोः । आ । अदर्दृतम् । अपिऽहितानि । अश्ना । रिरिचथुः । क्षाः । चित् । ततृदाना ॥ ५ ॥

IV. 29.

आ । नः । स्तुतः । उप । वाजेभिः । ऊती । इन्द्र । याहि । हरिऽभिः । मन्दसानः । तिरः । चित् । अर्यः । सवना । पुरूणि । आङ्गूषेभिः । गृणानः । सत्यऽराधाः ॥ १ ॥ आ । हि । स्म । याति । नर्यः । चिकित्वान् । हूयमानः । सोतृऽभिः । उप । यज्ञम् । सुऽअश्वः । यः । अभीरुः । मन्यमानः । सुस्वानेभिः । मदति । सम् । ह । वीरैः ॥२॥ श्रवय । इत् । अस्य । कर्णा । वाजयध्यै । जुष्टाम् । अनु । प्र । दिशम् । मन्दयध्यै । उत्ऽववृषाणः । राधसे । तुविष्मान् । करत् । नः । इन्द्रः । सुऽतीर्था । अभयम् । च ॥ ३ ॥ अच्छ । यः । गन्ता । नाधमानम् । ऊती । इत्था । विप्रम् । हवमानम् । गृणन्तम् । उप । त्मनि । दधानः । धुरि । आशून् । सहस्राणि । शतानि । वज्रऽबाहुः ॥ ४ ॥ त्वाऽऊतासः । मघऽवन् । इन्द्र । विप्राः । वयम् । ते । स्याम । सूरयः । गृणन्तः । भेजानासः । बृहत्ऽदिवस्य । रायः । आऽकाय्यस्य । दावने । पुरुऽक्षोः ॥ ५ ॥

IV. 30.

नकिः । इन्द्र । त्वत् । उत्ऽतरः । न । ज्यायान् । अस्ति । वृत्रऽहन् । नकिः । एव । यथा । त्वम् ॥ १ ॥ सत्रा । ते । अनु । कृष्टयः । विश्वा । चक्राऽइव । ववृतुः । सत्रा । महान् । असि । श्रुतः ॥२॥ विश्वे । चन । इत् । अना । त्वा । देवासः । इन्द्र । युयुधुः । यत् । अहा । नक्तम् । आ । अतिरः ॥३॥ यत्र । उत । बाधितेभ्यः । चक्रम् ।

कुत्साय । युध्यते । मुषायः । इन्द्र । सूर्यम् ॥ ४ ॥ यत्र । देवान् ।
ऋघायतः । विश्वान् । अयुध्यः । एकः । इत् । त्वम् । इन्द्र । वनून् ।
अहन् ॥ ५ ॥ यत्र । उत । मर्त्याय । कम् । अरिणाः । इन्द्र । सूर्यम् ।
प्र । आवः । शचीभिः । एतशम् ॥ ६ ॥ किम् । आत् । उत ।
असि । वृत्रऽहन् । मघऽवन् । मन्युमत्ऽतमः । अत्र । अह । दानुम् ।
आ । अतिरः ॥७॥ एतत् । घ । इत् । उत । वीर्यम् । इन्द्र । चकर्थ ।
पौंस्यम् । स्त्रियम् । यत् । दुःहनायुवम् । वधीः । दुहितरम् । दिवः ॥८॥
दिवः । चित् । घ । दुहितरम् । महान् । महीयमानाम् । उषसम् ।
इन्द्र । सम् । पिणक् ॥ ९ ॥ अप । उषाः । अनसः । सरत् । सम्-
ऽपिष्टात् । अह । बिभ्युषी । नि । यत् । सीम् । शिश्नथत् । वृषा ॥१०॥
एतत् । अस्याः । अनः । शये । सुऽसंपिष्टम् । विऽपाशि । आ ।
ससार । सीम् । पराऽवतः ॥ ११ ॥ उत । सिन्धुम् । विऽबाल्यम् ।
विऽतस्थानाम् । अधि । क्षमि । परि । स्थाः । इन्द्र । मायया ॥१२॥
उत । शुष्णस्य । धृष्णुऽया । प्र । मृक्षः । अभि । वेदनम् । पुरः ।
यत् । अस्य । सम्ऽपिणक् ॥ १३ ॥ उत । दासम् । कौलिऽतरम् ।
बृहतः । पर्वतात् । अधि । अव । अहन् । इन्द्र । शम्बरम् ॥ १४ ॥
उत । दासस्य । वर्चिनः । सहस्राणि । शता । अवधीः । अधि । पञ्च ।
प्रधीन्ऽइव ॥ १५ ॥ उत । त्यम् । पुत्रम् । अग्रुवः । पराऽवृक्तम् ।
शतऽक्रतुः । उक्थेषु । इन्द्रः । आ । अभजत् ॥ १६ ॥ उत । त्या ।
तुर्वशायदू इति । अस्नातारा । शचीःऽपतिः । इन्द्रः । विद्वान् । अपार-
यत् ॥ १७ ॥ उत । त्या । सद्यः । आर्या । सरयोः । इन्द्र । पारतः ।
अर्णीचित्ररथा । अवधीः ॥ १८ ॥ अनु । द्वा । जहिता । नयः ।

अन्धम् । श्रोणम् । च । वृत्रऽहन् । न । तत् । ते । सुम्नम् । अष्टवे ॥ १९ ॥
शतम् । अश्मन्ऽमयीनाम् । पुराम् । इन्द्रः । वि । आस्यत् । दिवःऽदा-
साय । दाशुषे ॥ २० ॥ अस्वापयत् । दभीतये । सहस्रा । त्रिंशतम् ।
हथैः । दासानाम् । इन्द्रः । मायया ॥ २१ ॥ सः । घ । इत् । उत ।
असि । वृत्रऽहन् । समानः । इन्द्र । गोऽपतिः । यः । ता । विश्वानि ।
चिच्युषे ॥ २२ ॥ उत । नूनम् । यत् । इन्द्रियम् । करिष्याः । इन्द्र ।
पौंस्यम् । अद्य । नकिः । तत् । आ । मिनत् ॥ २३ ॥ वामम्ऽवा-
मम् । ते । आऽदुरे । देवः । ददातु । अर्यमा । वामम् । पूषा । वामम् ।
भगः । वामम् । देवः । करूळती ॥ २४ ॥

IV. 31.

कया । नः । चित्रः । आ । भुवत् । ऊती । सदाऽवृधः । सखा ।
कया । शचिष्ठया । वृता ॥ १ ॥ कः । त्वा । सत्यः । मदानाम् ।
मंहिष्ठः । मत्सत् । अन्धसः । दृळ्हा । चित् । आऽरुजे । वसु ॥ २ ॥
अभि । सु । नः । सखीनाम् । अविता । जरितॄणाम् । शतम् । भवासि ।
ऊतिऽभिः ॥ ३ ॥ अभि । नः । आ । ववृत्स्व । चक्रम् । न । वृत्तम् ।
अर्वतः । नियुत्ऽभिः । चर्षणीनाम् ॥ ४ ॥ प्रऽवता । हि । क्रतूनाम् ।
आ । ह । पदाऽइव । गच्छसि । अभक्षि । सूर्ये । सचा ॥ ५ ॥ सम् ।
यत् । ते । इन्द्र । मन्यवः । सम् । चक्राणि । दधन्विरे । अध । त्वे
इति । अध । सूर्ये ॥ ६ ॥ उत । स्म । हि । त्वाम् । आहुः । इत् ।
मघऽवानम् । शचीऽपते । दातारम् । अविऽदीधयुम् ॥ ७ ॥ उत । स्म ।
सद्यः । इत् । परि । शशमानाय । सुन्वते । पुरु । चित् । मंहसे ।
वसु ॥ ८ ॥ नहि । स्म । ते । शतम् । चन । राधः । वरन्ते । आऽ-

शूरः॑ । न । च्यौ॒त्नानि॑ । क॒रि॒ष्य॒तः ॥ ९ ॥ अ॒स्मान् । अ॒व॒न्तु॒ । ते॒ ।
श॒तम् । अ॒स्मान् । स॒हस्र॑म् । ऊ॒तयः॑ । अ॒स्मान् । विश्वाः॑ । अ॒भि-
ष्टयः॑ ॥ १० ॥ अ॒स्मान् । इ॒ह । वृ॒णी॒ष्व॒ । स॒ख्याय॑ । स्व॒स्तये॑ । म॒हः ।
रा॒ये । दि॒वित्म॑ते ॥ ११ ॥ अ॒स्मान् । अ॒वि॒ड्ढि॒ । वि॒श्वहा॑ । इन्द्र॑ । रा॒या ।
परी॑णसा । अ॒स्मान् । विश्वा॑भिः । ऊ॒तिऽभिः॑ ॥ १२ ॥ अ॒स्मभ्य॑म् । तान् ।
अप॑ । वृ॒धि॒ । व्र॒जान् । अस्ता॑ऽइव । गोऽम॑तः । नवा॑भिः । इ॒न्द्र॒ ।
ऊ॒तिऽभिः॑ ॥ १३ ॥ अ॒स्माक॑म् । धृ॒ष्णु॒ऽया । रथः॑ । द्यु॒ऽमान् । इ॒न्द्र॒ ।
अन॑पऽच्युतः । ग॒व्युः । अ॒श्व॒ऽयुः । ई॒य॒ते ॥ १४ ॥ अ॒स्माक॑म् । उ॒त्ऽ-
त॒मम् । कृ॒धि॒ । श्रवः॑ । दे॒वेषु॑ । सूर्ये॑ । वर्षि॑ष्ठम् । द्याम्ऽइ॑व । उ॒परि॑ ॥ १५ ॥

## IV. 32.

आ । तु । नः॒ । इ॒न्द्र॒ । वृ॒त्र॒ऽह॒न् । अ॒स्माक॑म् । अ॒र्धम् । आ । ग॒हि॒ ।
म॒हान् । म॒हीभिः॑ । ऊ॒तिऽभिः॑ ॥ १ ॥ भृमिः॑ । चि॒त् । घ॒ । अ॒सि॒ ।
तू॒तु॑जिः । आ । चि॒त्र॒ । चि॒त्रिणी॑षु । आ । चि॒त्रम् । कृ॒णो॒षि॒ ।
ऊ॒तये॑ ॥ २ ॥ द॒भ्रेभिः॑ । चि॒त् । शशी॑यांसम् । हंसि॑ । व्राध॑न्तम् ।
ओज॑सा । सखि॑ऽभिः । ये । त्वे इति॑ । सचा॑ ॥ ३ ॥ व॒यम् । इ॒न्द्र॒ ।
त्वे इति॑ । सचा॑ । व॒यम् । त्वा॒ । अ॒भि । नो॒नु॒मः॒ । अ॒स्मान्ऽअ॑स्मान् ।
इत् । उ॒त् । अ॒व॒ ॥ ४ ॥ सः । नः॒ । चि॒त्राभिः॑ । अ॒द्रि॒ऽवः॒ । अ॒न॒व॒-
द्याभिः॑ । ऊ॒तिऽभिः॑ । अना॑धृष्टाभिः । आ । ग॒हि॒ ॥ ५ ॥ भूया॑मो॒ इति॑ ।
सु । त्वाऽव॑तः । सखा॑यः । इ॒न्द्र॒ । गोऽम॑तः । युजः॑ । वाजा॑य ।
घृष्व॑ये ॥ ६ ॥ त्वम् । हि । एकः॑ । ईशि॑षे । इन्द्र॑ । वाज॑स्य । गोऽम॑तः ।
सः । नः॒ । य॒न्धि॒ । म॒हीम् । इष॑म् ॥ ७ ॥ न । त्वा॒ । व॒र॒न्ते॒ । अ॒न्यथा॑ ।
यत् । दित्स॑सि । स्तु॒तः । म॒घम् । स्तो॒तृऽभ्यः॑ । इ॒न्द्र॒ । गि॒र्व॒णः॒ ॥ ८ ॥

अभि । त्वा । गोतमाः । गिरा । अनूषत । प्र । दावने । इन्द्र । वाजाय । घृष्वये ॥ ९ ॥ प्र । ते । वोचाम । वीर्या । याः । मन्दसानः । आ । अरुजः । पुरः । दासीः । अभिऽइत्य ॥ १० ॥ ता । ते । गृणन्ति । वेधसः । यानि । चकर्थ । पौंस्या । सुतेषु । इन्द्र । गिर्वणः ॥ ११ ॥ अवीवृधन्त । गोतमाः । इन्द्र । त्वे इति । स्तोमऽवाहसः । आ । एषु । धाः । वीरऽवत् । यशः ॥ १२ ॥ यत् । चित् । हि । शश्वताम् । असि । इन्द्र । साधारणः । त्वम् । तम् । त्वा । वयम् । हवामहे ॥ १३ ॥ अर्वाचीनः । वसो इति । भव । अस्मे इति । सु । मत्स्व । अन्धसः । सोमानाम् । इन्द्र । सोमऽपाः ॥ १४ ॥ अस्माकम् । त्वा । मतीनाम् । आ । स्तोमः । इन्द्र । यच्छतु । अर्वाक् । आ । वर्तय । हरी इति ॥१५॥ पुरोळाशम् । च । नः । घसः । जोषयासे । गिरः । च । नः । वधूयुःऽइव । योषणाम् ॥ १६ ॥ सहस्रम् । व्यतीनाम् । युक्तानाम् । इन्द्रम् । ईमहे । शतम् । सोमस्य । खार्यः ॥ १७ ॥ सहस्रा । ते । शता । वयम् । गवाम् । आ । च्यवयामसि । अस्मऽत्रा । राधः । एतु । ते ॥ १८ ॥ दश । ते । कलशानाम् । हिरण्यानाम् । अधीमहि । भूरिऽदाः । असि । वृत्रऽहन् ॥ १९ ॥ भूरिऽदाः । भूरि । देहि । नः । मा । दभ्रम् । भूरि । आ । भर । भूरि । घ । इत् । इन्द्र । दित्ससि ॥ २० ॥ भूरिऽदाः । हि । असि । श्रुतः । पुरुऽत्रा । शूर । वृत्रऽहन् । आ । नः । भजस्व । राधसि ॥ २१ ॥ प्र । ते । बभ्रू इति । विऽचक्षण । शंसामि । गोऽसनः । नपात् । मा । आभ्याम् । गाः । अनु । शिश्रथः ॥ २२ ॥ कनीनकाऽइव । विद्रधे । नवे । द्रुऽपदे । अर्भके । बभ्रू इति । यामेषु । शोभेते इति ॥ २३ ॥ अरम् । मे । उस्रऽ-

यान्ति । अरम् । अनुस्वऽयाम्ने । बभ्रू इति । यामेषु । अस्त्रिधा ॥ २४ ॥

IV. 33.

प्र । ऋभुऽभ्यः । दूतम्ऽइव । वाचम् । इष्ये । उपऽस्तिरे । श्वैत-
रीम् । धेनुम् । ईळे । ये । वातऽजूताः । तरणिऽभिः । एवैः । परि ।
द्याम् । सद्यः । अपसः । बभूवुः ॥ १ ॥ यदा । अरम् । अक्रन् ।
ऋभवः । पितृऽभ्याम् । परिऽविष्टी । वेषणा । दंसनाभिः । आत् ।
इत् । देवानाम् । उप । सख्यम् । आयन् । धीरासः । पुष्टिम् । अव-
हन् । मनायै ॥ २ ॥ पुनः । ये । चक्रुः । पितरा । युवाना । सना ।
यूपाऽइव । जरणा । शयाना । ते । वाजः । विऽभ्वा । ऋभुः । इन्द्र-
ऽवन्तः । मधुऽप्सरसः । नः । अवन्तु । यज्ञम् ॥ ३ ॥ यत् ।
सम्ऽवत्सम् । ऋभवः । गाम् । अरक्षन् । यत् । सम्ऽवत्सम् ।
ऋभवः । माः । अपिंशन् । यत् । सम्ऽवत्सम् । अभरन् । भासः ।
अस्याः । ताभिः । शमीभिः । अमृतऽत्वम् । आशुः ॥ ४ ॥ ज्येष्ठः ।
आह । चमसा । द्वा । कर । इति । कनीयान् । त्रीन् । कृणवाम ।
इति । आह । कनिष्ठः । आह । चतुरः । कर । इति । त्वष्टा । ऋभवः ।
तत् । पनयत् । वचः । वः ॥ ५ ॥ सत्यम् । ऊचुः । नरः । एव ।
हि । चक्रुः । अनु । स्वधाम् । ऋभवः । जग्मुः । एताम् । विऽभ्राज-
मानान् । चमसान् । अहाऽइव । अवेनत् । त्वष्टा । चतुरः । दद-
श्वान् ॥ ६ ॥ द्वादश । द्यून् । यत् । अगोह्यस्य । आतिथ्ये । रणन् ।
ऋभवः । ससन्तः । सुऽक्षेत्रा । अकृण्वन् । अनयन्त । सिन्धून् ।
धन्व । आ । अतिष्ठन् । ओषधीः । निम्नम् । आपः ॥ ७ ॥ रथम् ।
ये । चक्रुः । सुऽवृतम् । नरेऽस्थाम् । ये । धेनुम् । विश्वऽजुवम् । विश्व-

ऽरूपाम् । ते । आ । तक्षन्तु । ऋभवः । रयिम् । नः । सुऽअवसः । सुऽअपसः । सुऽहस्ताः ॥ ८ ॥ अपः । हि । एषाम् । अजुषन्त । देवाः । अभि । क्रत्वा । मनसा । दीध्यानाः । वाजः । देवानाम् । अभवत् । सुऽकर्मा । इन्द्रस्य । ऋभुक्षाः । वरुणस्य । विऽभ्वा ॥ ९ ॥ ये । हरी इति । मेधया । उक्था । मदन्तः । इन्द्राय । चक्रुः । सुऽयुजा । ये । अश्वा । ते । रायः । पोषम् । द्रविणानि । अस्मे इति । धत्त । ऋभवः । क्षेमऽयन्तः । न । मित्रम् ॥ १० ॥ इदा । अह्नः । पीतिम् । उत । वः । मदम् । धुः । न । ऋते । श्रान्तस्य । सख्याय । देवाः । ते । नूनम् । अस्मे इति । ऋभवः । वसूनि । तृतीये । अस्मिन् । सवने । दधात ॥ ११ ॥

IV. 34.

ऋभुः । विऽभ्वा । वाजः । इन्द्रः । न । अच्छ । इमम् । यज्ञम् । रत्नऽधेया । उप । यात । इदा । हि । वः । धिषणा । देवी । अह्नाम् । अधात् । पीतिम् । सम् । मदाः । अग्मत । वः ॥ १ ॥ विदानासः । जन्मनः । वाजऽरत्नाः । उत । ऋतुऽभिः । ऋभवः । मादयध्वम् । सम् । वः । मदाः । अग्मत । सम् । पुरम्ऽधिः । सुऽवीराम् । अस्मे इति । रयिम् । आ । ईरयध्वम् ॥ २ ॥ अयम् । वः । यज्ञः । ऋभवः । अकारि । यम् । आ । मनुष्वत् । प्रऽदिवः । दधिध्वे । प्र । वः । अच्छ । जुजुषाणासः । अस्थुः । अभूत । विश्वे । अग्रिया । उत । वाजाः ॥ ३ ॥ अभूत् । ऊँ इति । वः । विधते । रत्नऽधेयम् । इदा । नरः । दाशुषे । मर्त्याय । पिबत । वाजाः । ऋभवः । ददे । वः । महि । तृतीयम् । सवनम् । मदाय ॥ ४ ॥ आ । वाजाः । यात । उप । नः । ऋभुक्षाः ।

महः । नरः । द्रविणसः । गृणानाः । आ । वः । पीतयः । अभि-
ऽपित्वे । अह्नाम् । । इमाः। अस्तम् । नवस्वःऽइव । ग्मन् ॥ ५ ॥
आ । नपातः । शवसः । यातन । उप । इमम् । यज्ञम् । नमसा ।
हूयमानाः । सऽजोषसः । सूरयः । यस्य । च । स्थ । मध्वः । पात ।
रत्नऽधाः । इन्द्रऽवन्तः ॥ ६ ॥ सऽजोषाः । इन्द्र । वरुणेन । सोमम् ।
सऽजोषाः । पाहि । गिर्वणः । मरुत्ऽभिः । अग्रेऽपाभिः । ऋतु-
ऽपाभिः । सऽजोषाः । ग्नाःपत्नीभिः । रत्नऽधाभिः । सऽजोषाः ॥ ७ ॥
सऽजोषसः । आदित्यैः । मादयध्वम् । सऽजोषसः । ऋभवः । पर्व-
तेभिः । सऽजोषसः । दैव्येन । सवित्रा । सऽजोषसः । सिन्धुऽभिः ।
रत्नऽधेभिः ॥ ८ ॥ ये । अश्विना । ये । पितरा । ये । ऊती । धेनुम् ।
ततक्षुः । ऋभवः । ये । अश्वा । ये । अंसत्रा । ये । ऋधक् । रोदसी
इति । ये । विऽभ्वः । नरः । सुऽअपत्यानि । चक्रुः ॥ ९ ॥ ये ।
गोऽमन्तम् । वाजऽवन्तम् । सुऽवीरम् । रयिम् । धत्थ । वसुऽमन्तम् ।
पुरुऽक्षुम् । ते । अग्रेऽपाः । ऋभवः । मन्दसानाः । अस्मे इति । धत्त ।
ये । च । रातिम् । गृणन्ति ॥ १० ॥ न । अप । अभूत । न । वः ।
अतीतृषाम । अनिःऽशस्ताः । ऋभवः । यज्ञे । अस्मिन् । सम् ।
इन्द्रेण । मदथ । सम् । मरुत्ऽभिः । सम् । राजऽभिः । रत्नऽधेयाय ।
देवाः ॥ ११ ॥

## IV. 35.

इह । उप । यात । शवसः । नपातः । सौधन्वनाः । ऋभवः ।
मा । अप । भूत । अस्मिन् । हि । वः । सवने । रत्नऽधेयम् ।
गमन्तु । इन्द्रम् । अनु । वः । मदासः ॥ १ ॥ आ । अगन् । ऋभू-

णाम् । इह । रत्नऽधेयम् । अभूत् । सोमस्य । सुऽसुतस्य । पीतिः । सुऽकृत्यया । यत् । सुऽअपस्यया । च । एकम् । विऽचक्र । चमसम् । चतुःऽधा ॥ २ ॥ वि । अकृणोत । चमसम् । चतुःऽधा । सखे । वि । शिक्ष । इति । अब्रवीत । अथ । ऐत । वाजाः । अमृतस्य । पन्थाम् । गणम् । देवानाम् । ऋभवः । सुऽहस्ताः ॥ ३ ॥ किम्ऽमयः । स्वित् । चमसः । एषः । आस । यम् । काव्येन । चतुरः । विऽचक्र । अथ । सुनुध्वम् । सवनम् । मदाय । पात । ऋभवः । मधुनः । सोम्यस्य ॥४॥ शच्या । अकर्त । पितरा । युवाना । शच्या । अकर्त । चमसम् । देवऽपानम् । शच्या । हरी इति । धनुःऽतरौ । अतष्ट । इन्द्रऽवाहौ । ऋभवः । वाजऽरत्नाः ॥ ५ ॥ यः । वः । सुनोति । अभिऽपित्वे । अह्नाम् । तीव्रम् । वाजासः । सवनम् । मदाय । तस्मै । रयिम् । ऋभवः । सर्वऽवीरम् । आ । तक्षत । वृषणः । मन्दसानाः ॥ ६ ॥ प्रातरिति । सुतम् । अपिबः । हरिऽअश्व । माध्यंदिनम् । सवनम् । केवलम् । ते । सम् । ऋभुऽभिः । पिबस्व । रत्नऽधेभिः । सखीन् । यान् । इन्द्र । चकृषे । सुऽकृत्या ॥ ७ ॥ ये । देवासः । अभवत । सुऽकृत्या । श्येनाःऽइव । इत् । अधि । दिवि । निऽसेद । ते । रत्नम् । धात । शवसः । नपातः । सौधन्वनाः । अभवत । अमृतासः ॥ ८ ॥ यत् । तृतीयम् । सवनम् । रत्नऽधेयम् । अकृणुध्वम् । सुऽअपस्या । सुऽहस्ताः । तत् । ऋभवः । परिऽसिक्तम् । वः । एतत् । सम् । मदेभिः । इन्द्रियेभिः । पिबध्वम् ॥ ९ ॥

IV. 36.

अनश्वः । जातः । अनभीशुः । उक्थ्यः । रथः । त्रिऽचक्रः ।

परि । वर्तते । रजः । महत् । तत् । वः । देव्यस्य । प्रऽवाचनम् ।
द्याम् । ऋभवः । पृथिवीम् । यत् । च । पुष्यथ ॥ १ ॥ रथम् । ये ।
चक्रुः । सुऽवृतम् । सुऽचेतसः । अविऽह्वरन्तम् । मनसः । परि ।
ध्यया । तान् । ऊँ इति । नु । अस्य । सवनस्य । पीतये । आ । वः ।
वाजाः । ऋभवः । वेदयामसि ॥ २ ॥ तत् । वः । वाजाः । ऋभवः ।
सुऽप्रवाचनम् । देवेषु । विऽभ्वः । अभवत् । महिऽत्वनम् । जिव्री
इति । यत् । सन्ता । पितरा । सनाऽजुरा । पुनः । युवाना । चर-
थाय । तक्षथ ॥ ३ ॥ एकम् । वि । चक्र । चमसम् । चतुःऽवयम् ।
निः । चर्मणः । गाम् । अरिणीत । धीतिऽभिः । अथ । देवेषु । अमृ-
तऽत्वम् । आनश । श्रुष्टी । वाजाः । ऋभवः । तत् । वः ।
उक्थ्यम् ॥ ४ ॥ ऋभुतः । रयिः । प्रथमश्रवःऽतमः । वाजऽश्रुतासः ।
यम् । अजीजनन् । नरः । विभ्वऽतष्टः । विदथेषु । प्रऽवाच्यः । यम् ।
देवासः । अवथ । सः । विऽचर्षणिः ॥ ५ ॥ सः । वाजी । अर्वा ।
सः । ऋषिः । वचस्यया । सः । शूरः । अस्ता । पृतनासु । दुस्तरः ।
सः । रायः । पोषम् । सः । सुऽवीर्यम् । दधे । यम् । वाजः । वि-
ऽभ्वा । ऋभवः । यम् । आविषुः ॥ ६ ॥ श्रेष्ठम् । वः । पेशः । अधि ।
धायि । दर्शतम् । स्तोमः । वाजाः । ऋभवः । तम् । जुजुष्टन ।
धीरासः । हि । स्थ । कवयः । विपःऽचितः । तान् । वः । एना ।
ब्रह्मणा । आ । वेदयामसि ॥ ७ ॥ यूयम् । अस्मभ्यम् । धिष-
णाभ्यः । परि । विद्वांसः । विश्वा । नर्याणि । भोजना । द्युऽमन्तम् ।
वाजम् । वृषऽशुष्मम् । उत्ऽतमम् । आ । नः । रयिम् । ऋभवः ।
तक्षत । आ । वयः ॥ ८ ॥ इह । प्रऽजाम् । इह । रयिम् । रराणाः ।

इह । अर्वः । वीरऽवत् । तक्षत । नः । येन । वयम् । चितयेम । अति । अन्यान् । तम् । । वाजम् । चित्रम् । ऋभवः । दद । नः ॥ ९ ॥

IV. 37.

उप । नः । वाजाः । अध्वरम् । ऋभुक्षाः । देवाः । यात । पथिऽभिः । देवऽयानैः । यथा । यज्ञम् । मनुषः । विक्षु । आसु । दधिध्वे । रण्वाः । सुऽदिनेषु । अह्नाम् ॥ १ ॥ ते । वः । हृदे । मनसे । सन्तु । यज्ञाः । जुष्टासः । अद्य । घृतऽनिर्निजः । गुः । प्र । वः । सुतासः । हरयन्त । पूर्णाः । क्रत्वे । दक्षाय । हर्षयन्त । पीताः ॥ २ ॥ त्रिऽउदायम् । देवऽहितम् । यथा । वः । स्तोमः । वाजाः । ऋभुक्षणः । ददे । वः । जुह्वे । मनुष्वत् । उपरासु । विक्षु । युष्मे इति । सचा । बृहत्ऽदिवेषु । सोमम् ॥ ३ ॥ पीवःऽअश्वाः । शुचत्ऽरथाः । हि । भूत । अयःऽशिप्राः । वाजिनः । सुऽनिष्काः । इन्द्रस्य । सूनो इति । शवसः । नपातः । अनु । वः । चेति । अग्रियम् । मदाय ॥ ४ ॥ ऋभुम् । ऋभुक्षणः । रयिम् । वाजे । वाजिन्ऽतमम् । युजम् । इन्द्रस्वन्तम् । हवामहे । सदाऽसातमम् । अश्विनम् ॥ ५ ॥ सः । इत् । ऋभवः । यम् । अवथ । यूयम् । इन्द्रः । च । मर्त्यम् । स । धीभिः । अस्तु । सनिता । मेधऽसाता । सः । अर्वता ॥ ६ ॥ वि । नः । वाजाः । ऋभुक्षणः । पथः । चितन । यष्टवे । अस्मभ्यम् । सूरयः । स्तुताः । विश्वाः । आशाः । तरीषणि ॥ ७ ॥ तम् । नः । वाजाः । ऋभुक्षणः । इन्द्र । नासत्या । रयिम् । सम् । अश्वम् । चर्षणिऽभ्यः । आ । पुरु । शस्त । मघऽत्तये ॥ ८ ॥

IV. 38.

उतो इति । हि । वाम् । दात्रा । सन्ति । पूर्वा । या । पूरुऽभ्यः ।
त्रसदस्युः । निऽतोशे । क्षेत्रऽसाम् । ददथुः । उर्वराऽसाम् । घनम् ।
दस्युऽभ्यः । अभिऽभूतिम् । उग्रम् ॥ १ ॥ उत । वाजिनम् । पुरुनिःऽ-
सिध्वानम् । दधिऽक्राम् । ऊँ इति । ददथुः । विश्वऽकृष्टिम् । ऋजिप्यम् ।
श्येनम् । प्रुषितऽप्सुम् । आशुम् । चर्कृत्यम् । अर्यः । नृऽपतिम् । न ।
शूरम् ॥ २ ॥ यम् । सीम् । अनु । प्रवताऽइव । द्रवन्तम् । विश्वः ।
पूरुः । मदति । हर्षमाणः । पट्ऽभिः । गृध्यन्तम् । मेधऽयुम् । न । शूरम् ।
रथऽतुरम् । वातम्ऽइव । ध्रजन्तम् ॥ ३ ॥ यः । स्म । आऽरुन्धानः ।
गध्या । समत्ऽसु । सनुऽतरः । चरति । गोषु । गच्छन् । आविःऽ-
ऋजीकः । विदथा । निऽचिक्यत् । तिरः । अरतिम् । परि । आपः ।
आयोः ॥ ४ ॥ उत । स्म । एनम् । वस्त्रऽमथिम् । न । तायुम् । अनु ।
क्रोशन्ति । क्षितयः । भरेषु । नीचा । अयमानम् । जसुरिम् । न ।
श्येनम् । श्रवः । च । अच्छ । पशुऽमत् । च । यूथम् ॥ ५ ॥ उत ।
स्म । आसु । प्रथमः । सरिष्यन् । नि । वेवेति । श्रेणिऽभिः । रथानाम् ।
स्रजम् । कृण्वानः । जन्यः । न । शुभ्वा । रेणुम् । रेरिहत् । किरणम् ।
ददश्वान् ॥ ६ ॥ उत । स्यः । वाजी । सहुरिः । ऋतऽवा । शुश्रूषमाणः ।
तन्वा । सऽमर्ये । तुरम् । यतीषु । तुरयन् । ऋजिप्यः । अधि । भ्रुवोः ।
किरते । रेणुम् । ऋञ्जन् ॥ ७ ॥ उत । स्म । अस्य । तन्यतोःऽइव ।
द्योः । ऋघायतः । अभिऽयुजः । भयन्ते । यदा । सहस्रम् । अभि ।
सीम् । अयोधीत् । दुःऽवर्तुः । स्म । भवति । भीमः । ऋञ्जन् ॥ ८ ॥
उत । स्म । अस्य । पनयन्ति । जनाः । जूतिम् । कृष्टिऽप्रः । अभिऽ-

भूतिम् । आशोः । उत । एनम् । आहुः । सम्ऽइथे । विऽयन्तः । परा । दधिऽक्राः । असरत् । सहस्रैः ॥ ९ ॥ आ । दधिऽक्राः । शवसा । पञ्च । कृष्टीः । सूर्यःऽइव । ज्योतिषा । अपः । ततान । सहस्रऽसाः । शतऽसाः । वाजी । अर्वा । पृणक्तु । मध्वा । सम् । इमा । वचांसि ॥ १० ॥

IV. 39.

आशुम् । दधिऽक्राम् । तम् । ऊँ इति । नु । स्तवाम । दिवः । पृथिव्याः । उत । चर्किराम । उत्ऽछन्तीः । माम् । उषसः । सूदयन्तु । अति । विश्वानि । दुःऽइतानि । पर्षन् ॥ १ ॥ महः । चर्कर्मि । अर्वतः । क्रतुऽप्राः । दधिऽक्राव्णः । पुरुऽवारस्य । वृष्णः । यम् । पूरुऽभ्यः । दीदिऽवांसम् । न । अग्निम् । ददथुः । मित्रावरुणा । ततुरिम् ॥ २ ॥ यः । अश्वस्य । दधिऽक्राव्णः । अकारीत् । सम्ऽइद्धे । अग्नौ । उषसः । विऽउष्टौ । अनागसम् । तम् । अदितिः । कृणोतु । सः । मित्रेण । वरुणेन । सऽजोषाः ॥ ३ ॥ दधिऽक्राव्णः । इषः । ऊर्जः । महः । यत् । अमन्महि । मरुताम् । नाम । भद्रम् । स्वस्तये । वरुणम् । मित्रम् । अग्निम् । हवामहे । इन्द्रम् । वज्रऽबाहुम् ॥ ४ ॥ इन्द्रम्ऽइव । इत् । उभये । वि । ह्वयन्ते । उत्ऽईराणाः । यज्ञम् । उपऽप्रयन्तः । दधिऽक्राम् । ऊँ इति । सूदनम् । मर्त्याय । ददथुः । मित्रावरुणा । नः । अश्वम् ॥ ५ ॥ दधिऽक्राव्णः । अकारिषम् । जिष्णोः । अश्वस्य । वाजिनः । सुरभि । नः । मुखा । करत् । प्र । नः । आयूंषि । तारिषत् ॥ ६ ॥

IV. 40.

दधिऽक्राव्णः । इत् । ऊँ इति । नु । चर्किराम । विश्वाः । इत् । माम् ।

उषसः । सूदयन्तु । अपाम् । अग्नेः । उषसः । सूर्यस्य । बृहस्पतेः । आङ्गिरसस्य । जिष्णोः ॥ १ ॥ सत्वा । भरिषः । गोऽइषः । दुवन्यऽसत् । श्रवस्यात् । इषः । उषसः । तुरण्यऽसत् । सत्यः । द्रवः । द्रवरः । पतङ्गरः । दधिऽक्रावा । इषम् । ऊर्जम् । स्वः । जनत् ॥ २ ॥ उत । स्म । अस्य । द्रवतः । तुरण्यतः । पर्णम् । न । वेः । अनु । वाति । प्रऽगर्धिनः । श्येनस्यऽइव । ध्रजतः । अङ्कसम् । परि । दधिऽक्राव्णः । सह । ऊर्जा । तरित्रतः ॥ ३ ॥ उत । स्यः । वाजी । चिपणिम् । तुरण्यति । ग्रीवायाम् । बद्धः । अपिऽकक्षे । आसनि । क्रतुम् । दधिऽक्राः । अनु । सम्ऽतवीत्वत् । पथाम् । अङ्कांसि । अनु । आऽपनीफणत् ॥ ४ ॥ हंसः । शुचिऽसत् । वसुः । अन्तरिक्षऽसत् । होता । वेदिऽसत् । अतिथिः । दुरोणऽसत् । नृऽसत् । वरऽसत् । ऋतऽसत् । व्योमऽसत् । अप्ऽजाः । गोऽजाः । ऋतऽजाः । अद्रिऽजाः । ऋतम् ॥ ५ ॥

IV. 41.

इन्द्रा । कः । वाम् । वरुणा । सुम्नम् । आप । स्तोमः । हविष्मान् । अमृतः । न । होता । यः । वाम् । हृदि । क्रतुऽमान् । अस्मत् । उक्तः । पस्पर्शत् । इन्द्रावरुणा । नमस्वान् ॥ १ ॥ इन्द्रा । ह । यः । वरुणा । चक्रे । आपी इति । देवौ । मर्तः । सख्याय । प्रयस्वान् । सः । हन्ति । वृत्रा । सम्ऽइथेषु । शत्रून् । अवःऽभिः । वा । महत्ऽभिः । सः । प्र । शृण्वे ॥२॥ इन्द्रा । ह । रत्नम् । वरुणा । धेष्ठा । इत्था । नृऽभ्यः । शशमानेभ्यः । ता । यदि । सखाया । सख्याय । सोमैः । सुतेभिः । सुऽप्रयसा । मादयैते इति ॥ ३ ॥ इन्द्रा । युवम् । वरुणा । दिद्युम् । अस्मिन् । ओजिष्ठम् । उग्रा । नि ।

वधिष्टम् । वज्रम् । यः । नः । दुःऽएवः । वृकतिः । दभीतिः ।
तस्मिन् । मिमाथाम् । अभिऽभूति । ओजः ॥ ४ ॥ इन्द्रा । युवम् ।
वरुणा । भूतम् । अस्याः । धियः । प्रेतारा । वृषभाऽइव । धेनोः । सा ।
नः । दुहीयत् । यवसाऽइव । गत्वी । सहस्रऽधारा । पयसा । मही ।
गौः ॥ ५ ॥ तोके । हिते । तनये । उर्वरासु । सूरः । दृशीके । वृषणः ।
च । पौंस्ये । इन्द्रा । नः । अत्र । वरुणा । स्याताम् । अवःऽभिः ।
दस्मा । परिऽतक्म्यायाम् ॥ ६ ॥ युवाम् । इत् । हि । अवसे ।
पूर्व्याय । परि । प्रभूती इति प्रऽभूती । गोऽइषः । स्वापी इति
सुऽआपी । वृणीमहे । सख्याय । प्रियाय । शूरा । मंहिष्ठा । पित-
राऽइव । शंभू इति शम्ऽभू ॥ ७ ॥ ताः । वाम् । धियः । अवसे ।
वाजऽयन्तीः । आजिम् । न । जग्मुः । युवऽयूः । सुदानू इति सुऽदानू ।
श्रिये । न । गावः । उप । सोमम् । अस्थुः । इन्द्रम् । गिरः । वरु-
णम् । मे । मनीषाः ॥ ८ ॥ इमाः । इन्द्रम् । वरुणम् । मे । मनीषाः ।
अग्मन् । उप । द्रविणम् । इच्छमानाः । उप । ईम् । अस्थुः । जोष्टा-
रःऽइव । वस्वः । रघ्वीःऽइव । श्रवसः । भिक्षमाणाः ॥ ९ ॥ अश्व्यस्य ।
त्मना । रथ्यस्य । पुष्टेः । नित्यस्य । रायः । पतयः । स्याम । ता ।
चक्राणौ । ऊतिऽभिः । नव्यसीभिः । अस्मऽत्रा । रायः । निऽयुतः ।
सचन्ताम् ॥ १० ॥ आ । नः । बृहन्ता । बृहतीभिः । ऊती । इन्द्र ।
यातम् । वरुण । वाजऽसातौ । यत् । दिद्यवः । पृतनासु । प्रऽक्रीळान् ।
तस्य । वाम् । स्याम । सनितारः । आजेः ॥ ११ ॥

IV. 42.

मम । द्विता । राष्ट्रम् । क्षत्रियस्य । विश्वऽआयोः । विश्वे ।

अमृताः । यथा । नः । क्रतुम् । सचन्ते । वरुणस्य । देवाः । राजामि ।
कृष्टेः । उपऽमस्य । वव्रेः ॥ १ ॥ अहम् । राजा । वरुणः । मह्यम् ।
तानि । असुर्याणि । प्रथमा । धारयन्त । क्रतुम् । सचन्ते । वरुणस्य ।
देवाः । राजामि । कृष्टेः । उपऽमस्य । वव्रेः ॥ २ ॥ अहम् । इन्द्रः ।
वरुणः । ते इति । महिऽत्वा । उर्वी इति । गभीरे इति । रजसी इति ।
सुमेके इति सुऽमेके । त्वष्टाऽइव । विश्वा । भुवनानि । विद्वान् । सम् ।
ऐरयम् । रोदसी इति । धारयम् । च ॥ ३ ॥ अहम् । अपः । अपि-
न्वम् । उक्षमाणाः । धारयम् । दिवम् । सदने । ऋतस्य । ऋतेन ।
पुत्रः । अदितेः । ऋतऽवा । उत । त्रिऽधातु । प्रथयत् । वि ।
भूम ॥ ४ ॥ माम् । नरः । सुऽअश्वाः । वाजयन्तः । माम् । वृताः ।
सम्ऽअरणे । हवन्ते । कृणोमि । आजिम् । मघऽवा । अहम् । इन्द्रः ।
इयर्मि । रेणुम् । अभिभूतिऽओजाः ॥ ५ ॥ अहम् । ता । विश्वा ।
चकरम् । नकिः । मा । दैव्यम् । सहः । वरते । अप्रतिऽइतम् । यत् ।
मा । सोमासः । ममदन् । यत् । उक्था । उभे इति । भयेते इति ।
रजसी इति । अपारे इति ॥ ६ ॥ विदुः । ते । विश्वा । भुवनानि ।
तस्य । ता । प्र । ब्रवीषि । वरुणाय । वेधः । त्वम् । वृत्राणि ।
शृण्विषे । जघन्वान् । त्वम् । वृतान् । अरिणाः । इन्द्र । सिन्धून् ॥७॥
अस्माकम् । अत्र । पितरः । ते । आसन् । सप्त । ऋषयः । दौःऽगहे ।
बध्यमाने । ते । आ । अयजन्त । त्रसदस्युम् । अस्याः । इन्द्रम् । न ।
वृत्रऽतुरम् । अर्धऽदेवम् ॥ ८ ॥ पुरुऽकुत्सानी । हि । वाम् । अदाशत् ।
हव्येभिः । इन्द्रावरुणा । नमःऽभिः । अथ । राजानम् । त्रसदस्युम् ।
अस्याः । वृत्रऽहनम् । ददथुः । अर्धऽदेवम् ॥ ९ ॥ राया । वयम् ।

ससऽवांसः । मदेम । हव्येन । देवाः । यवसेन । गावः । ताम् । धेनुम् । इन्द्रावरुणा । युवम् । नः । विश्वाहा । धत्तम् । अनपऽस्फुरन्तीम् ॥ १० ॥

IV. 43.

कः । ऊँ इति । श्रवत् । कतमः । यज्ञियानाम् । वन्दारु । देवः । कतमः । जुषाते । कस्य । इमाम् । देवीम् । अमृतेषु । प्रेष्ठाम् । हृदि । श्रेषाम । सुऽस्तुतिम् । सुऽहव्याम् ॥ १ ॥ कः । मृळाति । कतमः । आऽगमिष्ठः । देवानाम् । ऊ इति । कतमः । शम्ऽभविष्ठः । रथम् । कम् । आहुः । द्रवत्ऽअश्वम् । आशुम् । यम् । सूर्यस्य । दुहिता । अवृणीत ॥ २ ॥ मक्षु । हि । स्म । गच्छथः । ईवतः । द्यून् । इन्द्रः । न । शक्तिम् । परिऽतक्म्यायाम् । दिवः । आऽजाता । दिव्या । सुऽपर्णा । कया । शचीनाम् । भवथः । शचिष्ठा ॥ ३ ॥ का । वाम् । भूत् । उपऽमातिः । कया । नः । आ । अश्विना । गमथः । हूयमाना । कः । वाम् । महः । चित् । त्यजसः । अभीके । उरुष्यतम् । माध्वी इति । दस्रा । नः । ऊती ॥ ४ ॥ उरु । वाम् । रथः । परि । नक्षति । द्याम् । आ । यत् । समुद्रात् । अभि । वर्तते । वाम् । मध्वा । माध्वी इति । मधु । वाम् । प्रुषायन् । यत् । सीम् । वाम् । पृक्षः । भुरजन्त । पक्वाः ॥ ५ ॥ सिन्धुः । ह । वाम् । रसया । सिञ्चत् । अश्वान् । घृणा । वयः । अरुषासः । परि । ग्मन् । तत् । ऊँ इति । सु । वाम् । अजिरम् । चेति । यानम् । येन । पती इति । भवथः । सूर्यायाः ॥६॥ इहऽइह । यत् । वाम् । समना । पपृचे । सा । इयम् । अस्मे इति । सुऽमतिः । वाजऽरत्ना । उरुष्यतम् । जरितारम् । युवम् । ह । श्रितः । कामः । नासत्या । युवद्रिक् ॥ ७ ॥

## IV. 44.

तम् । वाम् । रथम् । वयम् । अद्य । हुवेम । पृथुऽज्रयम् । अश्विना । सम्ऽगतिम् । गोः । यः । सूर्याम् । वहति । वन्धुरऽयुः । गिर्वाहसम् । पुरुऽतमम् । वसुऽयुम् ॥ १ ॥ युवम् । श्रियम् । अश्विना । देवता । ताम् । दिवः । नपाता । वनथः । शचीभिः । युवोः । वपुः । अभि । पृक्षः । सचन्ते । वहन्ति । यत् । ककुहासः । रथे । वाम् ॥२॥ कः । वाम् । अद्य । करते । रातऽहव्यः । ऊतये । वा । सुतऽपेयाय । वा । अर्कैः । ऋतस्य । वा । वनुषे । पूर्व्याय । नमः । येमानः । अश्विना । आ । ववर्तत् ॥ ३ ॥ हिरण्ययेन । पुरुभू इति पुरुऽभू । रथेन । इमम् । यज्ञम् । नासत्या । उप । यातम् । पिबाथः । इत् । मधुनः । सोम्यस्य । दधथः । रत्नम् । विधते । जनाय ॥ ४ ॥ आ । नः । यातम् । दिवः । अच्छ । पृथिव्याः । हिरण्ययेन । सुऽवृता । रथेन । मा । वाम् । अन्ये । नि । यमन् । देवऽयन्तः । सम् । यत् । ददे । नाभिः । पूर्व्या । वाम् ॥ ५ ॥ नु । नः । रयिम् । पुरुऽवीरम् । बृहन्तम् । दस्रा । मिमाथाम् । उभयेषु । अस्मे इति । नरः । यत् । वाम् । अश्विना । स्तोमम् । आवन् । सधऽस्तुतिम् । आजऽमीळ्हासः । अग्मन् ॥ ६ ॥ इहऽइह । यत् । वाम् । समना । पपृक्षे । सा । इयम् । अस्मे इति । सुऽमतिः । वाजऽरत्ना । उरुष्यतम् । जरितारम् । युवम् । ह । श्रितः । कामः । नासत्या । युवद्रिक् ॥ ७ ॥

## IV. 45.

एषः । स्यः । भानुः । उत् । इयर्ति । युज्यते । रथः । परिऽज्मा । दिवः । अस्य । सानवि । पृक्षासः । अस्मिन् । मिथुनाः ।

अधि । त्रयः । दृतिः । तुरीयः । मधुनः । वि । रप्शते ॥ १ ॥
उत् । वाम् । पृक्षासः । मधुऽमन्तः । ईरते । रथाः । अश्वासः । उषसः । विऽउष्टिषु । अपऽऊर्णुवन्तः । तमः । आ । परिऽवृतम् । स्वः । न । शुक्रम् । तन्वन्तः । आ । रजः ॥ २ ॥ मध्वः । पिबतम् । मधुऽपेभिः । आसऽभिः । उत । प्रियम् । मधुने । युञ्जाथाम् । रथम् । आ । वर्तनिम् । मधुना । जिन्वथः । पथः । दृतिम् । वहेथे इति । मधुऽमन्तम् । अश्विना ॥ ३ ॥ हंसासः । ये । वाम् । मधुऽमन्तः । अस्रिधः । हिरण्यऽपर्णाः । उहुवः । उषःऽबुधः । उदऽप्रुतः । मन्दिनः । मन्दिऽनिस्पृशः । मध्वः । न । मक्षः । सवनानि । गच्छथः ॥ ४ ॥ सुऽअध्वरासः । मधुऽमन्तः । अग्नयः । उस्रा । जरन्ते । प्रति । वस्तोः । अश्विना । यत् । निक्तऽहस्तः । तरणिः । विऽचक्षणः । सोमम् । सुसाव । मधुऽमन्तम् । अद्रिऽभिः ॥ ५ ॥ आकेऽनिपासः । अहऽभिः । दविध्वतः । स्वः । न । शुक्रम् । तन्वन्तः । आ । रजः । सूरः । चित् । अश्वान् । युयुजानः । ईयते । विश्वान् । अनु । स्वधया । चेतथः । पथः ॥ ६ ॥ प्र । वाम् । अवोचम् । अश्विना । धियम्ऽधाः । रथः । सुऽअश्वः । अजरः । यः । अस्ति । येन । सद्यः । परि । रजांसि । याथः । हविष्मन्तम् । तरणिम् । भोजम् । अच्छ ॥ ७ ॥

IV. 46.

अग्रम् । पिब । मधूनाम् । सुतम् । वायो इति । दिविष्टिषु । त्वम् । हि । पूर्वऽपाः । असि ॥ १ ॥ शतेन । नः । अभिष्टिऽभिः । नियुत्वान् । इन्द्रऽसारथिः । वायो इति । सुतस्य । तृम्पतम् ॥ २ ॥ आ । वाम् । सहस्रम् । हरयः । इन्द्रवायू इति । अभि । प्रयः । वहन्तु ।

सोम॑ऽपीतये ॥ ३ ॥ रथ॑म् । हिर॑ण्यऽवन्धुरम् । इन्द्र॑वायू इति॑ । सुऽअ-
ध्वरम् । आ । हि । स्थार्थः । दिविऽस्पृश॑म् ॥ ४ ॥ रथे॑न । पृथुऽपा-
ज॑सा । दाश्वांस॑म् । उप॑ । गच्छतम् । इन्द्र॑वायू इति॑ । इह । आ ।
गतम् ॥ ५ ॥ इन्द्र॑वायू इति॑ । अयम् । सुतः । तम् । देवेभिः ।
सऽजोष॑सा । पिब॑तम् । दाशुष॑ः । गृहे ॥ ६ ॥ इह । प्रऽयान॑म् ।
अस्तु । वाम् । इन्द्र॑वायू इति॑ । विऽमोच॑नम् । इह । वाम् । सोम॑ऽपीतये ॥७॥

IV. 47.

वायो इति॑ । शुक्रः । अयामि । ते । मध्व॑ः । अग्र॑म् । दिवि॑ष्टिषु ।
आ । याहि । सोम॑ऽपीतये । स्पार्हः । देव । नियुत्व॑ता ॥ १ ॥ इन्द्रः ।
च । वायो इति॑ । एषाम् । सोमा॑नाम् । पीतिम् । अर्हथः । युवाम् ।
हि । यन्ति॑ । इन्द॑वः । निम्नम् । आप॑ः । न । सध्र्य॑क् ॥ २ ॥ वायो
इति॑ । इन्द्रः । च । शुष्मिणा॑ । सऽरथ॑म् । शवसः । पती इति॑ । नियु-
त्व॑न्ता । नः । ऊतये॑ । आ । यातम् । सोम॑ऽपीतये ॥ ३ ॥ याः ।
वाम् । सन्ति॑ । पुरुऽस्पृह॑ः । निऽयुत॑ः । दाशुषे॑ । नरा । अस्मे इति॑ ।
ताः । यज्ञऽवाहसा । इन्द्र॑वायू इति॑ । नि । यच्छतम् ॥ ४ ॥

IV. 48.

विहि । होत्राः । अवी॑ताः । विप॑ः । न । राय॑ः । अर्यः । वायो
इति॑ । आ । चन्द्रेण॑ । रथे॑न । याहि । सुतस्य॑ । पीतये॑ ॥ १ ॥
निःऽयुवा॑नः । अश॑स्तीः । नियुत्वा॑न् । इन्द्र॑ऽसारथिः । वायो इति॑ ।
आ । चन्द्रेण॑ । रथे॑न । याहि । सुतस्य॑ । पीतये॑ ॥ २ ॥ अनु॑ । कृष्णे
इति॑ । वसु॑धिती इति वसु॑ऽधिती । येमाते इति॑ । विश्वऽपे॑शसा । वायो
इति॑ । आ । चन्द्रेण॑ । रथे॑न । याहि । सुतस्य॑ । पीतये॑ ॥३॥ वह॑न्तु ।

त्वा । मनःऽयुजः । युक्तासः । नवतिः । नव । वायो इति । आ । चन्द्रेण । रथेन । याहि । सुतस्य । पीतये ॥ ४ ॥ वायो इति । शतम् । हरीणाम् । युवस्व । पोष्याणाम् । उत । वा । ते । सहस्रिणः । रथः । आ । यातु । पाजसा ॥ ५ ॥

IV. 49.

इदम् । वाम् । आस्ये । हविः । प्रियम् । इन्द्राबृहस्पती इति । उक्थम् । मदः । च । शस्यते ॥ १ ॥ अयम् । वाम् । परि । सिच्यते । सोमः । इन्द्राबृहस्पती इति । चारुः । मदाय । पीतये ॥ २ ॥ आ । नः । इन्द्राबृहस्पती इति । गृहम् । इन्द्रः । च । गच्छतम् । सोमऽपा । सोमऽपीतये ॥ ३ ॥ अस्मे इति । इन्द्राबृहस्पती इति । रयिम् । धत्तम् । शतऽग्विनम् । अश्वऽवन्तम् । सहस्रिणम् ॥ ४ ॥ इन्द्राबृहस्पती इति । वयम् । सुते । गीःऽभिः । हवामहे । अस्य । सोमस्य । पीतये ॥ ५ ॥ सोमम् । इन्द्राबृहस्पती इति । पिबतम् । दाशुषः । गृहे । मादयेथाम् । तत्ऽओकसा ॥ ६ ॥

IV. 50.

यः । तस्तम्भ । सहसा । वि । ज्मः । अन्तान् । बृहस्पतिः । त्रिऽसधस्थः । रवेण । तम् । प्रत्नासः । ऋषयः । दीध्यानाः । पुरः । विप्राः । दधिरे । मन्द्रऽजिह्वम् ॥ १ ॥ धुनऽइतयः । सुऽप्रकेतम् । मदन्तः । बृहस्पते । अभि । ये । नः । ततस्रे । पृषन्तम् । सृप्रम् । अदब्धम् । ऊर्वम् । बृहस्पते । रक्षतात् । अस्य । योनिम् ॥ २ ॥ बृहस्पते । या । परमा । पराऽवत् । अतः । आ । ते । ऋतऽस्पृशः । नि । सेदुः । तुभ्यम् । खाताः । अवताः । अद्रिऽदुग्धाः । मध्वः ।

श्चोतन्ति । अभितः । विऽरप्शम् ॥ ३ ॥ बृहस्पतिः । प्रथमम् । जायमानः । महः । ज्योतिषः । परमे । विऽओमन् । सप्तऽआस्यः । तुविऽजातः । रवेण । वि । सप्तऽरश्मिः । अधमत् । तमांसि ॥ ४ ॥ सः । सुऽस्तुभा । सः । ऋक्वता । गणेन । वलम् । रुरोज । फलिऽगम् । रवेण । बृहस्पतिः । उस्रियाः । हव्यऽसूदः । कनिक्रदत् । वावशतीः । उत् । आजत् ॥ ५ ॥ एव । पित्रे । विश्वऽदेवाय । वृष्णे । यज्ञैः । विधेम । नमसा । हविःऽभिः । बृहस्पते । सुऽप्रजाः । वीरऽवन्तः । वयम् । स्याम । पतयः । रयीणाम् ॥ ६ ॥ सः । इत् । राजा । प्रतिऽजन्यानि । विश्वा । शुष्मेण । तस्थौ । अभि । वीर्येण । बृहस्पतिम् । यः । सुऽभृतम् । बिभर्ति । वल्गुऽयति । वन्दते । पूर्वऽभाजम् ॥ ७ ॥ सः । इत् । क्षेति । सुऽधितः । ओकसि । स्वे । तस्मै । इळा । पिन्वते । विश्वऽदानीम् । तस्मै । विशः । स्वयम् । एव । नमन्ते । यस्मिन् । ब्रह्मा । राजनि । पूर्वः । एति ॥ ८ ॥ अप्रतिऽइतः । जयति । सम् । धनानि । प्रतिऽजन्यानि । उत । या । सऽजन्या । अवस्यवे । यः । वरिवः । कृणोति । ब्रह्मणे । राजा । तम् । अवन्ति । देवाः ॥ ९ ॥ इन्द्रः । च । सोमम् । पिबतम् । बृहस्पते । अस्मिन् । यज्ञे । मन्दसाना । वृषण्वसू इति वृषण्ऽवसू ॥ आ । वाम् विशन्तु । इन्दवः । सुऽआभुवः । अस्मे इति । रयिम् । सर्वऽवीरम् । नि । यच्छतम् ॥ १० ॥ बृहस्पते । इन्द्र । वर्धतम् । नः । सचा । सा । वाम् । सुऽमतिः । भूतु । अस्मे इति । अविष्टम् । धियः । जिगृतम् । पुरम्ऽधीः । जजस्तम् । अर्यः । वनुषाम् । अरातीः ॥ ११ ॥

IV. 51.

इदम् । ऊँ इति । त्यत् । पुरुऽतमम् । पुरस्तात् । ज्योतिः । तमसः । वयुनऽवत् । अस्थात् । नूनम् । दिवः । दुहितरः । विऽभातीः । गातुम् । कृणवन् । उषसः । जनाय ॥ १ ॥ अस्थुः । ऊँ इति । चित्राः । उषसः । पुरस्तात् । मिताःऽइव । स्वरवः । अध्वरेषु । वि । ऊँ इति । व्रजस्य । तमसः । द्वारा । उच्छन्तीः । अव्रन् । शुचयः । पावकाः ॥२॥ उच्छन्तीः । अद्य । चितयन्त । भोजान् । राधःऽदेयाय । उषसः । मघोनीः । अचित्रे । अन्तः । पणयः । ससन्तु । अबुध्यमानाः । तमसः । विऽमध्ये ॥ ३ ॥ कुवित् । सः । देवीः । सनयः । नवः । वा । यामः । बभूयात् । उषसः । वः । अद्य । येन । नवऽग्वे । अङ्गिरे । दशऽग्वे । सप्तऽआस्ये । रेवतीः । रेवत् । ऊष ॥ ४ ॥ यूयम् । हि । देवीः । ऋतयुक्ऽभिः । अश्वैः । परिऽप्रयाथ । भुवनानि । सद्यः । प्रऽबोधयन्तीः । उषसः । ससन्तम् । द्विऽपात् । चतुःऽपात् । चरथाय । जीवम् ॥ ५ ॥ क्व । स्वित् । आसाम् । कतमा । पुराणी । यया । विऽधाना । विऽदधुः । ऋभूणाम् । शुभम् । यत् । शुभ्राः । उषसः । चरन्ति । न । वि । ज्ञायन्ते । सऽदृशीः । अजुर्याः ॥ ६ ॥ ताः । घ । ताः । भद्राः । उषसः । पुरा । आसुः । अभिष्टिऽद्युम्नाः । ऋतजातऽसत्याः । यासु । ईजानः । शशमानः । उक्थैः । स्तुवन् । शंसन् । द्रविणम् । सद्यः । आप ॥ ७ ॥ ताः । आ । चरन्ति । समना । पुरस्तात् । समानतः । समना । पप्रथानाः । ऋतस्य । देवीः । सदसः । बुधानाः । गवाम् । न । सर्गाः । उषसः । जरन्ते ॥ ८ ॥ ताः । इत् । नु । एव । समना । समानीः । अमीतऽवर्णाः । उषसः ।

चरन्ति । गूहन्तीः । अभ्वम् । असितम् । रुशत्ऽभिः । शुक्राः ।
तनूभिः । शुचयः । रुचानाः ॥ ९ ॥ रयिम् । दिवः । दुहितरः ।
विऽभातीः । प्रजाऽवन्तम् । यच्छत । अस्मासु । देवीः । स्योनात् ।
आ । वः । प्रतिऽबुध्यमानाः । सुऽवीर्यस्य । पतयः । स्याम ॥ १० ॥
तत् । वः । दिवः । दुहितरः । विऽभातीः । उप । ब्रुवे । उषसः ।
यज्ञऽकेतुः । वयम् । स्याम । यशसः । जनेषु । तत् । द्यौः । च ।
धत्ताम् । पृथिवी । च । देवी ॥ ११ ॥

IV. 52.

प्रति । स्या । सूनरी । जनी । विऽउच्छन्ती । परि । स्वसुः ।
दिवः । अदर्शि । दुहिता ॥ १ ॥ अश्वाऽइव । चित्रा । अरुषी । माता ।
गवाम् । ऋतऽवरी । सखा । अभूत् । अश्विनोः । उषाः ॥ २ ॥
उत । सखा । असि । अश्विनोः । उत । माता । गवाम् । असि ।
उत । उषः । वस्वः । ईशिषे ॥ ३ ॥ यवयत्ऽद्वेषसम् । त्वा । चिकि-
त्वित् । सूनृताऽवरि । प्रति । स्तोमैः । अभुत्स्महि ॥ ४ ॥ प्रति ।
भद्राः । अदृक्षत । गवाम् । सर्गाः । न । रश्मयः । आ । उषाः ।
अप्राः । उरु । ज्रयः ॥ ५ ॥ आऽपप्रुषी । विभाऽवरि । वि । आवः ।
ज्योतिषा । तमः । उषः । अनु । स्वधाम् । अव ॥ ६ ॥ आ । द्याम् ।
तनोषि । रश्मिऽभिः । आ । अन्तरिक्षम् । उरु । प्रियम् । उषः ।
शुक्रेण । शोचिषा ॥ ७ ॥

IV. 53.

तत् । देवस्य । सवितुः । वार्यम् । महत् । वृणीमहे । असुरस्य ।
प्रऽचेतसः । छर्दिः । येन । दाशुषे । यच्छति । त्मना । तत् । नः ।

महान् । उत् । अयान् । देवः । अक्तुऽभिः ॥ १ ॥ दिवः । धर्ता ।
भुवनस्य । प्रजाऽपतिः । पिशङ्गम् । द्रापिम् । प्रति । मुञ्चते । कविः ।
विऽचक्षणः । प्रथयन् । आऽपृणन् । उरु । अजीजनत् । सविता ।
सुम्नम् । उक्थ्यम् ॥ २ ॥ आ । अप्राः । रजांसि । दिव्यानि ।
पार्थिवा । श्लोकम् । देवः । कृणुते । स्वाय । धर्मणे । प्र । बाहू इति ।
अस्राक् । सविता । सवीमनि । निऽवेशयन् । प्रऽसुवन् । अक्तुऽभिः ।
जगत् ॥ ३ ॥ अदाभ्यः । भुवनानि । प्रऽचाकशत् । व्रतानि । देवः ।
सविता । अभि । रक्षते । प्र । अस्राक् । बाहू इति । भुवनस्य ।
प्रऽजाभ्यः । धृतऽव्रतः । महः । अज्मस्य । राजति ॥ ४ ॥ त्रिः ।
अन्तरिक्षम् । सविता । महिऽत्वना । त्री । रजांसि । परिऽभूः । त्रीणि ।
रोचना । तिस्रः । दिवः । पृथिवीः । तिस्रः । इन्वति । त्रिऽभिः ।
व्रतैः । अभि । नः । रक्षति । त्मना ॥ ५ ॥ बृहत्ऽसुम्नः । प्रऽसविता ।
निऽवेशनः । जगतः । स्थातुः । उभयस्य । यः । वशी । सः । नः ।
देवः । सविता । शर्म । यच्छतु । अस्मे इति । क्षयाय । त्रिऽवरू-
थम् । अंहसः ॥ ६ ॥ आ । अगन् । देवः । ऋतुऽभिः । वर्धतु ।
क्षयम् । दधातु । नः । सविता । सुऽप्रजाम् । इषम् । सः । नः ।
क्षपाभिः । अहऽभिः । च । जिन्वतु । प्रजाऽवन्तम् । रयिम् । अस्मे
इति । सम् । इन्वतु ॥ ७ ॥

IV. 54.

अभूत् । देवः । सविता । वन्द्यः । नु । नः । इदानीम् । अह्नः ।
उपऽवाच्यः । नृऽभिः । वि । यः । रत्ना । भजति । मानवेभ्यः । श्रेष्ठम् ।
नः । अत्र । द्रविणम् । यथा । दधत् ॥ १ ॥ देवेभ्यः । हि । प्रथमम् ।

यज्ञियेभ्यः । अमृतऽत्वम् । सुवसि । भागम् । उत्ऽतमम् । आत् । इत् ।
दामानम् । सवितः । वि । ऊर्णुषे । अनूचीना । जीविता । मानुषेभ्यः ॥२॥
अचित्ती । यत् । चकृम । दैव्ये । जने । दीनैः । दक्षैः । प्रऽभूती ।
पुरुषत्वता । देवेषु । च । सवितः । मानुषेषु । च । त्वम् । नः । अत्र ।
सुवतात् । अनागसः ॥ ३ ॥ न । प्रऽमिये । सवितुः । दैव्यस्य । तत् ।
यथा । विश्वम् । भुवनम् । धारयिष्यति । यत् । पृथिव्याः । वरिमन् ।
आ । सुऽअङ्गुरिः । वर्ष्मन् । दिवः । सुवति । सत्यम् । अस्य ।
तत् ॥ ४ ॥ इन्द्रऽज्येष्ठान् । बृहत्ऽभ्यः । पर्वतेभ्यः । क्षयान् । एभ्यः ।
सुवसि । पस्त्यऽवतः । यथाऽयथा । पतयन्तः । विऽयेमिरे । एव । एव ।
तस्थुः । सवितरिति । सवाय । ते ॥ ५ ॥ ये । ते । त्रिः । अहन् ।
सवितरिति । सवासः । दिवेऽदिवे । सौभगम् । आऽसुवन्ति । इन्द्रः ।
द्यावापृथिवी इति । सिन्धुः । अत्ऽभिः । आदित्यैः । नः । अदितिः ।
शर्म । यंसत् ॥ ६ ॥

## IV. 55.

कः । वः । त्राता । वसवः । कः । वरूता । द्यावाभूमी इति ।
अदिते । त्रासीथाम् । नः । सहीयसः । वरुण । मित्र । मर्तात् । कः ।
वः । अध्वरे । वरिवः । धाति । देवाः ॥ १ ॥ प्र । ये । धामानि ।
पूर्व्याणि । अर्चान् । वि । यत् । उच्छान् । विऽयोतारः । अमूराः ।
विऽधातारः । वि । ते । दधुः । अजस्राः । ऋतऽधीतयः । रुरुचन्त ।
दस्माः ॥ २ ॥ प्र । पस्त्याम् । अदितिम् । सिन्धुम् । अर्कैः । स्वस्तिम् ।
ईळे । सख्याय । देवीम् । उभे इति । यथा । नः । अहनी इति ।
निऽपातः । उषसानक्ता । करताम् । अदब्धे इति ॥ ३ ॥ वि । अर्यमा ।

वरुणः । चेति । पन्थाम् । इषः । पतिः । सुवितम् । गातुम् । अग्निः ।
इन्द्राविष्णू इति । नृऽवत् । ऊँ इति । सु । स्तवाना । शर्म । नः ।
यन्तम् । अमऽवत् । वरूथम् ॥४॥ आ । पर्वतस्य । मरुताम् । अवांसि ।
देवस्य । त्रातुः । अव्रि । भगस्य । पात् । पतिः । जन्यात् । अंहसः ।
नः । मित्रः । मित्रियात् । उत । नः । उरुष्येत् ॥ ५ ॥ नु । रोदसी
इति । अहिना । बुध्न्येन । स्तुवीत । देवी इति । अप्येभिः । इष्टैः ।
समुद्रम् । न । सम्ऽचरणे । सनिष्यवः । घर्मऽस्वरसः । नद्यः । अप ।
व्रन् ॥ ६ ॥ देवैः । नः । देवी । अदितिः । नि । पातु । देवः ।
त्राता । त्रायताम् । अप्रऽयुच्छन् । नहि । मित्रस्य । वरुणस्य । धासिम् ।
अर्हामसि । प्रऽमियम् । सानु । अग्नेः ॥७॥ अग्निः । ईशे । वसव्यस्य ।
अग्निः । महः । सौभगस्य । तानि । अस्मभ्यम् । रासते ॥ ८ ॥
उषः । मघोनि । आ । वह । सूनृते । वार्या । पुरु । अस्मभ्यम् ।
वाजिनीऽवति ॥ ९ ॥ तत् । सु । नः । सविता । भगः । वरुणः ।
मित्रः । अर्यमा । इन्द्रः । नः । राधसा । आ । गमत् ॥ १० ॥

IV. 56.

मही इति । द्यावापृथिवी इति । इह । ज्येष्ठे इति । रुचा । भव-
ताम् । शुचयत्ऽभिः । अर्कैः । यत् । सीम् । वरिष्ठे इति । बृहती
इति । विऽमिन्वन् । रुवत् । ह । उक्षा । पप्रथानेभिः । एवैः ॥ १ ॥
देवी इति । देवेभिः । यजते इति । यजत्रैः । अमिनती इति । तस्थतुः ।
उक्षमाणे इति । ऋतवरी इत्यृतऽवरी । अद्रुहा । देवपुत्रे इति देवऽपुत्रे ।
यज्ञस्य । नेत्री इति । शुचयत्ऽभिः । अर्कैः ॥ २ ॥ सः । इत् ।
सुऽअपाः । भुवनेषु । आस । यः । इमे इति । द्यावापृथिवी इति ।

जजान । उर्वी इति । गभीरे इति । रजसी इति । सुमेके इति सुऽमेके । अवंशे । धीरः । शच्या । सम् । ऐरत् ॥ ३ ॥ नु । रोदसी इति । बृहत्ऽभिः । नः । वरूथैः । पत्नीवत्ऽभिः । इषयन्ती इति । सऽजोषाः । उरूची इति । विश्वे इति । यजते इति । नि । पातम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥ ४ ॥ प्र । वाम् । महि । द्यवी इति । अभि । उपऽस्तुतिम् । भरामहे । शुची इति । उप । प्रऽशस्तये ॥ ५ ॥ पुनाने इति । तन्वा । मिथः । स्वेन । दक्षेण । राजथः । ऊह्याथे इति । सनात् । ऋतम् ॥ ६ ॥ मही इति । मित्रस्य । साधथः । तरन्ती इति । पिप्रती इति । ऋतम् । परि । यज्ञम् । नि । सेदथुः ॥ ७ ॥

IV. 57.

क्षेत्रस्य । पतिना । वयम् । हितेनऽइव । जयामसि । गाम् । अश्वम् । पोषयित्नु । आ । सः । नः । मृळाति । ईदृशे ॥ १ ॥ क्षेत्रस्य । पते । मधुऽमन्तम् । ऊर्मिम् । धेनुःऽइव । पयः । अस्मासु । धुक्ष्व । मधुऽश्चुतम् । घृतम्ऽइव । सुऽपूतम् । ऋतस्य । नः । पतयः । मृळयन्तु ॥ २ ॥ मधुऽमतीः । ओषधीः । द्यावः । आपः । मधुऽमत् । नः । भवतु । अन्तरिक्षम् । क्षेत्रस्य । पतिः । मधुऽमान् । नः । अस्तु । अरिष्यन्तः । अनु । एनम् । चरेम ॥ ३ ॥ शुनम् । वाहाः । शुनम् । नरः । शुनम् । कृषतु । लाङ्गलम् । शुनम् । वरत्राः । बध्यन्ताम् । शुनम् । अष्ट्राम् । उत् । इङ्गय ॥ ४ ॥ शुनासीरौ । इमाम् । वाचम् । जुषेथाम् । यत् । दिवि । चक्रथुः । पयः । तेन । इमाम् । उप । सिञ्चतम् ॥ ५ ॥ अर्वाची । सुऽभगे । भव । सीते । वन्दामहे । त्वा । यथा । नः । सुऽभगा । असति । यथा । नः । सुऽफला । असति ॥ ६ ॥ इन्द्रः ।

सीताम् । नि । गृह्णातु । ताम् । पूषा । अनु । यच्छतु । सा । नः । पर्यस्वती । दुहाम् । उत्तराम्ऽउत्तराम् । समाम् ॥ ७ ॥ शुनम् । नः । फालाः । वि । कृषन्तु । भूमिम् । शुनम् । कीनाशाः । अभि । यन्तु । वाहैः । शुनम् । पर्जन्यः । मधुना । पयःऽभिः । शुनासीरा । शुनम् । अस्मासु । धत्तम् ॥ ८ ॥

IV. 58.

समुद्रात् । ऊर्मिः । मधुऽमान् । उत । आरत् । उप । अंशुना । सम् । अमृतऽत्वम् । आनट् । घृतस्य । नाम । गुह्यम् । यत् । अस्ति । जिह्वा । देवानाम् । अमृतस्य । नाभिः ॥ १ ॥ वयम् । नाम । प्र । ब्रवाम । घृतस्य । अस्मिन् । यज्ञे । धारयाम । नमःऽभिः । उप । ब्रह्मा । शृणवत् । शस्यमानम् । चतुःऽशृङ्गः । अवमीत् । गौरः । एतत् ॥ २ ॥ चत्वारि । शृङ्गा । त्रयः । अस्य । पादाः । द्वे इति । शीर्षे इति । सप्त । हस्तासः । अस्य । त्रिधा । बद्धः । वृषभः । रोरवीति । महः । देवः । मर्त्यान् । आ । विवेश ॥ ३ ॥ त्रिधा । हितम् । पणिऽभिः । गुह्यमानम् । गवि । देवासः । घृतम् । अनु । अविन्दन् । इन्द्रः । एकम् । सूर्यः । एकम् । जजान । वेनात् । एकम् । स्वधया । निः । ततक्षुः ॥ ४ ॥ एताः । अर्षन्ति । हृद्यात् । समुद्रात् । शतऽव्रजाः । रिपुणा । न । अवऽचक्षे । घृतस्य । धाराः । अभि । चाकशीमि । हिरण्ययः । वेतसः । मध्ये । आसाम् ॥५॥ सम्यक् । स्रवन्ति । सरितः । न । धेनाः । अन्तः । हृदा । मनसा । पूयमानाः । एते । अर्षन्ति । ऊर्मयः । घृतस्य । मृगाःऽइव । क्षिपणोः । ईषमाणाः ॥ ६ ॥ सिन्धोःऽइव । प्रऽअध्वने । शूघनासः । वातऽप्रमियः । पतयन्ति । यह्वाः ।

घृतस्य । धाराः । अरुषः । न । वाजी । काष्ठाः । भिन्दन् । ऊर्मिभिः ।
पिन्वमानः ॥ ७ ॥ अभि । प्रवन्त । समनाऽइव । योषाः । कल्याण्यः ।
स्मयमानासः । अग्निम् । घृतस्य । धाराः । सम्ऽइधः । नसन्त । ताः ।
जुषाणः । हर्यति । जातऽवेदाः ॥ ८ ॥ कन्याःऽइव । वहतुम् । एतवै ।
ऊँ इति । अञ्जि । अञ्जानाः । अभि । चाकशीमि । यत्र । सोमः ।
सूयते । यत्र । यज्ञः । घृतस्य । धाराः । अभि । तत् । पवन्ते ॥ ९ ॥
अभि । अर्षत । सुऽस्तुतिम् । गव्यम् । आजिम् । अस्मासु । भद्रा ।
द्रविणानि । धत्त । इमम् । यज्ञम् । नयत । देवता । नः । घृतस्य ।
धाराः । मधुऽमत् । पवन्ते ॥ १० ॥ धामन् । ते । विश्वम् । भुवनम् ।
अधि । श्रितम् । अन्तरिति । समुद्रे । हृदि । अन्तः । आयुषि ।
अपाम् । अनीके । सम्ऽइथे । यः । आऽभृतः । तम् । अश्याम ।
मधुऽमन्तम् । ते । ऊर्मिम् ॥ ११ ॥

